जन्म रामस्य सुमहद्वीर्यं सर्वानुकूलताम् । लोकस्य प्रियतां क्षान्तिं सौम्यतां सत्यशीलताम् ॥ १०
नानाचित्रकथाश्चान्या विश्वामित्रसमागमे[1] । जानक्याश्च विवाहं च धनुषश्च विभेदनम् ॥ ११
रामरामविवादं च गुणान् दाशरथेस्तथा । तथा रामाभिषेकं च कैकेय्या दुष्टभावताम् ॥ १२
विघातं[2] चाभिषेकस्य रामस्य च विवासनम् । राज्ञः शोकविलापं च परलोकस्य चाश्रयम् ॥ १३
प्रकृतीनां विषादं च प्रकृतीनां विसर्जनम् । निषादाधिपसंवादं सूतोपावर्तनं तथा ॥ १४
गङ्गायाश्चापि संतारं भरद्वाजस्य दर्शनम् । भरद्वाजाभ्यनुज्ञानाच्चित्रकूटस्य दर्शनम् ॥ १५
वास्तुकर्मविवेशं[3] च भरतागमनं तथा । प्रसादनं च रामस्य पितुश्च सलिलक्रियाम् ॥ १६
पादुकाग्र्याभिषेकं च नन्दिग्रामनिवासनम् । दण्डकारण्यगमनं विराधस्य वधं तथा ॥ १७
दर्शनं शरभङ्गस्य सुतीक्ष्णेन समागमम्[4] । अनसूयासहास्यां च[5] अङ्गरागस्य चार्पणम् ॥ १८
दर्शनं चाप्यगस्त्यस्य धनुषो ग्रहणं तथा[6] । शूर्पणख्याश्च संवादं विरूपकरणं तथा[7] ॥ १९
वधं खरत्रिशिरसोरुत्थानं रावणस्य च । मारीचस्य वधं चैव वैदेह्या हरणं तथा ॥ २०
राघवस्य विलापं च गृध्रराजनिबर्हणम् । कबन्धदर्शनं चैव पम्पायाश्चापि दर्शनम् ॥ २१
शबरीदर्शनं[8] चैव हनुमद्दर्शनं[9] तथा । विलापं चैव पम्पायां राघवस्य महात्मनः[10] ॥ २२
ऋश्यमूकस्य गमनं सुग्रीवेण समागमम् । प्रत्ययोत्पादनं सख्यं वालिसुग्रीवविग्रहम् ॥ २३
वालिप्रमथनं चैव सुग्रीवप्रतिपादनम् । ताराविलापं समयं[11] वर्षरात्रनिवासनम् ॥ २४
कोपं राघवसिंहस्य बलानामुपसंग्रहम् । दिशः प्रस्थापनं चैव पृथिव्याश्च निवेदनम् ॥ २५
अङ्गुलीयकदानं च ऋक्षस्य बिलदर्शनम् । प्रायोपवेशनं चापि संपातेश्चैव दर्शनम् ॥ २६
पर्वतारोहणं चैव सागरस्य च लङ्घनम्[12] । समुद्रवचनाच्चैव मैनाकस्यापि दर्शनम् ॥ २७
राक्षसीतर्जनं चैव छायाग्राहस्य दर्शनम् । सिंहिकायाश्च निधनं लङ्कामलयदर्शनम् ॥ २८
रात्रौ लङ्काप्रवेशं च एकस्यार्थे विचिन्तनम् । आपानभूमिगमनमवरोधस्य दर्शनम् ॥ २९
दर्शनं रावणस्यापि पुष्पकस्य च दर्शनम् । अशोकवनिकायानं सीतायाश्चापि दर्शनम् ॥ ३०
अभिज्ञानप्रदानं च सीतायाश्चाभिभाषणम् । राक्षसीतर्जनं चैव[13] त्रिजटास्वप्नदर्शनम् ॥ ३१
मणिप्रदानं सीताया वृक्षभङ्गं तथैव च । राक्षसीविद्रवं चैव किंकराणां निबर्हणम् ॥ ३२

---

१. सहायने ग. सहासने छ.
२. व्याघातम् ख. ञ.
३. विधानम् छ. निवेशम् क ञ.
४. -नाभिसङ्गमम् च.
-नापि सङ्गतिम् छ.
५. नमस्यां चाप्य- ख -समास्यां चाप्य - ति.
६. अगस्त्यदर्शनं चैव शूर्पनख्याश्च दर्शनम् च.
७. अस्य स्थाने—अगस्त्यदर्शनं चैव जटायोरभिसङ्गमम् । पञ्चवट्याश्च गमनं शूर्पणख्याश्च दर्शनम् ॥
—इति छ.
८. शबर्या दर्शनम् च.
९. फलमूलाशनम् तथा पुनः.
१०. हनूमद्दर्शनम् तथा पुनः.
११. ताराविलापसमयम् क.
१२. दर्शनम् घ.
१३. स्यापि क.
१४. राक्षसीदर्शनम् च.

प्रहर्षं वायुसूनोश्च लङ्कादाहाभिगर्जनम् । प्रतिप्लवनमेवाथ मधूनां हरणं तथा ॥ ३३

राघवाश्वासनं चैव मणिनिर्यातनं तथा । संगमं च समुद्रेण नलसेतोश्च बन्धनम् ॥ ३४

प्रतारं च समुद्रस्य रात्रौ लङ्कावरोधनम् । विभीषणेन संसर्गं वधोपायनिवेदनम् ॥ ३५

कुम्भकर्णस्य निधनं मेघनादनिबर्हणम् । रावणस्य विनाशं च सीतावाप्तिमरेः पुरे ॥ ३६

विभीषणाभिषेकं च पुष्पकस्य निवेदनम्[1] । अयोध्यायाश्च गमनं[2] भरतेन समागमम् ॥ ३७

रामाभिषेकाभ्युदयं सर्वसैन्यविसर्जनम् । [3]स्वराज्यरञ्जनं चैव वैदेह्याश्च विसर्जनम् ॥ ३८

अनागतं च यत्किंचिद्रामस्य वसुधातले । तच्चकारोत्तरे काव्ये वाल्मीकिर्भगवानृषिः ॥ ३९

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायां
बालकाण्डे काव्यसङ्क्षेपो नाम तृतीयः सर्गः

---

## चतुर्थः सर्गः

### अनुक्रमणिका

प्राप्तराज्यस्य रामस्य वाल्मीकिर्भगवानृषिः । चकार चरितं कृत्स्नं विचित्रपदमात्मवान्[4] ॥ १

चतुर्विंशत्सहस्राणि श्लोकानामुक्तवानृषिः । तथा सर्गशतान् पञ्च षट् काण्डानि तथोत्तरम् ॥ २

कृत्वापि तन्महाप्राज्ञः सभविष्यं सहोत्तरम् । चिन्तयामास को न्वेतत् प्रयुञ्जीयादिति प्रभुः ॥ ३

तस्य चिन्तयमानस्य महर्षेर्भावितात्मनः । अगृह्णीतां[5] ततः पादौ मुनिवेषौ कुशीलवौ ॥ ४

कुशीलवौ तु धर्मज्ञौ राजपुत्रौ यशस्विनौ । भ्रातरौ स्वरसंपन्नौ ददर्शाश्रमवासिनौ ॥ ५

स तु मेधाविनौ दृष्ट्वा वेदेषु परिनिष्ठितौ । वेदोपबृंहणार्थाय तावग्राहयत प्रभुः ॥ ६

काव्यं रामायणं कृत्स्नं सीतायाश्चरितं महत् । पौलस्त्यवधमित्येवं[6] चकार चरितव्रतः ॥ ७

पाठ्ये गेये च मधुरं प्रमाणैस्त्रिभिरन्वितम् । जातिभिः सप्तभिर्बद्धं तन्त्रीलयसमन्वितम् ॥ ८

रसैः शृङ्गारकरुणहास्यरौद्रभयानकैः । वीरादिभिश्च संयुक्तं काव्यमेतदगायताम् ॥ ९

तौ तु गान्धर्वतत्त्वज्ञौ मूर्च्छनास्थानकोविदौ । भ्रातरौ स्वरसंपन्नावश्विनाविव[7] रूपिणौ ॥ १०

रूपलक्षणसंपन्नौ मधुरस्वरभाषिणौ । बिम्बादिवोत्थितौ[8] बिम्बौ रामदेहात्तथापरौ ॥ ११

तौ राजपुत्रौ कार्त्स्न्येन धर्म्यमाख्यानमुत्तमम् । वाचो विधेयं तत् सर्वं कृत्वा काव्यमनिन्दितौ ॥ १२

---

१. च दर्शनम् च. झ. ञ.

२. एतत्पादानन्तरम्—भरद्वाजसमागमम् । प्रेषणं वायुपुत्रस्य—इति पादद्वयं पुना. अधिकम् ।

३. स्वराष्ट्ररञ्जनं ञ.

४. अर्थवत् ति ।

५. अगृहीताम् ति.

६. एवम् च.

७. गन्धर्वाविव च. झ.

८. बिम्बादिवोद्धृतौ ख. झ.

ऋषीणां च द्विजातीनां साधूनां च समागमे । यथोपदेशं तत्त्वज्ञौ जगतुस्तौ समाहितौ[1] ॥ [1]१३
महात्मानौ महाभागौ सर्वलक्षणलक्षितौ । तौ कदाचित् समेतानामृषीणां भावितात्मनाम् ॥ १४
आसीनानां[2] समीपस्थाविदं काव्यमगायताम् । तच्छ्रुत्वा मुनयः सर्वे बाष्पपर्याकुलेक्षणाः ॥ १५
साधुसाध्विति तावूचुः परं विस्मयमागताः । ते प्रीतमनसः सर्वे मुनयो धर्मवत्सलाः ॥ १६
प्रशशंसुः प्रशस्तव्यौ गायन्तौ तौ[3] कुशीलवौ । अहो गीतस्य माधुर्यं श्लोकानां च विशेषतः ॥ १७
चिरनिर्वृत्तमप्येतत् प्रत्यक्षमिव दर्शितम् । प्रविश्य तावुभौ सुष्ठु तथाभावमगायताम् ॥ १८
सहितौ मधुरं रक्तं संपन्नं स्वरसंपदा[5] । एवं प्रशस्यमानौ तैस्तपःश्लाघ्यैर्महर्षिभिः[7] ॥ १९
संरक्ततरमत्यर्थं मधुरं तावगायताम् । प्रीतः कश्चिन्मुनिस्ताभ्यामुत्थितः[8] कलशं ददौ ॥ २०
प्रसन्नो वल्कलं कश्चिद्ददौ ताभ्यां महायशाः[9] । [10]अन्यः कृष्णाजिनं प्रादान्मौञ्जीमन्यो महामुनिः ॥ २१
कश्चित् कमण्डलुं प्रादाद्यज्ञसूत्रमथापरः । औदुम्बरीं बृसीमन्यो जपमालामथापरः ॥ २२
बृसीमन्यस्तदा प्रादात् कौपीनमपरो मुनिः । ताभ्यां ददौ तदा हृष्टः कुठारमपरो मुनिः ॥ २३
काषायमपरो वस्त्रं चीरमन्यो ददौ मुनिः । जटाबन्धनमन्यस्तु काष्ठरज्जुं मुदान्वितः ॥ २४
यज्ञभाण्डमृषिः कश्चित् काष्ठभारं तथापरः । आयुष्यमपरे प्राहुर्मुदा तत्र महर्षयः ॥ २५
ददुश्चैव वरान् सर्वे मुनयः सत्यवादिनः । आश्चर्यमिदमाख्यानं मुनिना संप्रकीर्तितम् ॥ २६
परं कवीनामाधारं समाप्तं च यथाक्रमम् । अभिगीतमिदं[11] गीतं सर्वगीतेषु कोविदौ ॥ २७
आयुष्यं पुष्टिजननं सर्वश्रुतिमनोहरम् । प्रशस्यमानौ सर्वत्र कदाचित्तत्र गायकौ[15] ॥ २८
रथ्यासु राजमार्गेषु ददर्श भरताग्रजः । स्ववेश्म चानीय ततो भ्रातरौ च कुशीलवौ ॥ २९
पूजयामास पूजार्हौ रामः शत्रुनिबर्हणः । आसीनः काञ्चने दिव्ये स च सिंहासने प्रभुः[12] ॥ ३०
उपोपविष्टः सचिवैर्भ्रातृभिश्च [13]परंतपः । दृष्ट्वा तु[14] रूपसंपन्नौ तावुभौ नियतस्तदा ॥ ३१
उवाच लक्ष्मणं रामः शत्रुघ्नं भरतं तथा । श्रूयतामिदमाख्यानमनयोर्देववर्चसोः ॥ ३२
विचित्रार्थपदं सम्यग्गायकौ[15] समचोदयत् । तौ चापि मधुरं व्यक्तं स्वञ्चितायतनिःस्वनम्[16] ॥ ३३

---

1. १३—१८ श्लोकयोर्मध्ये—गीयतामिदमाख्यानं भवद्भ्यामृषिसंसदि । राजर्षीणां पुण्यकृतां साधूनां च समागमे ॥ गुरुणैवमनुज्ञातौ प्रकृत्या मधुरस्वरौ ॥—इति सार्धं पद्यं पठित्वा तदनन्वयीत्याह तिलकः । वस्तुतो मुनिसंसदि राजर्ष्यादीनां समागमे च भवद्भ्यां इदमाख्यानं गीयतामित्येवं गुरुणानुज्ञातौ तौ जगतुरित्यन्वयः संभवत्येव ॥

१. कुशीलवौ ख.
२. मध्येसभम् ति.
३. गायमानौ झ. ञ.
४. भावं सम्यक् झ. ञ.
५. इदमर्धम् गो. नास्ति.
६. तौ झ.
७. महात्मभिः गो. रा. ञ.
८. संस्थितः ति. गो. रा. ञ. सस्मितः छ.
९. महातपाः छ.
१० इतः श्लोक - द्वयं कुण्डलितं झ. पुस्तके ।
११. अविगीतमिदम् ख.
१२. वृतः क.
१३. समन्वितः
१४. दृष्ट्वात्म
१५. गाथिनौ क. ञ.
१६. संचितायतनिःस्वनम् रा.
स्वचितायतनिःस्वनम् च, छ.

तन्त्रीलयवदत्यर्थं विश्रुतार्थमगायताम् । ह्लादयत्सर्वगात्राणि मनांसि हृदयानि च ॥ ३४

श्रोत्राश्रयसुखं[1] गेयं तदुभौ जनसंसदि ॥

इमौ मुनी पार्थिवलक्षणान्वितौ कुशीलवौ चैव महातपस्विनौ ।

ममापि तद्भूतिकरं प्रचक्षते[1] महानुभावं चरितं निबोधत[1] ॥ ३५

ततस्तु तौ रामवचःप्रचोदितावगायतां मार्गविधानसंपदा ।

स चापि रामः परिषद्गतः शनैर्बुभूषया सक्तमना बभूव ह ॥ ३६

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायां बालकाण्डे अनुक्रमणिका नाम चतुर्थः सर्गः

---

## पञ्चमः सर्गः

### अयोध्यावर्णना

सर्वा पूर्वमियं[2] येषामासीत् कृत्स्ना वसुंधरा । प्रजापतिमुपादाय नृपाणां जयशालिनाम् ॥ १

येषां स सगरो नाम सागरो येन खानितः[2] । षष्टिः[3] पुत्रसहस्राणि यं यान्तं पर्यवारयन् ॥ २

इक्ष्वाकूणामिदं तेषां राज्ञां वंशे महात्मनाम् । महदुत्पन्नमाख्यानं रामायणमिति श्रुतम् ॥ ३

तदिदं वर्तयिष्यामि[4] सर्वं निखिलमादितः । धर्मकामार्थसहितं श्रोतव्यमनसूयया[5] ॥ ४

कोसलो नाम मुदितः स्फीतो जनपदो महान् । निविष्टः सरयूतीरे प्रभूतधनधान्यवान् ॥ ५

अयोध्या नाम नगरी तत्रासील्लोकविश्रुता । मनुना मानवेन्द्रेण या पुरी निर्मिता स्वयम् ॥ ६

आयता दश च द्वे च योजनानि महापुरी । श्रीमती त्रीणि विस्तीर्णा सुविभक्तमहापथा ॥ ७

---

1. अत्र चरितमिति इतिवृत्तशरीरमात्रं नोच्येत । किं तु तत्प्रतिपादकं शब्दमयं काव्यम् ; तस्य विशेषणं महानुभावमिति । श्रवणमात्रेण सर्वगात्राह्लादादिकरमिदं निरतिशयं काव्यमित्युक्तं भवति । ततः, इदमितिवृत्तविशेषणं कृत्वा रामस्य आत्मप्रशंसादोषमापाद्य यद्भूषणे चरितशब्देन सीताचरितं रामचरितादपि विशिष्टतरं विवक्षितमिति समाहितम् ; यच्च तदुपरि रामायणे प्रधानभूतं रघुनायकचरितं त्यक्त्वा अप्रधानस्य सीतावृत्तस्य ग्रहणं न युक्तमिति शिरोमणौ दूषणमुक्तम् ; तयोर्नैवात्यन्तावसर इति ॥

2. पूर्वं, सर्वा सप्तद्वीपपरिवृता, कृत्स्ना निखिला भारतभूमिः, येषां राज्ञां स्वम् आसीदिति सर्वेति पृथक्पदत्वे योजना । सर्वेषां नृपाणां जनानां वा अपूर्वं फलमियमासीदिति ऐकपद्येन क्रियाविशेषणमिदं योजयन्ति व्याख्यातारः । अत्र विस्तररामायणमारभमाणस्य महर्षेः सत्यवाचो मुखाद् दैवी वाक् सर्वापूर्वमिति उपक्रम एव निर्व्याजं निःससार । अत इदं काव्यं सर्वापूर्वं सर्वातिशायि सर्वोपादेयं च भविष्यतीत्युपश्रुतिः ॥

१. प्रवक्ष्यते रा. गो.

२. यः समुद्रमखानयत् ख.

३. षष्टिपुत्र - ति.

४. वर्तयिष्यावः ति.

५. अनसूयता ति.

राजमार्गेण महता सुविभक्तेन शोभिता । मुक्तपुष्पावकीर्णेन जलसिक्तेन नित्यशः ॥ ८
तां तु राजा दशरथो महाराष्ट्रविवर्धनः[1] । पुरीमावासयामास दिवं[2] देवपतिर्यथा ॥ ९
कवाटतोरणवतीं सुविभक्तान्तरापणाम् । सर्वयन्त्रायुधवतीमुषितां[3] सर्वशिल्पिभिः ॥ १०
सूतमागधसंबाधां श्रीमतीमतुलप्रभाम् । उच्चाट्टालध्वजवतीं शतघ्नीशतसंकुलाम् ॥ ११
वधूनाटकसङ्घैश्च संयुक्तां सर्वतः पुरीम् । उद्यानाम्रवणोपेतां महतीं सालमेखलाम् ॥ १२
दुर्गगम्भीरपरिखां दुर्गामन्यैर्दुरासदाम् । वाजिवारणसंपूर्णां गोभिरुष्ट्रैः खरैस्तथा ॥ १३
सामन्तराजसङ्घैश्च बलिकर्मभिरावृताम् । नानादेशनिवासैश्च वणिग्भिरुपशोभिताम् ॥ १४
प्रासादै रत्नविकृतैः पर्वतैरुपशोभिताम् । कूटागारैश्च संपूर्णामिन्द्रस्येवामरावतीम् ॥ १५
चित्रामष्टापदाकारां वरनारीगणैर्युताम् । सर्वरत्नसमाकीर्णां विमानगृहशोभिताम् ॥ १६
गृहगाढामविच्छिद्रां समभूमौ निवेशिताम । शालितण्डुलसंपूर्णामिक्षुकाण्डरसोदकाम् ॥ १७
दुन्दुभीभिर्मृदङ्गैश्च वीणाभिः पणवैस्तथा । नादितां भृशमत्यर्थं[4] पृथिव्यां तामनुत्तमाम् ॥ १८
विमानमिव सिद्धानां तपसाधिगतं दिवि । सुनिवेशितवेश्मान्तां नरोत्तमसमावृताम् ॥ १९
ये च बाणैर्न विध्यन्ति विविक्तमपरावरम् । शब्दवेध्यं च विततं लघुहस्ता विशारदाः ॥ २०
सिंहव्याघ्रवराहाणां मत्तानां नर्दतां[5] वने । हन्तारो निशितैर्बाणैर्बलाद्बाहुबलैरपि ॥ २१
तादृशानां सहस्रैस्तामभिपूर्णां महारथैः । पुरीमावासयामास राजा दशरथस्तदा ॥ २२

तामग्निमद्भिर्गुणवद्भिरावृतां द्विजोत्तमैर्वेदषडङ्गपारगैः ।
सहस्रदैः सत्यरतैर्महात्मभिर्महर्षिकल्पैर्ऋषिभिश्च केवलैः ॥ २३

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायां बालकाण्डे अयोध्यावर्णना नाम पञ्चमः सर्गः

---

## षष्ठः सर्गः

### राजवर्णना

तस्यां पुर्यामयोध्यायां वेदवित् सर्वसंग्रहः[8] । दीर्घदर्शी महातेजाः पौरजानपदप्रियः ॥ १
इक्ष्वाकूणामतिरथो यज्वा धर्मरतो वशी । महर्षिकल्पो राजर्षिस्त्रिषु लोकेषु विश्रुतः ॥ २
बलवान्निहतामित्रो मित्रवान् विजितेन्द्रियः । धनैश्च संचयैश्चान्यैः शक्रवैश्रवणोपमः ॥ ३
यथा मनुर्महातेजा लोकस्य परिरक्षिता । तथा दशरथो राजा वसञ्जगदपालयत् ॥ ४

---

१. महान् राष्ट्रविवर्धनः छ.
२. दिवि. क.
३. उपेताम् रा. गो. ज.
४. दण्ड- छ.
५. मुहुरत्यर्थम् ख.
६. नदताम् क.
७. सत्यसंगरः छ.
८. संग्रहैः रा. गो. ज.

तेन सत्याभिसन्धेन त्रिवर्गमनुतिष्ठता । पालिता सा पुरी श्रेष्ठा इन्द्रेणेवामरावती ॥ ५
तस्मिन् पुरवरे हृष्टा धर्मात्मानो बहुश्रुताः । नरास्तुष्टा धनैः स्वैः स्वैरलुब्धाः सत्यवादिनः ॥ ६
नाल्पसंनिचयः कश्चिदासीत्तस्मिन् पुरोत्तमे । कुटुम्बी यो ह्यसिद्धार्थोऽगवाश्वधनधान्यवान्[१] ॥ ७
कामी वा न कदर्यो वा नृशंसः पुरुषः क्वचित् । द्रष्टुं [1]शक्यमयोध्यायां नाविद्वान्न च नास्तिकः ॥ ८
सर्वे नराश्च नार्यश्च धर्मशीलाः सुसंयताः । उदिताः शीलवृत्ताभ्यां महर्षय इवामलाः ॥ ९
नाकुण्डली नामुकुटी नास्रग्वी नाल्पभोगवान् । नामृष्टो नानुलिप्ताङ्गो नासुगन्धश्च विद्यते ॥ १०
नामृष्टभोजी नादाता नाप्यनङ्गदनिष्कधृक् । नाहस्ताभरणो वापि दृश्यते नाप्यनात्मवान् ॥ ११
नानाहिताग्निर्नायज्वा न क्षुद्रो वा न तस्करः । कश्चिदासीदयोध्यायां न चावृत्तो न संकरः[२] ॥ १२
स्वकर्मनिरता नित्यं ब्राह्मणा विजितेन्द्रियाः । दानाध्ययनशीलाश्च संयताश्च प्रतिग्रहे ॥ १३
न नास्तिको नानृतको[३] न कश्चिदबहुश्रुतः । नासूयको न चाशक्तो[४] नाविद्वान् विद्यते तदा[५] ॥ १४
नाषडङ्गविदत्रास्ति नाव्रतो[६] नासहस्रदः । न दीनः क्षिप्तचित्तो वा व्यथितो वापि कश्चन ॥ १५
कश्चिन्नरो वा नारी वा नाश्रीमान्नाप्यरूपवान् । द्रष्टुं शक्यमयोध्यायां नापि राजन्यभक्तिमान् ॥ १६
वर्णेष्वग्र्यचतुर्थेषु[2] देवतातिथिपूजकाः । कृतज्ञाश्च वदान्याश्च शूरा विक्रमसंयुताः ॥ १७
दीर्घायुषो नराः सर्वे धर्मं सत्यं च संश्रिताः । सहिताः पुत्रपौत्रैश्च नित्यं स्त्रीभिः पुरोत्तमे ॥ १८
क्षत्रं ब्रह्ममुखं चासीद्वैश्याः क्षत्रमनुव्रताः । शूद्राः स्वधर्मनिरतास्त्रीन् वर्णानुपचारिणः ॥ १९
सा तेनेक्ष्वाकुनाथेन पुरी सुपरिरक्षिता । यथा पुरस्तान्मनुना मानवेन्द्रेण धीमता ॥ २०
योधानामग्निकल्पानां[3] पेशलानाममर्षिणाम्[७] । संपूर्णा कृतविद्यानां गुहा केसरिणामिव ॥ २१

---

1. अत्र कामी द्रष्टुं न शक्यमित्यादि योजना । कामिनमिति द्वितीया न प्राप्नोति; शक्यमिति निपातेन कर्मणाऽभिधानात् ॥

2. अग्र्यः ब्राह्मणः चतुर्थः येषां ते चत्वारो वर्णा इति व्याख्यातारः । अग्र्याश्च (त्रैवर्णिकाः) चतुर्थश्चेत्यपि विग्रहः संभवति ॥

3. अग्निकल्पानामित्यादिभिश्चतुर्भिर्विशेषणैः सैनिकानामवश्यंभाविनो गुणा निर्दिश्यन्ते । अग्निकल्पानामिति । यथा लोकेऽग्निः स्पृष्टमात्रेण यं कमपि दहति तथा योधा अपि स्वाभियोक्तृनविशेषेण सर्वानपि अभिभवन्ति; यथाग्निरकलङ्कप्रकाशात्मा तथा योधा अनवद्यसच्चरित्राः; यथाग्निः दहनप्रकाशादि स्वकार्यं सर्वत्र साधारणमेव करोति तथा योधा अपि स्वकीयपरकीयगणनां विनैव उपकारं निरोधं वा सर्वेषां साधारणमेव कुर्वन्तीत्यग्निसादृश्यं योधानां बोध्यम् । एवं अतितीक्ष्णानामेषामसुलभं गुणान्तरमाह—पेशलानामिति । मृदुमनोज्ञप्रकृतीनामित्यर्थः । अमर्षिणामिति । परोक्षेऽपि परकृतमभिभवमसहमानानामित्यर्थः । लघुतरप्रस्फुरत्क्रोधातिशयानामिति यावत् । एवमजितक्रोधानामेवैषामसुलभं धर्मान्तरमाह—कृतविद्यानामिति । विद्यासंपदधीनविनयभूषणानामित्यर्थः । अत्र च निर्दिष्टगुणानां विरोधप्रकाशनाय अपिशब्दसंयोगेन योजना कार्या—अग्निकल्पानामपि पेशलानाम्, अमर्षिणामपि कृतविद्यानामिति ॥

१. न सिद्धार्थो गोमांश्च धनधान्यवान् छ

२. न च निर्वृत्तसंकरः रा. गो । अवृत्तः सदाचाररहितः । संकरः कुण्डगोलकादिः इति ति. ।

३. नास्तिको नानृती वापि ति. अनृत इति पाठे अनृतवानित्यर्थः । अर्श आद्यच् ।

४. कश्चित् छ. ।

५. आसीत् छ. ।

६. नाव्रती ञ.

७. सुवर्चसाम् छ. ञ.

काम्भोजविषये जातैर्बाह्लीकैश्च हयोत्तमैः । वनायुजैर्नदीजैश्च पूर्णा हरिहयोत्तमैः ॥ २२

विन्ध्यपर्वतजैर्मत्तैः पूर्णा हैमवतैरपि । मदान्वितैरतिबलैर्मातङ्गैः पर्वतोपमैः ॥ २३

ऐरावतकुलीनैश्च महापद्मकुलैस्तथा । अञ्जनादपि निष्पन्नैर्वामनादपि च द्विपैः ॥ २४

भद्रैर्मन्द्रैर्मृगैश्चैव भद्रमन्द्रमृगैस्तथा । भद्रमन्द्रैर्भद्रमृगैर्मृगमन्द्रैश्च सा पुरी ॥[1] २५

नित्यमत्तैः सदा पूर्णा नागैरचलसंनिभैः । सा योजने च द्वे भूयः सत्यनामा[2] प्रकाशते[2] ॥ २६

तां पुरीं स महातेजा राजा दशरथो महान् । शशास शमितामित्रो नक्षत्राणीव चन्द्रमाः ॥[3] २७

तां सत्यनामां दृढतोरणार्गलां गृहैर्विचित्रैरुपशोभितां शिवाम् ।
पुरीमयोध्यां नृपसिंहसंकुलां[3] शशास वै शक्रसमो महीपतिः ॥ २८

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायां
बालकाण्डे राजवर्णना नाम षष्ठः सर्गः

---

## सप्तमः सर्गः

### अमात्यवर्णना

तस्यामात्या गुणैरासन्निक्ष्वाकोस्तु महात्मनः । मन्त्रज्ञाश्चेङ्गितज्ञाश्च नित्यं प्रियहिते रताः ॥ १

अष्टौ बभूवुर्वीरस्य तस्यामात्या यशस्विनः । शुचयश्चानुरक्ताश्च राजकृत्येषु नित्यशः ॥ २

धृष्टिर्जयन्तो विजयः सिद्धार्थो ह्यर्थसाधकः । अशोको मन्त्रपालश्च सुमन्त्रश्चाष्टमोऽभवत्[4] ॥ ३

ऋत्विजौ द्वावभिमतौ तस्यास्तामृषिसत्तमौ । वसिष्ठो वामदेवश्च मन्त्रिणश्च तथापरे ॥ ४

सुयज्ञोऽप्यथ जाबालिः काश्यपोऽप्यथ गौतमः । मार्कण्डेयस्तु दीर्घायुस्तथा कात्यायनो द्विजः ॥ ५

एतैर्ब्रह्मर्षिभिर्नित्यमृत्विजस्तस्य पूर्वकाः[5] । विद्याविनीता ह्रीमन्तः कुशला नियतेन्द्रियाः ॥ ६

---

1. हिमवद्विन्ध्यसह्येभ्यः पर्वतेभ्य उत्पन्नास्त्रिविधा गजा यथाक्रमं भद्रमन्द्रमृगशब्दैरुच्यन्ते । परमिमे भद्रादिशब्दा अत्र तत्तज्जातीयगजानामसाधारणस्वभावभेदपराः । तेन भद्रमन्द्रेत्यादिषु त्रिस्वभावा द्विस्वभावाश्च गजाः प्रतिपाद्यन्त इति द्रष्टव्यम् । एषां लक्षणमुक्तं वैजयन्त्याम्—अङ्गप्रत्यङ्गभद्रत्वं संक्षिप्तं भद्रलक्षणम् । पृथुत्वश्लथतास्थौल्यं संक्षिप्तं मन्द्रलक्षणम् ॥ तनुप्रत्यङ्गदीर्घश्च प्रायो मृगगुणो मतः—इति ॥

2. सत्यनामा अयोध्यायां योजनद्वयपरिमितः परदुरभियोगो राज्ञ आवासो दीप्यत इत्यर्थः ॥

3. शमितामित्र इति राज्ञश्चन्द्रमसश्च विशेषणम् । यथा तमांसि उत्सार्य सर्वमनःप्रह्लादनश्चन्द्रो नक्षत्राणि उज्ज्वलप्रकाशानि शास्ति तथा दशरथः शत्रून् नियम्य पौरमनःप्रह्लादनः पुरीं प्रस्फुरत्सौन्दर्यां शशासेत्यर्थः ॥

१. निष्क्रान्तैः ख.

२. अस्यानन्तरम्—यस्यां दशरथो राजा वसञ्जगदपालयत्—इत्यधिकं रा. गो. ।

३. नृसहस्रसंकुलाम् च. छ. ।

४. अस्यान्तिमपादत्रयस्थाने—सुराष्ट्रो राष्ट्रवर्धनः । अकोपो धर्मपालश्च सुमन्त्रश्चाष्टमोऽर्थवित् ॥ —इति पाठान्तरमित्युक्त्वा इमानि क्रमेण सिद्धार्थादीनां नामान्तराणीति व्याख्यातं शिरोमणौ ॥

५. सुयज्ञेत्यादिः पूर्वका इत्यन्तः सार्धः श्लोकः केषुचित् पुस्तकेषु न दृश्यते ॥

परस्परानुरक्ताश्च नीतिमन्तो बहुश्रुताः । श्रीमन्तश्च महात्मानः शास्त्रज्ञा[1] दृढविक्रमाः ॥ ७

कीर्तिमन्तः प्रणिहिता यथावचनकारिणः । तेजःक्षमायशःप्राप्ताः स्मितपूर्वाभिभाषिणः ॥ ८

क्रोधात् कामार्थहेतोर्वा न ब्रूयुरनृतं वचः । तेषामविदितं किंचित् स्वेषु नास्ति परेषु वा ॥ ९

क्रियमाणं कृतं वापि चारेणापि चिकीर्षितम् । कुशला व्यवहारेषु सौहृदेषु[2] परीक्षिताः ॥ १०

प्राप्तकालं यथा[3] दण्डं धारयेयुः सुतेष्वपि । कोशसंग्रहणे युक्ता बलस्य च परिग्रहे ॥ ११

अहितं चापि पुरुषं न हिंस्युरविदूषकम्[4] । वीराश्च नियतोत्साहा राजशास्त्रमनुष्ठिताः[5] ॥ १२

शुचीनां रक्षितारश्च नित्यं विषयवासिनाम् । ब्रह्मक्षत्रमहिंसन्तस्ते कोशं समपूरयन्[6] ॥ १३

सुतीक्ष्णदण्डाः संप्रेक्ष्य पुरुषस्य बलाबलम् । शुचीनामेकबुद्धीनां सर्वेषां संप्रजानताम् ॥ १४

नासीत् पुरे वा राष्ट्रे वा मृषावादी नरः क्वचित् । कश्चिन्न दुष्टस्तत्रासीत् परदाररतो नरः ॥ १५

प्रशान्तं सर्वमेवासीद्राष्ट्रं पुरवरं च तत् । सुवाससः सुवेषाश्च ते च सर्वे शुचिव्रताः[7] ॥ १६

हितार्थाश्च[8] नरेन्द्रस्य जाग्रतो नयचक्षुषा । गुरोर्गुणगृहीताश्च[9] प्रख्याताश्च पराक्रमैः[10] ॥ १७

विदेशेष्वपि विज्ञाताः[11] सर्वतोबुद्धिनिश्चयाः[12] । अभितो गुणवन्तश्च न चासन् गुणवर्जिताः[13] ॥

सन्धिविग्रहतत्त्वज्ञाः प्रकृत्या संपदान्विताः । मन्त्रसंवरणे शक्ताः[14] श्लक्ष्णाः सूक्ष्मासु बुद्धिषु ॥१९

नीतिशास्त्रविशेषज्ञाः सततं प्रियवादिनः । ईदृशैस्तैरमात्यैश्च राजा दशरथोऽनघः ॥ २०

उपपन्नो गुणोपेतैरन्वशासद्वसुंधराम् । अवेक्षमाणश्चारेण प्रजा धर्मेण रञ्जयन्[15] ॥ २१

प्रजानां पालनं कुर्वन्नधर्मं परिवर्जयन् । विश्रुतस्त्रिषु लोकेषु वदान्यः सत्यसंगरः ॥ २२

स तत्र पुरुषव्याघ्रः शशास पृथिवीमिमाम् । नाध्यगच्छद्विशिष्टं वा तुल्यं वा शत्रुमात्मनः ॥ २३

मित्रवानतसामन्तः प्रतापहतकण्टकः । स शशास जगद्राजा दिवं[16] देवपतिर्यथा ॥ २४

तैर्मन्त्रिभिर्मन्त्रहिते नियुक्तैर्वृतोऽनुरक्तैः कुशलैः समर्थैः[1] ।
स पार्थिवो दीप्तिमवाप युक्तस्तेजोमयैर्गोभिरिवोदितोऽर्कः ॥ २५

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायां
बालकाण्डे अमात्यवर्णना नाम सप्तमः सर्गः

---

1. कुशलैरिति बुद्धिसामर्थ्यं, समर्थैरिति क्रियासामर्थ्यं चोच्यत इति न पुनरुक्तिः ।

१. शास्त्रज्ञाः गो. ।

२. सौहृदे सुपरीक्षिताः ञ.

३. पुते गो.

४. विहिंस्युरदूषकम् छ.

५. अनुष्ठिताः क.

६. समधर्षयन् छ.

७. सुशीलिनः रा. गो.

८. हितार्थं च गो.

९. गुरौ गुण - गो. । गुणागुणगृहीता इति पाठे गुणदोषग्रहीतार इत्यर्थ इति तिलकः ॥

१०. पराक्रमे गो रा.

११. विख्याताः छ.

१२. बुद्धिनिश्चयात गो.

१३. इदमर्धम् गो. नास्ति. ।

१४. युक्ताः छ.

१५. रक्षयन् क. ।

१६. दिवि. क.

## अष्टमः सर्गः

### सुमन्त्रवाक्यम्

तस्य त्वेवंप्रभावस्य धर्मज्ञस्य महात्मनः । सुतार्थं तप्यमानस्य नासीद्वंशकरः सुतः ॥ १
चिन्तयानस्य तस्यैवं[1] बुद्धिरासीन्महात्मनः । सुतार्थं[2] वाजिमेधेन[3] किमर्थं न यजाम्यहम् ॥ २
स निश्चितां मतिं कृत्वा यष्टव्यमिति बुद्धिमान् । मन्त्रिभिः सह धर्मात्मा सर्वैरेव कृतात्मभिः ॥ ३
ततोऽब्रवीदिदं[4] राजा सुमन्त्रं मन्त्रिसत्तमम् । शीघ्रमानय मे सर्वान् गुरूंस्तान् सपुरोहितान् ॥ ४
ततः सुमन्त्रस्त्वरितं गत्वा त्वरितविक्रमः । समानयत् स[5] तान् सर्वान् समस्तान् वेदपारगान् ॥ ५
सुयज्ञं वामदेवं च जाबालिमथ काश्यपम् । पुरोहितं वसिष्ठं च ये चान्ये द्विजसत्तमाः ॥ ६
तान् पूजयित्वा धर्मात्मा राजा दशरथस्तदा । इदं धर्मार्थसहितं श्लक्ष्णं वचनमब्रवीत् ॥ ७
मम लालप्यमानस्य पुत्रार्थं नास्ति वै सुखम् । तदर्थं हयमेधेन यक्ष्यामीति मतिर्मम ॥ ८
तदहं यष्टुमिच्छामि शास्त्रदृष्टेन कर्मणा । कथं प्राप्स्याम्यहं कामं बुद्धिरत्र विचार्यताम् ॥ ९
ततः साध्विति तद्वाक्यं ब्राह्मणाः प्रत्यपूजयन । वसिष्ठप्रमुखाः सर्वे पार्थिवस्य मुखाच्च्युतम्[6] ॥ १०
ऊचुश्च परमप्रीताः सर्वे दशरथं वचः । [7]सरय्वाश्चोत्तरे तीरे यज्ञभूमिर्विधीयताम् ॥ ११
संभाराः संभ्रियन्तां ते तुरगश्च विमुच्यताम् । सर्वथा प्राप्स्यसे पुत्रानभिप्रेतांश्च पार्थिव ॥ १२
यस्य ते धार्मिकी बुद्धिरियं पुत्रार्थमागता । ततस्तुष्टोऽभवद्राजा श्रुत्वैतद्द्विजभाषितम् ॥ १३
अमात्यांश्चाब्रवीद्राजा हर्षपर्याकुलेक्षणः । संभाराः संभ्रियन्तां मे गुरूणां वचनादिह ॥ १४
समर्थाधिष्ठितश्चाश्वः सोपाध्यायो विमुच्यताम । सरय्वाश्चोत्तरे तीरे यज्ञभूमिर्विधीयताम् ॥ १५
शान्तयश्चापि वर्धन्तां यथाकल्पं यथाविधि । शक्यः प्राप्तुमयं यज्ञः सर्वेणापि महीक्षिता ॥ १६
नापराधो[8] भवेत् कष्टो यद्यस्मिन् क्रतुसत्तमे । छिद्रं हि मृगयन्तेऽत्र विद्वांसो ब्रह्मराक्षसाः ॥ १७
निहतस्य च[9] यज्ञस्य सद्यः कर्ता विनश्यति । तद्यथा विधिपूर्वं मे क्रतुरेष समाप्यते ॥ १८
तथाविधानं क्रियतां समर्थाः करणेष्विह । तथेति चाब्रुवन् सर्वे मन्त्रिणः प्रतिपूजिताः[10] ॥ १९
पार्थिवेन्द्रस्य तद्वाक्यं यथाज्ञप्तं निशम्य ते । तथा द्विजास्ते धर्मज्ञा वर्धयन्तो नृपोत्तमम् ॥ २०
अनुज्ञातास्ततः सर्वे पुनर्जग्मुर्यथागतम् । विसर्जयित्वा तान् विप्रान् सचिवानिदमब्रवीत् ॥ २१
ऋत्विग्भिरुपदिष्टोऽयं यथावत् क्रतुराप्यताम् । तावद्यूयं च भवथ समर्थाः करणेष्विह ॥ २२
इत्युक्त्वा नृपशार्दूलः सचिवान् समुपस्थितान् । विसर्जयित्वा स्वं वेश्म प्रविवेश महाद्युतिः ॥ २३
ततः स गत्वा ताः पत्नीर्नरेन्द्रो हृदयप्रियाः । उवाच दीक्षां विशत यक्ष्येऽहं सुतकारणात् ॥ २४

---

१. तस्येयम् घ. छ. ञ.
२. सुतार्थी ख. छ.
३. हयमेधेन ञ.
४. ततोऽब्रवीत् स तम् ड
५. गुरूंस्तान् छ.
६. प्रचोदितम् क. छ. ञ
७. अर्धमिदम् 'संभाराः सम्भ्रियन्ताम्' इत्येतदनन्तरं ञ.
८. न प्रमादो ख.
९. विधिहीनस्य ख.
१०. प्रत्यपूजयन् रा. गो.

तासां तेनातिकान्तेन वचनेन सुवर्चसाम् । मुखपद्मान्यशोभन्त पद्मानीव हिमात्यये ॥ २५

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायां
बालकाण्डे सुमन्त्रवाक्यं नाम अष्टमः सर्गः

## नवमः सर्गः

### ऋश्यशृङ्गोपाख्यानम्

एतच्छ्रुत्वा रहः सूतो राजानमिदमब्रवीत् । श्रूयतां तत् पुरावृत्तं पुराणे च मया श्रुतम्[१] ॥ १
ऋत्विग्भिरुपदिष्टोऽयं पुरावृत्तो मया श्रुतः । सनत्कुमारो भगवान् पूर्वं कथितवान् कथाम् ॥ २
ऋषीणां संनिधौ राजंस्तव पुत्रागमं प्रति । काश्यपस्य तु पुत्रोऽस्ति विभण्डक इति श्रुतः ॥ ३
ऋश्यशृङ्ग इति ख्यातस्तस्य पुत्रो भविष्यति । स वने नित्यसंवृद्धो मुनिर्वनचरः सदा[२] ॥ ४
नान्यं जानाति विप्रेन्द्रो नित्यं पित्रनुवर्तनात् । द्वैविध्यं ब्रह्मचर्यस्य भविष्यति महात्मनः ॥ ५
लोकेषु प्रथितं राजन् विप्रैश्च कथितं सदा । तस्यैवं वर्तमानस्य कालः समभिवर्तत ॥ ६
अग्निं शुश्रूषमाणस्य पितरं च यशस्विनम् । एतस्मिन्नेव काले तु रोमपादः प्रतापवान् ॥ ७
अङ्गेषु प्रथितो राजा भविष्यति महाबलः । तस्य व्यतिक्रमाद्राज्ञो भविष्यति सुदारुणा ॥ ८
अनावृष्टिः सुघोरा वै सर्वभूतभयावहा । अनावृष्ट्यां तु वृत्तायां राजा दुःखसमन्वितः ॥ ९
ब्राह्मणाञ्श्रुतवृद्धांश्च समानीय प्रवक्ष्यति । भवन्तः श्रुतधर्माणो[३] लोकचारित्रवेदिनः ॥ १०
समादिशन्तु नियमं प्रायश्चित्तं यथा भवेत् । इत्युक्तास्ते ततो राज्ञा सर्वे ब्राह्मणसत्तमाः ॥ ११
वक्ष्यन्ति ते महीपालं ब्राह्मणा वेदपारगाः । विभण्डकसुतं राजन् सर्वोपायैरिहानय ॥ १२
आनाय्य[४] च महीपाल ऋश्यशृङ्गं सुसत्कृतम् । प्रयच्छ कन्यां शान्तां वै विधिना सुसमाहितः ॥ १३
तेषां तु वचनं श्रुत्वा राजा चिन्तां प्रपत्स्यते । केनोपायेन वै शक्यमिहानेतुं स वीर्यवान् ॥ १४
ततो राजा विनिश्चित्य सह मन्त्रिभिरात्मवान् । पुरोहितममात्यांश्च प्रेषयिष्यति[५] सत्कृतान् ॥ १५
ते तु राज्ञो वचः श्रुत्वा व्यथिता वनताननाः[1] । न गच्छेमं[६] ऋषेर्भीता अनुनेष्यन्ति तं नृपम् ॥ १६
वक्ष्यन्ति चिन्तयित्वा ते तस्योपायांश्च तैरक्षमान्[७] । आनेष्यामो वयं विप्रं न च दोषो भविष्यति ॥ १७
एवमङ्गाधिपेनैव गणिकाभिर्ऋषेः सुतः । आनीतोऽवर्षयद् देवः शान्ता चास्मै प्रदीयते ॥ १८
ऋश्यशृङ्गस्तु जामाता पुत्रांस्तव विधास्यति । सनत्कुमारकथितमेतावद् व्याहृतं मया ॥ १९

---

1. अवनतेत्यत्र अकारलोपात् वनतेति । अविनताननाः गो.
१. इदमर्धम् गो. रा. नास्ति
२. वनचरैः सह च.
३. कर्माणः म.
४. आनीय. ञ.
५. ततः प्रेष्यति गो. छ. झ.
६. गच्छेयुः ख.
७. तान् क्षमान् प्र.

अथ हृष्टो दशरथः सुमन्त्रं प्रत्यभाषत । यथर्श्यशृङ्गस्त्वानीतो विस्तरेण त्वयोच्यताम् ॥[1] २०

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायां
बालकाण्डे ऋश्यशृङ्गोपाख्यानं नाम नवमः सर्गः

---

## दशमः सर्गः

### ऋश्यशृङ्गस्याङ्गदेशानयनप्रकारः

सुमन्त्रश्चोदितो राज्ञा प्रोवाचेदं वचस्तदा । यथर्श्यशृङ्गस्त्वानीतो येनोपायेन मन्त्रिभिः ॥ १

तन्मे निगदितं सर्वं[2] शृणु मे मन्त्रिभिः सह । रोमपादमुवाचेदं सहामात्यः पुरोहितः ॥ २

उपायो निरपायोऽयमस्माभिरभिचिन्तितः । ऋश्यशृङ्गो वनचरस्तपःस्वाध्यायतत्परः[4] ॥ ३

अनभिज्ञः स नारीणां विषयाणां सुखस्य च । इन्द्रियार्थैरभिमतैर्नरचित्तप्रमाथिभिः ॥ ४

पुरमानाययिष्यामः क्षिप्रं चाध्यवसीयताम् । गणिकास्तत्र गच्छन्तु रूपवत्यः स्वलंकृताः ॥ ५

प्रलोभ्य विविधोपायैरानेष्यन्तीह सत्कृताः । श्रुत्वा तथेति राजा च प्रत्युवाच पुरोहितम् ॥ ६

पुरोहितो मन्त्रिणश्च तथा चक्रुश्च ते तदा । वारमुख्यास्तु तच्छ्रुत्वा वनं प्रविविशुर्महत् ॥ ७

आश्रमस्याविदूरेऽस्मिन्[5] यत्नं कुर्वन्ति दर्शने । ऋषिपुत्रस्य धीरस्य नित्यमाश्रमवासिनः ॥ ८

पितुः स नित्यसंतुष्टो नातिचक्राम चाश्रमात् । न तेन जन्मप्रभृति दृष्टपूर्वं तपस्विना ॥ ९

स्त्री वा पुमान् वा यच्चान्यत् सर्वं[6] नगरराष्ट्रजम् । ततः कदाचित्तं देशमाजगाम यदृच्छया ॥ १०

विभण्डकसुतस्तत्र ताश्चापश्यद्वराङ्गनाः । ताश्चित्रवेषाः प्रमदा गायन्त्यो[7] मधुरस्वनैः ॥ ११

ऋषिपुत्रमुपागम्य सर्वा वचनमब्रुवन् । कस्त्वं किं वर्तसे ब्रह्मन् ज्ञातुमिच्छामहे वयम् ॥ १२

एकस्त्वं विजने घोरे वने चरसि शंस नः । अदृष्टरूपास्तास्तेन काम्यरूपा वने स्त्रियः ॥ १३

हार्दात्तस्य मतिर्जाता ह्याख्यातुं पितरं स्वकम् । पिता विभण्डकोऽस्माकं तस्याहं सुत औरसः ॥ १४

ऋश्यशृङ्ग इति ख्यातं नाम कर्म च मे भुवि । इहाश्रमपदेऽस्माकं समीपे शुभदर्शनाः ॥ १५

करिष्ये वोऽत्र पूजां वै सर्वेषां[1] विधिपूर्वकम् । ऋषिपुत्रवचः श्रुत्वा सर्वासां मतिरास वै[8] ॥ १६

तदाश्रमपदं द्रष्टुं जग्मुः सर्वाश्च तेन ताः । आगतानां ततः पूजामृषिपुत्रश्चकार ह ॥ १७

इदमर्घ्यमिदं पाद्यमिदं मूलमिदं फलम् । प्रतिगृह्य तु तां पूजां सर्वा एव समुत्सुकाः ॥ १८

1. सर्वेषामित्यनेन स्वास्वरूपापरिज्ञानं तस्य ध्वनयति ।

१. 'येनोपायेन सोऽभ्यगात्'

२. येनेत्यारभ्य सर्वमित्यन्तो भागः केषुचित् कोशेषु न दृश्यते ।

३. मन्त्रितः छ.

४. स्वाध्यायने रतः च.

५. रेऽस्य ख.

६. सत्त्वम् छ.

७. मधुरस्वराः ख.

८. तासां प्रीतिरजायत च.

ऋषेर्भीतास्तु शीघ्रं ता गमनाय मतिं दधुः । अस्माकमपि मुख्यानि फलानीमानि वै द्विज ॥ १९
गृहाण प्रति भद्रं ते भक्षयस्व च मा चिरम् । ततस्तास्तं समालिङ्ग्य सर्वा हर्षसमन्विताः ॥ २०
मोदकान् प्रददुस्तस्मै भक्ष्यांश्च विविधाञ्छुभान् । तानि चास्वाद्य तेजस्वी फलानीति स्म मन्यते ॥
अनास्वादितपूर्वाणि वने[1] नित्यनिवासिना । आपृच्छ्य च तदा विप्रं व्रतचर्यां निवेद्य च ॥ २२
गच्छन्ति स्मापदेशात्ता[1] भीतास्तस्य पितुः स्त्रियः । गतासु तासु सर्वासु काश्यपस्यात्मजो द्विजः ॥ २३
अस्वस्थहृदयश्चासीद्दुःखाच्च[2] परिवर्तते ततोऽपरेद्युस्तं देशमाजगाम स वीर्यवान् ॥ २४
विभण्डकसुतः श्रीमान् मनसा चिन्तयन् मुहुः[3] । मनोज्ञा यत्र ता दृष्टा वारमुख्याः स्वलंकृताः ॥ २५
दृष्ट्वैव च तदा विप्रमायान्तं हृष्टमानसाः । उपसृत्य ततः सर्वास्तास्तमूचुरिदं वचः ॥ २६
एह्याश्रमपदं सौम्य ह्यस्माकमिति[2] चाब्रुवन् । चित्राण्यत्र बहूनि स्युर्मूलानि च फलानि च ॥ २७
तत्राप्येष विधिः श्रीमान् विशेषेण भविष्यति । श्रुत्वा तु वचनं तासां सर्वासां हृदयंगमम्[4] ॥ २८
गमनाय मतिं चक्रे तं च निन्युस्तदा स्त्रियः । तत्र चानीयमाने तु विप्रे तस्मिन् महात्मनि ॥ २९
ववर्ष सहसा देवो जगत् प्रह्लादयंस्तदा । वर्षेणैवागतं विप्रं विषयं स्वं नराधिपः ॥ ३०
प्रत्युद्गम्य मुनिं प्रह्वः[5] शिरसा च महीं गतः । अर्घ्यं च प्रददौ तस्मै न्यायतः सुसमाहितः ॥ ३१
वव्रे प्रसादं विप्रेन्द्रान्मा विप्रं मन्युराविशेत् । अन्तःपुरं प्रवेश्यास्मै कन्यां दत्त्वा यथाविधि ॥ ३२
शान्तां शान्तेन मनसा राजा हर्षमवाप सः एवं स न्यवसत्तत्र सर्वकामैः सुपूजितः ॥ ३३
ऋश्यशृङ्गो महातेजाः शान्तया सह भार्यया ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायां
बालकाण्डे ऋश्यशृङ्गस्याङ्गदेशानयनप्रकारो नाम दशमः सर्गः

---

## एकादशः सर्गः

### ऋश्यशृङ्गस्यायोध्याप्रवेशः

भूय एव हि राजेन्द्र शृणु मे वचनं हितम् । यथा स देवप्रवरः कथायामेवमब्रवीत् ॥ १
इक्ष्वाकूणां कुले जातो भविष्यति सुधार्मिकः । राजा दशरथो नाम श्रीमान् सत्यप्रतिश्रवः ॥ २
अङ्गराजेन सख्यं च तस्य राज्ञो भविष्यति । कन्या चास्य महाभागा शान्ता नाम भविष्यति[6] ॥ ३
पुत्रस्तु सोऽङ्गराजस्य रोमपाद इति श्रुतः । तं स राजा[7] दशरथो गमिष्यति महायशाः ॥ ४
अनपत्योऽस्मि धर्मात्मन् शान्ताभर्ता मम क्रतुम् । आहरेत त्वयाज्ञप्तः संतानार्थं कुलस्य च ॥ ५

---

1. अनास्वादितपूर्वाणि वने नित्यनिवासिना इत्यर्धं क्वचिन्न दृश्यते । (?)
2. इति चित्राणीत्यादि श्लोकद्वयम् नास्ति क्वचित् ।
१. नित्यनिवासिनाम् प्र.
२. दुःखं स्म . च. ख.
३. इदमर्धम् ग. दृश्यते ।
४. श्रुत्वा तु वचनं तासां हृदयंगमम् छ.
५. प्रीतः छ.
६. इदमर्धम् छ. नास्ति ।
७. अङ्गराजम् गो.

श्रुत्वा राज्ञोऽथ तद्वाक्यं मनसापि विचिन्त्य च । प्रदास्यते पुत्रवन्तं शान्ताभर्तारमात्मवान् ॥ ६
प्रतिगृह्य च तं विप्रं स राजा विगतज्वरः । आहरिष्यति तं यज्ञं प्रहृष्टेनान्तरात्मना ॥ ७
तं च राजा दशरथो यष्टुकामः[२] कृताञ्जलिः । ऋश्यशृङ्गं द्विजश्रेष्ठं वरयिष्यति धर्मवित् ॥ ८
यज्ञार्थं प्रसवार्थं च स्वर्गार्थं च नरेश्वरः । लभते च स तं कामं द्विजमुख्याद्विशां पतिः ॥ ९
पुत्राश्चास्य भविष्यन्ति चत्वारोऽमितविक्रमाः । वंशप्रतिष्ठानकराः सर्वलोकेषु विश्रुताः ॥ १०
एवं स देवप्रवरः पूर्वं कथितवान् कथाम् । सनत्कुमारो भगवान् पुरा देवयुगे प्रभुः ॥ ११
स त्वं पुरुषशार्दूल तमानय[३] सुसत्कृतम् । स्वयमेव महाराज गत्वा सबलवाहनः ॥ १२
सुमन्त्रस्य वचः श्रुत्वा हृष्टो दशरथोऽभवत्[४] । अनुमान्य वसिष्ठं च सूतवाक्यं निशम्य[1] च ॥ १३
सान्तःपुरः[2] सहामात्यः प्रययौ यत्र स द्विजः । वनानि सरितश्चैव व्यतिक्रम्य शनैः शनैः ॥ १४
अभिचक्राम तं देशं यत्र वै मुनिपुङ्गवः । आसाद्य तं द्विजश्रेष्ठं रोमपादसमीपगम् ॥ १५
ऋषिपुत्रं ददर्शादौ दीप्यमानमिवानलम् । ततो राजा यथान्यायं पूजां चक्रे विशेषतः ॥ १६
सखित्वात्तस्य वै राज्ञः प्रहृष्टेनान्तरात्मना । रोमपादेन चाख्यातमृषिपुत्राय धीमते ॥ १७
सख्यं संबन्धकं चैव तदा तं प्रत्यपूजयत् । एवं सुसत्कृतस्तेन सहोषित्वा नरर्षभः ॥ १८
सप्ताष्टदिवसान् राजा राजानमिदमब्रवीत् । शान्ता तव सुता राजन् सह भर्त्रा विशां पते ॥ १९
मदीयं नगरं यातु कार्यं हि महदुद्यतम् । तथेति राजा संश्रुत्य गमनं तस्य धीमतः ॥ २०
उवाच वचनं विप्रं गच्छ त्वं सह भार्यया । ऋषिपुत्रः प्रतिश्रुत्य तथेत्याह नृपं तदा ॥ २१
स नृपेणाभ्यनुज्ञातः प्रययौ सह भार्यया । तावन्योन्याञ्जलिं[3] कृत्वा स्नेहात् संश्लिष्य चोरसा ॥ २२
ननन्दतुर्दशरथो रोमपादश्च वीर्यवान् । ततः सुहृदमापृच्छ्य प्रस्थितो रघुनन्दनः ॥ २३
पौरेभ्यः प्रेषयामास दूतान् वै शीघ्रगामिनः । क्रियतां नगरं सर्वं क्षिप्रमेव स्वलंकृतम् ॥ २४
धूपितं सिक्तसंमृष्टं पताकाभिरलंकृतम् । ततः प्रहृष्टाः पौरास्ते श्रुत्वा राजानमागतम् ॥ २५
तथा चक्रुश्च[५] तत्सर्वं राज्ञा यत् प्रेषितं तदा । ततः स्वलंकृतं राजा नगरं प्रविवेश ह ॥ २६
शङ्खदुन्दुभिनिर्घोषैः पुरस्कृत्य द्विजर्षभम् । ततः प्रमुदिताः सर्वे दृष्ट्वा तं नागरा द्विजम् ॥ २७
प्रवेश्यमानं सत्कृत्य नरेन्द्रेणेन्द्रकर्मणा । यथा दिवि सुरेन्द्रेण सहस्राक्षेण काश्यपम्[६] ॥ २८
अन्तःपुरं प्रवेश्यैनं पूजां कृत्वा विधानतः[७] । कृतकृत्यमिवात्मानं[८] मेने तस्योपवाहनात् ॥ २९

---

1. निशाम्य श्रावयित्वेत्यर्थ इति ति. । अस्यानन्तरम्-वसिष्ठेनाभ्यनुज्ञातो राजा संपूर्णमानसः-इति छ.
2. दुहितुः शान्ताया दर्शनौत्सुक्येन सान्तःपुरस्य गमनम् ।
3. परस्परकरग्रहणमित्यर्थः
१. विसृज्य छ. ख.
२. यज्ञस्कामः ख. म.
३. समानय ख.
४. इदमर्धम् ग. दृश्यते । व्याख्यातृभिरनादृतमिति प्रतिभाति॥
५. प्रचक्रुः ख.
६. इदमर्धम् ग. दृश्यते ।
७. कृत्वा च शास्त्रतः ङ. ख.
८. तदात्मानम् च. छ. ख.

अन्तःपुरस्त्रियः सर्वाः[1] शान्तां दृष्ट्वा तदागताम्[2] । सह भर्त्रा विशालाक्षीं प्रीत्यानन्दमुपागमन् ॥३०
पूज्यमाना च ताभिः सा राज्ञा चैव विशेषतः । उवास तत्र सुखिता कंचित्कालं सहर्त्विजा ॥ ३१

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायां
बालकाण्डे ऋश्यशृङ्गस्यायोध्याप्रवेशो नाम एकादशः सर्गः

## द्वादशः सर्गः

### अश्वमेधसंभारः

ततः काले बहुतिथे कस्मिंश्चित् सुमनोहरे । वसन्ते समनुप्राप्ते राज्ञो यष्टुं मनोऽभवत् ॥ १
ततः प्रसाद्य शिरसा तं विप्रं देववर्णिनम् । यज्ञार्थं वरयामास संतानार्थं कुलस्य च ॥ २
तथेति च स राजानमुवाच च[3] सुसत्कृतः । संभाराः संभ्रियन्तां ते तुरगश्च विमुच्यताम् ॥ ३
सरय्वाश्चोत्तरे तीरे यज्ञभूमिर्विधीयताम्[4] । ततो नृपोऽब्रवीद्वाक्यं सुमन्त्रं मन्त्रिसत्तमम्[5] ॥ ४
सुमन्त्रावाहय क्षिप्रमृत्विजो ब्रह्मवादिनः । सुयज्ञं वामदेवं च जाबालिमथ काश्यपम् ॥ ५
पुरोहितं वसिष्ठं च ये चान्ये द्विजसत्तमाः । ततः सुमन्त्रस्त्वरितं गत्वा त्वरितविक्रमः ॥ ६
समानयत् स तान् विप्रान् समर्थान् वेदपारगान् । तान् पूजयित्वा धर्मात्मा राजा दशरथस्तदा ॥७
धर्मार्थसहितं युक्तं श्लक्ष्णं वचनमब्रवीत् । मम लालप्यमानस्य पुत्रार्थं नास्ति वै सुखम् ॥ ८
तदर्थं हयमेधेन यक्ष्यामीति मतिर्मम । तदहं यष्टुमिच्छामि शास्त्रदृष्टेन कर्मणा ॥ ९
ऋषिपुत्रप्रभावेण कामान् प्राप्स्यामि चाप्यहम् । ततः साध्विति तद्वाक्यं ब्राह्मणाः प्रत्यपूजयन् ॥१०
वसिष्ठप्रमुखाः सर्वे पार्थिवस्य मुखाच्च्युतम् । ऋश्यशृङ्गपुरोगाश्च प्रत्यूचुर्नृपतिं तदा ॥ ११
संभाराः संभ्रियन्तां ते तुरगश्च विमुच्यताम् । सरय्वाश्चोत्तरे तीरे यज्ञभूमिर्विधीयताम् ॥ १२
सर्वथा प्राप्स्यसे पुत्रांश्चतुरोऽमितविक्रमान् । यस्य ते धार्मिकी बुद्धिरियं पुत्रार्थमागता ॥ १३
ततः प्रीतोऽभवद्राजा श्रुत्वा तद्द्विजभाषितम् । अमात्यांश्चाब्रवीद्राजा हर्षेणेदं शुभाक्षरम् ॥ १४
संभाराः संभ्रियन्तां मे गुरूणां वचनादिह । समर्थाधिष्ठितश्चाश्वः सोपाध्यायो विमुच्यताम् ॥ १५
सरय्वाश्चोत्तरे तीरे यज्ञभूमिर्विधीयताम् । शान्तयश्चापि वर्धन्तां यथाकल्पं यथाविधि ॥ १६
शक्यः[10] कर्तुमयं यज्ञः सर्वेणापि महीक्षिता । नापराधो भवेत् कष्टो यद्यस्मिन् क्रतुसत्तमे ॥ १७
छिद्रं हि मृगयन्तेऽत्र विद्वांसो ब्रह्मराक्षसाः । [11]विघ्नितस्य हि यज्ञस्य सद्यः कर्ता विनश्यति[12] ॥१८
तद्यथा विधिपूर्वं मे क्रतुरेष समाप्यते । तथा विधानं क्रियतां समर्थाः करणेष्विह ॥ १९

---

१. अन्तःपुराणि सर्वाणि प्र.
२. तथागताम् ग. च.
३. प्रणम्य ख.
४. उवाचवसुधाधिपम् क.
५. इदमर्धम् ख. ग. दृश्यते ।
६. ब्राह्मणान् वेदपारगान् प्र.
७. पुत्रार्थं प्र.
८. तु. प्र.
९. गुरूणां वचनाच्छीघ्रं सभाराः संभ्रियन्तु मे प्र.
१०. प्राप्तुं अ.
११. निहतस्य घ. च.
१२. १७—१८-तमौ श्लोकौ ख. न स्तः

तथेति च ततः सर्वे मन्त्रिणः प्रत्यपूजयन् । पार्थिवेन्द्रस्य तद्वाक्यं यथाज्ञप्तमकुर्वत ॥ २०

ततो द्विजास्ते धर्मज्ञमस्तुवन्[1] पार्थिवर्षभम् । अनुज्ञातास्ततः सर्वे पुनर्जग्मुर्यथागतम् ॥ २१

गतेष्वथ द्विजाग्र्येषु[2] मन्त्रिणस्तान्नराधिपः । विसर्जयित्वा स्वं वेश्म प्रविवेश महाद्युतिः ॥ २२

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायां
बालकाण्डे अश्वमेधसंभारो नाम द्वादशः सर्गः

---

## त्रयोदशः सर्गः

### यज्ञशालाप्रवेशः

पुनः प्राप्ते वसन्ते तु पूर्णः संवत्सरोऽभवत् । प्रसवार्थं गतो यष्टुं हयमेधेन वीर्यवान् ॥ १

अभिवाद्य वसिष्ठं च न्यायतः प्रतिपूज्य च । अब्रवीत् प्रश्रितं वाक्यं प्रसवार्थं द्विजोत्तमम् ॥ २

यज्ञो मे क्रियतां[3] ब्रह्मन् यथोक्तं मुनिपुंगव । यथा न विघ्नः क्रियते[4] यज्ञाङ्गेषु विधीयताम् ॥ ३

भवान् स्निग्धः सुहृन्मह्यं गुरुश्च परमो महान् । वोढव्यो भवता चैव भारो यज्ञस्य चोद्यतः ॥ ४

तथेति च स राजानमब्रवीद् द्विजसत्तमः । करिष्ये सर्वमेवैतद्भवता यत्समर्थितम् ॥ ५

ततोऽब्रवीद् द्विजान् वृद्धान् यज्ञकर्मसु निष्ठितान् । स्थापत्ये निष्ठितांश्चैव वृद्धान् परमधार्मिकान् ॥

कर्मान्तिकान् शिल्पकरान् वर्धकीन् खनकानपि । गणकान् शिल्पिनश्चैव तथव नटनर्तकान् ॥ ७

तथा शुचीन् शास्त्रविदः पुरुषान् सुबहुश्रुतान् । यज्ञकर्म समीहन्तां भवन्तो राजशासनात् ॥ ८

इष्टका बहुसाहस्री शीघ्रमानीयतामिति । औपकार्याः[1] क्रियन्तां च राज्ञां बहुगुणान्विताः ॥ ९

ब्राह्मणावसथाश्चैव कर्तव्याः शतशः शुभाः । भक्ष्यान्नपानैर्बहुभिः समुपेताः सुनिष्ठिताः ॥ १०

तथा पौरजनस्यापि कर्तव्या बहुविस्तराः । [5]आगतानां सुदूराच्च पार्थिवानां पृथक् पृथक् ॥ ११

वाजिवारणशालाश्च तथा शय्यागृहाणि च । भटानां महदावासा वैदेशिकनिवासिनाम् ॥ १२

आवासा बहुभक्ष्या वै सर्वकामैरुपस्थिताः । पौरजानपदस्यापि[6] जनस्य बहुशोभनम् ॥ १३

दातव्यमन्नं विधिवत् सत्कृत्य न तु लीलया । सर्वे वर्णा यथा पूजां प्राप्नुवन्ति सुसत्कृताः ॥ १४

न चावज्ञा प्रयोक्तव्या कामक्रोधवशादपि । यज्ञकर्मसु ये व्यग्राः पुरुषाः शिल्पिनस्तथा ॥ १५

तेषामपि विशेषेण पूजा कार्या यथाक्रमम् । ये स्युः संपूजिताः[7] सर्वे वसुभिर्भोजनेन च ॥ १६

यथा सर्वं सुविहितं न किंचित् परिहीयते । तथा भवन्तः कुर्वन्तु प्रीतस्निग्धेन[8] चेतसा ॥ १७

---

1. उपकार्या एव औपकार्याः । "...राजसद्मन्युपकार्योपकारिका" इत्यमरः ।

१. धर्मज्ञा अस्तुवन् क.

२. गतानां च द्विजातीनां ग.

३. प्रीयताम् छ.

४. विघ्नाः क्रियन्ते ति.

५. एतदारभ्य सार्धः श्लोकः गो. रा. व. नास्ति ।

६. तथा पौरजनस्यापि ग. ङ

७. ते च स्युः संभृताः गो. रा. व.

८. प्रीतिस्निग्धेन च. छ.

ततः सर्वे समागम्य वसिष्ठमिदमब्रुवन् । यथोक्तं तत् करिष्यामो न किंचित् परिहास्यते[1] ॥ १८
ततः सुमन्त्रमाहूय वसिष्ठो वाक्यमब्रवीत् । निमन्त्रयस्व नृपतीन् पृथिव्यां ये च धार्मिकाः ॥ १९
ब्राह्मणान् क्षत्रियान् वैश्यान् शूद्रांश्चैव सहस्रशः । समानयस्व सत्कृत्य सर्वदेशेषु मानवान् ॥ २०
मिथिलाधिपतिं शूरं जनकं सत्यवादिनम्[2] । निष्ठितं सर्वशास्त्रेषु तथा वेदेषु निष्ठितम्[3] ॥ २१
तमानय महाभागं स्वयमेव सुसत्कृतम् । पूर्वसंबन्धिनं ज्ञात्वा ततः पूर्वं ब्रवीमि ते ॥ २२
तथा काशीपतिं स्निग्धं सततं प्रियवादिनम् । सद्वृत्तं देवसंकाशं स्वयमेवानयस्व ह ॥ २३
तथा केकयराजानं वृद्धं परमधार्मिकम् । श्वशुरं राजसिंहस्य सपुत्रं त्वमिहानय ॥ २४
अङ्गेश्वरं महाभागं रोमपादं सुसत्कृतम् । वयस्यं राजसिंहस्य समानय यशस्विनम्[4] ॥ २५
प्राचीनान् सिन्धुसौवीरान् सौराष्ट्रेयांश्च पार्थिवान् । दाक्षिणात्यान्नरेन्द्रांश्च समस्तानानयस्व ह ॥ २६
सन्ति स्निग्धाश्च ये चान्ये राजानः पृथिवीतले । तानानय यथा क्षिप्रं सानुगान् सहबान्धवान् ॥ २७
एतान् दूतैर्महाभागैरानयस्व नृपाज्ञया[5] । वसिष्ठवाक्यं तच्छ्रुत्वा सुमन्त्रस्त्वरितस्तदा ॥ २८
व्यादिशत् पुरुषांस्तत्र राज्ञामानयने शुभान् । स्वयमेव हि धर्मात्मा प्रययौ मुनिशासनात् ॥ २९
सुमन्त्रस्त्वरितो भूत्वा समानेतुं महीक्षितः । ते च कर्मान्तिकाः सर्वे वसिष्ठाय च धीमते ॥ ३०
सर्वं निवेदयन्ति स्म यज्ञे यदुपकल्पितम् । ततः प्रीतो द्विजश्रेष्ठस्तान् सर्वानिदमब्रवीत् ॥ ३१
अवज्ञया न दातव्यं कस्यचिल्लीलयापि वा । अवज्ञया कृतं हन्याद्दातारं नात्र संशयः ॥ ३२
ततः कैश्चिदहोरात्रैरुपयाता महीक्षितः । बहूनि रत्नान्यादाय राज्ञो दशरथस्य ह ॥ ३३
ततो वसिष्ठः सुप्रीतो राजानमिदमब्रवीत् । उपयाता नरव्याघ्र राजानस्तव शासनात् ॥ ३४
मया च सत्कृताः सर्वे यथार्हं राजसत्तमाः । यज्ञीयं च कृतं राजन् पुरुषैः सुसमाहितैः ॥ ३५
निर्यातु च भवान् यष्टुं यज्ञायतनमन्तिकात् । सर्वकामैरुपहृतैरुपेतं वै समन्ततः ॥ ३६
द्रष्टुमर्हसि राजेन्द्र मनसेव विनिर्मितम् । तथा वसिष्ठवचनादृश्यशृङ्गस्य चोभयोः ॥ ३७
दिवसे शुभनक्षत्रे निर्यातो जगतीपतिः । ततो वसिष्ठप्रमुखाः सर्व एव द्विजोत्तमाः ॥ ३८
ऋश्यशृङ्गं पुरस्कृत्य यज्ञकर्मारभंस्तदा । यज्ञवाटगताः सर्वे यथाशास्त्रं यथाविधि ॥ ३९
श्रीमांश्च सह पत्नीभी राजा दीक्षामुपाविशत्[10] ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायां
बालकाण्डे यज्ञशालाप्रवेशो नाम त्रयोदशः सर्गः

---

१. इदमर्धं बहुषु कोशेषु न दृश्यते । व्याख्यातृणामपि न संमतम् । ख. अपि नास्ति ॥
२. सत्यविक्रमम् च. छ.
३. इदमर्धम् अधिकम् गो. रा.
४. महाभागम् च. छ.
५. अस्यानन्तरम्—तथा कोसलराजानं भानुमन्तं सुसत्कृतम् । मगधाधिपतिं शूरं सर्वविद्याविशारदम् ॥ प्राप्तिज्ञं परमोदारं सत्कृतं पुरुषर्षभम् । राज्ञः शासनमादाय चोदयस्व नृपर्षभान् ॥—इत्यधिकम् ग. पुना.
६. ततः प्र.
७. इदमर्धम् ग. दृश्यते ।
८. सर्वे प्र.
९. शुभे दिवसनक्षत्रे. ङ. म.
१०. इदमर्धम् ख. च. पुना. -स्थम् ।

## चतुर्दशः सर्गः

### अश्वमेधः

अथ संवत्सरे पूर्णे तस्मिन् प्राप्ते तुरंगमे । सरय्वाश्चोत्तरे तीरे राज्ञो यज्ञोऽभ्यवर्तत ॥ १

ऋश्यशृङ्गं पुरस्कृत्य कर्म चक्रुर्द्विजर्षभाः । अश्वमेधे महायज्ञे राज्ञस्तस्य महात्मनः ॥ २

कर्म कुर्वन्ति विधिवद्याजका वेदपारगाः । यथाविधि यथान्यायं परिक्रामन्ति शास्त्रतः ॥ ३

प्रवर्ग्यं शास्त्रतः कृत्वा तथैवोपसदं द्विजाः । चक्रुश्च विधिवत् सर्वमधिकं कर्म शास्त्रतः ॥ ४

अभिपूज्य ततो हृष्टाः सर्वे चक्रुर्यथाविधि । प्रातःसवनपूर्वाणि कर्माणि मुनिपुंगवाः ॥ ५

ऐन्द्रश्च विधिवद्दत्तो राजा[1] चाभिषुतो[2]ऽनघः । माध्यंदिनं च सवनं प्रावर्तत यथाक्रमम ॥ ६

तृतीयसवनं चैव राज्ञोऽस्य सुमहात्मनः । चक्रुस्ते शास्त्रतो दृष्ट्वा कर्माणि मुनिपुंगवाः ॥ ७

आह्वयांचक्रिरे तत्र शक्रादीन विबुधोत्तमान् । ऋश्यशृङ्गादयो मन्त्रैः शिक्षाक्षरसमन्वितैः ॥ ८

गीतिभिर्मधुरैः स्निग्धैर्मन्त्राह्वानैर्यथार्हतः । होतारो ददुरावाह्य हविर्भागान् दिवौकसाम[1] ॥ ९

न चाहुतमभूत्तत्र स्खलितं वापि किंचन । दृश्यते ब्रह्मवत् सर्वं[3] क्षेमयुक्तं हि चक्रिरे ॥ १०

न तेष्वहःसु श्रान्तो वा क्षुधितो वापि दृश्यते । नाविद्वान ब्राह्मणस्तत्र नाशतानुचरस्तथा[4] ॥ ११

ब्राह्मणा भुञ्जते नित्यं नाथवन्तश्च भुञ्जते । तापसा भुञ्जते चापि श्रमणा भुञ्जते तथा[5] ॥ १२

वृद्धाश्च व्याधिताश्चैव स्त्रियो बालास्तथैव च । अनिशं भुञ्जमानानां[2] न तृप्तिरुपजायते[6] ॥ १३

दीयतां दीयतामन्नं वासांसि विविधानि च । इति संचोदितास्तत्र तथा चक्रुरनेकशः ॥ १४

अन्नकूटाश्च[7] बहवो दृश्यन्ते पर्वतोपमाः । [8]दिवसे दिवसे तत्र सिद्धस्य विधिवत्तदा ॥ १५

नानादेशादनुप्राप्ताः पुरुषाः स्त्रीगणास्तथा । अन्नपानैः सुविहितास्तस्मिन् यज्ञे महात्मनः ॥ १६

अन्नं हि विधिवत स्वादु प्रशंसन्ति द्विजर्षभाः । अहो तृप्ताः स्म भद्रं त इति शुश्राव राघवः ॥ १७

स्वलंकृताश्च[3] पुरुषा ब्राह्मणान पर्यवेषयन । उपासते च तानन्ये सुमृष्टमणिकुण्डलाः ॥ १८

---

1. राजा सोमः सर्वौषधिवर: ।

2. अभिषुतः निष्पीडितः । अभिष्टुतः च. छ.

3. यज्ञसम्बन्धि सर्वं, ब्रह्मवत् ब्रह्मस्वरूपेण, दृश्यते उपास्यते ॥ तथोपासनायां हेतुः— क्षेमेति । यस्मात् फलातिशयेन युक्तं तं यज्ञं संपादयन्तः ऋत्विजश्चक्रिरे ॥

4. अशतेति बहुसंख्यसहायविहीन इत्यर्थः ।

5. इतो द्विजानां शाला, ततो दासानाम्, अन्यतस्तापसानामिति क्रममावि प्रेक्षकाणां दर्शनं यथाक्रममिव कविरुपवर्णयति । अत्र श्लोके भुञ्जते इत्यस्य बहुवारमुपादानेन ब्राह्मणादयः सर्वे एते पृथग्व्यवस्थिता अभ्यवहरन्तीति गम्यते । अत एव वृद्धरुग्णस्त्रीबालादीनां प्रसङ्गे पृथक् तदप्रयोगः । श्रमणाः संन्यासिनः । अनेनैव प्रयोगेण निश्चीयते—श्रमणशब्दः पश्चादेव बौद्धसंन्यासिनि निरूढ आसीदिति ॥

6. तृप्तिः अलंबुद्धिः ।

7. अन्नकूटाः अदनयोग्यानां फलादीनां राशयः ।

8. दिवसे दिवसे सिद्धस्य नवनवतया पक्वस्य कूटा दृश्यन्ते बहवः पर्वतोपमा इति अत्रापि योजनीयम् ।

१. ८—९ श्लोकौ गो. न स्तः ।

२. भुज्यमानानाम् रा.

३. उपलभ्यते च. छ.

कर्मान्तरे तदा विप्रा हेतुवादान् बहूनपि । प्राहुः स्म वाग्मिनो धीराः परस्परजिगीषया ॥ १९

दिवसे दिवसे तत्र संस्तरे कुशला द्विजाः । सर्वकर्माणि चक्रुस्ते यथाशास्त्रं प्रचोदिताः ॥ २०

नाषडङ्गविदत्रासीन्नाव्रतो नाबहुश्रुतः । सदस्यास्तस्य वै राज्ञो नावादकुशला द्विजाः[१] ॥ २१

प्राप्ते यूपोच्छ्रये तस्मिन् षड् बैल्वाः खादिरास्तथा । तावन्तो बिल्वसहिताः पर्णिनश्च तथापरे ॥ २२

श्लेष्मातकमयस्त्वेको देवदारुमयस्तथा । द्वावेव विहितौ तत्र बाहुव्यस्तपरिग्रहौ ॥ २३

कारिताः सर्व एवैते शास्त्रज्ञैर्यज्ञकोविदैः । शोभार्थं तस्य यज्ञस्य काञ्चनालंकृताभवन् ॥ २४

एकविंशतियूपास्त एकविंशत्यरत्नयः । वासोभिरेकविंशद्भिरेकैकं समलंकृताः ॥ २५

विन्यस्ता विधिवत् सर्वे शिल्पिभिः सुकृता दृढाः । अष्टाश्रयः सर्व एव श्लक्ष्णरूपसमन्विताः ॥ २६

आच्छादितास्ते वासोभिः पुष्पैर्गन्धैश्च भूषिताः । सप्तर्षयो दीप्तिमन्तो विराजन्ते यथा दिवि ॥ २७

इष्टकाश्च यथान्यायं कारिताश्च प्रमाणतः । चितोऽग्निर्ब्राह्मणैस्तत्र कुशलैः शुल्बकर्मणि[२] ॥ २८

स चित्यो राजसिंहस्य संचितः कुशलैर्द्विजैः । गरुडो रुक्मपक्षो वै त्रिगुणोऽष्टादशात्मकः ॥ २९

नियुक्तास्तत्र पशवस्तत्तदुद्दिश्य दैवतम् । उरगाः पक्षिणश्चैव यथाशास्त्रं प्रचोदिताः ॥ ३०

शामित्रे तु हयस्तत्र तथा जलचराश्च ये । ऋत्विग्भिः सर्वमेवैतन्नियुक्तं शास्त्रतस्तदा ॥ ३१

पशूनां त्रिशतं तत्र यूपेषु नियतं तदा । अश्वरत्नोत्तमं तस्य राज्ञो दशरथस्य च ॥ ३२

कौसल्या तं हयं तत्र परिचर्य समन्ततः । कृपाणैर्विशशासैनं त्रिभिः परमया मुदा ॥ ३३

पतत्रिणा[1] तदा सार्धं सुस्थितेन च चेतसा । अवसद्रजनीमेकां कौसल्या धर्मकाम्यया ॥ ३४

होताध्वर्युस्तथोद्गाता हयेन[३] समयोजयन् । महिष्या[2] परिवृक्त्या च वावातामपरां तथा ॥ ३५

पतत्रिणस्तस्य वपामुद्धृत्य नियतेन्द्रियः । ऋत्विक् परमसंपन्नः श्रपयामास शास्त्रतः ॥ ३६

धूमगन्धं वपायास्तु जिघ्रति स्म नराधिपः । यथाकालं यथान्यायं निर्णुदन् पापमात्मनः ॥ ३७

हयस्य यानि चाङ्गानि तानि सर्वाणि भूसुराः[४] । अग्नौ प्रास्यन्ति विधिवत् समस्ताः[५] षोडशर्त्विजः ॥ ३८

प्लक्षशाखासु यज्ञानामन्येषां क्रियते हविः । अश्वमेधस्य यज्ञस्य वैतसो भाग इष्यते ॥ ३९

त्र्यहोऽश्वमेधः संख्यातः कल्पसूत्रेण ब्राह्मणैः । चतुष्टोममहस्तस्य प्रथमं परिकल्पितम् ॥ ४०

उक्थ्यं द्वितीयं संख्यातमतिरात्रं तथोत्तरम् । कारितास्तत्र बहवो विहिताः शास्त्रदर्शनात् ॥ ४१

ज्योतिष्टोमायुषी चैवमतिरात्रौ च निर्मितौ । अभिजिद्विश्वजिच्चैवमप्तोर्यामो महाक्रतुः ॥ ४२

प्राचीं होत्रे ददौ राजा दिशं स्वकुलवर्धनः । अध्वर्यवे प्रतीचीं तु ब्रह्मणे दक्षिणां दिशम् ॥ ४३

1. पतत्रिणा अश्वेन ।

2. महिष्यादयस्तिस्रो राज्ञो भार्याः ।

१. नावेदकुशलो द्विजः छ.

२. अयं श्लोकः ग. नास्ति ।

३. हस्तेन ख.

४. ब्राह्मणाः च. छ. झ.

५. समन्त्राः च छ.

उद्गात्रे च तथोदीचीं दक्षिणैषा विनिर्मिता । अश्वमेधे महायज्ञे स्वयंभुविहिते[1] पुरा ॥ ४४
क्रतुं समाप्य तु तदा न्यायतः पुरुषर्षभः । ऋत्विग्भ्यो हि ददौ राजा धरां तां कुलवर्धनः[१] ॥ ४५
ऋत्विजस्त्वब्रुवन् सर्वे राजानं गतकल्मषम् । भवानेव महीं कृत्स्नामेको रक्षितुमर्हति ॥ ४६
न भूम्या कार्यमस्माकं न हि शक्ताः स्म पालने । रताः स्वाध्यायकरणे वयं नित्यं हि भूमिप ॥ ४७
निष्क्रयं किंचिदेवेह प्रयच्छतु भवानिति । मणिरत्नं सुवर्णं वा गावो यद्वा समुद्यतम् ॥ ४८
तत् प्रयच्छ नरश्रेष्ठ धरण्या न प्रयोजनम् । एवमुक्तो नरपतिर्ब्राह्मणैर्वेदपारगैः ॥ ४९
गवां शतसहस्राणि दश तेभ्यो ददौ नृपः । दश कोटीः[२] सुवर्णस्य रजतस्य चतुर्गुणम् ॥ ५०
ऋत्विजस्तु ततः सर्वे प्रददुः सहिता वसु । ऋष्यशृङ्गाय मुनये वसिष्ठाय च धीमते ॥ ५१
ततस्ते न्यायतः कृत्वा प्रविभागं द्विजोत्तमाः । सुप्रीतमनसः सर्वे प्रत्यूचुर्मुदिता भृशम् ॥ ५२
ततः प्रसर्पकेभ्यस्तु हिरण्यं सुसमाहितः । जाम्बूनदं कोटिसंख्यं ब्राह्मणेभ्यो ददौ नृपः ॥ ५३
दरिद्राय द्विजायाथ हस्ताभरणमुत्तमम् । कस्मैचिद्याचमानाय ददौ राघवनन्दनः ॥ ५४
ततः प्रीतेषु नृपतिर्द्विजेषु द्विजवत्सलः । प्रणाममकरोत्तेषां हर्षपर्याकुलेक्षणः ॥ ५५
तस्याशिषोऽथ विधिवद्ब्राह्मणैः समुदाहृताः[३] । उदारस्य नृवीरस्य धरण्यां प्रणतस्य च ॥ ५६
ततः प्रीतमना राजा प्राप्य यज्ञमनुत्तमम् । पापापहं स्वर्नयनं दुस्तरं[2] पार्थिवर्षभैः ॥ ५७
ततोऽब्रवीदृष्यशृङ्गं राजा दशरथस्तदा । कुलस्य वर्धनं त्वं तु कर्तुमर्हसि सुव्रत ॥ ५८
तथेति च स राजानमुवाच द्विजसत्तमः । भविष्यन्ति सुता राजंश्चत्वारस्ते कुलोद्वहाः[४] ॥ ५९

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायां
बालकाण्डे अश्वमेधो नाम चतुर्दशः सर्गः

---

## पञ्चदशः सर्गः

### रावणवधोपायः

मेधावी तु ततो ध्यात्वा स किंचिदिदमुत्तरम् । लब्धसंज्ञस्ततस्तं तु वेदज्ञो नृपमब्रवीत् ॥ १
इष्टिं तेऽहं करिष्यामि पुत्रीयां पुत्रकारणात् । अथर्वशिरसि प्रोक्तैर्मन्त्रैः सिद्धां विधानतः ॥ २
ततः प्राक्रमदिष्टिं तां[६] पुत्रीयां पुत्रकारणात् । जुहाव चाग्नौ तेजस्वी मन्त्रदृष्टेन कर्मणा ॥ ३
ततो[५] देवाः सगन्धर्वाः सिद्धाश्च परमर्षयः । भागप्रतिग्रहार्थं वै समवेता यथाविधि[५] ॥ ४

---

1. प्रजापतिरश्वमेधमसृजत इति ब्राह्मणम् ।
2. दुस्तरमित्यनेनाश्वमेधस्य सागरोपमा व्यज्यते ।

१. क्रतुवर्धनः च. । ४५—४६ श्लोकयोर्मध्ये—एवं दत्त्वा प्रहृष्टोऽभूच्छ्रीमानिक्ष्वाकुनन्दनः— इति पुना.

२. कोटिं म.

३. समुदीरिताः ङ.

४. यति म.

५. अस्यानन्तरम्—स तस्य वाक्यं मधुरं निशम्य प्रणम्य तस्मै प्रयतो नृपेन्द्रः । जगाम हर्षं परमं महात्मा तमृष्यशृङ्गं पुनरप्युवाच ॥—इति ग.

६. प्रक्रम्य तामिष्टिम् च. छ.

ताः समेत्य यथान्यायं तस्मिन् सदसि देवताः । अब्रुवँल्लोककर्तारं ब्रह्माणं वचनं महत् ॥ ५
भगवंस्त्वत्प्रसादेन रावणो नाम राक्षसः । सर्वान्नो बाधते वीर्याच्छासितुं तं न शक्नुमः ॥ ६
त्वया तस्मै वरो दत्तः प्रीतेन भगवन् पुरा । मानयन्तश्च तं नित्यं सर्वं तस्य क्षमामहे ॥ ७
उद्वेजयति लोकांस्त्रीनुच्छ्रितान् द्वेष्टि दुर्मतिः । शक्रं त्रिदशराजानं प्रधर्षयितुमिच्छति ॥ ८
ऋषीन् यक्षान् सगन्धर्वानसुरान् ब्राह्मणांस्तथा । अतिक्रामति दुर्धर्षो वरदानेन मोहितः ॥ ९
नैनं सूर्यः प्रतपति पार्श्वे वाति न मारुतः । चलोर्मिमाली तं दृष्ट्वा समुद्रोऽपि न कम्पते ॥ १०
सुमहन्नो भयं तस्माद्राक्षसाद्धोरदर्शनात् । वधार्थं तस्य भगवन्नुपायं कर्तुमर्हसि ॥ ११
एवमुक्तः सुरैः सर्वैश्चिन्तयित्वा ततोऽब्रवीत् । हन्तायं विदितस्तस्य वधोपायो दुरात्मनः ॥ १२
तेन गन्धर्वयक्षाणां देवदानवरक्षसाम् । अवध्योऽस्मीति वागुक्ता तथेत्युक्तं च तन्मया ॥ १३
नाकीर्तयदवज्ञानात्तद्रक्षो[1] मानुषांस्तदा । तस्मात् स मानुषाद्वध्यो मृत्युर्नान्योऽस्य विद्यते ॥ १४
एतच्छ्रुत्वा प्रियं वाक्यं ब्रह्मणा समुदाहृतम् । देवा महर्षयः सर्वे प्रहृष्टास्तेऽभवंस्तदा ॥ १५
एतस्मिन्नन्तरे विष्णुरुपयातो महाद्युतिः । शङ्खचक्रगदापाणिः पीतवासा जगत्पतिः[1] ॥ १६
ब्रह्मणा च समागम्य तत्र तस्थौ समाहितः । तमब्रुवन् सुराः सर्वे समभिष्टूय संनताः ॥ १७
त्वां नियोक्ष्यामहे विष्णो लोकानां हितकाम्यया । राज्ञो दशरथस्य त्वमयोध्याधिपतेः प्रभोः[2] ॥ १८
धर्मज्ञस्य वदान्यस्य महर्षिसमतेजसः । तस्य भार्यासु तिसृषु ह्रीश्रीकीर्त्युपमासु च ॥ १९
विष्णो पुत्रत्वमागच्छ कृत्वात्मानं चतुर्विधम् । तत्र त्वं मानुषो भूत्वा प्रवृद्धं लोककण्टकम् ॥ २०
अवध्यं दैवतैर्विष्णो समरे जहि रावणम् । स हि देवान् सगन्धर्वान् सिद्धांश्च मुनिसत्तमान् ॥ २१
राक्षसो रावणो मुख्यो[3] वीर्योत्सेकेन बाधते । ऋषयस्तु ततस्तेन गन्धर्वाप्सरसस्तथा ॥ २२
क्रीडन्तो नन्दनवने रौद्रेण किल हिंसिताः । वधार्थं वयमायातास्तस्य वै मुनिभिः सह ॥ २३
सिद्धगन्धर्वयक्षाश्च ततस्त्वां शरणं गताः । त्वं गतिः परमा देव सर्वेषां नः परंतप ॥ २४
वधाय देवशत्रूणां नृणां लोके मनः कुरु । एवमुक्तस्तु देवेशो विष्णुस्त्रिदशपुंगवः ॥ २५
पितामहपुरोगांस्तान् सर्वलोकनमस्कृतः । अब्रवीत् त्रिदशान् सर्वान् समेतान् धर्मसंहितान् ॥ २६
भयं त्यजत भद्रं वो हितार्थं युधि रावणम् । सपुत्रपौत्रं सामात्यं समित्रज्ञातिबान्धवम् ॥ २७
हत्वा क्रूरं दुरात्मानं देवर्षीणां भयावहम् । दश वर्षसहस्राणि दश वर्षशतानि च ॥ २८
वत्स्यामि मानुषे लोके पालयन् पृथिवीमिमाम् । एवं दत्त्वा वरं देवो देवानां विष्णुरात्मवान् ॥ २९
मानुष्ये चिन्तयामास जन्मभूमिमथात्मनः । ततः पद्मपलाशाक्षः कृत्वात्मानं चतुर्विधम् ॥ ३०

---

1. मानुषेषु रावणस्यावज्ञाने कारणम्—अहंकार-विमूढत्वमिति नपुंसकेन रक्षः पदेन द्योत्यते । तस्य मोहस्यानिर्वाच्यत्वं च तदिति सर्वनाम ध्वनयति ॥

१. अस्यानन्तरम्—वैनतेयं समारुह्य भास्कर-स्तोयदं यथा । तप्तहाटककेयूरो वन्द्यमानः सुरोत्तमैः ॥ इति ग.

२. तैर्विभो प्र.

३. मूर्खो प्र.

पितरं रोचयामास तदा दशरथं नृपम् । ततो देवर्षिगन्धर्वाः सरुद्राः साप्सरोगणाः ॥ ३१
स्तुतिभिर्दिव्यरूपाभिस्तुष्टुवुर्मधुसूदनम् ॥

तमुद्धतं रावणमुग्रतेजसं प्रवृद्धदर्पं त्रिदशेश्वरद्विषम् ।
विरावणं साधुतपस्विकण्टकं तपस्विनामुद्धर तं भयावहम् ॥ ३२
तमेव हत्वा सबलं सबान्धवं विरावणं रावणमुग्रपौरुषम् ।
स्वर्लोकमागच्छ गतज्वरश्चिरं सुरेन्द्रगुप्तं गतदोषकल्मषम् ॥ ३३

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायां बालकाण्डे रावणवधोपायो नाम पञ्चदशः सर्गः

---

## षोडशः सर्गः

### पायसोत्पत्तिः

ततो नारायणो विष्णुर्नियुक्तः सुरसत्तमैः । जानन्नपि सुरानेवं श्लक्ष्णं वचनमब्रवीत् ॥ १
उपायः को वधे तस्य राक्षसाधिपतेः सुराः । यमहं तं समास्थाय निहन्यामृषिकण्टकम् ॥ २
एवमुक्ताः सुराः सर्वे प्रत्यूचुर्विष्णुमव्ययम् । मानुषं[1] रूपमास्थाय रावणं जहि संयुगे ॥ ३
स हि तेपे तपस्तीव्रं दीर्घकालमरिन्दम । येन तुष्टोऽभवद्ब्रह्मा लोककृल्लोकपूर्वजः[2] ॥ ४
संतुष्टः प्रददौ तस्मै राक्षसाय वरं प्रभुः । नानाविधेभ्यो भूतेभ्यो भयं नान्यत्र मानुषात् ॥ ५
अवज्ञाताः पुरा तेन वरदाने हि[3] मानवाः । एवं पितामहात्तस्माद्वरं प्राप्य स गर्वितः ॥ ६
उत्सादयति लोकांस्त्रीन् स्त्रियश्चाप्यपकर्षति । तस्मात्तस्य वधो दृष्टो मानुषेभ्यः परंतप ॥ ७
इत्येतद्वचनं श्रुत्वा सुराणां विष्णुरात्मवान् । पितरं रोचयामास तदा दशरथं नृपम् ॥ ८
स[4] चाप्यपुत्रो नृपतिस्तस्मिन् काले महाद्युतिः । अयजत् पुत्रियामिष्टिं पुत्रेप्सुररिसूदनः ॥ ९
स कृत्वा निश्चयं विष्णुरामन्त्र्य च पितामहम् । अन्तर्धानं गतो देवैः पूज्यमानो महर्षिभिः ॥ १०
ततो वै यजमानस्य पावकादतुलप्रभम् । प्रादुर्भूतं महद्भूतं महावीर्यं महाबलम् ॥ ११
कृष्णं रक्ताम्बरधरं रक्तास्यं दुन्दुभिस्वनम् । स्निग्धहर्यक्षतनुजश्मश्रुप्रवरमूर्धजम् ॥ १२
शुभलक्षणसंपन्नं दिव्याभरणभूषितम् । शैलशृङ्गसमुत्सेधं दृप्तशार्दूलविक्रमम् ॥ १३
दिवाकरसमाकारं दीप्तानलशिखोपमम् । तप्तजाम्बूनदमयीं राजतान्तपरिच्छदाम् ॥ १४
दिव्यपायससंपूर्णां पात्रीं पत्नीमिव प्रियाम् । प्रगृह्य विपुलां दोर्भ्यां स्वयं मायामयीमिव ॥ १५
समवेक्ष्याब्रवीद्वाक्यमिदं दशरथं नृपम् । प्राजापत्यं नरं विद्धि मामिहाभ्यागतं नृप ॥ १६
ततः परं तदा राजा प्रत्युवाच कृताञ्जलिः । भगवन् स्वागतं तेऽस्तु किमहं करवाणि ते ॥ १७

---

१. मानुषीं तनुम् च. म.
२. पूजितः ख. छ. अ.
३. वरदानेन ख. छ.
४. अष्टमनवमयोः श्लोकयोः पौर्वापर्ये वैपरीत्यमस्ति म.



ततो वै यजमानस्य पावकादतुलप्रभम् । प्रादुर्भूतं महद्भूतं महावीर्यं महाबलम ॥
(बालकाण्ड, स. 10. श्लो. 11)

अथो पुनरिदं वाक्यं प्राजापत्यो नरोऽब्रवीत् । राजन्नर्चयता देवानद्य प्राप्तमिदं त्वया ॥ १८
इदं तु नृपशार्दूल पायसं देवनिर्मितम् । प्रजाकरं गृहाण त्वं धन्यमारोग्यवर्धनम् ॥ १९
भार्याणामनुरूपाणामश्नीतेति प्रयच्छ वै । तासु त्वं प्राप्स्यसे पुत्रान् यदर्थं यजसे नृप ॥ २०
तथेति नृपतिः प्रीतः शिरसा प्रतिगृह्य ताम् । पात्रीं देवान्नसंपूर्णां देवदत्तां हिरण्मयीम् ॥ २१
अभिवाद्य च तद्भूतमद्भुतं प्रियदर्शनम् । मुदा परमया युक्तश्चकाराभिप्रदक्षिणम् ॥ २२
ततो दशरथः प्राप्य पायसं देवनिर्मितम् । बभूव परमप्रीतः प्राप्य वित्तमिवाधनः ॥ २३
ततस्तदद्भुतप्रख्यं भूतं परमभास्वरम् । संवर्तयित्वा तत्कर्म तत्रैवान्तरधीयत ॥ २४
हर्षरश्मिभिरुद्द्योतं तस्यान्तःपुरमाबभौ[1] । सोऽन्तःपुरं प्रविश्यैव कौसल्यामिदमब्रवीत् ॥ २५
पायसं प्रतिगृह्णीष्व पुत्रीयमिदमात्मनः । कौसल्यायै नरपतिः पायसार्धं ददौ तदा ॥ २६
अर्धादर्धं ददौ चापि सुमित्रायै नराधिपः । कैकेय्यै चावशिष्टार्धं ददौ पुत्रार्थकारणात् ॥ २७
प्रददौ चावशिष्टार्धं पायसस्यामृतोपमम् । अनुचिन्त्य सुमित्रायै पुनरेव महीपतिः ॥ २८
एवं तासां ददौ राजा भार्याणां पायसं पृथक् । तास्त्वेतत् पायसं प्राप्य[2] नरेन्द्रस्योत्तमाः स्त्रियः ॥ २९
संमानं मेनिरे सर्वाः प्रहर्षोदितचेतसः ॥

ततस्तु ताः प्राश्य तदुत्तमस्त्रियो महीपतेरुत्तमपायसं पृथक् ।
हुताशनादित्यसमानतेजसोऽचिरेण[3] गर्भान् प्रतिपेदिरे तदा ॥ ३०
ततस्तु राजा प्रसमीक्ष्य ताः स्त्रियः प्ररूढगर्भाः प्रतिलब्धमानसः[4] ।
बभूव हृष्टस्त्रिदिवे यथा हरिः सुरेन्द्रसिद्धर्षिगणाभिपूजितः ॥ ३१

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायां
बालकाण्डे पायसोत्पत्तिर्नाम षोडशः सर्गः

---

## सप्तदशः सर्गः

### ऋक्षवानरोत्पत्तिः

पुत्रत्वं तु गते विष्णौ राज्ञस्तस्य महात्मनः । उवाच देवताः सर्वाः स्वयंभूर्भगवानिदम् ॥ १
सत्यसंधस्य वीरस्य सर्वेषां नो हितैषिणः । विष्णोः सहायान् बलिनः सृजध्वं कामरूपिणः ॥ २
मायाविदश्च शूरांश्च वायुवेगसमाञ्जवे । नयज्ञान् बुद्धिसंपन्नान् विष्णुतुल्यपराक्रमान् ॥ ३
असंहार्यानुपायज्ञान् सिंहसंहननान्वितान् । सर्वास्त्रगुणसंपन्नानमृतप्राशनानिव ॥ ४
अप्सरःसु च मुख्यासु गन्धर्वीणां तनूषु च । किंनरीणां च गात्रेषु वानरीणां तनूषु च ॥ ५

---

१. अस्यानन्तरम्—शारदस्याभिरामस्य चन्द्रस्येव नभोंऽशुभिः—इति ब. छ. झ.
२. प्राश्य ब.
३. तेजसश्चिरेण च. छ.
४. मानसाः म.

यक्षपन्नगकन्यासु ऋक्षविद्याधरीषु च । सृजध्वं हरिरूपेण पुत्रांस्तुल्यपराक्रमान् ॥ ६
पूर्वमेव मया सृष्टो जाम्बवानृक्षपुंगवः । जृम्भमाणस्य सहसा मम वक्त्रादजायत ॥ ७
ते तथोक्ता भगवता तत् प्रतिश्रुत्य शासनम् । जनयामासुरेवं ते पुत्रान् वानररूपिणः ॥ ८
ऋषयश्च महात्मानः सिद्धविद्याधरोरगाः[1] चारणाश्च सुतान् वीरान् ससृजुर्वनचारिणः ॥ ९
वानरेन्द्रं महेन्द्राभमिन्द्रो वालिनमात्मजम्[2] । सुग्रीवं जनयामास तपनस्तपतां वरः ॥ १०
बृहस्पतिस्त्वजनयत्तारं नाम महाहरिम् । सर्ववानरमुख्यानां बुद्धिमन्तमनुत्तमम् ॥ ११
धनदस्य सुतः श्रीमान् वानरो गन्धमादनः । विश्वकर्मा त्वजनयन्नलं नाम महाहरिम् ॥ १२
पावकस्य सुतः श्रीमान्नीलोऽग्निसदृशप्रभः । तेजसा यशसा वीर्यादत्यरिच्यत वीर्यवान्[3] ॥ १३
रूपद्रविणसंपन्नावश्विनौ रूपसंमतौ । मैन्दं च द्विविदं चैव जनयामासतुः स्वयम् ॥ १४
वरुणो जनयामास सुषेणं[4] नाम वानरम् । शरभं जनयामास पर्जन्यस्तु महाबलम् ॥ १५
मारुतस्यात्मजः श्रीमान् हनुमान्नाम वानरः । वज्रसंहननोपेतो वैनतेयसमो जवे ॥ १६
सर्ववानरमुख्येषु बुद्धिमान् बलवानपि । ते सृष्टा बहुसाहस्रा दशग्रीववधे रताः ॥ १७
अप्रमेयबला वीरा विक्रान्ताः कामरूपिणः । ते गजाचलसंकाशा[5] वपुष्मन्तो महाबलाः ॥ १८
ऋक्षवानरगोपुच्छाः क्षिप्रमेवाभिजज्ञिरे । यस्य देवस्य यद्रूपं वेषो यश्च पराक्रमः ॥ १९
अजायत समं तेन[6] तस्य तस्य पृथक्[7] पृथक् । गोलाङ्गूलीषु चोत्पन्नाः केचित् संमतविक्रमाः ॥ २०
ऋक्षीषु च तथा जाता वानराः किंनरीषु च । देवा महर्षिगन्धर्वास्तार्क्ष्या यक्षा यशस्विनः ॥ २१
नागाः किंपुरुषाश्चैव सिद्धविद्याधरोरगाः । बहवो जनयामासुर्हृष्टास्तत्र सहस्रशः ॥ २२
चारणाश्च सुतान् वीरान् ससृजुर्वनचारिणः । वानरान् सुमहाकायान् सर्वान् वै वनचारिणः ॥ २३
अप्सरःसु च मुख्यासु तथा विद्याधरीषु च । नागकन्यासु च तथा गन्धर्वीणां तनूषु च ॥ २४
कामरूपबलोपेता यथाकामं विचारिणः । सिंहशार्दूलसदृशा दर्पेण च बलेन च ॥ २५
शिलाप्रहरणाः सर्वे सर्वे पादपयोधिनः । नखदंष्ट्रायुधाः सर्वे सर्वे सर्वास्त्रकोविदाः ॥ २६
विचालयेयुः शैलेन्द्रान् भेदयेयुः स्थिरान् द्रुमान् । क्षोभयेयुश्च वेगेन समुद्रं सरितां पतिम् ॥ २७
दारयेयुः क्षितिं पद्भ्यामाप्लवेयुर्महार्णवम् । नभःस्थलं विशेयुश्च गृह्णीयुरपि तोयदान् ॥ २८
गृह्णीयुरपि मातङ्गान् मत्तान् प्रव्रजतो वने । नर्दमानाश्च नादेन पातयेयुर्विहंगमान् ॥ २९
ईदृशानां प्रसूतानि हरीणां कामरूपिणाम् । शतं शतसहस्राणि यूथपानां महात्मनाम् ॥ ३०

---

१. अस्यानन्तरम्—बहवो जनयामासुर्हृष्टास्तत्र सहस्रशः—इति क.
२. ऊर्जितम् च. छ.
३. वानरान् च. छ. झ.
४. वानरर्षभम् झ.
५. मेरुमन्दरसंकाशाः च. झ.
६. समस्तेन च. छ.
७. सुतः च. छ. झ.
८. २१-तमस्य श्लोकस्योत्तरार्धमारभ्य एतदवधि झ. नास्ति ।

ते प्रधानेषु यूथेषु हरीणां हरियूथपाः । बभूवुर्यूथपश्रेष्ठा वीरांश्चाजनयन् हरीन् ॥ ३१
अन्ये ऋक्षवतः प्रस्थानुपतस्थुः सहस्रशः । अन्ये नानाविधाञ्शैलान् भेजिरे काननानि च ॥ ३२
सूर्यपुत्रं च सुग्रीवं शक्रपुत्रं च वालिनम् । भ्रातरावुपतस्थुस्ते सर्वे च हरियूथपाः ॥ ३३
नलं नीलं हनूमन्तमन्यांश्च हरियूथपान् । ते तार्क्ष्यबलसंपन्नाः सर्वे युद्धविशारदाः ॥ ३४
विचरन्तोऽर्दयन् दर्पात् सिंहव्याघ्रमहोरगान्  तांश्च सर्वान् महाबाहुर्वाली विपुलविक्रमः ॥ ३५
जुगोप भुजवीर्येण ऋक्षगोपुच्छवानरान् । तैरियं पृथिवी शूरैः सपर्वतवनार्णवा ॥ ३६
कीर्णा विविधसंस्थानैर्नानाव्यञ्जनलक्षणैः ॥

तैर्मेघवृन्दाचलकूटकल्पैर्महाबलैर्वानरयूथपालैः ।
बभूव भूर्भीमशरीररूपैः समावृता रामसहायहेतोः ॥ ३७

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायां बालकाण्डे ऋक्षवानरोत्पत्तिर्नाम सप्तदशः सर्गः

---

## अष्टादशः सर्गः

### श्रीरामाद्यवतारः

निर्वृत्ते तु क्रतौ तस्मिन् हयमेधे महात्मनः । प्रतिगृह्य सुरा भागान् प्रतिजग्मुर्यथागतम् ॥ १
समाप्तदीक्षानियमः पत्नीगणसमन्वितः । प्रविवेश पुरीं राजा सभृत्यबलवाहनः ॥ २
यथार्हं पूजितास्तेन राज्ञा वै पृथिवीश्वराः । मुदिताः प्रययुर्देशान् प्रणम्य मुनिपुंगवम् ॥ ३
श्रीमतां गच्छतां तेषां स्वपुराणि पुरात्ततः । बलानि राज्ञां शुभ्राणि प्रहृष्टानि चकाशिरे ॥ ४
गतेषु पृथिवीशेषु राजा दशरथस्तदा । प्रविवेश पुरीं श्रीमान् पुरस्कृत्य द्विजोत्तमम् ॥ ५
शान्तया प्रययौ सार्धमृश्यशृङ्गः सुपूजितः । अन्वीयमानो राज्ञाथ सानुयात्रेण धीमता ॥ ६
एवं विसृज्य तान् सर्वान् राजा संपूर्णमानसः । उवास सुखितस्तत्र पुत्रोत्पत्तिं विचिन्तयन् ॥ ७
ततो यज्ञे समाप्ते तु ऋतूनां षट् समत्ययुः । ततश्च द्वादशे मासे चैत्रे नावमिके तिथौ ॥ ८
नक्षत्रेऽदितिदैवत्ये स्वोच्चसंस्थेषु पञ्चसु । ग्रहेषु कर्कटे लग्ने वाक्पताविन्दुना सह ॥ ९
प्रोद्यमाने जगन्नाथं सर्वलोकनमस्कृतम् । कौसल्याजनयद्रामं सैर्वलक्षणसंयुतम् ॥ १०
विष्णोरर्धं महाभागं पुत्रमैक्ष्वाकवर्धनम्[2] । कौसल्या शुशुभे तेन पुत्रेणामिततेजसा ॥ ११
यथा वरेण देवानामदितिर्वज्रपाणिना । भरतो नाम कैकेय्यां जज्ञे सत्यपराक्रमः ॥ १२
साक्षाद्विष्णोश्चतुर्भागः सर्वैः समुदितो गुणैः । [3]अथ लक्ष्मणशत्रुघ्नौ सुमित्राजनयत् सुतौ ॥ १३
सर्वास्त्रकुशलौ वीरौ विष्णोरर्धसमन्वितौ । पुष्ये जातस्तु भरतो मीनलग्ने प्रसन्नधीः ॥ १४

---

१. दिव्य- ग. ङ.  दुन्दुभिस्वनम्—इति ग.
२. एतदनन्तरम्—लोहिताक्षं महाबाहुं रक्तोष्ठं  ३. इतः अर्धद्वयं नास्ति ग.

सार्पे जातौ च सौमित्री कुळीरेऽभ्युदिते रवौ । राज्ञः पुत्रा महात्मानश्चत्वारो जज्ञिरे पृथक् ॥ १५
गुणवन्तोऽनुरूपाश्च रुच्या प्रोष्ठपदोपमाः । जगुः कलं च गन्धर्वा ननृतुश्चाप्सरोगणाः ॥ १६
देवदुन्दुभयो नेदुः पुष्पवृष्टिश्च खाच्च्युता । उत्सवश्च महानासीदयोध्यायां जनाकुलः ॥ १७
रथ्याश्च जनसंबाधा नटनर्तकसंकुलाः । गायनैश्च विराविण्यो वादनैश्च तथापरैः ॥ १८
विरेजुर्विपुलास्तत्र सर्वरत्नसमन्विताः । प्रदेयांश्च ददौ राजा सूतमागधवन्दिनाम् ॥ १९
ब्राह्मणेभ्यो ददौ वित्तं गोधनानि सहस्रशः । अतीत्यैकादशाहं तु नामकर्म तथाकरोत् ॥ २०
ज्येष्ठं रामं महात्मानं भरतं कैकयीसुतम् । सौमित्रिं लक्ष्मणमिति शत्रुघ्नमपरं तथा ॥ २१
वसिष्ठः परमप्रीतो नामानि कृतवांस्तदा । ब्राह्मणान् भोजयामास पौरान् जानपदानपि ॥ २२
अददाद्ब्राह्मणानां[1] च रत्नौघममितं बहु । तेषां जन्मक्रियादीनि सर्वकर्माण्यकारयत् ॥ २३
तेषां केतुरिव ज्येष्ठो रामो रतिकरः पितुः । बभूव भूयो भूतानां स्वयंभूरिव संमतः ॥ २४
सर्वे वेदविदः शूराः सर्वे लोकहिते रताः । सर्वे ज्ञानोपसंपन्नाः सर्वे समुदिता गुणैः ॥ २५
तेषामपि महातेजा रामः सत्यपराक्रमः । इष्टः सर्वस्य लोकस्य शशाङ्क इव निर्मलः ॥ २६
गजस्कन्धेऽश्वपृष्ठे च रथचर्यासु संमतः । धनुर्वेदे च निरतः पितृशुश्रूषणे रतः ॥ २७
बाल्यात् प्रभृति सुस्निग्धो लक्ष्मणो लक्ष्मिवर्धनः । रामस्य लोकरामस्य भ्रातुर्ज्येष्ठस्य नित्यशः ॥ २८
सर्वप्रियकरस्तस्य रामस्यापि शरीरतः । लक्ष्मणो लक्ष्मिसंपन्नो बहिः प्राण इवापरः ॥ २९
न च तेन विना निद्रां लभते पुरुषोत्तमः । मृष्टमन्नमुपानीतमश्नाति न हि तं विना ॥ ३०
यदा हि हयमारूढो मृगयां याति राघवः । तदैनं पृष्ठतोऽभ्येति सधनुः परिपालयन् ॥ ३१
भरतस्यापि शत्रुघ्नो लक्ष्मणावरजो[2] हि सः । प्राणैः प्रियतरो नित्यं तस्य चासीत्तथा प्रियः ॥ ३२
स चतुर्भिर्महाभागैः पुत्रैर्दशरथः प्रियैः । बभूव परमप्रीतो देवैरिव[1] पितामहः ॥ ३३
ते यदा ज्ञानसंपन्नाः सर्वे समुदिता गुणैः । ह्रीमन्तः कीर्तिमन्तश्च सर्वज्ञा दीर्घदर्शिनः ॥ ३४
तेषामेवंप्रभावाणां सर्वेषां दीप्ततेजसाम् । पिता दशरथो हृष्टो ब्रह्मा लोकाधिपो यथा ॥ ३५
ते चापि मनुजव्याघ्रा वैदिकाध्ययने रताः । पितृशुश्रूषणरता धनुर्वेदे च निष्ठिताः ॥ ३६
अथ राजा दशरथस्तेषां दारक्रियां प्रति । चिन्तयामास धर्मात्मा सोपाध्यायः सबान्धवः ॥ ३७
तस्य चिन्तयमानस्य मन्त्रिमध्ये महात्मनः । अभ्यागच्छन्महातेजा विश्वामित्रो महामुनिः ॥ ३८
स राज्ञो दर्शनाकाङ्क्षी द्वाराध्यक्षानुवाच ह । शीघ्रमाख्यात मां प्राप्तं कौशिकं गाधिनः सुतम् ॥ ३९
तच्छ्रुत्वा वचनं त्रासाद्राज्ञो वेश्म प्रदुद्रुवुः । संभ्रान्तमनसः सर्वे तेन वाक्येन चोदिताः ॥ ४०
ते गत्वा राजभवनं विश्वामित्रमृषिं तदा । प्राप्तमावेदयामासुर्नृपायेक्ष्वाकवे तदा ॥ ४१

---

1. देवैरिति । अत्रापि चतुर्भिरिति संबध्यते । वसु-रुद्र-आदित्य विश्वेदेवैर्दिक्पालैश्चतुर्भिरित्यर्थः ।

१. अददद्ब्राह्मणानाम् च. छ.

२. हितः म.

तेषां तद्वचनं श्रुत्वा सपुरोधाः समाहितः । प्रत्युज्जगाम तं हृष्टो ब्रह्माणमिव वासवः ॥ ४२
तं दृष्ट्वा ज्वलितं दीप्त्या तापसं संशितव्रतम् । प्रहृष्टवदनो राजा ततोऽर्घ्यमुपहारयत्[1] ॥ ४३
स राज्ञः प्रतिगृह्यार्घ्यं शास्त्रदृष्टेन कर्मणा । कुशलं चाव्ययं चैव पर्यपृच्छन्नराधिपम् ॥ ४४
पुरे कोशे जनपदे बान्धवेषु सुहृत्सु च । कुशलं कौशिको राज्ञः पर्यपृच्छत् सुधार्मिकः ॥ ४५
अपि ते संनताः सर्वे सामन्ता रिपवो जिताः । दैवं च मानुषं चापि कर्म ते साध्वनुष्ठितम् ॥ ४६
वसिष्ठं च समागम्य कुशलं मुनिपुंगवः । ऋषींश्चान्यान् यथान्यायं महाभागानुवाच ह ॥ ४७
ते सर्वे हृष्टमनसस्तस्य राज्ञो निवेशनम् । विविशुः पूजितास्तत्र निषेदुश्च यथार्हतः ॥ ४८
अथ हृष्टमना राजा विश्वामित्रं महामुनिम् । उवाच परमोदारो हृष्टस्तमभिपूजयन् ॥ ४९
यथामृतस्य संप्राप्तिर्यथा वर्षमनूदके । यथा सदृशदारेषु पुत्रजन्माप्रजस्य च ॥ ५०
प्रनष्टस्य यथा लाभो यथा हर्षो महोदये[2] । तथैवागमनं मन्ये स्वागतं ते महामुने ॥ ५१
कं च ते परमं कामं करोमि किमु हर्षितः । पात्रभूतोऽसि मे ब्रह्मन् दिष्ट्या प्राप्तोऽसि धार्मिक[3] ॥ ५२
अद्य मे सफलं जन्म जीवितं च सुजीवितम्[4] । पूर्वं राजर्षिशब्देन तपसा द्योतितप्रभः ॥ ५३
ब्रह्मर्षित्वमनुप्राप्तः पूज्योऽसि बहुधा मया । तदद्भुतमिदं ब्रह्मन् पवित्रं परमं मम ॥ ५४
शुभक्षेत्रगतश्चाहं तव संदर्शनात् प्रभो । ब्रूहि यत् प्रार्थितं तुभ्यं कार्यमागमनं प्रति ॥ ५५
इच्छाम्यनुगृहीतोऽहं त्वदर्थपरिवृद्धये । कार्यस्य न विमर्शं च गन्तुमर्हसि कौशिक ॥ ५६
कर्ता चाहमशेषेण दैवतं हि भवान् मम । मम चायमनुप्राप्तो महानभ्युदयो द्विज ॥ ५७
तवागमनजः कृत्स्नो धर्मश्चानुत्तमो मम ॥

इति हृदयसुखं निशम्य वाक्यं श्रुतिसुखमात्मवता विनीतमुक्तम् ।
प्रथितगुणयशा गुणैर्विशिष्टः परमऋषिः परमं जगाम हर्षम् ॥ ५८

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायां
बालकाण्डे श्रीरामाद्यवतारो नाम अष्टादशः सर्गः

---

## एकोनविंशः सर्गः

### विश्वामित्रवाक्यम्

तच्छ्रुत्वा राजसिंहस्य वाक्यमद्भुतविस्तरम् । हृष्टरोमा महातेजा विश्वामित्रोऽभ्यभाषत ॥ १
सदृशं राजशार्दूल तवैतद्भुवि नान्यथा । महावंशप्रसूतस्य वसिष्ठव्यपदेशिनः[1] ॥ २
यत्तु मे हृद्गतं वाक्यं तस्य कार्यस्य निश्चयम् । कुरुष्व राजशार्दूल भव सत्यप्रतिश्रवाः ॥ ३

---

1. वसिष्ठव्यपदेशिनः वसिष्ठपुरोहितस्य ।

१. समुपाहरत् छ. ख.

२. महोदयः प्र.

३. कौशिकः ग.

४. एतदनन्तरम्—यस्माद्विप्रेन्द्रमद्राक्षं सुप्रभाता निशा मम—इति ग.

अहं नियममातिष्ठे सिद्ध्यर्थं पुरुषर्षभ । तस्य विघ्नकरौ द्वौ तु राक्षसौ कामरूपिणौ ॥ ४
व्रते मे बहुशश्चीर्णे समाप्त्यां राक्षसाविमौ[1] । मारीचश्च सुबाहुश्च वीर्यवन्तौ सुशिक्षितौ ॥ ५
स[2] मांसरुधिरौघेन वेदिं तामभ्यवर्षताम् । अवधूते तथाभूते तस्मिन्नियमनिश्चये ॥ ६
कृतश्रमो निरुत्साहस्तस्माद्देशादपाक्रमे । न च मे क्रोधमुत्स्रष्टुं बुद्धिर्भवति पार्थिव ॥ ७
तथाभूता हि सा चर्या न शापस्तत्र मुच्यते । तत् पुत्रं[3] राजशार्दूल रामं सत्यपराक्रमम् ॥ ८
काकपक्षधरं शूरं ज्येष्ठं मे दातुमर्हसि । शक्तो ह्येष मया गुप्तो दिव्येन स्वेन तेजसा ॥ ९
राक्षसा ये विकर्तारस्तेषामपि विनाशने[4] । श्रेयश्चास्मै प्रदास्यामि बहुरूपं न संशयः ॥ १०
त्रयाणामपि लोकानां येन ख्यातिं गमिष्यति । न च तौ राममासाद्य शक्तौ स्थातुं कथंचन ॥ ११
न च तौ राघवादन्यो हन्तुमुत्सहते पुमान् । वीर्योत्सिक्तौ हि तौ पापौ कालपाशवशं गतौ ॥ १२
रामस्य राजशार्दूल न पर्याप्तौ महात्मनः । न च पुत्रगतं स्नेहं कर्तुमर्हसि पार्थिव ॥ १३
अहं ते प्रतिजानामि हतौ तौ विद्धि राक्षसौ । अहं वेद्मि महात्मानं रामं सत्यपराक्रमम् ॥ १४
वसिष्ठोऽपि महातेजा ये चेमे तपसि स्थिताः । यदि ते धर्मलाभं च यशश्च परमं भुवि ॥ १५
स्थिरमिच्छसि राजेन्द्र रामं मे दातुमर्हसि । यद्यभ्यनुज्ञां काकुत्स्थ ददते तव मन्त्रिणः ॥ १६
वसिष्ठप्रमुखाः सर्वे ततो रामं विसर्जय । अभिप्रेतमसंसक्तमात्मजं दातुमर्हसि ॥ १७
दशरात्रं हि यज्ञस्य रामं राजीवलोचनम् । नात्येति कालो यज्ञस्य यथायं मम राघव ॥ १८
तथा कुरुष्व भद्रं ते मा च शोके मनः कृथाः । इत्येवमुक्त्वा धर्मात्मा धर्मार्थसहितं वचः ॥ १९
विरराम महातेजा विश्वामित्रो महामुनिः । स तन्निशम्य राजेन्द्रो विश्वामित्रवचः शुभम् ॥ २०
शोकेन महताविष्टश्चचाल च मुमोह च । लब्धसंज्ञस्तथोत्थाय व्यषीदत भयान्वितः[6] ॥ २१

इति हृदयमनोविदारणं मुनिवचनं तदतीव शुश्रुवान् ।
नरपतिरगमन्महान् महात्मा[7] व्यथितमनाः प्रचचाल चासनात् ॥ २२

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायां
बालकाण्डे विश्वामित्रवाक्यं नाम एकोनविंशः सर्गः

---

१. राक्षसाधमौ घ.
२. तौ मांस- छ. ख.
३. स्वपुत्रम् गो. छ.
४. अस्य स्थाने—राक्षसा विघ्नकर्तार एतेषां च विनाशने—इति ख.
५. अस्यानन्तरम्—दशरात्रस्तु[स्य] यज्ञस्य तस्मिन् रामेण राक्षसौ । हन्तव्यौ विघ्नकर्तारौ मम यज्ञस्य वैरिणौ ॥—इति ग.
६. अस्य पद्यस्य स्थाने—शोकमभ्यागमत्तीव्रं व्यषीदत भयान्वितः—इति च. छ.
७. नरपतिरभवन्महांस्तदा च. नरपतिरगमद्भयं महत् छ.

## विंशः सर्गः

### दशरथवाक्यम्

तच्छ्रुत्वा राजशार्दूलो विश्वामित्रस्य भाषितम् । मुहूर्तमिव निःसंज्ञः संज्ञावानिदमब्रवीत् ॥ १
ऊनषोडशवर्षो मे रामो राजीवलोचनः । न युद्धयोग्यतामस्य पश्यामि सह राक्षसैः ॥ २
इयमक्षौहिणी पूर्णा यस्याहं पतिरीश्वरः । अनया संवृतो गत्वा योद्धाहं तैर्निशाचरैः ॥ ३
इमे शूराश्च विक्रान्ता भृत्या मेऽस्त्रविशारदाः । योग्या रक्षोगणैर्योद्धुं न रामं नेतुमर्हसि ॥ ४
अहमेव धनुष्पाणिर्गोप्ता समरमूर्धनि । यावत् प्राणान् धरिष्यामि तावद्योत्स्ये निशाचरैः ॥ ५
निर्विघ्ना व्रतचर्या सा भविष्यति सुरक्षिता । अहं तत्रागमिष्यामि न रामं नेतुमर्हसि ॥ ६
बालो ह्यकृतविद्यश्च न च वेत्ति बलाबलम् । न चास्त्रबलसंयुक्तो न च युद्धविशारदः ॥ ७
न चासौ रक्षसां योग्यः कूटयुद्धा हि ते ध्रुवम्[१] । विप्रयुक्तो हि रामेण मुहूर्तमपि नोत्सहे ॥ ८
जीवितुं मुनिशार्दूल न रामं नेतुमर्हसि । यदि वा राघवं ब्रह्मन्नेतुमिच्छसि सुव्रत ॥ ९
चतुरङ्गसमायुक्तं मया च सह तं[२] नय । षष्टिर्वर्षसहस्राणि जातस्य मम कौशिक ॥ १०
दुःखेनोत्पादितश्चायं न रामं नेतुमर्हसि । चतुर्णामात्मजानां हि प्रीतिः परमिका मम ॥ ११
ज्येष्ठं धर्मप्रधानं च[३] न रामं नेतुमर्हसि । किंवीर्या राक्षसास्ते च कस्य पुत्राश्च के च ते ॥ १२
कथंप्रमाणाः के चैतान् रक्षन्ति मुनिपुंगव । कथं च प्रतिकर्तव्यं तेषां रामेण रक्षसाम् ॥ १३
मामकैर्वा बलैर्ब्रह्मन् मया वा कूटयोधिनाम् । सर्वं मे शंस भगवन् कथं तेषां मया रणे ॥ १४
स्थातव्यं दुष्टभावानां वीर्योत्सिक्ता हि राक्षसाः । तस्य तद्वचनं श्रुत्वा विश्वामित्रोऽभ्यभाषत ॥ १५
पौलस्त्यवंशप्रभवो रावणो नाम राक्षसः । स ब्रह्मणा दत्तवरस्त्रैलोक्यं बाधते भृशम् ॥ १६
महाबलो महावीर्यो राक्षसैर्बहुभिर्वृतः । श्रूयते हि महावीर्यो रावणो राक्षसाधिपः ॥ १७
साक्षाद्वैश्रवणभ्राता पुत्रो विश्रवसो मुनेः । यदा स्वयं न यज्ञस्य विघ्नकर्ता महाबलः ॥ १८
तेन संचोदितौ द्वौ तु राक्षसौ सुमहाबलौ । मारीचश्च सुबाहुश्च यज्ञविघ्नं करिष्यतः ॥ १९
इत्युक्तो मुनिना तेन राजोवाच मुनिं तदा । न हि शक्तोऽस्मि संग्रामे स्थातुं तस्य दुरात्मनः ॥ २०
स त्वं प्रसादं धर्मज्ञ कुरुष्व मम पुत्रके । मम चैवाल्पभाग्यस्य दैवतं हि भवान् गुरुः ॥ २१
देवदानवगन्धर्वा यक्षाः पतगपन्नगाः । न शक्ता रावणं सोढुं किं पुनर्मानवा युधि ॥ २२
स हि वीर्यवतां वीर्यमादत्ते युधि राक्षसः । तेन चाहं न[५] शक्नोमि संयोद्धुं तस्य वा बलैः ॥ २३
सबलो वा मुनिश्रेष्ठ सहितो वा ममात्मजैः । कथमप्यमरप्रख्यं संग्रामाणामकोविदम् ॥ २४

---

१. इदमर्धम् ग. नास्ति । राक्षसाः पुना.
२. साहितम् प्र.
३. ज्येष्ठे धर्मप्रधाने च. ति.
४. पुलस्त्य- ख. छ. ञ.
५. शक्तोऽस्मि झ.

बालं मे तनयं ब्रह्मन्नैव दास्यामि पुत्रकम् । अथ कालोपमौ युद्धे सुतौ सुन्दोपसुन्दयोः ॥ २५

यज्ञविघ्नकरौ तौ ते नैव दास्यामि पुत्रकम्[१] । तयोरन्यतरेणाहं योद्धा स्यां ससुहृद्गणः ॥ २६

अन्यथा त्वनुनेष्यामि भवन्तं सह बान्धवैः

इति नरपतिजल्पनाद्द्विजेन्द्रं कुशिकसुतं सुमहान् विवेश मन्युः ।

सुहुत इव मखेऽग्निराज्यसिक्तः समभवदुज्ज्वलितो महर्षिवह्निः ॥ २७

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायां बालकाण्डे दशरथवाक्यं नाम विंशः सर्गः

---

## एकविंशः सर्गः

### वसिष्ठवाक्यम्

तच्छ्रुत्वा वचनं तस्य स्नेहपर्याकुलाक्षरम् । समन्युः कौशिको वाक्यं प्रत्युवाच महीपतिम् ॥ १

पूर्वमर्थं प्रतिश्रुत्य प्रतिज्ञां हातुमिच्छसि । राघवाणामयुक्तोऽयं कुलस्यास्य विपर्ययः ॥ २

यदीदं ते क्षमं राजन् गमिष्यामि यथागतम् । मिथ्याप्रतिज्ञः काकुत्स्थ सुखी भव[1] सबान्धवः ॥ ३

तस्य रोषपरीतस्य विश्वामित्रस्य धीमतः । चचाल वसुधा कृत्स्ना विवेश च भयं सुरान् ॥ ४

त्रस्तरूपं तु विज्ञाय जगत् सर्वं महानृषिः । नृपतिं सुव्रतो धीरो वसिष्ठो वाक्यमब्रवीत् ॥ ५

इक्ष्वाकूणां कुले जातः साक्षाद्धर्म इवापरः । धृतिमान् सुव्रतः श्रीमान्न धर्मं हातुमर्हसि ॥ ६

त्रिषु लोकेषु विख्यातो धर्मात्मा इति राघवः । स्वधर्मं प्रतिपद्यस्व नाधर्मं वोढुमर्हसि ॥ ७

संश्रुत्यैवं करिष्यामीत्यकुर्वाणस्य राघव । [2]इष्टापूर्तवधो भूयात्तस्माद्रामं विसर्जय ॥ ८

कृतास्त्रमकृतास्त्रं वा नैनं शक्ष्यन्ति राक्षसाः । गुप्तं कुशिकपुत्रेण ज्वलनेनामृतं यथा ॥ ९

एष विग्रहवान् धर्म एष वीर्यवतां वरः । एष बुद्ध्याधिको लोके तपसश्च परायणम् ॥ १०

एषोऽस्त्रान् विविधान्[२] वेत्ति त्रैलोक्ये सचराचरे । नैनमन्यः पुमान् वेत्ति न च वेत्स्यन्ति केचन ॥ ११

न देवा नर्षयः केचिन्नासुरा न च राक्षसाः । गन्धर्वयक्षप्रवराः सकिंनरमहोरगाः ॥ १२

सर्वास्त्राणि [३]भृशाश्वस्य पुत्राः परमधार्मिकाः । कौशिकाय पुरा दत्ता यदा राज्यं प्रशासति ॥ १३

तेऽपि पुत्रा [३]भृशाश्वस्य प्रजापतिसुतासुताः । नैकरूपा महावीर्या दीप्तिमन्तो जयावहाः ॥ १४

---

1. सुखी भवेति । अस्य दुःखी भवेति विपरीतार्थे लक्षणा । मिथ्याप्रतिज्ञत्वमूलां भाविनीं दुःखपरंपरां नावगच्छसीति प्रयोजनमत्र व्यङ्ग्यम् । अपि च शापदानसमर्थोऽप्यहं न ददामि कमपि शापम् । किं तु विहतप्रतिज्ञस्यापि तव सुखावस्थानमेवानुजानामीति विश्वामित्रस्य स्वसाधुत्वप्रकटनं व्यङ्ग्यम् ।

2. इष्टं यागः । पूर्तं तडागारामनिर्माणादि धर्माचरणम् ।

१. एतदनन्तरम्—तौ हि यक्षस्य कन्यायां जातौ सुन्दोपसुन्दयोः । मारीचश्च सुबाहुश्च वीर्यवन्तौ सुशिक्षितौ ॥—इति च.

२. एषोऽस्त्रं विविधं प्र.

३. कृशाश्वस्य ।

जया च सुप्रभा चैव दक्षकन्ये सुमध्यमे । ते सुवातेऽस्त्रशस्त्राणि शतं परमभास्वरम् ॥ १५
पञ्चाशतं सुताँल्लेभे जया नाम वराङ्गना[2] । वधायासुरसैन्यानाममेयान् कामरूपिणः ॥ १६
सुप्रभा जनयामास पुत्रान् पञ्चाशतं पुनः । संहारान्नाम दुर्धर्षान् दुराक्रामान् बलीयसः ॥ १७
तानि चास्त्राणि वेत्त्येष यथावत्कुशिकात्मजः । अपूर्वाणां च जनने शक्तो भूयः स धर्मवित् ॥ १८
तेनास्य मुनिमुख्यस्य सर्वज्ञस्य महात्मनः । न किंचिदप्यविदितं भूतं भव्यं च राघव[3] ॥ १९
एवंवीर्यो महातेजा विश्वामित्रो महायशाः । न रामगमने राजन् संशयं गन्तुमर्हसि ॥ २०
तेषां निग्रहणे शक्तः स्वयं च कुशिकात्मजः[4] । तव पुत्रहितार्थाय त्वामुपेत्याभियाचते ॥ २१

इति मुनिवचनात् प्रसन्नचित्तो रघुवृषभश्च मुमोद भास्वराङ्गः ।
गमनमभिरुरोच राघवस्य प्रथितयशाः कुशिकात्मजाय बुद्ध्या ॥ २२

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायां
बालकाण्डे वसिष्ठवाक्यं नाम एकविंशः सर्गः

---

## द्वाविंशः सर्गः

### विद्याप्रदानम्

तथा वसिष्ठे ब्रुवति राजा दशरथः सुतम्[5] । प्रहृष्टवदनो राममाजुहाव सलक्ष्मणम् ॥ १
कृतस्वस्त्ययनं मात्रा पित्रा दशरथेन च । पुरोधसा वसिष्ठेन मङ्गलैरभिमन्त्रितम् ॥ २
स पुत्रं मूर्ध्न्युपाघ्राय राजा दशरथः प्रियम्[6] । ददौ कुशिकपुत्राय सुप्रीतेनान्तरात्मना ॥ ३
ततो वायुः[1] सुखस्पर्शो विरजस्को ववौ तदा । विश्वामित्रगतं दृष्ट्वा रामं राजीवलोचनम् ॥ ४
पुष्पवृष्टिर्महत्यासीद्देवदुन्दुभिनिःस्वनैः । शङ्खदुन्दुभिनिर्घोषः प्रयाते तु महात्मनि ॥ ५
विश्वामित्रो ययावग्रे ततो रामो महायशाः । काकपक्षधरो धन्वी तं च सौमित्रिरन्वगात् ॥ ६
कलापिनौ धनुष्पाणी शोभयानौ दिशो दश । विश्वामित्रं महात्मानं त्रिशीर्षाविव पन्नगौ ॥ ७
अनुजग्मतुरक्षुद्रौ पितामहमिवाश्विनौ[8] । तदा कुशिकपुत्रं तु धनुष्पाणी स्वलंकृतौ ॥ ८
बद्धगोधाङ्गुलित्राणौ खड्गवन्तौ महाद्युती । कुमारौ चारुवपुषौ भ्रातरौ रामलक्ष्मणौ ॥ ९
अनुयातौ श्रिया दीप्तौ शोभयेतामनिन्दितौ । स्थाणुं देवमिवाचिन्त्यं कुमाराविव पावकी ॥ १०

---

1. वायुः वायोरभिमानी देव इत्यर्थः । तेन, विश्वामित्रं दृष्ट्वा इत्युपपन्नम् । स च देवः प्रस्थानसमये भावि मङ्गलम् आशासानः पितेव पुत्रं सुखेन स्पर्शेन सर्वाङ्गीणं स्पृशन् ववौ इति भावः ।

१. ते सुतेऽस्त्राणि ति.
२. परान् पुरा च. छ.
३. इदं पद्यम् क. नास्ति ।
४. अस्यानन्तरम्—धनुर्भृतोऽस्य शक्रस्तु बिभियात् समरे विभो—इति ग.
५. स्वयम् ग.
६. तदा ग.
७. धनुर्धरः ञ.
८. इदं अर्धं ब. नास्ति ।
९. इदं अर्धं प्र. नास्ति ।

अध्यर्धयोजनं गत्वा सरय्वा दक्षिणे तटे । रामेति मधुरां वाणीं विश्वामित्रोऽभ्यभाषत ॥ ११
गृहाण वत्स सलिलं मा भूत् कालस्य पर्ययः । मन्त्रग्रामं गृहाण त्वं बलामतिबलां तथा ॥ १२
न श्रमो न ज्वरो वा ते न रूपस्य विपर्ययः । न च सुप्तं प्रमत्तं वा धर्षयिष्यन्ति नैर्ऋताः ॥ १३
न बाह्वोः सदृशो वीर्ये पृथिव्यामस्ति कश्चन । त्रिषु लोकेषु वै राम न भवेत् सदृशस्तव[1] ॥ १४
न सौभाग्ये न दाक्षिण्ये न ज्ञाने बुद्धिनिश्चये । नोत्तरे प्रतिवक्तव्ये समो लोके तवानघ ॥ १५
एतद्विद्याद्वये लब्धे न[2] भवेत् सदृशस्तव । बला चातिबला चैव सर्वज्ञानस्य मातरौ ॥ १६
बलामतिबलां चैव पठतः पथि राघव । क्षुत्पिपासे न ते राम भविष्येते नरोत्तम[3] ॥ १७
विद्याद्वयमधीयाने यशश्चाप्यतुलं त्वयि । पितामहसुते ह्येते विद्ये तेजःसमन्विते ॥ १८
प्रदातुं तव काकुत्स्थ सदृशस्त्वं हि धार्मिक । कामं बहुगुणाः सर्वे त्वय्येते नात्र संशयः ॥ १९
तपसा संभृते चैते बहुरूपे भविष्यतः । ततो रामो जलं स्पृष्ट्वा प्रहृष्टवदनः शुचिः[4] ॥ २०
प्रतिजग्राह ते विद्ये महर्षेर्भावितात्मनः । विद्यासमुदितो रामः शुशुभे भूरिविक्रमः ॥ २१
सहस्ररश्मिर्भगवान् शरदीव दिवाकरः । गुरुकार्याणि सर्वाणि नियुज्य कुशिकात्मजे ॥ २२
ऊषुस्तां रजनीं तीरे सरय्वाः सुसुखं त्रयः ॥

दशरथनृपसूनुसत्तमाभ्यां तृणशयनेऽनुचिते सहोषिताभ्याम् ।
कुशिकसुतवचोऽनुलालिताभ्यां क्षणमिव सा विबभौ विभावरी च[5] ॥ २३

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायां
बालकाण्डे विद्याप्रदानं नाम द्वाविंशः सर्गः

---

## त्रयोविंशः सर्गः

### कामाश्रमवासः

प्रभातायां तु शर्वर्यां विश्वामित्रो महामुनिः । अभ्यभाषत काकुत्स्थं शयानं[6] पर्णसंस्तरे ॥ १
कौसल्या सुप्रजा राम पूर्वा संध्या प्रवर्तते । उत्तिष्ठ नरशार्दूल कर्तव्यं दैवमाह्निकम् ॥ २
तस्यर्षेः परमोदारं वचः श्रुत्वा नृपात्मजौ । स्नात्वा कृतोदकौ वीरौ जेपतुः परमं जपम् ॥ ३
कृताह्निकौ महावीर्यौ विश्वामित्रं तपोधनम् । अभिवाद्याभिसंहृष्टौ गमनायोपतस्थतुः ॥ ४
तौ प्रयातौ महावीर्यौ दिव्यां त्रिपथगां नदीम् । ददृशाते ततस्तत्र सरय्वाः संगमे शुभे ॥ ५
तत्राश्रमपदं पुण्यमृषीणां भावितात्मनाम्[7] । बहुवर्षसहस्राणि तप्यतां परमं तपः ॥ ६
तं दृष्ट्वा परमप्रीतौ राघवौ पुण्यमाश्रमम् । ऊचतुस्तं महात्मानं विश्वामित्रमिदं वचः ॥ ७

---

१. त्वया प्र.
२. भविता नास्ति ते समः अ.
३. अस्यानन्तरम्—गृहाण सर्वलोकस्य गुप्तये रघुनन्दन—इति न.
४. सुखम् च. छ.
५. च प्र. नास्ति।
६. काकुत्स्थौ शयानौ च. छ.
७. उग्रतेजसाम् च. छ. अ.

कस्यायमाश्रमः पुण्यः को न्वस्मिन् वसते पुमान् । भगवन् श्रोतुमिच्छावः परं कौतूहलं हि नौ ॥ ८
तयोस्तद्वचनं श्रुत्वा प्रहस्य मुनिपुंगवः । अब्रवीच्छ्रूयतां राम कस्यायं पूर्व आश्रमः ॥ ९
कंदर्पो मूर्तिमानासीत् काम इत्युच्यते बुधैः । तपस्यन्तमिह स्थाणुं नियमेन समाहितम् ॥ १०
कृतोद्वाहं तु देवेशं गच्छन्तं समरुद्गणम् । धर्षयामास दुर्मेधा हुंकृतश्च महात्मना ॥ ११
अवदग्धस्य रौद्रेण चक्षुषा रघुनन्दन । व्यशीर्यन्त शरीरात् स्वात् सर्वगात्राणि दुर्मतेः ॥ १२
तस्य गात्रं हतं तत्र निर्दग्धस्य महात्मना । अशरीरः कृतः कामः क्रोधाद्देवेश्वरेण ह ॥ १३
अनङ्ग इति विख्यातस्तदा प्रभृति राघव । स चाङ्गविषयः श्रीमान् यत्राङ्गं स मुमोच ह ॥१४
तस्यायमाश्रमः पुण्यस्तस्येमे मुनयः पुरा । शिष्या धर्मपरा नित्यं तेषां पापं न विद्यते ॥ १५
इहाद्य रजनीं राम वसेम शुभदर्शने[1] । पुण्ययोः सरितोर्मध्ये श्वस्तरिष्यामहे वयम् ॥ १६
अभिगच्छामहे सर्वे शुचयः पुण्यमाश्रमम् । स्नाताश्च कृतजप्याश्च हुतहव्या नरोत्तम ॥ १७
इह वासः परो राम सुखं वत्स्यामहे निशाम् । तेषां संवदतां तत्र तपोदीर्घेण चक्षुषा ॥ १८
विज्ञाय परमप्रीता मुनयो हर्षमागमन् । अर्घ्यं पाद्यं तथातिथ्यं निवेद्य कुशिकात्मजे ॥ १९
रामलक्ष्मणयोः पश्चादकुर्वन्नतिथिक्रियाम् । सत्कारं समनुप्राप्य कथाभिरनुरञ्जयन् ॥ २०
यथार्हमजपन् सन्ध्यामृषयस्ते समाहिताः । तत्र वासिभिरानीता मुनिभिः सुव्रतैः सह ॥ २१
न्यवसन् सुसुखं तत्र कामाश्रमपदे तदा । कथाभिरभिरामाभिरभिरामौ नृपात्मजौ ॥ २२
रमयामास धर्मात्मा कौशिको मुनिपुंगवः ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायां
बालकाण्डे कामाश्रमनिवासो नाम त्रयोविंशः सर्गः

---

## चतुर्विंशः सर्गः

### ताटकावनप्रवेशः

ततः प्रभाते विमले कृताह्निकमरिंदमौ । विश्वामित्रं पुरस्कृत्य नद्यास्तीरमुपागतौ ॥ १
ते च सर्वे महात्मानो मुनयः संशितव्रताः । उपस्थाप्य शुभां नावं विश्वामित्रमथाब्रुवन् ॥ २
आरोहतु भवान्नावं राजपुत्रपुरस्कृतः । अरिष्टं गच्छ पन्थानं मा भूत् कालस्य पर्ययः ॥ ३
विश्वामित्रस्तथेत्युक्त्वा तानृषीनभिपूज्य च । ततार सहितस्ताभ्यां सरितं सागरंगमाम् ॥ ४
ततः शुश्राव तं शब्दं तोयसंरम्भवर्धितम् । मध्यमागम्य तोयस्य सह रामः कनीयसा ॥ ५
अथ रामः सरिन्मध्ये पप्रच्छ मुनिपुंगवम् । वारिणो भिद्यमानस्य किमयं तुमुलो ध्वनिः ॥ ६
राघवस्य वचः श्रुत्वा कौतूहलसमन्वितम् । कथयामास धर्मात्मा तस्य शब्दस्य निश्चयम् ॥ ७

---

१. दर्शन प्र. महातेजाः—इति ति. अधिकम् ।
२. अत्र—तस्य शब्दस्य निश्चयम् । ज्ञातुकामो

कैलासपर्वते राम मनसा निर्मितं सरः । ब्रह्मणा नरशार्दूल तेनेदं मानसं सरः ॥ ८
तस्मात् सुस्राव सरसः सायोध्यामुपगूहते । सरःप्रवृत्ता सरयूः पुण्या ब्रह्मसरश्च्युता ॥ ९
तस्यायमतुलः शब्दो जाह्नवीमभिवर्तते । वारिसंक्षोभजो राम प्रणामं नियतः कुरु ॥ १०
ताभ्यां तु तावुभौ कृत्वा प्रणाममतिधार्मिकौ । तीरं दक्षिणमासाद्य जग्मतुर्लघुविक्रमौ ॥ ११
स वनं घोरसंकाशं दृष्ट्वा नृपवरात्मजः । अविप्रहतमैक्ष्वाकः पप्रच्छ मुनिपुंगवम् ॥ १२
अहो वनमिदं दुर्गं झिल्लिकागणनादितम् । भैरवैः श्वापदैः कीर्णं शकुन्तैर्दारुणारवैः ॥ १३
नानाप्रकारैः शकुनैर्वाश्यद्भिर्भैरवस्वनैः । सिंहव्याघ्रवराहैश्च वारणैश्चोपशोभितम् ॥ १४
धवाश्वकर्णखदिरैर्बिल्वतिन्दुकपाटलैः । संकीर्णं बदरीभिश्च किंन्वेतद्दारुणं वनम् ॥ १५
तमुवाच महातेजा विश्वामित्रो महामुनिः । श्रूयतां वत्स काकुत्स्थ यस्यैतद्दारुणं वनम् ॥ १६
एतौ जनपदौ स्फीतौ पूर्वमास्तां नरोत्तम । मलदाश्च करूशाश्च देवनिर्माणनिर्मितौ ॥ १७
पुरा वृत्रवधे राम मलेन समभिप्लुतम् । क्षुधा चैव सहस्राक्षं ब्रह्महत्या समाविशत् ॥ १८
तमिन्द्रं स्नापयन् देवा ऋषयश्च तपोधनाः । कलशैः स्नापयामासुर्मलं चास्य प्रमोचयन् ॥ १९
इह भूम्यां मलं दत्त्वा दत्त्वा कारूशमेव च[1] । शरीरजं महेन्द्रस्य ततो हर्षं प्रपेदिरे ॥ २०
निर्मलो निष्करूशश्च शुचिरिन्द्रो यदाभवत् । ददौ[2] देशस्य सुप्रीतो वरं प्रभुरनुत्तमम्[3] ॥ २१
इमौ जनपदौ स्फीतौ ख्यातिं लोके गमिष्यतः । मलदाश्च करूशाश्च ममाङ्गमलधारिणौ ॥ २२
साधु साध्विति तं देवाः पाकशासनमब्रुवन् । देशस्य पूजां तां दृष्ट्वा कृतां शक्रेण धीमता ॥ २३
एतौ जनपदौ स्फीतौ दीर्घकालमरिंदम । मलदाश्च करूशाश्च मुदितौ धनधान्यतः ॥ २४
कस्यचित्त्वथ कालस्य यक्षी वै कामरूपिणी । बलं नागसहस्रस्य धारयन्ती तदा ह्यभूत् ॥ २५
ताटका नाम भद्रं ते भार्या सुन्दस्य धीमतः । मारीचो राक्षसः पुत्रो यस्याः शक्रपराक्रमः ॥ २६
वृत्तबाहुर्महाशीर्षो[4] विपुलास्यतनुर्महान् । राक्षसो भैरवाकारो नित्यं त्रासयते प्रजाः ॥ २७
इमौ जनपदौ नित्यं विनाशयति राघव । मलदांश्च करूशांश्च ताटका दुष्टचारिणी ॥ २८
सेयं पन्थानमावृत्य वसत्यध्यर्धयोजने । इत एव च गन्तव्यं ताटकाया वनं यतः ॥ २९
स्वबाहुबलमाश्रित्य जहीमां दुष्टचारिणीम् । मन्नियोगादिमं देशं कुरु निष्कण्टकं पुनः ॥ ३०
न हि कश्चिदिमं देशं शक्नोत्यागन्तुमीदृशम् । यक्षिण्या घोरया राम उत्सादितमसह्यया ॥ ३१
एतत्ते सर्वमाख्यातं यथैतद्दारुणं वनम् । यक्ष्या चोत्सादितं सर्वमद्यापि न निवर्तते ॥ ३२

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायां
बालकाण्डे ताटकावनप्रवेशो नाम चतुर्विंशः सर्गः

---

१. अस्यार्धस्य स्थाने—सोऽस्मिन् देशे मलं त्यक्त्वा त्यक्त्वा कारूषमेव च । वृत्रारिर्द्रोहसंभूतं ततो हर्षमवाप्तवान् ।—इति ग.
२. ततः ग.
३. प्रादादनुत्तमम् ग.
४. महावीर्यः च. छ.

## पञ्चविंशः सर्गः

### ताटकावृत्तान्तः

अथ तस्याप्रमेयस्य मुनेर्वचनमुत्तमम् । श्रुत्वा पुरुषशार्दूलः प्रत्युवाच शुभां गिरम् ॥ १

अल्पवीर्या यदा यक्षाः श्रूयन्ते मुनिपुंगव । कथं नागसहस्रस्य धारयत्यबला बलम् ॥ २

तस्य तद्वचनं श्रुत्वा राघवस्य महात्मनः[1] । हर्षयन् श्लक्ष्णया वाचा सलक्ष्मणमरिन्दमम् ॥ ३

विश्वामित्रोऽब्रवीद्वाक्यं शृणु येन बलोत्कटा । वरदानकृतं वीर्यं धारयत्यबला बलम् ॥ ४

पूर्वमासीन्महायक्षः सुकेतुर्नाम वीर्यवान् । अनपत्यः शुभाचारः स च तेपे महत्तपः ॥ ५

पितामहस्तु सुप्रीतस्तस्य यक्षपतेस्तदा । कन्यारत्नं ददौ राम ताटकां नाम नामतः ॥ ६

ददौ नागसहस्रस्य बलं चास्याः पितामहः । न त्वेव पुत्रं यक्षाय ददौ ब्रह्मा महायशाः ॥ ७

तां तु जातां विवर्धन्तीं रूपयौवनशालिनीम् । जम्भपुत्राय सुन्दाय ददौ भार्यां यशस्विनीम् ॥ ८

कस्यचित्त्वथ कालस्य यक्षी पुत्रं व्यजायत । मारीचं नाम दुर्धर्षं यः शापाद्राक्षसोऽभवत् ॥ ९

सुन्दे तु निहते[1] राम सागस्त्यमृषिसत्तमम् । ताटका सह पुत्रेण प्रधर्षयितुमिच्छति ॥ १०

भक्षार्थं जातसंरम्भा गर्जन्ती साभ्यधावत । आपतन्तीं तु तां दृष्ट्वा अगस्त्यो भगवानृषिः ॥ ११

राक्षसत्वं भजस्वेति मारीचं व्याजहार सः । अगस्त्यः परमक्रुद्धस्ताटकामपि शप्तवान् ॥ १२

पुरुषादी महायक्षी विरूपा विकृतानना । इदं रूपं विहायाशु दारुणं रूपमस्तु ते ॥ १३

सैषा शापकृतामर्षा ताटका क्रोधमूर्च्छिता । देशमुत्सादयत्येनमगस्त्याचरितं शुभम् ॥ १४

एनां राघव दुर्वृत्तां यक्षीं परमदारुणाम् । गोब्राह्मणहितार्थाय जहि दुष्टपराक्रमाम् ॥ १५

न ह्येनां शापसंसृष्टां कश्चिदुत्सहते पुमान् । निहन्तुं त्रिषु लोकेषु त्वामृते रघुनन्दन ॥ १६

न हि ते स्त्रीवधकृते घृणा कार्या नरोत्तम । चातुर्वर्ण्यहितार्थाय कर्तव्यं राजसूनुना ॥ १७

नृशंसमनृशंसं वा प्रजारक्षणकारणात् । पातकं[2] वा सदोषं वा कर्तव्यं रक्षता सता ॥ १८

राज्यभारनियुक्तानामेष धर्मः सनातनः । अधर्म्यां जहि काकुत्स्थ धर्मो ह्यस्या न विद्यते ॥ १९

श्रूयते हि पुरा शक्रो विरोचनसुतां नृप । पृथिवीं हन्तुमिच्छन्तीं मन्थरामभ्यसूदयत् ॥ २०

विष्णुना च पुरा राम भृगुपत्नी पतिव्रता[3] । अनिन्द्रं लोकमिच्छन्ती काव्यमाता निषूदिता ॥ २१

एतैरन्यैश्च बहुभी राजपुत्रैर्महात्मभिः । अधर्मनिरता नार्यो हताः पुरुषसत्तमैः ॥ २२

तस्मादेनां घृणां त्यक्त्वा जहि मच्छासनान्नृपं ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायां बालकाण्डे ताटकावृत्तान्तो नाम पञ्चविंशः सर्गः

---

1. निहत इति । अगस्त्यशापेनेति भावः । गर्जन्ती सा अगस्त्यमभ्यधावतीति वक्ष्यमाणत्वात् ।

१. अस्य स्थाने—इत्युक्त वचनं श्रुत्वा राघवस्यामितौजसः—इति च.

२. पावन प्र.

३. दृढव्रता च. छ.

४. इदमर्धम् ख. छ. ञ. नास्ति ।

## षड्विंशः सर्गः

### ताटकावधः

मुनेर्वचनमक्लीबं श्रुत्वा नरवरात्मजः । राघवः प्राञ्जलिर्भूत्वा प्रत्युवाच दृढव्रतः ॥ १
पितुर्वचननिर्देशात् पितुर्वचनगौरवात् । वचनं कौशिकस्येति कर्तव्यमविशङ्कया ॥ २
अनुशिष्टोऽस्म्ययोध्यायां गुरुमध्ये महात्मना । पित्रा दशरथेनाहं नावज्ञेयं हि तद्वचः ॥ ३
सोऽहं पितुर्वचः श्रुत्वा शासनाद्ब्रह्मवादिनः । करिष्यामि न संदेहस्ताटकावधमुत्तमम् ॥ ४
गोब्राह्मणहितार्थाय देशस्यास्य सुखाय च । तव चैवाप्रमेयस्य वचनं कर्तुमुद्यतः ॥ ५
एवमुक्त्वा धनुर्मध्ये बद्ध्वा मुष्टिमरिंदमः । ज्याघोषमकरोत्तीव्रं दिशः शब्देन नादयन् ॥ ६
तेन शब्देन वित्रस्तास्ताटकावनवासिनः । ताटका च सुसंक्रुद्धा तेन शब्देन मोहिता ॥ ७
तं शब्दमभिनिध्याय राक्षसी क्रोधमूर्छिता । श्रुत्वा चाभ्यद्रवद्वेगाद्यतः शब्दो विनिःसृतः ॥ ८
तां दृष्ट्वा राघवः क्रुद्धां विकृतां विकृताननाम् । प्रमाणेनातिवृद्धां च लक्ष्मणं सोऽभ्यभाषत ॥ ९
पश्य लक्ष्मण यक्षिण्या भैरवं दारुणं वपुः । भिद्येरन् दर्शनादस्या भीरूणां हृदयानि च ॥ १०
एनां पश्य दुराधर्षां मायाबलसमन्विताम् । विनिवृत्तां करोम्यद्य हृतकर्णाग्रनासिकाम् ॥ ११
न ह्येनामुत्सहे हन्तुं स्त्रीस्वभावेन रक्षिताम् । वीर्यं चास्या गतिं चापि हनिष्यामीति मे मतिः ॥ १२
एवं ब्रुवाणे रामे तु ताटका क्रोधमूर्छिता । उद्यम्य बाहू गर्जन्ती राममेवाभ्यधावत ॥ १३
विश्वामित्रस्तु ब्रह्मर्षिर्हुंकारेणाभिभर्त्स्य ताम् । स्वस्ति राघवयोरस्तु जयं चैवाभ्यभाषत ॥ १४
उद्धून्वाना रजो घोरं ताटका राघवावुभौ । रजोमोहेन महता मुहूर्तं सा व्यमोहयत् ॥ १५
ततो मायां समास्थाय शिलावर्षेण राघवौ । अवाकिरत् सुमहता ततश्चुक्रोध राघवः ॥ १६
शिलावर्षं महत्तस्याः शरवर्षेण राघवः । प्रतिवार्योपधावन्त्याः करौ चिच्छेद पत्रिभिः ॥[1] १७
ततश्छिन्नभुजां श्रान्तामभ्याशे परिगर्जतीम् । सौमित्रिरकरोत् क्रोधाद्धृतकर्णाग्रनासिकाम् ॥ १८
कामरूपधरा सद्यः कृत्वा रूपाण्यनेकशः । अन्तर्धानं गता यक्षी मोहयन्ती स्वमायया ॥ १९
अश्मवर्षं विमुञ्चन्ती भैरवं विचचार ह । ततस्तावश्मवर्षेण कीर्यमाणौ समन्ततः[2] ॥ २०
दृष्ट्वा गाधिसुतः श्रीमानिदं वचनमब्रवीत् । अलं ते घृणया राम पापैषा दुष्टचारिणी ॥ २१
यज्ञविघ्नकरी यक्षी पुरा वर्धेत मायया । वध्यतां तावदेवैषा पुरा संध्या प्रवर्तते ॥ २२
रक्षांसि संध्याकालेषु दुर्धर्षाणि भवन्ति हि । इत्युक्तस्तु तदा यक्षीमश्मवृष्ट्याभिवर्षतीम् ॥ २३
दर्शयन् शब्दवेधित्वं तां रुरोध स सायकैः । सा रुद्धा शरजालेन मायाबलसमन्विता ॥ २४

---

१. प्रतिहत्य च. छ.

२. अस्यानन्तरम्—ज्यास्वनं चक्रतुर्वीरौ वज्राशनिसमं तदा । मोहिता तेन शब्देन लब्धसंज्ञा चिरात्ततः ॥ तदा तौ शस्त्रवर्षेण ववर्ष क्रोधमूर्छिता । ततस्तौ शस्त्रवर्षेण कीर्यमाणौ समन्ततः ॥—इति ख.

अभिदुद्राव काकुत्स्थं लक्ष्मणं च विनेदुषी । तामापतन्तीं वेगेन विक्रान्तामशनीमिव ॥ २५
शरेणोरसि विव्याध सा पपात ममार च । तां हतां भीमसंकाशां दृष्ट्वा सुरपतिस्तदा ॥ २६
साधु साध्विति काकुत्स्थं सुराश्च समपूजयन् । उवाच परमप्रीतः सहस्राक्षः पुरंदरः ॥ २७
सुराश्च सर्वे संहृष्टा विश्वामित्रमथाब्रुवन् । मुने कौशिक भद्रं ते सेन्द्राः सर्वे मरुद्गणाः ॥ २८
तोषिताः कर्मणानेन स्नेहं दर्शय राघवे । प्रजापतेर्भृशाश्वस्य पुत्रान् सत्यपराक्रमान् ॥ २९
तपोबलभृतो ब्रह्मन् राघवाय निवेदय । पात्रभूतश्च ते ब्रह्मंस्तवानुगमने धृतः ॥ ३०
कर्तव्यं च महत् कर्म सुराणां राजसूनुना । एवमुक्त्वा सुराः सर्वे जग्मुर्हृष्टा यथागतम् ॥ ३१
विश्वामित्रं पूजयन्तस्ततः संध्या प्रवर्तते । ततो मुनिवरः प्रीतस्ताटकावधतोषितः ॥ ३२
मूर्ध्नि राममुपाघ्राय इदं वचनमब्रवीत् । इहाद्य रजनीं राम वसेम शुभदर्शन ॥ ३३
श्वः प्रभाते गमिष्यामस्तदाश्रमपदं मम । विश्वामित्रवचः श्रुत्वा हृष्टो दशरथात्मजः ॥ ३४
उवास रजनीं तत्र ताटकाया वने सुखम् । मुक्तशापं वनं तच्च तस्मिन्नेव तदाहनि[1] ॥ ३५
रमणीयं विबभ्राज यथा चैत्ररथं वनम् ॥

निहत्य तां यक्षसुतां स रामः प्रशस्यमानः सुरसिद्धसंघैः ।
उवास तस्मिन् मुनिना सहैव प्रभातवेलां प्रतिबोध्यमानः ॥ ३६

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायां
बालकाण्डे ताटकावधो नाम षड्विंशः सर्गः

---

## सप्तविंशः सर्गः

### अस्त्रग्रामप्रदानम्

अथ तां रजनीमुष्य विश्वामित्रो महायशाः[2] । प्रहस्य[3] राघवं वाक्यमुवाच मधुराक्षरम् ॥ १
परितुष्टोऽस्मि भद्रं ते राजपुत्र महायशः । प्रीत्या परमया युक्तो ददाम्यस्त्राणि सर्वशः ॥ २
देवासुरगणान् वापि सगन्धर्वोरगानपि । यैरमित्रान् प्रसह्याजौ वशीकृत्य विजेष्यसि ॥ ३
तानि दिव्यानि भद्रं ते ददाम्यस्त्राणि सर्वशः । दण्डचक्रं महद्दिव्यं तव दास्यामि राघव ॥ ४
धर्मचक्रं ततो वीर कालचक्रं तथैव च । विष्णुचक्रं तथात्युग्रमैन्द्रमस्त्रं तथैव च ॥ ५
वज्रमस्त्रं नरश्रेष्ठ शैवं शूलवरं तथा । अस्त्रं ब्रह्मशिरश्चैव ऐषीकमपि राघव ॥ ६
ददामि ते महाबाहो ब्राह्ममस्त्रमनुत्तमम् । गदे द्वे चैव काकुत्स्थ मोदकी शिखरी उभे ॥ ७

---

१. अस्यानन्तरम् — चम्पकाशोकपुंनागमल्लिकाभिः सुशोभितम् । चूतैश्च पनसैः पूगैर्नारिकेलैश्च शोभितम् ॥ वापीकूपतडागैश्च दीर्घिकाभिरलंकृतम् । मल्लिकाहेमकूटैश्च मण्टपैरुपशोभितम् ॥—इति ग. ।
२. महातपाः क.
३. प्रहस्य प्र.

प्रदीप्ते नरशार्दूल प्रयच्छामि नृपात्मज । धर्मपाशमहं राम कालपाशं तथैव च ॥ ८
पाशं वारुणमस्त्रं च ददाम्यहमनुत्तमम् । अशनी द्वे प्रयच्छामि शुष्कार्द्रे रघुनन्दन ॥ ९
ददामि चास्त्रं पैनाकमस्त्रं नारायणं तथा । आग्नेयमस्त्रं दयितं शिखरं नाम नामतः ॥ १०
वायव्यं प्रथनं[1] नाम ददामि च तवानघ । अस्त्रं हयशिरो नाम क्रौञ्चमस्त्रं तथैव च ॥ ११
शक्तिद्वयं च काकुत्स्थ ददामि तव राघव । कङ्कालं मुसलं घोरं कापालमथ कङ्कणम् ॥ १२
वधार्थं रक्षसां[2] यानि ददाम्येतानि सर्वशः । वैद्याधरं महास्त्रं च नन्दनं नाम नामतः ॥ १३
असिरत्नं महाबाहो ददामि नृवरात्मज । गान्धर्वमस्त्रं दयितं मानवं नाम नामतः ॥ १४
प्रस्वापनप्रशमने दद्मि सौरं च राघव । वर्षणं शोषणं चैव संतापनविलापने ॥ १५
मादनं[3] चैव दुर्धर्षं कन्दर्पदयितं तथा । पैशाचमस्त्रं दयितं मोहनं नाम नामतः ॥ १६
प्रतीच्छ नरशार्दूल राजपुत्र महायशः । तामसं नरशार्दूल सौमनं च महाबलम् ॥ १७
संवर्तं चैव दुर्धर्षं मौसलं च नृपात्मज । सत्यमस्त्रं महाबाहो तथा मायाधरं परम् ॥ १८
सौरं तेजःप्रभं नाम परतेजोऽपकर्षणम् । सौम्यास्त्रं शिशिरं नाम त्वाष्ट्रमस्त्रं च दारुणम् ॥ १९
दारुणं च भगस्यापि शीतेषुमथ मानवम् । एतान् राम महाबाहो कामरूपान् महाबलान् ॥ २०
गृहाण परमोदारान् क्षिप्रमेव नृपात्मज । स्थितस्तु प्राङ्मुखो भूत्वा शुचिर्मुनिवरस्तदा ॥ २१
ददौ रामाय सुप्रीतो मन्त्रग्राममनुत्तमम् । सर्वसंग्रहणं येषां दैवतैरपि दुर्लभम् । २२
तान्यस्त्राणि तदा विप्रो राघवाय न्यवेदयत् । जपतस्तु मुनेस्तस्य विश्वामित्रस्य धीमतः ॥ २३
उपतस्थुर्महार्हाणि सर्वाण्यस्त्राणि राघवम् । उचुश्च मुदिताः सर्वे रामं प्राञ्जलयस्तदा ॥ २४
इमे स्म परमोदाराः किंकरास्तव राघव । यद्यदिच्छसि भद्रं ते तत् सर्वं करवाम वै ॥ २५
ततो रामः प्रसन्नात्मा तैरित्युक्तो महाबलैः[4] । प्रतिगृह्य च काकुत्स्थः समालभ्य च पाणिना ॥ २६
मानसा मे भविष्यध्वमिति तानभ्यचोदयत् । ततः प्रीतमना रामो विश्वामित्रं महामुनिम् ॥ २७
अभिवाद्य महातेजा गमनायोपचक्रमे ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायां बालकाण्डे अस्त्रग्रामप्रदानं नाम सप्तविंशः सर्गः

---

## अष्टाविंशः सर्गः

### अस्त्रसंहारग्रहणम्

प्रतिगृह्य ततोऽस्त्राणि प्रहृष्टवदनः शुचिः । गच्छन्नेवाथ काकुत्स्थो विश्वामित्रमथाब्रवीत् ॥ १

---

१. प्रथमम् ख. छ. । मथनम् ग.
२. धारयन्त्यसुराः च. छ.
३. मोहनम् ख.
४. नाम नामतः च.
५. यद्यदिच्छसीत्यारभ्य महाबलैरित्यन्तो भागः ग. छ. नास्ति ।

गृहीतास्त्रोऽस्मि भगवन् दुराधर्षः सुरासुरैः । अस्त्राणां त्वहमिच्छामि संहारान् मुनिपुंगव ॥ २

एवं ब्रुवति[1] काकुत्स्थे विश्वामित्रो महामतिः । संहारान् व्याजहाराथ धृतिमान् सुव्रतः शुचिः ॥ ३

सत्यवन्तं सत्यकीर्तिं धृष्टं रभसमेव च । प्रतिहारतरं नाम पराङ्मुखमवाङ्मुखम् ॥ ४

लक्ष्यालक्ष्याविमौ[१] चैव दृढनाभसुनाभकौ । दशाक्षशतवक्त्रौ च दशशीर्षशतोदरौ ॥ ५

पद्मनाभमहानाभौ दुन्दुनाभस्वनाभकौ । ज्योतिषं कृशनं[२] चैव नैरास्यविमलावुभौ ॥ ६

यौगन्धरविनिद्रौ[३] च दैत्यप्रमथनौ[४] तथा । शुचिबाहुर्महाबाहुर्निष्कुलिर्विरुचिस्तथा ॥ ७

सार्चिर्माली धृतिर्माली वृत्तिमान् रुचिरस्तथा[५] । पित्र्यं[६] सौमनसं चैव [७]विधूतमकरावुभौ ॥ ८

करवीरकरं चैव धनधान्यौ च राघव । कामरूपं कामरुचिं मोहनं मारणं[८] तथा ॥ ९

जृम्भकं सर्वनाभं च संधानवरणौ तथा । भृशाश्वतनयान् राम भास्वरान् कामरूपिणः ॥ १०

प्रतीच्छ मम भद्रं ते पात्रभूतोऽसि राघव । बाढमित्येव काकुत्स्थः[1] प्रहृष्टेनान्तरात्मना ॥ ११

दिव्यभास्वरदेहाश्च मूर्तिमन्तः सुखप्रदाः । केचिदङ्गारसदृशाः केचिद्धूमोपमास्तथा ॥ १२

चन्द्रार्कसदृशाः केचित् प्रह्वाञ्जलिपुटास्तथा । रामं प्राञ्जलयो भूत्वाब्रुवन् मधुरभाषिणः ॥ १३

इमे स्म नरशार्दूल शाधि किं करवाम ते । मानसाः कार्यकालेषु साहाय्यं मे करिष्यथ ॥ १४

गम्यतामिति तानाह यथेष्टं रघुनन्दनः । अथ ते राममामन्त्र्य कृत्वा चापि प्रदक्षिणम् ॥ १५

एवमस्त्विति काकुत्स्थमुक्त्वा जग्मुर्यथागतम्[१०] । स च तान् राघवो ज्ञात्वा विश्वामित्रं महामुनिम् ॥

गच्छन्नेवाथ मधुरं श्लक्ष्णं वचनमब्रवीत् । किं न्वेतन्मेघसंकाशं पर्वतस्याविदूरतः ॥ १७

वृक्षषण्डमिवाभाति परं[११] कौतूहलं हि मे । दर्शनीयं मृगाकीर्णं मनोहरमतीव च ॥ १८

नानाप्रकारैः शकुनैर्वल्गुनादैरलंकृतम् । निःसृताः स्म मुनिश्रेष्ठ कान्ताराद्रोमहर्षणात् ॥ १९

अनया त्ववगच्छामि देशस्य सुखवत्तया । सर्वं मे शंस भगवन् कस्याश्रमपदं त्विदम् ॥ २०

संप्राप्ता यत्र ते पापा ब्रह्मघ्ना दुष्टचारिणः । तव यज्ञस्य विघ्नाय दुरात्मानो महामुने[१२] ॥ २१

---

1. तान् प्रतिजग्राहेति शेषः ।

१. लक्षाक्षाविषमौ च. छ.

२. शकुनम् पुना.

३. योगन्धरहरिद्रौ च. छ.

४. प्रशमनौ च. । प्रशमनम् छ.

५. अस्यार्धस्य स्थाने—सार्चिमाली धृतिज्वाला वृत्तिमान्नावुकांस्तथा—इति ख.

६. पितृ च. ञ.

७. विधून ख.

८. मोहमावरणम् च. छ.

९. इदं पद्यम् च. छ. नास्ति ।

१०. अस्यानन्तरम्— ततस्तु रामः काकुत्स्थः शासनाद्ब्रह्मवादिनः । लक्ष्मणाय च तान् सर्वान् वरास्त्रान् रघुनन्दनः ॥ संहारान् स च संहृष्टः श्रीमांस्तस्मै न्यवेदयत् ।—इति प्रक्षिप्तं क्वचिद् दृश्यते ।

११. मिता भाति च. छ.

१२. अस्यानन्तरम् भगवन् घोररूपास्ते मांसशोणितभोजनाः – इति ख.

भगवंस्तस्य को देशः सा यत्र तव याज्ञिकी। रक्षितव्या क्रिया ब्रह्मन् मया वध्याश्च राक्षसाः॥ २२
एतत् सर्वं मुनिश्रेष्ठ श्रोतुमिच्छामि सुव्रत[१]॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायां
बालकाण्डे अस्त्रसंहारग्रहणं नाम अष्टाविंशः सर्गः

## एकोनत्रिंशः सर्गः

### सिद्धाश्रमः

अथ तस्याप्रमेयस्य तद्वनं परिपृच्छतः। विश्वामित्रो महातेजा व्याख्यातुमुपचक्रमे॥ १
इह राम महाबाहो विष्णुर्देववरः प्रभुः। वर्षाणि सुबहूनीह तथा युगशतानि च॥ २
तपश्चरणयोगार्थमुवास सुमहातपाः। एष पूर्वाश्रमो राम वामनस्य महात्मनः॥ ३
सिद्धाश्रम इति ख्यातः सिद्धो ह्यत्र महातपाः। एतस्मिन्नेव काले तु राजा वैरोचनिर्बलिः॥ ४
निर्जित्य दैवतगणान् सेन्द्रांश्च समरुद्गणान्। कारयामास तद्राज्यं त्रिषु लोकेषु विश्रुतः॥ ५
यज्ञं चकार सुमहानसुरेन्द्रो महाबलः[२]। बलेस्तु यजमानस्य देवाः साग्निपुरोगमाः॥ ६
समागम्य स्वयं चैव विष्णुमूचुरिहाश्रमे। बलिर्वैरोचनिर्विष्णो यजते यज्ञमुत्तमम्॥ ७
असमाप्ते क्रतौ तस्मिन् स्वकार्यमभिपद्यताम्। ये चैनमभिवर्तन्ते याचितार इतस्ततः॥ ८
यच्च यत्र यथावच्च सर्वं तेभ्यः प्रयच्छति। स त्वं सुरहितार्थाय मायायोगमुपागतः[३]॥ ९
वामनत्वं गतो विष्णो कुरु कल्याणमुत्तमम्। एतस्मिन्नन्तरे राम काश्यपोऽग्निसमप्रभः॥ १०
अदित्या सहितो राम दीप्यमान इवौजसा। देवीसहायो भगवान् दिव्यं वर्षसहस्रकम्॥ ११
व्रतं समाप्य वरदं तुष्टाव मधुसूदनम्। तपोमयं तपोराशिं तपोमूर्तिं तपोधनम्॥[४] १२
तपसा त्वां सुतप्तेन पश्यामि पुरुषोत्तमम्। शरीरे तव पश्यामि जगत् सर्वमिदं प्रभो॥ १३
त्वमनादिरनिर्देश्यस्त्वामहं शरणं गतः। तमुवाच हरिः प्रीतः काश्यपं धूतकल्मषम्॥ १४
वरं वरय भद्रं ते वरार्होऽसि मतो मम। तच्छ्रुत्वा वचनं तस्य मारीचः काश्यपोऽब्रवीत्॥ १५
अदित्या देवतानां च मम चैवानुयाचतः[५]। वरं वरद सुप्रीतो दातुमर्हसि सुव्रत॥ १६
पुत्रत्वं गच्छ भगवन्नदित्यां मम चानघ। भ्राता भव यवीयांस्त्वं शक्रस्यासुरसूदन॥ १७
शोकार्तानां तु देवानां साहाय्यं कर्तुमर्हसि। अयं सिद्धाश्रमो नाम प्रसादात्ते भविष्यति॥ १८

---

१. ब्यह्य प्रभो च. छ
२. इदमर्धम् ग. केवलमस्ति।
३. उपाश्रितः ञ.
४. तपात्मकम् च. छ. ञ.
५. तमुवाचेत्यादिः अनुयाचत इत्यन्तो भागः ख. नास्ति।

सिद्धे कर्मणि देवेश उत्तिष्ठ भगवन्नितः । अथ विष्णुर्महातेजा अदित्यां समजायत ॥ १९
वामनं रूपमास्थाय वैरोचनिमुपागमत् । त्रीन् क्रमानथ भिक्षित्वा प्रतिगृह्य च मेदिनीम्[1] ॥ २०
आक्रम्य लोकाँल्लोकात्मा सर्वलोकहिते रतः । महेन्द्राय पुनः प्रादान्नियम्य बलिमोजसा ॥ २१
त्रैलोक्यं स महातेजाश्चक्रे शक्रवशं पुनः । तेनैष पूर्वमाक्रान्त आश्रमः श्रमनाशनः ॥ २२
मयापि भक्त्या तस्यैष वामनस्योपभुज्यते । एतमाश्रममायान्ति राक्षसा विघ्नकारिणः ॥ २३
अत्र ते पुरुषव्याघ्र हन्तव्या दुष्टचारिणः । अथ गच्छामहे राम सिद्धाश्रममनुत्तमम् ॥ २४
तदाश्रमपदं तात तवाप्येतद्यथा मम । [2]इत्युक्त्वा परमप्रीतो गृह्य रामं सलक्ष्मणम् ॥ २५
प्रविशन्नाश्रमपदं व्यरोचत महामुनिः । शशीव गतनीहारः पुनर्वसुसमन्वितः ॥ २६
तं दृष्ट्वा मुनयः सर्वे सिद्धाश्रमनिवासिनः । उत्पत्योत्पत्य सहसा विश्वामित्रमपूजयन् ॥ २७
यथार्हं चक्रिरे पूजां विश्वामित्राय धीमते । तथैव राजपुत्राभ्यामकुर्वन्नतिथिक्रियाम् ॥ २८
मुहूर्तमिव विश्रान्तौ राजपुत्रावरिंदमौ । प्राञ्जली मुनिशार्दूलमूचतू रघुनन्दनौ ॥ २९
अद्यैव दीक्षां प्रविश भद्रं ते मुनिपुंगव । सिद्धाश्रमोऽयं सिद्धः स्यात् सत्यमस्तु वचस्तव ॥ ३०
एवमुक्तो महातेजा विश्वामित्रो महामुनिः । प्रविवेश ततो दीक्षां नियतो नियतेन्द्रियः ॥ ३१
कुमारावपि तां रात्रिमुषित्वा सुसमाहितौ । प्रभातकाले चोत्थाय पूर्वां संध्यामुपास्य च ॥ ३२
स्पृष्टोदकौ शुची जप्यं समाप्य नियमेन च । हुताग्निहोत्रमासीनं विश्वामित्रमवन्दताम् ॥ ३३

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायां
बालकाण्डे सिद्धाश्रमो नाम एकोनत्रिंशः सर्गः

---

## त्रिंशः सर्गः
### यज्ञरक्षणम्

अथ तौ देशकालज्ञौ राजपुत्रावरिंदमौ । देशे काले च वाक्यज्ञावब्रूतां कौशिकं वचः ॥ १
भगवञ्छ्रोतुमिच्छावो यस्मिन् काले निशाचरौ । संशिक्षणीयौ[4] तौ ब्रह्मन्नातिवर्तेत तत्क्षणम् ॥ २
एवं ब्रुवाणौ काकुत्स्थौ त्वरमाणौ युयुत्सया । सर्वे ते मुनयः प्रीताः प्रशशंसुर्नृपात्मजौ ॥ ३
अद्य प्रभृति षड्रात्रं रक्षतं राघवौ युवाम् । दीक्षां गतो ह्येष मुनिर्मौनित्वं च गमिष्यति ॥ ४
तौ च तद्वचनं श्रुत्वा राजपुत्रौ यशस्विनौ । अनिद्रौ षडहोरात्रं तपोवनमरक्षताम् ॥ ५
उपासांचक्रतुर्वीरौ यत्तौ परमधन्विनौ । ररक्षतुर्मुनिवरं विश्वामित्रमरिंदमौ ॥ ६
अथ काले गते तस्मिन् षष्ठेऽहनि समागते । सौमित्रिमब्रवीद्रामो यत्तो भव समाहितः ॥ ७
रामस्यैवं ब्रुवाणस्य त्वरितस्य युयुत्सया । [1]प्रजज्वाल ततो वेदिः सोपाध्यायपुरोहिता[2] ॥ ८

---

1. रामस्य युयुत्साकालेऽकस्मादिद वेदिप्रज्वलन राक्षसागमनसूचक उत्पातः । समनन्तरपद्य वक्ष्यमाणं तु यथाकालप्राप्तमेवेति ध्येयम् ।
2. उपाध्यायो ब्रह्मा, पुरोहित उपद्रष्टा ।

१. मानदः च. छ. । मानतः ञ.
२. इदमर्धम् क. ख. घ. नास्ति ।
३. इदमर्धम् ञ. नास्ति ।
४. संरक्षणीयौ प्र.

सदर्भचमसस्रुक्का ससमित्कुसुमोच्चया। विश्वामित्रेण सहिता वेदिर्जज्वाल सर्त्विजा[1] ॥ ९
मन्त्रवच्च यथान्यायं यज्ञोऽसौ संप्रवर्तते। आकाशे च महाञ्शब्दः प्रादुरासीद्भयानकः ॥ १०
आवार्य गगनं मेघो यथा प्रावृषि निर्गतः। तथा मायां विकुर्वाणौ राक्षसावभ्यधावताम् ॥ ११
मारीचश्च सुबाहुश्च तयोरनुचरास्तथा[१]। आगम्य भीमसंकाशा रुधिरौघानवासृजन् ॥ १२
तां तेन रुधिरौघेण वेदिं वीक्ष्य समुक्षिताम्। सहसाभिद्रुतो रामस्तावपश्यत्ततो दिवि ॥ १३
तावापतन्तौ सहसा दृष्ट्वा राजीवलोचनः। लक्ष्मणं त्वथ संप्रेक्ष्य रामो वचनमब्रवीत् ॥ १४
पश्य लक्ष्मण दुर्वृत्तान् राक्षसान् पिशिताशनान्[२]। मानवास्त्रसमाधूताननिलेन यथा घनान् ॥ १५
करिष्यामि न संदेहो नोत्सहे हन्तुमीदृशान्। इत्युक्त्वा वचनं रामश्चापे संधाय वेगवान्[३] ॥ १६
मानवं परमोदारमस्त्रं परमभास्वरम्। चिक्षेप परमक्रुद्धो मारीचोरसि राघवः ॥ १७
स तेन परमास्त्रेण मानवेन समाहितः। संपूर्णं योजनशतं क्षिप्तः सागरसंप्लवे ॥ १८
विचेतनं विघूर्णन्तं शीतेषुबलपीडितम्। निरस्तं दृश्य मारीचं रामो लक्ष्मणमब्रवीत् ॥ १९
पश्य लक्ष्मण शीतेषुं मानवं धर्मसंहितम्। मोहयित्वा नयत्येनं न च प्राणैर्व्ययुज्यत[४] ॥ २०
इमानपि वधिष्यामि निर्घृणान् दुष्टचारिणः। राक्षसान् पापकर्मस्थान् यज्ञघ्नान् पिशिताशनान् ॥ २१
इत्युक्त्वा लक्ष्मणं चाशु लाघवं दर्शयन्निव[५]। संगृह्य सुमहच्चापमाग्नेयं रघुनन्दनः[६] ॥ २२
सुबाहूरसि चिक्षेप स विद्धः प्रापतद्भुवि। शेषान् वायव्यमादाय निजघान महायशाः ॥ २३
राघवः परमोदारो मुनीनां मुदमावहन्। स हत्वा राक्षसान् सर्वान् यज्ञघ्नान् रघुनन्दनः ॥ २४
ऋषिभिः पूजितस्तत्र यथेन्द्रो विजयी[७] पुरा[८]। अथ यज्ञे समाप्ते तु विश्वामित्रो महामुनिः ॥ २५
निरीतिका दिशो दृष्ट्वा काकुत्स्थमिदमब्रवीत्। कृतार्थोऽस्मि महाबाहो कृतं गुरुवचस्त्वया ॥ २६
सिद्धाश्रममिदं सत्यं कृतं राम महायशः। स हि रामं प्रशस्यैवं ताभ्यां संध्यामुपागमत्[९] ॥ २७

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायां
बालकाण्डे यज्ञरक्षणं नाम त्रिंशः सर्गः

---

1. सर्त्विजेति विश्वामित्रविशेषणम्। ऋत्विग्भिः परिवृतेनेत्यर्थः। वेदिविशेषणमेतद्योजयन्ति व्याख्यातारः।

१. चराश्च ये ञ.

२. अस्यानन्तरम्—यज्ञघ्नानशनिप्रख्यान् देवारीन् पिशिताशनान्—इति च.

३. इदं पद्यम् क. ख. घ. नास्ति। अस्यानन्तरम्—एवं वदन्तं तं दृष्ट्वा धनुःप्रवरपाणिनम्। बालोऽयमिति विज्ञाय तमनादृत्य दुर्मती ॥ विश्वामित्रस्य तां वेदिं सत्वरावभ्यधावताम्। तावुद्वीक्ष्य त्वरन् रामश्चापमायम्य वीर्यवान् ॥—इति ख.

४. वियुज्यते क. ग. छ.

५. इदमर्धम् क. घ. छ. नास्ति।

६. अस्य स्थाने—प्रगृह्यास्त्रं ततो रामो दिव्यमाग्नेयमुत्तमम्—इति ख. छ.

७. विजये ञ.

८. राघव इत्यादिः पुरेत्यन्तो भागः ग. नास्ति।

९. इदमर्धम् क. ञ. नास्ति।

# एकत्रिंशः सर्गः
## मिथिलाप्रस्थानम्

अथ तां रजनीं तत्र कृतार्थौ रामलक्ष्मणौ । ऊषतुर्मुदितौ वीरौ प्रहृष्टेनान्तरात्मना ॥ १
प्रभातायां तु शर्वर्यां कृतपौर्वाह्णिकक्रियौ । विश्वामित्रमृषींश्चान्यान् सहितावभिजग्मतुः ॥ २
अभिवाद्य मुनिश्रेष्ठं ज्वलन्तमिव पावकम् । ऊचतुर्मधुरोदारं वाक्यं मधुरभाषिणौ ॥ ३
इमौ स्वो मुनिशार्दूल किंकरौ समुपस्थितौ । आज्ञापय यथेष्टं वै शासनं करवाव किम् ॥ ४
एवमुक्तास्ततस्ताभ्यां सर्व एव महर्षयः । विश्वामित्रं पुरस्कृत्य रामं वचनमब्रुवन् ॥ ५
मैथिलस्य नरश्रेष्ठ जनकस्य भविष्यति । यज्ञः परमधर्मिष्ठस्तत्र[1] यास्यामहे वयम् ॥ ६
त्वं चैव नरशार्दूल सहास्माभिर्गमिष्यसि । अद्भुतं च धनूरत्नं तत्रैकं द्रष्टुमर्हसि ॥ ७
तद्धि पूर्वं नरश्रेष्ठ दत्तं सदसि दैवतैः । अप्रमेयबलं घोरं मखे परमभास्वरम् ॥ ८
नास्य देवा न गन्धर्वा नासुरा न च राक्षसाः । कर्तुमारोपणं शक्ता न कथंचन मानुषाः ॥ ९
धनुषस्तस्य वीर्यं तु जिज्ञासन्तो महीक्षितः । न शेकुरारोपयितुं राजपुत्रा महाबलाः ॥ १०
तद्धनुर्नरशार्दूल मैथिलस्य महात्मनः । तत्र द्रक्ष्यसि काकुत्स्थ यज्ञं चाद्भुतदर्शनम् ॥ ११
तद्धि यज्ञफलं तेन मैथिलेनोत्तमं धनुः । याचितं नरशार्दूल सुनाभं सर्वदैवतैः ॥ १२
आयागभूतं[1] नृपतेस्तस्य वेश्मनि राघव । अर्चितं विविधैर्गन्धैर्धूपैश्चागरुगन्धिभिः[2] ॥ १३
एवमुक्त्वा मुनिवरः प्रस्थानमकरोत्तदा । सर्षिसङ्घः सकाकुत्स्थ आमन्त्र्य वनदेवताः ॥ १४
स्वस्ति वोऽस्तु गमिष्यामि सिद्धः सिद्धाश्रमादहम् । उत्तरे जाह्नवीतीरे हिमवन्तं शिलोच्चयम् ॥ १५
प्रदक्षिणं ततः कृत्वा सिद्धाश्रममनुत्तमम् । उत्तरां दिशमुद्दिश्य प्रस्थातुमुपचक्रमे ॥ १६
तं प्रयान्तं मुनिवरमन्वयादनुसारिणाम्[3] । शकटीशतमात्रं च प्रयाणे ब्रह्मवादिनाम् ॥ १७
मृगपक्षिगणाश्चैव सिद्धाश्रमनिवासिनः । अनुजग्मुर्महात्मानं विश्वामित्रं महामुनिम् ॥ १८
निवर्तयामास ततः पक्षिसङ्घान् मृगानपि[4] । ते गत्वा दूरमध्वानं लम्बमाने दिवाकरे ॥ १९
वासं चक्रुर्मुनिगणाः शोणाकूले समाहिताः । तेऽस्तं गते दिनकरे स्नात्वा हुतहुताशनाः ॥ २०
विश्वामित्रं पुरस्कृत्य निषेदुरमितौजसः । रामोऽपि सहसौमित्रिर्मुनींस्तानभिपूज्य च ॥ २१
अग्रतो निषसादाथ विश्वामित्रस्य धीमतः । अथ रामो महातेजा विश्वामित्रं महामुनिम् ॥ २२
पप्रच्छ नरशार्दूलः कौतूहलसमन्वितः । भगवन् कोन्वयं देशः समृद्धवनशोभितः ॥ २३
श्रोतुमिच्छामि भद्रं ते वक्तुमर्हसि तत्त्वतः । चोदितो रामवाक्येन कथयामास सुव्रतः ॥ २४
तस्य देशस्य निखिलमृषिमध्ये महातपाः ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायां बालकाण्डे मिथिलाप्रस्थानं नाम एकत्रिंशः सर्गः

---

1. आयागेति । यजनीयदेवतारूपं धनुस्तस्य नृपतेर्वेश्मनि तिष्ठतीति भावः ।
१. तस्य. प्र.
२. इदमर्धम् घ. नास्ति ।
३. अनुसारिणम् गो.
४. इदमर्धम् घ. नास्ति ।
५. मुनिशार्दूलं प्र.

## द्वात्रिंशः सर्गः

### कुशनाभकन्योपाख्यानम्

ब्रह्मयोनिर्महानासीत् कुशो नाम महातपाः । अक्लिष्टव्रतधर्मज्ञः सज्जनप्रतिपूजकः ॥ १
स महात्मा कुलीनायां युक्तायां सुगुणोल्बणान् । वैदर्भ्यां जनयामास चतुरः सदृशान् सुतान् ॥ २
कुशाम्बं कुशनाभं च अधूर्तरजसं वसुम् । दीप्तियुक्तान् महोत्साहान् क्षत्रधर्मचिकीर्षया ॥ ३
तानुवाच कुशः पुत्रान् धर्मिष्ठान् सत्यवादिनः । क्रियतां पालनं पुत्रा धर्मं प्राप्स्यथ पुष्कलम् ॥ ४
कुशस्य वचनं श्रुत्वा चत्वारो लोकसंमताः । निवेशं चक्रिरे सर्वे पुराणां नृवरास्तदा ॥ ५
कुशाम्बस्तु महातेजाः कौशाम्बीमकरोत् पुरीम् । कुशनाभस्तु धर्मात्मा पुरं चक्रे महोदयम् ॥ ६
अधूर्तरजसो राम धर्मारण्यं महीपतिः । चक्रे पुरवरं राजा वसुश्चक्रे गिरिव्रजम् ॥ ७
एषा वसुमती राम वसोस्तस्य महात्मनः । एते शैलवराः पञ्च प्रकाशन्ते समन्ततः ॥ ८
सुमागधी नदी पुण्या मगधा विश्रुता ययौ । पञ्चानां शैलमुख्यानां मध्ये मालेव शोभते ॥ ९
सैषा हि मागधी राम वसोस्तस्य महात्मनः । पूर्वाभिचरिता राम सुक्षेत्रा सस्यमालिनी ॥ १०
कुशनाभस्तु राजर्षिः कन्याशतमनुत्तमम् । जनयामास धर्मात्मा घृताच्यां रघुनन्दन ॥ ११
तास्तु यौवनशालिन्यो रूपवत्यः स्वलंकृताः । उद्यानभूमिमागम्य प्रावृषीव शतह्रदाः ॥ १२
गायन्त्यो नृत्यमानाश्च वादयन्त्यश्च सर्वशः । आमोदं परमं जग्मुर्वराभरणभूषिताः ॥ १३
अथ ताश्चारुसर्वाङ्ग्यो रूपेणाप्रतिमा भुवि । उद्यानमध्ये शोभन्ते तारा इव घनान्तरे ॥ १४
ताः सर्वगुणसंपन्ना रूपयौवनसंयुताः । दृष्ट्वा सर्वात्मको वायुरिदं वचनमब्रवीत् ॥ १५
अहं वः कामये सर्वा भार्या मम भविष्यथ । मानुषस्त्यज्यतां भावो दीर्घमायुरवाप्स्यथ ॥ १६
चलं हि यौवनं नित्यं[3] मानुषेषु विशेषतः । अक्षय्यं यौवनं प्राप्ता अमर्यश्च भविष्यथ[4] ॥ १७
तस्य तद्वचनं श्रुत्वा वायोरक्लिष्टकर्मणः । अपहास्य ततो वाक्यं कन्याशतमथाब्रवीत् ॥ १८
अन्तश्चरसि भूतानां सर्वेषां त्वं सुरोत्तम । प्रभावज्ञाश्च ते सर्वाः किमस्मानवमन्यसे ॥ १९
कुशनाभसुताः सर्वाः समर्थास्त्वां सुरोत्तम । स्थानाच्च्यावयितुं देवं रक्षामस्तु तपो वयम् ॥ २०
मा भूत्स कालो दुर्मेधः पितरं सत्यवादिनम् । नावमन्य स्वधर्मेण स्वयंवरमुपास्महे ॥ २१
पिता हि प्रभुरस्माकं दैवतं परमं च नः । यस्य नो दास्यति पिता स नो भर्ता भविष्यति ॥ २२
तासां तद्वचनं श्रुत्वा वायुः परमकोपनः । प्रविश्य सर्वगात्राणि बभञ्ज भगवान् प्रभुः[7] ॥ २३

---

१. असूर्तं प्र.
२. रम्या मगधान् विश्रुता ययौ च. झ. नास्ति ।
३. नित्यमित्यादिः यौवनमित्यन्तो भागः क. नास्ति ।
४. इदं पद्यम् ख. नास्ति ।
५. प्रभावज्ञाश्चेत्यादिः सुरोत्तमेत्यन्तो भागः ख.
६. अवमन्य प्र.
७. अस्यानन्तरम्—अरविन्दाक्षयो भग्नगात्रा भयार्दिताः—इति पुना.

ताः कन्या वायुना भग्ना विविशुर्नृपतेर्गृहम् । प्रापतन् भुवि संभ्रान्ताः सलज्जाः साश्रुलोचनाः ॥ २४
स च ता दयिता दीनाः कन्याः परमशोभनाः । दृष्ट्वा भग्नास्तदा राजा संभ्रान्त इदमब्रवीत् ॥ २५
किमिदं कथ्यतां पुत्र्यः को धर्ममवमन्यते । कुब्जाः केन कृताः सर्वा वेष्टन्त्यो नाभिभाषथ ॥ २६
श्रोतुमिच्छामि तत्पुत्र्यो यस्येदं कर्म गर्हितम्[1] । एवं राजा विनिश्वस्य समाधिं संदधे ततः ॥ २७

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायां
बालकाण्डे कुशनाभकन्योपाख्यानं नाम द्वात्रिंशः सर्गः

---

## त्रयस्त्रिंशः सर्गः

### ब्रह्मदत्तविवाहः

तस्य तद्वचनं श्रुत्वा कुशनाभस्य धीमतः । शिरोभिश्चरणौ स्पृष्ट्वा कन्याशतमभाषत ॥ १
वायुः सर्वात्मको राजन् प्रधर्षयितुमिच्छति । अशुभं मार्गमास्थाय न धर्मं प्रत्यवेक्षते ॥ २
पितृमत्यः स्म भद्रं ते स्वच्छन्दे न वयं स्थिताः । पितरं नो वृणीष्व त्वं यदि नो दास्यते तव ॥ ३
तेन पापानुबन्धेन वचनं नप्रतीच्छता । एवं ब्रुवत्यः सर्वाः स्म वायुना निहता भृशम् ॥ ४
तासां तद्वचनं श्रुत्वा राजा परमधार्मिकः । प्रत्युवाच महातेजाः कन्याशतमनुत्तमम् ॥ ५
क्षान्तं क्षमावतां पुत्र्यः कर्तव्यं सुमहत् कृतम् । ऐकमत्यमुपागम्य कुलं चावेक्षितं मम ॥ ६
अलंकारो हि नारीणां क्षमा तु पुरुषस्य वा । दुष्करं तद्धि वः क्षान्तं त्रिदशेषु विशेषतः ॥ ७
यादृशी वः क्षमा पुत्र्यः सर्वासामविशेषतः[2] । क्षमा दानं क्षमा सत्यं क्षमा यज्ञश्च पुत्रिकाः ॥ ८
क्षमा यशः क्षमा धर्मः[3] क्षमया विष्ठितं जगत् । विसृज्य कन्याः काकुत्स्थ राजा त्रिदशविक्रमः ॥ ९
मन्त्रज्ञो मन्त्रयामास प्रदानं सह मन्त्रिभिः । [4]देशे काले च कर्तव्यं सदृशे प्रतिपादनम् ॥ १०
एतस्मिन्नेव काले तु चूली नाम महामुनिः । ऊर्ध्वरेताः शुभाचारो ब्राह्मं तप उपागमत् ॥ ११
तप्यन्तं तमृषिं तत्र गन्धर्वी पर्युपासते । सोमदा नाम भद्रं ते ऊर्मिलातनया तदा ॥ १२
सा च तं प्रणता भूत्वा शुश्रूषणपरायणा । उवास काले धर्मिष्ठा तस्यास्तुष्टोऽभवद्गुरुः ॥ १३
स च तां कालयोगेन प्रोवाच रघुनन्दन । परितुष्टोऽस्मि भद्रं ते किं करोमि तव प्रियम् ॥ १४
परितुष्टं मुनिं ज्ञात्वा गन्धर्वी मधुरस्वरा । उवाच परमप्रीता वाक्यज्ञा वाक्यकोविदम् ॥ १५
लक्ष्म्या समुदितो ब्राह्म्या ब्रह्मभूतो महातपाः । ब्राह्मेण तपसा युक्तं पुत्रमिच्छामि धार्मिक ॥ १६
अपतिश्चास्मि भद्रं ते भार्या चास्मि न कस्यचित् । ब्राह्मेणोपगतायाश्च दातुमर्हसि मे सुतम् ॥ १७
तस्याः प्रसन्नो ब्रह्मर्षिर्ददौ पुत्रमनुत्तमम् । ब्रह्मदत्त इति ख्यातं मानसं चूलिनः सुतम् ॥ १८

---

१. इदमर्धम् प्र. नास्ति ।
२. इदमर्धं क. नास्ति ।
३. क्षमायां हि स्थितं च.
४. देशे काले प्रदानस्य च.
देशकालौ प्रदानस्य ख. छ.

स राजा सौमदेयस्तु पुरीमध्यवसत्तदा । काम्पिल्यां परया लक्ष्म्या देवराजो यथा दिवम् ॥ १९
स बुद्धिं कृतवान् राजा कुशनाभः सुधार्मिकः । ब्रह्मदत्ताय काकुत्स्थ दातुं कन्याशतं तदा ॥ २०
तमाहूय महातेजा ब्रह्मदत्तं महीपतिः । ददौ कन्याशतं राजा सुप्रीतेनान्तरात्मना ॥ २१
यथाक्रमं ततः पाणीञ्जग्राह रघुनन्दन । ब्रह्मदत्तो महीपालस्तासां देवपतिर्यथा ॥ २२
स्पृष्टमात्रे तदा पाणौ विकुब्जा विगतज्वराः । युक्ताः परमया लक्ष्म्या बभुः कन्याः शतं तदा ॥ २३
स दृष्ट्वा वायुना मुक्ताः कुशनाभो महीपतिः । बभूव परमप्रीतो हर्षं लेभे पुनः पुनः ॥ २४
कृतोद्वाहं तु राजानं ब्रह्मदत्तं महीपतिः । सदारं प्रेषयामास सोपाध्यायगणं तदा[1] ॥ २५
सोमदापि सुसंहृष्टा पुत्रस्य सदृशीं क्रियाम् । यथान्यायं च गन्धर्वी स्नुषास्ताः प्रत्यनन्दत ॥ २६
स्पृष्ट्वा स्पृष्ट्वा च ताः कन्याः कुशनाभं प्रशस्य च ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायां बालकाण्डे ब्रह्मदत्तविवाहो नाम त्रयस्त्रिंशः सर्गः

---

## चतुस्त्रिंशः सर्गः

### विश्वामित्रवंशवर्णनम्

कृतोद्वाहे गते तस्मिन् ब्रह्मदत्ते च राघव । अपुत्रः पुत्रलाभाय पौत्रीमिष्टिमकल्पयत् ॥ १
इष्ट्यां तु वर्तमानायां कुशनाभं महीपतिम् । उवाच परमोदारः कुशो ब्रह्मसुतस्तदा ॥ २
पुत्र ते सदृशः पुत्रो भविष्यति सुधार्मिकः । गाधिं प्राप्स्यसि तेन त्वं कीर्तिं लोके च शाश्वतीम् ॥ ३
एवमुक्त्वा कुशो राम कुशनाभं महीपतिम् । जगामाकाशमाविश्य ब्रह्मलोकं सनातनम् ॥ ४
कस्यचित्त्वथ कालस्य कुशनाभस्य धीमतः । जज्ञे परमधर्मिष्ठो गाधिरित्येव नामतः[2] ॥ ५
स पिता मम काकुत्स्थ गाधिः परमधार्मिकः । कुशवंशप्रसूतोऽस्मि कौशिको रघुनन्दन ॥ ६
पूर्वजा भगिनी चापि मम राघव सुव्रता । नाम्ना सत्यवती नाम ऋचीके प्रतिपादिता ॥ ७
सशरीरा गता स्वर्गं भर्तारमनुवर्तिनी । कौशिकी परमोदारा सा प्रवृत्ता महानदी ॥ ८
दिव्या पुण्योदका रम्या हिमवन्तमुपाश्रिता । लोकस्य हितकार्यार्थं प्रवृत्ता भगिनी मम ॥ ९
ततोऽहं हिमवत्पार्श्वे वसामि निरतः सुखम् । भगिन्यां स्नेहसंयुक्तः कौशिक्यां रघुनन्दन ॥ १०
सा तु सत्यवती पुण्या सत्ये धर्मे प्रतिष्ठिता । पतिव्रता महाभागा कौशिकी सरितां वरा ॥ ११
अहं हि नियमाद्राम हित्वा तां समुपागतः । सिद्धाश्रममनुप्राप्य सिद्धोऽस्मि तव तेजसा ॥ १२
एषा राम ममोत्पत्तिः स्वस्य वंशस्य कीर्तिता । देशस्य च महाबाहो यन्मां त्वं परिपृच्छसि ॥ १३
गतोऽर्धरात्रः काकुत्स्थ कथाः कथयतो मम । निद्रामभ्येहि भद्रं ते मा भूद्विघ्नोऽध्वनीह नः ॥ १४

---

१. इदमर्धम् घ. नास्ति । २. विश्रुतः क.

निष्पन्दास्तरवः सर्वे निलीना मृगपक्षिणः । नैशेन तमसा व्याप्ता दिशश्च रघुनन्दन ॥ १५
शनैर्वियुज्यते सन्ध्या नभो नेत्रैरिवावृतम् । नक्षत्रतारागहनं ज्योतिर्भिरवभासते ॥ १६
उत्तिष्ठति च शीतांशुः शशी लोकतमोनुदः । ह्लादयन् प्राणिनां लोके मनांसि प्रभया स्वया[१] ॥ १७
नैशानि सर्वभूतानि प्रचरन्ति ततस्ततः । यक्षराक्षससङ्घाश्च रौद्राश्च पिशिताशनाः ॥ १८
एवमुक्त्वा महातेजा विरराम महामुनिः । साधु साध्विति तं सर्वे मुनयो ह्यभ्यपूजयन् ॥ १९
कुशिकानामयं वंशो महान् धर्मपरः सदा । ब्रह्मोपमा महात्मानः कुशवंश्या नरोत्तमाः ॥ २०
विशेषेण भवानेव विश्वामित्रो महायशाः । कौशिकी च सरिच्छ्रेष्ठा कुलोद्द्योतकरी तव ॥ २१
इति तैर्मुनिशार्दूलैः प्रशस्तः कुशिकात्मजः । [२]निद्रामुपागमच्छ्रीमानस्तंगत इवांशुमान् ॥ २२
रामोऽपि सहसौमित्रिः किंचिदागतविस्मयः । प्रशस्य मुनिशार्दूलं निद्रां समुपसेवते ॥ २३

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायां
बालकाण्डे विश्वामित्रवंशवर्णनं नाम चतुस्त्रिंशः सर्गः

## पञ्चत्रिंशः सर्गः

### उमागङ्गावृत्तान्तसङ्क्षेपः

उपास्य रात्रिशेषं तु शोणाकूले महर्षिभिः । निशायां सुप्रभातायां विश्वामित्रोऽभ्यभाषत ॥ १
सुप्रभाता निशा राम पूर्वा सन्ध्या प्रवर्तते । उत्तिष्ठोत्तिष्ठ भद्रं ते गमनायाभिरोचय ॥ २
तच्छ्रुत्वा वचनं तस्य कृत्वा पौर्वाह्णिकीं क्रियाम् । गमनं रोचयामास वाक्यं चेदमुवाच ह ॥ ३
अयं शोणः शुभजलोऽगाधः पुलिनमण्डितः । कतरेण पथा ब्रह्मन् संतरिष्यामहे वयम् ॥ ४
एवमुक्तस्तु रामेण विश्वामित्रोऽब्रवीदिदम् । एष पन्था मयोद्दिष्टो येन यान्ति महर्षयः ॥ ५
ते गत्वा दूरमध्वानं गतेऽर्धदिवसे तदा । जाह्नवीं सरितां श्रेष्ठां ददृशुर्मुनिसेविताम् ॥ ६
तां दृष्ट्वा पुण्यसलिलां हंससारससेविताम् । [४]बभूवुर्मुनयः सर्वे मुदिताः सहराघवाः ॥ ७
तस्यास्तीरे तदा सर्वे चक्रुर्वासपरिग्रहम् । ततः स्नात्वा यथान्यायं संतर्प्य पितृदेवताः ॥ ८
हुत्वा चैवाग्निहोत्राणि प्राश्य चानुत्तमं हविः । विविशुर्जाह्नवीतीरे शुचौ मुदितमानसाः ॥ ९
विश्वामित्रं महात्मानं परिवार्य समन्ततः । संप्रहृष्टमना रामो विश्वामित्रमथाब्रवीत्[५] ॥ १०
भगवन् श्रोतुमिच्छामि गङ्गां त्रिपथगां नदीम् । त्रैलोक्यं कथमाक्रम्य गता नदनदीपतिम् ॥ ११

---

१. विभो च. छ.

२. निद्रामुपागतः श्रीमान् श्रीमानस्तमिवांशुमान् ग.

३. अस्यानन्तरम्—एवमुक्ता महर्षयो विश्वामित्रेण धीमता । पद्मनस्ते प्रयाता वै वनानि विविधानि च यथार्हतः—इति च. ङ.

४. बभूवुरित्यादिः समन्तत इत्यन्तो भागः क. नास्ति ।

५. अस्यानन्तरम्—विहितश्च यथान्यायं राघवौ ... इति ग.

चोदितो रामवाक्येन विश्वामित्रो महामुनिः । वृद्धिं जन्म च गङ्गाया वक्तुमेवोपचक्रमे[१] ॥ १२

शैलेन्द्रो हिमवान्नाम धातूनामाकरो महान् । तस्य कन्याद्वयं जातं रूपेणाप्रतिमं भुवि ॥ १३

या मेरुदुहिता राम तयोर्माता सुमध्यमा । मेना मनोरमा देवी[२] पत्नी हिमवतः प्रिया ॥ १४

तस्यां गङ्गेयमभवज्ज्येष्ठा हिमवतः सुता । उमा नाम द्वितीयाभूत्कन्या तस्यैव राघव ॥ १५

अथ ज्येष्ठां सुराः सर्वे[३]देवकार्यचिकीर्षया । शैलेन्द्रं वरयामासुर्गङ्गां त्रिपथगां नदीम् ॥ १६

ददौ धर्मेण हिमवांस्तनयां लोकपावनीम् । स्वच्छन्दपथगां गङ्गां त्रैलोक्यहितकाम्यया ॥ १७

प्रतिगृह्य ततो देवास्त्रैलोक्यहितकारिणः । गङ्गामादाय तेऽगच्छन् कृतार्थेनान्तरात्मना ॥ १८

या चान्या शैलदुहिता कन्यासीद्रघुनन्दन । उग्रं सा व्रतमास्थाय तपस्तेपे तपोधना ॥ १९

उग्रेण तपसा युक्तां ददौ शैलवरः सुताम् । रुद्रायाप्रतिरूपाय उमां लोकनमस्कृताम् ॥ २०

एते ते शैलराजस्य सुते लोकनमस्कृते । गङ्गा च सरितां श्रेष्ठा उमा देवी च राघव ॥ २१

एतत्ते सर्वमाख्यातं यथा त्रिपथगा नदी । खं गता प्रथमं तात गतिं[६] गतिमतां वर ॥ २२

सैषा सुरनदी रम्या शैलेन्द्रस्य सुता तदा । सुरलोकं समारूढा विपापा जलवाहिनी ॥ २३

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायां बालकाण्डे उमागङ्गावृत्तान्तसङ्क्षेपो नाम पञ्चत्रिंशः सर्गः

---

## षट्त्रिंशः सर्गः

### उमामाहात्म्यम्

उक्तवाक्ये मुनौ तस्मिन्नुभौ राघवलक्ष्मणौ । प्रतिनन्द्य कथां वीरावूचतुर्मुनिपुंगवम् ॥ १

धर्मयुक्तमिदं ब्रह्मन् कथितं परमं त्वया । दुहितुः शैलराजस्य ज्येष्ठाया वक्तुमर्हसि ॥ २

विस्तरं विस्तरज्ञोऽसि दिव्यमानुषसंभवम् । त्रीन् पथो हेतुना केन प्लावयेल्लोकपावनी ॥ ३

कथं गङ्गा त्रिपथगा विश्रुता सरिदुत्तमा । त्रिषु लोकेषु धर्मज्ञ कर्मभिः कैः समन्विता ॥ ४

तथा ब्रुवति काकुत्स्थे विश्वामित्रस्तपोधनः । निखिलेन कथां सर्वामृषिमध्ये न्यवेदयत् ॥ ५

पुरा राम कृतोद्वाहः शितिकण्ठो महातपाः । दृष्ट्वा च स्पृहया देवीं मैथुनायोपचक्रमे ॥ ६

तस्य संक्रीडमानस्य महादेवस्य धीमतः । शितिकण्ठस्य देवस्य दिव्यं वर्षशतं गतम् ॥ ७

न चापि तनयो राम तस्यामासीत् परंतप । ततो देवाः समुद्विग्नाः पितामहपुरोगमाः ॥ ८

यदिहोत्पद्यते भूतं कस्तत् प्रतिसहिष्यते । अभिगम्य सुराः सर्वे प्रणिपत्येदमब्रुवन् ॥ ९

देव देव महादेव लोकस्यास्य हिते रत । सुराणां प्रणिपातेन प्रसादं कर्तुमर्हसि ॥ १०

---

१. इदमर्धम् क. नास्ति ।
२. नाम्ना मनोरमा नाम च. ञ.
नाम्ना मनोज्ञा मेना वै छ.
३. इदं पदम् क. नास्ति ।
४. देवतार्थं- च. छ.
५. त्रिलोक प्र. ह्म.
६. गङ्गा छ.

न लोका धारयिष्यन्ति तव तेजः सुरोत्तम । ब्राह्मेण तपसा युक्तो देव्या सह तपश्चर ॥ ११
त्रैलोक्यहितकामार्थं तेजस्तेजसि धारय । रक्ष सर्वानिमाँल्लोकान्नालोकं कर्तुमर्हसि ॥ १२
देवतानां वचः श्रुत्वा सर्वलोकमहेश्वरः । बाढमित्यब्रवीत् सर्वान् पुनश्चेदमुवाच ह ॥ १३
धारयिष्याम्यहं तेजस्तेजस्येव सहोमया । त्रिदशाः पृथिवी चैव निर्वाणमधिगच्छतु ॥ १४
यदिदं क्षुभितं स्थानान्मम तेजो ह्यनुत्तमम् । धारयिष्यति कस्तन्मे ब्रुवन्तु सुरसत्तमाः ॥ १५
एवमुक्तास्ततो देवाः प्रत्यूचुर्वृषभध्वजम् । यत्तेजः क्षुभितं ह्येतत्तद्धरा धारयिष्यति ॥ १६
एवमुक्तः सुरपतिः प्रमुमोच महीतले । तेजसा पृथिवी येन व्याप्ता सगिरिकानना ॥ १७
ततो देवाः सगन्धर्वाः पुनरूचुर्हुताशनम् । प्रविश त्वं महातेजो रौद्रं वायुसमन्वितः ॥ १८
तदग्निना पुनर्व्याप्तं संजातः श्वेतपर्वतः । दिव्यं शरवणं चैव पावकादित्यसंनिभम् ॥ १९
यत्र जातो महातेजाः कार्तिकेयोऽग्निसंभवः[1] । अथोमां च शिवं चैव देवाः सर्षिगणास्तदा ॥ २०
पूजयामासुरत्यर्थं सुप्रीतमनसस्ततः । अथ शैलसुता राम त्रिदशानिदमब्रवीत् ॥ २१
अप्रियस्य कृतस्याद्य फलं प्राप्स्यथ मे सुराः । इत्युक्त्वा सलिलं गृह्य पार्वती भास्करप्रभा[2] ॥ २२
समन्युरशपत् सर्वान् क्रोधसंरक्तलोचना । यस्मान्निवारिता चाहं संगता पुत्रकाम्यया ॥ २३
अपत्यं स्वेषु दारेषु नोत्पादयितुमर्हथ । अद्यप्रभृति युष्माकमप्रजाः सन्तु पत्नयः ॥ २४
एवमुक्त्वा सुरान् सर्वाञ्शशाप पृथिवीमपि । अवने नैकरूपा त्वं बहुभार्या भविष्यसि ॥ २५
न च पुत्रकृतां प्रीतिं मत्क्रोधकलुषीकृता । प्राप्स्यसि त्वं सुदुर्मेधे मम पुत्रमनिच्छती ॥ २६
तान् सर्वान् व्रीडितान् दृष्ट्वा सुरान् सुरपतिस्तदा । गमनायोपचक्राम दिशं वरुणपालिताम् ॥ २७
स गत्वा तप आतिष्ठत् पार्श्वे तस्योत्तरे गिरेः । हिमवत्प्रभवे शृङ्गे सह देव्या महेश्वरः ॥ २८
एष ते विस्तरो राम शैलपुत्र्या निवेदितः । गङ्गायाः प्रभवं चैव शृणु मे सहलक्ष्मणः ॥ २९

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायां बालकाण्डे उमामाहात्म्यं नाम षट्त्रिंशः सर्गः

## सप्तत्रिंशः सर्गः

### कुमारोत्पत्तिः

तप्यमाने तपो देवे देवाः सर्षिगणाः पुरा । सेनापतिमभीप्सन्तः पितामहमुपागमन् ॥ १
ततोऽब्रुवन् सुराः सर्वे [3]भगवन्तं पितामहम् । प्रणिपत्य सुराः सर्वे सेन्द्राः साग्निपुरोगमाः ॥ २
यो[4] नः सेनापतिर्देव दत्तो भगवता पुरा । स[5] न जातोऽद्य भगवन्नस्मद्वैरिनिबर्हणः ॥ ३
तत्पिता भगवान् शर्वो हिमवच्छिखरेऽद्य वै । तपः[6] परममास्थाय तप्यते स्म सहोमया ॥ ४

---

१. अग्निसन्निभः प्र.
२. इद पद्यम् क. नास्ति ।
३. भगवन्तमित्यादिः सर्व इत्यन्तो भागः क, नास्ति ।
४. येन प्र.
५. स न जात इत्याद्यर्धद्वयं प्र. नास्ति ।
६. सतपःपरमा प्र.

यदत्रानन्तरं कार्यं लोकानां हितकाम्यया । संविधत्स्व विधानज्ञ त्वं हि नः परमा गतिः ॥ ५
देवतानां वचः श्रुत्वा सर्वलोकपितामहः । सान्त्वयन् मधुरैर्वाक्यैस्त्रिदशानिदमब्रवीत् ॥ ६
शैलपुत्र्या यदुक्तं तन्न प्रजाः स्वासु पत्निषु[1] । तस्या वचनमक्लिष्टं सत्यमेव न संशयः ॥ ७
इयमाकाशगा गङ्गा यस्यां पुत्रं हुताशनः । जनयिष्यति देवानां सेनापतिमरिंदमम् ॥ ८
ज्येष्ठा शैलेन्द्रदुहिता मानयिष्यति तं सुतम् । उमायास्तद्बहुमतं भविष्यति न संशयः ॥ ९
तच्छ्रुत्वा वचनं तस्य कृतार्था रघुनन्दन । प्रणिपत्य सुराः सर्वे पितामहमपूजयन् ॥ १०
ते गत्वा पर्वतं राम कैलासं धातुमण्डितम् । अग्निं नियोजयामासुः पुत्रार्थं सर्वदेवताः ॥ ११
देवकार्यमिदं देव संविधत्स्व हुताशन । शैलपुत्र्यां महातेजो गङ्गायां तेज उत्सृज ॥ १२
देवतानां प्रतिज्ञाय गङ्गामभ्येत्य पावकः । गर्भं धारय वै देवि देवतानामिदं प्रियम् ॥ १३
अग्नेस्तु वचनं श्रुत्वा दिव्यं रूपमधारयत् । [2]दृष्ट्वा तन्महिमानं स समन्तादवकीर्यत ॥ १४
समन्ततस्तदा देवीमभ्यषिञ्चत पावकः । सर्वस्रोतांसि पूर्णानि गङ्गाया रघुनन्दन ॥ १५
तमुवाच ततो गङ्गा सर्वदेवपुरोगमम् । अशक्ता धारणे देव तव तेजः समुद्धतम् ॥ १६
दह्यमानाग्निना तेन संप्रव्यथितचेतना । अथाब्रवीदिदं गङ्गां सर्वदेवपुरोहितः[3] ॥ १७
इह हैमवते पादे गर्भोऽयं संनिवेश्यताम् । श्रुत्वा त्वग्निवचो गङ्गा तं गर्भमतिभास्वरम् ॥ १८
उत्ससर्ज महातेजाः स्रोतोभ्यो हि तदानघ । यदस्या निर्गतं तस्मात्तप्तजाम्बूनदप्रभम् ॥ १९
काञ्चनं धरणीं प्राप्तं हिरण्यमतुलप्रभम् । ताम्रं कार्ष्णायसं चैव तैक्ष्ण्याद्देवाभ्यजायत ॥ २०
मलं तस्याभवत्तत्र त्रपुसीसकमेव च । तदेतद्धरणीं प्राप्य नानाधातुरवर्धत ॥ २१
निक्षिप्तमात्रे गर्भे तु तेजोभिरभिरञ्जितम् । सर्वं पर्वतसंनद्धं सौवर्णमभवद्वनम् ॥ २२
जातरूपमिति ख्यातं तदाप्रभृति राघव । सुवर्णं पुरुषव्याघ्र हुताशनसमप्रभम् ॥ २३
तृणवृक्षलतागुल्मं सर्वं भवति काञ्चनम्[4] । तं कुमारं ततो जातं सेन्द्राः सहमरुद्गणाः ॥ २४
क्षीरसंभावनार्थाय कृत्तिकाः समयोजयन् । ताः क्षीरं जातमात्रस्य कृत्वा समयमुत्तमम् ॥ २५
ददुः पुत्रोऽयमस्माकं सर्वासामिति निश्चिताः । ततस्तु देवताः सर्वाः कार्तिकेय इति ब्रुवन् ॥ २६
पुत्रस्त्रैलोक्यविख्यातो भविष्यति न संशयः । तेषां तद्वचनं श्रुत्वा स्कन्नं गर्भपरिस्रवे ॥ २७
स्नापयन् परया लक्ष्म्या दीप्यमानं यथानलम् । स्कन्द इत्यब्रुवन् देवाः स्कन्नं गर्भपरिस्रवात् ॥ २८
कार्तिकेयं महाभागं काकुत्स्थ ज्वलनोपमम् । प्रादुर्भूतं ततः क्षीरं कृत्तिकानामनुत्तमम् ॥ २९
षण्णां षडाननो भूत्वा जग्राह स्तनजं पयः । गृहीत्वा क्षीरमेकाह्ना सुकुमारवपुस्तदा ॥ ३०
अजयत् स्वेन वीर्येण दैत्यसैन्यगणान् विभुः । सुरसेनागणपतिं ततस्तममलद्युतिम् ॥ ३१

---

१. सन्तु गो. अ.
२. स तस्या महिमां दृष्ट्वा प्र. अ.
३. हुताशनः च. छ.
४. इदमर्धं ग. नास्ति ।

अभ्यषिञ्चन् सुरगणाः समेत्याग्निपुरोगमाः । एष ते राम गङ्गाया विस्तरोऽभिहितो मया ॥ ३२

कुमारसंभवश्चैव धन्यः पुण्यस्तथैव च । भक्तश्च यः कार्तिकेये काकुत्स्थ भुवि मानवः ॥ ३३

आयुष्मान् पुत्रपौत्रैश्च स्कन्दसालोक्यतां व्रजेत् ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायां

बालकाण्डे कुमारोत्पत्तिर्नाम सप्तत्रिंशः सर्गः

---

## अष्टात्रिंशः सर्गः

### सगरपुत्रजन्म

तां कथां कौशिको रामे निवेद्य मधुराक्षराम् । पुनरेवापरं वाक्यं काकुत्स्थमिदमब्रवीत् ॥ १

अयोध्याधिपतिः शूरः पूर्वमासीन्नराधिपः । सगरो नाम धर्मात्मा प्रजाकामः स चाप्रजाः ॥ २

वैदर्भदुहिता राम केशिनी नाम नामतः । ज्येष्ठा सगरपत्नी सा धर्मिष्ठा सत्यवादिनी ॥ ३

अरिष्टनेमिदुहिता रूपेणाप्रतिमा भुवि । द्वितीया सगरस्यासीत् पत्नी सुमतिसंज्ञिता ॥ ४

ताभ्यां सह तदा राजा पत्नीभ्यां तप्तवांस्तपः । हिमवन्तं समासाद्य भृगुप्रस्रवणे गिरौ ॥ ५

अथ वर्षशते पूर्णे तपसाराधितो मुनिः । सगराय वरं प्रादाद् भृगुः सत्यवतां वरः ॥ ६

अपत्यलाभः सुमहान् भविष्यति तवानघ । कीर्तिं चाप्रतिमां लोके प्राप्स्यसे पुरुषर्षभ ॥ ७

एका जनयिता तात पुत्रं वंशकरं तव । षष्टिं पुत्रसहस्राणि ह्यपरा[2] जनयिष्यति ॥ ८

भाषमाणं महात्मानं राजपुत्र्यौ प्रसाद्य तम् । ऊचतुः परमप्रीते कृताञ्जलिपुटे तदा ॥ ९

एकः कस्याः सुतो ब्रह्मन् का बहून् जनयिष्यति । श्रोतुमिच्छावहे सम्यक् सत्यमस्तु वचस्तव ॥ १०

तयोस्तद्वचनं श्रुत्वा भृगुः परमधार्मिकः । उवाच परमां वाणीं स्वच्छन्दोऽत्र विधीयताम् ॥ ११

एको वंशकरो वास्तु बहवो वा महाबलाः । कीर्तिमन्तो महोत्साहाः का वा कं वरमिच्छति ॥ १२

मुनेस्तु वचनं श्रुत्वा केशिनी रघुनन्दन । पुत्रं वंशकरं राम जग्राह नृपसंनिधौ ॥ १३

षष्टिं पुत्रसहस्राणि सुपर्णभगिनी तदा । महोत्साहान् कीर्तिमतो जग्राह सुमतिः सुतान् ॥ १४

प्रदक्षिणमृषिं कृत्वा शिरसाभिप्रणम्य च । जगाम स्वपुरं राजा सभार्यो रघुनन्दन ॥ १५

अथ काले गते तस्मिञ्ज्येष्ठा पुत्रं व्यजायत । असमञ्ज इति ख्यातं केशिनी सगरात्मजम् ॥ १६

सुमतिस्तु नरव्याघ्र गर्भतुम्बं व्यजायत । षष्टिः पुत्रसहस्राणि तुम्बभेदाद्विनिःसृताः ॥ १७

घृतपूर्णेषु कुम्भेषु धात्र्यस्तान् समवर्धयन् । कालेन महता सर्वे यौवनं प्रतिपेदिरे ॥ १८

अथ दीर्घेण कालेन रूपयौवनशालिनः । षष्टिः पुत्रसहस्राणि सगरस्याभवंस्तदा ॥ १९

स च ज्येष्ठो नरश्रेष्ठः सगरस्यात्मसंभवः । बालान् गृहीत्वा तु जले सरय्वा रघुनन्दन ॥ २०

---

१. विदर्भ प्र. २. द्वितीया पुमा.

प्रक्षिप्य प्रहसन्नित्यं मज्जतस्तान्निरीक्ष्य वै । एवं पापसमाचारः सज्जनप्रतिबाधकः ॥ २१
पौराणामहिते युक्तः पित्रा निर्वासितः पुरात् । तस्य पुत्रोंऽशुमान्नाम असमञ्जस्य वीर्यवान् ॥ २२
संमतः सर्वलोकस्य सर्वस्यापि प्रियंवदः । ततः कालेन महता मतिः समभिजायत ॥ २३
सगरस्य नरश्रेष्ठ यजेयमिति निश्चिता । स कृत्वा निश्चयं राम सोपाध्यायगणस्तदा ॥ २४
यज्ञकर्मणि वेदज्ञो यष्टुं समुपचक्रमे ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायां
बालकाण्डे सगरपुत्रजन्म नाम अष्टात्रिंशः सर्गः

---

## एकोनचत्वारिंशः सर्गः

### पृथिवीविदारणम्

विश्वामित्रवचः श्रुत्वा कथान्ते रघुनन्दनः । उवाच परमप्रीतो मुनिं दीप्तमिवानलम् ॥ १
श्रोतुमिच्छामि भद्रं ते विस्तरेण कथामिमाम् । पूर्वको[1] मे कथं ब्रह्मन् यज्ञं वै समुपाहरत् ॥ २
तस्य तद्वचनं श्रुत्वा कौतूहलसमन्वितः[2] । विश्वामित्रस्तु काकुत्स्थमुवाच प्रहसन्निव ॥ ३
श्रूयतां विस्तरो राम सगरस्य महात्मनः । शंकरश्वशुरो नाम हिमवानचलोत्तमः[3] ॥ ४
विन्ध्यपर्वतमासाद्य निरीक्षेते परस्परम् । तयोर्मध्ये प्रवृत्तोऽभूद्यज्ञः स पुरुषोत्तम[4] ॥ ५
स हि देशो नरव्याघ्र प्रशस्तो यज्ञकर्मणि । तस्याश्वचर्यां काकुत्स्थ दृढधन्वा महारथः ॥ ६
अंशुमानकरोत्तात सगरस्य मते स्थितः । तस्य पर्वणि तं यज्ञं[5] यजमानस्य वासवः ॥ ७
राक्षसीं तनुमास्थाय यज्ञियाश्वमपाहरत् । ह्रियमाणे तु काकुत्स्थ तस्मिन्नश्वे महात्मनः ॥ ८
उपाध्यायगणाः सर्वे यजमानमथाब्रुवन् । अयं पर्वणि वेगेन यज्ञियाश्वोऽपनीयते ॥ ९
हर्तारं जहि काकुत्स्थ हयश्चैवोपनीयताम् । [6]यज्ञच्छिद्रं भवत्येतत्सर्वेषामशिवाय नः ॥ १०
तत्तथा क्रियतां राजन् यथाच्छिद्रः क्रतुर्भवेत् । [7]उपाध्यायवचः श्रुत्वा तस्मिन् सदसि पार्थिवः ॥ ११
षष्टिं पुत्रसहस्राणि वाक्यमेतदुवाच ह । गतिं पुत्रा न पश्यामि रक्षसां पुरुषर्षभाः ॥ १२
मन्त्रपूतैर्महाभागैरास्थितो हि महाक्रतुः । तद्गच्छत विचिन्वध्वं पुत्रका भद्रमस्तु वः ॥ १३
समुद्रमालिनीं सर्वां पृथिवीमुपगच्छत । एकैकं योजनं पुत्रा विस्तारमभिगच्छत ॥ १४
यावत्तुरगसंदर्शस्तावत्खनत मेदिनीम् । तं चैव हयहर्तारं मार्गमाणा ममाज्ञया ॥ १५
दीक्षितः पौत्रसहितः सोपाध्यायगणो ह्यहम् । इह स्थास्यामि भद्रं वो यावत्तुरगदर्शनम् ॥ १६

---

१. पूर्वजः ग.
२. इदमर्धम् क. नास्ति ।
३. अस्यानन्तरम्—इन्द्रदत्तवरः श्रीमानद्रिराज्येऽभिषेचितः—इति ज.
४. पुरुषोत्तमः गो.
५. संयुक्तम् छ.
६. यज्ञच्छिद्रमित्यारभ्य क्रतुर्भवेदित्यन्तो भागः क. ख. ङ. ञ. नास्ति ।
७. सोपा- ग.

ते सर्वे हृष्टमनसो राजपुत्रा महाबलाः[1] । जग्मुर्महीतलं राम पितुर्वचनयन्त्रिताः ॥ १७
गत्वा तु पृथिवीं सर्वामदृष्ट्वाश्वं महाबलाः[2] । योजनायामविस्तारमेकैको धरणीतलम् ॥ १८
बिभिदुः पुरुषव्याघ्रा वज्रस्पर्शसमैर्नखैः । शूलैरशनिकल्पैश्च हलैश्चापि सुदारुणैः[3] ॥ १९
भिद्यमाना वसुमती ननाद रघुनन्दन । नागानां वध्यमानानामसुराणां च राघव ॥ २०
राक्षसानां च दुर्धर्षः सत्त्वानां निनदोऽभवत् । योजनानां सहस्राणि षष्टिं तु रघुनन्दन ॥ २१
बिभिदुर्धरणीं वीरा रसातलमनुत्तमम् । एवं पर्वतसंबाधं जम्बूद्वीपं नृपात्मजाः ॥ २२
खनन्तो नृपशार्दूल सर्वतः परिचक्रमुः । ततो देवाः सगन्धर्वाः सासुराः सहपन्नगाः ॥ २३
संभ्रान्तमनसः सर्वे पितामहमुपागमन् । ते प्रसाद्य महात्मानं विषण्णवदनास्तदा ॥ २४
ऊचुः परमसंत्रस्ताः पितामहमिदं वचः । भगवन् पृथिवी सर्वा खन्यते सगरात्मजैः ॥ २५
बहवश्च महात्मानो वध्यन्ते जलचारिणः । अयं यज्ञहरोऽस्माकमनेनाश्वोऽपनीयते ॥ २६
इति ते सर्वभूतानि हिंसन्ति सगरात्मजाः ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायां
बालकाण्डे पृथिवीविदारणं नामैकोनचत्वारिंशः सर्गः

---

## चत्वारिंशः सर्गः

### कपिलदर्शनम्

देवतानां वचः श्रुत्वा भगवान् वै पितामहः । प्रत्युवाच सुसंत्रस्तान् कृतान्तबलमोहितान् ॥ १
यस्येयं वसुधा कृत्स्ना वासुदेवस्य धीमतः । महिषी माधवस्यैषा स एष भगवान् प्रभुः[4] ॥ २
कापिलं रूपमास्थाय धारयत्यनिशं धराम्[5] । तस्य कोपाग्निना दग्धा भविष्यन्ति नृपात्मजाः ॥ ३
पृथिव्याश्चापि निर्भेदो दृष्ट एव सनातनः । सगरस्य च पुत्राणां विनाशोऽदीर्घजीविनाम् ॥ ४
पितामहवचः श्रुत्वा त्रयस्त्रिंशदरिंदम । देवाः परमसंहृष्टाः पुनर्जग्मुर्यथागतम् ॥ ५
सगरस्य च पुत्राणां प्रादुरासीन्महात्मनाम् । पृथिव्यां भिद्यमानायां निर्घातसमनिःस्वनः ॥ ६
ततो भित्त्वा महीं सर्वे कृत्वा चापि प्रदक्षिणम्[7] । सहिताः सागराः सर्वे पितरं वाक्यमब्रुवन् ॥ ७
परिक्रान्ता मही सर्वा सत्त्ववन्तश्च सूदिताः । देवदानवरक्षांसि पिशाचोरगपन्नगाः ॥ ८
न च पश्यामहेऽश्वं तमश्वहर्तारमेव च । किं करिष्याम भद्रं ते बुद्धिरत्र विचार्यताम् ॥ ९

---

१. अस्यानन्तरम्—प्रणम्य शिरसा तस्मै कृत्वा चापि प्रदक्षिणम्—इति ज.

२. इदमर्धम् ग. दृश्यते ।

३. अस्यानन्तरम्—मुष्टिभिश्चरणैर्दन्तैर्दम्भोलिसदृशैर्नवैः—इति ज.

४. सनातनः ज.

५. इदमर्धम् ग. घ. दृश्यते ।

६. अस्यानन्तरम्—आस्ते रसातले धीमान् सर्वाङ्गो धारयन् प्रभुः—इति ज.

७. अस्य स्थाने—ततो भित्त्वा महीं कृत्स्नां कृत्वा चाभिप्रदक्षिणम्—इति छ.

तेषां तद्वचनं श्रुत्वा पुत्राणां राजसत्तमः । समन्युरब्रवीद्वाक्यं सगरो रघुनन्दन ॥ १०
भूयः खनत भद्रं वो निर्भिद्य वसुधातलम् । अश्वहर्तारमासाद्य कृतार्थाश्च निवर्तथ ॥ ११
पितुर्वचनमासाद्य सगरस्य महात्मनः । षष्टिः पुत्रसहस्राणि रसातलमभिद्रवन् ॥ १२
खन्यमाने ततस्तस्मिन् ददृशुः पर्वतोपमम् । दिशागजं विरूपाक्षं धारयन्तं महीतलम् ॥ १३
सपर्वतवनां कृत्स्नां पृथिवीं रघुनन्दन । शिरसा धारयामास विरूपाक्षो महागजः ॥ १४
यदा पर्वणि काकुत्स्थ विश्रमार्थं महागजः । खेदाच्चालयते शीर्षं भूमिकम्पस्तदा भवेत् ॥ १५
तं ते प्रदक्षिणं कृत्वा दिशापालं महागजम् । मानयन्तो हि ते राम जग्मुर्भित्त्वा रसातलम् ॥ १६
ततः पूर्वां दिशं भित्त्वा दक्षिणां बिभिदुः पुनः । दक्षिणस्यामपि दिशि ददृशुस्ते महागजम् ॥ १७
महापद्मं महात्मानं सुमहत्पर्वतोपमम् । शिरसा धारयन्तं गां विस्मयं जग्मुरुत्तमम् ॥ १८
ततः प्रदक्षिणं कृत्वा सगरस्य महात्मनः । षष्टिः पुत्रसहस्राणि पश्चिमां बिभिदुर्दिशम् ॥ १९
पश्चिमायामपि दिशि महान्तमचलोपमम् । दिशागजं सौमनसं ददृशुस्ते महाबलाः ॥ २०
तं ते प्रदक्षिणं कृत्वा पृष्ट्वा चापि निरामयम् । खनन्तः समुपक्रान्ता दिशं हैमवतीं ततः ॥ २१
उत्तरस्यां रघुश्रेष्ठ ददृशुर्हिमपाण्डरम् । भद्रं भद्रेण वपुषा धारयन्तं महीमिमाम् ॥ २२
समालभ्य ततः सर्वे कृत्वा चैनं प्रदक्षिणम् । षष्टिः पुत्रसहस्राणि बिभिदुर्वसुधातलम् ॥ २३
ततः प्रागुत्तरां गत्वा सागराः प्रथितां दिशम् । रोषादभ्यखनन् सर्वे पृथिवीं सगरात्मजाः ॥ २४
ते तु सर्वे महात्मानो भीमवेगा महाबलाः । ददृशुः कपिलं तत्र वासुदेवं सनातनम् ॥ २५
हयं च तस्य देवस्य चरन्तमविदूरतः । प्रहर्षमतुलं प्राप्ताः सर्वे ते रघुनन्दन ॥ २६
ते तं हयहरं ज्ञात्वा क्रोधपर्याकुलेक्षणाः । खनित्रलाङ्गलधरा नानावृक्षशिलाधराः ॥ २७
अभ्यधावन्त संक्रुद्धास्तिष्ठ तिष्ठेति चाब्रुवन् । अस्माकं त्वं हि तुरगं यज्ञियं हृतवानसि ॥ २८
दुर्मेधस्त्वं हि संप्राप्तान् विद्धि नः सगरात्मजान् । श्रुत्वा तु वचनं तेषां कपिलो रघुनन्दन ॥ २९
रोषेण महताविष्टो हुंकारमकरोत्तदा । ततस्तेनाप्रमेयेण कपिलेन महात्मना ॥ ३०
भस्मराशीकृताः सर्वे काकुत्स्थ सगरात्मजाः ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायां
बालकाण्डे कपिलदर्शनं नाम चत्वारिंशः सर्गः

---

## एकचत्वारिंशः सर्गः

### सगरयज्ञसमाप्तिः

पुत्रांश्चिरगताञ्ज्ञात्वा सगरो रघुनन्दन । नप्तारमब्रवीद्राजा दीप्यमानं स्वतेजसा ॥ १
शूरश्च कृतविद्यश्च पूर्वैस्तुल्योऽसि तेजसा । पितॄणां गतिमन्विच्छ येन चाश्वोऽपवाहितः ॥ २

अन्तर्भौमानि सत्त्वानि वीर्यवन्ति महान्ति च । तेषां त्वं प्रतिघातार्थं सासिं गृह्णीष्व कार्मुकम् ॥ ३
अभिवाद्याभिवाद्यांस्त्वं हत्वा विघ्नकरानपि । सिद्धार्थः संनिवर्तस्व मम यज्ञस्य पारगः ॥ ४
एवमुक्तोऽशुमान् सम्यक्सगरेण महात्मना । धनुरादाय खड्गं च जगाम लघुविक्रमः ॥ ५
स खातं पितृभिर्मार्गमन्तर्भौमं महात्मभिः । प्रापद्यत नरश्रेष्ठस्तेन राज्ञाभिचोदितः ॥ ६
देवदानवरक्षोभिः पिशाचपतगोरगैः । पूज्यमानं महातेजा दिशागजमपश्यत ॥ ७
स तं प्रदक्षिणं कृत्वा पृष्ट्वा चैव निरामयम् । पितॄन् स परिपप्रच्छ वाजिहर्तारमेव च ॥ ८
दिशागजस्तु तच्छ्रुत्वा प्रत्याहांशुमतो वचः । आसमञ्ज कृतार्थस्त्वं सहाश्वः शीघ्रमेष्यसि ॥ ९
तस्य तद्वचनं श्रुत्वा सर्वानेव दिशागजान् । यथाक्रमं यथान्यायं प्रष्टुं समुपचक्रमे ॥ १०
तैश्च सर्वैर्दिशापालैर्वाक्यज्ञैर्वाक्यकोविदैः । पूजितः सहयश्चैवागन्तासीत्यभिचोदितः ॥ ११
तेषां तद्वचनं श्रुत्वा जगाम लघुविक्रमः । भस्मराशीकृता यत्र पितरस्तस्य सागराः ॥ १२
स दुःखवशमापन्नस्त्वसमञ्जसुतस्तदा । चुक्रोश परमार्तस्तु वधात्तेषां सुदुःखितः ॥ १३
यज्ञियं च हयं तत्र चरन्तमविदूरतः । ददर्श पुरुषव्याघ्रो दुःखशोकसमन्वितः ॥ १४
स तेषां राजपुत्राणां कर्तुकामो जलक्रियाम् । सलिलार्थी महातेजा न चापश्यज्जलाशयम् ॥ १५
विसार्य निपुणां दृष्टिं ततोऽपश्यत् खगाधिपम् । पितॄणां मातुलं राम सुपर्णमनिलोपमम् ॥ १६
स चैनमब्रवीद्वाक्यं वैनतेयो महाबलः । मा शुचः पुरुषव्याघ्र वधोऽयं लोकसंमतः ॥ १७
कपिलेनाप्रमेयेण दग्धा हीमे महाबलाः । सलिलं नार्हसि प्राज्ञ दातुमेषां हि लौकिकम् ॥ १८
गङ्गा हिमवतो ज्येष्ठा दुहिता पुरुषर्षभ । तस्यां कुरु महाबाहो पितॄणां तु जलक्रियाम् ॥ १९
भस्मराशीकृतानेतान् प्लावयेल्लोकपावनी । तया क्लिन्नमिदं भस्म गङ्गया लोककान्तया ॥ २०
षष्टिं पुत्रसहस्राणि स्वर्गलोकं नयिष्यति । गङ्गामानय भद्रं ते देवलोकान्महीतलम् ॥ २१
क्रियतां यदि शक्नोषि गङ्गायास्त्ववतारणम्[1] । गच्छ चाश्वं महाभाग संगृह्य पुरुषर्षभ ॥ २२
यज्ञं पैतामहं वीर निर्वर्तयितुमर्हसि । सुपर्णवचनं श्रुत्वा सोऽशुमानतिवीर्यवान् ॥ २३
त्वरितं हयमादाय पुनरायान्महायशाः । ततो राजानमासाद्य दीक्षितं रघुनन्दन ॥ २४
न्यवेदयद्यथावृत्तं सुपर्णवचनं तथा । तच्छ्रुत्वा घोरसंकाशं वाक्यमंशुमतो नृपः ॥ २५
यज्ञं निर्वर्तयामास यथाकल्पं यथाविधि । स्वपुरं चागमच्छ्रीमानिष्टयज्ञो महीपतिः ॥ २६
गङ्गायाश्चागमे राजा निश्चयं नाध्यगच्छत । अगत्वा निश्चयं राजा कालेन महता महान् ॥ २७
त्रिंशद्वर्षसहस्राणि [2]राज्यं कृत्वा दिवं गतः ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायां
बालकाण्डे सगरयज्ञसमाप्तिर्नामैकचत्वारिंशः सर्गः

---

१. गङ्गामित्यारभ्य अवतारणम् इत्यन्तो भागः ग. दृश्यते। २. राजा राज्यमकारयत् ङ.

## द्विचत्वारिंशः सर्गः

### भगीरथवरप्रदानम्

कालधर्मं गते राम सगरे प्रकृतीजनाः । राजानं रोचयामासुरंशुमन्तं सुधार्मिकम् ॥ १
स राजा सुमहानासीदंशुमान् रघुनन्दन । तस्य पुत्रो महानासीद्दिलीप इति विश्रुतः ॥ २
तस्मिन् राज्यं समावेश्य दिलीपे रघुनन्दन । हिमवच्छिखरे पुण्ये तपस्तेपे सुदारुणम् ॥ ३
द्वात्रिंशच्च सहस्राणि वर्षाणि सुमहायशाः । तपोवनं गतो राजा स्वर्गं लेभे महायशाः ॥ ४
दिलीपस्तु महातेजाः श्रुत्वा पैतामहं वधम् । दुःखोपहतया बुद्ध्या निश्चयं नाध्यगच्छत ॥ ५
कथं गङ्गावतरणं कथं तेषां जलक्रिया । तारयेयं कथं चैतानिति चिन्तापरोऽभवत् ॥ ६
तस्य चिन्तयतो नित्यं धर्मेण विदितात्मनः । पुत्रो भगीरथो नाम जज्ञे परमधार्मिकः ॥ ७
दिलीपस्तु महातेजा यज्ञैर्बहुभिरिष्टवान् । त्रिंशद्वर्षसहस्राणि राजा राज्यमकारयत् ॥ ८
अगत्वा निश्चयं राजा तेषामुद्धरणं प्रति । व्याधिना नरशार्दूल कालधर्ममुपेयिवान् ॥ ९
इन्द्रलोकं गतो राजा स्वार्जितेनैव कर्मणा । राज्ये भगीरथं पुत्रमभिषिच्य नरर्षभम् ॥ १०
भगीरथस्तु राजर्षिर्धार्मिको रघुनन्दन । अनपत्यो महातेजाः प्रजाकामः स चाप्रजाः[१] ॥ ११
मन्त्रिष्वाधाय तद्राज्यं गङ्गावतरणे रतः । स तपो दीर्घमातिष्ठद्गोकर्णे रघुनन्दन ॥ १२
ऊर्ध्वबाहुः पञ्चतपा मासाहारो जितेन्द्रियः । तस्य वर्षसहस्राणि घोरे तपसि तिष्ठतः ॥ १३
अतीतानि महाबाहो तस्य राज्ञो महात्मनः । सुप्रीतो भगवान् ब्रह्मा प्रजानां पतिरीश्वरः ॥ १४
ततः सुरगणैः सार्धमुपागम्य पितामहः । भगीरथं महात्मानं तप्यमानमथाब्रवीत ॥ १५
भगीरथ महाभाग प्रीतस्तेऽहं जनेश्वर[२] । तपसा च सुतप्तेन वरं वरय सुव्रत ॥ १६
तमुवाच महातेजाः सर्वलोकपितामहम् । भगीरथो महाभागः कृताञ्जलिरुपस्थितः ॥ १७
यदि मे भगवान् प्रीतो यद्यस्ति तपसः फलम् । सगरस्यात्मजाः सर्वे मत्तः सलिलमाप्नुयुः ॥ १८
गङ्गायाः सलिलक्लिन्ने भस्मन्येषां महात्मनाम् । स्वर्गं गच्छेयुरत्यन्तं सर्वे मे प्रपितामहाः ॥ १९
देया च संततिर्देव नावसीदेत् कुलं च नः । इक्ष्वाकूणां कुले देव एष मेऽस्तु वरः परः ॥ २०
उक्तवाक्यं तु राजानं सर्वलोकपितामहः । प्रत्युवाच शुभां वाणीं मधुरां मधुराक्षराम् ॥ २१
मनोरथो महानेष भगीरथ महारथ । एवं भवतु भद्रं ते इक्ष्वाकुकुलमव्ययम् ॥ २२
इयं हैमवती गङ्गा ज्येष्ठा हिमवतः सुता । तां वै धारयितुं शक्तो हरस्तत्र नियुज्यताम्[३] ॥ २३
गङ्गायाः पतनं राजन् पृथिवी न सहिष्यति । तां वै धारयितुं वीर नान्यं पश्यामि शूलिनः ॥ २४

---

१. च प्रजाः ति. २. इदमर्धं क. नास्ति । ३. इदमर्धम् छ. नास्ति ।

तमेवमुक्त्वा राजानं गङ्गां चाभाष्य लोककृत् । जगाम त्रिदिवं देवः सह सर्वैर्मरुद्गणैः ॥ २५

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायां
बालकाण्डे भगीरथवरप्रदानं नाम द्विचत्वारिंशः सर्गः

---

## त्रिचत्वारिंशः सर्गः

### गङ्गावतरणम्

देवदेवे गते तस्मिन् सोऽङ्गुष्ठाग्रनिपीडिताम् । कृत्वा वसुमतीं राम संवत्सरमुपासत ॥ १

ऊर्ध्वबाहुर्निरालम्बो वायुभक्षो निराश्रयः । अचलः स्थाणुवत् स्थित्वा रात्रिंदिवमरिंदम[2] ॥ २

अथ संवत्सरे पूर्णे सर्वलोकनमस्कृतः । उमापतिः पशुपती राजानमिदमब्रवीत् ॥ ३

प्रीतस्तेऽहं नरश्रेष्ठ करिष्यामि तव प्रियम् । शिरसा धारयिष्यामि शैलराजसुतामहम्[3] ॥ ४

ततो हैमवती ज्येष्ठा सर्वलोकनमस्कृता । तदा सा [4]सुमहद्रूपं कृत्वा वेगं च दुःसहम् ॥ ५

आकाशादपतद्गङ्गा शिवे शिवशिरस्युत । अचिन्तयच्च सा देवी गङ्गा परमदुर्धरा ॥ ६

विशाम्यहं हि पातालं स्रोतसा गृह्य शंकरम् । तस्या वलेपनं ज्ञात्वा क्रुद्धस्तु भगवान् हरः ॥ ७

तिरोभावयितुं बुद्धिं चक्रे त्रिणयनस्तदा । स तस्मिन् पतिता पुण्या पुण्ये रुद्रस्य मूर्धनि ॥ ८

हिमवत्प्रतिमे राम जटामण्डलगह्वरे । सा कथंचिन्मही गन्तुं नाशक्नोद्यत्नमास्थिता ॥ ९

नैव निर्गमनं लेभे जटामण्डलमोहिता । तत्रैवाबम्भ्रमद्देवी संवत्सरगणान् बहून् ॥ १०

तामपश्यन् पुनस्तत्र तपः परममास्थितः । स तेन तोषितश्चाभूदत्यर्थं रघुनन्दन ॥ ११

विससर्ज ततो गङ्गां हरो बिन्दुसरः प्रति । तस्यां विसृज्यमानायां सप्त स्रोतांसि जज्ञिरे ॥ १२

ह्लादिनी पावनी चैव नलिनी च तथा परा । तिस्रः प्राचीं दिशं जग्मुर्गङ्गाः शिवजलाः शुभाः ॥ १३

सुचक्षुश्चैव सीता च सिन्धुश्चैव महानदी । तिस्रस्त्वेता दिशं जग्मुः प्रतीचीं तु शुभोदकाः ॥ १४

तथैवालकनन्दा च विश्रुता लोकपावनी[5] । सप्तमी चान्वगात्तासां भगीरथमथो नृपम् ॥ १५

भगीरथोऽपि राजर्षिर्दिव्यं स्यन्दनमास्थितः । प्रायादग्रे महातेजा गङ्गा तं चाप्यनुव्रजत् ॥ १६

गगनाच्छंकरशिरस्ततो धरणिमागता । व्यसर्पत जलं तत्र[6] प्रतिशब्दपुरस्कृतम् ॥ १७

मत्स्यकच्छपसङ्घैश्च शिंशुमारगणैस्तथा । पतद्भिः पतितैश्चान्यैर्व्यरोचत वसुंधरा ॥ १८

ततो देवर्षिगन्धर्वा यक्षाः सिद्धगणास्तथा । व्यलोकयन्त ते तत्र गगनाद्गां गतां तदा ॥ १९

विमानैर्नगराकारैर्हयैर्गजवरैस्तथा[7] । पारिप्लवगतैश्चापि देवतास्तत्र विष्ठिताः ॥ २०

तदद्भुततमं[1] लोके गङ्गापतनमुत्तमम् । दिदृक्षवो देवगणाः समीयुरमितौजसः ॥ २१

---

1. तदिति पाठे तु तस्मिन् काले इत्यर्थः ।
१. देवैः प्र.
२. इदं पद्यम् क. नास्ति ।
३. अस्यानन्तरम्—उमापतेर्वचः श्रुत्वा गङ्गा कोपसमन्विता—इति ज.
४. सातिमहद्रूपं झ. ञ.
५. इदमर्धम् ख. दृश्यते ।
६. तीव्रशब्द- झ.
७. व्यलोकयन्तेत्यादि तदित्यन्तम् ग. नास्ति ।
८. गङ्गावतरं प्र.

संपतद्भिः सुरगणैस्तेषां चाभरणौजसा । शतादित्यमिवाभाति गगनं गततोयदम् ॥ २२
शिंशुमारोरगगणैर्मीनैरपि च चञ्चलैः । विद्युद्भिरिव विक्षिप्तैराकाशमभवत्तदा ॥ २३
पाण्डरैः सलिलोत्पीडैः कीर्यमाणैः सहस्रधा । शारदाभ्रैरिवाकीर्णं गगनं हंससंप्लवैः ॥ २४
क्वचिद् द्रुततरं याति कुटिलं क्वचिदायतम् । विनतं क्वचिदुद्भूतं क्वचिद्याति शनैः शनैः ॥ २५
सलिलं सलिलेनैव क्वचिदभ्याहतं पुनः । मुहुरूर्ध्वपथं गत्वा पपात वसुधातलम् ॥ २६
तच्छङ्करशिरोभ्रष्टं भ्रष्टं भूमितले पुनः । व्यरोचत तदा तोयं निर्मलं गतकल्मषम् ॥ २७
तत्र देवर्षिगन्धर्वा वसुधातलवासिनः । भवाङ्गपतितं तोयं पवित्रमिति पस्पृशुः ॥ २८
शापात् प्रपतिता ये च गगनाद्वसुधातलम् । कृत्वा तत्राभिषेकं ते बभूवुर्गतकल्मषाः ॥ २९
धूतपापाः पुनस्तेन गङ्गातोयेन भास्वता । पुनराकाशमाविश्य स्वाँल्लोकान् प्रतिपेदिरे ॥ ३०
मुमुदे मुदितो लोकस्तेन तोयेन भास्वता । कृताभिषेको गङ्गायां बभूव विगतक्लमः ॥ ३१
भगीरथोऽपि राजर्षिर्दिव्यं स्यन्दनमास्थितः । प्रायादग्रे महातेजास्तं गङ्गा पृष्ठतोऽन्वगात् ॥ ३२
देवाः सर्षिगणाः सर्वे दैत्यदानवराक्षसाः । गन्धर्वयक्षप्रवराः सकिंनरमहोरगाः ॥ ३३
सर्वाश्चाप्सरसो राम भगीरथरथानुगाम् । गङ्गामन्वगमन् प्रीताः सर्वे जलचराश्च ये ॥ ३४
यतो भगीरथो राजा ततो गङ्गा यशस्विनी । जगाम सरितां श्रेष्ठा सर्वपापप्रणाशिनी ॥ ३५
ततो हि यजमानस्य जह्नोरद्भुतकर्मणः । गङ्गा संप्लावयामास यज्ञवाटं महात्मनः ॥ ३६
तस्या वलेपनं ज्ञात्वा क्रुद्धो यज्वा तु राघव । अपिबच्च जलं सर्वं गङ्गायाः परमाद्भुतम् ॥ ३७
ततो देवाः सगन्धर्वा ऋषयश्च सुविस्मिताः । पूजयन्ति महात्मानं जह्नुं पुरुषसत्तमम् ॥ ३८
गङ्गां चानुनयन्ति स्म दुहितृत्वे महात्मनः । ततस्तुष्टो महातेजाः श्रोत्राभ्यामसृजत् पुनः[1] ॥ ३९
तस्माज्जह्नुसुता गङ्गा प्रोच्यते जाह्नवीति च। जगाम च पुनर्गङ्गा भगीरथरथानुगा ॥ ४०
सागरं चापि संप्राप्ता सा सरित्प्रवरा यदा । रसातलमुपागच्छत् सिद्ध्यर्थं तस्य कर्मणः ॥ ४१
भगीरथोऽपि राजर्षिर्गङ्गामादाय यत्नतः । पितामहान् भस्मकृतानपश्यद्दीनचेतनः ॥ ४२
अथ तद्भस्मनां राशिं गङ्गासलिलमुत्तमम् । प्लावयद्धूतपाप्मानः स्वर्गं प्राप्ता रघूत्तमं[2] ॥ ४३

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायां
बालकाण्डे गङ्गावतरणं नाम त्रिचत्वारिंशः सर्गः

---

१. अस्यानन्तरम्—विसृज्य गङ्गां जह्नुश्च ज्ञात्वा प्राप्तं भगीरथम् । पूजयित्वा यथान्यायं यज्ञवाटमुपागमत् ॥—इति ख.

२. अस्यानन्तरम्—ततस्तु गङ्गां प्रतिकर्षन् राजा दिलीपसूनुर्गगनाच्च शंकरात् । ह्रदोऽवतार्याशु नृपाच्च जह्नोः संभावयामास पितामहान् सः ॥—इति ख.

## चतुश्चत्वारिंशः सर्गः

### सागरोद्धारः

स गत्वा सागरं राजा गङ्गयानुगतस्तदा । प्रविवेश तलं भूमेर्यत्र ते भस्मसात्कृताः ॥ १
भस्मन्यथाप्लुते राम गङ्गायाः सलिलेन वै । सर्वलोकप्रभुर्ब्रह्मा राजानमिदमब्रवीत् ॥ २
तारिता नरशार्दूल दिवं याताश्च देववत् । षष्टिः पुत्रसहस्राणि सगरस्य महात्मनः ॥ ३
सागरस्य जलं लोके यावत् स्थास्यति पार्थिव । सगरस्यात्मजास्तावत् स्वर्गे स्थास्यन्ति देववत् ॥४
इयं च दुहिता ज्येष्ठा तव गङ्गा भविष्यति । त्वत्कृतेन च नाम्नाथ लोके स्थास्यति विश्रुता ॥ ५
गङ्गा त्रिपथगा नाम दिव्या भागीरथीति च । त्रीन् पथो भावयन्तीति ततस्त्रिपथगा स्मृता[1] ॥ ६
पितामहानां सर्वेषां त्वमत्र मनुजाधिप । कुरुष्व सलिलं राजन् प्रतिज्ञामपवर्जय ॥ ७
पूर्वकेण हि ते राजंस्तेनातियशसा तदा । धर्मिणां प्रवरेणापि नैष प्राप्तो मनोरथः ॥ ८
तथैवांशुमता तात लोकेऽप्रतिमतेजसा । गङ्गां प्रार्थयता नेतुं प्रतिज्ञा नापवर्जिता ॥ ९
राजर्षिणा गुणवता महर्षिसमतेजसा[2] । मत्तुल्यतपसा चैव क्षत्रधर्मे स्थितेन च ॥ १०
दिलीपेन महाभाग तव पित्रातितेजसा । पुनर्न शकिता नेतुं गङ्गां प्रार्थयतानघ[3] ॥ ११
सा त्वया समतिक्रान्ता प्रतिज्ञा पुरुषर्षभ । प्राप्तोऽसि परमं लोके यशः परमसंमतम् ॥ १२
यच्च गङ्गावतरणं त्वया कृतमरिंदम । अनेन च भवान् प्राप्तो धर्मस्यायतनं महत् ॥ १३
प्लावयस्व त्वमात्मानं नरोत्तम सदोचिते । सलिले पुरुषव्याघ्र शुचिः पुण्यफलो भव ॥ १४
पितामहानां सर्वेषां कुरुष्व सलिलक्रियाम् । स्वस्ति तेऽस्तु गमिष्यामि स्वं लोकं गम्यतां नृप ॥ १५
इत्येवमुक्त्वा देवेशः सर्वलोकपितामहः । यथागतं तथागच्छद्देवलोकं महायशाः ॥ १६
भगीरथोऽपि राजर्षिः कृत्वा सलिलमुत्तमम् । यथाक्रमं यथान्यायं सागराणां महायशाः ॥ १७
कृतोदकः शुची राजा स्वपुरं प्रविवेश ह । समृद्धार्थो रघुश्रेष्ठ स्वराज्यं प्रशशास ह ॥ १८
प्रमुमोद च लोकस्तं नृपमासाद्य राघव । नष्टशोकः समृद्धार्थो बभूव विगतज्वरः ॥ १९
एष ते राम गङ्गाया विस्तरोऽभिहितो मया । स्वस्ति प्राप्नुहि भद्रं ते संध्याकालोऽतिवर्तते ॥ २०
धन्यं यशस्यमायुष्यं पुत्र्यं स्वर्ग्यमतीव च । यः श्रावयति विप्रेषु क्षत्रियेष्वितरेषु च ॥ २१
प्रीयन्ते पितरस्तस्य प्रीयन्ते दैवतानि च । इदमाख्यानमव्यग्रो गङ्गावतरणं शुभम् ॥ २२
यः शृणोति च काकुत्स्थ सर्वान् कामानवाप्नुयात् । सर्वे पापाः प्रणश्यन्ति आयुः कीर्तिश्च वर्धते॥२३

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायां
बालकाण्डे सागरोद्धारो नाम चतुश्चत्वारिंशः सर्गः

---

१. इदमर्धम् ख. नास्ति । २. गङ्गामित्यादि तेजसा इत्यन्तम् ख. नास्ति । ३. इदमर्धम् क. नास्ति

## पञ्चचत्वारिंशः सर्गः

### अमृतोत्पत्तिः

विश्वामित्रवचः श्रुत्वा राघवः सहलक्ष्मणः । विस्मयं परमं गत्वा विश्वामित्रमथाब्रवीत् ॥ १
अत्यद्भुतमिदं ब्रह्मन् कथितं परमं त्वया । गङ्गावतरणं पुण्यं सागरस्यापि पूरणम् ॥ २
क्षणभूतेव[१] नौ रात्रिः संवृत्तेयं महातपः । इमां चिन्तयतः सर्वां निखिलेन कथां तव ॥ ३
तस्य सा शर्वरी सर्वा सह सौमित्रिणा तदा । जगाम चिन्तयानस्य विश्वामित्रकथां शुभाम् ॥ ४
ततः प्रभाते विमले विश्वामित्रं महामुनिम् । उवाच राघवो वाक्यं कृताह्निकमरिंदमः ॥ ५
गता भगवती रात्रिः श्रोतव्यं परमं श्रुतम् । तराम सरितां श्रेष्ठां पुण्यां त्रिपथगां नदीम् ॥ ६
नौरेषा हि सुखास्तीर्णा ऋषीणां पुण्यकर्मणाम् । भगवन्तमिह प्राप्तं ज्ञात्वा त्वरितमागता ॥ ७
तस्य तद्वचनं श्रुत्वा राघवस्य महात्मनः । संतारं कारयामास सर्षिसङ्घः सराघवः ॥ ८
उत्तरं तीरमासाद्य संपूज्यर्षिगणं तदा[३] । गङ्गाकूले निविष्टास्ते विशालां ददृशुः पुरीम् ॥ ९
ततो मुनिवरस्तूर्णं जगाम सहराघवः । विशालां नगरीं रम्यां दिव्यां स्वर्गोपमां तदा ॥ १०
अथ रामो महाप्राज्ञो विश्वामित्रं महामुनिम् । पप्रच्छ प्राञ्जलिर्भूत्वा विशालामुत्तमां पुरीम् ॥ ११
कतरो राजवंशोऽयं विशालायां महामुने । श्रोतुमिच्छामि भद्रं ते परं कौतूहलं हि मे ॥ १२
तस्य तद्वचनं श्रुत्वा रामस्य मुनिपुंगवः । आख्यातुं तत् समारेभे विशालस्य पुरातनम् ॥ १३
श्रूयतां राम शक्रस्य कथां कथयतः श्रुताम्[1] । अस्मिन् देशे तु यद्वृत्तं शृणु तत्त्वेन राघव ॥ १४
पूर्वं कृतयुगे राम दितेः पुत्रा महाबलाः । अदितेश्च महाभागा वीर्यवन्तः सुधार्मिकाः ॥ १५
ततस्तेषां नरव्याघ्र बुद्धिरासीन्महात्मनाम् । अमरा[४] अजराश्चैव कथं स्याम निरामयाः ॥ १६
तेषां चिन्तयतां राम बुद्धिरासीन्महात्मनाम् । क्षीरोदमथनं कृत्वा रसं प्राप्स्याम तत्र वै ॥ १७
ततो निश्चित्य मथनं योक्त्रं कृत्वा च वासुकिम् । मन्थानं मन्दरं कृत्वा ममन्थुरमितौजसः[५] ॥ १८

---

1\. श्रूयतां रामेति पृथग्वाक्यम् । तस्य विवरणं शक्रस्येत्यादि । अस्मिन् देशे यद्वृत्तं तदनुबन्धिनीं कथां कथयतः शक्रस्य सकाशात् मया श्रुताम्, शृणु इति तिलकस्य योजना । गोविन्दराजस्तु श्रुतामित्यत्र शुभामिति पठित्वा, शक्रसंबन्धिनीं कथां कथयतो मत्तः सा कथा श्रूयतामिति व्याचख्यौ ॥

१\. श्लोकोऽयं ङ. पुस्तके सार्धपञ्चम-श्लोकानन्तरं पठितः ।

२\. अस्यानन्तरम्—सन्तुष्टं मे मनो ब्रह्मन्नित्युक्त्वा विरराम ह—इति ख.

३\. अस्यानन्तरम्—निवर्त्यामन्त्र्यर्षिगणं गङ्गा-कूलनिवासिनम्—इति ख. ।

४\. विज्वराश्चैव. ङ.

५\. अस्यानन्तरम्—अथ दीर्घेण कालेन कालाग्निसदृशं विषम् । उदातिष्ठन्नरश्रेष्ठ हालाहलमिति श्रुतम् ॥ सुरासुराश्च वित्रस्ता दग्धास्तेन विषाग्निना । शरण्यं शरणं जग्मुर्भगवन्तं महेश्वरम् ॥ कृत्वाल्पपिण्डं पाणिस्थं तद्विषं भगवान् हरः । सर्वलोकहितार्थाय भगवान् परमेश्वरः ॥ कण्ठस्थमकरोत् प्राश्य लीलयामरपूजितः । प्रणम्य विज्वरा जग्मुर्देवदेवं वृषध्वजम् ॥ मन्दरं पूर्ववत् कृत्वा ममन्थुरमितौजसः । ततः पर्वतमूलं तत् पाताले तु प्रवेशितम् ॥ सुरासुराश्च निश्चेष्टा बभूवुः क्लेशविक्लवाः । देवदुःखनिवृत्त्यर्थमागतः पुरुषोत्तमः ॥ भयं त्यजत भद्रं व उद्धरिष्याम्यहं गिरिम् । इत्युक्त्वा कूर्मरूपेण विवेश क्षीरवारिधौ ॥ मन्दरं पृष्ठतः कृत्वा बबृधे कूर्मरूपधृत् । सुरासुरैरनाक्रा-

अथ वर्षसहस्रेण आयुर्वेदमयः पुमान्। उदतिष्ठत् सुधर्मात्मा[2] सदण्डः सकमण्डलुः ॥ १९

पूर्वं धन्वन्तरी राम अप्सराश्च सुवर्चसः। अप्सु निर्मथनादेव रसात्तस्माद्वराः स्त्रियः ॥ २०

उत्पेतुर्मनुजश्रेष्ठ तस्मादप्सरसोऽभवन्। षष्टिः कोट्योऽभवंस्तासामप्सराणां सुवर्चसाम् ॥ २१

असंख्येयास्तु काकुत्स्थ यास्तासां परिचारिकाः। न ताः स्म प्रतिगृह्णन्ति सर्वे ते देवदानवाः ॥ २२

अप्रतिग्रहणात्ताश्च सर्वाः साधारणाः स्मृताः। वरुणस्य ततः कन्या वारुणी रघुनन्दन ॥ २३

उत्पपात महाभागा मार्गमाणा परिग्रहम्। दितेः पुत्रा न तां राम जगृहुर्वरुणात्मजाम् ॥ २४

अदितेस्तु सुता वीर जगृहुस्तामनिन्दिताम्। असुरास्तेन दैतेयाः सुरास्तेनादितेः सुताः ॥ २५

हृष्टाः प्रमुदिताश्चासन् वारुणीग्रहणात् सुराः। उच्चैःश्रवा हयश्रेष्ठो मणिरत्नं च कौस्तुभम् ॥ २६

उदतिष्ठन्नरश्रेष्ठ तथैवामृतमुत्तमम्[3]। अथ तस्य कृते राम महानासीत् कुलक्षयः ॥ २७

अदितेस्तु ततः पुत्रा दितेः पुत्रानसूदयन्। एकतोऽभ्यागमन् सर्वे ह्यसुरा राक्षसैः सह ॥ २८

युद्धमासीन्महाघोरं वीर त्रैलोक्यमोहनम्। यदा क्षयं गतं सर्वं तदा विष्णुर्महाबलः ॥ २९

अमृतं सोऽहरत् तूर्णं मायामास्थाय मोहिनीम्। ये तदाभिमुखं विष्णुमक्षय्यं पुरुषोत्तमम् ॥ ३०

संपिष्टास्ते तदा युद्धे विष्णुना प्रभविष्णुना। अदितेरात्मजा वीरा दितेः पुत्रान्निजघ्निरे ॥ ३१

---

न्त उद्धृतोऽथ नगोत्तमः ॥ नगाग्रं पीडयामास वामहस्तेन माधवः। ममन्थ देवतानां च मध्ये नारायणो हरिः ॥ अथ वर्षसहस्रेण ज्येष्ठा नाम वराङ्गना। उत्पपात वरारोहा सागरायैव कल्पिता ॥ अभवत् पारिजाताख्यो वृक्ष इन्द्राय कल्पितः। (अथ वर्षसहस्रेणेत्यारभ्य कल्पित इत्यन्तो भागः ख. छ. नास्ति।)—इति क. ख छ.। अथ वर्षसहस्रेण योक्त्रसर्पशिरांसि च। वमन्त्यतिविषं तत्र ददंशुर्दशनैः शिलाः ॥ उत्पपाताग्निसंकाशं हालाहलमहाविषम्। तेन दग्धं जगत् सर्वं सदेवासुरमानुषम् ॥ अथ देवा महादेवं शंकरं शरणार्थिनः। जग्मुः पशुपतिं रुद्र त्राहि त्राहीति तुष्टुवुः ॥ एवमुक्तस्ततो देवैर्देवदेवेश्वरः प्रभुः। प्रादुरासीत्ततोऽत्रैव शङ्खचक्रधरो हरिः ॥ उवाचैनं स्मितं कृत्वा रुद्रं शूलभृतं हरिः। दैवतैर्मथ्यमाने तु यत्पूर्वं समुपस्थितम् ॥ तत्त्वदीयं सुरश्रेष्ठ सुराणामग्रजोऽसि यत्। अग्रपूजामिमां मत्वा गृहाणेदं विषं प्रभो ॥ इत्युक्त्वा च सुरश्रेष्ठस्तत्रैवान्तरधीयत। देवतानां भयं दृष्ट्वा श्रुत्वा वाक्यं तु शार्ङ्गिणः ॥ हालाहलविषं घोरं स जग्राहामृतोपमम्। देवान् विसृज्य देवेशो जगाम भगवान् हरः ॥ ततो देवासुराः सर्वे ममन्थू रघुनन्दन। प्रविवेशाथ पातालं मन्थानः पर्वतोत्तमः। ततो देवाः सगन्धर्वास्तुष्टुवुर्मधुसूदनम्। त्वं गतिः सर्वभूतानां विशेषेण दिवौकसाम् ॥ पालयास्मान् महाबाहो गिरिमुद्धर्तुमर्हसि। इति श्रुत्वा हृषीकेशः कामठं रूपमास्थितः ॥ पर्वतं पृष्ठतः कृत्वा शिश्ये तत्रोदधौ हरिः। पर्वताग्रं तु लोकात्मा हस्तेनाक्रम्य केशवः ॥ (इदमर्धं ग. नास्ति।) देवानां मध्यतः स्थित्वा ममन्थ पुरुषोत्तमः।—इति ग. च.

१. अथवर्षसहस्रेण सदण्डः सकमण्डलुः। इति ग.

२. आयुर्वेदेत्यादि सुधर्मात्मेत्यन्तम् ग. केवलं दृश्यते।

३. सोमो देवस्तथैव च क. ख.। अस्यानन्तरम्—तुरगं देवराजाय कौस्तुभं केशवाय च। धन्वन्तरिर्महातेजा लोकरक्षणतत्परः ॥ आयुर्वेदमयो राम तथा साधारणः स्मृतः। ततो दीर्घेण कालेन ह्युत्पन्ना कमलालया। अतीव रूपसंपन्ना प्रथमे वयसि स्थिता। सर्वाभरणपूर्णाङ्गी सर्वलक्षणलक्षिता॥ मकुटाङ्गदचित्राङ्गी नीलकुञ्चितमूर्धजा। तप्तहाटकसंकाशा मुक्ताभरणभूषिता ॥ चतुर्भुजा महादेवी पद्महस्ता वरानना। सा च देवी तदोत्पन्ना पद्मश्रीर्लोकपूजिता ॥ सुपद्मा पद्मनाभस्य ययौ वक्षःस्थलं हरेः। उदतिष्ठन्नरश्रेष्ठ तथैवामृतमुत्तमम्—

तस्मिन् युद्धे महाघोरे[1] दैतेयादित्ययोर्भृशम् । निहत्य दितिपुत्रांश्च राज्यं प्राप्य पुरंदरः ॥ ३२
शशास मुदितो लोकान् सर्षिसङ्घान् सचारणान् ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायां
बालकाण्डे अमृतोत्पत्तिर्नाम पञ्चचत्वारिंशः सर्गः

---

## षट्चत्वारिंशः सर्गः

### दितिगर्भभेदः

हतेषु तेषु पुत्रेषु दितिः परमदुःखिता । मारीचं काश्यपं राम भर्तारमिदमब्रवीत् ॥ १
हतपुत्रास्मि भगवंस्तव पुत्रैर्महाबलैः । शक्रहन्तारमिच्छामि पुत्रं दीर्घतपोऽर्जितम् ॥ २
साहं तपश्चरिष्यामि गर्भमाधातुमर्हसि[2] । [3]बलवन्तं महेष्वासं स्थितिज्ञं समदर्शिनम् ॥ ३
ईदृशं[4] शक्रहन्तारं त्वमनुज्ञातुमर्हसि । तस्यास्तद्वचनं श्रुत्वा मारीचः काश्यपस्तदा ॥ ४
प्रत्युवाच महातेजा दितिं परमदुःखिताम् । एवं भवतु भद्रं ते शुचिर्भव तपोधने ॥ ५
जनयिष्यसि पुत्रं त्वं शक्रहन्तारमाहवे । पूर्णे वर्षसहस्रे तु शुचिर्यदि भविष्यसि ॥ ६
पुत्रं त्रैलोक्यभर्तारं मत्तस्त्वं जनयिष्यसि । एवमुक्त्वा महातेजाः पाणिना स ममार्ज ताम् ॥ ७
समालभ्य ततः स्वस्तीत्युक्त्वा स तपसे ययौ । गते तस्मिन्नरश्रेष्ठ दितिः परमहर्षिता ॥ ८
कुशप्लवं समासाद्य तपस्तेपे सुदारुणम् । तपस्तस्यां हि कुर्वत्यां परिचर्यां चकार ह ॥ ९
सहस्राक्षो नरश्रेष्ठ परया गुणसंपदा । अग्निं कुशान् काष्ठमपः फलं मूलं तथैव च ॥ १०
न्यवेदयत् सहस्राक्षो यच्चान्यदपि काङ्क्षितम् । गात्रसंवाहनैश्चैव श्रमापनयनैस्तथा ॥ ११
शक्रः सर्वेषु कालेषु दितिं परिचचार ह । पूर्णे वर्षसहस्रे तु दशोने रघुनन्दन[5] ॥ १२
दितिः परमसंप्रीता सहस्राक्षमथाब्रवीत् । तपश्चरन्त्या वर्षाणि दश वीर्यवतां वर ॥ १३
अवशिष्टानि भद्रं ते भ्रातरं द्रक्ष्यसे ततः । तमहं त्वत्कृते पुत्रं समाधास्ये जयोत्सुकम् ॥ १४
त्रैलोक्यविजयं पुत्र सह भोक्ष्यसि विज्वरः । याचितेन सुरश्रेष्ठ तव पित्रा महात्मना ॥ १५
वरो वर्षसहस्रान्ते मम दत्तः सुतं प्रति । एवमुक्त्वा दितिः शक्रं प्राप्ते मध्यं दिवाकरे ॥ १६
निद्रयापहृता देवी पादौ कृत्वाथ शीर्षतः । दृष्ट्वा तामशुचिं शक्रः पादतः कृतमूर्धजाम् ॥ १७
शिरःस्थाने कृतौ पादौ जहास च मुमोद च । तस्याः शरीरविवरं विवेश च पुरंदरः ॥ १८
गर्भं च सप्तधा राम बिभेद परमात्मवान् । भिद्यमानस्ततो गर्भो वज्रेण शतपर्वणा १९
रुरोद सुस्वरं राम ततो दितिरबुध्यत । मा रुदो मा रुदश्चेति गर्भं शक्रोऽभ्यभाषत ॥ २०

---

(धन्वंतरीत्यादेः स्मृत इत्यन्तस्य भागस्य स्थाने—सुरासुराः सगन्धर्वा ममन्थुः क्षीरवारिधिम्—इति ख. ।)
—इति क. ।
१. घोरे महायुद्धे ग.
२. एतदनन्तरम्—बलवन्तं महेष्वासं स्थितिज्ञं समदर्शिनम्—इति क. ख. छ. झ.
३. अर्धमिदं प्र. नास्ति.
४. ईश्वरं प्र.
५. एतदनन्तरं पञ्चदशः श्लोकः ग.

बिभेद च महातेजा रुदन्तमपि वासवः । न हन्तव्यो न हन्तव्य इत्येवं दितिरब्रवीत् ॥ २१
निष्पपात ततः शक्रो मातुर्वचनगौरवात् । प्राञ्जलिर्वज्रसहितो दितिं शक्रोऽभ्यभाषत ॥ २२
अशुचिर्देवि सुप्तासि पादयोः कृतमूर्धजा । तदन्तरमहं लब्ध्वा शक्रहन्तारमाहवे ॥ २३
अभिदं सप्तधा देवि तन्मे त्वं क्षन्तुमर्हसि ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायां
बालकाण्डे दितिगर्भभेदो नाम षट्चत्वारिंशः सर्गः

---

## सप्तचत्वारिंशः सर्गः

### विशालागमनम्

सप्तधा तु कृते गर्भे दितिः परमदुःखिता । सहस्राक्षं दुराधर्षं वाक्यं सानुनयाब्रवीत् ॥ १
ममापराधाद्गर्भोऽयं सप्तधा शकलीकृतः । नापराधोऽस्ति देवेश तवात्र बलसूदन ॥ २
प्रियं त्वत्कृतमिच्छामि मम गर्भविपर्यये । मरुतां सप्त सप्तानां स्थानपाला भवन्त्विमे ॥ ३
वातस्कन्धा इमे सप्त चरन्तु दिवि पुत्रक । मारुता इति विख्याता दिव्यरूपा ममात्मजाः ॥ ४
ब्रह्मलोकं चरत्वेक इन्द्रलोकं तथापरः । दिव्यवायुरिति ख्यातस्तृतीयोऽपि महायशाः ॥ ५
चत्वारस्तु सुरश्रेष्ठ दिशो वै तव शासनात् । संचरिष्यन्ति भद्रं ते देवभूता ममात्मजाः ॥ ६
त्वत्कृतेनैव नाम्ना च मारुता इति विश्रुताः । तस्यास्तद्वचनं श्रुत्वा सहस्राक्षः पुरंदरः ॥ ७
उवाच प्राञ्जलिर्वाक्यं दितिं बलनिषूदनः । सर्वमेतद्यथोक्तं ते भविष्यति न संशयः ॥ ८
विचरिष्यन्ति भद्रं ते देवभूतास्तवात्मजाः । एवं तौ निश्चयं कृत्वा मातापुत्रौ तपोवने ॥ ९
जग्मतुस्त्रिदिवं राम कृतार्थाविति नः श्रुतम् । एष देशः स काकुत्स्थ महेन्द्राध्युषितः पुरा ॥ १०
दितिं यत्र तपःसिद्धामेवं परिचचार सः । इक्ष्वाकोस्तु नरव्याघ्र पुत्रः परमधार्मिकः ॥ ११
अलम्बुसायामुत्पन्नो विशाल इति विश्रुतः । तेन चासीदिह स्थाने विशालेति पुरी कृता ॥ १२
विशालस्य सुतो राम हेमचन्द्रो महाबलः । सुचन्द्र इति विख्यातो हेमचन्द्रादनन्तरः ॥ १३
सुचन्द्रतनयो राम धूम्राश्व इति विश्रुतः । धूम्राश्वतनयश्चापि सृञ्जयः समपद्यत ॥ १४
सृञ्जयस्य सुतः श्रीमान् सहदेवः प्रतापवान् । कुशाश्वः सहदेवस्य पुत्रः परमधार्मिकः ॥ १५
कुशाश्वस्य महातेजाः सोमदत्तः प्रतापवान् । सोमदत्तस्य पुत्रस्तु काकुत्स्थ इति विश्रुतः ॥ १६
तस्य पुत्रो महातेजाः संप्रत्येष पुरीमिमाम् । आवसत्यमरप्रख्यः सुमतिर्नाम दुर्जयः ॥ १७
इक्ष्वाकोस्तु प्रसादेन सर्वे वैशालिका नृपाः । दीर्घायुषो महात्मानो वीर्यवन्तः सुधार्मिकाः ॥ १८
इहाद्य रजनीं राम सुखं वत्स्यामहे वयम् । श्वः प्रभाते नरश्रेष्ठ जनकं द्रष्टुमर्हसि ॥ १९
सुमतिस्तु महातेजा विश्वामित्रमुपागतम् । श्रुत्वा नरवरश्रेष्ठः प्रत्युद्गच्छन्महायशाः ॥ २०
पूजां च परमां कृत्वा सोपाध्यायः सबान्धवः । प्राञ्जलिः कुशलं पृष्ट्वा विश्वामित्रमथाब्रवीत् ॥ २१
धन्योऽस्म्यनुगृहीतोऽस्मि यस्य मे विषयं मुनिः । संप्राप्तो दर्शनं चैव नास्ति धन्यतरो मम ॥ २२

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायां
बालकाण्डे विशालागमनं नाम सप्तचत्वारिंशः सर्गः

---

## अष्टचत्वारिंशः सर्गः

### शक्राहल्याशापः

पृष्ट्वा तु कुशलं तत्र परस्परसमागमे । कथान्ते सुमतिर्वाक्यं व्याजहार महामुनिम् ॥ १
इमौ कुमारौ भद्रं ते देवतुल्यपराक्रमौ । गजसिंहगती वीरौ शार्दूलवृषभोपमौ ॥ २
पद्मपत्रविशालाक्षौ खड्गतूणीधनुर्धरौ । अश्विनाविव रूपेण समुपस्थितयौवनौ ॥ ३
यदृच्छयैव गां प्राप्तौ देवलोकादिवामरौ । कथं पद्भ्यामिह प्राप्तौ किमर्थं कस्य वा मुने ॥ ४
भूषयन्ताविमं देशं चन्द्रसूर्याविवाम्बरम् । परस्परस्य सदृशौ प्रमाणेङ्गितचेष्टितैः ॥ ५
किमर्थं च नरश्रेष्ठौ संप्राप्तौ दुर्गमे पथि[1] । वरायुधधरौ वीरौ श्रोतुमिच्छामि तत्त्वतः ॥ ६
तस्य तद्वचनं श्रुत्वा यथावृत्तं न्यवेदयत्[2] । विश्वामित्रवचः श्रुत्वा राजा परमहर्षितः ॥ ७
अतिथी परमौ प्राप्तौ पुत्रौ दशरथस्य तौ । पूजयामास विधिवत् सत्कारार्हौ महाबलौ ॥ ८
ततः परमसत्कारं सुमतेः प्राप्य राघवौ । उष्य तत्र निशामेकां जग्मतुर्मिथिलां ततः ॥ ९
तान् दृष्ट्वा मुनयः सर्वे जनकस्य पुरीं शुभाम् । साधु साध्विति शंसन्तो मिथिलां समपूजयन् ॥ १०
मिथिलोपवने तत्र आश्रमं दृश्य राघवः । पुराणं निर्जनं रम्यं पप्रच्छ मुनिपुंगवम् ॥ ११
श्रीमदाश्रमसंकाशं किं न्विदं मुनिवर्जितम् । श्रोतुमिच्छामि भगवन् कस्यायं पूर्व आश्रमः ॥ १२
तच्छ्रुत्वा राघवेणोक्तं वाक्यं वाक्यविशारदः । प्रत्युवाच महातेजा विश्वामित्रो महामुनिः ॥ १३
हन्त ते कथयिष्यामि शृणु तत्त्वेन राघव । यस्यैतदाश्रमपदं शप्तं कोपान्महात्मना ॥ १४
गौतमस्य नरश्रेष्ठ पूर्वमासीन्महात्मनः । आश्रमो दिव्यसंकाशः सुरैरपि सुपूजितः ॥ १५
स चेह तप आतिष्ठदहल्यासहितः पुरा । वर्षपूगाननेकांश्च राजपुत्र महायशः[3] ॥ १६
तस्यान्तरं विदित्वा तु सहस्राक्षः शचीपतिः । मुनिवेषधरोऽहल्यामिदं वचनमब्रवीत् ॥ १७
ऋतुकालं प्रतीक्षन्ते नार्थिनः सुसमाहिते । संगमं त्वहमिच्छामि त्वया सह सुमध्यमे ॥ १८
मुनिवेषं सहस्राक्षं विज्ञाय रघुनन्दन । मतिं चकार दुर्मेधा देवराजकुतूहलात् ॥ १९
अथाब्रवीत् सुरश्रेष्ठं कृतार्थेनान्तरात्मना । कृतार्थास्मि सुरश्रेष्ठ गच्छ शीघ्रमितः प्रभो ॥ २०
आत्मानं मां च देवेश सर्वदा रक्ष मानद । इन्द्रस्तु प्रहसन् वाक्यमहल्यामिदमब्रवीत् ॥ २१
सुश्रोणि परितुष्टोऽस्मि गमिष्यामि यथागतम् । एवं संगम्य तु तया निश्चक्रामोटजात्ततः ॥ २२
स संभ्रमात्त्वरन् राम शङ्कितो गौतमं प्रति । गौतमं संददर्शाथ प्रविशन्तं महामुनिम् ॥ २३
देवदानवदुर्धर्षं तपोबलसमन्वितम् । तीर्थोदकपरिक्लिन्नं दीप्यमानमिवानलम् ॥ २४

---

१. इदमर्धम् क. नास्ति।

२. अस्यानन्तरम्—अयोध्याधिपतेः पुत्रौ राज्ञो दशरथस्य ह। मम यज्ञसमाप्त्यर्थमागतौ रामलक्ष्मणौ॥ —इति ख.। सिद्धाश्रमनिवासं च राक्षसानां वधं तथा—इति च. छ. झ.

३. अस्यानन्तरम्—कदाचिद्दिवसे राम ततौ दूरगते मुनौ—इति ग. छ.

गृहीतसमिधं तत्र सकुशं मुनिपुंगवम् । दृष्ट्वा सुरपतिस्त्रस्तो विवर्णवदनोऽभवत् ॥ २५
अथ दृष्ट्वा सहस्राक्षं मुनिवेषधरं मुनिः । दुर्वृत्तं वृत्तसंपन्नो रोषाद्वचनमब्रवीत् ॥ २६
मम रूपं समास्थाय कृतवानसि दुर्मते । अकर्तव्यमिदं तस्माद्विफलस्त्वं भविष्यसि ॥ २७
गौतमेनैवमुक्तस्य सरोषेण महात्मना । पेततुर्वृषणौ भूमौ सहस्राक्षस्य तत्क्षणात् ॥ २८
तथा शप्त्वा स वै शक्रमहल्यामपि शप्तवान् । इह वर्षसहस्राणि बहूनि त्वं निवत्स्यसि ॥ २९
वायुभक्षा निराहारा तप्यन्ती भस्मशायिनी । अदृश्या सर्वभूतानामाश्रमेऽस्मिन्निवत्स्यसि ॥ ३०
यदा चैतद्वनं घोरं रामो दशरथात्मजः । आगमिष्यति दुर्धर्षस्तदा पूता भविष्यसि ॥ ३१
तस्यातिथ्येन दुर्वृत्ते लोभमोहविवर्जिता । मत्सकाशे मुदा युक्ता स्वं वपुर्धारयिष्यसि ॥ ३२
एवमुक्त्वा महातेजा गौतमो दुष्टचारिणीम् । इममाश्रममुत्सृज्य सिद्धचारणसेविते ॥ ३३
हिमवच्छिखरे रम्ये तपस्तेपे महातपाः ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायां
बालकाण्डे शक्राहल्याशापो नाम अष्टचत्वारिंशः सर्गः

---

## एकोनपञ्चाशः सर्गः

### अहल्याशापमोक्षः

अफलस्तु ततः शक्रो देवानग्निपुरोगमान् । अब्रवीत् त्रस्तवदनः सर्षिसङ्घान् सचारणान् ॥ १
कुर्वता तपसो विघ्नं गौतमस्य महात्मनः । क्रोधमुत्पाद्य हि मया सुरकार्यमिदं कृतम् ॥ २
अफलोऽस्मि कृतस्तेन क्रोधात् सा च निराकृता । शापमोक्षेण महता तपोऽस्यापहृतं मया ॥ ३
तस्मात् सुरवराः सर्वे सर्षिसङ्घाः सचारणाः । सुरसाह्यकरं सर्वे सफलं कर्तुमर्हथ ॥ ४
शतक्रतोर्वचः श्रुत्वा देवाः साग्निपुरोगमाः । पितृदेवानुपेत्याहुः सर्वे सह मरुद्गणैः ॥ ५
पुराविचार्य मोहेन मुनिपत्नीं शतक्रतुः । धर्षयित्वा मुनेः शापात्तत्रैव विफलीकृतः ॥ ६
इदानीं कुप्यते देवान् देवराजः पुरंदरः[1] । अयं मेषः सवृषणः शक्रो ह्यवृषणः कृतः ॥ ७
मेषस्य वृषणौ गृह्य शक्रायाशु प्रयच्छत । अफलस्तु कृतो मेषः परां तुष्टिं प्रदास्यति ॥ ८
भवतां हर्षणार्थं च ये च दास्यन्ति मानवाः । अक्षयं हि फलं तेषां यूयं दास्यथ पुष्कलम्[2] ॥ ९
अग्नेस्तु वचनं श्रुत्वा पितृदेवाः समागताः । उत्पाट्य मेषवृषणौ सहस्राक्षे न्यवेशयन् ॥ १०
तदाप्रभृति काकुत्स्थ पितृदेवाः समागताः । अफलान् भुञ्जते मेषान् फलैस्तेषामयोजयन् ॥ ११
इन्द्रस्तु मेषवृषणस्तदाप्रभृति राघव । गौतमस्य प्रभावेण तपसश्च महात्मनः ॥ १२

---

१. पुरेत्यादिः पुरंदर इत्यन्तो भागः ग. अ. नास्ति । २. इदमर्धम् क. नास्ति ।

तदागच्छ महातेज आश्रमं पुण्यकर्मणः । तारयैनां महाभागामहल्यां देवरूपिणीम् ॥ १३
विश्वामित्रवचः श्रुत्वा राघवः सहलक्ष्मणः । विश्वामित्रं पुरस्कृत्य तमाश्रममथाविशत् ॥ १४
ददर्श च महाभागां तपसा द्योतितप्रभाम् । लोकैरपि समागम्य दुर्निरीक्ष्यां सुरासुरैः ॥ १५
प्रयत्नान्निर्मितां धात्रा दिव्यां मायामयीमिव । स तुषारावृतां साभ्रां पूर्णचन्द्रप्रभामिव ॥ १६
धूमेनापि परीताङ्गीं दीप्तामग्निशिखामिव । मध्येऽम्भसो दुराधर्षां दीप्तां सूर्यप्रभामिव ॥ १७
सा हि गौतमवाक्येन दुर्निरीक्ष्या बभूव ह । त्रयाणामपि लोकानां यावद्रामस्य दर्शनम् ॥ १८
शापस्यान्तमुपागम्य तेषां दर्शनमागता । राघवौ तु ततस्तस्याः पादौ जगृहतुस्तदा ॥ १९
स्मरन्ती गौतमवचः प्रतिजग्राह सा च तौ । पाद्यमर्घ्यं तथातिथ्यं चकार सुसमाहिता ॥ २०
प्रतिजग्राह काकुत्स्थो विधिदृष्टेन कर्मणा । पुष्पवृष्टिर्महत्यासीद्देवदुन्दुभिनिःस्वनैः ॥ २१
गन्धर्वाप्सरसां चापि महानासीत् समुत्सवः । साधु साध्विति देवास्तामहल्यां समपूजयन् ॥ २२
तपोबलविशुद्धाङ्गीं गौतमस्य वशानुगाम् । गौतमोऽपि महातेजा अहल्यासहितः सुखी ॥ २३
रामं संपूज्य विधिवत्तपस्तेपे महातपाः । रामोऽपि परमां पूजां गौतमस्य महामुनेः ॥ २४
सकाशाद्विधिवत् प्राप्य जगाम मिथिलां ततः ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायां
बालकाण्डे अहल्याशापमोक्षो नाम एकोनपञ्चाशः सर्गः

---

## पञ्चाशः सर्गः

### जनकसमागमः[1]

ततः प्रागुत्तरां गत्वा रामः सौमित्रिणा सह । विश्वामित्रं पुरस्कृत्य यज्ञवाटमुपागमत् ॥ १
रामस्तु मुनिशार्दूलमुवाच सहलक्ष्मणः । साध्वी यज्ञसमृद्धिर्हि जनकस्य महात्मनः ॥ २
बहूनीह सहस्राणि नानादेशनिवासिनाम् । ब्राह्मणानां महाभाग वेदाध्ययनशालिनाम् । ३
ऋषिवाटाश्च दृश्यन्ते शकटीशतसंकुलाः । देशो विधीयतां ब्रह्मन् यत्र वत्स्यामहे वयम् ॥ ४
रामस्य वचनं श्रुत्वा विश्वामित्रो महामुनिः । निवेशमकरोद्देशे विविक्ते सलिलान्विते[2] ॥ ५
विश्वामित्रमनुप्राप्तं श्रुत्वा स नृपतिस्तदा । शतानन्दं पुरस्कृत्य पुरोहितमनिन्दितम् ॥ ६
प्रत्युज्जगाम सहसा विनयेन समन्वितः । ऋत्विजोऽपि महात्मानस्त्वर्घ्यमादाय सत्वरम् ॥ ७
विश्वामित्राय धर्मेण ददुर्मन्त्रपुरस्कृतम् । प्रतिगृह्य तु तां पूजां जनकस्य महात्मनः ॥ ८
पप्रच्छ कुशलं राज्ञो यज्ञस्य च निरामयम् । स तांश्चापि मुनीन् पृष्ट्वा सोपाध्यायपुरोधसः ॥ ९
यथान्यायं ततः सर्वैः समागच्छत् प्रहृष्टवत् । अथ राजा मुनिश्रेष्ठं कृताञ्जलिरभाषत ॥ १०
आसने भगवानास्तां सहैभिर्मुनिपुंगवैः । जनकस्य वचः श्रुत्वा निषसाद महामुनिः ॥ ११

---

१. समागमः ङ. ञ.    २. सलिलायते ञ.

पुरोधा ऋत्विजश्चैव राजा च सह मन्त्रिभिः । आसनेषु यथान्यायमुपविष्टाम् समन्ततः ॥ १२
दृष्ट्वा स नृपतिस्तत्र विश्वामित्रमथाब्रवीत् । अद्य यज्ञसमृद्धिर्मे सफला दैवतैः कृता ॥ १३
अद्य यज्ञफलं प्राप्तं भगवद्दर्शनान्मया । धन्योऽस्म्यनुगृहीतोऽस्मि यस्य मे मुनिपुंगव ॥ १४
यज्ञोपसदनं ब्रह्मन् प्राप्तोऽसि मुनिभिः सह । द्वादशाहं तु ब्रह्मर्षे [1]शेषमाहुर्मनीषिणः ॥ १५
ततो भागार्थिनो देवान् द्रष्टुमर्हसि कौशिक । इत्युक्त्वा मुनिशार्दूलं प्रहृष्टवदनस्तदा ॥ १६
पुनस्तं परिपप्रच्छ प्राञ्जलिः प्रणतो नृपः । इमौ कुमारौ भद्रं ते देवतुल्यपराक्रमौ ॥ १७
गजसिंहगती वीरौ शार्दूलवृषभोपमौ । पद्मपत्रविशालाक्षौ खड्गतूणीधनुर्धरौ ॥ १८
अश्विनाविव रूपेण समुपस्थितयौवनौ । यदृच्छयेव गां प्राप्तौ देवलोकादिवामरौ[2] ॥ १९
कथं पद्भ्यामिह प्राप्तौ किमर्थं कस्य वा मुने । वरायुधधरौ वीरौ कस्य पुत्रौ महामुने ॥ २०
भूषयन्ताविमं देशं चन्द्रसूर्याविवाम्बरम् । परस्परस्य सदृशौ प्रमाणेङ्गितचेष्टितैः[3] ॥ २१
काकपक्षधरौ वीरौ श्रोतुमिच्छामि तत्त्वतः[4] । तस्य तद्वचनं श्रुत्वा जनकस्य महात्मनः ॥ २२
न्यवेदयदमेयात्मा[5] पुत्रौ दशरथस्य तौ । सिद्धाश्रमनिवासं च राक्षसानां वधं तथा ॥ २३
तच्चागमनमव्यग्रं विशालायाश्च दर्शनम् । अहल्यादर्शनं चैव गौतमेन समागमम् ॥ २४
महाधनुषि जिज्ञासां कर्तुमागमनं[6] तथा । एतत् सर्वं महातेजा जनकाय महात्मने ॥ २५
निवेद्य विरराामाथ विश्वामित्रो महामुनिः ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायां
बालकाण्डे जनकसमागमो नाम पञ्चाशः सर्गः

---

## एकपञ्चाशः सर्गः

### विश्वामित्रवृत्तम्

तस्य तद्वचनं श्रुत्वा विश्वामित्रस्य धीमतः । हृष्टरोमा महातेजाः शतानन्दो महातपाः ॥ १
गौतमस्य सुतो ज्येष्ठस्तपसा द्योतितप्रभः । रामसंदर्शनादेव परं विस्मयमागतः ॥ २
स तौ निषण्णौ संप्रेक्ष्य सुखासीनौ नृपात्मजौ । शतानन्दो मुनिश्रेष्ठं विश्वामित्रमथाब्रवीत् ॥ ३

---

१. दीक्षाम् ति.

२. अस्यानन्तरम्---पुण्डरीकविशालाक्षौ वरायुधधरावुभौ । बद्धगोधाङ्गुलित्राणौ खड्गवन्तौ महाद्युती ॥---इति ग. । इदमेव पद्यं चेष्टितैरित्यस्यानन्तरम् क. दृश्यते ।

३. अस्यानन्तरम्---किमर्थं च नरश्रेष्ठ संप्राप्तौ दुर्गमे पथि । प्रकाश्य कुलमस्माकं मामुद्धर्तुमिहागतौ ॥--इति ख.

४. अस्य पादस्य स्थाने---कुमाराविव पावकी---इति ग. । अस्यानन्तरम्---रूपौदार्यगुणैः पुंसां दृष्टिचित्तापहारकौ । प्रकाश्य कुलमस्माकं मामुद्धर्तुमिहागतौ ॥---इति ग. छ. । कस्य पुत्रौ मुनिश्रेष्ठ श्रोतुमिच्छामि तत्त्वतः---इति छ. अधिकम् ।

५. महात्मानौ झ. ञ.

६. आरोपणम् क.

अपि ते मुनिशार्दूल मम माता यशस्विनी । दर्शिता राजपुत्राय तपो दीर्घमुपागता ॥ ४
अपि रामे महातेजा मम माता यशस्विनी । वन्यैरुपाहरत् पूजां पूजार्हे सर्वदेहिनाम् ॥ ५
अपि रामाय कथितं यथावृत्तं पुरातनम् । मम मातुर्महातेजो दैवेन दुरनुष्ठितम् ॥ ६
अपि कौशिक भद्रं ते गुरुणा मम संगता । माता मम मुनिश्रेष्ठ रामसंदर्शनादितः ॥ ७
अपि मे गुरुणा रामः पूजितः कुशिकात्मज । इहागतो महातेजाः पूजां प्राप्तो महात्मनः ॥ ८
अपि शान्तेन मनसा गुरुर्मे कुशिकात्मज । इहागतेन रामेण प्रयतेनाभिवादितः ॥ ९
तच्छ्रुत्वा वचनं तस्य विश्वामित्रो महामुनिः । प्रत्युवाच शतानन्दं वाक्यज्ञो वाक्यकोविदम् ॥ १०
नातिक्रान्तं मुनिश्रेष्ठ यत् कर्तव्यं कृतं मया । संगता मुनिना पत्नी भार्गवेणेव रेणुका ॥ ११
तच्छ्रुत्वा वचनं तस्य विश्वामित्रस्य धीमतः । शतानन्दो महातेजा रामं वचनमब्रवीत् ॥ १२
स्वागतं ते नरश्रेष्ठ दिष्ट्या प्राप्तोऽसि राघव । विश्वामित्रं पुरस्कृत्य महर्षिमपराजितम् ॥ १३
अचिन्त्यकर्मा तपसा ब्रह्मर्षिरतुलप्रभः । विश्वामित्रो महातेजा वेत्स्येनं परमां गतिम् ॥ १४
नास्ति धन्यतरो राम त्वत्तोऽन्यो भुवि कश्चन । गोप्ता कुशिकपुत्रस्ते येन तप्तं महत्तपः ॥ १५
श्रूयतां चाभिधास्यामि कौशिकस्य महात्मनः । यथा बलं यथा वृत्तं तन्मे निगदतः शृणु ॥ १६
राजासीदेष धर्मात्मा दीर्घकालमरिंदमः । धर्मज्ञः कृतविद्यश्च प्रजानां च हिते रतः ॥ १७
प्रजापतिसुतश्चासीन् कुशो नाम महीपतिः । कुशस्य पुत्रो बलवान् कुशनाभः सुधार्मिकः ॥ १८
कुशनाभसुतस्त्वासीद्गाधिरित्येव विश्रुतः । गाधेः पुत्रो महातेजा विश्वामित्रो महामुनिः ॥ १९
विश्वामित्रो महातेजाः पालयामास मेदिनीम् । बहुवर्षसहस्राणि राजा राज्यमकारयत् ॥ २०
कदाचित्तु महातेजा योजयित्वा वरूथिनीम् । अक्षौहिणीपरिवृतः परिचक्राम मेदिनीम् ॥ २१
नगराणि च राष्ट्राणि सरितश्च तथा गिरीन् । आश्रमान् क्रमशो राम विचरन्नाजगाम ह ॥ २२
वसिष्ठस्याश्रमपदं नानावृक्षसमाकुलम्[1] । नानामृगगणाकीर्णं सिद्धचारणसेवितम् ॥ २३
देवदानवगन्धर्वैः किंनरैरुपशोभितम् । प्रशान्तहरिणाकीर्णं द्विजसङ्घनिषेवितम् ॥ २४
ब्रह्मर्षिगणसंकीर्णं देवर्षिगणसेवितम् । तपश्चरणसंसिद्धैरग्निकल्पैर्महात्मभिः[2] ॥ २५
अब्भक्षैर्वायुभक्षैश्च शीर्णपर्णाशनैस्तथा । फलमूलाशनैर्दान्तैर्जितरोषैर्जितेन्द्रियैः ॥ २६
ऋषिभिर्वालखिल्यैश्च जपहोमपरायणैः । अन्यैर्वैखानसैश्चैव समन्तादुपशोभितम्[3] ॥ २७
वसिष्ठस्याश्रमपदं ब्रह्मलोकमिवापरम् । ददर्श जयतां श्रेष्ठो विश्वामित्रो महाबलः ॥ २८

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायां बालकाण्डे विश्वामित्रवृत्तं नाम एकपञ्चाशः सर्गः

---

१. -लताकुलम् छ.
२. अस्यानन्तरम्—सतत संकुलं श्रीमद्ब्रह्म- कल्पैर्महात्मभिः इति क. छ.
३. इदमर्धम् क. नास्ति

## द्विपञ्चाशः सर्गः

### वसिष्ठातिथ्यम्

तं दृष्ट्वा परमप्रीतो विश्वामित्रो महाबलः । प्रणम्य विधिना वीरो वसिष्ठं जपतां वरम् ॥ १
स्वागतं तव चेत्युक्तो वसिष्ठेन महात्मना । आसनं चास्य भगवान् वसिष्ठो व्यादिदेश ह ॥ २
उपविष्टाय च तदा विश्वामित्राय धीमते । यथान्यायं मुनिवरः फलमूलान्युपाहरत् ॥ ३
प्रतिगृह्य च तां पूजां वसिष्ठाद्राजसत्तमः । तपोऽग्निहोत्रशिष्येषु कुशलं पर्यपृच्छत ॥ ४
विश्वामित्रो महातेजा वनस्पतिगणे तथा । सर्वत्र कुशलं प्राह वसिष्ठो राजसत्तमम् ॥ ५
सुखोपविष्टं राजानं विश्वामित्रं महातपाः । पप्रच्छ जपतां श्रेष्ठो वसिष्ठो ब्रह्मणः सुतः ॥ ६
कच्चित्ते कुशलं राजन् कच्चिद्धर्मेण रञ्जयन् । प्रजाः पालयसे वीर राजवृत्तेन धार्मिक ॥ ७
कच्चित्ते संभृता भृत्याः कच्चित्तिष्ठन्ति शासने । कच्चित्ते विजिताः सर्वे रिपवो रिपुसूदन ॥ ८
कच्चिद्बलेषु कोशेषु मित्रेषु च परंतप । कुशलं ते नरव्याघ्र पुत्रपौत्रे तवानघ ॥ ९
सर्वत्र कुशलं राजा वसिष्ठं प्रत्युदाहरत् । विश्वामित्रो महातेजा वसिष्ठं विनयान्वितः ॥ १०
कृत्वोभौ सुचिरं कालं धर्मिष्ठौ ताः कथाः शुभाः । मुदा परमया युक्तौ प्रीयेतां तौ परस्परम् ॥ ११
ततो वसिष्ठो भगवान् कथान्ते रघुनन्दन । विश्वामित्रमिदं वाक्यमुवाच प्रहसन्निव ॥ १२
आतिथ्यं कर्तुमिच्छामि बलस्यास्य महाबल । तव चैवाप्रमेयस्य यथार्हं संप्रतीच्छ मे ॥ १३
सत्क्रियां तु भवानेतां प्रतीच्छतु मयोद्यताम् । राजंस्त्वमतिथिश्रेष्ठः पूजनीयः प्रयत्नतः ॥ १४
एवमुक्तो वसिष्ठेन विश्वामित्रो महामतिः । कृतमित्यब्रवीद्राजा पूजावाक्येन मे त्वया ॥ १५
फलमूलेन भगवन् विद्यते यत्तवाश्रमे । पाद्येनाचमनीयेन भगवद्दर्शनेन च ॥ १६
सर्वथा च महाप्राज्ञ पूजार्हेण सुपूजितः । गमिष्यामि नमस्तेऽस्तु मैत्रेणेक्षस्व चक्षुषा ॥ १७
एवं ब्रुवन्तं राजानं वसिष्ठः पुनरेव हि । न्यमन्त्रयत धर्मात्मा पुनः पुनरुदारधीः ॥ १८
बाढमित्येव गाधेयो वसिष्ठं प्रत्युवाच ह । यथा प्रियं भगवतस्तथास्तु मुनिसत्तम ॥ १९
एवमुक्तो महातेजा वसिष्ठो जपतां वरः । आजुहाव ततः प्रीतः कल्माषीं धूतकल्मषः ॥ २०
एह्येहि शबले क्षिप्रं शृणु चापि वचो मम । सबलस्यास्य राजर्षेः कर्तुं व्यवसितोऽस्म्यहम् ॥ २१
भोजनेन महार्हेण सत्कारं संविधत्स्व मे । यस्य यस्य यथाकामं षड्रसेष्वभिपूजितम् ॥ २२
तत्सर्वं कामधुक् क्षिप्रमभिवर्ष कृते मम । रसेनान्नेन पानेन लेह्यचोष्येण संयुतम् ॥ २३
अन्नानां निचयं सर्वं सृजस्व शबले त्वर ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायां
बालकाण्डे वसिष्ठातिथ्यं नाम द्विपञ्चाशः सर्गः

---

## त्रिपञ्चाशः सर्गः

### शबलानिष्क्रयः

एवमुक्ता वसिष्ठेन शबला शत्रुसूदन । विदधे कामधुक्कामान् यस्य यस्य यथेप्सितम् ॥ १

इक्षून् मधूंस्तथा लाजान् मैरेयांश्च वरासवान् । पानानि च महार्हाणि भक्ष्यांश्चोच्चावचांस्तथा ॥ २

उष्णाढ्यस्यौदनस्यात्र राशयः पर्वतोपमाः । मृष्टान्यन्नानि सूपाश्च दधिकुल्यास्तथैव च ॥ ३

नानास्वादुरसानां च षाडबानां तथैव च[2] । भाजनानि सुपूर्णानि गौडानि च सहस्रशः[3] ॥ ४

सर्वमासीत् सुसंतुष्टं हृष्टपुष्टजनायुतम् । विश्वामित्रबलं राम वसिष्ठेनाभितर्पितम् ॥ ५

विश्वामित्रोऽपि राजर्षिर्हृष्टः पुष्टस्तदाभवत् । सान्तःपुरवरो राजा सब्राह्मणपुरोहितः ॥ ६

सामात्यो मन्त्रिसहितः सभृत्यः पूजितस्तदा । युक्तः परमहर्षेण वसिष्ठमिदमब्रवीत् ॥ ७

पूजितोऽहं त्वया ब्रह्मन् पूजार्हेण सुसत्कृतः । श्रूयतामभिधास्यामि वाक्यं वाक्यविशारद ॥ ८

गवां शतसहस्रेण दीयतां शबला मम । रत्नं हि भगवन्नेतद्रत्नहारी च पार्थिवः ॥ ९

तस्मान्मे शबलां देहि ममैषा धर्मतो द्विज । एवमुक्तस्तु भगवान् वसिष्ठो मुनिसत्तमः ॥ १०

विश्वामित्रेण धर्मात्मा प्रत्युवाच महीपतिम् । नाहं शतसहस्रेण नापि कोटिशतैर्गवाम् ॥ ११

राजन् दास्यामि शबलां राशिभी रजतस्य वा । न परित्यागमर्हेयं मत्सकाशादरिंदम ॥ १२

शाश्वती शबला मह्यं कीर्तिरात्मवतो यथा । अस्यां हव्यं च कव्यं च प्राणयात्रा तथैव च ॥ १३

आयत्तमग्निहोत्रं च बलिर्होमस्तथैव च । स्वाहाकारवषट्कारौ विद्याश्च विविधास्तथा ॥ १४

आयत्तमत्र राजर्षे सर्वमेतन्न संशयः । सर्वस्वमेतत् सत्येन मम तुष्टिकरी सदा ॥ १५

कारणैर्बहुभी राजन्न दास्ये शबलां तव । वसिष्ठेनैवमुक्तस्तु विश्वामित्रोऽब्रवीत्ततः ॥ १६

संरब्धतरमत्यर्थं वाक्यं वाक्यविशारदः । [1]हैरण्यकक्ष्याग्रैवेयान् सुवर्णाङ्कुशभूषितान् ॥ १७

ददामि कुञ्जरांस्तेऽहं सहस्राणि चतुर्दश । हैरण्यानां रथानां ते श्वेताश्वानां चतुर्युजाम् ॥ १८

ददामि ते शतान्यष्टौ किङ्किणीकविभूषितान् । हयानां देशजातानां कुलजानां महौजसाम् ॥ १९

सहस्रमेकं दश च ददामि तव सुव्रत । नानावर्णविभक्तानां वयःस्थानां तथैव च ॥ २०

ददाम्येकां गवां कोटिं शबला दीयतां मम । यावदिच्छसि रत्नं वा हिरण्यं वा द्विजोत्तम ॥ २१

तावद्दास्यामि ते सर्वं[4] शबला दीयतां मम । एवमुक्तस्तु भगवान् विश्वामित्रेण धीमता ॥ २२

न दास्यामीति शबलां प्राह राजन् कथंचन । एतदेव हि मे रत्नमेतदेव हि मे धनम् ॥ २३

एतदेव हि सर्वस्वमेतदेव हि जीवितम्[6] । दर्शश्च पूर्णमासश्च यज्ञाश्चैवाप्तदक्षिणाः ॥ २४

---

1. हिरण्मयमध्यबन्धनशृङ्खलाकण्ठालंकारयुक्तानित्यर्थः । सहस्राणीत्यस्य पुंलिङ्गविशेषणमार्षम् ।
१. षड्रसानां प्र.
२. इदमर्धम् क. नास्ति ।
३. अस्य स्थाने—भाजनानि सुवर्णानि माल्यानि च सहस्रशः—इति क.
४. कुञ्जराणां ते प्र.
५. तत्सर्वम् च. छ.
६. इदमर्धम् क. नास्ति ।

एतदेव हि मे राजन् विविधाश्च क्रियास्तथा । अदोमूलाः क्रियाः सर्वा मम राजन्न संशयः ॥ २५
बहुना किं प्रलापेन न दास्ये कामदोहिनीम् ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायां
बालकाण्डे शबलानिष्क्रयो नाम त्रिपञ्चाशः सर्गः

---

## चतुःपञ्चाशः सर्गः

### पप्लवादिसृष्टिः

कामधेनुं वसिष्ठोऽपि यदा न त्यजते मुनिः । तदास्य शबलां राम विश्वामित्रोऽन्वकर्षत ॥ १
नीयमाना तु शबला राम राज्ञा महात्मना । दुःखिता चिन्तयामास रुदन्ती शोककर्शिता ॥ २
परित्यक्ता वसिष्ठेन किमहं सुमहात्मना । याहं राजभटैर्दीना ह्रियेय भृशदुःखिता ॥ ३
किं मयापकृतं तस्य महर्षेर्भावितात्मनः । यन्मामनागसं भक्तामिष्टां त्यजति धार्मिकः ॥ ४
इति सा चिन्तयित्वा तु विनिःश्वस्य पुनः पुनः[1] । निर्धूय तांस्तदा भृत्यान् शतशः शत्रुसूदन ॥ ५
जगामानिलवेगेन पादमूलं महात्मनः । शबला सा रुदन्ती च क्रोशन्ती चेदमब्रवीत् ॥ ६
वसिष्ठस्याग्रतः स्थित्वा मेघदुन्दुभिराविणी । भगवन् किं परित्यक्ता त्वयाहं ब्रह्मणः सुत ॥ ७
यस्माद्राजभटा मां हि नयन्ते त्वत्सकाशतः । एवमुक्तस्तु ब्रह्मर्षिरिदं वचनमब्रवीत् ॥ ८
शोकसंतप्तहृदयां स्वसारमिव दुःखिताम् । न त्वां त्यजामि शबले नापि मेऽपकृतं त्वया ॥ ९
एष त्वां नयते राजा बलान्मत्तो महाबलः । न हि तुल्यं बलं मह्यं राजा त्वद्य विशेषतः ॥ १०
बली राजा क्षत्त्रियश्च पृथिव्याः पतिरेव च । इयमक्षौहिणी सेना गजवाजिरथाकुला[2] ॥ ११
पत्तिध्वजसमाकीर्णा तेनासौ बलवत्तरः । एवमुक्ता वसिष्ठेन प्रत्युवाच विनीतवत् ॥ १२
वचनं वचनज्ञा सा ब्रह्मर्षिममितप्रभम् । न बलं क्षत्त्रियस्याहुर्ब्राह्मणो बलवत्तरः ॥ १३
ब्रह्मन् ब्रह्मबलं दिव्यं क्षत्त्रात्तु बलवत्तरम् । अप्रमेयबलं तुभ्यं न त्वया[3] बलवत्तरः ॥ १४
विश्वामित्रो महावीर्यस्तेजस्तव दुरासदम् । नियुङ्क्ष्व मां महातेजस्त्वद्ब्रह्मबलसंभृताम् ॥ १५
तस्य दर्पबलं यत्तन्नाशयामि दुरात्मनः । इत्युक्तस्तु तया राम वसिष्ठस्तु महायशाः ॥ १६
सृजस्वेति तदोवाच बलं परबलार्दनम्[4] । तस्य तद्वचनं श्रुत्वा सुरभिः सासृजत्तदा ॥ १७
तस्या हुम्भारवोत्सृष्टाः पप्लवाः[5] शतशो नृप । नाशयन्ति बलं सर्वं विश्वामित्रस्य पश्यतः ॥ १८

---

१. अस्यानन्तरम्—जगाम वेगेन तदा वसिष्ठं परमौजसम्—इति क.
२. पूर्णा सवाजिरथसंकुला क. ख. घ. च. छ. ज.
३. त्वत्तो ख.
४. -रुजम् च. छ. झ.
५. पह्लवाः प्र.

बलं भग्नं ततो दृष्ट्वा रथेनाक्रम्य कौशिकः[1] । स राजा परमक्रुद्धो रोषविस्फारितेक्षणः ॥ १९
पह्लवान्नाशयामास शस्त्रैरुच्चावचैरपि । विश्वामित्रार्दितान् दृष्ट्वा पह्लवान्शतशस्तदा ॥ २०
भूय एवासृजद्घोरान् शकान् यवनमिश्रितान् । तैरासीत् संवृता भूमिः शकैर्यवनमिश्रितैः ॥ २१
प्रभावद्भिर्महावीर्यैः पद्मकिंजल्कसन्निभैः । तीक्ष्णासिपट्टसधरैर्हेमवर्णाम्बरावृतैः ॥ २२
निर्दग्धं तद्बलं सर्वं प्रदीप्तैरिव पावकैः । ततोऽस्त्राणि महातेजा विश्वामित्रो मुमोच ह ॥ २३
तैस्तैर्यवनकाम्भोजाः पह्लवाश्चाकुलीकृताः ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायां
बालकाण्डे पह्लवादिसृष्टिर्नाम चतुःपञ्चाशः सर्गः

---

## पञ्चपञ्चाशः सर्गः

### विश्वामित्रधनुर्वेदाधिगमः

ततस्तानाकुलान् दृष्ट्वा विश्वामित्रास्त्रमोहितान् । वसिष्ठश्चोदयामास कामधुक् सृज योगतः ॥ १
तस्या हुम्भारवोत्सृष्टाः काम्भोजा रविसंनिभाः । ऊधसस्त्वथ संभूताः बर्बराः[3] शस्त्रपाणयः ॥ २
योनिदेशाच्च यवनाः शकृद्देशाच्छकास्तथा । रोमकूपेषु च म्लेच्छा हारीताः सकिरातकाः ॥ ३
यैस्तन्निषूदितं सैन्यं[4] विश्वामित्रस्य तत्क्षणात् । सपदातिगजं साश्वं सरथं रघुनन्दन ॥ ४
दृष्ट्वा निषूदितं सैन्यं वसिष्ठेन महात्मना । विश्वामित्रसुतानां तु शतं नानाविधायुधम् ॥ ५
अभ्यधावत् सुसंक्रुद्धं वसिष्ठं जपतां वरम् । हुंकारेणैव तान् सर्वान् ददाह भगवानृषिः ॥ ६
ते साश्वरथपादाता वसिष्ठेन महात्मना । भस्मीकृता मुहूर्तेन विश्वामित्रसुतास्तदा ॥ ७
दृष्ट्वा विनाशितान् पुत्रान् बलं च सुमहायशाः । सव्रीडश्चिन्तयाविष्टो विश्वामित्रोऽभवत्तदा ॥ ८
समुद्र इव निर्वेगो भग्नदंष्ट्र इवोरगः । उपरक्त इवादित्यः सद्यो निष्प्रभतां गतः ॥ ९
हतपुत्रबलो दीनो लूनपक्ष इव द्विजः । हतदर्पो हतोत्साहो निर्वेदं समपद्यत ॥ १०
स पुत्रमेकं राज्याय पालयेति नियुज्य च । पृथिवीं क्षत्रधर्मेण वनमेवाभ्यपद्यत ॥ ११
स गत्वा हिमवत्पार्श्वं किंनरोरगसेवितम् । महादेवप्रसादार्थं तपस्तेपे महातपाः ॥ १२
केनचित्त्वथ कालेन देवेशो वृषभध्वजः । दर्शयामास वरदो विश्वामित्रं महामुनिम् ॥ १३
किमर्थं तप्यसे राजन् ब्रूहि यत्ते विवक्षितम् । वरदोऽस्मि वरो यस्ते काङ्क्षितः सोऽभिधीयताम् ॥ १४
एवमुक्तस्तु देवेन विश्वामित्रो महातपाः । प्रणिपत्य महादेवमिदं वचनमब्रवीत् ॥ १५
यदि तुष्टो महादेव धनुर्वेदो ममानघ । साङ्गोपाङ्गोपनिषदः सरहस्यः प्रदीयताम् ॥ १६

---

१. इदमर्धम् ख. नास्ति
२. पह्लवाः प्र.
३. संजाताः पह्लवाः च. छ.
४. तैस्तैर्निषूदितं सर्वम् च. छ. झ.

यानि देवेषु चास्त्राणि दानवेषु महर्षिषु । गन्धर्वयक्षरक्षःसु प्रतिभान्तु ममानघ ॥ १७
तव प्रसादाद्भवतु देवदेव ममेप्सितम् । एवमस्त्विति देवेशो वाक्यमुक्त्वा गतस्तदा ॥ १८
प्राप्य चास्त्राणि राजर्षिर्विश्वामित्रो महाबलः । दर्पेण महता युक्तो दर्पपूर्णोऽभवत्तदा ॥ १९
विवर्धमानो वीर्येण समुद्र इव पर्वसु । हतमेव तदा मेने वसिष्ठमृषिसत्तमम् ॥ २०
ततो गत्वाश्रमपदं मुमोचास्त्राणि पार्थिवः । यैस्तत्तपोवनं सर्वं निर्दग्धं चास्त्रतेजसा ॥ २१
उदीर्यमाणमस्त्रं तद्विश्वामित्रस्य धीमतः । दृष्ट्वा विप्रद्रुता भीता मुनयः शतशो दिशः ॥ २२
वसिष्ठस्य च ये शिष्यास्तथैव मृगपक्षिणः । विद्रवन्ति भयाद्भीता नानादिग्भ्यः सहस्रशः ॥ २३
वसिष्ठस्याश्रमपदं शून्यमासीन्महात्मनः । मुहूर्तमिव निःशब्दमासीदिरिणसंनिभम् ॥ २४
वदतो वै वसिष्ठस्य मा भैष्टेति मुहुर्मुहुः । नाशयाम्यद्य गाधेयं नीहारमिव भास्करः ॥ २५
एवमुक्त्वा महातेजा वसिष्ठो जपतां वरः । विश्वामित्रं तदा वाक्यं सरोषमिदमब्रवीत् ॥ २६
आश्रमं चिरसंवृद्धं यद्विनाशितवानसि । दुराचारोऽसि यन्मूढ तस्मात्त्वं न भविष्यसि ॥ २७
इत्युक्त्वा परमक्रुद्धो दण्डमुद्यम्य सत्वरः । विधूममिव कालाग्निं यमदण्डमिवापरम्[1] ॥ २८

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायां
बालकाण्डे विश्वामित्रधनुर्वेदाधिगमो नाम पञ्चपञ्चाशः सर्गः

---

## षट्पञ्चाशः सर्गः

### ब्रह्मतेजोबलम्

एवमुक्तो वसिष्ठेन विश्वामित्रो महाबलः । आग्नेयमस्त्रमुत्क्षिप्य तिष्ठ तिष्ठेति चाब्रवीत् ॥ १
ब्रह्मदण्डं समुत्क्षिप्य कालदण्डमिवापरम् । वसिष्ठो भगवान् क्रोधादिदं वचनमब्रवीत् ॥ २
क्षत्त्रबन्धो स्थितोऽस्म्येष यद्बलं तद्विदर्शय । नाशयाम्येष ते दर्पं शस्त्रस्य तव गाधिज ॥ ३
क्व च ते क्षत्त्रियबलं क्व च ब्रह्मबलं महत् । पश्य ब्रह्मबलं दिव्यं मम क्षत्त्रियपांसन ॥ ४
तस्यास्त्रं गाधिपुत्रस्य घोरमाग्नेयमुद्यतम् । ब्रह्मदण्डेन तच्छान्तमग्नेर्वेग इवाम्भसा ॥ ५
वारुणं चैव रौद्रं च ऐन्द्रं पाशुपतं तथा । ऐषीकं चापि चिक्षेप कुपितो गाधिनन्दनः ॥ ६
मानवं मोहनं चैव गान्धर्वं स्वापनं तथा । जृम्भणं मादनं चैव संतापनविलापने ॥ ७
शोषणं दारणं चैव वज्रमस्त्रं सुदुर्जयम् । ब्रह्मपाशं कालपाशं वारुणं पाशमेव च ॥ ८
पैनाकास्त्रं च दयितं शुष्कार्द्रे अशनी उभे । दाण्डास्त्रमथ पैशाचं क्रौञ्चमस्त्रं तथैव च ॥ ९
धर्मचक्रं कालचक्रं विष्णुचक्रं तथैव च । वायव्यं मथनं चैव अस्त्रं हयशिरस्तथा ॥ १०
शक्तिद्वयं च चिक्षेप कङ्कालं मुसलं तथा । वैद्याधरं महास्त्रं च कालास्त्रमथ दारुणम् ॥ ११
त्रिशूलमस्त्रं घोरं च कापालमथ कङ्कणम् । एतान्यस्त्राणि चिक्षेप सर्वाणि रघुनन्दन ॥ १२

---

1. अत्र वाक्यपर्यवसानाय तस्थाविति पूरणीयम् । १. क्षत्रस्य म.

वसिष्ठे जपतां श्रेष्ठे तदद्भुतमिवाभवत् । तानि सर्वाणि दण्डेन ग्रसते ब्रह्मणः सुतः ॥ १३
तेषु शान्तेषु ब्रह्मास्त्रं क्षिप्तवान् गाधिनन्दनः । तदस्त्रमुद्यतं दृष्ट्वा देवाः साग्निपुरोगमाः ॥ १४
देवर्षयश्च संभ्रान्ता गन्धर्वाः समहोरगाः । त्रैलोक्यमासीत् संत्रस्तं ब्रह्मास्त्रे समुदीरिते ॥ १५
तदप्यस्त्रं महाघोरं ब्राह्मं ब्राह्मेण तेजसा । वसिष्ठो ग्रसते सर्वं ब्रह्मदण्डेन राघव ॥ १६
ब्रह्मास्त्रं ग्रसमानस्य वसिष्ठस्य महात्मनः । त्रैलोक्यमोहनं रौद्रं रूपमासीत् सुदारुणम् ॥ १७
रोमकूपेषु सर्वेषु वसिष्ठस्य महात्मनः । मरीच्य इव निष्पेतुरग्नेर्धूमाकुलार्चिषः ॥ १८
प्राज्वलत् ब्रह्मदण्डश्च वसिष्ठस्य करोद्यतः । विधूम इव कालाग्निर्यमदण्ड इवापरः ॥ १९
ततोऽस्तुवन् मुनिगणा वसिष्ठं जपतां वरम् । अमेयं ते बलं ब्रह्मंस्तेजो धारय तेजसा ॥ २०
निगृहीतस्त्वया ब्रह्मन् विश्वामित्रो महाबलः । प्रसीद जपतां श्रेष्ठ लोकाः सन्तु गतव्यथाः ॥ २१
एवमुक्तो महातेजाः शमं चक्रे महातपाः । विश्वामित्रोऽपि निकृतो विनिःश्वस्येदमब्रवीत् ॥ २२
धिग्बलं क्षत्रियबलं ब्रह्मतेजोबलं बलम् । एकेन ब्रह्मदण्डेन सर्वास्त्राणि हतानि मे ॥ २३
तदेतत् समवेक्ष्याहं प्रसन्नेन्द्रियमानसः । तपो महत् समास्थास्ये यद्वै ब्रह्मत्वकारकम् ॥ २४

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायां
बालकाण्डे ब्रह्मतेजोबलं नाम षट्पञ्चाशः सर्गः

---

## सप्तपञ्चाशः सर्गः

### त्रिशङ्कुयाजनप्रार्थना

ततः संतप्तहृदयः स्मरन्निग्रहमात्मनः । विनिःश्वस्य विनिःश्वस्य कृतवैरो महात्मना ॥ १
स दक्षिणां दिशं गत्वा महिष्या सह राघव । ततापं परमं घोरं विश्वामित्रो महातपाः ॥ २
फलमूलाशनो दान्तश्चचार सुमहत्तपः । अथास्य जज्ञिरे पुत्राः सत्यधर्मपरायणाः ॥ ३
हविःष्यन्दो मधुष्यन्दो दृढनेत्रो महारथः । पूर्णे वर्षसहस्रे तु ब्रह्मा लोकपितामहः ॥ ४
अब्रवीन्मधुरं वाक्यं विश्वामित्रं तपोधनम् । जिता राजर्षिलोकास्ते तपसा कुशिकात्मज ॥ ५
अनेन तपसा त्वां तु राजर्षिरिति विद्महे । एवमुक्त्वा महातेजा जगाम सह दैवतैः ॥ ६
त्रिविष्टपं ब्रह्मलोकं लोकानां परमेश्वरः । विश्वामित्रोऽपि तच्छ्रुत्वा ह्रिया किंचिदवाङ्मुखः ॥ ७
दुःखेन महताविष्टः समन्युरिदमब्रवीत् । तपश्च सुमहत्तप्तं राजर्षिरिति मां विदुः ॥ ८
देवाः सर्षिगणाः सर्वे नास्ति मन्ये तपःफलम् । इति निश्चित्य मनसा भूय एव महातपाः ॥ ९
तपश्चचार काकुत्स्थ परमं परमात्मवान् । एतस्मिन्नेव काले तु सत्यवादी जितेन्द्रियः ॥ १०
त्रिशङ्कुरिति विख्यात इक्ष्वाकुकुलवर्धनः । तस्य बुद्धिः समुत्पन्ना यजेयमिति राघव ॥ ११
गच्छेयं स्वशरीरेण देवानां परमां गतिम् । स वसिष्ठं समाहूय कथयामास चिन्तितम् ॥ १२
अशक्यमिति चाप्युक्तो वसिष्ठेन महात्मना । प्रत्याख्यातो वसिष्ठेन स ययौ दक्षिणां दिशम् ॥ १३

---

१. कारणं प्र. २. महत्तपः प्र.

ततस्तत्कर्मसिद्ध्यर्थं पुत्रांस्तस्य गतो नृपः । वासिष्ठा दीर्घतपसस्तपो यत्र हि तेपिरे[1] ॥ १४
त्रिशङ्कुः सुमहातेजाः शतं परमभास्वरम् । वसिष्ठपुत्रान् ददृशे तप्यमानान् यशस्विनः ॥ १५
सोऽभिगम्य महात्मानः सर्वानेव गुरोः सुतान् । अभिवाद्यानुपूर्व्येण ह्रिया किंचिदवाङ्मुखः ॥ १६
अब्रवीत् सुमहाभागान् सर्वानेव कृताञ्जलिः[2] । शरणं वः प्रपद्येऽहं शरण्याञ्शरणागतः ॥ १७
प्रत्याख्यातोऽस्मि भद्रं वो वसिष्ठेन महात्मना । यष्टुकामो महायज्ञं तदनुज्ञातुमर्हथ ॥ १८
गुरुपुत्रानहं सर्वान्नमस्कृत्य प्रसादये । शिरसा प्रणतो याचे ब्राह्मणांस्तपसि स्थितान् ॥ १९
ते मां भवन्तः सिद्ध्यर्थं याजयन्तु समाहिताः । सशरीरो यथाहं हि देवलोकमवाप्नुयाम् ॥ २०
प्रत्याख्यातो वसिष्ठेन गतिमन्यां तपोधनाः । गुरुपुत्रानृते सर्वान्नाहं पश्यामि कांचन ॥ २१
इक्ष्वाकूणां हि सर्वेषां पुरोधाः परमा गतिः । पुरोधसस्तु विद्वांसस्तारयन्ति सदा नृपान् ॥ २२
तस्मादनन्तरं सर्वे भवन्तो दैवतं मम ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायां
बालकाण्डे त्रिशङ्कुयाजनप्रार्थना नाम सप्तपञ्चाशः सर्गः

---

## अष्टपञ्चाशः सर्गः

### त्रिशङ्कुशापः

ततस्त्रिशङ्कोर्वचनं श्रुत्वा क्रोधसमन्वितम् । ऋषिपुत्रशतं राम राजानमिदमब्रवीत् ॥ १
प्रत्याख्यातो हि दुर्बुद्धे गुरुणा सत्यवादिना । तं कथं समतिक्रम्य शाखान्तरमुपेयिवान् ॥ २
इक्ष्वाकूणां हि सर्वेषां पुरोधाः परमा गतिः । न चातिक्रमितुं शक्यं वचनं सत्यवादिनः ॥ ३
अशक्यमिति चोवाच वसिष्ठो भगवानृषिः । तं वयं वै समाहर्तुं क्रतुं शक्ताः कथं तव ॥ ४
बालिशस्त्वं नरश्रेष्ठ गम्यतां स्वपुरं पुनः । याजने भगवाञ्शक्तस्त्रैलोक्यस्यापि पार्थिव ॥ ५
अवमानं च तत्कर्तुं तस्य शक्ष्यामहे कथम् । तेषां तद्वचनं श्रुत्वा क्रोधपर्याकुलाक्षरम् ॥ ६
स राजा पुनरेवैतानिदं वचनमब्रवीत् । प्रत्याख्यातोऽस्मि गुरुणा गुरुपुत्रैस्तथैव च ॥ ७
अन्यां गतिं गमिष्यामि स्वस्ति वोऽस्तु तपोधनाः । ऋषिपुत्रास्तु तच्छ्रुत्वा वाक्यं घोराभिसंहितम् ॥ ८
शेपुः परमसंक्रुद्धाश्चण्डालत्वं गमिष्यसि । एवमुक्त्वा महात्मानो विविशुस्ते स्वमाश्रमम्[3] ॥ ९
अथ रात्र्यां व्यतीतायां राजा चण्डालतां गतः । नीलवस्त्रधरो नीलः परुषो ध्वस्तमूर्धजः ॥ १०
चित्यमाल्यानुलेपश्च आयसाभरणोऽभवत् । तं दृष्ट्वा मन्त्रिणः सर्वे त्यक्त्वा[4] चण्डालरूपिणम् ॥ ११

---

१. इदं पद्यम् ग. नास्ति ।
२. त्रिशङ्कुः इत्यादिः कृताञ्जलिः इत्यन्तो दुःखितः॥—इति च.
३. अस्यानन्तरम्—तच्छ्रुत्वा घोरसंकाशमृषि- पुत्रस्य भाषितम् । प्राविशत् स्वपुरं राजा चिन्तयामास भागः ख. नास्ति ।
४. त्यज्य च.

प्राद्रवन् सहिता राम पौरा येऽस्यानुगामिनः । एको हि राजा काकुत्स्थ जगाम परमात्मवान् ॥ १२
दह्यमानो दिवारात्रं विश्वामित्रं तपोधनम् । विश्वामित्रस्तु तं दृष्ट्वा राजानं विफलीकृतम् ॥ १३
चण्डालरूपिणं राम मुनिः कारुण्यमागतः । कारुण्यात् स महातेजा वाक्यं परमधार्मिकः ॥ १४
इदं जगाद भद्रं ते राजानं घोररूपिणम् । किमागमनकार्यं ते राजपुत्र महाबल ॥ १५
अयोध्याधिपते वीर शापाच्चण्डालतां गतः । अथ तद्वाक्यमाकर्ण्य राजा चण्डालतां गतः ॥ १६
अब्रवीत् प्राञ्जलिर्वाक्यं वाक्यज्ञो वाक्यकोविदम् । प्रत्याख्यातोऽस्मि गुरुणा गुरुपुत्रैस्तथैव च ॥ १७
अनवाप्यैव तं कामं मया प्राप्तो विपर्ययः । सशरीरो दिवं यायामिति मे सौम्यदर्शन ॥ १८
मया चेष्टं क्रतुशतं तच्च नावाप्यते फलम् । अनृतं नोक्तपूर्वं मे न च वक्ष्ये कदाचन ॥ १९
कृच्छ्रेष्वपि गतः सौम्य क्षत्रधर्मेण ते शपे[1] । यज्ञैर्बहुविधैरिष्टं प्रजा धर्मेण पालिताः ॥ २०
गुरवश्च महात्मानः शीलवृत्तेन तोषिताः । धर्मे प्रयतमानस्य यज्ञं चाहर्तुमिच्छतः ॥ २१
परितोषं न गच्छन्ति गुरवो मुनिपुंगव । दैवमेव परं मन्ये पौरुषं तु निरर्थकम् ॥ २२
दैवेनाक्रम्यते सर्वं दैवं हि परमा गतिः । तस्य मे परमार्तस्य प्रसादमभिकाङ्क्षतः ॥ २३
कर्तुमर्हसि भद्रं ते दैवोपहतकर्मणः । नान्यां गतिं गमिष्यामि नान्यः शरणमस्ति मे ॥ २४
दैवं पुरुषकारेण निवर्तयितुमर्हसि ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायां
बालकाण्डे त्रिशङ्कुशापो नाम अष्टपञ्चाशः सर्गः

---

## एकोनषष्टितमः सर्गः

### वासिष्ठशापः

उक्तवाक्यं तु राजानं कृपया कुशिकात्मजः । अब्रवीन्मधुरं वाक्यं साक्षाच्चण्डालरूपिणम् ॥ १
ऐक्ष्वाक स्वागतं तेऽस्तु जानामि त्वां सुधार्मिकम् । शरणं ते भविष्यामि मा भैषीर्नृपपुंगव ॥ २
अहमामन्त्रये सर्वान् महर्षीन् पुण्यकर्मणः । यज्ञसाह्यकरान् राजंस्ततो यक्ष्यसि निर्वृतः ॥ ३
गुरुशापकृतं रूपं यदिदं त्वयि वर्तते । अनेन सह रूपेण सशरीरो गमिष्यसि ॥ ४
हस्तप्राप्तमहं मन्ये स्वर्गं तव नराधिप । यस्त्वं कौशिकमागम्य शरण्यं शरणागतः ॥ ५
एवमुक्त्वा महातेजाः पुत्रान् परमधार्मिकान् । व्यादिदेश महाप्राज्ञान् यज्ञसंभारकारणात् ॥ ६
सर्वाञ्शिष्यान् समाहूय वाक्यमेतदुवाच ह । सर्वानृषिगणान् वत्सा आनयध्वं ममाज्ञया ॥ ७
सशिष्यसुहृदश्चैव सर्त्विजः [2]सुबहुश्रुतान् । यदन्यो वचनं ब्रूयान्मद्वाक्यबलचोदितः ॥ ८
तत् सर्वमखिलेनोक्तं ममाख्येयमनादृतम् । तस्य तद्वचनं श्रुत्वा दिशो जग्मुस्तदाज्ञया ॥ ९

---

१. अनृतम् इत्यादिः शपे इत्यन्तो भागः ग. नास्ति । २. स च.

आजग्मुरथ देशेभ्यः सर्वेभ्यो ब्रह्मवादिनः । ते च शिष्याः समागम्य मुनिं ज्वलिततेजसम् ॥ १०
ऊचुश्च वचनं सर्वे सर्वेषां ब्रह्मवादिनाम् । श्रुत्वा ते वचनं सर्वे समायान्ति द्विजातयः ॥ ११
सर्वदेशेषु चागच्छन् वर्जयित्वा महोदयम् । वासिष्ठं तच्छतं सर्वं क्रोधपर्याकुलाक्षरम् ॥ १२
यदाह वचनं सर्वं शृणु त्वं मुनिपुंगव । क्षत्रियो याजको यस्य चण्डालस्य विशेषतः ॥ १३
कथं सदसि भोक्तारो हविस्तस्य सुरर्षयः । ब्राह्मणा वा महात्मानो भुक्त्वा चण्डालभोजनम् ॥ १४
कथं स्वर्गं गमिष्यन्ति विश्वामित्रेण पालिताः । एतद्वचननैष्ठुर्यमूचुः संरक्तलोचनाः ॥ १५
वासिष्ठा मुनिशार्दूल सर्वे ते समहोदयाः । तेषां तद्वचनं श्रुत्वा सर्वेषां मुनिपुंगवः ॥ १६
क्रोधसंरक्तनयनः सरोषमिदमब्रवीत् । ये दूषयन्त्यदुष्टं मां तप उग्रं समास्थितम् ॥ १७
भस्मीभूता दुरात्मानो भविष्यन्ति न संशयः । अद्य ते कालपाशेन नीता वैवस्वतक्षयम् ॥ १८
सप्त जातिशतान्येव मृतपाः सन्तु सर्वशः । श्वमांसनियताहारा मुष्टिका नाम निर्घृणाः ॥ १९
विकृताश्च विरूपाश्च लोकाननुचरन्त्विमान् । महोदयश्च दुर्बुद्धिर्मामदूष्यं ह्यदूषयत् ॥ २०
दूषितः सर्वलोकेषु निषादत्वं गमिष्यति । प्राणातिपातनिरतो निरनुक्रोशतां गतः ॥ २१
दीर्घकालं मम क्रोधाद्दुर्गतिं वर्तयिष्यति । एतावदुक्त्वा वचनं विश्वामित्रो महातपाः ॥ २२
विरराम महातेजा ऋषिमध्ये महामुनिः ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायां
बालकाण्डे वासिष्ठशापो नाम एकोनषष्टितमः सर्गः

---

## षष्टितमः सर्गः

### त्रिशङ्कुस्वर्गः

तपोबलहतान् कृत्वा वासिष्ठान् समहोदयान् । ऋषिमध्ये महातेजा विश्वामित्रोऽभ्यभाषत ॥ १
अयमिक्ष्वाकुदायादस्त्रिशङ्कुरिति विश्रुतः । धर्मिष्ठश्च वदान्यश्च मां चैव शरणं गतः ॥ २
स्वेनानेन शरीरेण देवलोकजिगीषया । यथायं स्वशरीरेण स्वर्गलोकं गमिष्यति ॥ ३
तथा प्रवर्त्यतां यज्ञो भवद्भिश्च मया सह । विश्वामित्रवचः श्रुत्वा सर्व एव महर्षयः ॥ ४
ऊचुः समेत्य सहिता धर्मज्ञा धर्मसंहितम् । अयं कुशिकदायादो मुनिः परमकोपनः ॥ ५
यदाह वचनं सम्यगेतत् कार्यं न संशयः । अग्निकल्पो हि भगवाञ्शापं दास्यति रोषितः ॥ ६
तस्मात् प्रवर्त्यतां यज्ञः सशरीरो यथा दिवम् । गच्छेदिक्ष्वाकुदायादो विश्वामित्रस्य तेजसा ॥ ७
तथा प्रवर्त्यतां यज्ञः सर्वे समधितिष्ठत । एवमुक्त्वा महर्षयश्चक्रुस्तास्ताः क्रियास्तदा ॥ ८
याजकश्च महातेजा विश्वामित्रोऽभवत् क्रतौ । ऋत्विजश्चानुपूर्व्येण मन्त्रवन्मन्त्रकोविदाः ॥ ९
चक्रुः सर्वाणि कार्याणि यथाकल्पं यथाविधि । ततः कालेन महता विश्वामित्रो महातपाः ॥ १०

चकारावाहनं तत्र भागार्थं सर्वदेवताः । नाभ्यागमंस्तदाहूता भागार्थं सर्वदेवताः[1] ॥ ११
ततः क्रोधसमाविष्टो विश्वामित्रो महामुनिः । स्रुवमुद्यम्य सक्रोधस्त्रिशङ्कुमिदमब्रवीत् ॥ १२
पश्य मे तपसो वीर्यं स्वार्जितस्य नरेश्वर । एष त्वां सशरीरेण नयामि स्वर्गमोजसा ॥ १३
दुष्प्रापं स्वशरीरेण दिवं गच्छ नराधिप । स्वार्जितं किंचिदप्यस्ति मया हि तपसः फलम् ॥ १४
राजन् स्वतेजसा तस्य सशरीरो दिवं व्रज । उक्तवाक्ये मुनौ तस्मिन् सशरीरो नरेश्वरः ॥ १५
दिवं जगाम काकुत्स्थ मुनीनां पश्यतां तदा । देवलोकगतं दृष्ट्वा त्रिशङ्कुं पाकशासनः ॥ १६
सह सर्वैः सुरगणैरिदं वचनमब्रवीत् । त्रिशङ्को गच्छ भूयस्त्वं नासि स्वर्गकृतालयः ॥ १७
गुरुशापहतो मूढ पत भूमिमवाक्शिराः । एवमुक्तो महेन्द्रेण त्रिशङ्कुरपतत् पुनः ॥ १८
विक्रोशमानस्त्राहीति विश्वामित्रं तपोधनम् । तच्छ्रुत्वा वचनं तस्य क्रोशमानस्य कौशिकः ॥ १९
क्रोधमाहारयत्तीव्रं तिष्ठ तिष्ठेति चाब्रवीत् । ऋषिमध्ये स तेजस्वी प्रजापतिरिवापरः ॥ २०
सृजन् दक्षिणमार्गस्थान् सप्तर्षीनपरान् पुनः । नक्षत्रमालामपरामसृजत् क्रोधमूर्च्छितः ॥ २१
दक्षिणां दिशमास्थाय मुनिमध्ये महातपाः । सृष्ट्वा नक्षत्रवंशं च क्रोधेन कलुषीकृतः ॥ २२
अन्यमिन्द्रं करिष्यामि लोको वा स्यादनिन्द्रकः । दैवतान्यपि स क्रोधात् स्रष्टुं समुपचक्रमे ॥ २३
ततः परमसंभ्रान्ताः सर्षिसङ्घाः सुरासुराः[2] । विश्वामित्रं महात्मानमूचुः सानुनयं वचः ॥ २४
अयं राजा महाभाग गुरुशापपरिक्षतः । सशरीरो दिवं यातुं नार्हत्येव तपोधन ॥ २५
तेषां तद्वचनं श्रुत्वा देवानां मुनिपुंगवः । अब्रवीत् सुमहद्वाक्यं कौशिकः सर्वदेवताः ॥ २६
सशरीरस्य भद्रं वस्त्रिशङ्कोरस्य भूपतेः । आरोहणं प्रतिज्ञाय नानृतं कर्तुमुत्सहे ॥ २७
स्वर्गोऽस्तु सशरीरस्य त्रिशङ्कोरस्य शाश्वतः । नक्षत्राणि च सर्वाणि मामकानि ध्रुवाण्यथ ॥ २८
यावल्लोका धरिष्यन्ति तिष्ठन्त्वेतानि सर्वशः । मत्कृतानि सुराः सर्वे तदनुज्ञातुमर्हथ ॥ २९
एवमुक्ताः सुराः सर्वे प्रत्यूचुर्मुनिपुंगवम् । एवं भवतु भद्रं ते तिष्ठन्त्वेतानि सर्वशः ॥ ३०
गगने तान्यनेकानि वैश्वानरपथाद्बहिः । नक्षत्राणि मुनिश्रेष्ठ तेषु ज्योतिष्षु जाज्वलन् ॥ ३१
अवाक्शिरास्त्रिशङ्कुश्च तिष्ठत्वमरसंनिभः । अनुयास्यन्ति चैतानि ज्योतींषि नृपसत्तमम् ॥ ३२
कृतार्थं कीर्तिमन्तं च स्वर्गलोकगतं तथा । विश्वामित्रस्तु धर्मात्मा सर्वदेवैरभिष्टुतः ॥ ३३
ऋषिमध्ये महातेजा बाढमित्येव देवताः । ततो देवा महात्मानो मुनयश्च तपोधनाः ॥ ३४
जग्मुर्यथागतं सर्वे यज्ञस्यान्ते नरोत्तम ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायां
बालकाण्डे त्रिशङ्कुस्वर्गो नाम षष्टितमः सर्गः

———

१. इदमर्धम् ग. नास्ति । २. अस्यानन्तरम्—सकिंनरमहायक्षाःसहसिद्धाः सचारणाः—इति क. छ.

## एकषष्टितमः सर्गः
### शुनःशेपविक्रयः

विश्वामित्रो महात्माथ प्रस्थितान् प्रेक्ष्य तानृषीन् । अब्रवीन्नरशार्दूल सर्वांस्तान् वनवासिनः ॥ १
महान् विघ्नः प्रवृत्तोऽयं दक्षिणामास्थितो दिशम् । दिशमन्यां प्रपत्स्यामस्तत्र तप्स्यामहे तपः[१] ॥ २
पश्चिमायां विशालायां पुष्करेषु महात्मनः[1] । सुखं तपश्चरिष्यामो वरं तद्धि तपोवनम् ॥ ३
एवमुक्त्वा महातेजाः पुष्करेषु महामुनिः । तप उग्रं दुराधर्षं तेपे मूलफलाशनः ॥ ४
एतस्मिन्नेव काले तु अयोध्याधिपतिर्नृपः । अम्बरीष इति ख्यातो यष्टुं समुपचक्रमे ॥ ५
तस्य वै यजमानस्य पशुमिन्द्रो जहार ह । प्रनष्टे तु पशौ विप्रो राजानमिदमब्रवीत् ॥ ६
पशुरद्य हृतो राजन् प्रनष्टस्तव दुर्नयात् । अरक्षितारं राजानं घ्नन्ति दोषा नरेश्वरं[२] ॥ ७
प्रायश्चित्तं महद्ध्येतन्नरं वा पुरुषर्षभ । आनयस्व पशुं शीघ्रं यावत् कर्म प्रवर्तते ॥ ८
उपाध्यायवचः श्रुत्वा स राजा पुरुषर्षभ । अन्वियेष महाबुद्धिः पशुं गोभिः सहस्रशः ॥ ९
देशाञ्जनपदांस्तांस्तान्नगराणि वनानि च । आश्रमाणि च पुण्यानि मार्गमाणो महीपतिः ॥ १०
स पुत्रसहितं तात सभार्यं रघुनन्दन । भृगुतुन्दे समासीनमृचीकं संददर्श ह ॥ ११
तमुवाच महातेजाः प्रणम्याभिप्रसाद्य च । ब्रह्मर्षिं तपसा दीप्तं राजर्षिरमितप्रभः ॥ १२
पृष्ट्वा सर्वत्र कुशलमृचीकं तमिदं वचः । गवां शतसहस्रेण विक्रीणीषे सुतं यदि ॥ १३
पशोरर्थे महाभाग कृतकृत्योऽस्मि भार्गव । सर्वे परिगता देशा यज्ञियं न लभे पशुम् ॥ १४
दातुमर्हसि मूल्येन सुतमेकमितो मम । एवमुक्तो महातेजा ऋचीकस्त्वब्रवीद्वचः ॥ १५
नाहं ज्येष्ठं नरश्रेष्ठ विक्रीणीयां कथंचन । ऋचीकस्य वचः श्रुत्वा तेषां माता महात्मनाम् ॥ १६
उवाच नरशार्दूलमम्बरीषं तपस्विनी । अविक्रेयं सुतं ज्येष्ठं भगवानाह भार्गवः[३] ॥ १७
ममापि दयितं विद्धि कनिष्ठं शुनकं नृप । तस्मात् कनीयसं पुत्रं न दास्ये तव पार्थिव ॥ १८
प्रायेण हि नरश्रेष्ठ ज्येष्ठाः पितृषु वल्लभाः । मातॄणां च कनीयांसस्तस्माद्रक्षे कनीयसम् ॥ १९
उक्तवाक्ये मुनौ तस्मिन् मुनिपत्न्यां तथैव च । शुनःशेपः स्वयं राम मध्यमो वाक्यमब्रवीत् ॥ २०
पिता ज्येष्ठमविक्रेयं माता चाह कनीयसम् । विक्रीतं मध्यमं मन्ये राजन् पुत्रं नयस्व माम् ॥ २१
अथ राजा महान् राम वाक्यान्ते ब्रह्मवादिनः । हिरण्यस्य सुवर्णस्य कोटिभी रत्नराशिभिः[४] ॥ २२
गवां शतसहस्रेण शुनःशेपं नरेश्वरः । गृहीत्वा परमप्रीतो जगाम रघुनन्दन ॥ २३
अम्बरीषस्तु राजर्षी रथमारोप्य सत्वरः । शुनःशेपं महातेजा जगामाशु महायशाः ॥ २४

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायां
बालकाण्डे शुनःशेपविक्रयो नाम एकषष्टितमः सर्गः

---

1. महात्मन इति छान्दसं प्रथमाबहुवचनम् ।
१. वयम् प्र.
२. नरेश्वरम् प्र.
३. इदमर्धम् ख. नास्ति ।
४. इदं पद्यम् क. ख. छ. ज. ञ. नास्ति ।

## द्विषष्टितमः सर्गः

### अम्बरीषयज्ञः

शुनःशेपं नरश्रेष्ठ गृहीत्वा तु महायशाः । व्यश्राम्यत् पुष्करे राजा मध्याह्ने रघुनन्दन ॥ १

तस्य विश्रममाणस्य शुनःशेपो महायशाः । पुष्करक्षेत्रमागम्य विश्वामित्रं ददर्श ह ॥ २

तप्यन्तमृषिभिः सार्धं मातुलं परमातुरः । विवर्णवदनो दीनस्तृष्णया च श्रमेण च ॥ ३

पपाताङ्के मुनेराशु वाक्यं चेदमुवाच ह । न मेऽस्ति माता न पिता ज्ञातयो बान्धवाः कुतः ॥ ४

त्रातुमर्हसि मां सौम्य धर्मेण मुनिपुंगव । त्राता त्वं हि मुनिश्रेष्ठ सर्वेषां त्वं हि भावनः ॥ ५

राजा च कृतकार्यः स्यादहं दीर्घायुरव्ययः । स्वर्गलोकमुपाश्नीयां तपस्तप्त्वा ह्यनुत्तमम्[2] ॥ ६

त्वं मे नाथो ह्यनाथस्य भव भव्येन चेतसा । पितेव पुत्रं धर्मात्मंस्त्रातुमर्हसि किल्बिषात् ॥ ७

तस्य तद्वचनं श्रुत्वा विश्वामित्रो महातपाः । सान्त्वयित्वा बहुविधं पुत्रानिदमुवाच ह ॥ ८

यत्कृते पितरः पुत्राञ्जनयन्ति शुभार्थिनः । परलोकहितार्थाय तस्य कालोऽयमागतः ॥ ९

अयं मुनिसुतो बालो मत्तः शरणमिच्छति । अस्य जीवितमात्रेण प्रियं कुरुत पुत्रकाः ॥ १०

सर्वे सुकृतकर्माणः सर्वे धर्मपरायणाः । पशुभूता नरेन्द्रस्य तृप्तिमग्नेः प्रयच्छत ॥ ११

नाथवांश्च शुनःशेपो यज्ञश्चाविघ्नितो भवेत् । देवतास्तर्पिताश्च स्युर्मम चापि कृतं वचः ॥ १२

मुनेस्तु वचनं श्रुत्वा मधुष्यन्दादयः सुताः । साभिमानं नरश्रेष्ठ सलीलमिदमब्रुवन् ॥ १३

कथमात्मसुतान् हित्वा त्रायसेऽन्यसुतं विभो । अकार्यमिव पश्यामः श्वमांसमिव भोजने ॥ १४

तेषां तद्वचनं श्रुत्वा पुत्राणां मुनिपुंगवः । क्रोधसंरक्तनयनो व्याहर्तुमुपचक्रमे ॥ १५

निःसाध्वसमिदं प्रोक्तं धर्मादपि विगर्हितम् । अतिक्रम्य तु मद्वाक्यं दारुणं रोमहर्षणम् ॥ १६

श्वमांसभोजिनः सर्वे वासिष्ठा इव जातिषु । पूर्णं वर्षसहस्रं तु पृथिव्यामनुवत्स्यथ ॥ १७

कृत्वा शापसमायुक्तान् पुत्रान् मुनिवरस्तदा । शुनःशेपमुवाचार्तं कृत्वा रक्षां निरामयम्[4] ॥ १८

पवित्रपाशैरासक्तो रक्तमाल्यानुलेपनः । वैष्णवं यूपमासाद्य वाग्भिरग्निमुदाहर ॥ १९

इमे तु गाथे द्वे दिव्ये गायेथा मुनिपुत्रक । अम्बरीषस्य यज्ञेऽस्मिंस्ततः सिद्धिमवाप्स्यसि ॥ २०

शुनःशेपो गृहीत्वा तु ते गाथे सुसमाहितः । त्वरया राजसिंहं तमम्बरीषमुवाच ह ॥ २१

राजसिंह महासत्त्व शीघ्रं गच्छावहे सदः । निर्वर्तयस्व राजेन्द्र दीक्षां च समुपाविश ॥ २२

तद्वाक्यमृषिपुत्रस्य श्रुत्वा हर्षसमुत्सुकः । जगाम नृपतिः शीघ्रं यज्ञवाटमतन्द्रितः ॥ २३

सदस्यानुमते राजा पवित्रकृतलक्षणम् । पशुं रक्ताम्बरं कृत्वा यूपे तं समबन्धयत् ॥ २४

स बद्धो वाग्भिरग्र्याभिरभितुष्टाव वै सुरौ । इन्द्रमिन्द्रानुजं चैव यथावन्मुनिपुत्रकः ॥ २५

---

१. आसाद्य. ञ.
२. इदं पद्यम् ग. नास्ति ।
३. च्छन्दा- प्र.
४. अस्यानन्तरम्—इदमाह मुनिश्रेष्ठो विश्वामित्रो महातपाः—इति ग. ज.
५. अस्यानन्तरम्—इन्द्राविष्णू सुरश्रेष्ठौ स्तुहि त्वं मुनिपुत्रक—इति क. च.
६. इदमर्धम् ख. नास्ति ।

ततः प्रीतः सहस्राक्षो रहस्यस्तुतितर्पितः । दीर्घमायुस्तदा प्रादाच्छुनःशेपाय राघव ॥ २६
स च राजा नरश्रेष्ठ यज्ञस्यान्तमवाप्तवान् । फलं बहुगुणं राम सहस्राक्षप्रसादजम् ॥ २७
विश्वामित्रोऽपि धर्मात्मा भूयस्तेपे महातपाः । पुष्करेषु नरश्रेष्ठ दशवर्षशतानि च ॥ २८

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायां
बालकाण्डे अम्बरीषयज्ञो नाम द्विषष्टितमः सर्गः

---

## त्रिषष्टितमः सर्गः

### मेनकानिर्वासः

पूर्णे वर्षसहस्रे तु व्रतस्नातं महामुनिम् । अभ्यागच्छन् सुराः सर्वे तपःफलचिकीर्षवः ॥ १
अब्रवीत् सुमहातेजा ब्रह्मा सुरुचिरं वचः । ऋषिस्त्वमसि भद्रं ते स्वार्जितैः कर्मभिः शुभैः ॥ २
तमेवमुक्त्वा देवेशस्त्रिदिवं पुनरभ्यगात् । विश्वामित्रो महातेजा भूयस्तेपे महत्तपः ॥ ३
ततः कालेन महता मेनका परमाप्सराः । पुष्करेषु नरश्रेष्ठ स्नातुं समुपचक्रमे ॥ ४
तां ददर्श महातेजा मेनकां कुशिकात्मजः । रूपेणाप्रतिमां तत्र विद्युतं जलदे यथा ॥ ५
दृष्ट्वा कन्दर्पवशगो मुनिस्तामिदमब्रवीत् । अप्सरः स्वागतं तेऽस्तु वस चेह ममाश्रमे ॥ ६
अनुगृह्णीष्व भद्रं ते मदनेन सुमोहितम् । इत्युक्ता सा वरारोहा तत्र वासमथाकरोत्[1] । ७
तस्यां वसन्त्यां वर्षाणि पञ्च पञ्च च राघव । विश्वामित्राश्रमे तस्मिन् सुखेन व्यतिचक्रमुः ॥ ८
अथ काले गते तस्मिन् विश्वामित्रो महामुनिः । सव्रीड इव संवृत्तश्चिन्ताशोकपरायणः ॥ ९
बुद्धिर्मुनेः समुत्पन्ना सामर्षा रघुनन्दन । सर्वं सुराणां कर्मैतत्तपोऽपहरणं महत् ॥ १०
अहोरात्रापदेशेन गताः संवत्सरा दश । काममोहाभिभूतस्य विघ्नोऽयं प्रत्युपस्थितः ॥ ११
विनिःश्वसन् मुनिवरः पश्चात्तापेन दुःखितः । भीतामप्सरसं दृष्ट्वा वेपन्तीं प्राञ्जलिं स्थिताम् ॥ १२
मेनकां मधुरैर्वाक्यैर्विसृज्य कुशिकात्मजः । उत्तरं पर्वतं राम विश्वामित्रो जगाम ह ॥ १३
स कृत्वा नैष्ठिकीं बुद्धिं तप्तुकामो महातपाः । कौशिकीतीरमासाद्य तपस्तेपे सुदारुणम् ॥ १४
तस्य वर्षसहस्राणि घोरं तप उपासतः । उत्तरे पर्वते राम देवतानामभूद्भयम् ॥ १५
आमन्त्रयन् समागम्य सर्वे सर्षिगणाः सुराः । महर्षिशब्दं लभतां साध्वयं कुशिकात्मजः ॥ १६
देवतानां वचः श्रुत्वा सर्वलोकपितामहः । अब्रवीन्मधुरं वाक्यं विश्वामित्रं तपोधनम् ॥ १७
महर्षे स्वागतं वत्स तपसोग्रेण तोषितः । महत्त्वमृषिमुख्यत्वं ददामि तव सुव्रत ॥ १८
ब्रह्मणः स वचः श्रुत्वा सर्वलोकेश्वरस्य ह । न विषण्णो न संतुष्टो विश्वामित्रस्तपोधनः ॥ १९
प्राञ्जलिः प्रणतो भूत्वा सर्वलोकपितामहम् । प्रत्युवाच ततो वाचं विश्वामित्रो महामुनिः ॥ २०

---

१. अस्यानन्तरम्—तपसो हि महाविघ्नो विश्वामित्रमुपागतः—इति घ. छ.

ब्रह्मर्षि[1] शब्दमतुलं स्वार्जितैः कर्मभिः शुभैः। यदि मे भगवानाह[2] ततोऽहं विजितेन्द्रियः॥ २१
तमुवाच ततो ब्रह्मा न तावत्त्वं जितेन्द्रियः। यतस्व मुनिशार्दूल इत्युक्त्वा त्रिदिवं गतः॥ २२
विप्रस्थितेषु देवेषु विश्वामित्रो महामुनिः। ऊर्ध्वबाहुर्निरालम्बो वायुभक्षस्तपश्चरन्॥ २३
घर्मे पञ्चतपा भूत्वा वर्षास्वाकाशसंश्रयः। शिशिरे सलिलस्थायी रात्र्यहानि तपोधनः॥ २४
एवं वर्षसहस्रं हि तपो घोरमुपागमत्। तस्मिन् संतप्यमाने तु विश्वामित्रे महामुनौ॥ २५
संभ्रमः सुमहानासीत् सुराणां वासवस्य च। रम्भामप्सरसं शक्रः सह सर्वैर्मरुद्गणैः॥ २६
उवाचात्महितं वाक्यमहितं कौशिकस्य च॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायां
बालकाण्डे मेनकानिर्वासो नाम त्रिषष्टितमः सर्गः

---

## चतुःषष्टितमः सर्गः

### रम्भाशापः

सुरकार्यमिदं रम्भे कर्तव्यं सुमहत्त्वया। लोभनं कौशिकस्येह काममोहसमन्वितम्॥ १
तथोक्ता साप्सरा राम सहस्राक्षेण धीमता। व्रीडिता प्राञ्जलिर्भूत्वा प्रत्युवाच सुरेश्वरम्॥ २
अयं सुरपते घोरो विश्वामित्रो महामुनिः। क्रोधमुत्स्रक्ष्यते घोरं मयि देव न संशयः॥ ३
ततो हि मे भयं देव प्रसादं कर्तुमर्हसि। एवमुक्तस्तया राम रम्भया भीतया तया[3]॥ ४
तामुवाच सहस्राक्षो वेपमानां कृताञ्जलिम्। मा भैषि रम्भे भद्रं[4] ते कुरुष्व मम शासनम्॥ ५
कोकिलो हृदयग्राही माधवे रुचिरद्रुमे। अहं कंदर्पसहितः स्थास्यामि तव पार्श्वतः॥ ६
त्वं हि रूपं बहुगुणं कृत्वा परमभास्वरम्। तमृषिं कौशिकं भद्रे भेदयस्व तपस्विनम्॥ ७
सा श्रुत्वा वचनं तस्य कृत्वा रूपमनुत्तमम्। लोभयामास ललिता विश्वामित्रं शुचिस्मिता[5]॥ ८
कोकिलस्य स शुश्राव वल्गु व्याहरतः स्वनम्। संप्रहृष्टेन मनसा तत एनामुदैक्षत॥ ९
अथ तस्य च शब्देन गीतेनाप्रतिमेन च। दर्शनेन च रम्भाया मुनिः संदेहमागतः॥ १०
सहस्राक्षस्य तत् कर्म विज्ञाय मुनिपुंगवः। रम्भां क्रोधसमाविष्टः शशाप कुशिकात्मजः॥ ११
यन्मां लोभयसे रम्भे कामक्रोधजयैषिणम्। दश वर्षसहस्राणि शैली स्थास्यसि दुर्भगे॥ १२
ब्राह्मणः सुमहातेजास्तपोबलसमन्वितः। उद्धरिष्यति रम्भे त्वां मत्क्रोधकलुषीकृताम्॥ १३
एवमुक्त्वा महातेजा विश्वामित्रो महामुनिः। अशक्नुवन् धारयितुं क्रोधं संतापमागतः॥ १४
तस्य शापेन महता रम्भा शैली तदाभवत्। वचः श्रुत्वा च कंदर्पो महर्षेः स च निर्गतः॥ १५

१. महर्षि- च.
२. भगवानाह च. छ. ज.
३. इदमर्धम् ख. नास्ति।
४. मा भैषीस्त्वं वरारोहे ज. ञ.
५. अस्यानन्तरम्—कोकिलो रुचिरग्राही भेदयामास वै मुनिम्—इति क.

कोपेन सुमहातेजास्तपोऽपहरणे कृते । इन्द्रियैरजितै राम न लेभे शान्तिमात्मनः ॥ १६
बभूवास्य मनश्चिन्ता तपोऽपहरणे कृते । नैव क्रोधं गमिष्यामि न च वक्ष्ये कथंचन ॥ १७
अथ वा नोच्छ्वसिष्यामि संवत्सरशतान्यपि । अहं विशोषयिष्यामि ह्यात्मानं विजितेन्द्रियः ॥ १८
तावद्यावद्धि मे प्राप्तं ब्राह्मण्यं तपसार्जितम् । अनुच्छ्वसन्नभुञ्जानस्तिष्ठेयं शाश्वतीः समाः ॥ १९
न हि मे तप्यमानस्य क्षयं यास्यन्ति मूर्तयः । एवं वर्षसहस्रस्य दीक्षां[1] स मुनिपुंगवः ॥ २०
चकाराप्रतिमां लोके प्रतिज्ञां रघुनन्दन ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायां
बालकाण्डे रम्भाशापो नाम चतुःषष्टितमः सर्गः

---

## पञ्चषष्टितमः सर्गः

### ब्रह्मर्षित्वप्राप्तिः

अथ हैमवतीं राम दिशं त्यक्त्वा महामुनिः । पूर्वां दिशमनुप्राप्य तपस्तेपे सुदारुणम् ॥ १
मौनं वर्षसहस्रस्य कृत्वा व्रतमनुत्तमम् । चकाराप्रतिमं राम तपः परमदुष्करम् ॥ २
पूर्णे वर्षसहस्रे तु काष्ठभूतं महामुनिम् । विघ्नैर्बहुभिराधूतं क्रोधो नान्तरमाविशत् ॥ ३
स कृत्वा निश्चयं राम तप आतिष्ठदव्ययम् । तस्य वर्षसहस्रस्य व्रते पूर्णे महाव्रतः ॥ ४
भोक्तुमारब्धवानन्नं तस्मिन् काले रघूत्तम । इन्द्रो द्विजातिर्भूत्वा तं सिद्धमन्नमयाचत ॥ ५
तस्मै दत्त्वा तदा सिद्धं सर्वं विप्राय निश्चितः । निःशेषितेऽन्ने भगवानभुक्त्वैव महातपाः ॥ ६
न किंचिदवदद्विप्रं मौनव्रतमथास्थितः । अथ वर्षसहस्रं वै नोच्छ्वसन्मुनिपुंगवः ॥ ७
तस्यानुच्छ्वसमानस्य मूर्ध्नि धूमो व्यजायत । त्रैलोक्यं येन संभ्रान्तमादीपितमिवाभवत् ॥ ८
ततो देवाः सगन्धर्वाः पन्नगोसुरराक्षसाः । मोहितास्तेजसा तस्य तपसा मन्दरश्मयः ॥ ९
कश्मलोपहताः सर्वे पितामहमथाब्रुवन् । बहुभिः कारणैर्देव विश्वामित्रो महामुनिः ॥ १०
लोभितः क्रोधितश्चैव तपसा चाभिवर्धते । न ह्यस्य वृजिनं किंचिद्दृश्यते सूक्ष्ममप्यथ ॥ ११
न दीयते यदि त्वस्य मनसा यदभीप्सितम् । विनाशयति त्रैलोक्यं तपसा सचराचरम् ॥ १२
व्याकुलाश्च दिशः सर्वा न च किंचित् प्रकाशते । सागराः क्षुभिताः सर्वे विशीर्यन्ते च पर्वताः ॥ १३
प्रकम्पते च पृथिवी वायुर्वाति भृशाकुलः । ब्रह्मन्न प्रतिजानीमो नास्तिको जायते जनः ॥ १४
संमूढमिव त्रैलोक्यं संप्रक्षुभितमानसम् । भास्करो निष्प्रभश्चैव महर्षेस्तस्य तेजसा ॥ १५
बुद्धिं न कुरुते यावन्नाशे देव महामुनिः । तावत् प्रसाद्यो भगवानग्निरूपो महाद्युतिः ॥ १६
कालाग्निना यथा पूर्वं त्रैलोक्यं दह्यतेऽखिलम् । देवराज्यं चिकीर्षेत दीयतामस्य यन्मतम् ॥ १७
ततः सुरगणाः सर्वे पितामहपुरोगमाः । विश्वामित्रं महात्मानं वाक्यं मधुरमब्रुवन् ॥ १८
ब्रह्मर्षे स्वागतं तेऽस्तु तपसा स्म सुतोषिताः । ब्राह्मण्यं तपसोग्रेण प्राप्तवानसि कौशिक ॥ १९

---

1. अप्रतिमां प्रतिज्ञां दीक्षां च चकारेत्यर्थानुसारेण योजनीयम् । दीक्षार्थमिति पाठश्चेत् स श्लिष्टः ।
१. गोरग. प्र.

दीर्घमायुश्च ते ब्रह्मन् ददामि समरुद्गणः । स्वस्ति प्राप्नुहि भद्रं ते गच्छ सौम्य यथासुखम् ॥ २०
पितामहवचः श्रुत्वा सर्वेषां च दिवौकसाम् । कृत्वा प्रणामं मुदितो व्याजहार महामुनिः ॥ २१
ब्राह्मण्यं यदि मे प्राप्तं दीर्घमायुस्तथैव च । ओंकारश्च वषट्कारो वेदाश्च वरयन्तु माम् ॥ २२
क्षत्त्रवेदविदां श्रेष्ठो ब्रह्मवेदविदामपि । ब्रह्मपुत्रो वसिष्ठो मामेवं वदतु देवताः ॥ २३
यद्ययं परमः कामः कृतो यान्तु सुरर्षभाः । ततः प्रसादितो देवैर्वसिष्ठो जपतां वरः ॥ २४
सख्यं चकार ब्रह्मर्षिरेवमस्त्विति चाब्रवीत् । ब्रह्मर्षिस्त्वं न संदेहः सर्वं संपत्स्यते तव ॥ २५
इत्युक्त्वा देवताश्चापि सर्वा जग्मुर्यथागतम् । विश्वामित्रोऽपि धर्मात्मा लब्ध्वा ब्राह्मण्यमुत्तमम् ॥ २६
पूजयामास ब्रह्मर्षिं वसिष्ठं जपतां वरम् । कृतकामो महीं सर्वां चचार तपसि स्थितः ॥ २७
एवं त्वनेन ब्राह्मण्यं प्राप्तं राम महात्मना । एष राम मुनिश्रेष्ठ एष विग्रहवत्तपः[1] ॥ २८
एष धर्मपरो नित्यं वीर्यस्यैष परायणम् । एवमुक्त्वा महातेजा विरराम द्विजोत्तमः ॥ २९
शतानन्दवचः श्रुत्वा रामलक्ष्मणसंनिधौ । जनकः प्राञ्जलिर्वाक्यमुवाच कुशिकात्मजम् ॥ ३०
धन्योऽस्म्यनुगृहीतोऽस्मि यस्य मे मुनिपुंगव । यज्ञं काकुत्स्थसहितः प्राप्तवानसि धार्मिक ॥ ३१
पावितोऽहं त्वया ब्रह्मन् दर्शनेन महामुने[2] । गुणा बहुविधाः प्राप्तास्तव संदर्शनान्मया ॥ ३२
विस्तरेण च ते ब्रह्मन् कीर्त्यमानं महत्तपः । श्रुतं मया महातेजो रामेण च महात्मना ॥ ३३
सदस्यैः प्राप्य च सदः श्रुतास्ते बहवो गुणाः । अप्रमेयं तपस्तुभ्यमप्रमेयं च ते बलम् ॥ ३४
अप्रमेया गुणाश्चैव नित्यं ते कुशिकात्मज । तृप्तिराश्चर्यभूतानां कथानां नास्ति मे विभो ॥ ३५
कर्मकालो मुनिश्रेष्ठ लम्बते रविमण्डलम् । श्वः प्रभाते महातेजो द्रष्टुमर्हसि मां पुनः ॥ ३६
स्वागतं तपतां श्रेष्ठ मामनुज्ञातुमर्हसि । एवमुक्तो मुनिवरः प्रशस्य पुरुषर्षभम् ॥ ३७
विससर्जाशु जनकं प्रीतं प्रीतमनास्तदा । एवमुक्त्वा मुनिश्रेष्ठं वैदेहो मिथिलाधिपः ॥ ३८
प्रदक्षिणं चकाराथ सोपाध्यायः सबान्धवः । विश्वामित्रोऽपि धर्मात्मा सहरामः सलक्ष्मणः ॥ ३९
स्ववाटमभिचक्राम पूज्यमानो महर्षिभिः ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायां
बालकाण्डे ब्रह्मर्षित्वप्राप्तिर्नाम पञ्चषष्टितमः सर्गः

---

## षट्षष्टितमः सर्गः

### धनुःप्रसंगः

ततः प्रभाते विमले कृतकर्मा नराधिपः । विश्वामित्रं महात्मानमाजुहाव सराघवम् ॥ १

---

१. विग्रहवांस्तपः च. छ.
२. अस्यानन्तरम्—विश्वामित्र महाभाग ब्रह्मर्षीणां वरोत्तम—इति क. च. छ. ज.
३. अस्यानन्तरम्—पितामहस्य च यथा यथा चैव ह्युमापतेः—इति क. च. ज.

तमर्चयित्वा धर्मात्मा शास्त्रदृष्टेन कर्मणा । राघवौ च महात्मानौ तदा वाक्यमुवाच ह ।। २

भगवन् स्वागतं तेऽस्तु किं करोमि तवानघ । भवानाज्ञापयतु मामाज्ञाप्यो भवता ह्यहम् ।। ३

एवमुक्तः स धर्मात्मा जनकेन महात्मना । प्रत्युवाच मुनिर्वीरं वाक्यं वाक्यविशारदः ।। ४

पुत्रौ दशरथस्येमौ क्षत्रियौ लोकविश्रुतौ । द्रष्टुकामौ धनुःश्रेष्ठं यदेतत्त्वयि तिष्ठति ।। ५

एतद्दर्शय भद्रं ते कृतकामौ नृपात्मजौ । दर्शनादस्य धनुषो यथेष्टं प्रतियास्यतः ।। ६

एवमुक्तस्तु जनकः प्रत्युवाच महामुनिम् । श्रूयतामस्य धनुषो यदर्थमिह तिष्ठति ।। ७

देवरात इति ख्यातो निमेः षष्ठो महीपतिः । न्यासोऽयं तस्य भगवन् हस्ते दत्तो महात्मनः ।। ८

दक्षयज्ञवधे पूर्वं धनुरायम्य वीर्यवान् । रुद्रस्तु त्रिदशान् रोषात् सलीलमिदमब्रवीत् ।। ९

यस्माद्भागार्थिनो भागं नाकल्पयत मे सुराः । वराङ्गानि महार्हाणि धनुषा शातयामि वः ।। १०

ततो विमनसः सर्वे देवा वै मुनिपुंगव । प्रसादयन्ति देवेशं तेषां प्रीतोऽभवद्भवः ।। ११

प्रीतियुक्तः स सर्वेषां ददौ तेषां महात्मनाम् । तदेतद्देवदेवस्य धनूरत्नं महात्मनः ।। १२

न्यासभूतं तदा न्यस्तमस्माकं पूर्वके विभो । अथ मे कृषतः क्षेत्रं लाङ्गलादुत्थिता मम ।। १३

क्षेत्रं शोधयता लब्धा नाम्ना सीतेति विश्रुता । भूतलादुत्थिता सा तु व्यवर्धत ममात्मजा ।। १४

वीर्यशुल्केति मे कन्या स्थापितेयमयोनिजा । भूतलादुत्थितां तां तु वर्धमानां ममात्मजाम् ।। १५

वरयामासुरागम्य राजानो मुनिपुंगव । तेषां वरयतां कन्यां सर्वेषां पृथिवीक्षिताम् ।। १६

वीर्यशुल्केति भगवन्न ददामि सुतामहम् । ततः सर्वे नृपतयः समेत्य मुनिपुंगव ।। १७

मिथिलामभ्युपागम्य वीर्यजिज्ञासवस्तदा । तेषां जिज्ञासमानानामैशं धनुरुपाहृतम् ।। १८

न शेकुर्ग्रहणे तस्य धनुषस्तोलनेऽपि वा । तेषां वीर्यवतां वीर्यमल्पं ज्ञात्वा महामुने ।। १९

प्रत्याख्याता नृपतयस्तन्निबोध तपोधन । ततः परमकोपेन राजानो मुनिपुंगव ।। २०

न्यरुन्धन् मिथिलां सर्वे वीर्यसंदेहमागताः । आत्मानमवधूतं ते विज्ञाय नृपपुंगवाः ।। २१

रोषेण महताविष्टाः पीडयन् मिथिलां पुरीम् । ततः संवत्सरे पूर्णे क्षयं यातानि सर्वशः ।। २२

साधनानि मुनिश्रेष्ठ ततोऽहं भृशदुःखितः । ततो देवगणान् सर्वांस्तपसाहं प्रसादयम् ।। २३

ददुश्च परमप्रीताश्चतुरङ्गबलं सुराः । ततो भग्ना नृपतयो हन्यमाना दिशो ययुः ।। २४

अवीर्या वीर्यसंदिग्धाः सामात्याः पापकारिणः । तदेतन्मुनिशार्दूल धनुः परमभास्वरम् ।। २५

रामलक्ष्मणयोश्चापि दर्शयिष्यामि सुव्रत । यद्यस्य धनुषो रामः कुर्यादारोपणं मुने ।। २६

सुतामयोनिजां सीतां दद्यां दाशरथेरहम् ।।

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायां
बालकाण्डे धनुःप्रसंगो नाम षट्षष्टितमः सर्गः

---

१. विध्वस्य. प्र.

## सप्तषष्टितमः सर्गः

### धनुर्भङ्गः

जनकस्य वचः श्रुत्वा विश्वामित्रो महामुनिः । धनुर्दर्शय रामाय इति होवाच पार्थिवम् ॥ १
ततः स राजा जनकः सचिवान् व्यादिदेश ह । धनुरानीयतां दिव्यं गन्धमाल्यविभूषितम् ॥ २
जनकेन समादिष्टाः सचिवाः प्राविशन् पुरीम् । तद्धनुः पुरतः कृत्वा निर्जग्मुः पार्थिवाज्ञया ॥ ३
नृणां शतानि पञ्चाशद्व्यायतानां महात्मनाम् । मञ्जूषामष्टचक्रां तां समूहुस्ते कथंचन ॥ ४
तामादाय तु मञ्जूषामायसीं यत्र तद्धनुः । सुरोपमं ते जनकमूचुर्नृपतिमन्त्रिणः ॥ ५
इदं धनुर्वरं राजन् पूजितं सर्वराजभिः । मिथिलाधिप राजेन्द्र दर्शनीयं[1] यदीच्छसि ॥ ६
तेषां नृपो वचः श्रुत्वा कृताञ्जलिरभाषत । विश्वामित्रं महात्मानं तावुभौ रामलक्ष्मणौ ॥ ७
इदं धनुर्वरं ब्रह्मञ्जनकैरभिपूजितम् । राजभिश्च महावीर्यैरशक्यं पूरितुं तदा ॥ ८
नैतत् सुरगणाः सर्वे नासुरा न च राक्षसाः । गन्धर्वयक्षप्रवराः सकिंनरमहोरगाः ॥ ९
क्व गतिर्मानुषाणां च धनुषोऽस्य प्रपूरणे । आरोपणे समायोगे वेपने तोलनेऽपि वा ॥ १०
तदेतद्धनुषां श्रेष्ठमानीतं मुनिपुंगव । दर्शयैतन्महाभाग अनयो राजपुत्रयोः ॥ ११
विश्वामित्रस्तु धर्मात्मा श्रुत्वा जनकभाषितम् । वत्स राम धनुः पश्य इति राघवमब्रवीत् ॥ १२
ब्रह्मर्षेर्वचनाद्रामो यत्र तिष्ठति तद्धनुः । मञ्जूषां तामपावृत्य दृष्ट्वा धनुरथाब्रवीत् ॥ १३
इदं धनुर्वरं ब्रह्मन् संस्पृशामीह पाणिना । यत्नवांश्च भविष्यामि तोलने पूरणेऽपि वा ॥ १४
बाढमित्येव तं राजा मुनिश्च समभाषत । लीलया स धनुर्मध्ये जग्राह वचनान्मुनेः ॥ १५
पश्यतां नृसहस्राणां बहूनां रघुनन्दनः । आरोपयत्स धर्मात्मा सलीलमिव तद्धनुः ॥ १६
आरोपयित्वा धर्मात्मा पूरयामास वीर्यवान् । तद्बभञ्ज धनुर्मध्ये नरश्रेष्ठो महायशाः ॥ १७
तस्य शब्दो महानासीन्निर्घातसमनिःस्वनः । भूमिकम्पश्च सुमहान् पर्वतस्येव दीर्यतः ॥ १८
निपेतुश्च नराः सर्वे तेन शब्देन मोहिताः । वर्जयित्वा मुनिवरं राजानं तौ च राघवौ ॥ १९
प्रत्याश्वस्ते जने तस्मिन् राजा विगतसाध्वसः । उवाच प्राञ्जलिर्वाक्यं वाक्यज्ञो मुनिपुंगवम् ॥ २०
भगवन् दृष्टवीर्यो मे रामो दशरथात्मजः । अत्यद्भुतमचिन्त्यं च न तर्कितमिदं मया ॥ २१
जनकानां कुले कीर्तिमाहरिष्यति मे सुता । सीता भर्तारमासाद्य रामं दशरथात्मजम् ॥ २२
मम सत्या प्रतिज्ञा च वीर्यशुल्केति कौशिक । सीता प्राणैर्बहुमता देया रामाय मे सुता ॥ २३
भवतोऽनुमते ब्रह्मञ्शीघ्रं गच्छन्तु मन्त्रिणः । मम कौशिक भद्रं ते अयोध्यां त्वरिता रथैः ॥ २४
राजानं प्रश्रितैर्वाक्यैरानयन्तु पुरं मम । प्रदानं वीर्यशुल्कायाः कथयन्तु च सर्वशः ॥ २५
मुनिगुप्तौ च काकुत्स्थौ कथयन्तु नृपाय वै । प्रीयमाणं तु राजानमानयन्तु सुशीघ्रगाः ॥ २६

---

1. यदि राघवाय दर्शनीयमितीच्छसि तदा दर्शयेत्यर्थ इति तिलकः । गोविन्दराजस्तु यदिच्छसीति पपाठ ।



पश्यतां नृसहस्राणां बहूनां रघुनन्दनः ।
आरोपयत्स धर्मात्मा सलीलमिव तद्धनुः (बालकाण्ड, स. ६७. श्लो. १६)

कौशिकश्च तथेत्याह राजा चाभाष्य मन्त्रिणः । अयोध्यां प्रेषयामास धर्मात्मा कृतशासनान् ॥ २७
यथावृत्तं समाख्यातुमानेतुं च नृपं तदा ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायां
बालकाण्डे धनुर्भङ्गो नाम सप्तषष्टितमः सर्गः

---

## अष्टषष्टितमः सर्गः

### दशरथाह्वानम्

जनकेन समादिष्टा दूतास्ते क्लान्तवाहनाः । त्रिरात्रमुषिता मार्गे त्वयोध्यां प्राविशन् पुरीम् ॥ १
राज्ञो भवनमासाद्य द्वारस्थानिदमब्रुवन् । शीघ्रं निवेद्यतां राज्ञे दूतान्नो जनकस्य च ॥ २
इत्युक्ता द्वारपालास्ते राघवाय न्यवेदयन् । ते राजवचनाच्छीघ्रं द्वाःस्था दूतान् बभाषिरे ॥ ३
द्रुतं गच्छन्तु दूता वै राजवेश्म महाद्युति । ते राजवचनाद्दूता राजवेश्म प्रवेशिताः ॥ ४
ददृशुर्देवसंकाशं वृद्धं दशरथं नृपम् । बद्धाञ्जलिपुटाः सर्वे दूता विगतसाध्वसाः ॥ ५
राजानं प्रयता वाक्यमब्रुवन् मधुराक्षरम् । मैथिलो जनको राजा साग्निहोत्रपुरस्कृतम् ॥ ६
कुशलं चाव्ययं चैव सोपाध्यायपुरोहितम् । मुहुर्मुहुर्मधुरया स्नेहसंयुक्तया गिरा ॥ ७
जनकस्त्वां महाराजापृच्छते[1] सपुरःसरम् । पृष्ट्वा कुशलमव्यग्रं वैदेहो मिथिलाधिपः ॥ ८
कौशिकानुमतो वाक्यं भवन्तमिदमब्रवीत् । पूर्वं प्रतिज्ञा विदिता वीर्यशुल्का ममात्मजा ॥ ९
राजानश्च कृतामर्षा निर्वीर्या विमुखीकृताः । सेयं मम सुता राजन् विश्वामित्रपुरःसरैः ॥ १०
यदृच्छयागतैर्वीरैर्निर्जिता तव पुत्रकैः । तच्च राजन् धनुर्दिव्यं मध्ये भग्नं महात्मना ॥ ११
रामेण हि महावीर [1]यज्ञान्ते जनसंसदि । अस्मै देया मया सीता वीर्यशुल्का ममात्मजा ॥ १२
प्रतिज्ञां तर्तुमिच्छामि तदनुज्ञातुमर्हसि । सोपाध्यायो महाराज पुरोहितपुरःसरः ॥ १३
शीघ्रमागच्छ भद्रं ते द्रष्टुमर्हसि राघवौ । प्रतिज्ञां[2] मम राजेन्द्र निर्वर्तयितुमर्हसि ॥ १४
पुत्रयोरुभयोः प्रीतिं लप्स्यसे वीर्यनिर्जिताम्[3] । एवं विदेहाधिपतिर्मधुरं वाक्यमब्रवीत् ॥ १५
विश्वामित्राभ्यनुज्ञातः शतानन्दमते स्थितः[4] । दूतवाक्यं तु तच्छ्रुत्वा राजा परमहर्षितः ॥ १६
वसिष्ठं वामदेवं च मन्त्रिणोऽन्यांश्च सोऽब्रवीत् । गुप्तः कुशिकपुत्रेण कौसल्यानन्दवर्धनः ॥ १७
लक्ष्मणेन सह भ्रात्रा विदेहेषु वसत्यसौ । दृष्टवीर्यस्तु काकुत्स्थो जनकेन महात्मना ॥ १८
संप्रदानं सुतायास्तु राघवे कर्तुमिच्छति । यदि वो रोचते वृत्तं जनकस्य महात्मनः ॥ १९

---

1. आपृच्छत इति छेदः । तेन आत्मनेपदोपपत्तिः ।

१. महत्यां छ.

२. प्रीतिं च च. छ.

३. पुत्रयोरुभयोरेव प्रीतिं त्वमपि लप्स्यसे च. ...त्वमुपलप्स्यसे छ.

४. अस्यानन्तरम्—इत्युक्त्वा विरता दूता राजगौरवशङ्किताः—इति च. छ. ज.

पुरीं गच्छामहे शीघ्रं मा भूत् कालस्य पर्ययः। मन्त्रिणो बाढमित्याहुः सह सर्वैर्महर्षिभिः॥ २०
सुप्रीतश्चाब्रवीद्राजा श्वो यात्रेति स मन्त्रिणः। मन्त्रिणस्तु नरेन्द्रेण रात्रिं परमसत्कृताः॥ २१
ऊषुः प्रमुदिताः सर्वे गुणैः सर्वैः समन्विताः॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायां बालकाण्डे दशरथाह्वानं नाम अष्टषष्टितमः सर्गः

---

## एकोनसप्ततितमः सर्गः

### दशरथजनकसमागमः

ततो रात्र्यां व्यतीतायां सोपाध्यायः सबान्धवः। राजा दशरथो हृष्टः सुमन्त्रमिदमब्रवीत्॥ १
अद्य सर्वे धनाध्यक्षा धनमादाय पुष्कलम्। व्रजन्त्वग्रे सुविहिता नानारत्नसमन्विताः॥ २
चतुरङ्गबलं सर्वं शीघ्रं निर्यातु सर्वशः। ममाज्ञासमकालं च यानयुग्यमनुत्तमम्॥ ३
वसिष्ठो वामदेवश्च जाबालिरथ काश्यपः। मार्कण्डेयः सुदीर्घायुर्ऋषिः कात्यायनस्तथा॥ ४
एते द्विजाः प्रयान्त्वग्रे स्यन्दनं योजयस्व मे। यथा कालात्ययो न स्याद्दूता हि त्वरयन्ति माम्॥ ५
वचनात्तु नरेन्द्रस्य सा सेना चतुरङ्गिणी। राजानमृषिभिः सार्धं व्रजन्तं पृष्ठतोऽन्वगात्॥ ६
गत्वा चतुरहं मार्गं विदेहानभ्युपेयिवान्। राजा तु जनकः श्रीमाञ्श्रुत्वा पूजामकल्पयत्॥ ७
ततो राजानमासाद्य वृद्धं दशरथं नृपम्। जनको मुदितो राजा हर्षं च परमं ययौ॥ ८
उवाच च नरश्रेष्ठो नरश्रेष्ठं मुदान्वितः। स्वागतं ते महाराज दिष्ट्या प्राप्तोऽसि राघव॥ ९
पुत्रयोरुभयोः प्रीतिं लप्स्यसे वीर्यनिर्जिताम्। दिष्ट्या प्राप्तो महातेजा वसिष्ठो भगवानृषिः॥ १०
सह सर्वैर्द्विजश्रेष्ठैर्देवैरिव शतक्रतुः। दिष्ट्या मे निर्जिता विघ्ना दिष्ट्या मे पूजितं कुलम्॥ ११
राघवैः सह संबन्धाद्वीर्यश्रेष्ठैर्महात्मभिः। श्वः प्रभाते नरेन्द्र त्वं निर्वर्तयितुमर्हसि॥ १२
यज्ञस्यान्ते नरश्रेष्ठ विवाहमृषिसंमतम्[1]। तस्य तद्वचनं श्रुत्वा ऋषिमध्ये नराधिपः॥ १३
वाक्यं वाक्यविदां श्रेष्ठः प्रत्युवाच महीपतिम्। प्रतिग्रहो दातृवशः श्रुतमेतन्मया पुरा॥ १४
यथा वक्ष्यसि धर्मज्ञ तत् करिष्यामहे वयम्। धर्मिष्ठं च यशस्यं च वचनं सत्यवादिनः॥ १५
श्रुत्वा विदेहाधिपतिः परं विस्मयमागतः। ततः सर्वे मुनिगणाः परस्परसमागमे॥ १६
हर्षेण महता युक्तास्तां निशामवसन् सुखम्। अथ रामो महातेजा लक्ष्मणेन समं ययौ॥ १७
विश्वामित्रं पुरस्कृत्य पितुः पादावुपस्पृशन्। राजा च राघवौ पुत्रौ निशाम्य परिहर्षितः॥ १८
उवास परमप्रीतो जनकेनाभिपूजितः। जनकोऽपि महातेजाः क्रियां धर्मेण तत्त्ववित्॥ १९
यज्ञस्य च सुताभ्यां च कृत्वा रात्रिमुवास ह॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायां बालकाण्डे दशरथजनकसमागमो नाम एकोनसप्ततितमः सर्गः

---

१. नरेन्द्रस्य च. २. ऋषिसत्तमैः ख.

## सप्ततितमः सर्गः

### कन्यावरणम्

ततः प्रभाते जनकः कृतकर्मा महर्षिभिः । उवाच वाक्यं वाक्यज्ञः शतानन्दं पुरोहितम् ॥ १

भ्राता मम महातेजा यवीयानतिधार्मिकः । कुशध्वज इति ख्यातः पुरीमध्यवसच्छुभाम् ॥ २

वार्याफलकपर्यन्तां पिबन्निक्षुमतीं नदीम् । सांकाश्यां पुण्यसंकाशां विमानमिव पुष्पकम् ॥ ३

तमहं द्रष्टुमिच्छामि यज्ञगोप्ता स मे मतः । प्रीतिं सोऽपि महातेजा इमां भोक्ता मया सह ॥ ४

एवमुक्ते तु वचने शतानन्दस्य संनिधौ । आगताः केचिदव्यग्रा[1] जनकस्तान् समादिशत्[1] ॥ ५

शासनात्तु नरेन्द्रस्य प्रययुः शीघ्रवाजिभिः । समानेतुं नरव्याघ्रं विष्णुमिन्द्राज्ञया यथा ॥ ६

सांकाश्यां ते समागम्य ददृशुश्च कुशध्वजम् । न्यवेदयन् यथावृत्तं जनकस्य च चिन्तितम् ॥ ७

तद्वृत्तं नृपतिः श्रुत्वा दूतश्रेष्ठैर्महाजवैः[2] । आज्ञयाथ नरेन्द्रस्य आजगाम कुशध्वजः ॥ ८

स ददर्श महात्मानं जनकं धर्मवत्सलम् । सोऽभिवाद्य शतानन्दं जनकं चापि धार्मिकः ॥ ९

राजार्हं परमं दिव्यमासनं सोऽध्यरोहत । उपविष्टावुभौ तौ तु भ्रातरावमितौजसौ ॥ १०

प्रेषयामासतुर्वीरौ मन्त्रिश्रेष्ठं सुदामनम् । गच्छ मन्त्रिपते शीघ्रमैक्ष्वाकममितप्रभम् ॥ ११

आत्मजैः सह दुर्धर्षमानयस्व समन्त्रिणम् । औपकार्यं स गत्वा तु रघूणां कुलवर्धनम् ॥ १२

ददर्श शिरसा चैनमभिवाद्येदमब्रवीत् । अयोध्याधिपते वीर वैदेहो मिथिलाधिपः ॥ १३

स त्वां द्रष्टुं व्यवसितः सोपाध्यायपुरोहितम् । मन्त्रिश्रेष्ठवचः श्रुत्वा राजा सर्षिगणस्तदा ॥ १४

सबन्धुरगमत्तत्र जनको यत्र वर्तते । स राजा मन्त्रिसहितः सोपाध्यायः सबान्धवः ॥ १५

वाक्यं वाक्यविदां श्रेष्ठो वैदेहमिदमब्रवीत् । विदितं ते महाराज इक्ष्वाकुकुलदैवतम् ॥ १६

वक्ता सर्वेषु कृत्येषु वसिष्ठो भगवानृषिः । विश्वामित्राभ्यनुज्ञातः सह सर्वैर्महर्षिभिः ॥ १७

एष वक्ष्यति धर्मात्मा वसिष्ठो मे यथाक्रमम् । एवमुक्त्वा नरश्रेष्ठे राज्ञां मध्ये महात्मनाम्[3] ॥ १८

तूष्णींभूते दशरथे वसिष्ठो भगवानृषिः । उवाच वाक्यं वाक्यज्ञो वैदेहं सपुरोधसम् ॥ १९

अव्यक्तप्रभवो ब्रह्मा शाश्वतो नित्य अव्ययः । तस्मान्मरीचिः संजज्ञे मरीचेः कश्यपः सुतः ॥ २०

विवस्वान् कश्यपाज्जज्ञे मनुर्वैवस्वतः स्मृतः । मनुः प्रजापतिः पूर्वमिक्ष्वाकुस्तु मनोः सुतः ॥ २१

तमिक्ष्वाकुमयोध्यायां राजानं विद्धि पूर्वकम् । इक्ष्वाकोस्तु सुतः श्रीमान् कुक्षिरित्येव विश्रुतः ॥ २२

कुक्षेरथात्मजः श्रीमान् विकुक्षिरुदपद्यत । विकुक्षेस्तु महातेजा बाणः पुत्रः प्रतापवान् ॥ २३

बाणस्य तु महातेजा अनरण्यः प्रतापवान् । अनरण्यात् पृथुर्जज्ञे त्रिशङ्कुस्तु पृथोः सुतः ॥ २४

त्रिशङ्कोरभवत् पुत्रो धुन्धुमारो महायशाः । धुन्धुमारान्महातेजा युवनाश्वो व्यजायत ॥ २५

---

१. इदं पद्यम् ख. नास्ति । ख. नास्ति ।

२. सांकाश्यामित्यादिः जवैरित्यन्तो भागः ३. इदमर्धम् क. ख. ग. छ. नास्ति ।

युवनाश्वसुतस्त्वासीन्मान्धाता पृथिवीपतिः । मान्धातुस्तु सुतः श्रीमान् सुसंधिरुदपद्यत ॥ २६
सुसंधेरपि पुत्रौ द्वौ ध्रुवसंधिः प्रसेनजित् । यशस्वी ध्रुवसंधेस्तु भरतो नाम नामतः ॥ २७
भरतात्तु महातेजा असितो नाम जातवान् । यस्यैते प्रतिराजान उदपद्यन्त शत्रवः ॥ २८
हैहयास्तालजङ्घाश्च शूराश्च शशिबिन्दवः । तांस्तु स प्रतियुध्यन् वै युद्धे राज्यात् प्रवासितः ॥२९
हिमवन्तमुपागम्य भृगुप्रस्रवणेऽवसत्[1] । असितोऽल्पबलो राजा कालधर्ममुपेयिवान् ॥ ३०
द्वे चास्य भार्ये गर्भिण्यौ बभूवतुरिति श्रुतम् । एका गर्भविनाशाय सपत्न्यै सगरं ददौ ॥ ३१
ततः शैलवरे रम्ये बभूवाभिरतो मुनिः । भार्गवश्च्यवनो नाम हिमवन्तमुपाश्रितः ॥ ३२
तत्रैका तु महाभागा भार्गवं देववर्चसम् । ववन्दे पद्मपत्राक्षी काङ्क्षन्ती सुतमात्मनः ॥ ३३
तमृषिं साभ्युपागम्य कालिन्दी चाभ्यवादयत् । स तामभ्यवदद्विप्रः पुत्रेप्सुं पुत्रजन्मनि ॥ ३४
तव कुक्षौ महाभागे सुपुत्रः सुमहाबलः । महावीर्यो महातेजा अचिरात् संजनिष्यति ॥ ३५
गरेण सहितः श्रीमान् मा शुचः कमलेक्षणे । [2]एवमुक्त्वा महातेजा असिते स्वर्गते सति॥३६
विधाय चेतो नृपतौ विद्युल्लेखेव सुप्रभा । च्यवनं तु नमस्कृत्य राजपुत्री पतिव्रता ॥ ३७
पतिशोकातुरा तस्मात् पुत्रं देवी व्यजायत । सपत्न्या तु गरस्तस्यै दत्तो गर्भजिघांसया ॥ ३८
सह तेन गरेणैव जातः स सगरोऽभवत् । सगरस्यासमञ्जस्तु असमञ्जादथांशुमान् ॥ ३९
दिलीपोंऽशुमतः पुत्रो दिलीपस्य भगीरथः । भगीरथात् ककुत्स्थोऽभूत् ककुत्स्थस्य रघुः सुतः॥४०
रघोस्तु पुत्रस्तेजस्वी प्रवृद्धः पुरुषादकः । कल्माषपादो ह्यभवत्तस्माज्जातश्च शङ्खणः ॥ ४१
सुदर्शनः शङ्खणस्य अग्निवर्णः सुदर्शनात् । शीघ्रगस्त्वग्निवर्णस्य शीघ्रगस्य मरुः सुतः ॥ ४२
मरोः प्रशुश्रुकस्त्वासीदम्बरीषः प्रशुश्रुकात् । अम्बरीषस्य पुत्रोऽभून्नहुषः पृथिवीपतिः ॥ ४३
नहुषस्य ययातिश्च नाभागस्तु ययातिजः । नाभागस्य बभूवाजः अजाद्दशरथोऽभवत् ॥ ४४
अस्माद्दशरथाज्जातौ भ्रातरौ रामलक्ष्मणौ । आदिवंशविशुद्धानां राज्ञां परमधर्मिणाम् ॥ ४५
इक्ष्वाकुकुलजातानां वीराणां सत्यवादिनाम् । रामलक्ष्मणयोरर्थे त्वत्सुते वरये नृप ॥ ४६
सदृशाभ्यां नरश्रेष्ठ सदृशे दातुमर्हसि ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायां
बालकाण्डे कन्यावरणं नाम सप्ततितमः सर्गः

---

## एकसप्ततितमः सर्गः

### कन्यादानप्रतिश्रवः

एवं ब्रुवाणं जनकः प्रत्युवाच कृताञ्जलिः । श्रोतुमर्हसि भद्रं ते कुलं नः परिकीर्तितम् ॥ १
प्रदाने हि मुनिश्रेष्ठ कुलं निरवशेषतः । वक्तव्यं कुलजातेन तन्निबोध महामुने ॥ २
राजाभूत् त्रिषु लोकेषु विश्रुतः स्वेन कर्मणा । निमिः परमधर्मात्मा सर्वसत्त्ववतां वरः ॥ ३

---

१. भार्याभ्यां सहितस्तदा क. ख. ग. छ. २. श्लोकोऽयं क. ग. प्र. नास्ति ।

तस्य पुत्रो मिथिर्नाम जनको मिथिपुत्रकः[1] । प्रथमो जनको राजा जनकादप्युदावसुः ॥ ४
उदावसोस्तु धर्मात्मा जातो वै नन्दिवर्धनः । नन्दिवर्धनपुत्रस्तु सुकेतुर्नाम नामतः ॥ ५
सुकेतोरपि धर्मात्मा देवरातो महाबलः । देवरातस्य राजर्षेर्बृहद्रथ इति श्रुतः ॥ ६
बृहद्रथस्य शूरोऽभून्महावीरः प्रतापवान् । महावीरस्य धृतिमान् सुधृतिः सत्यविक्रमः ॥ ७
सुधृतेरपि धर्मात्मा धृष्टकेतुः सुधार्मिकः । धृष्टकेतोस्तु राजर्षेर्हर्यश्व इति विश्रुतः ॥ ८
हर्यश्वस्य मरुः पुत्रो मरोः पुत्रः प्रतीन्धकः । प्रतीन्धकस्य धर्मात्मा राजा कीर्तिरथः सुतः ॥ ९
पुत्रः कीर्तिरथस्यापि देवमीढ इति श्रुतः । देवमीढस्य विबुधो विबुधस्य महीध्रकः ॥ १०
महीध्रकसुतो राजा कीर्तिरातो महाबलः । कीर्तिरातस्य राजर्षेर्महारोमा व्यजायत ॥ ११
महारोम्णस्तु धर्मात्मा स्वर्णरोमा व्यजायत । स्वर्णरोम्णस्तु राजर्षेर्ह्रस्वरोमा व्यजायत ॥ १२
तस्य पुत्रद्वयं जज्ञे धर्मज्ञस्य महात्मनः । ज्येष्ठोऽहमनुजो भ्राता मम वीरः कुशध्वजः ॥ १३
मां तु ज्येष्ठं पिता राज्ये सोऽभिषिच्य नराधिपः । कुशध्वजं समावेश्य भारं मयि वनं गतः ॥ १४
वृद्धे पितरि स्वर्याते धर्मेण धुरमावहन् । भ्रातरं देवसंकाशं स्नेहात् पश्यन् कुशध्वजम् ॥ १५
कस्यचित्त्वथ कालस्य सांकाश्यादागतः पुरात् । सुधन्वा वीर्यवान् राजा मिथिलामवरोधकः ॥ १६
स च मे प्रेषयामास शैवं धनुरनुत्तमम् । सीता कन्या च पद्माक्षी मह्यं वै दीयतामिति ॥ १७
तस्याप्रदानाद्ब्रह्मर्षे युद्धमासीन्मया सह । स हतोऽभिमुखो राजा सुधन्वा तु मया रणे ॥ १८
निहत्य तं मुनिश्रेष्ठ सुधन्वानं नराधिपम् । सांकाश्ये भ्रातरं वीरमभ्यषिञ्चं कुशध्वजम् ॥ १९
कनीयानेष मे भ्राता अहं ज्येष्ठो महामुने । ददामि परमप्रीतो वध्वौ ते मुनिपुंगव ॥ २०
सीतां रामाय भद्रं ते ऊर्मिलां लक्ष्मणाय च । वीर्यशुल्कां मम सुतां सीतां सुरसुतोपमाम् ॥ २१
द्वितीयामूर्मिलां चैव त्रिर्ददामि न संशयः[2] । रामलक्ष्मणयो राजन् गोदानं कारयस्व ह ॥ २२
पितृकार्यं च भद्रं ते ततो वैवाहिकं कुरु । मघा ह्यद्य महाबाहो तृतीये दिवसे विभो ॥ २३
फल्गुन्यामुत्तरे राजंस्तस्मिन् वैवाहिकं कुरु । रामलक्ष्मणयोरर्थे दानं कार्यं सुखोदयम् ॥ २४

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायां
बालकाण्डे कन्यादानप्रतिश्रवो नाम एकसप्ततितमः सर्गः

---

## द्विसप्ततितमः सर्गः

### गोदानमङ्गलम्

तमुक्तवन्तं वैदेहं विश्वामित्रो महामुनिः । उवाच वचनं वीरं वसिष्ठसहितो नृपम् ॥ १
अचिन्त्यान्यप्रमेयानि कुलानि नरपुंगव । इक्ष्वाकूणां विदेहानां नैषां तुल्योऽस्ति कश्चन ॥ २
सदृशो धर्मसंबन्धः सदृशो रूपसंपदा । रामलक्ष्मणयो राजन् सीता चोर्मिलया सह ॥ ३
वक्तव्यं च नरश्रेष्ठ श्रूयतां वचनं मम । भ्राता यवीयान् धर्मज्ञ एष राजा कुशध्वजः ॥ ४
अस्य धर्मात्मनो राजन् रूपेणाप्रतिमं भुवि । सुताद्वयं नरश्रेष्ठ पत्न्यर्थं वरयामहे ॥ ५

---

१. मिथिला येन निर्मिता च.
२. अस्यानन्तरम्—ददामि परमप्रीतो वध्वौ ते मुनिपुङ्गव—इति ख. च.

भरतस्य कुमारस्य शत्रुघ्नस्य च धीमतः । वरयेम सुते राजंस्तयोरर्थे महात्मनोः ॥ ६
पुत्रा दशरथस्येमे रूपयौवनशालिनः । लोकपालोपमाः सर्वे देवतुल्यपराक्रमाः ॥ ७
उभयोरपि राजेन्द्र संबन्धो ह्यनुबध्यताम् । इक्ष्वाकोः कुलमव्यग्रं भवतः पुण्यकर्मणः ॥ ८
विश्वामित्रवचः श्रुत्वा वसिष्ठस्य मते तदा । जनकः प्राञ्जलिर्वाक्यमुवाच मुनिपुंगवौ ॥ ९
कुलं धन्यमिदं मन्ये येषां नो मुनिपुंगवौ[१] । सदृशं कुलसंबन्धं यदाज्ञापयथः स्वयम् ॥ १०
एवं भवतु भद्रं वः कुशध्वजसुते इमे । पत्न्यौ भजेतां सहितौ शत्रुघ्नभरतावुभौ ॥ ११
एकाह्ना राजपुत्रीणां चतसृणां महामुने । पाणीन् गृह्णन्तु चत्वारो राजपुत्रा महाबलाः ॥ १२
उत्तरे दिवसे ब्रह्मन् फल्गुनीभ्यां मनीषिणः । वैवाहिकं प्रशंसन्ति भगो यत्र प्रजापतिः ॥ १३
एवमुक्त्वा वचः सौम्यं प्रत्युत्थाय कृताञ्जलिः । उभौ मुनिवरौ राजा जनको वाक्यमब्रवीत् ॥ १४
परो धर्मः कृतो मह्यं शिष्योऽस्मि भवतोः सदा । इमान्यासनमुख्यानि आसातां मुनिपुंगवौ ॥ १५
यथा दशरथस्येयं तथायोध्या पुरी मम । प्रभुत्वे नास्ति संदेहो यथार्हं कर्तुमर्हथ ॥ १६
तथा ब्रुवति वैदेहे जनके रघुनन्दनः । राजा दशरथो हृष्टः प्रत्युवाच महीपतिम् ॥ १७
युवामसंख्येयगुणौ भ्रातरौ मिथिलेश्वरौ । ऋषयो राजसङ्घाश्च भवद्भ्यामभिपूजिताः ॥ १८
स्वस्ति प्राप्नुहि भद्रं ते गमिष्यामि स्वमालयम् । श्राद्धकर्माणि सर्वाणि विधास्य इति चाब्रवीत् ॥ १९
तमापृष्ट्वा नरपतिं राजा दशरथस्तदा । मुनीन्द्रौ तौ पुरस्कृत्य जगामाशु महायशाः ॥ २०
स गत्वा निलयं राजा श्राद्धं कृत्वा विधानतः । प्रभाते [1]काल्यमुत्थाय चक्रे गोदानमुत्तमम् ॥ २१
गवां शतसहस्राणि ब्राह्मणेभ्यो नराधिपः । एकैकशो ददौ राजा पुत्रानुद्दिश्य धर्मतः ॥ २२
सुवर्णशृङ्गाः संपन्नाः सवत्साः कांस्यदोहनाः । गवां शतसहस्राणि चत्वारि पुरुषर्षभः ॥ २३
वित्तमन्यच्च सुबहु द्विजेभ्यो रघुनन्दनः । ददौ गोदानमुद्दिश्य पुत्राणां पुत्रवत्सलः ॥ २४
स सुतैः कृतगोदानैर्वृतस्तु नृपतिस्तदा । लोकपालैरिवाभाति वृतः सौम्यः प्रजापतिः ॥ २५

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायां बालकाण्डे गोदानमङ्गलं नाम द्विसप्ततितमः सर्गः

---

## त्रिसप्ततितमः सर्गः

### दशरथपुत्रोद्वाहः

यस्मिंस्तु दिवसे राजा चक्रे गोदानमुत्तमम् । तस्मिंस्तु दिवसे शूरो युधाजित् समुपेयिवान् ॥ १
पुत्रः केकयराजस्य साक्षाद्भरतमातुलः । दृष्ट्वा पृष्ट्वा च कुशलं राजानमिदमब्रवीत् ॥ २
केकयाधिपती राजा स्नेहात् कुशलमब्रवीत् । येषां कुशलकामोऽसि तेषां संप्रत्यनामयम् ॥ ३
स्वस्रीयं मम राजेन्द्र द्रष्टुकामो महीपतिः । तदर्थमुपयातोऽहमयोध्यां रघुनन्दन ॥ ४
श्रुत्वा त्वहमयोध्यायां विवाहार्थं तवात्मजान् । मिथिलामुपयातांस्तु त्वया सह महीपते ॥ ५
त्वरयाभ्युपयातोऽहं द्रष्टुकामः स्वसुः सुतम् । अथ राजा दशरथः प्रियातिथिमुपस्थितम् ॥ ६
दृष्ट्वा परमसत्कारैः पूजनार्हमपूजयत् । ततस्तामुषितो रात्रिं सह पुत्रैर्महात्मभिः ॥ ७

---

1. काल्यम् मङ्गलम् ।

१. इदमर्धम् ग. नास्ति ।

प्रभाते पुनरुत्थाय कृत्वा कर्माणि कर्मवित्[1] । ऋषींस्तदा पुरस्कृत्य यज्ञवाटमुपागमत् ॥ ८
युक्ते मुहूर्ते विजये सर्वाभरणभूषितैः । भ्रातृभिः सहितो रामः कृतकौतुकमङ्गलः ॥ ९
वसिष्ठं पुरतः कृत्वा महर्षीनपरानपि । पितुः समीपमाश्रित्य तस्थौ भ्रातृभिरावृतः[2] ॥ १०
वसिष्ठो भगवानेत्य वैदेहमिदमब्रवीत् । राजा दशरथो राजन् कृतकौतुकमङ्गलैः ॥ ११
पुत्रैर्नरवरश्रेष्ठ दातारमभिकाङ्क्षते । दातृप्रतिग्रहीतृभ्यां सर्वार्थाः प्रभवन्ति हि ॥ १२
स्वधर्मं प्रतिपद्यस्व कृत्वा वैवाह्यमुत्तमम् । इत्युक्तः परमोदारो वसिष्ठेन महात्मना ॥ १३
प्रत्युवाच महातेजा वाक्यं परमधर्मवित् । कः स्थितः प्रतिहारो मे कस्याज्ञा संप्रतीक्ष्यते ॥ १४
स्वगृहे को विचारोऽस्ति यथा राज्यमिदं तव । कृतकौतुकसर्वस्वा वेदिमूलमुपागताः ॥ १५
मम कन्या मुनिश्रेष्ठ दीप्ता वह्नेर्यथार्चिषः । सज्जोऽहं त्वत्प्रतीक्षोऽस्मि वेद्यामस्यां प्रतिष्ठितः ॥ १६
अविघ्नं क्रियतां सर्वं किमर्थं हि विलम्ब्यते[3] । तद्वाक्यं जनकेनोक्तं श्रुत्वा दशरथस्तदा ॥ १७
प्रवेशयामास सुतान् सर्वानृषिगणानपि[4] । ततो राजा विदेहानां वसिष्ठमिदमब्रवीत् ॥ १८
कारयस्व ऋषे सर्वमृषिभिः सह धार्मिक । रामस्य लोकरामस्य क्रियां वैवाहिकीं प्रभो ॥ १९
तथेत्युक्त्वा तु जनकं वसिष्ठो भगवानृषिः । विश्वामित्रं पुरस्कृत्य शतानन्दं च धार्मिकम् ॥ २०
प्रपामध्ये तु विधिवद्वेदिं कृत्वा महातपाः । अलंचकार तां वेदिं गन्धपुष्पैः समन्ततः ॥ २१
सुवर्णपालिकाभिश्च छिद्रकुम्भैश्च साङ्कुरैः । अङ्कुराढ्यैः शरावैश्च धूपपात्रैः सधूपकैः ॥ २२
शङ्खपात्रैः स्रुवैः स्रुग्भिः पात्रैरर्घ्याभिपूरितैः । लाजपूर्णैश्च पात्रीभिरक्षतैरपि संस्कृतैः ॥ २३
दर्भैः समैः समास्तीर्य विधिवन्मन्त्रपूर्वकम् । अग्निमाधाय वेद्यां तु विधिमन्त्रपुरस्कृतम् ॥ २४
जुहावाग्नौ महातेजा वसिष्ठो भगवानृषिः । ततः सीतां समानीय सर्वाभरणभूषिताम् ॥ २५
समक्षमग्नेः संस्थाप्य राघवाभिमुखे तदा । अब्रवीज्जनको राजा कौसल्यानन्दवर्धनम् ॥ २६
इयं सीता मम सुता सहधर्मचरी तव । प्रतीच्छ चैनां भद्रं ते पाणिं गृह्णीष्व पाणिना ॥ २७
पतिव्रता महाभागा छायेवानुगता सदा । इत्युक्त्वा प्राक्षिपद्राजा मन्त्रपूतं जलं तदा ॥ २८
साधु साध्विति देवानामृषीणां वदतां तदा । देवदुन्दुभिनिर्घोषैः पुष्पवर्षो महानभूत् ॥ २९
एवं दत्त्वा सुतां सीतां मन्त्रोदकपुरस्कृताम् । अब्रवीज्जनको राजा हर्षेणाभिपरिप्लुतः ॥ ३०
लक्ष्मणागच्छ भद्रं ते ऊर्मिलामुद्यतां मया । प्रतीच्छ पाणिं गृह्णीष्व मा भूत् कालस्य पर्ययः ॥ ३१
तमेवमुक्त्वा जनको भरतं चाभ्यभाषत । पाणिं गृहाण माण्डव्याः पाणिना रघुनन्दन ॥ ३२
शत्रुघ्नं चापि धर्मात्मा अब्रवीज्जनकेश्वरः । श्रुतकीर्त्या महाबाहो पाणिं गृह्णीष्व पाणिना ॥ ३३
सर्वे भवन्तः सौम्याश्च सर्वे सुचरितव्रताः । पत्नीभिः सन्तु काकुत्स्था मा भूत् कालस्य पर्ययः ॥३४

---

१. इदमर्धम् क. नास्ति ।
२. इदमर्धम् ख. नास्ति ।
३. अस्यार्धस्य स्थाने—अविघ्नं कुरुतां राजा किमर्थमवलम्बते—इति च. अविघ्नं क्रियतां राजन् किमर्थमवलम्ब्यते—इति छ.
४. एतदनन्तरं—अथ राजा दशरथः पुत्रैः स्त्रीभिश्च संवृतः । सर्वानृषीन् पुरस्कृत्य प्राविवेश महाद्युतिः ॥ प्रवेश्यमानं राजानं वसिष्ठं गाधिनस्सुतम् । सर्वान् नृपवरान् विप्रान् जनको धर्मवत्सलः ॥ वस्त्रैराभरणैश्चैव गन्धपुष्पैश्च साक्षतैः । पूजयामास विधिवद्यथायोग्यं यथाक्रमम् ॥ इत्यधिकः पाठः ।
५. निर्घोषैः प्र.

जनकस्य वचः श्रुत्वा पाणीन् पाणिभिरस्पृशन् । चत्वारस्ते चतसृणां वसिष्ठस्य मते स्थिताः ॥ ३५
अग्निं प्रदक्षिणं कृत्वा वेदिं राजानमेव च । ऋषींश्चैव महात्मानः सभार्या रघुसत्तमाः ॥ ३६
यथोक्तेन तदा चक्रुर्विवाहं विधिपूर्वकम् । काकुत्स्थैश्च गृहीतेषु ललितेषु च पाणिषु[१] ॥ ३७
पुष्पवृष्टिर्महत्यासीदन्तरिक्षात् सुभास्वरा । दिव्यदुन्दुभिनिर्घोषैर्गीतवादित्रनिःस्वनैः ॥ ३८
ननृतुश्चाप्सरःसङ्घा गन्धर्वाश्च जगुः कलम् । विवाहे रघुमुख्यानां तदद्भुतमदृश्यत ॥ ३९
ईदृशे वर्तमाने तु तूर्योद्घुष्टनिनादिते । त्रिरग्निं ते परिक्रम्य ऊहुर्भार्या महौजसः ॥ ४०
अथोपकार्यां जग्मुस्ते सभार्या रघुनन्दनाः । राजाप्यनुययौ पश्यन् सर्षिसङ्घः सबान्धवः ॥ ४१

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायां
बालकाण्डे दशरथपुत्रोद्वाहो नाम त्रिसप्ततितमः सर्गः

---

## चतुःसप्ततितमः सर्गः

### जामदग्न्याभियोगः

अथ राञ्यां व्यतीतायां विश्वामित्रो महामुनिः । आपृच्छ्य तौ च राजानौ जगामोत्तरपर्वतम् ॥ १
आशीर्भिः पूरयित्वा च कुमारांश्च सराघवान्[२] । विश्वामित्रे गते राजा वैदेहं मिथिलाधिपम् ॥ २
आपृच्छ्याथ जगामाशु राजा दशरथः पुरीम् । गच्छन्तं तं तु राजानमन्वगच्छन्नराधिपः[१] ॥ ३
अथ राजा विदेहानां ददौ कन्याधनं बहु । गवां शतसहस्राणि बहूनि मिथिलेश्वरः ॥ ४
कम्बलानां च मुख्यानां क्षौमकोटयम्बराणि च । हस्त्यश्वरथपादातं दिव्यरूपं स्वलंकृतम् ॥ ५
ददौ कन्यापिता तासां दासीदासमनुत्तमम् । हिरण्यस्य सुवर्णस्य मुक्तानां विद्रुमस्य च ॥ ६
ददौ परमसंहृष्टः कन्याधनमनुत्तमम् । दत्त्वा बहुधनं राजा समनुज्ञाप्य पार्थिवम् ॥ ७
प्रविवेश स्वनिलयं मिथिलां मिथिलेश्वरः । राजाप्ययोध्याधिपतिः सह पुत्रैर्महात्मभिः ॥ ८
ऋषीन् सर्वान् पुरस्कृत्य जगाम सबलानुगः । गच्छन्तं तं नरव्याघ्रं सर्षिसङ्घं सराघवम् ॥ ९
घोराः स्म पक्षिणो वाचो व्याहरन्ति समन्ततः । भौमाश्चैव मृगाः सर्वे गच्छन्ति स्म प्रदक्षिणम् ॥ १०
तान् दृष्ट्वा राजशार्दूलो वसिष्ठं पर्यपृच्छत । असौम्याः पक्षिणो घोरा मृगाश्चापि प्रदक्षिणाः ॥ ११
किमिदं हृदयोत्कम्पि मनो मम विषीदति । राज्ञो दशरथस्यैतच्छ्रुत्वा वाक्यं महानृषिः ॥ १२
उवाच मधुरां वाणीं श्रूयतामस्य यत् फलम् । उपस्थितं भयं घोरं दिव्यं पक्षिमुखाच्च्युतम् ॥ १३
मृगाः प्रशमयन्त्येते संतापस्त्यज्यतामयम् । तेषां संवदतां तत्र वायुः प्रादुर्बभूव ह ॥ १४
कम्पयन् मेदिनीं सर्वां पातयंश्च [३]महाद्रुमान् । तमसा संवृतः सूर्यः सर्वा न प्रबभुर्दिशः ॥ १५
भस्मना चावृतं सर्वं संमूढमिव तद्बलम् । वसिष्ठ ऋषयश्चान्ये राजा च ससुतस्तदा १६
ससंज्ञा इव तत्रासन् सर्वमन्यद्विचेतनम् । तस्मिंस्तमसि घोरे तु भस्मच्छन्नेव सा चमूः ॥ १७
ददर्श भीमसंकाशं जटामण्डलधारिणम् । भार्गवं जामदग्न्यं तं राजराजविमर्दिनम् ॥ १८

---

१. इदमर्धम् क. नास्ति ।
२. आपृच्छ्याऽथ. ङ.
३. द्रुमान् शुभान्. ङ. म.

कैलासमिव दुर्धर्षं कालाग्निमिव दुःसहम् । ज्वलन्तमिव तेजोभिर्दुर्निरीक्ष्यं पृथग्जनैः ॥ १९
स्कन्धे [1]चासज्ज्य परशुं धनुर्विद्युद्गणोपमम् । प्रगृह्य शरमुख्यं च त्रिपुरघ्नं यथा हरम् ॥ २०
तं दृष्ट्वा भीमसंकाशं ज्वलन्तमिव पावकम् । वसिष्ठप्रमुखाः सर्वे जपहोमपरायणाः ॥ २१
संगता मुनयः सर्वे संजजल्पुरथो मिथः । कच्चित् पितृवधामर्षी क्षत्रं नोत्सादयिष्यति ॥ २२
पूर्वं[2] क्षत्रवधं कृत्वा गतमन्युर्गतज्वरः । क्षत्रस्योत्सादनं भूयो न खल्वस्य चिकीर्षितम् ॥ २३
एवमुक्त्वार्घ्यमादाय भार्गवं भीमदर्शनम् । ऋषयो राम रामेति वचो मधुरमब्रुवन् ॥ २४
प्रतिगृह्य तु तां पूजामृषिदत्तां प्रतापवान् । रामं दाशरथिं रामो जामदग्न्योऽभ्यभाषत ॥ २५

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायां
बालकाण्डे जामदग्न्याभियोगो नाम चतुःसप्ततितमः सर्गः

---

## पञ्चसप्ततितमः सर्गः

### वैष्णवधनुःप्रशंसा

राम दाशरथे वीर वीर्यं ते श्रूयतेऽद्भुतम् । धनुषो भेदनं चैव निखिलेन मया श्रुतम् ॥ १
तदद्भुतमचिन्त्यं च भेदनं धनुषस्त्वया । तच्छ्रुत्वाहमनुप्राप्तो धनुर्गृह्यापरं शुभम् ॥ २
तदिदं घोरसंकाशं जामदग्न्यं महद्धनुः । पूरयस्व शरेणैव स्वबलं दर्शयस्व मे ॥ ३
तदिदं ते बलं दृष्ट्वा धनुषोऽस्य प्रपूरणे । द्वन्द्वयुद्धं प्रदास्यामि वीर्यश्लाघ्यमहं तव[3] ॥ ४
तस्य तद्वचनं श्रुत्वा राजा दशरथस्तदा । विषण्णवदनो दीनः प्राञ्जलिर्वाक्यमब्रवीत् ॥ ५
क्षत्ररोषात् प्रशान्तस्त्वं ब्राह्मणश्च महायशाः । बालानां मम पुत्राणामभयं दातुमर्हसि ॥ ६
भार्गवाणां कुले जातः स्वाध्यायव्रतशालिनाम् । सहस्राक्षे प्रतिज्ञाय शस्त्रं [4]निक्षिप्तवानसि ॥ ७
स त्वं धर्मपरो भूत्वा काश्यपाय वसुंधराम् । दत्त्वा वनमुपागम्य महेन्द्रकृतकेतनः ॥ ८
मम सर्वविनाशाय संप्राप्तस्त्वं महामुने । न चैकस्मिन् हते रामे सर्वे जीवामहे वयम् ॥ ९
ब्रुवत्येवं दशरथे जामदग्न्यः प्रतापवान् । अनादृत्यैव तद्वाक्यं राममेवाभ्यभाषत ॥ १०
इमे द्वे धनुषी श्रेष्ठे दिव्ये लोकाभिविश्रुते । दृढे बलवती मुख्ये सुकृते विश्वकर्मणा ॥ ११
अतिसृष्टं सुरैरेकं त्र्यम्बकाय युयुत्सवे । त्रिपुरघ्नं नरश्रेष्ठ भग्नं काकुत्स्थ यत्त्वया ॥ १२
इदं द्वितीयं दुर्धर्षं विष्णोर्दत्तं सुरोत्तमैः[5] । तदिदं वैष्णवं राम धनुः परपुरंजयम्[6] ॥ १३
समानसारं काकुत्स्थ रौद्रेण धनुषा त्विदम् । तदा तु देवताः सर्वाः पृच्छन्ति स्म पितामहम् ॥ १४
शितिकण्ठस्य विष्णोश्च बलाबलनिरीक्षया । अभिप्रायं तु विज्ञाय देवतानां पितामहः ॥ १५
विरोधं जनयामास तयोः सत्त्वपरीक्षया । विरोधे च महद्युद्धमभवद्रोमहर्षणम् ॥ १६

---

१. आसाद्य. प्र.
२. सर्वक्षत्र. प्र.
३. अस्यानन्तरम्—भीतो यदि धनुस्त्यक्त्वा निर्जितोऽस्मीति वा वद । अन्यथा द्वन्द्वयुद्धं मे दाता त्वं वै न संशयः ॥—इति ख.
४. प्रक्षिप्त प्र.
५. इदमर्धम् क. नास्ति ।
६. इदमर्धम् ख. नास्ति ।

शितिकण्ठस्य विष्णोश्च परस्परजयैषिणोः । तदा तु जृम्भितं शैवं धनुर्भीमपराक्रमम् ॥ १७
हुंकारेण महादेवः स्तम्भितोऽथ त्रिलोचनः । देवैस्तदा समागम्य सर्षिसङ्घैः सचारणैः ॥ १८
याचितौ प्रशमं तत्र जग्मतुस्तौ सुरोत्तमौ । जृम्भितं तद्धनुर्दृष्ट्वा शैवं विष्णुपराक्रमैः ॥ १९
अधिकं मेनिरे विष्णुं देवाः सर्षिगणास्तथा[1] । धनू रुद्रस्तु संक्रुद्धो विदेहेषु महायशाः ॥ २०
देवरातस्य राजर्षेर्ददौ हस्ते ससायकम् । इदं च वैष्णवं राम धनुः परपुरंजयम् ॥ २१
ऋचीके भार्गवे प्रादाद्विष्णुः सन्न्यासमुत्तमम् । ऋचीकस्तु महातेजाः पुत्रस्याप्रतिकर्मणः ॥ २२
पितुर्मम ददौ दिव्यं जमदग्नेर्महात्मनः । न्यस्तशस्त्रे पितरि मे तपोबलसमन्विते ॥ २३
अर्जुनो विदधे मृत्युं प्राकृतां बुद्धिमास्थितः । वधमप्रतिरूपं तु पितुः श्रुत्वा सुदारुणम् ॥ २४
क्षत्रमुत्सादयन् रोषाज्जातं जातमनेकशः । पृथिवीं चाखिलां प्राप्य काश्यपाय महात्मने ॥ २५
यज्ञस्यान्ते तदा राम दक्षिणां पुण्यकर्मणे । दत्त्वा महेन्द्रनिलयस्तपोबलसमन्वितः[2] ॥ २६
तदिदं वैष्णवं राम पितृपैतामहं महत् । क्षत्रधर्मं पुरस्कृत्य गृह्णीष्व धनुरुत्तमम् ॥ २७
योजयस्व धनुःश्रेष्ठे शरं परपुरंजयम् । यदि शक्नोषि काकुत्स्थ द्वन्द्वं दास्यामि ते ततः ॥ २८

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायां
बालकाण्डे वैष्णवधनुःप्रशंसा नाम पञ्चसप्ततितमः सर्गः

---

## षट्सप्ततितमः सर्गः

### जामदग्न्यप्रतिष्टम्भः

श्रुत्वा तज्जामदग्न्यस्य वाक्यं दाशरथिस्तदा । गौरवाद्यन्त्रितकथः पितू राममथाब्रवीत् ॥ १
श्रुतवानस्मि यत् कर्म कृतवानसि भार्गव । अनुरुध्यामहे ब्रह्मन् पितुरानृण्यमास्थितः ॥ २
वीर्यहीनमिवाशक्तं क्षत्रधर्मेण भार्गव । अवजानासि मे तेजः पश्य मेऽद्य पराक्रमम् ॥ ३
इत्युक्त्वा राघवः क्रुद्धो भार्गवस्य शरासनम् । शरं च प्रतिजग्राह हस्ताल्लघुपराक्रमः ॥ ४
आरोप्य स धनू रामः शरं सज्यं चकार ह । जामदग्न्यं ततो रामं रामः क्रुद्धोऽब्रवीद्वचः ॥ ५
ब्राह्मणोऽसीति मे पूज्यो विश्वामित्रकृतेन च । तस्माच्छक्तो न ते राम मोक्तुं प्राणहरं शरम् ॥ ६
इमां पादगतिं[3] राम तपोबलसमार्जितान् । लोकानप्रतिमान् वा ते हनिष्यामि यदिच्छसि ॥ ७
न ह्ययं वैष्णवो दिव्यः शरः परपुरंजयः । मोघः पतति वीर्येण बलदर्पविनाशनः ॥ ८
वरायुधधरं रामं द्रष्टुं सर्षिगणाः सुराः । पितामहं पुरस्कृत्य समेतास्तत्र सर्वशः ॥ ९

---

१. अस्यानन्तरम्—पूजयित्वा ततो विष्णुमामन्त्र्य च पिनाकिनम् । ब्रह्मेन्द्रादीन् पुरस्कृत्य नाकपृष्ठं ययुस्तदा—इति ध. च.

२. अस्यानन्तरम्—स्थितोऽस्मि तस्मिंस्तप्यन् वै सुसुखं सुरसेविते । अथ तूत्तमवीर्येण त्वया राम महाबल ॥ श्रुत्वा तु धनुषो भेदं विस्मितानां नभस्थले । भाषतां देवसङ्घानां ततोऽहं द्रुतमागतः च. छ. ञ.

३. वा त्वद्गतिम् ख. छ.

गन्धर्वाप्सरसश्चैव सिद्धचारणकिंनराः । यक्षराक्षसनागाश्च तद्द्रष्टुं महदद्भुतम् ॥ १०
जडीकृते तदा लोके रामे वरधनुर्धरे । निर्वीर्यो जामदग्न्योऽथ रामो राममुदैक्षत ॥ ११
तेजोऽभिहतवीर्यत्वाज्जामदग्न्यो जडीकृतः । रामं कमलपत्राक्षं मन्दं मन्दमुवाच ह ॥ १२
काश्यपाय मया दत्ता यदा पूर्वं वसुंधरा । विषये मे न वस्तव्यमिति मां काश्यपोऽब्रवीत् ॥ १३
सोऽहं गुरुवचः कुर्वन् पृथिव्यां न वसे निशाम् । तदा प्रतिज्ञा काकुत्स्थ कृता भूः काश्यपस्य हि॥१४
तदिमां त्वं गतिं वीर हन्तुं नार्हसि राघव । मनोजवं गमिष्यामि महेन्द्रं पर्वतोत्तमम् ॥ १५
लोकास्त्वप्रतिमा राम निर्जितास्तपसा मया । जहि ताञ्शरमुख्येन मा भूत् कालस्य पर्ययः ॥१६
अक्षय्यं मधुहन्तारं जानामि त्वां सुरोत्तमम् । धनुषोऽस्य परामर्शात् स्वस्ति तेऽस्तु परंतप ॥ १७
एते सुरगणाः सर्वे निरीक्षन्ते समागताः । त्वामप्रतिमकर्माणमप्रतिद्वन्द्वमाहवे ॥ १८
न चेयं मम काकुत्स्थ व्रीडा भवितुमर्हति । त्वया त्रैलोक्यनाथेन यदहं विमुखीकृतः ॥ १९
शरमप्रतिमं राम मोक्तुमर्हसि सुव्रत । शरमोक्षे गमिष्यामि महेन्द्रं पर्वतोत्तमम् ॥ २०
तथा ब्रुवति रामे तु जामदग्न्ये प्रतापवान् । रामो दाशरथिः श्रीमांश्चिक्षेप शरमुत्तमम् ॥ २१
स हतान् दृश्य रामेण स्वाँल्लोकांस्तपसार्जितान् । जामदग्न्यो जगामाशु महेन्द्रं पर्वतोत्तमम् ॥ २२
ततो वितिमिराः सर्वा दिशश्चोपदिशस्तथा । सुराः सर्षिगणा रामं प्रशशंसुरुदायुधम्[1] ॥ २३
रामं दाशरथिं रामो जामदग्न्यः प्रशस्य च । ततः प्रदक्षिणं कृत्वा जगामात्मगतिं प्रभुः ॥ २४

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायां
बालकाण्डे जामदग्न्यप्रतिष्टम्भो नाम षट्सप्ततितमः सर्गः

---

## सप्तसप्ततितमः सर्गः

### अयोध्याप्रवेशः

गते रामे प्रशान्तात्मा रामो दाशरथिर्धनुः । वरुणायाप्रमेयाय ददौ हस्ते ससायकम् ॥ १
अभिवाद्य ततो रामो वसिष्ठप्रमुखानृषीन् । पितरं विह्वलं दृष्ट्वा प्रोवाच रघुनन्दनः ॥ २
जामदग्न्यो गतो रामः प्रयातु चतुरङ्गिणी । अयोध्याभिमुखी सेना त्वया नाथेन पालिता[2] ॥ ३
रामस्य वचनं श्रुत्वा राजा दशरथः सुतम् । बाहुभ्यां संपरिष्वज्य मूर्ध्नि चाघ्राय राघवम् ॥४
गतो राम इति श्रुत्वा हृष्टः प्रमुदितो नृपः । पुनर्जातं तदा मेने पुत्रमात्मानमेव च ॥ ५
चोदयामास तां सेनां जगामाशु ततः पुरीम् । पताकाध्वजिनीं रम्यां तूर्योद्घुष्टनिनादिताम् ॥६
सिक्तराजपथां रम्यां प्रकीर्णकुसुमोत्कराम् । राजप्रवेशसुमुखैः पौरैर्मङ्गलवादिभिः ॥ ७
संपूर्णां प्राविशद्राजा जनौघैः समलंकृताम् । पौरैः प्रत्युद्गतो दूरं द्विजैश्च पुरवासिभिः ॥ ८
पुत्रैरनुगतः श्रीमाञ्श्रीमद्भिश्च महायशाः । प्रविवेश गृहं राजा हिमवत्सदृशं प्रियम् ॥ ९

---

१. इदं पद्यम् क. नास्ति । त्वच्छासने स्थिताम् । शासनं काङ्क्षते सेना
२. अस्यानन्तरम्—संदिशस्व महाराज सेनां चातकालिजैलं यथा ।—इति च. अ.

ननन्द स्वजनै राजा गृहे कामैः सुपूजितः । कौसल्या च सुमित्रा च कैकेयी च सुमध्यमा ॥ १०
वधूप्रतिग्रहे युक्ता याश्चान्या राजयोषितः । ततः सीतां महाभागामूर्मिलां च यशस्विनीम् ॥ ११
कुशध्वजसुते चोभे जगृहुर्नृपपत्नयः । मङ्गलालापनैश्चैव[1] शोभिताः क्षौमवाससः ॥ १२
देवतायतनान्याशु सर्वास्ताः प्रत्यपूजयन् । अभिवाद्याभिवाद्यांश्च सर्वा राजसुतास्तदा[2] ॥ १३
स्वं स्वं गृहमथासाद्य कुबेरभवनोपमम् । गोभिर्धनैश्च धान्यैश्च तर्पयित्वा द्विजोत्तमान् ॥ १४
रेमिरे मुदिताः सर्वा भर्तृभिः सहिता रहः । कुमाराश्च महात्मानो वीर्येणाप्रतिमा भुवि[3] ॥ १५
कृतदाराः कृतास्त्राश्च सधनाः ससुहृज्जनाः । शुश्रूषमाणाः पितरं वर्तयन्ति नरर्षभाः ॥ १६
काले काले तु नीतिज्ञास्तोषयन्तो गुरुं गुणैः । कस्यचित्त्वथ कालस्य राजा दशरथः सुतम् ॥१७
भरतं कैकयीपुत्रमब्रवीद्रघुनन्दनः । अयं केकयराजस्य पुत्रो वसति पुत्रक ॥ १८
त्वां नेतुमागतो वीर युधाजिन्मातुलस्तव । श्रुत्वा दशरथस्यैतद्भरतः कैकयीसुतः ॥ १९
गमनायाभिचक्राम शत्रुघ्नसहितस्तदा । आपृच्छ्य पितरं शूरो रामं चाक्लिष्टकारिणम् ॥ २०
मातॄश्चापि नरश्रेष्ठः शत्रुघ्नसहितो ययौ । युधाजित् प्राप्य भरतं सशत्रुघ्नं प्रहर्षितः ॥ २१
स्वपुरं प्राविशद्वीरः पिता तस्य तुतोष ह । गते च भरते रामो लक्ष्मणश्च महाबलः ॥ २२
पितरं देवसंकाशं पूजयामासतुस्तदा । पितुराज्ञां पुरस्कृत्य पौरकार्याणि सर्वशः ॥ २३
चकार रामो धर्मात्मा प्रियाणि च हितानि च । मातृभ्यो मातृकार्याणि कृत्वा परमयन्त्रितः ॥ २४
गुरूणां गुरुकार्याणि काले कालेऽन्ववैक्षत । एवं दशरथः प्रीतो ब्राह्मणा नैगमास्तदा ॥ २५
रामस्य शीलवृत्तेन सर्वे विषयवासिनः । तेषामतियशा लोके रामः सत्यपराक्रमः ॥ २६
स्वयंभूरिव भूतानां बभूव गुणवत्तरः । रामस्तु सीतया सार्धं विजहार बहूनृतून् ॥ २७
मनस्वी तद्गतमना नित्यं हृदि समर्पितः । प्रिया तु सीता रामस्य दाराः पितृकृता इति ॥ २८
गुणाद्रूपगुणाच्चापि प्रीतिर्भूयोऽभ्यवर्धत । तस्याश्च भर्ता द्विगुणं हृदये परिवर्तते ॥ २९
अन्तर्गतमभिव्यक्तमाख्याति हृदयं हृदा । तस्य भूयो विशेषेण मैथिली जनकात्मजा ॥ ३०
देवताभिः समा रूपे सीता श्रीरिव रूपिणी ॥

तया स राजर्षिसुतोऽभिरामया समेयिवानुत्तमराजकन्यया ।
अतीव रामः शुशुभेऽतिकामया विभुः श्रिया विष्णुरिवामरेश्वरः ॥ ३१

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायां
बालकाण्डे अयोध्याप्रवेशो नाम सप्तसप्ततितमः सर्गः

---

## श्रीमद्वाल्मीकिरामायणे बालकाण्डः संपूर्णः



---

१. मङ्गलालेपनैश्चैव छ.
२. पद्यमिदं म. नास्ति । च. दृष्टम् ।
३. इदमर्धम् क. ग. छ. नास्ति ।

॥ श्रीः ॥

# ॥ श्रीमद्वाल्मीकिरामायणम् ॥

## ॥ अथ अयोध्याकाण्डः ॥

### प्रथमः सर्गः

रामाभिषेकव्यवसायः

गच्छता मातुलकुलं भरतेन महात्मना । शत्रुघ्नो नित्यशत्रुघ्नो नीतः प्रीतिपुरस्कृतः ॥ १

स तत्र न्यवसद्भ्रात्रा सह सत्कारसत्कृतः । मातुलेनाश्वपतिना पुत्रस्नेहेन लालितः ॥ २

तत्रापि निवसन्तौ तौ तर्प्यमाणौ च कामतः । भ्रातरौ स्मरतां वीरौ वृद्धं दशरथं नृपम् ॥ ३

राजापि तौ महातेजाः सस्मार प्रोषितौ सुतौ । उभौ भरतशत्रुघ्नौ महेन्द्रवरुणोपमौ[1] ॥ ४

सर्व एव तु तस्येष्टाश्चत्वारः पुरुषर्षभाः । स्वशरीराद्विनिर्वृत्ताश्चत्वार इव बाहवः ॥ ५

तेषामपि महातेजा रामो रतिकरः पितुः । स्वयंभूरिव भूतानां बभूव गुणवत्तरः ॥ ६

स हि देवैरुदीर्णस्य रावणस्य वधार्थिभिः । अर्थितो मानुषे लोके जज्ञे विष्णुः सनातनः ॥ ७

कौसल्या शुशुभे तेन पुत्रेणामिततेजसा । यथा वरेण देवानामदितिर्वज्रपाणिना ॥ ८

स हि वीर्योपपन्नश्च रूपवाननसूयकः । भूमावनुपमः सूनुर्गुणैर्दशरथोपमः ॥ ९

स तु नित्यं प्रशान्तात्मा मृदुपूर्वं च भाषते । उच्यमानोऽपि परुषं नोत्तरं प्रतिपद्यते ॥ १०

कथंचिदुपकारेण कृतेनैकेन तुष्यति । न स्मरत्यपकाराणां शतमप्यात्मवत्तया ॥ ११

शीलवृद्धैर्ज्ञानवृद्धैर्वयोवृद्धैश्च सज्जनैः । कथयन्नास्त वै नित्यमस्त्रयोग्यान्तरेष्वपि[1] ॥ १२

बुद्धिमान् मधुराभाषी पूर्वभाषी प्रियंवदः । वीर्यवान्न च वीर्येण महता स्वेन विस्मितः[2] ॥ १३

न चानृतकथो विद्वान् वृद्धानां प्रतिपूजकः । अनुरक्तः प्रजाभिश्च प्रजाश्चाप्यनुरज्यते ॥ १४

सानुक्रोशो जितक्रोधो ब्राह्मणप्रतिपूजकः । दीनानुकम्पी[4] धर्मज्ञो नित्यं प्रग्रहवाञ्शुचिः ॥ १५

कुलोचितमतिः क्षात्त्रं धर्मं स्वं बहु मन्यते । मन्यते परया कीर्त्या महत् स्वर्गफलं ततः[2] ॥ १६

नाश्रेयसि रतो यश्च न विरुद्धकथारुचिः । उत्तरोत्तरयुक्तीनां वक्ता वाचस्पतिर्यथा ॥ १७

अरोगस्तरुणो वाग्मी वपुष्मान् देशकालवित् । लोके पुरुषसारज्ञः साधुरेको विनिर्मितः ॥ १८

स तु श्रेष्ठगुणैर्युक्तः प्रजानां पार्थिवात्मजः । बहिश्चर इव प्राणो बभूव गुणतः प्रियः ॥ १९

सम्यग्विद्याव्रतस्नातो यथावत् साङ्गवेदवित् । इष्वस्त्रे च पितुः श्रेष्ठो बभूव भरताग्रजः ॥ २०

---

1. महेन्द्रवरुणौ निरवग्रहमैत्रीसंपन्नाविति प्रसिद्धिः ।

2. ततः स्वधर्मानुष्ठानजन्यया कीर्त्या स्वर्गफलं मन्यते कीर्तिलाभमेवानुत्तमं स्वर्गफलमम-न्यतेत्यर्थः ।

१. अस्त्राभ्यासान्तरेष्वपि क.

२. गर्वितः छ.

३. रज्य. प्र.

४. भूतानुकम्पी छ.

५. विद्वान्न च. छ.

६. -युक्तौ च. झ. ञ.

७. गुणवत्तरः ञ.

८. सर्व. प्र.

कल्याणाभिजनः[1] साधुरदीनः सत्यवागृजुः । वृद्धैरभिविनीतश्च द्विजैर्धर्मार्थदर्शिभिः ॥ २१
धर्मार्थकामतत्त्वज्ञः स्मृतिमान्[१] प्रतिभानवान् । लौकिके समयाचारे कृतकल्पो विशारदः ॥ २२
निभृतः संवृताकारो गुप्तमन्त्रः सहायवान् । अमोघक्रोधहर्षश्च त्यागसंग्रहकालवित् ॥ २३
दृढभक्तिः स्थिरप्रज्ञो नासद्ग्राही न दुर्वचाः । निस्तन्द्रिरप्रमत्तश्च स्वदोषपरदोषवित् ॥ २४
शास्त्रज्ञश्च कृतज्ञश्च पुरुषान्तरकोविदः । यः प्रग्रहानुग्रहयोर्यथान्यायं विचक्षणः ॥ २५
सत्संग्रहप्रग्रहणे स्थानविन्निग्रहस्य च । आयकर्मण्युपायज्ञः संदृष्टव्ययकर्मवित् ॥ २६
श्रैष्ठ्यं शास्त्रसमूहेषु प्राप्तो व्यामिश्रकेषु च । अर्थधर्मौ च संगृह्य सुखतन्त्रो न चालसः ॥ २७
वैहारिकाणां शिल्पानां विज्ञातार्थविभागवित् । आरोहे विनये चैव युक्तो वारणवाजिनाम् ॥ २८
धनुर्वेदविदां श्रेष्ठो लोकेऽतिरथसंमतः । अभियाता प्रहर्ता च सेनानयविशारदः ॥ २९
अप्रधृष्यश्च संग्रामे क्रुद्धैरपि सुरासुरैः । अनसूयो जितक्रोधो न दृप्तो न च मत्सरी ॥ ३०
न चावमन्ता भूतानां न च कालवशानुगः । एवं श्रेष्ठगुणैर्युक्तः प्रजानां पार्थिवात्मजः ॥ ३१
संमतस्त्रिषु लोकेषु वसुधायाः क्षमागुणैः । बुद्ध्या बृहस्पतेस्तुल्यो वीर्येणापि शचीपतेः ॥ ३२
तथा सर्वप्रजाकान्तैः प्रीतिसंजननैः पितुः । गुणैर्विरुरुचे रामो दीप्तैः[३] सूर्य इवांशुभिः ॥ ३३
तमेवं वृत्तसंपन्नमप्रधृष्यपराक्रमम् । लोकपालोपमं नाथमकामयत मेदिनी ॥ ३४
एतैस्तु बहुभिर्युक्तं गुणैरनुपमैः सुतम् । दृष्ट्वा दशरथो राजा चक्रे चिन्तां परंतपः ॥ ३५
अथ राज्ञो बभूवैवं वृद्धस्य चिरजीविनः । प्रीतिरेषा कथं रामो राजा स्यान्मयि जीवति ॥ ३६
एषा ह्यस्य परा प्रीतिर्हृदि संपरिवर्तते । कदा नाम सुतं द्रक्ष्याम्यभिषिक्तमहं प्रियम् ॥ ३७
वृद्धिकामो हि लोकस्य सर्वभूतानुकम्पनः । मत्तः प्रियतरो लोके पर्जन्य इव वृष्टिमान् ॥ ३८
यमशक्रसमो वीर्ये बृहस्पतिसमो मतौ । महीधरसमो धृत्यां मत्तश्च गुणवत्तरः ॥ ३९
महीमहमिमां कृत्स्नामधितिष्ठन्तमात्मजम् । अनेन वयसा दृष्ट्वा यथा स्वर्गमवाप्नुयाम् ॥ ॥ ४०
इत्येते[४] विविधैस्तैस्तैरन्यपार्थिवदुर्लभैः । शिष्टैरपरिमेयैश्च लोके लोकोत्तरैर्गुणैः ॥ ४१
तं समीक्ष्य महाराजो युक्तं समुदितैः शुभैः । निश्चित्य सचिवैः सार्धं युवराजममन्यत ॥ ४२
दिव्यन्तरिक्षे भूमौ च घोरमुत्पातजं भयम् । संचचक्षे[2] च मेधावी शरीरे चात्मनो जराम् ॥ ४३
पूर्णचन्द्राननस्याथ शोकापनुदमात्मनः । लोके रामस्य बुबुधे संप्रियत्वं महात्मनः ॥ ४४
आत्मनश्च प्रजानां च श्रेयसे च प्रियेण च । प्राप्तकाले स धर्मात्मा भक्त्या त्वरितवान् नृपः ॥ ४५
नानानगरवास्तव्यान् पृथग्जानपदानपि । समानिनाय मेदिन्याः प्रधानान् पृथिवीपतीन् ॥ ४६
तान् वेश्मनानाभरणैर्यथार्हं प्रतिपूजितान् । ददर्शालंकृतो राजा प्रजापतिरिव प्रजाः ॥ ४७
न तु केकयराजानं जनकं वा नराधिपः । त्वरया चानयामास पश्चात्तौ श्रोष्यतः प्रियम् ॥ ४८

---

1. कल्याणाभिजनः कल्याणानां जन्मभूमिः ।
2. संचचक्षे ददर्श ।
१. धृतिमान् क.
२. संयम - च. छ. झ. ञ.
३. दीप्तैः प्र.
४. इत्येवं प्र.
५. यौवराज्य. प्र.
६. पतिः प्र.

अथोपविष्टे नृपतौ तस्मिन् परबलार्दने । ततः प्रविविशुः शेषा राजानो लोकसंमताः ॥ ४९
अथ राज्ञा वितीर्णेषु विविधेष्वासनेषु च । राजानमेवाभिमुखा निषेदुर्नयकोविदाः ॥ ५०
स लब्धमानैर्विनयान्वितैर्नृपैः पुरालयैर्जानपदैश्च मानवैः ।
उपोपविष्टैर्नृपतिर्वृतो बभौ सहस्रचक्षुर्भगवानिवामरैः ॥ ५१

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायां
अयोध्याकाण्डे रामाभिषेकव्यवसायो नाम प्रथमः सर्गः

---

## द्वितीयः सर्गः

### परिषदनुमोदनम्

ततः परिषदं सर्वामामन्त्र्य वसुधाधिपः । हितमुद्धर्षणं चैवमुवाच प्रथितं वचः ॥ १
दुन्दुभिस्वनकल्पेन गम्भीरेणानुनादिना । स्वरेण महता राजा जीमूत इव नादयन् ॥ २
राजलक्षणयुक्तेन कान्तेनानुपमेन च । उवाच रसयुक्तेन स्वरेण नृपतिर्नृपान् ॥ ३
विदितं भवतामेतद्यथा मे राज्यमुत्तमम् । पूर्वकैर्मम राजेन्द्रैः सुतवत् परिपालितम् ॥ ४
सोऽहमिक्ष्वाकुभिः सर्वैर्नरेन्द्रैः परिपालितम् । श्रेयसा योक्तुकामोऽस्मि सुखार्हमखिलं जगत् ॥ ५
मयाप्याचरितं पूर्वैः पन्थानमनुगच्छता । प्रजा नित्यमनिद्रेण यथाशक्त्यभिरक्षिताः ॥ ६
इदं शरीरं लोकस्य कृत्स्नस्य चरता हितम् । पाण्डरस्यातपत्रस्य च्छायायां जरितं मया ॥ ७
प्राप्य वर्षसहस्राणि बहून्यायूंषि जीवतः । जीर्णस्यास्य शरीरस्य विश्रान्तिमभिरोचये ॥ ८
राजप्रभावजुष्टां हि दुर्वहामजितेन्द्रियैः । परिश्रान्तोऽस्मि लोकस्य गुर्वीं धर्मधुरं वहन् ॥ ९
सोऽहं विश्राममिच्छामि रामं कृत्वा प्रजाहिते । संनिकृष्टानिमान् सर्वाननुमान्य द्विजर्षभान् ॥ १०
अनुजातो हि मां सर्वैर्गुणैर्ज्येष्ठो ममात्मजः । पुरंदरसमो वीर्ये रामः परपुरंजयः ॥ ११
तं चन्द्रमिव पुष्येण युक्तं धर्मभृतां वरम् । यौवराज्येन योक्तास्मि प्रीतः पुरुषपुंगवम् ॥ १२
अनुरूपः स वै नाथो लक्ष्मीवाँल्लक्ष्मणाग्रजः । त्रैलोक्यमपि नाथेन येन स्यान्नाथवत्तरम् ॥ १३
अनेन श्रेयसा सद्यः संयोक्ष्येऽहमिमां महीम् । गतक्लेशो भविष्यामि सुते तस्मिन्निवेश्य वै ॥ १४
यदीदं मेऽनुरूपार्थं मया साधु सुमन्त्रितम् । भवन्तो मेऽनुमन्यन्तां कथं वा करवाण्यहम् ॥ १५
यद्यप्येषा मम प्रीतिर्हितमन्यद्विचिन्त्यताम् । अन्या मध्यस्थचिन्ता हि विमर्दाभ्यधिकोदया[1] ॥ १६
इति ब्रुवन्तं मुदिताः प्रत्यनन्दन् नृपा नृपम् । वृष्टिमन्तं महामेघं नर्दन्त इव बर्हिणः ॥ १७
स्निग्धोऽनुनादी संजज्ञे तत्र हर्षसमीरितः । जनौघोद्घुष्टसन्नादो मेदिनीं कम्पयन्निव ॥ १८
तस्य धर्मार्थविदुषो भावमाज्ञाय सर्वशः । ब्राह्मणा जनमुख्याश्च पौरजानपदैः सह ॥ १९
समेत्य मन्त्रयित्वा तु समतागतबुद्धयः । ऊचुश्च मनसा ज्ञात्वा वृद्धं दशरथं नृपम् ॥ २०

---

1. विमर्दाभ्यधिकोदया विचारसंवर्षणेन अधिकफला ।
१. नियता नृपाः झ. अ.
२. नियोक्ता प्र.
३. योक्ष्येऽहं प्र.
४. विमानं झ. ञ.

अनेकवर्षसाहस्रो वृद्धस्त्वमसि पार्थिव । स रामं युवराजानमभिषिञ्चस्व पार्थिवम् ॥ २१
इच्छामो हि महाबाहुं रघुवीरं महाबलम् । गजेन महता यान्तं रामं छत्रावृताननम् ॥ २२
इति तद्वचनं श्रुत्वा राजा तेषां मनःप्रियम् । अजानन्निव जिज्ञासुरिदं वचनमब्रवीत् ॥ २३
श्रुत्वैव वचनं यन्मे राघवं पतिमिच्छथ । राजानः संशयोऽयं मे किमिदं ब्रूत तत्त्वतः ॥ २४
कथं नु मयि धर्मेण पृथिवीमनुशासति । भवन्तो द्रष्टुमिच्छन्ति युवराजं ममात्मजम् ॥ २५
ते तमूचुर्महात्मानं पौरजानपदैः सह । बहवो नृप कल्याणा गुणाः पुत्रस्य सन्ति ते ॥ २६
गुणान् गुणवतो देव देवकल्पस्य धीमतः । प्रियानानन्दनान् कृत्स्नान् प्रवक्ष्यामोऽद्य तान् शृणु ॥ २७
दिव्यैर्गुणैः शक्रसमो रामः सत्यपराक्रमः । इक्ष्वाकुभ्योऽपि सर्वेभ्यो ह्यतिरिक्तो विशांपते ॥ २८
रामः सत्पुरुषो लोके सत्यधर्मपरायणः । साक्षाद्रामाद्विनिर्वृत्तो धर्मश्चापि श्रिया सह ॥ २९
प्रजासुखत्वे चन्द्रस्य वसुधायाः क्षमागुणैः । बुद्ध्या बृहस्पतेस्तुल्यो वीर्ये साक्षाच्छचीपतेः ॥ ३०
धर्मज्ञः सत्यसंधश्च शीलवाननसूयकः । क्षान्तः सान्त्वयिता श्लक्ष्णः कृतज्ञो विजितेन्द्रियः ॥ ३१
मृदुश्च स्थिरचित्तश्च सदा भव्योऽनसूयकः । प्रियवादी च भूतानां सत्यवादी च राघवः ॥ ३२
बहुश्रुतानां वृद्धानां ब्राह्मणानामुपासिता । तेनास्येहातुला कीर्तिर्यशस्तेजश्च वर्धते ॥ ३३
देवासुरमनुष्याणां सर्वास्त्रेषु विशारदः । सम्यग्विद्याव्रतस्नातो यथावत् साङ्गवेदवित् ॥ ३४
गान्धर्वे च भुवि श्रेष्ठो बभूव भरताग्रजः । कल्याणाभिजनः साधुरदीनात्मामहामतिः ॥ ३५
द्विजैरभिविनीतश्च श्रेष्ठैर्धर्मार्थनैपुणैः । यदा व्रजति संग्रामं ग्रामार्थे नगरस्य वा ॥ ३६
गत्वा सौमित्रिसहितो नाविजित्य निवर्तते । संग्रामात् पुनरागम्य कुञ्जरेण रथेन वा ॥ ३७
पौरान् स्वजनवन्नित्यं कुशलं परिपृच्छति । पुत्रेष्वग्निषु दारेषु प्रेष्यशिष्यगणेषु च ॥ ३८
निखिलेनानुपूर्व्या च पिता पुत्रानिवौरसान् । शुश्रूषन्ते च वः शिष्याः कच्चित् कर्मसु दंशिताः ॥ ३९
इति नः पुरुषव्याघ्रः सदा रामोऽभिभाषते । व्यसनेषु मनुष्याणां भृशं भवति दुःखितः ॥ ४०
उत्सवेषु च सर्वेषु पितेव परितुष्यति । सत्यवादी महेष्वासो वृद्धसेवी जितेन्द्रियः ॥ ४१
स्मितपूर्वाभिभाषी च धर्मं सर्वात्मना श्रितः । सम्यग्योक्ता श्रेयसां च न विगृह्य[1] कथारुचिः ॥ ४२
उत्तरोत्तरयुक्तौ च वक्ता वाचस्पतिर्यथा । सुभ्रूरायतताम्राक्षः साक्षाद्विष्णुरिव स्वयम् ॥ ४३
रामो लोकाभिरामोऽयं शौर्यवीर्यपराक्रमैः । प्रजापालनसंयुक्तो न रागोपहतेन्द्रियः ॥ ४४
शक्तस्त्रैलोक्यमप्येको भोक्तुं किं नु महीमिमाम् । नास्य क्रोधः प्रसादश्च निरर्थोऽस्ति कदाचन ॥ ४५
हन्त्येव नियमाद्वध्यानवध्येषु[2] न कुप्यति । युनक्त्यर्थैः प्रहृष्टश्च तमसौ यत्र तुष्यति ॥ ४६
शान्तैः सर्वप्रजाकान्तैः प्रीतिसंजननैर्नृणाम् । गुणैर्विरोचते रामो दीप्तः सूर्य इवांशुभिः ॥ ४७
तमेवंगुणसंपन्नं रामं सत्यपराक्रमम् । लोकपालोपमं नाथमकामयत मेदिनी ॥ ४८

---

१. विगर्ह्येति पाठान्तरम् । विग्रह- क. छ. २. यथेष्ट खलु कुप्यति. ग,

वत्सः श्रेयसि जातस्ते दिष्ट्यासौ तव राघव । दिष्ट्या पुत्रगुणैर्युक्तो मारीच इव काश्यपः ॥ ४९
बलमारोग्यमायुश्च रामस्य विदितात्मनः । देवासुरमनुष्येषु गन्धर्वेषूरगेषु च ॥ ५०
आशंसन्ते[1] जनाः सर्वे राष्ट्रे पुरवरे तथा । आभ्यन्तरश्च बाह्यश्च पौरजानपदो जनः ॥ ५१
स्त्रियो वृद्धास्तरुण्यश्च सायं प्रातः समाहिताः । सर्वान् देवान्नमस्यन्ति रामस्यार्थे मनस्विनः[2] ॥ ५२
तेषां तद्याचितं देव त्वत्प्रसादात् समृद्ध्यताम् । राममिन्दीवरश्यामं सर्वशत्रुनिबर्हणम् ॥ ५३
पश्यामो यौवराज्यस्थं तव राजोत्तमात्मजम् ॥

तं देवदेवोपममात्मजं ते सर्वस्य लोकस्य हिते निविष्टम् ।
हिताय नः क्षिप्रमुदारजुष्टं मुदाभिषेक्तुं वरद त्वमर्हसि ॥ ५४

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायां
अयोध्याकाण्डे परिषदनुमोदनं नाम द्वितीयः सर्गः

---

## तृतीयः सर्गः

### पुत्रानुशासनम्

तेषामञ्जलिपद्मानि प्रगृहीतानि सर्वशः । प्रतिगृह्याब्रवीद्राजा तेभ्यः प्रियहितं वचः ॥ १
अहोऽस्मि परमप्रीतः प्रभावश्चातुलो मम । यन्मे ज्येष्ठं प्रियं पुत्रं यौवराज्यस्थमिच्छथ ॥ २
इति प्रत्यर्च्य तान् राजा ब्राह्मणानिदमब्रवीत् । वसिष्ठं वामदेवं च तेषामेवोपशृण्वताम् ॥ ३
चैत्रः श्रीमानयं मासः पुण्यः पुष्पितकाननः । यौवराज्याय रामस्य सर्वमेवोपकल्प्यताम् ॥ ४
राज्ञस्तूपरते वाक्ये जनघोषो महानभूत् । शनैस्तस्मिन् प्रशान्ते च जनघोषे नराधिपः ॥ ५
वसिष्ठं मुनिशार्दूलं राजा वचनमब्रवीत् । अभिषेकाय रामस्य यत् कर्म सपरिच्छदम् ॥ ६
तदद्य भगवान् सर्वमाज्ञापयितुमर्हति । तच्छ्रुत्वा भूमिपालस्य वसिष्ठो द्विजसत्तमः ॥ ७
आदिदेशाग्रतो राज्ञः स्थितान् युक्तान् कृताञ्जलीन् । सुवर्णादीनि रत्नानि बलीन् सर्वौषधीरपि ॥ ८
शुक्लमाल्यानि लाजांश्च पृथक् च मधुसर्पिषी । अहतानि च वासांसि रथं सर्वायुधान्यपि ॥ ९
चतुरङ्गबलं चैव गजं च शुभलक्षणम् । चामरव्यजने श्वेते ध्वजं छत्रं च पाण्डरम् ॥ १०
शतं च शातकुम्भानां कुम्भानामग्निवर्चसाम् । हिरण्यशृङ्गमृषभं समग्रं व्याघ्रचर्म च ॥ ११
उपस्थापयत प्रातरग्न्यगारं महीपतेः । यच्चान्यत् किं चिदेष्टव्यं तत् सर्वमुपकल्प्यताम् ॥ १२
अन्तःपुरस्य द्वाराणि सर्वस्य नगरस्य च । चन्दनस्रग्भिरर्च्यन्तां धूपैश्च घ्राणहारिभिः ॥ १३
प्रशस्तमन्नं गुणवद्दधिक्षीरोपसेचनम् । द्विजानां शतसाहस्रं[1] यत् प्रकाममलं भवेत् ॥ १४
सत्कृत्य द्विजमुख्यानां श्वः प्रभाते प्रदीयताम् । घृतं दधि च लाजाश्च दक्षिणाश्चापि पुष्कलाः ॥ १५
सूर्येऽभ्युदितमात्रे श्वो भविता स्वस्तिवाचनम् । ब्राह्मणाश्च निमन्त्र्यन्तां कल्प्यन्तामासनानि च ॥ १६

---

1. द्विजानां शतसाहस्रं प्रति यदभिशचितं पर्याप्तं च भवेत् तदन्नमिति संबन्धः ।

१. आशंसते जनः सर्वो. ड. म.
२. यशस्विनः ड. म.

आबध्यन्तां पताकाश्च राजमार्गश्च सिच्यताम् । सर्वे च तालावचरा गणिकाश्च स्वलंकृताः ॥ १७
कक्ष्यां द्वितीयामाश्रित्य तिष्ठन्तु नृपवेश्मनः । देवायतनचैत्येषु सान्नभक्ष्याः सदक्षिणाः ॥ १८
उपस्थापयितव्याः स्युर्माल्ययोग्याः पृथक् पृथक् । दीर्घासिबद्धा योधाश्च[1] संनद्धा हृष्टमानसाः ॥१९
महाराजाङ्गणं सर्वे प्रविशन्तु महोदयम् । एवं व्यादिश्य विप्रौ तौ क्रियास्तत्र सुनिष्ठितौ ॥ २०
चक्रतुश्चैव यच्छेषं पार्थिवाय निवेद्य च । कृतमित्येव चाब्रूतामभिगम्य जगत्पतिम् ॥ २१
यथोक्तवचनं प्रीतौ हर्षयुक्तौ द्विजर्षभौ । ततः सुमन्त्रं द्युतिमान् राजा वचनमब्रवीत् ॥ २२
रामः कृतात्मा भवता शीघ्रमानीयतामिति । स तथेति प्रतिज्ञाय सुमन्त्रो राजशासनात् ॥ २३
रामं तत्रानयांचक्रे रथेन रथिनां वरम् । अथ तत्र समासीनास्तदा दशरथं नृपम् ॥ २४
उपविष्टाश्च सचिवा राजानश्च सनैगमाः । प्राच्योदीच्याः प्रतीच्याश्च दाक्षिणात्याश्च भूमिपाः ॥२५
म्लेच्छाश्चार्याश्च ये चान्ये वनशैलान्तवासिनः । उपासांचक्रिरे सर्वे तं देवा इव वासवम् ॥ २६
तेषां मध्ये स राजर्षिर्मरुतामिव वासवः । प्रासादस्थो रथगतं[2] ददर्शायान्तमात्मजम् ॥ २७
गन्धर्वराजप्रतिमं लोके विख्यातपौरुषम् । दीर्घबाहुं महासत्त्वं मत्तमातङ्गगामिनम् ॥ २८
चन्द्रकान्ताननं राममतीव प्रियदर्शनम् । रूपौदार्यगुणैः पुंसां दृष्टिचित्तापहारिणम् ॥ २९
घर्माभितप्ताः पर्जन्यं ह्लादयन्तमिव प्रजाः । न ततर्प समायान्तं पश्यमानो नराधिपः ॥ ३०
अवतार्य सुमन्त्रस्तं राघवं स्यन्दनोत्तमात् । पितुः समीपं गच्छन्तं प्राञ्जलिः पृष्ठतोऽन्वगात् ॥ ३१
स तं कैलासशृङ्गाभं प्रासादं नरपुंगवः । आरुरोह नृपं द्रष्टुं सह सूतेन राघवः ॥ ३२
स प्राञ्जलिरभिप्रेत्य प्रणतः पितुरन्तिके । नाम स्वं श्रावयन् रामो ववन्दे चरणौ पितुः ॥ ३३
तं दृष्ट्वा प्रणतं पार्श्वे कृताञ्जलिपुटं नृपः । गृह्याञ्जलौ समाकृष्य सस्वजे प्रियमात्मजम् ॥ ३४
तस्मै चाभ्युदितं सौम्यं मणिकाञ्चनभूषितम् । दिदेश राजा रुचिरं रामाय वरमासनम् ॥ ३५
तदासनवरं प्राप्य व्यदीपयत राघवः । स्वयेव[3] प्रभया मेरुमुदये विमलो रविः ॥ ३६
तेन विभ्राजता तत्र सा सभाभिव्यरोचत । विमलग्रहनक्षत्रा शारदी द्यौरिवेन्दुना ॥ ३७
तं पश्यमानो नृपतिस्तुतोष प्रियमात्मजम् । अलंकृतमिवात्मानमादर्शतलसंस्थितम् ॥ ३८
स तं सस्मितमाभाष्य पुत्रं पुत्रवतां वरः । उवाचेदं वचो राजा देवेन्द्रमिव काश्यपः ॥ ३९
ज्येष्ठायामसि मे पत्न्यां सदृश्यां सदृशः सुतः । उत्पन्नस्त्वं गुणश्रेष्ठो मम रामात्मजः प्रियः ॥ ४०
यतस्त्वया प्रजाश्चेमाः स्वगुणैरनुरञ्जिताः । तस्मात्त्वं पुष्ययोगेन यौवराज्यमवाप्नुहि ॥ ४१
कामतस्त्वं प्रकृत्यैव विनीतो गुणवानसि । गुणवत्यपि तु स्नेहात् पुत्र वक्ष्यामि ते हितम् ॥ ४२
भूयो विनयमास्थाय भव नित्यं जितेन्द्रियः । कामक्रोधसमुत्थानि त्यजेथा व्यसनानि च ॥ ४३
परोक्षया वर्तमानो वृत्त्या प्रत्यक्षया तथा । अमात्यप्रभृतीः सर्वाः प्रकृतीश्चानुरञ्जय ॥ ४४

---

१. दीर्घासिबद्धगोधाश्च ति. ३. स्वयैव ति.
२. दशरथः प्र. रथस्थं तम् ग.

गोष्ठागारायुधागारैः कृत्वा सन्निचयान् बहून् । तुष्टानुरक्तप्रकृतिर्यः पालयति मेदिनीम् ॥ ४५
तस्य नन्दन्ति मित्राणि लब्ध्वामृतमिवामराः । तस्मात् पुत्र त्वमात्मानं नियम्यैवं समाचर ॥ ४६
तच्छ्रुत्वा सुहृदस्तस्य रामस्य प्रियकारिणः । त्वरिताः शीघ्रमभ्येत्य कौसल्यायै न्यवेदयन् ॥ ४७
सा हिरण्यं च गाश्चैव रत्नानि विविधानि च । व्यादिदेश प्रियाख्येभ्यः कौसल्या प्रमदोत्तमा ॥४८
अथाभिवाद्य राजानं रथमारुह्य राघवः । ययौ स्वं द्युतिमद्वेश्म जनौघैः परिपूजितः ॥ ४९

ते चापि पौरा नृपतेर्वचस्तच्छ्रुत्वा तदा लाभमिवेष्टमाशु ।
नरेन्द्रमामन्त्र्य गृहाणि गत्वा देवान् समानर्चुरतिप्रहृष्टाः ॥ ५०

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायां
अयोध्याकाण्डे पुत्रानुशासनं नाम तृतीयः सर्गः

---

## चतुर्थः सर्गः

### मात्राशीःपरिग्रहः

गतेष्वथ नृपो भूयः पौरेषु सह मन्त्रिभिः । मन्त्रयित्वा ततश्चक्रे निश्चयज्ञः सुनिश्चयम् ॥ १
श्व एव पुष्यो भविता श्वोऽभिषेच्यस्तु मे सुतः । रामो राजीवपत्राक्षो यौवराज्य इति प्रभुः ॥ २
अथान्तर्गृहमाविश्य राजा दशरथस्तदा । सूतमाज्ञापयामास रामं पुनरिहानय ॥ ३
प्रतिगृह्य स तद्वाक्यं सूतः पुनरुपाययौ । रामस्य भवनं शीघ्रं राममानयितुं पुनः ॥ ४
द्वाःस्थैरावेदितं तस्य रामायागमनं पुनः । श्रुत्वैव चापि रामस्तं प्राप्तं शङ्कान्वितोऽभवत् ॥ ५
प्रवेश्य चैनं त्वरितं रामो वचनमब्रवीत् । यदागमनकृत्यं ते भूयस्तद्ब्रूह्यशेषतः ॥ ६
तमुवाच ततः सूतो राजा त्वां द्रष्टुमिच्छति । श्रुत्वा प्रमाणमत्र त्वं गमनायेतराय वा ॥ ७
इति सूतवचः श्रुत्वा रामोऽथ त्वरयान्वितः । प्रययौ राजभवनं पुनर्द्रष्टुं नरेश्वरम् ॥ ८
तं श्रुत्वा समनुप्राप्तं रामं दशरथो नृपः । प्रवेशयामास गृहं विवक्षुः प्रियमुत्तमम् ॥ ९
प्रविशन्नेव च श्रीमान् राघवो भवनं पितुः । ददर्श पितरं दूरात् प्रणिपत्य कृताञ्जलिः ॥ १०
प्रणमन्तं समुत्थाप्य तं परिष्वज्य भूमिपः । प्रदिश्य चास्मै रुचिरमासनं पुनरब्रवीत् ॥ ११
राम वृद्धोऽस्मि दीर्घायुर्भुक्ता भोगा मयेप्सिताः । अन्नवद्भिः क्रतुशतैस्तथेष्टं भूरिदक्षिणैः ॥ १२
जातमिष्टमपत्यं मे त्वमद्यानुपमं भुवि । दत्तमिष्टमधीतं च मया पुरुषसत्तम ॥ १३
अनुभूतानि चेष्टानि मया वीर सुखान्यपि । देवर्षिपितृविप्राणामनृणोऽस्मि तथात्मनः ॥ १४
न किंचिन्मम कर्तव्यं तवान्यत्राभिषेचनात् । अतो यत्त्वामहं ब्रूयां तन्मे त्वं कर्तुमर्हसि ॥ १५
अद्य प्रकृतयः सर्वास्त्वामिच्छन्ति नराधिपम् । अतस्त्वां युवराजानमभिषेक्ष्यामि पुत्रक ॥ १६
अपि चाद्याशुभान् राम स्वप्नान् पश्यामि दारुणान् । सनिर्घाता[1] दिवोल्का च पततीह महास्वना ॥१७

---

1. निर्घातः अशनिः । १. युवराजः प्र. २. सह्रो प्र.

अवष्टब्धं च मे राम नक्षत्रं दारुणैर्ग्रहैः । आवेदयन्ति दैवज्ञाः सूर्याङ्गारकराहुभिः ॥ १८
प्रायेण हि निमित्तानामीदृशानां समुद्भवे । राजा मृत्युमवाप्नोति घोरां वापदमृच्छति ॥ १९
तद्यावदेव मे चेतो न विमुह्यति राघव । तावदेवाभिषिञ्चस्व चला हि प्राणिनां मतिः[१] ॥ २०
अद्य चन्द्रोऽभ्युपगतः पुष्यात् पूर्वं पुनर्वसू । श्वः पुष्ययोगं नियतं वक्ष्यन्ते दैवचिन्तकाः ॥ २१
तत्र पुष्येऽभिषिञ्चस्व मनस्त्वरयतीव माम् । श्वस्त्वाहमभिषेक्ष्यामि यौवराज्ये परंतप ॥ २२
तस्मात्त्वयाद्य प्रभृति निशेयं नियतात्मना । सह वध्वोपवस्तव्या दर्भप्रस्तरशायिना ॥ २३
सुहृदश्चाप्रमत्तास्त्वां रक्षन्त्वद्य समन्ततः । भवन्ति बहुविघ्नानि कार्याण्येवंविधानि हि ॥ २४
विप्रोषितश्च भरतो यावदेव पुरादितः । तावदेवाभिषेकस्ते प्राप्तकालो मतो मम ॥ २५
कामं खलु सतां वृत्ते भ्राता ते भरतः स्थितः । ज्येष्ठानुवर्ती धर्मात्मा सानुक्रोशो जितेन्द्रियः ॥ २६
किं तु चित्तं मनुष्याणामनित्यमिति मे मतिः । सतां च धर्मनित्यानां कृतशोभि च राघव[1] ॥ २७
इत्युक्तः सोऽभ्यनुज्ञातः श्वोभाविन्यभिषेचने । व्रजेति रामः पितरमभिवाद्याभ्ययाद्गृहम् ॥ २८
प्रविश्य चात्मनो वेश्म राज्ञोद्दिष्टेऽभिषेचने । तत्क्षणेन च निष्क्रम्य मातुरन्तःपुरं ययौ ॥ २९
तत्र तां प्रवणामेव मातरं क्षौमवासिनीम् । वाग्यतां देवतागारे ददर्शायाचतीं[2] श्रियम् ॥ ३०
प्रागेव चागता तत्र सुमित्रा लक्ष्मणस्तथा । सीता चानायिता[२] श्रुत्वा प्रियं रामाभिषेचनम् ॥ ३१
तस्मिन् काले हि कौसल्या तस्थावामीलितेक्षणा । सुमित्रयान्वास्यमाना[३] सीतया लक्ष्मणेन च ॥ ३२
श्रुत्वा तु[४] पुष्ये पुत्रस्य यौवराज्याभिषेचनम् । प्राणायामेन पुरुषं ध्यायमाना जनार्दनम् ॥ ३३
तथा सनियमामेव सोऽभिगम्याभिवाद्य च । उवाच वचनं रामो हर्षयंस्तामनिन्दिताम् ॥ ३४
अम्ब पित्रा नियुक्तोऽस्मि प्रजापालनकर्मणि । भविता श्वोऽभिषेकोऽयं यथा मे शासनं पितुः ॥ ३५
सीतयाप्युपवस्तव्या रजनीयं मया सह । एवमृत्विगुपाध्यायैः[५] सह मामुक्तवान् पिता ॥ ३६
यानि यान्यत्र योग्यानि श्वोभाविन्यभिषेचने । तानि मे मङ्गलान्यद्य वैदेह्याश्चैव कारय ॥ ३७
एतच्छ्रुत्वा तु कौसल्या चिरकालाभिकाङ्क्षितम् । हर्षबाष्पाकुलं[६] वाक्यमिदं राममभाषत ॥ ३८
वत्स राम चिरं जीव हतास्ते परिपन्थिनः । ज्ञातीन् मे त्वं श्रिया युक्तः सुमित्रायाश्च नन्दय ॥ ३९
कल्याणे बत नक्षत्रे मयि जातोऽसि पुत्रक । येन त्वया दशरथो गुणैराराधितः पिता ॥ ४०
अमोघं बत मे क्षान्तं पुरुषे पुष्करेक्षणे । येयमिक्ष्वाकुराज्यश्रीः पुत्र त्वां संश्रयिष्यति ॥ ४१
इत्येवमुक्तो मात्रेदं रामो भ्रातरमब्रवीत् । प्राञ्जलिं प्रह्वमासीनमभिवीक्ष्य स्मयन्निव ॥ ४२

---

1. धर्मनिरतानां सत्पुरुषाणां चित्तं कृतशोभि, निर्वर्तिते कार्ये प्रसादशीलं कलङ्करहितमेव भवतीत्यर्थः । तद्भरतस्यापि सद्वृत्तस्याभिषेकेऽस्मिन् न कदाचिद्विमतिर्भवेदिति भावः ॥

2. आयाचतीम् रामाय श्रियमर्थयन्तीम् ।

१. गतिरिति साम्प्रदायिकं पाठान्तरम् ।

२. सीता च दयिता छ.

३. सुमित्रया च सहिता छ.

४. श्रुत्वा पुष्येण प्र.

५. मुक्तमु प्र.

६. हर्षबाष्पकलम् च. छ.

लक्ष्मणेमां मया सार्धं प्रशाधि त्वं वसुंधराम् । द्वितीयं मेऽन्तरात्मानं त्वामियं श्रीरुपस्थिता ॥ ४३
सौमित्रे भुङ्क्ष्व भोगांस्त्वमिष्टान् राज्यफलानि च । जीवितं च हि राज्यं च त्वदर्थमभिकामये॥४४
इत्युक्त्वा लक्ष्मणं रामो मातरावभिवाद्य च । अभ्यनुज्ञाप्य सीतां च जगाम स्वं निवेशनम् ॥ ४५

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायां
अयोध्याकाण्डे मातृाशीःपरिग्रहो नाम चतुर्थः सर्गः

## पञ्चमः सर्गः

### व्रतचर्याविधानम्

संदिश्य रामं नृपतिः श्वोभाविन्यभिषेचने । पुरोहितं समाहूय वसिष्ठमिदमब्रवीत् ॥ १
गच्छोपवासं काकुत्स्थं कारयाद्य तपोधन । श्रेयसे राज्यलाभाय वध्वा सह यतव्रतम् ॥ २
तथेति च स राजानमुक्त्वा वेदविदां वरः । स्वयं वसिष्ठो भगवान् ययौ रामनिवेशनम् ॥ ३
उपवासयितुं रामं मन्त्रवन्मन्त्रकोविदः । ब्राह्मं रथवरं युक्तमास्थाय सुधृतव्रतः ॥ ४
स रामभवनं प्राप्य पाण्डराभ्रघनप्रभम् । तिस्रः कक्ष्या रथेनैव विवेश मुनिसत्तमः ॥ ५
तमागतमृषिं रामस्त्वरन्निव ससंभ्रमम् । मानयिष्यन् स मानार्हं निश्चक्राम निवेशनात् ॥ ६
अभ्येत्य त्वरमाणश्च रथाभ्याशं मनीषिणः । ततोऽवतारयामास परिगृह्य रथात् स्वयम् ॥ ७
स चैनं प्रश्रितं दृष्ट्वा संभाष्याभिप्रसाद्य च । प्रियार्हं हर्षयन् राममित्युवाच पुरोहितः ॥ ८
प्रसन्नस्ते पिता राम यौवराज्यमवाप्स्यसि । उपवासं भवानद्य करोतु सह सीतया ॥ ९
प्रातस्त्वामभिषेक्ता हि यौवराज्ये नराधिपः । पिता दशरथः प्रीत्या ययातिं नहुषो यथा ॥ १०
इत्युक्त्वा स तदा राममुपवासं यतव्रतम् । मन्त्रवत् कारयामास वैदेह्या सहितं मुनिः ॥ ११
ततो यथावद्रमेण स राज्ञो गुरुरर्चितः । अभ्यनुज्ञाप्य काकुत्स्थं ययौ रामनिवेशनात् ॥ १२
सुहृद्भिस्तत्र रामोऽपि सहासीनः प्रियंवदैः । सभाजितो विवेशाथताननुज्ञाप्य सर्वशः ॥ १३
प्रहृष्टनरनारीकं[१] रामवेश्म तदा बभौ । यथा मत्तद्विजगणं प्रफुल्लनलिनं सरः ॥ १४
स राजभवनप्रख्यात्तस्माद्रामनिवेशनात् । निःसृत्य ददृशे मार्गं वसिष्ठो जनसंवृतम् ॥ १५
[1]वृन्दवृन्दैरयोध्यायां राजमार्गाः समन्ततः । बभूवुरभिसंबाधाः[2] कुतूहलजनैर्वृताः ॥ १६
जनवृन्दोर्मिसंघर्षहर्षस्वनवृतस्तदा । बभूव राजमार्गस्य सागरस्येव निस्वनः ॥ १७
सिक्तसंमृष्टरथ्या च तदहर्वनमालिनी[3] । आसीदयोध्या नगरी समुच्छ्रितगृहध्वजा ॥ १८
तदा ह्ययोध्यानिलयः सस्त्रीबालाकुलो जनः । रामाभिषेकमाकाङ्क्षन्नाकाङ्क्षन्नुदयं रवेः ॥ १९

1. वृन्दैरानुगतानि यानि वृन्दानि, तैः ।
2. अभिसंबाधाः परितः संमर्दयुक्ताः ।
3. वनमालिनी तोरणमालावती ।
१. हृष्टनारीनरयुतम् च.

प्रजाऽलंकारभूतं च जनस्यानन्दवर्धनम् । उत्सुकोऽभूज्जनो द्रष्टुं तमयोध्यामहोत्सवम् ॥ २०
एवं तं जनसंबाधं राजमार्गं पुरोहितः । व्यूहन्निव जनौघं तं शनै राजकुलं ययौ ॥ २१
सिताभ्रशिखरप्रख्यं प्रासादमधिरुह्य सः । समीयाय नरेन्द्रेण शक्रेणेव बृहस्पतिः ॥ २२
तमागतमभिप्रेक्ष्य हित्वा राजासनं नृपः । [1]पप्रच्छ स च तस्मै तत् कृतमित्यभ्यवेदयत् ॥ २३
तेन चैव तदा तुल्यं सहासीनाः सभासदः । आसनेभ्यः समुत्तस्थुः पूजयन्तः पुरोहितम् ॥ २४
गुरुणा त्वभ्यनुज्ञातो मनुजौघं विसृज्य तम् । विवेशान्तःपुरं राजा सिंहो गिरिगुहामिव ॥ २५

तदग्र्यवेषप्रमदाजनाकुलं महेन्द्रवेश्मप्रतिमं निवेशनम् ।
विदीपयंश्चारु विवेश पार्थिवः शशीव तारागणसंकुलं नभः ॥ २६

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायां
अयोध्याकाण्डे व्रतचर्याविधानं नाम पञ्चमः सर्गः

---

## षष्ठः सर्गः

### पौरोत्सेकः

गते पुरोहिते रामः स्नातो नियतमानसः । सह पत्न्या विशालाक्ष्या नारायणमुपागमत् ॥ १
प्रगृह्य शिरसा पात्रीं[1] हविषो विधिवत्ततः । महते दैवतायाज्यं जुहाव ज्वलितेऽनले ॥ २
शेषं च हविषस्तस्य प्राश्याशास्यात्मनः प्रियम् । ध्यायन्नारायणं देवं स्वास्तीर्णे कुशसंस्तरे ॥ ३
वाग्यतः सह वैदेह्या भूत्वा नियतमानसः । श्रीमत्यायतने विष्णोः शिश्ये नरवरात्मजः ॥ ४
एकयामावशिष्टायां रात्र्यां प्रतिविबुध्य सः । अलङ्कारविधिं कृत्स्नं कारयामास वेश्मनः ॥ ५
तत्र शृण्वन् सुखा वाचः सूतमागधवन्दिनाम् । पूर्वां संध्यामुपासीनो जजाप यतमानसः ॥ ६
तुष्टाव प्रणतश्चैव शिरसा मधुसूदनम् । विमलक्षौमसंवीतो वाचयामास च द्विजान् ॥ ७
तेषां पुण्याहघोषोऽथ गम्भीरमधुरस्तदा । अयोध्यां पूरयामास तूर्यघोषानुनादितः ॥ ८
कृतोपवासं तु तदा वैदेह्या सह राघवम् । अयोध्यानिलयः श्रुत्वा सर्वः प्रमुदितो जनः ॥ ९
ततः पौरजनः सर्वः श्रुत्वा रामाभिषेचनम् । प्रभातां रजनीं दृष्ट्वा चक्रे शोभयितुं पुरीम् ॥ १०
शुभ्राभ्रशिखराभेषु देवतायतनेषु च । चतुष्पथेषु रथ्यासु चैत्येष्वट्टालकेषु च ॥ ११
नानापण्यसमृद्धेषु वणिजामापणेषु च । कुटुम्बिनां समृद्धेषु श्रीमत्सु भवनेषु च ॥ १२
सभासु चैव सर्वासु वृक्षेष्वालक्षितेषु च । ध्वजाः समुच्छ्रिताश्चित्राः पताकाश्चाभवंस्तदा ॥ १३
नटनर्तकसङ्घानां गायकानां च गायताम् । मनःकर्णसुखा वाचः [2]शुश्राव जनता ततः ॥ १४

---

1. प्रगृह्य शिरसा पात्रीमिति, सविनय हविःपात्रीमुपादायेत्यर्थः । शिरसा प्रगृह्येति सविनयं स्वीकृत्येत्यर्थे निरूढम् । यजमानस्याशा शिरसा वहतीतिवत् ।

१. पप्रच्छ स्वमत तस्मै प्र.

२. शुश्रुवुश्च ततस्ततः क. ख.

रामाभिषेकयुक्ताश्च कथाश्चक्रुर्मिथो जनाः । रामाभिषेके संप्राप्ते चत्वरेषु गृहेषु च ॥ १५

बाला अपि क्रीडमाना गृहद्वारेषु सङ्घशः । रामाभिषेकसंयुक्ताश्चक्रुरेव मिथः कथाः ॥ १६

कृतपुष्पोपहारश्च धूपगन्धाधिवासितः । राजमार्गः कृतः श्रीमान् पौरै रामाभिषेचने ॥ १७

प्रकाशीकरणार्थं च निशागमनशङ्कया । दीपवृक्षांस्तथा चक्रुरनुरथ्यासु[1] सर्वशः ॥ १८

अलङ्कारं पुरस्यैवं कृत्वा तत्पुरवासिनः । आकाङ्क्षमाणा रामस्य यौवराज्याभिषेचनम्[२] ॥ १९

समेत्य सङ्घशः सर्वे चत्वरेषु सभासु च । कथयन्तो मिथस्तत्र प्रशशंसुर्जनाधिपम् ॥ २०

अहो महात्मा राजायमिक्ष्वाकुकुलनन्दनः । ज्ञात्वा यो वृद्धमात्मानं रामं राज्येऽभिषेक्ष्यति ॥ २१

सर्वे ह्यनुगृहीताः स्मो यन्नो रामो महीपतिः । चिराय भविता गोप्ता दृष्टलोकपरावरः ॥ २२

अनुद्धतमना विद्वान् धर्मात्मा भ्रातृवत्सलः । यथा च भ्रातृषु स्निग्धस्तथास्मास्वपि राघवः ॥ २३

चिरं जीवतु धर्मात्मा राजा दशरथोऽनघः । यत्प्रसादेनाभिषिक्तं रामं द्रक्ष्यामहे वयम् ॥ २४

एवंविधं कथयतां पौराणां शुश्रुवुः परे । दिग्भ्यो विश्रुतवृत्तान्ताः प्राप्ता जानपदा जनाः ॥ २५

ते तु दिग्भ्यः पुरीं प्राप्ता द्रष्टुं रामाभिषेचनम् । रामस्य पूरयामासुः पुरीं जानपदा जनाः ॥ २६

जनौघैस्तैर्विसर्पद्भिः शुश्रुवे तत्र निस्वनः । पर्वसूदीर्णवेगस्य सागरस्येव निस्वनः ॥ २७

ततस्तदिन्द्रक्षयसंनिभं पुरं दिदृक्षुभिर्जानपदैरुपागतैः ।
समन्ततः सस्वनमाकुलं बभौ समुद्रयादोभिरिवार्णवोदकम्[४] ॥ २८

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायां
अयोध्याकाण्डे पौरोत्सेको नाम षष्ठः सर्गः

---

## सप्तमः सर्गः

### मन्थरापरिदेवनम्

ज्ञातिदासी यतोजाता कैकेय्यास्तु सहोषिता[2] । प्रासादं चन्द्रसंकाशमारुरोह यदृच्छया ॥ १

सिक्तराजपथां कृत्स्नां प्रकीर्णकमलोत्पलाम् । अयोध्यां मन्थरा तस्मात् प्रासादादन्ववैक्षत ॥ २

पताकाभिर्वराहाभिर्ध्वजैश्च समलंकृताम् । सिक्तां चन्दनतोयैश्च शिरःस्नातजनैर्युताम्[५] ॥ ३

माल्यमोदकहस्तैश्च द्विजेन्द्रैरभिनादिताम् । शुक्लदेवगृहद्वारां सर्ववादित्रनिस्वनाम्[६] ॥ ४

---

1. अनुरथ्याः राजमार्गमनुगता वीथयः ।

2. ज्ञातिदासी मातृकुलदासी । यतोजाता अविज्ञातमातापितृका । "मन्थरा नाम कार्यार्थमप्सराः प्रेषिता सुरैः । दासी काचन कैकेय्यै दत्ता केकयभूभृता ॥" इति पद्मपुराणे दृश्यते । इह निबध्यमानस्य रसस्य परिपोषो यथा स्यादिति आदिकविना अयं वृत्तान्तो मनागिव सूचितः; न प्रपञ्चितः ।

१. भिहत प्र.

२. इदमर्धम् क. नास्ति ।

३. पाःश्वैः प्र.

४. -वोदरम् छ.

५. अस्यानन्तरम्—कृतां छत्रपथैश्चापि स्वच्छन्दकपर्दैर्युताम्—इति पाठान्तरमिति तिलकः ।

६. अलंकृतगृहद्वारां सर्ववादित्रनादिताम् छ.

संप्रहृष्टजनाकीर्णां ब्रह्मघोषाभिनादिताम् । प्रहृष्टवरहस्त्यश्वां संप्रणर्दितगोवृषाम् ॥ ५

प्रहृष्टमुदितैः पौरैरुच्छ्रितध्वजमालिनीम् । अयोध्यां मन्थरा दृष्ट्वा परं विस्मयमागता ॥ ६

सा हर्षोत्फुल्लनयनां पाण्डुरक्षौमवासिनीम् । अविदूरे स्थितां दृष्ट्वा धात्रीं पप्रच्छ मन्थरा ॥ ७

उत्तमेनाभिसंयुक्ता हर्षेणार्थपरा सती । राममाता धनं किं नु जनेभ्यः संप्रयच्छति ॥ ८

अतिमात्रप्रहर्षोऽयं किं जनस्य च शंस मे । कारयिष्यति किं वापि संप्रहृष्टो महीपतिः ॥ ९

विदीर्यमाणा हर्षेण धात्री परमया मुदा । आचचक्षेऽथ कुब्जायै भूयसीं राघवे श्रियम् ॥ १०

श्वः पुष्येण जितक्रोधं यौवराज्येन राघवम् । राजा दशरथो राममभिषेचयितानघम् ॥ ११

धात्र्यास्तु वचनं श्रुत्वा कुब्जा क्षिप्रममर्षिता । कैलासशिखराकारात् प्रासादादवरोहत ॥ १२

सा दह्यमाना कोपेन मन्थरा पापदर्शिनी । शयानामेत्य कैकेयीमिदं वचनमब्रवीत् ॥ १३

उत्तिष्ठ मूढे किं शेषे भयं त्वामभिवर्तते । उपप्लुतमघौघेन किमात्मानं न बुध्यसे ॥ १४

अनिष्टे सुभगाकारे[1] सौभाग्येन विकत्थसे । चलं हि तव सौभाग्यं नद्याः स्रोत इवोष्णगे ॥ १५

एवमुक्ता तु कैकेयी रुष्टया परुषं वचः । कुब्जया पापदर्शिन्या विषादमगमत् परम् ॥ १६

कैकेयी त्वब्रवीत् कुब्जां कच्चित् क्षेमं न मन्थरे । विषण्णवदनां हि त्वां लक्षये भृशदुःखिताम् ॥ १७

मन्थरा तु वचः श्रुत्वा कैकेय्या मधुराक्षरम् । उवाच क्रोधसंयुक्ता वाक्यं वाक्यविशारदा ॥ १८

सा विषण्णतरा भूत्वा कुब्जा तस्या हितैषिणी । विषादयन्ती प्रोवाच भेदयन्ती च राघवम् ॥ १९

अक्षय्यं सुमहद्देवि प्रवृत्तं त्वद्विनाशनम् । रामं दशरथो राजा यौवराज्येऽभिषेक्ष्यति ॥ २०

सास्म्यगाधे भये मग्ना दुःखशोकसमन्विता । दह्यमानानलेनेव त्वद्धितार्थमिहागता ॥ २१

तव दुःखेन कैकेयि मम दुःखं महद्भवेत् । त्वद्वृद्धौ मम वृद्धिश्च भवेदत्र न संशयः ॥ २२

नराधिपकुले जाता महिषी त्वं महीपतेः । उग्रत्वं राजधर्माणां कथं देवि न बुध्यसे ॥ २३

धर्मवादी शठो भर्ता श्लक्ष्णवादी च दारुणः । शुद्धभावे न जानीषे तेनैवमतिसंधिता ॥ २४

उपस्थितं प्रयुञ्जानस्त्वयि सान्त्वमनर्थकम् । अर्थेनैवाद्य ते भर्ता कौसल्यां योजयिष्यति ॥ २५

अपवाह्य स दुष्टात्मा भरतं तव बन्धुषु । काल्ये स्थापयिता रामं राज्ये निहतकण्टके ॥ २६

शत्रुः पतिप्रवादेन मात्रेव हितकाम्यया । आशीविष इवाङ्केन बाले परिहृतस्त्वया ॥ २७

यथा हि कुर्यात् सर्पो वा शत्रुर्वा प्रत्युपेक्षितः । राज्ञा दशरथेनाद्य सपुत्रा त्वं तथा कृता ॥ २८

पापेनानृतसान्त्वेन बाले नित्यसुखोचिते । रामं स्थापयता राज्ये सानुबन्धा हता ह्यसि ॥ २९

सा प्राप्तकालं कैकेयि क्षिप्रं कुरु हितं तव । त्रायस्व पुत्रमात्मानं मां च विस्मयदर्शने ॥ ३०

मन्थराया वचः श्रुत्वा शयनात् सा शुभानना । उत्तस्थौ हर्षसंपूर्णा चन्द्रलेखेव शारदी ॥ ३१

अतीव सा तु संहृष्टा कैकेयी विस्मयान्विता । एकमाभरणं तस्यै कुब्जायै प्रददौ शुभम् ॥ ३२

---

1. अनिष्टे सुभगाकारे ; हृदयेन सर्वात्मनाविप्रियः, बहिराकारमात्रेण सौम्यश्च यः महाराजः, तद्विषये ।

दत्त्वा त्वाभरणं तस्यै कुब्जायै प्रमदोत्तमा । कैकेयी मन्थरां दृष्ट्वा पुनरेवाब्रवीदिदम् ॥ ३३

इदं तु मन्थरे मह्यमाख्यासि परमं प्रियम् । एतन्मे प्रियमाख्यातं भूयः किं वा करोमि ते ॥ ३४

रामे वा भरते वाहं विशेषं नोपलक्षये । तस्मात्तुष्टास्मि यद्राजा रामं राज्येऽभिषेक्ष्यति ॥ ३५

न मे परं किंचिदितस्त्वया पुनः प्रियं प्रियार्हे सुवचं वचः परम् ।
तथा ह्यवोचस्त्वमतः प्रियोत्तरं परं वरं ते प्रददामि तं वृणु ॥ ३६

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायां
अयोध्याकाण्डे मन्थरापरिदेवनं नाम सप्तमः सर्गः

---

## अष्टमः सर्गः

### मन्थरोपजापः

मन्थरा त्वभ्यसूय्यैनामुत्सृज्याभरणं च तत् । उवाचेदं ततो वाक्यं कोपदुःखसमन्विता ॥ १

हर्षं किमिदमस्थाने कृतवत्यसि बालिशे । शोकसागरमध्यस्थमात्मानं नावबुध्यसे ॥ २

मनसा प्रहसामि त्वां देवि दुःखार्दिता सती । यच्छोचितव्ये हृष्टासि प्राप्येदं व्यसनं महत् ॥ ३

शोचामि दुर्मतित्वं ते का हि प्राज्ञा प्रहर्षयेत् । अरेः सपत्नीपुत्रस्य वृद्धिं मृत्योरिवागताम् ॥ ४

भरतादेव रामस्य राज्यसाधारणाद्भयम्[3] । तद्विचिन्त्य विषण्णास्मि भयं भीताद्धि जायते ॥ ५

लक्ष्मणो हि महेष्वासो रामं सर्वात्मना गतः । शत्रुघ्नश्चापि भरतं काकुत्स्थं लक्ष्मणो यथा ॥ ६

प्रत्यासन्नक्रमेणापि भरतस्यैव भामिनि । राज्यक्रमो विप्रकृष्टस्तयोस्तावद्यवीयसोः[1] ॥ ७

विदुषः क्षत्रचारित्रे प्राज्ञस्य प्राप्तकारिणः । भयात् प्रवेपे रामस्य चिन्तयन्ती तवात्मजम् ॥ ८

सुभगा खलु कौसल्या यस्याः पुत्रोऽभिषेक्ष्यते । यौवराज्येन महता श्वः पुष्येण द्विजोत्तमैः ॥ ९

प्राप्तां वसुमतीं प्रीतिं प्रतीतां तां हतद्विषम्[2] । उपस्थास्यसि कौसल्यां दासीव त्वं कृताञ्जलिः ॥ १०

एवं च त्वं सहास्माभिस्तस्याः प्रेष्या भविष्यसि । पुत्रश्च तव रामस्य प्रेष्यभावं गमिष्यति ॥ ११

हृष्टाः खलु भविष्यन्ति रामस्य परमाः स्त्रियः । अप्रहृष्टा भविष्यन्ति स्नुषास्ते भरतक्षये ॥ १२

तां दृष्ट्वा परमप्रीता[4] ब्रुवन्तीं मन्थरां ततः । रामस्यैव गुणान् देवी कैकेयी प्रशशंस ह ॥ १३

धर्मज्ञो गुरुभिर्दान्तः कृतज्ञस्सत्यवाक् शुचिः । रामो राज्ञः सुतो ज्येष्ठो यौवराज्यमतोऽर्हति ॥ १४

भ्रातॄन् भृत्यांश्च दीर्घायुः पितृवत्पालयिष्यति । संतप्यसे कथं कुब्जे श्रुत्वा रामाभिषेचनम् ॥ १५

भरतश्चापि रामस्य ध्रुवं वर्षशतात् परम् । पितृपैतामहं राज्यं प्राप्नुयात् पुरुषर्षभः ॥ १६

---

1. रामादनन्तरम् उत्पत्तिक्रमेण भरतस्यैव राज्यप्राप्तिरिति तस्यैव रामाद्भयमिति भावः ।

2. वसुमतीम् राज्यश्रियम्, प्रीतिं च प्राप्ताम् । प्रतीतां भवत्या विश्वासस्य पात्रभूताम् ।

१. आख्यातुः इति पाठान्तरम् ।

२. कोपाद्दुःख प्र.

३. अस्यानन्तरम्—भीतो रामो भये हेतुं भरतं च निराकरोत्—इति क.

४. परमप्रीताम् च.

५. गुणवान् प्र.

सा त्वमभ्युदये प्राप्ते दह्यमानेव[1] मन्थरे । भविष्यति च कल्याणे किमर्थं परितप्यसे ॥ १७
यथा मे भरतो मान्यस्तथा भूयोऽपि राघवः । कौसल्यातोऽतिरिक्तं च स तु शुश्रूषते हि माम् ॥ १८
राज्यं च यदि रामस्य भरतस्यापि तत्तदा । मन्यते हि यथात्मानं तथा भ्रातॄंस्तु राघवः ॥ १९
कैकेय्या वचनं श्रुत्वा मन्थरा भृशदुःखिता । दीर्घमुष्णं विनिःश्वस्य कैकेयीमिदमब्रवीत् ॥ २०
अनर्थदर्शिनी मौर्ख्यान्नात्मानमवबुध्यसे । शोकव्यसनविस्तीर्णे मज्जन्ती दुःखसागरे ॥ २१
भविता राघवो राजा राघवस्य च यः सुतः । राजवंशात्तु भरतः कैकेयि परिहास्यते ॥ २२
न हि राज्ञः सुताः सर्वे राज्ये तिष्ठन्ति भामिनि । स्थाप्यमानेषु सर्वेषु सुमहाननयो भवेत् ॥ २३
तस्माज्ज्येष्ठे हि कैकेयि राज्यतन्त्राणि पार्थिवाः । स्थापयन्त्यनवद्याङ्गि गुणवत्स्वितरेषु च ॥ २४
असावत्यन्तनिर्भग्नस्तव पुत्रो भविष्यति । अनाथवत् सुखेभ्यश्च राजवंशाच्च ह्रास्यते ॥ २५
साहं त्वदर्थे संप्राप्ता त्वं तु मां नावबुध्यसे । सपत्निवृद्धौ या मे त्वं प्रदेयं दातुमिच्छसि ॥ २६
ध्रुवं तु भरतं रामः प्राप्य राज्यमकण्टकम् । देशान्तरं नाययिता लोकान्तरमथापि वा ॥ २७
बाल एव हि मातुल्यं भरतो नायितस्त्वया । संनिकर्षाच्च सौहार्दं जायते स्थावरेष्वपि ॥ २८
भरतस्याप्यनुवशः शत्रुघ्नोऽपि समं गतः । लक्ष्मणो हि यथा रामं तथासौ भरतं गतः ॥ २९
श्रूयते च द्रुमः कश्चिच्छेत्तव्यो वनजीविभिः । संनिकर्षादिषीकाभिर्मोचितः परमाद्भयात् ॥ ३०
गोप्ता हि रामं सौमित्रिर्लक्ष्मणं चापि राघवः । अश्विनोरिव सौभ्रात्रं तयोर्लोकेषु विश्रुतम् ॥ ३१
तस्मान्न लक्ष्मणे रामः पापं किंचित् करिष्यति । रामस्तु भरते पापं कुर्यादिति न संशयः ॥ ३२
तस्माद्राजगृहादेव वनं गच्छतु ते सुतः । एतद्धि रोचते मह्यं भृशं चापि हितं तव ॥ ३३
एवं ते ज्ञातिपक्षस्य श्रेयश्चैव भविष्यति । यदि चेद्भरतो धर्मात् पित्र्यं राज्यमवाप्स्यति ॥ ३४
स ते सुखोचितो बालो रामस्य सहजो रिपुः । समृद्धार्थस्य नष्टार्थो जीविष्यति कथं वशे ॥ ३५
अभिद्रुतमिवारण्ये सिंहेन गजयूथपम् । प्रच्छाद्यमानं रामेण भरतं त्रातुमर्हसि ॥ ३६
दर्पान्निराकृता पूर्वं त्वया सौभाग्यवत्तया । राममाता सपत्नी ते कथं वैरं न यातयेत् ॥ ३७

यदा हि रामः पृथिवीमवाप्स्यति प्रभूतरत्नाकरशैलपत्तनाम् ।
तदा गमिष्यस्यशुभं पराभवं सहैव दीना भरतेन भामिनि ॥ ३८
यदा हि रामः पृथिवीमवाप्स्यति ध्रुवं प्रनष्टो भरतो भविष्यति ।
अतो हि संचिन्तय राज्यमात्मजे परस्य चैवाद्य विवासकारणम् ॥ ३९

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायां
अयोध्याकाण्डे मन्थरोपजापो नाम अष्टमः सर्गः

---

८

1. वर्तमाने इति पाठे कालभवेऽपि अभ्युदये सतीत्यर्थः ।

१. वत्सके च. छ.
२. इदं पद्यम् ग. नास्ति ।

## नवमः सर्गः

### रामप्रवासनोपायचिन्ता

एवमुक्ता तु कैकेयी क्रोधेन ज्वलितानना । दीर्घमुष्णं विनिश्वस्य मन्थरामिदमब्रवीत् ॥ १
अद्य राममितः क्षिप्रं वनं प्रस्थापयाम्यहम् । यौवराज्येन भरतं क्षिप्रमेवाभिषेचये ॥ २
इदं त्विदानीं संपश्य केनोपायेन मन्थरे । भरतः प्राप्नुयाद्राज्यं न तु रामः कथंचन ॥ ३
एवमुक्ता तया देव्या मन्थरा पापदर्शिनी । रामार्थमुपहिंसन्ती कैकेयीमिदमब्रवीत् ॥ ४
हन्तेदानीं प्रवक्ष्यामि कैकेयि श्रूयतां च मे । यथा ते भरतो राज्यं पुत्रः प्राप्स्यति केवलम् ॥ ५
किं न स्मरसि कैकेयि स्मरन्ती वा निगूहसे । यदुच्यमानमात्मार्थं मत्तस्त्वं श्रोतुमिच्छसि ॥ ६
मयोच्यमानं यदि ते श्रोतुं छन्दो विलासिनि । श्रूयतामभिधास्यामि श्रुत्वा चापि विमृश्यताम् ॥ ७
श्रुत्वैवं वचनं तस्या मन्थरायास्तु कैकयी । किंचिदुत्थाय शयनात् स्वास्तीर्णादिदमब्रवीत् ॥ ८
कथय त्वं ममोपायं केनोपायेन मन्थरे । भरतः प्राप्नुयाद्राज्यं न तु रामः कथंचन ॥ ९
एवमुक्ता तु कैकेय्या मन्थरा पापदर्शिनी । रामार्थमुपहिंसन्ती कुब्जा वचनमब्रवीत् ॥ १०
पुरा दैवासुरे युद्धे सह राजर्षिभिः पतिः । अगच्छत्त्वामुपादाय देवराजस्य साह्यकृत् ॥ ११
दिशमास्थाय वै देवि[1] दक्षिणां दण्डकान् प्रति । वैजयन्तमिति ख्यातं पुरं यत्र तिमिध्वजः ॥ १२
स शम्बर इति ख्यातः शतमायो महासुरः । ददौ शक्रस्य संग्रामं देवसंघैरनिर्जितः ॥ १३
तस्मिन् महति संग्रामे पुरुषान् क्षतविक्षतान् । रात्रौ प्रसुप्तान् घ्नन्ति स्म तरसासाद्य राक्षसाः ॥ १४
तत्राकरोन्महद्युद्धं राजा दशरथस्तदा । असुरैश्च महाबाहुः शस्त्रैश्च शकलीकृतः ॥ १५
अपवाह्य त्वया देवि संग्रामान्नष्टचेतनः । तत्रापि विक्षतः शस्त्रैः पतिस्ते रक्षितस्त्वया ॥ १६
तुष्टेन तेन दत्तौ ते द्वौ वरौ शुभदर्शने । स त्वयोक्तः पतिर्देवि यदेच्छेयं तदा वरौ ॥ १७
गृह्णीयामिति तत्तेन तथेत्युक्तं महात्मना । अनभिज्ञा ह्यहं देवि त्वयैव कथिता पुरा ॥ १८
कथैषा तव तु स्नेहान्मनसा धार्यते मया । रामाभिषेकसंभारान्निगृह्य विनिवर्तय ॥ १९
तौ च याचस्व भर्तारं भरतस्याभिषेचनम् । प्रव्राजनं च रामस्य त्वं वर्षाणि चतुर्दश ॥ २०
चतुर्दश हि वर्षाणि रामे प्रव्राजिते वनम् । प्रजाभावगतस्नेहः स्थिरः पुत्रो भविष्यति ॥ २१
क्रोधागारं प्रविश्याद्य क्रुद्धेवाश्वपतेः सुते । शेष्वानन्तर्हितायां त्वं भूमौ मलिनवासिनी ॥ २२
मा स्मैनं प्रत्युदीक्षेथा मा चैनमभिभाषथाः । रुदन्ती पार्थिवं दृष्ट्वा जगत्यां शोकलालसा ॥ २३
दयिता त्वं सदा भर्तुरत्र मे नास्ति संशयः । त्वत्कृते स महाराजो विशेदपि हुताशनम् ॥ २४
न त्वां क्रोधयितुं शक्तो न क्रुद्धां प्रत्युदीक्षितुम् । तव प्रियार्थं राजा हि प्राणानपि परित्यजेत् ॥ २५
न ह्यतिक्रमितुं शक्तस्तव वाक्यं महीपतिः । मन्दस्वभावे बुध्यस्व सौभाग्यबलमात्मनः ॥ २६
मणिमुक्तासुवर्णानि रत्नानि विविधानि च । दद्याद्दशरथो राजा मा स्म तेषु मनः कृथाः ॥ २७

---

१. कैकेयि प्र.

यौ तौ दैवासुरे युद्धे वरौ दशरथो ददौ । तौ स्मारय महाभागे सोऽर्थो मा त्वामतिक्रमेत् ॥ २८
यदा तु ते वरं दद्यात् स्वयमुत्थाप्य राघवः । व्यवस्थाप्य महाराजं त्वमिमं वृणुया वरम् ॥ २९
रामं प्रव्राजयारण्ये नव वर्षाणि पञ्च च । भरतः क्रियतां राजा पृथिव्याः पार्थिवर्षभः ॥ ३०
चतुर्दश हि वर्षाणि रामे प्रव्राजिते वनम् । रूढश्च कृतमूलश्च शेषं स्थास्यति ते सुतः ॥ ३१
रामप्रव्राजनं चैव देवि याचस्व तं वरम् । एवं सिध्यन्ति[1] पुत्रस्य सर्वार्थास्तव भामिनि ॥ ३२
एवं प्रव्राजितश्चैव रामोऽरामो भविष्यति । भरतश्च हतामित्रस्तव राजा भविष्यति[2] ॥ ३३
येन कालेन रामश्च वनात् प्रत्यागमिष्यति । [3]तेन कालेन पुत्रस्ते कृतमूलो[4] भविष्यति ॥ ३४
संगृहीतमनुष्यश्च सुहृद्भिः सार्धमात्मवान् । प्राप्तकालं तु ते मन्ये राजानं वीतसाध्वसा ॥ ३५
रामाभिषेकसंभाराम्निगृह्य विनिवर्तय । अनर्थमर्थरूपेण ग्राहिता सा ततस्तया ॥ ३६
हृष्टा प्रतीता कैकेयी मन्थरामिदमब्रवीत् । सा हि वाक्येन कुब्जायाः किशोरीवोत्पथं गता ॥ ३७
कैकेयी विस्मयं प्राप्ता परं परमदर्शना । कुब्जे त्वां नावजानामि श्रेष्ठां श्रेष्ठाभिधायिनीम् ॥ ३८
पृथिव्यामसि कुब्जानामुत्तमा बुद्धिनिश्चये । त्वमेव तु ममार्थेषु नित्ययुक्ता हितैषिणी ॥ ३९
नाहं समवबुध्येयं कुब्जे राज्ञश्चिकीर्षितम् । सन्ति दुःसंस्थिताः कुब्जा वक्राः परमदारुणाः ॥ ४०
त्वं पद्ममिव वातेन संनता प्रियदर्शना । उरस्तेऽभिनिविष्टं वै यावत्स्कन्धं समुन्नतम् ॥ ४१
अधस्ताच्चोदरं शातं सुनाभमिव लज्जितम् । परिपूर्णं तु जघनं सुपीनौ च पयोधरौ ॥ ४२
विमलेन्दुसमं वक्त्रमहो राजसि मन्थरे । जघनं तव निर्मृष्टं रशनादामशोभितम् ॥ ४३
जङ्घे भृशमुपन्यस्ते पादौ चाप्यायतावुभौ । त्वमायताभ्यां सक्थिभ्यां मन्थरे क्षौमवासिनी ॥ ४४
अग्रतो मम गच्छन्ती राजहंसीव राजसे । आसन् याः शम्बरे मायाः सहस्रमसुराधिपे ॥ ४५
सर्वास्त्वयि निविष्टास्ता भूयश्चान्याः सहस्रशः । तवेदं स्थगु यद्दीर्घं रथघोणमिवायतम् ॥ ४६
मतयः क्षत्रविद्याश्च मायाश्चात्र वसन्ति ते । अत्र ते प्रतिमोक्ष्यामि मालां कुब्जे हिरण्मयीम् ॥ ४७
अभिषिक्ते च भरते राघवे च वनं गते । जात्येन च सुवर्णेन सुनिष्टप्तेन मन्थरे[5] ॥ ४८
लब्धार्था च प्रतीता च लेपयिष्यामि ते स्थगु । मुखे च तिलकं चित्रं जातरूपमयं शुभम् ॥ ४९
कारयिष्यामि ते कुब्जे शुभान्याभरणानि च । परिधाय शुभे वस्त्रे देवतेव चरिष्यसि ॥ ५०
चन्द्रमाह्वयमानेन मुखेनाप्रतिमानना । गमिष्यसि गतिं मुख्यां गर्वयन्ती द्विषज्जनम् ॥ ५१
तवापि कुब्जाः कुब्जायाः सर्वाभरणभूषिताः । पादौ परिचरिष्यन्ति यथैव त्वं सदा मम ॥ ५२
इति प्रशस्यमाना सा कैकेयीमिदमब्रवीत् । शयानां शयने शुभ्रे वेद्यामग्निशिखामिव ॥ ५३
गतोदके सेतुबन्धो न कल्याणि विधीयते । उत्तिष्ठ कुरु कल्याणि राजानमनुदर्शय ॥ ५४
तथा प्रोत्साहिता देवी गत्वा मन्थरया सह । क्रोधागारं विशालाक्षी सौभाग्यमदगर्विता ॥ ५५

१. सेत्स्यन्ति छ. ३. अन्तर्बहिश्च -म. ५. मञ्जा
२. इदमर्धम् क. नास्ति । ४. रूढमूलः छ. ६. सुन्दरि ' म.

अनेकशतसाहस्रं मुक्ताहारं वराङ्गना । अवमुच्य वरार्हाणि शुभान्याभरणानि च ॥ ५६

ततो हेमोपमा[1] तत्र कुब्जावाक्यवशं गता । संविश्य भूमौ कैकेयी मन्थरामिदमब्रवीत् ॥ ५७

इह वा मां मृतां कुब्जे नृपायावेदयिष्यसि । वनं तु राघवे प्राप्ते भरतः प्राप्स्यति क्षितिम् ॥ ५८

न सुवर्णेन मे ह्यर्थो न रत्नैर्न च भोजनैः । एष मे जीवितस्यान्तो रामो यद्यभिषिच्यते ॥ ५९

अथो पुनस्तां महिषीं महीक्षितो वचोभिरत्यर्थमहापराक्रमैः ।
उवाच कुब्जा भरतस्य मातरं हितं वचो राममुपेत्य चाहितम्[2] ॥ ६०

प्रपत्स्यते राज्यमिदं हि राघवो यदि ध्रुवं त्वं ससुता च तप्स्यसे ।
अतो हि कल्याणि यतस्व तत्तथा यथा सुतस्ते भरतोऽभिषेक्ष्यते[3] ॥ ६१

तथातिविद्धा महिषी तु कुब्जया समाहता वागिषुभिर्मुहुर्मुहुः ।
निधाय हस्तौ हृदयेऽतिविस्मिता शशंस कुब्जां कुपिता पुनः पुनः ॥ ६२

यमस्य वा मां विषयं गतामितो निशाम्य कुब्जे प्रतिवेदयिष्यसि ।
वनं गते वा सुचिराय राघवे समृद्धकामो भरतो भविष्यति ॥ ६३

अहं हि नैवास्तरणानि न स्रजो न चन्दनं नाञ्जनपानभोजनम् ।
न किंचिदिच्छामि न चेह जीवितं न चेदितो गच्छति राघवो वनम् ॥ ६४

अथैतदुक्त्वा वचनं सुदारुणं निधाय सर्वाभरणानि भामिनी ।
असंवृतामास्तरणेन मेदिनीं तदाधिशिश्ये पतितेव किंनरी ॥ ६५

उदीर्णसंरम्भतमोवृतानना तथावमुक्तोत्तममाल्यभूषणा ।
नरेन्द्रपत्नी विमना बभूव सा तमोवृता द्यौरिव मग्नतारका ॥ ६६

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायां
अयोध्याकाण्डे रामप्रवासनोपायचिन्ता नाम नवमः सर्गः

---

## दशमः सर्गः

### कैकेय्यनुनयः

विदर्शिता यदा देवी कुब्जया पापया भृशम् । तदा शेते स्म सा भूमौ दिग्धविद्धेव किंनरी ॥ १

निश्चित्य[1] मनसा कृत्यं सा सम्यगिति भामिनी । मन्थरायै शनैः सर्वमाचचक्षे विचक्षणा ॥ २

सा दीना निश्चयं कृत्वा मन्थरावाक्यमोहिता । नागकन्येव निश्वस्य दीर्घमुष्णं च भामिनी ॥ ३

मुहूर्तं चिन्तयामास मार्गमात्मसुखावहम् । सा सुहृच्चार्थकामा च तन्निशम्य सुनिश्चयम् ॥ ४

बभूव परमप्रीता सिद्धिं प्राप्येव मन्थरा । अथ सामर्षिता देवी सम्यक्कृत्वा विनिश्चयम् ॥ ५

---

1. न केवलं शरीरसौन्दर्यमात्रेण तस्याः सुवर्णसादृश्यम् यावन्मनसापि । विमलं हि तदीयं मनो यत्किमपि संस्थानमापादयितुं शक्यं सुवर्णवदेवेति ॥

१. श्रियम् ख.
२. इदं पद्यम् ख. नास्ति ।
३. इदं पद्यम् ख. नास्ति ।

संविवेशाबला भूमौ निवेश्य भ्रुकुटीं मुखे । ततश्चित्राणि माल्यानि दिव्यान्याभरणानि च ॥ ६
अपविद्धानि कैकेय्या तानि भूमिं प्रपेदिरे । तया तान्यपविद्धानि माल्यान्याभरणानि च ॥ ७
अशोभयन्त वसुधां नक्षत्राणि यथा नभः । क्रोधागारे निपतिता सा बभौ मलिनाम्बरा ॥ ८
एकवेणीं दृढं बद्ध्वा गतसत्त्वेव किंनरी । आज्ञाप्य तु महाराजो राघवस्याभिषेचनम् ॥ ९
उपस्थानमनुज्ञाप्य प्रविवेश निवेशनम् । अद्य रामाभिषेको वै प्रसिद्ध इति जज्ञिवान् ॥ १०
प्रियार्हां प्रियमाख्यातुं विवेशान्तःपुरं वशी । स कैकेय्या गृहं श्रेष्ठं प्रविवेश महायशाः ॥ ११
पाण्डराभ्रमिवाकाशं राहुयुक्तं[1] निशाकरः । शुकबर्हिणसंघुष्टं क्रौञ्चहंसरुतायुतम् ॥ १२
वादित्ररवसंघुष्टं कुब्जावामनिकायुतम् । लतागृहैश्चित्रगृहैश्चम्पकाशोकशोभितैः ॥ १३
दान्तराजतसौवर्णवेदिकाभिः समायुतम् । नित्यपुष्पफलैर्वृक्षैर्वापीभिश्चोपशोभितम् ॥ १४
दान्तराजतसौवर्णैः संवृतं परमासनैः । विविधैरन्नपानैश्च भक्ष्यैश्च विविधैरपि ॥ १५
उपपन्नं महार्हैश्च भूषणैस्त्रिदिवोपमम् । तत् प्रविश्य महाराजः स्वमन्तःपुरमृद्धिमत् ॥ १६
न ददर्श प्रियां भार्यां कैकेयीं शयनोत्तमे । स कामबलसंयुक्तो रत्यर्थं मनुजाधिपः ॥ १७
अपश्यन् दयितां भार्यां पप्रच्छ विषसाद च । न हि तस्य पुरा देवी तां वेलामत्यवर्तत ॥ १८
न च राजा गृहं शून्यं प्रविवेश कदाचन । ततो गृहगतो राजा कैकेयीं पर्यपृच्छत ॥ १९
यथापुरमविज्ञाय स्वार्थलिप्सुमपण्डिताम् । प्रतीहारी त्वथोवाच संत्रस्ता सुकृताञ्जलिः ॥ २०
देव देवी भृशं क्रुद्धा क्रोधागारमभिद्रुता । प्रतीहार्या वचः श्रुत्वा राजा परमदुर्मनाः ॥ २१
विषसाद पुनर्भूयो लुलितव्याकुलेन्द्रियः । तत्र तां पतितां भूमौ शयानामतथोचिताम् ॥ २२
प्रतप्त इव दुःखेन सोऽपश्यज्जगतीपतिः । स वृद्धस्तरुणीं भार्यां प्राणेभ्योऽपि गरीयसीम् ॥ २३
अपापः पापसंकल्पां ददर्श धरणीतले । लतामिव विनिष्कृत्तां पतितां देवतामिव ॥ २४
किंनरीमिव निर्धूतां च्युतामप्सरसं यथा । मालामिव परिभ्रष्टां हरिणीमिव संयताम् ॥ २५
करेणुमिव दिग्धेन विद्धां मृगयुना वने । महागज इवारण्ये स्नेहात् परिममर्श ताम् ॥ २६
परिमृश्य च पाणिभ्यामभिसंत्रस्तचेतनः । कामी कमलपत्राक्षीमुवाच वनितामिदम् ॥ २७
न तेऽहमभिजानामि क्रोधमात्मनि संश्रितम् । देवि केनाभियुक्तासि केन वासि विमानिता ॥ २८
यदिदं मम दुःखाय शेषे कल्याणि पांसुषु । भूमौ शेषे किमर्थं त्वं मयि कल्याणि जीवति ॥ २९
भूतोपहतचित्तेव मम चित्तप्रमाथिनी । सन्ति मे कुशला वैद्यास्त्वभितुष्टाश्च सर्वशः ॥ ३०
सुखितां त्वां करिष्यन्ति व्याधिमाचक्ष्व भामिनि । कस्य वा ते प्रियं कार्यं केन वा विप्रियं कृतम् ॥
कः प्रियं लभतामद्य को वा सुमहदप्रियम् । मा रोदीर्मा च कार्षीस्त्वं देवि संपरिशोषणम् ॥ ३१
अवध्यो वध्यतां को वा वध्यः को वा विमुच्यताम् । दरिद्रः को भवत्वाढ्यो द्रव्यवान् वाप्यकिंचनः ॥ ३२

---

1. कश्चिदम्बरकोणेऽप्रकाशः स्थितो राहुः चन्द्र- प्रसिष्यतीति सूच्यते ।
मसमिव अन्तःपुरे क्रोधागारस्थिता सा राजानं १. कल्याणचेतसि प्र.

अहं चैव मदीयाश्च सर्वे तव वशानुगाः । न ते कंचिदभिप्रायं व्याहन्तुमहमुत्सहे ॥ ३४
आत्मनो जीवितेनापि ब्रूहि यन्मनसेच्छसि । बलमात्मनि जानन्ती न मां शङ्कितुमर्हसि ॥ ३५
करिष्यामि तव प्रीतिं सुकृतेनापि ते शपे । यावदावर्तते चक्रं तावती मे वसुंधरा ॥ ३६
प्राचीनाः सिन्धुसौवीराः सौराष्ट्रा[1] दक्षिणापथाः । वङ्गाङ्गमगधा मत्स्याः समृद्धाः काशिकोसलाः ॥
तत्र जातं बहुद्रव्यं धनधान्यमजाविकम् । ततो वृणीष्व कैकेयि यद्यत्त्वं मनसेच्छसि ॥ ३८
किमायासेन ते भीरु उत्तिष्ठोत्तिष्ठ शोभने । तत्त्वं मे ब्रूहि कैकेयि यतस्ते भयमागतम्[2] ॥ ३९
तत्ते व्यपनयिष्यामि नीहारमिव रश्मिवान् । तथोक्ता सा समाश्वस्ता वक्तुकामा तदप्रियम् ॥४०
परिपीडयितुं भूयो भर्तारमुपचक्रमे ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायां
अयोध्याकाण्डे कैकेय्यनुनयो नाम दशमः सर्गः

---

## एकादशः सर्गः

### वरद्वयनिर्बन्धः

तं मन्मथशरैर्विद्धं कामवेगवशानुगम् । उवाच पृथिवीपालं कैकेयी दारुणं वचः ॥ १
नास्मि विप्रकृता देव केनचिन्नावमानिता । अभिप्रायस्तु मे कश्चित्तमिच्छामि त्वया कृतम् ॥२
प्रतिज्ञां प्रतिजानीष्व यदि त्वं कर्तुमिच्छसि । अथ तद्व्याहरिष्यामि यदभिप्रार्थितं मया ॥ ३
तामुवाच महाराजः कैकेयीमीषदुत्स्मितः । कामी हस्तेन संगृह्य मूर्धजेषु [3]शुचिस्मिताम् ॥ ४
अवलिप्ते न जानासि त्वत्तः प्रियतरो मम । मनुजो मनुजव्याघ्राद्रामादन्यो न विद्यते ॥ ५
तेनाजय्येन मुख्येन राघवेण महात्मना । शपे ते जीवनार्हेण ब्रूहि यन्मनसेच्छसि ॥ ६
यं मुहूर्तमपश्यंस्तु न जीवेयमहं ध्रुवम् । तेन रामेण कैकेयि शपे ते वचनक्रियाम् ॥ ७
आत्मना वात्मजैश्चान्यैर्वृणे यं मनुजर्षभम् । तेन रामेण कैकेयि शपे ते वचनक्रियाम् ॥ ८
भद्रे हृदयमप्येतदनुमृश्योद्धरस्व मे । एतत् समीक्ष्य कैकेयि ब्रूहि यत् साधु मन्यसे ॥ ९
बलमात्मनि पश्यन्ती न मां शङ्कितुमर्हसि । करिष्यामि तव प्रीतिं सुकृतेनापि ते शपे ॥ १०
सा तदर्थमना देवी तमभिप्रायमागतम् । निर्माध्यस्थ्यात् प्रहर्षाच्च बभाषे दुर्वचं वचः ॥ ११
तेन वाक्येन संहृष्टा तमभिप्रायमात्मनः । व्याजहार महाघोरमभ्यागतमिवान्तकम् ॥ १२
यथा क्रमेण शपसि वरं मम ददासि च । तच्छृण्वन्तु त्रयस्त्रिंशद्देवाः साग्निपुरोगमाः ॥ १३
चन्द्रादित्यौ नभश्चैव ग्रहा रात्र्यहनी दिशः । जगच्च पृथिवी चेयं सगन्धर्वा सराक्षसा ॥ १४
निशाचराणि भूतानि गृहेषु गृहदेवताः । यानि चान्यानि भूतानि जानीयुर्भाषितं तव ॥ १५
सत्यसंधो महातेजा धर्मज्ञः सुसमाहितः । वरं मम ददात्येष तन्मे शृण्वन्तु देवताः ॥ १६

---

१. द्राविडाः प्र. २. इदं पद्यम् ख. नास्ति । ३. शुचि स्मिताम् क.

इति देवी महेष्वासं परिगृह्याभिशस्य च । ततः परमुवाचेदं वरदं काममोहितम् ॥ १७
स्मर राजन् पुरा वृत्तं तस्मिन् दैवासुरे रणे । तत्र त्वच्यावयच्छत्रुस्तव जीवितमन्तरा ॥ १८
तत्र चापि मया देव यत्त्वं समभिरक्षितः । जाग्रत्या यतमानायास्ततो मे प्रावदा वरौ ॥ १९
तौ तु दत्तौ वरौ देव निक्षेपौ मृगयाम्यहम् । तवैव पृथिवीपाल सकाशे सत्यसंगर ॥ २०
तत् प्रतिश्रुत्य धर्मेण न चेद्दास्यसि मे वरम् । अद्यैव हि प्रहास्यामि जीवितं त्वद्विमानिता ॥ २१
वाङ्मात्रेण तदा राजा कैकेय्या स्ववशे कृतः । प्रचस्कन्द विनाशाय पाशं मृग इवात्मनः ॥ २२
ततः परमुवाचेदं वरदं काममोहितम् । वरौ यौ मे त्वया देव तदा दत्तौ महीपते ॥ २३
तौ तावदहमद्यैव वक्ष्यामि शृणु मे वचः । योऽभिषेकसमारम्भो राघवस्योपकल्पितः ॥ २४
अनेनैवाभिषेकेण भरतो मेऽभिषिच्यताम् । यो द्वितीयो वरो देव दत्तः प्रीतेन मे त्वया ॥ २५
तदा दैवासुरे युद्धे तस्य कालोऽयमागतः । नव पञ्च च वर्षाणि दण्डकारण्यमाश्रितः ॥ २६
चीराजिनजटाधारी रामो भवतु तापसः । भरतो भजतामद्य यौवराज्यमकण्टकम् ॥ २७
एष मे परमः कामो दत्तमेव वरं वृणे । अद्य चैव हि पश्येयं प्रयान्तं राघवं वनम् ॥ २८

स राजराजो भव सत्यसंगरः कुलं च शीलं च हि रक्ष जन्म च ।
परत्र वासे हि वदन्त्यनुत्तमं तपोधनाः सत्यवचो हितं नृणाम् ॥ २९

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायां
अयोध्याकाण्डे वरद्वयनिर्बन्धो नाम एकादशः सर्गः

---

## द्वादशः सर्गः

### कैकेयीनिवर्तनप्रयासः

ततः श्रुत्वा महाराजः कैकेय्या दारुणं वचः । चिन्तामभिसमापेदे मुहूर्तं प्रतताप च ॥ १
किं नु मे यदि वा स्वप्नश्चित्तमोहोऽपि वा[1] मम । अनुभूतोपसर्गो[2] वा मनसो वाप्युपद्रवः ॥ २
इति संचिन्त्य तद्राजा नाध्यगच्छत्तदा सुखम् । प्रतिलभ्य ततः संज्ञां कैकेयीवाक्यताडितः ॥ ३
व्यथितो विक्लवश्चैव व्याघ्रीं दृष्ट्वा यथा मृगः । असंवृतायामासीनो जगत्यां दीर्घमुच्छ्वसन् ॥ ४
मण्डले पन्नगो रुद्धो मन्त्रैरिव महाविषः । अहो धिगिति सामर्षो वाचमुक्त्वा नराधिपः ॥ ५
मोहमापेदिवान् भूयः शोकोपहतचेतनः । चिरेण तु नृपः संज्ञां प्रतिलभ्य सुदुःखितः ॥ ६
कैकेयीमब्रवीत् क्रुद्धः प्रदहन्निव चक्षुषा । नृशंसे दुष्टचारित्रे कुलस्यास्य विनाशिनि ॥ ७
किं कृतं तव रामेण पापे पापं मयापि वा । सदा ते जननीतुल्यां वृत्तिं वहति राघवः ॥ ८
तस्यैव त्वमनर्थाय किं निमित्तमिहोद्यता । त्वं मयात्मविनाशाय भवनं स्वं निवेशिता ॥ ९

---

1. अपिर्वेति अथवेत्यर्थे निपातः । १. तेनसापुना.
2. अनुभूतोपसर्गः ग्रहावेशकृतवैकृत्यम् ।

अविज्ञानान्नृपसुता व्याली तीक्ष्णविषा यथा । जीवलोको यदा सर्वो रामस्याह गुणस्तवम् ॥१०
अपराधं कमुद्दिश्य त्यक्ष्यामीष्टमहं सुतम् । कौसल्यां वा सुमित्रां वा त्यजेयमपि वा श्रियम् ॥
जीवितं वात्मनो रामं न त्वेव पितृवत्सलम् । पराभवति मे प्रीतिर्दृष्ट्वा तनयमग्रजम् ॥ १२
अपश्यतस्तु मे रामं नष्टा भवति चेतना । तिष्ठेल्लोको विना सूर्यं सस्यं वा सलिलं विना ॥१३
न तु रामं विना देहे तिष्ठेत्तु मम जीवितम् । तदलं त्यज्यतामेष निश्चयः पापनिश्चये ॥ १४
अपि ते चरणौ मूर्ध्ना स्पृशाम्येष प्रसीद मे । किमिदं चिन्तितं पापे त्वया परमदारुणम् ॥१५
अथ[1] जिज्ञाससे मां त्वं भरतस्य प्रियाप्रिये । अस्तु यत्तत्त्वया पूर्वं व्याहृतं राघवं प्रति ॥१६
स मे ज्येष्ठः सुतः श्रीमान् धर्मज्येष्ठ इतीव मे । तत्त्वया प्रियवादिन्या सेवार्थं कथितं भवेत् ॥ १७
तच्छ्रुत्वा शोकसंतप्ता संतापयसि मां भृशम् । आविष्टासि गृहे शून्ये सा त्वं परवशं गता ॥ १८
इक्ष्वाकूणां कुले देवि संप्राप्तः सुमहानयम् । अनयो नयसंपन्ने यत्र ते विकृता मतिः ॥ १९
न हि किंचिदयुक्तं वा विप्रियं वा पुरा मम । अकरोस्त्वं विशालाक्षि तेन न श्रद्दधाम्यहम्[१] ॥ २०
ननु ते राघवस्तुल्यो भरतेन महात्मना । बहुशो हि सुबाले त्वं कथाः कथयसे मम ॥ २१
तस्य धर्मात्मनो देवि वने वासं यशस्विनः । कथं रोचयसे भीरु नव वर्षाणि पञ्च च ॥२२
अत्यन्तसुकुमारस्य तस्य धर्मे धृतात्मनः । कथं रोचयसे वासमरण्ये भृशदारुणे ॥ २३
रोचयस्यभिरामस्य रामस्य शुभलोचने । तव शुश्रूषमाणस्य किमर्थं विप्रवासनम् ॥ २४
रामोऽपि भरताद्भूयस्तव शुश्रूषते सदा । विशेषं त्वयि तस्मात्तु भरतस्य न लक्षये ॥ २५
शुश्रूषां गौरवं चैव प्रमाणं वचनक्रियाम् । कस्ते भूयस्तरां कुर्यादन्यत्र मनुजर्षभात् ॥ २६
बहूनां स्त्रीसहस्राणां बहूनां चोपजीविनाम् । परिवादोऽपवादो[2] वा राघवे नोपपद्यते ॥ २७
सान्त्वयन् सर्वभूतानि रामः शुद्धेन चेतसा । गृह्णाति मनुजव्याघ्रः प्रियैर्विषयवासिनः ॥ २८
सत्येन लोकाञ्जयति दीनान् दानेन राघवः । गुरूञ्शुश्रूषया वीरो धनुषा युधि शात्रवान् ॥ २९
सत्यं दानं तपस्त्यागो मित्रता शौचमार्जवम् । विद्या च गुरुशुश्रूषा ध्रुवाण्येतानि राघवे ॥ ३०
तस्मिन्नार्जवसंपन्ने देवि देवोपमे कथम् । पापमाशंससे रामे महर्षिसमतेजसि ॥ ३१
न स्मराम्यप्रियं वाक्यं लोकस्य[२] प्रियवादिनः । स कथं त्वत्कृते रामं वक्ष्यामि प्रियमप्रियम् ॥ ३२
क्षमा यस्मिंस्तपस्त्यागः सत्यं धर्मः कृतज्ञता । अविहिंसा च भूतानां तमृते का गतिर्मम ॥ ३३
मम वृद्धस्य कैकेयि गतान्तस्य तपस्विनः । दीनं लालप्यमानस्य कारुण्यं कर्तुमर्हसि ॥ ३४

---

1. शोकावेशविवशो राजा यत्किंचिन्मनस्युद्भूतं तत्तथैव व्याहरति—अथवा एवं दारुणं वदन्ती मां परीक्षसे यदि तदस्तु । अथवा यत्त्वयाहृतं भवत्या पूर्वः स मे ज्येष्ठ इत्यादि तत् सेवार्थं कथितं भवेत् । तत् तस्मात्, श्रुत्वा रामाभिषेकश्रवणमात्रेण संतप्ता मां संतापयसीति ॥

2. समूलमयशः परिवादः । निर्मूलमयशः आवादः ।

१. इदं पद्यम् च. नास्ति ।

२. रामस्य च.

पृथिव्यां सागरान्तायां यत्किंचिदधिगम्यते । तत्सर्वं तव दास्यामि मा च त्वां मन्युराविशेत् ॥
अञ्जलिं कुर्मि कैकेयि पादौ चापि स्पृशामि ते । शरणं भव रामस्य माधर्मो मामिह स्पृशेत् ॥
इति दुःखाभिसंतप्तं विलपन्तमचेतनम् । घूर्णमानं महाराजं शोकेन समभिप्लुतम् ॥ ३७
पारं शोकार्णवस्याशु प्रार्थयन्तं पुनः पुनः । प्रत्युवाचाथ कैकेयी रौद्रा रौद्रतरं वचः ॥ ३८
यदि दत्त्वा वरौ राजन् पुनः प्रत्यनुतप्यसे । धार्मिकत्वं कथं वीर पृथिव्यां कथयिष्यसि ॥ ३९
यदा समेता बहवस्त्वया राजर्षयः सह । कथयिष्यन्ति धर्मज्ञ तत्र किं प्रतिवक्ष्यसि ॥ ४०
यस्याः प्रसादे जीवामि या च मामभ्यपालयत् । तस्याः कृतं[२] मया मिथ्या कैकेय्या इति वक्ष्यसि॥
किल्बिषं त्वं नरेन्द्राणां करिष्यसि नराधिप । यो दत्त्वा वरमद्यैव पुनरन्यानि भाषसे ॥ ४२
शैब्यः श्येनकपोतीये स्वमांसं पक्षिणे ददौ । अलर्कश्चक्षुषी दत्त्वा जगाम गतिमुत्तमाम् ॥ ४३
सागरः समयं कृत्वा न वेलामतिवर्तते । समयं मानृतं कार्षीः पूर्ववृत्तमनुस्मरन् ॥ ४४
स त्वं धर्मं परित्यज्य रामं राज्येऽभिषिच्य च । सह कौसल्यया नित्यं रन्तुमिच्छसि दुर्मते ॥ ४५
भवत्वधर्मो धर्मो वा सत्यं वा यदि वानृतम् । यत्त्वया संश्रुतं मह्यं तस्य नास्ति व्यतिक्रमः ॥
अहं हि विषमद्यैव पीत्वा बहु तवाग्रतः । पश्यतस्ते मरिष्यामि रामो यद्यभिषिच्यते ॥ ४७
एकाहमपि पश्येयं यद्यहं राममातरम् । अञ्जलिं प्रतिगृह्णन्तीं श्रेयो ननु मृतिर्मम ॥ ४८
भरतेनात्मना चाहं शपे ते मनुजाधिप । यथा नान्येन तुष्येयमृते रामविवासनात् ॥ ४९
एतावदुक्त्वा वचनं कैकेयी विरराम ह । विलपन्तं च राजानं न प्रतिव्याजहार सा ॥ ५०
श्रुत्वा च राजा कैकेय्या वाक्यं परमदारुणम् । रामस्य च वने वासमैश्वर्यं भरतस्य च ॥ ५१
नाभ्यभाषत कैकेयीं मुहूर्तं व्याकुलेन्द्रियः । प्रैक्षतानिमिषो देवीं प्रियामप्रियवादिनीम् ॥ ५२
तां हि वज्रसमां वाचमाकर्ण्य हृदयच्छिदम् । दुःखशोकमयीं घोरां राजा न सुखितोऽभवत् ॥ ५३
स देव्या व्यवसायं च घोरं च शपथं कृतम् । ध्यात्वा रामेति निःश्वस्य छिन्नस्तरुरिवापतत् ॥ ५४
नष्टचित्तो यथोन्मत्तो विपरीतो यथातुरः । हृततेजा यथा सर्पो बभूव जगतीपतिः ॥ ५५
दीनया तु गिरा राजा इति होवाच कैकयीम् । अनर्थमिममर्थाभं केन त्वमुपदर्शिता ॥ ५६
भूतोपहतचित्तेव ब्रुवन्ती मां न लज्जसे । शीलव्यसनमेतत्ते नाभिजानाम्यहं पुरा ॥ ५७
बालायास्तत्त्विदानीं ते लक्षये विपरीतवत् । कुतो वा ते भयं जातं या त्वमेवंविधं वरम् ॥ ५८
राष्ट्रे[1] भरतमासीनं वृणीषे राघवं वने । विरमैतेन भावेन त्वमेतेनानृतेन वा ॥ ५९
यदि भर्तुः प्रियं कार्यं लोकस्य भरतस्य च । नृशंसे पापसंकल्पे क्षुद्रे दुष्कृतकारिणि ॥ ६०
किं नु दुःखमलीकं वा मयि रामे च पश्यसि । न कथंचिदृते रामाद्भरतो राज्यमावसेत् ॥ ६१
रामादपि हि तं मन्ये धर्मतो बलवत्तरम् । कथं द्रक्ष्यामि[2] रामस्य वनं गच्छेति भाषिते ॥ ६२

---

1. वने राघवं विशीर्णं वृणीषे इति योग्यक्रियाध्याहारः । ऋतम् अवश्यंभावि, तद्विपरीतेन अनृतेन । असंभविना भावेनेत्यर्थः ।

2. वक्ष्यसीति तिलकः । अस्मिन् पाठे मुखवर्णमित्युत्तरत्र द्रक्ष्यसि द्रक्ष्यामीति वा योग्यक्रियाध्याहारः साधीयान् ।

१. त्वं मृत्युमाविश ग. ति.
२. कृता ख.
३. श्रुत्वा प्र.

मुखवर्णं विवर्णं तं यथैवेन्दुमुपप्लुतम् । तां हि मे सुकृतां बुद्धिं सुहृद्भिः सह निश्चिताम् ॥ ६३
कथं द्रक्ष्याम्यपावृत्तां परैरिव हतां चमूम् । किं मां वक्ष्यन्ति राजानो नानादिग्भ्यः समागताः ॥६४
बालो बतायमैक्ष्वाकश्चिरं राज्यमकारयत् यदा तु बहवो वृद्धा गुणवन्तो बहुश्रुताः ॥ ६५
परिप्रक्ष्यन्ति काकुत्स्थं वक्ष्यामि किमहं तदा । कैकेय्या क्लिश्यमानेन पुत्रः प्रव्राजितो मया ॥ ६६
यदि सत्यं ब्रवीम्येतत्तदसत्यं भविष्यति । किं मां वक्ष्यति कौसल्या राघवे वनमास्थिते ॥ ६७
किं चैनां प्रतिवक्ष्यामि कृत्वा विप्रियमीदृशम् । यदा यदा च कौसल्या दासीवच्च सखीव च ॥ ६८
भार्यावद्भगिनीवच्च मातृवच्चोपतिष्ठति । सततं प्रियकामा मे प्रियपुत्रा प्रियंवदा ॥ ६९
न मया सत्कृता देवी सत्कारार्हा कृते तव । इदानीं तत्तपति मां यन्मया सुकृतं त्वयि ॥ ७०
अपथ्यव्यञ्जनोपेतं भुक्तमन्नमिवातुरम् । विप्रकारं च रामस्य संप्रयाणं वनस्य च ॥ ७१
सुमित्रा प्रेक्ष्य वै भीता कथं मे विश्वसिष्यति[१] । कृपणं बत वैदेही श्रोष्यति द्वयमप्रियम् ॥ ७२
मां च पञ्चत्वमापन्नं रामं च वनमाश्रितम् । वैदेही बत मे प्राणाञ्शोचन्ती क्षपयिष्यति ॥ ७३
हीना हिमवतः पार्श्वे किंनरेणेव किंनरी । न हि राममहं दृष्ट्वा प्रवसन्तं महावने ॥ ७४
चिरं जीवितुमाशंसे रुदन्तीं चापि मैथिलीम् । सा नूनं विधवा राज्यं सपुत्रा कारयिष्यसि[२] ॥ ७५
सतीं त्वामहमत्यन्तं व्यवस्याम्यसतीं सतीम् । रूपिणीं विषसंयुक्तां पीत्वेव मदिरां नरः ॥ ७६
अनृतैर्बत मां सान्त्वैः सान्त्वयन्ती स्म भाषसे । गीतशब्देन संरुध्य लुब्धो मृगमिवावधीः ॥ ७७
अनार्य इति मामार्याः पुत्रविक्रयिणं ध्रुवम् । धिक्करिष्यन्ति रथ्यासु सुरापं ब्राह्मणं यथा ॥ ७८
अहो दुःखमहो कृच्छ्रं यत्र वाचः क्षमे तव । दुःखमेवंविधं प्राप्तं पुराकृतमिवाशुभम् ॥ ७९
चिरं खलु मया पापे त्वं पापेनाभिरक्षिता । अज्ञानादुपसंपन्ना रज्जुरुद्बन्धिनी यथा ॥ ८०
रममाणस्त्वया सार्धं मृत्युं त्वां नाभिलक्षये । बालो रहसि हस्तेन कृष्णसर्पमिवास्पृशम् ॥ ८१
मया ह्यपितृकः पुत्रः स महात्मा दुरात्मना । तं तु मां जीवलोकोऽयं नूनमाक्रोष्टुमर्हति ॥[३] ८२
बालिशो बत कामात्मा राजा दशरथो भृशम् । स्त्रीकृते यः प्रियं पुत्रं वनं प्रस्थापयिष्यति ॥ ८३
व्रतैश्च ब्रह्मचर्यैश्च गुरुभिश्चोपकर्शितः । भोगकाले महत् कृच्छ्रं पुनरेव प्रपत्स्यते ॥ ८४
नालं द्वितीयं वचनं पुत्रो मां प्रतिभाषितुम् । स वनं प्रव्रजेत्युक्तो बाढमित्येव वक्ष्यति ॥ ८५
यदि मे राघवः कुर्याद्वनं गच्छेति भाषितः । प्रतिकूलं प्रियं मे स्यान्न तु वत्सः करिष्यति ॥ ८६
शुद्धभावो हि भावं मे न तु ज्ञास्यति राघवः[४] । राघवे हि वनं प्राप्ते सर्वलोकस्य धिक्कृतम् ॥ ८७
मृत्युरक्षमणीयं मां नयिष्यति यमक्षयम् । मृते मयि गते रामे वनं मनुजपुंगवे ॥ ८८
इष्टे मम जने शेषे किं पापं प्रतिपत्स्यसे । कौसल्या मां च रामं च पुत्रौ च यदि हास्यति ॥ ८९
दुःखान्यसहती देवी मामेवानुमरिष्यति । कौसल्यां च सुमित्रां च मां च पुत्रैस्त्रिभिः सह ॥ ९०

---

१. एतदारभ्य सार्धं पद्यम् ख. नास्ति ।
३. अस्मिन् पद्ये अर्धव्यतिक्रमः ग.
२. अस्यानन्तरम्—न हि प्रव्राजिते रामे देवि जीवितुमुत्सहे—इति च. छ.
४. अस्यानन्तरम्—स वनं प्रव्रजेत्युक्तो बाढमित्येव वक्ष्यति—इति च. छ.

प्रक्षिप्य नरके सा त्वं कैकेयि सुखिता भव । मया रामेण च त्यक्तं शाश्वतं सत्कृतं गुणैः ॥ ९१
इक्ष्वाकुकुलमक्षोभ्यमाकुलं पालयिष्यसि । प्रियं चेद्भरतस्यैतद्रामप्रव्राजनं भवेत् ॥ ९२
मा स्म मे भरतः कार्षीत् प्रेतकृत्यं गतायुषः । हन्तानार्ये ममामित्रे सकामा भव कैकयि ॥ ९३
मृते मयि गते रामे वनं पुरुषपुंगवे । सेदानीं विधवा राज्यं सपुत्रा कारयिष्यसि ॥ ९४
त्वं राजपुत्रीवादेन[1] न्यवसो मम वेश्मनि । अकीर्तिश्चातुला लोके ध्रुवः परिभवश्च मे ॥ ९५
सर्वभूतेषु चावज्ञा यथा पापकृतस्तथा । कथं रथैर्विभुर्यात्वा गजाश्वैश्च मुहुर्मुहुः ॥ ९६
पद्भ्यां रामो महारण्ये वत्सो मे विचरिष्यति । यस्य त्वाहारसमये सूदाः कुण्डलधारिणः ॥ ९७
अहंपूर्वाः पचन्ति स्म प्रशस्तं पानभोजनम् । स कथं नु कषायाणि तिक्तानि कटुकानि च ॥ ९८
भक्षयन् वन्यमाहारं सुतो मे वर्तयिष्यति । महार्हवस्त्रसंवीतो भूत्वा चिरसुखोषितः ॥ ९९
काषायपरिधानस्तु कथं भूमौ निवत्स्यति । कस्यैतद्दारुणं वाक्यमेवंविधमचिन्तितम् ॥ १००
रामस्यारण्यगमनं भरतस्याभिषेचनम् । धिगस्तु योषितो नाम शठाः स्वार्थपराः सदा ॥ १०१
न ब्रवीमि स्त्रियः सर्वा भरतस्यैव मातरम् ॥

अनर्थभावेऽर्थपरे नृशंसे ममानुतापाय निविष्टभावे ।
किमप्रियं पश्यसि मन्निमित्तं हितानुकारिण्यथ वापि रामे ॥ १०२
परित्यजेयुः पितरो हि पुत्रान् भार्याः पतींश्चापि कृतानुरागाः ।
कृत्स्नं हि सर्वं कुपितं जगत् स्याद् दृष्ट्वैव रामं व्यसने निमग्नम् ॥ १०३
अहं पुनर्देवकुमाररूपमलंकृतं ते सुतमाव्रजन्तम् ।
नन्दामि पश्यन्नपि दर्शनेन भवामि दृष्ट्वैव पुनर्युवेव ॥ १०४
विनापि सूर्येण भवेत् प्रवृत्तिरवर्षता वज्रधरेण वापि ।
रामं तु गच्छन्तमितः समीक्ष्य जीवेन्न कश्चित्त्विति चेतना मे ॥ १०५
विनाशकामामहिताममित्रामावासयं मृत्युमिवात्मनस्त्वाम् ।
चिरं बताङ्केन धृतासि सर्पी महाविषा तेन हतोऽस्मि मोहात् ॥ १०६
मया च रामेण च लक्ष्मणेन प्रशास्तु हीनो भरतस्त्वया सह ।
पुरं च राष्ट्रं च महीं सपर्वतां ममाहितानां च भवाभिहर्षिणी[1] ॥ १०७
नृशंसवृत्ते व्यसनप्रहारिणि प्रसह्य वाक्यं यदिहाद्य भाषसे ।
न नाम ते केन मुखात् पतन्त्यधो विशीर्यमाणा दशनाः सहस्रधा ॥ १०८
न किंचिदाहाहितमप्रियं वचो न वेत्ति रामः परुषाणि भाषितुम् ।
कथं नु रामे ह्यभिरामवादिनि ब्रवीषि दोषान् गुणनित्यसंमते ॥ १०९

---

1. राजपुत्रीव्यपेदशमात्रेणेत्यर्थः । राजपुत्रि देवेनेति तिलकः । दुरवृष्टवशेनेत्यर्थः ॥

१. भवाभिभाविणीति तिलके पाठान्तरम् ।

प्रताम्य वा प्रज्वल वा प्रणश्य वा सहस्रशो वा स्फुटिता महीं व्रज ।
न ते करिष्यामि वचः सुदारुणं ममाहितं केकयराजपांसनि[१] ॥ ११०

क्षुरोपमां नित्यमसत्प्रियंवदां प्रदुष्टभावां स्वकुलोपघातिनीम् ।
न जीवितुं त्वां विषहेऽमनोरमां दिधक्षमाणां हृदयं सबन्धनम् ॥ १११

न जीवितं मेऽस्ति कुतः पुनः सुखं विनात्मजेनात्मवतः कुतो रतिः ।
ममाहितं देवि न कर्तुमर्हसि स्पृशामि पादावपि ते प्रसीद मे ॥ ११२

स भूमिपालो विलपन्ननाथवत् स्त्रिया गृहीतो हृदयेऽतिमात्रया ।
पपात देव्याश्चरणौ प्रसारितावुभावसंस्पृश्य यथातुरस्तथा ॥ ११३

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायां
अयोध्याकाण्डे कैकेयीनिवर्तनप्रयासो नाम द्वादशः सर्गः

## त्रयोदशः सर्गः

### दशरथविलापः

अतदर्हं[1] महाराजं शयानमतथोचितम्[2] । ययातिमिव पुण्यान्ते देवलोकात् परिच्युतम् ॥ १

अनर्थरूपासिद्धार्था ह्यभीता भयदर्शिनी । पुनराकारयामास तमेव वरमङ्गना ॥ २

त्वं कत्थसे महाराज सत्यवादी दृढव्रतः । मम चेमं वरं कस्माद्विधारयितुमिच्छसि ॥ ३

एवमुक्तस्तु कैकेय्या राजा दशरथस्तदा । प्रत्युवाच ततः क्रुद्धो मुहूर्तं विह्वलन्निव ॥ ४

मृते मयि गते रामे वनं मनुजपुंगवे । हन्तानार्ये ममामित्रे सकामा भव कैकयि[२] ॥ ५

स्वर्गेऽपि खलु रामस्य कुशलं दैवतैरहम् । प्रत्यादेशादभिहितं धारयिष्ये कथं बत ॥ ६

कैकेय्याः प्रियकामेन रामः प्रव्राजितो वनम् । यदि सत्यं ब्रवीम्येतत्तदसत्यं भविष्यति ॥ ७

अपुत्रेण मया पुत्रः श्रमेण महता महान् । रामो लब्धो महाबाहुः स कथं त्यज्यते मया ॥ ८

शूरश्च कृतविद्यश्च जितक्रोधः क्षमापरः । कथं कमलपत्राक्षो मया रामो विवास्यते ॥ ९

कथमिन्दीवरश्यामं दीर्घबाहुं महाबलम् । अभिराममहं रामं प्रेषयिष्यामि दण्डकान् ॥ १०

सुखानामुचितस्यैव दुःखैरनुचितस्य च । दुःखं नामानुपश्येयं कथं रामस्य धीमतः ॥ ११

यदि दुःखमनुत्पाद्य मम संक्रमणं भवेत् । अदुःखार्हस्य रामस्य ततः सुखमवाप्नुयाम् ॥ १२

नृशंसे पापसंकल्पे रामं सत्यपराक्रमम् । किं विप्रियेण कैकेयि प्रियं योजयसे मम ॥ १३

---

1. अतदर्हं भूप्रणामानर्हम् ।
2. अतथोचितं अधःशयनानर्हम् ।

१. पांसने प्र.
२. सकामा सुखिता भव ग. ङ. च.

अकीर्तिरतुला लोके ध्रुवः परिभवश्च मे[1] । तथा विलपतस्तस्य परिभ्रमितचेतसः ॥ १४
अस्तमभ्यागमत् सूर्यो रजनी चाभ्यवर्तत । सा त्रियामा तथार्तस्य चन्द्रमण्डलमण्डिता ॥ १५
राज्ञो विलपतस्तस्य न व्यभासत शर्वरी । तथैवोष्णं विनिश्वस्य वृद्धो दशरथो नृपः ॥ १६
विललापार्तवद्दुःखं गगनासक्तलोचनः । न प्रभातं त्वयेच्छामि निशे नक्षत्रभूषणे ॥ १७
क्रियतां मे दया भद्रे रचितोऽयं मयाञ्जलिः । अथवा गम्यतां शीघ्रं नाहमिच्छामि निर्घृणाम् ॥ १८
नृशंसां कैकयीं द्रष्टुं यत्कृते व्यसनं महत् । एवमुक्त्वा ततो राजा कैकेयीं संयताञ्जलिः ॥ १९
प्रसादयामास पुनः कैकेयीं[2] चेदमब्रवीत् । साधुवृत्तस्य दीनस्य त्वद्गतस्य गतायुषः ॥ २०
प्रसादः क्रियतां देवि मम[3] राज्ञो विशेषतः । शून्ये न खलु सुश्रोणि मयेदं समुदाहृतम् ॥ २१
कुरु साधु प्रसादं मे बाले सहृदया ह्यसि । प्रसीद देवि रामो मे त्वद्दत्तं राज्यमव्ययम् ॥ २२
लभतामसितापाङ्गे यशः परमवाप्स्यसि । मम रामस्य लोकस्य गुरूणां भरतस्य च ॥ २३
प्रियमेतद्गुरुश्रोणि कुरु चारुमुखेक्षणे ॥

विशुद्धभावस्य हि दुष्टभावा ताम्रेक्षणस्याश्रुकलस्य राज्ञः ।
श्रुत्वा विचित्रं करुणं विलापं भर्तुर्नृशंसा न चकार वाक्यम् ॥ २४
ततः स राजा पुनरेव मूर्छितः प्रियामतुष्टां प्रतिकूलभाषिणीम् ।
समीक्ष्य पुत्रस्य विवासनं प्रति क्षितौ विसंज्ञो निपपात दुःखितः ॥ २५
इतीव राज्ञो व्यथितस्य सा निशा जगाम घोरं श्वसतो मनस्विनः ।
विबोध्यमानः प्रतिबोधनं तदा निवारयामास स राजसत्तमः ॥ २६

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायां
अयोध्याकाण्डे दशरथविलापो नाम त्रयोदशः सर्गः

---

## चतुर्दशः सर्गः

### कैकेय्युपालम्भः

पुत्रशोकार्दितं पापा विसंज्ञं पतितं भुवि । विचेष्टमानमुद्वीक्ष्य सैक्ष्वाकमिदमब्रवीत् ॥ १
पापं कृत्वैव किमिदं मम संश्रुत्य संश्रवम् । शेषे क्षितितले सन्नः स्थित्यां स्थातुं त्वमर्हसि ॥ २
आहुः सत्यं हि परमं धर्मं धर्मविदो[3] जनाः । सत्यमाश्रित्य च मया त्वं धर्मं प्रति चोदितः ॥ ३
संश्रुत्य शैब्यः श्येनाय स्वां तनुं जगतीपतिः । प्रदाय पक्षिणे राजा जगाम गतिमुत्तमाम् ॥ ४

---

१. ध्रुवं परिभविष्यति ति. रा. ३. राजधर्मवित् प्र.
२. तव छ. ४. भद्रे प्र.

तथा ह्यलर्कस्तेजस्वी ब्राह्मणे वेदपारगे । याचमाने स्वके नेत्रे उद्धृत्याविमना ददौ ॥ ५
सरितां तु पतिः स्वल्पां मर्यादां सत्यमन्वितः । सत्यानुरोधात् समये वेलां स्वां नातिवर्तते ॥ ६
सत्यमेकपदं ब्रह्म सत्ये धर्मः प्रतिष्ठितः । सत्यमेवाक्षया वेदाः सत्येनैवाप्यते परम् ॥ ७
सत्यं समनुवर्तस्व यदि धर्मे धृता मतिः । स वरः सफलो मेऽस्तु वरदो ह्यसि सत्तम ॥ ८
धर्मस्यैवाभिकामार्थं मम चैवाभिचोदनात् । प्रव्राजय सुतं रामं त्रिः खलु त्वां ब्रवीम्यहम् ॥ ९
समयं च ममार्येमं यदि त्वं न करिष्यसि । अग्रतस्ते परित्यक्ता परित्यक्ष्यामि जीवितम् ॥ १०
एवं प्रचोदितो राजा कैकेय्या निर्विशङ्कया । नाशकत् पाशमुन्मोक्तुं बलिरिन्द्रकृतं यथा ॥ ११
उद्भ्रान्तहृदयश्चापि विवर्णवदनोऽभवत् । स धुर्यो वै परिस्पन्दन् युगचक्रान्तरं यथा ॥ १२
विह्वलाभ्यां च नेत्राभ्यां पश्यन्निव स भूपतिः । कृच्छ्राद्धैर्येण संस्तभ्य कैकेयीमिदमब्रवीत् ॥ १३
यस्ते मन्त्रकृतः पाणिरग्नौ पापे मया धृतः । तं त्यजामि स्वयं चैव तव पुत्रं सह त्वया ॥ १४
प्रयाता रजनी देवि सूर्यस्योदयनं प्रति । [1]अभिषेकाय हि जनस्त्वरयिष्यति मां ध्रुवम् ॥ १५
रामाभिषेकसंभारैस्तदर्थमुपकल्पितैः । रामः कारयितव्यो मे मृतस्य सलिलक्रियाम् ॥ १६
त्वया सपुत्रया नैव कर्तव्या सलिलक्रिया । व्याहन्तास्यशुभाचारे यदि रामाभिषेचनम् ॥ १७
न शक्तोऽद्यास्म्यहं द्रष्टुं दृष्ट्वा पूर्वं तथामुखम् । हतहर्षं निरानन्दं पुनर्जनमवाङ्मुखम् ॥ १८
तां तथा ब्रुवतस्तस्य भूमिपस्य महात्मनः । प्रभाता शर्वरी पुण्या चन्द्रनक्षत्रशालिनी ॥ १९
ततः पापसमाचारा कैकेयी पार्थिवं पुनः । उवाच परुषं वाक्यं वाक्यज्ञा रोषमूर्छिता ॥ २०
किमिदं भाषसे राजन् वाक्यं [2]गररुजोपमम् । आनाययितुमक्लिष्टं पुत्रं राममिहार्हसि ॥ २१
स्थाप्य राज्ये मम सुतं कृत्वा रामं वनेचरम् । निःसपत्नां च मां कृत्वा कृतकृत्यो भविष्यसि ॥ २२
स तुन्न इव तीक्ष्णेन प्रतोदेन हयोत्तमः । राजा प्रचोदितोऽभीक्ष्णं कैकेय्या वाक्यमब्रवीत् ॥ २३
धर्मबन्धेन बद्धोऽस्मि नष्टा च मम चेतना । ज्येष्ठं पुत्रं प्रियं रामं द्रष्टुमिच्छामि धार्मिकम् ॥ २४
ततः प्रभातां रजनीमुदिते च दिवाकरे । पुण्ये नक्षत्रयोगे च मुहूर्ते च समागते ॥ २५
वसिष्ठो गुणसंपन्नः शिष्यैः परिवृतस्तदा । उपगृह्याशु संभारान् प्रविवेश पुरोत्तमम् ॥ २६
सिक्तसंमार्जितपथां पताकोत्तमभूषिताम् । विचित्रकुसुमाकीर्णां नानास्रग्भिर्विराजिताम्[3] ॥ २७
संहृष्टमनुजोपेतां समृद्धविपणापणाम् । महोत्सवसमाकीर्णां राघवार्थे समुत्सुकाम् ॥ २८
चन्दनागरुधूपैश्च सर्वतः परिधूपिताम् । तां पुरीं समतिक्रम्य पुरंदरपुरोपमाम् ॥ २९
ददर्शान्तःपुरं श्रीमान् नानाद्विजगणायुतम् । पौरजानपदाकीर्णं ब्राह्मणैरुपशोभितम् ॥ ३०
[4]यज्ञविद्भिः सुसंपूर्णं सदस्यैः परमर्चितैः । तदन्तःपुरमासाद्य व्यतिचक्राम तं जनम् ॥ ३१
वसिष्ठः परमप्रीतः परमर्षिभिरावृतः । स त्वपश्यद्विनिष्क्रान्तं सुमन्त्रं नाम सारथिम् ॥ ३२

---

१. अभिषेकं गुरुजनः ख. ग.
२. वाक्यमज्ञवचोपमम् ख. ग.
३. इदमर्धम् ग. नास्ति ।
४. वह्निमद्भिः प्र.

द्वारे मनुजसिंहस्य सचिवं प्रियदर्शनम् । तमुवाच महातेजाः सूतपुत्रं विशारदम् ॥ ३३
वसिष्ठः क्षिप्रमाचक्ष्व नृपतेर्मामिहागतम् । इमे गङ्गोदकघटाः सागरेभ्यश्च काञ्चनाः ॥ ३४
औदुम्बरं भद्रपीठमभिषेकार्थमाहृतम् । सर्वबीजानि गन्धाश्च रत्नानि विविधानि च ॥ ३५
क्षौद्रं दधि घृतं लाजा दर्भाः सुमनसः पयः । अष्टौ च कन्या रुचिरा मत्तश्च वरवारणः ॥ ३६
चतुरश्वो रथः श्रीमान्निस्त्रिंशो धनुरुत्तमम् । वाहनं नरसंयुक्तं छत्रं च शशिसंनिभम् ॥ ३७
श्वेते च वालव्यजने भृङ्गारश्च हिरण्मयः । हेमदामपिनद्धश्च ककुद्मान् पाण्डरो वृषः ॥ ३८
केसरी च चतुर्दंष्ट्रो हरिश्रेष्ठो महाबलः । सिंहासनं व्याघ्रतनुः समिद्धश्च हुताशनः ॥ ३९
सर्ववादित्रसङ्घाश्च वेश्याश्चालंकृताः स्त्रियः । आचार्या ब्राह्मणा गावः पुण्याश्च मृगपक्षिणः ॥ ४०
पौरजानपदश्रेष्ठा नैगमाश्च गणैः सह । एते चान्ये च बहवः प्रीयमाणाः प्रियंवदाः ॥ ४१
अभिषेकाय रामस्य सह तिष्ठन्ति पार्थिवैः । त्वरयस्व महाराजं यथा समुदितेऽहनि ॥ ४२
पुण्ये नक्षत्रयोगे च रामो राज्यमवाप्नुयात् । इति तस्य वचः श्रुत्वा सूतपुत्रो महात्मनः ॥ ४३
स्तुवन्नृपतिशार्दूलं प्रविवेश निवेशनम् । तं तु पूर्वोदितं वृद्धं द्वारस्था राजसंमताः ॥ ४४
न शेकुरभिसंरोद्धुं राज्ञः प्रियचिकीर्षवः । स समीपस्थितो राज्ञस्तामवस्थामजज्ञिवान् ॥ ४५
वाग्भिः परमतुष्टाभिरभिष्टोतुं प्रचक्रमे । ततः सूतो यथाकालं पार्थिवस्य निवेशने ॥ ४६
सुमन्त्रः प्राञ्जलिर्भूत्वा तुष्टाव जगतीपतिम् । यथा नन्दति तेजस्वी सागरो भास्करोदये ॥ ४७
प्रीतः प्रीतेन मनसा तथा नन्दय नः स्वतः । इन्द्रमस्यां तु वेलायामभितुष्टाव मातलिः ॥ ४८
सोऽजयद्दानवान् सर्वांस्तथा त्वां बोधयाम्यहम् । वेदाः सहाङ्गविद्याश्च यथा ह्यात्मभुवं विभुम् ॥ ४९
ब्रह्माणं बोधयन्त्यद्य तथा त्वां बोधयाम्यहम् । आदित्यः सह चन्द्रेण यथा भूतधरां शुभाम् ॥ ५०
बोधयत्यद्य पृथिवीं तथा त्वां बोधयाम्यहम् । उत्तिष्ठाशु महाराज कृतकौतुकमङ्गलः ॥ ५१
विराजमानो वपुषा मेरोरिव दिवाकरः । सोमसूर्यौ च काकुत्स्थ शिववैश्रवणावपि ॥ ५२
वरुणश्चाग्निरिन्द्रश्च विजयं प्रदिशन्तु ते । गता भगवती रात्रिरहः शिवमुपस्थितम् ॥ ५३
बुध्यस्व राजशार्दूल कुरु कार्यमनन्तरम् । उदतिष्ठत रामस्य समग्रमभिषेचनम् ॥ ५४
पौरजानपदैश्चापि नैगमैश्च कृतात्मभिः । स्वयं वसिष्ठो भगवान् ब्राह्मणैः सह तिष्ठति ॥ ५५
क्षिप्रमाज्ञाप्यतां राजन् राघवस्याभिषेचनम् । यथा ह्यपालाः पशवो यथा सेना ह्यनायका ॥ ५६
यथा चन्द्रं विना रात्रिर्यथा गावो विना वृषम् । एवं हि भविता राष्ट्रं यत्र राजा न दृश्यते ॥ ५७
इति तस्य वचः श्रुत्वा सान्त्वपूर्वमिवार्थवत् । अभ्यकीर्यत शोकेन भूय एव महीपतिः ॥ ५८
ततः स राजा तं सूतं सन्नहर्षः सुतं प्रति । शोकरक्तेक्षणः श्रीमानुद्वीक्ष्योवाच धार्मिकः ॥ ५९
वाक्यैस्तु खलु मर्माणि मम भूयो निकृन्तसि । सुमन्त्रः करुणं श्रुत्वा दृष्ट्वा दीनं च पार्थिवम् ॥ ६०
प्रगृहीताञ्जलिः प्रह्वस्तस्माद्देशादपाक्रमत् । यदा वक्तुं स्वयं दैन्यान्न शशाक महीपतिः ॥ ६१

---

१. इतः पूर्वं—प्रतिबुध्यस्व राजर्षे कृतं कृत्यमिदं तव । इति अधिकं ह्म.

तदा सुमन्त्रं मन्त्रज्ञा कैकेयी प्रत्युवाच ह । सुमन्त्र राजा रजनीं रामहर्षसमुत्सुकः ॥ ६२
प्रजागरपरिश्रान्तो निद्राया वशमेयिवान् । तद्गच्छ त्वरितं सूत राजपुत्रं यशस्विनम् ॥ ६३
राममानय भद्रं ते नात्र कार्या विचारणा । स मन्यमानः कल्याणं हृदयेन ननन्द च ॥ ६४
निर्जगाम च संप्रीत्या त्वरितो राजशासनात् । सुमन्त्रश्चिन्तयामास त्वरितं चोदितस्तया ॥ ६५
व्यक्तं रामोऽभिषेकार्थमिहायास्यति धर्मवित् । इति सूतो मतिं कृत्वा हर्षेण महता वृतः ॥ ६६
निर्जगाम महाबाहो राघवस्य दिदृक्षया । सागरह्रदसंकाशात् सुमन्त्रोऽन्तःपुराच्छुभात् ॥ ६७
निष्क्रम्य जनसंबाधं ददर्श द्वारमग्रतः ॥

तत: पुरस्तात् सहसा विनिर्गतो महीपतीन् द्वारगतान् विलोकयन् ।
ददर्श पौरान् विविधान् महाधनानुपस्थितान् द्वारमुपेत्य विष्ठितान् ॥ ६८

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायां
अयोध्याकाण्डे कैकेय्युपालम्भो नाम चतुर्दशः सर्गः

---

## पञ्चदशः सर्गः

### सुमन्त्रप्रेषणम्

ते तु तां रजनीमुष्य ब्राह्मणा वेदपारगाः । उपतस्थुरुपस्थातुं सभां राजपुरोहिताः[3] ॥ १
अमात्या बलमुख्याश्च मुख्या ये निगमस्य च । राघवस्याभिषेकार्थं प्रीयमाणास्तु संगताः ॥ २
उदिते विमले सूर्ये पुष्ये चाभ्यागतेऽहनि । लग्ने कर्कटके प्राप्ते चन्द्रे रामस्य च स्थिते ॥ ३
अभिषेकाय रामस्य द्विजेन्द्रैरुपकल्पितम् । काञ्चना जलकुम्भाश्च भद्रपीठं स्वलंकृतम् ॥ ४
रथश्च सम्यगास्तीर्णो भास्वता व्याघ्रचर्मणा । गङ्गायमुनयोः पुण्यात् संगमादाहृतं जलम् ॥ ५
याश्चान्याः सरितः पुण्या ह्रदाः कूपाः सरांसि च । प्राग्वाहाश्चोर्ध्ववाहाश्च तिर्यग्वाहाः समाहिताः ॥ ६
ताभ्यश्चैवाहृतं तोयं समुद्रेभ्यश्च सर्वशः । सलाजाः क्षीरिभिश्छन्ना घटाः काञ्चनराजताः ॥ ७
पद्मोत्पलयुता भान्ति पूर्णाः परमवारिणा । क्षौद्रं दधि घृतं लाजा दर्भाः सुमनसः पयः ॥ ८
वेश्याश्चैव शुभाचाराः सर्वाभरणभूषिताः[4] । चन्द्रांशुविकचप्रख्यं काञ्चनं रत्नभूषितम् ॥ ९
सज्जं तिष्ठति रामस्य वालव्यजनमुत्तमम् । चन्द्रमण्डलसंकाशमातपत्रं च पाण्डरम् ॥ १०
सज्जं द्युतिकरं श्रीमदभिषेकपुरस्कृतम् । पाण्डरश्च वृषः सज्जः पाण्डरोऽश्वश्च सुस्थितः ॥ ११
प्रसृतश्च गतः श्रीमानौपवाह्यः प्रतीक्षते । अष्टौ च कन्या माङ्गल्याः सर्वाभरणभूषिताः ॥ १२

---

१. अस्यानन्तरम्—अश्रुत्वा राजवचनं कथं गच्छामि भामिनि । तच्छ्रुत्वा मन्त्रिणो वाक्यं राजा मन्त्रिणमब्रवीत् ॥ सुमन्त्र रामं द्रक्ष्यामि शीघ्रमानय सुन्दरम् । इति ग.

२. इदमर्धम् ग. नास्ति ।

३. उपतस्थुरुपस्थानं सहराजपुरोहिताः ङ. ञ.

४. क्षीरिणः प्र.

५. अस्य स्थाने—अष्टौ च कन्या रुचिरा मत्तश्च वरवारणः—इति ग.

वादित्राणि च सर्वाणि बन्दिनश्च तथा परे । इक्ष्वाकूणां यथा राज्ये संभ्रियेताभिषेचनम् ॥ १३
तथाजातीयमादाय राजपुत्राभिषेचनम् । ते राजवचनात्तत्र समवेता महीपतिम् ॥ १४
अपश्यन्तोऽब्रुवन् को नु राज्ञो नः प्रतिवेदयेत् । न पश्यामश्च राजानमुदितश्च दिवाकरः ॥ १५
यौवराज्याभिषेकश्च सज्जो रामस्य धीमतः । इति तेषु ब्रुवाणेषु सार्वभौमान् महीपतीन् ॥ १६
अब्रवीत्तानिदं सर्वान् सुमन्त्रो राजसत्कृतः । रामं राज्ञो नियोगेन त्वरया प्रस्थितोऽस्म्यहम् ॥ १७
पूज्या राज्ञो भवन्तस्तु रामस्य च विशेषतः । अहं पृच्छामि वचनात् सुखमायुष्मतामहम् ॥ १८
राज्ञः संप्रतिबुद्धस्य यच्चागमनकारणम् । इत्युक्त्वान्तःपुरद्वारमाजगाम पुराणवित् ॥ १९
सदा सक्तं च तद्वेश्म सुमन्त्रः प्रविवेश ह[1] । तुष्टावास्य तदा वंशं प्रविश्य च विशां पतेः ॥ २०
शयनीयं नरेन्द्रस्य तदासाद्य व्यतिष्ठत । सोऽत्यासाद्य तु तद्वेश्म तिरस्करणिमन्तरा ॥ २१
आशीर्भिर्गुणयुक्ताभिरभितुष्टाव राघवम् । सोमसूर्यौ च काकुत्स्थ शिववैश्रवणावपि ॥ २२
वरुणश्चाग्निरिन्द्रश्च विजयं प्रदिशन्तु ते । गता भगवती रात्रिः [2]कृतं कृत्यमिदं तव ॥ २३
बुध्यस्व नृपशार्दूल कुरु कार्यमनन्तरम् । ब्राह्मणा बलमुख्याश्च नैगमाश्चागता नृप ॥ २४
दर्शनं तेऽभिकाङ्क्षन्ते प्रतिबुध्यस्व राघव । स्तुवन्तं तं तदा सूतं सुमन्त्रं मन्त्रकोविदम् ॥ २५
प्रतिबुध्य ततो राजा इदं वचनमब्रवीत् । राममानय सूतेति यदस्यभिहितोऽनया ॥ २६
किमिदं कारणं येन ममाज्ञा प्रतिहन्यते । न चैव संप्रसुप्तोऽहमानयेहाशु राघवम् ॥ २७
इति राजा दशरथः सूतं तत्रान्वशात् पुनः । स राजवचनं श्रुत्वा शिरसा प्रतिपूज्य तम् ॥ २८
निर्जगाम नृपावासान्मन्यमानः प्रियं महत् । प्रपन्नो राजमार्गं च पताकाध्वजशोभितम् ॥ २९
हृष्टः प्रमुदितः सूतो जगामाशु विलोकयन् । स सूतस्तत्र शुश्राव रामाधिकरणाः कथाः ॥ ३०
अभिषेचनसंयुक्ताः सर्वलोकस्य हृष्टवत् । ततो ददर्श रुचिरं कैलासशिखरप्रभम् ॥ ३१
रामवेश्म सुमन्त्रस्तु शक्रवेश्मसमप्रभम् । महाकवाटसंयुक्तं वितर्दिशतशोभितम् ॥ ३२
काञ्चनप्रतिमैकाग्रं मणिविद्रुमतोरणम् । शारदाभ्रघनप्रख्यं दीप्तं मेरुगुहोपमम् ॥ ३३
मणिभिर्वरमाल्यानां सुमहद्भिरलंकृतम् । मुक्तामणिभिराकीर्णं चन्दनागरुधूपितम् ॥ ३४
गन्धान् मनोज्ञान् विसृजद्दार्दुरं शिखरं यथा । सारसैश्च मयूरैश्च निनदद्भिर्विराजितम् ॥ ३५
सुकृतेहामृगाकीर्णं सुकीर्णं भित्तिभिस्तथा । मनश्चक्षुश्च भूतानामाददत्तिग्मतेजसा ॥ ३६
चन्द्रभास्करसंकाशं कुबेरभवनोपमम् । महेन्द्रधामप्रतिमं नानापक्षिसमाकुलम् ॥ ३७
मेरुशृङ्गसमं सूतो रामवेश्म ददर्श ह । उपस्थितैः समाकीर्णं जनैरञ्जलिकारिभिः ॥ ३८
उपादाय समाक्रान्तैस्तथा जानपदैर्जनैः । रामाभिषेकसुमुखैरुन्मुखैः समलंकृतम् ॥ ३९
महामेघसमप्रख्यमुदग्रं सुविभूषितम् । नानारत्नसमाकीर्णं कुब्जकैरातकावृतम् ॥ [3]४०

---

१. नवा प्र. २. इदमर्धं व. नास्ति । ३. महाहिशवमुपस्थितम् इ. ज.

स वाजियुक्तेन रथेन सारथिर्नराकुलं राजकुलं विलोकयन् ।
वरूथिना रामगृहाभिपातिना पुरस्य सर्वस्य मनांसि रञ्जयन् ॥ ४१

ततः समासाद्य महाधनं महत् प्रहृष्टरोमा स बभूव सारथिः ।
मृगैर्मयूरैश्च समाकुलोल्बणं गृहं वरार्हस्य शचीपतेरिव ॥ ४२

स तत्र कैलासनिभाः स्वलंकृताः प्रविश्य कक्ष्यास्त्रिदशालयोपमाः ।
प्रियान्नरान् राममते स्थितान् बहूनपोह्य शुद्धान्तमुपस्थितो रथी ॥ ४३

स तत्र शुश्राव च हर्षयुक्ता रामाभिषेकार्थयुता जनानाम् ।
नरेन्द्रसूनोरभिमङ्गलार्थाः सर्वस्य लोकस्य गिरः प्रसृष्टाः ॥ ४४

महेन्द्रसद्मप्रतिमं तु वेश्म रामस्य रम्यं मृगपक्षिजुष्टम् ।
ददर्श मेरोरिव शृङ्गमुच्चं विभ्राजमानं प्रभया सुमन्त्रः ॥ ४५

उपस्थितैरञ्जलिकारिभिश्च सोपायनैर्जानपदैरनेकैः ।
कोट्या परार्ध्यैश्च विमुक्तयानैः समाकुलं द्वारपथं ददर्श ॥ ४६

ततो महामेघमहीधराभं [1]प्रभिन्नमत्यङ्कुशमप्रसह्यम् ।
रामौपवाह्यं रुचिरं ददर्श शत्रुंजयं नागमुदग्रकायम् ॥ ४७

स्वलंकृतान् साश्वरथान् सकुञ्जरानमात्यमुख्याञ्शतशश्च वल्लभान् ।
व्यपोह्य सूतः सहितान् समन्ततः समृद्धमन्तःपुरमाविवेश ॥ ४८

तदद्रिकूटाचलमेघसंनिभं महाविमानोत्तमवेश्मसंघवत् ।
अवार्यमाणः प्रविवेश सारथिः प्रभूतरत्नं मकरो यथार्णवम् ॥ ४९

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायां
अयोध्याकाण्डे सुमन्त्रप्रेषणं नाम पञ्चदशः सर्गः

---

## षोडशः सर्गः

### रामप्रस्थानम्

स तदन्तःपुरद्वारं समतीत्य जनाकुलम् । प्रविविक्तां ततः कक्ष्यामाससाद पुराणवित् ॥ १

प्रासकार्मुकबिभ्रद्भिर्युवभिर्मृष्टकुण्डलैः । अप्रमादिभिरेकाग्रैः स्वनुरक्तैरधिष्ठिताम् ॥ २

तत्र काषायिणो वृद्धान् वेत्रपाणीन् स्वलंकृतान् । ददर्श निष्ठितान् द्वारि स्त्र्यध्यक्षान् सुसमाहितान् ॥ ३

ते समीक्ष्य समायान्तं रामप्रियचिकीर्षवः । सहसोत्पतिताः सर्वे स्वासनेभ्यः ससंभ्रमम् ॥ ४

तानुवाच विनीतात्मा [1]सूतपुत्रः प्रदक्षिणः । क्षिप्रमाख्यात रामाय सुमन्त्रो द्वारि तिष्ठति ॥ ५

ते राममुपसंगम्य भर्तुः प्रियचिकीर्षवः । सहभार्याय रामाय क्षिप्रमेवाचचक्षिरे ॥ ६

---

1. प्रभिन्नं मत्तम् ।

१. सुमन्त्रः प्रविचक्षणः प्र.

प्रतिवेदितमाज्ञाय सूतमभ्यन्तरं पितुः । तत्रैवानाययामास राघवः प्रियकाम्यया[1] ॥ ७
तं वैश्रवणसंकाशमुपविष्टं स्वलंकृतम् । ददर्श सूतः पर्यङ्के सौवर्णे सोत्तरच्छदे ॥ ८
वराहरुधिराभेण शुचिना च सुगन्धिना । अनुलिप्तं परार्ध्येन चन्दनेन परंतपम् ॥ ९
स्थितया पार्श्वतश्चापि वालव्यजनहस्तया । उपेतं सीतया भूयश्चित्रया शशिनं यथा ॥ १०
तं तपन्तमिवादित्यमुपपन्नं स्वतेजसा । ववन्दे वरदं वन्दी विनयज्ञो विनीतवत् ॥ ११
प्राञ्जलिस्तु सुखं पृष्ट्वा विहारशयनासने । राजपुत्रमुवाचेदं सुमन्त्रो राजसत्कृतः ॥ १२
कौसल्यासुप्रजा राम पिता त्वां द्रष्टुमिच्छति । महिष्या सह कैकेय्या गम्यतां तत्र मा चिरम् ॥ १३
एवमुक्तस्तु संहृष्टो नरसिंहो महाद्युतिः । ततः संमानयामास सीतामिदमुवाच ह ॥ १४
देवि देवश्च देवी च समागम्य मदन्तरे । मन्त्रयेते ध्रुवं किंचिदभिषेचनसंहितम् ॥ १५
लक्षयित्वा ह्यभिप्रायं प्रियकामा सुदक्षिणा । संचोदयति राजानं मदर्थं मदिरेक्षणे ॥ १६
सा प्रहृष्टा महाराजं हितकामानुवर्तिनी । जननी चार्थकामा मे केकयाधिपतेः सुता ॥ १७
दिष्ट्या खलु महाराजो महिष्या प्रियया सह । सुमन्त्रं प्राहिणोद्दूतमर्थकामकरं मम ॥ १८
यादृशी परिषत्तत्र तादृशो दूत आगतः । ध्रुवमद्यैव मां राजा यौवराज्येऽभिषेक्ष्यति ॥ १९
हन्त शीघ्रमितो गत्वा द्रक्ष्यामि च महीपतिम् । सह त्वं परिवारेण सुखमास्व रमस्व च ॥ २०
पतिसंमानिता सीता भर्तारमसितेक्षणा । आ द्वारमनुवव्राज मङ्गलान्यभिदध्युषी ॥ २१
राज्यं द्विजातिभिर्जुष्टं राजसूयाभिषेचनम् । कर्तुमर्हति ते राजा वासवस्येव लोककृत् ॥ २२
दीक्षितं व्रतसंपन्नं वराजिनधरं शुचिम् । कुरङ्गशृङ्गपाणिं च पश्यन्ती त्वां भजाम्यहम् ॥ २३
पूर्वां दिशं वज्रधरो दक्षिणां पातु ते यमः । वरुणः पश्चिमामाशां धनेशस्तूत्तरां दिशम् ॥ २४
अथ सीतामनुज्ञाप्य कृतकौतुकमङ्गलः । निश्चक्राम सुमन्त्रेण सह रामो निवेशनात् ॥ २५
पर्वतादिव निष्क्रम्य सिंहो गिरिगुहाशयः । लक्ष्मणं द्वारि सोऽपश्यत् प्रह्वाञ्जलिपुटं स्थितम् ॥ २६
अथ मध्यमकक्ष्यायां समागच्छत्[2] सुहृज्जनैः । स सर्वानर्थिनो दृष्ट्वा समेत्य प्रतिनन्द्य[3] च ॥ २७
ततः [4]पर्वतसंकाशमारुरोह रथोत्तमम् । वैयाघ्रं पुरुषव्याघ्रो राजतं राजनन्दनः ॥ २८
मेघनादमसंबाधं मणिविद्रुमभूषितम्[5] । मुष्णन्तमिव चक्षूंषि प्रभया सूर्यवर्चसम् ॥ २९
करेणुशिशुकल्पैश्च युक्तं परमवाजिभिः । हरियुक्तं सहस्राक्षो रथमिन्द्र इवाशुगम् ॥ ३०
प्रययौ तूर्णमास्थाय राघवो ज्वलितः श्रिया । स पर्जन्य इवाकाशे स्वनवानभिनादयन् ॥ ३१
निकेतान्निर्ययौ श्रीमान् महाभ्रादिव चन्द्रमाः । छत्रचामरपाणिस्तु लक्ष्मणो राघवानुजः ॥ ३२
जुगोप भ्रातरं भ्राता रथमास्थाय पृष्ठतः । ततो हलहलाशब्दस्तुमुलः समजायत ॥ ३३

---

१. राघवप्रियकाम्यया च. छ.
२. समागम्य च.
३. च ननन्द ख.
४. पावक- च. झ. ञ.
५. मणिहेमविभूषितम् च. छ.

तस्य निष्क्रममाणस्य जनौघस्य समन्ततः । ततो ह्यवरा मुख्या नागाश्च गिरिसंनिभाः ॥ ३४
अनुजग्मुस्तदा रामं शतशोऽथ सहस्रशः । अग्रतश्चास्य संनद्धाश्चन्दनागरुरूषिताः ॥ ३५
खड्गचापधराः शूरा जग्मुराशंसवो जनाः । ततो वादित्रशब्दाश्च स्तुतिशब्दाश्च वन्दिनाम् ॥ ३६
सिंहनादाश्च शूराणां तथा शुश्रुविरे पथि । हर्म्यवातायनस्थाभिर्भूषिताभिः समन्ततः ॥ ३७
कीर्यमाणः सुपुष्पौघैर्ययौ स्त्रीभिररिंदमः । रामं सर्वानवद्याङ्ग्यो रामपिप्रीषया ततः[1] ॥ ३८
वचोभिरग्र्यैर्हर्म्यस्थाः क्षितिस्थाश्च ववन्दिरे । नूनं नन्दति ते माता कौसल्या मातृनन्दन ॥ ३९
पश्यन्ती सिद्धयात्रं त्वां पित्र्यं राज्यमवस्थितम् । सर्वसीमन्तिनीभ्यश्च सीतां सीमन्तिनीं वराम् ॥ ४०
अमन्यन्त हि ता नार्यो रामस्य हृदयप्रियाम् । तया सुचरितं देव्या पुरा नूनं महत्तपः ॥ ४१
रोहिणीव शशाङ्केन रामसंयोगमाप या । इति प्रासादशृङ्गेषु प्रमदाभिर्नरोत्तमः ॥ ४२
शुश्राव राजमार्गस्थः प्रिया वाच उदाहृताः । आत्मसंपूजनैः शृण्वन् ययौ रामो महापथम्[1] ॥ ४३

स राघवस्तत्र कथाप्रपञ्चाञ्शुश्राव लोकस्य समागतस्य ।
आत्माधिकारा विविधाश्च वाचः प्रहृष्टरूपस्य पुरे जनस्य ॥ ४४
एष श्रियं गच्छति राघवोऽद्य राजप्रसादाद्विपुलां गमिष्यन् ।
एते वयं सर्वसमृद्धकामा येषामयं नो भविता प्रशास्ता ॥ ४५
लाभो जनस्यास्य यदेष सर्वं प्रपत्स्यते राष्ट्रमिदं चिराय ।
न ह्यप्रियं किंचन जातु कश्चित् पश्येन्न दुःखं मनुजाधिपेऽस्मिन् ॥ ४६
स घोषवद्भिश्च हयैर्मतङ्गजैः पुरःसरैः स्वस्तिकसूतमागधैः ।
महीयमानः प्रवरैश्च वादकैरभिष्टुतो वैश्रवणो यथा ययौ ॥ ४७
करेणुमातङ्गरथाश्वसंकुलं महाजनौघप्रतिपूर्णचत्वरम् ।
प्रभूतरत्नं बहुपण्यसंचयं ददर्श रामो रुचिरं महापथम् ॥ ४८

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायां अयोध्याकाण्डे रामप्रस्थानं नाम षोडशः सर्गः

---

## सप्तदशः सर्गः

### रामागमनम्

स रामो रथमास्थाय संप्रहृष्टसुहृज्जनः । पताकाध्वजसंपन्नं महार्हागरुधूपितम् ॥ १
अपश्यन्नगरं श्रीमान्नानाजनसमाकुलम् । स गृहैरभ्रसंकाशैः पाण्डरैरुपशोभितम् ॥ २
राजमार्गं ययौ रामो मध्येनागरुधूपितम् । चन्दनानां च मुख्यानामगरूणां च संचयैः ॥ ३

---

1. आत्मसंपूजनैरित्युपलक्षणे तृतीया । उपलक्षिता वाचः शृण्वन् यथाविलनुषङ्गेण योज्यम् । इदमर्धम् छ. झ. ञ. दृश्यते ।

१. रामप्रियचिकीर्षया च. छ.
२. एतां प्र.

उत्तमानां च गन्धानां क्षौमकौशाम्बरस्य च । अविद्धाभिश्च मुक्ताभिरुत्तमैः स्फाटिकैरपि ॥ ४
शोभमानमसंबाधं तं राजपथमुत्तमम् । संवृतं विविधैः पण्यैर्भक्ष्यैरुच्चावचैरपि ॥ ५
ददर्श तं राजपथं दिवि देवपथं यथा । दध्यक्षतहविर्लाजैर्धूपैरगरुचन्दनैः ॥ ६
नानामाल्योपगन्धैश्च सदाभ्यर्चितचत्वरम् । आशीर्वादान् बहून् शृण्वन् सुहृद्भिः समुदीरितान् ॥७
यथार्हं चापि संपूज्य सर्वानेव नरान् ययौ । पितामहैराचरितं तथैव प्रपितामहैः ॥ ८
अद्योपादाय तं मार्गमभिषिक्तोऽनुपालय । यथा स्म लालिताः पित्रा यथा पूर्वैः पितामहैः ॥ ९
ततः सुखतरं रामे वत्स्यामः सति राजनि । अलमद्य हि भुक्तेन परमार्थैरलं च नः ॥ १०
यथा पश्येम निर्यान्तं रामं राज्ये प्रतिष्ठितम् । ततो हि नः प्रियतरं नान्यत् किंचिद्भविष्यति ॥ ११
यथाभिषेको रामस्य राज्येनामिततेजसः । एताश्चान्याश्च सुहृदामुदासीनः कथाः शुभाः ॥ १२
आत्मसंपूजनीः शृण्वन् ययौ रामो महापथम् । न हि तस्मान्मनः कश्चिच्चक्षुषी वा नरोत्तमात् ॥१३
नरः शक्नोत्यपाक्रष्टुमतिक्रान्तेऽपि राघवे । यश्च रामं न पश्येत्तु यं च रामो न पश्यति ॥ १४
निन्दितः स भवेल्लोके स्वात्माप्येनं विगर्हते । सर्वेषां हि स धर्मात्मा वर्णानां कुरुते दयाम् ॥ १५
चतुर्णां हि वयःस्थानां तेन ते तमनुव्रताः । चतुष्पथान् देवपथांश्चैत्यान्यायतनानि च ॥ १६
प्रदक्षिणं परिहरन् जगाम नृपतेः सुतः । स राजकुलमासाद्य मेघसंघोपमैः शुभैः ॥ १७
प्रासादशृङ्गैर्विविधैः कैलासशिखरोपमैः । आवारयद्भिर्गगनं विमानैरिव पाण्डरैः ॥ १८
वर्धमानगृहैश्चापि रत्नजालपरिष्कृतैः । तत् पृथिव्यां गृहवरं महेन्द्रभवनोपमम् ॥ १९
राजपुत्रः पितुर्वेश्म प्रविवेश श्रिया ज्वलन् । स कक्ष्या धन्विभिर्गुप्तास्तिस्रोऽतिक्रम्य वाजिभिः॥२०
पदातिरपरे कक्ष्ये द्वे जगाम नरोत्तमः । स सर्वाः समतिक्रम्य कक्ष्या दशरथात्मजः ॥ २१
संनिवर्त्य जनं सर्वं शुद्धान्तं पुनरभ्यगात् ॥

ततः प्रविष्टे पितुरन्तिकं तदा जनः स सर्वो मुदितो नृपात्मजे ।
प्रतीक्षते तस्य पुनर्विनिर्गमं यथोदयं चन्द्रमसः सरित्पतिः ॥ २२

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायां
अयोध्याकाण्डे रामागमनं नाम सप्तदशः सर्गः

---

## अष्टादशः सर्गः

### वनवासनिदेशः

स ददर्शासने रामो निषण्णं पितरं शुभे । कैकेयीसहितं दीनं मुखेन परिशुष्यता ॥ १
स पितुश्चरणौ पूर्वमभिवाद्य विनीतवत् । ततो ववन्दे चरणौ कैकेय्याः सुसमाहितः[1] ॥ २
रामेत्युक्त्वा च वचनं बाष्पपर्याकुलेक्षणः । शशाक नृपतिर्दीनो नेक्षितुं नाभिभाषितुम् ॥ ३

---

१. अस्यानन्तरम्—तं वन्दमानं नृपतिः शोकाकुलितचेतनः—इति ख.

तदपूर्वं नरपतेर्दृष्ट्वा रूपं भयावहम्। रामोऽपि भयमापन्नः पदा स्पृष्ट्वेव पन्नगम्॥ ४

इन्द्रियैरप्रहृष्टैस्तं शोकसंतापकर्शितम्। निःश्वसन्तं महाराजं व्यथिताकुलचेतसम्॥ ५

ऊर्मिमालिनमक्षोभ्यं क्षुभ्यन्तमिव सागरम्। उपप्लुतमिवादित्यमुक्तानृतमृषिं यथा॥ ६

अचिन्त्यकल्पं हि पितुस्तं शोकमुपधारयन्। बभूव संरब्धतरः समुद्र इव पर्वणि॥ ७

चिन्तयामास च तदा रामः पितृहिते रतः। किंस्विदद्यैव नृपतिर्न मां प्रत्यभिनन्दति॥ ८

अन्यदा मां पिता दृष्ट्वा कुपितोऽपि प्रसीदति। तस्य मामद्य संप्रेक्ष्य किमायासः प्रवर्तते॥ ९

स दीन इव शोकार्तो विषण्णवदनद्युतिः। कैकेयीमभिवाद्यैव रामो वचनमब्रवीत्॥ १०

कच्चिन्मया नापराद्धमज्ञानाद्येन मे पिता। कुपितस्तन्ममाचक्ष्व त्वं चैवैनं प्रसादय॥ ११

अप्रसन्नमनाः किं नु सदा मां प्रति वत्सलः। विवर्णवदनो दीनो न हि मामभिभाषते॥ १२

शारीरो मानसो वापि कच्चिदेनं न बाधते। संतापो वाभितापो वा दुर्लभं हि सदा सुखम्॥ १३

कच्चिन्न किंचिद्भरते कुमारे प्रियदर्शने। शत्रुघ्ने वा महासत्त्वे मातॄणां वा ममाशुभम्॥ १४

अतोषयन् महाराजमकुर्वन् वा पितुर्वचः। मुहूर्तमपि नेच्छेयं जीवितुं कुपिते नृपे॥ १५

यतोमूलं[1] नरः पश्येन् प्रादुर्भावमिहात्मनः। कथं तस्मिन्न वर्तेत प्रत्यक्षे सति दैवते॥ १६

कच्चित्ते परुषं किंचिदभिमानात् पिता मम। उक्तो भवत्या कोपेन येनास्य लुलितं मनः॥ १७

एतदाचक्ष्व मे देवि तत्त्वेन परिपृच्छतः। किंनिमित्तमपूर्वोऽयं विकारो मनुजाधिपे॥ १८

एवमुक्ता तु कैकेयी राघवेण महात्मना। उवाचेदं सुनिर्लज्जा धृष्टमात्महितं वचः॥ १९

न राजा कुपितो राम व्यसनं नास्य किंचन। किंचिन्मनोगतं त्वस्य त्वद्भयान्नाभिभाषते॥ २०

प्रियं त्वामप्रियं वक्तुं वाणी नास्योपवर्तते। तदवश्यं त्वया कार्यं यदनेनाश्रुतं मम॥ २१

एष मह्यं वरं दत्त्वा पुरा मामभिपूज्य च। स पश्चात्तप्यते राजा यथान्यः प्राकृतस्तथा॥ २२

अतिसृज्य ददानीति वरं मम विशां पतिः। स निरर्थं गतजले सेतुं बन्धितुमिच्छति॥ २३

धर्ममूलमिदं राम विदितं च सतामपि। तत् सत्यं न त्यजेद्राजा कुपितस्त्वत्कृते यथा॥ २४

यदि तद्वक्ष्यते राजा शुभं वा यदि वाशुभम्। करिष्यसि ततः सर्वमाख्यास्यामि पुनस्त्वहम्॥ २५

यदि त्वभिहितं राज्ञा त्वयि तन्न विपत्स्यते। ततोऽहमभिधास्यामि न ह्येष त्वयि वक्ष्यति॥ २६

एतत्तु वचनं श्रुत्वा कैकेय्या समुदाहृतम्। उवाच व्यथितो रामस्तां देवीं नृपसंनिधौ॥ २७

अहो धिङ्नार्हसे देवि वक्तुं मामीदृशं वचः। अहं हि वचनाद्राज्ञः पतेयमपि पावके॥ २८

भक्षयेयं विषं तीक्ष्णं मज्जेयमपि चार्णवे। नियुक्तो गुरुणा पित्रा नृपेण च हितेन च॥ २९

तद्ब्रूहि वचनं देवि राज्ञो यदभिकाङ्क्षितम्। करिष्ये प्रतिजाने च रामो द्विर्नाभिभाषते॥ ३०

तमार्जवसमायुक्तमनार्या सत्यवादिनम्। उवाच रामं कैकेयी वचनं भृशदारुणम्॥ ३१

---

1. यतोमूलमिति यन्मूलमित्यर्थे आर्षमिति तिलकः।

पुरा दैवासुरे युद्धे पित्रा ते मम राघव । रक्षितेन वरौ दत्तौ सशल्येन महारणे ॥ ३२

तत्र मे याचितो राजा भरतस्याभिषेचनम् । गमनं दण्डकारण्ये तव चाद्यैव राघव ॥ ३३

यदि सत्यप्रतिज्ञं त्वं पितरं कर्तुमिच्छसि । आत्मानं च नरश्रेष्ठ मम वाक्यमिदं शृणु ॥ ३४

संनिदेशे पितुस्तिष्ठ यथानेन प्रतिश्रुतम् । त्वयारण्यं प्रवेष्टव्यं नव वर्षाणि पञ्च च ॥ ३५

भरतस्त्वभिषिच्येत यदेतदभिषेचनम् । त्वदर्थे विहितं राज्ञा तेन सर्वेण राघव ॥ ३६

सप्त सप्त च वर्षाणि दण्डकारण्यमाश्रितः । अभिषेकमिमं त्यक्त्वा जटाचीरधरो वस ॥ ३७

भरतः कोसलपुरे प्रशास्तु वसुधामिमाम् । नानारत्नसमाकीर्णां सवाजिरथकुञ्जराम् ॥ ३८

एतेन त्वां नरेन्द्रोऽयं कारुण्येन समाप्लुतः । शोकसंक्लिष्टवदनो न शक्नोति निरीक्षितुम् ॥ ३९

एतत् कुरु नरेन्द्रस्य वचनं रघुनन्दन । सत्येन महता राम तारयस्व नराधिपम् ॥ ४०

इतीव तस्यां परुषं वदन्त्यां न चैव रामः प्रविवेश शोकम् ।
प्रविव्यथे चापि महानुभावो राजा तु पुत्रव्यसनाभितप्तः ॥ ४१

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायां
अयोध्याकाण्डे वनवासनिदेशो नाम अष्टादशः सर्गः

---

## एकोनविंशः सर्गः

### रामप्रतिज्ञा

तदप्रियममित्रघ्नो वचनं मरणोपमम् । श्रुत्वा न विव्यथे रामः कैकेयीं चेदमब्रवीत् ॥ १

एवमस्तु गमिष्यामि वनं वस्तुमहं त्वितः । जटाचीरधरो राज्ञः प्रतिज्ञामनुपालयन् ॥ २

इदं तु ज्ञातुमिच्छामि किमर्थं मां महीपतिः । नाभिनन्दति दुर्धर्षो यथापूर्वमरिंदमः ॥ ३

मन्युर्न च त्वया कार्यो देवि ब्रूमि तवाग्रतः । यास्यामि भव सुप्रीता वनं चीरजटाधरः ॥ ४

हितेन गुरुणा पित्रा कृतज्ञेन नृपेण च । नियुज्यमानो विस्रब्धः किं न कुर्यामहं प्रियम् ॥ ५

अलीकं मानसं त्वेकं हृदयं दहतीव मे । स्वयं यन्नाह मां राजा भरतस्याभिषेचनम् ॥ ६

अहं हि सीतां राज्यं च प्राणानिष्टान् धनानि च । हृष्टो भ्रात्रे स्वयं दद्यां भरतायाप्रचोदितः ॥ ७

किं पुनर्मनुजेन्द्रेण स्वयं पित्रा प्रचोदितः । तव च प्रियकामार्थं प्रतिज्ञामनुपालयन् ॥ ८

तदाश्वासय ह्रीमन्तं किं न्विदं यन्महीपतिः । वसुधासक्तनयनो मन्दमश्रूणि मुञ्चति ॥ ९

गच्छन्तु चैवानयितुं दूताः शीघ्रजवैर्हयैः । भरतं मातुलकुलादद्यैव नृपशासनात् ॥ १०

दण्डकारण्यमेषोऽहमितो गच्छामि सत्वरः । अविचार्य पितुर्वाक्यं समा वस्तुं चतुर्दश ॥ ११

सा हृष्टा तस्य तद्वाक्यं श्रुत्वा रामस्य कैकयी । प्रस्थानं श्रद्दधाना हि त्वरयामास राघवम् ॥ १२

एवं भवतु यास्यन्ति दूताः शीघ्रजवैर्हयैः । भरतं मातुलकुलादुपावर्तयितुं नराः ॥ १३

तव त्वहं क्षमं मन्ये नोत्सुकस्य विलम्बनम् । राम तस्मादितः शीघ्रं वनं त्वं गन्तुमर्हसि ॥ १४

व्रीडान्वितः स्वयं यच्च नृपस्त्वां नाभिभाषते । नैतत् किंचिन्नरश्रेष्ठ मन्युरेषोऽपनीयताम् ॥ १५

यावत्त्वं न वनं यातः पुरादस्मादभित्वरन् । पिता तावन्न ते राम स्नास्यते भोक्ष्यतेऽपि वा ॥ १६
धिक्कष्टमिति निःश्वस्य राजा शोकपरिप्लुतः । मूर्छितो न्यपतत्तस्मिन् पर्यङ्के हेमभूषिते ॥ १७
रामोऽप्युत्थाप्य राजानं कैकेय्याभिप्रचोदितः । कशयेवाहतो वाजी वनं गन्तुं कृतत्वरः ॥ १८
तदप्रियमनार्याया वचनं दारुणोदयम् । श्रुत्वा गतव्यथो रामः कैकेयीं वाक्यमब्रवीत् ॥ १९
नाहमर्थपरो देवि लोकमावस्तुमुत्सहे । विद्धि मामृषिभिस्तुल्यं केवलं धर्ममास्थितम् ॥ २०
यदत्रभवतः किंचिच्छक्यं कर्तुं प्रियं मया । प्राणानपि परित्यज्य सर्वथा कृतमेव तत् ॥ २१
न ह्यतो धर्मचरणं किंचिदस्ति महत्तरम् । यथा पितरि शुश्रूषा तस्य वा वचनक्रिया ॥ २२
अनुक्तोऽप्यत्रभवता भवत्या वचनादहम् । वने वत्स्यामि विजने वर्षाणीह चतुर्दश ॥ २३
न नूनं मयि कैकेयि किंचिदाशंससे गुणम् । यद्राजानमवोचस्त्वं ममेश्वरतरा सती ॥ २४
यावन्मातरमापृच्छे सीतां चानुनयाम्यहम् । ततोऽद्यैव गमिष्यामि दण्डकानां महद्वनम् ॥ २५
भरतः पालयेद्राज्यं शुश्रूषेच्च पितुर्यथा । तथा भवत्या कर्तव्यं स हि धर्मः सनातनः ॥ २६
स रामस्य वचः श्रुत्वा भृशं दुःखहतः पिता । शोकादशक्नुवन् वक्तुं प्ररुरोद महास्वनम् ॥ २७
वन्दित्वा चरणौ रामो विसंज्ञस्य पितुस्तथा । कैकेय्याश्चाप्यनार्याया निश्चक्राम महाद्युतिः ॥ २८
स रामः पितरं कृत्वा कैकेयीं च प्रदक्षिणम् । निष्क्रम्यान्तःपुरात्तस्मात् स्वं ददर्श सुहृज्जनम् ॥ २९
तं बाष्पपरिपूर्णाक्षः पृष्ठतोऽनुजगाम ह । लक्ष्मणः परमक्रुद्धः सुमित्रानन्दवर्धनः ॥ ३०
आभिषेचनिकं भाण्डं कृत्वा रामः प्रदक्षिणम् । शनैर्जगाम सापेक्षो दृष्टिं तत्राविचालयन् ॥ ३१
न चास्य महतीं लक्ष्मीं राज्यनाशोऽपकर्षति । लोककान्तस्य कान्तत्वाच्छीतरश्मेरिव क्षपा ॥ ३२
न वनं गन्तुकामस्य त्यजतश्च वसुंधराम् । सर्वलोकातिगस्येव लक्ष्यते चित्तविक्रिया ॥ ३३
प्रतिषिध्य शुभं छत्रं व्यजने च स्वलंकृते । विसर्जयित्वा स्वजनं रथं पौरांस्तथा जनान् ॥ ३४
धारयन् मनसा दुःखमिन्द्रियाणि निगृह्य च । प्रविवेशात्मवान् वेश्म मातुरप्रियशंसिवान् ॥ ३५
सर्वो ह्यभिजनः श्रीमाञ्श्रीमतः सत्यवादिनः । नालक्षयत रामस्य किंचिदाकारमानने ॥ ३६
उचितं च महाबाहुर्न जहौ हर्षमात्मनः । शारदः समुदीर्णांशुश्चन्द्रस्तेज इवात्मजम् ॥ ३७
वाचा मधुरया रामः सर्वं संमानयञ्जनम् । मातुः समीपं धर्मात्मा प्रविवेश महायशाः ॥ ३८
तं गुणैः समतां प्राप्तो भ्राता विपुलविक्रमः । सौमित्रिरनुवव्राज धारयन् दुःखमात्मजम् ॥ ३९

प्रविश्य वेश्मातिभृशं मुदान्वितं समीक्ष्य तां चार्थविपत्तिमागताम् ।
न चैव रामोऽत्र जगाम विक्रियां सुहृज्जनस्यात्मविपत्तिशङ्कया ॥ ४०

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायां
अयोध्याकाण्डे रामप्रतिज्ञा नाम एकोनविंशः सर्गः

---

१. न्यपात प्र.

## विंशः सर्गः
### कौसल्याक्रन्दः

तस्मिंस्तु पुरुषव्याघ्रे निष्क्रामति कृताञ्जलौ । आर्तशब्दो महाञ्जज्ञे स्त्रीणामन्तःपुरे तदा ॥ १
कृत्येष्वचोदितः पित्रा सर्वस्यान्तःपुरस्य च । गतिर्यः शरणं चापि स रामोऽद्य प्रवत्स्यति ॥ २
कौसल्यायां यथा युक्तो जनन्यां वर्तते सदा । तथैव वर्ततेऽस्मासु जन्मप्रभृति राघवः ॥ ३
न क्रुध्यत्यभिशप्तोऽपि क्रोधनीयानि वर्जयन् । क्रुद्धान् प्रसादयन् सर्वान् स इतोऽद्य प्रवत्स्यति ॥ ४
अबुद्धिर्बत नो राजा जीवलोकं चरत्ययम् । यो गतिं सर्वलोकानां परित्यजति राघवम् ॥ ५
इति सर्वा महिष्यस्ता विवत्सा इव धेनवः । पतिमाचुक्रुशुश्चैव सस्वरं चापि चुक्रुशुः ॥ ६
स हि चान्तःपुरे घोरमार्तशब्दं महीपतिः । पुत्रशोकाभिसंतप्तः श्रुत्वा व्यालीयतासने ॥ ७
रामस्तु भृशमायस्तो निःश्वसन्निव कुञ्जरः । जगाम सहितो भ्रात्रा मातुरन्तःपुरं वशी ॥ ८
सोऽपश्यत् पुरुषं तत्र वृद्धं परमपूजितम् । उपविष्टं गृहद्वारि तिष्ठतश्चापरान् बहून् ॥ ९
दृष्ट्वैव तु तदा रामं ते सर्वे सहसोत्थिताः । जयेन जयतां श्रेष्ठं वर्धयन्ति स्म राघवम् ॥ १०
प्रविश्य प्रथमां कक्ष्यां द्वितीयायां ददर्श सः । ब्राह्मणान् वेदसंपन्नान् वृद्धान् राज्ञाभिसत्कृतान् ॥ ११
प्रणम्य रामस्तान् वृद्धांस्तृतीयायां ददर्श सः । स्त्रियो वृद्धाश्च बालाश्च द्वाररक्षणतत्पराः १२
वर्धयित्वा प्रहृष्टास्ताः प्रविश्य च गृहं स्त्रियः । न्यवेदयन्त त्वरिता राममातुः प्रियं तदा ॥ १३
कौसल्यापि तदा देवी रात्रिं स्थित्वा समाहिता । प्रभाते त्वकरोत् पूजां विष्णोः पुत्रहितैषिणी ॥ १४
सा क्षौमवसना हृष्टा नित्यं व्रतपरायणा । अग्निं जुहोति स्म तदा मन्त्रवत् कृतमङ्गला ॥ १५
प्रविश्य च तदा रामो मातुरन्तःपुरं शुभम् । ददर्श मातरं तत्र हावयन्तीं हुताशनम् ॥ १६
देवकार्यनिमित्तं च तत्रापश्यत् समुद्यताम् । दध्यक्षतघृतं चैव मोदकान् हविषस्तथा ॥ १७
लाजान् माल्यानि शुक्लानि पायसं कृसरं तथा । समिधः पूर्णकुम्भांश्च ददर्श रघुनन्दनः ॥ १८
तां शुक्लक्षौमसंवीतां व्रतयोगेन कर्शिताम् । तर्पयन्तीं ददर्शाद्भिर्देवतां वरवर्णिनीम् ॥ १९
सा चिरस्यात्मजं दृष्ट्वा मातृनन्दनमागतम् । अभिचक्राम संहृष्टा किशोरं बडवा यथा ॥ २०
स मातरमभिक्रान्तामुपसंगृह्य राघवः । परिष्वक्तश्च बाहुभ्यामुपाघ्रातश्च मूर्धनि ॥ २१
तमुवाच दुराधर्षं राघवं सुतमात्मनः । कौसल्या पुत्रवात्सल्यादिदं प्रियहितं वचः ॥ २२
वृद्धानां धर्मशीलानां राजर्षीणां महात्मनाम् । प्राप्नुह्यायुश्च कीर्तिं च धर्मं चाप्युचितं कुले ॥ २३
सत्यप्रतिज्ञं पितरं राजानं पश्य राघव । अद्यैव हि त्वां धर्मात्मा यौवराज्येऽभिषेक्ष्यति ॥ २४
दत्तमासनमालभ्य भोजनेन निमन्त्रितः । मातरं राघवः किंचित् [1]प्रसार्याञ्जलिमब्रवीत् ॥ २५
स स्वभावविनीतश्च गौरवाच्च तदानतः । प्रस्थितो दण्डकारण्यमाप्रष्टुमुपचक्रमे ॥ २६
देवि नूनं न जानीषे महद्भयमुपस्थितम् । इदं तव च दुःखाय वैदेह्या लक्ष्मणस्य च ॥ २७

---

१. व्रीडात् प्राञ्जलिः च. छ. ।

गमिष्ये दण्डकारण्यं किमनेनासनेन मे । विष्टरासनयोग्यो हि कालोऽयं मामुपस्थितः ॥ २८
चतुर्दश हि वर्षाणि वत्स्यामि विजने वने । मधुमूलफलैर्जीवन् हित्वा मुनिवदामिषम् ॥ २९
भरताय महाराजो यौवराज्यं प्रयच्छति । मां पुनर्दण्डकारण्ये विवासयति तापसम् ॥ ३०
स षट् चाष्टौ च वर्षाणि वत्स्यामि विजने वने । आसेवमानो वन्यानि फलमूलैश्च वर्तयन् ॥ ३१
सा निकृत्तेव सालस्य यष्टिः परशुना वने । पपात सहसा देवी देवतेव दिवश्च्युता ॥ ३२
तामदुःखोचितां दृष्ट्वा पतितां कदलीमिव । रामस्तूत्थापयामास मातरं गतचेतसम् ॥ ३३
उपावृत्योत्थितां दीनां वडवामिव वाहिताम् । पांसुकुण्ठितसर्वाङ्गीं विममर्श च पाणिना ॥ ३४
सा राघवमुपासीनमदुःखार्ता सुखोचिता । उवाच पुरुषव्याघ्रमुपशृण्वति लक्ष्मणे ॥ ३५
यदि पुत्र न जायेथा मम शोकाय राघव । न स्म दुःखमतो भूयः पश्येयमहमप्रजाः ॥ ३६
एक एव हि वन्ध्यायाः शोको भवति मानसः । अप्रजास्मीति संतापो न ह्यन्यः पुत्र विद्यते ॥ ३७
न दृष्टपूर्वं कल्याणं सुखं वा पतिपौरुषे । अपि पुत्रे तु पश्येयमिति रामास्थितं मया ॥ ३८
सा बहून्यमनोज्ञानि वाक्यानि हृदयच्छिदाम् । अहं श्रोष्ये सपत्नीनामवराणां वरा सती ॥ ३९
अतो दुःखतरं किं नु प्रमदानां भविष्यति । मम शोको विलापश्च यादृशोऽयमनन्तकः ॥ ४०
त्वयि संनिहितेऽप्येवमहमासं निराकृता । किं पुनः प्रोषिते तात ध्रुवं मरणमेव मे ॥ ४१
अत्यन्तं निगृहीतास्मि भर्तुर्नित्यमतन्त्रिता । परिवारेण कैकेय्याः समा वाप्यथवावरा ॥ ४२
यो हि मां सेवते कश्चिदथवाप्यनुवर्तते । कैकेय्याः पुत्रमन्वीक्ष्य स जनो नाभिभाषते ॥ ४३
नित्यक्रोधतया तस्याः कथं नु खरवादि तत् । कैकेय्या वदनं द्रष्टुं पुत्र शक्ष्यामि दुर्गता ॥ ४४
दश सप्त च वर्षाणि तव जातस्य राघव । आसितानि प्रकाङ्क्षन्त्या मया दुःखपरिक्षयम् ॥ ४५
तदक्षयमहं दुःखं नोत्सहे सहितुं चिरम् । विप्रकारं सपत्नीनामेवं जीर्णापि राघव ॥ ४६
अपश्यन्ती तव मुखं परिपूर्णशशिप्रभम् । कृपणा वर्तयिष्यामि कथं कृपणजीविकाम् ॥ ४७
उपवासैश्च योगैश्च बहुभिश्च परिश्रमैः । दुःखं संवर्धितो मोघं त्वं हि दुर्गतया मया ॥ ४८
स्थिरं तु हृदयं मन्ये ममेदं यन्न दीर्यते । प्रावृषीव महानद्याः स्पृष्टं कूलं नवाम्भसा ॥ ४९

ममैव नूनं मरणं न विद्यते न चावकाशोऽस्ति यमक्षये मम ।
यदन्तकोऽद्यैव न मां जिहीर्षति प्रसह्य सिंहो रुदतीं मृगीमिव ॥ ५०

स्थिरं हि नूनं हृदयं ममायसं न भिद्यते यद्भुवि नावदीर्यते ।
अनेन दुःखेन च देहमर्पितं ध्रुवं ह्यकाले मरणं न विद्यते ॥ ५१

इदं तु दुःखं यदनर्थकानि मे व्रतानि दानानि च संयमाश्च हि ।
तपश्च तप्तं यदपत्यकारणात् सुनिष्फलं बीजमिवोप्तमूषरे ॥ ५२

यदि ह्यकाले मरणं स्वयेच्छया लभेत कश्चिद्गुरुदुःखकर्शितः ।
गताहमद्यैव परेतसंसदं विना त्वया धेनुरिवात्मजेन वै ॥ ५३

अथापि किं जीवितमद्य मे वृथा त्वया विना चन्द्रनिभाननप्रभ ।
अनुव्रजिष्यामि वनं त्वयैव गौः सुदुर्बला वत्समिवानुकाङ्क्षया ॥ ५४
भृशमसुखममर्षिता तदा बहु विललाप समीक्ष्य राघवम् ।
व्यसनमुपनिशाम्य सा महत् सुतमिव बद्धमवेक्ष्य किंनरी ॥ ५५

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायां अयोध्याकाण्डे कौसल्याक्रन्दो नाम विंशः सर्गः

---

## एकविंशः सर्गः
### कौसल्यालक्ष्मणप्रतिबोधनम्

तथा तु विलपन्तीं तां कौसल्यां राममातरम् । उवाच लक्ष्मणो दीनस्तत्कालसदृशं वचः ॥ १
न रोचते ममाप्येतदार्ये यद्राघवो वनम् । त्यक्त्वा राज्यश्रियं[1] गच्छेत् स्त्रिया वाक्यवशंगतः ॥ २
विपरीतश्च वृद्धश्च विषयैश्च प्रधर्षितः । नृपः किमिव न ब्रूयाच्चोद्यमानः समन्मथः ॥ ३
नास्यापराधं पश्यामि नापि दोषं तथाविधम् । येन निर्वास्यते राष्ट्राद्वनवासाय राघवः ॥ ४
न तं पश्याम्यहं लोके परोक्षमपि यो नरः । स्वमित्रोऽपि निरस्तोऽपि योऽस्य दोषमुदाहरेत् ॥ ५
देवकल्पमृजुं दान्तं रिपूणामपि वत्सलम् । अवेक्षमाणः को धर्मं त्यजेत् पुत्रमकारणात् ॥ ६
तदिदं वचनं राज्ञः पुनर्बाल्यमुपेयुषः । पुत्रः को हृदये कुर्याद्राजवृत्तमनुस्मरन् ॥ ७
यावदेव न जानाति कश्चिदर्थमिमं नरः । तावदेव मया सार्धमात्मस्थं कुरु शासनम् ॥ ८

---

1. राघवो वनं त्यक्त्वा राज्यश्रियं गच्छेदिति । राघवो राज्यश्रियं त्यक्त्वा वनं गच्छेदिति ममापि न रोचत इति योजना । विरुद्धान्वयप्रतीतिकृदपीदं पदसन्धानं शोकविवशस्य लक्ष्मणस्य पोषयत्येव संरम्भातिशयमिति नात्र दोषः कश्चित् । तदिदमुक्तम्—तत्कालसदृशं वचः—इति । संरम्भावस्थितस्य ईदृगन्वयं वचो युक्तरूपमेवेति भावः । न वात्र विरोधपरिहाराय बहुतरमभिनिवेष्टव्यम् । अनन्वितान्येव हि परस्परं राघव इत्यादिपदानि प्रत्येकं शोकावेशनिमित्तं लक्ष्मणस्य संरम्भं प्रकाशयितुं समर्थानि । तथा हि—राघव इत्यत्रैकैकं पदं काका दीर्घध्वनिविकारेण सोल्लुण्ठनं पठ्यते । राघव इति च ज्येष्ठं श्रेष्ठगुणैर्युक्तमित्यादिराज्ययोगार्हासंख्येयगुणपूर्णत्वार्थान्तरगर्भम् । एवं वनमित्यादावपि अतिहिंस्रव्याघ्राद्याकुलमित्याद्यर्थान्तरमनुगन्तव्यम् । तेन बद्राघव इति, वद्वनमिति, यच्च त्यक्त्वेत्यादि तत्सर्वमेव मे न रोचते । अत्र कर्तृकर्मक्रियासु एकैकमप्यप्रतीक्षितमनुपपन्नं दुर्विषहं च मादृशामित्यभिप्रायः । तदिदमप्युक्तम् तत्कालसदृशमिति । गोविन्दराजस्तु 'तत्कालसदृशं कौसल्यादुःखकालोचितम् । एतेन वक्ष्यमाणलक्ष्मणवचनं केवलं कौसल्याशोकशान्त्यर्थं न तु सहृदयम्' इति व्याचख्यौ ॥ अथवा संरब्धः सोल्लुण्ठनवादी चायं लक्ष्मण इति तिष्ठतु तावत् । अन्यादिवक्षतोऽपि प्रकृत्यनुरूपैव वाक्प्रवृत्तिरिति नीत्या अकामस्यापि लक्ष्मणस्य मुखात् राघवो वनमुपेक्ष्य राज्यश्रियं गच्छेदितीदमार्षस्येव ममापि न रोचते इति वचनं स्वयमेव प्रावर्ततेति अहो धर्मप्रवणता लक्ष्मणस्य, महिमा वा ज्येष्ठानुवर्तनैकपरमार्थतायाः इत्यनया दिशा कविभावगतिरिहानुसर्तव्या ॥

१. अहं हनिष्ये पितरं वृद्धं कामवशंगतम् । स्त्रिया युक्तं च निर्लज्जं धर्मायुक्तं नृपं यथा ॥ इत्यधिकं ङ. च.

मया पार्श्वे सधनुषा तव गुप्तस्य राघव । कः समर्थोऽधिकं कर्तुं कृतान्तस्येव तिष्ठतः ॥ ९
निर्मनुष्यामिमां सर्वामयोध्यां मनुजर्षभ । करिष्यामि शरैस्तीक्ष्णैर्यदि स्थास्यति विप्रिये ॥ १०
भरतस्याथ पक्ष्यो वा यो वास्य हितमिच्छति । सर्वानेव हनिष्यामि मृदुर्हि परिभूयते ॥ ११
प्रोत्साहितोऽयं कैकेय्या स दुष्टो यदि नः पिता । अमित्रभूतो निःसङ्गं बध्यतां बध्यतामपि ॥ १२
गुरोरप्यवलिप्तस्य कार्याकार्यमजानतः । उत्पथं प्रतिपन्नस्य कार्यं भवति शासनम् ॥ १३
बलमेष किमाश्रित्य हेतुं वा पुरुषर्षभ । दातुमिच्छति कैकेय्यै राज्यं स्थितमिदं तव ॥ १४
त्वया चैव मया चैव कृत्वा वैरमनुत्तमम् । कास्य शक्तिः श्रियं दातुं भरतायारिनाशन ॥ १५
अनुरक्तोऽस्मि भावेन भ्रातरं देवि तत्त्वतः । सत्येन धनुषा चैव दत्तेनेष्टेन[1] ते शपे ॥ १६
दीप्तमग्निमरण्यं वा यदि रामः प्रवेक्ष्यति । प्रविष्टं तत्र मां देवि त्वं पूर्वमवधारय ॥ १७
हरामि वीर्याद्दुःखं ते तमः सूर्य इवोदितः । देवी पश्यतु मे वीर्यं राघवश्चैव पश्यतु ॥ १८
हनिष्ये पितरं वृद्धं कैकेय्यासक्तमानसम् । कृपणं चास्थिरं बालं वृद्धभावेन गर्हितम्[*] ॥ १९
एतत्तु वचनं श्रुत्वा लक्ष्मणस्य महात्मनः । उवाच रामं कौसल्या रुदन्ती शोकलालसा ॥ २०
भ्रातुस्ते वदतः पुत्र लक्ष्मणस्य श्रुतं त्वया । यदत्रानन्तरं कार्यं कुरुष्व यदि रोचते ॥ २१
न चाधर्म्यं वचः श्रुत्वा सपत्न्या मम भाषितम् । विहाय शोकसंतप्तां मां वनं गन्तुमर्हसि ॥ २२
धर्मज्ञ यदि धर्मिष्ठो धर्मं चरितुमिच्छसि । शुश्रूष मामिहस्थस्त्वं चर धर्ममनुत्तमम् ॥ २३
शुश्रूषुर्जननीं पुत्रः स्वगृहे नियतो वसन् । परेण तपसा युक्तः काश्यपस्त्रिदिवं गतः ॥ २४
यथैव राजा पूज्यस्ते गौरवेण तथा ह्यहम् । त्वां नाहमनुजानामि न गन्तव्यमितो वनम् ॥ २५
त्वद्वियोगान्न मे कार्यं जीवितेन सुखेन वा । त्वया सह मम श्रेयस्तृणानामपि भक्षणम् ॥ २६
यदि त्वं यास्यसि वनं त्यक्त्वा मां शोकलालसाम् । अहं प्रायमिहासिष्ये न हि शक्ष्यामि जीवितुम् ॥
ततस्त्वं प्राप्स्यसे पुत्र निरयं लोकविश्रुतम् । ब्रह्महत्यामिवाधर्मात् समुद्रः सरितां पतिः ॥ २८
विलपन्तीं तथा दीनां कौसल्यां जननीं ततः । उवाच रामो धर्मात्मा वचनं धर्मसंहितम् ॥ २९
नास्ति शक्तिः पितुर्वाक्यं समतिक्रमितुं मम । प्रसादये त्वां शिरसा गन्तुमिच्छाम्यहं वनम् ॥ ३०
ऋषिणा च पितुर्वाक्यं कुर्वता व्रतचारिणा । गौर्हता जानता धर्मं कण्डुनापि विपश्चिता ॥ ३१
अस्माकं च कुले पूर्वं सगरस्याज्ञया पितुः । खनद्भिः सागरैर्भूमिमवाप्तः सुमहान् वधः ॥ ३२
जामदग्न्येन रामेण रेणुका जननी स्वयम् । कृत्ता परशुनारण्ये पितुर्वचनकारिणा ॥ ३३
एतैरन्यैश्च बहुभिर्देवि देवसमैः कृतम् । पितुर्वचनमक्लीबं करिष्यामि पितुर्हितम् ॥ ३४
न खल्वेतन्मयैकेन क्रियते पितृशासनम् । एतैरपि कृतं देवि ये मया तव कीर्तिताः ॥ ३५

---

1. इष्टम् अग्निहोत्रतपःसत्यादि । दत्तम् १. इदं पद्यम् च. नास्ति । शरणागतत्राणम्, अहिंसा, बहिर्वेदिदानं च ।

नाहं धर्ममपूर्वं ते प्रतिकूलं प्रवर्तये । [1]पूर्वैरयमभिप्रेतो गतो मार्गोऽनुगम्यते ॥ ३६
तदेतत्तु मया कार्यं क्रियते भुवि नान्यथा । पितुर्हि वचनं कुर्वन्न कश्चिन्नाम हीयते ॥ ३७
तामेवमुक्त्वा जननीं लक्ष्मणं पुनरब्रवीत् । वाक्यं वाक्यविदां श्रेष्ठः श्रेष्ठः सर्वधनुष्मताम् ॥ ३८
तव लक्ष्मण जानामि मयि स्नेहमनुत्तमम् । विक्रमं चैव सत्त्वं च तेजश्च सुदुरासदम् ॥ ३९
मम मातुर्महद्दुःखमतुलं शुभलक्षण । अभिप्रायमविज्ञाय सत्यस्य च शमस्य च ॥ ४०
धर्मो हि परमो लोके धर्मे सत्यं प्रतिष्ठितम् । धर्मसंश्रितमेतच्च पितुर्वचनमुत्तमम् ॥ ४१
संश्रुत्य च पितुर्वाक्यं मातुर्वा ब्राह्मणस्य वा । न कर्तव्यं वृथा वीर धर्ममाश्रित्य तिष्ठता ॥ ४२
सोऽहं न शक्ष्यामि पितुर्नियोगमतिवर्तितुम् । पितुर्हि वचनाद्वीर कैकेय्याहं प्रचोदितः ॥ ४३
तदेनां विसृजानार्यां क्षत्रधर्माश्रितां मतिम् । धर्ममाश्रय मा तैक्ष्ण्यं मद्बुद्धिरनुगम्यताम् ॥ ४४
तमेवमुक्त्वा सौहार्दाद्भ्रातरं लक्ष्मणाग्रजः । उवाच भूयः कौसल्यां प्राञ्जलिः शिरसा नतः ॥ ४५
अनुमन्यस्व मां देवि गमिष्यन्तमितो वनम् । शापितासि मम प्राणैः कुरु स्वस्त्ययनानि मे ॥ ४६
तीर्णप्रतिज्ञश्च वनात् पुनरेष्याम्यहं पुरीम् । ययातिरिव राजर्षिः पुरा हित्वा पुनर्दिवम् ॥ ४७
शोकः संधार्यतां मातर्हृदये साधु मा शुचः । वनवासादिहैष्यामि पुनः कृत्वा पितुर्वचः ॥ ४८
त्वया मया च वैदेह्या लक्ष्मणेन सुमित्रया । पितुर्नियोगे स्थातव्यमेष धर्मः सनातनः ॥ ४९
अम्ब संहृत्य संभारान् दुःखं हृदि निगृह्य च । वनवासकृता बुद्धिर्मम धर्म्यानुवर्त्यताम् ॥ ५०

एतद्वचस्तस्य निशम्य माता सुधर्म्यमव्यग्रमविक्लवं च ।
मृतेव संज्ञां प्रतिलभ्य देवी समीक्ष्य रामं पुनरित्युवाच ॥ ५१

यथैव ते पुत्र पिता तथाहं गुरुः स्वधर्मेण सुहृत्तया च ।
न त्वानुजानामि न मां विहाय सुदुःखितामर्हसि गन्तुमेवम् ॥ ५२

किं जीवितेनेह विना त्वया मे लोकेन वा किं स्वधयामृतेन ।
श्रेयो मुहूर्तं तव संनिधानं ममेह कृत्स्नादपि जीवलोकात् ॥ ५३

नरैरिवोल्काभिरपोह्यमानो महागजोऽध्वानमनुप्रविष्टः ।
भूयः प्रजज्वाल विलापमेनं निशम्य रामः करुणं जनन्याः ॥ ५४

स मातरं चैव विसंज्ञकल्पामार्तं च सौमित्रिमभिप्रतप्तम् ।
धर्मे स्थितो धर्म्यमुवाच वाक्यं यथा स एवार्हति तत्र वक्तुम् ॥ ५५

अहं हि ते लक्ष्मण नित्यमेव जानामि भक्तिं च पराक्रमं च ।
मम त्वभिप्रायमसंनिरीक्ष्य मात्रा सहाभ्यर्दसि मां सुदुःखम् ॥ ५६

---

१. पूर्वैरित्यादि हीयत इत्यन्तं ख. नास्ति ।

धर्मार्थकामाः किल जीवलोके[1] समीक्षिता धर्मफलोदयेषु ।
ये[2] तत्र सर्वे स्युरसंशयं मे भार्येव वश्याभिमता सपुत्रा[3] ॥ ५७

यस्मिंस्तु सर्वे स्युरसंनिविष्टा धर्मो यतः स्यात्तदुपक्रमेत ।
द्वेष्यो भवत्यर्थपरो हि लोके कामात्मता खल्वपि न प्रशस्ता ॥ ५८

गुरुश्च राजा च पिता च वृद्धः क्रोधात् प्रहर्षाद्यदि वापि कामात् ।
यद्व्यादिशेत् कार्यमवेक्ष्य धर्मं कस्तं न कुर्यादनृशंसवृत्तिः ॥ ५९

स वै न शक्नोमि पितुः प्रतिज्ञामिमामकर्तुं सकलां यथावत् ।
स ह्यावयोस्तात गुरुर्नियोगे देव्याश्च भर्ता स गतिः स धर्मः ॥ ६०

तस्मिन् पुनर्जीवति धर्मराजे विशेषतः स्वे पथि वर्तमाने ।
देवी मया सार्धमितोऽपगच्छेत् कथंस्विदन्या विधवेव नारी ॥ ६१

सा मानुमन्यस्व वनं व्रजन्तं कुरुष्व नः स्वस्त्ययनानि देवि ।
यथा समाप्ते पुनराव्रजेयं यथा हि सत्येन पुनर्ययातिः ॥ ६२

यशो ह्यहं केवलराज्यकारणान्न पृष्ठतः कर्तुमलं महोदयम् ।
अदीर्घकाले न तु देवि जीविते वृणेऽवरामद्य महीमधर्मतः ॥ ६३

प्रसादयन्नरवृषभः स्वमातरं पराक्रमाज्जिगमिषुरेव दण्डकान् ।
अथानुजं भृशमनुशास्य दर्शनं[2] चकार तां हृदि जननीं प्रदक्षिणम् ॥ ६४

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायां
अयोध्याकाण्डे कौसल्यालक्ष्मणप्रतिबोधनं नाम एकविंशः सर्गः

---

## द्वाविंशः सर्गः

### दैवप्राबल्यम्

अथ तं व्यथया दीनं सविशेषममर्षितम् । श्वसन्तमिव नागेन्द्रं रोषविस्फारितेक्षणम् ॥ १
आसाद्य रामः सौमित्रिं सुहृदं भ्रातरं प्रियम् । उवाचेदं स धैर्येण धारयन् सत्त्वमात्मवान् ॥ २

---

1. धर्मार्थकामा इत्याद्यधत्रयमेकान्वयम् । धर्मोऽर्थः कामश्चेति त्रितयं धर्मस्यैव फलम् । अतः सिद्धे तस्मिन् धर्मे सर्वमेवेदं सिध्यतीति सतां समीक्षितम् । तदनुसारेण च परीक्षकैरेवं निर्णीतम्—यस्मिन् क्रियमाणे धर्मादित्रिकं न प्रभवति, किं तु एक एव धर्मोऽर्थः कामो वा, तत्र यतो धर्मः प्रभवति तदेव प्रेक्षावानुपक्रमेतेति । तस्मिन् हि संपाद्यमाने स्वयमेव सर्वं संपन्नं भवति; तत्फलत्वादिति भावः ।

2. दर्शनम् स्वसंमतं धर्मरहस्यम् अनुजमनुशास्येति योजना ।

१. तात लोके च. छ.
२. ते च. छ.
३. सुपुत्रा च.

निगृह्य रोषं शोकं च धैर्यमाश्रित्य केवलम् । अवमानं निरस्येमं गृहीत्वा हर्षमुत्तमम् ॥ ३
उपक्लृप्तं हि यत्किंचिदभिषेकार्थमद्य मे । सर्वं विसर्जय क्षिप्रं कुरु कार्यं निरत्ययम् ॥ ४
सौमित्रे योऽभिषेकार्थे मम संभारसंभ्रमः । अभिषेकनिवृत्त्यर्थे सोऽस्तु संभारसंभ्रमः ॥ ५
यस्या मदभिषेकार्थे मानसं परितप्यते । माता सा मे यथा न स्यात् सविशङ्का तथा कुरु ॥ ६
तस्याः शङ्कामयं दुःखं मुहूर्तमपि नोत्सहे । मनसि प्रतिसंजातं सौमित्रेऽहमुपेक्षितुम् ॥ ७
न बुद्धिपूर्वं नाबुद्धं स्मरामीह कदाचन । मातॄणां वा पितुर्वाहं कृतमल्पं च विप्रियम् ॥ ८
सत्यः सत्याभिसंधश्च नित्यं सत्यपराक्रमः । परलोकभयाद्भीतो निर्भयोऽस्तु पिता मम ॥ ९
तस्यापि हि भवेदस्मिन् कर्मण्यप्रतिसंहृते । सत्यं नेति मनस्तापस्तस्य तापस्तपेच्च माम् ॥ १०
अभिषेकविधानं तु तस्मात् संहृत्य लक्ष्मण । अन्वगेवाहमिच्छामि वनं गन्तुमितः पुनः ॥ ११
मम प्रव्राजनादद्य कृतकृत्या नृपात्मज । सुतं भरतमव्यग्रमभिषेचयतां ततः ॥ १२
मयि चीराजिनधरे जटामण्डलधारिणि । गतेऽरण्यं च कैकेय्या भविष्यति मनःसुखम् ॥ १३
बुद्धिः प्रणीता येनेयं मनश्च सुसमाहितम् । तं तु नार्हामि संक्लेष्टुं प्रव्रजिष्यामि मा चिरम् ॥ १४
कृतान्तस्त्वेव सौमित्रे द्रष्टव्यो मत्प्रवासने । राज्यस्य च वितीर्णस्य पुनरेव निवर्तने ॥ १५
कैकेय्याः प्रतिपत्तिर्हि कथं स्यान्मम पीडने । यदि भावो न दैवोऽयं कृतान्तविहितो भवेत् ॥ १६
जानासि हि यथा सौम्य न मातृषु ममान्तरम् । भूतपूर्वो विशेषो वा तस्या मयि सुतेऽपि वा ॥ १७
सोऽभिषेकनिवृत्त्यर्थैः प्रवासार्थैश्च दुर्वचैः । उग्रैर्वाक्यैरहं तस्या नान्यद्दैवात् समर्थये ॥ १८
कथं प्रकृतिसंपन्ना राजपुत्री तथागुणा । ब्रूयात् सा प्राकृतेव स्त्री मत्पीडां भर्तृसंनिधौ ॥ १९
यदचिन्त्यं तु तद्दैवं भूतेष्वपि न हन्यते । व्यक्तं मयि च तस्यां च पतितो हि विपर्ययः ॥ २०
कश्च दैवेन सौमित्रे योद्धुमुत्सहते पुमान् । यस्य न ग्रहणं किंचित् कर्मणोऽन्यत्र दृश्यते ॥ २१
सुखदुःखे भयक्रोधौ लाभालाभौ भवाभवौ । यच्च किंचित्तथाभूतं ननु दैवस्य कर्म तत् ॥ २२
ऋषयोऽप्युग्रतपसो दैवेनाभिप्रपीडिताः । उत्सृज्य नियमांस्तीव्रान् भ्रश्यन्ते काममन्युभिः ॥ २३
असंकल्पितमेवेह यदकस्मात् प्रवर्तते । निवर्त्यारम्भमारब्धं ननु दैवस्य कर्म तत् ॥ २४
एतया तत्त्वया[1] बुद्ध्या संस्तभ्यात्मानमात्मना । व्याहतेऽप्यभिषेके मे परितापो न विद्यते ॥ २५
तस्मादपरितापः संस्त्वमप्यनुविधाय माम् । प्रतिसंहारय क्षिप्रमाभिषेचनिकीं क्रियाम् ॥ २६
एभिरेव घटैः सर्वैरभिषेचनसंभृतैः । मम लक्ष्मण तापस्ये व्रतस्नानं भविष्यति ॥ २७
अथवा किं ममैतेन राज्यद्रव्यमयेन तु । उद्धृतं मे स्वयं तोयं व्रतादेशं करिष्यति ॥ २८
मा च लक्ष्मण संतापं कार्षीर्लक्ष्म्या विपर्यये । राज्यं वा वनवासो वा वनवासो महोदयः ॥ २९

---

1. तत्त्वयेति तत्त्वमस्या अस्तीति तत्त्वा, अर्शआद्यच् । तया, परमार्थविषयिण्येति यावत् ।     १. अन्यत्र च. छ.

न लक्ष्मणास्मिन् खलु[1] कर्मविघ्ने माता यवीयस्यतिशङ्कनीया ।
दैवाभिपन्ना हि वदत्यनिष्टं जानासि दैवं च तथाप्रभावम् ॥ ३०

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायां
अयोध्याकाण्डे दैवप्राबल्यं नाम द्वाविंशः स—

---

## त्रयोविंशः सर्गः

### लक्ष्मणक्रोधः

इति ब्रुवति रामे तु लक्ष्मणोऽधःशिरा मुहुः । श्रुत्वा मध्यं जगामेव मनसा दुःखहर्षयोः ॥ १
तदा तु बद्ध्वा भ्रुकुटीं भ्रुवोर्मध्ये नरर्षभः । निशश्वास महासर्पो बिलस्थ इव रोषितः ॥ २
तस्य दुष्प्रतिवीक्ष्यं तद् भ्रुकुटीसहितं तदा । बभौ क्रुद्धस्य सिंहस्य मुखस्य सदृशं मुखम् ॥ ३
अग्रहस्तं विधुन्वंस्तु हस्तिहस्तमिवात्मनः । तिर्यगूर्ध्वं शरीरे च पातयित्वा शिरोधराम् ॥ ४
अग्राक्ष्णा वीक्षमाणस्तु तिर्यग्भ्रातरमब्रवीत् । अस्थाने संभ्रमो यस्य जातो वै सुमहानयम् ॥ ५
धर्मदोषप्रसङ्गेन लोकस्यानतिशङ्कया । कथं ह्येतदसंभ्रान्तस्त्वद्विधो वक्तुमर्हति ॥ ६
यथा दैवमशौण्डीरं शौण्डीर क्षत्रियर्षभ । किं नाम कृपणं दैवमशक्तमभिशंससि ॥ ७
पापयोस्ते कथं नाम तयोः शङ्का न विद्यते । सन्ति धर्मोपधाः श्लक्ष्णा धर्मात्मन् किं न बुध्यसे ॥ ८
तयोः सुचरितं स्वार्थं शाठ्यात् परिजिहीर्षतोः । यदि नैवं व्यवसितं स्याद्धि प्रागेव राघव ॥ ९
तयोः प्रागेव दत्तश्च स्याद्वरः प्रकृतश्च सः । लोकविद्विष्टमारब्धं त्वदन्यस्याभिषेचनम् ॥ १०
नोत्सहे सहितुं वीर तत्र मे क्षन्तुमर्हसि । येनेयमागता द्वैधं तव बुद्धिर्महामते ॥ ११
स हि धर्मो मम द्वेष्यः प्रसङ्गाद्यस्य मुह्यसि । कथं त्वं कर्मणा शक्तः कैकेयीवशवर्तिनः ॥ १२
करिष्यसि पितुर्वाक्यमधर्मिष्ठं विगर्हितम् । यद्ययं किल्बिषाद्भेदः कृतोऽप्येवं न गृह्यते ॥ १३
जायते तत्र मे दुःखं धर्मसङ्गश्च गर्हितः । तवायं धर्मसंयोगो लोकस्यास्य विगर्हितः ॥ १४
मनसापि कथं कामं कुर्यात् त्वं कामवृत्तयोः । तयोस्त्वहितयोर्नित्यं शत्र्वोः पित्रभिधानयोः ॥ १५
यद्यपि प्रतिपत्तिस्ते दैवी चापि तयोर्मतम् । तथाप्युपेक्षणीयं ते न मे तदपि रोचते ॥ १६
विक्लवो वीर्यहीनो यः स दैवमनुवर्तते । वीराः संभावितात्मानो न दैवं पर्युपासते ॥ १७
दैवं पुरुषकारेण यः समर्थः प्रबाधितुम् । न दैवेन विपन्नार्थः पुरुषः सोऽवसीदति ॥ १८
द्रक्ष्यन्ति त्वद्य दैवस्य पौरुषं पुरुषस्य च । दैवमानुषयोरद्य व्यक्ता व्यक्तिर्भविष्यति ॥ १९
अद्य मत्पौरुषहतं दैवं द्रक्ष्यन्ति वै जनाः । यद्दैवादाहतं तेऽद्य दृष्टं राज्याभिषेचनम् ॥ २०

---

१. मम राज्यविघ्ने ग.

अत्यङ्कुशमिवोद्दामं गजं मदबलोद्धतम्। प्रधावितमहं दैवं पौरुषेण निवर्तये॥ २१
लोकपालाः समस्तास्ते नाद्य रामाभिषेचनम्। न च कृत्स्नास्त्रयो लोका विहन्युः किं पुनः पिता॥ २२
यैर्विवासस्तवारण्ये मिथो राजन् समर्थितः। अरण्ये ते विवत्स्यन्ति चतुर्दश समास्तथा॥ २३
अहं तदाशां छेत्स्यामि पितुस्तस्याश्च या तव। अभिषेकविघातेन पुत्रराज्याय वर्तते॥ २४
मद्बलेन विरुद्धाय न स्याद्दैवबलं तथा। प्रभविष्यति दुःखाय यथोग्रं पौरुषं मम॥ २५
ऊर्ध्वं वर्षसहस्रान्ते प्रजापाल्यमनन्तरम्[1]। आर्यपुत्राः[2] करिष्यन्ति वनवासं गते त्वयि॥ २६
पूर्वराजर्षिवृत्त्या हि वनवासो विधीयते। प्रजा निक्षिप्य पुत्रेषु पुत्रवत् परिपालने॥ २७
स चेद्राजन्यनेकाग्रे राज्यविभ्रमशङ्कया। नैवमिच्छसि धर्मात्मन् राज्यं राम त्वमात्मनि॥ २८
प्रतिजाने च ते वीर मा भूवं वीरलोकभाक्। राज्यं च तव रक्षेयमहं वेलेव सागरम्॥ २९
मङ्गलैरभिषिञ्चस्व तत्र त्वं व्यापृतो भव। अहमेको महीपालानलं वारयितुं बलात्॥ ३०
न शोभार्थाविमौ बाहू न धनुर्भूषणाय मे। नासिराबन्धनार्थाय न शराः स्तम्भहेतवः॥ ३१
अमित्रदमनार्थं मे सर्वमेतच्चतुष्टयम्। न चाहं कामयेऽत्यर्थं यः स्याच्छत्रुर्मतो मम॥ ३२
असिना तीक्ष्णधारेण विद्युच्चलितवर्चसा। प्रगृहीतेन वै शत्रुं वज्रिणं वा न कल्पये[3]॥ ३३
खड्गनिष्पेषनिष्पिष्टैर्गहना दुश्चरा च मे। हस्त्यश्वरथहस्तोरुशिरोभिर्भविता मही॥ ३४
खड्गधाराहता मेऽद्य दीप्यमाना इवाद्रयः। पतिष्यन्ति द्विपो भूमौ मेघा इव सविद्युतः॥ ३५
बद्धगोधाङ्गुलित्राणे प्रगृहीतशरासने। कथं पुरुषमानी स्यात् पुरुषाणां मयि स्थिते॥ ३६
बहुभिश्चैकमत्यस्यन्नेकेन च बहूञ्जनान्। विनियोक्ष्याम्यहं बाणान् नृवाजिगजमर्मसु॥ ३७
अद्य मेऽस्त्रप्रभावस्य प्रभावः प्रभविष्यति। राज्ञश्चाप्रभुतां कर्तुं प्रभुत्वं च तव प्रभो॥ ३८
अद्य चन्दनसारस्य केयूरामोक्षणस्य च। वसूनां च विमोक्षस्य सुहृदां पालनस्य च॥ ३९
अनुरूपाविमौ बाहू राम कर्म करिष्यतः। अभिषेचनविघ्नस्य कर्तॄणां ते निवारणे॥ ४०

ब्रवीहि कोऽद्यैव मया वियुज्यतां तवासुहृत्प्राणयशःसुहृज्जनैः।
यथा तवेयं वसुधा वशे भवेत्तथैव मां शाधि तवास्मि किंकरः॥ ४१
विमृज्य बाष्पं परिसान्त्व्य चासकृत् स लक्ष्मणं राघववंशवर्धनः।
उवाच पित्रोर्वचने व्यवस्थितं निबोध मामेष हि सौम्य सत्पथः॥ ४२

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायां
अयोध्याकाण्डे लक्ष्मणक्रोधो नाम त्रयोविंशः सर्गः

---

1. न अन्तरं व्यवधानं यस्य तत् इति प्रजापाल्यविशेषणमेतत्।
2. इदम्, आर्यस्य ते पुत्रा इति पेक्षपथेन विवृतं व्याख्यातृभिः।
3. कल्पये, खण्डशः कल्पय इति तिलकः।

## चतुर्विंशः सर्गः

### कौसल्यार्तिसमाश्वासनम्

तं समीक्ष्य त्ववहितं पितुर्निर्देशपालने । कौसल्या बाष्पसंरुद्धा वचो धर्मिष्ठमब्रवीत् ॥ १

अदृष्टदुःखो धर्मात्मा सर्वभूतप्रियंवदः । मयि जातो दशरथात् कथमुञ्छेन वर्तयेत् ॥ २

यस्य भृत्याश्च दासाश्च मृष्टान्यन्नानि भुञ्जते । कथं स भोक्ष्यते नाथो वने मूलफलान्ययम् ॥ ३

क एतच्छ्रद्दधेच्छ्रुत्वा कस्य वा न भवेद्भयम् । गुणवान् दयितो राज्ञो राघवो यद्विवास्यते ॥ ४

नूनं तु बलवाँल्लोके कृतान्तः सर्वमादिशेत् । लोके रामाभिरामस्त्वं वनं यत्र गमिष्यसि ॥ ५

अयं तु मामात्मभवस्तवादर्शनमारुतः । विलापदुःखसमिधो रुदिताश्रुहुताहुतिः ॥ ६

चिन्ताबाष्पमहाधूमस्तवागमनचिन्तजः[1] । कर्शयित्वा भृशं पुत्र निःश्वासायाससंभवः ॥ ७

त्वया विहीनामिह मां शोकाग्निरतुलो महान् । प्रधक्ष्यति यथा कक्षं चित्रभानुर्हिमात्यये ॥ ८

कथं धेनुः स्वकं वत्सं गच्छन्तं नानुगच्छति । अहं त्वानुगमिष्यामि पुत्र यत्र गमिष्यसि ॥ ९

तथा निगदितं मात्रा तद्वाक्यं पुरुषर्षभः । श्रुत्वा रामोऽब्रवीद्वाक्यं मातरं भृशदुःखिताम् ॥ १०

कैकेय्या वञ्चितो राजा मयि चारण्यमाश्रिते । भवत्या च परित्यक्तो न नूनं वर्तयिष्यति ॥ ११

भर्तुः किल परित्यागो नृशंसः केवलं स्त्रियाः । स भवत्या न कर्तव्यो मनसापि विगर्हितः ॥ १२

यावज्जीवति काकुत्स्थः पिता मे जगतीपतिः । शुश्रूषा क्रियतां तावत् स हि धर्मः सनातनः ॥ १३

एवमुक्ता तु कौसल्या रामेण शुभदर्शना । तथेत्युवाच सुप्रीता राममक्लिष्टकारिणम् ॥ १४

एवमुक्तस्तु वचनं रामो धर्मभृतां वरः । भूयस्तामब्रवीद्वाक्यं मातरं भृशदुःखिताम् ॥ १५

मया चैव भवत्या च कर्तव्यं वचनं पितुः । राजा भर्ता गुरुः श्रेष्ठः सर्वेषामीश्वरः प्रभुः ॥ १६

इमानि तु महारण्ये विहृत्य नव पञ्च च । वर्षाणि परमप्रीतः स्थास्यामि वचने तव ॥ १७

एवमुक्ता प्रियं पुत्रं बाष्पपूर्णानना तदा । उवाच परमार्ता तु कौसल्या पुत्रवत्सला ॥ १८

आसां राम सपत्नीनां वस्तुं मध्ये न मे क्षमम् । नय मामपि काकुत्स्थ वनं वन्यां मृगीं यथा ॥ १९

यदि ते गमने बुद्धिः कृता पितुरपेक्षया । तां तथा रुदतीं रामो रुदन् वचनमब्रवीत् ॥ २०

जीवन्त्या हि स्त्रिया भर्ता दैवतं प्रभुरेव च । भवत्या मम चैवाद्य राजा प्रभवति प्रभुः ॥ २१

न ह्यनाथा वयं राज्ञा लोकनाथेन धीमता । भरतश्चापि धर्मात्मा सर्वभूतप्रियंवदः ॥ २२

भवतीमनुवर्तेत स हि धर्मरतः सदा । यथा मयि तु निष्क्रान्ते पुत्रशोकेन पार्थिवः ॥ २३

श्रमं नावाप्नुयात् किंचिदप्रमत्ता तथा कुरु । दारुणश्चाप्ययं शोको यथैनं न विनाशयेत् ॥ २४

राज्ञो वृद्धस्य सततं हितं चर समाहिता । व्रतोपवासनिरता या नारी परमोत्तमा ॥ २५

भर्तारं नानुवर्तेत सा तु पापगतिर्भवेत् । भर्तुः शुश्रूषया नारी लभते स्वर्गमुत्तमम् ॥ २६

---

१. तवादर्शनाचपत्रः प. छ. तवागमनचिन्तजः गो.

अपि या निर्नमस्कारा निवृत्ता देवपूजनात् । शुश्रूषामेव कुर्वीत भर्तुः प्रियहिते रता ॥ २७
एष धर्मः पुरा दृष्टो लोके वेदे श्रुतः स्मृतः । अग्निकार्येषु च सदा सुमनोभिश्च देवताः ॥ २८
पूज्यास्ते मत्कृते देवि ब्राह्मणाश्चैव सुव्रताः । एवं कालं प्रतीक्षस्व ममागमनकाङ्क्षिणी ॥ २९
नियता नियताहारा भर्तृशुश्रूषणे रता । प्राप्स्यसे परमं कामं मयि प्रत्यागते सति ॥ ३०
यदि धर्मभृतां श्रेष्ठो धारयिष्यति जीवितम् । एवमुक्ता तु रामेण बाष्पपर्याकुलेक्षणा ॥ ३१
कौसल्या पुत्रशोकार्ता रामं वचनमब्रवीत् । गमने सुकृतां बुद्धिं न ते शक्नोमि पुत्रक ॥ ३२
विनिवर्तयितुं वीर नूनं कालो दुरत्ययः । गच्छ पुत्र त्वमेकाग्रो भद्रं तेऽस्तु सदा विभो ॥ ३३
पुनस्त्वयि निवृत्ते तु भविष्यामि गतक्लमा । प्रत्यागते महाभागे कृतार्थे चरितव्रते ॥ ३४
पितुरानृण्यतां प्राप्ते त्वयि लप्स्ये परं सुखम् । कृतान्तस्य गतिः पुत्र दुर्विभाव्या सदा भुवि ॥ ३५
यस्त्वां संचोदयति मे वच आच्छिद्य राघव । गच्छेदानीं महाबाहो क्षेमेण पुनरागतः ॥ ३६
नन्दयिष्यसि मां पुत्र साम्ना वाक्येन चारुणा[१] । अपीदानीं स कालः स्याद्वनात् प्रत्यागतं पुनः ॥ ३७
यत्त्वां[1] पुत्रक पश्येयं जटावल्कलधारिणम् ॥

तथा हि रामं वनवासनिश्चितं समीक्ष्य देवी परमेण चेतसा ।
उवाच रामं शुभलक्षणं वचो बभूव च स्वस्त्ययनाभिकाङ्क्षिणी ॥ ३८

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायां
अयोध्याकाण्डे कौसल्यार्तिसमाश्वासनं नाम चतुर्विंशः सर्गः

---

## पञ्चविंशः सर्गः

### मातृस्वस्त्ययनम्

सापनीय तमायासमुपस्पृश्य जलं शुचि । चकार माता रामस्य मङ्गलानि मनस्विनी ॥ १
न शक्यसे वारयितुं गच्छेदानीं रघूत्तम । शीघ्रमेव निवर्तस्व वर्तस्व च सतां क्रमे ॥ २
यं पालयसि धर्मं त्वं धृत्या च नियमेन च । स वै राघवशार्दूल धर्मस्त्वामभिरक्षतु ॥ ३
येभ्यः प्रणमसे पुत्र[२] चैत्येष्वायतनेषु च । ते च त्वामभिरक्षन्तु वने सह महर्षिभिः ॥ ४
यानि दत्तानि तेऽस्त्राणि विश्वामित्रेण धीमता । तानि त्वामभिरक्षन्तु गुणैः समुदितं सदा ॥ ५
पितृशुश्रूषया पुत्र मातृशुश्रूषया तथा । सत्येन च महाबाहो चिरं जीवाभिरक्षितः ॥ ६
समित्कुशपवित्राणि[2] वेद्यश्चायतनानि च । स्थण्डिलानि च विप्राणां शैला[3] वृक्षाः क्षुपा ह्रदाः ॥ ७
पतङ्गाः पन्नगाः सिंहास्त्वां रक्षन्तु नरोत्तम । स्वस्ति साध्याश्च विश्वे च मरुतश्च महर्षयः ॥ ८

---

1. यदिति यत्रेत्यर्थे ।
2. समित्कुशादिशब्दा इह तत्तदधिष्ठातृदेवतापराः ।
3. अस्मिन् प्रकरणे शैलादिपदानां पुनरुक्तयः पुत्रवात्सल्यपरवशायाः कौसल्याया वात्सल्यातिशयं पुत्ररक्षणे आशाबन्धं पोषयन्ति ।

१. शुभेन चेतसा छ.
२. देवे प्र.

स्वस्ति धाता विधाता च स्वस्ति पूषा भगोऽर्यमा । लोकपालाश्च [1] ते सर्वे वासवप्रमुखास्तथा ॥ ९

ऋतवश्चैव पक्षाश्च मासाः संवत्सराः क्षपाः । दिनानि च मुहूर्ताश्च स्वस्ति कुर्वन्तु ते सदा ॥ १०

स्मृतिर्धृतिश्च धर्मश्च पातु त्वां पुत्र सर्वतः । स्कन्दश्च भगवान् देवः सोमश्च सबृहस्पतिः ॥ ११

सप्तर्षयो नारदश्च ते त्वां रक्षन्तु सर्वतः । ये [2] चापि सर्वतः सिद्धा दिशश्च सदिगीश्वराः ॥ १२

स्तुता मया वने तस्मिन् पान्तु त्वां पुत्र नित्यशः । शैलाः सर्वे समुद्राश्च राजा वरुण एव च ॥ १३

द्यौरन्तरिक्षं पृथिवी नद्यः सर्वास्तथैव च [3] । नक्षत्राणि च सर्वाणि ग्रहाश्च सहदेवताः ॥ १४

अहोरात्रे तथा सन्ध्ये पान्तु त्वां वनमाश्रितम् । ऋतवश्चैव षट् पुण्या मासाः संवत्सरास्तथा [4] ॥ १५

कलाश्च काष्ठाश्च तथा तव शर्म दिशन्तु ते । महावने विचरतो मुनिवेषस्य धीमतः ॥ १६

तवादित्याश्च दैत्याश्च भवन्तु सुखदाः सदा । राक्षसानां पिशाचानां रौद्राणां क्रूरकर्मणाम् ॥ १७

क्रव्यादानां च सर्वेषां मा भूत् पुत्रक ते भयम् । प्लवगा वृश्चिका दंशा मशकाश्चैव कानने ॥ १८

सरीसृपाश्च कीटाश्च मा भूवन् गहने तव । महाद्विपाश्च सिंहाश्च व्याघ्रा ऋक्षाश्च दंष्ट्रिणः ॥ १९

महिषाः शृङ्गिणो रौद्रा न ते द्रुह्यन्तु पुत्रक । नृमांसभोजिनो रौद्रा ये चान्ये सत्त्वजातयः ॥ २०

मा च त्वां हिंसिषुः पुत्र मया संपूजितास्त्विह । आगमास्ते शिवाः सन्तु सिध्यन्तु च पराक्रमाः ॥ २१

सर्वसंपत्तये राम स्वस्तिमान् गच्छ पुत्रक । स्वस्ति तेऽस्त्वान्तरिक्षेभ्यः पार्थिवेभ्यः पुनः पुनः ॥ २२

सर्वेभ्यश्चैव देवेभ्यो ये च ते परिपन्थिनः । शुक्रः [5] सोमश्च सूर्यश्च धनदोऽथ यमस्तथा ॥ २३

पान्तु त्वामर्चिता राम दण्डकारण्यवासिनम् । अग्निर्वायुस्तथा धूमो मन्त्राश्चर्षिमुखाच्च्युताः ॥ २४

उपस्पर्शनकाले तु पान्तु त्वां रघुनन्दन । सर्वलोकप्रभुर्ब्रह्मा भूतभर्ता तथर्षयः ॥ २५

ये च शेषाः सुराः सर्वे रक्षन्तु वनवासिनम् । इति माल्यैः सुरगणान् गन्धैश्चापि यशस्विनी ॥ २६

स्तुतिभिश्चानुरूपाभिरानर्चायतलोचना । ज्वलनं समुपादाय ब्राह्मणेन महात्मना ॥ २७

हावयामास विधिना राममङ्गलकारणात् । घृतं श्वेतानि माल्यानि समिधः श्वेतसर्षपान् ॥ २८

उपसंपादयामास कौसल्या परमाङ्गना । उपाध्यायः स विधिना हुत्वा शान्तिमनामयम् ॥ २९

हुतहव्यावशेषेण बाह्यं बलिमकल्पयत् । मधुदध्यक्षतघृतैः स्वस्ति वाच्य [1] द्विजांस्ततः ॥ ३०

वाचयामास रामस्य वने स्वस्त्ययनक्रियाः । ततस्तस्मै द्विजेन्द्राय राममाता यशस्विनी ॥ ३१

दक्षिणां प्रददौ काम्यां राघवं चेदमब्रवीत् । यन्मङ्गलं सहस्राक्षे सर्वदेवनमस्कृते ॥ ३२

वृत्रनाशे समभवत्तत्ते भवतु मङ्गलम् । यन्मङ्गलं सुपर्णस्य विनताकल्पयत् पुरा ॥ ३३

अमृतं प्रार्थयानस्य तत्ते भवतु मङ्गलम् । अमृतोत्पादने दैत्यान् घ्नतो वज्रधरस्य यत् ॥ ३४

---

1. स्वस्तिवाच्यमिति पठित्वा स्वस्तिवचनमुद्दिश्येति गोविन्दराजो व्याचख्यौ ।

१. ते सर्व इत्यादि ऋतवश्चैव इत्यन्तम् ख. नास्ति ।

२. ते प्र.

३. वायुश्च सचराचरः ग.

४. इदमर्धम् ग. नास्ति ।

५. गुरुः च.

अदितिर्मङ्गलं प्रादात्तत्ते भवतु मङ्गलम् । त्रीन् विक्रमान् प्रक्रमतो विष्णोरमिततेजसः ॥ ३५
यदासीन्मङ्गलं राम तत्ते भवतु मङ्गलम् । ऋतवः सागरा द्वीपा वेदा लोका दिशश्च ते ॥ ३६
मङ्गलानि महाबाहो दिशन्तु शुभमङ्गलाः[1] । इति पुत्रस्य शेषांश्च कृत्वा शिरसि भामिनी ॥ ३७
गन्धैश्चापि समालभ्य राममायतलोचना । ओषधीं चापि सिद्धार्थां विशल्यकरणीं शुभाम् ॥ ३८
चकार रक्षां कौसल्या मन्त्रैरभिजजाप च । उवाचातिप्रहृष्टेव सा दुःखवशवर्तिनी ॥ ३९
वाङ्मात्रेण न भावेन वाचा संसज्जमानया । आनम्य मूर्ध्नि चाघ्राय परिष्वज्य यशस्विनी ॥ ४०
अवदत् पुत्र सिद्धार्थो गच्छ राम यथासुखम् । अरोगं सर्वसिद्धार्थमयोध्यां पुनरागतम् ॥ ४१
पश्यामि त्वां सुखं वत्स सुस्थितं राजवर्त्मनि । प्रनष्टदुःखसंकल्पा हर्षविद्योतितानना ॥ ४२
द्रक्ष्यामि त्वां वनात् प्राप्तं पूर्णचन्द्रमिवोदितम् । भद्रासनगतं राम वनवासादिहागतम् ॥ ४३
द्रक्ष्यामि च पुनस्त्वां तु तीर्णवन्तं पितुर्वचः । मङ्गलैरुपसंपन्नो वनवासादिहागतः ॥ ४४
वध्वा मम च नित्यं त्वं कामान् संवर्धय प्रभो[2] ॥

मयार्चिता देवगणाः शिवादयो महर्षयो भूतमहासुरोरगाः ।
अभिप्रयातस्य वनं चिराय ते हितानि काङ्क्षन्तु दिशश्च राघव ॥ ४५

इतीव चाश्रुप्रतिपूर्णलोचना समाप्य च स्वस्त्ययनं यथाविधि ।
प्रदक्षिणं चैव चकार राघवं पुनः पुनश्चापि निपीड्य सस्वजे ॥ ४६

तथा तु देव्या स कृतप्रदक्षिणो निपीड्य मातुश्चरणौ पुनः पुनः ।
जगाम सीतानिलयं महायशाः स राघवः प्रज्वलितः स्वया श्रिया ॥ ४७

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायां
अयोध्याकाण्डे मातृस्वस्त्ययनं नाम पञ्चविंशः सर्गः

## षड्विंशः सर्गः

### सीताप्रत्यवस्थापनम्

अभिवाद्य च कौसल्यां रामः संप्रस्थितो वनम् । कृतस्वस्त्ययनो मात्रा धर्मिष्ठे वर्त्मनि स्थितः ॥ १
विराजयन् राजसुतो राजमार्गं नरैर्वृतम्[3] । हृदयानि ममन्थेव जनस्य गुणवत्तया ॥ २
वैदेही चापि तत् सर्वं न शुश्राव तपस्विनी । तदेव हृदि तस्याश्च यौवराज्याभिषेचनम्[4] ॥ ३

१. अस्यानन्तरम्—मङ्गलं भगवान् विष्णुर्मङ्गलं मधुसूदनः । मङ्गलं पुण्डरीकाक्षो मङ्गलं गरुडध्वजः ॥— इति ख.

२. त्वामहं वत्स ख.

३. संवर्धं याहि भोः च.

४. इदमर्धम् च. नास्ति ।

देवकार्यं स्वयं कृत्वा कृतज्ञा हृष्टचेतना । अभिज्ञा राजधर्माणां राजपुत्रं प्रतीक्षते ॥ ४
प्रविवेशाथ रामस्तु स्वं वेश्म सुविभूषितम् । प्रहृष्टजनसंपूर्णं ह्रिया किंचिदवाङ्मुखः ॥ ५
अथ सीता समुत्पत्य वेपमाना च तं पतिम् । अपश्यच्छोकसंतप्तं चिन्ताव्याकुलितेन्द्रियम् ॥ ६
तां दृष्ट्वा स हि धर्मात्मा न शशाक मनोगतम् । तं शोकं राघवः सोढुं ततो विवृततां गतः ॥ ७
विवर्णवदनं दृष्ट्वा तं प्रस्विन्नममर्षणम् । आह दुःखाभिसंतप्ता किमिदानीमिदं प्रभो ॥ ८
अद्य बार्हस्पतः श्रीमानुक्तः पुष्यो नु राघव । प्रोच्यते ब्राह्मणैः प्राज्ञैः केन त्वमसि दुर्मनाः ॥ ९
न ते शतशलाकेन जलफेननिभेन च । आवृतं वदनं वल्गु छत्रेणापि विराजते ॥ १०
व्यजनाभ्यां च मुख्याभ्यां शतपत्रनिभेक्षणम् । चन्द्रहंसप्रकाशाभ्यां वीज्यते न तवाननम् ॥ ११
वाग्मिनो वन्दिनश्चापि प्रहृष्टास्त्वां नरर्षभ । स्तुवन्तो नात्र दृश्यन्ते मङ्गलैः सूतमागधाः ॥ १२
न ते क्षौद्रं च दधि च ब्राह्मणा वेदपारगाः । मूर्ध्नि मूर्धाभिषिक्तस्य दधति स्म विधानतः ॥ १३
न त्वां प्रकृतयः सर्वाः श्रेणीमुख्याश्च भूषिताः । अनुव्रजितुमिच्छन्ति पौरजानपदास्तथा ॥ १४
चतुर्भिर्वेगसंपन्नैर्हयैः काञ्चनभूषणैः । मुख्यः पुष्यरथो युक्तः किं न गच्छति तेऽग्रतः ॥ १५
न हस्ती चाग्रतः श्रीमांस्तव लक्षणपूजितः । प्रयाणे लक्ष्यते वीर कृष्णमेघगिरिप्रभः ॥ १६
न च काञ्चनचित्रं ते पश्यामि प्रियदर्शन । भद्रासनं पुरस्कृत्य यान्तं वीरपुरस्कृतम् ॥ १७
अभिषेको यदा सज्जः किमिदानीमिदं तव । अपूर्वो मुखवर्णश्च न प्रहर्षश्च लक्ष्यते ॥ १८
इतीव विलपन्तीं तां प्रोवाच रघुनन्दनः । सीते तत्रभवांस्तातः प्रव्राजयति मां वनम् ॥ १९
कुले महति संभूते धर्मज्ञे धर्मचारिणि । शृणु जानकि येनेदं क्रमेणाभ्यागतं मम ॥ २०
राज्ञा सत्यप्रतिज्ञेन पित्रा दशरथेन च । कैकेय्यै मम मात्रे तु पुरा दत्तौ महावरौ ॥ २१
तयाद्य मम सज्जेऽस्मिन्नभिषेके नृपोद्यते । प्रचोदितः स समयो धर्मेण प्रतिनिर्जितः ॥ २२
चतुर्दश हि वर्षाणि वस्तव्यं दण्डके मया । पित्रा मे भरतश्चापि यौवराज्ये नियोजितः ॥ २३
सोऽहं त्वामागतो द्रष्टुं प्रस्थितो विजनं वनम् । भरतस्य समीपे तु नाहं कथ्यः कदाचन ॥ २४
ऋद्धियुक्ता हि पुरुषा न सहन्ते परस्तवम् । तस्मान्न ते गुणाः कथ्या भरतस्याग्रतो मम ॥ २५
नापि त्वं तेन भर्तव्या विशेषेण कदाचन । अनुकूलतया शक्यं समीपे तस्य वर्तितुम् ॥ २६
तस्मै दत्तं नृपतिना यौवराज्यं सनातनम् । स प्रसाद्यस्त्वया सीते नृपतिश्च विशेषतः ॥ २७
अहं चापि प्रतिज्ञां तां गुरोः समनुपालयन् । वनमद्यैव यास्यामि स्थिरा भव मनस्विनी ॥ २८
याते च मयि कल्याणि वनं मुनिनिषेवितम् । व्रतोपवासपरया भवितव्यं त्वयानघे ॥ २९
कल्यमुत्थाय देवानां कृत्वा पूजां यथाविधि । वन्दितव्यो दशरथः पिता मम नरेश्वरः ॥ ३०
माता च मम कौसल्या वृद्धा संतापकर्शिता । धर्ममेवाग्रतः कृत्वा त्वत्तः संमानमर्हति ॥ ३१
वन्दितव्याश्च ते नित्यं याः शेषा मम मातरः । स्नेहप्रणयसंभोगैः समा हि मम मातरः ॥ ३२
भ्रातृपुत्रसमौ चापि द्रष्टव्यौ च विशेषतः । त्वया भरतशत्रुघ्नौ प्राणैः प्रियतरौ मम ॥ ३३

विप्रियं न च कर्तव्यं भरतस्य कदाचन । स हि राजा प्रभुश्चैव देशस्य च कुलस्य च ॥ ३४

आराधिता हि शीलेन प्रयत्नैश्चोपसेविताः । राजानः संप्रसीदन्ति प्रकुप्यन्ति विपर्यये ॥ ३५

औरसानपि पुत्रान् हि त्यजन्त्यहितकारिणः । समर्थान् संप्रगृह्णन्ति परानपि नराधिपाः ॥ ३६

सा त्वं वसेह कल्याणि राज्ञः समनुवर्तिनी । भरतस्य रता धर्मे सत्यव्रतपरायणा ॥ ३७

अहं गमिष्यामि महावनं प्रिये त्वया हि वस्तव्यमिहैव भामिनि ।
यथा व्यलीकं कुरुषे न कस्यचित्तथा त्वया कार्यमिदं वचो मम ॥ ३८

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायां
अयोध्याकाण्डे सीताप्रत्यवस्थापनं नाम षड्विंशः सर्गः

---

## सप्तविंशः सर्गः

### पतिव्रताध्यवसायः

एवमुक्ता तु वैदेही प्रियार्हा प्रियवादिनी । प्रणयादेव संक्रुद्धा भर्तारमिदमब्रवीत् ॥ १

किमिदं भाषसे राम वाक्यं लघुतया ध्रुवम् । त्वया यदपहास्यं मे श्रुत्वा नरवरात्मज ॥ २

आर्यपुत्र पिता माता भ्राता पुत्रस्तथा स्नुषा । स्वानि पुण्यानि भुञ्जानाः स्वं स्वं भाग्यमुपासते ॥ ३

भर्तुर्भाग्यं तु भार्यैका प्राप्नोति पुरुषर्षभ । अतश्चैवाहमादिष्टा वने वस्तव्यमित्यपि ॥ ४

न पिता नात्मजो नात्मा न माता न सखीजनः । इह प्रेत्य च नारीणां पतिरेको गतिः सदा ॥ ५

यदि त्वं प्रस्थितो दुर्गं वनमद्यैव राघव । अग्रतस्ते गमिष्यामि मृद्नती कुशकण्टकान् ॥ ६

ईर्ष्यारोषौ बहिष्कृत्य पीतशेषमिवोदकम् । नय मां वीर विस्रब्धः पापं मयि न विद्यते ॥ ७

प्रासादाग्रैर्विमानैर्वा वैहायसगतेन वा । सर्वावस्थागता भर्तुः पादच्छाया विशिष्यते ॥ ८

अनुशिष्टास्मि मात्रा च पित्रा च विविधाश्रयम् । नास्मि संप्रति वक्तव्या वर्तितव्यं यथा मया ॥ ९

अहं दुर्गं गमिष्यामि वनं पुरुषवर्जितम् । नानामृगगणाकीर्णं शार्दूलवृकसेवितम् ॥ १०

सुखं वने निवत्स्यामि यथैव भवने पितुः । अचिन्तयन्ती त्रीँल्लोकांश्चिन्तयन्ती पतिव्रतम् ॥ ११

शुश्रूषमाणा ते नित्यं नियता ब्रह्मचारिणी । सह रंस्ये त्वया वीर वनेषु मधुगन्धिषु ॥ १२

त्वं हि कर्तुं वने शक्तो राम संपरिपालनम् । अन्यस्यापि जनस्येह किं पुनर्मम मानद ॥ १३

सह त्वया गमिष्यामि वनमद्य न संशयः । नाहं शक्या महाभाग निवर्तयितुमुद्यमात् ॥ १४

फलमूलाशना नित्यं भविष्यामि न संशयः । न ते दुःखं करिष्यामि निवसन्ती सह त्वया ॥ [1] १५

---

१. अस्यानन्तरम्—वीराणां राजपुत्राणां त्वयेरितम् ॥—इति च. झ. ञ.
शस्त्रशास्त्रविदुषां नृप । अनर्हमयशस्यं च न श्रोतव्यं

अग्रतस्ते गमिष्यामि भोक्ष्ये भुक्तवति त्वयि[1] । इच्छामि सरितः शैलान् पल्वलानि वनानि च ॥ १६
द्रष्टुं सर्वत्र निर्भीता त्वया नाथेन धीमता । हंसकारण्डवाकीर्णाः पद्मिनीः साधु पुष्पिताः ॥ १७
इच्छेयं सुखिनी द्रष्टुं त्वया वीरेण संगता । अभिषेकं करिष्यामि तासु नित्यं यतव्रता ॥ १८
सह त्वया विशालाक्ष रंस्ये परमनन्दिनी । एवं वर्षसहस्राणि[2] शतं वाहं त्वया सह ॥ १९
व्यतिक्रमं न वेत्स्यामि स्वर्गोऽपि न हि मे मतः । स्वर्गेऽपि च विना वासो भविता यदि राघव ॥२०
त्वया मम नरव्याघ्र नाहं तमपि रोचये ॥

अहं गमिष्यामि वनं सुदुर्गमं मृगायुतं वानरवारणैर्युतम् ।
वने निवत्स्यामि यथा पितुर्गृहे तवैव पादावुपगृह्य संयता ॥ २१

अनन्यभावामनुरक्तचेतसं त्वया वियुक्तां मरणाय निश्चिताम् ।
नयस्व मां साधु कुरुष्व याचनां न ते मयातो गुरुता भविष्यति ॥ २२

तथा ब्रुवाणामपि धर्मवत्सलो न च स्म सीतां नृवरो निनीषति ।
उवाच सीतां बहु संनिवर्तने वने निवासस्य च दुःखितां प्रति ॥ २३

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायां
अयोध्याकाण्डे पतिव्रताध्यवसायो नाम सप्तविंशः सर्गः

---

## अष्टाविंशः सर्गः

### वनदुःखप्रतिबोधनम्

स एवं ब्रुवतीं सीतां धर्मज्ञो धर्मवत्सलः । न नेतुं कुरुते बुद्धिं वने दुःखानि चिन्तयन् ॥ १
सान्त्वयित्वा पुनस्तां तु बाष्पपर्याकुलेक्षणाम् । निवर्तनार्थे धर्मात्मा वाक्यमेतदुवाच ह ॥ २
सीते महाकुलीनासि धर्मे च निरता सदा । इहाचरस्व धर्मं त्वं यथा मे मनसः सुखम् ॥ ३
सीते यथा त्वां वक्ष्यामि तथा कार्यं त्वयाबले । वने दोषा हि बहवो वदतस्तान्निबोध मे ॥ ४
सीते विमुच्यतामेषा वनवासकृता मतिः । बहुदोषं हि कान्तारं वनमित्यभिधीयते ॥ ५
हितबुद्ध्या खलु वचो मयैतदभिधीयते[3] । सदा सुखं न जानामि दुःखमेव सदा वनम् ॥ ६
गिरिनिर्झरसंभूता गिरिकन्दरवासिनाम् । सिंहानां निनदा दुःखाः श्रोतुं दुःखमतो वनम् ॥ ७
क्रीडमानाश्च विस्रब्धा मत्ताः शून्ये महामृगाः । दृष्ट्वा समभिवर्तन्ते सीते दुःखमतो वनम् ॥ ८
सग्राहाः सरितश्चैव पङ्कवत्यः सुदुस्तराः । मत्तैरपि गजैर्नित्यमतो दुःखतरं वनम् ॥ ९
लताकण्टकसंकीर्णाः कृकवाकूपनादिताः । निरपाश्च सुदुर्गाश्च मार्गा दुःखमतो वनम् ॥ १०

---

१. इदमर्धम् ख. छ. नास्ति । २. -सहस्राणाम् गो. ३. इदमर्धम् घ. नास्ति ।

सुप्यते पर्णशय्यासु स्वयं भग्नासु भूतले। रात्रिषु श्रमखिन्नेन तस्माद्दुःखतरं वनम् ॥ ११
अहोरात्रं च संतोषः कर्तव्यो नियतात्मना। फलैर्वृक्षावपतितैः सीते दुःखमतो वनम् ॥ १२
उपवासश्च कर्तव्यो यथाप्राणेन मैथिलि। जटाभारश्च कर्तव्यो वल्कलाम्बरधारिणा ॥ १३
देवतानां पितृणां च कर्तव्यं विधिपूर्वकम्। प्राप्तानामतिथीनां च नित्यशः प्रतिपूजनम् ॥ १४
कार्यस्त्रिरभिषेकश्च काले काले च नित्यशः। चरता नियमेनैव तस्माद्दुःखतरं वनम् ॥ १५
उपहारश्च कर्तव्यः कुसुमैः स्वयमाहृतैः। आर्षेण विधिना वेद्यां बाले दुःखमतो वनम् ॥ १६
यथालब्धेन संतोषः कर्तव्यस्तेन मैथिलि। यताहारैर्वनचरैर्नित्यं दुःखमतो वनम् ॥ १७
अतीव वातास्तिमिरं बुभुक्षा चात्र नित्यशः। भयानि च महान्त्यत्र ततो दुःखतरं वनम् ॥ १८
सरीसृपाश्च बहवो बहुरूपाश्च भामिनि। चरन्ति पृथिवीं दर्पात्ततो दुःखतरं वनम् ॥ १९
नदीनिलयनाः सर्पा नदीकुटिलगामिनः। तिष्ठन्त्यावृत्य पन्थानं ततो दुःखतरं वनम् ॥ २०
पतङ्गा वृश्चिकाः कीटा दंशाश्च मशकैः सह। बाधन्ते नित्यमबले तस्माद्दुःखतरं वनम् ॥ २१
द्रुमाः कण्टकिनश्चैव कुशकाशाश्च भामिनि। वने व्याकुलशाखाग्रास्तेन दुःखतरं वनम् ॥ २२
कायक्लेशाश्च बहवो भयानि विविधानि च। अरण्यवासे वसतो दुःखमेव ततो वनम् ॥ २३
क्रोधलोभौ विमोक्तव्यौ कर्तव्या तपसे मतिः। न भेतव्यं च भेतव्ये नित्यं दुःखमतो वनम् ॥ २४
तदलं ते वनं गत्वा क्षमं न हि वनं तव। विमृशन्निह पश्यामि बहुदोषकरं वनम् ॥ २५

वनं तु नेतुं न कृता मतिस्तदा बभूव रामेण यदा महात्मना।
न तस्य सीता वचनं चकार तत्ततोऽब्रवीद्राममिदं सुदुःखिता ॥ २६

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायां
अयोध्याकाण्डे वनदुःखप्रतिबोधनं नाम अष्टाविंशः सर्गः

---

## एकोनत्रिंशः सर्गः

### वनानुगमनयाच्ञानिर्बन्धः

एतत्तु वचनं श्रुत्वा सीता रामस्य दुःखिता। प्रसक्ताश्रुमुखी मन्दमिदं वचनमब्रवीत् ॥ १
ये त्वया कीर्तिता दोषा वने वस्तव्यतां प्रति। गुणानित्येव तान् विद्धि तव स्नेहपुरस्कृतान् ॥ २
मृगाः सिंहा गजाश्चैव शार्दूलाः शरभास्तथा। चमराः सृमराश्चैव ये चान्ये वनचारिणः ॥ ३
अदृष्टपूर्वरूपत्वात् सर्वे ते तव राघव। रूपं दृष्ट्वापसर्पेयुर्भये सर्वे हि बिभ्यति ॥ ४
त्वया च सह गन्तव्यं मया गुरुजनाज्ञया। त्वद्वियोगेन मे राम त्यक्तव्यमिह जीवितम् ॥ ५
न च मां त्वत्समीपस्थामपि शक्नोति राघव। सुराणामीश्वरः शक्रः प्रधर्षयितुमोजसा ॥ ६

---

१. तर प्र.

पतिहीना तु या नारी न सा शक्ष्यति जीवितुम् । काममेवंविधं राम त्वया मम विदर्शितम् ॥ ७
अथवापि महाप्राज्ञ ब्राह्मणानां मया श्रुतम् । पुरा पितृगृहे सत्यं वस्तव्यं किल मे वने ॥ ८
लक्षणिभ्यो द्विजातिभ्यः श्रुत्वाहं वचनं पुरा । वनवासकृतोत्साहा नित्यमेव महाबल ॥ ९
आदेशो वनवासस्य प्राप्तव्यः स मया किल । सा त्वया सह तत्राहं यास्यामि प्रिय नान्यथा ॥ १०
कृतादेशा भविष्यामि गमिष्यामि सह त्वया । कालश्चायं समुत्पन्नः सत्यवाग्भवतु द्विजः ॥ ११
वनवासे हि जानामि दुःखानि बहुधा किल । प्राप्यन्ते नियतं वीर पुरुषैरकृतात्मभिः ॥ १२
कन्यया च पितुर्गेहे वनवासः श्रुतो मया । भिक्षिण्याः साधुवृत्ताया मम मातुरिहाग्रतः ॥ १३
प्रसादितश्च वै पूर्वं त्वं वै बहुविधं प्रभो । गमनं वनवासस्य काङ्क्षितं हि सह त्वया ॥ १४
कृतक्षणाहं भद्रं ते गमनं प्रति राघव । वनवासस्य शूरस्य चर्या हि मम रोचते ॥ १५
शुद्धात्मन् प्रेमभावाद्धि भविष्यामि विकल्मषा । भर्तारमनुगच्छन्ती भर्ता हि मम दैवतम् ॥ १६
प्रेत्यभावेऽपि कल्याणः संगमो मे सह त्वया । श्रुतिर्हि श्रूयते पुण्या ब्राह्मणानां तपस्विनाम् ॥ १७
इह लोके च पितृभिर्या स्त्री यस्य महामते । अद्भिर्दत्ता स्वधर्मेण प्रेत्यभावेऽपि तस्य सा ॥ १८
एवमस्मात् स्वकां[1] नारीं सुवृत्तां हि पतिव्रताम् । नाभिरोचयसे नेतुं त्वं मां केनेह हेतुना ॥ १९
भक्तां पतिव्रतां दीनां मां समां सुखदुःखयोः । नेतुमर्हसि काकुत्स्थ समानसुखदुःखिनीम् ॥ २०
यदि मां दुःखितामेवं वनं नेतुं न चेच्छसि । विषमग्निं जलं वाहमास्थास्ये मृत्युकारणात् ॥ २१
एवं बहुविधं तं सा याचते गमनं प्रति । नानुमेने महाबाहुस्तां नेतुं विजनं वनम् ॥ २२
एवमुक्ता तु सा चिन्तां मैथिली समुपागता । स्नापयन्तीव गामुष्णैरश्रुभिर्नयनच्युतैः ॥ २३
चिन्तयन्तीं तथा तां तु निवर्तयितुमात्मवान् । क्रोधाविष्टां तु वैदेहीं[1] काकुत्स्थो बह्वसान्त्वयत् ॥ २४

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायां
अयोध्याकाण्डे वनानुगमनयाच्ञानिर्बन्धो नाम एकोनत्रिंशः सर्गः

---

## त्रिंशः सर्गः

### वनगमनाभ्युपपत्तिः

सान्त्व्यमाना तु रामेण मैथिली जनकात्मजा । वनवासनिमित्ताय भर्तारमिदमब्रवीत् ॥ १
सा तमुत्तमसंविग्ना सीता विपुलवक्षसम् । प्रणयाच्चाभिमानाच्च परिचिक्षेप राघवम् ॥ २
किं त्वामन्यत वैदेहः पिता मे मिथिलाधिपः । राम जामातरं प्राप्य स्त्रियं पुरुषविग्रहम् ॥ ३
अनृतं बत लोकोऽयमज्ञानाद्यद्धि वक्ष्यति । तेजो नास्ति परं रामे तपतीव दिवाकरे ॥ ४

---

1. स्वकामिति स्वीयामित्यर्थः । यथाश्रुतमिदमार्षम् । स्विकामिति पाठः सम्भाव्यते ।    १. च ताम्रोष्ठीम् ङ,

किं हि कृत्वा विषण्णस्त्वं कुतो वा भयमस्ति ते । यत् परित्यक्तुकामस्त्वं मामनन्यपरायणाम् ॥ ५
द्युमत्सेनसुतं वीर सत्यवन्तमनुव्रताम् । सावित्रीमिव मां विद्धि त्वमात्मवशवर्तिनीम् ॥ ६
न त्वहं मनसाप्यन्यं द्रष्टास्मि त्वदृतेऽनघ । त्वया राघव गच्छेयं यथान्या कुलपांसनी[1] ॥ ७
स्वयं तु भार्यां कौमारीं चिरमध्युषितां सतीम् । शैलूष इव मां राम परेभ्यो दातुमिच्छसि ॥ ८
यस्य[2] पथ्यं च रामात्थ यस्य चार्थेऽवरुध्यसे । त्वं तस्य भव वश्यश्च विधेयश्च सदानघ ॥ ९
स मामनादाय वनं न त्वं प्रस्थातुमर्हसि । तपो वा यदि वारण्यं स्वर्गो वा स्यात्त्वया सह ॥ १०
न च मे भविता तत्र कश्चित् पथि परिश्रमः । पृष्ठतस्तव गच्छन्त्या विहारशयनेष्विव ॥ ११
कुशकाशशरेषीका ये च कण्टकिनो द्रुमाः । तूलाजिनसमस्पर्शा मार्गे मम सह त्वया ॥ १२
महावातसमुद्धूतं यन्मामपकरिष्यति । रजो रमण तन्मन्ये परार्ध्यमिव चन्दनम् ॥ १३
शाद्वलेषु यथा शिश्ये वनान्ते वनगोचर । कुथास्तरणतल्पेषु किं स्यात् सुखतरं ततः ॥ १४
पत्रं मूलं फलं यत्त्वमल्पं वा यदि वा बहु । दास्यसि स्वयमाहृत्य तन्मेऽमृतरसोपमम् ॥ १५
न मातुर्न पितुस्तत्र स्मरिष्यामि न वेश्मनः । आर्तवान्युपभुञ्जाना पुष्पाणि च फलानि च ॥ १६
न च तत्र गतं किंचिद्द्रष्टुमर्हसि विप्रियम् । मत्कृते न च ते शोको न भविष्यामि दुर्भरा ॥ १७
यस्त्वया सह स स्वर्गो निरयो यस्त्वया विना । इति जानन् परां प्रीतिं गच्छ राम मया सह ॥ १८
अथ मामेवमव्यग्रां वनं नैव नयिष्यसि । विषमद्यैव पास्यामि मा विशं द्विषतां वशम् ॥ १९
पश्चादपि हि दुःखेन मम नैवास्ति जीवितम् । उज्झितायास्त्वया नाथ तदैव मरणं वरम् ॥ २०
इमं हि सहितुं शोकं मुहूर्तमपि नोत्सहे । किं पुनर्दश वर्षाणि त्रीणि चैकं च दुःखिता[3] ॥ २१
इति सा शोकसंतप्ता विलप्य करुणं बहु । चुक्रोश पतिमायस्ता भृशमालिङ्ग्य सस्वरम् ॥ २२

1. त्वां विना अन्य नैवाहं द्रक्ष्यामि । अतस्त्वया सह गच्छेयम् । न चायं ममैवैकस्याः कश्चिदतिशयः, यावदन्या या काचित् कुलवधूः अकुलपांसनी या कुलदूषणी न भवति साप्येवविधमेवाचरेत् । यदि मां वनगमनाय नानुमन्यसे त्वयैवाहं कुलपांसनीव विहितास्यामितिभावः।

व्याख्यातारस्तु यथान्या कुलपांसनी करोति तथान्यमहं न द्रष्टास्मि।अतस्त्वयागच्छेयमिति योजयन्ति। तत्र यथेत्युपमानार्थस्य त्वयेत्यव्यवहितेन स्वरसप्रतीतस्य संबन्धस्य त्यागो व्यतिरेकविधया च तस्य व्यवहितेन मनसेत्यनेनैव संबन्धकरणमितीदं क्लेशेनोपपादनीयम् ।

2 यस्य धर्मस्य पथ्यं अनुकूलाचरणं सर्वदा कथयसि, धर्मप्रतिबद्धेन च राज्ञा यस्य भरतस्य कृते त्वमेवं निगृह्यसे तस्य धर्मस्याधीनः, तत एव तस्य च भरतस्य प्रेष्यः त्वं तावत् भव । न खलु धर्मस्येदृश पथ्यमस्ति, न च मे तथा काश्चिन्निरोधः, यदिह स्थित्वा भरतानुवर्तिन्या मया भवितव्यमिति तात्पर्यम् ।

व्याख्यानेषु तु यस्य मातृजनस्य, मद्रूपजनस्य, भरतस्य वा पथ्यमात्थेत्यर्थभेदा दर्शिताः । पथ्यचराम् आत्थ इति पदं छित्वा 'यस्य भरतस्य मा पथ्यचरामिष्टानुवर्तिनीं संप्रत्येव कथितवानसि । पथ्यंचरामित्यत्र मुमार्षः' इत्युक्तं तिलके ।

3. चतुर्दशानां वर्षाणां दश त्रीणि एकं चेति विभजनेनेदं ध्वन्यते । दश तावदाद्यानि वर्षाणि विप्रलम्भे-महता दुःखभरेण यापनीयानि; तत ऊर्ध्वं त्रीणितु दशभ्यो महीयांसि भासमानानि महत्तरेण; अन्तिमं त्वेकमप्य-नवधिकमेव ताम् प्रतीति तदतिवाहनमसंभाव्यमेवेति ।

सा विद्धा बहुभिर्वाक्यैर्दिग्धैरिव गजाङ्गना । चिरसंनियतं बाष्पं मुमोचाग्निमिवारणिः ॥ २३
तस्याः स्फटिकसंकाशं वारि संतापसंभवम् । नेत्राभ्यां परिसुस्राव पङ्कजाभ्यामिवोदकम् ॥ २४
तत्सितामलचन्द्राभं मुखमायतलोचनम् । पर्यशुष्यत बाष्पेण जलोद्धृतमिवाम्बुजम् ॥ २५
तां परिष्वज्य बाहुभ्यां विसंज्ञामिव दुःखिताम् । उवाच वचनं रामः परिविश्वासयंस्तदा ॥ २६
न देवि तव दुःखेन स्वर्गमप्यभिरोचये । न हि मेऽस्ति भयं किंचित् स्वयंभोरिव सर्वतः ॥ २७
तव सर्वमभिप्रायमविज्ञाय शुभानने । वासं न रोचयेऽरण्ये शक्तिमानपि रक्षणे ॥ २८
यत् सृष्टासि मया सार्धं वनवासाय मैथिलि । न विहातुं मया शक्या कीर्तिरात्मवता यथा ॥ २९
धर्मस्तु गजनासोरु सद्भिराचरितः पुरा । तं चाहमनुवर्तेऽद्य यथा सूर्यं सुवर्चला[2] ॥ ३०
न खल्वहं न गच्छेयं वनं जनकनन्दिनि । वचनं तन्नयति मां पितुः सत्योपबृंहितम् ॥ ३१
एष धर्मस्तु सुश्रोणि पितुर्मातुश्च वश्यता । अतश्च तं व्यतिक्रम्य नाहं जीवितुमुत्सहे ॥ ३२
स्वाधीनं समतिक्रम्य मातरं पितरं गुरुम् । अस्वाधीनं कथं दैवं प्रकारैरभिराध्यते ॥ ३३
यत्त्रयं तत्त्रयो लोकाः पवित्रं तत्समं भुवि । नान्यदस्ति शुभापाङ्गे तेनेदमभिराध्यते ॥ ३४
न सत्यं दानमानौ वा न यज्ञाश्चाप्तदक्षिणाः । तथा बलकराः सीते यथा सेवा पितुर्हिता ॥ ३५
स्वर्गो धनं वा धान्यं वा विद्याः पुत्राः सुखानि च । गुरुवृत्त्यनुरोधेन न किंचिदपि दुर्लभम् ॥ ३६
देवगन्धर्वगोलोकान् ब्रह्मलोकांस्तथा नराः । प्राप्नुवन्ति महात्मानो मातापितृपरायणाः ॥ ३७
स मां पिता यथा शास्ति सत्यधर्मपथे स्थितः । तथा वर्तितुमिच्छामि स हि धर्मः सनातनः ॥ ३८
मम सन्ना मतिः सीते त्वां नेतुं दण्डकावनम् । वसिष्यामीति सा त्वं मामनुयातुं सुनिश्चिता ॥ ३९
सा हि सृष्टानवद्याङ्गी वनाय मदिरेक्षणे । अनुगच्छस्व मां भीरु सहधर्मचरी भव ॥ ४०
सर्वथा सदृशं सीते मम स्वस्य कुलस्य च । व्यवसायमनुक्रान्ता सीते त्वमतिशोभनम् ॥ ४१
आरभस्व गुरुश्रोणि वनवासक्षमाः क्रियाः । नेदानीं त्वदृते सीते स्वर्गोऽपि मम रोचते ॥ ४२
ब्राह्मणेभ्यश्च रत्नानि भिक्षुकेभ्यश्च भोजनम् । देहि चाशंसमानेभ्यः संत्वरस्व च मा चिरम् ॥ ४३
भूषणानि महार्हाणि वरवस्त्राणि यानि च । रमणीयाश्च ये केचित् क्रीडार्थाश्चाप्युपस्कराः ॥ ४४
शयनीयानि यानानि मम चान्यानि यानि च । देहि स्वभृत्यवर्गस्य ब्राह्मणानामनन्तरम् ॥ ४५
अनुकूलं तु सा भर्तुर्ज्ञात्वा गमनमात्मनः । क्षिप्रं प्रमुदिता देवी दातुमेवोपचक्रमे ॥ ४६

ततः प्रहृष्टा परिपूर्णमानसा यशस्विनी भर्तुरवेक्ष्य भाषितम् ।
धनानि रत्नानि च दातुमङ्गना प्रचक्रमे धर्मभृतां मनस्विनी ॥ ४७

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायां
अयोध्याकाण्डे वनगमनाभ्युपपत्तिर्नाम त्रिंशः सर्गः

---

1. दिग्धैरिति, विषलिप्तबाणैरित्यर्थः । १. तथैव ङ. ञ.
2. सुवर्चला सूर्यमिव त्वामनुवर्तेऽहमित्यर्थः ।

## एकत्रिंशः सर्गः

### लक्ष्मणवनानुगमनाभ्यनुज्ञा

एवं श्रुत्वा तु संवादं लक्ष्मणः पूर्वमागतः । बाष्पपर्याकुलमुखः शोकं सोढुमशक्नुवन् ॥ १
स भ्रातुश्चरणौ गाढं निपीड्य रघुनन्दनः । सीतामुवाचातियशा राघवं च महाव्रतम् ॥ २
यदि गन्तुं कृता बुद्धिर्वनं मृगगजायुतम् । अहं त्वानुगमिष्यामि वनमग्रे धनुर्धरः ॥ ३
मया समेतोऽरण्यानि बहूनि विचरिष्यसि । पक्षिभिर्मृगयूथैश्च संघुष्टानि समन्ततः ॥ ४
न देवलोकाक्रमणं नामरत्वमहं वृणे । ऐश्वर्यं वापि लोकानां कामये न त्वया विना ॥ ५
एवं ब्रुवाणः सौमित्रिर्वनवासाय निश्चितः । रामेण बहुभिः सान्त्वैर्निषिद्धः पुनरब्रवीत् ॥ ६
अनुज्ञातश्च भवता पूर्वमेव यदस्म्यहम् । किमिदानीं पुनरिदं क्रियते मे निवारणम् ॥ ७
यदर्थं प्रतिषेधो मे क्रियते गन्तुमिच्छतः । एतदिच्छामि विज्ञातुं संशयोऽयं ममानघ ॥ ८
ततोऽब्रवीन्महातेजा रामो लक्ष्मणमग्रतः । स्थितं प्राग्गामिनं वीरं याचमानं कृताञ्जलिम् ॥ ९
स्निग्धो धर्मरतो वीर सततं सत्पथे स्थितः । प्रियः प्राणसमो वश्यो भ्राता चापि सखा च मे ॥ १०
मयाद्य सह सौमित्रे त्वयि गच्छति तद्वनम् । को भरिष्यति कौसल्यां सुमित्रां वा यशस्विनीम् ॥ ११
अभिवर्षति कामैर्यः पर्जन्यः पृथिवीमिव । स कामपाशपर्यस्तो महातेजा महीपतिः ॥ १२
सा हि राज्यमिदं प्राप्य नृपस्याश्वपतेः सुता । दुःखितानां सपत्नीनां न करिष्यति शोभनम् ॥ १३
न स्मरिष्यति कौसल्यां सुमित्रां च सुदुःखिताम् । भरतो राज्यमासाद्य कैकेय्यां पर्यवस्थितः ॥ १४
तामार्यां स्वयमेवेह राजानुग्रहणेन वा । सौमित्रे भर कौसल्यामुक्तमर्थमिमं चर ॥ १५
एवं मयि च ते भक्तिर्भविष्यति सुदर्शिता । धर्मज्ञ गुरुपूजायां धर्मश्चाप्यतुलो महान् ॥ १६
एवं कुरुष्व सौमित्रे मत्कृते रघुनन्दन । अस्माभिर्विप्रहीणाया मातुर्नो न भवेत् सुखम् ॥ १७
एवमुक्तस्तु रामेण लक्ष्मणः श्लक्ष्णया गिरा । प्रत्युवाच तदा रामं वाक्यज्ञो वाक्यकोविदम् ॥ १८
तवैव तेजसा वीर भरतः पूजयिष्यति । कौसल्यां च सुमित्रां च प्रयतो नात्र संशयः ॥ १९
यदि दुःस्थो न रक्षेत भरतो राज्यमुत्तमम् । प्राप्य दुर्मनसा वीर गर्वेण च विशेषतः ॥ २०
तमहं दुर्मतिं क्रूरं वधिष्यामि न संशयः । तत्पक्ष्यानपि तान् सर्वांस्त्रैलोक्यमपि किं तु सा ॥ २१
कौसल्या बिभृयादार्या सहस्रमपि मद्विधान् । यस्याः सहस्रं ग्रामाणां संप्राप्तमुपजीविनाम्[२] ॥ २२
तदात्मभरणे चैव मम मातुस्तथैव च । पर्याप्ता मद्विधानां च भरणाय मनस्विनी ॥ २३
कुरुष्व मामनुचरं वैधर्म्यं नेह विद्यते । कृतार्थोऽहं भविष्यामि तव चार्थः प्रकल्पते ॥ २४
धनुरादाय सशरं[१] खनित्रपिटकाधरः । अग्रतस्ते गमिष्यामि पन्थानमनुदर्शयन् ॥ २५

---

१. उपजीवनम् ब      २. सगुणम् ङ.

आहरिष्यामि ते नित्यं मूलानि च फलानि च । वन्यानि यानि चान्यानि स्वाहाराणि तपस्विनाम् ॥ २६
भवांस्तु सह वैदेह्या गिरिसानुषु रंस्यते । अहं सर्वं करिष्यामि जाग्रतः स्वपतश्च ते ॥ २७
रामस्त्वनेन वाक्येन सुप्रीतः प्रत्युवाच तम् । व्रजापृच्छस्व सौमित्रे सर्वमेव सुहृज्जनम् ॥ २८
ये च राज्ञो ददौ दिव्ये महात्मा वरुणः स्वयम् । जनकस्य महायज्ञे धनुषी रौद्रदर्शने ॥ २९
अभेद्यकवचे दिव्ये तूणी चाक्षयसायकौ । आदित्यविमलौ चोभौ खड्गौ हेमपरिष्कृतौ ॥ ३०
सत्कृत्य निहितं सर्वमेतदाचार्यसद्मनि । सर्वमायुधमादाय क्षिप्रमाव्रज लक्ष्मण ॥ ३१
स सुहृज्जनमामन्त्र्य वनवासाय निश्चितः । इक्ष्वाकुगुरुमागम्य जग्राहायुधमुत्तमम् ॥ ३२
तद्दिव्यं रघुशार्दूलः सत्कृतं माल्यभूषितम् । रामाय दर्शयामास सौमित्रिः सर्वमायुधम् ॥ ३३
तमुवाचात्मवान् रामः प्रीत्या लक्ष्मणमागतम्[1] । काले त्वमागतः सौम्य काङ्क्षिते मम लक्ष्मण ॥ ३४
अहं प्रदातुमिच्छामि यदिदं मामकं धनम् । ब्राह्मणेभ्यस्तपस्विभ्यस्त्वया सह परंतप ॥ ३५
वसन्तीह दृढं भक्त्या गुरुषु द्विजसत्तमाः । तेषामपि च मे भूयः सर्वेषां चोपजीविनाम् ॥ ३६

वसिष्ठपुत्रं तु सुयज्ञमार्यं त्वमानयाशु प्रवरं द्विजानाम् ।
अभिप्रयास्यामि वनं समस्तानभ्यर्च्य शिष्टानपरान् द्विजातीन् ॥ ३७

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
अयोध्याकाण्डे लक्ष्मणवनगमनाभ्यनुज्ञा नाम एकत्रिंशः सर्गः

## द्वात्रिंशः सर्गः

### वित्तविश्राणनम्

ततः शासनमाज्ञाय भ्रातुः शुभतरं प्रियम् । गत्वा स प्रविवेशाशु सुयज्ञस्य निवेशनम् ॥ १
तं विप्रमग्न्यगारस्थं वन्दित्वा लक्ष्मणोऽब्रवीत् । सखेऽभ्यागच्छ पश्य त्वं वेश्म दुष्करकारिणः ॥ २
ततः सन्ध्यामुपास्याशु गत्वा सौमित्रिणा सह । जुष्टं तत् प्राविशल्लक्ष्म्या रम्यं रामनिवेशनम् ॥ ३
तमागतं वेदविदं प्राञ्जलिः सीतया सह । सुयज्ञमभिचक्राम राघवोऽग्निमिवार्चितम् ॥ ४
जातरूपमयैर्मुख्यैरङ्गदैः कुण्डलैः शुभैः । सहेमसूत्रैर्मणिभिः केयूरैर्वलयैरपि ॥ ५
अन्यैश्च रत्नैर्बहुभिः काकुत्स्थः प्रत्यपूजयत् । सुयज्ञं स तदोवाच रामः सीताप्रचोदितः ॥ ६
हारं च हेमसूत्रं च भार्यायै सौम्य हारय । रशनां चाधुना सीता दातुमिच्छति ते सखे[3] ॥ ७
अङ्गदानि विचित्राणि केयूराणि शुभानि च । प्रयच्छति सखे तुभ्यं भार्यायं गच्छती वनम् ॥ ८

---

१. [illegible] पुनः । नागम ।
२. रामायणादि आगतम् इत्यन्तम् ... ३. सखा पुनः ।

पर्यङ्कमग्र्यास्तरणं नानारत्नविभूषितम् । तमपीच्छति वैदेही प्रतिष्ठापयितुं त्वयि ॥ ९
नागः शत्रुंजयो नाम मातुलो यं ददौ मम । तं ते [1]निष्कसहस्रेण ददामि द्विजपुङ्गव ॥ १०
इत्युक्तः स हि रामेण सुयज्ञः प्रतिगृह्य तत् । रामलक्ष्मणसीतानां प्रयुयोजाशिषः शिवाः ॥ ११
अथ भ्रातरमव्यग्रं प्रियं रामः[2] प्रियंवदम् । सौमित्रिं तमुवाचेदं ब्रह्मेव त्रिदशेश्वरम् ॥ १२
अगस्त्यं कौशिकं चैव तावुभौ ब्राह्मणोत्तमौ । अर्चयाहूय सौमित्रे रत्नैः सस्यमिवाम्बुभिः ॥ १३
तर्पयस्व महाबाहो गोसहस्रैश्च मानद । सुवर्णै रजतैश्चैव मणिभिश्च महाधनैः ॥ १४
कौसल्यां च सुमित्रां [3]च भक्तः पर्युपतिष्ठति । आचार्यस्तैत्तिरीयाणामभिरूपश्च वेदवित् ॥ १५
तस्य यानं च दासीश्च सौमित्रे संप्रदापय । कौशेयानि च वस्त्राणि यावत्तुष्यति स द्विजः ॥ १६
सूतश्चित्ररथश्चार्यः सवयाः[4] सुचिरोषितः । तोषयैनं महार्हैश्च रत्नैर्वस्त्रैर्धनैस्तथा ॥ १७
पशुकाभिश्च सर्वाभिर्गवां दशशतेन च । ये चेमे कठकालापा बहवो दण्डमाणवाः ॥ १८
नित्यस्वाध्यायशीलत्वान्नान्यत् कुर्वन्ति किंचन । अलसाः स्वादुकामाश्च महतां चापि संमताः ॥ १९
तेषामशीतियानानि रत्नपूर्णानि दापय । शालिवाहसहस्रं च द्वे शते भद्रकांस्तथा ॥ २०
व्यञ्जनार्थं च सौमित्रे गोसहस्रमुपाकुरु । मेखलीनां महासङ्घः कौसल्यां समुपस्थितः ॥ २१
तेषां सहस्रं सौमित्रे प्रत्येकं संप्रदापय[5] । अम्बा यथा च सा नन्देत् कौसल्या मम दक्षिणाम् ॥ २२
तथा द्विजातींस्तान् सर्वांल्लक्ष्मणार्चय सर्वशः । ततः स पुरुषव्याघ्रस्तद्धनं लक्ष्मणः स्वयम् ॥ २३
यथोक्तं ब्राह्मणेन्द्राणामददाद्धनदो यथा । अथाब्रवीद्बाष्पकलांस्तिष्ठतश्चोपजीविनः ॥ २४
संप्रदाय बहुद्रव्यमेकैकस्योपजीवनम् । लक्ष्मणस्य च यद्वेश्म गृहं च यदिदं मम ॥ २५
अशून्यं कार्यमेकैकं यावदागमनं मम । इत्युक्त्वा दुःखितं सर्वं जनं तमुपजीविनम् ॥ २६
उवाचेदं धनाध्यक्षं धनमानीयतामिति । ततोऽस्य धनमाजह्रुः सर्वमेवोपजीविनः ॥ २७
स राशिः सुमहांस्तत्र दर्शनीयो ह्यदृश्यत । ततः स पुरुषव्याघ्रस्तद्धनं सहलक्ष्मणः ॥ २८
द्विजेभ्यो बालवृद्धेभ्यः कृपणेभ्यो ह्यदापयत् । तत्रासीत्पिङ्गलो गार्ग्यस्त्रिजटो नाम वै द्विजः ॥ २९
उञ्छवृत्तिर्वने नित्यं फालकुद्दाललाङ्गली । तं वृद्धं तरुणी भार्या बालानादाय दारकान् ॥ ३०
अब्रवीद्ब्राह्मणं वाक्यं दारिद्र्येणाभिपीडिता । अपास्य फालं कुद्दालं कुरुष्व वचनं मम ॥ ३१
रामं दर्शय धर्मज्ञं यदि किंचिदवाप्स्यसि । भार्याया वचनं श्रुत्वा शाटीमाच्छाद्य दुश्छदाम् ॥ ३२
स प्रातिष्ठत पन्थानं यत्र रामनिवेशनम् । भृग्वङ्गिरःसमं दीप्त्या त्रिजटं जनसंसदि ॥ ३३
आ पञ्चमायाः कक्ष्याया नैनं कश्चिदवारयत् । स राजपुत्रमासाद्य त्रिजटो वाक्यमब्रवीत् ॥ ३४
निर्धनो बहुपुत्रोऽस्मि राजपुत्र महायशः । उञ्छवृत्तिर्वने नित्यं प्रत्यवेक्षस्व मामिति ॥ ३५

---

१. गज- ङ. अ.
२. प्रियरामः पुरा.
३. च आशीर्भिः ङ. अ.
४. सचिवः च. छ.
५. मेखलीनामित्यादि संप्रदापयेत्यन्तम् ङ. नास्ति ।

तमुवाच तदा रामः परिहाससमन्वितम् । गवां सहस्रमप्येकं न तु विश्राणितं मया ॥ ३६
परिक्षिपसि दण्डेन यावत्तावदवाप्स्यसि । स शाटीं त्वरितः कट्यां संभ्रान्तः परिवेष्ट्य ताम् ॥ ३७
आविध्य दण्डं चिक्षेप सर्वप्राणेन वेगितः । स तीर्त्वा सरयूपारं दण्डस्तस्य कराच्च्युतः ॥ ३८
गोव्रजे बहुसाहस्रे पपातोक्षणसंनिधौ[1] । तं परिष्वज्य धर्मात्मा आ तस्मात् सरयूतटात् ॥ ३९
आनयामास ता गोपैस्त्रिजटायाश्रमं प्रति । उवाच च ततो रामस्तं गार्ग्यमभिसान्त्वयन् ॥ ४०
मन्युर्न खलु कर्तव्यः परिहासो ह्ययं मम ॥

इदं हि तेजस्तव यद्दुरत्ययं तदेव जिज्ञासितुमिच्छता मया ।
इमं भवानर्थमभिप्रचोदितो वृणीष्व किं चेदपरं व्यवस्यति ॥ ४१
ब्रवीमि सत्येन न तेऽस्ति यन्त्रणा धनं हि यद्यन्मम विप्रकारणात् ।
भवत्सु सम्यक्प्रतिपादनेन तन्मयार्जितं प्रीतियशस्करं भवेत् ॥ ४२
ततः सभार्यस्त्रिजटो महामुनिर्गवामनीकं प्रतिगृह्य मोदितः ।
यशोबलप्रीतिसुखोपबृंहणीस्तदाशिषः प्रत्यवदन्महात्मनः ॥ ४३
स चापि रामः परिपूर्णमानसो महद्धनं धर्मबलैरुपार्जितम् ।
नियोजयामास सुहृज्जने चिराद्यथार्हसंमानवचःप्रचोदितः ॥ ४४
द्विजः सुहृद्भृत्यजनोऽथवा तदा दरिद्रभिक्षाचरणश्च योऽभवत् ।
न तत्र कश्चिन्न बभूव तर्पितो यथार्हसंमाननदानसंभ्रमैः ॥ ४५

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
अयोध्याकाण्डे वित्तविश्राणनं नाम द्वात्रिंशः सर्गः

---

## त्रयस्त्रिंशः सर्गः

### पौरवाक्यम्

दत्त्वा तु सह वैदेह्या ब्राह्मणेभ्यो धनं बहु । जग्मतुः पितरं द्रष्टुं सीतया सह राघवौ ॥ १
ततो गृहीते दुष्प्रेक्षे[2] त्वशोभेतां तदायुधे । मालादामभिराबद्धे सीतया समलंकृते ॥ २
ततः प्रासादहर्म्याणि विमानशिखराणि च । अधिरुह्य जनः श्रीमानुदासीनो व्यलोकयत् ॥ ३
न हि रथ्याः स्म शक्यन्ते गन्तुं बहुजनाकुलाः । आरुह्य तस्मात् प्रासादादीनाः पश्यन्ति राघवम् ॥ ४
पदातिं सानुजं दृष्ट्वा ससीतं च जनास्तदा । ऊचुर्बहुविधा वाचः शोकोपहतचेतसः ॥ ५

---

1. अत्र उक्षणसंनिधाविति पठित्वा "उक्ष्णा वृषभाणां संनिधिर्यत्र । आर्ष आनङ्" इति व्याख्यातं तिलके ।
१. गा. वे. ङ.

२. प्रेक्ष्याभ्यामशोभेताम् ङ.
३. पदातिं वर्जितच्छत्रं रामं दृष्ट्वा तदा जनाः च. ङ.

यं यान्तमनुयाति स्म चतुरङ्गबलं महत् । तमेकं सीतया सार्धमनुयाति स्म लक्ष्मणः ॥ ६
ऐश्वर्यस्य रसज्ञः सन् कामिनां चैव कामदः । नेच्छत्येवानृतं कर्तुं पितरं[1] धर्मगौरवात् ॥ ७
या न शक्या पुरा द्रष्टुं भूतैराकाशगैरपि । तामद्य सीतां पश्यन्ति राजमार्गगतां जनाः ॥ ८
अङ्गरागोचितां सीतां रक्तचन्दनसेविनीम् । वर्षमुष्णं च शीतं च नेष्यत्याशु विवर्णताम् ॥ ९
अद्य नूनं दशरथः[1] सत्त्वमाविश्य भाषते । न हि राजा प्रियं पुत्रं विवासयितुमिच्छति ॥ १०
निर्गुणस्यापि पुत्रस्य कथं स्याद्विप्रवासनम् । किं पुनर्यस्य लोकोऽयं जितो वृत्तेन केवलम् ॥ ११
आनृशंस्यमनुक्रोशः श्रुतं शीलं दमः शमः । राघवं शोभयन्त्येते षड्गुणाः पुरुषर्षभम् ॥ १२
तस्मात्तस्योपघातेन प्रजाः परमपीडिताः । औदकानीव सत्त्वानि ग्रीष्मे सलिलसंक्षयात् ॥ १३
पीडया पीडितं सर्वं जगदस्य जगत्पतेः । मूलस्येवोपघातेन वृक्षः पुष्पफलोपगः ॥ १४
मूलं ह्येष मनुष्याणां धर्मसारो महाद्युतिः । पुष्पं फलं च पत्रं च शाखाश्चास्येतरे जनाः ॥ १५
ते लक्ष्मण इव क्षिप्रं सपत्न्यः सहबान्धवाः । गच्छन्तमनुगच्छामो येन गच्छति राघवः ॥ १६
उद्यानानि परित्यज्य क्षेत्राणि च गृहाणि च । एकदुःखसुखा राममनुगच्छाम धार्मिकम् ॥ १७
समुद्धृतनिधानानि परिध्वस्ताजिराणि च । उपात्तधनधान्यानि हृतसाराणि सर्वशः ॥ १८
रजसाभ्यवकीर्णानि परित्यक्तानि दैवतैः । मूषकैः परिधावद्भिरुद्बिलैरावृतानि च ॥ १९
अपेतोदकधूमानि हीनसंमार्जनानि च । प्रनष्टबलिकर्मेज्यामन्त्रहोमजपानि च ॥ २०
दुष्कालेनेव भग्नानि भिन्नभाजनवन्ति च । अस्मत्त्यक्तानि वेश्मानि कैकेयी प्रतिपद्यताम् ॥ २१
वनं नगरमेवास्तु येन गच्छति राघवः । अस्माभिश्च परित्यक्तं पुरं संपद्यतां वनम् ॥ २२
बिलानि दंष्ट्रिणः सर्वे सानूनि मृगपक्षिणः । त्यजन्त्वस्मद्भयाद्भीता गजाः सिंहा वनान्यपि ॥ २३
अस्मत्त्यक्तं प्रपद्यन्तां सेव्यमानं त्यजन्तु च । तृणमांसफलादानां देशं व्यालमृगद्विजम् ॥ २४
प्रपद्यतां हि कैकेयी सपुत्रा सह बान्धवैः । राघवेण वने सर्वे सह वत्स्याम निर्वृताः ॥ २५
इत्येवं विविधा वाचो नानाजनसमीरिताः । शुश्राव राघवः श्रुत्वा न विचक्रेऽस्य मानसम्[2] ॥ २६
स तु वेश्म पितुर्दूरात् कैलासशिखरप्रभम् । अभिचक्राम धर्मात्मा मत्तमातङ्गविक्रमः ॥ २७
विनीतवीरपुरुषं स प्रविश्य नृपालयम् । ददर्शावस्थितं दीनं सुमन्त्रमविदूरतः ॥ २८

प्रतीक्षमाणोऽभिजनं[1] तदार्तमनार्तरूपः प्रहसन्निवाथ ।
जगाम रामः पितरं दिदृक्षुः पितुर्निदेशं विधिवच्चिकीर्षुः ॥ २९

---

1. दशरथं सत्त्वमाविश्येति चेदुद्दश्यं तत स पाठः न विकृतमभवत् । ङ
स्थितः ।
2. अस्य मानसं (कर्तृ) श्रुत्वा न विचक्रे

१. वचनम् ङ.
२. अपि वनम् च. छ.

तत्पूर्वमैक्ष्वाकसुतो महात्मा रामो गमिष्यन्[1] नृपमार्तरूपम् ।
व्यतिष्ठत प्रेक्ष्य तदा सुमन्त्रं पितुर्महात्मा प्रतिहारणार्थम् ॥ ३०
पितुर्निदेशेन तु धर्मवत्सलो वनप्रवेशे कृतबुद्धिनिश्चयः ।
स राघवः प्रेक्ष्य सुमन्त्रमब्रवीन्निवेदयस्वागमनं नृपाय मे ॥ ३१

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
अयोध्याकाण्डे पौरवाक्यं नाम त्रयस्त्रिंशः सर्गः

---

## चतुस्त्रिंशः सर्गः

### दशरथसमाश्वासनम्

ततः कमलपत्राक्षः श्यामो निरुपमो महान् । उवाच रामस्तं सूतं पितुराख्याहि मामिति ॥ १
स रामप्रेषितः क्षिप्रं संतापकलुषेन्द्रियः । प्रविश्य नृपतिं सूतो निःश्वसन्तं ददर्श ह ॥ २
उपरक्तमिवादित्यं भस्मच्छन्नमिवानलम् । तटाकमिव निस्तोयमपश्यज्जगतीपतिम् ॥ ३
आलोक्य तं महाप्राज्ञः परमाकुलचेतसम् । राममेवानुशोचन्तं सूतः प्राञ्जलिरासदत् ॥ ४
तं वर्धयित्वा राजानं सूतः पूर्वं जयाशिषा । भयविक्लबया वाचा मन्दया श्लक्ष्णमब्रवीत् ॥ ५
अयं स पुरुषव्याघ्रो द्वारि तिष्ठति ते सुतः । ब्राह्मणेभ्यो धनं दत्त्वा सर्वं चैवोपजीविनाम् ॥ ६
स त्वां पश्यतु भद्रं ते रामः सत्यपराक्रमः । सर्वान् सुहृद आपृच्छ्य त्वामिदानीं दिदृक्षते ॥ ७
गमिष्यन्तं[2] महारण्यं तं पश्य जगतीपते । वृतं राजगुणैः सर्वैरादित्यमिव रश्मिभिः ॥ ८
स सत्यवादी धर्मात्मा गाम्भीर्यात् सागरोपमः । आकाश इव निष्पङ्को नरेन्द्रः प्रत्युवाच तम् ॥ ९
सुमन्त्रानय मे दारान् ये केचिदिह मामकाः । दारैः परिवृतः सर्वैर्द्रष्टुमिच्छामि धार्मिकम् ॥ १०
सोऽन्तःपुरमतीत्यैव स्त्रियस्ता वाक्यमब्रवीत् । आर्या ह्वयति वो राजा गम्यतां तत्र मा चिरम् ॥ ११
एवमुक्ताः स्त्रियः सर्वाः सुमन्त्रेण नृपाज्ञया । प्रचक्रमुस्तद्भवनं भर्तुराज्ञाय शासनम् ॥ १२
अर्धसप्तशतास्तास्तु प्रमदास्ताम्रलोचनाः । कौसल्यां परिवार्याथ शनैर्जग्मुर्धृतव्रताः ॥ १३
आगतेषु च दारेषु समवेक्ष्य महीपतिः । उवाच राजा तं सूतं सुमन्त्रानय मे सुतम् ॥ १४
स सूतो राममादाय लक्ष्मणं मैथिलीं तदा । जगामाभिमुखस्तूर्णं सकाशं जगतीपतेः ॥ १५
स राजा पुत्रमायान्तं दृष्ट्वा दूरात् कृताञ्जलिम् । उत्पपातासनात्तूर्णमार्तः स्त्रीजनसंवृतः ॥ १६
सोऽभिदुद्राव वेगेन रामं दृष्ट्वा विशां पतिः । तमसंप्राप्य दुःखार्तः पपात भुवि मूर्छितः ॥ १७
तं रामोऽभ्यपतत् क्षिप्रं लक्ष्मणश्च महारथः । विसंज्ञमिव दुःखेन सशोकं नृपतिं तदा ॥ १८
स्त्रीसहस्रनिनादश्च संजज्ञे राजवेश्मनि । हा हा रामेति सहसा भूषणध्वनिमूर्छितः ॥ १९

---

१. वनम् च. छ. २. गमिष्यति च. छ.

तं परिष्वज्य बाहुभ्यां तावुभौ रामलक्ष्मणौ । पर्यङ्के सीतया सार्धं रुदन्तः समवेशयन् ॥ २०

अथ रामो मुहूर्तेन लब्धसंज्ञं महीपतिम् । उवाच प्राञ्जलिर्भूत्वा शोकार्णवपरिप्लुतम् ॥ २१

आपृच्छे त्वां महाराज सर्वेषामीश्वरोऽसि नः । प्रस्थितं दण्डकारण्यं पश्य त्वं कुशलेन माम् ॥२२

लक्ष्मणं चानुजानीहि सीता चान्वेति मां वनम् । कारणैर्बहुभिस्तथ्यैर्वार्यमाणौ न चेच्छतः ॥ २३

अनुजानीहि सर्वान्नः शोकमुत्सृज्य मानद । लक्ष्मणं मां च सीतां च प्रजापतिरिवात्मजान् ॥ २४

प्रतीक्षमाणमव्यग्रमनुज्ञां जगतीपतिः । उवाच राजा संप्रेक्ष्य वनवासाय राघवम् ॥ २५

अहं राघव कैकेय्या वरदानेन मोहितः । अयोध्यायास्त्वमेवाद्य भव राजा निगृह्य माम् ॥ २६

एवमुक्तो नृपतिना रामो धर्मभृतां वरः । प्रत्युवाचाञ्जलिं कृत्वा पितरं वाक्यकोविदः ॥ २७

भवान् वर्षसहस्राय पृथिव्या नृपते पतिः । अहं त्वरण्ये वत्स्यामि न मे कार्यं त्वयानृतम् ॥ २८

नव पञ्च च वर्षाणि वनवासे विहृत्य ते । पुनः पादौ ग्रहीष्यामि प्रतिज्ञान्ते नराधिप ॥ २९

रुदन्नार्तः प्रियं पुत्रं सत्यपाशेन संयतः । कैकेय्या चोद्यमानस्तु मिथो राजा तमब्रवीत् ॥ ३०

श्रेयसे वृद्धये तात पुनरागमनाय च । गच्छस्वारिष्टमव्यग्रः पन्थानमकुतोभयम् ॥ ३१

न हि सत्यात्मनस्तात धर्माभिमनसस्तव । विनिवर्तयितुं बुद्धिः शक्यते रघुनन्दन ॥ ३२

अद्य[1] त्विदानीं रजनीं पुत्र मा गच्छ सर्वथा । एकाहं[1] दर्शनेनापि साधु तावच्चराम्यहम् ॥ ३३

मातरं मां च संपश्यन् वसेमामद्य शर्वरीम् । तर्पितः सर्वकामैस्त्वं श्वः काल्ये साधयिष्यसि ॥ ३४

दुष्करं क्रियते पुत्र सर्वथा राघव त्वया । मत्प्रियार्थं प्रियांस्त्यक्त्वा यद्यासि विजनं वनम् ॥ ३५

न चैतन्मे प्रियं पुत्र शपे सत्येन राघव । छन्नया चलितस्त्वस्मि स्त्रिया छन्नाग्निकल्पया ॥ ३६

वञ्चना या तु लब्धा मे तां त्वं निस्तर्तुमिच्छसि । अनया वृत्तसादिन्या कैकेय्याभिप्रचोदितः ॥ ३७

न चैतदाश्चर्यतमं यत्त्वं ज्येष्ठः सुतो मम[2] । अपानृतकथं पुत्र पितरं कर्तुमिच्छसि ॥ ३८

अथ रामस्तथा श्रुत्वा पितुरार्तस्य भाषितम् । लक्ष्मणेन सह भ्रात्रा दीनो वचनमब्रवीत् ॥ ३९

प्राप्स्यामि यानद्य गुणान् को मे श्वस्तान् प्रदास्यति । अपक्रमणमेवातः सर्वकामैरहं वृणे ॥ ४०

इयं सराष्ट्रा सजना धनधान्यसमाकुला । मया विसृष्टा वसुधा भरताय प्रदीयताम् ॥ ४१

वनवासकृता बुद्धिर्न च मेऽद्य चलिष्यति । यस्तुष्टेन वरो दत्तः कैकेय्यै वरद त्वया ॥ ४२

दीयतां निखिलेनैव सत्यस्त्वं भव पार्थिव । अहं निदेशं भवतो यथोक्तमनुपालयन् ॥ ४३

चतुर्दश समा वत्स्ये वने वनचरैः सह । मा विमर्शो वसुमती भरताय प्रदीयताम् ॥ ४४

न हि मे काङ्क्षितं राज्यं सुखमात्मनि वा प्रियम् । यथा निदेशं कर्तुं वै तवैव रघुनन्दन ॥४५

---

1. अद्य इदानीम् इति पुनरुक्तिः पुत्रविरहकातरतां दशरथस्य पोषयति । अद्य अस्मिन् दिने इदानीं सन्निहितां रात्रिम् इति तु व्याख्यातारः ।

१. एकाहदर्शनेन च. छ.

२. इदमर्धम् ब. नास्ति ।

अपगच्छतु ते दुःखं मा भूर्बाष्पपरिप्लुतः । न हि क्षुभ्यति दुर्धर्षः समुद्रः सरितां पतिः ॥ ४६
नैवाहं राज्यमिच्छामि न सुखं न च मैथिलीम् । नैव सर्वानिमान् कामान्न स्वर्गं नैव जीवितम् ॥४७
त्वामहं सत्यमिच्छामि नानृतं पुरुषर्षभ । प्रत्यक्षं तव सत्येन सुकृतेन च ते शपे ॥ ४८
न च शक्यं मया तात स्थातुं क्षणमपि प्रभो । न शोकं धारयस्वैनं न हि मेऽस्ति विपर्ययः ॥ ४९
अर्थितो ह्यस्मि कैकेय्या वनं गच्छेति राघव । मया चोक्तं व्रजामीति तत् सत्यमनुपालये ॥ ५०
मा चोत्कण्ठां कृथा देव वने रंस्यामहे वयम् । प्रशान्तहरिणाकीर्णे नानाशकुननादिते ॥ ५१
पिता हि दैवतं तात देवतानामपि स्मृतम् । तस्माद्दैवतमित्येव करिष्यामि पितुर्वचः ॥ ५२
चतुर्दशसु वर्षेषु गतेषु नरसत्तम । पुनर्द्रक्ष्यसि मां प्राप्तं संतापोऽयं विमुच्यताम् ॥ ५३
येन संस्तम्भनीयोऽयं सर्वो बाष्पगलो जनः । स त्वं पुरुषशार्दूल किमर्थं विक्रियां गतः ॥ ५४

पुरं च राष्ट्रं च मही च केवला मया निसृष्टा भरताय दीयताम् ।
अहं निदेशं भवतोऽनुपालयन् वनं गमिष्यामि चिराय सेवितुम् ॥ ५५
मया निसृष्टां भरतो महीमिमां सशैलखण्डां सपुरां सकाननाम् ।
शिवां सुसीमामनुशास्तु केवलं त्वया यदुक्तं नृपते तथास्तु तत् ॥ ५६
न मे तथा पार्थिव धीयते मनो महत्सु कामेषु न चात्मनः प्रिये ।
यथा निदेशे तव शिष्टसंमते व्यपैतु दुःखं तव मत्कृतेऽनघ ॥ ५७
तदद्य नैवानघ राज्यमव्ययं न सर्वकामान्न सुखं न मैथिलीम् ।
न जीवितं त्वामनृतेन योजयन् वृणीय सत्यं व्रतमस्तु ते तथा ॥ ५८
फलानि मूलानि च भक्षयन् वने गिरींश्च पश्यन् सरितः सरांसि च ।
वनं प्रविश्यैव विचित्रपादपं सुखी भविष्यामि तवास्तु निर्वृतिः ॥ ५९
एवं स राजा व्यसनाभिपन्नः शोकेन दुःखेन च ताम्यमानः ।
आलिङ्ग्य पुत्रं सुविनष्टसंज्ञो मोहं गतो नैव चिचेष्ट किंचित् ॥ ६०
देव्यस्ततः संरुरुदुः समेतास्तां वर्जयित्वा नरदेवपत्नीम् ।
रुदन् सुमन्त्रोऽपि जगाम मूर्च्छां हाहाकृतं तत्र बभूव सर्वम् ॥ ६१

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
अयोध्याकाण्डे दशरथसमाश्वासनं नाम चतुस्त्रिंशः सर्गः

---

## पञ्चत्रिंशः सर्गः

### सुमन्त्रगर्हणम्

ततो निर्धूय सहसा शिरो निःश्वस्य चासकृत् । पाणिं पाणौ विनिष्पिष्य दन्तान् कटकटाप्य च ॥ १

लोचने कोपसंरक्ते वर्णं पूर्वोचितं जहत् । कोपाभिभूतः सहसा संतापमशुभं गतः ॥ २

मनः समीक्षमाणस्य सूतो दशरथस्य सः । कम्पयन्निव कैकेय्या हृदयं वाक्छरैः शितैः ॥ ३

वाक्यवज्रैरनुपमैर्निर्भिन्दन्निव चाशुगैः । कैकेय्याः सर्वमर्माणि सुमन्त्रः प्रत्यभाषत ॥ ४

यस्यास्तव पतिस्त्यक्तो राजा दशरथः स्वयम् । भर्ता सर्वस्य जगतः स्थावरस्य चरस्य च ॥ ५

न ह्यकार्यतमं किंचित्तव देवीह विद्यते । पतिघ्नीं त्वामहं मन्ये कुलघ्नीमपि चान्ततः ॥ ६

यन्महेन्द्रमिवाजय्यं दुष्प्रकम्प्यमिवाचलम् । महोदधिमिवाक्षोभ्यं संतापयसि कर्मभिः ॥ ७

मावमंस्था दशरथं भर्तारं वरदं पतिम् । भर्तुरिच्छा हि नारीणां पुत्रकोट्या विशिष्यते ॥ ८

यथावयो हि राज्यानि प्राप्नुवन्ति नृपक्षये । इक्ष्वाकुकुलनाथेऽस्मिंस्तल्लोपयितुमिच्छसि ॥ ९

राजा भवतु ते पुत्रो भरतः शास्तु मेदिनीम् । वयं तत्र गमिष्यामो यत्र रामो गमिष्यति ॥ १०

न हि ते विषये कश्चिद्ब्राह्मणो वस्तुमर्हति । तादृशं त्वममर्यादमद्य कर्म चिकीर्षसि[१] ॥ ११

आश्चर्यमिव पश्यामि यस्यास्ते वृत्तमीदृशम् । आचरन्त्या न विवृता सद्यो भवति मेदिनी ॥ १२

महाब्रह्मर्षिसृष्टा हि ज्वलन्तो भीमदर्शनाः[२] । धिग्वाग्दण्डा न हिंसन्ति रामप्रव्राजने स्थिताम् ॥ १३

आम्रं छित्त्वा कुठारेण निम्बं परिचरेत्तु यः । यश्चैनं पयसा सिञ्चेन्नैवास्य मधुरो भवेत् ॥ १४

अभिजातं हि ते मन्ये यथा मातुस्तथैव च । न हि निम्बात् स्रवेत् क्षौद्रं लोके निगदितं वचः ॥ १५

तव मातुरसद्ग्रहं[1] विद्मः पूर्वं यथाश्रुतम् । पितुस्ते वरदः कश्चिद्ददौ वरमनुत्तमम् ॥ १६

सर्वभूतरुतं तस्मात् संजज्ञे वसुधाधिपः । तेन तिर्यग्गतानां च भूतानां विदितं वचः ॥ १७

ततो जृम्भस्य शयने विरुताद्भूरिवर्चसः । पितुस्ते विदितो भावः स तत्र बहुधाहसत् ॥ १८

तत्र ते जननी क्रुद्धा मृत्युपाशमभीप्सती । हासं ते नृपते सौम्य जिज्ञासामीति चाब्रवीत् ॥ १९

नृपश्चोवाच तां देवीं देवि शंसामि ते यदि । ततो मे मरणं सद्यो भविष्यति न संशयः ॥ २०

माता ते पितरं देवी ततः केकयमब्रवीत् । शंस मे जीव वा मा वा न मामपहसिष्यसि ॥ २१

प्रियया च तथोक्तः सन् केकयः पृथिवीपतिः । तस्मै तं वरदायार्थं कथयामास तत्त्वतः ॥ २२

ततः स वरदः साधू राजानं प्रत्यभाषत । यदि त्वं शंससे राजन् मरणं ते भवेद्ध्रुवम् ॥ २३

म्रियतां ध्वंसतां वेयं मा कृथास्त्वं महीपते । स तच्छ्रुत्वा वचस्तस्य प्रसन्नमनसो नृपः ॥ २४

---

1. असद्ग्रहम् असदर्थाभिनिवेशम् ।

१. अस्यानन्तरम्—नूनं सर्वे गमिष्यामो मार्गं रामनिषेवितम्। त्यक्ताया बान्धवैः सर्वैर्ब्राह्मणैः साधुभिः सदा। का प्रीती राज्यलाभेन तव देवि भविष्यति। तादृशं त्वममर्यादं कर्म कर्तुं चिकीर्षसि ॥—इति पुना. ।

२. इदमर्धम् ख. नास्ति ।

मातरं ते निरस्याशु विजहार कुबेरवत् । तथा त्वमपि राजानं दुर्जनाचरिते पथि ॥ २५
असद्ग्राहमिमं मोहात् कुरुषे पापदर्शिनी । सत्यश्चाद्य प्रवादोऽयं लौकिकः प्रतिभाति मा ॥ २६
पितॄन् समनुजायन्ते नरा मातरमङ्गनाः । नैवं भव गृहाणेदं यदाह वसुधाधिपः ॥ २७
भर्तुरिच्छामुपास्त्वेह जनस्यास्य गतिर्भव । मा त्वं प्रोत्साहिता पापैर्देवराजसमप्रभम् ॥ २८
भर्तारं लोकभर्तारमसद्धर्ममुपादधाः । न हि मिथ्या प्रतिज्ञातं करिष्यति तवानघः ॥ २९
श्रीमान् दशरथो राजा देवि राजीवलोचनः । ज्येष्ठो वदान्यः कर्मण्यः स्वधर्मस्याभिरक्षिता ॥ ३०
रक्षिता जीवलोकस्य ब्रूहि रामोऽभिषिच्यताम् । परिवादो हि ते देवि महाँल्लोके चरिष्यति ॥ ३१
यदि रामो वनं याति विहाय पितरं नृपम् । स्वराज्यं राघवः पातु भव त्वं विगतज्वरा ॥ ३२
न हि ते राघवादन्यः क्षमः पुरवरे वसेत् । रामे हि यौवराज्यस्थे राजा दशरथो वनम् ॥ ३३
प्रवेक्ष्यति महेष्वासः पूर्ववृत्तमनुस्मरन् । इति सान्त्वैश्च तीक्ष्णैश्च कैकेयीं राजसंसदि ॥ ३४
सुमन्त्रः क्षोभयामास भूय एव कृताञ्जलिः । नैव सा क्षुभ्यते देवी न च स्म परिदूयते ॥ ३५
न चास्या मुखवर्णस्य लक्ष्यते विक्रिया तदा ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
अयोध्याकाण्डे सुमन्त्रगर्हणं नाम पञ्चत्रिंशः सर्गः

---

## षट्त्रिंशः सर्गः

### सिद्धार्थप्रतिबोधनम्

ततः सुमन्त्रमैक्ष्वाकः पीडितोऽत्र प्रतिज्ञया । सबाष्पमतिनिःश्वस्य जगादेदं पुनः पुनः ॥ १
सूत रत्नसुसंपूर्णा चतुर्विधबला चमूः । राघवस्यानुयात्रार्थं क्षिप्रं प्रतिविधीयताम् ॥ २
रूपाजीवाश्च वादिन्यो वणिजश्च महाधनाः । शोभयन्तु कुमारस्य वाहिनीं सुप्रसारिताः ॥ ३
ये चैनमुपजीवन्ति रमते यैश्च वीर्यतः । तेषां बहुविधं दत्त्वा तानप्यत्र नियोजय ॥ ४
आयुधानि च मुख्यानि नागराः शकटानि च । अनुगच्छन्तु काकुत्स्थं व्याधाश्चारण्यगोचराः ॥ ५
निघ्नन् मृगान् कुञ्जरांश्च पिबंश्चारण्यकं मधु । नदीश्च विविधाः पश्यन्न [1]राज्यस्य स्मरिष्यति ॥ ६
धान्यकोशश्च यः कश्चिद्धनकोशश्च मामकः । तौ राममनुगच्छेतां वसन्तं निर्जने वने ॥ ७
यजन् पुण्येषु देशेषु विसृजंश्चाप्तदक्षिणाः । ऋषिभिश्च समागम्य प्रवत्स्यति सुखं वने ॥ ८
भरतश्च महाबाहुरयोध्यां पालयिष्यति । सर्वकामैः सह श्रीमान् रामः संसाध्यतामिति ॥ ९
एवं ब्रुवति काकुत्स्थे कैकेय्या भयमागतम् । मुखं चाप्यगमच्छोषं स्वरश्चापि न्यरुध्यत १०
सा विषण्णा च संत्रस्ता मुखेन परिशुष्यता । राजानमेवाभिमुखी कैकेयी वाक्यमब्रवीत् ॥ ११
राज्यं गतजनं साधो पीतमण्डां सुरामिव । निरास्वाद्यतमं शून्यं भरतो नाभिपत्स्यते ॥ १२

---

[1] राज्यं सस्मारध्यात ङ. ज.

कैकेय्यां मुक्तलज्जायां वदन्त्यामतिदारुणम् । राजा दशरथो वाक्यमुवाचायतलोचनाम् ॥ १३
वहन्तं किं तुदसि मां नियुज्य धुरि माहिते । अनार्ये कृत्यमारब्धं किं न पूर्वमुपारुधः ॥ १४
तस्यैतत् क्रोधसंयुक्तमुक्तं श्रुत्वा वराङ्गना । कैकेयी द्विगुणं क्रुद्धा राजानमिदमब्रवीत् ॥ १५
तवैव वंशे सगरो ज्येष्ठपुत्रमुपारुधत् । असमञ्ज इति ख्यातं तथायं गन्तुमर्हति ॥ १६
एवमुक्तो धिगित्येव राजा दशरथोऽब्रवीत् । व्रीडितश्च जनः सर्वः सा च तन्नावबुध्यत ॥ १७
तत्र वृद्धो महामात्रः सिद्धार्थो नाम नामतः । शुचिर्बहुमतो राज्ञः कैकेयीमिदमब्रवीत् ॥ १८
असमञ्जो गृहीत्वा तु क्रीडतः पथि दारकान् । सरय्वाः प्रक्षिपन्नप्सु रमते तेन दुर्मतिः ॥ १९
तं दृष्ट्वा नागराः सर्वे क्रुद्धा राजानमब्रुवन् । असमञ्जं वृणीष्वैकमस्मान् वा राष्ट्रवर्धन ॥२०
तानुवाच ततो राजा किंनिमित्तमिदं भयम् । ताश्चापि राज्ञा संपृष्टा वाक्यं प्रकृतयोऽब्रुवन्॥२१
क्रीडतस्त्वेव नः पुत्रान् बालानुद्भ्रान्तचेतनः । सरय्वां प्रक्षिपन् मौर्ख्यादतुलां प्रीतिमश्नुते ॥२२
स तासां वचनं श्रुत्वा प्रकृतीनां नराधिपः । तं तत्याजाहितं पुत्रं तासां प्रियचिकीर्षया ॥ २३
तं यानं शीघ्रमारोप्य सभार्यं सपरिच्छदम् । यावज्जीवं विवास्योऽयमिति स्वानन्वशात्पिता॥२४
स फालपिटकं गृह्य गिरिदुर्गाण्यलोकयत् । दिशः सर्वास्त्वनुचरन् स यथा पापकर्मकृत् ॥ २५
इत्येवमत्यजद्राजा सगरो वै सुधार्मिकः । रामः किमकरोत् पापं येनैवमुपरुध्यते ॥ २६
न हि कंचन पश्यामो राघवस्यागुणं वयम् । दुर्लभो ह्यस्य निरयः शशाङ्कस्येव कल्मषम्॥२७
अथवा देवि दोषं त्वं कंचित् पश्यसि राघवे । तमद्य ब्रूहि तत्त्वेन ततो रामो विवास्यतो॥२८
अदुष्टस्य हि संत्यागः सत्पथे निरतस्य च । निर्दहेदपि शक्रस्य द्युतिं धर्मनिरोधनात् ॥ २९
तदलं देवि रामस्य श्रिया विहतया त्वया । लोकतोऽपि हि ते रक्ष्यः परिवादः शुभानने ॥३०
श्रुत्वा तु सिद्धार्थवचो राजा श्रान्ततरस्वनः । शोकोपहतया वाचा कैकेयीमिदमब्रवीत् ॥ ३१

एतद्वचो नेच्छसि पापवृत्ते हितं न जानासि ममात्मनो वा ।
आस्थाय मार्गं कृपणं कुचेष्टा चेष्टा हि ते साधुपथादपेता ॥ ३२
अनुव्रजिष्याम्यहमद्य रामं राज्यं परित्यज्य धनं सुखं च ।
सहैव राज्ञा भरतेन च त्वं यथासुखं भुङ्क्ष्व चिराय राज्यम् ॥ ३३

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
अयोध्याकाण्डे सिद्धार्थप्रतिबोधनं नाम षट्त्रिंशः सर्गः

---

## सप्तत्रिंशः सर्गः

### चीरपरिग्रहनिमित्तवसिष्ठक्रोधः

महामात्रवचः श्रुत्वा रामो दशरथं तदा । अभ्यभाषत वाक्यं तु विनयज्ञो विनीतवत् ॥ १
त्यक्तभोगस्य मे राजन् वने वन्येन जीवतः । किं कार्यमनुयात्रेण त्यक्तसङ्गस्य सर्वतः ॥ २



तस्यास्तत् क्षिप्रमागम्य रामो धर्मभृतां वरः । चीरं बबन्ध सीतायाः कौशेयस्योपरि स्वयम् ॥ (अयो० काण्ड, स. ३७. श्लो. १८.)

यो हि दत्त्वा गजश्रेष्ठं कक्ष्यायां कुरुते मनः । रज्जुस्नेहेन किं तस्य त्यजतः कुञ्जरोत्तमम् ॥ ३

तथा मम सतां श्रेष्ठ किं ध्वजिन्या जगत्पते । सर्वाण्येवानुजानामि चीराण्येवानयन्तु मे ॥ ४

खनित्रपिटके चोभे समानयत गच्छतः । चतुर्दश वने वासं वर्षाणि वसतो मम ॥ ५

अथ चीराणि कैकेयी स्वयमाहृत्य राघवम् । उवाच परिधत्स्वेति जनौघे निरपत्रपा ॥ ६

स चीरे पुरुषव्याघ्रः कैकेय्याः प्रतिगृह्य ते । सूक्ष्मवस्त्रमवक्षिप्य मुनिवस्त्राण्यवस्त ह ॥ ७

लक्ष्मणश्चापि तत्रैव विहाय वसने शुभे । तापसाच्छादने चैव जग्राह पितुरग्रतः ॥ ८

अथात्मपरिधानार्थं सीता कौशेयवासिनी । संप्रेक्ष्य चीरं संत्रस्ता पृषती वागुरामिव ॥ ९

सा व्यपत्रपमाणेव प्रगृह्य च सुदुर्मनाः । कैकेय्याः कुशचीरे ते जानकी शुभलक्षणा ॥ १०

अश्रुसंपूर्णनेत्रा च धर्मज्ञा धर्मदर्शिनी । गन्धर्वराजप्रतिमं भर्तारमिदमब्रवीत् ॥ ११

कथं नु चीरं बध्नन्ति मुनयो वनवासिनः । इति ह्यकुशला सीता सा मुमोह मुहुर्मुहुः ॥ १२

कृत्वा कण्ठे च सा चीरमेकमादाय पाणिना । तस्थौ ह्यकुशला तत्र व्रीडिता जनकात्मजा ॥ १३

तस्यास्तत् क्षिप्रमागम्य रामो धर्मभृतां वरः । चीरं बबन्ध सीतायाः कौशेयस्योपरि स्वयम् ॥ १४

रामं प्रेक्ष्य तु सीताया बध्नन्तं चीरमुत्तमम् । अन्तःपुरगता नार्यो मुमुचुर्वारि नेत्रजम् ॥ १५

ऊचुश्च परमायस्ता रामं ज्वलिततेजसम् । वत्स नैवं नियुक्तेयं वनवासे मनस्विनी ॥ १६

पितुर्वाक्यानुरोधेन गतस्य विजनं वनम् । तावद्दर्शनमस्या नः सफलं भवतु प्रभो ॥ १७

लक्ष्मणेन सहायेन वनं गच्छस्व पुत्रक । नेयमर्हति कल्याणी वस्तुं तापसवद्वने ॥ १८

कुरु नो याचनां पुत्र सीता तिष्ठतु भामिनी । धर्मनित्यः स्वयं स्थातुं न हीदानीं त्वमिच्छसि ॥ १९

तासामेवंविधा वाचः शृण्वन् दशरथात्मजः । बबन्धैव तदा चीरं सीतया तुल्यशीलया ॥ २०

चीरे गृहीते तु तया समीक्ष्य नृपतेर्गुरुः । निवार्य सीतां कैकेयीं वसिष्ठो वाक्यमब्रवीत् ॥ २१

अतिप्रवृत्ते दुर्मेधे कैकेयि कुलपांसनि । वञ्चयित्वा च राजानं न प्रमाणेऽवतिष्ठसे ॥ २२

न गन्तव्यं वनं देव्या सीतया शीलवर्जिते । अनुष्ठास्यति रामस्य सीता प्रकृतमासनम् ॥ २३

आत्मा हि दाराः सर्वेषां दारसंग्रहवर्तिनाम् । आत्मेयमिति रामस्य पालयिष्यति मेदिनीम् ॥ २४

अथ यास्यति वैदेही वनं रामेण संगता । वयमप्यनुयास्यामः पुरं चेदं गमिष्यति ॥ २५

अन्तपालाश्च यास्यन्ति सदारो यत्र राघवः । सहोपजीव्यं राष्ट्रं च पुरं च सपरिच्छदम् ॥ २६

भरतश्च सशत्रुघ्नश्चीरवासा वनेचरः । वने वसन्तं काकुत्स्थमनुवत्स्यति पूर्वजम् ॥ २७

ततः शून्यां गतजनां वसुधां पादपैः सह । त्वमेका शाधि दुर्वृत्ता प्रजानामहिते रता ॥ २८

न हि तद्भविता राष्ट्रं यत्र रामो न भूपतिः । तद्वनं भविता राष्ट्रं यत्र रामो निवत्स्यति ॥ २९

न ह्यदत्तां महीं पित्रा भरतः शास्तुमर्हति । त्वयि वा पुत्रवद्वस्तुं यदि जातो महीपतेः ॥ ३०

यद्यपि त्वं क्षितितलाद्गगनं चोत्पतिष्यसि । पितृवंशचरित्रज्ञः सोऽन्यथा न करिष्यति ॥ ३१

तत्त्वया पुत्रगर्धिन्या पुत्रस्य कृतमप्रियम् । लोके हि न स विद्येत यो न राममनुव्रतः ॥ ३२

द्रक्ष्यस्यद्यैव कैकेयि पशुव्यालमृगद्विजान् । गच्छतः सह रामेण पादपांश्च तदुन्मुखान् ॥ ३३

अथोत्तमान्याभरणानि देवि देहि स्नुषायै व्यपनीय चीरम् ।
न चीरमस्याः प्रविधीयतेति न्यवारयत्तद्वसनं वसिष्ठः ॥ ३४

एकस्य रामस्य वने निवासस्त्वया वृतः केकयराजपुत्रि ।
विभूषितेयं प्रतिकर्मनित्या वसत्वरण्ये सह राघवेण ॥ ३५

यानैश्च मुख्यैः परिचारकैश्च सुसंवृता गच्छतु राजपुत्री ।
वस्त्रैश्च सर्वैः सहिता विधानैर्नेयं वृता ते वरसंप्रदाने ॥ ३६

तस्मिंस्तथा जल्पति विप्रमुख्ये गुरौ नृपस्याप्रतिमप्रभावे ।
नैव स्म सीता विनिवृत्तभावा प्रियस्य भर्तुः प्रतिकारकामा[1] ॥ ३७

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
अयोध्याकाण्डे चीरपरिग्रहनिमित्तवसिष्ठक्रोधो नाम सप्तत्रिंशः सर्गः

---

## अष्टात्रिंशः सर्गः

### जनाक्रोशः

तस्यां चीरं वसानायां नाथवत्यामनाथवत् । प्रचुक्रोश जनः सर्वो धिक् त्वां दशरथं त्विति ॥ १

तेन तत्र प्रणादेन दुःखितः स महीपतिः । चिच्छेद जीविते श्रद्धां धर्मे यशसि चात्मनः ॥ २

स निःश्वस्योष्णमैक्ष्वाकस्तां भार्यामिदमब्रवीत् । कैकेयि कुशचीरेण न सीता गन्तुमर्हति ॥ ३

सुकुमारा[१] च बाला च सततं च सुखोचिता । नेयं वनस्य[2] योग्येति सत्यमाह गुरुर्मम ॥ ४

इयं हि [२]कस्यापकरोति किंचित्तपस्विनी राजवरस्य कन्या ।
या चीरमासाद्य जनस्य मध्ये स्थिता विसंज्ञा श्रमणीव काचित् ॥ ५

चीराण्यपास्याज्जनकस्य कन्या नेयं प्रतिज्ञा मम दत्तपूर्वा ।
यथासुखं गच्छतु राजपुत्री वनं समग्रा सह सर्वरत्नैः ॥ ६

---

1. प्रतिकारः सदृशकरणम्, तत्कामा । वेषादिना भर्तृसदृशावस्थामपि अनुकर्तुमिच्छतीति यावत् ।

2. अत्र वनस्येति स्थाने वनस्थान मुद्रित पुनः पुस्तके । तत्रेदम् "वनस्य वनगमनयोग्यचीरस्य" इति तिलकटीकानुसारेणेति प्रतिभाति । तत्त्वतस्तु पूर्वश्लोकस्थस्य वनशब्दस्येदं विवरणं नेहस्थस्य । वनगमनयोग्यचीरग्रहणस्यात्रानन्वयादिति ।

१. सुकुमारी च. छ.

२. कस्यापि ति.

अजीवनार्हेण मया नृशंसा कृता प्रतिज्ञा नियमेन तावत् ।
त्वया हि बाल्यात् प्रतिपन्नमेतत्तन्मां दहेद्वेणुमिवात्मपुष्पम् ॥ ७
रामेण यदि ते पापे किंचित् कृतमशोभनम् । अपकारः[1] क इह ते वैदेह्या दर्शितोऽथ मे ॥ ८
मृगीवोत्फुल्लनयना मृदुशीला तपस्विनी । अपकारं कमिह ते करोति जनकात्मजा ॥ ९
ननु पर्याप्तमेतत्ते पापे रामविवासनम् । किमेभिः कृपणैर्भूयः पातकैरपि ते कृतैः ॥ १०
प्रतिज्ञातं मया तावत्त्वयोक्तं देवि शृण्वता । रामं यदभिषेकाय त्वमिहागतमब्रवीः ॥ ११
तत्त्वेतत् समतिक्रम्य निरयं गन्तुमिच्छसि । मैथिलीमपि या हि त्वमीक्षसे चीरवासिनीम् ॥ १२
इतीव राजा विलपन् महात्मा शोकस्य नान्तं स ददर्श किंचित् ।
भृशातुरत्वाच्च पपात भूमौ तेनैव पुत्रव्यसने निमग्नः[2] ॥ १३
एवं ब्रुवन्तं पितरं रामः संप्रस्थितो वनम् । अवाक्शिरसमासीनमिदं वचनमब्रवीत् ॥ १४
इयं धार्मिक कौसल्या मम माता यशस्विनी । वृद्धा चाक्षुद्रशीला च न च त्वां देव गर्हते ॥ १५
मया विहीनां वरद प्रपन्नां शोकसागरम् । अदृष्टपूर्वव्यसनां भूयः संमन्तुमर्हसि ॥ १६
पुत्रशोकं यथा नर्च्छेत्त्वया पूज्येन पूजिता । मां हि संचिन्तयन्तीयं त्वयि जीवेत्तपस्विनी ॥ १७
इमां महेन्द्रोपम [I]जातगर्धिनीं तथा विधातुं जननीं ममार्हसि ।
यथा वनस्थे मयि शोककर्शिता न जीवितं न्यस्य यमक्षयं व्रजेत् ॥ १८

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
अयोध्याकाण्डे जनाक्रोशो नाम अष्टात्रिंशः सर्गः

---

## एकोनचत्वारिंशः सर्गः

### वनगमनापृच्छा

रामस्य तु वचः श्रुत्वा मुनिवेषधरं च तम् । समीक्ष्य सह भार्याभी राजा विगतचेतनः ॥ १
नैनं दुःखेन संतप्तः प्रत्यवैक्षत राघवम् । न चैनमभिसंप्रेक्ष्य प्रत्यभाषत दुर्मनाः ॥ २
स मुहूर्तमिवासंज्ञो दुःखितश्च महीपतिः । विललाप महाबाहू राममेवानुचिन्तयन् ॥ ३
मन्ये खलु मया पूर्वं विवत्सा बहवः कृताः । प्राणिनो हिंसिता वापि तस्मादिदमुपस्थितम् ॥ ४
न त्वेवानागते काले देहाच्च्यवति जीवितम् । कैकेय्या क्लिश्यमानस्य मृत्युर्मम न विद्यते ॥ ५
योऽहं पावकसंकाशं पश्यामि पुरतः स्थितम् । विहाय वसने सूक्ष्मे तापसाच्छादमात्मजम् ॥ ६
एकस्याः खलु कैकेय्याः कृतेऽयं क्लिश्यते जनः । स्वार्थे प्रयतमानायाः संश्रित्य निकृतिं त्विमाम् ॥ ७

---

I. जातेति पुत्रेलर्धः । १. अवराधः ब. २. पुत्रव्यसनेन हतः क.

एवमुक्त्वा तु वचनं बाष्पेण पिहितेन्द्रियः[1] । रामेति सकृदेवोक्त्वा व्याहर्तुं न शशाक ह ॥ ८
संज्ञां तु प्रतिलभ्यैव मुहूर्तात् स महीपतिः । नेत्राभ्यामश्रुपूर्णाभ्यां सुमन्त्रमिदमब्रवीत् ॥ ९
औपवाह्यं रथं युक्त्वा त्वमायाहि हयोत्तमैः । प्रापयैनं महाभागमितो जनपदात् परम् ॥ १०
एवं मन्ये गुणवतां गुणानां फलमुच्यते । पित्रा मात्रा च यत् साधुर्वीरो निर्वास्यते वनम् ॥ ११
राज्ञो वचनमाज्ञाय सुमन्त्रः शीघ्रविक्रमः । योजयित्वा ययौ तत्र रथमश्वैरलंकृतम् ॥ १२
तं रथं राजपुत्राय सूतः कनकभूषितम् । आचचक्षेऽञ्जलिं कृत्वा युक्तं परमवाजिभिः ॥ १३
राजा सत्वरमाहूय व्यापृतं वित्तसंचये । उवाच देशकालज्ञं निश्चितं सर्वतः शुचिः ॥ १४
वासांसि च महार्हाणि भूषणानि वराणि च । वर्षाण्येतानि सङ्ख्याय वैदेह्याः क्षिप्रमानय ॥ १५
नरेन्द्रेणैवमुक्तस्तु गत्वा कोशगृहं ततः । प्रायच्छत् सर्वमाहृत्य सीतायै [2]क्षिप्रमेव तत् ॥ १६
सा सुजाता सुजातानि वैदेही प्रस्थिता वनम् । भूषयामास गात्राणि तैर्विचित्रैर्विभूषणैः ॥ १७
व्यराजयत वैदेही वेश्म तत् सुविभूषिता । उद्यतोंऽशुमतः काले खं प्रभेव विवस्वतः ॥ १८
तत्र सीता महाभागा ववन्दे श्वश्रुपादयोः[3] । तां भुजाभ्यां परिष्वज्य श्वश्रूर्वचनमब्रवीत् ॥ १९
अनाचरन्तीं कृपणं मूर्ध्न्युपाघ्राय मैथिलीम् । असत्यः सर्वलोकेऽस्मिन् सततं सत्कृताः प्रियैः ॥ २०
भर्तारं नानुमन्यन्ते विनिपातगतं स्त्रियः । एष स्वभावो नारीणामनुभूय पुरा सुखम् ॥ २१
अल्पामप्यापदं प्राप्य दुष्यन्ति प्रजहत्यपि । असत्यशीला विकृता दुर्गा अहृदयाः सदा ॥ २२
युवत्यः पापसंकल्पाः क्षणमात्रविरागिणः । न कुलं न कृतं विद्या न दत्तं नापि संग्रहः ॥ २३
स्त्रीणां गृह्णाति हृदयमनित्यहृदया हि ताः । साध्वीनां तु स्थितानां हि शीले सत्ये श्रुते स्थिते ॥ २४
स्त्रीणां पवित्रं परमं पतिरेको विशिष्यते । स त्वया नावमन्तव्यः पुत्रः प्रव्राजितो वनम् ॥ २५
तव दैवसमस्त्वेष निर्धनः सधनोऽपि वा । विज्ञाय वचनं सीता तस्या धर्मार्थसंहितम् ॥ २६
कृताञ्जलिरुवाचेदं श्वश्रूमभिमुखे स्थिता । करिष्ये सर्वमेवाहमार्या यदनुशास्ति माम् ॥ २७
अभिज्ञास्मि यथा भर्तुर्वर्तितव्यं श्रुतं च मे । न मामसज्जनेनार्या संमानयितुमर्हति ॥ २८
धर्माद्विचलितुं नाहमलं चन्द्रादिव प्रभा । नातन्त्री[1] वाद्यते वीणा नाचक्रो वर्तते रथः ॥ २९
नापतिः सुखमेधेत या स्यादपि शतात्मजा । मितं ददाति हि पिता मितं माता मितं सुतः ॥ ३०
अमितस्य हि दातारं भर्तारं का न पूजयेत् । साहमेवंगता ज्येष्ठा[5] श्रुतधर्मपरावरा ॥ ३१
आर्ये किमवमन्येय स्त्रीणां भर्ता हि दैवतम् । सीताया वचनं श्रुत्वा कौसल्या हृदयंगमम् ॥ ३२
शुद्धसत्त्वा मुमोचाश्रु सहसा दुःखहर्षजम् । तां प्राञ्जलिरभिक्रम्य मातृमध्येऽतिसत्कृताम् ॥ ३३

---

1. नातन्त्रीर्वाद्यते इति चेदुपक्रम्येत स पाठ. क्लिष्टः । ३. इदमर्धम् पुना. नास्ति ।
१. पिहितेक्षणः छ. ४. असत्यः प्र.
२. स्ववम् छ. समम् च. ५. श्रेष्ठा च.

रामः परमधर्मात्मा मातरं वाक्यमब्रवीत् । अम्ब मा दुःखिता भूस्त्वं पश्येस्त्वं पितरं मम ॥ ३४
क्षयो हि वनवासस्य क्षिप्रमेव भविष्यति । सुप्तायास्ते गमिष्यन्ति नव वर्षाणि पञ्च च ॥ ३५
सा समग्रमिह प्राप्तं मां द्रक्ष्यसि सुहृद्वृतम् । एतावदभिनीतार्थमुक्त्वा स जननीं वचः ॥ ३६
त्रयःशतशतार्धाश्च ददर्शावेक्ष्य[1] मातरः । ताश्चापि स तथैवार्ता मातॄर्दशरथात्मजः ॥ ३७
धर्मयुक्तमिदं वाक्यं निजगाद कृताञ्जलिः । संवासात् परुषं किंचिदज्ञानादपि यत् कृतम् ॥ ३८
तन्मे समनुजानीत सर्वाश्चामन्त्रयामि वः । वचनं राघवस्यैतद्धर्मयुक्तं समाहितम् ॥ ३९
शुश्रुवुस्ताः स्त्रियः सर्वाः शोकोपहतचेतसः । जज्ञेऽथ तासां संनादः क्रौञ्चीनामिव निस्वनः ॥ ४०
मानवेन्द्रस्य भार्याणामेवं वदति राघवे ॥

मुरजपणवमेघघोषवद्दशरथवेश्म बभूव यत् पुरा ।
विलपितपरिदेवनाकुलं व्यसनगतं तदभूत् सुदुःखितम् ॥ ४१

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
अयोध्याकाण्डे वनगमनापृच्छा नाम एकोनचत्वारिंशः सर्गः

---

## चत्वारिंशः सर्गः

### पौराद्यनुव्रज्या

अथ रामश्च सीता च लक्ष्मणश्च कृताञ्जलिः । उपसंगृह्य राजानं चक्रुर्दीनाः प्रदक्षिणम् ॥ १
तं चापि समनुज्ञाप्य धर्मज्ञः सीतया सह । राघवः शोकसंमूढो जननीमभ्यवादयत् ॥ २
अन्वक्षं लक्ष्मणो भ्रातुः कौसल्यामभ्यवादयत् । अथ मातुः सुमित्राया जग्राह चरणौ पुनः ॥ ३
तं वन्दमानं रुदती माता सौमित्रिमब्रवीत् । हितकामा महाबाहुं मूर्ध्न्युपाघ्राय लक्ष्मणम् ॥ ४
सृष्टस्त्वं वनवासाय स्वनुरक्तः सुहृज्जने । रामे प्रमादं मा कार्षीः पुत्र भ्रातरि गच्छति ॥ ५
व्यसनी वा समृद्धो वा गतिरेष तवानघ । एष लोके सतां धर्मो यज्ज्येष्ठवशगो भवेत् ॥ ६
इदं हि वृत्तमुचितं कुलस्यास्य सनातनम् । दानं दीक्षा च यज्ञेषु तनुत्यागो मृधेषु च[1] ॥ ७
लक्ष्मणं त्वेवमुक्त्वा सा संसिद्धं प्रियराघवम् । सुमित्रा गच्छ गच्छेति पुनः पुनरुवाच तम् ॥ ८
रामं दशरथं विद्धि मां विद्धि जनकात्मजाम् । अयोध्यामटवीं विद्धि गच्छ तात यथासुखम् ॥ ९
ततः सुमन्त्रः काकुत्स्थं प्राञ्जलिर्वाक्यमब्रवीत् । विनीतो विनयज्ञश्च मातलिर्वासवं यथा ॥ १०
रथमारोह भद्रं ते राजपुत्र महायशः । क्षिप्रं त्वां प्रापयिष्यामि यत्र मां राम वक्ष्यसि ॥ ११
चतुर्दश हि वर्षाणि वस्तव्यानि वने त्वया । तान्युपक्रमितव्यानि यानि देव्यासि चोदितः ॥ १२
तं रथं सूर्यसंकाशं सीता हृष्टेन चेतसा । आरुरोह वरारोहा कृत्वालंकारमात्मनः ॥ १३

---

1. अवेक्ष्य विविच्य ददर्शेत्यर्थः । तथा मातरश्च तं ददृशुरिति शेषः, इति तिलकः ।

१. अस्यानन्तरम्— ज्येष्ठस्याप्यनुवृत्तिश्च राजवंशस्य लक्षणम्—इति ग.

वनवासं हि सङ्ख्याय वासांस्याभरणानि च । भर्तारमनुगच्छन्त्यै सीतायै श्वशुरो ददौ[1] ॥ १४
तथैवायुधजालानि भ्रातृभ्यां कवचानि च । रथोपस्थे प्रतिन्यस्य सचर्म कठिनं च तत् ॥ १५
अथो ज्वलनसंकाशं चामीकरविभूषितम् । तमारुरुहतुस्तूर्णं भ्रातरौ रामलक्ष्मणौ ॥ १६
सीतातृतीयानारूढान् दृष्ट्वा धृष्टमचोदयत् । सुमन्त्रः [1]संमतानश्वान् वायुवेगसमाञ्जवे ॥ १७
प्रतियाते महारण्यं चिररात्राय राघवे । बभूव नगरे मूर्च्छा बलमूर्च्छा जनस्य च ॥ १८
तत् समाकुलसंभ्रान्तं मत्तसंकुपितद्विपम् । हयशिञ्जितनिर्घोषं पुरमासीन्महास्वनम् ॥ १९
ततः सबालवृद्धा सा पुरी परमपीडिता । राममेवाभिदुद्राव घर्मार्ता[2] सलिलं यथा ॥ २०
पार्श्वतः पृष्ठतश्चापि लम्बमानास्तदुन्मुखाः । बाष्पपूर्णमुखाः सर्वे तमूचुर्भृशनिस्वनाः ॥ २१
संयच्छ वाजिनां रश्मीन सूत याहि शनैः शनैः । मुखं द्रक्ष्याम रामस्य दुर्दर्शं नो भविष्यति ॥ २२
आयसं हृदयं नूनं राममातुरसंशयम् । यद्देवगर्भप्रतिमे वनं याति न भिद्यते ॥ २३
कृतकृत्या हि वैदेही छायेवानुगता पतिम् । न जहाति रता धर्मे मेरुमर्कप्रभा यथा ॥ २४
अहो लक्ष्मण सिद्धार्थः सततं प्रियवादिनम् । भ्रातरं देवसंकाशं यस्त्वं परिचरिष्यसि ॥ २५
महत्येषा हि ते [3]सिद्धिरेष चाभ्युदयो महान् । एष स्वर्गस्य मार्गश्च यदेनमनुगच्छसि ॥ २६
एवं वदन्तस्ते सोढुं न शेकुर्बाष्पमागतम् । नरास्तमनुगच्छन्तः प्रियमिक्ष्वाकुनन्दनम् ॥ २७
अथ राजा वृतः स्त्रीभिर्दीनाभिर्दीनचेतनः । निर्जगाम प्रियं पुत्रं द्रक्ष्यामीति ब्रुवन् गृहात् ॥ २८
शुश्रुवे चाग्रतः स्त्रीणां रुदन्तीनां महास्वनः । यथा नादः करेणूनां बद्धे महति कुञ्जरे ॥ २९
पिता हि राजा काकुत्स्थः श्रीमान् सन्नस्तदाभवत् । परिपूर्णः शशी काले ग्रहेणोपप्लुतो यथा ॥ ३०
स च श्रीमानचिन्त्यात्मा रामो दशरथात्मजः । सूतं संचोदयामास त्वरितं वाह्यतामिति ॥ ३१
रामो याहीति सूतं तं तिष्ठेति स जनस्तदा । उभयं नाशकत् सूतः कर्तुमध्वनि चोदितः ॥ ३२
निर्गच्छति महाबाहौ रामे पौरजनाश्रुभिः । पतितैरभ्यवहितं प्रशशाम महीरजः ॥ ३३
रुदिताश्रुपरिद्यूनं हाहाकृतमचेतनम् । प्रयाणे राघवस्यासीत् पुरं परमपीडितम् ॥ ३४
सुस्राव नयनैः स्त्रीणामस्रमायाससंभवम् । मीनसंक्षोभचलितैः सलिलं पङ्कजैरिव ॥ ३५
दृष्ट्वा तु नृपतिः श्रीमानेकचित्तगतं पुरम् । निपपातैव दुःखेन कृत्तमूल इव द्रुमः ॥ ३६
ततो हलहलाशब्दो जज्ञे रामस्य पृष्ठतः । नराणां प्रेक्ष्य राजानं सीदन्तं भृशदुःखितम् ॥ ३७
हा रामेति जनाः केचिद्राममातेति चापरे । अन्तःपुरं समृद्धं च क्रोशन्तः पर्यदेवयन् ॥ ३८
अन्वीक्षमाणो रामस्तु विषण्णं भ्रान्तचेतनम् । राजानं मातरं चैव ददर्शानुगतौ पथि ॥ ३९

---

1. श्वशुरो यानि वासांस्याभरणानि च ददौ तैरलंकारं कुर्वीत सम्बन्धः ।  
२. घर्मार्तः पुना.  
३. बुद्धिः ग.

१. संयतान् ग.

न्यवेदयत चात्मानं तस्मै लक्ष्मणपूर्वजः । पुत्रौ दशरथस्यावां भगवन् रामलक्ष्मणौ ॥ १३
भार्या ममेयं वैदेही कल्याणी जनकात्मजा । मां चानुयाता विजनं तपोवनमनिन्दिता ॥ १४
पित्रा प्रव्राज्यमानं मां सौमित्रिरनुजः प्रियः । अयमन्वगमद्भ्राता वनमेव दृढव्रतः ॥ १५
पित्रा नियुक्ता भगवन प्रवेक्ष्यामस्तपोवनम् । धर्ममेव चरिष्यामः [1]पत्रमूलफलाशनाः ॥ १६
तस्य तद्वचनं श्रुत्वा राजपुत्रस्य धीमतः । उपानयत धर्मात्मा गामर्घ्यमुदकं ततः ॥ १७
नानाविधानन्नरसान् वन्यमूलफलाश्रयान् । तेभ्यो ददौ तप्ततपा वासं चैवान्वकल्पयत ॥ १८
मृगपक्षिभिरासीनो मुनिभिश्च समन्ततः । राममागतमभ्यर्च्य स्वागतेनाह तं मुनिः ॥ १९
प्रतिगृह्य च तामर्चामुपविष्टं स राघवम् । भरद्वाजोऽब्रवीद्वाक्यं धर्मयुक्तमिदं तदा ॥ २०
चिरस्य खलु काकुत्स्थ पश्यामि त्वामिहागतम् । श्रुतं तव मया चेदं विवासनमकारणम् ॥ २१
अवकाशो विविक्तोऽयं महानद्योः समागमे । पुण्यश्च रमणीयश्च वसत्विह भवान् सुखम् ॥ २२
एवमुक्तः स वचनं भरद्वाजेन राघवः । प्रत्युवाच शुभं वाक्यं रामः सर्वहिते रतः ॥ २३
भगवन्नित आसन्नः पौरजानपदो जनः । सुदर्शमिह मां प्रेक्ष्य मन्येऽहमिममाश्रमम् ॥ २४
आगमिष्यति वैदेहीं मां चापि प्रेक्षको जनः । अनेन कारणेनाहमिह वासं न रोचये ॥ २५
एकान्ते पश्य भगवन्नाश्रमस्थानमुत्तमम् । रमते यत्र वैदेही सुखार्हा जनकात्मजा ॥ २६
एतच्छ्रुत्वा शुभं वाक्यं भरद्वाजो महामुनिः । राघवस्य ततो वाक्यमर्थग्राहकमब्रवीत ॥ २७
दशक्रोश इतस्तात गिरिर्यस्मिन्निवत्स्यसि । महर्षिसेवितः पुण्यः सर्वतः शुभदर्शनः ॥ २८
गोलाङ्गूलानुचरितो वानरर्क्षनिषेवितः । चित्रकूट इति ख्यातो गन्धमादनसंनिभः ॥ २९
यावता चित्रकूटस्य नरः शृङ्गाण्यवेक्षते । कल्याणानि समाधत्ते न पापे कुरुते मनः ॥ ३०
ऋषयस्तत्र बहवो विहृत्य शरदां शतम् । तपसा दिवमारूढाः कपालशिरसा[1] सह ॥ ३१
प्रविविक्तमहं मन्ये तं वासं भवतः सुखम् । इह वा वनवासाय वस राम मया सह ॥ ३२
स रामं सर्वकामैस्तं भरद्वाजः प्रियातिथिम् । सभार्यं सह च भ्रात्रा प्रतिजग्राह धर्मवित् ॥ ३३
तस्य प्रयागे रामस्य तं महर्षिमुपेयुषः । प्रपन्ना रजनी पुण्या चित्राः कथयतः कथाः ॥ ३४
सीतातृतीयः काकुत्स्थः परिश्रान्तः सुखोचितः । भरद्वाजाश्रमे रम्ये तां रात्रिमवसत सुखम् ॥ ३५
प्रभातायां तु शर्वर्यां भरद्वाजमुपागमत् । उवाच नरशार्दूलो मुनिं ज्वलिततेजसम् ॥ ३६
शर्वरीं भगवन्नद्य सत्यशील तवाश्रमे । उषिताः [2]स्म सुखं गन्तुमनुजानातु नो भवान् ॥ ३७
रात्र्यां तु तस्यां व्युष्टायां भरद्वाजोऽब्रवीदिदम् । मधुमूलफलोपेतं चित्रकूटं व्रजेति ह ॥ ३८
वासमौपयिकं मन्ये तव राम महाबल । नानानगगणोपेतः किंनरोरगसेवितः ॥ ३९

---

1. कपालवत् धवलन शिरसेत्यर्थः ।  १. तत्र च. छ.  २. स्मेह वसाति प्र.

मयूरनादाभिरुतो गजराजनिषेवितः । गम्यतां भवता शैलश्चित्रकूटः स विश्रुतः[1] ॥ ४०
पुण्यश्च रमणीयश्च बहुमूलफलायुतः । तत्र कुञ्जरयूथानि मृगयूथानि चाभितः ॥ ४१
विचरन्ति वनान्तेऽस्मिंस्तानि द्रक्ष्यसि राघव । सरित्प्रस्रवणप्रस्थान् दरीकन्दरनिर्झरान् ॥ ४२
[2]चरतः सीतया सार्धं नन्दिष्यति मनस्तव ॥

प्रहृष्टकोयष्टिककोकिलस्वनैर्विनादितं तं वसुधाधरं शिवम् ।
मृगैश्च मत्तैर्बहुभिश्च कुञ्जरैः सुरम्यमासाद्य समावसाश्रमम् ॥ ४३

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायाम् संहितायाम्
अयोध्याकाण्डे भरद्वाजाश्रमाभिगमनं नाम चतुःपञ्चाशः सर्गः

---

## पञ्चपञ्चाशः सर्गः

### यमुनातरणम्

उषित्वा रजनीं तत्र राजपुत्रावरिंदमौ । महर्षिमभिवाद्याथ जग्मतुस्तं गिरिं प्रति ॥ १
तेषां स्वस्त्यनं चैव महर्षिः स चकार ह । प्रस्थितांश्चैव तान् प्रेक्ष्य पिता पुत्रानिवान्वगात्[3] ॥ २
ततः प्रचक्रमे वक्तुं वचनं स महामुनिः । भरद्वाजो महातेजा रामं सत्यपराक्रमम् ॥ ३
गङ्गायमुनयोः सन्धिमासाद्य मनुजर्षभौ । कालिन्दीमनुगच्छेतां नदीं पश्चान्मुखाश्रिताम् ॥ ४
अथासाद्य तु कालिन्दीं शीघ्रस्रोतसमापगाम् । तस्यास्तीर्थं प्रचरितं पुराणं प्रेक्ष्य राघवौ ॥ ५
तत्र यूयं प्लवं कृत्वा तरतांशुमतीं नदीम् । ततो न्यग्रोधमासाद्य महान्तं हरितच्छदम् ॥ ६
परीतं बहुभिर्वृक्षैः श्यामं सिद्धोपसेवितम् । तस्मै सीताञ्जलिं कृत्वा प्रयुञ्जीताशिषः शिवाः ॥ ७
समासाद्य तु तं वृक्षं वसेद्वातिक्रमेत वा । क्रोशमात्रं ततो गत्वा नीलं द्रक्ष्यथ काननम् ॥ ८
सल्लकीबदरीमिश्रं रम्यं वंशैश्च यामुनैः । स पन्थाश्चित्रकूटस्य गतः सुबहुशो मया ॥ ९
रम्यो मार्दवयुक्तश्च दावैश्चैव विवर्जितः । इति पन्थानमादिश्य महर्षिः संन्यवर्तत ॥ १०
अभिवाद्य तथेत्युक्त्वा रामेण विनिवर्तितः । उपावृत्ते मुनौ तस्मिन् रामो लक्ष्मणमब्रवीत् ॥ ११
कृतपुण्याः स्म सौमित्रे मुनिर्यन्नोऽनुकम्पते । इति तौ पुरुषव्याघ्रौ मन्त्रयित्वा मनस्विनौ ॥ १२
सीतामेवाग्रतः कृत्वा कालिन्दीं जग्मतुर्नदीम् । अथासाद्य तु कालिन्दीं शीघ्रस्रोतोवहां नदीम्[4] ॥ १३
चिन्तामापेदिरे सद्यो नदीजलतितीर्षवः । तौ काष्ठसङ्घाटमतो चक्रतुस्तु महाप्लवम् ॥ १४
शुष्कैर्वंशैः समास्तीर्णमुशीरैश्च समावृतम् । ततो वेतसशाखाश्च जम्बूशाखाश्च वीर्यवान् ॥ १५
चकार लक्ष्मणश्छित्त्वा सीतायाः सुखमासनम् । तत्र श्रियमिवाचिन्त्यां रामो दाशरथिः प्रियाम् ॥ १६

---

१. समुच्छ्रितः ध.
२. इदमर्धं नास्ति झ, ञ,
३. औरसान् ग.
४. इदमर्धम् ध. नास्ति ।

ईषत्संलज्जमानां तामध्यारोपयत प्लवम् । पार्श्वे तत्र च वैदेह्या वसने भूषणानि च ॥ १७
प्लवे कठिनकाजं[1] च रामश्चक्रे सहायुधैः । आरोप्य प्रथमं सीतां सङ्घाटं परिगृह्य च ॥ १८
ततः प्रतेरतुर्युक्तौ प्रीतौ[1] दशरथात्मजौ । कालिन्दीमध्यमायाता सीता त्वेनामवन्दत ॥ १९
स्वस्ति देवि तरामि त्वां पारयेन्मे पतिर्व्रतम् । यक्ष्ये त्वां गोसहस्रेण सुराघटशतेन च ॥ २०
स्वस्ति प्रत्यागते रामे पुरीमिक्ष्वाकुपालिताम् । कालिन्दीमथ सीता तु याचमाना कृताञ्जलिः ॥ २१
तीरमेवाभिसंप्राप्ता दक्षिणं वरवर्णिनी । ततः प्लवेनांशुमतीं शीघ्रगामूर्मिमालिनीम् ॥ २२
तीरजैर्बहुभिर्वृक्षैः संतेरुर्यमुनां नदीम् । ते तीर्णाः प्लवमुत्सृज्य प्रस्थाय यमुनावनात् ॥ २३
श्यामं न्यग्रोधमासेदुः शीतलं हरितच्छदम् । न्यग्रोधं तमुपागम्य वैदेही वाक्यमब्रवीत् ॥ २४
नमस्तेऽस्तु महावृक्ष पारयेन्मे पतिर्व्रतम्[2] । कौसल्यां चैव पश्येयं सुमित्रां च यशस्विनीम् ॥ २५
इति सीताञ्जलिं कृत्वा पर्यगच्छद्वनस्पतिम् । अवलोक्य ततः सीतामायाचन्तीमनिन्दिताम् ॥ २६
दयितां च विधेयां च रामो लक्ष्मणमब्रवीत् । सीतामादाय गच्छ त्वमग्रतो भरतानुज[3] ॥ २७
पृष्ठतोऽहं गमिष्यामि सायुधो द्विपदां वर । यद्यत् फलं प्रार्थयते पुष्पं वा जनकात्मजा ॥ २८
तत्तत् प्रदद्या वैदेह्या यत्रास्या रमते मनः । गच्छतोस्तु तयोर्मध्ये बभूव[4] जनकात्मजा ॥ २९
मातङ्गयोर्मध्यगता शुभा नागवधूरिव । एकैकं पादपं गुल्मं लतां वा पुष्पशालिनीम् ॥ ३०
अदृष्टपूर्वां पश्यन्ती रामं पप्रच्छ साबला । रमणीयान् बहुविधान् पादपान् कुसुमोत्करान् ॥ ३१
सीतावचनसंरब्ध आनयामास लक्ष्मणः । विचित्रवालुकां नीलां हंससारसनादिताम् ॥ ३२
रेमे जनकराजस्य सुता प्रेक्ष्य तदा नदीम् । क्रोशमात्रं ततो गत्वा भ्रातरौ रामलक्ष्मणौ ॥ ३३
बहून् मेध्यान् मृगान् हत्वा चेरतुर्यमुनावने ॥

विहृत्य ते बर्हिणपूगनादिते शुभे वने वानरवारणायुते ।
समं नदीवप्रमुपेत्य संमतं निवासमाजग्मुरदीनदर्शनाः ॥ ३४

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
अयोध्याकाण्डे यमुनातरणं नाम पञ्चपञ्चाशः सर्गः

---

## षट्पञ्चाशः सर्गः
### चित्रकूटनिवासः

अथ रात्र्यां व्यतीतायामवसुप्तमनन्तरम् । प्रबोधयामास शनैर्लक्ष्मणं रघुनन्दनः ॥ १

---

1. कठिनं खनित्रम् । काजं पिटकम् ।
१. वीरौ च. छ.
२. अस्यानन्तरम्—चिरं जीवतु मे श्वशुरः कोसलेश्वरः । भर्ता मे देवराश्चैव जीवन्तु भरतादयः ॥—इति ग.
३. भरताग्रज च. छ.
४. बभौ च च. छ.

सौमित्रे शृणु वन्यानां वल्गु व्याहरतां स्वनम् । संप्रतिष्ठामहे कालः प्रस्थानस्य परंतप ॥ २

स सुप्तः समये भ्रात्रा लक्ष्मणः प्रतिबोधितः । जहौ निद्रां च तन्द्रीं च प्रसक्तं च पथि श्रमम् ॥ ३

तत उत्थाय ते सर्वे स्पृष्ट्वा नद्याः शिवं जलम् । पन्थानमृषिणादिष्टं चित्रकूटस्य तं ययुः ॥ ४

ततः संप्रस्थितः काले रामः सौमित्रिणा सह । सीतां कमलपत्राक्षीमिदं वचनमब्रवीत् ॥ ५

आदीप्तानिव वैदेहि सर्वतः पुष्पितान्नगान् । स्वैः पुष्पैः किंशुकान् पश्य मालिनः शिशिरात्यये ॥ ६

पश्य भल्लातकान् [1]बिल्वान् वानरैरुपसेवितान् । फलपुष्पैरवनतान् नूनं शक्ष्याम जीवितुम् ॥ ७

पश्य द्रोणप्रमाणानि लम्बमानानि लक्ष्मण । मधूनि मधुकारीभिः संभृतानि नगे नगे ॥ ८

एष क्रोशति नत्यूहस्तं शिखी प्रतिकूजति । रमणीये वनोद्देशे पुष्पसंस्तरसंकटे ॥ ९

मातङ्गयूथानुसृतं पक्षिसङ्घानुनादितम् । चित्रकूटमिमं पश्य प्रवृद्धशिखरं गिरिम् ॥ १०

समभूमितले रम्ये द्रुमैर्बहुभिरावृते । पुण्ये रंस्यामहे तात चित्रकूटस्य कानने ॥ ११

ततस्तौ पादचारेण गच्छन्तौ सह सीतया । रम्यमासेदतुः शैलं चित्रकूटं मनोरमम् ॥ १२

तं तु पर्वतमासाद्य नानापक्षिगणायुतम् । बहुमूलफलं रम्यं संपन्नं सरसोदकम् ॥ १३

मनोज्ञोऽयं गिरिः सौम्य नानाद्रुमलतायुतः । बहुमूलफलो रम्यः स्वाजीवः प्रतिभाति मे ॥ १४

मुनयश्च महात्मानो वसन्त्यस्मिञ्शिलोच्चये । अयं वासो भवेत्तावदत्र सौम्य[2] रमेमहि ॥ १५

इति सीता च रामश्च लक्ष्मणश्च कृताञ्जलिः । अभिगम्याश्रमं सर्वे वाल्मीकिमभिवादयन् ॥ १६

तान् महर्षिः प्रमुदितः पूजयामास धर्मवित् । आस्यतामिति चोवाच स्वागतं तु निवेद्य च ॥ १७

ततोऽब्रवीन्महाबाहुर्लक्ष्मणं लक्ष्मणाग्रजः । संनिवेद्य यथान्यायमात्मानमृषये प्रभुः ॥ १८

लक्ष्मणानय दारूणि दृढानि च वराणि च । कुरुष्वावसथं सौम्य वासे मेऽभिरतं मनः ॥ १९

तस्य तद्वचनं श्रुत्वा सौमित्रिर्विविधान् द्रुमान् । आजहार ततश्चक्रे पर्णशालामरिंदमः ॥ २०

तां निष्ठितां बद्धकटां दृष्ट्वा रामः सुदर्शनाम् । शुश्रूषमाणमेकाग्रमिदं वचनमब्रवीत् ॥ २१

ऐणेयं मांसमाहृत्य शालां यक्ष्यामहे वयम् । कर्तव्यं वास्तुशमनं सौमित्रे चिरजीविभिः ॥ २२

मृगं हत्वानय क्षिप्रं लक्ष्मणेह शुभेक्षण । कर्तव्यः शास्त्रदृष्टो हि विधिर्धर्ममनुस्मर ॥ २३

भ्रातुर्वचनमाज्ञाय लक्ष्मणः परवीरहा । चकार स यथोक्तं च तं रामः पुनरब्रवीत् ॥ २४

ऐणेयं श्रपयस्वैतच्छालां यक्ष्यामहे वयम् । त्वर सौम्य मुहूर्तोऽयं ध्रुवश्च दिवसोऽप्ययम् ॥ २५

स लक्ष्मणः कृष्णमृगं हत्वा मेध्यं प्रतापवान् । अथ चिक्षेप सौमित्रिः समिद्धे जातवेदसि ॥ २६

तं तु पक्वं समाज्ञाय निष्टप्तं छिन्नशोणितम् । लक्ष्मणः पुरुषव्याघ्रमथ राघवमब्रवीत् ॥ २७

अयं कृष्णः[3] समाप्ताङ्गः शृतः कृष्णमृगो यथा[4] । देवतां देवसंकाश यजस्व कुशलो ह्यसि ॥ २८

---

१. फुल्लान् नरैरनुपसेवितान् च. छ.

२. वयमत्र ख.

३. सर्वः ति.

४. मया ति.

रामः स्नात्वा तु नियतो गुणवाञ्जप्यकोविदः । संग्रहेणाकरोत् सर्वान् मन्त्रान् सत्रावसानिकान्॥२९
इष्ट्वा देवगणान् सर्वान् विवेश सदनं शुचिः । बभूव च मनोह्लादो रामस्यामिततेजसः ॥ ३०
वैश्वदेवबलिं कृत्वा रौद्रं वैष्णवमेव च । वास्तुसंशमनीयानि मङ्गलानि प्रवर्तयन् ॥ ३१
जपं च न्यायतः कृत्वा स्नात्वा नद्यां यथाविधि । पापसंशमनं रामश्चकार बलिमुत्तमम् ॥ ३२
वेदिस्थलविधानानि चैत्यान्यायतनानि च । आश्रमस्यानुरूपाणि स्थापयामास राघवः ॥ ३३
वन्यैर्माल्यैः फलैर्मूलैः पक्वैर्मांसैर्यथाविधि । अद्भिर्जपैश्च वेदोक्तैर्दर्भैश्च ससमित्कुशैः ॥ ३४
तौ तर्पयित्वा भूतानि राघवौ सह सीतया । तदा विविशतुः शालां सुशुभां शुभलक्षणौ[1] ॥ ३५

तां वृक्षपर्णच्छदनां मनोज्ञां यथाप्रदेशं सुकृतां निवाताम् ।
वासाय सर्वे विविशुः समेताः सभां यथा देवगणाः सुधर्माम् ॥ ३६
अनेकनानामृगपक्षिसंकुले विचित्रपत्रस्तबकैर्द्रुमैर्युते ।
वनोत्तमे व्यालमृगानुनादिते तदा विजह्रुः सुसुखं जितेन्द्रियाः ॥ ३७
सुरम्यमासाद्य तु चित्रकूटं नदीं च तां माल्यवतीं सुतीर्थाम् ।
ननन्द रामो मृगपक्षिजुष्टां जहौ च दुःखं पुरविप्रवासात् ॥ ३८

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
अयोध्याकाण्डे चित्रकूटनिवासो नाम षट्पञ्चाशः सर्गः

---

## सप्तपञ्चाशः सर्गः
### सुमन्त्रोपावर्तनम्

कथयित्वा सुदुःखार्तः सुमन्त्रेण चिरं सह । रामे दक्षिणकूलस्थे जगाम स्वगृहं गुहः ॥ १
भरद्वाजाभिगमनं प्रयागे च सभाजनम्[2] । आ गिरेर्गमनं तेषां तत्रस्थैरभिलक्षितम् ॥ २
अनुज्ञातः सुमन्त्रोऽथ योजयित्वा हयोत्तमान् । अयोध्यामेव नगरीं प्रययौ गाढदुर्मनाः ॥ ३
स वनानि सुगन्धीनि सरितश्च सरांसि च । पश्यन्नतिययौ शीघ्रं ग्रामाणि नगराणि च ॥ ४
ततः सायाह्नसमये [3]द्वितीयेऽहनि सारथिः । अयोध्यां समनुप्राप्य निरानन्दां ददर्श ह ॥ ५
स शून्यामिव निःशब्दां दृष्ट्वा परमदुर्मनाः । सुमन्त्रश्चिन्तयामास शोकवेगसमाहतः ॥ ६
कच्चिन्न सगजा साश्वा सजना सजनाधिपा । रामसंतापदुःखेन दग्धा शोकाग्निना पुरी ॥ ७
इति चिन्तापरः सूतो वाजिभिः शीघ्रपातिभिः । नगरद्वारमासाद्य त्वरितः प्रविवेश ह ॥ ८
सुमन्त्रमभियान्तं तं[4] शतशोऽथ सहस्रशः । क राम इति पृच्छन्तः सूतमभ्यद्रवन्नराः ॥ ९

---

१. शुभलक्षणाम् ख.
२. सहासनम् च. छ.
३. तृतीये गो.
४. अभिधावन्तः ग.

तेषां शशंस गङ्गायामहमापृच्छ्य राघवम् । अनुज्ञातो निवृत्तोऽस्मि धार्मिकेण महात्मना ॥ १०
ते तीर्णा इति विज्ञाय बाष्पपूर्णमुखा जनाः । अहो धिगिति निःश्वस्य हा रामेति च चुक्रुशुः ॥ ११
शुश्राव च वचस्तेषां बृन्दं बृन्दं च तिष्ठताम् । हताः स्म खलु ये नेह पश्याम इति राघवम् ॥ १२
दानयज्ञविवाहेषु समाजेषु महत्सु च । न द्रक्ष्यामः पुनर्जातु धार्मिकं राममन्तरा ॥ १३
किं समर्थं जनस्यास्य किं प्रियं किं सुखावहम् । इति रामेण नगरं [1]पितृवत् परिपालितम् ॥ १४
वातायनगतानां च स्त्रीणामन्वन्तरापणम् । रामशोकाभितप्तानां शुश्राव परिदेवनम् ॥ १५
स राजमार्गमध्येन सुमन्त्रः पिहिताननः । यत्र राजा दशरथस्तदेवोपययौ गृहम् ॥ १६
सोऽवतीर्य रथाच्छीघ्रं राजवेश्म प्रविश्य च । कक्ष्याः सप्ताभिचक्राम महाजनसमाकुलाः ॥ १७
हर्म्यैर्विमानैः प्रासादैरवेक्ष्याथ समागतम् । हाहाकारकृता नार्यो रामादर्शनकर्शिताः ॥ १८
आयतैर्विमलैर्नेत्रैरश्रुवेगपरिप्लुतैः । अन्योन्यमभिवीक्षन्तेऽव्यक्तमार्ततराः स्त्रियः ॥ १९
ततो दशरथस्त्रीणां प्रासादेभ्यस्ततस्ततः । रामशोकाभितप्तानां मन्दं शुश्राव जल्पितम ॥ २०
सह रामेण निर्यातो विना राममिहागतः । सूतः किं नाम कौसल्यां क्रोशन्तीं प्रतिवक्ष्यति ॥ २१
यथा च[1] मन्ये दुर्जीवमेवं न सुकरं ध्रुवम् । आच्छिद्य पुत्रे निर्याते कौसल्या यत्र जीवति ॥ २२
सत्यरूपं तु तद्वाक्यं राज्ञः स्त्रीणां निशामयन् । प्रदीप्तमिव शोकेन विवेश सहसा गृहम् ॥ २३
स प्रविश्याष्टमीं कक्ष्यां राजानं दीनमातुरम् । पुत्रशोकपरिद्यूनमपश्यत् पाण्डरे गृहे ॥ २४
अभिगम्य तमासीनं नरेन्द्रमभिवाद्य च । सुमन्त्रो रामवचनं यथोक्तं प्रत्यवेदयत् ॥ २५
स तूष्णीमेव तच्छ्रुत्वा राजा विभ्रान्तचेतनः । मूर्च्छितो न्यपतद्भूमौ रामशोकाभिपीडितः ॥ २६
ततोऽन्तःपुरमाविद्धं मूर्च्छिते पृथिवीपतौ । उच्छ्रित्य बाहू चुक्रोश नृपतौ पतिते क्षितौ ॥ २७
सुमित्रया तु सहिता कौसल्या पतितं पतिम् । उत्थापयामास तदा वचनं चेदमब्रवीत् ॥ २८
इमं तस्य महाभाग दूतं दुष्करकारिणः । वनवासादनुप्राप्तं कस्मान्न प्रतिभाषसे ॥ २९
अद्येममनयं कृत्वा व्यपत्रपसि राघव । उत्तिष्ठ सुकृतं तेऽस्तु शोके न स्यात् सहायता[2] ॥ ३०
देव यस्या भयाद्राम नानुपृच्छसि सारथिम् । नेह तिष्ठति कैकेयी विस्रब्धं प्रतिभाष्यताम् ॥ ३१
सा तथोक्त्वा महाराजं कौसल्या शोकलालसा । धरण्यां निपपाताशु बाष्पविप्लुतभाषिणी ॥ ३२
विलपन्तीं तथा दृष्ट्वा कौसल्यां पतितां भुवि । पतिं चावेक्ष्य ताः सर्वाः समन्ताद्रुरुदुः स्त्रियः ॥ ३३

---

1. यथा चेति, यस्मादेवं मे दुर्जीवमेतद्वर्तते तस्मात् कौसल्या जीवतीति यत् तन्नूनं न सुकरमिति मन्य इति प्रत्येकं विलपन्तीनां राममातॄणां वचनमिदम्।

2. सहायता परिजनसमूहः तव शोके सति न स्याद्विनश्येदिति तिलकः । इदं तु सरसं प्रतिभाति— सुकृतं तेऽस्तु भद्रं ते भवतु । शोके अवलम्ब्यमाने सति सहायता सहायान्तरसंपत्तिः, न स्यात्, न खलु लोके भवति ।

१. पित्रेव क.

ततस्तमन्तःपुरनादमुत्थितं समीक्ष्य वृद्धास्तरुणाश्च मानवाः ।
स्त्रियश्च सर्वा रुरुदुः समन्ततः पुरं तदासीत् पुनरेव संकुलम् ॥ ३४

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायां
अयोध्याकाण्डे सुमन्त्रोपावर्तनं नाम सप्तपञ्चाशः सर्गः

---

## अष्टपञ्चाशः सर्गः

### रामसंदेशाख्यानम्

प्रत्याश्वस्तो यदा राजा मोहात् प्रत्यागतस्मृतिः । अथाजुहाव तं सूतं रामवृत्तान्तकारणात् ॥ १
अथ सूतो महाराजं कृताञ्जलिरुपस्थितः । राममेवानुशोचन्तं दुःखशोकसमन्वितम् ॥ २
वृद्धं परमसंतप्तं [1]नवग्रहमिव द्विपम् । विनिःश्वसन्तं ध्यायन्तमस्वस्थमिव कुञ्जरम् ॥ ३
राजा तु रजसा सूतं ध्वस्ताङ्गं समुपस्थितम् । अश्रुपूर्णमुखं दीनमुवाच परमार्तवत् ॥ ४
क नु वत्स्यति धर्मात्मा वृक्षमूलमुपाश्रितः । सोऽत्यन्तसुखितः सूत किमशिष्यति राघवः ॥ ५
दुःखस्यानुचितो दुःखं सुमन्त्र शयनोचितः । भूमिपालात्मजो भूमौ शेते कथमनाथवत् ॥ ६
यं यान्तमनुयान्ति स्म पदातिरथकुञ्जराः । स वत्स्यति कथं रामो विजनं वनमाश्रितः ॥ ७
व्यालैर्मृगैराचरितं कृष्णसर्पनिषेवितम् । कथं कुमारौ वैदेह्या सार्धं वनमुपस्थितौ ॥ ८
सुकुमार्या तपस्विन्या सुमन्त्र सह सीतया । राजपुत्रौ कथं पादैरवरुह्य रथाद्गतौ ॥ ९
सिद्धार्थः खलु सूत त्वं येन दृष्टौ ममात्मजौ । वनान्तं प्रविशन्तौ तावश्विनाविव मन्दरम् ॥ १०
किमुवाच वचो रामः किमुवाच च लक्ष्मणः । सुमन्त्र वनमासाद्य किमुवाच च मैथिली ॥ ११
आसितं शयितं भुक्तं सूत रामस्य कीर्तय । जीविष्याम्यहमेतेन ययातिरिव साधुषु ॥ १२
इति सूतो नरेन्द्रेण चोदितः सज्जमानया । उवाच वाचा राजानं स बाष्पपरिरुद्धया ॥ १३
अब्रवीन्मां महाराज धर्ममेवानुपालयन् । अञ्जलिं राघवः कृत्वा शिरसाभिप्रणम्य च ॥ १४
सूत मद्वचनात्तस्य तातस्य विदितात्मनः । शिरसा वन्दनीयस्य वन्द्यौ पादौ पुनः पुनः ॥ १५
सर्वमन्तःपुरं वाच्यं सूत मद्वचनात्त्वया । आरोग्यमविशेषेण यथार्हमभिवादनम् ॥ १६
माता च मम कौसल्या कुशलं चाभिवादनम् । अप्रमादं च वक्तव्या ब्रूयाश्चैनामिदं वचः ॥ १७
धर्मनित्या यथाकालमग्न्यगारपरा भव । देवि देवस्य पादौ च देववत् परिपालय ॥ १८
अभिमानं च मानं च त्यक्त्वा वर्तस्व मातृषु । अनु राजानमार्यां च कैकेयीमम्ब कारय ॥ १९
कुमारे भरते वृत्तिर्वर्तितव्या च राजवत् । अर्थज्येष्ठा[१] हि राजानो राजधर्ममनुस्मर ॥ २०
भरतः कुशलं वाच्यो वाच्यो मद्वचनेन च । सर्वास्वेव यथान्यायं वृत्तिं वर्तस्व मातृषु ॥ २१

1. नवग्रहं सद्योगृहीतम् ।

१. अप्यज्येष्ठाः प्र.

वक्तव्यश्च महाबाहुरिक्ष्वाकुकुलनन्दनः । पितरं यौवराज्यस्थो राज्यस्थमनुपालय ॥ २२

अतिक्रान्तवया राजा मा स्मैनं व्यपरोरुधः । कुमारराज्ये जीव त्वं तस्यैवाज्ञाप्रवर्तनात् ॥ २३

अब्रवीच्चापि मां भूयो भृशमश्रूणि वर्तयन् । मातेव मम माता ते द्रष्टव्या पुत्रगर्धिनी ॥ २४

इत्येवं मां महाराज ब्रुवन्नेव महायशाः । रामो राजीवताम्राक्षो भृशमश्रूण्यवर्तयत् ॥ २५

लक्ष्मणस्तु सुसंक्रुद्धो निःश्वसन् वाक्यमब्रवीत् । केनायमपराधेन राजपुत्रो विवासितः ॥ २६

राज्ञा तु खलु कैकेय्या लघु त्वाश्रित्य शासनम् । कृतं कार्यमकार्यं वा वयं येनाभिपीडिताः ॥ २७

यदि प्रव्राजितो रामो लोभकारणकारितम् । वरदाननिमित्तं वा सर्वथा दुष्कृतं कृतम् ॥ २८

इदं तावद्यथाकाममीश्वरस्य कृते कृतम् । रामस्य तु परित्यागे न हेतुमुपलक्षये[1] ॥ २९

असमीक्ष्य समारब्धं विरुद्धं बुद्धिलाघवात् । जनयिष्यति संक्रोशं राघवस्य विवासनम् ॥ ३०

अहं तावन्महाराजे पितृत्वं नोपलक्षये । भ्राता भर्ता च बन्धुश्च पिता च मम राघवः ॥ ३१

सर्वलोकप्रियं त्यक्त्वा सर्वलोकहिते रतम् । सर्वलोकोऽनुरज्येत कथं चानेन कर्मणा ॥ ३२

सर्वप्रजाभिरामं हि रामं प्रव्राज्य धार्मिकम् । सर्वलोकं विरुध्येमं कथं राजा भविष्यसि ॥ ३३

जानकी तु महाराज निःश्वसन्ती तपस्विनी । भूतोपहतचित्तेव विष्ठिता विस्मिता[१] स्थिता ॥ ३४

अदृष्टपूर्वव्यसना राजपुत्री यशस्विनी । तेन दुःखेन रुदती नैव मां किंचिदब्रवीत् ॥ ३५

उद्वीक्षमाणा भर्तारं मुखेन परिशुष्यता । मुमोच सहसा बाष्पं मां प्रयान्तमुदीक्ष्य सा ॥ ३६

तथैव रामोऽश्रुमुखः कृताञ्जलिः स्थितोऽभवल्लक्ष्मणबाहुपालितः ।
तथैव सीता रुदती तपस्विनी निरीक्षते राजरथं तथैव माम् ॥ ३७

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
अयोध्याकाण्डे रामसंदेशाख्यानं नाम अष्टपञ्चाशः सर्गः

---

## एकोनषष्टितमः सर्गः

### दशरथविलापः

[२]इति ब्रुवन्तं [३]तं सूतं सुमन्त्रं मन्त्रिसत्तमम् । ब्रूहि शेषं पुनरिति राजा वचनमब्रवीत् ॥ १

तस्य तद्वचनं श्रुत्वा सुमन्त्रो बाष्पविक्लवः । कथयामास भूयोऽपि रामसंदेशविस्तरम् ॥ २

जटाः कृत्वा महाराज चीरवल्कलधारिणौ । गङ्गामुत्तीर्य तौ वीरौ प्रयागाभिमुखौ गतौ ॥ ३

अग्रतो लक्ष्मणो याति पालयन् रघुनन्दनम् । अनन्तरं च सीताथ राघवो रघुनन्दनः ॥ ४

तांस्तथा गच्छतो दृष्ट्वा निवृत्तोऽस्म्यवशस्तदा । मम त्वश्वा निवृत्तस्य न प्रावर्तन्त वर्त्मनि ॥ ५

उष्णमश्रु प्रमुञ्चन्तो रामे संप्रस्थिते वनम् । उभाभ्यां राजपुत्राभ्यामथ कृत्वाहमञ्जलिम् ॥ ६

प्रस्थितो रथमास्थाय तद्दुःखमपि धारयन् । गुहेन सार्धं तत्रैव स्थितोऽस्मि दिवसान् बहून् ॥ ७

आशया यदि मां रामः पुनः शब्दापयेदिति । विषये ते महाराज रामव्यसनकर्शिताः ॥ ८

---

1. ईश्वरस्य कृते नरेश्वरोऽहमस्मात् स्वातन्त्र्याभिमानेन यथाकामम् इच्छानुसारेण; न तु धर्मप्रतिबद्धतया इदं कृतम् । तुशब्दो हेत्वर्थः । यस्माद्विवासने कारणं नोपलक्षये इति योजना ।

१. विस्मृता ति.

२. इतः सार्धश्लोकचतुष्टयं नास्ति प्र.

३. सन्देशं च. छ.

अपि वृक्षाः परिम्लानाः सपुष्पाङ्कुरकोरकाः । उपतप्तोदका नद्यः पल्वलानि सरांसि च ॥ ९
परिशुष्कपलाशानि वनान्युपवनानि च । न च सर्पन्ति सत्त्वानि व्याला न प्रचरन्ति च ॥ १०
रामशोकाभिभूतं तन्निष्कूजमभवद्वनम् । लीनपुष्करपत्राश्च नद्यश्च कलुषोदकाः ॥ ११
संतप्तपद्माः पद्मिन्यो लीनमीनविहंगमाः । जलजानि च पुष्पाणि माल्यानि स्थलजानि च ॥ १२
नाद्य भान्त्यल्पगन्धीनि फलानि च यथापुरम् । अत्रोद्यानानि शून्यानि प्रलीनविहगानि च ॥ १३
न चाभिरामानारामान् पश्यामि मनुजर्षभ । प्रविशन्तमयोध्यां मां न कश्चिदभिनन्दति ॥ १४
नरा राममपश्यन्तो निःश्वसन्ति मुहुर्मुहुः । देव राजरथं दृष्ट्वा विना राममिहागतम् ॥ १५
दुःखादश्रुमुखः सर्वो राजमार्गगतो जनः । हर्म्यैर्विमानैः प्रासादैरवेक्ष्य रथमागतम् ॥ १६
हाहाकारकृता नार्यो रामादर्शनकर्शिताः । आयतैर्विमलैर्नेत्रैरश्रुवेगपरिप्लुतैः ॥ १७
अन्योन्यमभिवीक्षन्तेऽव्यक्तमार्ततराः स्त्रियः । नामित्राणां[1] न मित्राणामुदासीनजनस्य च ॥ १८
अहमार्ततया किंचिद्विशेषमुपलक्षये । अप्रहृष्टमनुष्या च दीननागतुरंगमा ॥ १९
आर्तस्वरपरिग्लाना[१] विनिःश्वसितनिःस्वना । निरानन्दा महाराज रामप्रव्राजनातुरा ॥ २०
कौसल्या पुत्रहीनेव अयोध्या प्रतिभाति मा । सूतस्य वचनं श्रुत्वा राजा परमदीनया ॥ २१
बाष्पोपहतया वाचा तं सूतमिदमब्रवीत् । कैकेय्या[2] हि नियुक्तेन पापाभिजनभावया ॥ २२
न मया मन्त्रकुशलैर्वृद्धैः सह समर्थितम् । न सुहृद्भिर्न चामात्यैर्मन्त्रयित्वा न नैगमैः ॥ २३
मयायमर्थः संमोहात् स्त्रीहेतोः सहसा कृतः । भवितव्यतया नूनमिदं वा व्यसनं महत् ॥ २४
कुलस्यास्य विनाशाय प्राप्तं सूत यदृच्छया । सूत यद्यस्ति ते किंचिन्मया तु सुकृतं कृतम् ॥ २५
त्वं प्रापयाशु मां रामं प्राणाः संत्वरयन्ति माम् । यद्यद्यापि[२] ममैवाज्ञा निवर्तयतु राघवम् ॥ २६
न शक्ष्यामि विना रामं मुहूर्तमपि जीवितुम् । अथवापि महाबाहुर्गतो दूरं भविष्यति ॥ २७
मामेव रथमारोप्य शीघ्रं रामाय दर्शय । वृत्तदंष्ट्रो महेष्वासः क्वासौ लक्ष्मणपूर्वजः ॥ २८
यदि जीवामि साध्वेनं पश्येयं सीतया सह । लोहिताक्षं महाबाहुमामुक्तमणिकुण्डलम् ॥ २९
रामं यदि न पश्येयं गमिष्यामि यमक्षयम् । अतो नु किं दुःखतरं योऽहमिक्ष्वाकुनन्दनम् ॥ ३०
इमामवस्थामापन्नो नेह पश्यामि राघवम् । हा राम रामानुज हा हा वैदेहि तपस्विनि ॥ ३१

---

1. अमित्राणामिति । रामविषये सम्भाव्यमानशात्रवाणामित्यर्थः । कैकेयीपक्ष्याणामिति यावत् । एतदुक्तं भवति—भवतु कैकेयीपक्ष्योऽन्यपक्ष्यो वा, न कोऽपीह लक्षयितुं शक्यः तादृशो यो दुःसहया आर्त्या न पीड्यते कैकेयीं कुब्जां च वर्जयित्वेति । नागरेषु एकमुखेन आर्तिं गच्छत्सु अनयोः शात्रवं अनयोर्मैत्रीति विशेषो नोपलक्ष्यत इति तु तिलकः । सर्वथा रामस्य अमित्राप्रसङ्गात् कथमिदमिति नाशङ्क्यम् ।

2. कैकेय्या हीति सार्धः श्लोक एकान्वयः ।

१. -परिम्लानविनि- ति.

२. यदि वाद्यापि ख.

न मां जानीत दुःखेन म्रियमाणमनाथवत् । स तेन राजा दुःखेन भृशमर्पितचेतनः ॥ ३२
अवगाढः सुदुष्पारं शोकसागरमब्रवीत् । रामशोकमहावेगः सीताविरहपारगः ॥ ३३
श्वसितोर्मिमहावर्तो बाष्पफेनजलाविलः । बाहुविक्षेपमीनौघो विक्रन्दितमहास्वनः ॥ ३४
प्रकीर्णकेशशैवालः कैकेयीबडबामुखः । ममाश्रुवेगप्रभवः कुब्जावाक्यमहाग्रहः ॥ ३५
वरवेलो नृशंसाया रामप्रव्राजनायतः । यस्मिन् बत निमग्नोऽहं कौसल्ये राघवं विना ॥ ३६
दुस्तरो जीवता देवि मयायं शोकसागरः ॥ ३७

अशोभनं योऽहमिहाद्य राघवं दिदृक्षमाणो न लभे सलक्ष्मणम् ।
इतीव राजा विलपन् महायशाः पपात तूर्णं शयने स मूर्च्छितः ॥ ३८
इति विलपति पार्थिवे प्रनष्टे करुणतरं द्विगुणं च रामहेतोः ।
वचनमनुनिशम्य तस्य देवी भयमगमत् पुनरेव राममाता ॥ ३९

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
अयोध्याकाण्डे दशरथविलापो नाम एकोनषष्टितमः सर्गः

---

## षष्टितमः सर्गः

### कौसल्यासमाश्वासनम्

ततो भूतोपसृष्टेव वेपमाना पुनः पुनः । धरण्यां गतसत्त्वेव कौसल्या सूतमब्रवीत् ॥ १
नय मां यत्र काकुत्स्थः सीता यत्र च लक्ष्मणः । तान् विना क्षणमप्यत्र जीवितुं नोत्सहे ह्यहम् ॥ २
निवर्तय रथं शीघ्रं दण्डकान्नय मामपि । अथ तान्नानुगच्छामि गमिष्यामि यमक्षयम् ॥ ३
बाष्पवेगोपहतया स वाचा सज्जमानया । इदमाश्वासयन् देवीं सूतः प्राञ्जलिरब्रवीत् ॥ ४
त्यज शोकं च मोहं च संभ्रमं दुःखजं तथा । व्यवधूय च संतापं वने वत्स्यति राघवः ॥ ५
लक्ष्मणश्चापि रामस्य पादौ परिचरन् वने । [1]आराधयति धर्मज्ञः परलोकं जितेन्द्रियः ॥ ६
विजनेऽपि वने सीता वासं प्राप्य गृहेष्विव । विस्रम्भं लभतेऽभीता रामे विन्यस्तमानसा ॥ ७
नास्या दैन्यं कृतं किंचित् सुसूक्ष्ममपि लक्ष्यते । उचितेव प्रवासानां वैदेही प्रतिभाति मे ॥ ८
नगरोपवनं गत्वा यथा स्म रमते पुरा । तथैव रमते सीता निर्जनेषु वनेष्वपि ॥ ९
बालेव रमते सीता बालचन्द्रनिभानना । रामा रामे ह्यधीनात्मा विजनेऽपि वने सती ॥ १०
तद्गतं हृदयं ह्यस्यास्तदधीनं च जीवितम् । अयोध्यापि भवेत्तस्या रामहीना तथा वनम् ॥ ११

---

1. लोक्यत इति लोकः फलम्, परो लोकः परलोकमाराधयति, संपादयति इति तु व्याख्यातारः। उत्कृष्टं फलं यस्मिन् कर्मणीति आराधनाविशेषणमेतत् ।

पथि पृच्छति[1] वैदेही ग्रामांश्च नगराणि च । गतिं दृष्ट्वा नदीनां च पादपान् विविधानपि ॥ १२
रामं वा लक्ष्मणं वापि पृष्ट्वा जानाति जानकी । अयोध्याक्रोशमात्रे तु विहारमिव संश्रिता ॥ १३
इदमेव स्मराम्यस्याः सहसैवोपजल्पितम् । कैकेयीसंश्रितं वाक्यं नेदानीं प्रतिभाति माम् ॥ १४
ध्वंसयित्वा तु तद्वाक्यं प्रमादात् पर्युपस्थितम् । ह्लादनं वचनं सूतो देव्या मधुरमब्रवीत् ॥ १५
अध्वना वातवेगेन संभ्रमेणातपेन च । न विगच्छति वैदेह्याश्चन्द्रांशुसदृशी प्रभा ॥ १६
सदृशं शतपत्रस्य पूर्णचन्द्रोपमप्रभम् । वदनं तद्वदान्याया वैदेह्या न विकम्पते ॥ १७
अलक्तरसरक्ताभावलक्तरसवर्जितौ । अद्यापि चरणौ तस्याः पद्मकोशसमप्रभौ ॥ १८
नूपुरोद्घुष्टहेलेव खेलं गच्छति भामिनी । इदानीमपि वैदेही तद्रागान्न्यस्तभूषणा ॥ १९
गजं वा वीक्ष्य सिंहं वा व्याघ्रं वा वनमाश्रिता । नाहारयति संत्रासं बाहू रामस्य संश्रिता ॥ २०
न शोच्यास्ते न चात्मा ते शोच्यो नापि जनाधिपः । इदं हि चरितं लोके प्रतिष्ठास्यति शाश्वतम् ॥

विधूय शोकं परिहृष्टमानसा महर्षियाते पथि सुव्यवस्थिताः ।
वने रता वन्यफलाशनाः पितुः शुभां प्रतिज्ञां परिपालयन्ति ते ॥ २२
तथापि सूतेन सुयुक्तवादिना निवार्यमाणा सुतशोककर्शिता ।
न चैव देवी विरराम कूजितात् प्रियेति पुत्रेति च राघवेति च ॥ २३

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायां
अयोध्याकाण्डे कौसल्यासमाश्वासनं नाम षष्टितमः सर्गः

---

## एकषष्टितमः सर्गः

### कौसल्योपालम्भः

वनं गते धर्मरते रामे रमयतां वरे । कौसल्या रुदती स्वार्ता[2] भर्तारमिदमब्रवीत् ॥ १
यद्यपि त्रिषु लोकेषु प्रथितं ते महद्यशः । सानुक्रोशो वदान्यश्च प्रियवादी च राघवः ॥ २
कथं नरवरश्रेष्ठ पुत्रौ तौ सह सीतया । दुःखितौ सुखसंवृद्धौ वने दुःखं सहिष्यतः ॥ ३
सा नूनं तरुणी श्यामा सुकुमारी सुखोचिता । कथमुष्णं च शीतं च मैथिली प्रसहिष्यते ॥ ४
भुक्त्वाशनं विशालाक्षी सूपदंशान्वितं शुभम् । वन्यं नैवारमाहारं कथं सीतोपभोक्ष्यते ॥ ५
गीतवादित्रनिर्घोषं श्रुत्वा शुभमनिन्दिता । कथं क्रव्यादसिंहानां शब्दं श्रोष्यत्यशोभनम् ॥ ६
महेन्द्रध्वजसंकाशः क्व नु शेते महाभुजः । भुजं परिघसंकाशमुपधाय महाबलः[3] ॥ ७

---

१. परिपृच्छति क.
२. सार्ता छ.
चार्ता ति.
-वार्ता ति. पाठान्तरम् ।
३. सहानुजः छ.

पद्मवर्णं सुकेशान्तं पद्मनिःश्वासमुत्तमम् । कदा द्रक्ष्यामि रामस्य वदनं पुष्करेक्षणम् ॥ ८

वज्रसारमयं नूनं हृदयं मे न संशयः । अपश्यन्त्या न तं यद्वै [1]फलतीदं सहस्रधा ॥ ९

यत्त्वया करुणं कर्म व्यपोह्य मम बान्धवाः । निरस्ताः परिधावन्ति सुखार्हाः कृपणा वने ॥ १०

यदि पञ्चदशे वर्षे राघवः पुनरेष्यति । जह्याद्राज्यं च कोशं च भरतो नोपलक्ष्यते[१] ॥ ११

भोजयन्ति किल श्राद्धे केचित् स्वानेव बान्धवान् । ततः पश्चात् समीक्षन्ते कृतकार्या द्विजर्षभान् ॥

तत्र ये गुणवन्तश्च विद्वांसश्च द्विजातयः । न पश्चात्तेऽनुमन्यन्ते [२]सुधामपि सुरोपमाः ॥ १३

ब्राह्मणेष्वपि तृप्तेषु भुक्तशेषं[३] द्विजर्षभाः । नाभ्युपैतुमलं प्राज्ञाः [2]शृङ्गच्छेदमिवर्षभाः ॥ १४

एवं कनीयसा भ्रात्रा भुक्तं राज्यं विशां पते । भ्राता ज्येष्ठो वरिष्ठश्च किमर्थं नावमंस्यते ॥ १५

नापरेणाहृतं भक्ष्यं व्याघ्रः खादितुमिच्छति । एवमेव नरव्याघ्रः परलीढं न मंस्यते[४] ॥ १६

हविराज्यं [3]पुरोडशाः कुशा यूपाश्च खादिराः । नैतानि यातयामानि कुर्वन्ति पुनरध्वरे ॥ १७

तथा ह्यात्तमिदं राज्यं हृतसारां सुरामिव । नाभिमन्तुमलं रामो नष्टसोममिवाध्वरम्[५] ॥ १८

नैवंविधमसत्कारं राघवो मर्षयिष्यति । बलवानिव शार्दूलो वालधेरभिमर्शनम् ॥ १९

नैतस्य सहिता लोका भयं कुर्युर्महामृधे । अधर्मं त्विह धर्मात्मा लोकं धर्मेण योजयेत्[4] ॥ २०

नन्वसौ काञ्चनैर्बाणैर्महावीर्यो महाभुजः । युगान्त इव भूतानि सागरानपि निर्दहेत् ॥ २१

स तादृशः सिंहबलो वृषभाक्षो नरर्षभः । स्वयमेव हतः पित्रा जलजेनात्मजो यथा ॥ २२

द्विजातिचरितो धर्मः शास्त्रदृष्टः सनातनः[5] । यदि ते धर्मनिरते त्वया पुत्रे विवासिते ॥ २३

गतिरेका पतिर्नार्या द्वितीया गतिरात्मजः । तृतीया ज्ञातयो राजंश्चतुर्थी नेह विद्यते ॥ २४

तत्र त्वं चैव मे नास्ति[6] रामश्च वनमाश्रितः । न वनं गन्तुमिच्छामि सर्वथा निहता त्वया ॥ २५

हतं त्वया राज्यमिदं सराष्ट्रं हतस्तथात्मा सह मन्त्रिभिश्च ।
हता सपुत्रास्मि हताश्च पौराः सुतश्च भार्या च तव प्रहृष्टौ ॥ २६

---

1. फलति विशीर्यत इत्यर्थः ।

2. शृङ्गच्छेदमिति छिन्नाग्रतृणनामेति केचित् ।

3. यद्यपि 'यातयामान्यन्यानि हवींषि अयातयाममाज्यम्' इति 'मन्त्राः कृष्णाजिनं दर्भाः' इत्यादिस्मृतेश्च आज्यकुशादीनां यातयामतादोषो न स्यादिति प्रतिभाति । तथाप्यन्यार्थमवत्तस्योपयुक्तस्य चाज्यकुशादेर्यातयामता अस्त्येवेति श्रुतिस्मृत्योः पर्यवसानमभिप्रेत्येदमुक्तम् ।

4. अधर्मप्रवृत्तं लोकं यो धर्मबलेन जयेत् एतस्य इत्येकान्वयतयापि अयं श्लोको योजयितुं शक्यः ।

5. ते सत्यभर्भारोः पुत्रविवासनं यदि शास्त्रदृष्टो धर्म इति मतं तदेति योजना ।

6. अस्तीति असीत्यर्थे । त्वं मे गतिर्नासि सपत्नीवशत्वादिति भावः । नासीति पाठः श्लिष्टः ।

१. भरतेनोपभुज्यते गो.
भरतो यदि भोक्ष्यते गो. पाठान्तरम् ।
भरतो नोपभुज्यते छ.

२. स्वधामपि म. पाठान्तरम् ।

३. पश्चाद्भोक्तुम् च. छ.

४. मन्यते च.

५. अस्यानन्तरम्—न चेमां धर्षणां रामः संगच्छेदत्यमर्षणः दारयेन्मन्दरमपि स हि क्रुद्धः शितैः शरैः ।

इमां गिरं दारुणशब्दसंश्रितां निशम्य राजा विमुमोह दुःखितः ।
ततः स शोकं प्रविवेश पार्थिवः स्वदुष्कृतं चापि पुनस्तदा स्मरन् ॥ २७

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायां
अयोध्याकाण्डे कौसल्योपालम्भो नाम एकषष्टितमः सर्गः

---

## द्विषष्टितमः सर्गः

### कौसल्याप्रसादनम्

एवं तु क्रुद्धया राजा राममात्रा सशोकया । श्रावितः परुषं वाक्यं चिन्तयामास दुःखितः ॥ १
चिन्तयित्वा स च नृपो मुमोह व्याकुलेन्द्रियः । अथ दीर्घेण कालेन संज्ञामाप परंतपः ॥ २
स संज्ञामुपलभ्यैव दीर्घमुष्णं च निःश्वसन् । कौसल्यां पार्श्वतो दृष्ट्वा पुनश्चिन्तामुपागमत् ॥ ३
तस्य चिन्तयमानस्य प्रत्यभात् कर्म दुष्कृतम् । यदनेन कृतं पूर्वमज्ञानाच्छब्दवेधिना ॥ ४
विमनास्तेन शोकेन रामशोकेन च प्रभुः । द्वाभ्यामपि महाराजः शोकाभ्यामन्वतप्यत ॥ ५
दह्यमानः स शोकाभ्यां कौसल्यामाह भूपतिः । वेपमानोऽञ्जलिं कृत्वा प्रसादार्थमवाङ्मुखः ॥ ६
प्रसादये त्वां कौसल्ये रचितोऽयं मयाञ्जलिः । वत्सला चानृशंसा च त्वं हि नित्यं परेष्वपि ॥ ७
भर्ता तु खलु नारीणां गुणवान्निर्गुणोऽपि वा । धर्मं विमृशमानानां प्रत्यक्षं देवि दैवतम् ॥ ८
सा त्वं धर्मपरा नित्यं दृष्टलोकपरावरा । नार्हसे विप्रियं वक्तुं दुःखितापि सुदुःखितम् ॥ ९
तद्वाक्यं करुणं राज्ञः श्रुत्वा दीनस्य भाषितम् । कौसल्या व्यसृजद्बाष्पं प्रणालीव नवोदकम् ॥ १०
सा मूर्ध्नि बद्ध्वा रुदती राज्ञः पद्ममिवाञ्जलिम् । संभ्रमादब्रवीत् त्रस्ता त्वरमाणाक्षरं वचः ॥ ११
प्रसीद शिरसा याचे भूमौ निपतितास्मि ते । याचितास्मि हता देव हन्तव्याहं न हि त्वया ॥ १२
नैषा हि सा स्त्री भवति श्लाघनीयेन धीमता । उभयोर्लोकयोर्वीर पत्या या संप्रसाद्यते ॥ १३
जानामि धर्मं धर्मज्ञ त्वां जाने सत्यवादिनम् । पुत्रशोकार्तया तत्तु मया किमपि भाषितम् ॥ १४
शोको नाशयते धैर्यं शोको नाशयते श्रुतम् । शोको नाशयते सर्वं नास्ति शोकसमो रिपुः ॥ १५
शक्यमापतितः सोढुं प्रहारो रिपुहस्ततः । सोढुमापतितः शोकः सुसूक्ष्मोऽपि न शक्यते[1] ॥ १६
वनवासाय रामस्य पञ्चरात्रोऽद्य गण्यते । यः शोकहतहर्षायाः पञ्चवर्षोपमो मम ॥ १७
तं हि चिन्तयमानायाः शोकोऽयं हृदि वर्धते । नदीनामिव वेगेन समुद्रसलिलं महत् ॥ १८

---

त्वां तु नोत्सहते हन्तुं महात्मा पितृगौरवात् । १. अस्यानन्तरम्—धर्मज्ञाः श्रुतिमन्तोऽपि ससोमार्कग्रहगणं नभस्ताराविचित्रितम् ॥ पातयेद्यो छिन्नधर्मार्थसंशयाः । यतयो वीर मुह्यन्ति शोकसंमूढ-दिवं क्रुद्धः स त्वां न व्यतिवर्तते । प्रक्षोभयेद्धारयेद्वा चेतसः ॥—इति च, छ. झ, ञ, मही शैलशताचिताम् ॥—इति च. झ, ञ,

एवं हि कथयन्त्यास्तु कौसल्यायाः शुभं वचः । मन्दरश्मिरभूत् सूर्यो रजनी चाभ्यवर्तत ॥ १९
अथ प्रसादितो वाक्यैर्देव्या कौसल्यया नृपः । शोकेन च समाक्रान्तो निद्राया वशमेयिवान् ॥२०

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
अयोध्याकाण्डे कौसल्याप्रसादनं नाम द्विषष्टितमः सर्गः

## त्रिषष्टितमः सर्गः

### ऋषिकुमारवधाख्यानम्

प्रतिबुद्धो मुहूर्तेन शोकोपहतचेतनः । अथ राजा दशरथश्चिन्तामभ्यवपद्यत ॥ १
रामलक्ष्मणयोश्चैव विवासाद्वासवोपमम् । आविवेशोपसर्गस्तं तमः सूर्यमिवासुरम् ॥ २
सभार्ये निर्गते रामे कौसल्यां कोसलेश्वरः । विवक्षुरसितापाङ्गीं स्मृत्वा दुष्कृतमात्मनः ॥ ३
स राजा रजनीं षष्ठीं रामे प्रव्राजिते वनम् । अर्धरात्रे दशरथः संस्मरन्[1] दुष्कृतं कृतम् ॥ ४
स राजा पुत्रशोकार्तः स्मृत्वा दुष्कृतमात्मनः । कौसल्यां पुत्रशोकार्तामिदं वचनमब्रवीत् ॥ ५
यदाचरति कल्याणि शुभं वा यदि वाशुभम् । तदेव लभते भद्रे कर्ता कर्मजमात्मनः ॥ ६
गुरुलाघवमर्थानामारम्भे कर्मणां फलम् । दोषं वा यो न जानाति स बाल इति ह्युच्यते ॥ ७
कश्चिदाम्रवणं छित्त्वा पलाशांश्च निषिञ्चति । पुष्पं दृष्ट्वा फले गृध्नुः स शोचति फलागमे ॥ ८
अविज्ञाय फलं यो हि कर्म त्वेवानुधावति । स शोचेत् फलवेलायां यथा किंशुकसेचकः ॥ ९
सोऽहमाम्रवणं छित्त्वा पलाशांश्च न्यषेचयम् । रामं फलागमे त्यक्त्वा पश्चाच्छोचामि दुर्मतिः॥१०
लब्धशब्देन कौसल्ये कुमारेण धनुष्मता । कुमारः शब्दवेधीति मया पापमिदं कृतम् ॥ ११
तदिदं मेऽनुसंप्राप्तं देवि दुःखं स्वयं कृतम् । संमोहादिव बालेन[2] यदा स्याद्भक्षितं विषम् ॥ १२
यथान्यः पुरुषः कश्चित् पलाशैर्मोहितो भवेत् । एवं मयाप्यविज्ञातं शब्दवेध्यमयं[3] फलम् ॥ १३
देव्यनूढा त्वमभवो युवराजो भवाम्यहम् । ततः प्रावृडनुप्राप्ता मम[4] कामविवर्धनी ॥ १४
[5]उपास्य हि रसान् भौमांस्तप्त्वा च जगदंशुभिः । परेताचरितां भीमां रविराविशते दिशम् ॥ १५
उष्णमन्तर्दधे सद्यः स्निग्धा ददृशिरे घनाः । ततो जहृषिरे सर्वे भेकसारङ्गबर्हिणः ॥ १६
क्लिन्नपक्षोत्तराः स्नाताः कृच्छ्रादिव पतत्रिणः । वृष्टिवातावधूताग्रान् पादपानभिपेदिरे ॥ १७
पतितेनाम्भसा छन्नः पतमानेन चासकृत् । आबभौ मत्तसारङ्गस्तोयराशिरिवाचलः ॥ १८
[6]पाण्डरारुणवर्णानि स्रोतांसि विमलान्यपि । सुस्रुवुर्गिरिधातुभ्यः सभस्मानि भुजंगवत् ॥ १९
तस्मिन्नतिसुखे काले धनुष्मानिषुमान्[7] रथी । व्यायामकृतसंकल्पः सरयूमन्वगां नदीम् ॥ २०

---

१. साऽस्मरत् पुना.
२. बालेन- प्र.
३. शब्दवेध्यमिदम् ति. शब्दवेधमयम् म. पाठान्तरम्
४. मदकामविवर्धनी च.
५. अपास्य प्र.
६. श्लोकस्यास्य स्थाने — आकुलारुणतोयानि स्रोतांसि विमलान्यपि । उन्मार्गजलवाहीनि बभूवुर्जलदागमे ॥ इति पाठः झ. म.
७. कवची प्र.

निपाने महिषं रात्रौ गजं वाभ्यागतं नदीम् । वन्यं[1] वा श्वापदं कंचिज्जिघांसुरजितेन्द्रियः[2] ॥ २१
अथान्धकारे त्वश्रौषं जले कुम्भस्य पूर्यतः । अचक्षुर्विषये घोषं वारणस्येव नर्दतः ॥ २२
ततोऽहं शरमुद्धृत्य दीप्तमाशीविषोपमम् । शब्दं प्रति गजप्रेप्सुरभिलक्ष्य त्वपातयम् ॥ २३
अमुञ्चं निशितं बाणमहमाशीविषोपमम् । तत्र वागुषसि व्यक्ता प्रादुरासीद्वनौकसः ॥ २४
हा हेति पततस्तोये बाणाभिहतमर्मणः । तस्मिन्निपतिते बाणे वागभूत्तत्र मानुषी ॥ २५
कथमस्मद्विधे शस्त्रं निपतेत्तु तपस्विनि । प्रविविक्तां नदीं रात्रावुदाहारोऽहमागतः ॥ २६
इषुणाभिहतः केन कस्य वा किं कृतं मया । ऋषेर्हि न्यस्तदण्डस्य वने वन्येन जीवतः ॥ २७
कथं नु शस्त्रेण वधो मद्विधस्य विधीयते । जटाभारधरस्येव वल्कलाजिनवाससः ॥ २८
को वधेन ममार्थी स्यात्किं वास्यापकृतं मया । एवं निष्फलमारब्धं केवलानर्थसंहितम् ॥ २९
न कश्चित्साधु मन्येत यथैव गुरुतल्पगः । नाहं तथानुशोचामि जीवितक्षयमात्मनः ॥ ३०
मातरं पितरं चोभावनुशोचामि मद्वधे । तदेतन्मिथुनं वृद्धं चिरकालभृतं मया ॥ ३१
मयि पञ्चत्वमापन्ने कां वृत्तिं वर्तयिष्यति । वृद्धौ च मातापितरावहं चैकेषुणा हतः ॥ ३२
केन स्म निहताः सर्वे सुबालेनाकृतात्मना । तां गिरं करुणां श्रुत्वा मम धर्मानुकाङ्क्षिणः ॥ ३३
कराभ्यां सशरं चापं व्यथितस्यापतद्भुवि । कस्याहं करुणं श्रुत्वा निशि लालपतो बहु ॥ ३४
संभ्रान्तः शोकवेगेन भृशमासं विचेतनः । तं देशमहमागम्य दीनसत्त्वः सुदुर्मनाः ॥ ३५
अपश्यमिषुणा तीरे सरय्वास्तापसं हतम् । अवकीर्णजटाभारं प्रविद्धकलशोदकम् ॥ ३६
पांसुशोणितदिग्धाङ्गं शयानं शरपीडितम् । स मामुद्वीक्ष्य नेत्राभ्यां त्रस्तमस्वस्थचेतसम् ॥ ३७
इत्युवाच वचः क्रूरं दिधक्षन्निव तेजसा[3] । किं तवापकृतं राजन् वने निवसता मया ॥ ३८
जिहीर्षुरम्भो गुर्वर्थं यदहं ताडितस्त्वया । एकेन खलु बाणेन मर्मण्यभिहते मयि ॥ ३९
द्वावन्धौ निहतौ वृद्धौ माता जनयिता च मे । तौ कथं दुर्बलावन्धौ मत्प्रतीक्षौ पिपासितौ ॥ ४०
चिरमाशाकृतां तृष्णां कष्टां संधारयिष्यतः । न नूनं तपसो वास्ति फलयोगः श्रुतस्य वा ॥ ४१
पिता यन्मां न जानाति शयानं पतितं भुवि । जानन्नपि च किं कुर्यादशक्तिरपरिक्रमः ॥ ४२
भिद्यमानमिवाशक्तस्त्रातुमन्यो नगो नगम् । पितुस्त्वमेव मे गत्वा शीघ्रमाचक्ष्व राघव ॥ ४३
न त्वामनुदहेत्क्रुद्धो वनं वह्निरिवैधितः । इयमेकपदी राजन् यतो मे पितुराश्रमः ॥ ४४
तं प्रसादय गत्वा त्वं न त्वां स कुपितः शपेत् । विशल्यं कुरु मां राजन् मर्म मे निशितः शरः ॥
रुजद्धि मृदु सोत्सेधं तीरमम्बुरयो यथा । सशल्यः क्लिश्यते प्राणैर्विशल्यो विनशिष्यति ॥ ४६
इति मामविशच्चिन्ता तस्य शल्यापकर्षणे । दुःखितस्य च दीनस्य मम शोकातुरस्य च ॥ ४७

---

१. एतदनन्तरं—तस्मिंस्तत्राहमेकान्ते रात्रौ इति सार्धः श्लोकः अधिकः झ. ञ.
विवृतकार्मुकः । तत्राहं संवृतं वन्यं हतवांस्तीरमागतम् ॥ २. अन्यम् च. छ.
अन्यं चाऽपि मृगं हिंस्रं शब्दं श्रुत्वाऽभ्युपागतम् । ३. चक्षुषा ख.

लक्षयामास हृदये चिन्तां मुनिसुतस्तदा । ताम्यमानं स मां कृच्छ्रादुवाच परमार्तवत्[1] ॥ ४८
सीदमानो विवृत्ताङ्गो वेष्टमानो गतः क्षयम् । संस्तभ्य शोकं धैर्येण स्थिरचित्तो भवाम्यहम् ॥ ४९
ब्रह्महत्याकृतं पापं हृदयादपनीयताम् । न द्विजातिरहं राजन् मा भूत्ते मनसो व्यथा ॥ ५०
शूद्रायामस्मि वैश्येन जातो जनपदाधिप । इत्येवं वदतः कृच्छ्राद्बाणाभिहतमर्मणः ॥ ५१
विघूर्णतो विचेष्टस्य वेपमानस्य भूतले । तस्य त्वाताम्यमानस्य तं बाणमहमुद्धरम् ॥ ५२
स मामुद्वीक्ष्य संत्रस्तो जहौ प्राणांस्तपोधनः ॥

जलार्द्रगात्रं तु विलप्य कृच्छ्रान्मर्मव्रणं संततमुच्छ्वसन्तम् ।
ततः सरय्वां तमहं शयानं समीक्ष्य भद्रेऽस्मि भृशं विषण्णः ॥ ५३

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम
अयोध्याकाण्डे ऋषिकुमारवधाख्यानं नाम त्रिषष्टितमः सर्गः

---

## चतुःषष्टितमः सर्गः

### दशरथदिष्टान्तः

वधमप्रतिरूपं तु महर्षेस्तस्य राघवः । विलपन्नेव धर्मात्मा कौसल्यां पुनरब्रवीत् ॥ १
तदज्ञानान्महत् पापं कृत्वा संकुलितेन्द्रियः । एकस्त्वचिन्तयं बुद्ध्या कथं नु सुकृतं भवेत् ॥ २
ततस्तं घटमादाय पूर्णं परमवारिणा । आश्रमं तमहं प्राप्य यथाख्यातपथं गतः ॥ ३
तत्राहं दुर्बलावन्धौ वृद्धावपरिणायकौ । अपश्यं तस्य पितरौ लूनपक्षाविव द्विजौ ॥ ४
तन्निमित्ताभिरासीनौ कथाभिरपरिक्रमौ । तामाशां मत्कृते हीनावुदासीनावनाथवत् ॥ ५
शोकोपहतचित्तश्च भयसंत्रस्तचेतनः । तच्चाश्रमपदं गत्वा भूयः शोकमहं गतः ॥ ६
पदशब्दं तु मे श्रुत्वा मुनिर्वाक्यमभाषत । किं चिरायसि मे पुत्र पानीयं क्षिप्रमानय ॥ ७
यन्निमित्तमिदं[1] तात सलिले क्रीडितं त्वया । उत्कण्ठिता ते मातेयं प्रविश क्षिप्रमाश्रमम् ॥ ८
यद्व्यलीकं कृतं पुत्र मात्रा ते यदि वा मया । न तन्मनसि कर्तव्यं त्वया तात तपस्विना ॥ ९
गतिस्त्वमगतीनां च चक्षुस्त्वं हीनचक्षुषाम् । समासक्तास्त्वयि प्राणाः किं त्वं नो नाभिभाषसे ॥ १०
मुनिमव्यक्तया वाचा तमहं सज्जमानया । हीनव्यञ्जनया प्रेक्ष्य भीतभीत इवाब्रवम् ॥ ११
मनसः कर्म चेष्टाभिरभिसंस्तभ्य वाग्बलम् । आचचक्षे त्वहं तस्मै पुत्रव्यसनजं भयम् ॥ १२
क्षत्रियोऽहं दशरथो नाहं पुत्रो महात्मनः । सज्जनावमतं दुःखमिदं प्राप्तं स्वकर्मजम् ॥ १३
भगवंश्चापहस्तोऽहं सरयूतीरमागतः । जिघांसुः श्वापदं कंचिन्निपाने चागतं गजम् ॥ १४
तत्र श्रुतो मया शब्दो जले कुम्भस्य पूर्यतः । द्विपोऽयमिति मत्वायं बाणेनाभिहतो मया ॥ १५

---

1. यन्निमित्तं येन निमित्तेनेत्यर्थः ।

१, परमार्थवत् ति.

गत्वा नद्यास्ततस्तीरमपश्यमिषुणा हृदि । विनिर्भिन्नं गतप्राणं शयानं भुवि तापसम्[१] ॥ १६

ततस्तस्यैव वचनादुपेत्य परितप्यतः । स मया सहसा बाण उद्धृतो मर्मणस्तदा ॥ १७

स चोद्धृतेन बाणेन सहसा स्वर्गमास्थितः । भवन्तौ पितरौ शोचन्नन्धाविति विलप्य च[२] ॥ १८

अज्ञानाद्भवतः पुत्रः सहसाभिहतो मया । शेषमेवं गते यत् स्यात्तत् प्रसीदतु[1] मे मुनिः ॥ १९

स तच्छ्रुत्वा वचः क्रूरं मयोक्तमघशंसिना । नाशकत्तीव्रमायासमकर्तुं[३] भगवान् मुनिः ॥ २०

स बाष्पपूर्णनयनो निःश्वसञ्शोककर्शितः । मामुवाच महातेजाः कृताञ्जलिमुपस्थितम् ॥ २१

यद्येतदशुभं कर्म न त्वं मे कथयेः स्वयम् । फलेन्मूर्धा स्म ते राजन् सद्यः शतसहस्रधा ॥ २२

क्षत्रियेण[2] वधो राजन् वानप्रस्थे विशेषतः । ज्ञानपूर्वं कृतः स्थानाच्च्यावयेदपि वज्रिणम् ॥ २३

सप्तधा तु फलेन्मूर्धा मुनौ तपसि तिष्ठति । ज्ञानाद्विसृजतः शस्त्रं तादृशे ब्रह्मवादिनि ॥ २४

अज्ञानाद्धि कृतं यस्मादिदं तेनैव जीवसि । अपि ह्यद्य कुलं न स्यादिक्ष्वाकूणां कुतो भवान् ॥ २५

नय नौ नृप तं देशमिति मां चाभ्यभाषत । अद्य तं द्रष्टुमिच्छावः पुत्रं पश्चिमदर्शनम्[3] ॥ २६

रुधिरेणानुलिप्ताङ्गं प्रकीर्णाजिनवाससम् । शयानं भुवि निःसंज्ञं धर्मराजवशं गतम् ॥ २७

अथाहमेकस्तं देशं नीत्वा तौ भृशदुःखितौ । अस्पर्शयमहं पुत्रं तं मुनिं सह भार्यया ॥ २८

तौ पुत्रमात्मनः स्पृष्ट्वा तमासाद्य तपस्विनौ । निपेततुः शरीरेऽस्य पिता चास्येदमब्रवीत् ॥ २९

नाभिवादयसे माद्य न च मामभिभाषसे । किं नु शेषेऽद्य भूमौ त्वं वत्स किं कुपितो ह्यसि ॥ ३०

न त्वहं तेऽप्रियः पुत्र मातरं पश्य धार्मिक । किं नु नालिङ्गसे पुत्र सुकुमारं वचो वद ॥ ३१

कस्य वापररात्रेऽहं श्रोष्यामि हृदयंगमम् । अधीयानस्य मधुरं शास्त्रं वान्यद्विशेषतः ॥ ३२

को मां सन्ध्यामुपास्यैव स्नात्वा हुतहुताशनः । श्लाघयिष्यत्युपासीनः पुत्रशोकभयार्दितम् ॥ ३३

कन्दमूलफलं हृत्वा को मां प्रियमिवातिथिम् । भोजयिष्यत्यकर्मण्यमप्रग्रहमनायकम् ॥ ३४

इमामन्धां च वृद्धां च मातरं ते तपस्विनीम् । कथं वत्स भरिष्यामि कृपणां पुत्रगर्धिनीम् ॥ ३५

---

1. प्रसीदत्विवति आज्ञापयत्वित्यर्थे प्रयोगबाहुल्यात् सकर्मकम् । तदिति तत्र विषये इति वा व्याख्येयम् ।

2. क्षत्रियेण क्रियमाणो वधः तं हन्तारं क्षत्रियं वज्रिणमपि सन्तं स्थानात् प्रच्यावयेदित्यर्थः । तदनेन क्षत्राधिष्ठानतया इन्द्रस्यापि क्षत्रियत्वमुक्तम् —"तमिन्द्रो देवतान्वसृज्यत राजन्यो मनुष्याणाम्" इति श्रुतेः । भवतु कस्यचित् स्थानम् इन्द्रस्येव सुप्रतिष्ठितम् , तस्मादपि प्रच्यावयेत् इत्यर्थे "स्थानाच्च्यावयेदपि वज्रिणम्" इत्यस्य बहुलप्रयोगवशान्निरूढा लक्षणा वा ।

3. यद्यप्यन्धयोरनयोः पश्चिमं पुत्रदर्शनमात्रमपि न संभवति । तथापि पुत्रविपत्तौ पुत्रिणामीदृश एव शोकप्रक्रम इति न विरोधः । तावत्किल मुनिः शोकभूम्नाक्रान्तो येनासौ आन्ध्यमप्यात्मनो न स्मरतीति ध्वन्यते ।

१. अस्यानन्तरम्—भगवञ्शब्दमालक्ष्य मया गजजिघांसुना । विसृष्टोऽम्भसि नाराचस्तेन तेऽभिहतः सुतः ॥—इति च. छ. झ. ञ.

२. अस्य स्थाने—भगवन्तावुभौ शोचन् वृद्धाविति विलप्य च— इति ग.

३. आयासं स कर्तुम् ति. ।

तिष्ठ मा मा गमः पुत्र यमस्य सदनं प्रति । श्वो मया सह गन्तासि जनन्या च समेधितः ॥ ३६
उभावपि च शोकार्तावनाथौ कृपणौ वने । क्षिप्रमेव गमिष्यावस्त्वया सह यमक्षयम् ॥ ३७
ततो वैवस्वतं दृष्ट्वा तं प्रवक्ष्यामि भारतीम् । क्षमतां धर्मराजो मे बिभृयात् पितरावयम् ॥ ३८
दातुमर्हति धर्मात्मा लोकपालो महायशाः । ईदृशस्य ममाक्षय्यामेकामभयदक्षिणाम् ॥ ३९
अपापोऽसि यदा पुत्र निहतः पापकर्मणा । तेन सत्येन गच्छाशु ये लोकाः शस्त्रयोधिनाम् ॥ ४०
यां हि शूरा गतिं यान्ति संग्रामेष्वनिवर्तिनः । हतास्त्वभिमुखाः पुत्र गतिं तां परमां व्रज ॥ ४१
यां गतिं सगरः शैब्यो दिलीपो जनमेजयः । नहुषो धुन्धुमारश्च प्राप्तास्तां गच्छ पुत्रक ॥ ४२
या गतिः सर्वसाधूनां स्वाध्यायात्तपसश्च या । या भूमिदस्याहिताग्नेरेकपत्नीव्रतस्य च ॥ ४३
गोसहस्रप्रदातॄणां गुरुसेवाभृतामपि । देहन्यासकृतां या च तां गतिं गच्छ पुत्रक ॥ ४४
न हि त्वस्मत्कुले जातो गच्छत्यकुशलां गतिम् । स तु यास्यति येन त्वं निहतो मम बान्धवः ॥ ४५
एवं स कृपणं तत्र पर्यदेवयतासकृत् । ततोऽस्मै कर्तुमुदकं प्रवृत्तः सह भार्यया ॥ ४६
स तु दिव्येन रूपेण मुनिपुत्रः स्वकर्मभिः । स्वर्गमध्यारुहत् क्षिप्रं शक्रेण सह धर्मवित् ॥ ४७
आबभाषे च तौ वृद्धौ शक्रेण सह तापसः । आश्वास्य च मुहूर्तं तु पितरौ वाक्यमब्रवीत् ॥ ४८
स्थानमस्मि महत् प्राप्तो भवतोः परिचारणात् । भवन्तावपि च क्षिप्रं मम मूलमुपैष्यथः ॥ ४९
एवमुक्त्वा तु दिव्येन विमानेन वपुष्मता । आरुरोह दिवं क्षिप्रं मुनिपुत्रो जितेन्द्रियः ॥ ५०
स कृत्वा तूदकं तूर्णं तापसः सह भार्यया । मामुवाच महातेजाः कृताञ्जलिमुपस्थितम् ॥ ५१
अद्यैव जहि मां राजन् मरणे नास्ति मे व्यथा । यच्छरेणैकपुत्रं मां त्वमकार्षीरपुत्रकम् ॥ ५२
त्वया तु यदविज्ञानान्निहतो मे सुतः शुचिः । तेन त्वामभिशप्स्यामि सुदुःखमतिदारुणम् ॥ ५३
पुत्रव्यसनजं दुःखं यदेतन्मम साम्प्रतम् । एवं त्वं पुत्रशोकेन राजन् कालं गमिष्यसि ॥ ५४
अज्ञानात्तु हतो यस्मात् क्षत्रियेण त्वया मुनिः । तस्मात्त्वां नाविशत्याशु ब्रह्महत्या[1] नराधिप ॥ ५५
त्वामप्येतादृशो भावः क्षिप्रमेव गमिष्यति । जीवितान्तकरो घोरो दातारमिव दक्षिणा[2] ॥ ५६
एवं शापं मयि न्यस्य विलप्य करुणं बहु । चितामारोप्य देहं तन्मिथुनं स्वर्गमभ्ययात् ॥ ५७
तदेतच्चिन्तयानेन स्मृतं पापं मया स्वयम् । तदा बाल्यात् कृतं देवि शब्दवेध्यनुकर्षिणा ॥ ५८
तस्यायं कर्मणो देवि विपाकः समुपस्थितः । अपथ्यैः सह संभुक्तो व्याधिरन्नरसो[१] यथा ॥ ५९
तस्मान्मामागतं भद्रे तस्योदारस्य तद्वचः । यदहं पुत्रशोकेन संत्यक्ष्याम्यद्य जीवितम् ॥ ६०
चक्षुर्भ्यां त्वां न पश्यामि कौसल्ये साधु मां स्पृश । इत्युक्त्वा स रुदंस्त्रस्तो भार्यामाह च भूमिपः ॥

---

1. ब्रह्महत्येति तत्तुल्यं पातकमिति व्याचक्षते । तेन "न द्विजातिरहम्" इति पूर्वोक्तमुनिपुत्रवचनेन न विरोधः ।

2. दक्षिणेति तद्दाननिमित्तं फलम् । दक्षिणामिति तिलकपाठः ।

१. संभुक्ते व्याधिरन्नरसे क, छ.

यमक्षयमनुप्राप्ता[1] द्रक्ष्यन्ति न हि मानवाः । यदि मां संस्पृशेद्रामः सकृदद्य लभेत वा[2] ॥ ६२
धनं वा यौवराज्यं वा जीवेयमिति मे मतिः[3] । एतन्मे[4] सदृशं देवि यन्मया राघवे कृतम् ॥ ६३
सदृशं तत्तु तस्यैव यदनेन कृतं मयि । दुर्वृत्तमपि कः पुत्रं त्यजेद्भुवि विचक्षणः ॥ ६४
कश्च प्रव्राज्यमानो वा नासूयेत् पितरं सुतः । चक्षुषा त्वां न पश्यामि स्मृतिर्मम विलुप्यते ॥ ६५
दूता वैवस्वतस्यैते कौसल्ये त्वरयन्ति माम् । अतस्तु किं दुःखतरं यदहं जीवितक्षये ॥ ६६
न हि पश्यामि धर्मज्ञं रामं सत्यपराक्रमम् । तस्यादर्शनजः शोकः सुतस्याप्रतिकर्मणः ॥ ६७
उच्छोषयति मे प्राणान् वारि स्तोकमिवातपः । न ते मनुष्या देवास्ते ये चारुशुभकुण्डलम् ॥ ६८
मुखं द्रक्ष्यन्ति रामस्य वर्षे पञ्चदशे पुनः । पद्मपत्रेक्षणं सुभ्रु सुदंष्ट्रं चारुनासिकम् ॥ ६९
धन्या द्रक्ष्यन्ति रामस्य ताराधिपनिभं मुखम् । सदृशं शारदस्येन्दोः फुल्लस्य कमलस्य च ॥ ७०
सुगन्धि मम रामस्य[5] धन्या द्रक्ष्यन्ति तन्मुखम् । निवृत्तवनवासं तमयोध्यां पुनरागतम् ॥ ७१
द्रक्ष्यन्ति सुखिनो रामं शुक्रं मार्गगतं यथा । कौसल्ये चित्तमोहेन हृदयं सीदतीव मे ॥ ७२
वेदये न च[6] संयुक्ताञ्शब्दस्पर्शरसानहम् । चित्तनाशाद्विपद्यन्ते सर्वाण्येवेन्द्रियाणि मे ॥ ७३
क्षीणस्नेहस्य दीपस्य संसक्ता रश्मयो यथा । अयमात्मभवः शोको मामनाथमचेतसम् ॥ ७४
संसादयति वेगेन यथा कूलं नदीरयः । हा राघव महाबाहो हा ममायासनाशन ॥ ७५
हा पितृप्रिय मे नाथ हाद्य क्वासि गतः सुत । हा कौसल्ये विनश्यामि हा सुमित्रे तपस्विनि ॥ ७६
हा नृशंसे ममामित्रे कैकेयि कुलपांसनि । इति रामस्य मातुश्च सुमित्रायाश्च संनिधौ ॥ ७७
राजा दशरथः शोचञ्जीवितान्तमुपागमत् ॥

तथा तु दीनं कथयन्नराधिपः प्रियस्य पुत्रस्य विवासनातुरः ।
गतेऽर्धरात्रे भृशदुःखपीडितस्तदा जहौ प्राणमुदारदर्शनः ॥ ७८

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
अयोध्याकाण्डे दशरथदिष्टान्तो नाम चतुःषष्टितमः सर्गः

---

## पञ्चषष्टितमः सर्गः

### अन्तःपुराक्रन्दः

अथ रात्र्यां व्यतीतायां प्रातरेवापरेऽहनि । बन्दिनः पर्युपातिष्ठंस्तत्पार्थिवनिवेशनम् ॥ १
सूताः परमसंस्कारा मागधाश्चोत्तमश्रुताः । गायनाः स्तुतिशीलाश्च निगदन्तः पृथक् पृथक् ॥ २

---

१. अनुप्राप्तम् च. छ.
२. सकृदन्वारभेत वा ति.
इदं पद्यं पूर्वोत्तरार्धव्यत्ययेन 'चक्षुषा त्वाम्' इत्यतः पूर्वं गोविन्दराजः पठति ।
३. इदमर्धम् च. नास्ति ।
४. न तन्मे च. छ.
५. नाथस्य च. छ.
६. येन वेद न. छ.

राजानं स्तुवतां तेषामुदात्ताभिहिताशिषाम् । प्रासादाभोगविस्तीर्णः स्तुतिशब्दो व्यजृम्भत ॥ ३
ततस्तु स्तुवतां तेषां सूतानां पाणिवादकाः । अपदानान्युदाहृत्य पाणिवादानवादयन् ॥ ४
तेन शब्देन विहगाः प्रतिबुद्धा विसस्वनुः । शाखास्थाः पञ्जरस्थाश्च ये राजकुलगोचराः ॥ ५
व्याहृताः पुण्यशब्दाश्च वीणानां चापि निःस्वनाः । आशीर्गेयं च गाथानां पूरयामास वेश्म तत् ॥६
ततः शुचिसमाचाराः पर्युपस्थानकोविदाः । स्त्रीवर्षवरभूयिष्ठा उपतस्थुर्यथापुरम् ॥ ७
हरिचन्दनसंपृक्तमुदकं काञ्चनैर्घटैः । आनिन्युः स्नानशिक्षाज्ञा यथाकालं यथाविधि ॥ ८
मङ्गलालम्भनीयानि प्राशनीयान्युपस्करान् । उपानिन्युस्तथाप्यन्याः कुमारीबहुलाः स्त्रियः ॥ ९
सर्वलक्षणसंपन्नं सर्वं विधिवदर्चितम् । सर्वं सुगुणलक्ष्मीवत्तद्बभूवाभिहारिकम् ॥ १०
तत्तु सूर्योदयं यावत् सर्वं परिसमुत्सुकम् । तस्थावनुपसंप्राप्तं किंस्विदित्युपशङ्कितम् ॥ ११
अथ याः कोसलेन्द्रस्य शयनं प्रत्यनन्तराः । ताः स्त्रियस्तु समागम्य भर्तारं प्रत्यबोधयन् ॥ १२
तथाप्युचितवृत्तास्ता विनयेन नयेन च । न ह्यस्य शयनं स्पृष्ट्वा किंचिदप्युपलेभिरे ॥ १३
ताः स्त्रियः स्वप्नशीलज्ञाश्चेष्टासंचलनादिषु । ता वेपथुपरीताश्च राज्ञः प्राणेषु शङ्किताः ॥ १४
प्रतिस्रोतस्तृणाग्राणां सदृशं संचकम्पिरे[1] । अथ संदेहमानानां[2] स्त्रीणां दृष्ट्वा च पार्थिवम् ॥ १५
यत्तदाशङ्कितं पापं तस्य जज्ञे विनिश्चयः । कौसल्या च सुमित्रा च पुत्रशोकपराजिते ॥ १६
प्रसुप्ते न प्रबुध्येते यथाकालसमन्विते । निष्प्रभा च विवर्णा च सन्ना शोकेन संनता ॥ १७
न व्यराजत कौसल्या तारेव तिमिरावृता । कौसल्यानन्तरं राज्ञः सुमित्रा तदनन्तरम् ॥ १८
न स्म विभ्राजते देवी शोकाश्रुलुलितानना । ते च दृष्ट्वा तथा सुप्ते उभे देव्यौ च तं नृपम् ॥ १९
सुप्तमेवोद्गतप्राणमन्तःपुरमदृश्यत । ततः प्रचुक्रुशुर्दीनाः सस्वरं ता वराङ्गनाः ॥ २०
करेणव इवारण्ये स्थानप्रच्युतयूथपाः । तासामाक्रन्दशब्देन सहसोद्गतचेतने ॥ २१
कौसल्या च सुमित्रा च त्यक्तनिद्रे बभूवतुः । कौसल्या च सुमित्रा च दृष्ट्वा स्पृष्ट्वा च पार्थिवम् ॥२२
हा नाथेति परिक्रुश्य पेततुर्धरणीतले । सा कोसलेन्द्रदुहिता वेष्टमाना महीतले ॥ २३
न बभ्राज रजोध्वस्ता तारेव गगनाच्च्युता । नृपे शान्तगुणे जाते कौसल्यां पतितां भुवि ॥ २४
अपश्यंस्ताः स्त्रियः सर्वा हतां नागवधूमिव । ततः सर्वा नरेन्द्रस्य कैकेयीप्रमुखाः स्त्रियः ॥ २५
रुदन्त्यः शोकसंतप्ता निपेतुर्गतचेतनाः[3] । ताभिः स बलवान्नादः क्रोशन्तीभिरनुद्रुतः ॥ २६
येन स्फीरीकृतं[4] भूयस्तद्गृहं समनादयत् । तत्परित्रस्तसंभ्रान्तं पर्युत्सुकजनाकुलम् ॥ २७
सर्वतस्तुमुलाक्रन्दं परितापार्तबान्धवम् । सद्यो निपतितानन्दं दीनविक्लबदर्शनम् ॥ २८
बभूव नरदेवस्य सद्म दिष्टान्तमीयुषः ॥

---

१. संचकाशिरे च.
२. संवेपमानानां च.
३. धरणीतले छ.
४. स्फीतीकृतः ति,

अतीतमाज्ञाय तु पार्थिवर्षभं यशस्विनं संपरिवार्य पत्नयः ।
भृशं रुदन्त्यः करुणं सुदुःखिताः प्रगृह्य बाहू व्यलपन्ननाथवत् ॥ २९

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
अयोध्याकाण्डे अन्तःपुराक्रन्दो नाम पञ्चषष्टितमः सर्गः

---

## षट्षष्टितमः सर्गः

### तैलद्रोण्यधिशयनम्

तमग्निमिव संशान्तमम्बुहीनमिवार्णवम् । हतप्रभमिवादित्यं स्वर्गस्थं प्रेक्ष्य पार्थिवम् ॥ १
कौसल्या बाष्पपूर्णाक्षी विविधं शोककर्शिता । उपगृह्य शिरो राज्ञः कैकेयीं प्रत्यभाषत ॥ २
सकामा भव कैकेयि भुङ्क्ष्व राज्यमकण्टकम् । त्यक्त्वा राजानमेकाग्रा नृशंसे दुष्टचारिणि ॥ ३
विहाय मां गतो रामो भर्ता च स्वर्गतो मम । विपथे सार्थहीनेव नाहं जीवितुमुत्सहे ॥ ४
भर्तारं तं परित्यज्य का स्त्री दैवतमात्मनः । इच्छेज्जीवितुमन्यत्र कैकेय्यास्त्यक्तधर्मणः ॥ ५
न लुब्धो बुध्यते दोषान् किंपाकमिव भक्षयन् । कुब्जानिमित्तं कैकेय्या राघवाणां कुलं हतम् ॥ ६
अनियोगे नियुक्तेन राज्ञा रामं विवासितम् । सभार्यं जनकः श्रुत्वा परितप्स्यत्यहं यथा ॥ ७
स मामनाथां विधवां नाद्य जानाति धार्मिकः । रामः कमलपत्राक्षो [1]जीवनाशमितो गतः ॥ ८
विदेहराजस्य सुता तथा सीता तपस्विनी । दुःखस्यानुचिता दुःखं वने पर्युद्विजिष्यते ॥ ९
नदतां भीमघोषाणां निशासु मृगपक्षिणाम् । निशम्य नूनं संत्रस्ता राघवं संश्रयिष्यति ॥ १०
वृद्धश्चैवाल्पपुत्रश्च वैदेहीमनुचिन्तयन् । सोऽपि शोकसमाविष्टो ननु त्यक्ष्यति जीवितम् ॥ ११
साहमद्यैव दिष्टान्तं गमिष्यामि पतिव्रता । इदं शरीरमालिङ्ग्य प्रवेक्ष्यामि हुताशनम् ॥ १२
तां ततः संपरिष्वज्य विलपन्तीं तपस्विनीम् । [1]व्यपनिन्युः सुदुःखार्तां कौसल्यां व्यावहारिकाः ॥ १३
तैलद्रोण्यामथामात्याः संवेश्य जगतीपतिम् । राज्ञः सर्वाण्यथादिष्टाश्चक्रुः कर्माण्यनन्तरम् ॥ १४
न तु संकालनं[2] राज्ञो विना पुत्रेण मन्त्रिणः । सर्वज्ञाः कर्तुमीषुस्ते ततो रक्षन्ति भूमिपम् ॥ १५
तैलद्रोण्यां तु सचिवैः शायितं तं नराधिपम् । हा मृतोऽयमिति ज्ञात्वा स्त्रियस्ताः पर्यवारयन् ॥ १६
बाहूनुद्यम्य कृपणा नेत्रप्रस्रवणैर्मुखैः । रुदन्त्यः शोकसंतप्ताः करुणं पर्यदेवयन् ॥ १७
हा महाराज रामेण सततं प्रियवादिना । विहीनाः सत्यसन्धेन किमर्थं विजहासि नः ॥ १८

---

1. व्यनीयेति गोविन्दराजीयः पाठः । व्यप- इति ध्येयम् ।
नीय संवेश्य चक्रुरिति क्रियाणां पौर्वापर्यं प्रतीयत एव । अथापि त्वरातिशयसूचनाय द्वावथशब्दौ । अनन्तरमित्य- नेन तु प्रजापालनादिराजकर्माचरणेऽविलम्बो बोध्यत-

१. जीवन्नाशम् ति.
२. संस्करणम् छ.

कैकेय्या दुष्टभावाया राघवेण वियोजिताः । कथं पतिघ्न्या वत्स्यामः समीपे विधवा वयम् ॥ १९
स हि नाथः सदास्माकं तव च प्रभुरात्मवान् । वनं रामो गतः श्रीमान् विहाय नृपतिश्रियम् ॥२०
त्वया तेन च वीरेण विना व्यसनमोहिताः । कथं वयं निवत्स्यामः कैकेय्या च विदूषिताः ॥ २१
यया तु राजा रामश्च लक्ष्मणश्च महाबलः । सीतया सह संत्यक्ताः सा कमन्यं न हास्यति ॥ २२
ता बाष्पेण च संवीताः शोकेन विपुलेन च । व्यवेष्टन्त निरानन्दा राघवस्य वरस्त्रियः ॥ २३
निशा चन्द्रविहीनेव स्त्रीव भर्तृविवर्जिता । पुरी नाराजतायोध्या विना राज्ञा महात्मना ॥ २४
बाष्पपर्याकुलजना हाहाभूतकुलाङ्गना । शून्यचत्वरवेश्मान्ता न बभ्राज यथापुरम् ॥ २५

गते तु शोकात् त्रिदिवं नराधिपे महीतलस्थासु नृपाङ्गनासु च ।
निवृत्तचारः सहसा गतो रविः प्रवृत्तचारा रजनी ह्युपस्थिता ॥ २६

ऋते तु पुत्राद्दहनं महीपतेर्न रोचयन्ते सुहृदः समागताः ।
इतीव तस्मिञ्शयने न्यवेशयन् विचिन्त्य राजानमचिन्त्यदर्शनम् ॥ २७

गतप्रभा द्यौरिव भास्करं विना व्यपेतनक्षत्रगणेव शर्वरी ।
पुरी बभासे रहिता महात्मना [1]न चास्रकण्ठाकुलमार्गचत्वरा ॥ २८

नराश्च नार्यश्च समेत्य सङ्घशो विगर्हमाणा भरतस्य मातरम् ।
तदा नगर्यां नरदेवसंक्षये बभूवुरार्ता न च शर्म लेभिरे ॥ २९

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
अयोध्याकाण्डे तैलद्रोण्यधिशयनं नाम षट्षष्टितमः सर्गः

---

## सप्तषष्टितमः सर्गः

### अराजकदुरवस्थावर्णनम्

आक्रन्दितनिरानन्दा साश्रुकण्ठजनाकुला । अयोध्यायामवतता सा व्यतीयाय शर्वरी ॥ १
व्यतीतायां तु शर्वर्यामादित्यस्योदये ततः । समेत्य राजकर्तारः सभामीयुर्द्विजातयः ॥ २
मार्कण्डेयोऽथ मौद्गल्यो वामदेवश्च काश्यपः । कात्यायनो गौतमश्च जाबालिश्च महायशाः ॥ ३
एते द्विजाः सहामात्यैः पृथग्वाचमुदैरयन् । वसिष्ठमेवाभिमुखाः श्रेष्ठं राजपुरोहितम् ॥ ४
अतीता शर्वरी दुःखाद्या नो वर्षशतोपमा । अस्मिन् पञ्चत्वमापन्ने पुत्रशोकेन पार्थिवे ॥ ५
स्वर्गतश्च महाराजो रामश्चारण्यमाश्रितः । लक्ष्मणश्चापि तेजस्वी रामेणैव गतः सह ॥ ६

---

१. कण्ठास्रकण्ठाकुल- ति. रा.

उभौ भरतशत्रुघ्नौ केकयेषु परन्तपौ । पुरे राजगृहे रम्ये मातामहनिवेशने ॥ ७
इक्ष्वाकूणामिहाद्यैव राजा कश्चिद्विधीयताम् । अराजकं हि नो राष्ट्रं विनाशं समवाप्नुयात् ॥ ८
नाराजके जनपदे विद्युन्माली महास्वनः । अभिवर्षति पर्जन्यो महीं दिव्येन वारिणा ॥ ९
नाराजके जनपदे बीजमुष्टिः प्रकीर्यते । नाराजके पितुः पुत्रो भार्या वा वर्तते वशे ॥ १०
अराजके[1] धनं नास्ति नास्ति भार्याप्यराजके । इदमत्याहितं चान्यत् कुतः सत्यमराजके ॥ ११
नाराजके जनपदे प्रविशन्ति सभां नराः । उद्यानानि च रम्याणि हृष्टाः पुण्यगृहाणि च ॥ १२
नाराजके जनपदे यज्ञशीला द्विजातयः । सत्राण्यन्वासते दान्ता ब्राह्मणाः संशितव्रताः ॥ १३
नाराजके जनपदे महायज्ञेषु यज्वनः । ब्राह्मणा वसुसंपन्ना विसृजन्त्याप्तदक्षिणाः ॥ १४
नाराजके जनपदे प्रहृष्टनटनर्तकाः । उत्सवाश्च समाजाश्च वर्धन्ते राष्ट्रवर्धनाः ॥ १५
नाराजके जनपदे सिद्धार्था व्यवहारिणः । कथाभिरनुरज्यन्ते कथाशीलाः कथाप्रियैः ॥ १६
नाराजके जनपदे उद्यानानि समागताः । सायाह्ने क्रीडितुं यान्ति कुमार्यो हेमभूषिताः ॥ १७
नाराजके जनपदे वाहनैः शीघ्रगामिभिः । नरा निर्यान्त्यरण्यानि नारीभिः सह कामिनः ॥ १८
नाराजके जनपदे धनवन्तः सुरक्षिताः । शेरते विवृतद्वाराः कृषिगोरक्षजीविनः[2] ॥ १९
नाराजके जनपदे बद्धघण्टा विषाणिनः । अटन्ति राजमार्गेषु कुञ्जराः षष्टिहायनाः ॥ २०
नाराजके जनपदे शरान् संततमस्यताम् । श्रूयते तलनिर्घोष इष्वस्त्राणामुपासने ॥ २१
नाराजके जनपदे वणिजो दूरगामिनः । गच्छन्ति क्षेममध्वानं बहुपण्यसमाचिताः ॥ २२
नाराजके जनपदे चरत्येकचरो वशी । भावयन्नात्मनात्मानं यत्र सायंगृहो मुनिः ॥ २३
नाराजके जनपदे योगक्षेमः प्रवर्तते । न चाप्यराजके सेना शत्रून् विषहते युधि ॥ २४
नाराजके जनपदे हृष्टैः परमवाजिभिः । नराः संयान्ति सहसा रथैश्च परिमण्डिताः ॥ २५
नाराजके जनपदे नराः शास्त्रविशारदाः । संवदन्तोऽवतिष्ठन्ते वनेषूपवनेषु[3] च ॥ २६
नाराजके जनपदे माल्यमोदकदक्षिणाः । देवताभ्यर्चनार्थाय कल्प्यन्ते नियतैर्जनैः ॥ २७
नाराजके जनपदे चन्दनागरुरूषिताः । राजपुत्रा विराजन्ते वसन्त इव शाखिनः ॥ २८
यथा ह्यनुदका नद्यो यथा वाप्यतृणं वनम् । अगोपाला यथा गावस्तथा राष्ट्रमराजकम् ॥ २९
ध्वजो रथस्य प्रज्ञानं धूमो ज्ञानं विभावसोः । तेषां यो नो ध्वजो राजा स देवत्वमितो गतः ॥ ३०
नाराजके जनपदे स्वकं भवति कस्यचित् । मत्स्या इव नरा नित्यं भक्षयन्ति परस्परम् ॥ ३१
ये हि संभिन्नमर्यादा नास्तिकाश्छिन्नसंशयाः । तेऽपि भोगाय कल्पन्ते राजदण्डनिपीडिताः ॥ ३२
यथा दृष्टिः शरीरस्य नित्यमेव प्रवर्तते । तथा नरेन्द्रो राष्ट्रस्य प्रभवः सत्यधर्मयोः ॥ ३३

---

१. नाराजके धनं चास्ति गो.
२. १९—२१ श्लोकाः ष. नसन्ति ।
३. वनेषु नगरेषु च.

राजा सत्यं च धर्मश्च राजा कुलवतां कुलम् । राजा माता पिता चैव राजा हितकरो नृणाम् ॥३४
यमो वैश्रवणः शक्रो वरुणश्च महाबलः । विशेष्यन्ते नरेन्द्रेण वृत्तेन महता ततः ॥ ३५
अहो तम इवेदं स्यान्न प्रज्ञायेत किंचन । राजा चेन्न भवेल्लोके विभजन् साध्वसाधुनी ॥ ३६
जीवत्यपि महाराजे तवैव वचनं वयम् । नातिक्रमामहे सर्वे वेलां प्राप्येव सागरः ॥ ३७

स नः समीक्ष्य द्विजवर्य वृत्तं नृपं विना राज्यमरण्यभूतम् ।
कुमारमिक्ष्वाकुसुतं तथान्यं[१] त्वमेव राजानमिहाभिषिञ्च ॥ ३८

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
अयोध्याकाण्डे अराजकदुरवस्थावर्णनं नाम सप्तषष्टितमः सर्गः

---

## अष्टषष्टितमः सर्गः

### दूतप्रेषणम्

तेषां तद्वचनं श्रुत्वा वसिष्ठः प्रत्युवाच ह । मित्रामात्यगणान् सर्वान् ब्राह्मणांस्तानिदं वचः ॥ १
यदसौ मातुलकुले दत्तराज्यः परं सुखी । भरतो वसति भ्रात्रा शत्रुघ्नेन समन्वितः ॥ २
तच्छीघ्रं जवाना दूता गच्छन्तु त्वरितैर्हयैः । आनेतुं भ्रातरौ वीरौ किं समीक्षामहे वयम् ॥ ३
गच्छन्त्विति ततः सर्वे वसिष्ठं वाक्यमब्रुवन् । तेषां तु वचनं श्रुत्वा वसिष्ठो वाक्यमब्रवीत् ॥ ४
एहि सिद्धार्थ विजय जयन्ताशोक नन्दन । श्रूयतामितिकर्तव्यं सर्वानेव ब्रवीमि वः ॥ ५
पुरं राजगृहं गत्वा शीघ्रं शीघ्रजवैर्हयैः । त्यक्तशोकैरिदं वाच्यः शासनाद्भरतो मम ॥ ६
पुरोहितस्त्वां कुशलं प्राह सर्वे च मन्त्रिणः । त्वरमाणश्च निर्याहि कृत्यमात्ययिकं त्वया[1] ॥ ७
मा चास्मै प्रोषितं रामं मा चास्मै पितरं मृतम् । भवन्तः शंसिषुर्गत्वा राघवाणामिमं क्षयम् ॥ ८
कौशेयानि च वस्त्राणि भूषणानि वराणि च । क्षिप्रमादाय राज्ञश्च भरतस्य च गच्छत ॥ ९
दत्तपथ्यशना दूता जग्मुः स्वं स्वं निवेशनम् । केकयांस्ते गमिष्यन्तो हयानारुह्य संमतान् ॥ १०
ततः प्रास्थानिकं कृत्वा कार्यशेषमनन्तरम् । वसिष्ठेनाभ्यनुज्ञाता दूताः संत्वरिता ययुः ॥ ११
न्यन्तेनापरतालस्य प्रलम्बस्योत्तरं प्रति । निषेवमाणास्ते जग्मुर्नदीं मध्येन मालिनीम् ॥ १२
ते हास्तिनपुरे गङ्गां तीर्त्वा प्रत्यङ्मुखा ययुः । पाञ्चालदेशानासाद्य मध्येन कुरुजाङ्गलम् ॥ १३
सरांसि च सुपूर्णानि नदीश्च विमलोदकाः । निरीक्षमाणास्ते जग्मुर्दूताः कार्यवशाद्द्रुतम् ॥ १४
ते प्रसन्नोदकां दिव्यां नानाविहगसेविताम् । अतीत्य जग्मुर्वेगेन शरदण्डां जनाकुलाम् ॥ १५
निकूलवृक्षमासाद्य दिव्यं सत्योपयाचनम् । अभिगम्याभिवाद्य तं कुलिङ्गां प्राविशन् पुरीम् ॥१६

---

1. आत्ययिकं कालविलम्बासहम् ।

१. वदान्यं च. छ.

अभिकालं ततः प्राप्य [1]तेजोऽभिभवनाच्च्युताः । पितृपैतामहीं पुण्यां तेरुरिक्षुमतीं नदीम् ॥ १७
अवेक्ष्याञ्जलिपानांश्च ब्राह्मणान् वेदपारगान् । ययुर्मध्येन बाह्लीकान् सुदामानं च पर्वतम् ॥ १८
विष्णोः पदं प्रेक्षमाणा विपाशां चापि शाल्मलीम् । नदीर्वापीस्तटाकानि पल्वलानि सरांसि च ॥ १९
पश्यन्तो विविधांश्चापि सिंहव्याघ्रमृगद्विपान् । ययुः पथातिमहता शासनं भर्तुरीप्सवः ॥ २०
ते श्रान्तवाहना दूता विकृष्टेन पथा ततः । गिरिव्रजं पुरवरं शीघ्रमासेदुरञ्जसा[1] ॥ २१

भर्तुः प्रियार्थं कुलरक्षणार्थं भर्तुश्च वंशस्य परिग्रहार्थम् ।
अहेडमाना[2]स्त्वरया स्म दूता रात्र्यां तु ते तत्पुरमेव याताः ॥ २२

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
अयोध्याकाण्डे दूतप्रेषणं नाम अष्टषष्टितमः सर्गः

---

## एकोनसप्ततितमः सर्गः

### भरतदुःस्वप्नः

यामेव रात्रिं ते दूताः प्रविशन्ति स्म तां पुरीम् । भरतेनापि तां रात्रिं स्वप्नो दृष्टोऽयमप्रियः ॥ १
व्युष्टामेव तु तां रात्रिं दृष्ट्वा तं स्वप्नमप्रियम् । पुत्रो राजाधिराजस्य सुभृशं पर्यतप्यत ॥ २
तप्यमानं समाज्ञाय वयस्याः प्रियवादिनः । आयासं हि विनेष्यन्तः सभायां चक्रिरे कथाः ॥ ३
वादयन्ति तथा शान्तिं लासयन्त्यपि चापरे । नाटकान्यपरे प्राहुर्हास्यानि विविधानि च ॥ ४
स तैर्महात्मा भरतः सखिभिः प्रियवादिभिः । गोष्ठीहास्यानि कुर्वद्भिर्न प्राहृष्यत राघवः ॥ ५
तमब्रवीत् प्रियसखो भरतं सखिभिर्वृतम् । सुहृद्भिः पर्युपासीनः किं सखे नानुमोदसे ॥ ६
एवं ब्रुवाणं सुहृदं भरतः प्रत्युवाच तम् । शृणु त्वं यन्निमित्तं मे दैन्यमेतदुपागतम् ॥ ७
स्वप्ने पितरमद्राक्षं मलिनं मुक्तमूर्धजम् । पतन्तमद्रिशिखरात् कलुषे गोमयह्रदे ॥ ८
प्लवमानश्च मे दृष्टः स तस्मिन् गोमयह्रदे । पिबन्नञ्जलिना तैलं हसन्निव मुहुर्मुहुः ॥ ९
ततस्तिलौदनं भुक्त्वा पुनः पुनरधःशिराः । तैलेनाभ्यक्तसर्वाङ्गस्तैलमेवान्वगाहत[2] ॥ १०
स्वप्नेऽपि सागरं शुष्कं चन्द्रं च पतितं भुवि । उपरुद्धां च जगतीं तमसेव समावृताम् ॥ ११
औपवाह्यस्य नागस्य विषाणं शकलीकृतम् । सहसा चापि संशान्तं ज्वलितं जातवेदसम्[3] ॥ १२

---

1. अञ्जसेति युक्तमित्यर्थकं क्रियाविशेषणम् । गिरिव्रजं नाम केकयराजस्य पुरं त्वरया युक्तमासेदुः इति । अस्यानन्तरम्—सप्तरात्रेण ते तत्र गत्वा राजगृहं वरम्—इति ग.

2. अहेडमानाः अनादररहिताः ।

१. ते बोधि- च. छ.
२. मेवावगाहत प्र.
३. संशान्ता ज्वलिता जातवेदसः ति.

अवतीर्णां च पृथिवीं शुष्कांश्च विविधान् द्रुमान्। अहं पश्यामि विध्वस्तान् सधूमांश्चापि पर्वतान्॥१३
पीठे कार्ष्णायसे चैनं निषण्णं कृष्णवाससम्। प्रहसन्ति स्म राजानं प्रमदाः कृष्णपिङ्गलाः॥ १४
त्वरमाणश्च धर्मात्मा रक्तमाल्यानुलेपनः। रथेन खरयुक्तेन प्रयातो दक्षिणामुखः॥ १५
प्रहसन्तीव राजानं प्रमदा रक्तवासिनी। प्रकर्षन्ती मया दृष्टा राक्षसी विकृतानना॥ १६
एवमेतन्मया दृष्टमिमां रात्रिं भयावहाम्। अहं रामोऽथ वा राजा लक्ष्मणो वा मरिष्यति॥ १७
नरो यानेन यः स्वप्ने खरयुक्तेन याति हि। अचिरात्तस्य धूमाग्रं चितायां संप्रदृश्यते॥ १८
एतन्निमित्तं दीनोऽहं तन्न वः प्रतिपूजये। शुष्यतीव च मे कण्ठो न स्वस्थमिव मे मनः॥ १९
न पश्यामि भयस्थानं भयं चैवोपधारये। भ्रष्टश्च स्वरयोगो मे छाया चोपहता मम॥ २०
जुगुप्सन्निव चात्मानं न च पश्यामि कारणम्॥

इमां हि दुःस्वप्नगतिं निशम्य तामनेकरूपामवितर्कितां पुरा।
भयं महत्तद्धृदयान्न याति मे विचिन्त्य राजानमचिन्त्यदर्शनम्॥ २१

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायां अयोध्याकाण्डे भरतदुःस्वप्नो नाम एकोनसप्ततितमः सर्गः

## सप्ततितमः सर्गः

### भरतप्रस्थानम्

भरते ब्रुवति स्वप्नं दूतास्ते क्लान्तवाहनाः। प्रविश्यासह्यपरिखं रम्यं राजगृहं पुरम्॥ १
समागम्य च राज्ञा च राजपुत्रेण चार्चिताः। राज्ञः पादौ गृहीत्वा तु तमूचुर्भरतं वचः॥ २
पुरोहितस्त्वां कुशलं प्राह सर्वे च मन्त्रिणः। त्वरमाणश्च निर्याहि कृत्यमात्ययिकं त्वया॥ ३
इमानि च महार्हाणि वस्त्राण्याभरणानि च। प्रतिगृह्य विशालाक्ष मातुलस्य च दापय॥ ४
अत्र विंशतिकोट्यस्तु नृपतेर्मातुलस्य ते। दश कोट्यस्तु संपूर्णास्तथैव च नृपात्मज॥ ५
प्रतिगृह्य तु तत्सर्वं स्वनुरक्तः सुहृज्जने। दूतानुवाच भरतः कामैः संप्रतिपूज्य तान्॥ ६
कच्चित् स कुशली राजा पिता दशरथो मम। कच्चिच्चारोगता रामे लक्ष्मणे वा महात्मनि॥ ७
आर्या च धर्मनिरता धर्मज्ञा धर्मदर्शिनी। अरोगा चापि कौसल्या माता रामस्य धीमतः॥ ८
कच्चित् सुमित्रा धर्मज्ञा जननी लक्ष्मणस्य या। शत्रुघ्नस्य च वीरस्य सारोगा चापि मध्यमा॥ ९
आत्मकामा सदा चण्डी क्रोधना प्राज्ञमानिनी। अरोगा चापि मे माता कैकेयी किमुवाच ह॥ १०
एवमुक्तास्तु ते दूता भरतेन महात्मना। ऊचुः सप्रश्रयं वाक्यमिदं तं भरतं तदा॥ ११
कुशलास्ते नरव्याघ्र येषां कुशलमिच्छसि। श्रीश्च त्वां वृणुते पद्मा युज्यतां चापि ते रथः[1]॥ १२

---

१. प्रहसन्ति प्र.

1. येषां कुशलमिच्छसि ते कुशलिन एव। अथ च पद्मवती श्रीरपि त्वयि सदा सन्निधत्ते। कुशलप्रश्ने च इयमेव प्रतिवचनशैली लोकव्यवहारस्थिता। एवमर्थमेवेदं वचनं भरतगृहीतमिति तं प्रति मर्मोद्भेदनप्रसङ्गस्य नात्रावकाशः। अनयैव दिशा 'एवं ते भाषमाणस्य

भरतश्चापि तान् दूतानेवमुक्तोऽभ्यभाषत । आपृच्छेऽहं महाराजं दूताः संत्वरयन्ति माम् ॥ १३
एवमुक्त्वा तु तान् दूतान् भरतः पार्थिवात्मजः । दूतैः संचोदितो वाक्यं मातामहमुवाच ह ॥ १४
राजन् पितुर्गमिष्यामि सकाशं दूतचोदितः । पुनरप्यहमेष्यामि यदा मे त्वं स्मरिष्यसि ॥ १५
भरतेनैवमुक्तस्तु नृपो मातामहस्तदा । तमुवाच शुभं वाक्यं शिरस्याघ्राय राघवम् ॥ १६
गच्छ तातानुजाने त्वां कैकेयीसुप्रजास्त्वया । मातरं कुशलं ब्रूयाः पितरं च परंतप ॥ १७
पुरोहितं च कुशलं ये चान्ये द्विजसत्तमाः । तौ च तात महेष्वासौ भ्रातरौ रामलक्ष्मणौ ॥ १८
तस्मै हस्त्युत्तमांश्चित्रान् कम्बलानजिनानि च । अभिसत्कृत्य कैकेयो भरताय धनं ददौ ॥ १९
रुक्मनिष्कसहस्रे द्वे षोडशाश्वशतानि च । सत्कृत्य कैकयीपुत्रं केकयो धनमादिशत् ॥ २०
तथामात्यानभिप्रेतान् विश्वास्यांश्च गुणान्वितान् । ददावश्वपतिः क्षिप्रं भरतायानुयायिनः ॥ २१
ऐरावतानैन्द्रशिरान्नागांश्च प्रियदर्शनान् । खराञ्शीघ्रान् सुसंयुक्तान् मातुलोऽस्मै धनं ददौ ॥ २२
अन्तःपुरेऽतिसंवृद्धान् व्याघ्रवीर्यबलान्वितान् । दंष्ट्रायुधान् महाकायाञ्शुनश्चोपायनं ददौ ॥ २३
स दत्तं केकयेन्द्रेण धनं तन्नाभ्यनन्दत । भरतः कैकयीपुत्रो गमनत्वरया तदा ॥ २४
बभूव ह्यस्य हृदये चिन्ता सुमहती तदा । त्वरया चापि दूतानां स्वप्नस्यापि च दर्शनात् ॥ २५
स स्ववेश्म व्यतिक्रम्य नरनागाश्वसंवृतम् । प्रपेदे सुमहच्छ्रीमान् राजमार्गमनुत्तमम् ॥ २६
अभ्यतीत्य ततोऽपश्यदन्तःपुरमनुत्तमम । ततस्तद्भरतः श्रीमानाविवेशानिवारितः ॥ २७
स मातामहमापृच्छ्य मातुलं च युधाजितम् । रथमारुह्य भरतः शत्रुघ्नसहितो ययौ ॥ २८
रथान् मण्डलचक्रांश्च योजयित्वा परःशतम् । उष्ट्रगोऽश्वखरैर्भृत्या भरतं यान्तमन्वयुः ॥ २९

बलेन गुप्तो भरतो महात्मा सहार्यकस्यात्मसमैरमात्यैः ।
आदाय शत्रुघ्नमपेतशत्रुर्गृहाद्ययौ सिद्ध इवेन्द्रलोकात् ॥ ३०

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायां
अयोध्याकाण्डे भरतप्रस्थानं नाम सप्ततितमः सर्गः

---

## एकसप्ततितमः सर्गः

### अयोध्यागमनम्

स प्राङ्मुखो राजगृहादभिनिर्याय राघवः । ततः सुदामां द्युतिमान् संतीर्यावेक्ष्य तां नदीम् ॥ १
ह्लादिनीं दूरपारां च प्रत्यक्स्रोतस्तरङ्गिणीम् । शतद्रुमतरच्छ्रीमान्नदीमिक्ष्वाकुनन्दनः ॥ २
एलाधाने नदीं तीर्त्वा प्राप्य चापरपर्पटान् । शिलामाकुर्वतीं तीर्त्वा ह्याग्नेयं शल्यकर्तनम् ॥ ३

यथा श्रीरुपतिष्ठताम्' (अयोध्या ० स. ७९. श्लो १५.) इत्यत्रापि व्याख्येयम्

सत्यसन्धः शुचिः श्रीमान् प्रेक्षमाणः शिलावहाम् । अत्ययात् स महाशैलान् वनं चैत्ररथं प्रति ॥ ४
सरस्वतीं च गङ्गां च युग्मेन प्रत्यपद्यत । उत्तरान् वीर मत्स्यानां भारुण्डं प्राविशद्वनम् ॥ ५
वेगिनीं च कुलिङ्गाख्यां ह्लादिनीं पर्वतावृताम् । यमुनां प्राप्य संतीर्णो बलमाश्वासयत्तदा ॥ ६
शीतीकृत्य तु गात्राणि क्लान्तानाश्वास्य वाजिनः । तत्र स्नात्वा च पीत्वा च प्रायादादाय चोदकम् ॥ ७
राजपुत्रो महारण्यमनभीक्ष्णोपसेवितम् । भद्रो भद्रेण यानेन मारुतः खमिवात्ययात् ॥ ८
भागीरथीं दुष्प्रतरामंशुधाने महानदीम् । उपायाद्राघवस्तूर्णं प्राग्वटे विश्रुते पुरे ॥ ९
स गङ्गां प्राग्वटे तीर्त्वा समायात् कुटिकोष्ठिकाम् । सबलस्तां स तीर्त्वाथ समायाद्धर्मवर्धनम् ॥ १०
तोरणं दक्षिणार्धेन जम्बूप्रस्थमुपागमत् । वरूथं च ययौ रम्यं ग्रामं दशरथात्मजः ॥ ११
तत्र रम्ये वने वासं कृत्वासौ प्राङ्मुखो ययौ । उद्यानमुज्जिहानायाः प्रियका यत्र पादपाः ॥ १२
सालांस्तु प्रियकान् प्राप्य शीघ्रानास्थाय वाजिनः[1] । अनुज्ञाप्याथ भरतो वाहिनीं त्वरितो ययौ ॥ १३
वासं कृत्वा सर्वतीर्थे तीर्त्वा चोत्तानिकां नदीम् । अन्या नदीश्च विविधाः पार्वतीयैस्तुरंगमैः ॥ १४
हस्तिपृष्ठकमासाद्य कुटिकामत्यवर्तत । ततार च नरव्याघ्रो लौहित्ये सिकतावतीम्[2] ॥ १५
एकसाले स्थाणुमतीं विनते गोमतीं नदीम् । कलिङ्गनगरे चापि प्राप्य सालवनं तदा ॥ १६
भरतः क्षिप्रमागच्छत् सुपरिश्रान्तवाहनः[3] । वनं च[4] समतीत्याशु शर्वर्यामरुणोदये ॥ १७
अयोध्यां मनुना राज्ञा निर्मितां संददर्श ह । तां पुरीं पुरुषव्याघ्रः सप्तरात्रोषितः पथि ॥ १८
अयोध्यामग्रतो दृष्ट्वा सारथिं वाक्यमब्रवीत् । [1]एषा नातिप्रतीता मे पुण्योद्याना यशस्विनी ॥ १९
अयोध्या दृश्यते दूरात् सारथे पाण्डुमृत्तिका । यज्वभिर्गुणसंपन्नैर्ब्राह्मणैर्वेदपारगैः ॥ २०
भूयिष्ठमृद्धैराकीर्णा राजर्षिपरिपालिता । अयोध्यायां पुरा शब्दः श्रूयते तुमुलो महान् ॥ २१
समन्तान्नरनारीणां तमद्य न शृणोम्यहम् । उद्यानानि हि सायाह्ने क्रीडित्वोपरतैर्नरैः ॥ २२
समन्ताद्विप्रधावद्भिः प्रकाशन्ते ममान्यथा । तान्यद्यानुरुदन्तीव परित्यक्तानि कामिभिः ॥ २३
अरण्यभूतेव पुरी सारथे प्रतिभाति मे । न ह्यत्र यानैर्दृश्यन्ते न गजैर्न च वाजिभिः ॥ २४

---

1. 'एषा नातिप्रतीता मे' इत्यादि भरतोक्तानां साशङ्कवचनानामन्यतमस्यापि प्रतिवचनं भरतसमाश्वासनं किमिति सूतमुखेन कविरिह नोपक्षिपति । न ह्यत्र किंचिदननुरूपमिव । यावद्धि भरतसमाश्वासनाय किमपि वक्तुमुपक्रमते सूतः तावदेव तमुद्देशमतिक्रम्य शीघ्रजवैः हयैः प्रदेशान्तरं दूरतरं नीयमानो भरतः तत्राप्यशुभं निमित्तान्तरं पश्यन् पुनरेवाशङ्कते । एवमाराजवेश्मगमनं क्रामंक्रामं प्रदेशान् दर्शंदर्शमशुभानि भूयसीं प्रश्नपरंपरामेव कुर्वति भरते कथमभिवदेत् सूतः किं वा इत्यहो यथास्वभावेतिवृत्तवर्णने कवेः प्रतिभातिशयः, येन न केवलं सूतस्य, यावत् श्रोतुः सहृदयलोकस्यापि प्रत्यक्षमिवेदं संविधानमाकलयतो हृदयं प्रतिवचने निरकाङ्क्षप्रतिपत्ति संवृत्तम् इति ।

१. तत्रेत्यादि वाजिन इत्यन्तम् क. नास्ति ।
२. स कपीवतीम् च.
३. इदमर्धम् ख. नास्ति ।
४. भरतः ख.

निर्यान्तो वाभियान्तो वा नरमुख्या यथापुरम् । उद्यानानि पुरा भान्ति मत्तप्रमुदितानि च ॥ २५
जनानां रतिसंयोगेष्वत्यन्तं गुणवन्ति च । तान्येतान्यद्य पश्यामि निरानन्दानि सर्वशः ॥ २६
स्रस्तपर्णैरनुपथं विक्रोशद्भिरिव द्रुमैः । नाद्यापि श्रूयते शब्दो मत्तानां मृगपक्षिणाम् ॥ २७
संरक्तां मधुरां वाणीं कलं व्याहरतां बहु । चन्दनागरुसंपृक्तो धूपसंमूर्च्छितोऽतुलः ॥ २८
प्रवाति पवनः श्रीमान् किं नु नाद्य यथापुरम् । भेरीमृदङ्गवीणानां कोणसंघट्टितः पुनः ॥ २९
किमद्य शब्दो विरतः सदादीनगतिः पुरा । अनिष्टानि च पापानि पश्यामि विविधानि च ॥ ३०
निमित्तान्यमनोज्ञानि तेन सीदति मे मनः । सर्वथा कुशलं सूत दुर्लभं मम बन्धुषु ॥ ३१
तथा ह्यसति संमोहे हृदयं सीदतीव मे । विषण्णः श्रान्तहृदयस्त्रस्तः संलुलितेन्द्रियः ॥ ३२
भरतः प्रविवेशाशु पुरीमिक्ष्वाकुपालिताम् । द्वारेण वैजयन्तेन प्राविशच्छ्रान्तवाहनः ॥ ३३
द्वाःस्थैरुत्थाय विजयं पृष्टस्तैः सहितो ययौ । स त्वनेकाग्रहृदयो द्वाःस्थं प्रत्यर्च्य तं जनम् ॥ ३४
सूतमश्वपतेः क्लान्तमब्रवीत्तत्र राघवः । किमहं त्वरयानीतः कारणेन विनानघ ॥ ३५
अशुभाशङ्कि हृदयं शीलं च पततीव मे । श्रुता नो यादृशः पूर्वं नृपतीनां विनाशने ॥ ३६
आकारांस्तानहं सर्वानिह पश्यामि सारथे । संमार्जनविहीनानि परुषाण्युपलक्षये ॥ ३७
असंयतकवाटानि श्रीविहीनानि सर्वशः । बलिकर्मविहीनानि धूपसंमोदनेन च ॥ ३८
अनाशितकुटुम्बानि प्रभाहीनजनानि च । अलक्ष्मीकानि पश्यामि कुटुम्बिभवनान्यहम् ॥ ३९
अपेतमाल्यशोभान्यप्यसंमृष्टाजिराणि च । देवागाराणि शून्यानि न चाभान्ति यथापुरम् ॥ ४०
देवतार्चाः प्रविद्धाश्च यज्ञगोष्ठ्यस्तथाविधाः । माल्यापणेषु राजन्ते नाद्य पण्यानि वै तथा ॥ ४१
दृश्यन्ते वणिजोऽप्यद्य न यथापूर्वमत्र वै । ध्यानसंविग्नहृदया नष्टव्यापारयन्त्रिताः ॥ ४२
देवायतनचैत्येषु दीनाः पक्षिगणास्तथा । मलिनं चाश्रुपूर्णाक्षं दीनं ध्यानपरं कृशम् ॥ ४३
सस्त्रीपुंसं च पश्यामि जनमुत्कण्ठितं पुरे । इत्येवमुक्त्वा भरतः सूतं तं दीनमानसः ॥ ४४
तान्यरिष्टान्ययोध्यायां प्रेक्ष्य राजगृहं ययौ[1] ॥

तां शून्यशृङ्गाटकवेश्मरथ्यां रजोऽरुणद्वारकपाटयन्त्राम् ।
दृष्ट्वा पुरीमिन्द्रपुरप्रकाशां दुःखेन संपूर्णतरो बभूव ॥ ४५

बहूनि पश्यन् मनसोऽप्रियाणि यान्यन्यदा नात्र पुरे बभूवुः ।
अवाक्शिरा दीनमना न हृष्टः पितुर्महात्मा प्रविवेश वेश्म ॥ ४६

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
अयोध्याकाण्डे अयोध्यागमनं नाम एकसप्ततितमः सर्गः

---

१. सस्त्रीपुंसमित्यादि ययावित्यन्तम् घ नास्ति

## द्विसप्ततितमः सर्गः

### भरतसन्तापः

अपश्यंस्तु ततस्तत्र पितरं पितुरालये । जगाम भरतो द्रष्टुं मातरं मातुरालये ॥ १
अनुप्राप्तं तु तं दृष्ट्वा कैकेयी प्रोषितं सुतम् । उत्पपात तदा हृष्टा त्यक्त्वा सौवर्णमासनम् ॥ २
स प्रविश्यैव धर्मात्मा स्वगृहं श्रीविवर्जितम् । भरतः प्रतिजग्राह जनन्याश्चरणौ शुभौ ॥ ३
सा तं मूर्धन्युपाघ्राय परिष्वज्य यशस्विनम् । अङ्के भरतमारोप्य प्रष्टुं समुपचक्रमे ॥ ४
अद्य ते कतिचिद्रात्र्यश्च्युतस्यार्यकवेश्मनः । अपि नाध्वश्रमः शीघ्रं रथेनापततस्तव ॥ ५
आर्यकस्ते सुकुशली युधाजिन्मातुलस्तव । प्रवासाच्च सुखं पुत्र सर्वं मे वक्तुमर्हसि ॥ ६
एवं पृष्टस्तु कैकेय्या प्रियं पार्थिवनन्दनः । आचष्ट भरतः सर्वं मात्रे राजीवलोचनः ॥ ७
अद्य मे सप्तमी रात्रिश्च्युतस्यार्यकवेश्मनः[1] । अम्बायाः कुशली तातो युधाजिन्मातुलश्च मे ॥ ८
यन्मे धनं च रत्नं च ददौ राजा परंतपः । परिश्रान्तं पथ्यभवत्ततोऽहं पूर्वमागतः ॥ ९
राजवाक्यहरैर्दूतैस्त्वर्यमाणोऽहमागतः । यदहं प्रष्टुमिच्छामि तदम्बा वक्तुमर्हति ॥ १०
शून्योऽयं शयनीयस्ते पर्यङ्को हेमभूषितः । न चायमिक्ष्वाकुजनः प्रहृष्टः प्रतिभाति मे ॥ ११
राजा भवति भूयिष्ठमिहाम्बाया निवेशने । तमहं नाद्य पश्यामि द्रष्टुमिच्छन्निहागतः ॥ १२
पितुर्ग्रहीष्ये चरणौ तं ममाख्याहि पृच्छतः । आहोस्विदम्ब ज्येष्ठायाः कौसल्याया निवेशने ॥ १३
तं प्रत्युवाच कैकेयी प्रियवद्घोरमप्रियम् । अजानन्तं प्रजानन्ती राज्यलोभेन मोहिता ॥ १४
या गतिः सर्वभूतानां तां गतिं ते पिता गतः । राजा महात्मा तेजस्वी यायजूकः सतां गतिः ॥ १५
तच्छ्रुत्वा भरतो वाक्यं धर्माभिजनवाञ्शुचिः । पपात सहसा भूमौ पितृशोकबलार्दितः ॥ १६
हा हतोऽस्मीति कृपणां दीनां वाचमुदीरयन् । निपपात महाबाहुर्बाहू विक्षिप्य वीर्यवान् ॥ १७
ततः शोकेन संविग्नः पितुर्मरणदुःखितः । विललाप महातेजा भ्रान्ताकुलितचेतनः ॥ १८
एतत् सुरुचिरं भाति पितुर्मे शयनं पुरा । शशिनेवामलं रात्रौ गगनं तोयदात्यये ॥ १९
तदिदं न विभात्यद्य विहीनं तेन धीमता । व्योमेव शशिना हीनं विशुष्क इव सागरः ॥ २०
बाष्पमुत्सृज्य कण्ठेन[2] स्वार्तः परमपीडितः । प्रच्छाद्य वदनं श्रीमद्वस्त्रेण जयतां वरः ॥ २१
तमार्तं देवसंकाशं समीक्ष्य पतितं भुवि । निकृत्तमिव सालस्य स्कन्धं परशुना वने ॥ २२
माता मातङ्गसंकाशं चन्द्रार्कसदृशं भुवः । उत्थापयित्वा शोकार्तं वचनं चेदमब्रवीत् ॥ २३
उत्तिष्ठोत्तिष्ठ किं शेषे राजपुत्र महायशः । त्वद्विधा न हि शोचन्ति सन्तः सदसि संमताः ॥ २४
दानयज्ञाधिकारा हि शीलश्रुतिवचोऽनुगा । बुद्धिस्ते बुद्धिसंपन्न प्रभेवार्कस्य मन्दरे[3] ॥ २५

---

१. अपि नाध्वश्रमः इत्यादि आर्यकवेश्मनः इत्यन्तम् ख, नास्ति ।
२. भरतो बाष्पमुत्सृज्य क.
३. मन्दिरे च, छ.

स रुदित्वा चिरं कालं भूमौ विपरिवृत्य च । जननीं प्रत्युवाचेदं शोकैर्बहुभिरावृतः ॥ २६
अभिषेक्ष्यति रामं तु राजा यज्ञं तु यक्ष्यते । इत्यहं कृतसंकल्पो हृष्टो यात्रामयासिषम् ॥ २७
तदिदं ह्यन्यथाभूतं व्यवदीर्णं मनो मम । पितरं यो न पश्यामि नित्यं प्रियहिते रतम् ॥ २८
अम्ब केनात्यगाद्राजा व्याधिना मय्यनागते । धन्या रामादयः सर्वे यैः पिता संस्कृतः स्वयम् ॥ २९
न नूनं मां महाराजः प्राप्तं जानाति कीर्तिमान् । उपजिघ्रेद्धि मां मूर्ध्नि तातः संयम्य सत्वरम् ॥ ३०
क्व स पाणिः सुखस्पर्शस्तातस्याक्लिष्टकर्मणः । येन मां रजसा ध्वस्तमभीक्ष्णं परिमार्जति ॥ ३१
यो मे भ्राता पिता बन्धुर्यस्य दासोऽस्मि धीमतः । तस्य मां शीघ्रमाख्याहि रामस्याक्लिष्टकर्मणः ॥ ३२
पिता हि भवति ज्येष्ठो धर्ममार्यस्य जानतः । तस्य पादौ ग्रहीष्यामि स हीदानीं गतिर्मम ॥ ३३
धर्मविद्धर्मनित्यश्च सत्यसन्धो दृढव्रतः । आर्ये किमब्रवीद्राजा पिता मे सत्यविक्रमः ॥ ३४
पश्चिमं साधु संदेशमिच्छामि श्रोतुमात्मनः । इति पृष्टा यथातत्त्वं कैकेयी वाक्यमब्रवीत् ॥ ३५
रामेति राजा विलपन् हा सीते लक्ष्मणेति च । स महात्मा परं लोकं गतो गतिमतां वरः ॥ ३६
इमां तु पश्चिमां वाचं व्याजहार पिता तव । कालधर्मपरिक्षिप्तः पाशैरिव महागजः ॥ ३७
सिद्धार्थास्ते नरा राममागतं सीतया सह । लक्ष्मणं च महाबाहुं द्रक्ष्यन्ति पुनरागतम्[1] ॥ ३८
तच्छ्रुत्वा विषसादैव द्वितीयाप्रियशंसनात् । विषण्णवदनो भूत्वा भूयः पप्रच्छ मातरम् ॥ ३९
क्व चेदानीं स धर्मात्मा कौसल्यानन्दवर्धनः । लक्ष्मणेन सह भ्रात्रा सीतया च समं गतः ॥ ४०
तथा पृष्टा यथातत्त्वमाख्यातुमुपचक्रमे । मातास्य युगपद्वाक्यं विप्रियं प्रियशङ्कया[१] ॥ ४१
स हि राजसुतः पुत्र चीरवासा महावनम् । दण्डकान् सह वैदेह्या लक्ष्मणानुचरो गतः ॥ ४२
तच्छ्रुत्वा भरतस्त्रस्तो भ्रातुश्चारित्रशङ्कया । स्वस्य वंशस्य माहात्म्यात् प्रष्टुं समुपचक्रमे ॥ ४३
कच्चिन्न ब्राह्मणधनं हृतं रामेण कस्यचित्[2] । कच्चिन्नाढ्यो दरिद्रो वा तेनापापो विहिंसितः ॥ ४४
कच्चिन्न परदारान् वा राजपुत्रोऽभिमन्यते । कस्मात् स दण्डकारण्ये भ्रूणहेव[२] विवासितः ॥ ४५
अथास्य चपला माता तत् स्वकर्म यथातथम् । तेनैव स्त्रीस्वभावेन व्याहर्तुमुपचक्रमे ॥ ४६
एवमुक्ता तु कैकेयी भरतेन महात्मना । उवाच वचनं हृष्टा मूढा पण्डितमानिनी ॥ ४७
न ब्राह्मणधनं किंचिद्धृतं रामेण धीमता । कच्चिन्नाढ्यो दरिद्रो वा तेनापापो विहिंसितः ॥ ४८
न रामः परदारांश्च चक्षुर्भ्यामपि पश्यति । मया तु पुत्र श्रुत्वैवं रामस्यैवाभिषेचनम् ॥ ४९

---

1. सीतया सह आगतं राम पुनरागतं लक्ष्मणं 'न ब्राह्मणधनं किंचिद्धृतं रामेण धीमता' च द्रक्ष्यन्तीत्यन्वयः । अगदमिति चेत् दृश्यते स पाठः इत्युत्तरवाक्यानुरोधात् । श्लिष्टः ।

2. कस्यचिदिति ब्राह्मणेत्यनेनान्वितम् । यद्वा कस्यचिद्धेतोरित्यर्थः । अथवा कस्यचिदिति किंचिदित्यर्थे

१. प्रियशंसया पुना. ।

२. भ्राता रामो पुना. ।

याचितस्ते पिता राज्यं रामस्य च विवासनम् । स स्ववृत्तिं समास्थाय पिता ते तत्तथाकरोत् ॥ ५०
रामश्च सहसौमित्रिः प्रेषितः सह सीतया । तमपश्यन् प्रियं पुत्रं महीपालो महायशाः ॥ ५१
पुत्रशोकपरिद्यूनः पञ्चत्वमुपपेदिवान् । त्वया त्विदानीं धर्मज्ञ राजत्वमवलम्ब्यताम् ॥ ५२
त्वत्कृते हि मया सर्वमिदमेवंविधं कृतम् । मा शोकं मा च संतापं धैर्यमाश्रय पुत्रक ॥ ५३
त्वदधीना हि नगरी राज्यं चैतदनायकम् ॥

तत् पुत्र शीघ्रं विधिना विधिज्ञैर्वसिष्ठमुख्यैः सहितो द्विजेन्द्रैः ।
संकाल्य राजानमदीनसत्त्वमात्मानमुर्व्यामभिषेचयस्व ॥ ५४

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
अयोध्याकाण्डे भरतसन्तापो नाम द्विसप्ततितमः सर्गः

---

## त्रिसप्ततितमः सर्गः

### कैकेयीविगर्हणम्

श्रुत्वा तु पितरं वृत्तं भ्रातरौ च विवासितौ । भरतो दुःखसंतप्त इदं वचनमब्रवीत् ॥ १
किं नु कार्यं हतस्येह मम राज्येन शोचतः । विहीनस्याथ पित्रा च भ्रात्रा पितृसमेन च ॥ २
दुःखे मे दुःखमकरोर्व्रणे क्षारमिवादधाः । राजानं प्रेतभावस्थं कृत्वा रामं च तापसम् ॥ ३
कुलस्य त्वमभावाय कालरात्रिरिवागता । अङ्गारमुपगूह्य त्वां पिता मे नावबुद्धवान् ॥ ४
मृत्युमापादितो राजा त्वया मे पापदर्शिनि । सुखं परिहृतं मोहात् कुलेऽस्मिन् कुलपांसनि ॥ ५
त्वां प्राप्य हि पिता मेऽद्य सत्यसन्धो महायशाः । तीव्रदुःखाभिसंतप्तो वृत्तो दशरथो नृपः ॥ ६
विनाशितो महाराजः पिता मे धर्मवत्सलः । कस्मात् प्रव्राजितो रामः कस्मादेव वनं गतः ॥ ७
कौसल्या च सुमित्रा च पुत्रशोकाभिपीडिते । दुष्करं यदि जीवेतां प्राप्य त्वां जननीं मम ॥ ८
ननु त्वार्योऽपि धर्मात्मा त्वयि वृत्तिमनुत्तमाम् । वर्तते गुरुवृत्तिज्ञो यथा मातरि वर्तते ॥ ९

---

१. अस्य सर्गस्यादौ—कैकेय्याप्येवमुक्तस्तु भरतो राघवानुजः । कर्णौ कराभ्यां प्रच्छाद्य पपात धरणीतले॥ हा राम रामेति तदा विलप्य करुणं बहु । मुहूर्तमिव निःसंज्ञः संज्ञावानिदमब्रवीत् ॥ हतोऽस्मि राजा निहतो हतो लोकश्च दुर्मते। किमिदं शिक्षितं तेन कस्य कार्यं त्वया कृतम् ॥ राजानं प्रेतभावस्थं कृत्वा रामं च तापसम्। राज्यमत्र फलं भोक्तुमनुतिष्ठसि दुर्मते ॥ रामप्रस्थापितायाश्च पतिष्याश्च तवोदरे । दश मासा मया नीता हा लोके निन्दितो ह्यहम् ॥ कण्ठेऽवसज्ज्य वा पाशं विषं पीत्वाथ वा शठे । त्यज प्राणांश्च दुर्मेधे जलमग्निं प्रविश्य वा ॥ त्वामद्य निहनिष्यामि नो चेद्रामस्य दुर्यशः । राघवस्यानुजो भ्राता भरतो मातृहा इति ॥ एवं परुषमुक्त्वा तु निर्दहन्निव चक्षुषा । निरीक्षमाणे भरते कैकेयी वाक्यमब्रवीत् ॥ किं मयापकृतं तेऽद्य गर्हसे मां मुहुर्मुहुः । प्रसूय वर्धयित्वा त्वां परस्थं द्रष्टुमिच्छती ॥ पिता तेऽस्वर्गतो राजा भ्रातरौ च विवासितौ । बहुना किं प्रलापेन कुरु राज्य यथासुखम् ॥—इति क.

तथा ज्येष्ठा हि मे माता कौसल्या दीर्घदर्शिनी । त्वयि धर्मं समास्थाय भगिन्यामिव वर्तते ॥ १०
तस्याः पुत्रं कृतात्मानं चीरवल्कलवाससम् । प्रस्थाप्य वनवासाय कथं पापे न शोचसि ॥ ११
अपापदर्शनं शूरं कृतात्मानं यशस्विनम् । प्रव्राज्य चीरवसनं किं नु पश्यसि कारणम् ॥ १२
लुब्धाया विदितो मन्ये न तेऽहं राघवं प्रति[1] । तथा ह्यनर्थो राज्यार्थं त्वया नीतो महानयम् ॥ १३
अहं हि पुरुषव्याघ्रावपश्यन् रामलक्ष्मणौ । केन शक्तिप्रभावेण राज्यं रक्षितुमुत्सहे ॥ १४
तं हि नित्यं महाराजो बलवन्तं महाबलः । अपाश्रितोऽभूद्धर्मात्मा मेरुर्मेरुवनं यथा ॥ १५
सोऽहं कथमिमं भारं महाधुर्यसमुद्धृतम् । दम्यो धुरमिवासाद्य वहेयं केन चौजसा ॥ १६
अथवा मे भवेच्छक्तिर्योगैर्बुद्धिबलेन वा । सकामां न करिष्यामि त्वामहं पुत्रगर्धिनीम् ॥ १७
न मे विकाङ्क्षा जायेत त्यक्तुं त्वां पापनिश्चयाम् । यदि रामस्य नापेक्षा त्वयि स्यान्मातृवत्सदा ॥
उत्पन्ना तु कथं बुद्धिस्तवेयं पापदर्शिनी । साधुचारित्रविभ्रष्टे पूर्वेषां नो विगर्हिता ॥ १९
अस्मिन् कुले हि पूर्वेषां ज्येष्ठो राज्येऽभिषिच्यते । अपरे भ्रातरस्तस्मिन् प्रवर्तन्ते समाहिताः ॥२०
न हि मन्ये नृशंसे त्वं राजधर्ममवेक्षसे । गतिं वा न विजानासि राजवृत्तस्य शाश्वतीम् ॥ २१
सततं राजवृत्ते हि ज्येष्ठो राज्येऽभिषिच्यते । राज्ञामेतत् समं तत् स्यादिक्ष्वाकूणां विशेषतः ॥ २२
तेषां धर्मैकरक्षाणां कुलचारित्रशोभिनाम् । अत्र चारित्रशौण्डीर्यं त्वां प्राप्य विनिवर्तितम् ॥ २३
तवापि सुमहाभागा जनेन्द्राः कुलपूर्वगाः । बुद्धेर्मोहः कथमयं संभूतस्त्वयि गर्हितः ॥ २४
न तु कामं करिष्यामि तवाहं पापनिश्चये । यया व्यसनमारब्धं जीवितान्तकरं मम ॥ २५
एष त्विदानीमेवाहमप्रियार्थं तवानघम् । निवर्तयिष्यामि वनाद्भ्रातरं स्वजनप्रियम् ॥ २६
निवर्तयित्वा रामं च तस्याहं दीप्ततेजसः । दासभूतो भविष्यामि सुस्थितेनान्तरात्मना ॥ २७

इत्येवमुक्त्वा भरतो महात्मा प्रियेतरैर्वाक्यगणैस्तुदंस्ताम् ।
शोकातुरश्चापि ननाद भूयः सिंहो यथा मन्दरकन्दरस्थः[2] ॥ २८

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
अयोध्याकाण्डे कैकेयीविगर्हणं नाम त्रिसप्ततितमः सर्गः

---

## चतुःसप्ततितमः सर्गः

### कैकेय्याक्रोशः

तां तथा गर्हयित्वा तु मातरं भरतस्तदा । रोषेण महताविष्टः पुनरेवाब्रवीद्वचः ॥ १
राज्याद्भ्रंशस्व कैकेयि नृशंसे दुष्टचारिणि । परित्यक्ता च धर्मेण मा मृतं रुदती भव ॥ २

---

१. यथा ग. २. पर्वतगह्वरस्थः च. छ.

किं नु तेऽदूषयद्राजा रामो वा भृशधार्मिकः । ययोर्मृत्युर्विवासश्च त्वत्कृते तुल्यमागतौ ॥ ३

भ्रूणहत्यामसि प्राप्ता कुलस्यास्य विनाशनात् । कैकेयि नरकं गच्छ मा च भर्तुः सलोकताम् ॥ ४

यत्त्वया हीदृशं पापं कृतं घोरेण कर्मणा । सर्वलोकप्रियं हित्वा ममाप्यापादितं भयम् ॥ ५

त्वत्कृते मे पिता वृत्तो रामश्चारण्यमाश्रितः । अयशो जीवलोके च त्वयाहं प्रतिपादितः ॥ ६

मातृरूपे ममामित्रे नृशंसे राज्यकामुके । न तेऽहमभिभाष्योऽस्मि दुर्वृत्ते पतिघातिनि ॥ ७

कौसल्या च सुमित्रा च याश्चान्या मम मातरः[1] । दुःखेन महताविष्टास्त्वां प्राप्य कुलदूषणीम् ॥ ८

न त्वमश्वपतेः कन्या धर्मराजस्य धीमतः । राक्षसी तत्र जातासि कुलप्रध्वंसिनी पितुः ॥ ९

यत्त्वया धार्मिको रामो नित्यं सत्यपरायणः । वनं प्रस्थापितो दुःखात् पिता च त्रिदिवं गतः ॥ १०

यत्प्रधानासि[2] तत्पापं मयि पित्रा विनाकृते । भ्रातृभ्यां च परित्यक्ते सर्वलोकस्य चाप्रिये ॥ ११

कौसल्यां धर्मसंयुक्तां वियुक्तां पापनिश्चये । कृत्वा कं प्राप्स्यसे त्वद्य लोकं निरयगामिनि ॥ १२

किं नावबुध्यसे क्रूरे नियतं बन्धुसंश्रया । ज्येष्ठं पितृसमं रामं कौसल्यातनुसंभवम् ॥ १३

अङ्गप्रत्यङ्गजः पुत्रो हृदयाच्चापि जायते । तस्मात् प्रियतमो मातुः प्रिया एव तु बान्धवाः ॥ १४

अन्यदा किल धर्मज्ञा सुरभिः सुरसंमता । वहमानौ ददर्शोर्व्यां पुत्रौ विगतचेतसौ ॥ १५

तावर्धदिवसे श्रान्तौ दृष्ट्वा पुत्रौ महीतले । रुरोद पुत्रशोकेन बाष्पपर्याकुलेक्षणा ॥ १६

अधस्ताद्व्रजतस्तस्याः सुरराज्ञो महात्मनः । बिन्दवः पतिता गात्रे सूक्ष्माः सुरभिगन्धिनः ॥ १७

इन्द्रोऽप्यश्रुनिपातं तं स्वगात्रे पुण्यगन्धिनम् । सुरभिं मन्यते दृष्ट्वा भूयसीं तां सुरेश्वरः[१] ॥ १८

निरीक्षमाणः शक्रस्तां ददर्श सुरभिं स्थिताम् । आकाशे विष्ठितां दीनां रुदन्तीं भृशदुःखिताम् ॥ १९

तां दृष्ट्वा शोकसंतप्तां वज्रपाणिर्यशस्विनीम् । इन्द्रः प्राञ्जलिरुद्विग्नः सुरराजोऽब्रवीद्वचः ॥ २०

भयं कच्चिन्न चास्मासु कुतश्चिद्विद्यते महत् । कुतोऽनिमित्तः शोकस्ते ब्रूहि सर्वहितैषिणि ॥ २१

एवमुक्ता तु सुरभिः सुरराजेन धीमता । प्रत्युवाच ततो धीरा वाक्यं वाक्यविशारदा ॥ २२

शान्तं पापं न वः किंचित् कुतश्चिदमराधिप । अहं तु मग्नौ शोचामि स्वपुत्रौ विषमे स्थितौ ॥ २३

एतौ दृष्ट्वा कृशौ दीनौ सूर्यरश्मिप्रतापितौ । अर्द्यमानौ बलीवर्दौ कर्षकेण सुराधिप ॥ २४

मम कायात् प्रसूतौ हि दुःखितौ भारपीडितौ । यौ दृष्ट्वा परितप्येऽहं नास्ति पुत्रसमः प्रियः ॥ २५

यस्याः पुत्रसहस्रैस्तु कृत्स्नं व्याप्तमिदं जगत् । तां दृष्ट्वा रुदतीं शक्रो न सुतान्मन्यते परम् ॥ २६

सदाप्रतिमवृत्ताया लोकधारणकाम्यया । श्रीमत्या गुणनित्यायाः स्वभावपरिचेष्टया ॥ २७

यस्याः पुत्रसहस्राणि सापि शोचति कामधुक् । किं पुनर्या विना रामं कौसल्या वर्तयिष्यति ॥ २८

---

1. तासामेवाहमभिभाष्योऽस्मीति योज्यम् । पापफलायैव संवृत्तमित्यर्थः । प्रधारयसे छ. ता इत्यध्याहार इति तु गोविन्दराजः । २. इदं पद्यम् २६-पद्यादनन्तरं ग. दृश्यते

2. यद्राज्यं व्यसनितया वाञ्छसि तन्मयि

एकपुत्रा च साध्वी च विवत्सेयं त्वया कृता। तस्मात्त्वं सततं दुःखं प्रेत्य चेह च लप्स्यसे॥ २९
अहं ह्यपचितिं भ्रातुः पितुश्च सकलामिमाम्। वर्धनं यशसश्चापि करिष्यामि न संशयः॥ ३०
आनाय्य च महाबाहुं कौसल्याया महाबलम्। स्वयमेव प्रवेक्ष्यामि वनं मुनिनिषेवितम्॥ ३१
न ह्यहं पापसंकल्पे पापे पापं त्वया कृतम्। शक्तो धारयितुं पौरैरश्रुकण्ठैर्निरीक्षितः॥ ३२
सा त्वमग्निं प्रविश वा स्वयं वा दण्डकान् विश। रज्जुं बधान वा कण्ठे न हि तेऽन्यत् परायणम्॥
अहमप्यवनिं प्राप्ते रामे सत्यपराक्रमे। कृतकृत्यो भविष्यामि विप्रवासितकल्मषः॥ ३४
इति नाग इवारण्ये तोमराङ्कुशचोदितः। पपात भुवि संक्रुद्धो निःश्वसन्निव पन्नगः॥ ३५

संरक्तनेत्रः शिथिलाम्बरस्तथा विधूतसर्वाभरणः परंतपः।
बभूव भूमौ पतितो नृपात्मजः शचीपतेः केतुरिवोत्सवक्षये॥ ३६

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम
अयोध्याकाण्डे कैकेय्याक्रोशो नाम चतुःसप्ततितमः सर्गः

---

## पञ्चसप्ततितमः सर्गः

### भरतशपथः

दीर्घकालात् समुत्थाय संज्ञां लब्ध्वा च वीर्यवान्। नेत्राभ्यामश्रुपूर्णाभ्यां दीनामुद्वीक्ष्य मातरम्॥ १
सोऽमात्यमध्ये भरतो जननीमभ्यकुत्सयत्। राज्यं न कामये जातु मन्त्रये नापि मातरम्॥ २
अभिषेकं न जानामि योऽभूद्राज्ञा समीक्षितः। विप्रकृष्टे ह्यहं देशे शत्रुघ्नसहितोऽवसम्॥ ३
वनवासं न जानामि रामस्याहं महात्मनः। विवासनं वा सौमित्रेः सीतायाश्च यथाभवत्॥ ४
तथैव क्रोशतस्तस्य भरतस्य महात्मनः। कौसल्या शब्दमाज्ञाय सुमित्रामिदमब्रवीत्॥ ५
आगतः क्रूरकार्यायाः कैकेय्या भरतः सुतः। तमहं द्रष्टुमिच्छामि भरतं दीर्घदर्शिनम्॥ ६
एवमुक्त्वा सुमित्रां सा विवर्णा मलिना कृशा। प्रतस्थे भरतो यत्र वेपमाना विचेतना॥ ७
स तु रामानुजश्चापि शत्रुघ्नसहितस्तदा। प्रतस्थे भरतो यत्र कौसल्याया निवेशनम्॥ ८
ततः शत्रुघ्नभरतौ कौसल्यां प्रेक्ष्य दुःखितौ। पर्यष्वजेतां दुःखार्तां पतितां नष्टचेतनाम्॥ ९
रुदन्तौ रुदतीं दुःखात् समेत्यार्या मनस्विनी। भरतं प्रत्युवाचेदं कौसल्या भृशदुःखिता[1]॥ १०
इदं ते राज्यकामस्य राज्यं प्राप्तमकण्टकम्। संप्राप्तं बत कैकेय्या शीघ्रं क्रूरेण कर्मणा॥ ११
प्रस्थाप्य चीरवसनं पुत्रं मे वनवासिनम्। कैकेयी कं गुणं तत्र पश्यति क्रूरदर्शिनी॥ १२
क्षिप्रं मामपि कैकेयी प्रस्थापयितुमर्हति। हिरण्यनाभो यत्रास्ते सुतो मे सुमहायशाः॥ १३
अथवा स्वयमेवाहं सुमित्रानुचरा सुखम्। अग्निहोत्रं पुरस्कृत्य प्रस्थास्ये यत्र राघवः॥ १४

---

१. प्रतस्थे इत्यादि भृशदुःखितेत्यन्तम् ध. नास्ति।

कामं वा स्वयमेवाद्य तत्र मां नेतुमर्हसि । यत्रासौ पुरुषव्याघ्रः पुत्रो मे तप्यते तपः ॥ १५
इदं हि तव विस्तीर्णं धनधान्यसमाचितम् । हस्त्यश्वरथसंपूर्णं राज्यं निर्यातितं तया ॥ १६
इत्यादिबहुभिर्वाक्यैः क्रूरैः संभर्त्सितोऽनघः । विव्यथे भरतस्तीव्रं व्रणे तुद्येव सूचिना[1] ॥ १७
पपात चरणौ तस्यास्तदा संभ्रान्तचेतनः । विलप्य बहुधासंज्ञो लब्धसंज्ञस्ततः स्थितः ॥ १८
एवं विलपमानां तां भरतः प्राञ्जलिस्तदा । कौसल्यां प्रत्युवाचेदं शोकैर्बहुभिरावृताम् ॥ १९
आर्ये कस्मादजानन्तं गर्हसे मामकिल्बिषम् । विपुलां च मम प्रीतिं स्थिरां जानासि राघवे ॥ २०
कृता शास्त्रानुगा बुद्धिर्मा भूत्तस्य कदाचन । सत्यसन्धः सतां श्रेष्ठो यस्यार्योऽनुमते गतः ॥ २१
प्रेष्यं पापीयसां यातु सूर्यं च प्रति मेहतु । हन्तु पादेन गां सुप्तां यस्यार्योऽनुमते गतः ॥ २२
कारयित्वा महत् कर्म भर्ता भृत्यमनर्थकम् । अधर्मो योऽस्य सोऽस्यास्तु यस्यार्योऽनुमते गतः ॥ २३
परिपालयमानस्य राज्ञो भूतानि पुत्रवत् । ततस्तु द्रुह्यतां पापं यस्यार्योऽनुमते गतः ॥ २४
बलिषड्भागमुद्धृत्य नृपस्यारक्षतः प्रजाः । अधर्मो यस्तु सोऽस्यास्तु यस्यार्योऽनुमते गतः ॥ २५
संश्रुत्य च तपस्विभ्यः सत्रे वै यज्ञदक्षिणाम् । तां विप्रलपतां पापं यस्यार्योऽनुमते गतः ॥ २६
हस्त्यश्वरथसंबाधे युद्धे शस्त्रसमाकुले । मा स्म कार्षीत् सतां धर्मं यस्यार्योऽनुमते गतः ॥ २७
उपदिष्टं सुसूक्ष्मार्थं शास्त्रं यत्नेन धीमता । स नाशयतु दुष्टात्मा यस्यार्योऽनुमते गतः ॥ २८
मा च तं व्यूढबाह्वंसं चन्द्रार्कसमतेजसम् । द्राक्षीद्राज्यस्थमासीनं यस्यार्योऽनुमते गतः ॥ २९
पायसं कृसरं छागं वृथा सोऽश्नातु निर्घृणः । गुरूंश्चाप्यवजानातु यस्यार्योऽनुमते गतः ॥ ३०
गाश्च[1] स्पृशतु पादेन गुरून् परिवदेत् स्वयम् । मित्रे द्रुह्येत सोऽत्यन्तं यस्यार्योऽनुमते गतः ॥ ३१
विश्वासात् कथितं किंचित् परिवादं मिथः क्वचित् । विवृणोतु स दुष्टात्मा यस्यार्योऽनुमते गतः ॥ ३२
अकर्ता ह्यकृतज्ञश्च त्यक्तात्मा निरपत्रपः । लोके भवतु विद्वेष्यो यस्यार्योऽनुमते गतः ॥ ३३
पुत्रैर्दारैश्च भृत्यैश्च स्वगृहे परिवारितः । स एको मृष्टमश्नातु यस्यार्योऽनुमते गतः ॥ ३४
अप्राप्य सदृशान् दारानपत्यः प्रमीयताम् । अनवाप्य क्रियां धर्म्यां यस्यार्योऽनुमते गतः ॥ ३५
मात्मनः संततिं द्राक्षीत् स्वेषु दारेषु दुःखितः । आयुः समग्रमप्राप्य यस्यार्योऽनुमते गतः ॥ ३६
राजस्त्रीबालवृद्धानां वधे यत् पापमुच्यते । भृत्यत्यागे च यत् पापं तत् पापं प्रतिपद्यताम् ॥ ३७
लाक्षया मधुमांसेन लोहेन च विषेण च । सदैव बिभृयाद्भृत्यान्[2] यस्यार्योऽनुमते गतः ॥ ३८
संग्रामे समुपोढे तु शत्रुपक्षभयंकरे । पलायमानो वध्येत यस्यार्योऽनुमते गतः[2] ॥ ३९
कपालपाणिः पृथिवीमटतां चीरसंवृतः । भिक्षमाणो यथोन्मत्तो यस्यार्योऽनुमते गतः ॥ ४०
मद्ये प्रसक्तो भवतु स्त्रीष्वक्षेषु च नित्यशः । कामक्रोधाभिभूतस्तु यस्यार्योऽनुमते गतः ॥ ४१

---

1 बहुभिर्वाक्यैः सूचिनेव व्रणे विद्ध्वा, मर्मस्थितो विव्यथे इति योजना ।

2 भृत्यान् भरणाय न दारादीन्

१. गवाम ग.

२. ३९-४०-श्लोकौ क. न स्तः ।

मा स्म धर्मे मनो भूयादधर्मं स निषेवताम् । अपात्रवर्षी भवतु यस्यार्योऽनुमते गतः ॥ ४२

संचितान्यस्य वित्तानि विविधानि सहस्रशः । दस्युभिर्विप्रलुप्यन्तां यस्यार्योऽनुमते गतः ॥ ४३

उभे सन्ध्ये शयानस्य यत् पापं परिकल्प्यते । तच्च पापं भवेत्तस्य यस्यार्योऽनुमते गतः ॥ ४४

यदग्निदायके पापं यत् पापं गुरुतल्पगे । मित्रद्रोहे च यत् पापं तत् पापं प्रतिपद्यताम् ॥ ४५

देवतानां पितॄणां च मातापित्रोस्तथैव च । मा स्म कार्षीत् स शुश्रूषां यस्यार्योऽनुमते गतः ॥ ४६

सतां लोकात् सतां कीर्त्याः सज्जुष्टात् कर्मणस्तथा । भ्रश्यतु क्षिप्रमद्यैव यस्यार्योऽनुमते गतः ॥ ४७

अपास्य मातृशुश्रूषामनर्थे सोऽवतिष्ठताम् । दीर्घबाहुर्महावक्षा यस्यार्योऽनुमते गतः ॥ ४८

बहुपुत्रो दरिद्रश्च ज्वररोगसमन्वितः । समायात् सततं क्लेशी यस्यार्योऽनुमते गतः ॥ ४९

आशामाशंसमानानां दीनानामूर्ध्वचक्षुषाम् । अर्थिनां वितथां कुर्याद्यस्यार्योऽनुमते गतः ॥ ५०

मायया रमतां नित्यं परुषः पिशुनोऽशुचिः । राज्ञो भीतस्त्वधर्मात्मा यस्यार्योऽनुमते गतः ॥ ५१

ऋतुस्नातां सतीं भार्यामृतुकालानुरोधिनीम् । अतिवर्तेत दुष्टात्मा यस्यार्योऽनुमते गतः ॥ ५२

धर्मदारान् परित्यज्य परदारान्निषेवताम् । त्यक्तधर्मरतिर्मूढो यस्यार्योऽनुमते गतः ॥ ५३

विप्रलुप्तप्रजातस्य[1] दुष्कृतं ब्राह्मणस्य यत् । तदेतत् प्रतिपद्येत यस्यार्योऽनुमते गतः ॥ ५४

पानीयदूषके पापं तथैव विषदायके । यत्तदेकः स लभतां यस्यार्योऽनुमते गतः ॥ ५५

ब्राह्मणायोद्यतां पूजां विहन्तु कलुषेन्द्रियः । बालवत्सां च गां दोग्धु यस्यार्योऽनुमते गतः ॥ ५६

तृषार्तं सति पानीये विप्रलम्भेन योजयन् । यत् पापं लभते तत् स्यात् यस्यार्योऽनुमते गतः ॥ ५७

भक्त्या विवदमानेषु मार्गमाश्रित्य पश्यतः । तस्य पापेन युज्येत यस्यार्योऽनुमते गतः ॥ ५८

विहीनां पतिपुत्राभ्यां कौसल्यां पार्थिवात्मजः । एवमाश्वासयन्नेव दुःखार्तो निपपात ह ॥ ५९

तथा तु शपथैः कष्टैः शपमानमचेतनम् । भरतं शोकसंतप्तं कौसल्या वाक्यमब्रवीत् ॥ ६०

मम दुःखमिदं पुत्र भूयः समुपजायते । शपथैः शपमानो हि प्राणानुपरुणत्सि मे ॥ ६१

दिष्ट्या न चलितो धर्मादात्मा ते सहलक्ष्मणः[2] । वत्स सत्यप्रतिज्ञो मे सतां लोकानवाप्स्यसि ॥ ६२

इत्युक्त्वा चाङ्कमानीय भरतं भ्रातृवत्सलम् । परिष्वज्य महाबाहुं रुरोद भृशदुःखिता ॥ ६३

एवं विलपमानस्य दुःखार्तस्य महात्मनः । मोहाच्च शोकसंरोधाद्बभूव लुलितं मनः ॥ ६४

लालप्यमानस्य विचेतनस्य प्रनष्टबुद्धेः पतितस्य भूमौ ।
मुहुर्मुहुर्निःश्वसतश्च दीर्घं[1] सा तस्य शोकेन जगाम रात्रिः ॥ ६५

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
अयोध्याकाण्डे भरतशपथो नाम पञ्चसप्ततितमः सर्गः

---

1. विनश्यत्सन्तानस्येत्यर्थः ।

2. सहलक्षणः शुभैर्लक्षणैः सहितः । अत एव सत्यप्रतिज्ञो भवथ इत्यर्थः ॥ तु सहलक्ष्मणस्त आत्मा सत्यप्रतिज्ञः, लक्ष्मणः त्वं च

धर्माच्च चलितः । सहलक्ष्मण इति च. छ. पाठे

१. धर्मम् च. छ.

## सट्सप्ततितमः सर्गः

### दशरथौर्ध्वदैहिकम्

तमेवं शोकसंतप्तं भरतं कैकयीसुतम् । उवाच वदतां श्रेष्ठो वसिष्ठः श्रेष्ठवागृषिः ॥ १

अलं शोकेन भद्रं ते राजपुत्र महायशः । प्राप्तकालं नरपतेः कुरु संयानमुत्तमम् ॥ २

वसिष्ठस्य वचः श्रुत्वा भरतो धारणां गतः । प्रेतकार्याणि सर्वाणि कारयामास धर्मवित् ॥ ३

उद्धृतं तैलसंक्लेदात् स तु भूमौ निवेशितम् । आपीतवर्णवदनं प्रसुप्तमिव भूपतिम् ॥ ४

संवेश्य शयने चाग्र्ये नानारत्नपरिष्कृते । ततो दशरथं पुत्रो विललाप सुदुःखितः ॥ ५

किं ते व्यवसितं राजन् प्रोषिते मय्यनागते । विवास्य रामं धर्मज्ञं लक्ष्मणं च महाबलम् ॥ ६

क्व यास्यसि महाराज हित्वेमं दुःखितं जनम् । हीनं पुरुषसिंहेन रामेणाक्लिष्टकर्मणा ॥ ७

योगक्षेमं तु ते राजन् कोऽस्मिन् कल्पयिता पुरे । त्वयि प्रयाते स्वस्तात रामे च वनमाश्रिते ॥ ८

विधवा पृथिवी राजंस्त्वया हीना न राजते । हीनचन्द्रेव रजनी नगरी प्रतिभाति माम् ॥ ९

एवं विलपमानं तं भरतं दीनमानसम् । अब्रवीद्वचनं भूयो वसिष्ठस्तु महामुनिः ॥ १०

प्रेतकार्याणि यान्यस्य कर्तव्यानि विशां पतेः । तान्यव्यग्रं महाबाहो क्रियन्तामविचारितम् ॥ ११

तथेति भरतो वाक्यं वसिष्ठस्याभिपूज्य तत् । ऋत्विक्पुरोहिताचार्यांस्त्वरयामास सर्वशः ॥ १२

ये त्वग्नयो नरेन्द्रस्य अग्न्यगाराद्बहिष्कृताः । ऋत्विग्भिर्याजकैश्चैव आह्रियन्त[२] यथाविधि ॥ १३

शिबिकायामथारोप्य राजानं गतचेतसम् । बाष्पकण्ठा विमनसस्तमूहुः परिचारकाः ॥ १४

हिरण्यं च सुवर्णं च वासांसि विविधानि च । प्रकिरन्तो जना मार्गे नृपतेरग्रतो ययुः ॥ १५

चन्दनागरुनिर्यासान् सरलं पद्मकं तथा । देवदारूणि चाहृत्य चितां चक्रुस्तथापरे ॥ १६

गन्धानुच्चावचांश्चान्यांस्तत्र दत्वाथ भूमिपम् । ततः संवेशयामासुश्चितामध्ये तमृत्विजः ॥ १७

तथा हुताशनं [1]दत्वा जेपुस्तस्य तदृत्विजः । जगुश्च ते यथाशास्त्रं तत्र सामानि सामगाः ॥ १८

शिबिकाभिश्च यानैश्च यथार्हं तस्य योषितः । नगरान्निर्ययुस्तत्र वृद्धैः परिवृतास्तदा ॥ १९

प्रसव्यं चापि तं चक्रुःऋत्विजोऽग्निचितं[2] नृपम् । स्त्रियश्च शोकसंतप्ताः कौसल्याप्रमुखास्तदा ॥ २०

क्रौञ्चीनामिव नारीणां निनादस्तत्र शुश्रुवे । आर्तानां करुणं काले क्रोशन्तीनां सहस्रशः ॥ २१

ततो रुदन्त्यो विवशा विलप्य च पुनः पुनः । यानेभ्यः सरयूतीरमवतेरुर्वराङ्गनाः ॥ २२

---

1. दत्वा भरतं दापयित्वा । १. धरणीं प्र.

2. अग्निचितम् अग्निपरीतम् अग्निचयन २. तेऽह्रूयन्त घ. छ.

यज्ञं कृतवन्तं वा ।

कृत्वोदकं ते भरतेन सार्धं नृपाङ्गना[1] मन्त्रिपुरोहिताश्च ।
पुरं प्रविश्याश्रुपरीतनेत्रा भूमौ दशाहं[2] व्यनयन्त दुःखम् ॥ २३

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
अयोध्याकाण्डे दशरथौर्ध्वदैहिकं नाम षट्सप्ततितमः सर्गः

---

## सप्तसप्ततितमः सर्गः

### भरतशत्रुघ्नविलापः

ततो दशाहेऽतिगते कृतशौचो नृपात्मजः । द्वादशेऽहनि संप्राप्ते श्राद्धकर्माण्यकारयत् ॥ १
ब्राह्मणेभ्यो ददौ रत्नं धनमन्नं च पुष्कलम्[१] । बास्तिकं बहुशुक्लं च गाश्चापि शतशस्तदा ॥ २
दासीदासं च यानं च वेश्मानि सुमहान्ति च । ब्राह्मणेभ्यो ददौ पुत्रो राज्ञस्तस्यौर्ध्वदैहिकम् ॥ ३
ततः प्रभातसमये दिवसेऽथ त्रयोदशे । विललाप महाबाहुर्भरतः शोककर्शितः ॥ ४
शब्दापिहितकण्ठस्तु शोधनार्थमुपागतः । चितामूले पितुर्वाक्यमिदमाह सुदुःखितः ॥ ५
तात यस्मिन्निसृष्टोऽहं त्वया भ्रातरि राघवे । तस्मिन् वनं प्रव्रजिते शून्ये त्यक्तोऽस्म्यहं त्वया ॥ ६
यस्या गतिरनाथायाः पुत्रः प्रव्राजितो वनम् । तामम्बां तात कौसल्यां त्यक्त्वा त्वं क्व गतो नृप ॥ ७
दृष्ट्वा भस्मारुणं तच्च दग्धास्थिस्थानमण्डलम् । पितुः शरीरनिर्वाणं निष्टनन्[3] विषसाद सः ॥ ८
स तु दृष्ट्वा रुदन् दीनः पपात धरणीतले । उत्थाप्यमानः शक्रस्य यन्त्रध्वज इव च्युतः ॥ ९
अभिपेतुस्ततः सर्वे तस्यामात्याः शुचिव्रतम् । अन्तकाले निपतितं ययातिमृषयो यथा ॥ १०
शत्रुघ्नश्चापि भरतं दृष्ट्वा शोकपरिप्लुतम् । विसंज्ञो न्यपतद्भूमौ भूमिपालमनुस्मरन् ॥ ११
उन्मत्त इव निश्चेता विललाप सुदुःखितः । स्मृत्वा पितुर्गुणाङ्गानि[4] तानि तानि तदा तदा ॥ १२
मन्थराप्रभवस्तीव्रः कैकेयीग्राहसंकुलः । वरदानमयोऽक्षोभ्योऽमज्जयच्छोकसागरः ॥ १३
सुकुमारं च बालं च सततं लालितं त्वया । क्व तात भरतं हित्वा विलपन्तं गतो भवान् ॥ १४
ननु भोज्येषु पानेषु वस्त्रेष्वाभरणेषु च । प्रवारयसि नः सर्वांस्तन्नः कोऽन्यः करिष्यति ॥ १५
अवदारणकाले तु पृथिवी नावदीर्यते । या विहीना त्वया राज्ञा धर्मज्ञेन महात्मना ॥ १६
पितरि स्वर्गमापन्ने रामे चारण्यमाश्रिते । किं मे जीवितसामर्थ्यं प्रवेक्ष्यामि हुताशनम् ॥ १७

---

1. स्त्रीणामप्युदकदानं केचित् सूत्रकारा— इच्छन्ति ।

2. दशाहं दशदिनव्यापि दुःखमाशौचं भूमौ न त्वासनेषु व्यवहरन्तो व्यनयन्त अगमयन् । क्षत्रियः षोडशेऽहनि शुध्यतीति वचनविरोधो नात्र शङ्कनीयः । स्वकर्मनिरतस्य शुचेः भरततुल्यस्य क्षत्रियस्यापि ब्राह्मणस्येव दशाहेनैव शुद्धिर्भवतीति अर्थविशेषविवक्षणात् । तथा च पराशरः—"क्षत्रियस्तु दशाहेन स्वकर्मनिरतः शुचिः"—इत्याह ।

3. निष्टनन् अतीव विलपन् ।

4. गुणाङ्गानि लालनगुणस्याङ्गानि ।

१. अस्यानन्तरम्—वासांसि च महार्हाणि रत्नानि विविधानि इति च. छ.

२. वास्तिक प्र.

हीनो भ्रात्रा च पित्रा च शून्यामिक्ष्वाकुपालिताम् । अयोध्यां न प्रवेक्ष्यामि प्रवेक्ष्यामि तपोवनम् ॥१८
तयोर्विलपितं श्रुत्वा व्यसनं चान्ववेक्ष्य तत् । भृशमार्ततरा भूयः सर्व एवानुगामिनः ॥ १९
ततो विषण्णौ शोचन्तौ शत्रुघ्नभरतावुभौ । धरण्यां संव्यचेष्टेतां भग्नशृङ्गाविवर्षभौ ॥ २०
ततः प्रकृतिमान् वैद्यः[1] पितुरेषां पुरोहितः । वसिष्ठो भरतं वाक्यमुत्थाप्य तमुवाच ह ॥ २१
त्रयोदशोऽयं दिवसः पितुर्वृत्तस्य ते विभो । सावशेषास्थिनिचये किमिह त्वं विलम्बसे ॥ २२
त्रीणि द्वन्द्वानि[2] भूतेषु प्रवृत्तान्यविशेषतः । तेषु चापरिहार्येषु नैवं भवितुमर्हसि ॥ २३
सुमन्त्रश्चापि शत्रुघ्नमुत्थाप्याभिप्रसाद्य च । श्रावयामास तत्त्वज्ञः सर्वभूतभवाभवौ ॥ २४
उत्थितौ च नरव्याघ्रौ प्रकाशेते यशस्विनौ । वर्षातपपरिक्लिन्नौ पृथगिन्द्रध्वजाविव ॥ २५
अक्षीणि परिमृद्नन्तौ रक्ताक्षौ दीनभाषिणौ । अमात्यास्त्वरयन्ति स्म तनयौ चापराः क्रियाः ॥ २६

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
अयोध्याकाण्डे भरतशत्रुघ्नविलापो नाम सप्तसप्ततितमः सर्गः

---

## अष्टसप्ततितमः सर्गः

### कुब्जाविक्षेपः

अथ यात्रां समीहन्तं शत्रुघ्नो लक्ष्मणानुजः । भरतं शोकसंतप्तमिदं वचनमब्रवीत् ॥ १
गतिर्यः सर्वभूतानां दुःखे किं पुनरात्मनः । स रामः सत्त्वसंपन्नः स्त्रिया प्रव्राजितो वनम् ॥ २
बलवान् वीर्यसंपन्नो लक्ष्मणो नाम योऽप्यसौ । किं न मोचयते रामं कृत्वापि पितृनिग्रहम् ॥ ३
पूर्वमेव तु निग्राह्यः समवेक्ष्य नयानयौ । उत्पथं यः समारूढो नार्या राजा वशं गतः ॥ ४
इति संभाषमाणे तु शत्रुघ्ने लक्ष्मणानुजे । प्राग्द्वारेऽभूत्तदा कुब्जा सर्वाभरणभूषिता ॥ ५
लिप्ता चन्दनसारेण राजवस्त्राणि बिभ्रती । विविधं विविधैस्तैस्तैर्भूषणैश्च विभूषिता ॥ ६
मेखलादामभिश्चित्रैरन्यैश्च शुभभूषणैः । बभासे बहुभिर्बद्धा रज्जुबद्धेव वानरी ॥ ७
तां समीक्ष्य तदा द्वाःस्थाः सुभृशं पापकारिणीम् । गृहीत्वाकरुणां कुब्जां शत्रुघ्नाय न्यवेदयन् ॥ ८
यस्याः कृते वने रामो न्यस्तदेहश्च वः पिता । सेयं पापा नृशंसा च तस्याः कुरु यथामति ॥ ९
शत्रुघ्नश्च तदाज्ञाय वचनं भृशदुःखितः । अन्तःपुरचरान् सर्वानित्युवाच धृतव्रतः ॥ १०
तीव्रमुत्पादितं दुःखं भ्रातृणां मे तथा पितुः । यया सेयं नृशंसस्य कर्मणः फलमश्नुताम् ॥ ११
एवमुक्त्वा तु तेनाशु सखीजनसमावृता । गृहीता बलवत् कुब्जा सा तद्गृहमनादयत् ॥ १२
ततः सुभृशसंतप्तस्तस्याः सर्वः सखीजनः । क्रुद्धमाज्ञाय शत्रुघ्नं व्यपलायत सर्वशः ॥ १३

---

1. विद्यां सर्वामप्यसौ वेदेति वैद्यः । इति त्रीणि द्वन्द्वानि ।
2. अशनायापिपासे, शोकमोहौ, जरामृत्यू

आमन्त्रयत कृत्स्नश्च तस्याः सर्वः सखीजनः। यथायं समुपक्रान्तो निःशेषान्नः करिष्यति ॥ १४
सानुक्रोशां वदान्यां च धर्मज्ञां च यशस्विनीम्। कौसल्यां शरणं याम सा हि नोऽस्तु ध्रुवा गतिः॥१५
स च रोषेण ताम्राक्षः शत्रुघ्नः शत्रुतापनः। विचकर्ष तदा कुब्जां क्रोशन्तीं धरणीतले ॥ १६
तस्या ह्याकृष्यमाणाया मन्थरायास्ततस्ततः। चित्रं बहुविधं भाण्डं पृथिव्यां तद्व्यशीर्यत ॥ १७
तेन भाण्डेन संकीर्णं श्रीमद्राजनिवेशनम्। अशोभत तदा भूयः शारदं गगनं यथा ॥ १८
स बली बलवत्क्रोधाद्गृहीत्वा पुरुषर्षभः। कैकेयीमभिनिर्भर्त्स्य बभाषे परुषं वचः ॥ १९
तैर्वाक्यैः परुषैर्दुःखैः कैकेयी भृशदुःखिता। शत्रुघ्नभयसंत्रस्ता पुत्रं शरणमागता ॥ २०
तां प्रेक्ष्य भरतः क्रुद्धं शत्रुघ्नमिदमब्रवीत्। अवध्याः सर्वभूतानां प्रमदाः क्षम्यतामिति ॥ २१
हन्यामहमिमां पापां कैकेयीं दुष्टचारिणीम्। यदि मां धार्मिको रामो नासूयेन्मातृघातकम् ॥ २२
इमामपि हतां कुब्जां यदि जानाति राघवः। त्वां च मां च हि धर्मात्मा नाभिभाषिष्यते ध्रुवम् ॥ २३
भरतस्य वचः श्रुत्वा शत्रुघ्नो लक्ष्मणानुजः। न्यवर्तत ततो रोषात्तां मुमोच च मन्थराम् ॥ २४
सा पादमूले कैकेय्या मन्थरा निपपात ह। निःश्वसन्ती सुदुःखार्ता कृपणं विललाप च ॥ २५

शत्रुघ्नविक्षेपविमूढसंज्ञां समीक्ष्य कुब्जां भरतस्य माता।
शनैः समाश्वासयदार्तरूपां क्रौञ्चीं विलग्नामिव वीक्षमाणाम् ॥ २६

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
अयोध्याकाण्डे कुब्जाविक्षेपो नाम अष्टसप्ततितमः सर्गः

---

## एकोनाशीतितमः सर्गः

### सचिवप्रार्थनाप्रतिषेधः

ततः प्रभातसमये दिवसे च चतुर्दशे। समेत्य राजकर्तारो भरतं वाक्यमब्रुवन् ॥ १
गतो दशरथः स्वर्गं यो नो गुरुतरो गुरुः। रामं प्रव्राज्य वै ज्येष्ठं लक्ष्मणं च महाबलम् ॥ २
त्वमद्य भव नो राजा राजपुत्र महायशः। संगत्या[1] नापराध्नोति राज्यमेतदनायकम् ॥ ३
आभिषेचनिकं सर्वमिदमादाय राघव। प्रतीक्षते त्वां स्वजनः श्रेणयश्च नृपात्मज ॥ ४
राज्यं गृहाण भरत पितृपैतामहं ध्रुवम्। अभिषेचय चात्मानं पाहि चास्मान्नरर्षभ[१] ॥ ५
आभिषेचनिकं भाण्डं कृत्वा सर्वं प्रदक्षिणम्। भरतस्तं जनं सर्वं प्रत्युवाच धृतव्रतः ॥ ६
ज्येष्ठस्य राजता नित्यमुचिता हि कुलस्य नः। नैवं भवन्तो मां वक्तुमर्हन्ति कुशला जनाः ॥ ७
रामः पूर्वो हि नो भ्राता भविष्यति महीपतिः। अहं त्वरण्ये वत्स्यामि वर्षाणि नव पञ्च च ॥ ८

1. संगत्या न्यायेन राज्यं कुर्वन्नपि भवान्नापराध्यति।

१. अस्यानन्तरम्—एवमुक्तः शुभं वाक्यं द्युतिमान् सत्यवाक् शुचिः—इति ख. छ.

युज्यतां महती सेना चतुरङ्गमहाबला । आनयिष्याम्यहं ज्येष्ठं भ्रातरं राघवं वनात् ॥ ९
आभिषेचनिकं चैव सर्वमेतदुपस्कृतम् । पुरस्कृत्य गमिष्यामि रामहेतोर्वनं प्रति ॥ १०
तत्रैव तं नरव्याघ्रमभिषिच्य पुरस्कृतम् । आनयिष्यामि वै रामं हव्यवाहमिवाध्वरात् ॥ ११
न सकामां करिष्यामि स्वामिमां मातृगन्धिनीम्[1] । वने वत्स्याम्यहं दुर्गे रामो राजा भविष्यति ॥ १२
क्रियतां शिल्पिभिः पन्थाः समानि विषमाणि च । रक्षिणश्चानुसंयान्तु पथि दुर्गविचारकाः ॥ १३
एवं संभाषमाणं तं रामहेतोर्नृपात्मजम् । प्रत्युवाच जनः सर्वः श्रीमद्वाक्यमनुत्तमम् ॥ १४
एवं ते भाषमाणस्य पद्मा श्रीरुपतिष्ठताम् । यस्त्वं ज्येष्ठे नृपसुते पृथिवीं दातुमिच्छसि ॥ १५

अनुत्तमं तद्वचनं नृपात्मजप्रभाषितं संश्रवणे निशम्य च ।
प्रहर्षजास्तं प्रति बाष्पबिन्दवो निपेतुरार्याननेत्रसंभवाः ॥ १६
ऊचुस्ते वचनमिदं निशम्य हृष्टाः सामात्याः सपरिषदो वियातशोकाः ।
पन्थानं नरवर भक्तिमाञ्जनश्च व्यादिष्टस्तव वचनाच्च शिल्पिवर्गः ॥ १७

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
अयोध्याकाण्डे सचिवप्रर्थनाप्रतिषेधो नाम एकोनाशीतितमः सर्गः

---

## अशीतितमः सर्गः

### मार्गसंस्कारः

अथ भूमिप्रदेशज्ञाः सूत्रकर्मविशारदाः । स्वकर्माभिरताः शूराः खनका यन्त्रकास्तथा ॥ १
कर्मान्तिकाः[2] स्थपतयः पुरुषा यन्त्रकोविदाः । तथा वर्धकयश्चैव मार्गिणो वृक्षतक्षकाः ॥ २
[१]कूपकाराः सुधाकारा [२]वंशकर्मकृतस्तथा । समर्था ये च द्रष्टारः पुरतस्ते प्रतस्थिरे ॥ ३
स तु हर्षात्तमुद्देशं जनौघो विपुलः प्रयान् । अशोभत महावेगः समुद्र इवं पर्वणि ॥ ४
ते स्ववारं समास्थाय वर्त्मकर्मणि कोविदाः । करणैर्विविधोपेतैः पुरस्तात् संप्रतस्थिरे ॥ ५
लता वल्लीश्च गुल्मांश्च स्थाणूनश्मन एव च । जनयाँचक्रिरे मार्गं छिन्दन्तो विविधान् द्रुमान् ॥ ६
अवृक्षेषु च देशेषु केचिद्वृक्षानरोपयन् । केचित् कुठारैष्टङ्कैश्च दात्रैश्छिन्दन् क्वचित् क्वचित् ॥ ७
अपरे वीरणस्तम्बान् बलिनो बलवत्तराः । विधमन्ति स्म दुर्गाणि स्थलानि च ततस्ततः ॥ ८
अपरेऽपूरयन् कूपान् पांसुभिः श्वभ्रमायतम् । निम्नभागांस्ततः केचित् समांश्चक्रुः समन्ततः ॥ ९

---

1. मातृस्वभाववासितामित्यर्थः । स्वकीयां मातरमिव स्वार्थप्रधानामिति यावत् । व्यपदेशमात्रेण मातरम् इति तु व्याख्यातारः ।
2. कर्मान्तिकाः वेतनजीविनः ।

१. सूप॰ प्र.
२. वंशचर्म प्र.
३. सागरस्येव क.
४. जनाश्च प्र.

बबन्धुर्बन्धनीयांश्च क्षोद्यान् संचुक्षुदुस्तदा । बिभिदुर्भेदनीयांश्च तांस्तान् देशान्नरास्तदा[1] ॥ १०
अचिरेणैव कालेन परिवाहान् बहूदकान् । चक्रुर्बहुविधाकारान् सागरप्रतिमान् बहून् ॥ ११
निर्जलेषु च देशेषु खानयामासुरुत्तमान् । उदपानान् बहुविधान् वेदिकापरिमण्डितान् ॥ १२
स सुधाकुट्टिमतलः प्रपुष्पितमहीरुहः । मत्तोद्घुष्टद्विजगणः पताकाभिरलंकृतः ॥ १३
चन्दनोदकसंसिक्तो नानाकुसुमभूषितः । बह्वशोभत सेनायाः पन्थाः सुरपथोपमः ॥ १४
आज्ञाप्याथ यथाज्ञप्ति युक्तास्तेऽधिकृता नराः । रमणीयेषु देशेषु बहुस्वादुफलेषु च ॥ १५
यो निवेशस्त्वभिमतो भरतस्य महात्मनः । भूयस्तं शोभयामासुर्भूषाभिर्भूषणोपमम् ॥ १६
नक्षत्रेषु प्रशस्तेषु मुहूर्तेषु च तद्विदः । निवेशान् स्थापयामासुर्भरतस्य महात्मनः ॥ १७
बहुपांसुचयाश्चापि परिखापरिवारिताः । तत्रेन्द्रनीलप्रतिमाः प्रतोलीवरशोभिताः ॥ १८
प्रासादमालाविततः सौधप्राकारसंवृताः । पताकाशोभिताः सर्वे सुनिर्मितमहापथाः ॥ १९
वितर्दिभिरिवाकाशे विटङ्काग्रविमानकैः । समुच्छ्रितैर्निवेशास्ते बभुः शक्रपुरोपमाः ॥ २०
जाह्नवीं तु समासाद्य विविधद्रुमकाननाम् । शीतलामलपानीयां महामीनसमाकुलाम् ॥ २१

सचन्द्रतारागणमण्डितं यथा नभः क्षपायाममलं विराजते ।
नरेन्द्रमार्गः स तथा व्यराजत क्रमेण रम्यः शुभशिल्पिनिर्मितः ॥ २२

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
अयोध्याकाण्डे मार्गसंस्कारो नाम अशीतितमः सर्गः

---

## एकाशीतितमः सर्गः

### सभास्थानम्

ततो नान्दीमुखीं[1] रात्रिं भरतं सूतमागधाः । तुष्टुवुर्वाग्विशेषज्ञाः स्तवैर्मङ्गलसंहितैः ॥ १
सुवर्णकोणाभिहतः प्राणदद्यामदुन्दुभिः । दध्मुः शङ्खांश्च शतशो वाद्यांश्चोच्चावचस्वरान् ॥ २
स तूर्यघोषः सुमहान् दिवमापूरयन्निव । भरतं शोकसंतप्तं भूयः शोकैररन्ध्रयत् ॥ ३
ततः प्रबुद्धो भरतस्तं घोषं संनिवर्त्य च । नाहं राजेति चाप्युक्त्वा शत्रुघ्नमिदमब्रवीत् ॥ ४
पश्य शत्रुघ्न कैकेय्या लोकस्यापकृतं महत् । विसृज्य मयि दुःखानि राजा दशरथो गतः ॥ ५
तस्यैषा धर्मराजस्य धर्ममूला महात्मनः । परिभ्रमति राजश्रीर्नौरिवाकर्णिका जले ॥ ६
यो हि नः सुमहान्नाथः सोऽपि प्रव्राजितो वनम् । अनया धर्ममुत्सृज्य मात्रा मे राघवः स्वयम् ॥ ७
इत्येवं भरतं प्रेक्ष्य विलपन्तं विचेतनम् । कृपणं रुरुदुः सर्वाः सस्वरं योषितस्तदा ॥ ८
तथा तस्मिन् विलपति वसिष्ठो राजधर्मवित् । सभामिक्ष्वाकुनाथस्य प्रविवेश महायशाः ॥ ९

---

1. शोकापनोदाय कृताभ्युदयामित्यर्थः ।     १. इदं पद्यम् ग. नास्ति ।

शातकुम्भमयीं रम्यां मणिरत्नसमाकुलाम् । सुधर्मामिव धर्मात्मा सगणः प्रत्यपद्यत ॥ १०

स काञ्चनमयं पीठं परार्ध्यास्तरणावृतम् । अध्यास्त सर्ववेदज्ञो दूताननुशशास च ॥ ११

ब्राह्मणान् क्षत्रियान् वैश्यानमात्यान् गणवल्लभान् । क्षिप्रमानयताव्यग्राः कृत्यमात्ययिकं हि नः ॥

सराजपुत्रं शत्रुघ्नं भरतं च यशस्विनम् । युधाजितं सुमन्त्रं च ये च तत्र हिता जनाः ॥ १३

ततो हलहलाशब्दः सुमहान् समपद्यत । रथैरश्वैर्गजैश्चापि जनानामुपगच्छताम् ॥ १४

ततो भरतमायान्तं शतक्रतुमिवामराः । प्रत्यनन्दन् प्रकृतयो यथा दशरथं तथा ॥ १५

ह्रद इव तिमिनागसंवृतः स्तिमितजलो मणिशङ्खशर्करः ।

दशरथसुतशोभिता सभा सदशरथेव बभौ यथा पुरा ॥ १६

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्

अयोध्याकाण्डे सभास्थानं नाम एकाशीतितमः सर्गः

---

## द्व्यशीतितमः सर्गः

### सेनाप्रस्थापनम्

तामार्यगणसंपूर्णां भरतः प्रग्रहां[1] सभाम् । ददर्श बुद्धिसंपन्नः पूर्णचन्द्रो निशामिव ॥ १

आसनानि यथान्यायमार्याणां विशतां तदा । वस्त्राङ्गरागप्रभया द्योतिता सा सभोत्तमा ॥ २

सा विद्वज्जनसंपूर्णा सभा सुरुचिरा तदा । अदृश्यत घनापाये पूर्णचन्द्रेव शर्वरी ॥ ३

राज्ञस्तु प्रकृतीः सर्वाः समग्राः प्रेक्ष्य धर्मवित् । इदं पुरोहितो वाक्यं भरतं मृदु चाब्रवीत् ॥ ४

तात राजा दशरथः स्वर्गतो धर्ममाचरन् । धनधान्यवतीं स्फीतां प्रदाय पृथिवीं तव ॥ ५

रामस्तथा सत्यधृतिः सतां धर्ममनुस्मरन् । नाजहात् पितुरादेशं शशी ज्योत्स्नामिवोदितः ॥ ६

पित्रा भ्रात्रा च ते दत्तं राज्यं निहतकण्टकम् । तद्भुङ्क्ष्व मुदितामात्यः क्षिप्रमेवाभिषेचय ॥ ७

उदीच्याश्च प्रतीच्याश्च दाक्षिणात्याश्च केवलाः । कोट्यापरान्ताः सामुद्रा रत्नान्यभिहरन्तु ते ॥ ८

तच्छ्रुत्वा भरतो वाक्यं शोकेनाभिपरिप्लुतः । जगाम मनसा रामं धर्मज्ञो धर्मकाङ्क्षया ॥ ९

स बाष्पकलया वाचा कलहंसस्वरो युवा । विललाप सभामध्ये जगर्हे च पुरोहितम् ॥ १०

चरितब्रह्मचर्यस्य विद्यास्नातस्य धीमतः । धर्मे प्रयतमानस्य को राज्यं मद्विधो हरेत् ॥ ११

कथं दशरथाज्जातो भवेद्राज्यापहारकः । राज्यं चाहं च रामस्य धर्मं वक्तुमिहार्हसि ॥ १२

ज्येष्ठः श्रेष्ठश्च धर्मात्मा दिलीपनहुषोपमः । लब्धुमर्हति काकुत्स्थो राज्यं दशरथो यथा ॥ १३

अनार्यजुष्टमस्वर्ग्यं कुर्यां पापमहं यदि । इक्ष्वाकूणामहं लोके भवेयं कुलपांसनः ॥ १४

यद्धि मात्रा कृतं पापं नाहं तदपि रोचये । इहस्थो वनदुर्गस्थं नमस्यामि कृताञ्जलिः ॥ १५

---

1. प्रकृष्टैर्वसिष्ठादिभिर्गृहीताम् अधिष्ठितामित्यर्थः । अलङ्घ्यनियमसंपन्नामिति वा ।

स धन्यो यस्य पुत्रौ द्वौ धर्मज्ञौ धर्मविक्रमौ । श्रुत्वा वयं हि संभाषामुभाभ्यां[1] स्पृहयामहे ॥ ३
ततस्त्वृषिगणाः क्षिप्रं दशग्रीववधैषिणः । भरतं राजशार्दूलमित्यूचुः संगता वचः ॥ ४
कुलेजात महाप्राज्ञ महावृत्त महायशः । ग्राह्यं रामस्य वाक्यं ते पितरं यद्यवेक्षसे ॥ ५
सदानृणमिमं रामं वयमिच्छामहे पितुः । अनृणत्वाच्च कैकेय्याः स्वर्गं दशरथो गतः ॥ ६
एतावदुक्त्वा वचनं गन्धर्वाः समहर्षयः । राजर्षयश्चैव तदा सर्वे स्वां स्वां गतिं गताः ॥ ७
ह्लादितस्तेन वाक्येन शुभेन शुभदर्शनः । रामः संहृष्टवदनस्तानृषीनभ्यपूजयत् ॥ ८
त्रस्तगात्रस्तु भरतः स वाचा सज्जमानया । कृताञ्जलिरिदं वाक्यं राघवं पुनरब्रवीत् ॥ ९
राजधर्ममनुप्रेक्ष्य कुलधर्मानुसंततिम् । कर्तुमर्हसि काकुत्स्थ मम मातुश्च याचनाम् ॥ १०
रक्षितुं सुमहद्राज्यमहमेकस्तु नोत्सहे । पौरजानपदांश्चापि रक्तान् रञ्जयितुं तथा ॥ ११
ज्ञातयश्च हि योधाश्च मित्राणि सुहृदश्च नः । त्वामेव प्रतिकाङ्क्षन्ते पर्जन्यमिव कर्षकाः ॥ १२
इदं राज्यं महाप्राज्ञ स्थापय प्रतिपद्य हि । शक्तिमानसि काकुत्स्थ लोकस्य परिपालने ॥ १३
इत्युक्त्वा न्यपतद्भ्रातुः पादयोर्भरतस्तदा । भृशं संप्रार्थयामास राममेव प्रियंवदः ॥ १४
तमङ्के भ्रातरं कृत्वा रामो वचनमब्रवीत् । श्यामं नलिनपत्राक्षं मत्तहंसस्वरः स्वयम् ॥ १५
आगता त्वामियं बुद्धिः स्वजा वैनयिकी च या । भृशमुत्सहसे तात रक्षितुं पृथिवीमपि ॥ १६
अमात्यैश्च सुहृद्भिश्च बुद्धिमद्भिश्च मन्त्रिभिः । सर्वकार्याणि संमन्त्र्य सुमहान्त्यपि कारय ॥ १७
लक्ष्मीश्चन्द्रादपेयाद्वा हिमवान् वा हिमं त्यजेत् । अतीयात् सागरो वेलां न प्रतिज्ञामहं पितुः ॥ १८
कामाद्वा तात लोभाद्वा मात्रा तुभ्यमिदं कृतम् । न तन्मनसि कर्तव्यं वर्तितव्यं च मातृवत् ॥ १९
एवं ब्रुवाणं भरतः कौसल्यासुतमब्रवीत् । तेजसादित्यसंकाशं प्रतिपच्चन्द्रदर्शनम् ॥ २०
अधिरोहार्य पादाभ्यां पादुके हेमभूषिते । एते हि सर्वलोकस्य योगक्षेमं विधास्यतः ॥ २१
सोऽधिरुह्य नरव्याघ्रः पादुके व्यवमुच्य[2] च । प्रायच्छत् सुमहातेजा भरताय महात्मने ॥ २२
स पादुके संप्रणम्य रामं वचनमब्रवीत् । चतुर्दश हि वर्षाणि जटाचीरधरो ह्यहम् ॥ २३
फलमूलाशनो वीर भवेयं रघुनन्दन । तवागमकनमाकाङ्क्षन् वसन वै नगराद्बहिः ॥ २४
तव पादुकयोर्न्यस्य राज्यतन्त्रं परंतप । चतुर्दशे हि संपूर्णे वर्षेऽहनि रघूत्तम ॥ २५
न द्रक्ष्यामि यदि त्वां तु प्रवेक्ष्यामि हुताशनम् । तथेति च प्रतिज्ञाय तं परिष्वज्य सादरम् ॥ २६
शत्रुघ्नं च परिष्वज्य भरतं चेदमब्रवीत् । मातरं रक्ष कैकेयीं मा रोषं कुरु तां प्रति ॥ २७
मया च सीतया चैव शप्तोऽसि रघुसत्तम । इत्युक्त्वाश्रुपरीताक्षो भ्रातरं विससर्ज ह ॥ २८

स पादुके ते भरतः प्रतापवान् स्वलंकृते संपरिगृह्य धर्मवित् ।
प्रदक्षिणं चैव चकार राघवं चकार चैवोत्तमनागमूर्धनि ॥ २९

---

१. उभयोः च. ७.  २. ह्यवरुह्य च. छ.

अथानुपूर्व्यात् प्रतिनन्द्य तं जनं गुरूंश्च मन्त्रिप्रकृतीस्तथानुजौ ।
व्यसर्जयद्राघववंशवर्धनः स्थिरः स्वधर्मे हिमवानिवाचलः ॥ ३०
तं मातरो बाष्पगृहीतकण्ठ्यो दुःखेन नामन्त्रयितुं हि शेकुः ।
स त्वेव मातृरभिवाद्य सर्वा रुदन् कुटीं स्वां प्रविवेश रामः ॥ ३१

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायाम् संहितायाम्
अयोध्याकाण्डे पादुकाप्रदानं नाम द्वादशाधिकशततमः सर्गः

---

## त्रयोदशाधिकशततमः सर्गः

### पादुकाग्रहणम्

ततः शिरसि कृत्वा तु पादुके भरतस्तदा । आरुरोह रथं हृष्टः शत्रुघ्नेन समन्वितः ॥ १
वसिष्ठो वामदेवश्च जाबालिश्च दृढव्रतः । अग्रतः प्रययुः सर्वे मन्त्रिणो मन्त्रपूजिताः ॥ २
मन्दाकिनीं नदीं पुण्यां प्राङ्मुखास्ते ययुस्तदा । प्रदक्षिणं च कुर्वाणाश्चित्रकूटं महागिरिम् ॥ ३
पश्यन् धातुसहस्राणि रम्याणि विविधानि च । प्रययौ तस्य पार्श्वेन ससैन्यो भरतस्तदा[1] ॥ ४
अदूराच्चित्रकूटस्य ददर्श भरतस्तदा । आश्रमं यत्र स मुनिर्भरद्वाजः कृतालयः ॥ ५
स तमाश्रममागम्य भरद्वाजस्य बुद्धिमान् । अवतीर्य रथात् पादौ ववन्दे कुलनन्दनः ॥ ६
ततो हृष्टो भरद्वाजो भरतं वाक्यमब्रवीत् । अपि कृत्यं कृतं तात रामेण च समागतम् ॥ ७
एवमुक्तस्तु भरतो भरद्वाजेन धीमता । प्रत्युवाच भरद्वाजं भरतो भ्रातृवत्सलः ॥ ८
स याच्यमानो गुरुणा मया च दृढविक्रमः । राघवः परमप्रीतो वसिष्ठं वाक्यमब्रवीत् ॥ ९
पितुः प्रतिज्ञां तामेव पालयिष्यामि तत्त्वतः । चतुर्दश हि वर्षाणि या प्रतिज्ञा पितुर्मम ॥ १०
एवमुक्तो महाप्राज्ञो वसिष्ठः प्रत्युवाच ह । वाक्यज्ञो वाक्यकुशलं राघवं वचनं महत् ॥ ११
एते प्रयच्छ संहृष्टः पादुके हेमभूषिते । अयोध्यायां महाप्राज्ञ योगक्षेमकरे तव ॥ १२
एवमुक्तो वसिष्ठेन राघवः प्राङ्मुखः स्थितः । पादुके अधिरुह्यैते मम राज्याय वै ददौ ॥ १३
निवृत्तोऽहमनुज्ञातो रामेण सुमहात्मना । अयोध्यामेव गच्छामि गृहीत्वा पादुके शुभे ॥ १४
एतच्छ्रुत्वा शुभं वाक्यं भरतस्य महात्मनः । भरद्वाजः शुभतरं मुनिर्वाक्यमुवाच तम् ॥ १५
नैतच्चित्रं नरव्याघ्रे शीलवृत्तविदां वरे[2] । यदार्यं त्वयि तिष्ठेत्तु निम्नोत्सृष्टमिवोदकम् ॥ १६
अनृणः[3] स महाबाहुः पिता दशरथस्तव । यस्य त्वमीदृशः पुत्रो धर्मज्ञो धर्मवत्सलः ॥ १७
तमृषिं तु महात्मानमुक्तवाक्यं कृताञ्जलिः । आमन्त्रयितुमारेभे चरणावुपगृह्य च ॥ १८

---

१. प्रदक्षिणमित्यादि भरतस्तदा इत्यन्तम् क. नास्ति ।

२. अस्य स्थाने—नैतच्चित्रं नरव्याघ्र शील- वृत्तवता वर—इति च.

३. अमृतः च. छ.

ततः प्रदक्षिणं कृत्वा भरद्वाजं पुनः पुनः । भरतस्तु ययौ श्रीमानयोध्यां सह मन्त्रिभिः ॥ १९
यानैश्च शकटैश्चैव हयैर्नागैश्च सा चमूः । पुनर्निवृत्ता विस्तीर्णा भरतस्यानुयायिनी ॥ २०
ततस्ते यमुनां दिव्यां नदीं तीर्त्वोर्मिमालिनीम् । ददृशुस्तां पुनः सर्वे गङ्गां शुभजलां नदीम् ॥ २१
तां पुण्यजलसंपूर्णां संतीर्य सहबान्धवः । शृङ्गिबेरपुरं रम्यं प्रविवेश ससैनिकः ॥ २२
शृङ्गिबेरपुराद्भूयस्त्वयोध्यां संददर्श ह । अयोध्यां च ततो दृष्ट्वा पित्रा भ्रात्रा विवर्जिताम् ॥ २३
भरतो दुःखसंतप्तः सारथिं चेदमब्रवीत् । सारथे पश्य विध्वस्ता सायोध्या न प्रकाशते ॥ २४
निराकारा निरानन्दा दीना प्रतिहतस्वना ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
अयोध्याकाण्डे पादुकाग्रहणं नाम त्रयोदशाधिकशततमः सर्गः

---

## चतुर्दशाधिकशततमः सर्गः

### अयोध्याप्रवेशः

स्निग्धगम्भीरघोषेण स्यन्दनेनोपयान् प्रभुः । अयोध्यां भरतः क्षिप्रं प्रविवेश महायशाः ॥ १
बिडालोलूकचरितामालीननरवारणाम् । तिमिराभ्याहतां कालीमप्रकाशां निशामिव ॥ २
राहुशत्रोः प्रियां पत्नीं श्रिया प्रज्वलितप्रभाम् । ग्रहेणाभ्युदितेनैकां रोहिणीमिव पीडिताम् ॥ ३
अनिलोत्क्षुब्धसलिलां घर्मोत्तप्तविहङ्गमाम् । लीनमीनझषग्राहां कृशां गिरिनदीमिव ॥ ४
विधूमामिव हेमाभामध्वराग्नेः समुत्थिताम् । हविरभ्युक्षितां पश्चाच्छिखां प्रविलयं गताम् ॥ ५
विध्वस्तकवचां रुग्णगजवाजिरथध्वजाम् । हतप्रवीरामापन्नां चमूमिव महाहवे ॥ ६
सफेनां सस्वनां भूत्वा सागरस्य समुत्थिताम् । प्रशान्तमारुतोद्धूतां जलोर्मिमिव निःस्वनाम् ॥ ७
त्यक्तां यज्ञायुधैः सर्वैरभिरूपैश्च याजकैः । सुत्याकाले विनिर्वृत्ते वेदिं गतरवामिव ॥ ८
गोष्ठमध्ये स्थितामार्तामचरन्तीं तृणं नवम् । गोवृषेण परित्यक्तां गवां पत्नीमिवोत्सुकाम् ॥ ९
प्रभाकराद्यैः सुस्निग्धैः प्रज्वलद्भिरिवोत्तमैः । वियुक्तां मणिभिर्जात्यैर्नवां मुक्तावलीमिव ॥ १०
सहसा चलितां स्थानान्महीं पुण्यक्षयाद्गताम् । संहृतद्युतिविस्तारां तारामिव दिवश्च्युताम् ॥ ११
पुष्पनद्धां वसन्तान्ते मत्तभ्रमरनादिताम् । द्रुतदावाग्निविप्लुष्टां क्लान्तां वनलतामिव ॥ १२
संमूढनिगमां स्तब्धां संक्षिप्तविपणापणाम् । प्रच्छन्नशशिनक्षत्रां द्यामिवाम्बुधरैर्वृताम् ॥ १३
क्षीणपानोत्तमैर्भिन्नैः शरावैरभिसंवृताम् । गतशौण्डा[1]मिव ध्वस्तां[1] पानभूमिमसंस्कृताम् ॥ १४
वृक्णभूमितलां निम्नां वृक्णपात्रैः समावृताम् । उपयुक्तोदकां भग्नां प्रपां निपतितामिव ॥ १५
विपुलां विततां चैव युक्तपाशां तरस्विनाम् । भूमौ बाणैर्विनिष्कृत्तां पतितां ज्यामिवायुधात् ॥ १६

---

1. शौण्डः मद्यपः ।

१. हतशौण्डामिवाकाशे च. छ.

सहसा युद्धशौण्डेन हयारोहेण वाहिताम् । निक्षिप्तभाण्डामुत्सृष्टां किशोरीमिव दुर्बलाम् ॥ १७
शुष्कतोयां महामत्स्यैः कूर्मैश्च बहुभिर्वृताम् । प्रभिन्नतटविस्तीर्णां वापीमिव हृतोत्पलाम् ॥ १८
पुरुषस्याप्रहृष्टस्य प्रतिषिद्धानुलेपनाम् । संतप्तामिव शोकेन गात्रयष्टिमभूषणाम् ॥ १९
प्रावृषि प्रविगाढायां प्रविष्टस्याभ्रमण्डलम् । प्रच्छन्नां नीलजीमूतैर्भास्करस्य प्रभामिव[1] ॥ २०
निहतां प्रतिसैन्येन बडवामिव पातिताम्[2] । भरतस्तु रथस्थः सञ्श्रीमान् दशरथात्मजः ॥ २१
वाहयन्तं रथं श्रेष्ठं सारथिं वाक्यमब्रवीत् । किं नु खल्वद्य गम्भीरो मूर्छितो न निशम्यते ॥ २२
यथापुरमयोध्यायां गीतवादित्रनिःस्वनः । वारुणीमदगन्धश्च माल्यगन्धश्च मूर्छितः ॥ २३
धूपितागरुगन्धश्च न प्रवाति समन्ततः । यानप्रवरघोषश्च स्निग्धश्च हयनिःस्वनः ॥ २४
प्रमत्तगजनादश्च महांश्च रथनिःस्वनः[3] । नेदानीं श्रूयते पुर्यामस्यां रामे विवासिते ॥ २५
चन्दनागरुगन्धाश्च महार्हाश्च नवस्रजः । गते हि रामे तरुणाः संतप्ता नोपभुञ्जते ॥ २६
बहिर्यात्रां न गच्छन्ति चित्रमाल्यधरा नराः । नोत्सवाः संप्रवर्तन्ते रामशोकार्दिते पुरे ॥ २७
सह नूनं मम भ्रात्रा पुरस्यास्य द्युतिर्गता । न हि राजत्ययोध्येयं सासारेवार्जुनी क्षपा ॥ २८
कदा नु खलु मे भ्राता महोत्सव इवागतः । जनयिष्यत्ययोध्यायां हर्षं ग्रीष्म इवाम्बुदः ॥ २९
तरुणैश्चारुवेषैश्च नरैरुन्नतगामिभिः । संपतद्भिरयोध्यायां नाभिभान्ति महापथाः[4] ॥ ३०
एवं बहुविधं जल्पन् विवेश वसतिं पितुः । तेन हीनां नरेन्द्रेण सिंहहीनां गुहामिव ॥ ३१

तदा तदन्तःपुरमुज्झितप्रभं सुरैरिवोत्सृष्टमभास्करं दिनम् ।
निरीक्ष्य सर्वं तु विविक्तमात्मवान् मुमोच बाष्पं भरतः सुदुःखितः ॥ ३२

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
अयोध्याकाण्डे अयोध्याप्रवेशो नाम चतुर्दशाधिकशततमः सर्गः

---

## पञ्चदशाधिकशततमः सर्गः

### नन्दिग्रामनिवासः

ततो निक्षिप्य मातॄः स अयोध्यायां दृढव्रतः । भरतः शोकसंतप्तो गुरूनिदमथाब्रवीत् ॥ १
नन्दिग्रामं गमिष्यामि सर्वानामन्त्रयेऽद्य वः । तत्र दुःखमिदं सर्वं सहिष्ये राघवं विना ॥ २
गतश्च हि दिवं राजा वनस्थश्च गुरुर्मम । रामं प्रतीक्षे राज्याय स हि राजा महायशाः ॥ ३
एतच्छ्रुत्वा शुभं वाक्यं भरतस्य महात्मनः । अब्रुवन् मन्त्रिणः सर्वे वसिष्ठश्च पुरोहितः ॥ ४

१. निक्षिप्तेत्यादि प्रभामिवेत्यन्तम् ग. नास्ति । दुःखितो भरतस्तथा—इति ग.
२. इदमर्धम् क. ख. घ. च. छ. नास्ति ।
३. इदमर्धम् क. नास्ति ।
४. अस्यानन्तरम्—इति ब्रुवन् सारथिना
५. अस्यानन्तरम्—अयोध्यां संप्रविश्यैव विवेश भवनं पितुः—इति ग.

सदृशं श्लाघनीयं च यदुक्तं भरत त्वया । वचनं भ्रातृवात्सल्यादनुरूपं तथैव तत् ॥ ५
नित्यं ते बन्धुलुब्धस्य तिष्ठतो भ्रातृसौहृदे । आर्यमार्गं प्रपन्नस्य नानुमन्येत कः पुमान् ॥ ६
मन्त्रिणां वचनं श्रुत्वा यथाभिलषितं प्रियम् । अब्रवीत्सारथिं वाक्यं रथो मे युज्यतामिति ॥ ७
प्रहृष्टवदनः सर्वा मातॄः समभिवाद्य सः । आरुरोह रथं श्रीमाञ्शत्रुघ्नेन समन्वितः ॥ ८
आरुह्य च रथं शीघ्रं शत्रुघ्नभरतावुभौ । ययतुः परमप्रीतौ वृतौ मन्त्रिपुरोहितैः ॥ ९
अग्रतो गुरवस्तत्र वसिष्ठप्रमुखा द्विजाः । प्रययुः प्राङ्मुखाः सर्वे नन्दिग्रामो यतोऽभवत् ॥ १०
बलं च तदनाहूतं गजाश्वरथसंकुलम् । प्रययौ भरते याते सर्वे च पुरवासिनः ॥ ११
रथस्थः स हि धर्मात्मा भरतो भ्रातृवत्सलः । नन्दिग्रामं ययौ तूर्णं शिरस्याधाय पादुके ॥ १२
ततस्तु भरतः क्षिप्रं नन्दिग्रामं प्रविश्य सः । अवतीर्य रथात्तूर्णं गुरूनिदमुवाच ह ॥ १३
एतद्राज्यं मम भ्रात्रा दत्तं सन्न्यासवत् स्वयम् । योगक्षेमवहे तस्य पादुके हेमभूषिते ॥ १४
भरतः शिरसा कृत्वा सन्न्यासं पादुके ततः । अब्रवीद्दुःखसंतप्तः सर्वं प्रकृतिमण्डलम् ॥ १५
छत्रं धारयत क्षिप्रमार्यपादाविमौ मतौ । आभ्यां राज्ये स्थितो धर्मः पादुकाभ्यां गुरोर्मम ॥ १६
भ्रात्रा हि मयि सन्न्यासो निक्षिप्तः सौहृदादयम् । तमिमं पालयिष्यामि राघवागमनं प्रति ॥ १७
क्षिप्रं संयोजयित्वा तु[1] राघवस्य पुनः स्वयम् । चरणौ तौ तु रामस्य द्रक्ष्यामि सहपादुकौ ॥ १८
ततो निक्षिप्तभारोऽहं राघवेण समागतः । निवेद्य गुरवे राज्यं भजिष्ये गुरुवर्तिताम् ॥ १९
राघवाय च सन्न्यासं दत्त्वेमे वरपादुके । राज्यं चेदमयोध्यां च धूतपापो भवाम्यहम् ॥ २०
अभिषिक्ते तु काकुत्स्थे प्रहृष्टमुदिते जने । प्रीतिर्मम यशश्चैव भवेद्राज्याच्चतुर्गुणम् ॥ २१
एवं तु विलपन् दीनो भरतः स महायशाः । नन्दिग्रामेऽकरोद्राज्यं दुःखितो मन्त्रिभिः सह[2] ॥ २२
स वल्कलजटाधारी मुनिवेषधरः प्रभुः । नन्दिग्रामेऽवसद्वीरः ससैन्यो भरतस्तदा ॥ २३
रामागमनमाकाङ्क्षन् भरतो भ्रातृवत्सलः । भ्रातुर्वचनकारी च प्रतिज्ञापारगस्तथा ॥ २४
पादुके त्वभिषिच्याथ नन्दिग्रामेऽवसत्तदा[3] । सवालव्यजनं छत्रं धारयामास स स्वयम् ॥ २५
भरतः शासनं सर्वं पादुकाभ्यां न्यवेदयत् । ततस्तु भरतः श्रीमानभिषिच्यार्यपादुके ॥ २६
तदधीनस्तदा राज्यं कारयामास सर्वदा ॥

यदा हि यत् कार्यमुपैति किंचिदुपायनं चोपहृतं महार्हम् ।
स पादुकाभ्यां प्रथमं निवेद्य चकार पश्चाद्भरतो यथावत् ॥ २७

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
अयोध्याकाण्डे नन्दिग्रामनिवासो नाम पञ्चदशाधिकशततमः सर्गः

---

१. संयोजयिष्यामि ध.
२. २१, २२—श्लोकौ पुना. न स्तः ।
३. इदमर्धम् ग. नास्ति । रामागमनमित्यादि अवसत्तदा इत्यन्तम् पुना. नास्ति ।



पादुके त्वभिषिच्याथ नन्दिग्रामेऽवसत्तदा । सवालव्यजनं छत्रं धारयामास स स्वयम् ॥

(अयोध्याका[illegible], स. 11[illegible], श्लो. 25)

## षोडशाधिकशततमः सर्गः

### खरविप्रकरणकथनम्

प्रतिप्रयाते भरते वसन् रामस्तपोवने । लक्षयामास सोद्वेगमथौत्सुक्यं तपस्विनाम् ॥ १
ये तत्र चित्रकूटस्य पुरस्तात्तापसाश्रमे । राममाश्रित्य निरतास्तानलक्षयदुत्सुकान् ॥ २
नयनैर्भ्रुकुटीभिश्च रामं निर्दिश्य शङ्किताः । अन्योन्यमुपजल्पन्तः शनैश्चक्रुर्मिथः कथाः ॥ ३
तेषामौत्सुक्यमालक्ष्य रामस्त्वात्मनि शङ्कितः । कृताञ्जलिरुवाचेदमृषिं कुलपतिं ततः ॥ ४
न कच्चिद्भगवन् किंचित् पूर्ववृत्तमिदं मयि । दृश्यते विकृतं येन विक्रियन्ते तपस्विनः ॥ ५
प्रमादाच्चरितं कच्चित् कच्चिन्नावरजस्य मे । लक्ष्मणस्यर्षिभिर्दृष्टं नानुरूपमिवात्मनः ॥ ६
कच्चिच्छुश्रूषमाणा वः शुश्रूषणपरा मयि । प्रमदाभ्युचितां वृत्तिं सीता युक्तां न वर्तते ॥ ७
अथर्षिर्जरया वृद्धस्तपसा च जरां गतः । वेपमान इवोवाच रामं भूतदयापरम् ॥ ८
कुतः कल्याणसत्त्वायाः कल्याणाभिरतेस्तथा । चलनं तात वैदेह्यास्तपस्विषु विशेषतः ॥ ९
त्वन्निमित्तमिदं तावत्तापसान् प्रति वर्तते । रक्षोभ्यस्तेन संविग्नाः कथयन्ति मिथः कथाः ॥ १०
रावणावरजः कश्चित् खरो नामेह राक्षसः । उत्पाट्य तापसान् सर्वाञ्जनस्थाननिकेतनान् ॥ ११
धृष्टश्च जितकाशी च नृशंसः पुरुषादकः । अवलिप्तश्च पापश्च त्वां च तात न मृष्यते ॥ १२
त्वं यदाप्रभृति ह्यस्मिन्नाश्रमे तात वर्तसे । तदाप्रभृति रक्षांसि विप्रकुर्वन्ति तापसान् ॥ १३
दर्शयन्ति हि बीभत्सैः क्रूरैर्भीषणकैरपि । नानारूपैर्विरूपैश्च रूपैर्विकृतदर्शनैः ॥ १४
अप्रशस्तैरशुचिभिः संप्रयोज्य च तापसान् । प्रतिघ्नन्त्यपरान् क्षिप्रं[1] मायया पुरतः स्थितान् ॥ १५
तेषु तेष्वाश्रमस्थानेष्वबुद्धमवलीय च । रमन्ते तापसांस्तत्र नाशयन्तोऽल्पचेतसः ॥ १६
अपक्षिपन्ति स्रुग्भाण्डानग्नीन् सिञ्चन्ति वारिणा । कलशांश्च प्रमृद्नन्ति हवने समुपस्थिते ॥ १७
तैर्दुरात्मभिरामृष्टानाश्रमान् प्रजिहासवः । गमनायान्यदेशस्य चोदयन्त्यृषयोऽद्य माम् ॥ १८
तत् पुरा राम शारीरामुपहिंसां तपस्विषु । दर्शयन्ति हि दुष्टास्ते त्यक्ष्याम इममाश्रमम् ॥ १९
बहुमूलफलं चित्रमविदूरादितो वनम् । पुराणाश्रममेवाहं श्रयिष्ये सगणः पुनः ॥ २०
खरस्त्वय्यपि चायुक्तं पुरा तात प्रवर्तते । सहास्माभिरितो गच्छ यदि बुद्धिः प्रवर्तते ॥ २१
सकलत्रस्य संदेहो नित्यं यत्तस्य राघव । समर्थस्यापि हि सतो वासो दुःखमिहाद्य ते ॥ २२
इत्युक्तवन्तं रामस्तं राजपुत्रस्तपस्विनम् । न शशाकोत्तरैर्वाक्यैरवरोद्धुं समुत्सुकम् ॥ २३
अभिनन्द्य समापृच्छ्य समाधाय च राघवम् । स जगामाश्रमं त्यक्त्वा कुलैः कुलपतिः सह ॥ २४

रामः संसाध्य त्वृषिगणमनुगमनाद्देशात्तस्मात् कुलपतिमभिवाद्य ऋषिम् ।
सम्यक् प्रीतैस्तैरनुमत उपदिष्टार्थः पुण्यं वासाय स्वनिलयमभिसंपेदे ॥ २५

---

१, अनार्याः पुरतः स्थिताः ङ. ञ, २. कण्वस्या- ग,

आश्रमादृषिविरहितं प्रभुः क्षणमपि न विजहौ स राघवः ।
राघवं हि सततमनुगतास्तापसाश्चार्षचरितधृतगुणाः ॥ २६

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
अयोध्याकाण्डे खरविप्रकरणकथनं नाम षोडशाधिकशततमः सर्गः

---

## सप्तदशाधिकशततमः सर्गः

### सीतापातिव्रत्यप्रशंसा

राघवस्त्वथ यातेषु तपस्विषु विचिन्तयन् । न तत्रारोचयद्वासं कारणैर्बहुभिस्तदा ॥ १
इह मे भरतो दृष्टो मातरश्च सनागराः । सा च मे स्मृतिरन्वेति तान्नित्यमनुशोचतः ॥ २
स्कन्धावारनिवेशेन तेन तस्य महात्मनः । हयहस्तिकरीषैश्च उपमर्दः कृतो भृशम् ॥ ३
तस्मादन्यत्र गच्छाम इति संचिन्त्य राघवः । प्रातिष्ठत स वैदेह्या लक्ष्मणेन च संगतः ॥ ४
सोऽत्रेराश्रममासाद्य तं ववन्दे महायशाः । तं चापि भगवानत्रिः पुत्रवत् प्रत्यपद्यत ॥ ५
स्वयमातिथ्यमादिश्य सर्वमस्य सुसत्कृतम । सौमित्रिं च महाभागां सीतां च समसान्त्वयत् ॥ ६
पत्नीं च समनुप्राप्तां वृद्धामामन्त्र्य सत्कृताम । सान्त्वयामास धर्मज्ञः सर्वभूतहिते रतः ॥ ७
अनसूयां महाभागां तापसीं धर्मचारिणीम् । प्रतिगृह्णीष्व वैदेहीमब्रवीदृषिसत्तमः ॥ ८
रामाय चाचचक्षे तां तापसीं धर्मचारिणीम्[1] । दश वर्षाण्यनावृष्ट्या दग्धे लोके निरन्तरम् ॥ ९
यया मूलफले सृष्टे जाह्नवी च प्रवर्तिता । उग्रेण तपसा युक्ता नियमैश्चाप्यलंकृता ॥ १०
दश वर्षसहस्राणि यया तप्तं महत्तपः । अनसूया व्रतैः स्नात्वा प्रत्यूहाश्च निवर्तिताः ॥ ११
देवकार्यनिमित्तं च यया संत्वरमाणया । दशरात्रं कृता रात्रिः सेयं मातेव तेऽनघ ॥ १२
तामिमां सर्वभूतानां नमस्कार्यां यशस्विनीम् । अभिगच्छतु वैदेही वृद्धामक्रोधनां सदा ॥ १३
अनसूयेति या लोके कर्मभिः ख्यातिमागता[2] । एवं ब्रुवाणं तमृषिं तथेत्युक्त्वा स राघवः ॥ १४
सीतामुवाच धर्मज्ञामिदं वचनमुत्तमम् । राजपुत्रि श्रुतं त्वेतन्मुनेरस्य समीरितम् ॥ १५
श्रेयोऽर्थमात्मनः शीघ्रमभिगच्छ तपस्विनीम् । सीता त्वेतद्वचः श्रुत्वा राघवस्य हितैषिणः ॥ १६
तामत्रिपत्नीं धर्मज्ञामभिचक्राम मैथिली । शिथिलां वलितां वृद्धां जरापाण्डरमूर्धजाम् ॥ १७
सततं वेपमानाङ्गीं प्रवाते कदलीं यथा । यां तु सीता महाभागामनसूयां पतिव्रताम् ॥ १८
अभ्यवादयदव्यग्रा स्वं नाम समुदाहरत् । अभिवाद्य च वैदेही तापसीं तामनिन्दिताम् ॥ १९
बद्धाञ्जलिपुटा हृष्टा पर्यपृच्छदनामयम् । ततः सीतां महाभागां दृष्ट्वा तां धर्मचारिणीम् ॥ २०

---

१. प्रतिगृह्णीष्वेत्यादि धर्मचारिणीमित्यन्तम् घ. नास्ति ।

२. अस्यानन्तरम्—तां शीघ्रमभिगच्छ त्वमभिगम्यां तपस्विनीम् इति छ.

सान्त्वयन्त्यब्रवीद्धृष्टा दिष्ट्या धर्ममवेक्षसे । त्यक्त्वा ज्ञातिजनं सीते मानमृद्धिं च भामिनि ॥ २१
अवरुद्धं वने रामं दिष्ट्या त्वमनुगच्छसि । नगरस्थो वनस्थो वा शुभो वा यदि वाशुभः ॥ २२
यासां स्त्रीणां प्रियो भर्ता तासां लोका महोदयाः । दुःशीलः कामवृत्तो वा धनैर्वा परिवर्जितः ॥ २३
स्त्रीणामार्यस्वभावनां परमं दैवतं पतिः । नातो विशिष्टं पश्यामि बान्धवं विमृशन्त्यहम् ॥ २४
सर्वत्र योग्यं वैदेहि तपः कृतमिवाव्ययम् । न त्वेवमवगच्छन्ति गुणदोषमसत्स्त्रियः ॥ २५
कामवक्तव्यहृदया भर्तृनाथाश्चरन्ति याः । प्राप्नुवन्त्ययशश्चैव धर्मभ्रंशं च मैथिलि ॥ २६
अकार्यवशमापन्नाः स्त्रियो याः खलु तद्विधाः । त्वद्विधास्तु गुणैर्युक्ता दृष्टलोकपरावराः ॥ २७
स्त्रियः स्वर्गे चरिष्यन्ति यथा धर्मकृतस्तथा ॥

तदेवमेनं त्वमनुव्रता सती पतिव्रतानां समयानुवर्तिनी ।
भव स्वभर्तुः सहधर्मचारिणी यशश्च धर्मं च ततः समाप्स्यसि ॥ २८

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायां
अयोध्याकाण्डे सीतापातिव्रत्यप्रशंसा नाम सप्तदशाधिकशततमः सर्गः

---

## अष्टादशाधिकशततमः सर्गः

### दिव्यालंकारग्रहणम्

सा त्वेवमुक्ता वैदेही त्वनसूयानसूयया । प्रतिपूज्य वचो मन्दं प्रवक्तुमुपचक्रमे ॥ १
नैतदाश्चर्यमार्याया यन्मां त्वमनुभाषसे । विदितं तु मयाप्येतद्यथा नार्याः पतिर्गुरुः ॥ २
यद्यप्येष भवेद्भर्ता ममार्य[1] वृत्तवर्जितः । [2]अद्वैधमुपचर्तव्यस्तथाप्येष मया भवेत् ॥ ३
किं पुनर्यो गुणश्लाघ्यः सानुक्रोशो जितेन्द्रियः । स्थिरानुरागो धर्मात्मा मातृवत् पितृवत् प्रियः ॥ ४
यां वृत्तिं वर्तते रामः कौसल्यायां महाबलः । तामेव नृपनारीणामन्यासामपि वर्तते ॥ ५
सकृद्दृष्टास्वपि स्त्रीषु नृपेण नृपवत्सलः । मातृवद्वर्तते वीरो मानमुत्सृज्य धर्मवित् ॥ ६
आगच्छन्त्याश्च विजनं वनमेवं भयावहम् । समाहितं मे श्वश्र्वा च हृदये तद्धृतं महत् ॥ ७
पाणिप्रदानकाले च यत् पुरा त्वग्निसंनिधौ । अनुशिष्टा जनन्यास्मि वाक्यं तदपि मे धृतम् ॥ ८
नवीकृतं च तत् सर्वं[3] वाक्यैस्ते धर्मचारिणि । पतिशुश्रूषणान्नार्यास्तपो नान्यद्विधीयते ॥ ९
सावित्री पतिशुश्रूषां कृत्वा स्वर्गे महीयते । तथावृत्तिश्च याता त्वं पतिशुश्रूषया दिवम् ॥ १०
वरिष्ठा सर्वनारीणामेषा च दिवि देवता । रोहिणी न विना चन्द्रं मुहूर्तमपि दृश्यते ॥ ११
एवंविधाश्च प्रवराः स्त्रियो भर्तृदृढव्रताः । देवलोके महीयन्ते पुण्येन स्वेन कर्मणा ॥ १२

---

१. अनार्यः ग.
२. अद्वैधमत्र वर्तव्यम् पुना.
३. न विस्मृतं तु तत्सर्वम् ग.

ततोऽनसूया संहृष्टा श्रुत्वोक्तं सीतया वचः । शिरस्याघ्राय चोवाच मैथिलीं हर्षयन्त्युत ॥ १३
नियमैर्विविधैराप्तं तपो हि महदस्ति मे । तत् संश्रित्य बलं सीते छन्दये त्वां शुचिस्मिते ॥ १४
उपपन्नं मनोज्ञं च वचनं तव मैथिलि । प्रीता चास्म्युचितं किं ते करवाणि ब्रवीहि मे ॥ १५
तस्यास्तद्वचनं श्रुत्वा विस्मिता मन्दविस्मया । कृतमित्यब्रवीत् सीता तपोबलसमन्विताम् ॥ १६
सा त्वेवमुक्ता धर्मज्ञा तया प्रीततराभवत् । सफलं च प्रहर्षं ते हन्त सीते करोम्यहम् ॥ १७
इदं दिव्यं वरं माल्यं वस्त्रमाभरणानि च । अङ्गरागं च वैदेहि महार्हं चानुलेपनम् ॥ १८
मया दत्तमिदं सीते तव गात्राणि शोभयेत् । अनुरूपमसंक्लिष्टं नित्यमेव भविष्यति ॥ १९
अङ्गरागेण दिव्येन लिप्ताङ्गी जनकात्मजे । शोभयिष्यसि भर्तारं यथा श्रीर्विष्णुमव्ययम् ॥ २०
सा वस्त्रमङ्गरागं च भूषणानि स्रजस्तथा । मैथिली प्रतिजग्राह प्रीतिदानमनुत्तमम् ॥ २१
प्रतिगृह्य च तत् सीता प्रीतिदानं यशस्विनी । श्लिष्टाञ्जलिपुटा तत्र समुपास्त तपोधनाम् ॥ २२
तथा सीतामुपासीनामनसूया दृढव्रता । वचनं प्रष्टुमारेभे कथां कांचिदनुप्रियाम् ॥ २३
स्वयंवरे किल प्राप्ता त्वमनेन यशस्विना । राघवेणेति मे सीते कथा श्रुतिमुपागता ॥ २४
तां कथां श्रोतुमिच्छामि विस्तरेण च मैथिलि । यथानुभूतं कार्त्स्न्येन तन्मे त्वं वक्तुमर्हसि ॥ २५
एवमुक्ता तु सा सीता तां ततो धर्मचारिणीम् । श्रूयतामिति चोक्त्वा वै कथयामास तां कथाम् ॥ २६
मिथिलाधिपतिर्वीरो जनको नाम धर्मवित् । क्षत्रधर्मे ह्यभिरतो न्यायतः शास्ति मेदिनीम् ॥ २७
तस्य लाङ्गलहस्तस्य कृषतः क्षेत्रमण्डलम् । अहं किलोत्थिता भित्त्वा जगतीं नृपतेः सुता ॥ २८
स मां दृष्ट्वा नरपतिर्मुष्टिविक्षेपतत्परः । पांसुकुण्ठितसर्वाङ्गीं जनको विस्मितोऽभवत् ॥ २९
अनपत्येन च स्नेहादङ्कमारोप्य च स्वयम् । ममेयं तनयेत्युक्त्वा स्नेहो मयि निपातितः ॥ ३०
अन्तरिक्षे च वागुक्ता प्रतिमा[1]मानुषी किल । एवमेतन्नरपते धर्मेण तनया तव ॥ ३१
ततः प्रहृष्टो धर्मात्मा पिता मे मिथिलाधिपः । अवाप्तो विपुलामृद्धिं मामवाप्य नराधिपः ॥ ३२
दत्ताचास्मीष्टवद्देव्यै ज्येष्ठायै पुण्यकर्मणा । तया संभाविता चास्मि स्निग्धया मातृसौहृदात् ॥ ३३
पतिसंयोगसुलभं वयो दृष्ट्वा तु मे पिता । चिन्तामभ्यगमद्दीनो वित्तनाशादिवाधनः ॥ ३४
सदृशाच्चापकृष्टाच्च लोके कन्यापिता जनात् । प्रधर्षणमवाप्नोति शक्रेणापि समो भुवि ॥ ३५
तां धर्षणामदूरस्थां दृष्ट्वा चात्मनि पार्थिवः । चिन्तार्णवगतः पारं नाससादाप्लवो यथा ॥ ३६
अयोनिजां हि मां ज्ञात्वा नाध्यगच्छद्विचिन्तयन् । सदृशं चानुरूपं च महीपालः पतिं मम ॥ ३७
तस्य बुद्धिरियं जाता चिन्तयानस्य संततम् । स्वयंवरं तनूजायाः करिष्यामीति धीमतः ॥ ३८
महायज्ञे तदा तस्य वरुणेन महात्मना । दत्तं धनुर्वरं प्रीत्या तूणी चाक्षयसायकौ ॥ ३९
असंचाल्यं मनुष्यैश्च यत्नेनापि च गौरवात् । तन्न शक्ता नमयितुं स्वप्नेष्वपि नराधिपाः ॥ ४०

---

1. प्रति मा अमानुषी इति, अप्रतिमा अमानुषी इति चेदं छिनत्ति श्रीगोविन्दराजः ।

तद्धनुः प्राप्य मे पित्रा व्याहृतं सत्यवादिना । समवाये नरेन्द्राणां पूर्वमामन्त्र्य पार्थिवान् ॥ ४१
इदं च धनुरुद्यम्य सज्यं यः कुरुते नरः । तस्य मे दुहिता भार्या भविष्यति न संशयः ॥ ४२
तच्च दृष्ट्वा धनुःश्रेष्ठं गौरवाद्गिरिसंनिभम् । अभिवाद्य नृपा जग्मुरशक्तास्तस्य तोलने ॥ ४३
सुदीर्घस्याथ कालस्य राघवोऽयं महाद्युतिः । विश्वामित्रेण सहितो यज्ञं द्रष्टुं समागतः ॥ ४४
लक्ष्मणेन सह भ्रात्रा रामः सत्यपराक्रमः । विश्वामित्रस्तु धर्मात्मा मम पित्रा सुपूजितः ॥ ४५
प्रोवाच पितरं तत्र भ्रातरौ रामलक्ष्मणौ । सुतौ दशरथस्येमौ धनुर्दर्शनकाङ्क्षिणौ ॥ ४६
धनुर्दर्शय रामाय राजपुत्राय दैविकम् । इत्युक्तस्तेन विप्रेण तद्धनुः समुपानयत् ॥ ४७
निमेषान्तरमात्रेण तदानम्य स वीर्यवान् । ज्यां समारोप्य झटिति पूरयामास वीर्यवान् ॥ ४८
तेन पूरयता वेगान्मध्ये भग्नं द्विधा धनुः । तस्य शब्दोऽभवद्भीमः पतितस्याशनेरिव ॥ ४९
ततोऽहं तत्र रामाय पित्रा सत्याभिसन्धिना । निश्चिता दातुमुद्यम्य जलभाजनमुत्तमम् ॥ ५०
दीयमानां न तु तदा प्रतिजग्राह राघवः । अविज्ञाय पितुश्छन्दमयोध्याधिपतेः प्रभोः ॥ ५१
ततः श्वशुरमामन्त्र्य वृद्धं दशरथं नृपम् । मम पित्रा त्वहं दत्ता रामाय विदितात्मने ॥ ५२
मम चैवानुजा साध्वी ऊर्मिला प्रियदर्शना । भार्यार्थे लक्ष्मणस्यापि दत्ता पित्रा मम स्वयम् ॥ ५३
एवं दत्तास्मि रामाय तदा तस्मिन् स्वयंवरे । अनुरक्तास्मि धर्मेण पतिं वीर्यवतां वरम् ॥ ५४

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
अयोध्याकाण्डे दिव्याङ्गालग्रहणं नाम अष्टादशाधिकशततमः सर्गः

---

## एकोनविंशत्यधिकशततमः सर्गः

### दण्डकारण्यप्रवेशः

अनसूया तु धर्मज्ञा श्रुत्वा तां महतीं कथाम् । पर्यष्वजत बाहुभ्यां शिरस्याघ्राय मैथिलीम् ॥ १
व्यक्ताक्षरपदं चित्रं भाषितं मधुरं त्वया । यथा स्वयंवरं वृत्तं तत् सर्वं हि श्रुतं मया ॥ २
रमेऽहं कथया ते तु दृढं मधुरभाषिणि । रविरस्तं गतः श्रीमानुपोह्य रजनीं शिवाम् ॥ ३
दिवसंप्रति कीर्णानामाहारार्थं पतत्रिणाम् । सन्ध्याकाले निलीनानां निद्रार्थं श्रूयते ध्वनिः ॥ ४
एते चाप्यभिषेकार्द्रा मुनयः कलशोद्यताः । सहिता उपवर्तन्ते सलिलाप्लुतवल्कलाः ॥ ५
ऋषीणामग्निहोत्रेषु हुतेषु विधिपूर्वकम् । कपोताङ्गारुणो धूमो दृश्यते पवनोद्धतः ॥ ६
अल्पपर्णा हि तरवो घनीभूताः समन्ततः । विप्रकृष्टेऽपि देशेऽस्मिन्न प्रकाशन्ति वै दिशः ॥ ७
रजनीचरसत्त्वानि प्रचरन्ति समन्ततः । तपोवनमृगा ह्येते वेदितीर्थेषु शेरते ॥ ८
संप्रवृत्ता निशा सीते नक्षत्रसमलंकृता । ज्योत्स्नाप्रावरणश्चन्द्रो दृश्यतेऽभ्युदितोऽम्बरे ॥ ९
गम्यतामनुजानामि रामस्यानुचरी भव । कथयन्त्या हि मधुरं त्वयाहं परितोषिता ॥ १०

अलंकुरु च तावत्त्वं प्रत्यक्षं मम मैथिलि । प्रीतिं जनय मे वत्से दिव्यालंकारशोभिता ॥ ११
सा तथा समलंकृत्य सीता सुरसुतोपमा । प्रणम्य शिरसा तस्यै रामं त्वभिमुखी ययौ ॥ १२
तथा विभूषितां सीतां ददर्श वदतां वरः । राघवः प्रीतिदानेन तपस्विन्या जहर्ष च ॥ १३
न्यवेदयत्ततः सर्वं सीता रामाय मैथिली । प्रीतिदानं तपस्विन्या वसनाभरणस्रजाम् ॥ १४
प्रहृष्टस्त्वभवद्रामो लक्ष्मणश्च महारथः । मैथिल्याः सत्क्रियां दृष्ट्वा मानुषेषु सुदुर्लभाम् ॥ १५
ततस्तां शर्वरीं प्रीतः पुण्यां शशिनिभाननः । अर्चितस्तापसैः सिद्धैरुवास रघुनन्दनः ॥ १६
तस्यां रात्र्यां व्यतीतायामभिषिच्य हुताग्निकान् । आपृच्छेतां नरव्याघ्रौ तापसान् वनगोचरान् ॥१७
तावूचुस्ते वनचरास्तापसा धर्मचारिणः । वनस्य तस्य संचारं राक्षसैः समभिप्लुतम् ॥ १८
रक्षांसि पुरुषादीनि नानारूपाणि राघव । वसन्त्यस्मिन् महारण्ये व्यालाश्च रुधिराशनाः ॥ १९
उच्छिष्टं वा प्रमत्तं वा तापसं धर्मचारिणम् । अदन्त्यस्मिन् महारण्ये तान्निवारय राघव ॥ २०
एष पन्था महर्षीणां फलान्याहरतां वने । अनेन तु वनं दुर्गं गन्तुं राघव ते क्षमम् ॥ २१

इतीव तैः प्राञ्जलिभिस्तपस्विभिर्द्विजैः कृतस्वस्त्ययनः परंतपः ।
वनं सभार्यः प्रविवेश राघवः सलक्ष्मणः सूर्य इवाभ्रमण्डलम् ॥ २२

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
अयोध्याकाण्डे दण्डकारण्यप्रवेशो नाम एकोनविंशत्यधिकशततमः सर्गः

———

श्रीमद्वाल्मीकिरामायणे अयोध्याकाण्डः संपूर्णः

॥ श्रीः ॥

# ॥ श्रीमद्वाल्मीकिरामायणम् ॥

## ॥ अथ अरण्यकाण्डः ॥

### प्रथमः सर्गः

#### महर्षिसङ्गः

प्रविश्य तु महारण्यं दण्डकारण्यमात्मवान् । ददर्श रामो दुर्धर्षस्तापसाश्रममण्डलम् ॥ १

कुशचीरपरिक्षिप्तं ब्राह्मया लक्ष्म्या समावृतम् । यथा प्रदीप्तं दुर्दर्शं गगने सूर्यमण्डलम् ॥ २

शरण्यं सर्वभूतानां सुसंमृष्टाजिरं सदा । मृगैर्बहुभिराकीर्णं पक्षिसङ्घैः समावृतम् ॥ ३

पूजितं चोपनृत्तं च नित्यमप्सरसां गणैः । विशालैरग्निशरणैः स्रुग्भाण्डैरजिनैः कुशैः ॥ ४

समिद्भिस्तोयकलशैः फलमूलैश्च शोभितम् । आरण्यैश्च महावृक्षैः पुण्यैः स्वादुफलैर्युतम् ॥ ५

बलिहोमार्चितं पुण्यं ब्रह्मघोषनिनादितम् । पुष्पैर्वन्यैः परिक्षिप्तं पद्मिन्या च सपद्मया ॥ ६

फलमूलाशनैर्दान्तैश्चीरकृष्णाजिनाम्बरैः । सूर्यवैश्वानराभैश्च पुराणैर्मुनिभिर्वृतम् ॥ ७

पुण्यैश्च नियताहारैः शोभितं परमर्षिभिः । तद्ब्रह्मभवनप्रख्यं ब्रह्मघोषनिनादितम् ॥ ८

ब्रह्मविद्भिर्महाभागैर्ब्राह्मणैरुपशोभितम् । तद्दृष्ट्वा राघवः श्रीमांस्तापसाश्रममण्डलम् ॥ ९

अभ्यगच्छन्महातेजा विज्यं कृत्वा महद्धनुः । दिव्यज्ञानोपपन्नास्ते रामं दृष्ट्वा महर्षयः[1] ॥ १०

अभ्यगच्छंस्तथा प्रीता वैदेहीं च यशस्विनीम्[2] । ते तं सोममिवोद्यन्तं दृष्ट्वा वै धर्मचारिणः ॥ ११

लक्ष्मणं चैव दृष्ट्वा तु वैदेहीं च यशस्विनीम् । मङ्गलानि प्रयुञ्जानाः प्रत्यगृह्णन् दृढव्रताः ॥ १२

रूपसंहननं लक्ष्मीं सौकुमार्यं सुवेषताम् । ददृशुर्विस्मिताकारा रामस्य वनवासिनः ॥ १३

वैदेहीं लक्ष्मणं रामं नेत्रैरनिमिषैरिव । आश्चर्यभूतान् ददृशुः सर्वे ते वनचारिणः ॥ १४

अत्रैनं हि महाभागाः सर्वभूतहिते रतम् । अतिथिं पर्णशालायां राघवं संन्यवेशयन् ॥ १५

ततो रामस्य सत्कृत्य विधिना पावकोपमाः । आजह्रुस्तु महाभागाः सलिलं धर्मचारिणः ॥ १६

मूलं पुष्पं फलं वन्यमाश्रमं च महात्मनः । निवेदयित्वा धर्मज्ञास्ततः प्राञ्जलयोऽब्रुवन् ॥ १७

धर्मपालो जनस्यास्य शरण्यस्त्वं महायशाः । पूजनीयश्च मान्यश्च राजा दण्डधरो गुरुः ॥ १८

इन्द्रस्येह चतुर्भागः प्रजा रक्षति राघव । राजा तस्माद्वरान् भोगान् भुङ्क्ते लोकनमस्कृतः ॥ १९

---

१. वैश्वानरोपमाः ग.　　　२. इदमर्धम् ख. नास्ति ।

ते वयं भवता रक्ष्या भवद्विषयवासिनः । नगरस्थो वनस्थो वा त्वं नो राजा जनेश्वरः ॥ २०
न्यस्तदण्डा वयं राजञ्जितक्रोधा जितेन्द्रियाः । रक्षितव्यास्त्वया शश्वद्गर्भभूतास्तपोधनाः ॥ २१
एवमुक्त्वा फलैर्मूलैः पुष्पैर्वन्यैश्च राघवम् । अन्यैश्च विविधाहारैः सलक्ष्मणमपूजयन् ॥ २२
तथान्ये तापसाः सिद्धा रामं वैश्वानरोपमाः । न्यायवृत्ता यथान्यायं तर्पयामासुरीश्वरम् ॥ २३

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
अरण्यकाण्डे महर्षिसङ्गो नाम प्रथमः सर्गः

---

## द्वितीयः सर्गः

### विराधसंरोधः

कृतातिथ्योऽथ रामस्तु सूर्यस्योदयनं प्रति । आमन्त्र्य स मुनीन् सर्वान् वनमेवान्वगाहत ॥ १
नानामृगगणाकीर्णं शार्दूलवृकसेवितम् । ध्वस्तवृक्षलतागुल्मं [1]दुर्दर्शसलिलाशयम् ॥ २
निष्कूजनानाशकुनि झिल्लिकागणनादितम् । लक्ष्मणानुचरो रामो वनमध्यं ददर्श ह ॥ ३
वनमध्ये तु काकुत्स्थस्तस्मिन् घोरमृगायुते । ददर्श गिरिशृङ्गाभं पुरुषादं महास्वनम् ॥ ४
गम्भीराक्षं महावक्त्रं विकटं विषमोदरम् । बीभत्सं विषमं दीर्घं विकृतं घोरदर्शनम् ॥ ५
वसानं चर्म वैयाघ्रं वसार्द्रं रुधिरोक्षितम् । त्रासनं सर्वभूतानां व्यादितास्यमिवान्तकम् ॥ ६
त्रीन् सिंहांश्चतुरो व्याघ्रान् द्वौ वृषौ पृषतान् दश । सविषाणं वसादिग्धं गजस्य च शिरो महत् ॥७
अवसज्यायसे शूले विनदन्तं महास्वनम् । स रामं लक्ष्मणं चैव सीतां दृष्ट्वाथ मैथिलीम् ॥ ८
अभ्यधावत संक्रुद्धः प्रजाः काल इवान्तकः । स कृत्वा भैरवं नादं चालयन्निव मेदिनीम् ॥ ९
अङ्केनादाय वैदेहीमपक्रम्य ततोऽब्रवीत् । युवां जटाचीरधरौ सभार्यौ क्षीणजीवितौ ॥ १०
प्रविष्टौ दण्डकारण्यं शरचापासिधारिणौ । कथं तापसयोर्वां च वासः प्रमदया सह ॥ ११
अधर्मचारिणौ पापौ कौ युवां मुनिदूषकौ । अहं वनमिदं दुर्गं विराधो नाम राक्षसः ॥ १२
चरामि सायुधो नित्यमृषिमांसानि भक्षयन् । इयं नारी वरारोहा मम भार्या भविष्यति ॥ १३
युवयोः पापयोश्चाहं पास्यामि रुधिरं मृधे । तस्यैवं ब्रुवतो धृष्टं विराधस्य दुरात्मनः ॥ १४
श्रुत्वा सगर्वितं वाक्यं[2] संभ्रान्ता जनकात्मजा । सीता प्रावेपतोद्वेगात् प्रवाते कदली यथा ॥ १५
तां दृष्ट्वा राघवः सीतां विराधाङ्कगतां शुभाम् । अब्रवील्लक्ष्मणं वाक्यं मुखेन परिशुष्यता ॥ १६
पश्य सौम्य नरेन्द्रस्य जनकस्यात्मसंभवाम् । मम भार्यां शुभाचारां विराधाङ्के प्रवेशिताम्[3] ॥ १७

---

१. प्रसन्न- ग, २. सगर्व वचनम् क छ, ३. प्रवेपिताम् ग,

अत्यन्तसुखसंवृद्धां राजपुत्रीं यशस्विनीम् । यदभिप्रेतमस्मासु प्रियं वरवृतं च यत् ॥ १८
कैकेय्यास्तु सुसंपन्नं क्षिप्रमद्यैव लक्ष्मण । या न तुष्यति राज्येन पुत्रार्थे दीर्घदर्शिनी ॥ १९
ययाहं सर्वभूतानां हितः प्रस्थापितो वनम् । अद्येदानीं सकामा सा या माता मम मध्यमा ॥ २०
परस्पर्शात्तु वैदेह्या[1] न दुःखतरमस्ति मे । पितुर्वियोगात् सौमित्रे स्वराज्यहरणात्तथा ॥ २१
इति ब्रुवति काकुत्स्थे बाष्पशोकपरिप्लुते । अब्रवील्लक्ष्मणः क्रुद्धो रुद्धो नाग इव श्वसन् ॥ २२
अनाथ इव भूतानां नाथस्त्वं वासवोपमः । मया प्रेष्येण काकुत्स्थ किमर्थं परितप्यसे ॥ २३
शरेण निहतस्याद्य मया क्रुद्धेन रक्षसः । । विराधस्य गतासोर्हि मही पास्यति शोणितम् ॥ २४
राज्यकामे मम क्रोधो भरते यो बभूव ह । तं विराधे प्रमोक्ष्यामि वज्री वज्रमिवाचले ॥ २५

मम भुजबलवेगवेगितः पततु शरोऽस्य महान् महोरसि ।
व्यपनयतु तनोश्च जीवितं पततु ततः स महीं विघूर्णितः ॥ २६

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
अरण्यकाण्डे विराधसंरोधो नाम द्वितीयः सर्गः

---

## तृतीयः सर्गः

### विराधप्रहारः

अथोवाच पुनर्वाक्यं विराधः पूरयन् वनम् । आत्मानं पृच्छते ब्रूतं कौ युवां क्व गमिष्यथः ॥ १
तमुवाच ततो रामो राक्षसं ज्वलिताननम् । पृच्छन्तं सुमहातेजा इक्ष्वाकुकुलमात्मनः ॥ २
क्षत्रियौ वृत्तसंपन्नौ विद्धि नौ वनगोचरौ । त्वां तु वेदितुमिच्छावः कस्त्वं चरसि दण्डकान् ॥ ३
तमुवाच विराधस्तु रामं सत्यपराक्रमम् । हन्त वक्ष्यामि ते राजन्निबोध मम राघव ॥ ४
पुत्रः किल जवस्याहं मम माता शतह्रदा । विराध इति मामाहुः पृथिव्यां सर्वराक्षसाः ॥ ५
तपसा चापि मे प्राप्ता ब्रह्मणो हि प्रसादजा । शस्त्रेणावध्यता लेकेऽच्छेद्याभेद्यत्वमेव च ॥ ६
उत्सृज्य प्रमदामेनामनपेक्षौ यथागतम् । त्वरमाणौ पलायेथां न वां जीवितमाददे ॥ ७
तं रामः प्रत्युवाचेदं कोपसंरक्तलोचनः । राक्षसं विकृताकारं विराधं पापचेतसम् ॥ ८
क्षुद्र धिक् त्वां तु हीनार्थं मृत्युमन्वेषसे ध्रुवम् । रणे संप्राप्स्यसे तिष्ठ न मे जीवन् गमिष्यसि ॥ ९
ततः सज्यं धनुः कृत्वा रामः सुनिशिताञ्शरान् । सुशीघ्रमभिसन्धाय राक्षसं निजघान ह ॥ १०

---

1. वैदेह्या यः परस्पर्शः तदपेक्षया अधिकदुःखावहमन्यत् मे न किञ्चिदस्ति । अयमेव सर्वतोऽपि दुःखतर इति भावः । तद्विवृणोति—पितुर्वियोगादिति । अयं दुःखतर इत्यध्याहारः । यतः पितुर्वियोगात् स्वराज्यहरणाच्च अयं परस्पर्शः दुःखतरः, अतः अद्य इदानीं मध्यमा माता सकामेत्यन्वयः । परस्पर्शात् अतिदुःख यथा तथा पितृवियोगान्नास्तीति योजनं तु अव्युत्पन्नम ।

१. इतः पूर्वं—इत्युक्त्वा लक्ष्मणः श्रीमान् राक्षसं प्रहसन्निव । को भवान् वनमभ्येत्य चरिष्यति यथासुखम् ॥—इति ग. छ.

धनुषा ज्यागुणवता सप्त बाणान् मुमोच ह । रुक्मपुङ्खान् महावेगान् सुपर्णानिलतुल्यगान् ।। ११

ते शरीरं विराधस्य भित्त्वा बर्हिणवाससः । निपेतुः शोणितादिग्धा धरण्यां पावकोपमाः ।। १२

स विद्धो न्यस्य वैदेहीं शूलमुद्यम्य राक्षसः । अभ्यद्रवत् सुसंक्रुद्धस्तदा रामं सलक्ष्मणम् ।। १३

स विनद्य महानादं शूलं शक्रध्वजोपमम् । प्रगृह्याशोभत तदा व्यात्तानन इवान्तकः ।। १४

अथ तौ भ्रातरौ दीप्तं शरवर्षं ववर्षतुः । विराधे राक्षसे तस्मिन् कालान्तकयमोपमे ।। १५

स प्रहस्य महारौद्रः स्थित्वाजृम्भत राक्षसः । जृम्भमाणस्य ते बाणाः कायान्निष्पेतुराशुगाः ।। १६

स्पर्शात्तु[1] वरदानेन प्राणान् संरुध्य राक्षसः । विराधः शूलमुद्यम्य राघवावभ्यधावत ।। १७

तच्छूलं वज्रसंकाशं गगने ज्वलनोपमम् । द्वाभ्यां चिच्छेद बाणाभ्यां रामः शस्त्रभृतां वरः ।। १८

तद्रामविशिखच्छिन्नं शूलं तस्य कराद्भुवि । पपाताशनिना छिन्नं मेरोरिव शिलातलम् ।। १९

तौ खड्गौ क्षिप्रमुद्यम्य कृष्णसर्पोपमौ शुभौ । तूर्णमापततस्तस्य तदा प्राहरतां बलात् ।। २०

स वध्यमानः सुभृशं बाहुभ्यां परिरभ्य तौ । अप्रकम्प्यौ नरव्याघ्रौ रौद्रः प्रस्थातुमैच्छत ।। २१

तस्याभिप्रायमाज्ञाय रामो लक्ष्मणमब्रवीत् । वहत्वयमलं तावत् पथानेन तु राक्षसः ।। २२

यथा चेच्छति सौमित्रे तथा वहतु राक्षसः[2] । अयमेव हि नः पन्था येन याति निशाचरः ।। २३

स तु स्वबलवीर्येण समुत्क्षिप्य निशाचरः[3] । बालाविव स्कन्धगतौ चकारातिबलोद्धतः[4] ।। २४

तावारोप्य ततः स्कन्धं राघवौ रजनीचरः । विराधो निनदन् घोरं जगामाभिमुखो वनम् ।। २५

वनं महामेघनिभं प्रविष्टो द्रुमैर्महद्भिर्विविधैरुपेतम् ।
नानाविधैः पक्षिशतैर्विचित्रं शिवायुतं व्यालमृगैर्विकीर्णम् ।। २६

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
अरण्यकाण्डे विराधप्रहारो नाम तृतीयः सर्गः

---

## चतुर्थः सर्गः

### विराधनिखननम्

ह्रियमाणौ तु तौ दृष्ट्वा वैदेही रामलक्ष्मणौ । उच्चैःस्वरेण चुक्रोश प्रगृह्य सुभुजा भुजौ ।। १

एष दाशरथी रामः सत्यवाञ्शीलवाञ्शुचिः । रक्षसा रौद्ररूपेण ह्रियते सहलक्ष्मणः ।। २

मां वृका भक्षयिष्यन्ति शार्दूला द्वीपिनस्तथा । मां हरोत्सृज्य काकुत्स्थौ नमस्ते राक्षसोत्तम ।। ३

तस्यास्तद्वचनं श्रुत्वा वैदेह्या रामलक्ष्मणौ । वेगं प्रचक्रतुर्वीरौ वधे तस्य दुरात्मनः ।। ४

१. बलात्तु छ.
२. इदमर्धम् क. नास्ति ।
३. इदमर्धम् क. नास्ति
४. अतिबलौ ततः च. छ.

तस्य रौद्रस्य सौमित्रिर्बाहुं सव्यं बभञ्ज ह । रामस्तु दक्षिणं बाहुं तरसा तस्य रक्षसः ॥ ५
स भग्नबाहुः संविग्नो निपपाताशु राक्षसः । धरण्यां मेघसंकाशो वज्रभिन्न इवाचलः ॥ ६
मुष्टिभिर्जानुभिः पद्भिः सूदयन्तौ तु राक्षसम् । उद्यम्योद्यम्य चाप्येनं स्थण्डिले निष्पिपेषतुः ॥ ७
स विद्धो बहुभिर्बाणैः खड्गाभ्यां च परिक्षतः । निष्पिष्टो बहुधा भूमौ न ममार स राक्षसः ॥ ८
तं प्रेक्ष्य रामः सुभृशमवध्यमचलोपमम् । भयेष्वभयदः श्रीमानिदं वचनमब्रवीत् ॥ ९
तपसा पुरुषव्याघ्र राक्षसोऽयं न शक्यते । शस्त्रेण युधि निर्जेतुं राक्षसं निखनावहे ॥ १०
कुञ्जरस्येव रौद्रस्य राक्षसस्यास्य लक्ष्मण । वनेऽस्मिन् सुमहच्छ्वभ्रं खन्यतां रौद्रकर्मणः ॥ ११
इत्युक्त्वा लक्ष्मणं रामः प्रदरः खन्यतामिति । तस्थौ विराधमाक्रम्य कण्ठे पादेन वीर्यवान् ॥ १२
तच्छ्रुत्वा राघवेणोक्तं राक्षसः प्रश्रितं वचः । इदं प्रोवाच काकुत्स्थं विराधः पुरुषर्षभम् ॥ १३
हतोऽहं पुरुषव्याघ्र शक्रतुल्यबलेन वै । मया तु पूर्वं त्वं मोहान्न ज्ञातः पुरुषर्षभ ॥ १४
कौसल्या सुप्रजा तात रामस्त्वं विदितो मया । वैदेही च महाभागा लक्ष्मणश्च महायशाः ॥ १५
अभिशापादहं घोरां प्रविष्टो राक्षसीं तनुम् । तुम्बुरुर्नाम गन्धर्वः शप्तो वैश्रवणेन ह ॥ १६
प्रसाद्यमानश्च मया सोऽब्रवीन्मां महायशाः । यदा दाशरथी रामस्त्वां वधिष्यति संयुगे ॥ १७
तदा प्रकृतिमापन्नो भवान् स्वर्गं गमिष्यति । इति वैश्रवणो राजा रम्भासक्तं पुरानघ ॥ १८
अनुपस्थीयमानो मां संक्रुद्धो व्याजहार ह । तव प्रसादान्मुक्तोऽहमभिशापात् सुदारुणात् ॥ १९
भुवनं स्वं गमिष्यामि स्वस्ति वोऽस्तु परंतप । इतो वसति धर्मात्मा शरभङ्गः प्रतापवान् ॥ २०
अध्यर्धयोजने तात महर्षिः सूर्यसंनिभः । तं क्षिप्रमभिगच्छ त्वं स ते श्रेयो विधास्यति ॥ २१
अवटे चापि मां राम प्रक्षिप्य कुशली व्रज । रक्षसां गतसत्त्वानामेष धर्मः सनातनः ॥ २२
अवटे ये निधीयन्ते तेषां लोकाः सनातनाः । एवमुक्त्वा तु काकुत्स्थं विराधः शरपीडितः ॥ २३
बभूव स्वर्गतिं प्राप्तो न्यस्तदेहो महाबलः । तच्छ्रुत्वा राघवो वाक्यं लक्ष्मणं व्यादिदेश ह ॥ २४
ततः खनित्रमादाय लक्ष्मणः श्वभ्रमुत्तमम् । अखनत् पार्श्वतस्तस्य विराधस्य महात्मनः[1] ॥ २५
तं मुक्तकण्ठं निष्पिष्य शङ्कुकर्णं महास्वनम् । विराधं प्राक्षिपच्छ्वभ्रे नदन्तं भैरवस्वनम् ॥ २६

तमाहवे निर्जितमाशुविक्रमौ स्थिरावुभौ संयति रामलक्ष्मणौ ।
मुदान्वितौ चिक्षिपतुर्भयावहं नदन्तमुत्क्षिप्य बिले तु[2] राक्षसम् ॥ २७

अवध्यतां प्रेक्ष्य महासुरस्य तौ शितेन शस्त्रेण तदा नरर्षभौ ।
समर्थ्य चात्यर्थविशारदावुभौ बिले विराधस्य वधं प्रचक्रतुः ॥ २८

स्वयं विराधेन हि मृत्युमात्मनः प्रसह्य रामेण वधार्थमीप्सितः ।
निवेदितः काननचारिणा स्वयं न मे वधः शस्त्रकृतो भवेदिति ॥ २९

---

१. कुञ्जरस्येव रौद्रस्य राक्षसस्यास्य लक्ष्मण । विराधमाक्रम्य कण्ठे पादेन वीर्यवान् ॥ श्लोकद्वयमिदं वनेऽस्मिन् सुमहच्छ्वभ्रं खन्यतां रौद्रकर्मणः ॥ कुत्रचित् २४-२५ मध्ये पूर्वपठितं पुनरुक्तं दृश्यते । इत्युक्त्वा लक्ष्मणं रामः प्रदरः खन्यतामिति । तस्थौ

२. बलेन ख.

तदेव रामेण निशम्य भाषितं कृता मतिस्तस्य बिलप्रवेशने ।
बिलं च रामेण बलेन रक्षसा प्रवेश्यमानेन वनं विनादितम् ॥ ३०
प्रहृष्टरूपाविव रामलक्ष्मणौ विराधमुर्व्यां प्रदरे निखाय तम् ।
ननन्दतुर्वीतभयौ महावने शिलाभिरन्तर्दधतुश्च राक्षसम् । ३१
ततस्तु तौ कार्मुकखड्गधारिणौ निहत्य रक्षः परिगृह्य मैथिलीम् ।
विजह्रतुस्तौ मुदितौ महावने दिवि स्थितौ चन्द्रदिवाकराविव ॥ ३२

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायां
अरण्यकाण्डे विराधनिखननं नाम चतुर्थः सर्गः

---

## पञ्चमः सर्गः

### शरभङ्गब्रह्मलोकप्रस्थानम्

हत्वा तु तं भीमबलं विराधं राक्षसं वने । ततः सीतां परिष्वज्य समाश्वास्य च वीर्यवान् ॥ १
अब्रवील्लक्ष्मणं रामो भ्रातरं दीप्ततेजसम् । कष्टं वनमिदं दुर्गं न च स्म वनगोचराः ॥ २
अभिगच्छामहे शीघ्रं शरभङ्गं तपोधनम् । आश्रमं शरभङ्गस्य राघवोऽभिजगाम ह ॥ ३
तस्य देवप्रभावस्य तपसा भावितात्मनः । समीपे शरभङ्गस्य ददर्श महदद्भुतम् ॥ ४
विभ्राजमानं वपुषा सूर्यवैश्वानरोपमम् । अवरुह्य रथोत्सङ्गात्सकाशे विबुधानुगम्[1] ॥ ५
असंस्पृशन्तं वसुधां ददर्श विबुधेश्वरम् । सुप्रभाभरणं देवं विरजोऽम्बरधारिणम् ॥ ६
तद्विधैरेव बहुभिः पूज्यमानं महात्मभिः । हरिभिर्वाजिभिर्युक्तमन्तरिक्षगतं रथम् ॥ ७
ददर्शादूरतस्तस्य तरुणादित्यसंनिभम् । पाण्डराभ्रघनप्रख्यं चन्द्रमण्डलसंनिभम् ॥ ८
अपश्यद्विमलं छत्रं चित्रमाल्योपशोभितम् । चामरव्यजने चाग्र्ये रुक्मदण्डे महाधने ॥ ९
गृहीते वरनारीभ्यां धूयमाने च मूर्धनि । गन्धर्वामरसिद्धाश्च बहवः परमर्षयः ॥ १०
अन्तरिक्षगतं देवं वाग्भिरग्र्याभिरीडिरे । सह संभाषमाणे तु शरभङ्गेण वासवे ॥ ११
दृष्ट्वा शतक्रतुं तत्र रामो लक्ष्मणमब्रवीत् । रामोऽथ रथमुद्दिश्य लक्ष्मणाय प्रदर्शयन्[2] ॥ १२
अर्चिष्मन्तं श्रिया जुष्टमद्भुतं पश्य लक्ष्मण । प्रतपन्तमिवादित्यमन्तरिक्षगतं रथम्[3] ॥ १३
ये हयाः पुरुहूतस्य पुरा शक्रस्य नः श्रुताः । अन्तरिक्षगता दिव्यास्त इमे हरयो ध्रुवम् ॥ १४
इमे च पुरुषव्याघ्रा ये तिष्ठन्त्यभितो रथम् । शतं शतं कुण्डलिनो युवानः खड्गपाणयः ॥ १५

१. अस्य स्थाने—रथप्रवरमारूढमाकाशे विबुधाधिपम्—इति क.
२. इदमर्धम् ग. नास्ति ।
३. रामोऽथेत्यादि रथमित्यन्तं ख. नास्ति ।

विस्तीर्णविपुलोरस्काः परिघायतबाहवः । शोणांशुवसनाः सर्वे व्याघ्रा इव दुरासदाः ॥ १६
उरोदेशेषु सर्वेषां हारा ज्वलनसंनिभाः । रूपं बिभ्रति सौमित्रे पञ्चविंशतिवार्षिकम् ॥ १७
एतद्धि किल देवानां वयो भवति नित्यदा । यथेमे पुरुषव्याघ्र दृश्यन्ते प्रियदर्शनाः ॥ १८
इहैव सह वैदेह्या मुहूर्तं तिष्ठ लक्ष्मण । यावज्जानाम्यहं व्यक्तं क एष द्युतिमान् रथे ॥ १९
तमेवमुक्त्वा सौमित्रिमिहैव स्थीयतामिति । अभिचक्राम काकुत्स्थः शरभङ्गाश्रमं प्रति ॥ २०
ततः समभिगच्छन्तं प्रेक्ष्य रामं शचीपतिः । शरभङ्गमनुज्ञाप्य विबुधानिदमब्रवीत्[१] ॥ २१
इहोपयात्यसौ रामो यावन्मां नाभिभाषते । निष्ठां नयत[२] तावत्तु ततो मां द्रष्टुमर्हति ॥ २२
जितवन्तं कृतार्थं च द्रष्टाहमचिरादिमम् । कर्म ह्यनेन कर्तव्य महदन्यैः सुदुष्करम् ॥ २३
निष्पादयित्वा तत् कर्म ततो मां द्रष्टुमर्हति । अथ वज्री तमामन्त्र्य मानयित्वा च तापसम् ॥ २४
रथेन हरियुक्तेन ययौ दिवमरिंदमः । प्रयाते तु सहस्राक्षे राघवः सपरिच्छदे ॥ २५
अग्निहोत्रमुपासीनं शरभङ्गमुपागमत् । तस्य पादौ च संगृह्य रामः सीता च लक्ष्मणः ॥ २६
निषेदुः समनुज्ञाता लब्धवासा निमन्त्रिताः । ततः शक्रोपयानं तु पर्यपृच्छत् स राघवः ॥ २७
शरभङ्गश्च तत्सर्वं राघवाय न्यवेदयत् । मामेष वरदो राम ब्रह्मलोकं निनीषति ॥ २८
जितमुग्रेण तपसा दुष्प्रापमकृतात्मभिः । अहं ज्ञात्वा नरव्याघ्र वर्तमानमदूरतः ॥ २९
ब्रह्मलोकं न गच्छामि त्वामदृष्ट्वा प्रियातिथिम् । त्वयाहं पुरुषव्याघ्र धार्मिकेण महात्मना॥ ३०
समागम्य गमिष्यामि त्रिदिवं देवसेवितम् । अक्षया नरशार्दूल मया लोका जिताः शुभाः ॥ ३१
ब्राह्म्याश्च नाकपृष्ठ्याश्च प्रतिगृह्णीष्व मामकान् । एवमुक्तो नरव्याघ्रः सर्वशास्त्रविशारदः ॥ ३२
ऋषिणा शरभङ्गेण राघवो वाक्यमब्रवीत् । अहमेवाहरिष्यामि सर्वलोकान् महामुने ॥ ३३
आवासं त्वहमिच्छामि प्रदिष्टमिह कानने । राघवेणैवमुक्तस्तु शक्रतुल्यबलेन वै ॥ ३४
शरभङ्गो महाप्राज्ञः पुनरेवाब्रवीद्वचः । इह राम महातेजाः सुतीक्ष्णो नाम धार्मिकः ॥ ३५
वसत्यरण्ये धर्मात्मा स ते वासं विधास्यति । सुतीक्ष्णमभिगच्छ त्वं शुचौ देशे तपस्विनम् ॥ ३६
रमणीये वनोद्देशे स ते वासं विधास्यति[३] । इमां मन्दाकिनीं राम प्रतिस्रोतामनुव्रज ॥ ३७
नदीं पुष्पोडुपवहां तत्र तत्र गमिष्यसि । एष पन्था नरव्याघ्र मुहूर्तं पश्य तात माम् ॥ ३८
यावज्जहामि गात्राणि जीर्णां त्वचमिवोरगः । ततोऽग्निं सुसमाधाय हुत्वा चाज्येन मन्त्रवित् ॥ ३९
शरभङ्गो महातेजाः प्रविवेश हुताशनम् । तस्य रोमाणि केशांश्च ददाहाग्निर्महात्मनः ॥ ४०
जीर्णां त्वचं तथास्थीनि यच्च मांसं सशोणितम् । रामस्तु विस्मितो भ्रात्रा भार्यया च सहात्मवान् ॥ ४१
स च पावकसंकाशः कुमारः समपद्यत । उत्थायाग्निचयात्तस्माच्छरभङ्गो व्यरोचत ॥ ४२

---

१. अस्य स्थाने—शरभङ्गमनुप्राप्य विविक्त- इदमब्रवीत्— इति च. छ.

२. नयतु च, छ.

३. सुतीक्ष्णमित्यादि विधास्यतीत्यन्तम् ख. नास्ति ।

स लोकानाहिताग्नीनामृषीणां भावितात्मनाम् । देवानां च व्यतिक्रम्य ब्रह्मलोकं व्यरोहत ॥ ४३

स पुण्यकर्मा भवने द्विजर्षभः पितामहं सानुचरं ददर्श ह ।
पितामहश्चापि समीक्ष्य तं द्विजं ननन्द सुस्वागतमित्युवाच ह ॥ ४४

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
अरण्यकाण्डे शरभङ्गब्रह्मलोकप्रस्थानं नाम पञ्चाशः सर्गः

---

## षष्ठः सर्गः

### रक्षोवधप्रतिज्ञानम्

शरभङ्गे दिवं याते मुनिसङ्घाः समागताः । अभ्यगच्छन्त काकुत्स्थं रामं ज्वलिततेजसम् ॥ १

वैखानसा वालखिल्याः संप्रक्षाला मरीचिपाः । अश्मकुट्टाश्च बहवः पत्राहाराश्च तापसाः ॥ २

दन्तोलूखलिनश्चैव तथैवोन्मज्जकाः परे । गात्रशय्या अशय्याश्च तथैवानवकाशिकाः[1] ॥ ३

मुनयः सलिलाहारा वायुभक्षास्तथापरे । आकाशनिलयाश्चैव तथा स्थण्डिलशायिनः ॥ ४

तथोर्ध्ववासिनो[2] दान्तास्तथार्द्रपटवाससः । सजपाश्च तपोनित्यास्तथा पञ्चतपोऽन्विताः ॥ ५

सर्वे ब्राह्म्या श्रिया जुष्टा दृढयोगाः समाहिताः । शरभङ्गाश्रमे राममभिजग्मुश्च तापसाः ॥ ६

अभिगम्य च धर्मज्ञा रामं धर्मभृतां वरम् । उचुः परमधर्मज्ञमृषिसङ्घाः सामाहिताः ॥ ७

त्वमिक्ष्वाकुकुलस्यास्य पृथिव्याश्च महारथ । प्रधानश्चासि नाथश्च देवानां मघवानिव ॥ ८

विश्रुतस्त्रिषु लोकेषु यशसा विक्रमेण च । पितृव्रतत्वं[3] सत्यं च त्वयि धर्मश्च पुष्कलः ॥ ९

त्वामासाद्य महात्मानं धर्मज्ञं धर्मवत्सलम् । अर्थित्वान्नाथ वक्ष्यामस्तच्च नः क्षन्तुमर्हसि ॥ १०

अधर्मस्तु महांस्तात भवेत्तस्य महीपतेः । यो हरेद्बलिषड्भागं न च रक्षति पुत्रवत् ॥ ११

युञ्जानः स्वानिव प्राणान् प्राणैरिष्टान् सुतानिव । नित्ययुक्तः सदा रक्षन् सर्वान् विषयवासिनः ॥ १२

प्राप्नोति शाश्वतीं राम कीर्तिं स बहुवार्षिकीम् । ब्रह्मणः स्थानमासाद्य तत्र चापि महीयते ॥ १३

यत् करोति[4] परं धर्मं मुनिर्मूलफलाशनः । तत्र राज्ञश्चतुर्भागः प्रजा धर्मेण रक्षतः ॥ १४

सोऽयं ब्राह्मणभूयिष्ठो वानप्रस्थगणो महान् । त्वन्नाथोऽनाथवद्राम राक्षसैर्वध्यते भृशम् ॥ १५

एहि पश्य शरीराणि मुनीनां भावितात्मनाम् । हतानां राक्षसैर्घोरैर्बहूनां बहुधा वने ॥ १६

पम्पानदीनिवासानामनु मन्दाकिनीमपि । चित्रकूटालयानां च क्रियते कदनं महत् ॥ १७

एवं वयं न मृष्यामो विप्रकारं तपस्विनाम् । क्रियमाणं वने घोरं रक्षोभिर्भीमकर्मभिः ॥ १८

---

१. तथैवाभ्रावकाशकाः च. छ.
२. व्रतोपवासिनः च. छ.
३. पितृवृत्तं च. ख. पितृभक्तिश्च च. छ.
४. यः करोति ग.

ततस्त्वां शरणार्थं च शरण्यं समुपस्थिताः। परिपालय नो राम वध्यमानान्निशाचरैः॥ १९

परा त्वत्तो गतिर्वीर पृथिव्यां नोपपद्यते। परिपालय नः सर्वान् राक्षसेभ्यो नृपात्मज ॥ २०

एतच्छ्रुत्वा तु काकुत्स्थस्तापसानां तपस्विनाम्। इदं प्रोवाच धर्मात्मा सर्वानेव तपस्विनः॥ २१

नैवमर्हत मां वक्तुमाज्ञाप्योऽहं तपस्विनाम्। केवलेनात्मकार्येण प्रवेष्टव्यं मया वनम्॥ २२

विप्रकारमपाक्रष्टुं राक्षसैर्भवतामिमम्। पितुस्तु निर्देशकरः प्रविष्टोऽहमिदं वनम्॥ २३

भवतामर्थसिद्ध्यर्थमागतोऽहं यदृच्छया। तस्य मेऽयं वने वासो भविष्यति महाफलः॥ २४

तपस्विनां रणे शत्रून् हन्तुमिच्छामि राक्षसान्। पश्यन्तु वीर्यमृषयः सभ्रातुर्मे तपोधनाः॥ २५

दत्त्वाभयं चापि तपोधनानां धर्मे धृतात्मा सह लक्ष्मणेन।
तपोधनैश्चापि सभाज्यवृत्तः सुतीक्ष्णमेवाभिजगाम वीरः॥ २६

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
अरण्यकाण्डे रक्षोवधप्रतिज्ञानं नाम षष्ठः सर्गः

---

## सप्तमः सर्गः

### सुतीक्ष्णाश्रमः

रामस्तु सहितो भ्रात्रा सीतया च परंतपः। सुतीक्ष्णस्याश्रमपदं जगाम सह तैर्द्विजैः॥ १

स गत्वादूरमध्वानं नदीस्तीर्त्वा बहूदकाः। ददर्श विपुलं शैलं महामेघमिवोन्नतम्॥ २

ततस्तदिक्ष्वाकुवरौ संततं विविधैर्द्रुमैः। काननं तौ विविशतुः सीतया सह राघवौ॥ ३

प्रविष्टस्तु वनं घोरं बहुपुष्पफलद्रुमम्[1]। ददर्शाश्रममेकान्ते चीरमालापरिष्कृतम्॥ ४

तत्र तापसमासीनं मलपङ्कजटाधरम्[2]। रामः सुतीक्ष्णं विधिवत्तपोधनमभाषत॥ ५

रामोऽहमस्मि भगवन् भवन्तं द्रष्टुमागतः। तन्माभिवद धर्मज्ञ महर्षे सत्यविक्रम॥ ६

स निरीक्ष्य ततो वीरं रामं धर्मभृतां वरम्। समाश्लिष्य च बाहुभ्यामिदं वचनमब्रवीत्॥ ७

स्वागतं खलु ते वीर राम धर्मभृतां वर। आश्रमोऽयं त्वया प्राप्तः सनाथ इव सांप्रतम्॥ ८

प्रतीक्षमाणस्त्वामेव नारोहेऽहं महायशः। देवलोकमितो वीर देहं त्यक्त्वा महीतले॥ ९

चित्रकूटमुपादाय राज्यभ्रष्टोऽसि मे श्रुतः। इहोपयातः काकुत्स्थ देवराजः शतक्रतुः॥ १०

उपागम्य च मां देवो महादेवः सुरेश्वरः। सर्वाँल्लोकाञ्जितानाह मम पुण्येन कर्मणा॥ ११

तेषु देवर्षिजुष्टेषु जितेषु तपसा मया। मत्प्रसादात् सभार्यस्त्वं विहरस्व सलक्ष्मणः॥ १२

तमुग्रतपसा युक्तं महर्षिं सत्यवादिनम्। प्रत्युवाचात्मवान् रामो ब्रह्माणमिव वासवः[3]॥ १३

---

१. बहुमूलफलद्रुमम् ख. छ.
२. मलपङ्कजधारिणम् ति.
३. काश्यपः च. छ.

अहमेवाहरिष्यामि स्वयं लोकान् महामुने । आवासं त्वहमिच्छामि प्रदिष्टमिह कानने ॥ १४
भवान् सर्वत्र कुशलः सर्वभूतहिते रतः । आख्यातः शरभङ्गेण गौतमेन महात्मना ॥ १५
एवमुक्तस्तु रामेण महर्षिर्लोकविश्रुतः । अब्रवीन्मधुरं वाक्यं हर्षेण महताप्लुतः ॥ १६
अयमेवाश्रमो राम गुणवान् रम्यतामिह । ऋषिसङ्घानुचरितः सदा मूलफलान्वितः ॥ १७
इममाश्रममागम्य मृगसङ्घा महीयसः[1] । अहत्वा[2] प्रतिगच्छन्ति लोभयित्वाकुतोभयाः ॥ १८
नान्यो दोषो भवेदत्र मृगेभ्योऽन्यत्र विद्धि वै । तच्छ्रुत्वा वचनं तस्य महर्षेर्लक्ष्मणाग्रजः ॥ १९
उवाच वचनं धीरो विकृष्य सशरं धनुः । तानहं सुमहाभाग मृगसङ्घान् समागतान् ॥ २०
हन्यां निशितधारेण शरेणाशनिवर्चसा । भवांस्तत्राभिषज्येत किं स्यात् कृच्छ्रतरं ततः ॥ २१
एतस्मिन्नाश्रमे वासं चिरं तु न समर्थये । तमेवमुक्त्वोपरमं[1] रामः सन्ध्यामुपाविशत् ॥ २२
अन्वास्य पश्चिमां सन्ध्यां तत्र वासमकल्पयत् । सुतीक्ष्णस्याश्रमे रम्ये सीतया लक्ष्मणेन च ॥ २३

ततः शुभं तापसभोज्यमन्नं स्वयं सुतीक्ष्णः पुरुषर्षभाभ्याम् ।
ताभ्यां सुसत्कृत्य ददौ महात्मा सन्ध्यानिवृत्तौ रजनीमवेक्ष्य ॥ २४

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
अरण्यकाण्डे सुतीक्ष्णाश्रमो नाम सप्तमः सर्गः

---

## अष्टमः सर्गः

### सुतीक्ष्णाभ्यनुज्ञा

रामस्तु सहसौमित्रिः सुतीक्ष्णेनाभिपूजितः । परिणाम्य निशां तत्र प्रभाते प्रत्यबुध्यत ॥ १
उत्थाय तु यथाकालं राघवः सह सीतया । उपास्पृशत् सुशीतेन जलेनोत्पलगन्धिना ॥ २
अथ तेऽग्निं सुरांश्चैव वैदेही रामलक्ष्मणौ । कल्यं विधिवदभ्यर्च्य तपस्विशरणे वने ॥ ३
उदयन्तं दिनकरं दृष्ट्वा विगतकल्मषाः । सुतीक्ष्णमभिगम्येदं श्लक्ष्णं वचनमब्रुवन् ॥ ४
सुखोषिताः स्म भगवंस्त्वया पूज्येन पूजिताः । आपृच्छामः प्रयास्यामो मुनयस्त्वरयन्ति नः ॥ ५
त्वरामहे वयं द्रष्टुं कृत्स्नमाश्रममण्डलम् । ऋषीणां पुण्यशीलानां दण्डकारण्यवासिनाम् ॥ ६
अभ्यनुज्ञातुमिच्छामः सहैभिर्मुनिपुंगवैः । धर्मनित्यैस्तपोदान्तैर्विशिखैरिव पावकैः ॥ ७
अविषह्यातपो यावत् सूर्यो नातिविराजते । अमार्गेणागतां लक्ष्मीं प्राप्येवान्वयवर्जितः ॥ ८
तावदिच्छामहे गन्तुमित्युक्त्वा चरणौ मुनेः । ववन्दे सहसौमित्रिः सीतया सह राघवः ॥ ९

---

1. उपरममिति णमुल् । उपरम्येत्यर्थः ति. तमेवमुक्त्वा वरदम् च. छ. तमेवमुक्तः परमम् पुना.

१. महायशः च. छ.
२. अहित्वा च. छ.

तौ संस्पृशन्तौ चरणावुत्थाप्य मुनिपुङ्गवः । गाढमालिङ्ग्य सस्नेहमिदं वचनमब्रवीत् ॥ १०

अरिष्टं गच्छ पन्थानं राम सौमित्रिणा सह । सीतया चानया सार्धं छाययेवानुवृत्तया ॥ ११

पश्याश्रमपदं रम्यं दण्डकारण्यवासिनाम् । एषां तपस्विनां वीर तपसा भावितात्मनाम् ॥ १२

सुप्राज्यफलमूलानि पुष्पितानि वनानि च । प्रशान्तमृगयूथानि शान्तपक्षिगणानि च ॥ १३

फुल्लपङ्कजषण्डानि प्रसन्नसलिलानि च । कारण्डवविकीर्णानि तटाकानि सरांसि च ॥ १४

द्रक्ष्यसे दृष्टिरम्याणि गिरिप्रस्रवणानि च । रमणीयान्यरण्यानि मयूराभिरुतानि च ॥ १५

गम्यतां वत्स सौमित्रे भवानपि च गच्छतु । आगन्तव्यं त्वया तात पुनरेवाश्रमं मम ॥ १६

एवमुक्तस्तथेत्युक्त्वा काकुत्स्थः सहलक्ष्मणः । प्रदक्षिणं मुनिं कृत्वा प्रस्थातुमुपचक्रमे ॥ १७

ततः शुभतरे तूणी धनुषी चायतेक्षणा । ददौ सीता तयोर्भ्रात्रोः खड्गौ च विमलौ ततः ॥ १८

आबध्य च शुभे तूणी चापौ चादाय सस्वनौ । निष्क्रान्तावाश्रमाद्गन्तुमुभौ तौ रामलक्ष्मणौ ॥ १९

श्रीमन्तौ रूपसंपन्नौ दीप्यमानौ स्वतेजसा । प्रस्थितौ धृतचापौ तौ सीतया सह राघवौ ॥ २०

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम
अरण्यकाण्डे सुतीक्ष्णाभ्यनुज्ञा नाम अष्टमः सर्गः

---

## नवमः सर्ग

### सीताधर्मावेदनम्

सुतीक्ष्णेनाभ्यनुज्ञातं प्रस्थितं रघुनन्दनम् । हृद्यया स्निग्धया वाचा भर्तारमिदमब्रवीत् ॥ १

अधर्मस्तु[1] सुसूक्ष्मेण विधिना प्राप्यते महान् । निवृत्तेन तु शक्योऽयं व्यसनात् कामजादिह ॥ २

त्रीण्येव व्यसनान्यत्र कामजानि भवन्त्युत । मिथ्या वाक्यं गुरुतरं तस्मात् गुरुतमे उभे[2] ॥ ३

परदाराभिगमनं विना वैरं च रौद्रता । मिथ्या वाक्यं न ते भूतं न भविष्यति राघव ॥ ४

कुतोऽभिलषणं स्त्रीणां परेषां धर्मनाशनम्[3] । तव नास्ति मनुष्येन्द्र न चाभूत्ते कदाचन ॥ ५

मनस्यपि तथा राम न चैतद्विद्यते क्वचित् । स्वदारनिरतस्त्वं च नित्यमेव नृपात्मज ॥ ६

धर्मिष्ठः सत्यसन्धश्च पितुर्निर्देशकारकः[4] । त्वयि सत्यं च धर्मश्च त्वयि सर्वं प्रतिष्ठितम् ॥ ७

तच्च सर्वं महाबाहो शक्यं धर्तुं जितेन्द्रियैः । तव वश्येन्द्रियत्वं च जानामि शुभदर्शन ॥ ८

तृतीयं यदिदं रौद्रं परप्राणाभिहिंसनम् । निर्वैरं क्रियते मोहात्तच्च ते समुपस्थितम् ॥ ९

प्रतिज्ञातस्त्वया वीर दण्डकारण्यवासिनाम् । ऋषीणां रक्षणार्थाय वधः संयति रक्षसाम् ॥ १०

१. अयं धर्मः च. छ. नास्ति ।
२. परमकं तस्माद्गुरुतराबुभौ प्र.
३. मिथ्येत्यादि धर्मनाशनम् इत्यन्तम् ख.
४. अस्यानन्तरम्——सत्यसन्ध महाभाग श्रीमल्लँक्ष्मणपूर्वज——इति ग, च, छ,

एतन्निमित्तं च वनं दण्डका इति विश्रुतम् । प्रस्थितस्त्वं सह भ्रात्रा धृतबाणशरासनः ॥ ११
ततस्त्वां प्रस्थितं दृष्ट्वा मम चिन्ताकुलं मनः । त्वद्वृत्तं चिन्तयन्त्या वै भवेन्निःश्रेयसं महत् ॥ १२
न हि मे रोचते वीर गमनं दण्डकान् प्रति । कारणं तत्र वक्ष्यामि वदन्त्याः श्रूयतां मम ॥ १३
त्वं हि बाणधनुष्पाणिर्भ्रात्रा सह वनं गतः । दृष्ट्वा वनचरान् सर्वान् कच्चित् कुर्याः शरव्ययम् ॥ १४
क्षत्रियाणां च हि धनुर्हुताशस्येन्धनानि च । समीपतः स्थितं तेजो बलमुच्छ्रयते भृशम् ॥ १५
पुरा किल महाबाहो तपस्वी सत्यवाक्शुचिः । कस्मिंश्चिदभवत् पुण्ये वने रतमृगद्विजे ॥ १६
तस्यैव तपसो विघ्नं कर्तुमिन्द्रः शचीपतिः । खड्गपाणिरथागच्छदाश्रमं भटरूपधृत् ॥ १७
तस्मिंस्तदाश्रमपदे निशितः खड्ग उत्तमः । स न्यासविधिना दत्तः पुण्ये तपसि तिष्ठतः ॥ १८
स तच्छस्त्रमनुप्राप्य न्यासरक्षणतत्परः । वने तं विचरत्येव रक्षन् प्रत्ययमात्मनः ॥ १९
यत्र गच्छत्युपादातुं मूलानि च फलानि च । न विना याति तं खड्गं न्यासरक्षणतत्परः ॥ २०
नित्यं शस्त्रं परिवहन् क्रमेण स तपोधनः । चकार रौद्रीं स्वां बुद्धिं त्यक्त्वा तपसि निश्चयम् ॥ २१
ततः स रौद्रेऽभिरतः प्रमत्तोऽधर्मकर्शितः । तस्य शस्त्रस्य संवासाज्जगाम नरकं मुनिः ॥ २२
एवमेतत् पुरावृत्तं शस्त्रसंयोगकारणम् । अग्निसंयोगवद्धेतुः शस्त्रसंयोग उच्यते ॥ २३
स्नेहाच्च बहुमानाच्च स्मारये त्वां न शिक्षये । न कथंचन सा कार्या गृहीतधनुषा त्वया ॥ २४
बुद्धिर्वैरं विना हन्तुं राक्षसान् दण्डकाश्रितान् । अपराधं विना हन्तुं लोकान् वीर न कामये[1] ॥ २५
क्षत्रियाणां तु वीराणां वनेषु निरतात्मनाम् । धनुषां कार्यमेतावदार्तानामभिरक्षणम ॥ २६
क्व च शस्त्रं क्व च वनं क्व च क्षात्त्रं तपः क्व च । व्याविद्धमिदमस्माभिर्देशधर्मस्तु पूज्यताम् ॥ २७
तदार्य[2] कलुषा बुद्धिर्जायते शस्त्रसेवनात् । पुनर्गत्वा त्वयोध्यायां क्षत्रधर्मं चरिष्यसि ॥ २८
अक्षया तु भवेत् प्रीतिः श्वश्रूश्वशुरयोर्मम । यदि राज्यं परित्यज्य भवेस्त्वं निरतो मुनिः ॥ २९
धर्मादर्थः प्रभवते धर्मात् प्रभवते सुखम् । धर्मेण लभते सर्वं धर्मसारमिदं जगत् ॥ ३०
आत्मानं नियमैस्तैस्तैः कर्शयित्वा प्रयत्नतः । प्राप्यते निपुणैर्धर्मो न सुखाल्लभ्यते सुखम् ॥ ३१
नित्यं शुचिमतिः सौम्य चर धर्मं तपोवने । सर्वं हि विदितं तुभ्यं त्रैलोक्यमपि तत्त्वतः ॥ ३२

स्त्रीचापलादेतदुदाहृतं मे धर्मं च वक्तुं तव कः समर्थः ।
विचार्य बुद्ध्या तु सहानुजेन यद्रोचते तत् कुरु मा चिरेण ॥ ३३

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
अरण्यकाण्डे सीताधर्मावेदनं नाम नवमः सर्गः

———

१. लोको वीर न मंस्यते क.  २. कदर्य पुना ।

## दशमः सर्गः

### रक्षोवधसमर्थनम्

वाक्यमेतत्तु वैदेह्या व्याहृतं भर्तृभक्तया । श्रुत्वा धर्मे स्थितो रामः प्रत्युवाचाथ मैथिलीम् ॥ १

हितमुक्तं त्वया देवि स्निग्धया सदृशं वचः । कुलं व्यपदिशन्त्या च धर्मज्ञे जनकात्मजे ॥ २

किं तु वक्ष्याम्यहं देवि त्वयैवोक्तमिदं वचः । क्षत्रियैर्धार्यते चापो नार्तशब्दो भवेदिति ॥ ३

मां सीते स्वयमागम्य शरण्याः शरणं गताः । ते चार्ता दण्डकारण्ये मुनयः संशितव्रताः ॥ ४

वसन्तो धर्मनिरता वने मूलफलाशनाः । न लभन्ते सुखं भीता राक्षसैः क्रूरकर्मभिः ॥ ५

काले काले च[1] निरता नियमैर्विविधैर्वने । भक्ष्यन्ते राक्षसैर्भीमैर्नरमांसोपजीविभिः[2] ॥ ६

ते भक्ष्यमाणा मुनयो दण्डकारण्यवासिनः । अस्मानभ्यवपद्येति[3] मामूचुर्द्विजसत्तमाः ॥ ७

मया तु वचनं श्रुत्वा तेषामेवं मुखाच्च्युतम् । कृत्वा चरणशुश्रूषां वाक्यमेतदुदाहृतम् ॥ ८

प्रसीदन्तु भवन्तो मे ह्रीरेषा हि ममातुला । यदीदृशैरहं विप्रैरुपस्थेयैरुपस्थितः ॥ ९

किं करोमीति च मया व्याहृतं द्विजसन्निधौ । सर्वैरेतैः समागम्य वागियं समुदाहृता ॥ १०

राक्षसैर्दण्डकाण्ये बहुभिः कामरूपिभिः । अर्दिताः स्म भृशं राम भवान्नस्त्रातुमर्हति ॥ ११

होमकालेषु संप्राप्ताः पर्वकालेषु चानघ । धर्षयन्ति सुदुर्धर्षा राक्षसाः पिशिताशनाः ॥ १२

राक्षसैर्धर्षितानां च तापसानां तपस्विनाम् । गतिं मृगयमाणानां भवान्नः परमा गतिः ॥ १३

कामं तपःप्रभावेण शक्ता हन्तुं निशाचरान् । चिरार्जितं तु नेच्छामस्तपः खण्डयितुं वयम् ॥ १४

बहुविघ्नं तपो नित्यं दुश्चरं चैव राघव । तेन शापं न मुञ्चामो भक्ष्यमाणाश्च राक्षसैः ॥ १५

तदर्द्यमानान् रक्षोभिर्दण्डकारण्यवासिभिः । रक्ष नस्त्वं सह भ्रात्रा त्वन्नाथा हि वयं वने ॥ १६

मया चैतद्वचः श्रुत्वा कार्त्स्न्येन परिपालनम् । ऋषीणां दण्डकारण्ये संश्रुतं जनकात्मजे ॥ १७

संश्रुत्य च न शक्ष्यामि जीवमानः प्रतिश्रवम् । मुनीनामन्यथा कर्तुं सत्यमिष्टं हि मे सदा ॥ १८

अप्यहं जीवितं जह्यां त्वां वा सीते सलक्ष्मणाम् । न तु प्रतिज्ञां संश्रुत्य ब्राह्मणेभ्यो विशेषतः ॥ १९

तदवश्यं मया कार्यमृषीणां परिपालनम् । अनुक्तेनापि वैदेहि प्रतिज्ञाय तु किं पुनः ॥ २०

मम स्नेहाच्च सौहार्दादिदमुक्तं त्वयानघे । परितुष्टोऽस्म्यहं सीते न ह्यनिष्टोऽनुशिष्यते ॥ २१

सदृशं चानुरूपं च कुलस्य तव चात्मनः । सधर्मचारिणी मे त्वं प्राणेभ्योऽपि गरीयसी ॥ २२

इत्येवमुक्त्वा वचनं महात्मा सीतां प्रियां मैथिलराजपुत्रीम् ।
रामो धनुष्मान् सह लक्ष्मणेन जगाम रम्याणि तपोवनानि ॥ २३

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
अरण्यकाण्डे रक्षोवधसमर्थनं नाम दशमः सर्गः

---

१. कालकालेषु ति. रा. २. इदं पद्यम् ख. नास्ति । ३. अभ्यवपद्येते पुना.

## एकादशः सर्गः

### अगस्त्याश्रमः

अग्रतः प्रययौ रामः सीता मध्ये सुमध्यमा । पृष्ठतस्तु धनुष्पाणिर्लक्ष्मणोऽनुजगाम ह ॥ १
तौ पश्यमानौ विविधाञ्शैलप्रस्थान् वनानि च । नदीश्च विविधा रम्या जग्मतुः सीतया सह ॥ २
सारसांश्चक्रवाकांश्च नदीपुलिनचारिणः । सरांसि च सपद्मानि युक्तानि जलजैः खगैः ॥ ३
यूथबद्धांश्च पृपतान् मदोन्मत्तान् विषाणिनः । महिषांश्च वराहांश्च नागांश्च द्रुमवैरिणः ॥ ४
ते गत्वा दूरमध्वानं लम्बमाने दिवाकरे । ददृशुः सहिता रम्यं तटाकं योजनायतम् ॥ ५
पद्मपुष्करसंबाधं गजयूथैरलंकृतम् । सारसैर्हंसकादम्बैः संकुलं जलचारिभिः ॥ ६
प्रसन्नसलिले रम्ये तस्मिन् सरसि शुश्रुवे । गीतवादित्रनिर्घोषो न तु कश्चन दृश्यते ॥ ७
ततः कौतूहलाद्रामो लक्ष्मणश्च महाबलः । मुनिं धर्मभृतं नाम प्रष्टुं समुपचक्रमे ॥ ८
इदमत्यद्भुतं श्रुत्वा सर्वेषां नो महामुने । कौतूहलं महज्जातं किमिदं साधु कथ्यताम् ॥ ९
वक्तव्यं यदि चेद्विप्र नातिगुह्यमपि प्रभो । तेनैवमुक्तो धर्मात्मा राघवेण मुनिस्तदा ॥ १०
प्रभावं सरसः कृत्स्नमाख्यातुमुपचक्रमे । इदं पञ्चाप्सरो नाम तटाकं सार्वकालिकम् ॥ ११
निर्मितं तपसा राम मुनिना माण्डकर्णिना । स हि तेपे तपस्तीव्रं माण्डकर्णिर्महामुनिः ॥ १२
दश वर्षसहस्राणि वायुभक्षो जलाश्रयः । ततः प्रव्यथिताः सर्वे देवाः साग्निपुरोगमाः ॥ १३
अब्रुवन् वचनं सर्वे परस्परसमागताः । अस्माकं कस्यचित्स्थानमेष प्रार्थयते मुनिः ॥ १४
इति संविग्नमनसः सर्वे ते त्रिदिवौकसः । तत्र कर्तुं तपोविघ्नं देवैः सर्वैर्नियोजिताः ॥ १५
प्रधानाप्सरसः पञ्च विद्युच्चलितवर्चसः[1] । अप्सरोभिस्ततस्ताभिर्मुनिर्दृष्टपरावरः ॥ १६
नीतो मदनवश्यत्वं सुराणां कार्यसिद्धये । ताश्चैवाप्सरसः पञ्च मुनेः पत्नीत्वमागताः ॥ १७
तटाके निर्मितं तासामस्मिन्नन्तर्हितं गृहम् । तथैवाप्सरसः पञ्च निवसन्त्यो यथासुखम् ॥ १८
रमयन्ति तपोयोगान्मुनिं यौवनमास्थितम् । तासां संक्रीडमानानामेष वादित्रनिःस्वनः ॥ १९
श्रूयते भूषणोन्मिश्रो गीतशब्दो मनोहरः । आश्चर्यमिति तस्यैतद्वचनं भावितात्मनः ॥ २०
राघवः प्रतिजग्राह सह भ्रात्रा महायशाः । एवं कथयमानस्य ददर्शाश्रममण्डलम् ॥ २१
कुशचीरपरिक्षिप्तं ब्राह्मया लक्ष्म्या समावृतम् । प्रविश्य सह वैदेह्या लक्ष्मणेन च राघवः ॥ २२
उवास मुनिभिः सर्वैः पूज्यमानो महायशाः । तथा तस्मिन् स काकुत्स्थः श्रीमत्याश्रममण्डले ॥ २३
उषित्वा तु सुखं तत्र पूज्यमानो महर्षिभिः । जगाम चाश्रमांस्तेषां पर्यायेण तपस्विनाम् ॥ २४
तेषामुषितवान् पूर्वं सकाशे स महास्त्रवित् । कचित्परिदशान् मासानेकं संवत्सरं कचित् ॥ २५
कचिच्च चतुरो मासान् पञ्च षट् चापरान् कचित् । अपरत्राधिकं मासादप्यर्धमधिकं कचित् ॥ २६

---

१. विद्युत्सदृशवर्चसः छ,

त्रीन् मासानष्टमासांश्च राघवो न्यवसत्सुखम् । एवं संवसतस्तस्य मुनीनामाश्रमेषु वै ॥ २७
रमतश्चानुकूल्येन ययुः संवत्सरा दश । परिवृत्य च धर्मज्ञो राघवः सह सीतया ॥ २८
सुतीक्ष्णस्याश्रमे श्रीमान् पुनरेवाजगाम ह । स तमाश्रममासाद्य मुनिभिः प्रतिपूजितः ॥ २९
तत्रापि न्यवसद्रामः किंचित्कालमरिंदमः । अथाश्रमस्थो विनयात्कदाचित्तं महामुनिम् ॥ ३०
उपासीनः स काकुत्स्थः सुतीक्ष्णमिदमब्रवीत् । अस्मिन्नरण्ये भगवन्नगस्त्यो मुनिसत्तमः ॥ ३१
वसतीति मया नित्यं कथाः कथयतां श्रुतम् । न तु जानामि तं देशं वनस्यास्य महत्तया ॥ ३२
कुत्राश्रममिदं पुण्यं महर्षेस्तस्य धीमतः । प्रसादात्तत्रभवतः सानुजः सह सीतया ॥ ३३
अगस्त्यमभिगच्छेयमभिवादयितुं मुनिम् । मनोरथो महानेष हृदि मे परिवर्तते ॥ ३४
यदहं तं मुनिवरं शुश्रूषेयमपि स्वयम् । इति रामस्य स मुनिः श्रुत्वा धर्मात्मनो वचः ॥ ३५
सुतीक्ष्णः प्रत्युवाचेदं प्रीतो दशरथात्मजम् । अहमप्येतदेव त्वां वक्तुकामः सलक्ष्मणम् ॥ ३६
अगस्त्यमभिगच्छेति सीतया सह राघव । दिष्ट्या त्विदानीमर्थेऽस्मिन् स्वयमेव ब्रवीषि माम् ॥ ३७
अहमाख्यामि ते वत्स यत्रागस्त्यो महामुनिः । योजनान्याश्रमादस्मात्तथा चत्वारि वै ततः ॥ ३८
दक्षिणेन महाञ्छ्रीमानगस्त्यभ्रातुराश्रमः । स्थलीप्राये वनोद्देशे पिप्पलीवनशोभिते ॥ ३९
बहुपुष्पफले रम्ये नानाशकुनिनादिते । पद्मिन्यो विविधास्तत्र प्रसन्नसलिलाः शिवाः ॥ ४०
हंसकारण्डवाकीर्णाश्चक्रवाकोपशोभिताः । तत्रैकां रजनीं व्युष्य प्रभाते राम गम्यताम् ॥ ४१
दक्षिणां दिशमास्थाय वनषण्डस्य पार्श्वतः । तत्रागस्त्याश्रमपदं गत्वा योजनमन्तरम् ॥ ४२
रमणीये वनोद्देशे बहुपादपसंवृते । रंस्यते तत्र वैदेही लक्ष्मणश्च सह त्वया ॥ ४३
स हि रम्यो वनोद्देशो बहुपादपसंकुलः[1] । यदि बुद्धिः कृता द्रष्टुमगस्त्यं तं महामुनिम् ॥ ४४
अद्यैव गमने बुद्धिं रोचयस्व महायशः । इति रामो मुनेः श्रुत्वा सह भ्रात्राभिवाद्य च ॥ ४५
प्रतस्थेऽगस्त्यमुद्दिश्य सानुजः सीतया सह । पश्यन् वनानि रम्याणि पर्वतांश्चाभ्रसंनिभान् ॥ ४६
सरांसि सरितश्चैव पथि मार्गवशानुगाः । सुतीक्ष्णेनोपदिष्टेन गत्वा तेन पथा सुखम् ॥ ४७
इदं परमसंहृष्टो वाक्यं लक्ष्मणमब्रवीत् । एतदेवाश्रमपदं नूनं तस्य महात्मनः ॥ ४८
अगस्त्यस्य मुनेर्भ्रातुर्दृश्यते पुण्यकर्मणः । यथा हि मे वनस्यास्य ज्ञाताः पथि सहस्रशः ॥ ४९
संनताः फलभारेण पुष्पभारेण च द्रुमाः । पिप्पलीनां च पक्वानां वनादस्मादुपागतः ॥ ५०
गन्धोऽयं पवनोत्क्षिप्तः सहसा कटुकोदयः । तत्र तत्र च दृश्यन्ते संक्षिप्ताः काष्ठसंचयाः ॥ ५१
लूनाश्च पथि दृश्यन्ते दर्भा वैडूर्यवर्चसः । एतच्च वनमध्यस्थं कृष्णाभ्रशिखरोपमम्[2] ॥ ५२
पावकस्याश्रमस्थस्य धूमाग्रं संप्रदृश्यते । विविक्तेषु च तीर्थेषु कृतस्नाना द्विजातयः ॥ ५३
पुष्पोपहारं कुर्वन्ति कुसुमैः स्वयमार्जितैः । तत्सुतीक्ष्णस्य वचनं यथा सौम्य मया श्रुतम् ॥ ५४

---

१. इदमर्धम् ग. नास्ति ।  २. कृष्णाभ्रनिचयोपमम् ख.

अगस्त्यस्याश्रमो भ्रातुर्नूनमेष भविष्यति । निगृह्य तरसा मृत्युं लोकानां हितकाम्यया ॥ ५५
यस्य भ्रात्रा कृतेयं दिक्शरण्या पुण्यकर्मणा । इहैकदा किल क्रूरो वातापिरपि चेल्वलः ॥ ५६
भ्रातरौ सहितावास्तां ब्राह्मणघ्नौ महासुरौ । धारयन् ब्राह्मणं रूपमिल्वलः संस्कृतं वदन् ॥ ५७
आमन्त्रयति विप्रान् स्म श्राद्धमुद्दिश्य निर्घृणः । भ्रातरं संस्कृतं कृत्वा ततस्तं मेषरूपिणम् ॥ ५८
तान् द्विजान् भोजयामास श्राद्धदृष्टेन कर्मणा । ततो भुक्तवतां तेषां विप्राणामिल्वलोऽब्रवीत् ॥ ५९
वातापे निष्क्रमस्वेति स्वरेण महता वदन् । ततो भ्रातुर्वचः श्रुत्वा वातापिर्मेषवन्नदन् ॥ ६०
भित्त्वा भित्त्वा शरीराणि ब्राह्मणानां विनिष्पतत् । ब्राह्मणानां सहस्राणि तैरेवं कामरूपिभिः ॥ ६१
विनाशितानि संहत्य नित्यशः पिशिताशनैः । अगस्त्येन तदा देवैः प्रार्थितेन महर्षिणा ॥ ६२
अनुभूय किल श्राद्धे भक्षितः स महासुरः । ततः संपन्नमित्युक्त्वा दत्त्वा हस्तोदकं ततः ॥ ६३
भ्रातरं निष्क्रमस्वेति चेल्वलः सोऽभ्यभाषत । स तं तथा भाषमाणं भ्रातरं विप्रघातिनम् ॥ ६४
अब्रवीत्प्रहसन् धीमानगस्त्यो मुनिसत्तमः । कुतो निष्क्रमितुं शक्तिर्मया जीर्णस्य रक्षसः ॥ ६५
भ्रातुस्ते मेषरूपस्य गतस्य यमसादनम् । अथ तस्य वचः श्रुत्वा भ्रातुर्निधनसंश्रयम् ॥ ६६
प्रधर्षयितुमारेभे मुनिं क्रोधान्निशाचरः । सोऽभिद्रवन्मुनिश्रेष्ठं मुनिना दीप्ततेजसा ॥ ६७
चक्षुषानलकल्पेन निर्दग्धो निधनं गतः । तस्यायमाश्रमो भ्रातुस्तटाकवनशोभितः ॥ ६८
विप्रानुकम्पया येन कर्मेदं दुष्करं कृतम् । एवं कथयमानस्य तस्य सौमित्रिणा सह ॥ ६९
रामस्यास्तं गतः सूर्यः सन्ध्याकालोऽभ्यवर्तत । उपास्य पश्चिमां सन्ध्यां सह भ्रात्रा यथाविधि ॥ ७०
प्रविवेशाश्रमपदं तमृषिं सोऽभ्यवादयत् । सम्यक्प्रतिगृहीतश्च मुनिना तेन राघवः ॥ ७१
न्यवसत्तां निशामेकां प्राश्य मूलफलानि च । तस्यां रात्र्यां व्यतीतायां विमले सूर्यमण्डले ॥ ७२
भ्रातरं तमगस्त्यस्य ह्यामन्त्रयत राघवः । अभिवादये त्वां भगवन् सुखमध्युषितो निशाम् ॥ ७३
आमन्त्रये त्वां गच्छामि गुरुं ते द्रष्टुमग्रजम् । गम्यतामिति तेनोक्तो जगाम रघुनन्दनः ॥ ७४
यथोद्दिष्टेन मार्गेण वनं तच्चावलोकयन् । नीवारान् पनसांस्तालांस्तिनिशान् वञ्जुलान् धवान् ॥ ७५
चिरिबिल्वान् मधूकांश्च बिल्वानपि च तिन्दुकान् । पुष्पितान् पुष्पिताग्राभिर्लताभिरनुवेष्टितान् ॥ ७६
ददर्श रामः शतशस्तत्र कान्तारपादपान् । हस्तिहस्तैर्विमृदितान् वानरैरुपशोभितान् ॥ ७७
मत्तैः शकुनिसङ्घैश्च शतशः प्रतिनादितान् । ततोऽब्रवीत्समीपस्थं रामो राजीवलोचनः ॥ ७८
पृष्ठतोऽनुगतं वीरं लक्ष्मणं लक्ष्मिवर्धनम् । स्निग्धपत्रा यथा वृक्षा यथा शान्तमृगद्विजाः ॥ ७९
आश्रमो नातिदूरस्थो महर्षेर्भावितात्मनः । अगस्त्य इति विख्यातो लोके स्वेनैव कर्मणा[1] ॥ ८०
आश्रमो दृश्यते तस्य परिश्रान्तश्रमापहः । प्राज्यधूमाकुलवनश्चीरमालापरिष्कृतः ॥ ८१
प्रशान्तमृगयूथश्च नानाशकुनिनादितः । निगृह्य तरसा मृत्युं लोकानां हितकाम्यया ॥ ८२

---

1. स्वेन कर्मणा विन्ध्यनामकस्य अगस्त्यस्तम्भनरूपेण कर्मणेत्यर्थः । १. आज्य- च. छ.

दक्षिणा दिक्कृता येन शरण्या पुण्यकर्मणा । तस्येदमाश्रमपदं प्रभावाद्यस्य राक्षसैः ॥ ८३
दिगियं दक्षिणा त्रासाद्दृश्यते नोपभुज्यते । यदाप्रभृति चाक्रान्ता दिगियं पुण्यकर्मणा ॥ ८४
तदाप्रभृति निर्वैराः प्रशान्ताः पिशिताशनाः । नाम्ना चेयं भगवतो दक्षिणा दिक्प्रदक्षिणा[1] ॥ ८५
प्रथिता त्रिषु लोकेषु दुर्धर्षा क्रूरकर्मभिः । गतिं निरोद्धुं निरतो भास्करस्याचलोत्तमः ॥ ८६
निदेशं पालयन् यस्य विन्ध्यः शैलो न वर्धते । अयं दीर्घायुषस्तस्य लोके विश्रुतकर्मणः ॥ ८७
अगस्त्यस्याश्रमः श्रीमान् विनीतजनसेवितः । एष लोकार्चितः साधुर्हिते नित्यरतः सताम् ॥ ८८
अस्मानभिगतानेष श्रेयसा योजयिष्यति । आराधयिष्याम्यत्राहमगस्त्यं तं महामुनिम् ॥ ८९
शेषं च वनवासस्य सौम्य वत्स्याम्यहं प्रभो[2] । अत्र देवाः सगन्धर्वाः सिद्धाश्च परमर्षयः ॥ ९०
अगस्त्यं नियताहारं सततं पर्युपासते । नात्र जीवेन्मृषावादी क्रूरो वा यदि वा शठः ॥ ९१
नृशंसः कामवृत्तो वा मुनिरेष तथाविधः । अत्र देवाश्च यक्षाश्च नागाश्च पतगैः सह ॥ ९२
वसन्ति नियताहारा धर्ममाराधयिष्णवः । अत्र सिद्धा महात्मानो विमानैः सूर्यसंनिभैः ॥ ९३
त्यक्तदेहा नवैर्देहैः स्वर्याताः परमर्षयः । यक्षत्वममरत्वं च राज्यानि विविधानि च ॥ ९४
अत्र देवाः प्रयच्छन्ति भूतैराराधिताः शुभैः । आगताः स्माश्रमपदं सौमित्रे प्रविशाग्रतः ॥ ९५
निवेदयेह मां प्राप्तमृषये सीतया सह ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
अरण्यकाण्डे अगस्त्याश्रमो नाम एकादशः सर्गः

---

## द्वादशः सर्गः

### अगस्त्यदर्शनम्

स प्रविश्याश्रमपदं लक्ष्मणो राघवानुजः । अगस्त्यशिष्यमासाद्य वाक्यमेतदुवाच ह ॥ १
राजा दशरथो नाम ज्येष्ठस्तस्य सुतो बली । रामः प्राप्तो मुनिं द्रष्टुं भार्यया सह सीतया ॥ २
लक्ष्मणो नाम तस्याहं भ्राता त्ववरजो हितः । अनुकूलश्च भक्तश्च यदि ते श्रोत्रमागतः ॥ ३
ते वयं वनमत्युग्रं प्रविष्टाः पितृशासनात् । द्रष्टुमिच्छामहे सर्वे भगवन्तं निवेद्यताम् ॥ ४
तस्य तद्वचनं श्रुत्वा लक्ष्मणस्य तपोधनः । तथेत्युक्त्वाग्निशरणं प्रविवेश निवेदितुम् ॥ ५
स प्रविश्य मुनिश्रेष्ठं तपसा दुष्प्रधर्षणम् । कृताञ्जलिरुवाचेदं रामागमनमञ्जसा ॥ ६
यथोक्तं लक्ष्मणेनैव शिष्योऽगस्त्यस्य संमतः । पुत्रौ दशरथस्येमौ रामो लक्ष्मण एव च ॥ ७

---

1. प्रदक्षिणा सज्जनाभिगम्या ।

2. 'प्रभोः' इति क्वचित्पाठः—इति गोविन्दराजः । शुश्रूषणनिपुणं भ्रातृभक्त लक्ष्मणं प्रति 'प्रभो' इति भक्तपराधीनस्य रामभद्रस्य चाटूक्तिर्युज्यत एव । एतादृश्येव चाटूक्तिः "प्रीतोऽस्मि ते महत्कर्म त्वया कृतमिदं प्रभो" इत्यत्र पञ्चदशसर्गे अष्टाविंशश्लोके च ।

प्रविष्टावाश्रमपदं सीतया सह भार्यया । द्रष्टुं भवन्तमायातौ शुश्रूषार्थमरिंदमौ ॥ ८
यदत्रानन्तरं तत्त्वमाज्ञापयितुमर्हसि । ततः शिष्यादुपश्रुत्य प्राप्तं रामं सलक्ष्मणम् ॥ ९
वैदेहीं च महाभागामिदं वचनमब्रवीत् । दिष्ट्या रामश्चिरस्याद्य द्रष्टुं मां समुपागतः ॥ १०
मनसा काङ्क्षितं ह्यस्य मयाप्यागमनं प्रति । गम्यतां सत्कृतो रामः सभार्यः सहलक्ष्मणः ॥ ११
प्रवेश्यतां समीपं मे किं चासौ न प्रवेशितः । एवमुक्तस्तु मुनिना धर्मज्ञेन महात्मना ॥ १२
अभिवाद्याब्रवीच्छिष्यस्तथेति नियताञ्जलिः । ततो निष्क्रम्य संभ्रान्तः शिष्यो लक्ष्मणमब्रवीत् ॥ १३
क्वासौ रामो मुनिं द्रष्टुमेतु प्रविशतु स्वयम् । ततो गत्वाश्रमद्वारं शिष्येण सहलक्ष्मणः ॥ १४
दर्शयामास काकुत्स्थं सीतां च जनकात्मजाम् । तं शिष्यः प्रश्रितो वाक्यमगस्त्यवचनं ब्रुवन् ॥ १५
प्रावेशयद्यथान्यायं सत्कारार्हं सुसत्कृतम् । प्रविवेश ततो रामः सीतया सहलक्ष्मणः ॥ १६
प्रशान्तहरिणाकीर्णमाश्रमं ह्यवलोकयन् । स तत्र ब्रह्मणः स्थानमग्नेः स्थानं तथैव च ॥ १७
विष्णोः स्थानं महेन्द्रस्य स्थानं चैव विवस्वतः । सोमस्थानं भगस्थानं स्थानं कौबेरमेव च ॥ १८
धातुर्विधातुः स्थाने च वायोः स्थानं तथैव च । नागराजस्य च स्थानमनन्तस्य महात्मनः ॥ १९
स्थानं तथैव गायत्र्या वसूनां स्थानमेव च । स्थानं च पाशहस्तस्य वरुणस्य महात्मनः ॥ २०
कार्त्तिकेयस्य च स्थानं धर्मस्थानं च पश्यति । ततः शिष्यैः परिवृतो मुनिरप्यभिनिष्पतत् ॥ २१
तं ददर्शाग्रतो रामो मुनीनां दीप्ततेजसाम् । अब्रवीद्वचनं वीरो लक्ष्मणं लक्ष्मिवर्धनम् ॥ २२
एष लक्ष्मण निष्क्रामत्यगस्त्यो भगवानृषिः । औदार्येणावगच्छामि निधानं तपसामिमम् ॥ २३
एवमुक्त्वा महाबाहुरगस्त्यं सूर्यवर्चसम् । जग्राह परमप्रीतस्तस्य पादौ परंतपः ॥ २४
अभिवाद्य तु धर्मात्मा तस्थौ रामः कृताञ्जलिः । सीतया सह वैदेह्या तदा रामः सलक्ष्मणः ॥ २५
प्रतिजग्राह काकुत्स्थमर्चयित्वासनोदकैः । कुशलप्रश्नमुक्त्वा च ह्यास्यतामिति चाब्रवीत् ॥ २६
अग्निं हुत्वा प्रदायार्घ्यमतिथीन् प्रतिपूज्य च । वानप्रस्थेन धर्मेण स तेषां भोजनं ददौ ॥ २७
प्रथमं चोपविश्याथ धर्मज्ञो मुनिपुंगवः । उवाच राममासीनं प्राञ्जलिं धर्मकोविदम् ॥ २८
अग्निं हुत्वा प्रदायार्घ्यमतिथिं प्रतिपूजयेत् । अन्यथा खलु काकुत्स्थ तपस्वी समुदाचरन् ॥ २९
दुःसाक्षीव परे लोके स्वानि मांसानि भक्षयेत् । राजा सर्वस्य लोकस्य धर्मचारी महारथः ॥ ३०
पूजनीयश्च मान्यश्च भवान् प्राप्तः प्रियातिथिः । एवमुक्त्वा फलैर्मूलैः पुष्पैरन्यैश्च राघवम् ॥ ३१
पूजयित्वा यथाकामं पुनरेव ततोऽब्रवीत् । इदं दिव्यं महच्चापं हेमरत्नविभूषितम् ॥ ३२
वैष्णवं पुरुषव्याघ्र निर्मितं विश्वकर्मणा । अमोघः सूर्यसंकाशो ब्रह्मदत्तः शरोत्तमः ॥ ३३
दत्तौ मम महेन्द्रेण तूणी चाक्षयसायकौ । संपूर्णौ निशितैर्बाणैर्ज्वलद्भिरिव पावकैः ॥ ३४
महारजतकोशोऽयमसिर्हेमविभूषितः । अनेन धनुषा राम हत्वा संख्ये महासुरान् ॥ ३५
आजहार श्रियं दीप्तां पुरा विष्णुर्दिवौकसाम् । तद्धनुस्तौ च तूणीरौ शरं खड्गं च मानद ॥ ३६

जयाय प्रतिगृह्णीष्व वज्रं वज्रधरो यथा[1] । एवमुक्त्वा महातेजाः समस्तं तद्वरायुधम् ॥ ३७
दत्त्वा रामाय भगवानगस्त्यः पुनरब्रवीत्[2] ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
अरण्यकाण्डे अगस्त्यदर्शनं नाम द्वादशः सर्गः

---

१. अस्यानन्तरम्—इदं च ते तनुत्राणमभेद्यं मघवा ददौ । स्पर्शयानुपमं वीर प्रतिगृह्णीष्व मानद ॥ जये च संशयं प्राप्य चिन्तयिष्यसि विह्वलन् । हरियुग्मं रथं दिव्यमुपनेष्यति मातलिः ॥—इति घ.

२. अस्यानन्तरम्—एतानि क. घ. दृश्यन्ते । किंचिन्न्यूनाधिकतया अनन्तरसर्गस्थद्वादशश्लोकानन्तरं छ. दृश्यन्ते । (ततो रामं महाबाहुं महर्षिरिदमब्रवीत् छ. ।) सुखं स्वप महाबाहो ससीतः सहलक्ष्मणः । रविरस्तं गतः सौम्य सन्ध्याकालोऽभ्युपागमत् ॥१॥ एते निशाचरा राम निलीना मृगपक्षिणः । नगाग्रेषु भृशं लीना दृश्यन्ते सुसमाहिताः ॥२॥ नैशेन तमसा प्राप्तमप्रकाश(न प्रकाशं छ.)नभस्तलम् । एवमुक्तो महाबाहुरगस्त्येन महात्मना ॥ ३ ॥ उपास्य पश्चिमां (स शिवां छ.)सन्ध्यां रामः सौमित्रिणा सह । अभिवाद्य महात्मानमगस्त्यमृषिसत्तमम् ॥ ४ ॥ सुष्वाप रजनीमेकां पूजितः परमर्षिणा । सुखोषितस्तदा रामःसन्ध्यामन्वास्य सानुजः ॥ ५ ॥ कृत(कृत्वा छ.)पौर्वाह्णिकस्तत्रस्थो स्नात्वा हुतहुताशनः । लक्ष्मणेन सह भ्रात्रा सीतया च परंतपः ॥ ६ ॥ उपागमदमेयात्मा (उपागच्छन्महात्मानं छ.) अगस्त्यं सूर्यवर्चसम् । स दृष्ट्वा (तं दृष्ट्वा छ.) राघवं श्रीमानगस्त्यः संयताञ्जलिम् ॥ ७ ॥ प्रतिपूज्य यथान्यायमिदं वचनमब्रवीत् । कच्चित्सुखं निशा राम व्यतीता रघुनन्दन ॥ ८ ॥ तव सभ्रातृभार्यस्य ममाश्रमपदे शुभे । अगस्त्येनैवमुक्तस्तु काकुत्स्थो वाक्यमब्रवीत् ॥ ९ ॥ स्वाशिताः (मानिताः ख. छ.)सा यथान्यायं त्वया पूज्येन पूजिताः । शयनासनदानेन भोजनाच्छादनैः शुभैः ॥ १० ॥ राज्ञो दशरथस्यैव पुरस्यान्तःपुरे (पुरे चान्तःपुरे छ.) यथा । सुखोषिताः स्म भगवन् सर्वकामैरुपस्थिताः ॥ ११ ॥ (उपविश्याप्यगस्त्यस्तु निषीदध्वमुवाच ह । सर्वाने वाप्यनुज्ञाप्य ये तत्रासन् समागताः ॥ इति क. छ.) सुखोपविष्टे रामे तु ससीते सलक्ष्मणे । स तेन (शतेन क. छ.) ऋषिसङ्घेन अगस्त्यो वाक्यमब्रवीत् ॥ १२ ॥ कालोऽयं गतभूयिष्ठो यः कालस्तव राघव । समयो यो नरेन्द्रेण कृतो दशरथेन ते ॥ १३ ॥ तीर्णप्रतिज्ञः काकुत्स्थ सुखं राज्ये निवत्स्यसि । धन्यस्ते जनको राम स राजा रघुनन्दन ॥ १४ ॥ यस्त्वया ज्येष्ठपुत्रेण ययातिरिव तारितः । एवमुक्तस्ततो रामः प्रत्युवाच कृताञ्जलिः ॥ १५ ॥ प्रीतः प्रीततरं वाक्यमगस्त्यमृषिसत्तमम् (इदमाह महायशाः क. छ. । धन्योऽस्म्यनुगृहीतोऽस्मि यस्य मे मुनिपुङ्गवः ॥ १६ ॥ प्रीयमाणस्य सुप्रीतो नास्ति धन्यतरो मम । मया न तारितो राजा स्वगुणैरेव तारितः ॥१७॥ स्वर्गं दशरथः प्राप्तः स्वकृतैः पुण्यकर्मभिः । अयं तु देशो निखिलः सर्व एव महातपः ॥ १८ ॥ अशरण्यः शरण्योऽभूद्यथैव विनिवेशितः । तदाख्याह्यकृतत्वेन परं कौतूहलं मम ॥१९॥ श्रुत्वा तु वचनं तस्य रामस्य मधुराक्षरम् । प्रत्युवाच ततो राममगस्त्यो भगवानृषिः ॥२०॥ शृणु राघव तत्त्वेन देशस्यास्य यथातथम् । दण्डकेन परित्यक्तो ह्ययं देशो महात्मना ॥२१॥ भार्गवस्य च शापेन निर्मानुष्यमृगोऽभवत् । वृक्षगुल्मलताहीनं तापसैरपि वर्जितम् ॥ २२ ॥ कान्तारमभवत्तात घोरं परमदारुणम् । योजनार्धसहस्रं तु विन्ध्यपादस्य दक्षिणः ॥ २३ ॥ नानुवर्षति (नात्र वर्षति छ.) पर्जन्यो नापि वाति सुखोऽनिलः । रूक्षं प्रतिभयं घोरमासीत्परमदारुणम् (धूमाकुलं वनम् छ.) ॥ २४ ॥ बहून्यब्दसहस्राणि पतदासीदनालयम् । गन्धर्वैर्ऋषिसङ्घैश्च देवैश्च परिवर्जितम् ॥२५॥ कस्यचित्त्वथ कालस्य दैवयोगादहं नृप । हिमवच्छिखराच्छ्रेतादिह प्राप्तोऽस्मि मानद ॥२६॥ ततो मया समाहूतः पर्जन्या जलदैः सह ।

## त्रयोदशः सर्गः

### पञ्चवटीगमनम्

राम प्रीतोऽस्मि भद्रं ते परितुष्टोऽस्मि लक्ष्मण । अभिवादयितुं यन्मां संप्राप्तौ सह सीतया ॥ १
अध्वश्रमेण वां खेदो बाधते प्रचुरश्रमः । व्यक्तमुत्कण्ठते चापि मैथिली जनकात्मजा ॥ २
एषा हि सुकुमारी च दुःखैश्च न विमानिता । प्राज्यदोषं वनं प्राप्ता भर्तृस्नेहप्रचोदिता ॥ ३
यथैषा रमते राम इह सीता तथा कुरु । दुष्करं कृतवत्येषा वने त्वामनुगच्छती ॥ ४
एषा हि प्रकृतिः स्त्रीणामासृष्टे रघुनन्दन । समस्थमनुरज्यन्ति विषमस्थं त्यजन्ति च ॥ ५
शतह्रदानां लोलत्वं शस्त्राणां तीक्ष्णतां तथा । गरुडानिलयोः शैघ्र्यमनुगच्छन्ति योषितः ॥ ६
इयं तु भवतो भार्या दोषैरेतैर्विवर्जिता । श्लाघ्या च व्यपदेश्या च यथा देवी ह्यरुन्धती ॥ ७
अलंकृतोऽयं देशश्च यत्र सौमित्रिणा सह । वैदेह्या चानया राम वत्स्यसि त्वमरिंदम ॥ ८
एवमुक्तः स मुनिना राघवः संयताञ्जलिः । उवाच प्रश्रितं वाक्यमृषिं दीप्तमिवानलम् ॥ ९
धन्योऽस्म्यनुगृहीतोऽस्मि यस्य मे मुनिपुंगवः । गुणैः सभ्रातृभार्यस्य वरदः परितुष्यति ॥ १०
किं तु व्यादिश मे देशं सोदकं बहुकाननम् । यत्राश्रमपदं कृत्वा वसेयं निरतः सुखम् ॥ ११
ततोऽब्रवीन्मुनिश्रेष्ठः श्रुत्वा रामस्य तद्वचः । ध्यात्वा मुहूर्तं धर्मात्मा धीरो धीरतरं वचः ॥ १२
इतो द्वियोजने तात बहुमूलफलोदकः । देशो बहुमृगः श्रीमान् पञ्चवट्यभिविश्रुतः ॥ १३
तत्र गत्वाश्रमपदं कृत्वा सौमित्रिणा सह । रंस्यसे त्वं पितुर्वाक्यं यथोक्तमनुपालयन् ॥ १४
कालोऽयं गतभूयिष्ठो यः कालस्तव राघव । समयो यो नरेन्द्रेण कृतो दशरथेन ते ॥ १५
तीर्णप्रतिज्ञः काकुत्स्थ सुखं राज्ये निवत्स्यसि । धन्यस्ते जनको राम स राजा रघुनन्दन ॥ १६

---

स्वच्छन्दवर्षश्च कृतः कंचित्कालमरिन्दम ॥२७॥ यमस्य चैव चारास्तु बहून्यब्दशतानि वै । तेजसा मृत्युदूताश्च व्याधयश्च निराकृताः ॥२८॥ हिमवत्पादजा वृक्षाश्रिन्तिता मनसागताः । प्रवृत्ताश्च पुनर्नद्यः फुल्लपङ्कजमण्टिताः ॥ २९ ॥ तटाकानि च रम्याणि सरितश्च सरांसि च (अस्यानन्तरम्——नीरदश्च सुगन्धश्च (नीरजस्कं सुगन्धं च. छ.)सुखशीतजलानिलम्——शत क.) प्रवृद्धवनषण्डं तु वीरुत्सस्यवनाकुलम् ॥ ३० ॥ अचिरेणाभवद्रम्यमृषिसङ्घानुसेवितम् । केवलं त्वभिशापेन तस्यैवं रघुनन्दन ॥ ३१ ॥ सोपद्रुत (सोपद्रवम् छ.) मिवाप्येतद्राक्षसैरुग्रकर्मभिः । यदाप्रभृति चापि त्वं चित्रकूटमुपागतः ॥ ३२ ॥ तदाप्रभृति रक्षांसि विप्रकुर्वन्ति तापसान् । ऋषीणामभयं वीर दातुमर्हसि मानद ॥३३॥ अस्माद्धि कारणाद्राम दण्डकारण्यवासिनाम् । त्राणार्थमिह संप्राप्तस्त्रातुमर्हति नो भवान् ॥ ३४ ॥ समर्थो ह्यसि काकुत्स्थ त्रैलोक्यस्यापि रक्षणे । किं पुनर्वीर रक्षांसि तव मन्युहतानि वै (द्विजमन्युहतानि वै घ. छ.) ॥३५॥ अयमिक्ष्वाकुपुत्रेण दण्डकेन महाबल । देशो निराकृतो राम शापदोषेण मानद ॥ ३६ ॥ दण्डकारण्यमखिलं दर्शनादेव राघव (पालितम् छ.)।शापस्यान्ताय काकुत्स्थ प्राप्तस्त्वमरिमर्दन ॥ ३७ ॥ स त्वमद्य पुरावृत्तैः पितृभिश्च नि (पितृभिः स. छ.) राकृतम् । तारय त्वं महाबाहो (तारयस्व महाभाग छ.) दण्डकारण्यमद्य वै ॥३८ऽ (यस्य दोषादिदं राम दण्डकारण्यमुच्यते छ.) एवमुक्तस्तदा रामः प्रत्युवाच महामुनिम् । आश्चर्यमिदमाख्यानं देशस्यास्य यथातथम् ॥ ३९ ॥

यस्त्वया ज्येष्ठपुत्रेण ययातिरिव तारितः । विदितो ह्येष वृत्तान्तो मम सर्वस्तवानघ ॥ १७
तपसश्च प्रभावेण स्नेहाद्दशरथस्य च । हृदयस्थश्च ते छन्दो विज्ञातस्तपसा मया ॥ १८
इह वासं प्रतिज्ञाय मया सह तपोवने । अतश्च त्वामहं ब्रूमि गच्छ पञ्चवटीमिति ॥ १९
स हि रम्यो वनोद्देशो मैथिली तत्र रंस्यते । स देशः श्लाघनीयश्च नातिदूरे च राघव ॥ २०
गोदावर्याः समीपे च मैथिली तत्र रंस्यते । प्राज्यमूलफलश्चैव नानाद्विजगणायुतः ॥ २१
विविक्तश्च महाबाहो पुण्यो रम्यस्तथैव च । भवानपि सदारश्च शक्तश्च परिरक्षणे ॥ २२
अपि चात्र वसन् राम तापसान् पालयिष्यसि । एतदालक्ष्यते वीर मधूकानां महद्वनम् ॥ २३
उत्तरेणास्य गन्तव्यं न्यग्रोधमभिगच्छता । ततः स्थलमुपारुह्य पर्वतस्याविदूरतः ॥ २४
ख्यातः पञ्चवटीत्येव नित्यपुष्पितकाननः । अगस्त्येनैवमुक्तस्तु रामः सौमित्रिणा सह ॥ २५
सत्कृत्यामन्त्रयामास तमृषिं सत्यवादिनम् । तौ तु तेनाभ्यनुज्ञातौ कृतपादाभिवन्दनौ ॥ २६
तदाश्रमात् पञ्चवटीं जग्मतुः सह सीतया ॥

गृहीतचापौ तु नराधिपात्मजौ विषक्ततूणौ समरेष्वकातरौ ।
यथोपदिष्टेन पथा महर्षिणा प्रजग्मतुः पञ्चवटीं समाहितौ ॥ २७

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
अरण्यकाण्डे पञ्चवटीगमनं नाम त्रयोदशः सर्गः

---

## चर्तुदशः सर्गः

### जटायुस्संगमः

अथ पञ्चवटीं गच्छन्नन्तरा रघुनन्दनः । आससाद महाकायं गृध्रं भीमपराक्रमम् ॥ १
तं दृष्ट्वा तौ महाभागौ वटस्थं रामलक्ष्मणौ । मेनाते राक्षसं पक्षिं ब्रुवाणौ को भवानिति ॥ २
स तौ मधुरया वाचा सौम्यया प्रीणयन्निव । उवाच वत्स मां विद्धि वयस्यं पितुरात्मनः ॥ ३
स तं पितृसखं बुद्ध्वा पूजयामास राघवः । स तस्य कुलमव्यग्रमथ पप्रच्छ नाम च ॥ ४
रामस्य वचनं श्रुत्वा सर्वभूतसमुद्भवम् । आचचक्षे द्विजस्तस्मै कुलमात्मानमेव च ॥ ५
पूर्वकाले महाबाहो ये प्रजापतयोऽभवन् । तान् मे निगदतः सर्वानादितः शृणु राघव ॥ ६
कर्दमः प्रथमस्तेषां विकृतस्तदनन्तरः । शेषश्च संश्रयश्चैव बहुपुत्रः प्रतापवान् ॥ ७
स्थाणुर्मरीचिरत्रिश्च क्रतुश्चैव महाबलः । पुलस्त्यश्चाङ्गिराश्चैव प्रचेताः पुलहस्तथा ॥ ८
दक्षो विवस्वानपरोऽरिष्टनेमिश्च राघव । कश्यपश्च महातेजास्तेषामासीच्च पश्चिमः ॥ ९
प्रजापतेस्तु दक्षस्य बभूवुरिति विश्रुतम् । षष्टिर्दुहितरो राम यशस्विन्यो महायशः ॥ १०

कश्यपः प्रतिजग्राह तासामष्टौ सुमध्यमाः[1] । अदितिं च दितिं चैव दनुमप्यथ कालिकाम् ॥ ११
ताम्रां क्रोधवशां चैव मनुं चाप्यनलामपि । तास्तु कन्यास्ततः प्रीतः कश्यपः पुनरब्रवीत् ॥ १२
पुत्रांस्त्रैलोक्यभर्तॄन् वै जनयिष्यथ मत्समान् । अदितिस्तन्मना राम दितिश्च दनुरेव च ॥ १३
कालिका च महाबाहो शेषास्त्वमनसोऽभवन् । अदित्यां जज्ञिरे देवास्त्रयस्त्रिंशदरिंदम ॥ १४
आदित्या वसवो रुद्रा ह्यश्विनौ च परंतप । दितिस्त्वजनयत् पुत्रान् दैत्यांस्तात यशस्विनः ॥ १५
तेषामियं वसुमती पुरासीत् सवनार्णवा । दनुस्त्वजनयत् पुत्रमश्वग्रीवमरिंदम ॥ १६
नरकं कालकं चैव कालिकापि व्यजायत । क्रौञ्चीं भासीं तथा श्येनीं धृतराष्ट्रीं तथा शुकीम् ॥
ताम्रापि सुषुवे कन्याः पञ्चैता लोकविश्रुताः । उलूकाञ्जनयत् क्रौञ्ची भासी भासान् व्यजायत ॥
श्येनी श्येनांश्च गृध्रांश्च व्यजायत सुतेजसः । धृतराष्ट्री तु हंसांश्च कलहंसांश्च सर्वशः ॥ १९
चक्रवाकांश्च भद्रं ते विजज्ञे सापि भामिनी । शुकी नतां विजज्ञे तु नताया विनता सुता ॥ २०
दश क्रोधवशा राम विजज्ञे ह्यात्मसंभवाः । मृगीं च मृगमन्दां च हरिं भद्रमदामपि ॥ २१
मातङ्गीमपि शार्दूलीं श्वेतां च सुरभिं तथा । सर्वलक्षणसंपन्नां सुरसां कद्रुकामपि ॥ २२
अपत्यं तु मृगाः सर्वे मृग्या नरवरोत्तम । ऋक्षाश्च मृगमन्दायाः सृमराश्चमरास्तथा ॥ २३
हर्यांश्च हरयोऽपत्यं वानराश्च तरस्विनः । ततस्त्विरावतीं नाम जज्ञे भद्रमदा सुताम् ॥ २४
तस्यास्त्वैरावतः पुत्रो लोकनाथो महागजः । मातङ्गास्त्वथ मातङ्ग्या अपत्यं मनुजर्षभ ॥ २५
गोलाङ्गूलांश्च शार्दूली व्याघ्रांश्चाजनयत् सुतान् । दिशागजांश्च काकुत्स्थ श्वेताप्यजनयत् सुतान् ॥
ततो दुहितरौ राम सुरभिर्द्वे व्यजायत । रोहिणीं नाम भद्रं ते गन्धर्वीं च यशस्विनीम् ॥ २७
रोहिण्यजनयद्गा वै गन्धर्वी वाजिनः सुताम् । सुरसाजनयन्नागान् राम कद्रूस्तु पन्नगान् ॥ २८
मनुर्मनुष्याञ्जनयद्राम पुत्रान् यशस्विनः । ब्राह्मणान् क्षत्रियान् वैश्याञ्छूद्रांश्च मनुजर्षभ[2] ॥२९[3]
सर्वान् पुण्यफलान् वृक्षाननलापि व्यजायत । विनता च शुकी पौत्री कद्रूश्च सुरसा स्वसा ॥
कद्रूर्नागं सहस्रास्यं विजज्ञे धरणीधरम् । द्वौ पुत्रौ विनतायास्तु गरुडोऽरुण एव च ॥ ३१
तस्माज्जातोऽहमरुणात् संपातिस्तु ममाग्रजः । जटायुरिति मां विद्धि श्येनीपुत्रमरिंदम ॥ ३२
सोऽहं वाससहायस्ते भविष्यामि यदीच्छसि । इदं दुर्गं हि कान्तारं मृगराक्षससेवितम् ॥ ३३
सीतां च तात रक्षिष्ये त्वयि याते सलक्ष्मणे ॥

जटायुषं तं प्रतिपूज्य राघवो मुदा परिष्वज्य च संनतोऽभवत् ।
पितुर्हि शुश्राव सखित्वमात्मवाञ्जटायुषा संकथितं पुनः पुनः ॥ ३४

---

१. अस्यानन्तरम्—अङ्गिरास्त्वपरा राम कन्याः प्रत्यग्रहीत्तदा—इति ख.

२. मनुजर्षभ च. छ.

३. अस्यानन्तरम्—मुखतो ब्राह्मणा जाता उरसः क्षत्रियास्तथा । ऊरुभ्यां जज्ञिरे वैश्याः पद्भ्यां शूद्रो व्यजायत ॥—इति घ.

स तत्र सीतां परिदाय मैथिलीं सहैव तेनातिबलेन पक्षिणा ।
जगाम तां पञ्चवटीं सलक्ष्मणो रिपून् दिधक्षञ्शलभानिवानलः ॥ ३५

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
अरण्यकाण्डे जटायुस्सङ्गमो नाम चतुर्दशः सर्गः

---

## पञ्चदशः सर्गः

### पञ्चवटीपर्णशाला

ततः पञ्चवटीं गत्वा नानाव्यालमृगायुताम्[1] । उवाच भ्रातरं रामः सौमित्रिं दीप्ततेजसम् ॥ १
आगताः स्म यथोद्दिष्टं यं देशं मुनिरब्रवीत्[2] । अयं पञ्चवटीदेशः सौम्य पुष्पितपादपः ॥ २
सर्वतश्चार्यतां दृष्टिः कानने निपुणो ह्यसि । आश्रमः कतरस्मिन्नो देशे भवति संमतः ॥ ३
रमते यत्र वैदेही त्वमहं चैव लक्ष्मण । तादृशो दृश्यतां देशः संनिकृष्टजलाशयः ॥ ४
वनरामण्यकं यत्र जलरामण्यकं तथा । संनिकृष्टं च यत्र स्यात् समित्पुष्पकुशोदकम् ॥ ५
एवमुक्तस्तु रामेण लक्ष्मणः संयताञ्जलिः । सीतासमक्षं काकुत्स्थमिदं वचनमब्रवीत् ॥ ६
परवानस्मि काकुत्स्थ त्वयि वर्षशतं स्थिते । स्वयं तु रुचिरे देशे क्रियतामिति मां वद ७
सुप्रीतस्तेन वाक्येन लक्ष्मणस्य महात्मनः । विमृशन् रोचयामास देशं सर्वगुणान्वितम् ॥ ८
स तं रुचिरमाक्रम्य देशमाश्रमकर्मणि । हस्तौ गृहीत्वा हस्तेन रामः सौमित्रिमब्रवीत् ॥ ९
अयं देशः समः श्रीमान् पुष्पितैस्तरुभिर्वृतः । इहाश्रमपदं सौम्य यथावत् कर्तुमर्हसि ॥ १०
इयमादित्यसंकाशैः पद्मैः सुरभिगन्धिभिः । अदूरे दृश्यते रम्या पद्मिनी पद्मशोभिता ॥ ११
यथाख्यातमगस्त्येन मुनिना भावितात्मना । इयं गोदावरी रम्या पुष्पितैस्तरुभिर्वृता ॥ १२
हंसकारण्डवाकीर्णा चक्रवाकोपशोभिता । नातिदूरे न चासन्ने मृगयूथनिपीडिता ॥ १३
मयूरनादिता रम्याः प्रांशवो बहुकन्दराः । दृश्यन्ते गिरयः सौम्य फुल्लैस्तरुभिरावृताः ॥ १४
सौवर्णै राजतैस्ताम्रैर्देशे देशे च धातुभिः । गवाक्षिता इवाभान्ति गजाः परमभक्तिभिः ॥ १५
सालैस्तालैस्तमालैश्च खर्जूरपनसाम्रकैः । नीवारैस्तिनिशैश्चैव पुंनागैश्चोपशोभिताः ॥ १६
चूतैरशोकैस्तिलकैश्चम्पकैः केतकैरपि । पुष्पगुल्मलतोपेतैस्तैस्तैस्तरुभिरावृताः ॥ १७
चन्दनैः स्यन्दनैर्नीपैः पनसैर्लिकुचैरपि । धवाश्वकर्णखदिरैः शमीकिंशुकपाटलैः ॥ १८
इदं पुण्यमिदं मेध्यमिदं बहुमृगद्विजम् । इह वत्स्याम सौमित्रे सार्धमेतेन पक्षिणा ॥ १९
एवमुक्तस्तु रामेण लक्ष्मणः परवीरहा । अचिरेणाश्रमं भ्रातुश्चकार सुमहाबलः ॥ २०

---

१. नानाद्विजमृगायताम् प्र. २. अमु देश महर्षिणा च. छ.

पर्णशालां सुविपुलां तत्र सङ्घातमृत्तिकाम् । सुस्तम्भां मस्करैर्दीर्घैः कृतवंशां सुशोभनाम् ॥ २१
शमीशाखाभिरास्तीर्णां[1] दृढपाशावपाशिताम् । कुशकाशशरैः पर्णैः सुपरिच्छादितां तथा ॥ २२
समीकृततलां[2] रम्यां चकार लघुविक्रमः[3] । निवासं राघवस्यार्थे प्रेक्षणीयमनुत्तमम्[4] ॥ २३
स गत्वा लक्ष्मणः श्रीमान्नदीं गोदावरीं तदा । स्नात्वा पद्मानि चादाय सफलः पुनरागतः ॥२४
ततः पुष्पबलिं कृत्वा शान्तिं च स यथाविधि । दर्शयामास रामाय तदाश्रमपदं कृतम् ॥ २५
स तं दृष्ट्वा कृतं सौम्यमाश्रमं सह सीतया । राघवः पर्णशालायां हर्षमाहारयद्भृशम् ॥ २६
सुसंहृष्टः परिष्वज्य बाहुभ्यां लक्ष्मणं तदा । अतिस्निग्धं च गाढं च वचनं चेदमब्रवीत् ॥ २७
प्रीतोऽस्मि ते महत् कर्म त्वया कृतमिदं प्रभो । प्रदेयो यन्निमित्तं ते परिष्वङ्गो मया कृतः ॥२८
भावज्ञेन कृतज्ञेन धर्मज्ञेन च लक्ष्मण । त्वया पुत्रेण धर्मात्मा न संवृत्तः पिता मम ॥ २९
एवं लक्ष्मणमुक्त्वा तु राघवो लक्ष्मिवर्धनम् । तस्मिन् देशे बहुफले न्यवसत् सुसुखं वशी ॥३०
कंचित् कालं स धर्मात्मा सीतया लक्ष्मणेन च । अन्वास्यमानो न्यवसत् स्वर्गलोके यथामरः ॥ ३१

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
अरण्यकाण्डे पञ्चवटीपर्णशाला नाम पञ्चदशः सर्गः

---

## षोडशः सर्गः

### हेमन्तवर्णनम्

वसतस्तस्य तु सुखं राघवस्य महात्मनः । शरद्व्यपाये हेमन्त ऋतुरिष्टः प्रवर्तते ॥ १
स कदाचित् प्रभातायां शर्वर्यां रघुनन्दनः । प्रययावभिषेकार्थं रम्यां गोदावरीं नदीम् ॥ २
प्रह्वः कलशहस्तस्तं सीतया सह वीर्यवान् । पृष्ठतोऽनुव्रजन् भ्राता सौमित्रिरिदमब्रवीत् ॥ ३
अयं स कालः संप्राप्तः प्रियो यस्ते प्रियंवद । अलंकृत इवाभाति येन संवत्सरः शुभः ॥ ४
नीहारपरुषो लोकः पृथिवी सस्यशालिनी । जलान्यनुपभोग्यानि सुभगो हव्यवाहनः ॥ ५
नवाग्रयणपूजाभिरभ्यर्च्य पितृदेवताः । कृताग्रयणकाः काले सन्तो विगतकल्मषाः ॥ ६
प्राज्यकामा जनपदाः संपन्नतरगोरसाः । विचरन्ति महीपाला यात्रार्थं[6] विजिगीषवः ॥ ७
सेवमाने दृढं सूर्ये दिशमन्तकसेविताम् । विहीनतिलकेव स्त्री नोत्तरा दिक् प्रकाशते ॥ ८

---

१. आस्तीर्य च.
२. समीकृतबलाम् छ.
३. शमीत्यादि विक्रम इत्यन्तम् ख. नास्ति।
४. चकार लघुविक्रमः ख. ङ. ञ.
५. इतः पूर्वं—स सीतया लक्ष्मणेन पक्षिराजा जटायुषा । न्यवसत् पञ्चवट्यां वै पूज्यमानो महर्षिभिः ॥ —इति ग.
६. यात्रार्थं म.

प्रकृत्या हिमकोशाढ्यो दूरसूर्यश्च साम्प्रतम्। यथार्थनामा सुव्यक्तं हिमवान् हिमवान् गिरिः ॥ ९
अत्यन्तसुखसंचारा मध्याह्ने स्पर्शतः सुखाः। दिवसाः सुभगादित्याश्छायासलिलदुर्भगाः ॥ १०
मृदुसूर्याः सनीहाराः पटुशीताः समारुताः। शून्यारण्या हिमध्वस्ता दिवसा भान्ति साम्प्रतम् ॥ ११
निवृत्ताकाशशयनाः पुष्यनीता[1] हिमारुणाः। शीता वृद्धतरायामास्त्रियामा यान्ति साम्प्रतम् ॥ १२
रविसंक्रान्तसौभाग्यस्तुषारावृतमण्डलः[2]। निःश्वासान्ध इवादर्शश्चन्द्रमा न प्रकाशते ॥ १३
ज्योत्स्ना[१] तुषारमलिना पौर्णमास्यां न राजते। सीतेव चातपश्यामा लक्ष्यते न तु शोभते ॥ १४
प्रकृत्या शीतलस्पर्शो हिमविद्धश्च साम्प्रतम्। प्रवाति पश्चिमो वायुः काले द्विगुणशीतलः ॥ १५
बाष्पच्छन्नान्यरण्यानि यवगोधूमवन्ति च। शोभन्तेऽभ्युदिते सूर्ये नदद्भिः क्रौञ्चसारसैः ॥ १६
खर्जूरपुष्पाकृतिभिः शिरोभिः पूर्णतण्डुलैः। शोभन्ते किंचिदानम्राः शालयः कनकप्रभाः[२] ॥ १७
मयूखैरुपसर्पद्भिर्हिमनीहारसंवृतैः। दूरमभ्युदितः सूर्यः शशाङ्क इव लक्ष्यते ॥ १८
अग्राह्यवीर्यः पूर्वाह्णे मध्याह्ने स्पर्शतः सुखः। संरक्तः किंचिदापाण्डुरातपः शोभते क्षितौ ॥ १९
अवश्यायनिपातेन किंचित्प्रक्लिन्नशाद्वला। वनानां शोभते भूमिर्निविष्टतरुणातपा[३] ॥ २०
स्पृशंस्तु विपुलं शीतमुदकं द्विरदः सुखम्। अत्यन्ततृषितो वन्यः प्रतिसंहरते करम् ॥ २१
एते हि समुपासीना विहगा जलचारिणः। नावगाहन्ति सलिलमप्रगल्भा इवाहवम् ॥ २२
अवश्यायतमोनद्धा नीहारतमसा वृताः। प्रसुप्ता इव लक्ष्यन्ते विपुष्पा वनराजयः ॥ २३
बाष्पसंछन्नसलिला रुतविज्ञेयसारसाः। हिमार्द्रवालुकैस्तीरैः सरितो भान्ति साम्प्रतम् ॥ २४
तुषारपतनाच्चैव मृदुत्वाद्भास्करस्य च। शैत्यादगाग्रस्थमपि प्रायेण [3]रसवज्जलम् ॥ २५
जराजर्जरितैः पद्मैः शीर्णकेसरकर्णिकैः। नालशेषैर्हिमध्वस्तैर्न भान्ति कमलाकराः ॥ २६
अस्मिंस्तु पुरुषव्याघ्रः काले दुःखसमन्वितः। तपश्चरति धर्मात्मा त्वद्भक्त्या भरतः पुरे ॥ २७
त्यक्त्वा राज्यं च मानं च भोगांश्च विविधान् बहून्। तपस्वी नियताहारः शेते शीते महीतले ॥ २८
सोऽपि वेलामिमां नूनमभिषेकार्थमुद्यतः। वृतः प्रकृतिभिर्नित्यं प्रयाति सरयूं नदीम् ॥ २९
अत्यन्तसुखसंवृद्धः सुकुमारः सुखोचितः। कथं न्वपररात्रेषु सरयूमवगाहते ॥ ३०
पद्मपत्रेक्षणो वीरः श्यामो निरुदरो महान्। धर्मज्ञः सत्यवादी च ह्रीनिषेधो जितेन्द्रियः ॥ ३१
प्रियाभिभाषी मधुरो दीर्घबाहुररिंदमः। संत्यज्य विविधान् भोगानार्यं[५] सर्वात्मना श्रितः ॥ ३२

---

1. पुष्यनक्षत्रबोधितरात्र्यवसानाः।

2. कोशेषु व्याख्यासु च तुषारारुणमण्डल- इत्येव पाठो दृश्यते। प्रसिद्ध्यनुसारिभिरस्माभिः 'तुषारावृतमण्डलः' इति पाठ आदृतः।

3. रसवत् विषतुल्यम्।

१. ज्योत्स्नी गो.

२. अस्यानन्तरम्—निमग्नाः कर्णिकारेषु शूकैः कनकपिङ्गलैः। गन्धान् केदारपद्मानां जिघ्रन्ति वनशालयः ॥—इति घ.

३. निविष्टतरुणातपा च. छ.

४. अगाधस्थमपि. झ.

५. आर्यः छ.

जितः स्वर्गस्तव भ्रात्रा भरतेन महात्मना । वनस्थमपि तापस्ये यस्त्वामनुविधीयते ॥ ३३
न पित्र्यमनुवर्तन्ते मातृकं द्विपदा इति । ख्यातो लोकप्रवादोऽयं भरतेनान्यथा कृतः ॥ ३४
भर्ता दशरथो यस्याः साधुश्च भरतः सुतः । कथं नु साम्बा कैकेयी तादृशी क्रूरदर्शिनी ॥ ३५
इत्येवं लक्ष्मणे वाक्यं स्नेहाद्ब्रुवति धार्मिके । परिवादं जनन्यास्तमसहन् राघवोऽब्रवीत् ॥ ३६
न तेऽम्बा मध्यमा तात गर्हितव्या कथंचन । तामेवेक्ष्वाकुनाथस्य भरतस्य कथां कुरु ॥ ३७
निश्चितापि हि मे बुद्धिर्वनवासे दृढव्रता । भरतस्नेहसंतप्ता बालिशीक्रियते पुनः ॥ ३८
संस्मराम्यस्य वाक्यानि प्रियाणि मधुराणि च । हृद्यान्यमृतकल्पानि मनःप्रह्लादनानि च ॥ ३९
कदा न्वहं समेष्यामि भरतेन महात्मना । शत्रुघ्नेन च वीरेण त्वया च रघुनन्दन ॥ ४०
इत्येवं विलपंस्तत्र प्राप्य गोदावरीं नदीम् । चक्रेऽभिषेकं काकुत्स्थः सानुजः सह सीतया ॥ ४१
तर्पयित्वाथ सलिलैस्ते पितॄन् दैवतानि च । स्तुवन्ति स्मोदितं सूर्यं देवताश्च समाहिताः ॥ ४२

कृताभिषेकः स रराज रामः सीताद्वितीयः सह लक्ष्मणेन ।
कृताभिषेको गिरिराजपुत्र्या रुद्रः सनन्दी[1] भगवानिवेशः ॥ ४३

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
अरण्यकाण्डे हेमन्तवर्णनं नाम षोडशः सर्गः

---

## सप्तदशः सर्गः

### शूर्पणखाभावाविष्करणम्

कृताभिषेको रामस्तु सीता सौमित्रिरेव च । तस्माद्गोदावरीतीरात्ततो जग्मुः स्वमाश्रमम् ॥ १
आश्रमं तमुपागम्य राघवः सहलक्ष्मणः । कृत्वा पौर्वाह्णिकं कर्म पर्णशालामुपागमत् ॥ २
उवास सुखितस्तत्र पूज्यमानो महर्षिभिः । लक्ष्मणेन सह भ्रात्रा चकार विविधाः कथाः ॥ ३
स रामः पर्णशालायामासीनः सह सीतया । विरराज महाबाहुश्चित्रया चन्द्रमा इव ॥ ४
तथासीनस्य रामस्य कथासंसक्तचेतसः । तं देशं राक्षसी काचिदाजगाम यदृच्छया ॥ ५
सा तु शूर्पणखा नाम दशग्रीवस्य रक्षसः । भगिनी राममासाद्य ददर्श त्रिदशोपमम् ॥ ६
सिंहोरस्कं महाबाहुं पद्मपत्रनिभेक्षणम् । आजानुबाहुं दीप्तास्यमतीव प्रियदर्शनम् ॥ ७
गजविक्रान्तगमनं जटामण्डलधारिणम् । सुकुमारं महासत्त्वं पार्थिवव्यञ्जनान्वितम् ॥ ८
राममिन्दीवरश्यामं कंदर्पसदृशप्रभम् । बभूवेन्द्रोपमं दृष्ट्वा राक्षसी काममोहिता ॥ ९
सुमुखं दुर्मुखी रामं वृत्तमध्यं महोदरी । विशालाक्षं विरूपाक्षी सुकेशं ताम्रमूर्धजा ॥ १०

---

१. सविष्णुरिति पाठ इति कश्चित् ।

प्रीतिरूपं[1] विरूपा सा सुस्वरं भैरवस्वरा। तरुणं[2] दारुणा वृद्धा दक्षिणं वामभाषिणी ॥ ११
न्यायवृत्तं सुदुर्वृत्ता प्रियमप्रियदर्शना। शरीरजसमाविष्टा राक्षसी वाक्यमब्रवीत् ॥ १२
जटी तापसरूपेण सभार्यः शरचापधृन्। आगतस्त्वमिमं देशं कथं राक्षससेवितम् ॥ १३
किमागमनकृत्यं ते तत्त्वमाख्यातुमर्हसि। एवमुक्तस्तु राक्षस्या शूर्पणख्या[3] परंतपः ॥ १४
ऋजुबुद्धितया सर्वमाख्यातुमुपचक्रमे। अनृतं न हि रामस्य कदाचिदपि संमतम् ॥ १५
विशेषेणाश्रमस्थस्य समीपे स्त्रीजनस्य च[१]। आसीद्दशरथो नाम राजा त्रिदशविक्रमः ॥ १६
तस्याहमग्रजः पुत्रो रामो नाम जनैः श्रुतः। भ्रातायं लक्ष्मणो नाम यवीयान् मामनुव्रतः ॥ १७
इयं भार्या च वैदेही मम सीतेति विश्रुता। नियोगात्तु नरेन्द्रस्य पितुर्मातुश्च यन्त्रितः ॥ १८
धर्मार्थं धर्मकाङ्क्षी च वनं वस्तुमिहागतः। त्वां तु वेदितुमिच्छामि कथ्यतां कासि कस्य वा ॥ १९
न हि तावन्मनोज्ञाङ्गी राक्षसी प्रतिभासि मे। इह वा किं निमित्तं त्वमागता ब्रूहि तत्त्वतः ॥ २०
साब्रवीद्वचनं श्रुत्वा राक्षसी मदनार्दिता। श्रूयतां राम वक्ष्यामि तत्त्वार्थं वचनं मम ॥ २१
अहं शूर्पणखा नाम राक्षसी कामरूपिणी। अरण्यं विचरामीदमेका सर्वभयंकरा ॥ २२
रावणो नाम मे भ्राता बलीयान् राक्षसेश्वरः। वीरो विश्रवसः पुत्रो यदि ते श्रोत्रमागतः ॥ २३
प्रवृद्धनिद्रश्च सदा कुम्भकर्णो महाबलः। विभीषणस्तु धर्मात्मा न तु राक्षसचेष्टितः[२] ॥ २४
प्रख्यातवीर्यौ च रणे भ्रातरौ खरदूषणौ। तानहं समतिक्रान्ता राम त्वापूर्वदर्शनात् ॥ २५
समुपेतास्मि भावेन भर्तारं पुरुषोत्तमम्। अहं प्रभावसंपन्ना स्वच्छन्दबलगामिनी ॥ २६
चिराय भव मे भर्ता सीतया किं करिष्यसि। विकृता च विरूपा च न चेयं सदृशी तव ॥ २७
अहमेवानुरूपा ते भार्यारूपेण पश्य माम्। इमां विरूपामसतीं करालां निर्णतोदरीम् ॥ २८
अनेन ते सह भ्रात्रा भक्षयिष्यामि मानुषीम्। ततः पर्वतशृङ्गाणि वनानि विविधानि च ॥ २९
पश्यन् सह मया कान्त दण्डकान् विचरिष्यसि। इत्येवमुक्तः काकुत्स्थः प्रहस्य मदिरेक्षणाम् ॥३०
इदं वचनमारेभे वक्तुं वाक्यविशारदः ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
अरण्यकाण्डे शूर्पणखाभावाविष्करणं नाम सप्तदशः सर्गः

---

1. प्रीतिः, सत्त्वगुणः रूपं स्वभावो यस्य तम्। विशेषतोऽभिव्यक्तसत्त्वगुणमित्येतत्। एतदनुरोधात् विरूपेत्येतत भूयसाद्रिक्तनमोगुणेत्येतदर्थपरं बोध्यम्। तेन सुमुखं दुर्मुखीत्यादिनोपक्रान्तस्य विषमालंकारस्य नेह भङ्गः।

2. तरुणं सौम्यदर्शनं युवानं चेत्यर्थः। अत एव दारुणेति वृद्धेति च वैषम्यनिर्देशः सगच्छते।

3. शूर्पणख्येति। अनेन शूर्पोपमनखयुतेन अङ्गुलिना संतर्जयेति व्यज्यते। अत एव योगार्थविवक्षणात् ईकारान्ततोपपत्तिः।

१. अनृतमित्यादि स्त्रीजनस्येत्यन्तं पुना. नास्ति।

२. इदमर्धम् ख. नास्ति।

## अष्टादशः सर्गः

### शूर्पणखाविरूपणम्

ततः शूर्पणखां रामः कामपाशावपाशिताम् । स्वच्छया श्लक्ष्णया वाचा स्मितपूर्वमथाब्रवीत् ॥ १

कृतदारोऽस्मि भवति भार्येयं दयिता मम । त्वद्विधानां तु नारीणां सुदुःखा ससपत्नता ॥ २

अनुजस्त्वेष मे भ्राता शीलवान् प्रियदर्शनः । श्रीमानकृतदारश्च लक्ष्मणो नाम वीर्यवान् ॥ ३

अपूर्वी भार्यया चार्थी तरुणः प्रियदर्शनः । अनुरूपश्च ते भर्ता रूपस्यास्य भविष्यति ॥ ४

एनं भज विशालाक्षि भर्तारं भ्रातरं मम । असपत्ना वरारोहे मेरुमर्कप्रभा यथा ॥ ५

इति रामेण सा प्रोक्ता राक्षसी काममोहिता । विसृज्य रामं सहसा ततो लक्ष्मणमब्रवीत् ॥ ६

अस्य रूपस्य ते युक्ता भार्याहं वरवर्णिनी । मया सह सुखं सर्वान् दण्डकान् विचरिष्यसि ॥ ७

एवमुक्तस्तु सौमित्री राक्षस्या वाक्यकोविदः । ततः शूर्पणखीं स्मित्वा लक्ष्मणो युक्तमब्रवीत् ॥ ८

कथं दासस्य मे दासी भार्या भवितुमिच्छसि । सोऽहमार्येण परवान् भ्रात्रा कमलवर्णिनि ॥ ९

समृद्धार्थस्य सिद्धार्था मुदिता वरवर्णिनी । आर्यस्य त्वं विशालाक्षि भार्या भव यवीयसी ॥ १०

एनां विरूपामसतीं करालां निर्णतोदरीम् । भार्यां वृद्धां परित्यज्य त्वामेवैष भजिष्यति ॥ ११

को हि रूपमिदं श्रेष्ठं संत्यज्य वरवर्णिनि । मानुषीषु वरारोहे कुर्याद्भावं विचक्षणः ॥ १२

इति सा लक्ष्मणेनोक्ता कराला निर्णतोदरी । मन्यते तद्वचस्तथ्यं परिहासाविचक्षणा ॥ १३

सा रामं पर्णशालायामुपविष्टं परंतपम् । सीतया सह दुर्धर्षमब्रवीत् काममोहिता ॥ १४

एनां विरूपामसतीं करालां निर्णतोदरीम् । वृद्धां भार्यामवष्टभ्य मां न त्वं बहु मन्यसे ॥ १५

अद्येमां भक्षयिष्यामि पश्यतस्तव मानुषीम् । त्वया सह चरिष्यामि निःसपत्ना यथासुखम् ॥ १६

इत्युक्त्वा मृगशावाक्षीमलातसदृशेक्षणा । अभ्यधावत् सुसंक्रुद्धा महोल्का रोहिणीमिव ॥ १७

तां मृत्युपाशप्रतिमामापतन्तीं महाबलः । निगृह्य रामः कुपितस्ततो लक्ष्मणमब्रवीत् ॥ १८

क्रूरैरनार्यैः सौमित्रे परिहासः कथंचन । न कार्यः पश्य वैदेहीं कथंचित् सौम्य जीवतीम् ॥ १९

इमां विरूपामसतीमतिमत्तां महोदरीम् । राक्षसीं पुरुषव्याघ्र विरूपयितुमर्हसि ॥ २०

इत्युक्तो लक्ष्मणस्तस्याः क्रुद्धो रामस्य पश्यतः । उद्धृत्य खड्गं चिच्छेद कर्णनासं महाबलः ॥ २१

निकृत्तकर्णनासा तु विस्वरं सा विनद्य च । यथागतं प्रदुद्राव घोरा शूर्पणखा वनम् ॥ २२

सा विरूपा महाघोरा राक्षसी शोणितोक्षिता । ननाद विविधान्नादान् यथा प्रावृषि तोयदः ॥ २३

सा विक्षरन्ती रुधिरं बहुधा घोरदर्शना । प्रगृह्य बाहू गर्जन्ती प्रविवेश महावनम् ॥ २४

ततस्तु सा राक्षससङ्घसंवृतं खरं जनस्थानगतं विरूपिता ।
उपेत्य तं भ्रातरमुग्रदर्शनं पपात भूमौ गगनाद्यथाशनिः ॥ २५

ततः सभार्यं भयमोहमूर्च्छिता सलक्ष्मणं राघवमागतं वनम् ।
विरूपणं चात्मनि शोणितोक्षिता शशंस सर्वं भगिनी खरस्य सा ॥ २६

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
अरण्यकाण्डे शूर्पणखाविरूपणं नाम अष्टादशः सर्गः

---

## एकोनविंशः सर्गः

### खरक्रोधः

तां तथा पतितां दृष्ट्वा विरूपां शोणितोक्षिताम् । भगिनीं क्रोधसंतप्तः खरः पप्रच्छ राक्षसीम् ॥ १
उत्तिष्ठ तावदाख्याहि प्रमोहं जहि संभ्रमम् । व्यक्तमाख्याहि केन त्वमेवंरूपा विरूपिता ॥ २
कः कृष्णसर्पमासीनमाशीविषमनागसम् । तुदत्यभिसमापन्नमङ्गुल्यग्रेण लीलया ॥ ३
कः कालपाशमासज्य कण्ठे मोहान्न बुध्यते । 'यस्त्वामद्य समासाद्य पीतवान् विषमुत्तमम् ॥ ४
बलविक्रमसंपन्ना कामगा कामरूपिणी । इमामवस्थां नीता त्वं केनान्तकसमागता[2] ॥ ५
देवगन्धर्वभूतानामृषीणां च महात्मनाम् । कोऽयमेवं विरूपां त्वां महावीर्यश्चकार ह ॥ ६
न हि पश्याम्यहं लोके यः कुर्यान्मम विप्रियम् । अन्तरेण सहस्राक्षं[3] महेन्द्रं पाकशासनम् ॥ ७
अद्य हं मार्गणैः प्राणानादास्ये जीवितान्तकैः । सलिले क्षीरमासक्तं निष्पिबन्निव सारसः ॥ ८
निहतस्य मया संख्ये शरसंकृत्तमर्मणः । सफेनं रुधिरं रक्तं मेदिनी कस्य पास्यति ॥ ९
कस्य पत्ररथाः कायान्मांसमुत्कृत्य संगताः । प्रहृष्टा भक्षयिष्यन्ति निहतस्य मया रणे ॥ १०
तं न देवा न गन्धर्वा न पिशाचा न राक्षसाः । मयापकृष्टं कृपणं शक्तास्त्रातुमिहाहवे ॥ ११
उपलभ्य शनैः संज्ञां तं मे शंसितुमर्हसि । येन त्वं दुर्विनीतेन वने विक्रम्य निर्जिता ॥ १२
इति भ्रातुर्वचः श्रुत्वा क्रुद्धस्य च विशेषतः । ततः शूर्पणखा वाक्यं सबाष्पमिदमब्रवीत् ॥ १३
तरुणौ रूपसंपन्नौ सुकुमारौ महाबलौ । पुण्डरीकविशालाक्षौ चीरकृष्णाजिनाम्बरौ ॥ १४
फलमूलाशनौ दान्तौ तापसौ धर्मचारिणौ । पुत्रौ दशरथस्यास्तां भ्रातरौ रामलक्ष्मणौ[4] ॥ १५
गन्धर्वराजप्रतिमौ पार्थिवव्यञ्जनान्वितौ । देवौ[1] वा मानुषौ[2] वा तौ न तर्कयितुमुत्सहे ॥ १६

---

1. क इति दृश्यते चेत् स पाठः श्लिष्टः ।

2. आगतेति छेदः । मृत्युतुल्या सती केन त्वमिमामवस्थां नीता । कं च त्वां विरूपयन्तमभक्षयित्वा इहागतासीत्यर्थः ।

3. सहस्राक्षं महेन्द्रं पाकशासनमिति त्रिरभ्यासः खरस्याधिकक्रोधावेशं गमयति । इन्द्रस्य वा गर्वाधिक्यं ध्वनयितुं यौगिकार्थं विवक्षित्वा विशेषणद्वयं प्रयुक्तमिति बोध्यम् । इह अन्तरेणेत्यस्य स्थाने अमरेश्विति पाठान्तरमपि महेश्वरतीर्थेन प्रदर्शितम् ।

4. 'पुत्रौ दशरथस्यास्तां भ्रातरौ रामलक्ष्मणौ' इति यदुक्तं मया तत् तयोर्वचनमनुरुध्यैव; परमार्थतस्तु न मे तत्र निश्चयः, इति तयो रूपसौन्दर्यस्मरणविमोहिता पुनर्वर्णयति—देवाविति ।

१. अस्यानन्तरम्—शरण्यौ सर्वसत्त्वानां श्रेष्ठौ सर्वधनुष्मताम्—इति ख.

२. दानवौ पुना. ।

तरुणी रूपसंपन्ना सर्वाभरणभूषिता । दृष्टा तत्र मया नारी तयोर्मध्ये सुमध्यमा ॥ १७
ताभ्यामुभाभ्यां संभूय प्रमदामधिकृत्य ताम् । इमामवस्थां नीताहं यथानाथासती तथा ॥ १८
तस्याश्चानृजुवृत्तायास्तयोश्च हतयोरहम् । सफेनं पातुमिच्छामि रुधिरं रणमूर्धनि ॥ १९
एष मे प्रथमः कामः कृतस्तात त्वया भवेत् । तस्यास्तयोश्च रुधिरं पिबेयमहमाहवे ॥ २०
इति तस्यां ब्रुवाणायां चतुर्दश महाबलान् । व्यादिदेश खरः क्रुद्धो राक्षसानन्तकोपमान् ॥ २१
मानुषौ शस्त्रसंपन्नौ चीरकृष्णाजिनाम्बरौ । प्रविष्टौ दण्डकारण्यं घोरं प्रमदया सह[1] ॥ २२
तौ हत्वा तां च दुर्वृत्तामुपावर्तितुमर्हथ । इयं च रुधिरं तेषां भगिनी मम पास्यति ॥ २३
मनोरथोऽयमिष्टोऽस्या भगिन्या मम राक्षसाः । शीघ्रं संपाद्यतां गत्वा तौ प्रमथ्य स्वतेजसा ॥ २४
युष्माभिर्निहतौ दृष्ट्वा तावुभौ भ्रातरौ रणे । इयं प्रहृष्टा मुदिता रुधिरं युधि पास्यति[2] ॥ २५
इति प्रतिसमादिष्टा राक्षसास्ते चतुर्दश । तत्र जग्मुस्तया सार्धं घना वातेरिता यथा ॥ २६

ततस्तु ते तं समुदग्रतेजसं तथापि तीक्ष्णप्रदरा निशाचराः ।
दुरासदं धर्षयितुं न चाशकन् वनद्विपा दीप्तमिवाग्निमुत्थितम्[3] ॥ २७

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
अरण्यकाण्डे खरक्रोधो नाम एकोनविंशः सर्गः

---

## विंशः सर्गः

### चतुर्दशरक्षोवधः

ततः शूर्पणखा घोरा राघवाश्रममागता । रक्षसामाचचक्षे तौ भ्रातरौ सह सीतया ॥ १
ते रामं पर्णशालायामुपविष्टं महाबलम् । ददृशुः सीतया सार्धं वैदेह्या लक्ष्मणेन च ॥ २
तान् दृष्ट्वा राघवः श्रीमानागतांस्तां च राक्षसीम् । अब्रवीद्भ्रातरं रामो लक्ष्मणं दीप्ततेजसम् ॥ ३
मुहूर्तं भव सौमित्रे सीतायाः प्रत्यनन्तरः । इमानस्या वधिष्यामि पदवीमागतानिह ॥ ४
वाक्यमेतत्ततः श्रुत्वा रामस्य विदितात्मनः । तथेति लक्ष्मणो वाक्यं रामस्य प्रत्यपूजयत् ॥ ५
राघवोऽपि महच्चापं चामीकरविभूषितम् । चकार सज्यं धर्मात्मा तानि रक्षांसि चाब्रवीत् ॥ ६
पुत्रौ दशरथस्यावां भ्रातरौ रामलक्ष्मणौ । प्रविष्टौ सीतया सार्धं दुश्चरं दण्डकावनम् ॥ ७

---

१. अस्यानन्तरम्—युष्माभिस्तौ निहन्तव्यौ सहसा तापसाविमौ—इति ख.
२. इदं पद्यं क. ख. ग. च. छ. नास्ति ।
३. इदं पद्यं ग्र. नास्ति ।

फलमूलाशनौ दान्तौ तापसौ धर्मचारिणौ । वसन्तौ दण्डकारण्ये किमर्थमुपहिंसथ ॥ ८
युष्मान् पापात्मकान् हन्तुं विप्रकारान् महाहवे । ऋषीणां तु नियोगेन प्राप्तोऽहं सशरायुधः ॥ ९
तिष्ठतैवात्र संतुष्टा नोपावर्तितुमर्हथ । यदि प्राणैरिहार्थो वा[1] निवर्तध्वं निशाचराः ॥ १०
तस्य तद्वचनं श्रुत्वा राक्षसास्ते चतुर्दश । ऊचुर्वाचं सुसंक्रुद्धा ब्रह्मघ्नाः शूलपाणयः[2] ॥ ११
क्रोधमुत्पाद्य नो भर्तुः खरस्य सुमहात्मनः । त्वमेव हास्यसे प्राणानद्यास्माभिर्हतो युधि ॥ १२
का हि ते शक्तिरेकस्य बहूनां रणमूर्धनि । अस्माकमग्रतः स्थातुं किं पुनर्योद्धुमाहवे ॥ १३
एहि बाहुप्रयुक्तैर्नः परिघैः शूलपट्टिशैः । प्राणांस्त्यक्ष्यसि वीर्यं च धनुश्च करपीडितम् ॥ १४
इत्येवमुक्त्वा संक्रुद्धा राक्षसास्ते चतुर्दश । उद्यतायुधनिस्त्रिंशा राममेवाभिदुद्रुवुः ॥ १५
अभिपत्य ततो वेगात् पृष्ठतस्ते निशाचराः । परिघान् पट्टिशान् शूलान् निस्त्रिंशान हेमभूषितान्[3] ॥ १६
चिक्षिपुस्तानि शूलानि राघवं प्रति दुर्जयम् । तानि शूलानि काकुत्स्थः समस्तानि चतुर्दश ॥ १७
तावद्भिरेव चिच्छेद शरैः काञ्चनभूषणैः । ततः पश्चान्महातेजा नाराचान् सूर्यसंनिभान् ॥ १८
जग्राह परमक्रुद्धश्चतुर्दश शिलाशितान् । गृहीत्वा धनुरायम्य लक्ष्यानुद्दिश्य राक्षसान् ॥ १९
मुमोच राघवो बाणान् वज्रानिव शतक्रतुः । [4]रुक्मपुङ्खाश्च विशिखा दीप्ता हेमविभूषिताः ॥ २०
ते भित्त्वा रक्षसां वेगाद्वक्षांसि रुधिराप्लुताः । विनिष्पेतुस्तदा भूमौ वल्मीकादिव पन्नगाः[5] ॥ २१
ते भिन्नहृदया भूमौ छिन्नमूला इव द्रुमाः । निपेतुः शोणितार्द्राङ्गा विकृता विगतासवः ॥ २२
तान् दृष्ट्वा पतितान् भूमौ राक्षसी क्रोधमूर्च्छिता । परित्रस्ता पुनस्तत्र व्यसृजद्भैरवस्वनान्[6] ॥ २३
सा नदन्ती महानादं जवाच्छूर्पणखा पुनः । उपगम्य खरं सा तु किंचित् संशुष्कशोणिता ॥ २४
पपात पुनरेवार्ता सनिर्यासेव सल्लकी । भ्रातुः समीपे शोकार्ता ससर्ज निनदं मुहुः[7] ॥ २५
सस्वरं मुमुचे बाष्पं विषण्णवदना तदा ।

निपातितान् दृश्य रणे तु राक्षसान् प्रधाविता शूर्पणखा पुनस्ततः ।
वधं च तेषां निखिलेन रक्षसां शशंस सर्वं भगिनी खरस्य सा[1] ॥ २६

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
अरण्यकाण्डे चतुर्दशरक्षोवधो नाम विंशः सर्गः

1. इदम् उत्तरसर्गार्थस्य संक्षेपतः कथनम् ।

१. वः रा.

२. अस्यानन्तरम्—संरक्तनयना घोरा रामं संरक्तलोचनम् । परुषा मधुराभाषं हृष्टा दृष्टपराक्रमम् ॥— इति च. छ.

३. इदं पद्यं प्र. नास्ति ।

४. इदं अर्धं प्र. नास्ति । अस्यानन्तरम्—अन्तरिक्षे महोल्कानां बभूवुस्तुल्यदर्शनाः— इति छ.

५. न्यमज्जन्ताशनिस्वनाः च. छ.

६. तान् दृष्ट्वेत्यादि भैरवस्वनानित्यन्तम पुना. नास्ति ।

७. अस्य पादस्य स्थाने—नष्टसंज्ञाभवन्मुहुः । भूमौ शयाना दुःखार्ता लब्धसंज्ञाभवत्पुनः—इति घ.

## एकविंशः सर्गः

### खरसन्धुक्षणम्

स पुनः पतितां दृष्ट्वा क्रोधाच्छूर्पणखां खरः । उवाच व्यक्तया वाचा तामनर्थार्थमागताम् ॥ १

मया त्विदानीं शूरास्ते राक्षसा रुधिराशनाः । त्वत्प्रियार्थं विनिर्दिष्टाः किमर्थं रुद्यते पुनः ॥ २

भक्ताश्चैवानुरक्ताश्च हिताश्च मम नित्यशः । घ्नन्तोऽपि न निहन्तव्या[1] न न कुर्युर्वचो मम ॥ ३

किमेतच्छ्रोतुमिच्छामि कारणं यत्कृते पुनः । हा नाथेति विनर्दन्ती सर्पवल्लुठसि[1] क्षितौ ॥ ४

अनाथवद्विलपसि नाथे तु मयि संस्थिते[2] । उत्तिष्ठोत्तिष्ठ मा भैषीर्वैक्लव्यं त्यज्यतामिह ॥ ५

इत्येवमुक्ता दुर्धर्षा खरेण परिसान्त्विता । विमृज्य नयने सास्रे खरं भ्रातरमब्रवीत् ॥ ६

अस्मीदानीमहं प्राप्ता हृतश्रवणनासिका । शोणितौघपरिक्लिन्ना त्वया च परिसान्त्विता ॥ ७

प्रेषिताश्च त्वया वीर राक्षसास्ते चतुर्दश । निहन्तुं राघवं क्रोधान्मत्प्रियार्थं सलक्ष्मणम् ॥ ८

ते तु रामेण सामर्षाः शूलपट्टिशपाणयः । समरे निहताः सर्वे सायकैर्मर्मभेदिभिः ॥ ९

तान् दृष्ट्वा पतितान् भूमौ क्षणेनैव महाबलान् । रामस्य च महत् कर्म महांस्त्रासोऽभवन्मम ॥ १०

अहमस्मि समुद्विग्ना विषण्णा च निशाचर । शरणं त्वां पुनः प्राप्ता सर्वतोभयदर्शिनी ॥ ११

विषादनक्राध्युषिते परित्रासोर्मिमालिनि । किं मां न त्रायसे मग्नां विपुले शोकसागरे ॥ १२

एते च निहता भूमौ रामेण निशितैः शरैः । येऽपि मे पदवीं प्राप्ता राक्षसाः पिशिताशनाः ॥ १३

मयि ते यद्यनुक्रोशो यदि रक्षःसु तेषु च । रामेण[3] यदि ते शक्तिस्तेजो वास्ति निशाचर ॥ १४

दण्डकारण्यनिलयं जहि राक्षसकण्टकम् । यदि रामं ममामित्रं न त्वमद्य वधिष्यसि ॥ १५

तव चैवाग्रतः प्राणांस्त्यक्ष्यामि निरपत्रपा । बुद्ध्याहमनुपश्यामि न त्वं रामस्य संयुगे ॥ १६

स्थातुं प्रतिमुखे शक्तः सबलोऽपि महारणे । शूरमानी न शूरस्त्वं मिथ्यारोपितविक्रमः ॥ १७

मानुषौ यौ न शक्नोषि हन्तुं तौ रामलक्ष्मणौ । रामेण यदि ते शक्तिस्तेजो वास्ति निशाचर ॥ १८

दण्डकारण्यनिलयं जहि तं कुलपांसन । निःसत्त्वस्याल्पवीर्यस्य वासस्ते कीदृशस्त्विह ॥ १९

अपयाहि जनस्थानात्त्वरितः सहबान्धवः । रामतेजोऽभिभूतो हि त्वं क्षिप्रं विनशिष्यसि ॥ २०

स हि तेजःसमायुक्तो रामो दशरथात्मजः । भ्राता चास्य महावीर्यो येन चास्मि विरूपिता ॥ २१

---

1. अपिश्चार्थे । परान् घ्नन्तश्च परैर्निहन्तुमशक्याश्चेत्यर्थः । हन्यमाना न हन्यन्ते इति तिलकपाठे तु परैस्ताड्यमाना अपि ये न हन्तुं शक्यन्ते तादृशा इत्यर्थः ।

2 नाथे मयि संस्थिते मरणं प्राप्ते अनाथवत्त्वं विलपिष्यसि इति विरुद्धार्थान्तरप्रतीतिकृत् इदं खरस्य वचनं माविनस्तदशुभस्य सूचकम् । संस्थितिर्मरणं. . . इति हि कोशप्रसिद्धिः ।

3. रामेणेति योद्धुमिति शेषः ।

१. वेष्टसे च. छ.

एवं विलप्य बहुशो राक्षसी प्रदरोदरी[1] । कराभ्यामुदरं हत्वा रुरोद भृशदुःखिता ॥ २२

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
अरण्यकाण्डे खरसन्धुक्षणं नाम एकविंश. सर्गः

---

## द्वाविंशः सर्गः

### खरसंनाहः

एवमाधर्षितः शूरः शूर्पणख्या खरस्तदा । उवाच रक्षसां मध्ये खरः खरतरं वचः ॥ १

तवावमानप्रभवः क्रोधोऽयमतुलो मम । न शक्यते धारयितुं लवणाम्भ इवोत्थितम्[2] ॥ २

न रामं गणये वीर्यान्मानुषं क्षीणजीवितम् । आत्मदुश्चरितैः प्राणान् हतो योऽद्य विमोक्ष्यति ॥ ३

बाष्पः संह्रियतामेष संभ्रमश्च विमुच्यताम् । अहं रामं सह भ्रात्रा नयामि यमसादनम् ॥ ४

परश्वधहतस्याद्य मन्दप्राणस्य संयुगे । रामस्य रुधिरं रक्तमुष्णं पास्यसि राक्षसि ॥ ५

सा प्रहृष्टा वचः श्रुत्वा खरस्य वदनाच्च्युतम् । प्रशशंस पुनर्मौर्ख्याद्भ्रातरं रक्षसां वरम् ॥ ६

तया परुषितः पूर्वं पुनरेव प्रशंसितः । अब्रवीद्दूषणं नाम खरः सेनापति तदा ॥ ७

चतुर्दश सहस्राणि मम चित्तानुवर्तिनाम् । रक्षसां भीमवेगानां समरेष्वनिवर्तिनाम् ॥ ८

नीलजीमूतवर्णानां घोराणां क्रूरकर्मणाम् । लोकहिंसाविहाराणां बलिनामुग्रतेजसाम् ॥ ९

तेषां शार्दूलदर्पाणां महास्यानां महौजसाम् । सर्वोद्योगमुदीर्णानां रक्षसां सौम्य कारय[1] ॥ १०

उपस्थापय मे क्षिप्रं रथं सौम्य धनूंषि च । शरांश्चित्रांश्च खड्गांश्च शक्तीश्च विविधाः शिताः ॥ ११

अग्रे निर्यातुमिच्छामि पौलस्त्यानां महारथम् । वधार्थं दुर्विनीतस्य रामस्य रणकोविदः ॥ १२

इति तस्य ब्रुवाणस्य सूर्यवर्णं महारथम् । सदश्वैः शबलैर्युक्तमाचचक्षेऽथ दूषणः ॥ १३

तं मेरुशिखराकारं तप्तकाञ्चनभूषणम् । हेमचक्रमसंबाधं वैदूर्यमयकूबरम् ॥ १४

मत्स्यैः पुष्पैर्द्रुमैः शैलैश्चन्द्रसूर्यैश्च काञ्चनैः । मङ्गलैः पक्षिसङ्घैश्च ताराभिरभिसंवृतम् ॥ १५

ध्वजनिस्त्रिंशसंपन्नं किङ्किणीकविराजितम् । सदश्वयुक्तं सोऽमर्षादारुरोह खरो रथम् ॥ १६

निशाम्य तु रथस्थं तं राक्षसा भीमविक्रमाः । तस्थुः संपरिवार्यैनं दूषणं च महाबलम् ॥ १७

खरस्तु तान् महेष्वासान् घोरवर्मायुधध्वजान् । निर्यातेत्यब्रवीद्धृष्टो रथस्थः सर्वराक्षसान् ॥ १८

ततस्तद्राक्षसं सैन्यं घोरवर्मायुधध्वजम् । निर्जगाम जनस्थानान्महानादं महाजवम् ॥ १९

मुद्गरैः पट्टिशैः शूलैः सुतीक्ष्णैश्च परश्वधैः । खड्गैश्चक्रैश्च हस्तस्थैर्भ्राजमानैश्च तोमरैः ॥ २०

शक्तिभिः परिघैर्घोरैरतिमात्रैश्च कार्मुकैः । गदासिमुसलैर्वज्रैर्गृहीतैर्भीमदर्शनैः ॥ २१

---

1. रक्षसां सहस्राणि सर्वोद्योग कारयेति योजना । नष्टसंज्ञा बभूव ह—इति च. छ.

१. अस्यानन्तरम्—भ्रातुः समीपे दुःखार्ता २. उल्बणम् म.

राक्षसानां सुघोराणां सहस्राणि चतुर्दश । निर्यातानि जनस्थानात् खरचित्तानुवर्तिनाम् ॥ २२
तांस्त्वभिद्रवतो दृष्ट्वा राक्षसान् भीमविक्रमान् । खरस्यापि रथः किंचिज्जगाम तदनन्तरम् ॥ २३
ततस्तान्शबलानश्वांस्तप्तकाञ्चनभूषितान् । खरस्य मतिमाज्ञाय सारथिः समचोदयत् ॥ २४
स चोदितो रथः शीघ्रं खरस्य रिपुघातिनः । शब्देनापूरयामास दिशश्च प्रदिशस्तदा ॥ २५

प्रवृद्धमन्युस्तु खरः खरस्वनो रिपोर्वधार्थं त्वरितो यथान्तकः ।
अचूचुदत् सारथिमुन्नदन् घनं महाबलो मेघ इवाश्मवर्षवान् ॥ २६

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
अरण्यकाण्डे खरसंनाहो नाम द्वाविंशः सर्गः

---

## त्रयोविंशः सर्गः

### उत्पातदर्शनम्

तस्मिन् याते जनस्थानादशिवं शोणितोदकम् । अभ्यवर्षन्महामेघस्तुमुलो गर्दभारुणः ॥ १
निपेतुस्तुरगास्तस्य रथयुक्ता महाजवाः । समे पुष्पचिते देशे राजमार्गे यदृच्छया ॥ २
श्यामं रुधिरपर्यन्तं बभूव परिवेषणम् । अलातचक्रप्रतिमं परिगृह्य दिवाकरम् ॥ ३
ततो ध्वजमुपागम्य हेमदण्डं समुच्छ्रितम् । समाक्रम्य महाकायस्तस्थौ गृध्रः सुदारुणः ॥ ४
जनस्थानसमीपे तु समागम्य खरस्वनाः । विस्वरान् विविधांश्चक्रुर्मांसादा मृगपक्षिणः ॥ ५
व्याजह्रुश्च प्रदीप्तायां दिशि वै भैरवस्वनम् । अशिवं यातुधानानां शिवा घोरा महास्वनाः ॥ ६
प्रभिन्नगिरिसंकाशास्तोयशोणितधारिणः । आकाशं तदनाकाशं चक्रुर्भीमा वलाहकाः ॥ ७
बभूव तिमिरं घोरमुद्धतं रोमहर्षणम् । दिशो वा विदिशो वापि न च व्यक्तं चकाशिरे ॥ ८
क्षतजार्द्रसवर्णाभा सन्ध्या कालं विना बभौ । खरस्याभिमुखा नेदुस्तदा घोरमृगाः खगाः ॥ ९
कङ्कगोमायुगृध्राश्च चुक्रुशुर्भयशंसिनः । नित्याशिवकरा युद्धे शिवा घोरनिदर्शनाः ॥ १०
नेदुर्बलस्याभिमुखं ज्वालोद्गारिभिराननैः । कबन्धः परिघाभासो दृश्यते भास्करान्तिके ॥ ११
जग्राह सूर्यं स्वर्भानुरपर्वणि महाग्रहः । प्रवाति मारुतः शीघ्रं निष्प्रभोऽभूद्दिवाकरः ॥ १२
उत्पेतुश्च विना रात्रिं ताराः खद्योतसप्रभाः । संलीनमीनविहगा नलिन्यः शुष्कपङ्कजाः ॥ १३
तस्मिन् क्षणे बभूवुश्च विना पुष्पफलैर्द्रुमाः । उद्धूतश्च विना वातं रेणुर्जलधरारुणः ॥ १४
वीचीकूचीति वाश्यन्त्यो बभूवुस्तत्र शारिकाः । उल्काश्चापि सनिर्घाता निपेतुर्घोरदर्शनाः ॥ १५
प्रचचाल मही सर्वा सशैलवनकानना । खरस्य च रथस्थस्य नर्दमानस्य धीमतः ॥ १६
प्राकम्पत भुजः सव्यः स्वरश्चास्यावसज्जत । सास्रा संपद्यते दृष्टिः पश्यमानस्य सर्वतः ॥ १७

ललाटे च रुजा जाता न च मोहान्न्यवर्तत । तान् समीक्ष्य महोत्पातानुत्थितान् रोमहर्षणान् ॥ १८
अब्रवीद्राक्षसान् सर्वान् प्रहसन् स खरस्तदा । महोत्पातानिमान् सर्वानुत्थितान् घोरदर्शनान् ॥ १९
न चिन्तयाम्यहं वीर्याद्बलवान् दुर्बलानिव । तारा अपि शरैस्तीक्ष्णैः पातयामि नभःस्थलात् ॥ २०
मृत्युं मरणधर्मेण संक्रुद्धो योजयाम्यहम् । राघवं तं बलोत्सिक्तं भ्रातरं चास्य लक्ष्मणम् ॥ २१
अहत्वा सायकैस्तीक्ष्णैर्नोपावर्तितुमुत्सहे । सकामा भगिनी मेऽस्तु पीत्वा तु रुधिरं तयोः ॥ २२
यन्निमित्तस्तु रामस्य लक्ष्मणस्य विपर्ययः । न क्वचित् प्राप्तपूर्वो मे संयुगेषु पराजयः ॥ २३
युष्माकमेतत् प्रत्यक्षं नानृतं कथयाम्यहम् । देवराजमपि क्रुद्धो मत्तैरावतयायिनम् ॥ २४
वज्रहस्तं रणे हन्यां किं पुनस्तौ कुमानुषौ । सा तस्य गर्जितं श्रुत्वा राक्षसस्य महाचमूः ॥ २५
प्रहर्षमतुलं लेभे मृत्युपाशावपाशिता । समीयुश्च महात्मानो युद्धदर्शनकाङ्क्षिणः ॥ २६
ऋषयो देवगन्धर्वाः सिद्धाश्च सह चारणैः । समेत्य चोचुः सहितास्तेऽन्योन्यं पुण्यकर्मणः ॥ २७
स्वस्ति गोब्राह्मणेभ्योऽस्तु लोकानां येऽभिसंगताः । जयतां राघवः सङ्ख्ये पौलस्त्यान् रजनीचरान् ॥
चक्रहस्तो यथा युद्धे सर्वानसुरपुंगवान् । एतच्चान्यच्च बहुशो ब्रुवाणाः परमर्षयः ॥ २९
जातकौतूहलास्तत्र विमानस्थाश्च देवताः । ददृशुर्वाहिनीं तेषां राक्षसानां गतायुषाम् ॥ ३०
रथेन तु खरो वेगादुग्रसैन्यो विनिःसृतः । तं दृष्ट्वा राक्षसं भूयो राक्षसाश्च विनिःसृताः ॥ ३१
श्येनगामी पृथुग्रीवो यज्ञशत्रुर्विहंगमः । दुर्जयः करवीराक्षः परुषः कालकार्मुकः ॥ ३२
मेघमाली महामाली सर्पास्यो रुधिराशनः । द्वादशैते महावीर्याः प्रतस्थुरभितः खरम् ॥ ३३
महाकपालः स्थूलाक्षः प्रमाथी त्रिशिरास्तथा । चत्वार एते सेनान्यो दूषणं पृष्ठतो ययुः ॥ ३४

सा भीमवेगा समराभिकामा महाबला राक्षसवीरसेना ।
तौ राजपुत्रौ सहसाभ्युपेता माला ग्रहाणामिव चन्द्रसूर्यौ ॥ ३५

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
अरण्यकाण्डे उत्पातदर्शनं नाम त्रयोविंशः सर्गः

---

## चतुर्विंशः सर्गः

### रामखरबलसंनिकर्षः

आश्रमं प्रतियाते तु खरे खरपराक्रमे । तानेवौत्पातिकान् रामः सह भ्रात्रा ददर्श ह ॥ १
तानुत्पातान् महाघोरानुत्थितान् रोमहर्षणान् । प्रजानामहितान् दृष्ट्वा रामो लक्ष्मणमब्रवीत् ॥ २
इमान् पश्य महाबाहो सर्वभूतापहारिणः । समुत्थितान् महोत्पातान् संहर्तुं सर्वराक्षसान् ॥ ३
अमी रुधिरधारास्तु विसृजन्तः खरस्वनाः । व्योम्नि मेघा विवर्तन्ते परुषा गर्दभारुणाः ॥ ४

सधूमाश्च शराः सर्वे मम युद्धाभिनन्दिनः । रुक्मपृष्ठानि चापानि विवेष्टन्ते च लक्ष्मण ॥ ५
यादृशा इह कूजन्ति पक्षिणो वनचारिणः । अग्रतो नो भयं प्राप्तं संशयो जीवितस्य च ॥ ६
संप्रहारस्तु सुमहान् भविष्यति न संशयः । अयमाख्याति मे बाहुः स्फुरमाणो मुहुर्मुहुः ॥ ७
संनिकर्षे तु नः शूर जयं शत्रोः पराजयम् । सप्रभं च प्रसन्नं च तव वक्त्रं हि लक्ष्यते ॥ ८
उद्यतानां हि युद्धार्थं येषां भवति लक्ष्मण । निष्प्रभं वदनं तेषां भवत्यायुःपरिक्षये ॥ ९
रक्षसां नर्दतां घोरः श्रूयते च महाध्वनिः । आहतानां च भेरीणां राक्षसैः क्रूरकर्मभिः ॥ १०
अनागतविधानं तु कर्तव्यं शुभमिच्छता । आपदं शङ्कमानेन पुरुषेण विपश्चिता ॥ ११
तस्माद्गृहीत्वा वैदेहीं शरपाणिर्धनुर्धरः । गुहामाश्रय शैलस्य दुर्गां पादपसंकुलाम् ॥ १२
प्रतिकूलितुमिच्छामि न हि वाक्यमिदं त्वया । शापितो मम पादाभ्यां गम्यतां वत्स मा चिरम् ॥ १३
त्वं हि शूरश्च बलवान् हन्या ह्येतान्न संशयः । स्वयं तु हन्तुमिच्छामि सर्वानेव निशाचरान् ॥ १४
एवमुक्तस्तु रामेण लक्ष्मणः सह सीतया । शरानादाय चापं च गुहां दुर्गां समाश्रयत् ॥ १५
तस्मिन् प्रविष्टे तु गुहां लक्ष्मणे सह सीतया । हन्त निर्युक्तमित्युक्त्वा रामः कवचमाविशत् ॥ १६
स तेनाग्निनिकाशेन कवचेन विभूषितः । बभूव रामस्तिमिरे विधूमोऽग्निरिवोत्थितः ॥ १७
स चापमुद्यम्य महच्छरानादाय वीर्यवान् । बभूवावस्थितस्तत्र ज्यास्वनैः पूरयन् दिशः ॥ १८
ततो देवाः सगन्धर्वाः सिद्धाश्च सह चारणैः । समेयुश्च महात्मानो युद्धदर्शनकाङ्क्षिणः ॥ १९
ऋषयश्च महात्मानो लोके ब्रह्मर्षिसत्तमाः । समेत्य चोचुः सहिता अन्योन्यं पुण्यकर्मणः ॥ २०
स्वस्ति गोब्राह्मणेभ्योऽस्तु लोकानां येऽभिसंगताः । जयतां राघवो युद्धे पौलस्त्यान् रजनीचरान् ॥ २१
चक्रहस्तो यथा युद्धे सर्वानसुरपुंगवान् । एवमुक्त्वा पुनः प्रोचुरालोक्य च परस्परम्[१] ॥ २२
चतुर्दश सहस्राणि रक्षसां भीमकर्मणाम् । एकश्च रामो धर्मात्मा कथं युद्धं भविष्यति ॥ २३
इति राजर्षयः सिद्धाः सगणाश्च द्विजर्षभाः । जातकौतूहलास्तस्थुर्विमानस्थाश्च देवताः ॥ २४
आविष्टं तेजसा रामं संग्रामशिरसि स्थितम् । दृष्ट्वा सर्वाणि भूतानि भयाद्विव्यथिरे तदा ॥ २५
रूपमप्रतिमं तस्य रामस्याक्लिष्टकर्मणः । बभूव रूपं क्रुद्धस्य रुद्रस्येव पिनाकिनः ॥ २६
इति संभाष्यमाणे तु देवगन्धर्वचारणैः[२] । ततो गम्भीरनिर्ह्रादं घोरवर्मायुधध्वजम् ॥ २७
अनीकं यातुधानानां समन्तात् प्रत्यदृश्यत । सिंहनादं विसृजतामन्योन्यमभिगर्जताम् ॥ २८
चापानि विस्फारयतां जृम्भतां चाप्यभीक्ष्णशः । विप्रघुष्टस्वनानां च दुन्दुभींश्चापि निघ्नताम् ॥ २९
तेषां सुतुमुलः शब्दः पूरयामास तद्वनम् । तेन शब्देन वित्रस्ताः श्वापदा वनचारिणः ॥ ३०
दुद्रुवुर्यत्र निःशब्दं पृष्ठतो न व्यलोकयन् । तत्त्वनीकं महावेगं रामं समुपसर्पत ॥ ३१
धृतनानाप्रहरणं गम्भीरं सागरोपमम् । रामोऽपि चारयंश्चक्षुः सर्वतो रणपण्डितः ॥ ३२

---

१. २०, २१, २२—श्लोकाः ख. न. सन्ति । २. इदमर्धम् ख. नास्ति ।

दददर्श खरसैन्यं तद्युद्धाभिमुखमुत्थितम् । वितत्य च धनुर्भीमं तूण्याश्चोद्धृत्य सायकान् ॥ ३३

क्रोधमाहारयत्तीव्रं वधार्थं सर्वरक्षसाम् । दुष्प्रेक्षः सोऽभवत् क्रुद्धो युगान्ताग्निरिव ज्वलन् ॥ ३४

तं दृष्ट्वा तेजसाविष्टं प्राद्रवन् वनदेवताः । तस्य क्रुद्धस्य रूपं तु रामस्य ददृशे तदा ॥ ३५

दक्षस्येव क्रतुं हन्तुमुद्यतस्य पिनाकिनः[1] ॥

तत्कार्मुकैराभरणैर्ध्वजैश्च तैर्वर्मभिश्चाग्निसमानवर्णैः ।
बभूव सैन्यं पिशिताशनानां सूर्योदये नीलमिवाभ्रवृन्दम् ॥ ३६

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
अरण्यकाण्डे रामखरबलसंनिकर्षो नाम चतुर्विंशः सर्गः

---

## पञ्चविंशः सर्गः

### खरसैन्यावमर्दः

अवष्टब्धधनुं रामं क्रुद्धं च रिपुघातिनम् । ददर्शाश्रममागम्य खरः सह पुरःसरैः ॥ १

तं दृष्ट्वा सशरं चापमुद्यम्य खरनिःस्वनम्[2] । रामस्याभिमुखं सूतं चोद्यतामित्यचोदयत् ॥ २

स खरस्याज्ञया सूतस्तुरगान् समचोदयत् । यत्र रामो महाबाहुरेको धून्वन् स्थितो धनुः ॥ ३

तं तु निष्पतितं दृष्ट्वा सर्वे ते रजनीचराः । नर्दमाना महानादं सचिवाः पर्यवारयन् ॥ ४

स तेषां यातुधानानां मध्ये रथगतः खरः । बभूव मध्ये ताराणां लोहिताङ्ग इवोदितः ॥ ५

ततः शरसहस्रेण राममप्रतिमौजसम् । अर्दयित्वा महानादं ननाद समरे खरः ॥ ६

ततस्तं भीमधन्वानं क्रुद्धाः सर्वे निशाचराः । रामं नानाविधैः शस्त्रैरभ्यवर्षन्त दुर्जयम् ॥ ७

मुद्गरैः पट्टिशैः शूलैः प्रासैः खड्गैः परश्वधैः । राक्षसाः समरे रामं निजघ्नू रोषतत्पराः ॥ ८

ते वलाहकसंकाशा महानादा महौजसः । अभ्यधावन्त काकुत्स्थं रथैर्वाजिभिरेव च ॥ ९

गजैः पर्वतकूटाभै रामं युद्धे जिघांसवः । ते रामे शरवर्षाणि व्यसृजन् रक्षसां गणाः ॥ १०

शैलेन्द्रमिव धाराभिर्वर्षमाणा वलाहकाः । स तैः परिवृतो घोरै राघवो रक्षसां गणैः ॥ ११

तिथिष्विव महादेवो वृतः परिषदां गणैः[3] । तानि मुक्तानि शस्त्राणि यातुधानैः स राघवः ॥ १२

प्रतिजग्राह विशिखैर्नद्योघानिव सागरः । स तैः प्रहरणैर्घोरैर्भिन्नगात्रो न विव्यथे ॥ १३

रामः प्रदीप्तैर्बहुभिर्वज्रैरिव महाचलः । स विद्धः क्षतजादिग्धः सर्वगात्रेषु राघवः ॥ १४

---

१. अस्यानन्तरम्—आविष्टं तेजसा रामं संग्रामशिरसि स्थितम् । दृष्ट्वा सर्वाणि भूतानि भयार्तानि प्रदुद्रुवुः ॥—इति ग. घ. च. छ.

२. अस्यार्धस्य स्थाने—तं दृष्ट्वा द्विगुणं क्रुद्धश्चापमायम्य सस्वनम्—इति ख.

३. इदं अर्धं क. ख. ग. घ. च. छ. नास्ति ।

बभूव रामः सन्ध्याभ्रैर्दिवाकर इवावृतः । विषेदुर्देवगन्धर्वाः सिद्धाश्च परमर्षयः ॥ १५
एकं सहस्रैर्बहुभिस्तदा दृष्ट्वा समावृतम् । ततो रामः सुसंक्रुद्धो मण्डलीकृतकार्मुकः ॥ १६
ससर्ज निशितान् बाणाञ्शतशोऽथ सहस्रशः । दुरावारान् दुर्विषहान् कालदण्डोपमान् रणे ॥ १७
मुमोच लीलया रामः कङ्कपत्रानजिह्मगान् । ते शराः शत्रुसैन्येषु मुक्ता रामेण लीलया ॥ १८
आददू रक्षसां प्राणान् पाशाः कालकृता इव । भित्त्वा राक्षसदेहांस्तांस्ते शरा रुधिराप्लुताः ॥ १९
अन्तरिक्षगता रेजुर्दीप्ताग्निसमतेजसः । असंख्येयास्तु रामस्य सायकाश्चापमण्डलात् ॥ २०
विनिष्पेतुरतीवोग्रा रक्षःप्राणापहारिणः । धनूंषि च ध्वजाग्राणि वर्माणि च शिरांसि च ॥ २१
बाहून् सहस्ताभरणान् ऊरून् करिकरोपमान्[1] । चिच्छेद रामः समरे शतशोऽथ सहस्रशः ॥ २२
हयान् काञ्चनसंनाहान् रथयुक्तान् ससारथीन् । गजांश्च सगजारोहान् सहयान् सादिनस्तथा ॥ २३
चिच्छिदुर्बिभिदुश्चापि रामचापगुणाच्च्युताः । पदातीन् समरे हत्वा ह्यनयद्यमसादनम् ॥ २४
ततो नालीकनाराचैस्तीक्ष्णाग्रैश्च विकर्णिभिः । भीममार्तस्वरं चक्रुर्भिद्यमाना निशाचराः ॥ २५
तत्सैन्यं निशितैर्बाणैरर्दितं मर्मभेदिभिः । रामेण न सुखं लेभे शुष्कं वनमिवाग्निना ॥ २६
केचिद्भीमबलाः शूराः शूलान् खड्गान् परश्वधान् । रामस्याभिमुखं गत्वा चिक्षिपुः परमायुधान् ॥ २७
तानि बाणैर्महाबाहुः शस्त्राण्यावार्य राघवः । जहार समरे प्राणांश्चिच्छेद च शिरोधरान् ॥ २८
ते छिन्नशिरसः पेतुश्छिन्नवर्मशरासनाः । सुपर्णवातविक्षिप्ता जगत्यां पादपा यथा ॥ २९
अवशिष्टाश्च ये तत्र विषण्णाश्च निशाचराः । खरमेवाभ्यधावन्त शरणार्थं शरार्दिताः ॥ ३०
तान् सर्वान् पुनरादाय समाश्वास्य च दूषणः । अभ्यधावत काकुत्स्थं क्रुद्धो रुद्रमिवान्तकः ॥ ३१
निवृत्तास्तु पुनः सर्वे दूषणाश्रयनिर्भयाः । राममेवाभ्यधावन्त सालतालशिलायुधाः ॥ ३२
शूलमुद्गरहस्ताश्च चापहस्ता महाबलाः । सृजन्तः शरवर्षाणि शस्त्रवर्षाणि संयुगे ॥ ३३
द्रुमवर्षाणि मुञ्चन्तः शिलावर्षाणि राक्षसाः । तद्बभूवाद्भुतं युद्धं तुमुलं रोमहर्षणम् ॥ ३४
रामस्य च महाघोरं पुनस्तेषां च रक्षसाम् । ते समन्तादभिक्रुद्धा राघवं पुनरभ्ययुः ॥ ३५
तैश्च सर्वा दिशो दृष्ट्वा प्रदिशश्च समावृताः । राक्षसैरुद्यतप्रासैः शरवर्षाभिवर्षिभिः ॥ ३६
स कृत्वा भैरवं नादमस्त्रं परमभास्वरम् । संयोजयत गान्धर्वं राक्षसेषु महाबलः ॥ ३७
ततः शरसहस्राणि निर्ययुश्चापमण्डलात् । सर्वा दश दिशो बाणैरावार्यन्त समागतैः ॥ ३८
नाददानं शरान् घोरान्न मुञ्चन्तं शिलीमुखान् । विकर्षमाणं पश्यन्ति राक्षसास्ते शरार्दिताः ॥ ३९
शरान्धकारमाकाशमावृणोत् सदिवाकरम् । बभूवावस्थितो रामः प्रवमन्निव ताञ्शरान् ॥ ४०
युगपत् पतमानैश्च युगपच्च हतैर्भृशम् । युगपत् पतितैश्चैव विकीर्णा वसुधाभवत् ॥ ४१
निहताः पतिताः क्षीणाश्छिन्ना भिन्ना विदारिताः । तत्र तत्र स्म दृश्यन्ते राक्षसास्ते सहस्रशः ॥ ४२
सोष्णीषैरुत्तमाङ्गैश्च साङ्गदैर्बाहुभिस्तथा । ऊरुभिर्जानुभिश्छिन्नैर्नानारूपविभूषणैः ॥ ४३
हयैश्च द्विपमुख्यैश्च रथैर्भिन्नैरनेकशः । चामरैर्व्यजनैश्छत्रैर्ध्वजैर्नानाविधैरपि ॥ ४४

---

१. एतदनन्तरम्—ते रणे साङ्गदान् बाहून् सहस्ताभरणान् भुजान्—इति ङ. अधिकम् ।

रामस्य बाणाभिहतैर्विचित्रैः शूलपट्टिशैः[1] । विच्छिन्नैः समरे भूमिर्विकीर्णाभूद्भयंकरा[2] ॥ ४५

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
अरण्यकाण्डे खरसैन्यावमर्दो नाम पञ्चविंशः सर्गः

---

## षड्विंशः सर्गः

### दूषणादिवधः

दूषणस्तु स्वकं सैन्यं हन्यमानं निरीक्ष्य सः । संदिदेश महाबाहुर्भीमवेगान् दुरासदान् ॥ १
राक्षसान् पञ्चसाहस्रान् समरेष्वनिवर्तिनः । ते शूलैः पट्टिशैः खड्गैः शिलावर्षैर्द्रुमैरपि ॥ २
शरवर्षैरविच्छिन्नं ववृषुस्तं समन्ततः । स द्रुमाणां शिलानां च वर्षं प्राणहरं महत् ॥ ३
प्रतिजग्राह धर्मात्मा राघवस्तीक्ष्णसायकैः । प्रतिगृह्य च तद्वर्षं निमीलित इवर्षभः ॥ ४
रामः क्रोधं परं भेजे वधार्थं सर्वरक्षसाम् । ततः क्रोधसमाविष्टः प्रदीप्त इव पावकः[3] ॥ ५
शरैरवाकिरत् सैन्यं सर्वतः सहदूषणम् । ततः सेनापतिः क्रुद्धो दूषणः शत्रुदूषणः ॥ ६
शरैरशनिकल्पैस्तं राघवं समवाकिरत् । ततो रामः सुसंक्रुद्धः क्षुरेणास्य महद्धनुः ॥ ७
चिच्छेद समरे वीरश्चतुर्भिश्चतुरो हयान् । हत्वा चाश्वाञ्शरैस्तीक्ष्णैरर्धचन्द्रेण सारथेः ॥ ८
शिरो जहार तद्रक्षस्त्रिभिर्विव्याध वक्षसि । स छिन्नधन्वा विरथो हताश्वो हतसारथिः ॥ ९
जग्राह गिरिशृङ्गाभं परिघं रोमहर्षणम् । वेष्टितं काञ्चनैः पट्टैर्देवसैन्यप्रमर्दनम् ॥ १०
आयसैः शङ्कुभिस्तीक्ष्णैः कीर्णं परवसोक्षितम् । वज्राशनिसमस्पर्शं परगोपुरदारणम् ॥ ११
त्रासनं सर्वभूतानां काञ्चनाङ्गदभूषणम्[4] । तं महोरगसंकाशं प्रगृह्य परिघं रणे ॥ १२
दूषणोऽभ्यद्रवद्रामं क्रूरकर्मा निशाचरः । तस्याभिपतमानस्य दूषणस्य स राघवः ॥ १३
द्वाभ्यां शराभ्यां चिच्छेद सहस्ताभरणौ भुजौ । भ्रष्टस्तस्य महाकायः पपात रणमूर्धनि ॥ १४
परिघश्छिन्नहस्तस्य शक्रध्वज इवाग्रतः । स कराभ्यां विकीर्णाभ्यां पपात भुवि दूषणः ॥ १५
विषाणाभ्यां विशीर्णाभ्यां मनस्वीव महागजः । तं दृष्ट्वा पतितं भूमौ दूषणं निहतं रणे ॥ १६
साधु साध्विति काकुत्स्थं सर्वभूतान्यपूजयन् । एतस्मिन्नन्तरे क्रुद्धास्त्रयः सेनाग्रयायिनः ॥ १७

---

१. अस्यानन्तरम्—खड्गैः खण्डीकृतैः प्रासैर्विकीर्णैश्च परश्वधैः । चूर्णिताभिः शिलाभिश्च शरैश्चित्रैरनेकशः ॥—इति ख. ग. च. छ.

२. अस्यानन्तरम्—तान् दृष्ट्वा निहतान् संख्ये राक्षसान् परमातुरान् । न तत्र सहितुं शक्ता रामं परपुरंजयम् ॥ बलावशेषं तु निरस्तमाहवे स्व[ख]राधिकं राक्षसदुर्बलं बलम् । जघान रामः स्थिरधर्मपौरुषो धनुर्बलादप्रतिवारणैः शरैः ॥?—इति क. ख. घ. छ.

३. तेजसा च. छ.

४. इदमर्धम् ग. घ. च. छ. नास्ति ।

संहत्याभ्यद्रवन् रामं मृत्युपाशावपाशिताः। महाकपालः स्थूलाक्षः प्रमाथी च महाबलः॥ १८
महाकपालो विपुलं शूलमुद्यम्य राक्षसः। स्थूलाक्षः पट्टिशं गृह्य प्रमाथी च परश्वधम्॥ १९
दृष्ट्वैवापततस्तूर्णं राघवः सायकैः शितैः। तीक्ष्णाग्रैः प्रतिजग्राह संप्राप्तानतिथीनिव॥ २०
महाकपालस्य शिरश्चिच्छेद परमेषुभिः। असंख्येयैस्तु बाणौघैः प्रममाथ प्रमाथिनम्॥ २१
स पपात हतो भूमौ विटपीव महाद्रुमः। स्थूलाक्षस्याक्षिणी तीक्ष्णैः पूरयामास सायकैः॥ २२
दूषणस्यानुगान् पञ्च साहस्रान् कुपितः क्षणात्। बाणौघैः पञ्चसाहस्रैरनयद्यमसादनम्॥ २३
दूषणं निहतं दृष्ट्वा तस्य चैव पदानुगान्। व्यादिदेश खरः क्रुद्धः सेनाध्यक्षान् महाबलान्॥ २४
अयं विनिहतः संख्ये दूषणः सपदानुगः। महत्या सेनया सार्धं युद्ध्वा रामं कुमानुषम्॥ २५
शस्त्रैर्नानाविधाकारैर्हनध्वं सर्वराक्षसाः। एवमुक्त्वा खरः क्रुद्धो राममेवाभिदुद्रुवे॥ २६
श्येनगामी पृथुग्रीवो यज्ञशत्रुर्विहङ्गमः। दुर्जयः करवीराक्षः परुषः कालकार्मुकः॥ २७
मेघमाली महामाली सर्पास्यो रुधिराशनः। द्वादशैते महावीर्या बलाध्यक्षाः ससैनिकाः॥ २८
राममेवाभ्यवर्तन्त विसृजन्तः शरोत्तमान्। ततः पावकसंकाशैर्हेमवज्रविभूषितैः॥ २९
जघान शेषं तेजस्वी तस्य सैन्यस्य सायकैः। ते रुक्मपुङ्खा विशिखाः सधूमा इव पावकाः॥ ३०
निजघ्नुस्तानि रक्षांसि वज्रा इव महाद्रुमान्। रक्षसां तु शतं रामः शतेनैकेन कर्णिना॥ ३१
सहस्रं च सहस्रेण जघान रणमूर्धनि। तैर्भिन्नवर्माभरणाश्छिन्नभिन्नशरासनाः॥ ३२
निपेतुः शोणितादिग्धा धरण्यां रजनीचराः। तैर्मुक्तकेशैः समरे पतितैः शोणितोक्षितैः॥ ३३
आस्तीर्णा वसुधा कृत्स्ना महावेदिः कुशैरिव। क्षणेन तु महाघोरं वनं निहतराक्षसम्॥ ३४
बभूव निरयप्रख्यं मांसशोणितकर्दमम्। चतुर्दश सहस्राणि रक्षसां भीमकर्मणाम्॥ ३५
हतान्येकेन रामेण मानुषेण पदातिना। तस्य सैन्यस्य सर्वस्य खरः शेषो महारथः॥ ३६
राक्षसस्त्रिशिराश्चैव रामश्च रिपुसूदनः। शेषा हता महासत्त्वा राक्षसा रणमूर्धनि॥ ३७
घोरा दुर्विषहाः सर्वे लक्ष्मणस्याग्रजेन ते॥

ततस्तु तद्भीमबलं महाहवे समीक्ष्य रामेण हतं बलीयसा।
रथेन रामं महता खरस्तदा समाससादेन्द्र इवोद्यताशनिः॥ ३८

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
अरण्यकाण्डे दूषणादिवधो नाम षड्विंशः सर्गः

## सप्तविंशः सर्गः

### त्रिशिरोवधः

खरं तु रामाभिमुखं प्रयान्तं वाहिनीपतिः। राक्षसस्त्रिशिरा नाम संनिपत्येदमब्रवीत्॥ १
मां नियोजय विक्रान्त संनिवर्तस्व साहसात्। पश्य रामं महाबाहुं संयुगे विनिपातितम्॥ २
प्रतिजानामि ते सत्यमायुधं चाहमालभे। यथा रामं वधिष्यामि वधार्हं सर्वरक्षसाम्॥ ३
अहं वास्य रणे मृत्युरेष वा समरे मम। विनिवृत्य रणोत्साहान्मुहूर्तं प्राश्निको भव॥ ४
प्रहृष्टो वा हते रामे जनस्थानं प्रयास्यसि। मयि वा निहते रामं संयुगायोपयास्यसि॥ ५
खरस्त्रिशिरसा तेन मृत्युलोभात् प्रसादितः। गच्छ युध्येत्यनुज्ञातो राघवाभिमुखो ययौ॥ ६
त्रिशिराश्च रथेनैव वाजियुक्तेन भास्वता। अभ्यद्रवद्रणे रामं त्रिशृङ्ग इव पर्वतः॥ ७
शरधारासमूहान् स महामेघ इवोत्सृजन्। व्यसृजत्सदृशं नादं जलार्द्रस्य तु दुन्दुभेः॥ ८
आगच्छन्तं त्रिशिरसं राक्षसं प्रेक्ष्य राघवः। धनुषा प्रतिजग्राह विधून्वन् सायकाञ्शितान्॥ ९
स संप्रहारस्तुमुलो रामत्रिशिरसोर्महान्। बभूवातीव बलिनोः सिंहकुञ्जरयोरिव॥ १०
ततस्त्रिशिरसा बाणैर्ललाटे ताडितस्त्रिभिः। अमर्षी कुपितो रामः संरब्धमिदमब्रवीत्॥ ११
अहो विक्रमशूरस्य राक्षसस्येदृशं बलम्। पुष्पैरिव शरैर्यस्य ललाटेऽस्मि परिक्षतः॥ १२
ममापि प्रतिगृह्णीष्व शरांश्चापगुणच्युतान्। एवमुक्त्वा तु संरब्धः शरानाशीविषोपमान्॥ १३
त्रिशिरोवक्षसि क्रुद्धो निजघान[1] चतुर्दश। चतुर्भिस्तुरगानस्य शरैः संनतपर्वभिः॥ १४
न्यपातयत तेजस्वी चतुरस्तस्य वाजिनः। अष्टभिः सायकैः सूतं रथोपस्थान्न्यपातयत्॥ १५
रामश्चिच्छेद बाणेन ध्वजं चास्य समुच्छ्रितम्। ततो हतरथात्तस्मादुत्पतन्तं निशाचरम्॥ १६
बिभेद रामस्तं बाणैर्हृदये सोऽभवज्जडः। सायकैश्चाप्रमेयात्मा सामर्षस्तस्य रक्षसः॥ १७
शिरांस्यपातयद्रामो वेगवद्भिस्त्रिभिः शितैः। स भूमौ रुधिरोद्गारी रामबाणाभिपीडितः॥ १८
न्यपतत् पतितैः पूर्वं स्वशिरोभिर्निशाचरः। हतशेषास्ततो भग्ना राक्षसाः खरसंश्रयाः॥ १९
द्रवन्ति स्म न तिष्ठन्ति व्याघ्रत्रस्ता मृगा इव। तान् खरो द्रवतो दृष्ट्वा निवर्त्य रुषितः स्वयम्॥ २०
राममेवाभिदुद्राव राहुश्चन्द्रमसं यथा॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
अरण्यकाण्डे त्रिशिरोवधो नाम सप्तविंशः सर्गः

---

1. निचखानेति पाठः अर्थवशात् संभाव्यते ·

## अष्टाविंशः सर्गः

### खररामसंप्रहारः

निहतं दूषणं दृष्ट्वा रणे त्रिशिरसा सह । खरस्याप्यभवत् त्रासो दृष्ट्वा रामस्य विक्रमम् ॥ १
स दृष्ट्वा राक्षसं सैन्यमविषह्यं महाबलः । हतमेकेन रामेण त्रिशिरोदूषणावपि ॥ २
तद्बलं हतभूयिष्ठं[1] विमनाः प्रेक्ष्य राक्षसः । आससाद खरो रामं नमुचिर्वासवं यथा ॥ ३
विकृष्य बलवच्चापं नाराचान् रक्तभोजनान् । खरश्चिक्षेप रामाय क्रुद्धानाशीविषानिव ॥ ४
ज्यां विधून्वन् सुबहुशः शिक्षयास्त्राणि दर्शयन् । चचार समरे मार्गाञ्शरै रथगतः खरः ॥ ५
स सर्वाश्च दिशो बाणैः प्रदिशश्च महारथः । पूरयामास तं दृष्ट्वा रामोऽपि सुमहद्धनुः[2] ॥ ६
स सायकैर्दुर्विषहैः सस्फुलिङ्गैरिवाग्निभिः । नभश्चकाराविवरं पर्जन्य इव वृष्टिभिः ॥ ७
तद्बभूव शितैर्बाणैः खररामविसर्जितैः । पर्याकाशमनाकाशं सर्वतः शरसंकुलम् ॥ ८
शरजालावृतः सूर्यो न तदा स्म प्रकाशते । अन्योन्यवधसंरम्भादुभयोः संप्रयुध्यतोः ॥ ९
ततो नालीकनाराचैस्तीक्ष्णाग्रैश्च विकर्णिभिः । आजघान खरो रामं तोत्रैरिव महाद्विपम् ॥ १०
तं रथस्थं धनुष्पाणिं राक्षसं पर्यवस्थितम् । ददृशुः सर्वभूतानि पाशहस्तमिवान्तकम् ॥ ११
हन्तारं सर्वसैन्यस्य पौरुषे पर्यवस्थितम् । परिश्रान्तं महासत्त्वं मेने रामं खरस्तदा ॥ १२
तं सिंहमिव विक्रान्तं सिंहविक्रान्तगामिनम् । दृष्ट्वा नोद्विजते रामः सिंहः क्षुद्रमृगं यथा ॥ १३
ततः सूर्यनिकाशेन रथेन महता खरः । आससाद रणे रामं पतङ्ग इव पावकम् ॥ १४
ततोऽस्य सशरं चापं मुष्टिदेशे महात्मनः । खरश्चिच्छेद रामस्य दर्शयन् पाणिलाघवम् ॥ १५
स पुनस्त्वपरान् सप्त शरानादाय वर्मणि । निजघान खरः क्रुद्धः शक्राशनिसमप्रभान् ॥ १६
ततस्तत् प्रहतं बाणैः खरमुक्तैः सुपर्वभिः । पपात कवचं भूमौ रामस्यादित्यवर्चसः ॥ १७
ततः शरसहस्रेण राममप्रतिमौजसम् । अर्दयित्वा महानादं ननाद समरे खरः ॥ १८
स शरैरर्पितः क्रुद्धः सर्वगात्रेषु राघवः । रराज समरे रामो विधूमोऽग्निरिव ज्वलन् ॥ १९
ततो गम्भीरनिर्ह्रादं रामः शत्रुनिबर्हणः । चकारान्ताय स रिपोः सज्यमन्यन्महद्धनुः ॥ २०

---

1. राक्षससंबन्धि बलं हतं दृष्ट्वा हतशिष्टं तत्प्रेक्ष्य चेति योजना ।

2. तं समरे चरन्तं रथगतं खरं दृष्ट्वा महारथो रामोऽपि सुमहत् खरयोधनानुरूपं अन्यद्धनुः तथा सर्वा दिशः प्रदिशश्च बाणैः पूरयामास इत्यर्थः । अत्र रथगतं खरं दृष्ट्वा महारथ इति वचनात् रथविहीनोऽपि महारथो राम इति विरोधाभासो ध्वन्यते रथविहीनेनापि रामेण साम्प्रतमेव रक्षसां चतुर्दश सहस्राणि हतानीति तस्य महारथत्वोपपत्तिः । 'एको दश सहस्राणि योधयेद्यस्तु धन्विनाम् । शस्त्रशास्त्रप्रवीणश्च महारथ इति स्मृतः ॥' इति हि तल्लक्षणम् । धनुः दिशः प्रदिशश्च पूरयामासेति चकारेण समुच्चयद्योतनात् 'नाददानं शरान् घोरान् न मुञ्चन्तं शिलीमुखान् । विकर्षमाणं पश्यन्ति' इति पूर्वोक्तरात्या । निमेषमात्रेण शरसन्धानादि दिक्पूरणान्तं कृतवान् राम इति अतिशयोक्तिश्च ध्वन्यते ॥

सुमहद्वैष्णवं यत्तदतिसृष्टं महर्षिणा । वरं तद्धनुरुद्यम्य खरं समभिधावत ॥ २१
ततः कनकपुङ्खैस्तु शरैः संनतपर्वभिः । बिभेद रामः संक्रुद्धः खरस्य समरे ध्वजम् ॥ २२
स दर्शनीयो बहुधा विकीर्णः काञ्चनध्वजः । जगाम धरणीं सूर्यो देवतानामिवाज्ञया ॥ २३
तं चतुर्भिः खरः क्रुद्धो रामं गात्रेषु मार्गणैः । विव्याध युधि मर्मज्ञो मातङ्गमिव तोमरैः ॥ २४
स रामो बहुभिर्बाणैः खरकार्मुकनिःसृतैः । विद्धो रुधिरसिक्ताङ्गो बभूव रुषितो भृशम् २५
स धनुर्धन्विनां श्रेष्ठः प्रगृह्य परमाहवे । मुमोच परमेष्वासः षट् शरानभिलक्षितान् ॥ २६
शिरस्येकेन बाणेन द्वाभ्यां बाह्वोरथार्दयत् । त्रिभिश्चन्द्रार्धवक्त्रैश्च वक्षस्यभिजघान ह ॥ २७
ततः पश्चान्महातेजा नाराचान् भास्करोपमान् । जिघांसू राक्षसं क्रुद्धस्त्रयोदश समाददे ॥ २८
ततोऽस्य युगमेकेन चतुर्भिश्चतुरो हयान् । षष्ठेन तु शिरः संख्ये खरस्य रथसारथेः ॥ २९
त्रिभिस्त्रिवेणुं बलवान् द्वाभ्यामक्षं महाबलः । द्वादशेन तु बाणेन खरस्य सशरं धनुः ॥ ३०
छित्त्वा वज्रनिकाशेन राघवः प्रहसन्निव । त्रयोदशेनेन्द्रसमो बिभेद समरे खरम् ॥ ३१
प्रभग्नधन्वा विरथो हताश्वो हतसारथिः । गदापाणिरवप्लुत्य तस्थौ भूमौ खरस्तदा ॥ ३२

तत् कर्म रामस्य महारथस्य समेत्य देवाश्च महर्षयश्च ।
अपूजयन् प्राञ्जलयः प्रहृष्टास्तदा विमानाग्रगताः समेताः ॥ ३३

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
अरण्यकाण्डे खररामसंप्रहारो नाम अष्टाविंशः सर्गः

---

## एकोनत्रिंशः सर्गः

### खरगदाभेदनम्

खरं तु विरथं रामो गदापाणिमवस्थितम् । मृदुपूर्वं महातेजाः परुषं वाक्यमब्रवीत् ॥ १
गजाश्वरथसंबाधे बले महति तिष्ठता । कृतं सुदारुणं कर्म सर्वलोकजुगुप्सितम् ॥ २
उद्वेजनीयो भूतानां नृशंसः पापकर्मकृत् । त्रयाणामपि लोकानामीश्वरोऽपि न तिष्ठति ॥ ३
कर्म लोकविरुद्धं तु कुर्वाणं क्षणदाचर । तीक्ष्णं सर्वजनो हन्ति सर्पं दुष्टमिवागतम् ॥ ४
लोभात् पापानि कुर्वाणः कामाद्वा यो न बुध्यते । [1]हृष्टः पश्यति तस्यान्तं ब्राह्मणी करकादिव[1] ॥ ५
वसतो दण्डकारण्ये तापसान् धर्मचारिणः । किं नु हत्वा महाभागान् फलं प्राप्स्यसि राक्षस ॥ ६
न चिरं पापकर्माणः क्रूरा लोकजुगुप्सिताः । ऐश्वर्यं प्राप्य तिष्ठन्ति शीर्णमूला इव द्रुमाः ॥ ७

---

1. करका अस्ति, भक्षयतीति करकात्। निगरणमात्रेण मृत्युर्भवतीति प्रसिद्धिः
ब्राह्मणी रक्तपुच्छिका नाम क्षुद्रजन्तुः। तस्याः करका- १, भ्रष्टः क्ष, भ

अवश्यं लभते जन्तुः फलं पापस्य कर्मणः । घोरं पर्यागते ताले द्रुमः पुष्पमिवार्तवम् ॥ ८
न चिरात् प्राप्यते लोके पापानां कर्मणां फलम् । सविषाणामिवान्नानां भुक्तानां क्षणदाचर ॥ ९
पापमाचरतां घोरं लोकस्याप्रियमिच्छताम् । अहमासादितो राज्ञा[1] प्राणान् हन्तुं निशाचर ॥ १०
अद्य हि त्वां मया मुक्ताः शराः काञ्चनभूषणाः । विदार्य निपतिष्यन्ति[2] वल्मीकमिव पन्नगाः ॥ ११
ये त्वया दण्डकारण्ये भक्षिता धर्मचारिणः । तानद्य निहतः संख्ये ससैन्योऽनुगमिष्यसि ॥ १२
अद्य त्वां विहतं बाणैः पश्यन्तु परमर्षयः । निरयस्थं विमानस्था ये त्वया हिंसिताः पुरा ॥ १३
प्रहर त्वं यथाकामं कुरु यत्नं कुलाधम । अद्य ते पातयिष्यामि शिरस्तालफलं यथा ॥ १४
एवमुक्तस्तु रामेण क्रुद्धः संरक्तलोचनः । प्रत्युवाच खरो रामं प्रहसन् क्रोधमूर्च्छितः ॥ १५
प्राकृतान् राक्षसान् हत्वा युद्धे दशरथात्मज । आत्मना कथमात्मानमप्रशस्यं प्रशंससि ॥ १६
विक्रान्ता बलवन्तो वा ये भवन्ति नरर्षभाः । कथयन्ति न ते किंचित्तेजसा स्वेन गर्विताः ॥ १७
प्राकृतास्त्वकृतात्मानो लोके क्षत्रियपांसनाः । निरर्थकं विकत्थन्ते यथा राम विकत्थसे ॥ १८
कुलं व्यपदिशन् वीरः समरे कोऽभिधास्यति । मृत्युकाले हि संप्राप्ते स्वयमप्रस्तवे स्तवम् ॥ १९
सर्वथैव लघुत्वं ते कत्थनेन विदर्शितम् । सुवर्णप्रतिरूपेण तप्तेनेव कुशाग्निना ॥ २०
न तु मामिह तिष्ठन्तं पश्यसि त्वं गदाधरम् । धराधरमिवाकम्प्यं पर्वतं धातुभिश्चितम् ॥ २१
पर्याप्तोऽहं गदापाणिर्हन्तुं प्राणान् रणे तव । त्रयाणामपि लोकानां पाशहस्त इवान्तकः ॥ २२
कामं बह्वपि वक्तव्यं त्वयि वक्ष्यामि न त्वहम् । अस्तं गच्छेद्धि सविता युद्धविघ्नस्ततो भवेत् ॥ २३
चतुर्दश सहस्राणि राक्षसानां हतानि ते । त्वद्विनाशात् करोम्येष तेषामस्रप्रमार्जनम्[3] ॥ २४
इत्युक्त्वा परमक्रुद्धस्तां गदां परमाङ्गदः । खरश्चिक्षेप रामाय प्रदीप्तामशनिं यथा ॥ २५
खरबाहुप्रयुक्ता सा प्रदीप्ता महती गदा । भस्म वृक्षांश्च गुल्मांश्च कृत्वागात्तत्समीपतः ॥ २६
तामापतन्तीं ज्वलितां मृत्युपाशोपमां गदाम् । अन्तरिक्षगतां रामश्चिच्छेद बहुधा शरैः ॥ २७
सा विशीर्णा शरैर्भग्ना पपात धरणीतले । गदा मन्त्रौषधबलैर्व्यालीव विनिपातिता ॥ २८

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
अरण्यकाण्डे खरगदाभेदनं नाम एकोनत्रिंशः सर्गः

---

१. राजा नि. पाठान्तरम् ।
२. विदार्यानिपतिष्यन्ति ति. मा.
३. अस्यानन्तरम्—ततो रुधिरधाराभिः स्वशरीर[त्वच्छरीर]विमर्दनात् । करिष्यामि बलिं भूमौ त्वां हत्वा सर्वराक्षसाम् ॥—इति क.

# त्रिंशः सर्गः

## खरसंहारः

भित्त्वा तु तां गदां बाणै राघवो धर्मवत्सलः । स्मयमानः खरं वाक्यं संरब्धमिदमब्रवीत् ॥ १
एतत्ते बलसर्वस्वं दर्शितं राक्षसाधम । शक्तिहीनतरो मत्तो वृथा त्वमवगर्जसि ॥ २
एषा बाणविनिर्भिन्ना गदा भूमितलं गता । अभिधानप्रगल्भस्य तव प्रत्ययघातिनी ॥ ३
यत्त्वयोक्तं विनष्टानामहमश्रुप्रमार्जनम् । राक्षसानां करोमीति मिथ्या तदपि ते वचः ॥ ४
नीचस्य क्षुद्रशीलस्य मिथ्यावृत्तस्य रक्षसः । प्राणानपहरिष्यामि गरुत्मानमृतं यथा ॥ ५
अद्य ते छिन्नकण्ठस्य फेनबुद्बुदभूषितम् । विदारितस्य मद्बाणैर्मही पास्यति शोणितम् ॥ ६
पांसुरूषितसर्वाङ्गः स्रस्तन्यस्तभुजद्वयः । स्वप्स्यसे गां समालिङ्ग्य दुर्लभां प्रमदामिव ॥ ७
प्रवृद्धनिद्रे शयिते त्वयि राक्षसपांसने । भविष्यन्त्यशरण्यानां[1] शरण्या दण्डका इमे ॥ ८
जनस्थाने हतस्थाने तव राक्षस मच्छरैः । निर्भया विचरिष्यन्ति सर्वतो मुनयो वने ॥ ९
अद्य विप्रसरिष्यन्ति राक्षस्यो हतबान्धवाः । बाष्पार्द्रवदना दीना भयादन्यभयावहाः ॥ १०
अद्य शोकरसज्ञास्ता भविष्यन्ति निरर्थिकाः[2] । अनुरूपकुलाः पत्न्यो यासां त्वं पतिरीदृशः ॥ ११
नृशंस नीच क्षुद्रात्मन्नित्यं ब्राह्मणकण्टक । यत्कृते शङ्कितैरग्नौ मुनिभिः पात्यते हविः ॥ १२
तमेवमभिसंरब्धं ब्रुवाणं राघवं रणे । खरो निर्भर्त्सयामास रोषात् खरतरस्वनः ॥ १३
दृढं खल्ववलिप्तोऽसि भयेष्वपि च निर्भयः । वाच्यावाच्यं ततो हि त्वं मृत्युवश्यो न बुध्यसे ॥ १४
कालपाशपरिक्षिप्ता भवन्ति पुरुषा हि ये । कार्याकार्यं न जानन्ति ते निरस्तषडिन्द्रियाः ॥ १५
एवमुक्त्वा ततो रामं संरुध्य भ्रुकुटीं ततः । स ददर्श महासालमविदूरे निशाचरः ॥ १६
रणे प्रहरणस्यार्थे सर्वतो ह्यवलोकयन् । स तमुत्पाटयामास संदश्य दशनच्छदम् ॥ १७
तं समुत्पाट्य बाहुभ्यां विनद्य च महाबलः । राममुद्दिश्य चिक्षेप हतस्त्वमिति चाब्रवीत् ॥ १८
तमापतन्तं बाणौघैश्छित्त्वा रामः प्रतापवान् । रोषमाहारयत्तीव्रं निहन्तुं समरे खरम् ॥ १९
जातस्वेदस्ततो रामो रोषाद्रक्तान्तलोचनः । निर्बिभेद सहस्रेण बाणानां समरे खरम् ॥ २०
तस्य बाणान्तराद्रक्तं बहु सुस्राव फेनिलम् । गिरेः प्रस्रवणस्येव तोयधारापरिस्रवः ॥ २१
विह्वलः स कृतो बाणैः खरो रामेण संयुगे । मत्तो रुधिरगन्धेन तमेवाभ्यद्रवद्द्रुतम् ॥ २२
तमापतन्तं संरब्धं कृतास्त्रो रुधिराप्लुतम् । अपासर्पद्द्वित्रिपदं[3] किंचित्त्वरितविक्रमः ॥ २३
ततः पावकसंकाशं वधाय समरे शरम् । खरस्य रामो जग्राह ब्रह्मदण्डमिवापरम् ॥ २४
स तं दत्तं मघवता सुरराजेन धीमता । संदधे चापि धर्मात्मा मुमोच च खरं प्रति ॥ २५

---

१. भविष्यन्ति शरण्यानाम् ति.
२. निरर्थका: च. छ.
३. प्रतिपदम् च. छ.

स विमुक्तो महाबाणो निर्घातसमनिःस्वनः । रामेण धनुरायम्य खरस्योरसि चापतत् ॥ २६
स पपात खरो भूमौ दह्यमानः शराग्निना । रुद्रेणेव[1] विनिर्दग्धः श्वेतारण्ये यथान्तकः[1] ॥ २७
स वृत्र इव वज्रेण फेनेन नमुचिर्यथा । बलो वेन्द्राशनिहतो निपपात हतः खरः ॥ २८
ततो राजर्षयः सर्वे संगताः परमर्षयः । सभाज्य मुदिता राममिदं वचनमब्रुवन् ॥ २९
एतदर्थं महाभाग महेन्द्रः पाकशासनः । शरभङ्गाश्रमं पुण्यमाजगाम पुरंदरः ॥ ३०
आनीतस्त्वमिमं देशमुपायेन महर्षिभिः । एषां वधार्थं क्रूराणां रक्षसां पापकर्मणाम् ॥ ३१
तदिदं नः कृतं कार्यं त्वया दशरथात्मज । सुखं धर्मं चरिष्यन्ति दण्डकेषु महर्षयः ॥ ३२
एतस्मिन्नन्तरे देवाश्चारणैः सह संगताः । दुन्दुभींश्चाभिनिघ्नन्तः पुष्पवर्षं समन्ततः ॥ ३३
रामस्योपरि संहृष्टा ववृषुर्विस्मितास्तदा । अर्धाधिकमुहूर्तेन रामेण निशितैः शरैः ॥ ३४
चतुर्दश सहस्राणि रक्षसां भीमकर्मणाम् । खरदूषणमुख्यानां निहतानि महाहवे ॥ ३५
अहो बत महत् कर्म रामस्य विदितात्मनः । अहो वीर्यमहो दाक्ष्यं विष्णोरिव हि दृश्यते ॥ ३६
इत्येवमुक्त्वा ते सर्वे ययुर्देवा यथागतम् । एतस्मिन्नन्तरे वीरो लक्ष्मणः सह सीतया ॥ ३७
गिरिदुर्गाद्विनिष्क्रम्य संविवेशाश्रमं सुखी । ततो रामस्तु विजयी पूज्यमानो महर्षिभिः ॥ ३८
प्रविवेशाश्रमं वीरो लक्ष्मणेनाभिपूजितः । तं दृष्ट्वा शत्रुहन्तारं महर्षीणां सुखावहम् ॥ ३९
बभूव हृष्टा वैदेही भर्तारं परिषस्वजे । मुदा परमया युक्ता दृष्ट्वा रक्षोगणान् हतान् ॥ ४०
रामं चैवाव्ययं दृष्ट्वा तुतोष जनकात्मजा ॥

ततस्तु तं राक्षससङ्घमर्दनं सभाज्यमानं मुदितैर्महर्षिभिः ।
पुनः परिष्वज्य शशिप्रभानना बभूव हृष्टा जनकात्मजा तदा ॥ ४१

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
अरण्यकाण्डे खरसंहारो नाम त्रिंशः सर्गः

---

## एकत्रिंशः सर्गः

### रावणखरवृत्तोपलम्भः

त्वरमाणस्ततो गत्वा जनस्थानादकम्पनः । प्रविश्य लङ्कां वेगेन रावणं वाक्यमब्रवीत् ॥ १
जनस्थानस्थिता राजन् राक्षसा बहवो हताः । खरश्च निहतः संख्ये कथंचिदहमागतः ॥ २
एवमुक्तो दशग्रीवः क्रुद्धः संरक्तलोचनः । अकम्पनमुवाचेदं निर्दहन्निव चक्षुषा ॥ ३

---

1. इवशब्दो वाक्यालङ्कारे । श्वेतारण्यं नाम प्रसिद्धः । श्वेतनाम्नो राजर्षेः तपोवनं वा कावेरीतीरवर्ती स्थलविशेषः । तिरुवेण्काड्ड इति भाषायां  १. यथान्धकः ति.

केन रम्यं[1] जनस्थानं हतं मम परासुना । को हि सर्वेषु लोकेषु गतिं नाधिगमिष्यति ॥ ४
न हि मे विप्रियं कृत्वा शक्यं मघवता सुखम् । प्राप्तं वैश्रवणेनापि न यमेन न विष्णुना ॥ ५
कालस्य चाप्यहं कालो दहेयमपि पावकम् । मृत्युं मरणधर्मेण संयोजयितुमुत्सहे ॥ ६
दहेयमपि संक्रुद्धस्तेजसादित्यपावकौ । वातस्य तरसा वेगं निहन्तुमहमुत्सहे ॥ ७
तथा क्रुद्धं दशग्रीवं कृताञ्जलिरकम्पनः । भयात्संदिग्धया वाचा रावणं याचतेऽभयम् ॥ ८
दशग्रीवोऽभयं तस्मै प्रददौ रक्षसां वरः । स विस्रब्धोऽब्रवीद्वाक्यमसंदिग्धमकम्पनः ॥ ९
पुत्रो दशरथस्यास्ति सिंहसंहननो युवा । रामो नाम वृषस्कन्धो वृत्तायतमहाभुजः ॥ १०
वीरः पृथुयशाः श्रीमानतुल्यबलविक्रमः । हतं तेन जनस्थानं खरश्च सहदूषणः ॥ ११
अकम्पनवचः श्रुत्वा रावणो राक्षसाधिपः । नागेन्द्र इव निःश्वस्य वचनं चेदमब्रवीत् ॥ १२
स सुरेन्द्रेण संयुक्तो रामः सर्वामरैः सह । उपयातो जनस्थानं ब्रूहि कच्चिदकम्पन ॥ १३
रावणस्य पुनर्वाक्यं निशम्य तदकम्पनः । आचचक्षे बलं तस्य विक्रमं च महात्मनः ॥ १४
रामो नाम महातेजाः श्रेष्ठः सर्वधनुष्मताम् । दिव्यास्त्रगुणसंपन्नः पुरंदरसमो युधि[2] ॥ १५
तस्यानुरूपो बलवान् रक्ताक्षो दुन्दुभिस्वनः । कनीयाँल्लक्ष्मणो नाम भ्राता शशिनिभाननः ॥ १६
स तेन सह संयुक्तः पावकेनानिलो यथा । श्रीमान् राजवरस्तेन जनस्थानं निपातितम् ॥ १७
नैव देवा महात्मानो नात्र कार्या विचारणा । शरा रामेण तूत्सृष्टा रुक्मपुङ्खाः पतत्त्रिणः ॥ १८
सर्पाः पञ्चानना भूत्वा भक्षयन्ति स्म राक्षसान् । येन येन च गच्छन्ति राक्षसा भयकर्शिताः ॥ १९
तेन तेन स्म पश्यन्ति राममेवाग्रतः स्थितम् । इत्थं विनाशितं तेन जनस्थानं तवानघ ॥ २०
अकम्पनवचः श्रुत्वा रावणो वाक्यमब्रवीत् । जनस्थानं गमिष्यामि हन्तुं रामं सलक्ष्मणम् ॥ २१
अथैवमुक्ते वचने प्रोवाचेदमकम्पनः । शृणु राजन् यथावृत्तं रामस्य बलपौरुषम् ॥ २२
असाध्यः कुपितो रामो विक्रमेण महायशाः । आपगायाः सुपूर्णाया वेगं परिहरेच्छरैः ॥ २३
सतारग्रहनक्षत्रं नभश्चाप्यवसादयेत् । असौ रामस्तु मज्जन्तीं श्रीमानभ्युद्धरेन्महीम् ॥ २४
भित्त्वा वेलां समुद्रस्य लोकानाप्लावयेद्विभुः । वेगं वापि समुद्रस्य वायुं वा विधमेच्छरैः ॥ २५
संहृत्य वा पुनर्लोकान् विक्रमेण महायशाः । शक्तः स पुरुषव्याघ्रः स्रष्टुं पुनरपि प्रजाः ॥ २६
न हि रामो दशग्रीव शक्यो जेतुं त्वया युधि । रक्षसां वापि लोकेन स्वर्गः पापजनैरिव ॥ २७
न तं वध्यमहं मन्ये सर्वैर्देवासुरैरपि । अयं तस्य वधोपायस्तं ममैकमनाः शृणु ॥ २८
भार्या तस्योत्तमा लोके सीता नाम सुमध्यमा । श्यामा समविभक्ताङ्गी स्त्रीरत्नं रत्नभूषिता ॥ २९
नैव देवी न गन्धर्वी नाप्सरा नापि दानवी[3] । तुल्या सीमन्तिनी तस्या मानुषीषु कुतो भवेत् ॥ ३०

---

१. भीमं प्र.
२. परं धर्म गतो युधि पुना.
३. पन्नगी पुना. ।

तस्यापहर भार्यां त्वं प्रमथ्य[1] तु महावने । स तया रहितः कामी रामो हास्यति जीवितम् ॥ ३१

अरोचयत तद्वाक्यं रावणो राक्षसाधिपः । चिन्तयित्वा महाबाहुरकम्पनमुवाच ह ॥ ३२

बाढं कल्यं गमिष्यामि ह्येकः सारथिना सह । आनयिष्यामि वैदेहीमिमां हृष्टो महापुरीम् ॥ ३३

अथैवमुक्त्वा प्रययौ खरयुक्तेन रावणः । रथेनादित्यवर्णेन दिशः सर्वाः प्रकाशयन् ॥ ३४

स रथो राक्षसेन्द्रस्य नक्षत्रपथगो महान् । संचार्यमाणः[१] शुशुभे जलदे चन्द्रमा इव ॥ ३५

स मारीचाश्रमं प्राप्य ताटकेयमुपागमत् । मारीचेनार्चितो राजा भक्ष्यभोज्यैरमानुषैः[2] ॥ ३६

तं स्वयं पूजयित्वा तु आसनेनोदकेन च । अर्थोपहितया वाचा मारीचो वाक्यमब्रवीत् ॥ ३७

कच्चित् सुकुशलं राजँल्लोकानां राक्षसेश्वर । आशङ्के[3] नाथ जाने[२] त्वं यतस्तूर्णमिहागतः ॥ ३८

एवमुक्तो महातेजा मारीचेन स रावणः । ततः पश्चादिदं वाक्यमब्रवीद्वाक्यकोविदः ॥ ३९

आरक्षो मे हतस्तात रामेणाक्लिष्टकर्मणा । जनस्थानमवध्यं तत् सर्वं युधि निपातितम् ॥ ४०

तस्य मे कुरु साचिव्यं तस्य भार्यापहारणे । राक्षसेन्द्रवचः श्रुत्वा मारीचो वाक्यमब्रवीत् ॥ ४१

आख्याता केन सीता सा मित्ररूपेण शत्रुणा । त्वया राक्षसशार्दूल को न नन्दति निन्दितः[३] ॥ ४२

सीतामिहानयस्वेति को ब्रवीति ब्रवीहि मे । रक्षोलोकस्य सर्वस्य कः शृङ्गं छेत्तुमिच्छति ॥ ४३

प्रोत्साहयति कश्च त्वां स हि शत्रुरसंशयः । आशीविषमुखाद्दंष्ट्रामुद्धर्तुं चेच्छति त्वया ॥ ४४

कर्मणा तेन केनासि कापथं प्रतिपादितः । सुखसुप्तस्य ते राजन् प्रहृतं केन मूर्धनि ॥ ४५

विशुद्धवंशाभिजनाग्रहस्तस्तेजोमदः संस्थितदोर्विषाणः ।
उदीक्षितुं रावण नेह युक्तः स संयुगे राघवगन्धहस्ती ॥ ४६

असौ रणान्तःस्थितिसन्धिवालो विदग्धरक्षोमृगहा नृसिंहः ।
सुप्तस्त्वया बोधयितुं न युक्तः शराङ्गपूर्णो निशितासिदंष्ट्रः ॥ ४७

चापावहारे भुजवेगपङ्के शरोर्मिमाले सुमहाहवौघे ।
न रामपातालमुखेऽतिघोरे प्रस्कन्दितुं राक्षसराज युक्तम् ॥ ४८

प्रसीद लङ्केश्वर राक्षसेन्द्र लङ्कां प्रसन्नो भव साधु गच्छ ।
त्वं स्वेषु दारेषु रमस्व नित्यं रामः सभार्यो रमतां वनेषु ॥ ४९

एवमुक्तो दशग्रीवो मारीचेन स रावणः । न्यवर्तत पुरीं लङ्कां विवेश च गृहोत्तमम् ॥ ५०

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
अरण्यकाण्डे रावणखरवृत्तान्तोपलम्भो नाम एकत्रिंशः सर्गः

---

1. प्रमथ्य वञ्चयित्वा ।

2. अमानुषैरिति । मनुष्यलोकदुर्लभैरित्यर्थः । नरसंबन्धिमांसादिव्यतिरिक्तैः भक्ष्यभोज्यैः इत्यर्थान्तरेऽपि वैदग्ध्यादिदं पद प्रयुक्तम् । न खलु रामादत्यन्तभीतो मारीचो नरमांसमाहाराय जातुचित् सम्भरतीति भावः ।

3. आशङ्के किमप्यनिष्टमापतितमिति । अथ न जाने किं तदित्यर्थः ।

१. चञ्चूर्यमाणः ति.

२. नाधिजाने पुना.

३. नन्दितः पुना.

## द्वात्रिंशः सर्गः

### शूर्पणखोद्यमः

तत: शूर्पणखा दृष्ट्वा सहस्राणि चतुर्दश । हतान्येकेन रामेण रक्षसां भीमकर्मणाम् ।। १
दूषणं च खरं चैव हतं त्रिशिरसा सह । दृष्ट्वा पुनर्महानादं ननाद जलदो यथा ।। २
सा दृष्ट्वा कर्म रामस्य कृतमन्यैः सुदुष्करम् । जगाम परमोद्विग्ना लङ्कां रावणपालिताम् ।। ३
सा ददर्श विमानाग्रे रावणं दीप्ततेजसम् । उपोपविष्टं सचिवैर्मरुद्भिरिव वासवम् ।। ४
आसीनं सूर्यसंकाशे काञ्चने परमासने । रुक्मवेदिगतं प्राज्यं ज्वलन्तमिव पावकम् ।। ५
देवगन्धर्वभूतानामृषीणां च महात्मनाम् । अजेयं समरे शूरं व्यात्ताननमिवान्तकम् ।। ६
देवासुरविमर्देषु वज्राशनिकृतव्रणम् । ऐरावतविषाणाग्रैरुद्घृष्टकिणवक्षसम् ।। ७
विंशद्भुजं दशग्रीवं दर्शनीयपरिच्छदम् । विशालवक्षसं वीरं राजलक्षणशोभितम् ।। ८
स्निग्धवैदूर्यसंकाशं तप्तकाञ्चनकुण्डलम् । सुभुजं शुक्लदशनं महास्यं पर्वतोपमम् ।। ९
विष्णुचक्रनिपातैश्च शतशो देवसंयुगे । अन्यैः शस्त्रप्रहारैश्च महायुद्धेषु ताडितम् ।। १०
आहताङ्गं समस्तैश्च देवप्रहरणैस्तथा । अक्षोभ्याणां समुद्राणां क्षोभणं क्षिप्रकारिणम् ।। ११
क्षेप्तारं पर्वतेन्द्राणां सुराणां च प्रमर्दनम् । उच्छेत्तारं च धर्माणां परदाराभिमर्शनम् ।। १२
सर्वदिव्यास्त्रयोक्तारं यज्ञविघ्नकरं सदा । पुरीं भोगवतीं प्राप्य पराजित्य च वासुकिम् ।। १३
तक्षकस्य प्रियां भार्यां पराजित्य जहार यः । कैलासपर्वतं गत्वा विजित्य नरवाहनम् ।। १४
विमानं पुष्पकं तस्य कामगं वै जहार यः । वनं चैत्ररथं दिव्यं नलिनीं नन्दनं वनम् ।। १५
विनाशयति यः क्रोधाद्देवोद्यानानि वीर्यवान् । चन्द्रसूर्यौ महाभागावुत्तिष्ठन्तौ परंतपौ ।। १६
निवारयति बाहुभ्यां यः शैलशिखरोपमः । दशवर्षसहस्राणि तपस्तप्त्वा महावने ।। १७
पुरा स्वयंभुवे धीरः शिरांस्युपजहार यः । देवदानवगन्धर्वपिशाचपतगोरगैः ।। १८
अभयं यस्य संग्रामे मृत्युतो मानुषादृते । मन्त्रैरभिष्टुतं पुण्यमध्वरेषु द्विजातिभिः ।। १९
हविर्धानेषु यः सोममुपहन्ति महाबलः । आप्तयज्ञहरं क्रूरं ब्रह्मघ्नं दुष्टचारिणम् ।। २०
कर्कशं निरनुक्रोशं प्रजानामहिते रतम् । रावणं सर्वभूतानां सर्वलोकभयावहम् ।। २१
राक्षसी भ्रातरं शूरं सा ददर्श महाबलम् । तं दिव्यवस्त्राभरणं दिव्यमाल्योपशोभितम् ।। २२
आसने सूपविष्टं च कालकालमिवोद्यतम् । राक्षसेन्द्रं महाभागं पौलस्त्यकुलनन्दनम् ।। २३
रावणं शत्रुहन्तारं मन्त्रिभिः परिवारितम् । अभिगम्याब्रवीद्वाक्यं राक्षसी भयविह्वला ।। २४

तमब्रवीद्दीप्तविशाललोचनं प्रदर्शयित्वा भयमोहमूर्च्छिता ।
सुदारुणं वाक्यमभीतचारिणी महात्मना शूर्पणखा विरूपिता ।। २५

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
अरण्यकाण्डे शूर्पणखोद्यमो नाम द्वात्रिंशः सर्गः

## त्रयस्त्रिंशः सर्गः

### रावणनिन्दा

ततः शूर्पणखा दीना रावणं लोकरावणम् । अमात्यमध्ये संक्रुद्धा परुषं वाक्यमब्रवीत् ॥ १
प्रमत्तः कामभोगेषु स्वैरवृत्तो निरङ्कुशः । समुत्पन्नं भयं घोरं बोद्धव्यं नावबुध्यसे ॥ २
सक्तं ग्राम्येषु भोगेषु कामवृत्तं महीपतिम् । लुब्धं न बहु मन्यन्ते श्मशानाग्निमिव प्रजाः ॥ ३
स्वयं कार्याणि यः काले नानुतिष्ठति पार्थिवः । स तु वै सह राज्येन तैश्च कार्यैर्विनश्यति ॥ ४
अयुक्तचारं दुर्दर्शम्[1] अस्वाधीनं नराधिपम् । वर्जयन्ति नरा दूरान्नदीपङ्कमिव द्विपाः ॥ ५
ये न रक्षन्ति विषयमस्वाधीना नराधिपाः । ते न वृद्ध्या प्रकाशन्ते गिरयः सागरे यथा ॥ ६
आत्मवद्भिर्विगृह्य त्वं देवगन्धर्वदानवैः । अयुक्तचारश्चपलः कथं राजा भविष्यसि ॥ ७
त्वं तु बालस्वभावश्च बुद्धिहीनश्च राक्षस । ज्ञातव्यं तु न जानीषे कथं राजा भविष्यसि ॥ ८
येषां चारश्च कोशश्च नयश्च जयतां वर । अस्वाधीना नरेन्द्राणां प्राकृतैस्ते जनैः समाः ॥ ९
यस्मात् पश्यन्ति दूरस्थान् सर्वानर्थान्नराधिपाः । चारेण तस्मादुच्यन्ते राजानो दीर्घचक्षुषः ॥ १०
अयुक्तचारं मन्ये त्वां प्राकृतैः सचिवैर्वृतम् । स्वजनं तु जनस्थाने हतं यो नावबुध्यसे ॥ ११
चतुर्दश सहस्राणि रक्षसां क्रूरकर्मणाम् । हतान्येकेन रामेण खरश्च सहदूषणः ॥ १२
ऋषीणामभयं दत्तं कृतक्षेमाश्च दण्डकाः । धर्षितं च जनस्थानं रामेणाक्लिष्टकर्मणा ॥ १३
त्वं तु लुब्धः प्रमत्तश्च पराधीनश्च रावण । विषये स्वे समुत्पन्नं भयं यो नावबुध्यसे ॥ १४
तीक्ष्णमल्पप्रदातारं प्रमत्तं गर्वितं शठम् । व्यसने सर्वभूतानि नाभिधावन्ति पार्थिवम् ॥ १५
अतिमानिनमग्राह्यमात्मसंभावितं नरम् । क्रोधनं व्यसने हन्ति स्वजनोऽपि महीपतिम् ॥ १६
नानुतिष्ठति कार्याणि भयेषु न बिभेति च । क्षिप्रं राज्याच्च्युतो दीनस्तृणैस्तुल्यो भवेदिह[2] ॥ १७
शुष्कैः काष्ठैर्भवेत् कार्यं लोष्टैरपि च पांसुभिः । न तु स्थानात् परिभ्रष्टैः कार्यं स्याद्वसुधाधिपैः ॥ १८
उपभुक्तं यथा वासः स्रजो वा मृदिता यथा । एवं राज्यात् परिभ्रष्टः समर्थोऽपि निरर्थकः ॥ १९
अप्रमत्तश्च यो राजा सर्वज्ञो विजितेन्द्रियः । कृतज्ञो धर्मशीलश्च स राजा तिष्ठते चिरम् ॥ २०
नयनाभ्यां प्रसुप्तोऽपि जागर्ति नयचक्षुषा । व्यक्तक्रोधप्रसादश्च स राजा पूज्यते जनैः ॥ २१
त्वं तु रावण दुर्बुद्धिर्गुणैरेतैर्विवर्जितः । यस्य तेऽविदितश्चारै रक्षसां सुमहान् वधः ॥ २२

परावमन्ता विषयेषु संगतो न देशकालप्रविभागतत्त्ववित् ।
अयुक्तबुद्धिर्गुणदोषनिश्चये विपन्नराज्यो नचिराद्विपत्स्यसे ॥ २३

---

१. अयुक्तचारदुर्दर्शम् ग. २. भविष्यति च. छ.

इति स्वदोषान् परिकीर्तितांस्तया समीक्ष्य बुद्धया क्षणदाचरेश्वरः ।
धनेन दर्पेण बलेन चान्वितो विचिन्तयामास चिरं स रावणः ॥ २४

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
अरण्यकाण्डे रावणनिन्दा नाम त्रयस्त्रिंशः सर्गः

---

## चतुस्त्रिंशः सर्गः

### सीताहरणोपदेशः

ततः शूर्पणखां क्रुद्धां ब्रुवन्तीं परुषं वचः । अमात्यमध्ये संक्रुद्धः परिपप्रच्छ रावणः ॥ १
कश्च रामः कथंवीर्यः किंरूपः किंपराक्रमः । किमर्थं दण्डकारण्यं प्रविष्टः [1]स दुरासदम् ॥ २
आयुधं किं च रामस्य निहता येन राक्षसाः । खरश्च निहतः संख्ये दूषणस्त्रिशिरास्तथा ॥ ३
इत्युक्ता राक्षसेन्द्रेण राक्षसी क्रोधमूर्च्छिता । ततो रामं यथातत्त्वमाख्यातुमुपचक्रमे ॥ ४
दीर्घबाहुर्विशालाक्षश्चीरकृष्णाजिनाम्बरः । कंदर्पसमरूपश्च रामो दशरथात्मजः ॥ ५
शक्रचापनिभं चापं विकृष्य कनकाङ्गदम् । दीप्तान् क्षिपति नाराचान् सर्पानिव महाविषान् ॥ ६
नाददानं शरान् घोरान्न मुञ्चन्तं शिलीमुखान् । न कार्मुकं विकर्षन्तं रामं पश्यामि संयुगे ॥ ७
हन्यमानं तु तत् सैन्यं पश्यामि शरवृष्टिभिः । इन्द्रेणेवोत्तमं सस्यमाहतं त्वश्मवृष्टिभिः ॥ ८
रक्षसां भीमरूपाणां सहस्राणि चतुर्दश । निहतानि शरैस्तीक्ष्णैस्तेनैकेन पदातिना ॥ ९
अर्धाधिकमुहूर्तेन खरश्च सहदूषणः । ऋषीणामभयं दत्तं कृतक्षेमाश्च दण्डकाः ॥ १०
एका कथंचिन्मुक्ताहं परिभूय महात्मना । स्त्रीवधं शङ्कमानेन रामेण विदितात्मना ॥ ११
भ्राता चास्य महातेजा गुणतस्तुल्यविक्रमः । अनुरक्तश्च भक्तश्च लक्ष्मणो नाम वीर्यवान् ॥ १२
अमर्षी दुर्जयो जेता विक्रान्तो बुद्धिमान् बली । रामस्य दक्षिणो बाहुर्नित्यं प्राणो बहिश्चरः ॥ १३
रामस्य तु विशालाक्षी पूर्णेन्दुसदृशानना । धर्मपत्नी प्रिया भर्तुर्नित्यं प्रियहिते रता ॥ १४
सा सुकेशी सुनासोरुः सुरूपा च यशस्विनी । देवतेव वनस्यास्य राजते श्रीरिवापरा ॥ १५
तप्तकाञ्चनवर्णाभा रक्ततुङ्गनखी शुभा । सीता नाम वरारोहा वैदेही तनुमध्यमा ॥ १६
नैव देवी न गन्धर्वी न यक्षी न च किंनरी । नैवंरूपा मया नारी दृष्टपूर्वा महीतले ॥ १७
यस्य सीता भवेद्भार्या यं च हृष्टा परिष्वजेत् । अतिजीवेत् स सर्वेषु लोकेष्वपि पुरंदरात् ॥ १८
सा सुशीला वपुःश्लाघ्या रूपेणाप्रतिमा भुवि । तवानुरूपा भार्या स्यात्त्वं च तस्यास्तथा पतिः ॥ १९
तां तु विस्तीर्णजघनां पीनश्रोणिपयोधराम् । भार्यार्थे च तवानेतुमुद्यताहं वराननाम् ॥ २०
विरूपितास्मि क्रूरेण लक्ष्मणेन महाभुज । तां तु दृष्ट्वाद्य वैदेहीं पूर्णचन्द्रनिभाननाम् ॥ २१
मन्मथस्य शराणां वै त्वं विधेयो भविष्यसि । यदि तस्यामभिप्रायो भार्यार्थे तव जायते ॥ २२

---

१. सुदुरासदम्

शीघ्रमुद्ध्रियतां पादो जयार्थमिह दक्षिणः । कुरु प्रियं तथा तेषां रक्षसां राक्षसेश्वर ॥ २३
वधात्तस्य नृशंसस्य रामस्याश्रमवासिनः । तं शरैर्निशितैर्हत्वा लक्ष्मणं च महारथम् ॥ २४
हतनाथां सुखं सीतां यथावदुपभोक्ष्यसि[1] । रोचते यदि ते वाक्यं ममैतद्राक्षसेश्वर ॥ २५
क्रियतां निर्विशङ्केन वचनं मम रावण । विज्ञायेहात्मशक्तिं च ह्रियतामबला बलात् ॥ २६
सीता सर्वानवद्याङ्गी भार्यार्थं राक्षसेश्वर ॥

निशम्य रामेण शरैरजिह्मगैर्हताञ्जनस्थानगतान्निशाचरान् ।
खरं च बुद्ध्वा निहतं च दूषणं त्वमत्र कृत्यं प्रतिपत्तुमर्हसि ॥ २७

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
अरण्यकाण्डे सीताहरणोपदेशो नाम चतुस्त्रिंशः सर्गः

---

## पञ्चत्रिंशः सर्गः

### मारीचाश्रमपुनर्गमनम्

ततः शूर्पणखावाक्यं तच्छ्रुत्वा रोमहर्षणम् । सचिवानभ्यनुज्ञाय कार्यं बुद्ध्वा जगाम सः ॥ १
तत्कार्यमनुगम्यार्थं[2]यथावदुपलभ्य च । दोषाणां च गुणानां च संप्रधार्य बलाबलम् ॥ २
इति कर्तव्यमित्येव कृत्वा निश्चयमात्मनः । स्थिरबुद्धिस्ततो रम्यां यानशालामुपागमत् ॥ ३
यानशालां ततो गत्वा प्रच्छन्नो राक्षसाधिपः । सूतं संचोदयामास रथः [3]संयोज्यतामिति ॥ ४
एवमुक्तः क्षणेनैव सारथिर्लघुविक्रमः । रथं संयोजयामास तस्याभिमतमुत्तमम् ॥ ५
काञ्चनं रथमास्थाय कामगं रत्नभूषितम् । पिशाचवदनैर्युक्तं खरैः कनकभूषणैः ॥ ६
मेघप्रतिमनादेन स तेन धनदानुजः । राक्षसाधिपतिः श्रीमान् ययौ नदनदीपतिम् ॥ ७
स श्वेतवालव्यजनः श्वेतच्छत्त्रो दशाननः । स्निग्धवैदूर्यसंकाशस्तप्तकाञ्चनकुण्डलः ॥ ८
विंशद्भुजो दशग्रीवः[4] दर्शनीयपरिच्छदः । त्रिदशारिर्मुनीन्द्रघ्नो दशशीर्ष इवाद्रिराट् ॥ ९
कामगं रथमास्थाय शुशुभे राक्षसेश्वरः । विद्युन्मण्डलवान् मेघः सबलाक इवाम्बरे ॥ १०
सशैलं सागरानूपं वीर्यवानवलोकयन् । नानापुष्पफलैर्वृक्षैरनुकीर्णं सहस्रशः ॥ ११
शीतमङ्गलतोयाभिः पद्मिनीभिः समन्ततः । विशालैराश्रमपदैर्वेदिमद्भिरलंकृतम् ॥ १२
कदल्यटविसंबाधं[5] नालिकेरोपशोभितम् । सालैस्तालैस्तमालैश्च पुष्पितैस्तरुभिर्वृतम् ॥ १३
अत्यन्तनियताहारैः शोभितं परमर्षिभिः । नागैः सुपर्णैर्गन्धर्वैः किंनरैश्च सहस्रशः ॥ १४

---

१. कुरु प्रियम् इत्यादि उपभोक्ष्यसि इत्यन्त ति. नास्ति ।
२. अनुगम्यान्तर्यथा प्र.
३. संयुज्यताम् पुना ।
४. दशास्यो विंशतिभुजः प्र.
५. कदल्याढकिसंबाधम् क. ख. ग. घ. च.

आजैर्वैखानसैर्धूम्रैर्[1] वालखिल्यैर्मरीचिपैः । जितकामैश्च सिद्धैश्च चारणैरुपशोभितम् ॥ १५
दिव्याभरणमाल्याभिर्दिव्यरूपाभिरावृतम । क्रीडारतिविधिज्ञाभिरप्सरोभिः सहस्रशः ॥ १६
सेवितं देवपत्नीभिः श्रीमतीभिरुपासितम्[2] । देवदानवसङ्घैश्च चरितं त्वमृताशिभिः ॥ १७
हंसक्रौञ्चप्लवाकीर्णं सारसैः संप्रणादितम । वैडूर्यप्रस्तरं रम्यं स्निग्धं सागरतेजसा ॥ १८
पाण्डराणि विशालानि दिव्यमाल्ययुतानि च । तूर्यगीताभिजुष्टानि विमानानि समन्ततः ॥ १९
तपसा जितलोकानां कामगान्यभिसंपतन् । गन्धर्वाप्सरसश्चैव ददर्श धनदानुजः ॥ २०
निर्यासरसमूलानां चन्दनानां सहस्रशः । वनानि पश्यन् सौम्यानि घ्राणतृप्तिकराणि च ॥ २१
अगरूणां च मुख्यानां वनान्युपवनानि च । तक्कोलानां च जात्यानां फलानां च सुगन्धिनाम् ॥ २२
पुष्पाणि च तमालस्य गुल्मानि मरिचस्य च । मुक्तानां च समूहानि शुष्यमाणानि तीरतः ॥ २३
शङ्खानां प्रस्तरं चैव प्रवालनिचयं तथा । काञ्चनानि च शैलानि राजतानि च सर्वशः ॥ २४
प्रस्रवाणि मनोज्ञानि प्रसन्नानि ह्रदानि च । धनधान्योपपन्नानि स्त्रीरत्नैरावृतानि च ॥ २५
हस्त्यश्वरथगाढानि नगराण्यवलोकयन् । तं समं सर्वतः स्निग्धं मृदुसंस्पर्शमारुतम ॥ २६
अनूपं सिन्धुराजस्य ददर्श त्रिदिवोपमम् । तत्रापश्यत् स मेघाभं न्यग्रोधमृषिभिर्वृतम ॥ २७
समन्ताद्यस्य ताः शाखाः शतयोजनमायताः । यस्य हस्तिनमादाय महाकायं च कच्छपम् ॥ २८
भक्षार्थं गरुडः शाखामाजगाम महाबलः । तस्य तां सहसा शाखां भारेण पतगोत्तमः ॥ २९
सुपर्णः पर्णबहुलां बभञ्ज च महाबलः । तत्र वैखानसा मापा वालखिल्या मरीचिपाः ॥ ३०
आजा बभूवुर्धूम्राश्च सङ्गताः परमर्षयः । तेषां दयार्थं गरुडस्तां शाखां शतयोजनाम ॥ ३१
भग्नामादाय[3] वेगेन तौ चोभौ गजकच्छपौ । एकपादेन धर्मात्मा भक्षयित्वा तदामिषम् ॥ ३२
निषादविषयं हत्वा शाखया पतगोत्तमः । प्रहर्षमतुलं लेभे मोक्षयित्वा महामुनीन् ॥ ३३
स तेनैव प्रहर्षेण द्विगुणीकृतविक्रमः । अमृतानयनार्थं वै चकार मतिमान मतिम् ॥ ३४
अयोजालानि निर्मथ्य भित्त्वा रत्नमयं गृहम् । महेन्द्रभवनाद्गुप्तमाजहारामृतं ततः ॥ ३५
तं महर्षिगणैर्जुष्टं सुपर्णकृतलक्षणम । नाम्ना सुभद्रं न्यग्रोधं ददर्श धनदानुजः ॥ ३६
तं तु गत्वा परं पारं समुद्रस्य नदीपतेः । ददर्शाश्रममेकान्ते रम्ये पुण्ये वनान्तरे ॥ ३७
तत्र कृष्णाजिनधरं जटावल्कलधारिणम् । ददर्श नियताहारं मारीचं नाम राक्षसम् ॥ ३८
रावणस्तं समागम्य विधिवत्तेन रक्षसा । मारीचेनार्चितो राजा सर्वकामैरमानुषैः ॥ ३९
तं स्वयं पूजयित्वा तु भोजनेनोदकेन च । अर्थोपहितया वाचा मारीचो [illegible]मब्रवीत् ॥ ४०

---

१. माषैः च. छ. २. श्रिया वृतम् च. छ. ३. जगामादाय च. छ.

कच्चित् सुकुशलं राजल्लँङ्कायां राक्षसेश्वर । केनार्थेन पुनस्त्वं वै तूर्णमेवमिहागतः ॥ ४१
एवमुक्तो महातेजा मारीचेन स रावणः । तं तु पश्चादिदं वाक्यमब्रवीद्वाक्यकोविदः ॥ ४२

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
अरण्यकाण्डे मारीचाश्रमपुनर्गमनं नाम पञ्चत्रिंशः सर्गः

---

## षट्त्रिंशः सर्गः

### सहायैषणा

मारीच श्रूयतां तात वचनं मम भाषतः । आर्तोऽस्मि मम चार्तस्य भवान् हि परमा गतिः ॥ १
जानीषे त्वं जनस्थानं भ्राता यत्र खरो मम । दूषणश्च महाबाहुः स्वसा शूर्पणखा च मे ॥ २
त्रिशिराश्च महातेजा राक्षसः पिशिताशनः । अन्ये च बहवः शूरा लब्धलक्षा निशाचराः ॥ ३
वसन्ति मन्नियोगेन नित्यवासं[1] च राक्षसाः । बाधमाना महारण्ये मुनीन् वै धर्मचारिणः ॥ ४
चतुर्दश सहस्राणि[2] रक्षसां भीमकर्मणाम । शूराणां लब्धलक्षणां खरचित्तानुवर्तिनाम् ॥ ५
ते त्विदानीं जनस्थाने वसमाना महाबलाः । सङ्गताः परमायत्ता रामेण सह संयुगे ॥ ६
नानाप्रहरणोपेताः खरप्रमुखराक्षसाः[१] । तेन सञ्जातरोषेण रामेण रणमूर्धनि ॥ ७
अनुक्त्वा परुषं किंचिच्छरैर्व्यापारितं धनुः । चतुर्दश सहस्राणि रक्षसामुग्रतेजसाम् ॥ ८
निहतानि शरैस्तीक्ष्णैर्मानुषेण पदातिना । खरश्च निहतः संख्ये दूषणश्च निपातितः ॥ ९
हतश्च त्रिशिराश्चापि निर्भया दण्डकाः कृताः । पित्रा निरस्तः क्रुद्धेन सभार्यः क्षीणजीवितः ॥ १०
स हन्ता तस्य सैन्यस्य रामः क्षत्रियपांसनः । दुःशीलः कर्कशस्तीक्ष्णो मूर्खो लुब्धोऽजितेन्द्रियः ॥ ११
त्यक्तधर्मो ह्यधर्मात्मा[२] भूतानामहिते रतः । येन वैरं विनारण्ये [3]सत्त्वमाश्रित्य केवलम् ॥ १२
कर्णनासापहरणाद्भगिनी मे विरूपिता । तस्य भार्यां जनस्थानात् सीतां सुरसुतोपमाम् ॥ १३
आनयिष्यामि विक्रम्य सहायस्तत्र मे भव । त्वया ह्यहं सहायेन पार्श्वस्थेन महाबल ॥ १४
भ्रातृभिश्च सुरान् युद्धे समग्रान्नाभिचिन्तये । तत् सहायो भव त्वं मे समर्थो ह्यसि राक्षस ॥ १५
वीर्ये युद्धे च दर्पे च न ह्यस्ति सदृशस्तव । उपायज्ञो महाञ्शूरो महामायाविशारदः ॥ १६
एतदर्थमहं प्राप्तस्त्वत्समीपं निशाचर । शृणु तत्कर्म साहाय्ये यत्कार्यं वचनान्मम ॥ १७

---

1 अधिव.सामिति तिलकपाठे उपद्रव कुर्वन्तीति शेषेण योज्यम् ।

2. चतुर्दश सहस्राणि यानि सन्ति ते त्विदानीमित्युत्तरेणान्वयः । खरप्रमुखराक्षसा इति विशेष्यापेक्षया पुस्त्वम् ।

3. असत्त्वमित्यपि छेदः संभवति, असाधुभावमित्यर्थः

१. इदमर्धम् ख. नास्ति ।

२. त्यक्त्वा धर्ममधर्मात्मा छ.

सौवर्णस्त्वं मृगो भूत्वा चित्रो रजतबिन्दुभिः। आश्रमे तस्य रामस्य सीतायाः प्रमुखे चर ॥ १८
त्वां तु निःसंशयं सीता दृष्ट्वा तु मृगरूपिणम्। गृह्यतामिति भर्तारं लक्ष्मणं चाभिधास्यति ॥ १९
ततस्तयोरपाये तु शून्ये सीतां यथासुखम्। निराबाधो हरिष्यामि राहुश्चन्द्रप्रभामिव ॥ २०
ततः पश्चात् सुखं रामे भार्याहरणकर्शिते। विस्रब्धः प्रहरिष्यामि कृतार्थेनान्तरात्मना[1] ॥ २१
तस्य रामकथां श्रुत्वा मारीचस्य महात्मनः। शुष्कं समभवद्वक्त्रं परित्रस्तो बभूव ह ॥ २२
ओष्ठौ परिलिहञ्शुष्कौ नेत्रैरनिमिषैरिव। मृतभूत इवार्तस्तु रावणं समुदैक्षत ॥ २३

स रावणं त्रस्तविषण्णचेता महावने रामपराक्रमज्ञः।
कृताञ्जलिस्तत्त्वमुवाच वाक्यं हितं च तस्मै हितमात्मनश्च ॥ २४

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
अरण्यकाण्डे सहायैषणा नाम षट्त्रिंशः सर्गः

---

## सप्तत्रिंशः सर्गः

### अप्रियपथ्यवचनम्

तच्छ्रुत्वा राक्षसेन्द्रस्य वाक्यं वाक्यविशारदः। प्रत्युवाच महाप्राज्ञो मारीचो राक्षसेश्वरम् ॥ १
सुलभाः पुरुषा राजन् सततं प्रियवादिनः। अप्रियस्य च पथ्यस्य वक्ता श्रोता च दुर्लभः ॥ २
न नूनं बुध्यसे रामं महावीर्यं गुणोन्नतम्। अयुक्तचारश्चपलो महेन्द्रवरुणोपमम् ॥ ३
अपि स्वस्ति भवेत्तात सर्वेषां भुवि रक्षसाम्। अपि रामो न संक्रुद्धः कुर्याल्लोकमराक्षसम् ॥ ४
अपि ते जीवितान्ताय नोत्पन्ना जनकात्मजा। अपि सीतानिमित्तं च न भवेद्व्यसनं महत् ॥ ५
अपि त्वामीश्वरं प्राप्य कामवृत्तं निरङ्कुशम्। न विनश्येत् पुरी लङ्का त्वया सह सराक्षसा ॥ ६
त्वद्विधः कामवृत्तो हि दुःशीलः पापमन्त्रितः। आत्मानं स्वजनं राष्ट्रं स राजा हन्ति दुर्मतिः ॥ ७
न च पित्रा परित्यक्तो नामर्यादः कथंचन। न लुब्धो न च दुःशीलो न च क्षत्रियपांसनः ॥ ८
न च धर्मगुणैर्हीनः कौसल्यानन्दवर्धनः। न तीक्ष्णो न च भूतानां सर्वेषामहिते रतः ॥ ९
वञ्चितं पितरं दृष्ट्वा कैकेय्या सत्यवादिनम्। करिष्यामीति धर्मात्मा तात प्रव्रजितो वनम् ॥ १०
कैकेय्याः प्रियकामार्थं पितुर्दशरथस्य च। हित्वा राज्यं च भोगांश्च प्रविष्टो दण्डकावनम् ॥ ११
न रामः कर्कशस्तात नाविद्वान्नाजितेन्द्रियः। अनृतं दुःश्रुतं चैव नैव त्वं वक्तुमर्हसि ॥ १२
रामो विग्रहवान् धर्मः साधुः सत्यपराक्रमः। राजा सर्वस्य लोकस्य देवानां मघवानिव ॥ १३

---

1. कृतार्थेनान्तरात्मना । अन्तःस्थधैर्येणेति कारं कृत्वा लब्धनिवृत्तिना मनसा इत्यपि शक्य व्याख्यातम्। भगिनीविरूपणानुरूपं मैथिलीहरणं प्रती- व्याख्यातुम्।

कथं त्वं तस्य वैदेहीं रक्षितां स्वेन तेजसा । इच्छसि प्रसभं हर्तुं प्रभामिव विवस्वतः ॥ १४
शरार्चिषमनाधृष्यं चापखड्गेन्धनं रणे । रामाग्निं सहसा दीप्तं न प्रवेष्टुं त्वमर्हसि ॥ १५
धनुर्व्यादितदीप्तास्यं शरार्चिषममर्षणम् । चापपाशधरं वीरं शत्रुसैन्यप्रहारिणम् ॥ १६
राज्यं सुखं च संत्यज्य जीवितं चेष्टमात्मनः । नात्यासादयितुं तात रामान्तकमिहार्हसि ॥ १७
अप्रमेयं हि तत्तेजो यस्य सा जनकात्मजा । न त्वं समर्थस्तां हर्तुं रामचापाश्रयां वने ॥ १८
तस्य सा नरसिंहस्य सिंहोरस्कस्य भामिनी । प्राणेभ्योऽपि प्रियतरा भार्या नित्यमनुव्रता ॥ १९
न सा धर्षयितुं शक्या मैथिल्योजस्विनः प्रिया । दीप्तस्येव हुताशस्य शिखा सीता सुमध्यमा ॥ २०
किमुद्यममिमं व्यर्थं कृत्वा ते राक्षसाधिप । दृष्टश्चेत्त्वं रणे तेन तदन्तं तव जीवितम् ॥ २१
जीवितं च सुखं चैव राज्यं चैव सुदुर्लभम् । यदीच्छसि चिरं भोक्तुं मा कृथा रामविप्रियम्[1] ॥ २२
स सर्वैः सचिवैः सार्धं विभीषणपुरोगमैः । मन्त्रयित्वा तु धर्मिष्ठैः कृत्वा निश्चयमात्मनः ॥ २३
दोषाणां च गुणानां च संप्रधार्य बलाबलम् । आत्मनश्च बलं ज्ञात्वा राघवस्य च तत्त्वतः ॥ २४
हिताहितं विनिश्चित्य क्षमं त्वं कर्तुमर्हसि ॥

अहं तु मन्ये तव न क्षमं रणे समागमं कोसलराजसूनुना ।
इदं हि भूयः शृणु वाक्यमुत्तमं क्षमं च युक्तं च निशाचरेश्वर ॥ २५

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
अरण्यकाण्डे अप्रियपथ्यवचनं नाम सप्तत्रिंशः सर्गः

---

## अष्टात्रिंशः सर्गः

### रामास्त्रमाहिमा

कदाचिदप्यहं वीर्यात् पर्यटन् पृथिवीमिमाम् । बलं नागसहस्रस्य धारयन् पर्वतोपमः ॥ १
नीलजीमूतसंकाशस्तप्तकाञ्चनकुण्डलः । भयं लोकस्य जनयन् किरीटी परिघायुधः ॥ २
व्यचरं दण्डकारण्ये ऋषिमांसानि भक्षयन् । विश्वामित्रोऽथ धर्मात्मा मद्वित्रस्तो महामुनिः ॥ ३
स्वयं गत्वा दशरथं नरेन्द्रमिदमब्रवीत् । असौ रक्षतु मां रामः पर्वकाले समाहितः ॥ ४
मारीचान्मे भयं घोरं समुत्पन्नं नरेश्वर । इत्येवमुक्तो धर्मात्मा राजा दशरथस्तदा ॥ ५
प्रत्युवाच महाभागं विश्वामित्रं महामुनिम् । बालो[2] द्वादशवर्षोऽयमकृतास्त्रश्च राघवः ॥ ६
कामं तु मम यत्सैन्यं मया सह गमिष्यति । बलेन चतुरङ्गेण स्वयमेत्य निशाचरान् ॥ ७
वधिष्यामि मुनिश्रेष्ठ शत्रूंस्तव यथेप्सितम् । इत्येवमुक्तः स मुनी राजानं पुनरब्रवीत् ॥ ८

---

१. इदमर्धम् ख. नास्ति । अस्य स्थाने— २. ऊन—पुना.
दौरात्म्यात् लक्ष्यसे राजन् रणे रामेण रावण—इति ख.

रामान्नान्यद्बलं लोके पर्याप्तं तस्य रक्षसः । देवतानामपि भवान् समरेष्वभिपालकः ॥ ९
आसीत्तव कृतं कर्म त्रिलोके विदितं नृप । काममस्तु महत् सैन्यं तिष्ठत्विह परंतप ॥ १०
बालोऽप्येष महातेजाः समर्थस्तस्य निग्रहे । गमिष्ये राममादाय स्वस्ति तेऽस्तु परंतप ॥ ११
एवमुक्त्वा तु स मुनिस्तमादाय नृपात्मजम् । जगाम परमप्रीतो विश्वामित्रः स्वमाश्रमम् ॥ १२
तं तदा दण्डकारण्ये यज्ञमुद्दिश्य दीक्षितम् । बभूवोपस्थितो रामश्चित्रं विस्फारयन् धनुः ॥ १३
अजातव्यञ्जनः श्रीमान् पद्मपत्रनिभेक्षणः । काकपक्षधरो[1] धन्वी शिखी कनकमालया ॥ १४
शोभयन् दण्डकारण्यं दीप्तेन स्वेन तेजसा । अदृश्यत ततो रामो बालचन्द्र इवोदितः ॥ १५
ततोऽहं मेघसंकाशस्तप्तकाञ्चनकुण्डलः । बली दत्तवरो दर्पादाजगाम तदाश्रमम् ॥ १६
तेन दृष्टः प्रविष्टोऽहं सहसैवोद्यतायुधः । मां तु दृष्ट्वा धनुः सज्यमसंभ्रान्तश्चकार सः ॥ १७
अवजानन्नहं मोहाद्बालोऽयमिति राघवम् । विश्वामित्रस्य तां वेदिमभ्यधावं कृतत्वरः ॥ १८
तेन मुक्तस्ततो बाणः शितः शत्रुनिबर्हणः । तेनाहं [2]त्वाहतः क्षिप्तः समुद्रे शतयोजने ॥ १९
नेच्छता तात मां हन्तुं तदा वीरेण रक्षितः । रामस्य शरवेगेन निरस्तोऽहमचेतनः ॥ २०
पातितोऽहं तदा तेन गम्भीरे सागराम्भसि । प्राप्य संज्ञां चिरात्तात लङ्कां प्रतिगतः पुरीम् ॥ २१
एवमस्मि तदा मुक्तः सहायास्तु निपातिताः । अकृतास्त्रेण बालेन रामेणाक्लिष्टकर्मणा ॥ २२
तन्मया वार्यमाणस्त्वं यदि रामेण विग्रहम् । करिष्यस्यापदं घोरां क्षिप्रं [3]प्राप्स्यसि रावण ॥ २३
क्रीडारतिविधिज्ञानां समाजोत्सवदर्शिनाम् । रक्षसां चैव सन्तापमनर्थं चाहरिष्यसि ॥ २४
हर्म्यप्रासादसंबाधां नानारत्नविभूषिताम् । द्रक्ष्यसि त्वं पुरीं लङ्कां विनष्टां मैथिलीकृते ॥ २५
अकुर्वन्तोऽपि पापानि शुचयः पापसंश्रयात् । परपापैर्विनश्यन्ति मत्स्या नागह्रदे यथा ॥ २६
दिव्यचन्दनदिग्धाङ्गान् दिव्याभरणभूषितान् । द्रक्ष्यस्यभिहतान् भूमौ तव दोषात्तु राक्षसान् ॥ २७
हृतदारान् सदारांश्च दश विद्रवतो दिशः । हतशेषानशरणान् द्रक्ष्यसि त्वं निशाचरान् ॥ २८
शरजालपरिक्षिप्तामग्निज्वालासमावृताम् । प्रदग्धभवनां लङ्कां द्रक्ष्यसि त्वं न संशयः ॥ २९
परदाराभिमर्शात्तु नान्यत् पापतरं महत् । प्रमदानां सहस्राणि तव राजन् परिग्रहः ॥ ३०
भव स्वदारनिरतः स्वकुलं रक्ष राक्षस । मानमृद्धिं च राज्यं च जीवितं चेष्टमात्मनः ॥ ३१
कलत्राणि च सौम्यानि मित्रवर्गं तथैव च । यदीच्छसि चिरं भोक्तुं मा कृथा रामविप्रियम् ॥ ३२

निवार्यमाणः सुहृदा मया भृशं प्रसह्य सीतां यदि धर्षयिष्यसि ।
गमिष्यसि क्षीणबलः सबान्धवो यमक्षयं रामशरात्तजीवितः ॥ ३३

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
अरण्यकाण्डे रामास्त्रमहिमा नाम अष्टात्रिंशः सर्गः

---

१. पक्ववक्षधरः च. छ. २. ताडितः प्र. ३. प्राप्य नशिष्यसि प्र.

## एकोनचत्वारिंशः सर्गः

### साहाय्यकानभ्युपगमः

एवमस्मि तदा मुक्तः कथंचित्तेन संयुगे । इदानीमपि यद्वृत्तं तच्छृणुष्व निरुत्तरम् ॥ १

राक्षसाभ्यामहं द्वाभ्यामनिर्विण्णस्तथा कृतः । सहितो मृगरूपाभ्यां प्रविष्टो दण्डकावनम् ॥ २

दीप्तजिह्वो महाकायस्तीक्ष्णदंष्ट्रो महाबलः । व्यचरं दण्डकारण्यं मांसभक्षो महामृगः ॥ ३

अग्निहोत्रेषु तीर्थेषु चैत्यवृक्षेषु रावण । अत्यन्तघोरो व्यचरं तापसान् संप्रधर्षयन् ॥ ४

निहत्य दण्डकारण्ये तापसान् धर्मचारिणः । रुधिराणि पिबंस्तेषां तथा मांसानि भक्षयन् ॥ ५

ऋषिमांसाशनः क्रूरस्त्रासयन् वनगोचरान् । तथा रुधिरमत्तोऽहं विचरन् दण्डकावनम् ॥ ६

आसादयं तदा रामं तापसं धर्ममाश्रितम् । वैदेहीं च महाभागां लक्ष्मणं च महारथम् ॥ ७

तापसं नियताहारं सर्वभूतहिते रतम् । सोऽहं वनगतं रामं परिभूय महाबलम् ॥ ८

तापसोऽयमिति ज्ञात्वा पूर्ववैरमनुस्मरन् । अभ्यधावं हि संक्रुद्धस्तीक्ष्णशृङ्गो मृगाकृतिः ॥ ९

जिघांसुरकृतप्रज्ञस्तं प्रहारमनुस्मरन् । तेन मुक्तास्त्रयो बाणाः शिताः शत्रुनिबर्हणाः ॥ १०

विकृष्य सुमहच्चापं सुपर्णानिलनिस्वनाः[1] । ते बाणा वज्रसङ्काशाः सुघोरा रक्तभोजनाः ॥ ११

आजग्मुः सहिताः सर्वे त्रयः संनतपर्वणः । पराक्रमज्ञो रामस्य शठो[2] दृष्टभयः पुरा ॥ १२

समुत्क्रान्तस्ततो[3] मुक्तस्तावुभौ राक्षसौ हतौ । शरेण मुक्तो रामस्य कथंचित् प्राप्य जीवितम् ॥ १३

इह प्रव्राजितो युक्तस्तापसोऽहं समाहितः । वृक्षे वृक्षे च पश्यामि चीरकृष्णाजिनाम्बरम् ॥ १४

गृहीतधनुषं रामं पाशहस्तमिवान्तकम् । अपि रामसहस्राणि भीतः पश्यामि रावण ॥ १५

रामभूतमिदं सर्वमरण्यं प्रतिभाति मे । राममेव हि पश्यामि रहिते राक्षसाधिप ॥ १६

दृष्ट्वा स्वप्नगतं राममुद्भ्रमामि विचेतनः । रकारादीनि नामानि रामत्रस्तस्य रावण ॥ १७

रत्नानि च रथाश्चैव वित्रासं जनयन्ति मे । अहं तस्य प्रभावज्ञो न युद्धं तेन ते क्षमम् ॥ १८

बलिं वा नमुचिं वापि हन्याद्धि रघुनन्दनः । रणे रामेण युध्यस्व क्षमां वा कुरु राक्षस ॥ १९

न ते रामकथा कार्या यदि मां द्रष्टुमिच्छसि । बहवः साधवो लोके युक्ता धर्ममनुष्ठिताः ॥ २०

परेषामपराधेन विनष्टाः सपरिच्छदाः । सोऽहं तवापराधेन विनश्येयं निशाचर ॥ २१

कुरु यत्ते क्षमं तत्त्वमहं त्वां नानुयामि ह । रामश्च हि महातेजा महासत्त्वो महाबलः ॥ २२

अपि राक्षसलोकस्य भवेदन्तकरोऽपि हि[4] । यदि शूर्पणखाहेतोर्जनस्थानगतः खरः ॥ २३

अतिवृत्तो हतः पूर्वं रामेणाक्लिष्टकर्मणा । अत्र ब्रूहि यथातत्त्वं को रामस्य व्यतिक्रमः ॥ २४

---

१. अस्यानन्तरम्—नैर्बाणैर्दण्डकारण्ये मुक्तैराशीविषोपमैः । कृत वितिमिर सर्व रामेणाक्लिष्टकर्मणा ॥—इति क.

२. शरः च. छ.

३. समुद्भ्रान्तस्ततो च. छ.

४. न भवेदन्तको हि मः च. छ.

इदं वचो बन्धुहितार्थिना मया यथोच्यमानं यदि नाभिपत्स्यसे ।
सबान्धवस्त्यक्ष्यसि जीवितं रणे हतोऽद्य रामेण शरैरजिह्मगैः ॥ २५

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
अरण्यकाण्डे साहाय्यकानभ्युपगमो नाम एकोनचत्वारिंशः सर्गः

---

## चत्वारिंशः सर्गः

### मायामृगरूपपरिग्रहनिर्बन्धः

मारीचेन तु तद्वाक्यं क्षमं युक्तं निशाचरः । उक्तो न प्रतिजग्राह मर्तुकाम[1] इवौषधम् ॥ १
तं पथ्यहितवक्तारं मारीचं राक्षसाधिपः । अब्रवीत् परुषं वाक्यमयुक्तं कालचोदितः ॥ २
यत्किलैतदयुक्तार्थं मारीच मयि कथ्यते । वाक्यं निष्फलमत्यर्थमुप्तं बीजमिवोषरे ॥ ३
त्वद्वाक्यैर्न तु मां शक्यं भेत्तुं रामस्य संयुगे । पापशीलस्य मूर्खस्य मानुषस्य विशेषतः ॥ ४
यस्त्यक्त्वा सुहृदो राज्यं मातरं पितरं तथा । स्त्रीवाक्यं प्राकृतं श्रुत्वा वनमेकपदे गतः ॥ ५
अवश्यं तु मया तस्य संयुगे खरघातिनः । प्राणैः प्रियतरा सीता हर्तव्या तव संनिधौ ॥ ६
एवं मे निश्चिता बुद्धिर्हृदि मारीच वर्तते । न व्यावर्तयितुं शक्या सेन्द्रैरपि सुरासुरैः ॥ ७
दोषं गुणं वा संपृष्टस्त्वमेवं वक्तुमर्हसि । अपायं वाप्युपायं वा कार्यस्यास्य विनिश्चये ॥ ८
संपृष्टेन तु वक्तव्यं सचिवेन विपश्चिता । उद्यताञ्जलिना राज्ञो य इच्छेद्भूतिमात्मनः ॥ ९
वाक्यमप्रतिकूलं तु मृदुपूर्वं हितं शुभम् । उपचारेण युक्तं च वक्तव्यो वसुधाधिपः ॥ १०
सावमर्दं तु यद्वाक्यं मारीच हितमुच्यते । नाभिनन्दति तद्राजा मानार्हो मानवर्जितम् ॥ ११
पञ्च रूपाणि राजानो धारयन्त्यमितौजसः । अग्नेरिन्द्रस्य सोमस्य यमस्य वरुणस्य च ॥ १२
औष्ण्यं तथा विक्रमं च सौम्यं दण्डं प्रसन्नताम् । धारयन्ति महात्मानो राजानः क्षणदाचर ॥ १३
तस्मात् सर्वास्ववस्थासु मान्याः पूज्याश्च पार्थिवाः । त्वं तु धर्ममविज्ञाय केवलं मोहमास्थितः ॥ १४
अभ्यागतं मां दौरात्म्यात् परुषं वदसीदृशम् । गुणदोषौ न पृच्छामि क्षमं[2] चात्मनि राक्षस ॥ १५
मयोक्तं तव चैतावत् संप्रत्यमितविक्रम । अस्मिंस्तु त्वं महाकृत्ये साहाय्यं कर्तुमर्हसि ॥ १६
शृणु तत् कर्म साहाय्ये यत् कार्यं वचनान्मम । सौवर्णस्त्वं मृगो भूत्वा चित्रो रजतबिन्दुभिः ॥ १७
आश्रमे तस्य रामस्य सीतायाः प्रमुखे चर । प्रलोभयित्वा वैदेहीं यथेष्टं गन्तुमर्हसि ॥ १८
त्वां तु मायामृगं दृष्ट्वा काञ्चनं जातविस्मया । आनयैनमिति क्षिप्रं रामं वक्ष्यति मैथिली ॥ १९
अपक्रान्ते तु काकुत्स्थे दूरं गत्वाप्युदाहर । हा सीते लक्ष्मणेत्येवं रामवाक्यानुरूपकम् ॥ २०

---

1. मर्तुकामः मुमूर्षुः, प्रत्यासन्नमरण इत्यर्थः । १. दुष्कृतै प्र. २. क्षेमं गो.

तच्छ्रुत्वा रामपदवीं सीतया च प्रचोदितः । अनुगच्छति संभ्रान्तः सौमित्रिरपि सौहृदात् ॥ २१
अपक्रान्ते च काकुत्स्थे लक्ष्मणे च यथासुखम् । आहरिष्यामि वैदेहीं सहस्राक्षः शचीमिव ॥ २२
एवं कृत्वा त्विदं कार्यं यथेष्टं गच्छ राक्षस । राज्यस्यार्धं प्रदास्यामि मारीच तव सुव्रत ॥ २३
गच्छ सौम्य शिवं मार्गं कार्यस्यास्य विवृद्धये । अहं त्वानुगमिष्यामि सरथो दण्डकावनम् ॥ २४
प्राप्य सीतामयुद्धेन वञ्चयित्वा तु राघवम् । लङ्कां प्रतिगमिष्यामि कृतकार्यः सह त्वया ॥ २५
न चेत् करोषि मारीच हन्मि त्वामहमद्य वै । एतत् कार्यमवश्यं मे बलादपि करिष्यसि ॥ २६
राज्ञो हि प्रतिकूलस्थो न जातु सुखमेधते ॥

आसाद्य तं जीवितसंशयस्ते मृत्युर्ध्रुवो ह्यद्य मया विरुध्य ।
एतद्यथावत् प्रतिगृह्य बुद्ध्या यदत्र पथ्यं कुरु तत्तथा त्वम् ॥ २७

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
अरण्यकाण्डे मायामृगरूपपरिग्रहनिर्बन्धो नाम चत्वारिंशः सर्गः

---

## एकचत्वारिंशः सर्गः

### रावणनिन्दा

आज्ञप्तो रावणेनेत्थं प्रतिकूलं च 'राजवत्[1]' । अब्रवीत् परुषं वाक्यं निश्शङ्को[2] राक्षसाधिपम् ॥ १
केनायमुपदिष्टस्ते विनाशः पापकर्मणा । सपुत्रस्य सराष्ट्रस्य सामात्यस्य निशाचर ॥ २
कस्त्वया सुखिना राजन्नाभिनन्दति पापकृत् । केनेदमुपदिष्टं ते मृत्युद्वारमुपायतः ॥ ३
शत्रवस्तव सुव्यक्तं हीनवीर्या निशाचराः । इच्छन्ति त्वां विनश्यन्तमुपरुद्धं बलीयसा ॥ ४
केनेदमुपदिष्टं ते क्षुद्रेणाहितवादिना । यस्त्वामिच्छति नश्यन्तं स्वकृतेन निशाचर ॥ ५
वध्याः खलु न हन्यन्ते सचिवास्तव रावण । ये त्वामुत्पथमारूढं न निगृह्णन्ति सर्वशः ॥ ६
अमात्यैः कामवृत्तो हि राजा कापथमाश्रितः । निग्राह्यः सर्वथा सद्भिर्न निग्राह्यो निगृह्यसे ॥ ७
धर्ममर्थं च कामं च यशश्च जयतां वर । स्वामिप्रसादात् सचिवाः प्राप्नुवन्ति निशाचर ॥ ८
विपर्यये तु तत्सर्वं व्यर्थं भवति रावण । व्यसनं स्वामिवैगुण्यात् प्राप्नुवन्तीतरे जनाः ॥ ९
राजमूलो हि धर्मश्च जयश्च जयतां वर । तस्मात् सर्वास्ववस्थासु रक्षितव्या नराधिपाः ॥ १०
राज्यं पालयितुं शक्यं न तीक्ष्णेन निशाचर । न चापि प्रतिकूलेन नाविनीतेन राक्षस ॥ ११
ये तीक्ष्णमन्त्राः सचिवा भज्यन्ते सह तेन वै । विषमेषु रथाः[3] शीघ्रा मन्दसारथयो यथा ॥ १२

---

1. राजवत् राजयोग्यम् ।
2. मारीचो च. छ.
1. अस्य स्थाने—आज्ञप्तोऽराजवद्वाक्यं प्रतिकूलं निशाचरः—इति च, छ.
3. विषमे तुरगाः च. छ.

बहवः साधवो लोके युक्ता धर्ममनुष्ठिताः। परेषामपराधेन विनष्टाः सपरिच्छदाः॥ १३
स्वामिना प्रतिकूलेन प्रजातीक्ष्णेन रावण। रक्ष्यमाणा न वर्धन्ते मेषा गोमायुना यथा ॥ १४
अवश्यं विनशिष्यन्ति सर्वे रावण राक्षसाः। येषां त्वं कर्कशो राजा दुर्बुद्धिरजितेन्द्रियः॥ १५
तदिदं काकतालीयं घोरमासादितं मया। अत्रैव शोचनीयस्त्वं ससैन्यो विनशिष्यसि॥ १६
मां निहत्य तु रामोऽसावचिरात्त्वां वधिष्यति। अनेन कृतकृत्योऽस्मि म्रिये यदरिणा हतः॥ १७
दर्शनादेव रामस्य हतं मामवधारय। आत्मानं च हतं विद्धि हत्वा सीतां सबान्धवम्॥ १८
आनयिष्यसि चेत् सीतामाश्रमात् सहितो मया। नैव त्वमसि नाहं च नैव लङ्का न राक्षसाः॥ १९

निवार्यमाणस्तु मया हितैषिणा न मृष्यसे वाक्यमिदं निशाचर।
परेतकल्पा हि गतायुषो नरा हितं न गृह्णन्ति सुहृद्भिरीरितम्॥ २०

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
अरण्यकाण्डे रावणनिन्दा नाम एकचत्वारिंशः सर्गः

---

## द्विचत्वारिंशः सर्गः

### स्वर्णमृगप्रेक्षणम्

एवमुक्त्वा तु वचनं मारीचो रावणं ततः। गच्छावेत्यब्रवीद्दीनो भयाद्रात्रिंचरप्रभोः॥ १
दृष्टः सोऽहं पुनस्तेन शरचापासिधारिणा। मद्वधोद्यतशस्त्रेण विनष्टं जीवितं च मे॥ २
न हि रामं पराक्रम्य जीवन् प्रतिनिवर्तते। वर्तते प्रतिरूपोऽसौ यमदण्डहतस्य ते॥ ३
किं नु शक्यं मया कर्तुमेवं त्वयि दुरात्मनि। एष गच्छाम्यहं तात स्वस्ति तेऽस्तु निशाचर॥ ४
प्रहृष्टस्त्वभवत्तेन वचनेन स रावणः। परिष्वज्य सुसंश्लिष्टमिदं वचनमब्रवीत्॥ ५
एतच्छौण्डीर्ययुक्तं ते मच्छन्दादिव भाषितम्[1]। इदानीमसि मारीचः पूर्वमन्यो निशाचरः॥ ६
आरुह्यतामयं शीघ्रं रथो[2] रत्नविभूषितः। मया सह तथा युक्तः पिशाचवदनैः खरैः॥ ७
प्रलोभयित्वा वैदेहीं यथेष्टं गन्तुमर्हसि। तां शून्ये प्रसभं सीतामानयिष्यामि मैथिलीम्[3]॥ ८
ततो रावणमारीचौ विमानमिव तं रथम्। आरुह्य ययतुः शीघ्रं तस्मादाश्रममण्डलात्॥ ९
तथैव तत्र पश्यन्तौ पत्तनानि वनानि च। गिरींश्च सरितः सर्वा राष्ट्राणि नगराणि च॥ १०
समेत्य दण्डकारण्यं राघवस्याश्रमं ततः। ददर्श सहमारीचो रावणो राक्षसाधिपः॥ ११
अवतीर्य रथात्तस्मात्ततः काञ्चनभूषणात्। हस्ते गृहीत्वा मारीचं रावणो वाक्यमब्रवीत्॥ १२
एतद्रामाश्रमपदं दृश्यते कदलीवृतम्। क्रियतां तत् सखे शीघ्रं यदर्थं वयमागताः॥ १३

१. मच्छन्दवशवर्तिनः पुना.
२. खगः. प्र.
३. अस्यानन्तरम्—ततस्तथेत्युवाचैनं रावणं ताटकासुतः—इति पुना.

स रावणवचः श्रुत्वा मारीचो राक्षसस्तदा । मृगो भूत्वाश्रमद्वारि रामस्य विचचार ह ॥ १४
स तु रूपं समास्थाय महदद्भुतदर्शनम् । मणिप्रवरशृङ्गाग्रः सितासितमुखाकृतिः ॥ १५
रक्तपद्मोत्पलमुख इन्द्रनीलोत्पलश्रवाः । किंचिदभ्युन्नतग्रीव इन्द्रानीलदलाधरः ॥ १६
कुन्देन्दुवज्रसंकाशमुदरं चास्य भास्वरम् । मधूकनिभपार्श्वश्च पद्मकिञ्जल्कसंनिभः ॥ १७
वैडूर्यसंकाशखुरस्तनुजङ्घः सुसंहतः । इन्द्रायुधसवर्णेन पुच्छेनोर्ध्वं विराजता ॥ १८
मनोहरः स्निग्धवर्णो रत्नैर्नानाविधैर्वृतः । क्षणेन राक्षसो जातो मृगः परमशोभनः ॥ १९
वनं प्रज्वलयन् रम्यं रामाश्रमपदं च तत् । मनोहरं दर्शनीयं रूपं कृत्वा स राक्षसः ॥ २०
प्रलोभनार्थं वैदेह्या नानाधातुविचित्रितम् । विचरन् गच्छते तस्माच्छाद्वलानि समन्ततः ॥ २१
रूप्यैर्बिन्दुशतैश्चित्रो भूत्वा स प्रियदर्शनः । विटपीनां किसलयान् भङ्क्त्वादन् विचचार ह ॥ २२
कदलीगृहकं गत्वा कर्णिकारानितस्ततः । समाश्रयन् मन्दगतिं सीतासंदर्शनं तथा ॥ २३
राजीवचित्रपृष्ठः स विरराज महामृगः । रामाश्रमपदाभ्याशे विचचार यथासुखम्[1] ॥ २४
पुनर्गत्वा निवृत्तश्च विचचार मृगोत्तमः । गत्वा मुहूर्तं त्वरया पुनः प्रतिनिवर्तते ॥ २५
विक्रीडंश्च क्वचिद्भूमौ पुनरेव निषीदति । आश्रमद्वारमागम्य मृगयूथानि गच्छति ॥ २६
मृगयूथैरनुगतः पुनरेव निवर्तते । सीतादर्शनमाकाङ्क्षन राक्षसो मृगतां गतः ॥ २७
परिभ्रमति चित्राणि मण्डलानि विनिष्पतन । समुद्वीक्ष्य च तं सर्वे मृगा ह्यन्ये वनेचराः ॥ २८
उपागम्य समाघ्राय विद्रवन्ति दिशो दश । राक्षसः सोऽपि तान् वन्यान मृगान् मृगवधे रतः॥२९
प्रच्छादनार्थं भावस्य न भक्षयति संस्पृशन् । तस्मिन्नेव ततः काले वैदेही शुभलोचना ॥ ३०
कुसुमापचयव्यग्रा पादपानभ्यवर्तत । कर्णिकारानशोकांश्च चूतांश्च मदिरेक्षणा ॥ ३१
कुसुमान्यवचिन्वन्ती चचार रुचिरानना । अनर्हारण्यवासस्य सा तं रत्नमयं मृगम् ॥ ३२
मुक्तामणिविचित्राङ्गं ददर्श परमाङ्गना । सा तं रुचिरदन्तोष्ठं[2] रूप्यधातुतनूरुहम् ॥ ३३
विस्मयोत्फुल्लनयना सस्नेहं समुदैक्षत । स च तां रामदयितां पश्यन् मायामयो मृगः ॥ ३४
विचचार पुनश्चित्रं दीपयन्निव तद्वनम् । अदृष्टपूर्वं तं दृष्ट्वा नानारत्नमयं मृगम् ॥ ३५
विस्मयं परमं सीता जगाम जनकात्मजा ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायां
अरण्यकाण्डे स्वर्णमृगप्रेक्षणं नाम द्विचत्वारिंशः सर्गः

---

१. इदं पद्यम् क. नास्ति । २. रुचिरदन्तोष्ठी च. छ.



आर्यपुत्राभिरामोऽसौ मृगो हरति मे मनः । आनयैनं महाबाहो क्रीडार्थं नो भविष्यति ॥

## त्रिचत्वारिंशः सर्गः

### लक्ष्मणशङ्काप्रतिसमाधानम्

सा तं संप्रेक्ष्य सुश्रोणी कुसुमान्यवचिन्वती । हैमराजतवर्णाभ्यां पार्श्वाभ्यामुपशोभितम् ॥ १
प्रहृष्टा चानवद्याङ्गी मृष्टहाटकवर्णिनी । भर्तारमभिचक्रन्द लक्ष्मणं चापि सायुधम्[१] ॥ २
तयाहूतौ नरव्याघ्रौ वैदेह्या रामलक्ष्मणौ । वीक्षमाणौ तु तं देशं तदा ददृशतुर्मृगम् ॥ ३
शङ्कमानस्तु तं दृष्ट्वा लक्ष्मणो राममब्रवीत् । तमेवैतमहं मन्ये मारीचं राक्षसं मृगम् ॥ ४
चरन्तो मृगयां हृष्टाः पापेनोपाधिना वने । अनेन निहता राम राजानः कामरूपिणा ॥ ५
अस्य मायाविदो मायामृगरूपमिदं कृतम् । भानुमत् पुरुषव्याघ्र गन्धर्वपुरसंनिभम् ॥ ६
मृगो ह्येवंविधो रत्नविचित्रो नास्ति राघव । जगत्यां जगतीनाथ मायैषा हि न संशयः ॥ ७
एवं ब्रुवाणं सौमित्रिं प्रतिवार्य शुचिस्मिता । उवाच सीता संहृष्टा चर्मणा[२] हृतचेतना ॥ ८
आर्यपुत्राभिरामोऽसौ मृगो हरति मे मनः । आनयैनं महाबाहो क्रीडार्थं नो भविष्यति ॥ ९
इहाश्रमपदेऽस्माकं बहवः पुण्यदर्शनाः । मृगाश्चरन्ति सहिताः सृमराश्चमरास्तथा ॥ १०
ऋक्षाः पृषतसङ्घाश्च वानराः किन्नरास्तथा । विचरन्ति महाबाहो रूपश्रेष्ठा मनोहराः ॥ ११
न चास्य सदृशो राजन् दृष्टपूर्वो मृगः पुरा । तेजसा क्षमया दीप्त्या यथायं मृगसत्तमः ॥ १२
नानावर्णविचित्राङ्गो रत्नबिन्दुसमाचितः । द्योतयन् वनमव्यग्रं शोभते शशिसंनिभः ॥ १३
अहो रूपमहो लक्ष्मीः स्वरसम्पच्च शोभना । मृगोऽद्भुतो विचित्राङ्गो हृदयं हरतीव मे ॥ १४
यदि ग्रहणमभ्येति जीवन्नेव मृगस्तव । आश्चर्यभूतं[1] भवति विस्मयं जनयिष्यति ॥ १५
समाप्तवनवासानां राज्यस्थानां च नः पुनः । अन्तःपुरविभूषार्थो मृग एष भविष्यति ॥ १६
भरतस्यार्यपुत्रस्य श्वश्रूणां मम च प्रभो । मृगरूपमिदं व्यक्तं विस्मयं जनयिष्यति ॥ १७
जीवन्न यदि तेऽभ्येति ग्रहणं मृगसत्तमः । अजिनं नरशार्दूल रुचिरं मे भविष्यति ॥ १८
निहतस्यास्य सत्त्वस्य जाम्बूनदमयत्वचि । शष्पबृस्यां विनीतायामिच्छाम्यहमुपासितुम् ॥ १९
कामवृत्तमिदं[2] रौद्रं स्त्रीणामसदृशं मतम् । वपुषा त्वस्य सत्त्वस्य विस्मयो जनितो मम ॥ २०
तेन काञ्चनरोम्णा तु मणिप्रवरशृङ्गिणा । तरुणादित्यवर्णेन नक्षत्रपथवर्चसा ॥ २१
एवं सीतावचः श्रुत्वा दृष्ट्वा च मृगमद्भुतम् । बभूव राघवस्यापि मनो विस्मयमागतम् ॥ २२

---

1. यदि ग्रहणमभ्येति, तदा आश्चर्यभूतमिद कर्म, भवति त्वयि विस्मयं मे जनयिष्यतीत्यर्थः । व्याख्यातृभिस्तु—जीवतो ग्रहणमाश्चर्यभूत भवति, अतो विस्मयं जनयिष्यतीति, यदि जीवन् गृह्यते तदा एष मृगः आश्चर्यभूतं, विस्मयावहमत्वं भवतीति च विवृतम् ।

2. कामवृत्तमिति दुर्निग्रहेच्छत्वमित्यर्थः । भर्तृप्रेरणरूपस्वेच्छाव्यापार इति तु व्याख्यातारः । असदृशम् अननुरूपम अयुक्तमित्यर्थः ।

१. अस्यानन्तरम्—आहूयाहूय च पुनस्तं मृगं साधु वीक्षते । आगच्छागच्छ शीघ्रं वै आर्यपुत्र सहानुज ॥—इति पुना ।

२. छद्मना प्र.

लोभितस्तेन रूपेण सीतया च प्रचोदितः । उवाच राघवो हृष्टो भ्रातरं लक्ष्मणं वचः ॥ २३

पश्य लक्ष्मण वैदेह्याः स्पृहां मृगगतामिमाम् । रूपश्रेष्ठतया ह्येष मृगोऽद्य न भविष्यति ॥ २४

न वने नन्दनोद्देशे न चैत्ररथसंश्रये । कुतः पृथिव्यां सौमित्रे योऽस्य कश्चित् समो मृगः ॥ २५

प्रतिलोमानुलोमाश्च रुचिरा रोमराजयः । शोभन्ते मृगमाश्रित्य चित्राः कनकबिन्दुभिः ॥ २६

पश्यास्य जृम्भमाणस्य दीप्तामग्निशिखोपमाम् । जिह्वां मुखान्निःसरन्तीं मेघादिव शतह्रदाम् ॥ २७

मसारगल्लर्कमुखः शङ्खमुक्तानिभोदरः । कस्य नामाभिरूपोऽसौ न मनो लोभयेन्मृगः ॥ २८

कस्य रूपमिदं दृष्ट्वा जाम्बूनदमयप्रभम् । नानारत्नमयं दिव्यं न मनो विस्मयं व्रजेत्[1] ॥ २९

मांसहेतोरपि[1] मृगान् विहारार्थं च धन्विनः । घ्नन्ति लक्ष्मण राजानो मृगयायां महावने ॥ ३०

धनानि[2] व्यवसायेन विचीयन्ते महावने । धातवो विविधाश्चापि मणिरत्नसुवर्णिनः ॥ ३१

तत्सारमखिलं नृणां धनं निचयवर्धनम् । मनसा चिन्तितं सर्वं यथा शुक्रस्य लक्ष्मण ॥ ३२

अर्थी येनार्थकृत्येन संव्रजत्यविचारयन् । तमर्थमर्थशास्त्रज्ञाः प्राहुरर्थ्याश्च लक्ष्मण ॥ ३३

एतस्य मृगरत्नस्य परार्ध्ये काञ्चनत्वचि । उपवेक्ष्यति वैदेही मया सह सुमध्यमा ॥ ३४

न कादली न प्रियकी न प्रवेणी न चाविकी । भवेदेतस्य सदृशी स्पर्शनेनेति मे मतिः ॥ ३५

एष चैव मृगः श्रीमान् यश्च दिव्यो नभश्चरः । उभावेतौ मृगौ दिव्यौ तारामृगमहीमृगौ ॥ ३६

यदि वायं तथा यन्मां भवेद्वदसि लक्ष्मण । मायैषा राक्षसस्येति कर्तव्योऽस्य वधो मया ॥ ३७

एतेन हि नृशंसेन मारीचेनाकृतात्मना । वने विचरता पूर्वं हिंसिता मुनिपुंगवाः ॥ ३८

उत्थाय बहवो येन मृगयायां जनाधिपाः । निहताः परमेष्वासास्तस्माद्वध्यस्त्वयं मृगः ॥ ३९

पुरस्तादिह वातापिः परिभूय तपस्विनः । उदरस्थो द्विजान् हन्ति स्वगर्भोऽश्वतरीमिव ॥ ४०

1. मांसहेतोरिति । मांसनिमित्तं विनोदनिमित्तं वा यद्राजानो मृगान् घ्नन्ति एषा मृगयेति लोकस्य व्यवहारमात्रम् । तत्त्वतो न सा परमार्थमृगया । किं तर्हि? ईदृशस्य मृगस्य सम्पादनमेवेति भावः ।

2. धनानीति । बहुनोद्यमेन मुक्ताफलादीनि विविधानि धनानि तथा मणिरत्नसुवर्णयुता गैरिकादयो धातवश्च महावने राजभिरन्विष्यन्ते । एवं व्यवसायलब्धं सारभूतमप्यखिलं धनं नराणां नरपतीनां वा केवलं कोशप्रपूरणायैव कल्पते । मुख्यस्तु अर्थात्मा द्वितीयः पुरुषार्थो नायं भवतीति तात्पर्यम् । न चैतत् स्वोत्प्रेक्षामात्रेणोच्यते । यत आप दर्शनमपि एवंविधमेव इत्याह—मनसेति ॥ सर्वं धनानीत्यादिना यन्मयोक्तं तदखिलम्, शुक्रस्य नीतिशास्त्रप्रणेतुः यथा मनसा चिन्तितम्, तथैवेत्यर्थोऽसद्भम।तदीयविचारपूर्वकनिर्णयानुरोध्येवेत्यर्थः । अत्र यथा शुक्रस्येति उपमा इत्यभिप्रायेण प्रवृत्ता बहवो व्याख्याविकल्पाः तिलकभूषणादिषु प्रदर्शितास्तत एवावगन्तव्याः । स्यादेतत् । धनानां धातूनां च निचयो यदि मुख्यो द्वितीयः पुरुषार्थो न भवति कस्तर्हि मुख्य इति तदाह—अर्थीति । यस्य वस्तुनो लाभाय पुरुषोऽविचारयन् तत्सौभाग्यानुध्यानापहृतहृदयः क्षणादेव प्रवर्तते स एवार्थ इति अर्थात्मनो द्वितीयस्य पुरुषार्थस्य लक्षणम् । एतदेव अर्थनिरूपणप्रधाना अर्थशास्त्रज्ञाः, अर्थसंपादनचतुरा अर्थ्याश्च अभिप्रयन्तीत्यर्थः ।

१. अस्यानन्तरम्—किं पुनर्मैथिली सीता बाला नारी न विस्मयेत्—इति च. छ.

स कदाचिच्चिराल्लोभादाससाद महामुनिम्। अगस्त्यं तेजसा युक्तं भक्ष्यस्तस्य बभूव ह ॥ ४१
समुत्थाने च तद्रूपं कर्तुकामं समीक्ष्य तम्। उत्स्मयित्वा तु भगवान् वातापिमिदमब्रवीत् ॥ ४२
त्वयाविगण्य वातापे परिभूताः स्वतेजसा। जीवलोके द्विजश्रेष्ठास्तस्मादसि जरां गतः ॥ ४३
तदेतन्न भवेद्रक्षो वातापिरिव लक्ष्मण। मद्विधं योऽतिमन्येत धर्मनित्यं जितेन्द्रियम् ॥ ४४
भवेद्धतोऽयं वातापिरगस्त्येनेव मां गतः। इह त्वं भव संनद्धो यन्त्रितो रक्ष मैथिलीम् ॥ ४५
अस्यामायत्तमस्माकं यत् कृत्यं रघुनन्दन। अहमेनं वधिष्यामि ग्रहीष्याम्यपि वा मृगम् ॥ ४६
यावद्गच्छामि सौमित्रे मृगमानयितुं द्रुतम्। पश्य लक्ष्मण वैदेहीं मृगत्वचि गतस्पृहाम् ॥ ४७
त्वचा प्रधानया ह्येष मृगोऽद्य न भविष्यति। अप्रमत्तेन ते भाव्यमाश्रमस्थेन सीतया ॥ ४८
यावत् पृषतमेकेन सायकेन निहन्म्यहम्। हत्वैतच्चर्म चादाय शीघ्रमेष्यामि लक्ष्मण ॥ ४९
प्रदक्षिणेनातिबलेन पक्षिणा जटायुषा बुद्धिमता च लक्ष्मण।
भवाप्रमत्तः परिगृह्य मैथिलीं प्रतिक्षणं सर्वत एव शङ्कितः ॥ ५०

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायां
अरण्यकाण्डे लक्ष्मणशङ्काप्रतिसमाधानं नाम त्रिचत्वारिंशः सर्गः

---

## चतुश्चत्वारिंशः सर्गः

### मारीचवञ्चना

तथा तु तं समादिश्य भ्रातरं रघुनन्दनः। बबन्धासिं महातेजा जाम्बूनदमयत्सरुम् ॥ १
ततस्त्र्यवनतं चापमादायात्मविभूषणम्। आबध्य च कलापौ द्वौ जगामोदग्रविक्रमः ॥ २
तं वञ्चयानो[1] राजेन्द्रमापतन्तं निरीक्ष्य वै। बभूवान्तर्हितस्त्रासात् पुनः संदर्शनेऽभवत् ॥ ३
बद्धासिर्धनुरादाय प्रदुद्राव यतो मृगः। तं स्म पश्यति रूपेण द्योतमानमिवाग्रतः ॥ ४
अवेक्ष्यावेक्ष्य धावन्तं धनुष्पाणिं महावने। अतिवृत्तमिषोः पाताल्लोभयानं कदाचन ॥ ५
शङ्कितं तु समुद्भ्रान्तमुत्पतन्तमिवाम्बरे। दृश्यमानमदृश्यं च वनोद्देशेषु केषुचित् ॥ ६
छिन्नाभ्रैरिव संवीतं शारदं चन्द्रमण्डलम्। मुहूर्तादेव ददृशे मुहुर्दूरात् प्रकाशते ॥ ७
दर्शनादर्शनादेवं सोऽपाकर्षत राघवम्। सुदूरमाश्रमस्यास्य मारीचो मृगतां गतः ॥ ८
असीत् क्रुद्धस्तु काकुत्स्थो विवशस्तेन मोहितः। अथावतस्थे संभ्रान्तश्छायामाश्रित्य शाद्वले ॥ ९
स तमुन्मादयामास मृगरूपो निशाचरः। मृगैः परिवृतो वन्यैरदूरात् प्रत्यदृश्यत ॥ १०
ग्रहीतुकामं दृष्ट्वैनं पुनरेवाभ्यधावत। तत्क्षणादेव संत्रासात् पुनरन्तर्हितोऽभवत् ॥ ११

---

१. वञ्चयान: पुना.

पुनरेव ततो दूराद्वृक्षषण्डाद्विनिःसृतम् । दृष्ट्वा रामो महातेजास्तं हन्तुं कृतनिश्चयः ॥ १२
भूयस्तु शरमुद्धृत्य कुपितस्तत्र राघवः । सूर्यरश्मिप्रतीकाशं ज्वलन्तमरिमर्दनः ॥ १३
संधाय सुदृढे चापे विकृष्य बलवद्बली । तमेव मृगमुद्दिश्य श्वसन्तमिव पन्नगम् ॥ १४
मुमोच ज्वलितं दीप्तमस्त्रं ब्रह्मविनिर्मितम् । शरीरं[1] मृगरूपस्य विनिर्भिद्य शरोत्तमः ॥ १५
मारीचस्यैव हृदयं बिभेदाशनिसंनिभः । तालमात्रमथोत्प्लुत्य न्यपतत् स शरातुरः ॥ १६
विनदन् भैरवं नादं धरण्यामल्पजीवितः । म्रियमाणस्तु मारीचो जहौ तां कृत्रिमां तनुम् ॥ १७
स्मृत्वा तद्वचनं रक्षो[2] दध्यौ केन तु लक्ष्मणम् । इह प्रस्थापयेत् सीता शून्ये तां रावणो हरेत् ॥१८
स प्राप्तकालमाज्ञाय चकार च ततः स्वरम् । सदृशं राघवस्यैव हा सीते लक्ष्मणेति च ॥ १९
तेन मर्मणि निर्विद्धः शरेणानुपमेन च । मृगरूपं तु तत्त्यक्त्वा राक्षसं रूपमास्थितः[3] ॥ २०
चक्रे स सुमहाकायो मारीचो जीवितं त्यजन् । ततो विचित्रकेयूरः सर्वाभरणभूषितः ॥ २१
हेममाली महादंष्ट्रो राक्षसोऽभूच्छराहतः । तं दृष्ट्वा पतितं भूमौ राक्षसं घोरदर्शनम् ॥ २२
रामो रुधिरसिक्ताङ्गं वेष्टमानं महीतले । जगाम मनसा सीतां लक्ष्मणस्य वचः स्मरन् ॥ २३
मारीचस्यैव मायैषा पूर्वोक्तं लक्ष्मणेन तु । तत्तथा ह्यभवच्चाद्य मारीचोऽयं मया हतः ॥ २४
हा सीते लक्ष्मणेत्येवमाक्रुश्य च महास्वनम् । ममार राक्षसः सोऽयं श्रुत्वा सीता कथं भवेत् ॥२५
लक्ष्मणश्च महाबाहुः कामवस्थां गमिष्यति । इति संचिन्त्य धर्मात्मा रामो हृष्टतनूरुहः ॥ २६
तत्र रामं भयं तीव्रमाविवेश विषादजम् । राक्षसं मृगरूपं तं हत्वा श्रुत्वा च तत्स्वरम् ॥ २७
निहत्य पृषतं चान्यं मांसमादाय राघवः । त्वरमाणो जनस्थानं ससाराभिमुखस्तदा ॥ २८

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
अरण्यकाण्डे मारीचवञ्चना नाम चतुश्चत्वारिंशः सर्गः

---

## पञ्चचत्वारिंशः सर्गः
### सीतापारुष्यम्

आर्तस्वरं तु तं भर्तुर्विज्ञाय सदृशं वने । उवाच लक्ष्मणं सीता गच्छ जानीहि राघवम् ॥ १
न हि मे हृदयं स्थाने जीवितं वावतिष्ठते । क्रोशतः परमार्तस्य श्रुतः शब्दो मया भृशम् ॥ २
आक्रन्दमानं तु वने भ्रातरं त्रातुमर्हसि । तं क्षिप्रमभिधाव त्वं भ्रातरं शरणैषिणम् ॥ ३
रक्षसां वशमापन्नं सिंहानामिव गोवृषम् । न जगाम तथोक्तस्तु भ्रातुराज्ञाय शासनम् ॥ ४
तमुवाच ततस्तत्र कुपिता जनकात्मजा । सौमित्रे मित्ररूपेण भ्रातुस्त्वमसि शत्रुवत् ॥ ५

---

१. स भृशं प्र. सदृशं म.
२. जहाविल्यादि रक्ष इत्यन्तं क. ख. नास्ति।
३. आत्मनः च. छ.

यस्त्वमस्यामवस्थायां भ्रातरं नाभिपत्स्यसे । इच्छसि त्वं विनश्यन्तं रामं लक्ष्मण मत्कृते ।। ६
लोभान्ममकृते नूनं नानुगच्छसि राघवम् । व्यसनं ते प्रियं मन्ये स्नेहो भ्रातरि नास्ति ते ।। ७
तेन तिष्ठसि विस्रब्धस्तमपश्यन् महाद्युतिम् । किं हि संशयमापन्ने तस्मिन्निह मया भवेत् ।। ८
कर्तव्यमिह तिष्ठन्त्या यत्प्रधानस्त्वमागतः । इति ब्रुवाणां वैदेहीं बाष्पशोकपरिप्लुताम् ।। ९
अब्रवील्लक्ष्मणस्त्रस्तां सीतां मृगवधूमिव । पन्नगासुरगन्धर्वदेवमानुषराक्षसैः[1] ।। १०
अशक्यस्तव वैदेहि भर्ता जेतुं न संशयः । देवि देवमनुष्येषु गन्धर्वेषु पतत्रिषु ।। ११
राक्षसेषु पिशाचेषु किंनरेषु मृगेषु च । दानवेषु च घोरेषु न स विद्येत शोभने ।। १२
यो रामं प्रतियुध्येत समरे वासवोपमम् । अवध्यः समरे रामो नैवं त्वं वक्तुमर्हसि ।। १३
न त्वामस्मिन् वने हातुमुत्सहे राघवं विना । अनिवार्यं बलं तस्य बलैर्बलवतामपि ।। १४
त्रिभिर्लोकैः समुद्युक्तैः सेश्वरैरपि सामरैः । हृदयं निर्वृतं तेऽस्तु संतापस्त्यज्यतामयम् ।। १५
आगमिष्यति ते भर्ता शीघ्रं हत्वा मृगोत्तमम् । न च तस्य स्वरो व्यक्तं मायया केनचित्कृतः ।। १६
गन्धर्वनरप्रख्या माया सा तस्य रक्षस । न्यासभूतासि वैदेहि न्यस्ता मयि महात्मना ।। १७
रामेण त्वं वरारोहे न त्वां त्यक्तुमिहोत्सहे । कृतवैराश्च कल्याणि वयमेतैर्निशाचरैः १८
खरस्य निधनादेव जनस्थानवधं प्रति । राक्षसा विविधा वाचो विसृजन्ति महावने ।। १९
हिंसाविहारा वैदेहि न चिन्तयितुमर्हसि । लक्ष्मणेनैवमुक्ता सा क्रुद्धा संरक्तलोचना ।। २०
अब्रवीत्परुषं वाक्यं लक्ष्मणं सत्यवादिनम् । अनार्याकरुणारम्भे[2] नृशंस कुलपांसन ।। २१
अहं तत्र प्रियं मन्ये रामस्य व्यसनं महत् । रामस्य व्यसनं दृष्ट्वा तेनैतानि प्रभाषसे ।। २२
नैतच्चित्रं सपत्नेषु पापं लक्ष्मण यद्भवेत् । त्वद्विधेषु नृशंसेषु नित्यं प्रच्छन्नचारिषु ।। २३
सुदुष्टस्त्वं वने राममेकमेकोऽनुगच्छसि । मम हेतोः प्रतिच्छन्नः प्रयुक्तो भरतेन वा ।। २४
तन्न सिध्यति सौमित्रे तव वा भरतस्य वा । कथमिन्दीवरश्यामं पद्मपत्रनिभेक्षणम् ।। २५
उपसंश्रित्य भर्तारं कामयेयं पृथग्जनम् । समक्षं तव सौमित्रे प्राणांस्त्यक्ष्ये न संशयः ।। २६
रामं विना क्षणमपि न हि जीवामि भूतले । इत्युक्तः परुषं वाक्यं सीतया रोमहर्षणम् ।। २७
अब्रवील्लक्ष्मणः सीतां प्राञ्जलिर्विजितेन्द्रियः । उत्तरं नोत्सहे वक्तुं दैवतं भवती मम ।। २८
वाक्यमप्रतिरूपं तु न चित्रं स्त्रीषु मैथिलि । स्वभावस्त्वेष नारीणामेवं लोकेषु दृश्यते ।। २९
विमुक्तधर्माश्चपलास्तीक्ष्णा भेदकराः स्त्रियः । न सहे हीदृशं वाक्यं वैदेहि जनकात्मजे ।। ३०
श्रोत्रयोरुभयोर्मेऽद्य तप्तनाराचसंनिभम् । उपशृण्वन्तु मे सर्वे साक्षिभूता वनेचराः ।। ३१
न्यायवादी यथान्यायमुक्तोऽहं परुषं त्वया । धिक्त्वामद्य प्रणश्य त्वं यन्मामेवं विशङ्कसे ।। ३२
स्त्रीत्वात् दुष्टस्वभावेन[3] गुरुवाक्ये व्यवस्थितम् । गमिष्ये यत्र काकुत्स्थः स्वस्ति तेऽस्तु वरानने।।३३

---

१. -दानवराक्षसैः पुना.
२. अनार्य करुणाम्भ पुना.
३. स्त्रीत्वं दुष्ट स्वभावेन छ.

रक्षन्तु त्वां विशालाक्षि समग्रा वनदेवताः । निमित्तानि हि घोराणि यानि प्रादुर्भवन्ति मे ॥ ३४
अपि त्वां सह रामेण पश्येयं पुनरागतः[1] । लक्ष्मणेनैवमुक्ता सा रुदन्ती जनकात्मजा ॥ ३५
प्रत्युवाच ततो वाक्यं तीव्रं बाष्पपरिप्लुता । गोदावरीं प्रवेक्ष्यामि विना रामेण लक्ष्मण ॥ ३६
आबन्धिष्येऽथ वा त्यक्ष्ये विषमे देहमात्मनः । पिबाम्यहं विषं तीक्ष्णं प्रवेक्ष्यामि हुताशनम् ॥ ३७
न त्वहं राघवादन्यं पदापि पुरुषं स्पृशे । इति लक्ष्मणमाक्रुश्य सीता दुःखसमन्विता ॥ ३८
पाणिभ्यां रुदती दुःखादुदरं प्रजघान ह ॥

तामार्तरूपां विमना रुदन्तीं सौमित्रिरालोक्य विशालनेत्राम् ।
आश्वासयामास न चैव भर्तुस्तं भ्रातरं किंचिदुवाच सीता ॥ ३९
ततस्तु सीतामभिवाद्य लक्ष्मणः कृताञ्जलिः किंचिदभिप्रणम्य च ।
अन्वीक्षमाणो बहुशश्च मैथिलीं जगाम रामस्य समीपमात्मवान् ॥ ४०

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायां
अरण्यकाण्डे सीतापारुष्यं नाम पञ्चचत्वारिंशः सर्गः

---

## षट्चत्वारिंशः सर्गः

### रावणभिक्षुसत्कारः

तथा परुषमुक्तस्तु कुपितो राघवानुजः । स विकाङ्क्षन् भृशं रामं प्रतस्थे न चिरादिव ॥ १
तदासाद्य दशग्रीवः क्षिप्रमन्तरमास्थितः । अभिचक्राम वैदेहीं परिव्राजकरूपधृत् ॥ २
श्लक्ष्णकाषायसंवीतः शिखी छत्री उपानही । वामे चांसेऽवसज्याथ शुभे यष्टिकमण्डलू ॥ ३
परिव्राजकरूपेण वैदेहीमन्वपद्यत । तामाससादातिबलो भ्रातृभ्यां रहितां वने ॥ ४
रहितां चन्द्रसूर्याभ्यां सन्ध्यामिव महत्तमः । तामपश्यत्ततो बालां रामपत्नीं यशस्विनीम् ॥ ५
रोहिणीं शशिना हीनां ग्रहवद्भृशदारुणः । तमुग्रतेजःकर्माणं जनस्थानरुहा द्रुमाः ॥ ६
समीक्ष्य न प्रकम्पन्ते न प्रवाति च मारुतः । शीघ्रस्रोताश्च तं दृष्ट्वा वीक्षन्तं रक्तलोचनम् ॥ ७
स्तिमितं गन्तुमारेभे भयाद्गोदावरी नदी । रामस्य त्वन्तरं प्रेप्सुर्दशग्रीवस्तदन्तरे ॥ ८
उपतस्थे च वैदेहीं भिक्षुरूपेण रावणः । अभव्यो भव्यरूपेण भर्तारमनुशोचतीम् ॥ ९
अभ्यवर्तत वैदेहीं चित्रामिव शनैश्चरः । स पापो भव्यरूपेण तृणैः कूप इवावृतः ॥ १०
अतिष्ठत्प्रेक्ष्य वैदेहीं रामपत्नीं यशस्विनीम्[2] । शुभां रुचिरदन्तोष्ठीं पूर्णचन्द्रनिभाननाम् ॥ ११

---

१. अस्यानन्तरम्—न वेत्स्येतन्न जानामि २. अस्यानन्तरम्—तिष्ठन् संप्रेक्ष्य च तदा वैदेहि जनकात्मजे—इति ख. ग. घ. च. छ. पत्नीं रामस्य रावणः—इति पुना.

आसीनां पर्णशालायां बाष्पशोकाभिपीडिताम् । स तां पद्मपलाशाक्षीं पीतकौशेयवासिनीम् ॥ १२
अभ्यगच्छत वैदेहीं हृष्टचेता[1] निशाचरः । स मन्मथशराविष्टो ब्रह्मघोषमुदीरयन् ॥ १३
अब्रवीत्प्रश्रितं वाक्यं रहिते राक्षसाधिपः । तामुत्तमां स्त्रियं[2] लोके पद्महीनामिव श्रियम् ॥ १४
विभ्राजमानां वपुषा रावणः प्रशशंस ह । का त्वं काञ्चनवर्णाभे पीतकौशेयवासिनि ॥ १५
कमलानां शुभां मालां पद्मिनीव हि बिभ्रती । ह्रीः श्रीः कीर्तिः शुभा लक्ष्मीरप्सरा वा शुभानने ॥ १६
भूतिर्वा त्वं वरारोहे रतिर्वा स्वैरचारिणी । समाः शिखरिणः स्निग्धाः पाण्डरा दशनास्तव ॥ १७
विशाले विमले नेत्रे रक्तान्ते कृष्णतारके । विशालं जघनं पीनमूरू करिकरोपमौ ॥ १८
एतावुपचितौ वृत्तौ संहतौ संप्रवल्गितौ । पीनोन्नतमुखौ कान्तौ स्निग्धौ तालफलोपमौ ॥ १९
मणिप्रवेकाभरणौ रुचिरौ ते पयोधरौ । चारुस्मिते चारुदति चारुनेत्रे विलासिनि ॥ २०
मनो हरसि मे कान्ते नदी कूलमिवाम्भसा । करान्तमितमध्यासि सुकेशी संहतस्तनी ॥ २१
नैव देवी न गन्धर्वी न यक्षी न च किंनरी । नैवंरूपा[1] मया नारी दृष्टपूर्वा महीतले ॥ २२
रूपमग्र्यं च लोकेषु सौकुमार्यं वयश्च ते । इह वासश्च कान्तारे चित्तमुन्मादयन्ति मे ॥ २३
सा प्रतिक्राम भद्रं ते न त्वं वस्तुमिहार्हसि । राक्षसानामयं वासो घोराणां कामरूपिणाम् ॥ २४
प्रासादाग्राणि रम्याणि नगरोपवनानि च । संपन्नानि सुगन्धीनि युक्तान्याचरितुं त्वया ॥ २५
वरं माल्यं वरं भोज्यं वरं वस्त्रं च शोभने । भर्तारं च वरं मन्ये त्वद्युक्तमसितेक्षणे ॥ २६
का त्वं भवसि रुद्राणां मरुतां वा वरानने । वसूनां वा वरारोहे देवता प्रतिभासि मे ॥ २७
नेहागच्छन्ति गन्धर्वा न देवा न च किंनराः । राक्षसानामयं वासः कथं नु त्वमिहागता ॥ २८
इह शाखामृगाः सिंहा द्वीपिव्याघ्रमृगास्तथा । ऋक्षास्तरक्षवः कङ्काः कथं तेभ्यो न बिभ्यसि ॥ २९
मदान्वितानां घोराणां कुञ्जराणां तरस्विनाम् । कथमेका महारण्ये न बिभेषि वरानने ॥ ३०
कासि कस्य कुतश्च त्वं किंनिमित्तं च दण्डकान् । एका चरसि कल्याणि घोरान् राक्षससेवितान् ॥
इति प्रशस्ता वैदेही रावणेन दुरात्मना । द्विजातिवेषेण हि तं दृष्ट्वा रावणमागतम् ॥ ३२
सर्वैरतिथिसत्कारैः पूजयामास मैथिली । उपनीयासनं पूर्वं पाद्येनाभिनिमन्त्र्य च ॥ ३३
अब्रवीत्सिद्धमित्येव तदा तं सौम्यदर्शनम् ॥

द्विजातिवेषेण समीक्ष्य मैथिली समागतं पात्रकुसुम्भधारिणम् ।
अशक्यमुद्द्वेष्टुमुपायदर्शनान्[3]न्यमन्त्रयद्ब्राह्मणवत्तदाङ्गना ॥ ३४

---

1. नैवंरूपेति नञ्घटित एव सर्वत्र कोशेषु पाठः । तत्र एकस्य नञः आधिक्यमेवं परिहृतं भूषणव्याख्याने 'एवंरूपा देवी देवस्त्री देवलोके न दृष्टा । एवमुत्तरत्रापि योज्यम् । नारी मनुष्यस्त्री' इति । नञ्रहित एव तु पाठो रामायणशिरोमण्यभिमतः 'एवं रूपं यस्याः सा नारी देव्यादिर्मया दृष्टपूर्वा न' इति तत्र दर्शनात् ।

१. दुष्टचेताः च. छ.
२. त्रिलोकानां क. ख. ग.
३. अपायदर्शनम् च. छ.

इयं बृसी ब्राह्मण काममास्यतामिदं च पाद्यं प्रतिगृह्यतामिति ।
इदं च सिद्धं वनजातमुत्तमं त्वदर्थमव्यग्रमिहोपभुज्यताम् ॥ ३५

निमन्त्र्यमाणः प्रतिपूर्णभाषिणीं नरेन्द्रपत्नीं प्रसमीक्ष्य मैथिलीम् ।
प्रसह्य तस्या हरणे धृतं मनः समार्पयत्स्वात्मवधाय[1] रावणः ॥ ३६

ततः सुवेषं मृगयागतं पतिं प्रतीक्षमाणा सहलक्ष्मणं तदा ।
विवीक्षमाणा[१] हरितं ददर्श तन्महद्वनं नैव तु रामलक्ष्मणौ ॥ ३७

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
अरण्यकाण्डे रावणभिक्षुसत्कारो नाम षट्चत्वारिंशः सर्गः

## सप्तचत्वारिंशः सर्गः

### रावणाधिक्षेपः

रावणेन तु वैदेही तथा पृष्टा जिहीर्षता । परिव्राजकलिङ्गेन शशंसात्मानमङ्गना ॥ १
ब्राह्मणश्चातिथिश्चायमनुक्तो हि शपेत माम् । इति ध्यात्वा मुहूर्तं तु सीता वचनमब्रवीत् ॥ २
दुहिता जनकस्याहं मैथिलस्य महात्मनः । सीता नाम्नास्मि भद्रं ते रामस्य महिषी प्रिया ॥ ३
उषित्वा[2] द्वादश समा इक्ष्वाकूणां निवेशने । भुञ्जानामानुषान् भोगान् सर्वकामसमृद्धिनी ॥ ४
ततस्त्रयोदशे वर्षे राजामन्त्रयत प्रभुः । अभिषेचयितुं रामं समेतो राजमन्त्रिभिः ॥ ५
तस्मिन् संभ्रियमाणे तु राघवस्याभिषेचने । कैकेयी नाम भर्तारमार्या सा याचते वरम् ॥ ६
प्रतिगृह्य तु कैकेयी श्वशुरं सुकृतेन मे । मम प्रव्राजनं भर्तुर्भरतस्याभिषेचनम् ॥ ७
द्वावयाचत भर्तारं सत्यसन्धं नृपोत्तमम् । नाद्य भोक्ष्ये न च स्वप्स्ये न च पास्ये कथंचन ॥ ८
एष मे जीवितस्यान्तो रामो यद्यभिषिच्यते । इति ब्रुवाणां कैकेयीं श्वशुरो मे स मानदः ॥ ९
अयाचतार्थैरन्वर्थैर्न च याच्ञां चकार सा । मम भर्ता महातेजा वयसा पञ्चविंशकः १०
अष्टादश हि वर्षाणि मम जन्मनि गण्यते । रामेति प्रथितो लोके गुणवान् सत्यवाञ्शुचिः ॥ ११
विशालाक्षो महाबाहुः सर्वभूतहिते रतः । कामार्तस्तु महातेजाः पिता दशरथः स्वयम् ॥ १२
कैकेय्याः प्रियकामार्थं तं रामं नाभ्यषेचयत् । अभिषेकाय तु पितुः समीपं राममागतम् ॥ १३

---

1. 'समर्पयामास वधाय'—इति तिलकादृतः पठः । तत्रैवं योजना—वधाय आत्मवधाय, रावणः, समर्पयामास—इति । प्रकृते वधायेत्यार्षं छन्दमनुधावत्य-यमर्थः—यत्सीताहरणं रक्षसाम् आत्मनश्च नाशाय भविष्यतीति ।

2. उषित्वेति । इदं वाक्यमपरिसमाप्तमिति, एवं गोविन्दराजेन व्याख्यातम्—उषित्वा उषित-वत्यस्मि; व्यत्ययेन क्त्वाप्रत्ययः—इति ।

१. निरीक्षमाणा ति.

कैकेयी मम भर्तारमित्युवाच धृतं वचः । तव पित्रा समाज्ञप्तं ममेदं शृणु राघव ॥ १४
भरताय प्रदातव्यमिदं राज्यमकण्टकम् । त्वया हि खलु वस्तव्यं नव वर्षाणि पञ्च च ॥ १५
वने प्रव्रज काकुत्स्थ पितरं मोचयानृतात् । तथेत्युक्त्वा च तां रामः कैकेयीमकुतोभयः ॥ १६
चकार तद्वचस्तस्या मम भर्ता दृढव्रतः । दद्यान्न प्रतिगृह्णीयात् सत्यं ब्रूयान्न चानृतम् ॥ १७
एतद्ब्राह्मण रामस्य व्रतं धृतमनुत्तमम् । तस्य भ्राता तु वैमात्रो[1] लक्ष्मणो नाम वीर्यवान् ॥ १८
रामस्य पुरुषव्याघ्रः सहायः समरेऽरिहा । स भ्राता लक्ष्मणो नाम धर्मचारी दृढव्रतः ॥ १९
अन्वगच्छद्धनुष्पाणिः प्रव्रजन्तं मया सह । जटी तापसरूपेण मया सह सहानुजः ॥ २०
प्रविष्टो दण्डकारण्यं धर्मनित्यो जितेन्द्रियः । ते वयं प्रच्युता राज्यात् कैकेय्यास्तु कृते त्रयः ॥ २१
विचराम द्विजश्रेष्ठ वनं गम्भीरमोजसा । समाश्वस मुहूर्तं तु शक्यं वस्तुमिह त्वया ॥ २२
आगमिष्यति मे भर्ता वन्यमादाय पुष्कलम् । रुरून् गोधान् वराहांश्च हत्वादायामिषान् बहून् ॥
स त्वं नाम च गोत्रं च कुलं चाचक्ष्व तत्त्वतः । एकश्च दण्डकारण्ये किमर्थं चरसि द्विज ॥ २४
एवं ब्रुवन्त्यां सीतायां रामपत्न्यां महाबलः । प्रत्युवाचोत्तरं तीव्रं रावणो राक्षसाधिपः ॥ २५
येन वित्रासिता लोकाः सदेवासुरमानुषाः । अहं स रावणो नाम सीते रक्षोगणेश्वरः ॥ २६
त्वां तु काञ्चनवर्णाभां दृष्ट्वा कौशेयवासिनीम् । रतिं स्वकेषु दारेषु नाधिगच्छाम्यनिन्दिते ॥ २७
बह्वीनामुत्तमस्त्रीणामाहृतानामितस्ततः । सर्वासामेव भद्रं ते ममाग्रमहिषी भव ॥ २८
लङ्का नाम समुद्रस्य मध्ये मम महापुरी । सागरेण परिक्षिप्ता निविष्टा गिरिमूर्धनि ॥ २९
तत्र सीते मया सार्धं वनेषु विहरिष्यसि । न चास्य वनवासस्य स्पृहयिष्यसि भामिनि ॥ ३०
पञ्च दास्यः सहस्राणि सर्वाभरणभूषिताः । सीते परिचरिष्यन्ति भार्या भवसि मे यदि ॥ ३१
रावणेनैवमुक्ता तु कुपिता जनकात्मजा । प्रत्युवाचानवद्याङ्गी तमनादृत्य राक्षसम् ॥ ३२
महागिरिमिवाकम्प्यं महेन्द्रसदृशं पतिम् । महोदधिमिवाक्षोभ्यमहं राममनुव्रता ॥ ३३
सर्वलक्षणसंपन्नं न्यग्रोधपरिमण्डलम् । सत्यसन्धं महाभागमहं राममनुव्रता ॥ ३४
महाबाहुं महोरस्कं सिंहविक्रान्तगामिनम् । नृसिंहं सिंहसंकाशमहं राममनुव्रता ॥ ३५
पूर्णचन्द्राननं रामं राजवत्सं जितेन्द्रियम् । पृथुकीर्तिं महात्मानमहं राममनुव्रता ॥ ३६
त्वं पुनर्जम्बुकः सिंहीं मामिच्छसि सुदुर्लभाम् । नाहं शक्या त्वया स्प्रष्टुमादित्यस्य प्रभा यथा ॥
पादपान् काञ्चनान्नूनं बहून् पश्यसि मन्दभाक् । राघवस्य प्रियां भार्यां यस्त्वमिच्छसि रावण ॥
क्षुधितस्य हि सिंहस्य मृगशत्रोस्तरस्विनः । आशीविषस्य वदनाद्दंष्ट्रामादातुमिच्छसि ॥ ३९
मन्दरं पर्वतश्रेष्ठं पाणिना हर्तुमिच्छसि । कालकूटं विषं पीत्वा स्वस्तिमान् गन्तुमिच्छसि ॥ ४०
अक्षि सूच्या प्रमृजसि जिह्वया लेढि[2] च क्षुरम् । राघवस्य प्रियां भार्यां योऽधिगन्तुं त्वमिच्छसि ॥

१. द्वैमात्रः च. छ. २. लेक्षि च. छ.

अवसज्य शिलां कण्ठे समुद्रं तर्तुमिच्छसि । सूर्याचन्द्रमसौ चोभौ पाणिभ्यां हर्तुमिच्छसि ॥ ४२
यो रामस्य प्रियां भार्यां प्रधर्षयितुमिच्छसि । अग्निं प्रज्वलितं दृष्ट्वा वस्त्रेणाहर्तुमिच्छसि ॥ ४३
कल्याणवृत्तां रामस्य यो भार्यां हर्तुमिच्छसि । अयोमुखानां शूलानां मध्ये चरितुमिच्छसि ॥ ४४
रामस्य सदृशीं भार्यां योऽधिगन्तुं त्वमिच्छसि ॥

यदन्तरं सिंहशृगालयोर्वने यदन्तरं स्यन्दिनिकासमुद्रयोः ।
सुराग्र्यसौवीरकयोर्यदन्तरं तदन्तरं वै तव राघवस्य च ॥ ४५
यदन्तरं काञ्चनसीसलोहयोर्यदन्तरं चन्दनवारिपङ्कयोः ।
यदन्तरं हस्तिबिडालयोर्वने तदन्तरं दाशरथेस्तवैव च ॥ ४६
यदन्तरं वायसवैनतेययोर्यदन्तरं मद्गुमयूरयोरपि ।
यदन्तरं सारसगृध्रयोर्वने तदन्तरं दशरथेस्तवैव च ॥ ४७
तस्मिन् सहस्राक्षसमप्रभावे रामे स्थिते कार्मुकबाणपाणौ ।
हृतापि तेऽहं न जरां गमिष्ये वज्रं यथा मक्षिकयावगीर्णम् ॥ ४८
इतीव तद्वाक्यमदुष्टभावा सुधृष्टमुक्त्वा रजनीचरं तम् ।
गात्रप्रकम्पाद्व्यथिता बभूव वातोद्धता सा कदलीव तन्वी ॥ ४९
तां वेपमानामुपलक्ष्य सीतां स रावणो मृत्युसमप्रभावः ।
कुलं बलं नाम च कर्म च स्वं समाचचक्षे भयकारणार्थम् ॥ ५०

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
अरण्यकाण्डे रावणाधिक्षेपो नाम सप्तचत्वारिंशः सर्गः

---

## अष्टचत्वारिंशः सर्गः

### रावणविकत्थनम्

एवं ब्रुवन्त्यां सीतायां संरब्धः परुषं वचः । ललाटे भ्रुकुटीं कृत्वा रावणः प्रत्युवाच ह ॥ १
भ्राता वैश्रवणस्याहं सापत्नो वरवर्णिनि । रावणो नाम भद्रं ते दशग्रीवः प्रतापवान् ॥ २
यस्य देवाः सगन्धर्वाः पिशाचपतगोरगाः । विद्रवन्ति भयाद्भीता मृत्योरिव सदा प्रजाः ॥ ३
येन वैश्रवणो भ्राता वैमात्रः[1] कारणान्तरे । द्वन्द्वमासादितः क्रोधाद्रणे विक्रम्य निर्जितः ॥ ४
यद्भयार्तः परित्यज्य स्वमधिष्ठानमृद्धिमत् । कैलासं पर्वतश्रेष्ठमध्यास्ते नरवाहनः ॥ ५
यस्य तत् पुष्पकं नाम विमानं कामगं शुभम् । वीर्यादेवार्जितं भद्रे येन यामि विहायसम् ॥ ६

---

१. द्वैमात्रः च. छ.

मम संजातरोषस्य मुखं दृष्ट्वैव मैथिलि । महारथाः परित्रस्ताः सुराः शक्रपुरोगमाः ॥ ७

यत्र तिष्ठाम्यहं तत्र मारुतो वाति शङ्कितः । तीव्रांशुः शिशिरांशुश्च भयात् संपद्यते रविः ॥ ८

निष्कम्पपत्रास्तरवो नद्यश्च स्तिमितोदकाः । भवन्ति यत्र यत्राहं तिष्ठामि विचरामि च ॥ ९

मम पारे समुद्रस्य लङ्का नाम पुरी शुभा । संपूर्णा राक्षसैर्घोरैर्यथेन्द्रस्यामरावती ॥ १०

प्राकारेण परिक्षिप्ता पाण्डरेण विराजता । हेमकक्ष्या पुरी रम्या वैडूर्यमयतोरणा ॥ ११

हस्त्यश्वरथसंबाधा तूर्यनादविनादिता । सर्वकालफलैर्वृक्षैः संकुलोद्यानशोभिता ॥ १२

तत्र त्वं वसती सीते राजपुत्रि मया सह । न स्मरिष्यसि नारीणां मानुषीणां मनस्विनी ॥ १३

भुञ्जाना मानुषान् भोगान् दिव्यांश्च वरवर्णिनि । न स्मरिष्यसि रामस्य मानुपस्य गतायुषः ॥ १४

स्थापयित्वा प्रियं पुत्रं राज्ये दशरथेन यः । मन्दवीर्यः सुतो ज्येष्ठस्ततः प्रस्थापितो वनम् ॥ १५

तेन किं भ्रष्टराज्येन रामेण गतचेतसा । करिष्यसि विशालाक्षि तापसेन तपस्विना ॥ १६

सर्वराक्षसभर्तारं कामय स्वयमागतम् । न मन्मथशराविष्टं प्रत्याख्यातुं त्वमर्हसि ॥ १७

प्रत्याख्याय हि मां भीरु परितापं गमिष्यसि । चरणेनाभिहत्येव पुरूरवसमुर्वशी ॥ १८

अङ्गुल्या न समो रामो मम युद्धे स मानुषः । तव भाग्येन संप्राप्तं भजस्व वरवर्णिनि[1] ॥ १९

एवमुक्ता तु वैदेही क्रुद्धा संरक्तलोचना । अब्रवीत् परुषं वाक्यं रहिते राक्षसाधिपम् ॥ २०

कथं वैश्रवणं देवं सर्वभूतनमस्कृतम् । भ्रातरं व्यपदिश्य त्वमशुभं कर्तुमिच्छसि ॥ २१

अवश्यं विनशिष्यन्ति सर्वे रावण राक्षसाः । येषां त्वं कर्कशो राजा दुर्बुद्धिरजितेन्द्रियः ॥ २२

अपहृत्य शचीं भार्यां शक्यमिन्द्रस्य जीवितुम् । न च रामस्य भार्यां मामपनीयास्ति जीवितम्[2] ॥ २३

जीवेच्चिरं वज्रधरस्य हस्ताच्छचीं प्रधृष्याप्रतिरूपरूपाम् ।
न मादृशीं राक्षस दूषयित्वा पीतामृतस्यापि तवास्ति मोक्षः ॥ २४

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम् अरण्यकाण्डे रावणविकत्थनं नाम अष्टचत्वारिंशः सर्गः

---

## एकोनपञ्चाशः सर्गः

### सीतापहरणम्

सीताया वचनं श्रुत्वा दशग्रीवः प्रतापवान् । हस्ते हस्तं समाहत्य चकार सुमहद्वपुः ॥ १

स मैथिलीं पुनर्वाक्यं बभाषे वाक्यकोविदः[3] । नोन्मत्तया श्रुतौ मन्ये मम वीर्यपराक्रमौ ॥ २

---

१. अस्यानन्तरम्—सप्तसप्तकवेत्ताहमष्टाष्टकविभूषितः । पञ्चपञ्चकतत्त्वज्ञो रावणोऽहं भजस्व माम् ॥ —इति क्वचित्कोऽधिकः पाठः ।

२. आनीय स्वस्तिमान् भवेत् रा.

३. च ततो भृशम् च. छ.

उद्वहेयं भुजाभ्यां तु मेदिनीमम्बरे स्थितः । आपिबेयं समुद्रं च हन्यां मृत्युं रणे स्थितः ॥ ३
अर्कं रुन्ध्यां शरैस्तीक्ष्णैर्निर्भिन्द्यां हि महीतलम् । कामरूपिणमुन्मत्ते पश्य मां कामदं पतिम् ॥ ४
एवमुक्तवतस्तस्य रावणस्य शिखिप्रभे । क्रुद्धस्य हरिपर्यन्ते रक्ते नेत्रे बभूवतुः ॥ ५
सद्यः सौम्यं परित्यज्य भिक्षुरूपं स रावणः । स्वं रूपं कालरूपाभं भेजे वैश्रवणानुजः ॥ ६
संरक्तनयनः श्रीमांस्तप्तकाञ्चनभूषणः । क्रोधेन महताविष्टो नीलजीमूतसंनिभः ॥ ७
दशास्यो विंशतिभुजो बभूव क्षणदाचरः । स परिव्राजकच्छद्म महाकायो विहाय तत् ॥ ८
प्रतिपेदे स्वकं रूपं रावणो राक्षसाधिपः । संरक्तनयनः क्रोधाज्जीमूतनिचयप्रभः[१] ॥ ९
रक्ताम्बरधरस्तस्थौ स्त्रीरत्नं प्रेक्ष्य मैथिलीम् । सीतामसितकेशान्तां भास्करस्य प्रभामिव ॥ १०
वसनाभरणोपेतां मैथिलीं रावणोऽब्रवीत् । त्रिषु लोकेषु विख्यातं यदि भर्तारमिच्छसि ॥ ११
मामाश्रय वरारोहे तवाहं सदृशः पतिः । मां भजस्व चिराय त्वमहं श्लाघ्यः पतिस्तव ॥ १२
नैव चाहं क्वचिद्भद्रे करिष्ये तव विप्रियम् । त्यज्यतां मानुषो[1] भावो मयि भावः प्रणीयताम् ॥
राज्याच्च्युतमसिद्धार्थं रामं परिमितायुषम् । कैर्गुणैरनुरक्तासि मूढे पण्डितमानिनि ॥ १४
यः स्त्रिया वचनाद्राज्यं विहाय ससुहृज्जनम् । अस्मिन् व्यालानुचरिते वने वसति दुर्मतिः॥१५
इत्युक्त्वा मैथिलीं वाक्यं प्रियार्हां प्रियवादिनीम् । अभिगम्य सुदुष्टात्मा राक्षसः काममोहितः॥
जग्राह रावणः सीतां बुधः खे रोहिणीमिव । वामेन सीतां पद्माक्षीं मूर्धजेषु करेण सः ॥१७
ऊर्वोस्तु दक्षिणेनैव परिजग्राह पाणिना । तं दृष्ट्वा मृत्युसंकाशं[२] तीक्ष्णदंष्ट्रं महाभुजम् ॥ १८
प्राद्रवन् गिरिसंकाशं भयार्ता वनदेवताः । स च मायामयो दिव्यः खरयुक्तः खरस्वनः ॥१९
प्रत्यदृश्यत हेमाङ्गो रावणस्य महारथः । ततस्तां परुषैर्वाक्यैर्भर्त्सयन् स महास्वनः ॥ २०
अङ्केनादाय वैदेहीं रथमारोपयत्तदा । सा गृहीता विचुक्रोश रावणेन यशस्विनी ॥ २१
रामेति सीता दुःखार्ता रामं दूरगतं वने । तामकामां स कामार्तः पन्नगेन्द्रवधूमिव ॥ २२
विवेष्टमानामादाय उत्पपाताथ रावणः । ततः सा राक्षसेन्द्रेण ह्रियमाणा विहायसा ॥ २३
भृशं चुक्रोश मत्तेव भ्रान्तचित्ता यथातुरा । हा लक्ष्मण महाबाहो गुरुचित्तप्रसादक ॥ २४
ह्रियमाणां न जानीषे रक्षसा माममर्षिणा । जीवितं सुखमर्थांश्च धर्महेतोः परित्यजन् ॥ २५
ह्रियमाणामधर्मेण मां राघव न पश्यसि । ननु नामाविनीतानां विनेतासि परंतप ॥ २६
कथमेवंविधं पापं न त्वं शाधि हि रावणम् । ननु सद्योऽविनीतस्य दृश्यते कर्मणः फलम्॥२७
कालोऽप्यङ्गी भवत्यत्र सस्यानामिव पक्तये । स कर्म कृतवानेतत् कालोपहतचेतनः ॥ २८
जीवितान्तकरं घोरं रामाद्व्यसनमाप्नुहि । हन्तेदानीं सकामास्तु कैकेयी सह बान्धवैः ॥ २९
ह्रिये यद्धर्मकामस्य धर्मपत्नी यशस्विनः । आमन्त्रये जनस्थाने कर्णिकारान् सुपुष्पितान् ॥ ३०

---

1. 'मानुषे' इति दृश्यते चेरस पाठः श्लिष्टः । २. गिरिशृङ्गाभं प्र.
१. अर्धमिदं प्र. नास्ति.

क्षिप्रं रामाय शंसध्वं सीतां हरति रावणः । माल्यवन्तं शिखरिणं वन्दे प्रस्रवणं गिरिम् ॥ ३१
क्षिप्रं रामाय शंस त्वं सीतां हरति रावणः । हंसकारण्डवाकीर्णां वन्दे गोदावरीं नदीम् ॥ ३२
क्षिप्रं रामाय शंस त्वं सीतां हरति रावणः । दैवतानि च यान्यस्मिन् वने विविधपादपे ॥ ३३
नमस्करोम्यहं तेभ्यो भर्तुः शंसत मां हृताम् । यानि कानिचिदप्यत्र सत्त्वानि निवसन्त्युत ॥ ३४
सर्वाणि शरणं यामि मृगपक्षिगणानपि । ह्रियमाणां प्रियां भर्तुः प्राणेभ्योऽपि गरीयसीम् ॥ ३५
विवशापहृता सीता रावणेनेति शंसत । विदित्वा मां महाबाहुरमुत्रापि महाबलः ॥ ३६
आनेष्यति पराक्रम्य वैवस्वतहृतामपि । सा तदा करुणा वाचो विलपन्ती सुदुःखिता ॥ ३७
वनस्पतिगतं गृध्रं ददर्शायतलोचना । सा तमुद्वीक्ष्य सुश्रोणी रावणस्य वशं गता ॥ ३८
समाक्रन्दद्भयपरा दुःखोपहतया गिरा । जटायो पश्य मामार्य ह्रियमाणामनाथवत् ॥ ३९
अनेन राक्षसेन्द्रेण करुणं पापकर्मणा । नैष वारयितुं शक्यस्तव क्रूरो निशाचरः ॥ ४०
सत्त्ववाञ्जितकाशी च सायुधश्चैव दुर्मतिः । रामाय तु यथातत्त्वं जटायो हरणं मम ॥ ४१
लक्ष्मणाय च तत् सर्वमाख्यातव्यमशेषतः ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायां
अरण्यकाण्डे सीतापहरणं नाम एकोनपञ्चाशः सर्गः

---

## पञ्चाशः सर्गः

### जटायुरभियोगः

तं शब्दमवसुप्तस्तु जटायुरथ शुश्रुवे । निरीक्ष्य रावणं क्षिप्रं वैदेहीं च ददर्श सः ॥ १
ततः पर्वतकूटाभस्तीक्ष्णतुण्डः खगोत्तमः । वनस्पतिगतः श्रीमान् व्याजहार शुभां गिरम् ॥ २
दशग्रीव स्थितो धर्मे पुराणे सत्यसंश्रयः । भ्रातस्त्वं निन्दितं कर्म कर्तुं नार्हसि साम्प्रतम्[1] ॥ ३
जटायुर्नाम नाम्नाहं गृध्रराजो महाबलः । राजा सर्वस्य लोकस्य महेन्द्रवरुणोपमः ॥ ४
लोकानां च हिते युक्तो रामो दशरथात्मजः । तस्यैषा लोकनाथस्य धर्मपत्नी यशस्विनी ॥ ५
सीता नाम वरारोहा यां त्वं हर्तुमिहेच्छसि । कथं राजा स्थितो धर्मे परदारान् परामृशेत् ॥ ६
रक्षणीया विशेषेण राजदारा महाबल । निवर्तय मतिं नीचां परदाराभिमर्शनात् ॥ ७
न तत् समाचरेद्धीरो यत् परोऽस्य विगर्हयेत् । यथात्मनस्तथान्येषां दारा रक्ष्या विपश्चिता ॥ ८
धर्ममर्थं च कामं च[2] शिष्टाः शास्त्रेष्वनागतम् । व्यवस्यन्ति न राजानः पौलस्त्यकुलनन्दन ॥ ९
राजा धर्मश्च कामश्च द्रव्याणां चोत्तमो निधिः । धर्मः शुभं वा पापं वा राजमूलं प्रवर्तते ॥ १०
पापस्वभावश्चपलः कथं त्वं रक्षसां वर । ऐश्वर्यमभिसंप्राप्तो विमानमिव दुष्कृती ॥ ११

---

१. इदमर्धम् च. छ. नास्ति । २. अर्थं वा यदि वा कामम् च.

कामं स्वभावो यो यस्य न शक्यः परिमार्जितुम् । न हि दुष्टात्मनामार्यमावसत्यालये चिरम् ॥ १२
विषये वा पुरे वा ते यदा रामो महाबलः । नापराध्यति धर्मात्मा कथं तस्यापराध्यसि ॥ १३
यदि शूर्पणखाहेतोर्जनस्थानगतः खरः । अतिवृत्तो हतः पूर्वं रामेणाक्लिष्टकर्मणा ॥ १४
अत्र ब्रूहि यथातत्त्वं को रामस्य व्यतिक्रमः । यस्य त्वं लोकनाथस्य भार्यां हृत्वा गमिष्यसि ॥ १५
क्षिप्रं विसृज वैदेहीं मा त्वा घोरेण चक्षुषा । दहेद्दहनभूतेन वृत्रमिन्द्राशनिर्यथा ॥ १६
सर्पमाशीविषं बद्ध्वा वस्त्रान्ते नावबुध्यसे । ग्रीवायां प्रतिमुक्तं च कालपाशं न पश्यसि ॥ १७
स भारः सौम्य भर्तव्यो यो नरं नावसादयेत् । तदन्नमपि भोक्तव्यं जीर्यते यदनामयम् ॥ १८
यत् कृत्वा न भवेद्धर्मो न कीर्तिर्न यशो भुवि । शरीरस्य भवेत् खेदः कस्तत् कर्म समाचरेत् ॥ १९
षष्टिर्वर्षसहस्राणि मम जातस्य रावण । पितृपैतामहं राज्यं यथावदनुतिष्ठतः ॥ २०
वृद्धोऽहं त्वं युवा धन्वी सशरः कवची रथी । तथाप्यादाय वैदेहीं कुशली न गमिष्यसि ॥ २१
न शक्तस्त्वं बलाद्धर्तुं वैदेहीं मम पश्यतः । हेतुभिर्न्यायसंयुक्तैर्ध्रुवां वेदश्रुतीमिव ॥ २२
युध्यस्व यदि शूरोऽसि मुहूर्तं तिष्ठ रावण । शयिष्यसे हतो भूमौ यथा पूर्वं खरस्तथा ॥ २३
असकृत् संयुगे येन निहता दैत्यदानवाः । न चिराच्चीरवासास्त्वां रामो युधि वधिष्यति ॥ २४
किं नु शक्यं मया कर्तुं गतौ दूरं नृपात्मजौ । क्षिप्रं त्वं नश्यसे नीच तयोर्भीतो न संशयः ॥ २५
न हि मे जीवमानस्य नयिष्यसि शुभामिमाम् । सीतां कमलपत्राक्षीं रामस्य महिषीं प्रियाम् ॥ २६
अवश्यं तु मया कार्यं प्रियं तस्य महात्मनः । जीवितेनापि रामस्य तथा दशरथस्य च ॥ २७
तिष्ठ तिष्ठ दशग्रीव मुहूर्तं पश्य रावण । युद्धातिथ्यं प्रदास्यामि यथाप्राणं निशाचर ॥ २८
वृन्तादिव फलं त्वां तु पातयेयं रथोत्तमात् ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
अयोध्याकाण्डे जटायुरभियोगो नाम पञ्चाशः सर्गः

---

## एकपञ्चाशः सर्गः

### जटायूरावणयुद्धम्

इत्युक्तस्य यथान्यायं रावणस्य जटायुषा । क्रुद्धस्याग्निनिभाः सर्वा रेजुर्विंशतिदृष्टयः[1] ॥ १
संरक्तनयनः कोपात्[2] तप्तकाञ्चनकुण्डलः । राक्षसेन्द्रोऽभिदुद्राव पतगेन्द्रममर्षणः ॥ २
स संप्रहारस्तुमुलस्तयोस्तस्मिन् महावने । बभूव वातोद्धतयोर्मेघयोर्गगने यथा ॥ ३
तद्बभूवाद्भुतं युद्धं गृध्रराक्षसयोस्तदा । सपक्षयोर्माल्यवतोर्महापर्वतयोरिव ॥ ४

---

१. इदं ग. नास्ति । २. इत्युक्तः क्रोधताम्राक्षः ग.

ततो नालीकनाराचैस्तीक्ष्णाग्रैश्च विकर्णिभिः । अभ्यवर्षन्महाघोरैर्गृध्रराजं महाबलः ॥ ५
स तानि शरजालानि गृध्रः पत्ररथेश्वरः । जटायुः प्रतिजग्राह रावणास्त्राणि संयुगे ॥ ६
तस्य तीक्ष्णनखाभ्यां तु चरणाभ्यां महाबलः । चकार बहुधा गात्रे व्रणान् पतगसत्तमः ॥ ७
अथ क्रोधाद्दशग्रीवो जग्राह दश मार्गणान् । मृत्युदण्डनिभान् घोराञ्शत्रोर्निधनकाङ्क्षया ॥ ८
स तैर्बाणैर्महावीर्यः पूर्णमुक्तैरजिह्मगैः । बिभेद निशितैस्तीक्ष्णैर्गृध्रं घोरैः शिलीमुखैः ॥ ९
स राक्षसरथे पश्यञ्जानकीं बाष्पलोचनाम् । अचिन्तयित्वा तान् बाणान् राक्षसं समभिद्रवत् ॥ १०
ततोऽस्य सशरं चापं मुक्तामणिविभूषितम् । चरणाभ्यां महातेजा बभञ्ज पतगेश्वरः ॥ ११
ततोऽन्यद्धनुरादाय रावणः क्रोधमूर्च्छितः । ववर्ष शरवर्षाणि शतशोऽथ सहस्रशः ॥ १२
शरैरावारितस्तस्य संयुगे पतगेश्वरः । कुलायमुपसंप्राप्तः पक्षीव प्रबभौ तदा ॥ १३
स तानि शरवर्षाणि पक्षाभ्यां च विधूय च । चरणाभ्यां महातेजा बभञ्जास्य महद्धनुः ॥ १४
तच्चाग्निसदृशं दीप्तं रावणस्य शरावरम् । पक्षाभ्यां स महावीर्यो व्याधुनोत् पतगेश्वरः ॥ १५
काञ्चनोरश्छदान् दिव्यान् पिशाचवदनान् खरान् । तांश्चास्य जवसंपन्नाञ्जघान समरे बली ॥ १६
वरं त्रिवेणुसंपन्नं कामगं पावकार्चिषम् । मणिहेमविचित्राङ्गं बभञ्ज च महारथम् ॥ १७
पूर्णचन्द्रप्रतीकाशं छत्रं च व्यजनैः सह । पातयामास वेगेन ग्राहिभी राक्षसैः सह ॥ १८
सारथेश्चास्य वेगेन तुण्डेनैव महच्छिरः । पुनर्व्यपाहरच्छ्रीमान् पक्षिराजो महाबलः ॥ १९
स भग्नधन्वा विरथो हताश्वो हतसारथिः । अङ्केनादय वैदेहीं पपात भुवि रावणः ॥ २०
दृष्ट्वा निपतितं भूमौ रावणं भग्नवाहनम् । साधु साध्विति भूतानि गृध्रराजमपूजयन् ॥ २१
परिश्रान्तं तु तं दृष्ट्वा जरया पक्षियूथपम् । उत्पपात पुनर्हृष्टो मैथिलीं गृह्य रावणः ॥ २२
तं प्रहृष्टं निधायाङ्के गच्छन्तं जनकात्मजाम् । गृध्रराजः समुत्पत्य समभिद्रुत्य रावणम् ॥ २३
समावार्य महातेजा जटायुरिदमब्रवीत् । वज्रसंस्पर्शबाणस्य भार्यां रामस्य रावण ॥ २४
अल्पबुद्धे हरस्येनां वधाय खलु रक्षसाम् । समित्रबन्धुः सामात्यः सबलः सपरिच्छदः ॥ २५
विषपानं पिबस्येतत् पिपासित इवोदकम् । अनुबन्धमजानन्तः कर्मणामविचक्षणाः ॥ २६
शीघ्रमेव विनश्यन्ति यथा त्वं विनशिष्यसि । बद्धस्त्वं कालपाशेन क्व गतस्तस्य मोक्ष्यसे ॥ २७
वधाय बडिशं गृह्य सामिषं जलजो यथा । न हि जातु दुराधर्षौ काकुत्स्थौ तव रावण ॥ २८
धर्षणं चाश्रमस्यास्य क्षमिष्येते तु राघवौ । यथा त्वया कृतं कर्म भीरुणा लोकगर्हितम् ॥ २९
तस्कराचरितो मार्गो नैष वीरनिषेवितः । युद्ध्यस्व यदि शूरोऽसि मुहूर्तं तिष्ठ रावण ॥ ३०
शयिष्यसे हतो भूमौ यथा भ्राता खरस्तथा । परेतकाले पुरुषो यत् कर्म प्रतिपद्यते ॥ ३१
विनाशायात्मनोऽधर्म्यं प्रतिपन्नोऽसि कर्म तत् । पापानुबन्धो वै यस्य कर्मणः कर्म को नु तत् ॥ ३२
कुर्वीत लोकाधिपतिः स्वयंभूर्भगवानपि । एवमुक्त्वा शुभं वाक्यं जटायुस्तस्य रक्षसः ॥ ३३

निपपात भृशं पृष्ठे दशग्रीवस्य वीर्यवान् । तं गृहीत्वा नखैस्तीक्ष्णैर्विददार समन्ततः ॥ ३४
अधिरूढो गजारोहो यथा स्याद्दुष्टवारणम् । विददार नखैरस्य तुण्डं पृष्ठे समर्पयन् ॥ ३५
केशांश्चोत्पाटयामास नखपक्षमुखायुधः । स तथा गृध्रराजेन क्लिश्यमानो मुहुर्मुहुः ॥ ३६
अमर्षस्फुरितोष्ठः सन् प्राकम्पत स रावणः । स परिष्वज्य वैदेहीं वामेनाङ्केन रावणः ॥ ३७
तलेनाभिजघानाशु जटायुं क्रोधमूर्च्छितः । जटायुस्तमभिक्रम्य तुण्डेनास्य खगाधिपः ॥ ३८
वामबाहून् दश तदा व्यपाहरदरिंदमः । संछिन्नबाहोः सद्यैव बाहवः सहसाभवन् ॥ ३९
विषज्वालावलीयुक्ता वल्मीकादिव पन्नगाः । ततः क्रोधाद्दशग्रीवः सीतामुत्सृज्य रावणः ॥ ४०
मुष्टिभ्यां चरणाभ्यां च गृध्रराजमपोथयत् । ततो मुहूर्तं संग्रामो बभूवातुलवीर्ययोः ॥ ४१
राक्षसानां च मुख्यस्य पक्षिणां प्रवरस्य च । तस्य व्यायच्छमानस्य रामस्यार्थे स[1] रावणः ॥ ४२
पक्षौ पार्श्वौ च पादौ च खड्गमुद्गृत्य सोऽच्छिनत् । स च्छिन्नपक्षः सहसा रक्षसा रौद्रकर्मणा ॥ ४३
निपपात हतो गृध्रो धरण्यामल्पजीवितः । तं दृष्ट्वा पतितं भूमौ क्षतजार्द्रं जटायुषम् ॥ ४४
अभ्यधावत वैदेही स्वबन्धुमिव दुःखिता ॥

तं नीलजीमूतनिकाश[2]कल्पं सपाण्डरोरस्कमुदारवीर्यम् ।
ददर्श लङ्काधिपतिः पृथिव्यां जटायुषं शान्तमिवाग्निदावम् ॥ ४५
ततस्तु तं पत्ररथं महीतले निपातितं रावणवेगमर्दितम् ।
पुनः परिष्वज्य शशिप्रभानना रुरोद सीता जनकात्मजा तदा ॥ ४६

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
अरण्यकाण्डे जटायूरावणयुद्धं नाम एकपञ्चाशः सर्गः

---

## द्विपञ्चाशः सर्गः

### सीताविक्रोशः

तमल्पजीवितं गृध्रं स्फुरन्तं राक्षसाधिपः । ददर्श भूमौ पतितं समीपे राघवाश्रमात् ॥ १
सा तु ताराधिपमुखी रावणेन समीक्ष्य तम् । गृध्रराजं विनिहतं विललाप सुदुःखिता ॥ २
आलिङ्ग्य गृध्रं निहतं रावणेन बलीयसा । विललाप सुदुःखार्ता सीता शशिनिभानना ॥ ३
निमित्तं लक्षणं स्वप्नं[१] शकुनिस्वरदर्शनम् । अवश्यं सुखदुःखेषु नराणां प्रतिदृश्यते ॥ ४
नूनं राम न जानासि महद्व्यसनमात्मनः । धावन्ति नूनं काकुत्स्थं मदर्थं मृगपक्षिणः ॥ ५
अयं हि कृपया राम[२] मां त्रातुमभिसंगतः । शेते विनिहतो भूमौ ममाभाग्याद्विहंगमः ॥ ६

---

1. अत्र स इति पदं पुनरुक्तम् । अर्थेन इति चेद्दृश्यते स पाठः श्लिष्टः ।
2. निकाशः प्रकाशः ।

१. लक्षणज्ञानम् च. छ.
२. पापचारेण च. छ.

त्राहि मामद्य काकुत्स्थ लक्ष्मणेति वराङ्गना । सुसंत्रस्ता समाक्रन्दच्छृण्वतां तु यथान्तिके ॥ ७
तां क्लिष्टमाल्याभरणां विलपन्तीमनाथवत् । अभ्यधावत वैदेहीं रावणो राक्षसाधिपः[१] ॥ ८
तां लतामिव वेष्टन्तीमालिङ्गन्तीं महाद्रुमान् । मुञ्च मुञ्चेति बहुशः प्रवदन् राक्षसाधिपः ॥ ९
क्रोशन्तीं राम रामेति रामेण रहितां वने । जीवितान्ताय केशेषु जग्राहान्तकसंनिभः ॥ १०
प्रधर्षितायां सीतायां बभूव सचराचरम् । जगत् सर्वममर्यादं तमसान्धेन संवृतम् ॥ ११
न वाति मारुतस्तत्र निष्प्रभोऽभूद्दिवाकरः । दृष्ट्वा सीतां परामृष्टां दीनां दिव्येन चक्षुषा ॥ १२
कृतं कार्यमिति श्रीमान् व्याजहार पितामहः । प्रहृष्टा व्यथिताश्चासन् सर्वे ते परमर्षयः ॥ १३
दृष्ट्वा सीतां परामृष्टां दण्डकारण्यवासिनः । रावणस्य विनाशं च प्राप्तं बुद्ध्वा यदृच्छया ॥ १४
स तु तां राम रामेति रुदन्तीं लक्ष्मणेति च । जगामादाय चाकाशं रावणो राक्षसेश्वरः ॥ १५
तप्ताभरणवर्णाङ्गी पीतकौशेयवासिनी । रराज राजपुत्री तु विद्युत्सौदामिनी यथा ॥ १६
उद्धूतेन च वस्त्रेण तस्याः पीतेन रावणः । अधिकं प्रतिबभ्राज गिरिर्दीप्त इवाग्निना ॥ १७
तस्याः परमकल्याण्यास्ताम्राणि सुरभीणि च । पद्मपत्राणि वैदेह्या अभ्यकीर्यन्त रावणम् ॥ १८
तस्याः कौशेयमुद्धूतमाकाशे कनकप्रभम् । बभौ चादित्यरागेण ताम्रमभ्रमिवातपे ॥ १९
तस्यास्तद्विमलं[२] वक्त्रमाकाशे रावणाङ्कगम् । न रराज विना रामं विनालमिव पङ्कजम् ॥ २०
बभूव जलदं नीलं भित्त्वा चन्द्र इवोदितः । सुललाटं सुकेशान्तं पद्मगर्भाभमव्रणम् ॥ २१
शुक्लैः सुविमलैर्दन्तैः प्रभावद्भिरलंकृतम् । तस्याः सुनयनं वक्त्रमाकाशे रावणाङ्कगम् ॥ २२
रुदितं व्यपमृष्टास्रं चन्द्रवत् प्रियदर्शनम् । सुनासं चारु ताम्रोष्ठमाकाशे हाटकप्रभम् ॥ २३
राक्षसेन्द्रसमाधूतं तस्यास्तद्वदनं शुभम् । शुशुभे न विना रामं दिवा चन्द्र इवोदितः ॥ २४
सा हेमवर्णा नीलाङ्गं मैथिली राक्षसाधिपम् । शुशुभे काञ्चनी काञ्ची नीलं गजमिवाश्रिता[1] ॥ २५
सा पद्मगौरी हेमाभा रावणं जनकात्मजा । विद्युद्घनमिवाविश्य शुशुभे तप्तभूषणा ॥ २६
तस्या भूषणघोषेण वैदेह्या राक्षसाधिपः । बभौ सचपलो नीलः सघोष इव तोयदः ॥ २७
उत्तमाङ्गाच्च्युता तस्याः पुष्पवृष्टिः समन्ततः । सीताया ह्रियमाणायाः पपात धरणीतले ॥ २८
सा तु रावणवेगेन पुष्पवृष्टिः समन्ततः । समाधूता दशग्रीवं पुनरेवाभ्यवर्तत ॥ २९
अभ्यवर्तत पुष्पाणां धारा वैश्रवणानुजम् । नक्षत्रमाला विमला मेरुं नगमिवोन्नतम् ॥ ३०
चरणान्नूपुरं भ्रष्टं वैदेह्या रत्नभूषितम् । विद्युन्मण्डलसंकाशं पपात मधुरस्वनम् ॥ ३१

---

1. नीलं मणिमिवाश्रितेति पठित्वा गोविन्दराजो व्याचख्यौ, रजतमेव नीलरत्नस्य शोभाकरम्, काञ्चनं तु तच्छोभातिरस्कारकम्, शुशुभ इति काक्वा व्यतिरेकोक्तिः न शुशुभ इत्यर्थ इति ।

१. अस्यानन्तरम्—सकृद्रामं पुनः श्वश्रूं पुनर्लक्ष्मणमङ्गना । असकृत्तत्र वैदेही विललाप द्विजान्तिके ॥—इति क.

२. तस्यास्तत्सुनसम् च. छ.

तरुप्रवालरक्ता सा नीलाङ्गं राक्षसेश्वरम् । प्राशोभयत वैदेही गजं कक्ष्येव काञ्चनी ॥ ३२
तां महोल्कामिवाकाशे दीप्यमानां स्वतेजसा । जहाराकाशमाविश्य सीतां वैश्रवणानुजः ॥ ३३
तस्यास्तान्यग्निवर्णानि भूषणानि महीतले । सघोषाण्यवशीर्यन्त क्षीणास्तारा इवाम्बरात् ॥ ३४
तस्याः स्तनान्तराद्भ्रष्टो हारस्ताराधिपद्युतिः । वैदेह्या निपतन् भाति गङ्गेव गगनाच्च्युता ॥ ३५
उत्पातवाताभिहता नानाद्विजगणायुताः । मा भैरिति विधूताग्रा व्याजह्रुरिव पादपाः ॥ ३६
नलिन्यो ध्वस्तकमलास्त्रस्तमीनजलेचराः । सखीमिव गतोच्छ्वासामन्वशोचन्त मैथिलीम् ॥ ३७
समन्तादभिसंपत्य सिंहव्याघ्रमृगद्विजाः । अन्वधावंस्तदा रोषात् सीतां छायानुगामिनः ॥ ३८
जलप्रपातास्रमुखाः शृङ्गैरुच्छ्रितबाहवः । सीतायां ह्रियमाणायां विक्रोशन्तीव पर्वताः ॥ ३९
ह्रियमाणां तु वैदेहीं दृष्ट्वा दीनो दिवाकरः । प्रतिध्वस्तप्रभः श्रीमानासीत् पाण्डरमण्डलः ॥ ४०
नास्ति धर्मः कुतः सत्यं नार्जवं नानृशंसता । यत्र रामस्य वैदेहीं भार्यां हरति रावणः ॥ ४१
इति सर्वाणि भूतानि गणशः पर्यदेवयन् । वित्रस्तका दीनमुखा रुरुदुर्मृगपोतकाः ॥ ४२
उद्वीक्ष्योद्वीक्ष्य नयनैरस्रपाताविलेक्षणाः । सुप्रवेपितगात्राश्च बभूवुर्वनदेवताः ॥ ४३
विक्रोशन्तीं दृढं सीतां दृष्ट्वा दुःखं तथागताम् । तां तु लक्ष्मण रामेति क्रोशन्तीं मधुरस्वरम् ॥ ४४
अवेक्षमाणां बहुशो वैदेहीं धरणीतलम् । स तामाकुलकेशान्तां विप्रमृष्टविशेषकाम् ॥ ४५
जहारात्मविनाशाय दशग्रीवो मनस्विनीम् ॥

ततस्तु सा चारुदती शुचिस्मिता विनाकृता बन्धुजनेन मैथिली ।
अपश्यती राघवलक्ष्मणावुभौ विवर्णवक्त्रा भयभारपीडिता ॥ ४६

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
अरण्यकाण्डे सीताविक्रोशो नाम द्विपञ्चाशः सर्गः

---

## त्रिपञ्चाशः सर्गः

### रावणभर्त्सनम्

खमुत्पतन्तं तं दृष्ट्वा मैथिली जनकात्मजा । दुःखिता परमोद्विग्ना भये महति वर्तिनी ॥ १
रोषरोदनताम्राक्षी भीमाक्षं राक्षसाधिपम् । रुदती करुणं सीता ह्रियमाणेदमब्रवीत् ॥ २
न व्यपत्रपसे नीच कर्मणानेन रावण । ज्ञात्वा विरहितां यन्मां चोरयित्वा पलायसे ॥ ३
त्वयैव नूनं दुष्टात्मन् भीरुणा हर्तुमिच्छता । ममापवाहितो भर्ता मृगरूपेण मायया ॥ ४
यो हि मामुद्यतस्त्रातुं सोऽप्ययं विनिपातितः । गृध्रराजः पुराणोऽसौ श्वशुरस्य सखा मम ॥ ५
परमं खलु ते वीर्यं दृश्यते राक्षसाधम । विश्राव्य नामधेयं हि युद्धे नास्मि जिता त्वया ॥ ६
ईदृशं गर्हितं कर्म कथं कृत्वा न लज्जसे । स्त्रियाश्च हरणं नीच रहिते तु परस्य च ॥ ७

कथयिष्यन्ति लोकेषु पुरुषाः कर्म कुत्सितम् । सुनृशंसमधर्मिष्ठं तव शौण्डीर्यमानिनः ॥ ८
धिक् ते शौर्यं च सत्त्वं च यत्त्वं कथितवांस्तदा । कुलाक्रोशकरं लोके धिक् ते चारित्रमीदृशम् ॥ ९
किं कर्तुं शक्यमेवं हि यज्जवेनैव धावसि । मुहूर्तमपि तिष्ठ त्वं न जीवन् प्रतियास्यसि ॥ १०
न हि चक्षुष्पथं प्राप्य तयोः पार्थिवपुत्रयोः । ससैन्योऽपि समर्थस्त्वं मुहूर्तमपि जीवितुम् ॥ ११
न त्वं तयोः शरस्पर्शं शक्तः सोढुं कथंचन । वने प्रज्वलितस्येव स्पर्शमग्नेर्विहंगमः ॥ १२
साधु कृत्वात्मनः पथ्यं साधु मां मुञ्च रावण । मत्प्रधर्षणरुष्टो हि भ्रात्रा सह पतिर्मम ॥ १३
विधास्यति विनाशाय त्वं मां यदि न मुञ्चसि । येन त्वं व्यवसायेन बलान्मां हर्तुमिच्छसि ॥ १४
व्यवसायः स ते नीच भविष्यति निरर्थकः । न ह्यहं तमपश्यन्ती भर्तारं विबुधोपमम् ॥ १५
उत्सहे शत्रुवशगा प्राणान् धारयितुं चिरम् । न नूनं चात्मनः श्रेयः पथ्यं वा समवेक्षसे ॥ १६
मृत्युकाले यथा मर्त्यो विपरीतानि सेवते । मुमूर्षूणां हि सर्वेषां यत् पथ्यं तन्न रोचते ॥ १७
पश्याम्यद्य हि कण्ठे त्वां कालपाशावपाशितम् । यथा चास्मिन् भयस्थाने न बिभेषि दशानन ॥ १८
व्यक्तं हिरण्मयान् हि त्वं संपश्यसि महीरुहान् । नदीं वैतरणीं घोरां रुधिरौघप्रवाहिनीम् ॥ १९
असिपत्रवनं चैव भीमं पश्यसि रावण । तप्तकाञ्चनपुष्पां च वैडूर्यप्रवरच्छदाम् ॥ २०
द्रक्ष्यसे शाल्मलीं तीक्ष्णामायसैः कण्टकैश्चिताम् । न हि त्वमीदृशं कृत्वा तस्यालीकं महात्मनः ॥ २१
धरितुं[1] शक्ष्यसि चिरं विषं पीत्वेव निर्घृण । बद्धस्त्वं कालपाशेन दुर्निवारेण रावण ॥ २२
क्व गतो लप्स्यसे शर्म भर्तुर्मम महात्मनः । निमेषान्तरमात्रेण विना भ्रातरमाहवे ॥ २३
राक्षसा निहता येन सहस्राणि चतुर्दश । स कथं राघवो वीरः सर्वास्त्रकुशलो बली ॥ २४
न त्वां हन्याच्छरैस्तीक्ष्णैरिष्टभार्यापहारिणम् । एतच्चान्यच्च परुषं वैदेही रावणाङ्कगा ॥ २५
भयशोकसमाविष्टा करुणं विललाप ह ॥

तथा भृशार्ता बहु चैव भाषिणीं विलापपूर्वं करुणं च भामिनीम् ।
जहार पापः करुणं विवेष्टतीं नृपात्मजामागतगात्रवेपथुम् ॥ २६

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
अरण्यकाण्डे रावणभर्त्सनं नाम त्रिपञ्चाशः सर्गः

---

## चतुःपञ्चाशः सर्गः

### लङ्काप्रापणम्

ह्रियमाणा तु वैदेही कंचिन्नाथमपश्यती । ददर्श गिरिशृङ्गस्थान् पञ्च वानरपुंगवान् ॥ १
तेषां मध्ये विशालाक्षी कौशेयं कनकप्रभम् । उत्तरीयं वरारोहा शुभान्याभरणानि च ॥ २

---

१. चरितुम् छ.

मुमोच यदि रामाय शंसेयुरिति मैथिली[1] । वस्त्रमुत्सृज्य तन्मध्ये निक्षिप्तं सहभूषणम् ॥ ३
संभ्रमात्तु दशग्रीवस्तत् कर्म न स बुद्धवान् । पिङ्गाक्षस्तां विशालाक्षीं नेत्रैरनिमिषैरिव ॥ ४
विक्रोशन्तीं तथा सीतां ददृशुर्वानरर्षभाः । स च पम्पामतिक्रम्य लङ्कामभिमुखः पुरीम् ॥ ५
जगाम रुदतीं गृह्य वैदेहीं राक्षसेश्वरः । तां जहार सुसंहृष्टो रावणो मृत्युमात्मनः ॥ ६
उत्सङ्गेनेव भुजगीं तीक्ष्णदंष्ट्रां महाविषाम् । वनानि सरितः शैलान् सरांसि च विहायसा ॥ ७
स क्षिप्रं समतीयाय शरश्चापादिव च्युतः । तिमिनक्रनिकेतं तु वरुणालयमक्षयम् ॥ ८
सरितां शरणं गत्वा समतीयाय सागरम् । संभ्रमात् परिवृत्तोर्मी रुद्धमीनमहोरगः ॥ ९
वैदेह्यां ह्रियमाणायां बभूव वरुणालयः । अन्तरिक्षगता वाचः ससृजुश्चारणास्तदा ॥ १०
एतदन्तो दशग्रीव इति सिद्धास्तदाब्रुवन् । स तु सीतां विवेष्टन्तीमङ्केनादाय रावणः ॥ ११
प्रविवेश पुरीं लङ्कां रूपिणीं मृत्युमात्मनः । सोऽभिगम्य पुरीं लङ्कां सुविभक्तमहापथाम् ॥ १२
संरूढकक्ष्याबहुलं स्वमन्तःपुरमाविशत् । तत्र तामसितापाङ्गीं शोकमोहपरायणाम् ॥ १३
निदधे रावणः सीतां मयो मायामिव स्त्रियम् । अब्रवीच्च दशग्रीवः पिशाचीर्घोरदर्शनाः ॥ १४
यथा नेमां पुमान् स्त्री वा सीतां पश्यत्यसंमतः । मुक्तामणिसुवर्णानि वस्त्राण्याभरणानि च ॥ १५
यद्यदिच्छेत्तदेवास्या देयं मच्छन्दतो यथा । या च वक्ष्यति वैदेहीं वचनं किंचिदप्रियम् ॥ १६
अज्ञानाद्यदि वा ज्ञानान्न तस्या जीवितं प्रियम् । तथोक्त्वा राक्षसीस्तास्तु राक्षसेन्द्रः प्रतापवान् ॥
निष्क्रम्यान्तःपुरात्तस्मात् किं कृत्यमिति चिन्तयन् । ददर्शाष्टौ महावीर्यान् राक्षसान् पिशिताशनान् ॥
स तान् दृष्ट्वा महावीर्यो वरदानेन मोहितः । उवाचैतानिदं वाक्यं प्रशस्य बलवीर्यतः ॥ १९
नानाप्रहरणाः क्षिप्रमितो गच्छत सत्वराः । जनस्थानं हतस्थानं भूतपूर्वं खरालयम् ॥ २०
तत्रोष्यतां जनस्थाने शून्ये निहतराक्षसे । पौरुषं बलमाश्रित्य त्रासमुत्सृज्य दूरतः ॥ २१
बलं हि सुमहद्यन्मे जनस्थाने निवेशितम् । सदूषणखरं युद्धे हतं रामेण सायकैः ॥ २२
तत्र क्रोधो ममामर्षाद्धैर्यस्योपरि वर्तते । वैरं च सुमहज्जातं रामं प्रति सुदारुणम् ॥ २३
निर्यातयितुमिच्छामि तच्च वैरमहं रिपोः । न हि लप्स्याम्यहं निद्रामहत्वा संयुगे रिपुम् ॥ २४
तं त्विदानीमहं हत्वा खरदूषणघातिनम् । रामं शर्मोपलप्स्यामि धनं लब्ध्वेव निर्धनः ॥ २५
जनस्थाने वसद्भिस्तु भवद्भी राममाश्रिता । प्रवृत्तिरुपनेतव्या किं करोतीति तत्त्वतः ॥ २६
अप्रमादाच्च गन्तव्यं सर्वैरपि निशाचरैः । कर्तव्यश्च सदा यत्नो राघवस्य वधं प्रति ॥ २७
युष्माकं च बलज्ञोऽहं बहुशो रणमूर्धनि । अतश्चास्मिञ्जनस्थाने मया यूयं नियोजिताः ॥ २८

ततः प्रियं वाक्यमुपेत्य राक्षसा महार्थमष्टावभिवाद्य रावणम् ।
विहाय लङ्कां सहिताः प्रतस्थिरे यतो जनस्थानमलक्ष्यदर्शनाः ॥ २९

---

१. मामिनी पुना.

ततस्तु सीतामुपलभ्य रावणः सुसंप्रहृष्टः परिगृह्य मैथिलीम् ।
प्रसज्य रामेण च वैरमुत्तमं बभूव मोहान्मुदितः स राक्षसः[1] ॥ ३०

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
अरण्यकाण्डे लङ्काप्रापणं नाम चतुःपञ्चाशः सर्गः

---

## पञ्चपञ्चाशः सर्गः

### सीताविलोभनोद्यमः

संदिश्य राक्षसान् घोरान् रावणोऽष्टौ महाबलान् । आत्मानं बुद्धिवैक्लव्यात् कृतकृत्यममन्यत ॥ १
स चिन्तयानो वैदेहीं कामबाणप्रपीडितः । प्रविवेश गृहं रम्यं सीतां द्रष्टुमभित्वरन् ॥ २
स प्रविश्य तु तद्वेश्म रावणो राक्षसाधिपः । अपश्यद्राक्षसीमध्ये सीतां शोकपरायणाम् ॥ ३
अश्रुपूर्णमुखीं दीनां शोकभाराभिपीडिताम् । वायुवेगैरिवाक्रान्तां मज्जन्तीं नावमर्णवे ॥ ४
मृगयूथपरिभ्रष्टां मृगीं श्वभिरिवावृताम् । अधोमुखमुखीं सीतामभ्येत्य च निशाचरः ॥ ५
तां तु शोकपरां दीनामवशां राक्षसाधिपः । स बलाद्दर्शयामास गृहं देवगृहोपमम् ॥ ६
हर्म्यप्रासादसंबाधं स्त्रीसहस्रनिषेवितम् । नानापक्षिगणैर्जुष्टं नानारत्नसमन्वितम् ॥ ७
दान्तकैस्तापनीयैश्च स्फाटिकै राजतैरपि । वज्रवैडूर्यचित्रैश्च स्तम्भैर्दृष्टिमनोहरैः ॥ ८
दिव्यदुन्दुभिनिर्ह्रादं तप्तकाञ्चनतोरणम् । सोपानं काञ्चनं चित्रमारुरोह तया सह ॥ ९
दान्तका राजताश्चैव गवाक्षाः प्रियदर्शनाः । हेमजालावृताश्चासंस्तत्र प्रासादपङ्क्तयः ॥ १०
सुधामणिविचित्राणि भूमिभागानि सर्वशः । दशग्रीवः स्वभवने प्रादर्शयत मैथिलीम् ॥ ११
दीर्घिकाः पुष्करिण्यश्च नानावृक्षसमन्विताः । रावणो दर्शयामास सीतां शोकपरायणाम् ॥ १२
दर्शयित्वा तु वैदेह्याः कृत्स्नं तद्भवनोत्तमम् । उवाच वाक्यं पापात्मा सीतां लोभितुमिच्छया ॥ १३
दश राक्षसकोट्यश्च द्वाविंशतिरथापराः । तेषां प्रभुरहं सीते सर्वेषां भीमकर्मणाम् ॥ १४
वर्जयित्वा जरावृद्धान्[2] बालांश्च रजनीचरान् । सहस्रमेकमेकस्य मम कार्यपुरःसरम् ॥ १५
यदिदं राजतन्त्रं मे त्वयि सर्वं प्रतिष्ठितम् । जीवितं च विशालाक्षि त्वं मे प्राणैर्गरीयसी ॥ १६
बहूनां स्त्रीसहस्राणां मम योऽसौ परिग्रहः । तासां त्वमीश्वरी सीते मम भार्या भव प्रिये ॥ १७
साधु किं तेऽन्यथा बुद्ध्या रोचयस्व वचो मम । भजस्व माभितप्तस्य प्रसादं कर्तुमर्हसि ॥ १८
परिक्षिप्ता समुद्रेण लङ्केयं शतयोजना । नेयं धर्षयितुं शक्या सेन्द्रैरपि सुरासुरैः ॥ १९
न देवेषु न यक्षेषु न गन्धर्वेषु नर्षिषु[3] । अहं पश्यामि लोकेषु यो मे वीर्यसमो भवेत् ॥ २०
राज्यभ्रष्टेन दीनेन तापसेन पदातिना । किं करिष्यसि रामेण मानुषेणाल्पतेजसा ॥ २१
भजस्व सीते मामेव भर्ताहं सदृशस्तव । यौवनं ह्यध्रुवं भीरु रमस्वेह मया सह ॥ २२

---

१. रावणः प्र. २. जनान् वृद्धान् पुना. ३. पक्षिषु च. छ.

दर्शने मा कृथा बुद्धिं राघवस्य वरानने। कास्य शक्तिरिहागन्तुमपि सीते मनोरथैः ॥ २३
न शक्यो वायुराकाशे पाशैर्बन्द्धुं महाजवः। दीप्यमानस्य चाप्यग्नेर्ग्रहीतुं विमला शिखा[1] ॥ २४
त्रयाणामपि लोकानां न तं पश्यामि शोभने। विक्रमेण नयेद्यस्त्वां मद्बाहुपरिपालिताम् ॥ २५
लङ्कायां सुमहद्राज्यमिदं त्वमनुपालय। त्वत्प्रेष्या मद्विधाश्चैव देवाश्चापि चराचराः ॥ २६
अभिषेकोदकक्लिन्ना तुष्टा च रमयस्व माम्। दुष्कृतं यत्पुरा कर्म वनवासेन तद्गतम् ॥ २७
यश्च ते सुकृतो धर्मस्तस्येह फलमाप्नुहि। इह माल्यानि सर्वाणि दिव्यगन्धानि मैथिलि ॥ २८
भूषणानि च मुख्यानि सेवस्व च मया सह। पुष्पकं नाम सुश्रोणि भ्रातुर्वैश्रवणस्य मे ॥ २९
विमानं सूर्यसंकाशं तरसा निर्जितं मया। विशालं रमणीयं च तद्विमानं मनोजवम् ॥ ३०
तत्र सीते मया सार्धं विहरस्व यथासुखम्। वदनं पद्मसंकाशं विमलं चारुदर्शनम् ॥ ३१
शोकार्तं तु वरारोहे न भ्राजति वरानने। एवं वदति तस्मिन् सा वस्त्रान्तेन वराङ्गना ॥ ३२
पिधायेन्दुनिभं सीता मुखमश्रूण्यवर्तयत्। ध्यायन्तीं तामिवास्वस्थां दीनां चिन्ताहतप्रभाम् ॥ ३३
उवाच वचनं पापो रावणो राक्षसेश्वरः। अलं व्रीडेन[1] वैदेहि धर्मलोपकृते न च ॥ ३४
आर्षोऽयं दैवनिष्यन्दो यस्त्वामभिगमिष्यति[2]। एतौ पादौ मया स्निग्धौ शिरोभिः परिपीडितौ ॥ ३५
प्रसादं कुरु मे क्षिप्रं वश्यो दासोऽहमस्मि ते। इमाः शून्या मया वाचः शुष्यमाणेन भाषिताः ॥ ३६
न चापि रावणः कांचिन्मूर्ध्ना स्त्रीं प्रणमेत ह। एवमुक्त्वा दशग्रीवो मैथिलीं जनकात्मजाम् ॥ ३७
कृतान्तवशमापन्नो ममेयमिति मन्यते ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
अरण्यकाण्डे सीताविलोभनोद्यमो नाम पञ्चपञ्चाशः सर्गः

---

1. व्याख्यातारः धर्मलोपकृतेनेति तृतीयान्तं व्रीडेनेत्येतस्य विशेषणं योजयन्ति । अपरा योजना अलं व्रीडेनेति। भर्त्रुपेक्षणेन परपुरुषाभ्युपगमेन च ते लज्जा मा भूत् । धर्मलोपकृते धर्मभ्रंशननिमित्तं च न त्वमनुशोचितुमर्हसि । तथा हि अयं त्वयि मदीयोऽनुरागो दैवनिष्यन्दः दैवादुद्भूतः । तेन खलु त्वामिह बलात्कारेण आनयम् इति भावः । बलात्कारेण परदारपरिग्रहोऽपि हि आर्षः ऋषिदृष्टः। 'बलात्कारेण राक्षसः' इति राक्षसविवाहस्मरणम् । अतो न धर्मलोपः शङ्कनीय इति भावः। न केवलमत्र धर्मलोपाभावमात्रम्, यावत्—अयस्त्वामभिगमिष्यति सुखावहश्च विधिः अनेन तव भविष्यतीत्यर्थः। वस्तुतस्तु बलात्कारेण कन्याया ग्रहणमेव राक्षसविवाह इति स्मृत्यभिप्रायात् आर्षं इतीदं रावणवचनं कामोद्रेकमूलमेव इति ध्येयम्। व्याख्यातॄणां शैलीमनुसृत्य चेदमुक्तम्। तत्त्वतस्तु, य इति परोक्षेणात्मनो निर्देशः। यो रावणः त्वामभिगमिष्यति त्वल्लाभमेव पुरुषार्थं मन्यमान आस्ते नासौ प्राकृतवद्विधेयः; किं तर्हि, दैवनिष्यन्दः देवस्य चतुर्मुखस्य वंशजः, आर्षः ऋषेर्विश्रवसः पुत्रः। न खल्वेवंभूतो जातुचित् लोकविरुद्धं धर्मविरुद्धं वाचरेत्। तस्मान्नास्मिन् विषये तव लज्जा धर्मलोपशङ्का वा युक्ता इत्यर्थं एव श्लिष्टः स्वरसश्चेति नः प्रतिभाति।

१. विमलाः शिखाः ति.
विमलां शिखाम् च. छ.

२. अस्य स्थाने—आर्षोऽयं देवि निष्पन्दो यस्त्वामभिभविष्यति—इति पुना.

# षट्पञ्चाशः सर्गः

## वत्सरावधिकरणम्

सा तथोक्ता तु वैदेही निर्भया शोककर्शिता । तृणमन्तरतः कृत्वा रावणं प्रत्यभाषत ॥ १
राजा दशरथो नाम धर्मसेतुरिवाचलः । सत्यसन्धः परिज्ञातो यस्य पुत्रः स राघवः ॥ २
रामो नाम स धर्मात्मा त्रिषु लोकेषु विश्रुतः । दीर्घबाहुर्विशालाक्षो दैवतं स पतिर्मम ॥ ३
इक्ष्वाकूणां कुले जातः सिंहस्कन्धो महाद्युतिः । लक्ष्मणेन सह भ्रात्रा यस्ते प्राणान् हरिष्यति ॥ ४
प्रत्यक्षं यद्यहं तस्य त्वया स्यां धर्षिता बलात् । शयिता त्वं हतः संख्ये जनस्थाने यथा खरः ॥ ५
य एते राक्षसाः प्रोक्ता घोररूपा महाबलाः । राघवे निर्विषाः सर्वे सुपर्णे पन्नगा यथा ॥ ६
तस्य ज्याविप्रमुक्तास्ते शराः काञ्चनभूषणाः । शरीरं विधमिष्यन्ति गङ्गाकूलमिवोर्मयः ॥ ७
असुरैर्वा सुरैर्वा त्वं यद्यवध्योऽसि रावण । उत्पाद्य सुमहद्वैरं जीवंस्तस्य न मोक्ष्यसे ॥ ८
स ते जीवितशेषस्य राघवोऽन्तकरो बली । पशोर्यूपगतस्येव जीवितं तव दुर्लभम् ॥ ९
यदि पश्येत् स रामस्त्वां रोषदीप्तेन चक्षुषा । रक्षस्त्वमद्य निर्दग्धो यथा रुद्रेण मन्मथः[1] ॥ १०
यश्चन्द्रं नभसो भूमौ पातयेन्नाशयेत वा । सागरं शोषयेद्वापि स[1] सीतां मोचयेदिह ॥ ११
गतायुस्त्वं गतश्रीको गतसत्त्वो गतेन्द्रियः । लङ्का[2] वैधव्यसंयुक्ता त्वत्कृते न भविष्यति ॥ १२
न ते पापमिदं कर्म सुखोदर्कं भविष्यति । याहं नीता विनाभावं पतिपार्श्वात्त्वया बलात् ॥ १३
स हि देवरसंयुक्तो[2] मम भर्ता महाद्युतिः । निर्भयो वीर्यमाश्रित्य शून्ये वसति दण्डके ॥ १४
स ते दर्पं बलं वीर्यमुत्सेकं च तथाविधम् । अपनेष्यति गात्रेभ्यः शरवर्षेण संयुगे ॥ १५
यदा विनाशो भूतानां दृश्यते कालचोदितः । तदा कार्ये प्रमाद्यन्ति नराः कालवशं गताः ॥ १६
मां प्रधृष्य स ते कालः प्राप्तोऽयं राक्षसाधम । आत्मनो राक्षसानां च वधायान्तःपुरस्य च[3] ॥ १७
न शक्या यज्ञमध्यस्था वेदिः स्रुग्भाण्डमण्डिता । द्विजातिमन्त्रसंपूता चण्डालेनावमर्दितुम् ॥ १८
तथाहं धर्मनित्यस्य धर्मपत्नी पतिव्रता । त्वया स्प्रष्टुं न शक्यास्मि राक्षसाधम पापिना ॥ १९
क्रीडन्ती राजहंसेन पद्मषण्डेषु नित्यदा । हंसी सा तृणषण्डस्थं कथं द्रक्ष्येत[4] मद्गुकम् ॥ २०
इदं शरीरं निःसंज्ञं बन्ध वा खादयस्व वा । नेदं शरीरं रक्ष्यं मे जीवितं वापि राक्षस ॥ २१
न तु शक्ष्याम्युपक्रोशं पृथिव्यां दातुमात्मनः । एवमुक्त्वा तु वैदेही क्रोधात् सुपरुषं वचः ॥ २२

---

1. नेति पाठे मोचयेदिति काकुर्द्रष्टव्या ।

2. लङ्का त्वत्कृते त्वन्निमित्तं वैधव्यसंयुक्ता सती न भविष्यति न जीविष्यतीत्यर्थः।त्वत्कृतेन अपराधेन लङ्का वैधव्यं गामिष्यतीति इति तु व्याख्यातारः।

१. गच्छेः सद्यः पराभवम् च. छ.

२. दैवतसंयुक्तः च. छ.

३. अस्यानन्तरम्—इदमन्तःपुरं रम्यं रक्षःस्थापितमीदृशम् । समबाणानलः सर्वं दग्धं तव करिष्यति ॥—इति घ.

४. पश्येत च. छ.

रावणं मैथिली तत्र पुनर्नोवाच किंचन । सीताया वचनं श्रुत्वा परुषं रोमहर्षणम् ॥ २३
प्रत्युवाच ततः सीतां[1] भयसंदर्शनं वचः । शृणु मैथिलि मद्वाक्यं मासान् द्वादश भामिनि ॥ २४
कालेनानेन नाभ्येषि यदि मां चारुहासिनि । ततस्त्वां प्रातराशार्थं सूदाश्छेत्स्यन्ति लेशशः ॥ २५
इत्युक्त्वा परुषं वाक्यं रावणः शत्रुरावणः । राक्षसीश्च ततः क्रुद्ध इदं वचनमब्रवीत् ॥ २६
शीघ्रमेव हि राक्षस्यो विकृता घोरदर्शनाः । दर्पमस्या विनेष्यध्वं मांसशोणितभोजनाः ॥ २७
वचनादेव तास्तस्य सुघोरा राक्षसीगणाः । कृतप्राञ्जलयो भूत्वा मैथिलीं पर्यवारयन् ॥ २८
स ताः प्रोवाच राजासौ रावणो घोरदर्शनः । प्रचाल्य चरणोत्कर्षैर्दारयन्निव मेदिनीम् ॥ २९
अशोकवनिकामध्ये मैथिली नीयतामियम् । तत्रेयं रक्ष्यतां गूढं युष्माभिः परिवारिता ॥ ३०
तत्रैनां तर्जनैर्घोरैः पुनः सान्त्वैश्च मैथिलीम् । आनयध्वं वशं सर्वा वन्यां गजवधूमिव ॥ ३१
इति प्रतिसमादिष्टा राक्षस्यो रावणेन ताः । अशोकवनिकां जग्मुर्मैथिलीं प्रतिगृह्य तु ॥ ३२
सर्वकालफलैर्वृक्षैर्नानापुष्पफलैर्वृताम् । सर्वकालमदैश्चापि द्विजैः समुपसेविताम् ॥ ३३
सा तु शोकपरीताङ्गी मैथिली जनकात्मजा । राक्षसीवशमापन्ना व्याघ्रीणां हरिणी यथा ॥ ३४
शोकेन महता ग्रस्ता मैथिली जनकात्मजा । न शर्म लभते भीरुः पाशबद्धा मृगी यथा ॥ ३५

न विन्दते तत्र तु शर्म मैथिली विरूपनेत्राभिरतीव तर्जिता ।
पतिं स्मरन्ती दयितं च दैवतं विचेतनाभूद्भयशोकपीडिता ॥ ३६

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
अरण्यकाण्डे वत्सरावधिकरणं नाम षट्पञ्चाशः सर्गः[1]

---

## सप्तपञ्चाशः सर्गः

### रामप्रत्यागमनम्

राक्षसं मृगरूपेण चरन्तं कामरूपिणम् । निहत्य रामो मारीचं तूर्णं पथि निवर्तते ॥ १
तस्य संत्वरमाणस्य द्रष्टुकामस्य मैथिलीम् । क्रूरस्वनोऽथ गोमायुर्विननादास्य पृष्ठतः ॥ २

---

१. सन्तर्दन क.

1. अस्य सर्गस्यानन्तरमयं सर्गः प्रक्षिप्ततया च. दृश्यते । प्रवेशितायां सीतायां लङ्कां प्रति पितामहः । तदा प्रोवाच देवेन्द्रं परितुष्टं शतक्रतुम् ॥ १ ॥ त्रैलोक्यस्य हितार्थाय रक्षसामहिताय च । लङ्कां प्रवेशिता सीता रावणेन दुरात्मना ॥२॥ पतिव्रता महाभागा नित्यं चैव सुखैधिता । अपश्यन्ती च भर्तारं पश्यन्ती राक्षसीजनम् ॥ ३ ॥ राक्षसीभिः परिवृता भर्तृदर्शनलालसा । निविष्टा हि पुरी लङ्का तीरे नदनदीपतेः ॥ ४ ॥ कथं ज्ञास्यति तां रामस्तत्रस्थां तामानिन्दिताम् । दुःखं संचिन्तयन्ती सा बहुशःपरिदुर्लभा ॥५॥ प्राणयात्रामकुर्वाणा प्राणांस्त्यक्ष्यत्यसंशयम् । स भूयः संशयो जातः सीतायाः प्राणसंक्षये ॥ ६ ॥ स त्वं शीघ्रमितो गत्वा सीतां पश्य शुभाननाम् । प्रविश्य नगरीं लङ्कां प्रयच्छ हविरुत्तमम् ॥७॥ एवमुक्तोऽथ देवेन्द्रः पुरीं रावणपालिताम् । आगच्छन्निद्रया सार्धं भगवान् पाकशासनः ॥ ८ ॥ निद्रां चोवाच गच्छ त्वं राक्षसान् संप्रमोहय । सा तथोक्ता मघवता देवी परमहर्षिता ॥९॥

स तस्य स्वरमाज्ञाय दारुणं रोमहर्षणम् । । चिन्तयामास गोमायोः स्वरेण परिशङ्कितः॥ ३

अशुभं बत मन्येऽहं गोमायुर्वाशते यथा । स्वस्ति स्यादपि वैदेह्या राक्षसैर्भक्षणं विना ॥ ४

मारीचेन तु विज्ञाय स्वरमालक्ष्य[1] मामकम् । आक्रुष्टं मृगरूपेण लक्ष्मणः शृणुयाद्यदि ॥ ५

स सौमित्रिः स्वरं श्रुत्वा तां च हित्वा च मैथिलीम् । तयैव प्रहितः क्षिप्रं मत्सकाशमिहैष्यति ॥ ६

राक्षसैः सहितैर्नूनं सीताया ईप्सितो वधः । काञ्चनश्च मृगो भूत्वा व्यपनीयाश्रमात्तु माम् ॥ ७

दूरं नीत्वा तु मारीचो राक्षसोऽभूच्छराहतः । हा लक्ष्मण हतोऽस्मीति यद्वाक्यं व्याजहार ह ॥ ८

अपि स्वस्ति भवेद्द्वाभ्यां[2] रहिताभ्यां मया वने । जनस्थाननिमित्तं हि कृतवैरोऽस्मि राक्षसैः ॥ ९

निमित्तानि च घोराणि दृश्यन्तेऽद्य बहूनि च । इत्येवं चिन्तयन् रामः श्रुत्वा गोमायुनिःस्वनम् ॥१०

आत्मनश्चापनयनान्मृगरूपेण रक्षसा । आजगाम जनस्थानं राघवः परिशङ्कितः ॥ ११

तं दीनमानसं दीनमासेदुर्मृगपक्षिणः । सव्यं कृत्वा महात्मानं घोरांश्च ससृजुः स्वरान् ॥ १२

तानि दृष्ट्वा निमित्तानि महाघोराणि राघवः । न्यवर्तताथ त्वरितो जवेनाश्रममात्मनः ॥ १३

स तु सीतां वरारोहां लक्ष्मणं च महाबलम् । आजगाम जनस्थानं[3] चिन्तयन्नेव राघवः ॥ १४

---

देवकार्यार्थसिद्ध्यर्थं प्रामोहयत राक्षसान् । एतस्मिन्नन्तरे देवः सहस्राक्षः शचीपतिः ॥ १० ॥ आससाद वनस्थां तां वचनं चेदमब्रवीत् । देवराजोऽस्मि भद्रं ते इह चास्मि शुचिस्मिते ॥ ११ ॥ अहं त्वां कार्यसिद्ध्यर्थं राघवस्य महात्मनः । साहाय्यं कल्पयिष्यामि मा शुचो जनकात्मजे ॥१२॥ मत्प्रसादात् समुद्रं स तरिष्यति बलैः सह । मयैवेह च राक्षस्यो मायया मोहिताः शुभे ॥ १३ ॥ तस्मादन्नमिदं सीते हविष्यान्नमहं स्वकम् । स त्वां संगृह्य वैदेहि आगतः सह निद्रया ॥१४॥ एतदत्स्यसि मद्धस्तान्न त्वां बाधिष्यते शुभे । क्षुधा तृषा च रम्भोरु वर्षाणामयुतैरपि ॥१५॥ एवमुक्ता तु देवेन्द्रमुवाच परिशङ्किता । कथं जानामि देवेन्द्रं त्वामिहस्थं शचीपतिम् ॥ १६ ॥ देवलिङ्गानि दृष्टानि रामलक्ष्मणसंनिधौ । तानि दर्शय देवन्द्र यदि त्वं देवराट् स्वयम् ॥१७॥ सीताया वचनं श्रुत्वा तथा चक्रे शचीपतिः । पृथिवीं नास्पृशत् पद्भ्यामनिमेषेक्षणानि च ॥ १८ ॥ अरजोऽम्बरधारी च नम्लान कुसुमस्तथा । तं ज्ञात्वा लक्षणैः सीता वासवं परिहर्षिता ॥ १९ ॥ उवाच वाक्यं रुदती भगवन्राघवं प्रति । सह भ्रात्रा महाबाहुर्दिष्ट्या मे श्रुतिमागतः॥२०॥ यथा मे श्वशुरो राजा यथा च मिथिलाधिपः । तथा त्वामद्य पश्यामि सनाथो मे पतिस्त्वया ॥ २१ ॥ तवाज्ञया च देवेन्द्र पयोभूतमिदं हविः । अशिष्यामि त्वया दत्तं रघूणां कुलवर्धनम् ॥२२॥ इन्द्रहस्तादृगृहीत्वा तत् पायसं सा शुचिस्मिता । न्यवेदयत भर्त्रे सा लक्ष्मणाय च मैथिली ॥ २३ ॥ यदि जीवति मे भर्ता सह भ्रात्रा महाबलः । इदमस्तु तयोर्भक्त्या तदाश्नात् पायसं स्वयम् ॥२४॥ इतीव तत् प्राश्य हविर्वरानना जहौ क्षुधादुःखसमुद्भवं च तम् । इन्द्रात् प्रवृत्तिमुपलभ्य जानकी काकुत्स्थयोः प्रीतमना बभूव ॥ २५॥ स चापि शक्रस्त्रिदिवालयं तदा प्रीतो ययौ राघवकार्यसिद्धये । आमन्त्र्य सीतां स ततो महात्मा जगाम निद्रासहितः स्वमालयम् ॥ २६ ॥

१- आलभ्य च. छ.

२. भवेताभ्याम् च. छ.

३. घोरांश्चेत्यादि जनस्थानमित्यन्तम् ध. नास्ति ।

ततो लक्ष्मणमायान्तं ददर्श विगतप्रभम् । ततोऽविदूरे रामेण समीयाय स लक्ष्मणः ॥ १५
विषण्णः सुविषण्णेन दुःखितो दुःखभागिना । संजगर्हेऽथ तं भ्राता दृष्ट्वा[1] लक्ष्मणमागतम् ॥ १६
विहाय सीतां विजने वने राक्षससेविते । गृहीत्वा च करं सव्यं लक्ष्मणं रघुनन्दनः ॥ १७
उवाच मधुरोदर्कमिदं वचनमार्तवत् । अहो लक्ष्मण गर्ह्यं ते कृतं यस्त्वं विहाय ताम् ॥ १८
सीतामिहागतः सौम्य कच्चित् स्वस्ति भवेदिह । न मेऽस्ति संशयो वीर सर्वथा जनकात्मजा ॥ १९
विनष्टा भक्षिता वापि राक्षसैर्वनचारिभिः । अशुभान्येव भूयिष्ठं यथा प्रादुर्भवन्ति मे ॥ २०
अपि लक्ष्मण सीतायाः सामग्र्यं[2] प्राप्नुयावहे । जीवन्त्याः पुरुषव्याघ्र सुताया जनकस्य वै ॥ २१
यथा वै मृगसङ्घाश्च गोमायुश्चैव भैरवम् । वाशन्ते शकुनाश्चापि प्रदीप्तामभितो दिशम् ॥ २२
अपि स्वस्ति भवेत्तस्या राजपुत्र्या महाबल ॥

इदं हि रक्षो मृगसंन्निकाशं प्रलोभ्य मां दूरमनुप्रयातम् ।
हतं कथंचिन्महता श्रमेण स राक्षसोऽभून्म्रियमाण एव ॥ २३
मनश्च मे दीनमिहाप्रहृष्टं चक्षुश्च सव्यं कुरुते विकारम् ।
असंशयं लक्ष्मण नास्ति सीता हृता मृता वा पथि वर्तते वा[3] ॥ २४

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
अरण्यकाण्डे रामप्रत्यागमन नाम सप्तपञ्चाशः सर्गः

---

## अष्टपञ्चाशः सर्गः

### अनिमित्तदर्शनम्

स दृष्ट्वा लक्ष्मणं दीनं शून्यं दशरथात्मजः । पर्यपृच्छत धर्मात्मा वैदेहीमागतं विना ॥ १
प्रस्थितं दण्डकारण्यं या मामनुजगाम ह । क सा लक्ष्मण वैदेही यां हित्वा त्वमिहागतः ॥ २
राज्यभ्रष्टस्य दीनस्य दण्डकान् परिधावतः । क सा दुःखसहाया मे वैदेही तनुमध्यमा ॥ ३
यां विना नोत्सहे वीर मुहूर्तमपि जीवितुम् । क सा प्राणसहाया मे सीता सुरसुतोपमा ॥ ४
पतित्वममराणां वा पृथिव्याश्चापि लक्ष्मण । तां विना तपनीयाभां नेच्छेयं जनकात्मजाम् ॥ ५
कच्चिज्जीवति वैदेही प्राणैः प्रियतरा मम । कच्चित् प्रव्राजनं सौम्य न मे मिथ्या भविष्यति ॥ ६
सीतानिमित्तं सौमित्रे मृते मयि गते त्वयि । कच्चित् सकामा सुखिता कैकेयी सा भविष्यति ॥ ७

---

१. ज्येष्ठः च. छ.  २. सकाशम् ख.  ३. इदं पद्यम् ख. नास्ति ।

सपुत्रराज्यां सिद्धार्थां मृतपुत्रा तपस्विनी । उपस्थास्यति कौसल्या कच्चिन् सौम्य न कैकयीम् ॥ ८
यदि जीवति वैदेही गमिष्याम्याश्रमं पुनः । सुवृत्ता यदि वृत्ता सा प्राणांस्त्यक्ष्यामि लक्ष्मण ॥ ९
यदि मामाश्रमगतं वैदेही नाभिभाषते । पुनः प्रहसिता सीता विनशिष्यामि लक्ष्मण ॥ १०
ब्रूहि लक्ष्मण वैदेही यदि जीवति वा न वा । त्वयि प्रमत्ते रक्षोभिर्भक्षिता वा तपस्विनी ॥ ११
सुकुमारी च बाला च नित्यं चादुःखदर्शिनी । मद्वियोगेन वैदेही व्यक्तं शोचति दुर्मनाः ॥ १२
सर्वथा रक्षसा तेन जिह्मेन सुदुरात्मना । वदता लक्ष्मणेत्युच्चैस्तवापि जनितं भयम् ॥ १३
श्रुतस्तु शङ्के वैदेह्या स स्वरः सदृशो मम । त्रस्तया प्रेषितस्त्वं च द्रष्टुं मां शीघ्रमागतः ॥ १४
सर्वथा तु कृतं कष्टं सीतामुत्सृजता वने । प्रतिकर्तुं नृशंसानां रक्षसां दत्तमन्तरम् ॥ १५
दुःखिताः खरघातेन राक्षसाः पिशिताशनाः । तैः सीता निहता घोरैर्भविष्यति न संशयः ॥ १६
अहोऽस्मिन् व्यसने मग्नः सर्वथा शत्रुसूदन । किं न्विदानीं करिष्यामि शङ्के प्राप्तव्यमीदृशम् ॥ १७
इति सीतां वरारोहां चिन्तयन्नेव राघवः । आजगाम जनस्थानं त्वरया सहलक्ष्मणः ॥ १८

विगर्हमाणोऽनुजमार्तरूपं क्षुधा श्रमाच्चैव पिपासया च ।
विनिःश्वसञ्शुष्कमुखो विवर्णः प्रतिश्रयं प्राप्य समीक्ष्य शून्यम् ॥ १९
स्वमाश्रमं संप्रविगाह्य वीरो विहारदेशाननुसृत्य कांश्चित् ।
एतत्तदित्येव निवासभूमौ प्रहृष्टरोमा व्यथितो बभूव ॥ २०

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
अरण्यकाण्डे अनिमित्तदर्शनं नाम अष्टपञ्चाशः सर्गः

---

## एकोनषष्टितमः सर्गः

### लक्ष्मणागमनविगर्हणम्

अथाश्रमादुपावृत्तमन्तरा रघुनन्दनः । परिपप्रच्छ सौमित्रिं रामो दुःखार्दिदं वचः ॥ १
तमुवाच किमर्थं त्वमागतोऽपास्य मैथिलीम् । यदा सा तव विश्वासाद्वने विरहिता मया ॥ २
दृष्ट्वैवाभ्यागतं त्वां मे मैथिलीं त्यज्य लक्ष्मण । शङ्कमानं महत् पापं यत् सत्यं व्यथितं मनः ॥ ३
स्फुरते नयनं सव्यं बाहुश्च हृदयं च मे । दृष्ट्वा लक्ष्मण दूरे त्वां सीताविरहितं पथि ॥ ४
एवमुक्तस्तु सौमित्रिर्लक्ष्मणः शुभलक्षणः । भूयो दुःखसमाविष्टो दुःखितं राममब्रवीत् ॥ ५
न स्वयं कामकारेण तां त्यक्त्वाहमिहागतः । प्रचोदितस्तयैवोग्रैस्त्वत्सकाशमिहागतः ॥ ६
आर्येणेव परिक्रुष्टं हा सीते लक्ष्मणेति च । परित्राहीति यद्वाक्यं मैथिल्यास्तच्छ्रुतिं गतम् ॥ ७
सा तमार्तस्वरं श्रुत्वा तव स्नेहेन मैथिली । गच्छ गच्छेति मामाह रुदती भयविह्वला ॥ ८

प्रचोद्यमानेन मया गच्छेति बहुशस्तया । प्रत्युक्ता मैथिली वाक्यमिदं त्वत्प्रत्ययान्वितम् ॥ ९
न तत् पश्याम्यहं रक्षो यदस्य भयमावहेत् । निर्वृता भव नास्त्येतत् केनाप्येवमुदाहृतम् ॥ १०
विगर्हितं च नीचं च कथमार्योऽभिधास्यति । त्राहीति वचनं सीते यस्त्रायेत् त्रिदशानपि ॥ ११
किंनिमित्तं तु केनापि भ्रातुरालम्ब्य मे स्वरम् । राक्षसेनेरितं वाक्यं त्राहि त्राहीति शोभने ॥ १२
विस्वरं व्याहृतं वाक्यं लक्ष्मण त्राहि मामिति । न भवत्या व्यथा कार्या कुनारीजनसेविता ॥ १३
अलं वैक्लव्यमालम्ब्य स्वस्था भव निरुत्सुका । न सोऽस्ति त्रिषु लोकेषु पुमान् यो राघवं रणे॥१४
जातो वा जायमानो वा संयुगे यः पराजयेत् । न जय्यो राघवो युद्धे देवैः शक्रपुरोगमैः ॥ १५
एवमुक्ता तु वैदेही परिमोहितचेतना । उवाचाश्रूणि मुञ्चन्ती दारुणं मामिदं वचः ॥ १६
भावो मयि तवात्यर्थं पाप एव निवेशितः । विनष्टे भ्रातरि प्राप्तुं न च त्वं मामवाप्स्यसि ॥ १७
संकेताद्भरतेन त्वं रामं समनुगच्छसि । क्रोशन्तं हि यथात्यर्थं नैनमभ्यवपद्यसे ॥ १८
रिपुः प्रच्छन्नचारी त्वं मदर्थमनुगच्छसि । राघवस्यान्तरं प्रेप्सुस्तथैनं नाभिपद्यसे ॥ १९
एवमुक्तो हि वैदेह्या संरब्धो रक्तलोचनः । क्रोधात् प्रस्फुरमाणोष्ठ आश्रमादस्मि निर्गतः ॥ २०
एवं ब्रुवाणं सौमित्रिं रामः संतापमोहितः । अब्रवीद्दुष्कृतं सौम्य तां विना यत्त्वमागतः ॥ २१
जानन्नपि समर्थं मां रक्षसां विनिवारणे । अनेन क्रोधवाक्येन मैथिल्या निःसृतो भवान् ॥ २२
न हि ते परितुष्यामि त्यक्त्वा यदसि मैथिलीम् । क्रुद्धायाः परुषं वाक्यं श्रुत्वा[1] यत्त्वमिहागतः॥२३
सर्वथा त्वपनीतं ते सीतया यत् प्रचोदितः । क्रोधस्य वशमापन्नो नाकरोः शासनं मम ॥ २४
असौ हि राक्षसः शेते शरेणाभिहतो मया । मृगरूपेण येनाहमाश्रमादपवाहितः ॥ २५

विकृष्य चापं परिधाय सायकं सलीलबाणेन च ताडितो मया ।
मार्गीं तनुं त्यज्य स विक्लवस्वरो बभूव केयूरधरः स राक्षसः ॥ २६
शराहतेनैव तदार्तया गिरा स्वरं ममालम्ब्य सुदूरसंश्रवम् ।
उदाहृतं तद्वचनं सुदारुणं त्वमागतो येन विहाय मैथिलीम् ॥ २७

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
अरण्यकाण्डे लक्ष्मणागमनविगर्हणं नाम एकोनषष्टितमः सर्गः

---

## षष्टितमः सर्गः

### रामोन्मादः

भृशमाव्रजमानस्य तस्याधोवामलोचनम् । प्रास्फुरच्चास्खलद्रामो वेपथुश्चाप्यजायत ॥ १
उपालक्ष्य निमित्तानि सोऽशुभानि मुहुर्मुहुः । अपि क्षेमं तु सीताया इति वै व्याजहार च ॥ २

१. क्रुद्धायाः परुषं श्रुत्वा स्त्रियाश्च च.

त्वरमाणो जगामाथ सीतादर्शनलालसः । शून्यमावसथं दृष्ट्वा बभूवोद्विग्नमानसः ॥ ३
उद्भ्रमन्निव वेगेन विक्षिपन् रघुनन्दनः । तत्र तत्रोटजस्थानमभिवीक्ष्य समन्ततः ॥ ४
ददर्श पर्णशालां च रहितां सीतया तदा । श्रिया विरहितां ध्वस्तां हेमन्ते पद्मिनीमिव ॥ ५
रुदन्तमिव वृक्षैश्च म्लानपुष्पमृगद्विजम् । श्रिया विहीनं विध्वस्तं संत्यक्तवनदेवतम् ॥ ६
विप्रकीर्णाजिनकुशं विप्रविद्धबृसीकटम् । दृष्ट्वा शून्योटजस्थानं विललाप पुनः पुनः ॥ ७
हृता मृता वा नष्टा वा भक्षिता वा भविष्यति । निलीनाप्यथवा भीरुरथवा वनमाश्रिता ॥ ८
गता विचेतुं पुष्पाणि फलान्यपि च वा पुनः । अथवा पद्मिनीं याता जलार्थं वा नदीं गता ॥ ९
यत्नान्मृगयमाणस्तु नाससाद वने प्रियाम् । शोकरक्तेक्षणः[1] शोकादुन्मत्त इव लक्ष्यते ॥ १०
वृक्षाद्वृक्षं प्रधावन् स गिरेश्चाद्रिं नदान्नदीम् । बभूव विलपन् रामः शोकपङ्कार्णवाप्लुतः ॥ ११
अपि कच्चित्त्वया दृष्टा सा कदम्बप्रिया प्रिया । कदम्ब यदि जानीषे शंस सीतां शुभाननाम् ॥ १२
स्निग्धपल्लवसंकाशा पीतकौशेयवासिनी । शंसस्व यदि वा दृष्टा बिल्व बिल्वोपमस्तनी ॥ १३
अथवार्जुन शंस त्वं प्रियां तामर्जुनप्रियाम् । जनकस्य सुता भीरुर्यदि जीवति वा न वा ॥ १४
ककुभः ककुभोरूं तां व्यक्तं जानाति मैथिलीम् । यथा पल्लवपुष्पाढ्यो भाति ह्येष वनस्पतिः ॥ १५
भ्रमरैरुपगीतश्च यथा द्रुमवरो ह्ययम् । एष व्यक्तं विजानाति तिलकस्तिलकप्रियाम् ॥ १६
अशोक शोकापनुद शोकोपहतचेतसम् । त्वन्नामानं कुरु क्षिप्रं प्रियासंदर्शनेन माम् ॥ १७
यदि ताल त्वया दृष्टा पक्वतालफलस्तनी । कथयस्व वरारोहां कारुण्यं यदि ते मयि ॥ १८
यदि दृष्टा त्वया सीता जम्बु जाम्बूनदप्रभा[2] । प्रियां यदि विजानीषे निःशङ्कं कथयस्व मे ॥ १९
अहो त्वं कर्णिकाराद्य सुपुष्पैः शोभसे भृशम् । कर्णिकार प्रिया साध्वी शंस दृष्टा प्रिया यदि ॥ २०
चूतनीपमहासालान् पनसान् कुरवान्[3] धवान्। दाडिमानसनान्[4] गत्वा दृष्ट्वा रामो महायशाः ॥२१
बकुलानथ पुंनागान्[5] चम्पकान् केतकीस्तथा । पृच्छन् रामो वने भ्रान्त उन्मत्त इव लक्ष्यते ॥ २२
अथवा मृगशावाक्षीं मृग जानासि मैथिलीम् । मृगविप्रेक्षणी कान्ता मृगीभिः सहिता भवेत् ॥ २३
गज सा गजनासोरूर्यदि दृष्टा त्वया भवेत् । तां मन्ये विदितां तुभ्यमाख्याहि वरवारण ॥ २४
शार्दूल[1] यदि सा दृष्टा प्रिया चन्द्रनिभानना । मैथिली मम विस्रब्धं कथयस्व न ते भयम् ॥ २५
किं धावसि प्रिये दूरं दृष्टासि कमलेक्षणे । वृक्षैराच्छाद्य चात्मानं किं मां न प्रतिभाषसे ॥ २६

---

1. व्याघ्रेण कदाचित् भक्षिता स्यादिति शङ्कमानस्तमेव पृच्छति—शार्दूलेति। अतश्च गजादिष्विव शार्दूले सीतासाद्दश्यस्य अदर्शनेऽपि प्रश्नप्रवृत्ती रामस्य संभवत्येवेति द्रष्टव्यम् । यदि दृष्टेति । यदि भक्षितेति च युक्तत्वादध्याहार्यम् ।

१. श्रीमान् पुनः ।
२. जम्बुफलोपमाम् च.
३. कुरवांस्तथा क.
४. ननमा ग्र.
५. मल्लिका माधवाश्चैव च.

तिष्ठ तिष्ठ वरारोहे न तेऽस्ति करुणा मयि । नात्यर्थं हास्यशीलासि किमर्थं मामुपेक्षसे ॥ २७
पीतकौशेयकेनासि सूचिता वरवर्णिनि । धावन्त्यपि मया दृष्टा तिष्ठ यद्यस्ति सौहृदम् ॥ २८
नैव सा नूनमथवा हिंसिता चारुहासिनी । कृच्छ्रं प्राप्तं हि मां नूनं यथोपेक्षितुमर्हति ॥ २९
व्यक्तं सा भक्षिता बाला राक्षसैः पिशिताशनैः । विभज्याङ्गानि सर्वाणि मया विरहिता प्रिया ॥ ३०
नूनं तच्छुभदन्तोष्ठं सुनासं चारुकुण्डलम् । पूर्णचन्द्रनिभं ग्रस्तं मुखं निष्प्रभतां गतम् ॥ ३१
सा हि चम्पकवर्णाभा ग्रीवा ग्रैवेयशोभिता । कोमला विलपन्त्यास्तु कान्ताया भक्षिता शुभा ॥ ३२
नूनं विक्षिप्यमाणौ तौ बाहू पल्लवकोमलौ । भक्षितौ वेपमानाग्रौ सहस्ताभरणाङ्गदौ ॥ ३३
मया विरहिता बाला रक्षसां भक्षणाय वै । सार्थेनेव परित्यक्ता भक्षिता बहुबान्धवा ॥ ३४
हा लक्ष्मण महाबाहो पश्यसि त्वं प्रियां क्वचित् । हा प्रिये क्व गता भद्रे हा सीतेति पुनः पुनः॥ ३५
इत्येवं विलपन् रामः परिधावन् वनाद्वनम् । क्वचिदुद्भ्रमते वेगात् क्वचिद्विभ्रमते बलात् ॥ ३६
क्वचिन्मत्त इवाभाति कान्तान्वेषणतत्परः । स वनानि नदीः शैलान् गिरिप्रस्रवणानि च ॥ ३७
काननानि च वेगेन भ्रमत्यपरिसंस्थितः ॥

तथा स गत्वा विपुलं महद्वनं परीत्य सर्वं त्वथ मैथिलीं प्रति ।
अनिष्ठिताशः स चकार मार्गणे पुनः प्रियायाः परमं परिश्रमम् ॥ ३८

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
अरण्यकाण्डे रामोन्मादो नाम षष्टितमः सर्गः

---

## एकषष्टितमः सर्गः

### सीतान्वेषणम्

दृष्ट्वाश्रमपदं शून्यं रामो दशरथात्मजः । रहितां पर्णशालां च विध्वस्तान्यासनानि च ॥ १
अदृष्ट्वा तत्र वैदेहीं संनिरीक्ष्य च सर्वशः । उवाच रामः प्राक्रुश्य प्रगृह्य रुचिरौ भुजौ ॥ २
क्व नु लक्ष्मण वैदेही कं वा देशमितो गता । केनाहृता वा सौमित्रे भक्षिता केन वा प्रिया ॥ ३
वृक्षेणाच्छाद्य यदि मां सीते हसितुमिच्छसि । अलं ते हसितेनाद्य मां भजस्व सुदुःखितम् ॥ ४
यैः सह क्रीडसे सीते विश्वस्तैर्मृगपोतकैः । एते हीनास्त्वया सौम्ये ध्यायन्त्यस्राविलेक्षणाः ॥ ५
सीतया रहितोऽहं वै न हि जीवामि लक्ष्मण । मृतं शोकेन महता सीताहरणजेन माम् ॥ ६
परलोके महाराजो नूनं द्रक्ष्यति मे पिता । कथं प्रतिज्ञां संश्रुत्य मया त्वमभियोजितः ॥ ७
अपूरयित्वा तं कालं मत्सकाशमिहागतः । कामवृत्तमनार्यं मां मृषावादिनमेव च ॥ ८
धिक् त्वामिति परे लोके व्यक्तं वक्ष्यति मे पिता । विवशं शोकसंतप्तं दीनं भग्नमनोरथम् ॥ ९

न. च. छ.

मामिहोत्सृज्य करुणं कीर्तिर्नरमिवानृजुम् । क गच्छसि वरारोहे मां नोत्सृज सुमध्यमे ॥ १०
त्वया विरहितश्चाहं त्यक्ष्ये जीवितमात्मनः । इतीव विलपन् रामः सीतादर्शनलालसः ॥ ११
न ददर्श सुदुःखार्तो राघवो जनकात्मजाम् । अनासादयमानं तं सीतां शोकपरायणम् ॥ १२
पङ्कमासाद्य विपुलं सीदन्तमिव कुञ्जरम् । लक्ष्मणो राममत्यर्थमुवाच हितकाम्यया ॥ १३
मा विषादं महाबुद्धे कुरु यत्नं मया सह । इदं [1]गिरिवरं शूर बहुकन्दरशोभितम् ॥ १४
प्रियकाननसंचारा वनोन्मत्ता च मैथिली । सा वनं वा प्रविष्टा स्यान्नलिनीं वा सुपुष्पिताम् ॥ १५
सरितं वापि संप्राप्ता मीनवञ्जुलसेविताम् । स्नातुकामा निलीना स्याद्धासकामा वने क्वचित् ॥ १६
वित्रासयितुकामा वा लीना स्यात् कानने क्वचित् । जिज्ञासमाना वैदेही त्वां मां च पुरुषर्षभ ॥ १७
तस्या ह्यन्वेषणे श्रीमन् क्षिप्रमेव यतावहै । वनं सर्वं विचिन्वानौ यत्र सा जनकात्मजा ॥ १८
मन्यसे यदि काकुत्स्थ मा स्म शोके मनः कृथाः । एवमुक्तस्तु सौहार्दाल्लक्ष्मणेन समाहितः ॥ १९
सह सौमित्रिणा रामो विचेतुमुपचक्रमे । तौ वनानि गिरींश्चैव सरितश्च सरांसि च ॥ २०
निखिलेन विचिन्वानौ सीतां दशरथात्मजौ । तस्य शैलस्य सानूनि गुहाश्च शिखराणि च ॥ २१
निखिलेन विचिन्वन्तौ नैव तामभिजग्मतुः । विचित्य सर्वतः शैलं रामो लक्ष्मणमब्रवीत् ॥ २२
नेह पश्यामि सौमित्रे वैदेहीं पर्वते शुभाम् । ततो दुःखाभिसंतप्तो लक्ष्मणो वाक्यमब्रवीत् ॥ २३
विचरन् दण्डकारण्यं भ्रातरं दीप्ततेजसम् । प्राप्स्यसि त्वं महाप्राज्ञ मैथिलीं जनकात्मजाम् ॥ २४
यथा विष्णुर्महाबाहुर्बलिं बद्ध्वा महीमिमाम् । एवमुक्तस्तु सौहार्दाल्लक्ष्मणेन स राघवः ॥ २५
उवाच दीनया वाचा दुःखाभिहतचेतनः । वनं सर्वं सुविचितं पद्मिन्यः फुल्लपङ्कजाः ॥ २६
गिरिश्चायं महाप्राज्ञ बहुकन्दरनिर्झरः । न हि पश्यामि वैदेहीं प्राणेभ्योऽपि गरीयसीम् ॥ २७
एवं स विलपन् रामः सीताहरणकर्शितः । दीनः शोकसमाविष्टो मुहूर्तं विह्वलोऽभवत् ॥ २८
स विह्वलितसर्वाङ्गो गतबुद्धिर्विचेतनः । निषसादातुरो दीनो निःश्वस्याशीतमायतम् ॥ २९
बहुशः स तु निःश्वस्य रामो राजीवलोचनः । हा प्रियेति विचुक्रोश बहुशो बाष्पगद्गदः ॥ ३०
तं ततः सान्त्वयामास लक्ष्मणः प्रियबान्धवः । बहुप्रकारं धर्मज्ञः प्रश्रितः प्रश्रिताञ्जलिः ॥ ३१
अनादृत्य तु तद्वाक्यं लक्ष्मणोष्ठपुटाच्च्युतम् । अपश्यंस्तां प्रियां सीतां प्राक्रोशत्स पुनः पुनः ॥ ३२

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
अरण्यकाण्डे सीतान्वेषणं नाम एकषष्टितमः सर्गः

---

१. च हि वनम् च,

## द्विषष्टितमः सर्गः

### राघवविलापः

सीतामपश्यन् धर्मात्मा शोकोपहतचेतनः । विललाप महाबाहू रामः कमललोचनः ॥ १

पश्यन्निव स तां सीतामपश्यन् मदनार्दितः । उवाच राघवो वाक्यं विलापाश्रयदुर्वचम् ॥ २

त्वमशोकस्य शाखाभिः पुष्पप्रियतया प्रिये । आवृणोषि शरीरं ते मम शोकविवर्धनी ॥ ३

कदलीकाण्डसदृशौ कदल्या संवृतावुभौ । ऊरू पश्यामि ते देवि नासि शक्ता निगूहितुम् ॥ ४

कर्णिकारवनं भद्रे हसन्ती देवि सेवसे । अलं ते परिहासेन मम बाधावहेन वै ॥ ५

परिहासेन किं सीते परिश्रान्तस्य मे प्रिये । अयं स परिहासोऽपि साधु देवि न रोचते ॥ ६

विशेषेणाश्रमस्थाने हासोऽयं न प्रशस्यते । अवगच्छामि ते शीलं परिहासप्रियं प्रिये ॥ ७

आगच्छ त्वं विशालाक्षि शून्योऽयमुटजस्तव । सुव्यक्तं राक्षसैः सीता भक्षिता वा हृतापि वा ॥ ८

न हि सा विलपन्तं मामुपसंप्रैति लक्ष्मण । एतानि मृगयूथानि साश्रुनेत्राणि लक्ष्मण ॥ ९

शंसन्तीव हि वैदेहीं भक्षितां रजनीचरैः । हा ममार्ये क यातासि हा साध्वि वरवर्णिनि ॥ १०

हा सकामाद्य कैकेयी देवी सापि भविष्यति । सीतया सह निर्यातो विना सीतामुपागतः ॥ ११

कथं नाम प्रवेक्ष्यामि शून्यमन्तःपुरं पुनः । निर्वीर्य इति लोको मां निर्दयश्चेति वक्ष्यति ॥ १२

कातरत्वं प्रकाशं हि सीतापनयनेन मे । निवृत्तवनवासश्च जनकं मिथिलाधिपम् ॥ १३

कुशलं परिपृच्छन्तं कथं शक्ष्ये निरीक्षितुम् । विदेहराजो नूनं मां दृष्ट्वा विरहितं तया ॥ १४

सुतास्नेहेन संतप्तो[1] मोहस्य वशमेष्यति । अथवा न गमिष्यामि पुरीं भरतपालिताम् ॥ १५

स्वर्गोऽपि सीतया हीनः शून्य एव मतो मम । मामिहोत्सृज्य हि वने गच्छायोध्यां पुरीं शुभाम् ॥ १६

न त्वहं तां विना सीतां जीवेयं हि कथंचन । गाढमाश्लिष्य भरतो वाच्यो मद्वचनात्त्वया ॥ १७

अनुज्ञातोऽसि रामेण पालयेति वसुंधराम् । अम्बा च मम कैकेयी सुमित्रा च त्वया विभो ॥ १८

कौसल्या च यथान्यायमभिवाद्या ममाज्ञया । रक्षणीया प्रयत्नेन भवता सूक्तकारिणा ॥ १९

सीतायाश्च विनाशोऽयं मम चामित्रकर्शन । विस्तरेण जनन्या मे विनिवेद्यस्त्वया भवेत् ॥ २०

इति विलपति राघवे सुदीने वनमुपगम्य तया विना सुकेश्या ।
भयविकलमुखस्तु लक्ष्मणोऽपि व्यथितमना भृशमातुरो बभूव ॥ २१

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
अरण्यकाण्डे राघवविलापो नाम द्विषष्टितमः सर्गः

---

१. दुहितृस्नेहसंतप्तः क. ग. घ.

## त्रिषष्टितमः सर्गः

### दुःखानुचिन्तनम्

स राजपुत्रः प्रियया विहीनः शोकेन मोहेन च पीड्यमानः ।
विषादयन् भ्रातरमार्तरूपो भूयो विषादं प्रविवेश तीव्रम् ॥ १

स लक्ष्मणं शोकवशाभिपन्नं शोके निमग्नो विपुले तु रामः ।
उवाच वाक्यं व्यसनानुरूपमुष्णं विनिश्वस्य रुदन् सशोकम् ॥ २

न मद्विधो दुष्कृतकर्मकारी मन्ये द्वितीयोऽस्ति वसुंधरायाम् ।
शोकेन शोको हि परम्पराया मामेति भिन्दन् हृदयं मनश्च ॥ ३

पूर्वं मया नूनमभीप्सितानि पापानि कर्माण्यसकृत् कृतानि ।
तत्रायमद्यापतितो विपाको दुःखेन दुःखं यदहं विशामि ॥ ४

राज्यप्रणाशः स्वजनैर्वियोगः पितुर्विनाशो जननीवियोगः ।
सर्वाणि मे लक्ष्मण शोकवेगमापूरयन्ति प्रविचिन्तितानि ॥ ५

सर्वं तु दुःखं मम लक्ष्मणेदं शान्तं शरीरे वनमेत्य शून्यम् ।
सीतावियोगात् पुनरप्युदीर्णं काष्ठैरिवाग्निः सहसा प्रदीप्तः ॥ ६

सा नूनमार्या मम राक्षसेन बलाद्धृता खं समुपेत्य भीरुः ।
अपस्वरं सस्वरविप्रलापा भयेन विक्रन्दितवत्यभीक्ष्णम् ॥ ७

तौ लोहितस्य प्रियदर्शनस्य सदोचितावुत्तमचन्दनस्य ।
वृत्तौ स्तनौ शोणितपङ्कदिग्धौ नूनं प्रियाया मम नाभिभातः ॥ ८

तच्छ्लक्ष्णसुव्यक्तमृदुप्रलापं[1] तस्या मुखं कुञ्चितकेशभारम् ।
रक्षोवशं नूनमुपागताया न भ्राजते राहुमुखे यथेन्दुः ॥ ९

तां हारपाशस्य सदोचिताया ग्रीवां प्रियाया मम सुव्रतायाः ।
रक्षांसि नूनं परिपीतवन्ति विभिद्य शून्ये रुधिराशनानि ॥ १०

मया विहीना विजने वने या रक्षोभिराहृत्य विकृष्यमाणा ।
नूनं विनादं कुररीव दीना सा मुक्तवत्यायतकान्तनेत्रा ॥ ११

अस्मिन् मया सार्धमुदारशीला शिलातले पूर्वमुपोपविष्टा ।
कान्तस्मिता लक्ष्मण जातहासा त्वामाह सीता बहुवाक्यजातम् ॥ १२

---

१. तच्छ्लक्ष्णमव्यक्तमृदुप्रलापम् ग.

गोदावरीयं सरितां वरिष्ठा प्रिया प्रियाया मम नित्यकालम् ।
अप्यत्र गच्छेदिति चिन्तयामि नैकाकिनी याति हि सा कदाचित् ॥ १३
पद्मानना पद्मविशालनेत्रा पद्मानि वानेतुमभिप्रयाता ।
तदप्ययुक्तं न हि सा कदाचिन्मया विना गच्छति पङ्कजानि ॥ १४
कामं त्विदं पुष्पितवृक्षषण्डं नानाविधैः पक्षिगणैरुपेतम् ।
वनं प्रयाता नु तदप्ययुक्तमेकाकिनी सातिबिभेति भीरुः ॥ १५
आदित्य भो लोककृताकृतज्ञ लोकस्य सत्यानृतकर्मसाक्षिन् ।
मम प्रिया सा क्व गता हृता वा शंसस्व मे शोकवशस्य नित्यम् ॥ १६
लोकेषु सर्वेषु च नास्ति किंचिद्यत्ते न नित्यं विदितं भवेत्तत् ।
शंसस्व वायो कुलशालिनीं तां हृता मृता वा पथि वर्तते वा ॥ १७
इतीव तं शोकविधेयदेहं रामं विसंज्ञं विलपन्तमेवम्[1] ।
उवाच सौमित्रिरदीनसत्त्वो न्याय्ये स्थितः कालयुतं च वाक्यम् ॥ १८
शोकं विमुञ्चार्य धृतिं भजस्व सोत्साहता चास्तु विमार्गणेऽस्याः ।
उत्साहवन्तो हि नरा न लोके सीदन्ति कर्मस्वतिदुष्करेषु ॥ १९
इतीव सौमित्रिमुदग्रपौरुषं ब्रुवन्तमार्तो रघुवंशवर्धनः ।
न चिन्तयामास धृतिं विमुक्तवान् पुनश्च दुःखं महदभ्युपागमत् ॥ २०

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम
अरण्यकाण्डे दुःखानुचिन्तनं नाम त्रिषष्टितमः सर्गः

---

## चतुःषष्टितमः सर्गः

### रामक्रोधः

स दीनो दीनया वाचा लक्ष्मणं वाक्यमब्रवीत् । शीघ्रं लक्ष्मण जानीहि गत्वा गोदावरीं नदीम् ॥ १
अपि गोदावरीं सीता पद्मान्यानयितुं गता । एवमुक्तस्तु रामेण लक्ष्मणः पुनरेव हि[1] ॥ २
नदीं गोदावरीं रम्यां जगाम लघुविक्रमः । तां लक्ष्मणस्तीर्थवतीं विचित्वा राममब्रवीत् ॥ ३
नैनां पश्यामि तीर्थेषु क्रोशतो न शृणोति मे । कं नु सा देशमापन्ना वैदेही क्लेशनाशिनी ॥ ४

---

1. एवमिति तिलकभूषणयोः पाठः । तत्र परेण सम्बन्धात् अपौनरुक्त्यमिति बोध्यम् । आद्ये इतीवेत्यस्य अतीवेति व्याख्यानात्, तेन एवमित्यस्य न पौनरुक्त्यम् । द्वितीये एवमित्यस्य उवाचेत्यु-

1. परवीरहा च. छ.

न हि तं वेद्मि वै राम यत्र सा तनुमध्यमा[1] । लक्ष्मणस्य वचः श्रुत्वा दीनः सन्तापमोहितः ॥ ५
रामः समभिचक्राम स्वयं गोदावरीं नदीम् । स तामुपस्थितो रामः क्व सीतेत्येवमब्रवीत् ॥ ६
भूतानि राक्षसेन्द्रेण वधार्हेण हृतामपि । न तां शशंसू रामाय तथा गोदावरी नदी ॥ ७
ततः प्रचोदिता भूतैः शंसास्मै[2] तां प्रियामिति । न च साभ्यवदत् सीतां पृष्टा रामेण शोचता ॥ ८
रावणस्य च तद्रूपं कर्माणि च दुरात्मनः । ध्यात्वा भयात्तु वैदेहीं सा नदी न शशंस ताम् ॥ ९
निराशस्तु तया नद्या सीताया दर्शने कृतः । उवाच रामः सौमित्रिं सीतादर्शनकर्शितः ॥ १०
एषा गोदावरी सौम्य किंचिन्न प्रतिभापते । किं नु लक्ष्मण वक्ष्यामि समेत्य जनकं वचः ॥ ११
मातरं चैव वैदेह्या विना तामहमप्रियम् । या मे राज्यविहीनस्य वने वन्येन जीवतः ॥ १२
सर्वं व्यपानयच्छोकं वैदेही क्व नु सा गता । ज्ञातिपक्षविहीनस्य राजपुत्रीमपश्यतः ॥ १३
मन्ये दीर्घा भविष्यन्ति रात्रयो मम जाग्रतः । मन्दाकिनीं जनस्थानमिमं प्रस्रवणं गिरिम् ॥ १४
सर्वाण्यनुचरिष्यामि यदि सीता हि दृश्यते । एते मृगा महावीर्या मामीक्षन्ते मुहुर्मुहुः ॥ १५
वक्तुकामा इव हि मे इङ्गितान्युपलक्षये । तांस्तु दृष्ट्वा नरव्याघ्रो राघवः प्रत्युवाच ह ॥ १६
क्व सीतेति निरीक्षन् वै बाष्पसंरुद्धया गिरा[3] । एवमुक्ता नरेन्द्रेण ते मृगाः सहसोत्थिताः ॥ १७
दक्षिणाभिमुखाः सर्वे दर्शयन्तो नभःस्थलम् । मैथिली ह्रियमाणा सा दिशं यामन्वपद्यत ॥ १८
तेन मार्गेण धावन्तो निरीक्षन्ते नराधिपम् । येन मार्गं च भूमिं च निरीक्षन्ते स्म ते मृगाः ॥ १९
पुनश्च [1]मार्गमिच्छन्तो लक्ष्मणेनोपलक्षिताः । तेषां वचनसर्वस्वं लक्षयामास चेङ्गितम् ॥ २०
उवाच लक्ष्मणो ज्येष्ठं धीमान् भ्रातरमार्तवत् । क्व सीतेति त्वया पृष्टा यथेमे सहसोत्थिताः ॥ २१
दर्शयन्ति क्षितिं चैव दक्षिणां च दिशं मृगाः । साधु गच्छावहे देव दिशमेतां हि नैर्ऋतीम् ॥ २२
यदि स्यादागमः कश्चिदार्या वा साथ लक्ष्यते । बाढमित्येव काकुत्स्थः प्रस्थितो दक्षिणां दिशम् ॥ २३
लक्ष्मणानुगतः श्रीमान् वीक्षमाणो वसुंधराम् । एवं संभाषमाणौ तावन्योन्यं भ्रातरावुभौ ॥ २४
वसुंधरायां पतितं पुष्पमार्गमपश्यताम् । तां पुष्पवृष्टिं पतितां दृष्ट्वा रामो महीतले ॥ २५
उवाच लक्ष्मणं वीरो दुःखितो दुःखितं वचः । अभिजानामि पुष्पाणि तानीमानीह लक्ष्मण ॥ २६
अपिनद्धानि वैदेह्या मया दत्तानि कानने । मन्ये सूर्यश्च वायुश्च मेदिनी च यशस्विनी ॥ २७
अभिरक्षन्ति पुष्पाणि प्रकुर्वन्तो मम प्रियम् । एवमुक्त्वा महाबाहुं लक्ष्मणं पुरुषर्षभः ॥ २८

---

1. मार्गमिति । इदं पदं पदवीमित्यर्थकं विवृतं व्याख्यानेपु । मार्गं सीताया अन्वेषणम् इच्छन्तो मृगाः लक्ष्मणेन उपलक्षिताः । दक्षिणस्यां दिशि अन्वेषणे सीताप्रवृत्तिः सुलभेति मृगाणामन्तर्गतं भावं लक्ष्मणो लक्षयामासेत्येवमपि व्याख्यातुं युक्तम् ।

१. न ह्यहं वेद तं देशं यत्र सा जनकात्मजा च. छ.
२. अस्मत् गो.
३. दृशा च. छ.

उवाच रामो धर्मात्मा गिरिं प्रस्रवणाकुलम् । [1]कच्चित् क्षितिभृतां नाथ दृष्टा सर्वाङ्गसुन्दरी ॥ २९
रामा रम्ये वनोद्देशे मया विरहिता त्वया । क्रुद्धोऽब्रवीद्गिरिं तत्र सिंहः क्षुद्रमृगं यथा ॥ ३०
तां हेमवर्णां हेमाभां सीतां दर्शय पर्वत । यावत् सानूनि सर्वाणि न ते विध्वंसयाम्यहम् ॥ ३१
एवमुक्तस्तु रामेण पर्वतो मैथिलीं प्रति । [2]दर्शयन्निव तां[1] सीतां नादर्शयत राघवे ॥ ३२
ततो दाशरथी राम उवाच च शिलोच्चयम् । मम बाणाग्निनिर्दग्धो भस्मीभूतो भविष्यसि ॥ ३३
असेव्यः सर्वतश्चैव निस्तृणद्रुमपल्लवः । इमां वा सरितं चाद्य शोषयिष्यामि लक्ष्मण ॥ ३४
यदि नाख्याति मे सीतामद्य चन्द्रनिभाननाम् । एवं स रुषितो रामो दिधक्षन्निव चक्षुषा ॥ ३५
ददर्श भूमौ निष्क्रान्तं राक्षसस्य पदं महत् । त्रस्ताया रामकाङ्क्षिण्याः प्रधावन्त्या इतस्ततः ॥ ३६
राक्षसेनानुवृत्ताया मैथिल्याश्च पदान्यथ । स समीक्ष्य परिक्रान्तं सीताया राक्षसस्य च ॥ ३७
भग्नं धनुश्च तूणी च विकीर्णं बहुधा रथम् । संभ्रान्तहृदयो रामः शशंस भ्रातरं प्रियम् ॥ ३८
पश्य लक्ष्मण वैदेह्याः शीर्णाः कनकबिन्दवः । भूषणानां हि सौमित्रे माल्यानि विविधानि च ॥ ३९
तप्तबिन्दुनिकाशैश्च चित्रैः क्षतजबिन्दुभिः । आवृतं पश्य सौमित्रे सर्वतो धरणीतलम् ॥ ४०
मन्ये लक्ष्मण वैदेही राक्षसैः कामरूपिभिः । भित्त्वा भित्त्वा विभक्ता वा भक्षिता वा भविष्यति॥
तस्या निमित्तं वैदेह्या द्वयोर्विवदमानयोः । बभूव युद्धं सौमित्रे घोरं राक्षसयोरिह ॥ ४२
मुक्तामणिचितं चेदं तपनीयविभूषितम् । धरण्यां पतितं सौम्य कस्य भग्नं महद्धनुः ॥ ४३
राक्षसानामिदं वत्स शूराणामथवापि वा[4] । तरुणादित्यसंकाशं वैदूर्यगुलिकाचितम् ॥ ४४
विशीर्णं पतितं भूमौ कवचं कस्य काञ्चनम् । छत्रं शतशलाकं च दिव्यमाल्योपशोभितम् ॥ ४५

---

1. कच्चित् क्षितिभृतां नाथेति सर्वेषु कोशेषु उपलभ्यमानं तथैव निवेशितम् । सर्वक्षितिभृतां नाथेत्येव समञ्जसः पाठः । एवमेव हि इदं पद्यं महाकविः श्रीकालिदासो विक्रमोर्वशीयेऽनुवदति पुरूरवसो वचनेन। तथा हि—अस्य पद्यस्य कमपि हृद्गतं कवेर्भावं स्वयं विभाव्य श्रीकालिदासः पद्यमिदं स्वग्रन्थेऽनुवदन् अत्र निगूढं भावम् उन्मीलयितुं पुरूरवसो वचनान्तरमुपक्षिपति 'आः कथं दृष्टेत्याह' इति । इदमत्र आकूतम्—पुरूरवाः किल 'सर्वक्षितिभृतां नाथ' इति पर्वतं संबोध्य मया विरहिता उर्वशी अपि नाम त्वया दृष्टेति पप्रच्छ। तत्र प्रत्युत्तरं किमपि अप्रतिपद्यमानेऽपि पर्वते गुहाविनिस्सृतं प्रश्नसमानरूपं स प्रतिध्वानिमशृणोत्। पर्वतोक्तं प्रतिवचनमिव तं गृह्णंश्च तस्येममर्थं प्रतिबुबुधे। सर्वक्षितिभृतां नाथ सर्वेषां राज्ञाम् अधीश त्वया विरहिता रामा रम्ये वनोद्देशे मया दृष्टेति । तथैवेहापि प्रतिध्वनिश्रवणेन रामस्य प्रतिवचनप्रतीतिः अवश्यं कल्पनीया । एवं हि सति पश्यन्नप्ययं सीतां मह्यं न प्रयच्छतीति पर्वते रामस्य क्रोधः 'तां हेमवर्णाम्' इत्यादिना वर्ण्यमानः साधु संगच्छत इति काव्यज्ञानां संप्रदायः ॥

2. एवं पठित्वा दर्शयन्निव 'ददर्श भूमौ' इत्यादिवक्ष्यमाणलिङ्गद्वारा, नादर्शयत् वाग्राहित्येन साक्षादिति शेष इति व्याख्यातं तिलके । शसन्निवेति पाठे तु प्रतिध्वनिना कथयन्निवेति प्रतिध्वन्यवलम्बनेन पूर्वं दर्शितया रीत्या व्याख्येयम् ।

१. शंसन्निव ततः च. छ.
२. सततं चैव च. छ.
३. आर्याम् च. छ.
४. इदमर्धम् क. ख. च. नास्ति ।

भग्नदण्डमिदं कस्य भूमौ सम्यङ्निपातितम् । काञ्चनोरश्छदाश्चेमे पिशाचवदनाः खराः ॥ ४६
भीमरूपा महाकायाः कस्य वा निहता रणे । दीप्तपावकसंकाशो द्युतिमान् समरध्वजः ॥ ४७
अपविद्धश्च भग्नश्च कस्य सांग्रामिको रथः । रथाक्षमात्रा विशिखास्तपनीयविभूषणाः ॥ ४८
कस्येमेऽभिहता बाणाः प्रकीर्णा घोरकर्मणः । शरावरौ शरैः पूर्णौ विध्वस्तौ पश्य लक्ष्मण ॥ ४९
प्रतोदाभीषुहस्तोऽयं कस्यायं सारथिर्हतः । कस्येमौ पुरुषव्याघ्र शयाते निहतौ युधि ॥ ५०
चामरग्राहिणौ सौम्य सोष्णीषमणिकुण्डलौ । पदवी पुरुषस्यैषा व्यक्तं कस्यापि रक्षसः ॥ ५१
वैरं शतगुणं पश्य ममेदं जीवितान्तकम् । सुघोरहृदयैः सौम्य राक्षसैः कामरूपिभिः ॥ ५२
हृता मृता वा सीता सा भक्षिता वा तपस्विनी । न धर्मस्त्रायते सीतां ह्रियमाणां महावने ॥ ५३
भक्षितायां हि वैदेह्यां हृतायामपि लक्ष्मण । के हि लोकेऽप्रियं कर्तुं शक्ताः सौम्य ममेश्वराः ॥ ५४
कर्तारमपि लोकानां शूरं करुणवेदिनम् । अज्ञानादवमन्येरन् सर्वभूतानि लक्ष्मण ॥ ५५
मृदुं लोकहिते युक्तं दान्तं करुणवेदिनम् । निर्वीर्य इति मन्यन्ते नूनं मां त्रिदशेश्वराः ॥ ५६
मां प्राप्य हि गुणो दोषः संवृत्तः पश्य लक्ष्मण । अद्यैव सर्वभूतानां रक्षसामभवाय च ॥ ५७
संहृत्यैव शशिज्योत्स्नां महान् सूर्य इवोदितः । संहृत्यैव गुणान् सर्वान् मम तेजः प्रकाशये ॥ ५८
नैव यक्षा न गन्धर्वा न पिशाचा न राक्षसाः । किंनरा वा मनुष्या वा सुखं प्राप्स्यन्ति लक्ष्मण॥ ५९
ममास्त्रबाणसंपूर्णमाकाशं पश्य लक्ष्मण । निःसंपातं करिष्यामि ह्यद्य त्रैलोक्यचारिणाम् ॥ ६०
संनिरुद्धग्रहगणमावारितनिशाकरम् । विप्रनष्टानलमरुद्भास्करद्युतिसंवृतम् ॥ ६१
विनिर्मथितशैलाग्रं शुष्यमाणजलाशयम् । ध्वस्तद्रुमलतागुल्मं विप्रणाशितसागरम् ॥ ६२
त्रैलोक्यं तु करिष्यामि संयुक्तं कालधर्मणा । न तां कुशलिनीं सीतां प्रदास्यन्ति यदीश्वराः ॥ ६३
अस्मिन् मुहूर्ते सौमित्रे मम द्रक्ष्यन्ति विक्रमम् । नाकाशमुत्पतिष्यन्ति सर्वभूतानि लक्ष्मण ॥ ६४
मम चापगुणोन्मुक्तैर्बाणजालैर्निरन्तरम् । अर्दितं मम नाराचैर्ध्वस्तभ्रान्तमृगद्विजम् ॥ ६५
समाकुलममर्यादं जगत् पश्याद्य लक्ष्मण । आकर्णपूर्णैरिषुभिर्जीवलोकं दुरासदैः ॥ ६६
करिष्ये मैथिलीहेतोरपिशाचमराक्षसम् । मम रोषप्रयुक्तानां सायकानां बलं सुराः ॥ ६७
द्रक्ष्यन्त्यद्य विमुक्तानाममर्षाद्दूरगामिनाम् । नैव देवा न दैतेया न पिशाचा न राक्षसाः ॥ ६८
भविष्यन्ति मम क्रोधात् त्रैलोक्ये विप्रणाशिते । देवदानवयक्षाणां लोका ये रक्षसामपि ॥ ६९
बहुधा निपतिष्यन्ति बाणौघैः शकलीकृताः । निर्मर्यादानिमाँल्लोकान् करिष्याम्यद्य सायकैः ॥ ७०
हृतां मृतां वा सौमित्रे न दास्यन्ति ममेश्वराः । तथारूपां हि वैदेहीं न दास्यन्ति यदि प्रियाम् ॥ ७१
नाशयामि जगत् सर्वं त्रैलोक्यं सचराचरम् । यावद्दर्शनमस्या वै तापयामि च सायकैः[1] ॥ ७२
इत्युक्त्वा रोषताम्राक्षः स्फुरमाणोष्ठसंपुटः[2] । वल्कलाजिनमाबध्य जटाभारमबन्धयत् ॥ ७३

---

१. इदमर्धम् क. ख. च. छ. नास्ति । २. रामो निष्पीड्य कार्मुकम् च. छ.

तस्य क्रुद्धस्य रामस्य तथाभूतस्य धीमतः । त्रिपुरं जघ्नुषः पूर्वं रुद्रस्येव बभौ तनुः ॥ ७४
लक्ष्मणादथ चादाय रामो निष्पीड्य कार्मुकम्[१] । शरमादाय संदीप्तं घोरमाशीविषोपमम् ॥ ७५
संदधे धनुषि श्रीमान् रामः परपुरंजयः । युगान्ताग्निरिव क्रुद्ध इदं वचनमब्रवीत् ॥ ७६
यथा जरा यथा मृत्युर्यथा कालो यथा विधिः । नित्यं न प्रतिहन्यन्ते सर्वभूतेषु लक्ष्मण ॥ ७७
तथाहं क्रोधसंयुक्तो न निवार्योऽस्म्यसंशयम् ॥

पुरेव मे चारुदतीमनिन्दितां दिशन्ति सीतां यदि नाद्य मैथिलीम् ।
सदेवगन्धार्वमनुष्यपन्नगं जगत् सशैलं परिवर्तयाम्यहम् ॥ ७८

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
अरण्यकाण्डे रामक्रोधो नाम चतुःषष्टितमः सर्गः

---

## पञ्चषष्टितमः सर्गः

### क्रोधसंहारप्रार्थना

तप्यमानं तथा रामं सीताहरणकर्शितम् । लोकानामभवे युक्तं संवर्तकमिवानलम् ॥ १
वीक्षमाणं धनुः सज्यं निःश्वसन्तं पुनः पुनः । दग्धुकामं जगत् सर्वं युगान्ते तु यथा हरम् ॥ २
अदृष्टपूर्वं संक्रुद्धं दृष्ट्वा रामं तु लक्ष्मणः । अब्रवीत्प्राञ्जलिर्वाक्यं मुखेन परिशुष्यता ॥ ३
पुरा भूत्वा मृदुर्दान्तः सर्वभूतहिते रतः । न क्रोधवशमापन्नः प्रकृतिं हातुमर्हसि ॥ ४
चन्द्रे लक्ष्मीः प्रभा सूर्ये गतिर्वायौ भुवि क्षमा । एतच्च नियतं सर्वं त्वयि चानुत्तमं यशः ॥ ५
एकस्य नापराधेन लोकान् हन्तुं त्वमर्हसि[२] । ननु[३] जानामि कस्यायं भग्नः सांग्रामिको रथः ॥ ६
केन वा कस्य वा हेतोः सायुधः सपरिच्छदः । खुरनेमिक्षतश्चायं सिक्तो रुधिरबिन्दुभिः ॥ ७
देशो निर्वृत्तसंग्रामः सुघोरः पार्थिवात्मज । एकस्य तु विमर्दोऽयं न द्वयोर्वदतां वर ॥ ८
न हि वृत्तं हि पश्यामि बलस्य महतः पदम् । नैकस्य तु कृते लोकान् विनाशयितुमर्हसि ॥ ९
युक्तदण्डा हि मृदवः प्रशान्ता वसुधाधिपाः । सदा त्वं सर्वभूतानां शरण्यः परमा गतिः ॥ १०
को नु दारप्रणाशं ते साधु मन्येत राघव । सरितः सागराः शैला देवगन्धर्वदानवाः ॥ ११
नालं ते विप्रियं कर्तुं दीक्षितस्येव साधवः । येन राजन् हृता सीता तमन्वेषितुमर्हसि ॥ १२
मद्द्वितीयो धनुष्पाणिः सहायैः परमर्षिभिः । समुद्रं च विचेष्यामः पर्वतांश्च वनानि च ॥ १३

---

१. वल्कलाजिनमित्यदि कार्मुकमित्यन्तम् क. ख. च. छ. नास्ति ।

कदाचिदपि चोभयोः ॥ सीता पतिव्रता लक्ष्मीर्न वशं वै गामष्यति—इति घ. पुना.

२. अस्यानन्तरम्—अन्यद्वदामि राजेन्द्र निदानं सर्वसम्पदाम् । धर्मो जयति नाधर्मः

३. न तु च. छ

गुहाश्च विविधा घोरा नदीः पद्मवनानि च । देवगन्धर्वलोकांश्च विचेष्यामः समाहिताः ॥ १४
यावन्नाधिगमिष्यामस्तव भार्यापहारिणम् । न चेत् साम्ना प्रदास्यन्ति पत्नीं ते त्रिदशेश्वराः ॥ १५
कोसलेन्द्र ततः पश्चात् प्राप्तकालं करिष्यसि ॥

शीलेन साम्ना विनयेन सीतां नयेन न प्राप्स्यसि चेन्नरेन्द्र ।
ततः समुत्सादय हेमपुङ्खैर्महेन्द्रवज्रप्रतिमैः शरौघैः ॥ १६

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
अरण्यकाण्डे क्रोधसंहारप्रार्थना नाम पञ्चषष्टितमः सर्गः

---

## षट्षष्टितमः सर्गः

### औचित्यप्रबोधनम्

तं तथा शोकसंतप्तं विलपन्तमनाथवत् । मोहेन महताविष्टं परिद्यूनमचेतसम् ॥ १
ततः सौमित्रिराश्वास्य मुहूर्तादिव लक्ष्मणः । रामं संबोधयामास चरणौ चाभिपीडयन् ॥ २
महता तपसा राम महता चापि कर्मणा । राज्ञा दशरथेनासि लब्धोऽमृतमिवामरैः ॥ ३
तव चैव गुणैर्बद्धस्त्वद्वियोगान्महीपतिः । राजा देवत्वमापन्नो भरतस्य यथा श्रुतम् ॥ ४
स्पृशन्त्यनिलवद्राजन् क्षणेन न भवन्ति च । आश्वसिहि नरश्रेष्ठ प्राणिनः कस्य नापदः[1] ॥ ५
यदि दुःखमिदं प्राप्तं काकुत्स्थ न सहिष्यसे । प्राकृतश्चाल्पसत्त्वश्च इतरः कः सहिष्यते ॥ ६
दुःखितो हि भवाँल्लोकांस्तेजसा यदि धक्ष्यते । आर्ताः प्रजा नरव्याघ्र क्व नु यास्यन्ति निर्वृतिम् ॥ ७
लोकस्वभाव एवैष ययातिर्नहुषात्मजः । गतः शक्रेण सालोक्यमनयस्तं समस्पृशत् ॥ ८
महर्षिर्यो वसिष्ठस्तु यः पितुर्नः पुरोहितः । अह्ना पुत्रशतं जज्ञे तथैवास्य पुनर्हतम् ॥ ९
या चेयं जगतां माता देवी लोकनमस्कृता । अस्याश्च चलनं भूमेर्दृश्यते कोसलेश्वर[2] ॥ १०
यौ धर्मौ जगतां नेत्रे[3] यत्र सर्वं प्रतिष्ठितम् । आदित्यचन्द्रौ ग्रहणमभ्युपेतौ महाबलौ ॥ ११
सुमहान्त्यपि भूतानि देवाश्च पुरुषर्षभ । न दैवस्य प्रमुञ्चन्ति सर्वभूतानि देहिनः ॥ १२
शक्रादिष्वपि देवेषु वर्तमानौ नयानयौ । श्रूयेते नरशार्दूल न त्वं व्यथितुमर्हसि ॥ १३
नष्टायामपि वैदेह्यां हृतायामपि राघव । शोचितुं नार्हसे वीर यथान्यः प्राकृतस्तथा ॥ १४
त्वद्विधा न हि शोचन्ति सततं सत्यदर्शिनः । सुमहत्स्वपि कृच्छ्रेषु रामानिर्विण्णदर्शनाः ॥ १५
तत्त्वतो हि नरश्रेष्ठ बुद्ध्या समनुचिन्तय । बुद्ध्या युक्ता महाप्राज्ञा विजानन्ति शुभाशुभे ॥ १६
अदृष्टगुणदोषाणामध्रुवाणां च कर्मणाम् । नान्तरेण क्रियां तेषां फलमिष्टं प्रवर्तते ॥ १७

---

१. इदं पद्यं ख. ग. घ. छ. नास्ति  २. सत्यसंभव इति क्वचित् ।  ३. नेत्रौ क. घ.

त्वमेव हि पुरा राम मामेवं बहुशोऽन्वशाः । अनुशिष्याद्धि को नु त्वामपि साक्षाद्बृहस्पतिः ॥१८
बुद्धिश्च ते महाप्राज्ञ देवैरपि दुरन्वया । शोकेनाभिप्रसुप्तं ते ज्ञानं संबोधयाम्यहम् ॥ १९
दिव्यं च मानुषं च त्वमात्मनश्च पराक्रमम् । इक्ष्वाकुवृषभावेक्ष्य यतस्व द्विषतां वधे॥ २०
किं ते सर्वविनाशेन कृतेन पुरुषर्षभ । तमेव त्वं रिपुं पापं विज्ञायोद्धर्तुमर्हसि ॥ २१

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
अरण्यकाण्डे आंचित्यप्रबोधनं नाम षट्षष्टितमः सर्गः

---

## सप्तषष्टितमः सर्गः

### गृध्रराजदर्शनम्

पूर्वजोऽप्युक्तमात्रस्तु लक्ष्मणेन सुभाषितम् । सारग्राही महासारं प्रतिजग्राह राघवः ॥ १
संनिगृह्य महाबाहुः प्रवृद्धं रोषमात्मनः । अवष्टभ्य धनुश्चित्रं रामो लक्ष्मणमब्रवीत् ॥ २
किं करिष्यावहे वत्स क्व वा गच्छाव लक्ष्मण । केनोपायेन पश्याव सीतामिति विचिन्तय ॥ ३
तं तथा परितापार्तं लक्ष्मणो राममब्रवीत् । इदमेव जनस्थानं त्वमन्वेषितुमर्हसि ॥ ४
राक्षसैर्बहुभिः कीर्णं नानाद्रुमलतायुतम् । सन्तीह गिरिदुर्गाणि निर्दराः कन्दराणि च ॥ ५
गुहाश्च विविधा घोरा नानामृगगणाकुलाः । आवासाः किंनराणां च गन्धर्वभवनानि च ॥ ६
तानि युक्तो मया सार्धं समन्वेषितुमर्हसि । त्वद्विधा बुद्धिसंपन्ना महात्मानो नरर्षभाः ॥ ७
आपत्सु न प्रकम्पन्ते वायुवेगैरिवाचलाः । इत्युक्तस्तद्वनं सर्वं विचचार सलक्ष्मणः ॥ ८
क्रुद्धो रामः शरं घोरं संधाय धनुषि क्षुरम् । ततः पर्वतकूटाभं महाभागं द्विजोत्तमम् ॥ ९
ददर्श पतितं भूमौ क्षतजार्द्रं जटायुषम् । तं दृष्ट्वा गिरिशृङ्गाभं रामो लक्ष्मणमब्रवीत् ॥ १०
अनेन सीता वैदेही भक्षिता नात्र संशयः । गृध्ररूपमिदं व्यक्तं रक्षो भ्रमति काननम् ॥ ११
भक्षयित्वा विशालाक्षीमास्ते सीतां यथासुखम् । एनं वधिष्ये दीप्तास्यैर्घोरैर्बाणैरजिह्मगैः ॥ १२
इत्युक्त्वाभ्यपतद्गृध्रं संधाय धनुषि क्षुरम् । क्रुद्धो रामः समुद्रान्तां चालयन्निव मेदिनीम् ॥ १३
तं दीनं दीनया वाचा सफेनं रुधिरं वमन् । अभ्यभाषत पक्षी तु रामं दशरथात्मजम्[1] ॥ १४
यामोषधिमिवायुष्मन्नन्वेषसि महावने । सा देवी मम च प्राणा रावणेनोभयं हृतम् ॥ १५
त्वया विरहिता देवी लक्ष्मणेन च राघव । ह्रियमाणा मया दृष्टा रावणेन बलीयसा ॥ १६
सीतामभ्यवपन्नोऽहं रावणश्च रणे मया । विध्वंसितरथच्छत्रः पातितो धरणीतले ॥ १७
एतदस्य धनुर्भग्नमेते चास्य शरास्तथा । अयमस्य रणे राम भग्नः सांग्रामिको रथः ॥ १८
अयं तु सारथिस्तस्य मत्पक्षनिहतो भुवि । परिश्रान्तस्य मे पक्षौ छित्त्वा खड्गेन रावणः ॥ १९

---

१. अस्यानन्तरम्—मां न मारय भद्रं ते म्रियमाणं स्वकर्मणा इति अधिकं . ङ. म.

सीतामादाय वैदेहीमुत्पपात विहायसम् । रक्षसा निहतं पूर्वं न मां हन्तुं त्वमर्हसि ॥ २०
रामस्तस्य तु विज्ञाय बाष्पपूर्णमुखस्तदा । द्विगुणीकृततापार्तः सीतासक्तां प्रियां कथाम् ॥ २१
श्रुत्वा जटायुषो वाक्यं रामः सौमित्रिणा सह । गृध्रराजं परिष्वज्य परित्यज्य महद्धनुः ॥ २२
निपपातावशो भूमौ रुरोद सहलक्ष्मणः । एकमेकायने दुर्गे निःश्वसन्तं कथंचन ॥ २३
समीक्ष्य दुःखिततरो रामः सौमित्रिमब्रवीत् । राज्याद्भ्रंशो वने वासः सीता नष्टा द्विजो हतः ॥
ईदृशीयं ममालक्ष्मीर्निर्दहेदपि पावकम् । संपूर्णमपि चेदद्य प्रतरेयं महोदधिम् ॥ २५
सोऽपि नूनं ममालक्ष्म्या विशुष्येत् सरितां पतिः । नास्त्यभाग्यतरो लोके मत्तोऽस्मिन् सचराचरे ॥
येनेयं महती प्राप्ता मया व्यसनवागुरा । अयं पितृवयस्यो मे गृध्रराजो जरान्वितः ॥ २७
शेते विनिहतो भूमौ मम भाग्यविपर्ययात् । इत्येवमुक्त्वा बहुशो राघवः सहलक्ष्मणः ॥ २८
जटायुषं च पस्पर्श पितृस्नेहं विदर्शयन् ॥

निकृत्तपक्षं रुधिरावसिक्तं स गृध्रराजं परिरभ्य रामः ।
क्व मैथिली प्राणसमा ममेति विमुच्य वाचं निपपात भूमौ ॥ २९

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
अरण्यकाण्डे गृध्रराजदर्शनं नाम सप्तषष्टितमः सर्गः

---

## अष्टषष्टितमः सर्गः

जटायुःसत्कारः

रामः संप्रेक्ष्य तं गृध्रं भुवि रौद्रेण पातितम् । सौमित्रिं मित्रसंपन्नमिदं वचनमब्रवीत् ॥ १
ममायं नूनमर्थेषु यतमानो विहङ्गमः । राक्षसेन हतः संख्ये प्राणांस्त्यजति दुस्त्यजान् ॥ २
अतिखिन्नः शरीरेऽस्मिन् प्राणो लक्ष्मण विद्यते । तथा स्वरविहीनोऽयं विक्लवः समुदीक्षते ॥ ३
जटायो यदि शक्नोषि वाक्यं व्याहरितुं पुनः । सीतामाख्याहि भद्रं ते वधमाख्याहि चात्मनः ॥ ४
किंनिमित्तोऽहरत् सीतां रावणस्तस्य किं मया[1] । अपराधं[1] तु यं दृष्ट्वा रावणेन हृता प्रिया ॥ ५
कथं तच्चन्द्रसंकाशं मुखमासीन्मनोहरम् । सीतया कानि चोक्तानि तस्मिन् काले द्विजोत्तम ॥ ६
कथंवीर्यः कथंरूपः किंकर्मा स च राक्षसः । क्व चास्य भवनं तात ब्रूहि मे परिपृच्छतः ॥ ७
तमुदीक्ष्य स धर्मात्मा विलपन्तमनाथवत् । वाचा विक्लवया रामं जटायुरिदमब्रवीत् ॥ ८
हृता सा राक्षसेन्द्रेण रावणेन [3]दुरात्मना । मायामास्थाय विपुलां वातदुर्दिनसंकुलाम् ॥ ९
परिश्रान्तस्य मे तात पक्षौ छित्त्वा स राक्षसः । सीतामादाय वैदेहीं प्रयातो दक्षिणां दिशम् ॥ १०

---

1. किं मयेति, कृतमिति शेषः
१. अपराद्धम् च. छ.
२. तमुदीक्ष्याथ दीनात्मा झ. ञ.
३. विहायसा. झ. ञ.

उपरुध्यन्ति मे प्राणा दृष्टिर्भ्रमति राघव । पश्यामि वृक्षान् सौवर्णानुशीरकृतमूर्धजान् ॥ ११
येन यातो मुहूर्तेन सीतामादाय रावणः । विप्रनष्टं धनं क्षिप्रं तत्स्वामी प्रतिपद्यते ॥ १२
विन्दो नाम मुहूर्तोऽसौ स च काकुत्स्थ नाबुधत् । त्वत्प्रियां जानकीं हृत्वा रावणो राक्षसेश्वरः॥१३
झषवद्बडिशं गृह्य क्षिप्रमेव विनश्यति । न च त्वया व्यथा कार्या जनकस्य सुतां प्रति ॥ १४
वैदेह्या रंस्यसे क्षिप्रं हत्वा तं राक्षसं रणे । असंमूढस्य गृध्रस्य रामं प्रत्यनुभाषतः ॥ १५
आस्यात् सुस्राव रुधिरं म्रियमाणस्य सामिषम् । पुत्रो विश्रवसः साक्षाद्भ्राता वैश्रवणस्य च ॥ १६
इत्युक्त्वा दुर्लभान् प्राणान् मुमोच पतगेश्वरः । ब्रूहि ब्रूहीति रामस्य ब्रुवाणस्य कृताञ्जलेः ॥ १७
त्यक्त्वा शरीरं गृध्रस्य जग्मुः प्राणा विहायसम् । स निक्षिप्य शिरो भूमौ प्रसार्य चरणौ तदा॥१८
विक्षिप्य च शरीरं स्वं पपात धरणीतले । तं गृध्रं प्रेक्ष्य ताम्राक्षं गतासुमचलोपमम् ॥ १९
रामः सुबहुभिर्दुःखैर्दीनः सौमित्रिमब्रवीत् । बहूनि रक्षसां वासे वर्षाणि वसता सुखम्[१] ॥ २०
अनेन दण्डकारण्ये विशीर्णमिह पक्षिणा । अनेकवार्षिको यस्तु चिरकालसमुत्थितः ॥ २१
सोऽयमद्य हतः शेते कालो हि दुरतिक्रमः । पश्य लक्ष्मण गृध्रोऽयमुपकारी हतश्च मे ॥ २२
सीतामभ्यवपन्नो वै रावणेन बलीयसा । गृध्रराज्यं परित्यज्य पितृपैतामहं महत् ॥ २३
मम हेतोरयं प्राणान् मुमोच पतगेश्वरः । सर्वत्र खलु दृश्यन्ते साधवो धर्मचारिणः ॥ २४
शूराः शरण्याः सौमित्रे तिर्यग्योनिगतेष्वपि । सीताहरणजं दुःखं न मे सौम्य तथागतम् ॥ २५
यथा [illegible]नाशे गृध्रस्य मत्कृते च परंतप । राजा दशरथः श्रीमान् यथा मम महायशाः ॥ २६
पूजनीयश्च [illegible] । सौमित्रे हर काष्ठानि निर्मथिष्यामि पावकम् ॥ २७
गृध्रराजं दिधक्षामि मत्कृते निधनं गतम् । नाथं पतगलोकस्य चितामारोपयाम्यहम् ॥ २८
इमं धक्ष्यामि सौमित्रे हतं रौद्रेण रक्षसा[३] । या गतिर्यज्ञशीलानामाहिताग्नेश्च या गतिः ॥ २९
अपरावर्तिनां या च या च भूमिप्रदायिनाम् । मया त्वं समनुज्ञातो गच्छ लोकाननुत्तमान् ॥ ३०
गृध्रराज महासत्त्व संस्कृतश्च मया व्रज । एवमुक्त्वा चितां दीप्तामारोप्य पतगेश्वरम् ॥ ३१
ददाह रामो धर्मात्मा स्वबन्धुमिव दुःखितः । रामोऽथ सहसौमित्रिर्वनं गत्वा स वीर्यवान् ॥ ३२
स्थूलान् हत्वा महारोहीननु तस्तार तं द्विजम् । रोहिमांसानि चोत्कृत्य पेशीकृत्य महायशाः ॥ ३३
शकुनाय ददौ रामो रम्ये हरितशाद्वले । यत्तत् प्रेतस्य मर्त्यस्य कथयन्ति द्विजातयः ॥ ३४
तत् स्वर्गगमनं तस्य पित्र्यं रामो जजाप ह । ततो गोदावरीं गत्वा नदीं नरवरात्मजौ ॥ ३५

---

१. अस्यानन्तरम्—सर्वक्लेशविमुक्तं मां बाहुभ्यां संपरिष्वज—इति घ.

२. अस्यानन्तरम्—पक्षिराजेन वृद्धेन तातमित्रेण नः सुखम्—इति ग.

३. अस्यानन्तरम्—गोदावर्यास्तटे शुभ्रे चितां कुरु महाभुज । एवमुक्त्वा तु सौमित्रिं समालिङ्ग्य जटायुषम् ॥ समुद्धृत्य गतः श्रीमान् गोदावर्यास्तटं प्रति । ततो गत्वा समालिङ्ग्य शुभ्रे कुशसमन्विते ॥ अवतीर्य विनिक्षिप्य मथित्वाग्निं महायशाः । लक्ष्मणेनाहृतैः काष्ठैश्चितां कृत्वा महाभुजः ॥—इति घ.

उदकं चक्रतुस्तस्मै गृध्रराजाय तावुभौ । शास्त्रदृष्टेन विधिना जलं गृध्राय राघवौ ॥ ३६
स्नात्वा तौ गृध्रराजाय उदकं चक्रतुस्तदा ॥

स गृध्रराजः कृतवान् यशस्करं सुदुष्करं कर्म रणे निपातितः ।
महर्षिकल्पेन च संस्कृतस्तदा जगाम पुण्यां गतिमात्मनः शुभाम् ॥ ३७
कृतोदकौ तावपि पक्षिसत्तमे स्थिरां च बुद्धिं प्रणिधाय जग्मतुः ।
प्रवेश्य सीताधिगमे ततो मनो वनं सुरेन्द्राविव विष्णुवासवौ ॥ ३८

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
अरण्यकाण्डे जटायुस्संस्कारो नाम अष्टषष्टितमः सर्गः

---

## एकोनसप्ततितमः सर्गः

### कबन्धग्राहः

कृत्वैवमुदकं तस्मै प्रस्थितौ रामलक्ष्मणौ । अवेक्षन्तौ वने सीतां पश्चिमां जग्मतुर्दिशम् ॥ १
तौ दिशं दक्षिणां गत्वा शरचापासिधारिणौ । अविप्रहतमैक्ष्वाकौ पन्थानं प्रतिजग्मतुः ॥ २
गुल्मैर्वृक्षैश्च बहुभिर्लताभिश्च प्रवेष्टितम् । आवृतं सर्वतो दुर्गं गहनं घोरदर्शनम् ॥ ३
व्यतिक्रम्य तु वेगेन [1]गृहीत्वा दक्षिणां दिशम् । सुभीमं तन्महारण्यं व्यतियातौ महाबलौ ॥ ४
ततः परं जनस्थानात्त्रिक्रोशं गम्य राघवौ । क्रौञ्चारण्यं विविशतुर्गहनं तौ महौजसौ ॥ ५
नानामेघघनप्रख्यं प्रहृष्टमिव सर्वतः । नानावर्णैः शुभैः पुष्पैः मृगपक्षिगणैर्वृतम् ॥ ६
दिदृक्षमाणौ वैदेहीं तद्वनं तौ विचिक्यतुः । तत्र तत्रावतिष्ठन्तौ सीताहरणकर्शितौ ॥ ७
ततः पूर्वेण तौ गत्वा त्रिक्रोशं भ्रातरौ तदा । क्रौञ्चारण्यमतिक्रम्य मतङ्गाश्रममन्तरे ॥ ८
दृष्ट्वा तु तद्वनं घोरं बहुभीममृगद्विजम् । नानासत्त्वसमाकीर्णं सर्वं गहनपादपम् ॥ ९
ददृशाते गिरौ तत्र दरीं दशरथात्मजौ । पातालसमगम्भीरां तमसा नित्यसंवृताम् ॥ १०
आसाद्य तौ नरव्याघ्रौ दर्यास्तस्याविदूरतः । ददृशाते महारूपां राक्षसीं विकृताननाम् ॥ ११
भयदामल्पसत्त्वानां बीभत्सां रौद्रदर्शनाम् । लम्बोदरीं तीक्ष्णदंष्ट्रां करालां परुषत्वचम् ॥ १२
भक्षयन्तीं मृगान् भीमान् विकटां मुक्तमूर्धजाम् । प्रैक्षेतां तौ ततस्तत्र भ्रातरौ रामलक्ष्मणौ ॥ १३
सा समासाद्य तौ वीरौ व्रजन्तं भ्रातुरग्रतः । एहि रंस्यावहेत्युक्त्वा समालम्बत लक्ष्मणम् ॥ १४
उवाच चैनं वचनं सौमित्रिमुपगूह्य सा । अहं त्वयोमुखी नाम लाभस्ते त्वमसि प्रियः ॥ १५
नाथ पर्वतकूटेषु नदीनां पुलिनेषु च । आयुःशेषमिमं वीर त्वं मया सह रंस्यसे ॥ १६

१. व्यालसिंहनिषेवितम् ध. च.

एवमुक्तस्तु कुपितः खड्गमुद्धृत्य लक्ष्मणः । कर्णनासस्तनं चास्या निचकर्तारिसूदनः ॥ १७
कर्णनासे निकृत्ते तु विस्वरं सा विनद्य च । यथागतं प्रदुद्राव राक्षसी भीमदर्शना ॥ १८
तस्यां गतायां गहनं विशन्तौ वनमोजसा । आसेदतुरमित्रघ्नौ भ्रातरौ रामलक्ष्मणौ ॥ १९
लक्ष्मणस्तु महातेजाः सत्त्ववाञ्शीलवाञ्शुचिः । अब्रवीत् प्राञ्जलिर्वाक्यं भ्रातरं दीप्ततेजसम् ॥ २०
स्पन्दते मे दृढं बाहुरुद्विग्नमिव मे मनः । प्रायशश्चाप्यनिष्टानि निमित्तान्युपलक्षये ॥ २१
तस्मात् सज्जीभवार्य त्वं कुरुष्व वचनं हितम् । ममैव हि निमित्तानि सद्यः शंसन्ति संभ्रमम् ॥ २२
एष वञ्चुलको नाम पक्षी परमदारुणः । आवयोर्विजयं युद्धे शंसन्निव विनर्दति ॥ २३
तयोरन्वेषतोरेवं सर्वं तद्वनमोजसा । संजज्ञे विपुलः शब्दः प्रभञ्जन्निव तद्वनम् ॥ २४
संवेष्टितमिवात्यर्थं गगनं मातरिश्वना । वनस्य तस्य शब्दोऽभूद्दिवमापूरयन्निव ॥ २५
तं शब्दं काङ्क्षमाणस्तु रामः कक्षे सहानुजः । ददर्श सुमहाकायं राक्षसं विपुलोरसम् ॥ २६
आसेदतुस्ततस्तत्र तावुभौ प्रमुखे स्थितम् । विवृद्धमशिरोग्रीवं कबन्धमुदरेमुखम् ॥ २७
रोमभिर्निचितैस्तीक्ष्णैर्महागिरिमिवोच्छ्रितम् । नीलमेघनिभं रौद्रं मेघस्तनितनिःस्वनम् ॥ २८
अग्निज्वालानिकाशेन ललाटस्थेन दीप्यता । महापक्ष्मेण पिङ्गेन विपुलेनायतेन च ॥ २९
एकेनोरसि घोरेण नयनेनाशुदर्शिना । माहदंष्ट्रोपपन्नं तं लेलिहानं महामुखम् ॥ ३०
भक्षयन्तं महाघोरानृक्षसिंहमृगद्विपान् । घोरौ भुजौ विकुर्वाणमुभौ योजनमायतौ ॥ ३१
कर[illegible]ं विविधान् गृह्य ऋक्षान् पक्षिगणान् मृगान् । आकर्षन्तं विकर्षन्तमनेकान् मृगयूथपान् ॥
स्थितमावृत्य [illegible] । अथ तौ समभिक्रम्य क्रोशमात्रे ददर्शतुः ॥ ३३
महान्तं दारुणं भीमं कबन्धं भुजसंवृतम् । कबन्धमिव संस्थानादतिघोरप्रदर्शनम् ॥ ३४
स महाबाहुरत्यर्थं प्रसार्य विपुलौ भुजौ । जग्राह सहितावेव राघवौ पीडयन् बलात् ॥ ३५
खड्गिनौ दृढधन्वानौ तिग्मतेजोवपुर्धरौ । भ्रातरौ विवशं प्राप्तौ कृष्यमाणौ महाबलौ ॥ ३६
तत्र धैर्येण शूरस्तु राघवो नैव विव्यथे । बाल्यादनाश्रयत्वाच्च लक्ष्मणस्त्वतिविव्यथे ॥ ३७
उवाच च विपण्णः सन् राघवं राघवानुजः । पश्य मां वीर विवशं राक्षसस्य वशं गतम् ॥
मयैकेन विनिर्मुक्तः परिमुञ्चस्व राघव । मां हि भूतबलिं दत्त्वा पलायस्व यथासुखम् ॥ ३९
अधिगन्तासि वैदेहीमचिरेणेति मे मतिः । प्रतिलभ्य च काकुत्स्थ पितृपैतामहीं महीम् ॥ ४०
तत्र मां राम राज्यस्थः स्मर्तुमर्हसि सर्वदा । लक्ष्मणेनैवमुक्तस्तु रामः सौमित्रिमब्रवीत् ॥ ४१
मा स्म त्रासं कृथा वीर न हि त्वादृग्विषीदति । एतस्मिन्नन्तरे क्रूरो भ्रातरौ रामलक्ष्मणौ ॥ ४२
पप्रच्छ घननिर्घोषः कबन्धो दानवोत्तमः । कौ युवां वृषभस्कन्धौ महाखड्गधनुर्धरौ ॥ ४३
घोरं देशमिमं प्राप्तौ दैवेन मम चाक्षुषौ[1] । वदतं कार्यमिह वां किमर्थं चागतौ युवाम् ॥ ४४

---

१. मम भक्षावुपस्थितौ च. छ.

इमं देशमनुप्राप्तौ क्षुधार्तस्येह तिष्ठतः । सबाणचापखड्गौ च तीक्ष्णशृङ्गाविवर्षभौ ॥ ४५
ममास्यमनुसंप्राप्तौ दुर्लभं जीवितं पुनः । तस्य तद्वचनं श्रुत्वा कबन्धस्य दुरात्मनः ॥ ४६
उवाच लक्ष्मणं रामो मुखेन परिशुष्यता । कृच्छ्रात् कृच्छ्रतरं प्राप्य दारुणं सत्यविक्रम ॥ ४७
व्यसनं जीवितान्ताय प्राप्तमप्राप्य तां प्रियाम् । कालस्य सुमहद्वीर्यं सर्वभूतेषु लक्ष्मण ॥ ४८
त्वां च मां च नरव्याघ्र व्यसनैः पश्य मोहितौ । नातिभारोऽस्ति दैवस्य सर्वभूतेषु लक्ष्मण ॥ ४९
शूराश्च बलवन्तश्च कृतास्त्राश्च रणाजिरे । कालाभिपन्नाः सीदन्ति यथा वालुकसेतवः ॥ ५०
इति ब्रुवाणो दृढसत्यविक्रमो महायशा दाशरथिः प्रतापवान् ।
अवेक्ष्य सौमित्रिमुदग्रपौरुषं स्थिरां तदा स्वां मतिमात्मनाकरोत् ॥ ५१

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
अरण्यकाण्डे कबन्धग्राहो नाम एकोनसप्ततितमः सर्गः

---

## सप्ततितमः सर्गः

### कबन्धबाहुच्छेदः

तौ तु तत्र स्थितौ दृष्ट्वा भ्रातरौ रामलक्ष्मणौ । बाहुपाशपरिक्षिप्तौ कबन्धो वाक्यमब्रवीत् ॥ १
तिष्ठतः किं नु मां दृष्ट्वा क्षुधार्तं क्षत्रियर्षभौ । आहारार्थं तु संदिष्टौ दैवेन गतचेतसौ ॥ २
तच्छ्रुत्वा लक्ष्मणो वाक्यं प्राप्तकालं हितं तदा । उवाचार्तिं समापन्नो विक्रमे कृतनिश्चयः ॥ ३
त्वां च मां च पुरा तूर्णमादत्ते राक्षसाधमः । तस्मादसिभ्यामस्याशु बाहू छिन्दावहै गुरू ॥ ४
भीषणोऽयं महाकायो राक्षसो भुजविक्रमः । लोकं ह्यतिजितं कृत्वा ह्यावां हन्तुमिहेच्छति ॥ ५
निश्चेष्टानां वधो राजन् कुत्सितो जगतीपतेः[1] । क्रतुमध्योपनीतानां पशूनामिव राघव ॥ ६
एतत् संजल्पितं श्रुत्वा तयोः क्रुद्धस्तु राक्षसः । विदार्यास्यं ततो रौद्रं तौ भक्षयितुमारभत् ॥ ७
ततस्तौ देशकालज्ञौ खड्गाभ्यामेव राघवौ । अच्छिन्दतां सुसंहृष्टौ बाहू तस्यांसदेशतः ॥ ८
दक्षिणो दक्षिणं बाहुमसक्तमसिना ततः । चिच्छेद रामो वेगेन सव्यं वीरस्तु लक्ष्मणः ॥ ९
स पपात महाबाहुश्छिन्नबाहुर्महास्वनः । खं च गां च दिशश्चैव नादयञ्जलदो यथा ॥ १०
स निकृत्तौ भुजौ दृष्ट्वा शोणितौघपरिप्लुतः । दीनः पप्रच्छ तौ वीरौ कौ युवामिति दानवः ॥ ११
इति तस्य ब्रुवाणस्य लक्ष्मणः शुभलक्षणः । शशंस राघवं तस्य कबन्धस्य महाबलः ॥ १२
अयमिक्ष्वाकुदायादो रामो नाम जनैः श्रुतः । अस्यैवावरजं विद्धि भ्रातरं मां च लक्ष्मणम् ॥ १३
मात्रा प्रतिहते राज्ये रामः प्रव्राजितो वनम् । मया सह चरत्येष भार्यया च महद्वनम्[2] ॥ १४

---

१. जगतीपते क, ख. २. इदं पद्यम् क. ख. घ. च. नास्ति

अस्य देवप्रभावस्य वसतो विजने वने । रक्षसापहृता भार्या यामिच्छन्ताविहागतौ ॥ १५
त्वं तु को वा किमर्थं वा कबन्धसदृशो वने । आस्येनोरसि दीप्तेन भग्नजङ्घो विवेष्टसे ॥ १६
एवमुक्तः कबन्धस्तु लक्ष्मणेनोत्तरं वचः । उवाच परमप्रीतस्तदिन्द्रवचनं स्मरन् ॥ १७
स्वागतं वां नरव्याघ्रौ दिष्ट्या पश्यामि वामहम् । दिष्ट्या चेमौ निकृत्तौ मे युवाभ्यां बाहुबन्धनौ ॥
विरूपं यच्च मे रूपं प्राप्तं ह्यविनयाद्यथा । तन्मे शृणु नरव्याघ्र तत्त्वतः शंसतस्तव ॥ १९

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
अरण्यकाण्डे कबन्धबाहुच्छेदो नाम सप्ततितमः सर्गः

---

## एकसप्ततितमः सर्गः

### कबन्धशापाख्यानम्

पुरा राम महाबाहो महाबलपराक्रमम्[१] । रूपमासीन्ममाचिन्त्यं त्रिषु लोकेषु विश्रुतम् ॥ १
यथा सूर्यस्य सोमस्य शक्रस्य च यथा वपुः । सोऽहं रूपमिदं कृत्वा लोकवित्रासनं महत् ॥ २
ऋषीन् वनगतान् राम त्रासयामि ततस्ततः । ततः स्थूलशिरा नाम महर्षिः कोपितो मया ॥ ३
संचिन्वन् विविधं वन्यं रूपेणानेन धर्षितः । तेनाहमुक्तः प्रेक्ष्यैवं घोरशापाभिधायिना ॥ ४
एतदेव नृशंसं ते रूपमस्तु विगर्हितम् । स मया याचितः क्रुद्धः शापस्यान्तो भवेदिति ॥ ५
अभिशापकृतस्येति[1] तेनेदं भाषितं वचः । यदा छित्त्वा भुजौ रामस्त्वां दहेद्विजने वने ॥ ६
तदा त्वं प्राप्स्यसे रूपं स्वमेव विपुलं शुभम् । श्रिया[2] विराजितं पुत्रं दनोस्त्वं[२] विद्धि लक्ष्मण ॥ ७
इन्द्रकोपादिदं रूपं प्राप्तमेवं रणाजिरे । अहं हि तपसोग्रेण पितामहमतोषयम् ॥ ८
दीर्घमायुः स मे प्रादात्ततो मां विभ्रमोऽस्पृशत् । दीर्घमायुर्मया प्राप्तं किं मे शक्रः करिष्यति ॥ ९
इत्येवं बुद्धिमास्थाय रणे शक्रमधर्षयम् । तस्य बाहुप्रमुक्तेन वज्रेण शतपर्वणा ॥ १०
सक्थिनी चैव मूर्धा च शरीरे संप्रवेशितम् । स मया याच्यमानः सन्नानयद्यमसादनम् ॥ ११
पितामहवचः सत्यं तदस्त्विति ममाब्रवीत् । अनाहारः कथं शक्तो भग्नसक्थिशिरोमुखः ॥ १२
वज्रेणाभिहतः कालं सुदीर्घमपि जीवितुम् । एवमुक्तस्तु मे शक्रो बाहू योजनमायतौ ॥ १३
प्रादादास्यं च मे कुक्षौ तीक्ष्णदंष्ट्रमकल्पयत् । सोऽहं भुजाभ्यां दीर्घाभ्यां संक्षिप्यास्मिन् वनेचरान् ॥ १४

---

1. अभिशापकृतस्येति, अभिशापो निन्दनम्, तन्मूलस्य शापस्येति पूर्वेणान्वयः । इतीदं वचस्तेन भाषितमिति योजना ।

2. कस्तावत्त्वमचिन्त्यरूपो यः स्थूलशिरसा एवंरूपः कृतः इति तदाह—श्रियेति ॥ श्रिया, रूपसंपदा विराजितं समृद्धम् इति शापपूर्वावस्थानिर्देशः तादृशं मां दनोः पुत्रं विद्धि । श्रियः श्रीनाम्नो दनोः पुत्रमिति वा । अस्मिन् पक्षे विराजितमित्यत्र रूपसंपदेत्यर्थसिद्धमिति द्रष्टव्यम् ।

१. महाबलपराक्रम च. छ.

२. दनुं त्वम् ति पाठान्तरम् ।

सिंहद्विपमृगव्याघ्रान् भक्षयामि समन्ततः । स तु मामब्रवीदिन्द्रो यदा रामः सलक्ष्मणः ॥ १५
छेत्स्यते समरे बाहू तदा स्वर्गं गमिष्यसि । अनेन वपुषा राम वनेऽस्मिन् राजसत्तम ॥ १६
यद्यत् पश्यामि सर्वस्य ग्रहणं साधु रोचये । अवश्यं ग्रहणं रामो मन्येऽहं समुपैष्यति ॥ १७
इमां बुद्धिं पुरस्कृत्य देहन्यासकृतश्रमः । स त्वं रामोऽसि भद्रं ते नाहमन्येन राघव ॥ १८
शक्यो हन्तुं यथातत्त्वमेवमुक्तं महर्षिणा । अहं हि मतिसांचिव्यं करिष्यामि नरर्षभ ॥ १९
मित्रं चैवोपदेक्ष्यामि युवाभ्यां संस्कृतोऽग्निना । एवमुक्तस्तु धर्मात्मा दनुना तेन राघवः ॥ २०
इदं जगाद वचनं लक्ष्मणस्योपशृण्वतः । रावणेन हृता भार्या मम सीता यशस्विनी ॥ २१
निष्क्रान्तस्य जनस्थानात् सह भ्रात्रा यथासुखम् । नाममात्रं तु जानामि न रूपं तस्य रक्षसः ॥ २२
निवासं वा प्रभावं वा वयं तस्य न विद्महे । शोकार्तानामनाथानामेवं विपरिधावताम् ॥ २३
कारुण्यं सदृशं कर्तुमुपकारेण वर्तताम् । काष्ठान्यादाय शुष्काणि काले भग्नानि कुञ्जरैः ॥ २४
धक्ष्यामस्त्वां वयं वीर श्वभ्रे महति कल्पिते । स त्वं सीतां समाचक्ष्व येन वा यत्र वा हृता ॥ २५
कुरु कल्याणमत्यर्थं यदि जानासि तत्त्वतः । एवमुक्तस्तु रामेण वाक्यं दनुरनुत्तमम् ॥ २६
प्रोवाच कुशलो वक्तुं वक्तारमपि राघवम् । दिव्यमस्ति न मे ज्ञानं नाभिजानामि मैथिलीम् ॥ २७
यस्तां ज्ञास्यति तं वक्ष्ये दग्धः स्वं रूपमास्थितः । अदग्धस्य तु विज्ञातुं शक्तिरस्ति न मे प्रभो ॥ २८
राक्षसं तं महावीर्यं सीता येन हृता तव । विज्ञानं हि मम भ्रष्टं शापदोषेण राघव ॥ २९
स्वकृतेन मया प्राप्तं रूपं लोकविगर्हितम् । किं तु यावन्न यात्यस्तं सविता श्रान्तवाहनः ॥ ३०
तावन्मामवटे क्षिप्त्वा दह राम यथाविधि । दग्धस्त्वयाहमवटे न्यायेन रघुनन्दन ॥ ३१
वक्ष्यामि तमहं वीर यस्तं ज्ञास्यति राक्षसम् । तेन सख्यं च कर्तव्यं न्यायवृत्तेन राघव ॥ ३२
कल्पयिष्यति ते प्रीतः साहाय्यं लघुविक्रमः । न हि तस्यास्त्यविज्ञातं त्रिषु लोकेषु राघव ॥ ३३
सर्वान् परिसृतो लोकान् पुरासौ कारणान्तरे ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
अरण्यकाण्डे कबन्धशापाख्यानं नाम एकसप्ततितमः सर्गः

---

## द्विसप्ततितमः सर्गः

### सीताधिगमोपायः

एवमुक्तौ तु तौ वीरौ कबन्धेन नरेश्वरौ । गिरिप्रदरमासाद्य पावकं विससर्जतुः[1] ॥ १

---

१. अस्य स्थाने—न्यायेन कृत्वा महतीं ज्वलिततेजसौ ॥ बाहू च सुमहाबाहू योजनायतविभ्रतौ । चितां गिरिगुहोपमाम् । ततः कबन्धमारोप्य चितां —इति ख.

लक्ष्मणस्तु महोल्काभिर्ज्वलिताभिः समन्ततः । चितामादीपयामास सा प्रजज्वाल सर्वतः[१] ॥ २
तच्छरीरं कबन्धस्य घृतपिण्डोपमं महत् । मेदसा पच्यमानस्य मन्दं दहति पावकः ॥ ३
स विधूय चितामाशु विधूमोऽग्निरिवोत्थितः । अरजे वाससी बिभ्रन्मालां दिव्यां महाबलः ॥ ४
ततश्चिताया वेगेन भास्वरो विमलाम्बरः । उत्पपाताशु संहृष्टः सर्वप्रत्यङ्गभूषणः ॥ ५
विमाने भास्वरे तिष्ठन् हंसयुक्ते यशस्करे । प्रभया च महातेजा दिशो दश विराजयन् ॥ ६
सोऽन्तरिक्षगतो रामं कबन्धो वाक्यमब्रवीत् । शृणु राघव तत्त्वेन यथा सीतामवाप्स्यसि ॥ ७
राम षड्युक्तयो लोके याभिः सर्वं विमृश्यते । परिमृष्टो दशान्तेन दशाभागेन सेव्यते ॥ ८
दशाभागगतो हीनस्त्वं हि राम सलक्ष्मणः । यत्कृते व्यसनं प्राप्तं त्वया दारप्रधर्षणम् ॥ ९
तदवश्यं त्वया कार्यः स सुहृत् सुहृदां वर । अकृत्वा हि न ते सिद्धिमहं पश्यामि चिन्तयन् ॥१०
श्रूयतां राम वक्ष्यामि सुग्रीवो नाम वानरः । भ्रात्रा निरस्तः क्रुद्धेन वालिना शक्रसूनुना ॥ ११
ऋश्यमूके गिरिवरे पम्पापर्यन्तशोभिते । निवसत्यात्मवान् वीरश्चतुर्भिः सह वानरैः ॥ १२
वानरेन्द्रो महावीर्यस्तेजोवानमितप्रभः । सत्यसन्धो विनीतश्च धृतिमान् मतिमान् महान् ॥ १३
दक्षः प्रगल्भो द्युतिमान् महाबलपराक्रमः । भ्रात्रा विवासितो राम राज्यहेतोर्महाबलः ॥ १४
स ते सहायो मित्रं च सीतायाः परिमार्गणे । भविष्यति हि हे[1] राम मा च शोके मनः कृथाः ॥ १५
भवितव्यं हि यच्चापि न तच्छक्यमिहान्यथा । कर्तुमिक्ष्वाकुशार्दूल कालो हि दुरतिक्रमः ॥ १६
गच्छ शीघ्रमितो राम सुग्रीवं तं महाबलम् । वयस्यं तं कुरु क्षिप्रमितो गत्वाद्य राघव ॥ १७
अद्रोहाय समागम्य दीप्यमाने विभावसौ । स च ते नावमन्तव्यः सुग्रीवो वानराधिपः ॥ १८
कृतज्ञः कामरूपी च सहायार्थी च वीर्यवान् । शक्तौ ह्यद्य युवां कर्तुं कार्यं तस्य चिकीर्षितम् ॥ १९
कृतार्थो वाकृतार्थो वा कृत्यं तव करिष्यति । स ऋक्षरजसः पुत्रः पम्पामटति शङ्कितः ॥ २०
भास्करस्यौरसः पुत्रो वालिना कृतकिल्बिषः । संनिधायायुधं क्षिप्रमृश्यमूकालयं कपिम् ॥ २१
कुरु राघव सत्येन वयस्यं वनचारिणम् । स हि स्थानानि सर्वाणि कार्त्स्न्येन कपिकुञ्जरः ॥ २२
नरमांसाशिनां लोके नैपुण्यादधिगच्छति । न तस्याविदितं लोके किंचिदस्ति हि राघव ॥ २३
यावत् सूर्यः प्रतपति सहस्रांशुररिंदम । स नदीर्विपुलाञ्शैलान् गिरिदुर्गाणि कन्दरान् ॥ २४
अन्वेष्य वानरैः सार्धं पत्नीं तेऽधिगमिष्यति । वानरांश्च महाकायान् प्रेषयिष्यति राघव ॥ २५
दिशो विचेतुं तां सीतां त्वद्वियोगेन शोचतीम् । स ज्ञास्यति वरारोहां निर्मलां रावणालये ॥ २६

1. इदं तिलकानुसारि । मूलकोशेषु उपलभ्यमानं 'ते' इति तु पुनरुक्तम् ।

१. अस्यानन्तरम्—तां प्रेक्ष्य सर्वतो दीप्तां चितां दृढधनुर्धरः । उत्तमयान इदं वाक्यं राघवं लक्ष्मणोऽब्रवीत् ॥ दग्धो जटायुः पूर्वं तु सीतामन्वेषता त्वया ॥ अयं द्वितीयो निर्दग्धस्तृतीयं किं[कं]नु व[ध]क्ष्यसि ॥ महाभ्रशिखरप्रख्यं कबन्धमनलो महान् । अन्तरिक्षं महोल्काभिरावृणोत् स सहस्रशः ॥—इति घ.

स मेरुशृङ्गाग्रगतामनिन्दितां प्रविश्य पातालतलेऽपि वा श्रिताम् ।
प्लवंगमानां प्रवरस्तव प्रियां निहत्य रक्षांसि पुनः प्रदास्यति ॥ २७

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
अरण्यकाण्डे सीताधिगमोपायो नाम द्विसप्ततितमः सर्गः

---

## त्रिसप्ततितमः सर्गः

### ऋश्यमूकमार्गकथनम्

दर्शयित्वा तु रामाय सीतायाः परिमार्गणे । वाक्यमन्वर्थमर्थज्ञः कबन्धः पुनरब्रवीत् ॥ १
एष राम शिवः पन्था यत्रैते पुष्पिता द्रुमाः । प्रतीचीं दिशमाश्रित्य प्रकाशन्ते मनोरमाः ॥ २
जम्बूप्रियालपनसप्लक्षन्यग्रोधतिन्दुकाः । अश्वत्थाः कर्णिकाराश्च चूताश्चान्ये च पादपाः ॥ ३
धन्वना नागवृक्षाश्च तिलका नक्तमालकाः । नीलाशोकाः कदम्बाश्च करवीराश्च पुष्पिताः ॥ ४
अग्निमुख्या अशोकाश्च सुरक्ताः पारिभद्रकाः । तानारुह्याथवा भूमौ पातयित्वा च तान् बलात् ॥५
फलान्यमृतकल्पानि[1] भक्षयन्तौ गमिष्यथः । तदतिक्रम्य काकुत्स्थ वनं पुष्पितपादपम् ॥ ६
नन्दनप्रतिमं चान्यत् कुरवो ह्युत्तरा इव । सर्वकामफला यत्र पादपास्तु मधुस्रवाः ॥ ७
सर्वे च ऋतवस्तत्र वने चैत्ररथे यथा । फलभारानतास्तत्र महाविटपधारिणः ॥ ८
शोभन्ते सर्वतस्तत्र मेघपर्वतसंनिभाः । तानारुह्याथवा भूमौ पातयित्वा यथासुखम् ॥ ९
फलान्यमृतकल्पानि लक्ष्मणस्ते प्रदास्यति । चङ्क्रमन्तौ वरान् देशाञ्शैलाच्छैलं वनाद्वनम् ॥ १०
ततः पुष्करिणीं वीरौ पम्पां नाम गमिष्यथः । अशर्करामविभ्रंशां समतीर्थामशैवलाम् ॥ ११
राम संजातवालूकां कमलोत्पलशालिनीम् । तत्र हंसाः प्लवाः क्रौञ्चाः कुरराश्चैव राघव ॥ १२
वल्गुस्वना निकूजन्ति पम्पासलिलगोचराः । नोद्विजन्ते नरान् दृष्ट्वा वधस्याकोविदाः पुरा ॥ १३
घृतपिण्डोपमान् स्थूलांस्तान् द्विजान् भक्षयिष्यथः । रोहितान् वक्रतुण्डांश्च नडमीनांश्च राघव ॥१४
पम्पायामिषुभिर्मत्स्यांस्तत्र राम वरान् हतान् । निस्त्वक्पक्षानयस्तप्तानकृशानेककण्टकान् ॥ १५
तव भक्त्या समायुक्तो लक्ष्मणः संप्रदास्यति । भृशं ते खादतो मत्स्यान् पम्पायाः पुष्पसंचये ॥ १६
पद्मगन्धि शिवं वारि स्वादुशीतमनामयम् । उद्धृत्य सततान्छिष्टं रौप्यस्फाटिकसंनिभम् ॥ १७
असौ पुष्करपर्णेन लक्ष्मणः पाययिष्यति । स्थूलान् गिरिगुहाशय्यान् वानरान् वनचारिणः ॥ १८
सायाह्ने विचरन् राम दर्शयिष्यति लक्ष्मणः[2] । अपां लोभादुपावृत्तान् वृषभानिव नर्दतः ॥ १९

---

१. फलान्यमृतपुष्पाणि घ. २. इदमर्धम् क, ख, ग, घ. च. छ. नास्ति ।

रूपान्वितांश्च पम्पायां द्रक्ष्यसि त्वं नरोत्तम । सायाह्ने विचरन् राम विटपीमाल्यधारिणः[1] ॥ २०
शीतोदकं च पम्पाया दृष्ट्वा शोकं विहास्यसि । सुमनोभिश्चितास्तत्र तिलका नक्तमालकाः ॥ ॥ २१
उत्पलानि च फुल्लानि पङ्कजानि च राघव । न तानि कश्चिन्माल्यानि तत्रारोपयिता नरः ॥ २२
न च वै म्लानतां यान्ति न च शीर्यन्ति राघव । मतङ्गशिष्यास्तत्रासन्नृषयः सुसमाहिताः ॥ २३
तेषां भाराभितप्तानां वन्यमाहरतां गुरोः । ये प्रपेतुर्महीं तूर्णं शरीरात् स्वेदबिन्दवः ॥ २४
तानि जातानि माल्यानि मुनीनां तपसा तदा । स्वेदबिन्दुसमुत्थानि न विनश्यन्ति राघव ॥ २५
तेषामद्यापि तत्रैव दृश्यते परिचारिणी । श्रमणी शबरी नाम काकुत्स्थ चिरजीविनी ॥ २६
त्वां तु धर्मे स्थिता नित्यं सर्वभूतनमस्कृतम् । दृष्ट्वा देवोपमं राम स्वर्गलोकं गमिष्यति ॥ २७
ततस्तद्राम पम्पायास्तीरमाश्रित्य पश्चिमम् । आश्रमस्थानमतुलं गुह्यं काकुत्स्थ पश्यसि ॥ २८
न तत्राक्रमितुं नागाः शक्नुवन्ति तमाश्रमम् । विविधास्तत्र वै नागा वने तस्मिंश्च पर्वते ॥ २९
ऋषेस्तत्र मतङ्गस्य विधानात्तच्च काननम् । मतङ्गवनमित्येव विश्रुतं रघुनन्दन ॥ ३०
तस्मिन्नन्दनसंकाशे देवारण्योपमे वने । नानाविहगसंकीर्णे रंस्यसे राम निर्वृतः ॥ ३१
ऋश्यमूकश्च पम्पायाः पुरस्तात् पुष्पितद्रुमः । सुदुःखारोहणो नाम शिशुनागाभिरक्षितः[2] ॥ ३२
उदारो ब्रह्मणा चैव पूर्वकाले विनिर्मितः । शयानः पुरुषो राम तस्य शैलस्य मूर्धनि ॥ ३३
यत्स्वप्ने लभते वित्तं तत् प्रबुद्धोऽधिगच्छति । न त्वेनं विषमाचारः पापकर्माधिरोहति ॥ ३४
यस्तु तं विषमाचारः पापकर्माधिरोहति । तत्रैव प्रहरन्त्येनं सुप्तमादाय राक्षसाः ॥ ३५
तत्रापि शिशुनागानामाक्रन्दः श्रूयते महान् । क्रीडतां राम पम्पायां मतङ्गारण्यवासिनाम् ॥ ३६
सिक्ता रुधिरधाराभिः संहृत्य परमद्विपाः । प्रचरन्ति पृथक्कीर्णा मेघवर्णास्तरस्विनः ॥ ३७
ते तत्र पीत्वा पानीयं विमलं शीतमव्ययम् । निर्वृताः संविगाहन्ते वनानि वनगोचराः ॥ ३८
ऋक्षांश्च द्वीपिनश्चैव नीलकोमलकप्रभान् । रुरूनपेतापजयान् दृष्ट्वा शोकं प्रहास्यसि[3] ॥ ३९
राम तस्य तु शैलस्य महती शोभते गुहा । शिलापिधाना काकुत्स्थ दुःखं चास्याः प्रवेशनम् ॥ ४०
तस्या गुहायाः प्राग्द्वारे महाञ्शीतोदको ह्रदः । फलमूलान्वितो रम्यो नानामृगसमावृतः ॥ ४१
तस्यां वसति सुग्रीवश्चतुर्भिः सह वानरैः । कदाचिच्छिखरे तस्य पर्वतस्यावतिष्ठते ॥ ४२
कबन्धस्त्वनुशास्यैवं तावुभौ रामलक्ष्मणौ । स्रग्वी भास्करवर्णाभः खे व्यरोचत वीर्यवान् ॥ ४३
तं तु खस्थं महाभागं कबन्धं रामलक्ष्मणौ । प्रस्थितौ त्वं व्रजस्वेति वाक्यमूचतुरन्तिके ॥ ४४
गम्यतां कार्यसिद्ध्यर्थमिति तावब्रवीत् स च । सुप्रीतौ तावनुज्ञाप्य कबन्धः प्रस्थितस्तदा ॥ ४५

---

1. विटपीमाल्यधारिण इति वानरविशेषणम् । युतम्—इति घ.
विटपीति दीर्घ आर्षः । २. अस्यानन्तरम्—महात्मभिर्महाभागैः स्तोम-
१. विटपीन् माल्यधरिणः च. छ. । मन्त्रैर्द्विजातिभिः—इति क.
अस्यार्धस्यानन्तरम्—पद्मषण्डयुतं स्वादु कूजत्पक्षिगणे- ३. जहिष्यासि गो.

स तत् कबन्धः प्रतिपद्य रूपं वृतः श्रिया भास्करतुल्यदेहः।
निदर्शयन् राममवेक्ष्य खस्थः सख्यं कुरुष्वेति तदाभ्युवाच ॥ ४६

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
अरण्यकाण्डे ऋश्यमूकमार्गकथनं नाम त्रिसप्ततितमः सर्गः

---

## चतुःसप्ततितमः सर्गः

### शबरीस्वर्गप्राप्तिः

तौ कबन्धेन तं मार्गं पम्पाया दर्शितं वने। प्रतस्थतुर्दिशं गृह्य प्रतीचीं नृवरात्मजौ ॥ १
तौ शैलेष्वाचितानेकान्[1] क्षौद्रकल्पफलान् द्रुमान्। वीक्षन्तौ जग्मतुर्द्रष्टुं[2] सुग्रीवं रामलक्ष्मणौ ॥ २
कृत्वा च शैलपृष्ठे तु तौ वासं रामलक्ष्मणौ। पम्पायाः पश्चिमं तीरं राघवावुपतस्थतुः[3] ॥ ३
तौ पुष्करिण्याः पम्पायास्तीरमासाद्य पश्चिमम्। अपश्यतां ततस्तत्र शबर्या रम्यमाश्रमम् ॥ ४
तौ तमाश्रममासाद्य द्रुमैर्बहुभिरावृतम्। सुरम्यमभिवीक्षन्तौ शबरीमभ्युपेयतुः ॥ ५
तौ च दृष्ट्वा तदा सिद्धा समुत्थाय कृताञ्जलिः। रामस्य पादौ जग्राह लक्ष्मणस्य च धीमतः ॥ ६
पाद्यमाचमनीयं च सर्वं प्रादाद्यथाविधि। तामुवाच ततो रामः श्रमणीं संशितव्रताम् ॥ ७
कच्चित्ते निर्जिता विघ्ना कच्चित्ते वर्धते तपः। कच्चित्ते नियतः क्रोध आहारश्च तपोधने ॥ ८
कच्चित्ते नियमाः प्राप्ताः कच्चित्ते मनसः सुखम्। कच्चित्ते गुरुशुश्रूषा सफला चारुभाषिणि ॥ ९
रामेण तापसी पृष्टा सा सिद्धा सिद्धसंमता। शशंस शबरी वृद्धा रामाय प्रत्युपस्थिता ॥ १०
अद्य प्राप्ता तपःसिद्धिस्तव संदर्शनान्मया। अद्य मे सफलं तप्तं गुरवश्च सुपूजिताः ॥ ११
अद्य मे सफलं जन्म स्वर्गश्चैव भविष्यति। त्वयि देववरे राम पूजिते पुरुषर्षभ ॥ १२
चक्षुषा तव सौम्येन पूतास्मि रघुनन्दन। गमिष्याम्यक्षयाँल्लोकांस्त्वत्प्रसादादरिंदम ॥ १३
चित्रकूटं त्वयि प्राप्ते विमानैरतुलप्रभैः। इतस्ते दिवमारूढा यानहं पर्यचारिषम् ॥ १४
तैश्चाहमुक्ता धर्मज्ञैर्महाभागैर्महर्षिभिः। आगमिष्यति ते रामः सुपुण्यमिममाश्रमम् ॥ १५
स ते प्रतिग्रहीतव्यः सौमित्रिसहितोऽतिथिः। तं च दृष्ट्वा वराँल्लोकानक्षयांस्त्वं गमिष्यसि ॥ १६
मया तु विविधं वन्यं संचितं पुरुषर्षभ। तवार्थे पुरुषव्याघ्र पम्पायास्तीरसंभवम् ॥ १७

---

१. आचिन्नैकान्. झ.
२. जग्मतुः झ.
३. अस्यानन्तरम्—एवमुक्ता महाभागैस्तदाहं पुरुषर्षभ—इति क. ख. पुना.

एवमुक्तः स धर्मात्मा शबर्या शबरीमिदम् । राघवः प्राह विज्ञाने तां नित्यमबहिष्कृताम् ॥ १८
दनोः सकाशात्तत्त्वेन प्रभावं ते महात्मनः । श्रुतं प्रत्यक्षमिच्छामि संद्रष्टुं यदि मन्यसे ॥ १९
एतत्तु वचनं श्रुत्वा रामवक्त्राद्विनिःसृतम् । शबरी दर्शयामास तावुभौ तद्वनं महत् ॥ २०
पश्य मेघघनप्रख्यं मृगपक्षिसमाकुलम् । मतङ्गवनमित्येव विश्रुतं रघुनन्दन ॥ २१
इह ते भावितात्मानो गुरवो मे महावने । जुहवांचक्रिरे [1]देहं मन्त्रवन्मन्त्रपूजितम् ॥ २२
इयं प्रत्यक्स्थली वेदिर्यत्र ते मे सुसत्कृताः । पुष्पोपहारं कुर्वन्ति श्रमादुद्वेपिभिः करैः ॥ २३
तेषां तपःप्रभावेण पश्याद्यापि रघूद्वह । द्योतयन्ति दिशः सर्वाः श्रिया वेद्योऽतुलप्रभाः ॥ २४
अशक्नुवद्भिस्तैर्गन्तुमुपवासश्रमालसैः । चिन्तितेऽभ्यागतान् पश्य सहितान् सप्त सागरान् ॥ २५
कृताभिषेकैस्तैर्न्यस्ता वल्कलाः पादपेष्विह । अद्यापि नावशुष्यन्ति प्रदेशे रघुनन्दन ॥ २६
देवकार्याणि कुर्वद्भिर्यानीमानि कृतानि वै । पुष्पैः [2]कुवलयैः सार्धं म्लानत्वं नोपयान्ति वै ॥ २७
कृत्स्नं वनमिदं दृष्टं श्रोतव्यं च श्रुतं त्वया । तदिच्छाम्यभ्यनुज्ञाता त्यक्तुमेतत् कलेबरम् ॥ २८
तेषामिच्छाम्यहं गन्तुं समीपं भावितात्मनाम् । मुनीनामाश्रमो येषामहं च परिचारिणी ॥ २९
धर्मिष्ठं तु वचः श्रुत्वा राघवः सहलक्ष्मणः । प्रहर्षमतुलं लेभे आश्चर्यमिति चाब्रवीत् ॥ ३०
तामुवाच ततो रामः [3]शबरीं संशितव्रताम् । अर्चितोऽहं त्वया भक्त्या गच्छ कामं यथासुखम् ॥ ३१
इत्युक्ता जटिला वृद्धा चीरकृष्णाजिनाम्बरा । तस्मिन् मुहूर्ते शबरी देहं जीर्णं जिहासती ॥ ३२
अनुज्ञाता तु रामेण हुत्वात्मानं हुताशने । ज्वलत्पावकसंकाशा स्वर्गमेव जगाम सा ॥ ३३
दिव्याभरणसंयुक्ता दिव्यमाल्यानुलेपना । दिव्याम्बरधरा तत्र बभूव प्रियदर्शना ॥ ३४
विराजयन्ती तं देशं विद्युत्सौदामनी यथा । यत्र ते सुकृतात्मानो विहरन्ति महर्षयः ॥ ३५
तत्पुण्यं शबरी स्थानं जगामात्मसमाधिना ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
अरण्यकाण्डे शबरीस्वर्गप्राप्तिर्नाम चतुःसप्ततितमः सर्गः

---

## पञ्चसप्ततितमः सर्गः

### पम्पादर्शनम्

दिवं तु तस्यां यातायां शबर्यां स्वेन तेजसा । लक्ष्मणेन सह भ्रात्रा चिन्तयामास राघवः ॥ १

---

१. तीर्थं ज. झ. ञ.
२. किसलयैः झ.
३. श्रमणीं ज. झ. ञ.
४. अस्यानन्तरम्—प्रणम्य शिरसा रामं स्वर्गता शुभ्रभानना—इति—ग.

स चिन्तयित्वा धर्मात्मा प्रभावं तं महात्मनाम्। हितकारिणमेकाग्रं लक्ष्मणं राघवोऽब्रवीत्॥ २
दृष्टोऽयमाश्रमः सौम्य बह्वाश्चर्यः कृतात्मनाम्। विश्वस्तमृगशार्दूलो नानाविहगसेवितः॥ ३
सप्तानां च समुद्राणामेषु तीर्थेषु लक्ष्मण। उपस्पृष्टं च विधिवत् पितरश्चापि तर्पिताः॥ ४
प्रनष्टमशुभं तत्तत् कल्याणं समुपस्थितम्। तेन तत्त्वेन हृष्टं मे मनो लक्ष्मण संप्रति॥ ५
हृदये हि नरव्याघ्र शुभमाविर्भविष्यति। तदागच्छ गमिष्यावः पम्पां तां प्रियदर्शनाम्॥ ६
ऋश्यमूको गिरिर्यत्र नातिदूरे प्रकाशते। यस्मिन् वसति धर्मात्मा सुग्रीवोंऽशुमतः सुतः॥ ७
नित्यं वालिभयत्रस्तश्चतुर्भिः सह वानरैः। अभित्वरे च तं द्रष्टुं सुग्रीवं वानरर्षभम्॥ ८
तदधीनं हि मे सौम्य सीतायाः परिमार्गणम्। एवं ब्रुवाणं तं धीरं रामं सौमित्रिरब्रवीत्॥ ९
गच्छावस्त्वरितं तत्र ममापि त्वरते मनः। आश्रमात्तु ततस्तस्मान्निष्क्रम्य स विशां पतिः॥ १०
आजगाम ततः पम्पां लक्ष्मणेन सह प्रभुः। स ददर्श ततः पुण्यामुदारजनसेविताम्[2]॥ ११
नानाद्रुमलताकीर्णां पम्पां पानीयवाहिनीम्। पद्मैः सौगन्धिकैस्ताम्रां शुक्लां कुमुदमण्डलैः॥ १२
नीलां कुवलयोद्घाटैर्बहुवर्णां कुथामिव। स तामासाद्य वै रामो दूरादुदकवाहिनीम्॥ १३
मतङ्गसरसं नाम ह्रदं समवगाहत। अरविन्दोत्पलवतीं पद्मसौगन्धिकायुताम्॥ १४
पुष्पिताम्रवणोपेतां बर्हिणोद्घुष्टनादिताम्। तिलकैर्बीजपूरैश्च धवैः शुक्लद्रुमैस्तथा॥ १५
पुष्पितैः करवीरैश्च पुंनागैश्च सुपुष्पितैः। मालतीकुन्दगुल्मैश्च भण्डीरैर्निचुलैस्तथा॥ १६
अशोकैः सप्तपर्णैश्च केतकैरतिमुक्तकैः। अन्यैश्च विविधैर्वृक्षैः प्रमदामिव भूषिताम्॥ १७
समीक्षमाणौ पुष्पाढ्यं सर्वतो विपुलद्रुमम्। कोयष्टिकैश्चार्जुनकैः शतपत्रैश्च कीरकैः॥ १८
एतैश्चान्यैश्च विहगैर्नादितं तु वनं महत्। ततो जग्मतुरव्यग्रौ राघवौ सुसमाहितौ॥ १९
तद्वनं चैव सरसः पश्यन्तौ शकुनैर्युतम्। स ददर्श ततः पम्पां शीतवारिनिधिं शुभाम्॥ २०
प्रहृष्टनानाशकुनां पादपैरुपशोभिताम्। स रामो विविधान् वृक्षान् सरांसि विविधानि च॥ २१
पश्यन् कामाभिसंतप्तो जगाम परमं ह्रदम्। पुष्पितोपवनोपेतां सालचम्पकशोभिताम्॥ २२
षट्पदौघसमाविष्टां श्रीमतीमतुलप्रभाम्। स्फटिकोपमतोयाढ्यां श्लक्ष्णवालुकसंयुताम्॥ २३
स तां दृष्ट्वा पुनः पम्पां पद्मसौगन्धिकैर्युताम्। इत्युवाच तदा वाक्यं लक्ष्मणं सत्यविक्रमः॥ २४
अस्यास्तीरे तु पूर्वोक्तः पर्वतो धातुमण्डितः। ऋश्यमूक इति ख्यातः पुण्यः पुष्पितपादपः॥ २५
हरेर्ऋक्षरजोनाम्नः पुत्रस्तस्य महात्मनः। अध्यास्ते तं महावीर्यः सुग्रीव इति विश्रुतः॥ २६
सुग्रीवमभिगच्छ त्वं वानरेन्द्रं नरर्षभ। इत्युवाच पुनर्वाक्यं लक्ष्मणं सत्यविक्रमम्॥ २७
राज्यभ्रष्टेन दीनेन तस्यामासक्तचेतसा। कथं मया विना शक्यं सीतां लक्ष्मण जीवितुम्॥ २८

---

१. भयात् ङ. ञ.  २. उदारजलसेविताम् घ.

इत्येवमुक्त्वा मदनाभिपीडितः स लक्ष्मणं वाक्यमनन्यचेतसम् ।
विवेश पम्पां नलिनीं मनोहरां रघूत्तमः शोकविषादयन्त्रितः ॥ २९

ततो महद्वर्त्म सुदूरसंक्रमः क्रमेण गत्वा प्रतिकूलधन्वनम् ।
ददर्श पम्पां शुभदर्शकाननामनेकनानाविधपक्षिजालकाम् ॥ ३०

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
अरण्यकाण्डे पम्पादर्शनं नाम पञ्चसप्ततितमः सर्गः

---

श्रीमद्वाल्मीकिरामायणे अरण्यकाण्डः संपूर्णः

॥ श्रीः ॥

# ॥ श्रीमद्वाल्मीकिरामायणम् ॥

## ॥ अथ किष्किन्धाकाण्डः ॥

### प्रथमः सर्गः

रामविप्रलम्भावेशः

स तां पुष्करिणीं गत्वा पद्मोत्पलझषाकुलाम् । रामः सौमित्रिसहितो विललापाकुलेन्द्रियः ॥ १

तस्य दृष्ट्वैव तां हर्षादिन्द्रियाणि चकम्पिरे । स कामवशमापन्नः सौमित्रिमिदमब्रवीत् ॥ २

सौमित्रे शोभते पम्पा वैदूर्यविमलोदका । फुल्लपद्मोत्पलवती शोभिता विविधैर्द्रुमैः ॥ ३

सौमित्रे पश्य पम्पायाः काननं शुभदर्शनम् । यत्र राजन्ति शैलाभा द्रुमाः सशिखरा इव ॥ ४

मां तु शोकाभिसंतप्तमाधयः पीडयन्ति वै[1] । भरतस्य च दुःखेन वैदेह्या हरणेन च ॥ ५

शोकार्तस्यापि मे पम्पा शोभते चित्रकानना । व्यवकीर्णा बहुविधैः पुष्पैः शीतोदका शिवा ॥ ६

नलिनैरपि संछन्ना ह्यत्यर्थं शुभदर्शना । सर्पव्यालानुचरिता मृगद्विजसमाकुला ॥ ७

अधिकं प्रतिभात्येतन्नीलपीतं तु शाद्वलम् । द्रुमाणां विविधैः[2] पुष्पैः [1]परिस्तोमैरिवार्पितम्[3] ॥ ८

पुष्पभारसमृद्धानि शिखराणि समन्ततः । लताभिः पुष्पिताग्राभिरुपगूढानि सर्वतः ॥ ९

सुखानिलोऽयं सौमित्रे कालः प्रचुरमन्मथः । गन्धवान् सुरभिर्मासो जातपुष्पफलद्रुमः ॥ १०

पश्य रूपाणि सौमित्रे वनानां पुष्पशालिनाम् । सृजतां पुष्पवर्षाणि तोयं तोयमुचामिव ॥ ११

प्रस्तरेषु च रम्येषु विविधाः काननद्रुमाः । वायुवेगप्रचलिताः पुष्पैरवकिरन्ति गाम् ॥ १२

पतितैः पतमानैश्च पादपस्थैश्च मारुतः । कुसुमैः पश्य सौमित्रे क्रीडन्निव समन्ततः ॥ १३

विक्षिपन् विविधाः शाखा नगानां कुसुमोत्कचाः[4] । मारुतश्चलितस्थानैः षट्पदैरनुगीयते ॥ १४

मत्तकोकिलसंनादैर्नर्तयन्निव पादपान् । शैलकन्दरनिष्क्रान्तः प्रगीत इव[2] चानिलः ॥ १५

तेन विक्षिपतात्यर्थं पवनेन समन्ततः । अमी संसक्तशाखाग्रा ग्रथिता इव पादपाः ॥ १६

स एष सुखसंस्पर्शो वाति चन्दनशीतलः । गन्धमभ्यावहन् पुण्यं श्रमापनयनोऽनिलः ॥ १७

---

1. परिस्तोमाः चित्रकम्बलानि ।
2. प्रगीत इव प्रकर्षेण गातुमारब्ध इव ।

१. माधवः पीडयन्निव च. छ.
२. उच्छ्रितैः ति. पाठान्तरम् ।
३. अस्यानन्तरम् — नानाप्रख्यातकुसुमैश्छन्ना-शुर्भाति लक्ष्मण—इति ख. ग. घ.
४. कुसुमोत्कचाः झ. ञ.

अमी पवनविक्षिप्ता विनदन्तीव पादपाः । षट्पदैरनुकूजद्भिर्वनेषु मधुगन्धिषु ॥ १८
गिरिप्रस्थेषु रम्येषु पुष्पवद्भिर्मनोरमैः । संसक्तशिखरा शैला विराजन्ते महाद्रुमैः ॥ १९
पुष्पसंछन्नशिखरा मारुतोत्क्षेपचञ्चलाः । अमी मधुकरोत्तंसाः प्रगीता इव पादपाः ॥ २०
सुपुष्पितांस्तु पश्येमान् कर्णिकारान् समन्ततः । हाटकप्रतिसंछन्नान्नरान् पीताम्बरानिव ॥ २१
अयं वसन्तः सौमित्रे नानाविहगनादितः । सीतया विप्रहीणस्य शोकसंदीपनो मम ॥ २२
मां हि शोकसमाक्रान्तं संतापयति मन्मथः । हृष्टः प्रवदमानश्च मामाह्वयति कोकिलः ॥ २३
एष दात्यूहको हृष्टो रम्ये मां वननिर्झरे । प्रणदन् मन्मथाविष्टं शोचयिष्यति लक्ष्मण ॥ २४
श्रुत्वैतस्य पुरा शब्दमाश्रमस्था मम प्रिया । मामाहूय प्रमुदिता परमं प्रत्यनन्दत ॥ २५
एवं विचित्राः पतगा नानारावविराविणः । वृक्षगुल्मलताः पश्य संपतन्ति समन्ततः ॥ २६
विमिश्रा विहगाः पुंभिरात्मव्यूहाभिनन्दिताः । भृङ्गराजप्रमुदिताः सौमित्रे मधुरस्वराः ॥ २७
अस्याः कूले प्रमुदिताः शकुनाः सङ्घशस्त्विह । दात्यूहरतिविक्रन्दैः पुंस्कोकिलरुतैरपि ॥ २८
स्वनन्ति पादपाश्चेमे ममानङ्गप्रदीपनाः । अशोकस्तबकाङ्गारः षट्पदस्वननिःस्वनः ॥ २९
मां हि पल्लवताम्रार्चिर्वसन्ताग्निः प्रधक्ष्यति । न हि तां सूक्ष्मपक्ष्माक्षीं सुकेशीं मृदुभाषिणीम् ॥ ३०
अपश्यतो मे सौमित्रे जीवितेऽस्ति प्रयोजनम् । अयं हि दयितस्तस्याः कालो रुचिरकाननः ॥ ३१
कोकिलाकुलसीमान्तो दयिताया ममानघ । मन्मथायाससंभूतो वसन्तगुणवर्धितः ॥ ३२
अयं मां धक्ष्यति क्षिप्रं शोकाग्निर्नचिरादिव । अपश्यतस्तां दयितां पश्यतो रुचिरद्रुमान् ॥ ३३
ममायमात्मप्रभवो भूयस्त्वमुपयास्यति । अदृश्यमाना वैदेही शोकं वर्धयतीह मे ॥ ३४
दृश्यमानो वसन्तश्च स्वेदसंसर्गदूषकः । मां हि सा मृगशावाक्षी चिन्ताशोकबलात्कृतम् ॥ ३५
संतापयति सौमित्रे क्रूरश्चैत्रो वनानिलः । अमी मयूराः शोभन्ते प्रनृत्यन्तस्ततस्ततः ॥ ३६
स्वैः पक्षैः पवनोद्धूतैर्गवाक्षैः स्फाटिकैरिव । शिखिनीभिः परिवृतास्त एते मदमूर्छिताः ॥ ३७
मन्मथाभिपरीतस्य मम मन्मथवर्धनाः । पश्य लक्ष्मण नृत्यन्तं मयूरमुपनृत्यति ॥ ३८
शिखिनी मन्मथार्तैषा भर्तारं गिरिसानुषु । तामेव मनसा रामां मयूरोऽप्युपधावति ॥ ३९
वितत्य रुचिरौ पक्षौ रुतैरुपहसन्निव । मयूरस्य वने नूनं रक्षसा न हृता प्रिया ॥ ४०
तस्मान्नृत्यति रम्येषु वनेषु सह कान्तया । मम त्वयं विना वासः पुष्पमासे सुदुःसहः ॥ ४१
पश्य लक्ष्मण संरागं तिर्यग्योनिगतेष्वपि । यदेषा शिखिनी कामाद्भर्तारमभिवर्तते[२] ॥ ४२
ममाप्येवं विशालाक्षी जानकी जातसंभ्रमा । मदनेनाभिवर्तेत यदि नापहृता भवेत् ॥ ४३
पश्य लक्ष्मण पुष्पाणि निष्फलानि भवन्ति मे । पुष्पभारसमृद्धानां वनानां शिशिरात्यये ॥ ४४
रुचिराण्यपि पुष्पाणि पादपानामतिश्रिया । निष्फलानि महीं यान्ति समं मधुकरोत्करैः ॥ ४५

---

१. षटपदैरनुकूजन्तः च. छ.  २. रमतेऽन्तिके च. छ.

नदन्ति कामं मुदिताः शकुनाः सङ्घशः कलम् । आह्वयन्त इवान्योन्यं कामोन्मादकरा मम ॥ ४६
वसन्तो यदि तत्रापि यत्र मे वसति प्रिया । नूनं परवशा सीता सापि शोचत्यहं यथा ॥ ४७
नूनं न तु वसन्तोऽयं देशं स्पृशति यत्र सा । कथं ह्यसितपद्माक्षी वर्तयेत् सा मया विना ॥ ४८
अथवा वर्तते तत्र वसन्तो यत्र मे प्रिया । किं करिष्यति सुश्रोणी सा तु निर्भर्त्सिता परैः ॥ ४९
श्यामा पद्मपलाशाक्षी मृदुपूर्वाभिभाषिणी । नूनं वसन्तमासाद्य परित्यक्ष्यति जीवितम् ॥ ५०
दृढं हि हृदये बुद्धिर्मम संप्रति वर्तते । नालं वर्तयितुं सीता साध्वी मद्विरहं गता ॥ ५१
मयि भावो हि वैदेह्यास्तत्त्वतो विनिवेशितः । ममापि भावः सीतायां सर्वथा विनिवेशितः ॥ ५२
एष पुष्पवहो वायुः सुखस्पर्शो हिमावहः । तां विचिन्तयतः कान्तां पावकप्रतिमो मम ॥ ५३
सदा सुखमहं मन्ये यं पुरा सह सीतया । मारुतः स विना सीतां शोकं वर्धयते मम ॥ ५४
तां विना स विहंगोऽसौ पक्षी प्रणदितस्तदा[1] । वायसः पादपगतः प्रहृष्टमभिनर्दति ॥ ५५
एष वै तत्र वैदेह्या विहगः प्रतिहारकः । पक्षी मां तु विशालाक्ष्याः समीपमुपनेष्यति ॥ ५६
शृणु लक्ष्मण संनादं वने मदविवर्धनम् । पुष्पिताग्रेषु वृक्षेषु द्विजानामुपकूजताम् ॥ ५७
विक्षिप्तां पवनेनैतामसौ तिलकमञ्जरीम् । षट्पदः सहसाभ्येति मदोद्धूतामिव प्रियाम् ॥ ५८
कामिनामयमत्यन्तमशोकः शोकवर्धनः । स्तबकैः पवनोत्क्षिप्तैस्तर्जयन्निव मां स्थितः ॥ ५९
अमी लक्ष्मण दृश्यन्ते चूताः कुसुमशालिनः । विभ्रमोत्सिक्तमनसः साङ्गरागा नरा इव ॥ ६०
सौमित्रे पश्य पम्पायाश्चित्रासु वनराजिषु । किंनरा नरशार्दूल विचरन्ति ततस्ततः ॥ ६१
इमानि शुभगन्धीनि पश्य लक्ष्मण सर्वशः । नलिनानि प्रकाशन्ते जले तरुणसूर्यवत् ॥ ६२
एषा प्रसन्नसलिला पद्मनीलोत्पलायुता । हंसकारण्डवाकीर्णा पम्पा सौगन्धिकान्विता ॥ ६३
जले तरुणसूर्याभैः षट्पदाहतकेसरैः । पङ्कजैः शोभते पम्पा समन्तादभिसंवृता ॥ ६४
चक्रवाकयुता नित्यं चित्रप्रस्थवनान्तरा[१] । मातङ्गमृगयूथैश्च शोभते सलिलार्थिभिः ॥ ६५
पवनाहितवेगाभिरूर्मिभिर्विमलेऽम्भसि । पङ्कजानि विराजन्ते ताड्यमानानि लक्ष्मण ॥ ६६
पद्मपत्रविशालाक्षीं सततं प्रियपङ्कजाम् । अपश्यतो मे वैदेहीं जीवितं नाभिरोचते ॥ ६७
अहो कामस्य वामत्वं यो गतामपि दुर्लभाम् । स्मारयिष्यति कल्याणीं कल्याणतरवादिनीम् ॥ ६८
शक्यो धारयितुं कामो भवेदभ्यागतो मया । यदि भूयो वसन्तो मां न हन्यात् पुष्पितद्रुमः ॥ ६९
यानि स्म रमणीयानि तया सह भवन्ति मे । तान्येवारमणीयानि जायन्ते मे तया विना ॥ ७०
पद्मकोशपलाशानि द्रष्टुं दृष्टिर्हि मन्यते । सीताया नेत्रकोशाभ्यां सदृशानीति लक्ष्मण ॥ ७१

1. अत्र आकाशगतस्य वायसस्य परुषं वाशितम् इत्येकमनिष्टसूचकम् । वृक्षगतस्य तस्यैव सहर्षनर्दनमित्यपरं शुभसूचकं च कीर्तितम् । तदेतद्द्वयमपि उत्तरपद्येन यथाक्रमं पूर्वोत्तरार्धाभ्यां विवियत इति द्रष्टव्यम् ॥ प्रतिहारकः विश्लेषसूचक इत्यर्थः । उपनेष्यति भाविनं संयोगं सूचयतीति भावः ।

१. अस्यानन्तरम्—क्रौञ्चसारससंघुष्टा विचित्रकुसुमोत्करा—इति क.

पद्मकेसरसंसृष्टो वृक्षान्तरविनिःसृतः । निःश्वास इव सीताया वाति वायुर्मनोहरः ॥ ७२
सौमित्रे पश्य पम्पाया दक्षिणे गिरिसानुनि । पुष्पितां कर्णिकारस्य यष्टिं परमशोभनाम् ॥ ७३
अधिकं शैलराजोऽयं धातुभिः सुविभूषितः । विचित्रं सृजते रेणुं वायुवेगविघट्टितम् ॥ ७४
गिरिप्रस्थास्तु सौमित्रे सर्वतः संप्रपुष्पितैः । निष्पत्रैः सर्वतो रम्यैः प्रदीप्ता इव किंशुकैः ॥ ७५
पम्पातीररुहाश्चेमे संसक्ता मधुगन्धिनः । मालतीमल्लिकाषण्डाः करवीराश्च पुष्पिताः ॥ ७६
केतक्यः सिन्धुवाराश्च वासन्त्यश्च सुपुष्पिताः । माधव्यो गन्धपूर्णाश्च कुन्दगुल्माश्च सर्वशः ॥ ७७
चिरिबिल्वा मधूकाश्च वञ्जुला वकुलास्तथा । चम्पकास्तिलकाश्चैव नागवृक्षाः सुपुष्पिताः ॥ ७८
नीपाश्च वरणाश्चैव खर्जूराश्च सुपुष्पिताः । पद्मकाश्चोपशोभन्ते नीलाशोकाश्च पुष्पिताः ॥ ७९
लोध्राश्च गिरिपृष्ठेषु सिंहकेसरपिञ्जराः । अङ्कोलाश्च कुरण्टाश्च पूर्णकाः पारिभद्रकाः ॥ ८०
चूताः पाटलयश्चैव कोविदाराश्च पुष्पिताः । मुचुलिन्दार्जुनाश्चैव दृश्यन्ते गिरिसानुषु ॥ ८१
केतकोद्दालकाश्चैव शिरीषाः शिंशपा धवाः । शाल्मल्यः किंशुकाश्चैव रक्ताः कुरबकास्तथा ॥ ८२
तिनिशा नक्तमालाश्च चन्दनाः स्पन्दनास्तथा । हिन्तालास्तिलकाश्चैव नागवृक्षाश्च पुष्पिताः[1] ॥ ८३
पुष्पितान् पुष्पिताग्राभिर्लताभिः परिवेष्टितान् । द्रुमान् पश्येह सौमित्रे पम्पाया रुचिरान् बहून् ॥ ८४
वातविक्षिप्तविटपान् यथासन्नान् द्रुमानिमान् । लताः समनुवेष्टन्ते मत्ता इव वरस्त्रियः ॥ ८५
पादपात् पादपं गच्छञ्शैलाच्छैलं वनाद्वनम् । वाति नैकरसास्वादसंमोदित इवानिलः ॥ ८६
केचित् पर्याप्तकुसुमाः पादपा मधुगन्धिनः । केचिन्मुकुलसंवीताः श्यामवर्णा इवाबभुः ॥ ८७
इदं मृष्टमिदं स्वादु प्रफुल्लमिदमित्यपि । रागमत्तो मधुकरः कुसुमेष्ववलीयते ॥ ८८
निलीय पुनरुत्पत्य सहसान्यत्र गच्छति । मधुलुब्धो मधुकरः पम्पातीरद्रुमेष्वसौ ॥ ८९
इयं कुसुमसङ्घातैरुपस्तीर्णा सुखाकृता । स्वयं निपतितैर्भूमिः शयनप्रस्तरैरिव ॥ ९०
विविधा विविधैः पुष्पैस्तैरेव नगसानुषु । विशीर्णैः पीतरक्ता हि सौमित्रे प्रस्तराः कृताः ॥ ९१
हिमान्ते पश्य सौमित्रे वृक्षाणां पुष्पसंभवम् । पुष्पमासे हि तरवः सङ्घर्षादिव पुष्पिताः ॥ ९२
आह्वयन्त इवान्योन्यं नगाः षट्पदनादिताः । कुसुमोत्तंसविटपाः शोभन्ते बहु लक्ष्मण ॥ ९३
एष कारण्डवः पक्षी विगाह्य सलिलं शुभम् । रमते कान्तया सार्धं काममुद्दीपयन् मम ॥ ९४
मन्दाकिन्यास्तु यदिदं रूपमेवं मनोहरम् । स्थाने जगति विख्याता गुणास्तस्या मनोरमाः ॥ ९५
यदि दृश्येत सा साध्वी यदि चेह वसेमहि । स्पृहयेयं न शक्राय नायोध्यायै रघूत्तम ॥ ९६
न ह्येवं रमणीयेषु शाद्वलेषु तया सह । रमतो मे भवेच्चिन्ता न स्पृहान्येषु वा भवेत् ॥ ९७
अमी हि विविधैः पुष्पैस्तरवो रुचिरच्छदाः । काननेऽस्मिन् विना कान्तां चित्तमुन्मादयन्ति मे ॥ ९८
पश्य शीतजलां चेमां सौमित्रे पुष्करायुताम् । चक्रवाकानुचरितां कारण्डवनिषेविताम् ॥ ९९
प्लवैः क्रौञ्चैश्च संपूर्णां वराहमृगसेविताम् । अधिकं शोभते पम्पा विकूजद्भिर्विहंगमैः ॥ १००

---

१. इदमर्धम् क. ख. घ. च. छ. नास्ति ।

दीपयन्तीव मे कामं विविधा मुदिता द्विजाः। श्यामां चन्द्रमुखीं स्मृत्वा प्रियां पद्मनिभेक्षणाम् ॥
पश्य सानुषु चित्रेषु मृगीभिः सहितान् मृगान्। मां पुनर्मृगशावाक्ष्या वैदेह्या विरहीकृतम् ॥ १०२
व्यथयन्तीव मे चित्तं संचरन्तस्ततस्ततः। अस्मिन् सानुनि रम्ये हि मत्तद्विजगणायुते ॥ १०३
पश्येयं यदि तां कान्तां ततः स्वस्ति भवेन्मम। जीवेयं खलु सौमित्रे मया सह सुमध्यमा ॥ १०४
सेवते यदि वैदेही पम्पायाः पवनं सुखम्। पद्मसौगन्धिकवहं शिवं शोकविनाशनम् ॥ १०५
धन्या लक्ष्मण सेवन्ते पम्पोपवनमारुतम्। श्यामा पद्मपलाशाक्षी प्रिया विरहिता मया ॥ १०६
कथं धारयति प्राणान् विवशा जनकात्मजा। किं नु वक्ष्यामि राजानं धर्मज्ञं सत्यवादिनम् ॥१०७
सीताया जनकं पृष्टः कुशलं जनसंसदि। या मामनुगता मन्दं पित्रा प्रस्थापितं वनम् ॥ १०८
सीता सत्पथमास्थाय क नु सा वर्तते प्रिया। तया विहीनः कृपणः कथं लक्ष्मण धारये ॥ १०९
या मामपगता राज्याद्भ्रष्टं विगतचेतसम्। तच्चार्वञ्चितपक्ष्माक्षं सुगन्धि शुभमव्रणम् ॥ ११०
अपश्यतो मुखं तस्याः सीदतीव मनो मम। स्मितहास्यान्तरयुतं गुणवन्मधुरं हितम् ॥ १११
वैदेह्या वाक्यमतुलं कदा श्रोष्यामि लक्ष्मण। प्राप्य दुःखं वने श्यामा सा मां मन्मथकर्शितम् ॥
नष्टदुःखेव हृष्टेव साध्वी साध्वभ्यभाषत। किं नु वक्ष्यामि कौसल्यामयोध्यायां नृपात्मज ॥ ११३
क सा स्नुषेति पृच्छन्तीं कथं चातिमनस्विनीम्। गच्छ लक्ष्मण पश्य त्वं भरतं भ्रातृवत्सलम् ॥११४
न ह्यहं जीवितुं शक्तस्तामृते जनकात्मजाम्। इति रामं महात्मानं विलपन्तमनाथवत् ॥ ११५
उवाच लक्ष्मणो भ्राता वचनं युक्तमव्ययम्। संस्तम्भ राम भद्रं ते मा शुचः पुरुषोत्तम ॥ ११६
नेदृशानां मतिर्मन्दा भवत्यकलुषात्मनाम्। स्मृत्वा वियोगजं दुःखं त्यज स्नेहं प्रिये जने ॥ ११७
अतिस्नेहपरिष्वङ्गाद्वर्तिरार्द्रापि दह्यते। यदि गच्छति पातालं ततो ह्यधिकमेव वा ॥ ११८
सर्वथा रावणस्तावन्न भविष्यति राघव। प्रवृत्तिर्लभ्यतां तावत्तस्य पापस्य रक्षसः ॥ ११९
ततो हास्यति वा सीतां निधनं वा गमिष्यति। यदि याति दितेर्गर्भं[1] रावणः सह सीतया ॥ १२०
तत्राप्येनं हनिष्यामि न चेद्दास्यति मैथिलीम्। स्वास्थ्यं भद्रं भजस्वार्य त्यज्यतां कृपणा मतिः ॥
अर्थो हि नष्टकार्यार्थैर्नायत्नेनाधिगम्यते। उत्साहो बलवानार्य नास्त्युत्साहात् परं बलम् ॥ १२२
सोत्साहस्यास्ति लोकेषु न किंचिदपि दुर्लभम्। उत्साहवन्तः पुरुषा नावसीदन्ति कर्मसु ॥ १२३
उत्साहमात्रमाश्रित्य प्रतिलप्स्याम जानकीम्[2]। त्यज्यतां कामवृत्तत्वं शोकं संन्यस्य पृष्ठतः ॥ १२४
महात्मानं कृतात्मानमात्मानं नावबुध्यसे। एवं संबोधितस्तत्र शोकोपहतचेतनः ॥ १२५
न्यस्य शोकं च मोहं च ततो धैर्यमुपागमत्। सोऽभ्यतिक्रामदव्यग्रस्तामचिन्त्यपराक्रमः ॥ १२६
रामः पम्पां सुरुचिरां रम्यां पारिप्लवद्रुमाम् ॥

निरीक्षमाणः सहसा महात्मा सर्वं वनं निर्झरकन्दरांश्च ।
उद्विग्नचेताः सह लक्ष्मणेन विचार्य दुःखोपहतः प्रतस्थे ॥ १२७

---

१. यात्यदितेर्गर्भम् ख. ग. च. छ. २. सीतां प्रतिलभेमहि च. छ.

तं मत्तमातङ्गविलासगामी गच्छन्तमव्यग्रमना महात्मा ।
स लक्ष्मणो राघवमिष्टचेष्टो ररक्ष धर्मेण बलेन चैव ॥ १२८

तावृश्यमूकस्य समीपचारी चरन् ददर्शाद्भुतदर्शनीयौ ।
शाखामृगाणामधिपस्तरस्वी वितत्रसे नैव चिचेष्ट किंचित् ॥ १२९

स तौ महात्मा गजमन्दगामी शाखामृगस्तत्र चिरं चरन्तौ ॥
दृष्ट्वा विषादं परमं जगाम चिन्तापरीतो भयभारमग्नः ॥ १३०

तमाश्रमं पुण्यसुखं शरण्यं सदैव शाखामृगसेवितान्तम् ।
त्रस्ताश्च दृष्ट्वा हरयोऽभिजग्मुर्महौजसौ राघवलक्ष्मणौ तौ ॥ १३१

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
किष्किन्धाकाण्डे रामविप्रलम्भावेशो नाम प्रथमः सर्गः

---

## द्वितीयः सर्गः

### सुग्रीवमन्त्रः

तौ तु दृष्ट्वा महात्मानौ भ्रातरौ रामलक्ष्मणौ । वरायुधधरौ वीरौ सुग्रीवः शङ्कितोऽभवत् ॥ १
उद्विग्नहृदयः सर्वा दिशः समवलोकयन् । न व्यतिष्ठत कस्मिंश्चिद्देशे वानरपुंगवः ॥ २
नैव चक्रे मनः स्थाने वीक्षमाणो महाबलौ । कपेः परमभीतस्य चित्तं व्यवससाद ह ॥ ३
चिन्तयित्वा स धर्मात्मा विमृश्य गुरुलाघवम् । सुग्रीवः परमोद्विग्नः सर्वैरनुचरैः सह ॥ ४
ततः स सचिवेभ्यस्तु सुग्रीवः प्लवगाधिपः । शशंस परमोद्विग्नः पश्यंस्तौ रामलक्ष्मणौ ॥ ५
एतौ वनमिदं दुर्गं वालिप्रणिहितौ ध्रुवम् । छद्मना चीरवसनौ प्रचरन्ताविहागतौ ॥ ६
ततः सुग्रीवसचिवा दृष्ट्वा परमधन्विनौ । जग्मुर्गिरितटात्तस्मादन्यच्छिखरमुत्तमम् ॥ ७
ते क्षिप्रमधिगम्याथ यूथपा यूथपर्षभम् । हरयो वानरश्रेष्ठं परिवार्योपतस्थिरे ॥ ८
एकमेकायनगताः प्लवमाना गिरेर्गिरिम् । प्रकम्पयन्तो वेगेन गिरीणां शिखराण्यपि ॥ ९
ततः शाखामृगाः सर्वे प्लवमाना महाबलाः । बभञ्जुश्च नगांस्तत्र पुष्पितान् दुर्गसंश्रितान् ॥१०
आप्लवन्तो हरिवराः सर्वतस्तं महागिरिम् । मृगमार्जारशार्दूलांस्त्रासयन्तो ययुस्तदा ॥ ११
ततः सुग्रीवसचिवाः पर्वतेन्द्रं समाश्रिताः । संगम्य कपिमुख्येन सर्वे प्राञ्जलयः स्थिताः ॥ १२
ततस्तं भयसंविग्नं वालिकिल्बिषशङ्कितम् । उवाच हनुमान् वाक्यं सुग्रीवं वाक्यकोविदः ॥ १३
संभ्रमस्त्यज्यतामेष सर्वैर्वालिकृते महान् । मलयोऽयं गिरिवरो भयं नेहास्ति वालिनः ॥ १४

यस्मादुद्विग्नचेतास्त्वं प्रद्रुतो हरिपुंगव । तं क्रूरदर्शनं क्रूरं नेह पश्यामि वालिनम् ॥ १५
यस्मात्तव भयं सौम्य पूर्वजात् पापकर्मणः । स नेह वाली दुष्टात्मा न ते पश्याम्यहं भयम् ॥ १६
अहो शाखामृगत्वं ते व्यक्तमेव प्लवंगम । लघुचित्ततयात्मानं न स्थापयसि यो मतौ ॥ १७
बुद्धिविज्ञानसंपन्न इङ्गितैः सर्वमाचर । न ह्यबुद्धिं गतो राजा सर्वभूतानि शास्ति हि ॥ १८
सुग्रीवस्तु शुभं वाक्यं श्रुत्वा सर्वं हनूमतः । ततः शुभतरं वाक्यं हनूमन्तमुवाच ह ॥ १९
दीर्घबाहू विशालाक्षौ शरचापासिधारिणौ । कस्य न स्याद्भयं दृष्ट्वा ह्येतौ सुरसुतोपमौ ॥ २०
वालिप्रणिहितावेतौ शङ्केऽहं पुरुषोत्तमौ । राजानो बहुमित्राश्च विश्वासो नात्र हि क्षमः ॥ २१
अरयश्च मनुष्येण विज्ञेयाश्छन्नचारिणः । विश्वस्तानामविश्वस्ता रन्ध्रेषु प्रहरन्ति हि ॥ २२
कृत्येषु वाली मेधावी राजानो बहुदर्शनाः । भवन्ति परहन्तारस्ते ज्ञेयाः प्राकृतैर्नरैः ॥ २३
तौ त्वया [1]प्राकृतेनेव गत्वा ज्ञेयौ प्लवंगम । इङ्गितानां प्रकारैश्च रूपव्याभाषणेन च ॥ २४
लक्षयस्व तयोर्भावं प्रहृष्टमनसौ यदि । विश्वासयन् प्रशंसाभिरिङ्गितैश्च पुनः पुनः ॥ २५
ममैवाभिमुखं स्थित्वा पृच्छ त्वं हरिपुंगव । प्रयोजनं प्रवेशस्य वनस्यास्य धनुर्धरौ ॥ २६
शुद्धात्मानौ यदि त्वेतौ जानीहि त्वं प्लवंगम । व्याभाषितैर्वा विज्ञेया स्याद्दुष्टादुष्टता तयोः ॥ २७
इत्येवं कपिराजेन संदिष्टो मारुतात्मजः । चकार गमने बुद्धिं यत्र तौ रामलक्ष्मणौ ॥ २८

तथेति संपूज्य वचस्तु तस्य तत् कपेः सुभीतस्य दुरासदस्य च ।
महानुभावो हनुमान् ययौ तदा स यत्र रामोऽतिबलश्च लक्ष्मणः ॥ २९

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
किष्किन्धाकाण्डे सुग्रीवमन्त्रो नाम द्वितीयः सर्गः

---

## तृतीयः सर्गः

### हनूमत्प्रेषणम्

वचो विज्ञाय हनुमान् सुग्रीवस्य महात्मनः । पर्वतादृश्यमूकात्तु पुप्लुवे यत्र राघवौ ॥ १
कपिरूपं परित्यज्य हनुमान् मारुतात्मजः । भिक्षुरूपं ततो भेजे शठबुद्धितया[2] कपिः ॥ २
ततः स हनुमान् वाचा श्लक्ष्णया सुमनोज्ञया । विनीतवदुपागम्य राघवौ प्रणिपत्य च ॥ ३
आबभाषेऽथ तौ वीरौ यथावत् प्रशशंस च । संपूज्य विधिवद्वीरौ हनुमान् मारुतात्मजः ॥ ४

---

1. प्राकृतेन दीनवेषधारिणा ।
2. अविस्रब्धबुद्धितयेत्यर्थः । यद्वा शठबुद्धितयेति, वालिन इत्यादिः । शठबुद्धिर्हि वाली, येन नगरात् प्रभ्रश्य गिरिकन्दरमाश्रितानपि अभियोक्तुमेतौ चारौ प्रेषयति । तत् वेषान्तरच्छन्नयोरनयोर्भिक्षुरूपेण वञ्चनं युक्तमेवेति मन्यमानो वेषान्तरं जग्राहेति भावः ।

उवाच कामतो वाक्यं मृदु सत्यपराक्रमौ । राजर्षिदेवप्रतिमौ तापसौ संशितव्रतौ ॥ ५
देशं कथमिमं प्राप्तौ भवन्तौ वरवर्णिनौ । त्रासयन्तौ मृगगणानन्यांश्च वनचारिणः ॥ ६
पम्पातीररुहान् वृक्षान् वीक्षमाणौ समन्ततः । इमां नदीं शुभजलां शोभयन्तौ [1]तरस्विनौ ॥ ७
धैर्यवन्तौ सुवर्णाभौ कौ युवां चीरवाससौ । निःश्वसन्तौ वरभुजौ पीडयन्ताविमाः प्रजाः ॥ ८
सिंहविप्रेक्षितौ वीरौ सिंहातिबलविक्रमौ । शक्रचापनिभे चापे गृहीत्वा शत्रुसूदनौ ॥ ९
श्रीमन्तौ रूपसंपन्नौ वृषभश्रेष्ठविक्रमौ । हस्तिहस्तोपमभुजौ द्युतिमन्तौ नरर्षभौ ॥ १०
प्रभया पर्वतेन्द्रोऽयं युवयोरवभासितः । राज्यार्हावमरप्रख्यौ कथं देशमिहागतौ ॥ ११
पद्मपत्रेक्षणौ वीरौ जटामण्डलधारिणौ । अन्योन्यसदृशौ वीरौ देवलोकादिवागतौ ॥ १२
यदृच्छयेव संप्राप्तौ चन्द्रसूर्यौ वसुंधराम् । विशालवक्षसौ वीरौ मानुषौ देवरूपिणौ ॥ १३
सिंहस्कन्धौ महोत्साहौ समदाविव गोवृषौ । आयताश्च सुवृत्ताश्च बाहवः परिघोपमाः ॥ १४
सर्वभूषणभूषार्हाः किमर्थं न विभूषिताः । उभौ योग्यावहं मन्ये रक्षितुं पृथिवीमिमाम् ॥ १५
ससागरवनां कृत्स्नां विन्ध्यमेरुविभूषिताम् । इमे च धनुषी चित्रे श्लक्ष्णे चित्रानुलेपने ॥ १६
प्रकाशेते यथेन्द्रस्य वज्रे हेमविभूषिते । संपूर्णा निशितैर्बाणैस्तूणाश्च शुभदर्शनाः ॥ १७
जीवितान्तकरैर्घोरैः श्वसद्भिरिव पन्नगैः । महाप्रमाणौ विस्तीर्णौ तप्तहाटकभूषितौ ॥ १८
खड्गावेतौ विराजेते निर्मुक्ताविव पन्नगौ । [1]एवं मां परिभाषन्तं कस्माद्वै नाभिभाषथः ॥ १९
सुग्रीवो नाम धर्मात्मा कश्चिद्वानरयूथपः । वीरो विनिकृतो भ्रात्रा जगद्भ्रमति दुःखितः ॥ २०
प्राप्तोऽहं प्रेषितस्तेन सुग्रीवेण महात्मना । राज्ञा वानरमुख्यानां हनूमान्नाम वानरः ॥ २१
युवाभ्यां सह धर्मात्मा सुग्रीवः सख्यमिच्छति । तस्य मां सचिवं वित्तं वानरं पवनात्मजम् ॥ २२
भिक्षुरूपप्रतिच्छन्नं सुग्रीवप्रियकाम्यया । ऋश्यमूकादिह प्राप्तं कामगं कामरूपिणम् ॥ २३
एवमुक्त्वा तु हनुमांस्तौ वीरौ रामलक्ष्मणौ । वाक्यज्ञौ वाक्यकुशलः पुनर्नोवाच किंचन ॥ २४
एतच्छ्रुत्वा वचस्तस्य रामो लक्ष्मणमब्रवीत् । प्रहृष्टवदनः श्रीमान् भ्रातरं पार्श्वतः स्थितम् ॥ २५
सचिवोऽयं कपीन्द्रस्य सुग्रीवस्य महात्मनः । तमेव काङ्क्षमाणस्य ममान्तिकमुपागतः ॥ २६
अभिभाषस्व सौमित्रे सुग्रीवसचिवं कपिम् । वाक्यज्ञं मधुरैर्वाक्यैः स्नेहयुक्तमरिंदम ॥ २७
नानृग्वेदविनीतस्य नायजुर्वेदधारिणः । नासामवेदविदुषः शक्यमेवं प्रभाषितुम् ॥ २८
नूनं व्याकरणं कृत्स्नमनेन बहुधा श्रुतम् । बहु व्याहरतानेन न किंचिदपशब्दितम् ॥ २९
न मुखे नेत्रयोर्वापि ललाटे च भ्रुवोस्तथा । अन्येष्वपि च गात्रेषु दोषः संविदितः क्वचित् ॥
अविस्तरमसन्दिग्धमविलम्बितमद्रुतम् । उरःस्थं कण्ठगं वाक्यं वर्तते मध्यमे स्वरे ॥ ३१
संस्कारक्रमसंपन्नामद्रुतामविलम्बिताम् । उच्चारयति कल्याणीं वाचं हृदयहारिणीम् ॥ ३२

---

1. एवं प्रशंसन् स्ववचोभिः तयोराराधितं एवमित्यादिना । चित्तं स्मेरमुखतया ज्ञात्वा कार्यमावेदयितुं पुनरप्याह— 1. तपस्विनौ ङ. च

अनया चित्रया वाचा त्रिस्थानव्यञ्जनस्थया । कस्य नाराध्यते चित्तमुद्यतासेररेरपि ॥ ३३
एवंविधो यस्य दूतो न भवेत् पार्थिवस्य तु । सिध्यन्ति हि कथं तस्य कार्याणां गतयोऽनघ ॥ ३४
एवंगुणगणैर्युक्ता यस्य स्युः कार्यसाधकाः । तस्य सिध्यन्ति सर्वार्था दूतवाक्यप्रचोदिताः ॥ ३५
एवमुक्तस्तु सौमित्रिः सुग्रीवसचिवं कपिम् । अभ्यभाषत वाक्यज्ञो वाक्यज्ञं पवनात्मजम् ॥ ३६
विदिता नौ गुणा विद्वन् सुग्रीवस्य महात्मनः । तमेव चावां मार्गावः सुग्रीवं प्लवगेश्वरम् ॥ ३७
यथा ब्रवीषि हनुमन् सुग्रीववचनादिह । तत्तथा हि करिष्यावो वचनात्तव सत्तम ॥ ३८

तत्तस्य वाक्यं निपुणं निशम्य प्रहृष्टरूपः पवनात्मजः कपिः ।
मनः समाधाय जयोपपत्तौ सख्यं तदा कर्तुमियेष ताभ्याम् ॥ ३९

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायां
किष्किन्धाकाण्डे हनूमत्प्रेषणं नाम तृतीयः सर्गः

---

## चतुर्थः सर्गः

### सुग्रीवसमीपगमनम्

ततः प्रहृष्टो हनुमान् [1]कृत्यवानिति तद्वचः । श्रुत्वा मधुरभावं च[1] सुग्रीवं मनसा गतः ॥ १
भव्यो राज्यागमस्तस्य सुग्रीवस्य महात्मनः । यदयं कृत्यवान् प्राप्तः कृत्यं चैतदुपागतम् ॥ २
ततः परमसंहृष्टो हनुमान् प्लवगर्षभः । प्रत्युवाच ततो वाक्यं रामं वाक्यविशारदः ॥ ३
किमर्थं त्वं वनं घोरं पम्पाकाननमण्डितम् । आगतः सानुजो दुर्गं नानाव्यालमृगायुतम् ॥ ४
तस्य तद्वचनं श्रुत्वा लक्ष्मणो रामचोदितः । आचचक्षे महात्मानं रामं दशरथात्मजम् ॥ ५
राजा दशरथो नाम द्युतिमान् धर्मवत्सलः । चातुर्वर्ण्यं स्वधर्मेण नित्यमेवाभ्यपालयत् ॥ ६
न द्वेष्टा विद्यते तस्य न च स द्वेष्टि कंचन । स च सर्वेषु भूतेषु पितामह इवापरः ॥ ७
अग्निष्टोमादिभिर्यज्ञैरिष्टवानाप्तदक्षिणैः[2] । तस्यायं पूर्वजः पुत्रो रामो नाम जनैः श्रुतः ॥ ८
शरण्यः सर्वभूतानां पितुर्निर्देशपारगः । वीरो दशरथस्यायं पुत्राणां गुणवत्तमः ॥ ९
राजलक्षणसंपन्नः संयुक्तो राजसंपदा । राज्याद्भ्रष्टो वने वस्तुं मया सार्धमिहागतः ॥ १०
भार्यया च महातेजाः सीतयानुगतो वशी । दिनक्षये महातेजाः प्रभयेव दिवाकरः ॥ ११
अहमस्यावरो भ्राता गुणैर्दास्यमुपागतः । कृतज्ञस्य बहुज्ञस्य लक्ष्मणो नाम नामतः ॥ १२

---

1. तद्वचः श्रुत्वा कृत्यवानिति, तमेव काङ्क्षमाणस्येत्यादिना सूचितेन सुग्रीवविधेयेन केनापि कृत्येन तद्वान् राम इति हेतोः प्रहृष्टो मुदित इति वचनात् ।

१. मधुरसंभाषम् च. छ.
२. अस्यानन्तरम्—अयोध्याधिपतिर्वीर इक्ष्वाकूणां महारथः—इति ध.

सुखार्हस्य महार्हस्य सर्वभूतहितात्मनः । ऐश्वर्येण च हीनस्य वनवासाश्रितस्य च ॥ १३
रक्षसापहृता भार्या रहिते कामरूपिणा । तच्च न ज्ञायते रक्षः पत्नी येनास्य सा हृता ॥ १४
दनुर्नाम दितेः पुत्रः शापाद्राक्षसतां गतः । आख्यातस्तेन सुग्रीवः समर्थो वानरर्षभः ॥ १५
स ज्ञास्यति महावीर्यस्तव भार्यापहारिणम् । एवमुक्त्वा दनुः स्वर्गं भ्राजमानो गतः सुखम् ॥ १६
एतत्ते सर्वमाख्यातं याथातथ्येन पृच्छतः । अहं चैव हि रामश्च सुग्रीवं शरणं गतौ ॥ १७
एष दत्त्वा च वित्तानि प्राप्य चानुत्तमं यशः । लोकनाथः पुरा भूत्वा सुग्रीवं नाथमिच्छति ॥ १८
पिता यस्य पुरा[1] ह्यासीच्छरण्यो धर्मवत्सलः । तस्य पुत्रः शरण्यश्च सुग्रीवं शरणं गतः ॥ १९
सर्वलोकस्य धर्मात्मा शरण्यः शरणं पुरा । गुरुर्मे राघवः सोऽयं सुग्रीवं शरणं गतः ॥ २०
यस्य प्रसादे सततं प्रसीदेयुरिमाः प्रजाः । स रामो वानरेन्द्रस्य प्रसादमभिकाङ्क्षते ॥ २१
येन सर्वगुणोपेताः पृथिव्यां सर्वपार्थिवाः । मानिताः सततं राज्ञा सदा दशरथेन वै ॥ २२
तस्यायं पूर्वजः पुत्रस्त्रिषु लोकेषु विश्रुतः । सुग्रीवं वानरेन्द्रं तु रामः शरणमागतः ॥ २३
शोकाभिभूते रामे तु शोकार्ते शरणं गते । कर्तुमर्हति सुग्रीवः प्रसादं हरियूथपः ॥ २४
एवं ब्रुवाणं सौमित्रिं करुणं साश्रुलोचनम् । हनुमान् प्रत्युवाचेदं वाक्यं वाक्यविशारदः ॥ २५
ईदृशा बुद्धिसंपन्ना जितक्रोधा जितेन्द्रियाः । द्रष्टव्या वानरेन्द्रेण दिष्ट्या दर्शनमागताः २६
स हि राज्यात् परिभ्रष्टः कृतवैरश्च वालिना । हृतदारो वने त्यक्तो भ्रात्रा विनिकृतो भृशम् ॥ २७
करिष्यति स साहाय्यं युवयोर्भास्करात्मजः । सुग्रीवः सह चास्माभिः सीतायाः परिमार्गणे ॥ २८
इत्येवमुक्त्वा हनुमाञ्श्लक्ष्णं मधुरया गिरा । बभाषे साधु गच्छेम सुग्रीवमिति राघवम्[2] ॥ २९
एवं ब्रुवाणं धर्मात्मा हनुमन्तं स लक्ष्मणः । प्रतिपूज्य यथान्यायमिदं प्रोवाच राघवम् ॥ ३०
कपिः कथयते हृष्टो यथायं मारुतात्मजः । कृत्यवान् सोऽपि संप्राप्तः कृतकृत्योऽसि राघव ॥ ३१
प्रसन्नमुखवर्णश्च व्यक्तं हृष्टश्च भाषते । नानृतं वक्ष्यते धीरो हनुमान् मारुतात्मजः ॥ ३२
ततः स तु महाप्राज्ञो हनुमान् मारुतात्मजः[3] । जगामादाय तौ वीरौ हरिराजाय राघवौ[4] ॥ ३३
भिक्षुरूपं परित्यज्य वानरं रूपमास्थितः । पृष्ठमारोप्य तौ वीरौ जगाम कपिकुञ्जरः ॥ ३४

स तु विपुलयशाः कपिप्रवीरः पवनसुतः कृतकृत्यवत् प्रहृष्टः ।
गिरिवरमुरुविक्रमः प्रयातः सुशुभमतिः सह रामलक्ष्मणाभ्याम् ॥ ३५

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
किष्किन्धाकाण्डे सुग्रीवसमीपगमनं नाम चतुर्थः सर्गः

---

१. सीता यस्य स्नुषा पुना.
२. इदं पद्यम् घ. नास्ति ।
३. इदमर्धम् ख. नास्ति ।
४. इदमर्धम् क. ख. ग. घ. नास्ति ।

# पञ्चमः सर्गः

## सुग्रीवसख्यम्

ऋश्यमूकात्तु[1] हनुमान् गत्वा तं मलयं गिरिम् । आचचक्षे तदा वीरौ कपिराजाय राघवौ ॥ १
अयं रामो[2] महाप्राज्ञः संप्राप्तो दृढविक्रमः । लक्ष्मणेन सह भ्रात्रा रामोऽयं सत्यविक्रमः ॥ २
इक्ष्वाकूणां कुले जातो रामो दशरथात्मजः । धर्मे च निरतश्चैव पितुर्निर्देशपालकः ॥ ३
राजसूयाश्वमेधैश्च वह्निर्येनाभितर्पितः । दक्षिणाश्च तथोत्सृष्टा गावः शतसहस्रशः ॥ ४
तपसा सत्यवाक्येन वसुधा येन पालिता । स्त्रीहेतोस्तस्य पुत्रोऽयं रामोऽरण्यं समागतः[१] ॥ ५
तस्यास्य वसतोऽरण्ये नियतस्य महात्मनः । रावणेन हृता भार्या स त्वां शरणमागतः ॥ ६
भवता सख्यकामौ तौ भ्रातरौ रामलक्ष्मणौ । प्रतिगृह्यार्चयस्वैतौ पूजनीयतमावुभौ ॥ ७
श्रुत्वा हनुमतो वाक्यं सुग्रीवो हृष्टमानसः । भयं स राघवाद्घोरं प्रजहौ विगतज्वरः ॥ ८
स कृत्वा मानुषं रूपं सुग्रीवः प्लवगर्षभः[२] । दर्शनीयतमो भूत्वा प्रीत्या प्रोवाच राघवम् ॥९
भवान् धर्मविनीतश्च विक्रान्तः सर्ववत्सलः । आख्याता वायुपुत्रेण तत्त्वतो मे भवद्गुणाः ॥ १०
तन्ममैवैष सत्कारो लाभश्चैवोत्तमः प्रभो । यत्त्वमिच्छसि सौहार्दं वानरेण मया सह ॥ ११
रोचते यदि वा सख्यं बाहुरेष प्रसारितः । गृह्यतां पाणिना पाणिर्मर्यादा बध्यतां ध्रुवा ॥ १२
एतत्तु वचनं श्रुत्वा सुग्रीवेण सुभाषितम् । स प्रहृष्टमना हस्तं पीडयामास पाणिना ॥ १३
हृद्यं सौहृदमालम्ब्य पर्यष्वजत पीडितम् । ततो हनूमान् संत्यज्य भिक्षुरूपमरिंदमः ॥ १४
काष्ठयोः स्वेन रूपेण जनयामास पावकम् । दीप्यमानं ततो वह्निं पुष्पैरभ्यर्च्य सत्कृतम् ॥ १५
तयोर्मध्येऽथ सुप्रीतो निदधे सुसमाहितः । ततोऽग्निं दीप्यमानं तौ चक्रतुश्च प्रदक्षिणम् ॥ १६
सुग्रीवो राघवश्चैव वयस्यत्वमुपागतौ । ततः सुप्रीतमनसौ तावुभौ हरिराघवौ ॥ १७
अन्योन्यमभिवीक्षन्तौ न तृप्तिमुपजग्मतुः । त्वं वयस्योऽसि मे हृद्यो ह्येकं दुःखं सुखं च नौ ॥ १८
सुग्रीवं राघवो[3] वाक्यमित्युवाच प्रहृष्टवत् । ततः स पर्णबहुलां छित्त्वा शाखां सुपुष्पिताम् ॥ १९
सालस्यास्तीर्य सुग्रीवो निषसाद सराघवः । लक्ष्मणायाथ संहृष्टो हनुमान् प्लवगर्षभः ॥ २०
शाखां चन्दनवृक्षस्य ददौ परमपुष्पिताम् । ततः प्रहृष्टः सुग्रीवः श्लक्ष्णं मधुरया गिरा ॥ २१
प्रत्युवाच तदा रामं हर्षव्याकुललोचनः । अहं विनिकृतो राम चरामीह भयार्दितः ॥ २२

---

1. ऋश्यमूकादिति । तत्रैव ऋश्यमूक एव राघवौ स्थापयित्वा हनूमान् तत्र सुग्रीवमानेतुं मलयं गिरिं गत्वा आचचक्षे । आख्यानकाले च पुनर्भिक्षुवेषं धृतवानिति द्रष्टव्यम् । तेन 'ततो हनूमान् संत्यज्य भिक्षुरूपम्' इति वक्ष्यमाणमुपपद्यते ।

2. कश्चित्कालं दर्शनसंभाषणमात्रेण रामे कथमपि जातव्यतिषङ्गो हनूमान् संवृत्तः। तन्निमित्ता चास्य वचने रामनामपुनरुक्तिः भक्तिप्रकर्षं रामे तस्य व्यनक्ति ।

१. रामस्त्वां शरणं गतः च छ.

२. भयमित्यादि प्लवगर्षभ इत्यन्तम् पुना. नास्ति ।

३. सुग्रीवो राघवम् च.

हृतभार्यो वने त्रस्तो दुर्गमेतदुपाश्रितः । सोऽहं त्रस्तो वने भीतो वसाम्युद्भ्रान्तचेतनः ॥ २३
वालिना निकृतो भ्रात्रा कृतवैरश्च राघव । वालिनो मे महाभाग भयार्तस्याभयं कुरु ॥ २४
कर्तुमर्हसि काकुत्स्थ भयं मे न भवेद्यथा । एवमुक्तस्तु तेजस्वी धर्मज्ञो धर्मवत्सलः ॥ २५
प्रत्यभाषत काकुत्स्थः सुग्रीवं प्रहसन्निव । उपकारफलं मित्रं विदितं मे महाकपे ॥ २६
वालिनं तं वधिष्यामि तव भार्यापहारिणम् । अमोघाः सूर्यसंकाशा ममैते निशिताः शराः ॥ २७
तस्मिन् वालिनि दुर्वृत्ते निपतिष्यन्ति वेगिताः । कङ्कपत्रप्रतिच्छन्ना महेन्द्राशनिसंनिभाः ॥ २८
तीक्ष्णाग्रा ऋजुपर्वाणः सरोषा भुजगा इव । तमद्य वालिनं पश्य क्रूरैराशीविषोपमैः ॥ २९
शरैर्विनिहतं भूमौ विकीर्णमिव पर्वतम् । स तु तद्वचनं श्रुत्वा राघवस्यात्मनो हितम् ॥ ३०
सुग्रीवः परमप्रीतः सुमहद्वाक्यमब्रवीत् ॥

तव प्रसादेन नृसिंह राघव प्रियां च राज्यं च समाप्नुयामहम् ।
तथा कुरु त्वं नरदेव वैरिणं यथा न हिंस्यात् स पुनर्ममाग्रजम्[1] ॥ ३१
सीताकपीन्द्रक्षणदाचराणां राजीवहेमज्वलनोपमानि ।
सुग्रीवरामप्रणयप्रसङ्गे वामानि नेत्राणि समं स्फुरन्ति ॥ ३२

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायां
किष्किन्धाकाण्डे सुग्रीवसख्यं नाम पञ्चमः सर्गः

---

## षष्ठः सर्गः

### भूषणप्रत्यभिज्ञानम्

पुनरेवाब्रवीत् प्रीतः सुग्रीवो रघुनन्दनम् । अयमाख्याति मे राम सचिवो मन्त्रिसत्तमः ॥ १
हनुमान् यन्निमित्तं त्वं निर्जनं वनमागतः । लक्ष्मणेन सह भ्रात्रा वसतश्च वने तव ॥ २
रक्षसापहृता भार्या मैथिली जनकात्मजा । त्वया वियुक्ता रुदती लक्ष्मणेन च धीमता ॥ ३
अन्तरप्रेप्सुना तेन हत्वा गृध्रं जटायुषम् । भार्यावियोगजं दुःखमचिरात्त्वं विमोक्ष्यसे ॥ ४
अहं तामानयिष्यामि नष्टां वेदश्रुतिं यथा[2] । रसातले वा वर्तन्तीं वर्तन्तीं वा नभःस्थले ॥ ५
अहमानीय दास्यामि तव भार्यामरिंदम । इदं तथ्यं मम वचस्त्वमवेहि च राघव ॥ ६
न शक्या सा जरयितुमपि सेन्द्रैः सुरासुरैः । तव भार्या महाबाहो भक्ष्यं विषकृतं यथा ॥ ७
त्यज शोकं महाबाहो तां कान्तामानयामि ते । अनुमानात्तु जानामि मैथिली सा न संशयः ॥ ८
ह्रियमाणा मया दृष्टा रक्षसा क्रूरकर्मणा । क्रोशन्ती राम रामेति लक्ष्मणेति च विस्वरम् ॥ ९
स्फुरन्ती रावणस्याङ्के पन्नगेन्द्रवधूर्यथा । आत्मनापञ्चमं मां हि दृष्ट्वा शैलतटे स्थितम् ॥ १०

---

१. निहंस्यद्य रिपुं ममाग्रजम् च. २. देवश्रुतीमिव ति. वेदश्रुतीमिव च. छ.



नाहं जानामि केयूरे नाहं जानामि कुण्डले
नूपुरे त्वभिजानामि नित्यं पादाभिवन्दनात् (किष्किन्धाकाण्ड

उत्तरीयं तया त्यक्तं शुभान्याभरणानि च । तान्यस्माभिर्गृहीतानि निहितानि च राघव ।। ११
आनयिष्याम्यहं तानि प्रत्यभिज्ञातुमर्हसि । तमब्रवीत्ततो रामः सुग्रीवं प्रियवादिनम् ।। १२
आनयस्व सखे शीघ्रं किमर्थं प्रविलम्बसे । एवमुक्तस्तु सुग्रीवः शैलस्य गहनां गुहाम् ।। १३
प्रविवेश ततः शीघ्रं राघवप्रियकाम्यया । उत्तरीयं गृहीत्वा तु शुभान्याभरणानि च ।। १४
इदं पश्येति रामाय दर्शयामास वानरः । ततो गृहीत्वा तद्वासः शुभान्याभरणानि च ।। १५
अभवद्बाष्पसंरुद्धो नीहारेणेव चन्द्रमाः । सीतास्नेहप्रवृत्तेन स तु बाष्पेण दूषितः ।। १६
हा प्रियेति रुदन् धैर्यमुत्सृज्य न्यपतत् क्षितौ । हृदि कृत्वा तु बहुशस्तमलंकारमुत्तमम् ।। १७
निशश्वास भृशं सर्पो बिलस्थ इव रोषितः । अविच्छिन्नाश्रुवेगस्तु सौमित्रिं वीक्ष्य पार्श्वतः ।। १८
परिदेवयितुं दीनं रामः समुपचक्रमे । पश्य लक्ष्मण वैदेह्या संत्यक्तं ह्रियमाणया ।। १९
उत्तरीयमिदं भूमौ शरीराद्भूषणानि च । शाद्वलिन्यां ध्रुवं भूम्यां सीतया ह्रियमाणया ।। २०
उत्सृष्टं भूषणमिदं तथारूपं हि दृश्यते । एवमुक्तस्तु रामेण लक्ष्मणो वाक्यमब्रवीत् ।। २१
नाहं[1] जानामि केयूरे नाहं जानामि कुण्डले । नूपुरे त्वभिजानामि नित्यं पादाभिवन्दनात् ।। २२
ततः स राघवो दीनः सुग्रीवमिदमब्रवीत् । ब्रूहि सुग्रीव कं देशं ह्रियन्ती लक्षिता त्वया ।। २३
रक्षसा रौद्ररूपेण मम प्राणैः प्रिया प्रिया । क्व वा वसति तद्रक्षो महद्व्यसनदं मम ।। २४
यन्निमित्तमहं सर्वान्नाशयिष्यामि राक्षसान् । हरता मैथिलीं येन मां च रोषयता भृशम् ।। २५
आत्मनो जीवितान्ताय मृत्युद्वारमपावृतम् ।।

मम दयिततरा हृता वनान्ताद्रजनिचरेण विमथ्य येन सा ।
कथय मम रिपुं त्वमद्य वै प्लवगपते [2]यमसंनिधिं नयामि ।। २६

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
किष्किन्धाकाण्डे भूषणप्रत्यभिज्ञानं नाम षष्ठः सर्गः

---

## सप्तमः सर्गः

### रामसमाश्वासनम्

एवमुक्तस्तु सुग्रीवो रामेणार्तेन वानरः । अब्रवीत् प्राञ्जलिर्वाक्यं सबाष्पं बाष्पगद्गदः ।। १
न जाने निलयं तस्य सर्वथा पापरक्षसः । सामर्थ्यं विक्रमं वापि दौष्कुलेयस्य वा कुलम् ।। २
सत्यं ते प्रतिजानामि त्यज शोकमरिंदम । करिष्यामि तथा यत्नं यथा प्राप्स्यसि मैथिलीम् ।। ३
रावणं सगणं हत्वा परितोष्यात्मपौरुषम् । तथास्मि कर्ता न चिराद्यथा प्रीतो भविष्यसि ।। ४
अलं वैक्लव्यमालम्ब्य धैर्यमात्मगतं स्मर । त्वद्विधानामसदृशमीदृशं विद्धि लाघवम् ।। ५

---

१. नाभिजानामि छ. २. यमसादनं झ. ञ.

मयापि व्यसनं प्राप्तं भार्याहरणजं महत् । न चाहमेवं शोचामि न च धैर्यं परित्यजे ॥ ६
नाहं तामनुशोचामि प्राकृतो वानरोऽपि सन् । महात्मा च विनीतश्च किं पुनर्धृतिमान् भवान् ॥ ७
बाष्पमापतितं धैर्यान्निग्रहीतुं त्वमर्हसि । मर्यादां सत्त्वयुक्तानां धृतिं नोत्स्रष्टुमर्हसि ॥ ८
व्यसने वार्थकृच्छ्रे वा भये वा जीवितान्तके । विमृशन् वै स्वया बुद्धया धृतिमान्नावसीदति ॥ ९
बालिशस्तु नरो नित्यं वैक्लव्यं योऽनुवर्तते । स मज्जत्यवशः शोके भाराक्रान्तेव नौर्जले ॥ १०
एषोऽञ्जलिर्मया बद्धः प्रणयात्त्वां प्रसादये । पौरुषं श्रय शोकस्य नान्तरं दातुमर्हसि ॥ ११
ये शोकमनुवर्तन्ते न तेषां विद्यते सुखम् । तेजश्च क्षीयते तेषां न त्वं शोचितुमर्हसि ॥ १२
शोकेनाभिप्रपन्नस्य जीविते चापि संशयः । स शोकं त्यज राजेन्द्र धैर्यमाश्रय केवलम् ॥ १३
हितं वयस्यभावेन ब्रूमि नोपदिशामि ते । वयस्यतां पूजयन् मे न त्वं शोचितुमर्हसि ॥ १४
मधुरं सान्त्वितस्तेन सुग्रीवेण स राघवः । मुखमश्रुपरिक्लिन्नं वस्त्रान्तेन प्रमार्जयन् ॥ १५
प्रकृतिस्थस्तु काकुत्स्थः सुग्रीववचनात् प्रभुः । संपरिष्वज्य सुग्रीवमिदं वचनमब्रवीत् ॥ १६
कर्तव्यं यद्वयस्येन स्निग्धेन च हितेन च । अनुरूपं च युक्तं च कृतं सुग्रीव तत्त्वया ॥ १७
एष च प्रकृतिस्थोऽहमनुनीतस्त्वया सखे । दुर्लभो हीदृशो बन्धुरस्मिन् काले विशेषतः ॥ १८
किं तु यत्नस्त्वया कार्यो मैथिल्याः परिमार्गणे । राक्षसस्य च रौद्रस्य रावणस्य दुरात्मनः ॥ १९
मया च यदनुष्ठेयं विस्रब्धेन तदुच्यताम् । वर्षास्विव च सुक्षेत्रे सुर्वं संपद्यते मयि ॥ २०
मया च यदिदं वाक्यमभिमानात् समीरितम् । तत्त्वया हरिशार्दूल तत्त्वमित्युपधार्यताम् ॥ २१
अनृतं नोक्तपूर्वं मे न च वक्ष्ये कदाचन । एतत्ते प्रतिजानामि सत्येनैव शपामि ते ॥ २२
ततः प्रहृष्टः सुग्रीवो वानरैः सचिवैः सह । राघवस्य वचः श्रुत्वा प्रतिज्ञातं विशेषतः ॥ २३
एवमेकान्तसंपृक्तौ ततस्तौ नरवानरौ । उभावन्योन्यसदृशं सुखं दुःखं प्रभाषताम् ॥ २४

महानुभावस्य वचो निशम्य हरिर्नराणामृषभस्य तस्य ।
कृतं स मेने हरिवीरमुख्यस्तदा स्वकार्यं हृदयेन विद्वान् ॥ २५

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
किष्किन्धाकाण्डे रामसमाश्वासनं नाम सप्तमः सर्गः

---

## अष्टमः सर्गः

### वालिवधप्रतिज्ञा

परितुष्टस्तु सुग्रीवस्तेन वाक्येन वानरः । लक्ष्मणस्याग्रतो राममिदं वचनमब्रवीत् ॥ १
सर्वथाहमनुग्राह्यो देवतानामसंशयः । उपपन्नगुणोपेतः सखा यस्य भवान् मम ॥ २
शक्यं खलु भवेद्राम सहायेन त्वयानघ । सुरराज्यमपि प्राप्तुं स्वराज्यं किं पुनः प्रभो ॥ ३

सोऽहं सभाग्यो बन्धूनां सुहृदां चैव राघव । यस्याग्निसाक्षिकं मित्रं लब्धं राघववंशजम् ॥ ४
अहमप्यनुरूपस्ते वयस्यो ज्ञायसे शनैः । न तु वक्तुं समर्थोऽहं स्वयमात्मगतान् गुणान् ॥ ५
महात्मनां तु भूयिष्ठं त्वद्विधानां कृतात्मनाम् । निश्चला भवति प्रीतिर्धैर्यमात्मवतां वर ॥ ६
रजतं वा सुवर्णं वा वस्त्राण्याभरणानि च । अविभक्तानि साधूनामवगच्छन्ति साधवः ॥ ७
आढ्यो वापि दरिद्रो वा दुःखितः सुखितोऽपि वा । निर्दोषो वा सदोषो वा वयस्यः परमा गतिः ॥
धनत्यागः सुखत्यागो देहत्यागोऽपि वा पुनः । वयस्यार्थे प्रवर्तन्ते स्नेहं दृष्ट्वा तथाविधम् ॥ ९
तत्तथेत्यब्रवीद्रामः सुग्रीवं प्रियवादिनम् । लक्ष्मणस्याग्रतो लक्ष्म्या वासवस्येव धीमतः ॥ १०
ततो रामं स्थितं दृष्ट्वा लक्ष्मणं च महाबलम् । सुग्रीवः सर्वतश्चक्षुर्वने लोलमपातयत् ॥ ११
स ददर्श ततः सालमविदूरे हरीश्वरः । सुपुष्पमीषत्पत्राढ्यं भ्रमरैरुपशोभितम् ॥ १२
तस्यैकां पर्णबहुलां भङ्क्त्वा शाखां सुपुष्पिताम् । सालस्यास्तीर्य सुग्रीवो निषसाद सराघवः ॥ १३
तावासीनौ ततो दृष्ट्वा हनूमानपि लक्ष्मणम् । सालशाखां समुत्पाट्य विनीतमुपवेशयत् ॥ १४
सुखोपविष्टं रामं तु प्रसन्नमुदधिं यथा । फलपुष्पसमाकीर्णे तस्मिन् गिरिवरोत्तमे ॥ १५
ततः प्रहृष्टः सुग्रीवः श्लक्ष्णं मधुरया गिरा । उवाच प्रणयाद्रामं हर्षव्याकुलिताक्षरम् ॥ १६
अहं विनिकृतो भ्रात्रा चराम्येष भयार्दितः । ऋश्यमूकं गिरिवरं हृतभार्यः सुदुःखितः ॥ १७
सोऽहं त्रस्तो भये मग्नो वसाम्युद्भ्रान्तचेतनः । वालिना निकृतो भ्रात्रा कृतवैरश्च राघव ॥ १८
वालिनो मे भयार्तस्य सर्वलोकाभयंकर । ममापि त्वमनाथस्य प्रसादं कर्तुमर्हसि ॥ १९
एवमुक्तस्तु तेजस्वी धर्मज्ञो धर्मवत्सलः । प्रत्युवाच स काकुत्स्थ सुग्रीवं प्रहसन्निव ॥ २०
उपकारफलं मित्रमपकारोऽरिलक्षणम् । अद्यैव तं हनिष्यामि तव भार्यापहारिणम् ॥ २१
इमे हि मे महावेगाः पत्रिणस्तिग्मतेजसः । कार्तिकेयवनोद्भूताः शरा हेमविभूषिताः ॥ २२
कङ्कपत्रप्रतिच्छन्ना महेन्द्राशनिसंनिभाः । सुपर्वाणः सुतीक्ष्णाग्राः सरोषा इव पन्नगाः ॥ २३
भ्रातृसंज्ञममित्रं ते वालिनं कृतकिल्बिषम् । शरैर्विनिहतं पश्य विकीर्णमिव पर्वतम् ॥ २४
राघवस्य वचः श्रुत्वा सुग्रीवो वाहिनीपतिः[1] । प्रहर्षमतुलं लेभे साधु साध्विति चाब्रवीत् ॥ २५
राम शोकाभिभूतोऽहं शोकार्तानां भवान् गतिः । वयस्य इति कृत्वा हि त्वय्यहं परिदेवये ॥ २६
त्वं हि पाणिप्रदानेन वयस्यो मेऽग्निसाक्षिकम् । कृतः प्राणैर्बहुमतः सत्येनापि शपामि ते ॥ २७
वयस्य इति कृत्वा च विस्रब्धं प्रवदाम्यहम् । दुःखमन्तर्गतं यन्मे मनो हरति नित्यशः ॥ २८
एतावदुक्त्वा वचनं बाष्पदूषितलोचनः । बाष्पोपहतया वाचा नोच्चैः शक्नोमि भाषितुम् ॥ २९
बाष्पवेगं तु सहसा नदीवेगमिवागतम् । धारयामास धैर्येण सुग्रीवो रामसंनिधौ ॥ ३०
स निगृह्य[2] तु तं बाष्पं प्रमृज्य नयने शुभे । विनिःश्वस्य च तेजस्वी राघवं पुनरब्रवीत् ॥ ३१

---

१. वानराधिपः ङ. ञ.     २. संनिगृह्य च.

पुराहं वालिना राम राज्यात् स्वादवरोपितः । परुषाणि च संश्राव्य निर्धूतोऽस्मि बलीयसा ॥ ३२
हृता भार्या च मे तेन प्राणेभ्योऽपि गरीयसी । सुहृदश्च मदीया ये संयता बन्धनेषु ते ॥ ३३
यत्नवांश्च सुदुष्टात्मा मद्विनाशाय राघव । बहुशस्तत्प्रयुक्ताश्च वानरा निहता मया ॥ ३४
शङ्कया त्वेतया चेह दृष्ट्वा त्वामपि राघव । नोपसर्पाम्यहं भीतो भये सर्वे हि बिभ्यति ॥ ३५
केवलं हि सहाया मे हनूमत्प्रमुखास्त्विमे । अतोऽहं धारयाम्यद्य प्राणान् कृच्छ्रगतोऽपि सन् ॥ ३६
एते हि कपयः स्निग्धा मां रक्षन्ति समन्ततः । सह गच्छन्ति गन्तव्ये नित्यं तिष्ठन्ति च स्थिते ॥ ३७
संक्षेपस्त्वेष ते राम किमुक्त्वा विस्तरं हि ते । स मे ज्येष्ठो रिपुर्भ्राता वाली विश्रुतपौरुषः ॥ ३८
तद्विनाशाद्धि मे दुःखं प्रनष्टं स्यादनन्तरम् । सुखं मे जीवितं चैव तद्विनाशनिबन्धनम् ॥ ३९
एष मे राम शोकान्तः शोकार्तेन निवेदितः । दुःखितः सुखितो वापि सख्युर्नित्यं सखा गतिः ॥ ४०
श्रुत्वैतद्वचनं रामः सुग्रीवमिदमब्रवीत् । किंनिमित्तमभूद्वैरं श्रोतुमिच्छामि तत्त्वतः ॥ ४१
सुखं[1] हि कारणं श्रुत्वा वैरस्य तव वानर । आनन्तर्यं विधास्यामि संप्रधार्य बलाबलम् ॥ ४२
बलवान् हि ममामर्षः श्रुत्वा त्वामवमानितम् । वर्धते हृदयोत्कम्पी प्रावृड्वेग इवाम्भसः ॥ ४३
हृष्टः कथय विस्रब्धो यावदारोप्यते धनुः । सृष्टश्च हि[2] मया बाणो निरस्तश्च रिपुस्तव ॥ ४४
एवमुक्तस्तु सुग्रीवः काकुत्स्थेन महात्मना । प्रहर्षमतुलं लेभे चतुर्भिः सह वानरैः ॥ ४५
ततः प्रहृष्टवदनः सुग्रीवो लक्ष्मणाग्रजे । वैरस्य कारणं तत्त्वमाख्यातुमुपचक्रमे ॥ ४६

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायां
किष्किन्धाकाण्डे वालिवधप्रतिज्ञा नाम अष्टमः सर्गः

---

## नवमः सर्गः

### वैरवृत्तान्तानुक्रमः

वाली[3] नाम मम भ्राता ज्येष्ठः शत्रुनिषूदनः । पितुर्बहुमतो नित्यं ममापि च तथा पुरा ॥ १
पितर्युपरतेऽस्माकं ज्येष्ठोऽयमिति मन्त्रिभिः । कपीनामीश्वरो राज्ये कृतः परमसंमतः ॥ २
राज्यं प्रशासतस्तस्य पितृपैतामहं महत् । अहं सर्वेषु कालेषु प्रणतः प्रेष्यवत् स्थितः ॥ ३
मायावी नाम तेजस्वी पूर्वजो दुन्दुभेः सुतः । तेन तस्य महद्वैरं स्त्रीकृतं विश्रुतं पुरा ॥ ४

---

१. अहम् छ.
२. सृष्टश्चेद्धि छ.
३. अस्य सर्गस्य प्रथमश्लोकतयेदं ग. छ. दृश्यते—श्रूयतां राम यद्वृत्तमादितः प्रभृति त्वया । यथा वैरं समुद्भूतं यथा चाहं निराकृतः ॥—इति ।

स तु सुप्तजने रात्रौ किष्किन्धाद्वारमागतः । नर्दति स्म सुसंरब्धो वालिनं चाह्वयद्रणे ॥ ५
प्रसुप्तस्तु मम भ्राता नर्दितं भैरवस्वनम् । श्रुत्वा न ममृषे वाली निष्पपात जवात्तदा ॥ ६
स तु वै निःसृतः क्रोधात्तं हन्तुमसुरोत्तमम् । वार्यमाणस्ततः स्त्रीभिर्मया च प्रणतात्मना ॥ ७
स तु निर्धूय सर्वान्नो निर्जगाम महाबलः । ततोऽहमपि सौहार्दान्निःसृतो वालिना सह ॥ ८
स तु मे भ्रातरं दृष्ट्वा मां च दूरादवस्थितम् । असुरो जातसंत्रासः प्रदुद्राव ततो भृशम् ॥९
तस्मिन् द्रवति संत्रस्ते ह्यावां द्रुततरं गतौ । प्रकाशश्च कृतो मार्गश्चन्द्रेणोद्गच्छता तदा ॥ १०
स तृणैरावृतं दुर्गं धरण्या विवरं महत् । प्रविवेशासुरो वेगादावामासाद्य विष्ठितौ ॥ ११
तं प्रविष्टं रिपुं दृष्ट्वा बिलं रोषवशं गतः । मामुवाच तदा वाली वचनं क्षुभितेन्द्रियः ॥ १२
इह त्वं तिष्ठ सुग्रीव बिलद्वारि समाहितः । यावदत्र प्रविश्याहं निहन्मि सहसा रिपुम् ॥ १३
मया त्वेतद्वचः श्रुत्वा याचितः स परंतपः । शापयित्वा च मां पद्भ्यां प्रविवेश बिलं महत् ॥ १४
तस्य प्रविष्टस्य बिलं साग्रः संवत्सरो गतः । स्थितस्य च मम द्वारि स कालो व्यत्यवर्तत ॥ १५
अहं तु नष्टं तं ज्ञात्वा स्नेहादागतसंभ्रमः । भ्रातरं न च पश्यामि पापाशङ्कि च मे मनः ॥ १६
अथ दीर्घस्य कालस्य बिलात्तस्माद्विनिःसृतम् । सफेनं रुधिरं रक्तमहं दृष्ट्वा सुदुःखितः ॥ १७
नर्दतामसुराणां च ध्वनिर्मे श्रोत्रमागतः । निरस्तस्य[1] च संग्रामे क्रोशतो निःस्वनो गुरोः ॥ १८
अहं त्ववगतो बुद्ध्या चिह्नैस्तैर्भ्रातरं हतम् । पिधाय च बिलद्वारं शिलया गिरिमात्रया ॥ १९
शोकार्तश्चोदकं कृत्वा किष्किन्धामागतः सखे । गूहमानस्य मे तत्त्वं यत्नतो मन्त्रिभिः श्रुतम् ॥ २०
ततोऽहं तैः समागम्य संमतैरभिषेचितः । राज्यं प्रशासतस्तस्य न्यायतो मम राघव[3] ॥ २१
न प्रावर्तत मे बुद्धिर्भ्रातुर्गौरवयन्त्रिता । हत्वा शत्रुं स मे भ्राता प्रविवेश पुरं तदा ॥ २२
मानयंस्तं महात्मानं यथावच्चाभ्यवादयम् । उक्ताश्च नाशिषस्तेन संतुष्टेनान्तरात्मना । २३
नत्वा पादावहं तस्य मुकुटेनास्पृशं प्रभो[4] । अपि वाली मम क्रोधान्न प्रसादं चकार सः ॥ २४

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
किष्किन्धाकाण्डे वैरवृत्तान्तानुक्रमो नाम नवमः सर्गः

---

१. सा प्र.

२. नरतस्य प्र.

३. अस्यानन्तरम्—आजगाम रिपुं हत्वा वाली तमसुरोत्तमम् । अभिषिक्तं तु मां दृष्ट्वा क्रोधात् संरक्तलोचनः ॥ मदीयान् मन्त्रिणो बद्ध्वा परुषं वाक्यमब्रवीत् । निग्रहेऽपि समर्थस्य तं पापं प्रति राघव ॥—इति च. छ.

४. अस्यानन्तरम्—कृताञ्जलिरुपागम्य स्थितोऽहं तस्य पार्श्वतः—इति छ.

## दशमः सर्गः

### राज्यनिर्वासकथनम्

ततः क्रोधसमाविष्टं संरब्धं तमुपागतम् । अहं प्रसादयांचक्रे भ्रातरं हितकाम्यया ॥ १
दिष्ट्यासि कुशली प्राप्तो दिष्ट्यापि निहतो रिपुः । अनाथस्य हि मे नाथस्त्वमेकोऽनाथनन्दनः ॥ २
इदं बहुशलाकं ते पूर्णचन्द्रमिवोदितम् । छत्रं सवालव्यजनं प्रतीच्छस्व मयोद्यतम् ॥ ३
आर्तश्चाथ बिलद्वारि स्थितः संवत्सरं नृप । दृष्ट्वाहं शोणितं द्वारि बिलाच्चापि समुत्थितम् ॥ ४
शोकसंविग्नहृदयो भृशं व्याकुलितेन्द्रियः । अपिधाय बिलद्वारं गिरिशृङ्गेण तत्तदा ॥ ५
तस्माद्देशादपाक्रम्य किष्किन्धां प्राविशं पुनः । विषादात्त्विह मां दृष्ट्वा पौरैर्मन्त्रिभिरेव च ॥ ६
अभिषिक्तो न कामेन तन्मे त्वं क्षन्तुमर्हसि । त्वमेव राजा मानार्हः सदा चाहं यथापुरम् ॥ ७
राजभावनियोगोऽयं मया त्वद्विरहात् कृतः । सामात्यपौरनगरं स्थितं निहतकण्टकम् ॥ ८
न्यासभूतमिदं राज्यं तव निर्यातयाम्यहम् । मा च रोषं कृथाः सौम्य मयि शत्रुनिबर्हण ॥ ९
याचे त्वां शिरसा राजन् मया बद्धोऽयमञ्जलिः । बलादस्मि समागम्य मन्त्रिभिः पुरवासिभिः ॥१०
राजभावे नियुक्तोऽहं शून्यदेशजिगीषया[1] । स्निग्धमेवं ब्रुवाणं मां स तु निर्भर्त्स्य वानरः ॥ ११
धिक् त्वामिति च मामुक्त्वा बहु तत्तदुवाच ह । प्रकृतीश्च समानीय मन्त्रिणश्चैव संमतान् ॥ १२
मामाह सुहृदां मध्ये वाक्यं परमगर्हितम् । विदितं वो यथा रात्रौ मायावी स महासुरः ॥ १३
मां समाह्वयत क्रूरो युद्धकाङ्क्षी सुदुर्मतिः । तस्य तद्गर्जितं श्रुत्वा निःसृतोऽहं नृपालयात् ॥ १४
अनुयातश्च मां तूर्णमयं भ्राता सुदारुणः । स तु दृष्ट्वैव मां रात्रौ सद्वितीयं महाबलः[1] ॥ १५
प्राद्रवद्भयसंत्रस्तो वीक्ष्यावां तमनुद्रुतौ । अनुद्रुतश्च वेगेन प्रविवेश महाबिलम् ॥ १६
तं प्रविष्टं विदित्वा तु सुघोरं सुमहद्बिलम्[2] । अयमुक्तोऽथ मे भ्राता मया तु क्रूरदर्शनः ॥ १७
अहत्वा नास्ति मे शक्तिः प्रतिगन्तुमितः पुरीम् । बिलद्वारि प्रतीक्ष त्वं यावदेनं निहन्म्यहम् ॥ १८
स्थितोऽयमिति मत्वा तु प्रविष्टोऽहं दुरासदम् । तं च मे मार्गमाणस्य गतः संवत्सरस्तदा ॥ १९
स तु दृष्टो मया शत्रुरनिर्वेदाद्भयावहः । निहतश्च मया तत्र सोऽसुरो बन्धुभिः सह ॥ २०
तस्यास्यात्तु प्रवृत्तेन रुधिरौघेण तद्बिलम् । पूर्णमासीद्दुराक्रामं स्तनतस्तस्य भूतले ॥ २१
सूदयित्वा तु तं शत्रुं विक्रान्तं दुन्दुभेः सुतम्[3] । निष्क्रामन्नेव[4] पश्यामि बिलस्यापिहितं मुखम् ॥ २२
विक्रोशमानस्य तु मे सुग्रीवेति पुनः पुनः । यदा प्रतिवचो नास्ति ततोऽहं भृशदुःखितः ॥ २३

---

1. अराजके हि देशे परेषां जिगीषा भवति । तया जिगीषया हेतुना तन्निवृत्त्यर्थमिति भावः । मशकार्थो धूम इतिवदिति तिलकः ।

1. महाबलम् घ.

2. इदमर्धम् ग. घ. नास्ति ।

3. तं महासुरम् छ.

4. निष्क्रामन्नेव क.

पादप्रहारैस्तु मया बहुभिस्तद्विदारितम् । ततोऽहं तेन निष्क्रम्य पथा पुरमुपागतः[1] ॥ २४
अन्नानेनास्मि संरुद्धो राज्यं प्रार्थयतात्मनः । सुग्रीवेण नृशंसेन विस्मृत्य भ्रातृसौहृदम् ॥ २५
एवमुक्त्वा तु मां तत्र वस्त्रेणैकेन वानरः । तदा निर्वासयामास वाली विगतसाध्वसः ॥ २६
तेनाहमपविद्धश्च हृतदारश्च राघव । तद्भयाच्च मही कृत्स्ना क्रान्तेयं सवनार्णवा ॥ २७
ऋश्यमूकं गिरिवरं भार्याहरणदुःखितः । प्रविष्टोऽस्मि दुराधर्षं वालिनः कारणान्तरे ॥ २८
एतत्ते सर्वमाख्यातं वैरानुकथनं महत् । अनागसा मया प्राप्तं व्यसनं पश्य राघव ॥ २९
वालिनस्तु भयार्तस्य सर्वलोकाभयंकर । कर्तुमर्हसि मे वीर प्रसादं तस्य निग्रहात् ॥ ३०
एवमुक्तस्तु तेजस्वी धर्मज्ञो धर्मसंहितम् । वचनं वक्तुमारेभे सुग्रीवं प्रहसन्निव ॥ ३१
अमोघाः सूर्यसंकाशा ममैते निशिताः शराः । तस्मिन् वालिनि दुर्वृत्ते निपतिष्यन्ति वेगिताः ॥ ३२
यावत्तं नाभिपश्यामि तव भार्यापहारिणम् । तावत् स जीवेत् पापात्मा वाली चारित्रदूषकः ॥ ३३
आत्मानुमानात् पश्यामि मग्नं त्वां शोकसागरे । त्वामहं तारयिष्यामि कामं प्राप्स्यसि पुष्कलम् ॥ ३४
तस्य तद्वचनं श्रुत्वा राघवस्यात्मनो हितम् । सुग्रीवः परमप्रीतः सुमहद्वाक्यमब्रवीत् ॥ ३५

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
किष्किन्धाकाण्डे राज्यनिर्वासकथनं नाम दशमः सर्गः

---

## एकादशः सर्गः
### वालिबलाविष्करणम्

रामस्य वचनं श्रुत्वा हर्षपौरुषवर्धनम् । सुग्रीवः पूजयांचक्रे राघवं प्रशशंस च ॥ १
असंशयं [1]प्रज्वलितैस्तीक्ष्णैर्मर्मातिगैः शरैः । त्वं दहेः कुपितो लोकान् युगान्त इव भास्करः ॥ २
वालिनः पौरुषं यत्तद्यच्च वीर्यं धृतिश्च या । तन्ममैकमनाः श्रुत्वा विधत्स्व यदनन्तरम् ॥ ३
समुद्रात् पश्चिमात् पूर्वं दक्षिणादपि चोत्तरम् । क्रामत्यनुदिते[2] सूर्ये वाली व्यपगतक्लमः ॥ ४
अग्राण्यारुह्य शैलानां शिखराणि महान्त्यपि । ऊर्ध्वमुत्पात्य तरसा प्रतिगृह्णाति वीर्यवान् ॥ ५
बहवः सारवन्तश्च वनेषु विविधा द्रुमाः । वालिना तरसा भग्ना बलं प्रथयतात्मनः ॥ ६
महिषो दुन्दुभिर्नाम कैलासशिखरप्रभः । बलं नागसहस्रस्य धारयामास वीर्यवान् ॥ ७
वीर्योत्सेकेन दुष्टात्मा वरदानाच्च मोहितः । जगाम सुमहाकायः समुद्रं सरितां पतिम् ॥ ८
ऊर्मिमन्तमभिक्रम्य सागरं रत्नसंचयम् । मह्यं युद्धं प्रयच्छेति तमुवाच महार्णवम् ॥ ९
ततः समुद्रो धर्मात्मा समुत्थाय महाबलः । अब्रवीद्वचनं राजन्नसुरं कालचोदितम् ॥ १०

---

1. प्रज्वलितैरित्यादि भास्करपक्षेऽपि योज्यम् । 2. अर्थात् ब्राह्मे मुहूर्ते उत्थायेति ।
शराः बाणाः पक्षे मयूखाश्च । १. यथापुरमुपागतः गो. पाठान्तरम् ।

समर्थो नास्मि ते दातुं युद्धं युद्धविशारद । श्रूयतामभिधास्यामि यस्ते युद्धं प्रदास्यति ॥ ११
शैलराजो महारण्ये तपस्विशरणं परम् । शंकरश्वशुरो नाम्ना हिमवानिति विश्रुतः ॥ १२
महाप्रस्रवणोपेतो[१] बहुकन्दरनिर्दरः । स समर्थस्तव प्रीतिमतुलां कर्तुमाहवे ॥ १३
तं भीत इति विज्ञाय समुद्रमसुरोत्तमः । हिमवद्वनमागच्छच्छरश्चापादिव च्युतः ॥ १४
ततस्तस्य गिरेः श्वेता गजेन्द्रविपुलाः शिलाः । चिक्षेप बहुधा भूमौ दुन्दुभिर्विननाद च ॥ १५
ततः श्वेताम्बुदाकारः सौम्यः प्रीतिकराकृतिः । हिमवानब्रवीद्वाक्यं स्व एव शिखरे स्थितः ॥ १६
क्लेष्टुमर्हसि मां न त्वं दुन्दुभे धर्मवत्सल । रणकर्मस्वकुशलस्तपस्विशरणं ह्यहम्[२] ॥ १७
तस्य तद्वचनं श्रुत्वा गिरिराजस्य धीमतः । उवाच दुन्दुभिर्वाक्यं रोषात् संरक्तलोचनः ॥ १८
यदि युद्धेऽसमर्थस्त्वं मद्भयाद्वा निरुद्यमः । तमाचक्ष्व प्रदद्यान्मे योऽद्य युद्धं युयुत्सतः ॥ १९
हिमवानब्रवीद्वाक्यं श्रुत्वा वाक्यविशारदः । अनुक्तपूर्वं[1] धर्मात्मा क्रोधात्तमसुरोत्तमम् ॥ २०
वाली नाम महाप्राज्ञः शक्रतुल्यपराक्रमः[३] । अध्यास्ते वानरः श्रीमान् किष्किन्धामतुलप्रभाम् ॥ २१
स समर्थो महाप्राज्ञस्तव युद्धविशारदः । द्वन्द्वयुद्धं महद्दातुं नमुचेरिव वासवः ॥ २२
तं शीघ्रमभिगच्छ त्वं यदि युद्धमिहेच्छसि । स हि दुर्धर्षणो नित्यं शूरः समरकर्मणि ॥ २३
श्रुत्वा हिमवतो वाक्यं क्रोधाविष्टः स दुन्दुभिः । जगाम तां पुरीं तस्य किष्किन्धां वालिनस्तदा ॥ २४
धारयन् माहिषं रूपं तीक्ष्णशृङ्गो भयावहः । प्रावृषीव महामेघस्तोयपूर्णो नभस्तले ॥ २५
ततस्तद्द्वारमागम्य किष्किन्धाया महाबलः । ननर्द कम्पयन् भूमिं दुन्दुभिर्दुन्दुभिर्यथा ॥ २६
समीपस्थान् द्रुमान् भञ्जन् वसुधां दारयन् खुरैः । विषाणेनोल्लिखन् दर्पात्तद्द्वारं द्विरदो यथा ॥ २७
अन्तःपुरगतो वाली श्रुत्वा शब्दममर्षणः । निष्पपात सह स्त्रीभिस्ताराभिरिव चन्द्रमाः ॥ २८
मितं व्यक्ताक्षरपदं तमुवाचाथ दुन्दुभिम् । हरीणामीश्वरो वाली सर्वेषां वनचारिणाम् ॥ २९
किमर्थं नगरद्वारमिदं रुद्ध्वा विनर्दसि । दुन्दुभे विदितो मेऽसि रक्ष प्राणान् महाबल ॥ ३०
तस्य तद्वचनं श्रुत्वा वानरेन्द्रस्य धीमतः । उवाच दुन्दुभिर्वाक्यं रोषात् संरक्तलोचनः ॥ ३१
न त्वं स्त्रीसंनिधौ वीर वचनं वक्तुमर्हसि । मम युद्धं प्रयच्छाद्य ततो ज्ञास्यसि ते बलम् ॥ ३२
अथवा धारयिष्यामि क्रोधमद्य निशामिमाम् । गृह्यतामुदयः स्वैरं कामभोगेषु वानर ॥ ३३
दीयतां संप्रदानं च परिष्वज्य च वानरान् । सर्वशाखामृगेन्द्रस्त्वं संसादय सुहृज्जनम् ॥ ३४

---

1. हिमवन्तमुद्दिश्य अन्येन केनापि ततः पूर्वमनुक्तं दुन्दुभेर्वाक्यं श्रुत्वेति, यस्य दुन्दुभेः पूर्वं युद्धदाता केनाप्यनुक्तः तमसुरोत्तमामिति, अन्यं कंचित् प्रति स्वेन पूर्वमनुक्तं वाक्यम् असुरोत्तमं प्रति इति वा सम्बन्धः । क्रोधात् तम् इति छित्वा व्याख्यातं सर्वैः । इह हिमवतो धर्मात्मेति विशेषणात् तत्प्रतिसंबन्धिनो दुन्दुभेः विशेषणं चेत् सरसमिदं क्रोधात्तमिति । क्रोधेन वशीकृतमित्यर्थः ।

१. गुहाप्रस्रवणोपेतः च. छ.
२. तपस्विशरणोऽस्म्यहम् घ.
३. शक्रपुत्रः प्रतापवान् घ.

सुदृष्टां कुरु किष्किन्धां कुरुष्वात्मसमं पुरे । क्रीडस्व च सह स्त्रीभिरहं ते दर्पनाशनः ॥ ३५
यो हि मत्तं प्रमत्तं वा सुप्तं वा रहितं भृशम् । हन्यात् स भ्रूणहा लोके त्वद्विधं मदमोहितम् ॥ ३६
स प्रहस्याब्रवीन्मन्दं क्रोधात्तमसुरोत्तमम् । विसृज्य ताः स्त्रियः सर्वास्ताराप्रभृतिकास्तदा ॥ ३७
मत्तोऽयमिति मा मंस्था यद्यभीतोऽसि संयुगे । मदोऽयं संप्रहारेऽस्मिन् वीरपाणं समर्थ्यताम् ॥३८
तमेवमुक्त्वा संक्रुद्धो मालामुत्क्षिप्य[1] काञ्चनीम् । पित्रा दत्तां महेन्द्रेण युद्धाय व्यवतिष्ठत ॥ ३९
विषाणयोर्गृहीत्वा तं दुन्दुभिं गिरिसंनिभम् । अविध्यत तदा वाली विनदन् कपिकुञ्जरः ॥ ४०
वाली व्यापातयांचक्रे ननर्द च महास्वनम् । श्रोत्राभ्यामथ रक्तं तु तस्य सुस्राव पात्यतः[१] ॥ ४१
तयोस्तु क्रोधसंरम्भात् परस्परजयैषिणोः । युद्धं समभवद्घोरं दुन्दुभेर्वानरस्य च ॥ ४२
अयुध्यत तदा वाली शक्रतुल्यपराक्रमः । मुष्टिभिर्जानुभिः पद्भिः शिलाभिः पादपैस्तथा ॥ ४३
परस्परं घ्नतोस्तत्र वानरासुरयोस्तदा[२] । [३]आसीद्धीनोऽसुरो युद्धे शक्रसूनुर्व्यवर्धत[४] ॥ ४४
तं तु दुन्दुभिमुद्यम्य धरण्यामभ्यपातयत् । युद्धे प्राणहरे तस्मिन्निष्पिष्टो दुन्दुभिस्तदा ॥ ४५
पपात च महाकायः क्षितौ पञ्चत्वमागतः[५] । तं तोलयित्वा बाहुभ्यां गतसत्त्वमचेतनम् ॥ ४६
चिक्षेप बलवान् वाली वेगेनैकेन योजनम् । तस्य वेगप्रविद्धस्य वक्त्रात् क्षतजबिन्दवः ॥ ४७
प्रपेतुर्मारुतोत्क्षिप्ता मतङ्गस्याश्रमं प्रति । तान् दृष्ट्वा पतितांस्तस्य मुनिः शोणितविप्रुषः ॥ ४८
क्रुद्धस्तस्य महाभागश्चिन्तयामास को न्वयम् । येनाहं सहसा स्पृष्टः शोणितेन दुरात्मना ॥ ४९
कोऽयं दुरात्मा दुर्बुद्धिरकृतात्मा च बालिशः । इत्युक्त्वाथ विनिष्क्रम्य ददर्श मुनिपुंगवः ॥ ५०
महिषं पर्वताकारं गतासुं पतितं भुवि । स तु विज्ञाय तपसा वानरेण कृतं हि तत् ॥ ५१
उत्ससर्ज महाशापं क्षेप्तारं वालिनं प्रति । इह तेनाप्रवेष्टव्यं प्रविष्टस्य वधो भवेत् ॥ ५२
वनं मत्संश्रयं येन दूषितं रुधिरस्रवैः । संभग्नाः पादपाश्चेमे क्षिपतेहासुरीं तनुम् ॥ ५३
समन्ताद्योजनं पूर्णमाश्रमं मामकं यदि । आगमिष्यति दुर्बुद्धिर्व्यक्तं स न भविष्यति ॥ ५४
ये चापि सचिवास्तस्य संश्रिता मामकं वनम् । न च तैरिह वस्तव्यं श्रुत्वा यान्तु यथासुखम् ॥ ५५
यदि तेऽपीह तिष्ठन्ति शपिष्ये तानपि ध्रुवम् । वनेऽस्मिन् मामकेऽत्यर्थं पुत्रवत् परिपालिते ॥ ५६
पत्राङ्कुरविनाशाय फलमूलभवाय च । दिवसश्चास्य मर्यादा यं द्रष्टा श्वोऽस्मि[2] वानरम् ॥ ५७

---

1. उत्क्षिप्य आमुच्येत्यर्थः ।

2. अस्मीति अहमित्यर्थे विभक्तिप्रतिरूपकम् । अत्र अस्मीति वानरमिति च अर्थान्तरसंक्रमितम् । प्राकृतबुद्धिं वानरं यं शापानुग्रहसमर्थोऽहं श्वो द्रष्टा स इत्यादि सम्बन्धः ।

१. ४०-४१ श्लोकौ पुना. ख. न स्तः । २. अस्यानन्तरम्—स्रोतोभ्यो बहुरक्तं तु तस्य सुस्राव पात्यतः—इति क.

३. असीददसुरः च. छ.

४. अस्यानन्तरम्—व्यापारवीर्यधैर्यैश्च परिक्षीणं पराक्रमैः—इति च. छ.

५. अस्यानन्तरम्—तस्मिन् पञ्चत्वमापन्ने वाली क्रोधसमन्वितः । तत्कायं लोष्टवत् क्षेप्तुमारब्धो वीर्यवांस्तदा ॥—इति क. घ.

बहुवर्षसहस्राणि स वै शैलो भविष्यति । ततस्ते वानराः श्रुत्वा गिरं मुनिसमीरिताम् ॥ ५८
निश्चक्रमुर्वनात्तस्मात्तान् दृष्ट्वा वालिरब्रवीत् । किं भवन्तः समस्ताश्च मतङ्गवनवासिनः ॥ ५९
मत्समीपमनुप्राप्ता अपि स्वस्ति वनौकसाम् । ततस्ते कारणं सर्वं तदा शापं च वालिनः ॥ ६०
शशंसुर्वानराः सर्वे वालिने हेममालिने । एतच्छ्रुत्वा तदा वाली वचनं वानरेरितम् ॥ ६१
स महर्षिं तमासाद्य याचते स्म कृताञ्जलिः । महर्षिस्तमनादृत्य प्रविवेशाश्रमं तदा ॥ ६२
शापधारणभीतस्तु वाली विह्वलतां गतः । ततः शापभयाद्भीत ऋश्यमूकं महागिरिम् ॥ ६३
प्रवेष्टुं नेच्छति हरिर्द्रष्टुं वापि नरेश्वर । तस्याप्रवेशं ज्ञात्वाहमिदं राम महावनम् ॥ ६४
विचरामि सहामात्यो विषादेन विवर्जितः । एषोऽस्थिनिचयस्तस्य दुन्दुभेः संप्रकाशते ॥ ६५
वीर्योत्सेकान्निरस्तस्य गिरिकूटोपमो महान् । इमे च विपुलाः सालाः सप्त शाखावलम्बिनः ॥ ६६
यत्रैकं घटते वाली निष्पत्रयितुमोजसा । एतदस्यासमं वीर्यं मया राम प्रकीर्तितम् ॥ ६७
कथं तं वालिनं हन्तुं समरे शक्ष्यसे नृप । तथा ब्रुवाणं सुग्रीवं प्रहसँल्लक्ष्मणोऽब्रवीत् ॥ ६८
कस्मिन् कर्मणि निर्वृत्ते श्रद्दध्या वालिनो वधम् । तमुवाचाथ सुग्रीवः सप्त सालानिमान् पुरा ॥ ६९
एवमेकैकशो वाली विव्याधाथ स चासकृत् । रामो विदारयेदेषां बाणेनैकेन चेद्द्रुमम् ॥ ७०
वालिनं निहतं मन्ये दृष्ट्वा रामस्य विक्रमम् । हतस्य महिषस्यास्थि पादेनैकेन लक्ष्मण ॥ ७१
उद्यम्याथ प्रक्षिपेच्चेत्तरसा द्वे धनुःशते । एवमुक्त्वा तु सुग्रीवो रामं रक्तान्तलोचनम् ॥ ७२
ध्यात्वा मुहूर्तं काकुत्स्थं पुनरेव वचोऽब्रवीत् । शूरश्च शूरघाती च[1] प्रख्यातबलपौरुषः ॥ ७३
बलवान् वानरो वाली संयुगेष्वपराजितः । दृश्यन्ते चास्य कर्माणि दुष्कराणि सुरैरपि ॥ ७४
यानि संचिन्त्य भीतोऽहमृश्यमूकं समाश्रितः । तमजय्यमधृष्यं च वानरेन्द्रममर्षणम् ॥ ७५
विचिन्तयन्न मुञ्चामि ऋश्यमूकमहं त्विमम् । उद्विग्नः शङ्कितश्चापि विचरामि महावने ॥ ७६
अनुरक्तैः सहामात्यैर्हनुमत्प्रमुखैर्वरैः । उपलब्धं च मे श्लाघ्यं सन्मित्रं मित्रवत्सल ॥ ७७
त्वामहं पुरुषव्याघ्र हिमवन्तमिवाश्रितः । किं तु तस्य बलज्ञोऽहं दुर्भ्रातुर्बलशालिनः ॥ ७८
अप्रत्यक्षं तु मे वीर्यं समरे तव राघव । न खल्वहं त्वां तुलये नावमन्ये न भीषये ॥ ७९
कर्मभिस्तस्य भीमैस्तु कातर्यं जनितं मम । कामं राघव ते वाणी प्रमाणं धैर्यमाकृतिः ॥ ८०
सूचयन्ति परं तेजो भस्मच्छन्नमिवानलम् । तस्य तद्वचनं श्रुत्वा सुग्रीवस्य महात्मनः ॥ ८१
स्मितपूर्वमथो रामः प्रत्युवाच हरिं प्रभुः । यदि न प्रत्ययोऽस्मासु विक्रमे तव वानर ॥ ८२
प्रत्ययं समरे श्लाघ्यमहमुत्पादयामि ते । एवमुक्त्वा तु सुग्रीवं सान्त्वं लक्ष्मणपूर्वजः ॥ ८३
राघवो दुन्दुभेः कायं पादाङ्गुष्ठेन लीलया । तोलयित्वा महाबाहुश्चिक्षेप दशयोजनम् ॥ ८४
असुरस्य तनुं शुष्कां पादाङ्गुष्ठेन वीर्यवान्[2] । क्षिप्तं दृष्ट्वा ततः कायं सुग्रीवः पुनरब्रवीत् ॥ ८५

---

१. शूरश्च शूरमानी च पुना. २. इदमर्धम् च. नास्ति ।

लक्ष्मणस्याग्रतो रामं तपन्तमिव भास्करम् । हरीणामग्रतो [1]वीरमिदं वचनमर्थवत्[2] ॥ ८६
आर्द्रः समांसः प्रत्यग्रः क्षिप्तः कायः पुरा सखे । लघुः संप्रति निर्मांसस्तृणभूतश्च राघव ॥ ८७
परिश्रान्तेन मत्तेन भ्रात्रा मे वालिना तदा । क्षिप्तमेवं प्रहर्षेण भवता रघुनन्दन ॥ ८८
नात्र शक्यं बलं ज्ञातुं तव वा तस्य वाधिकम् । आर्द्रं शुष्कमिति ह्येतत् सुमहद्राघवान्तरम् ॥ ८९
स एव संशयस्तात तव तस्य च यद्बले । सालमेकं तु निर्भिन्द्या भवेद्व्यक्तिर्बलाबले ॥ ९०
कृत्वेदं कार्मुकं सज्यं हस्तिहस्तमिवाततम् । आकर्णपूर्णमायम्य विसृजस्व महाशरम् ॥ ९१

इमं हि सालं प्रहितस्त्वया शरो न संशयोऽत्रास्ति विदारयिष्यति ।
अलं विमर्शेन मम प्रियं ध्रुवं कुरुष्व राजात्मज शापितो मया ॥ ९२
यथा हि तेजःसु वरः सदा रविर्यथा हि शैलो हिमवान् महाद्रिषु ।
यथा चतुष्पात्सु च केसरी वरस्तथा नराणामसि विक्रमे वरः ॥ ९३

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
किष्किन्धाकाण्डे वालिबलाविष्करणं नाम एकादशः सर्गः

---

## द्वादशः सर्गः

### सुग्रीवप्रत्ययदानम्

एतच्च वचनं श्रुत्वा सुग्रीवेण सुभाषितम् । प्रत्ययार्थं महातेजा रामो जग्राह कार्मुकम् ॥ १
स गृहीत्वा धनुर्घोरं शरमेकं च मानदः । सालमुद्दिश्य चिक्षेप ज्यास्वनैः पूरयन् दिशः ॥ २
स विसृष्टो बलवता बाणः स्वर्णपरिष्कृतः । भित्त्वा सालान् गिरिप्रस्थं सप्तभूमिं[1] विवेश ह ॥ ३
प्रविष्टश्च मुहूर्तेन धरां भित्त्वा महाजवः । निष्पत्य च पुनस्तूर्णं स्वतूणीं पुनराविशत् ॥ ४
तान् दृष्ट्वा सप्त निर्भिन्नान्[2] सालान् वानरपुंगवः । रामस्य शरवेगेन विस्मयं परमं गतः[3] ॥ ५
स मूर्ध्ना न्यपतद्भूमौ प्रलम्बीकृतभूषणः । सुग्रीवः परमप्रीतो राघवाय कृताञ्जलिः ॥ ६
इदं चोवाच धर्मज्ञं कर्मणा तेन हर्षितः । रामं सर्वास्त्रविदुषां श्रेष्ठं शूरमवस्थितम् ॥ ७

---

1. सप्तभूमी रसातलमिति तिलकः ।
2. निर्भिन्नान् सप्तसालान् दृष्ट्वेति पूर्वोक्तार्थस्यैव पुनर्ग्रहणं सालनिर्भेदनमात्रं सुग्रीवस्य चक्षुर्गोचर आसीत्, न पुना रसातलप्रवशादिरिति विवेकार्थम् ।

१. तपन्तमित्यादि वीरमित्यन्तम् च. नास्ति ।
२. अब्रवीत् च॰
३. सायकस्तु पुना,
४: अस्यानन्तरम्—अहो शरनिपातोऽयं रामस्याक्लिष्टकर्मणः । यमदण्डोपमो ह्येतन्मृत्युपाशसमन्वितः ॥ विस्मयन्तश्च ते सर्वे हनूमत्प्रमुखास्तदा । गजो गवाक्षो गवयः शरभो गन्धमादनः ॥ शोभनं शोभनं राम कृतं कर्म सुदुष्करम् । यस्य ते शरवेगेन त्रयो लोकाः प्रकम्पिताः ॥—इति ग.

सेन्द्रानपि सुरान् सर्वांस्त्वं बाणैः पुरुषर्षभ । समर्थः समरे हन्तुं किं पुनर्वालिनं प्रभो ॥ ८

येन सप्त महासाला गिरिर्भूमिश्च दारिताः । बाणेनैकेन काकुत्स्थ स्थाता ते को रणाग्रतः ॥ ९

अद्य मे विगतः शोकः प्रीतिरद्य परा मम । सुहृदं त्वां समासाद्य महेन्द्रवरुणोपमम् ॥ १०

तमद्यैव प्रियार्थं मे वैरिणं भ्रातृरूपिणम् । वालिनं जहि काकुत्स्थ मया बद्धोऽयमञ्जलिः ॥ ११

ततो रामः परिष्वज्य सुग्रीवं प्रियदर्शनम् । प्रत्युवाच महाप्राज्ञो लक्ष्मणानुमतं वचः ॥ १२

अस्माद्गच्छेम किष्किन्धां क्षिप्रं गच्छ त्वमग्रतः । गत्वा चाह्वय सुग्रीव वालिनं भ्रातृगन्धिनम् ॥ १३

सर्वे ते त्वरितं गत्वा किष्किन्धां वालिनः पुरीम् । वृक्षैरात्मानमावृत्य व्यतिष्ठन् गहने वने[१] ॥ १४

सुग्रीवो व्यनदद्घोरं वालिनो ह्वानकारणात् । गाढं परिहितो वेगान्नादैर्भिन्दन्निवाम्बरम्[२] ॥ १५

तं श्रुत्वा निनदं भ्रातुः क्रुद्धो वाली महाबलः । निष्पपात सुसंरब्धो भास्करोऽस्ततटादिव[३] ॥ १६

ततः सुतुमुलं युद्धं वालिसुग्रीवयोरभूत् । गगने ग्रहयोर्घोरं बुधाङ्गारकयोरिव[४] ॥ १७

तलैरशनिकल्पैश्च वज्रकल्पैश्च मुष्टिभिः । जघ्नतुः समरेऽन्योन्यं भ्रातरौ क्रोधमूर्छितौ ॥ १८

ततो रामो धनुष्पाणिस्तावुभौ समुदीक्ष्य तु । अन्योन्यसदृशौ वीरावुभौ देवाविवाश्विनौ ॥ १९

यन्नावगच्छत् सुग्रीवं वालिनं वापि राघवः । ततो न कृतवान् बुद्धिं मोक्तुमन्तकरं शरम् ॥ २०

एतस्मिन्नन्तरे भग्नः सुग्रीवस्तेन वालिना । अपश्यन् राघवं नाथमृश्यमूकं प्रदुद्रुवे ॥ २१

क्लान्तो रुधिरसिक्ताङ्गः प्रहारैर्जर्जरीकृतः । वालिनाभिद्रुतः क्रोधात् प्रविवेश महावनम् ॥ २२

तं प्रविष्टं वनं दृष्ट्वा वाली शापभयार्दितः । मुक्तो ह्यसि त्वमित्युक्त्वा संनिवृत्तो महाद्युतिः ॥ २३

राघवोऽपि सह भ्रात्रा सह चैव हनूमता । तदेव वनमागच्छत् सुग्रीवो यत्र वानरः ॥ २४

तं समीक्ष्यागतं रामं सुग्रीवः सहलक्ष्मणम् । ह्रीमान् दीनमुवाचेदं वसुधामवलोकयन् ॥ २५

आह्वयस्वेति मामुक्त्वा दर्शयित्वा च विक्रमम् । वैरिणा घातयित्वा च किमिदानीं त्वया कृतम् ॥ २६

तामेव वेलां वक्तव्यं त्वया राघव तत्त्वतः । वालिनं न निहन्मीति ततो नाहमितो व्रजे[५] ॥ २७

---

१. अस्यानन्तरम्—स रामो वृक्षसंछन्ने वनोद्देशे वनप्रियः । आवृतः स च सौमित्रिरि[मि]दं वचनमब्रवीत् ॥ पश्य लक्ष्मण सौमित्रे भ्रातॄणां राज्यकारणात् । व्यसनं घोरमुत्पन्नं गर्हितं प्रतिभाति मे ॥ राज्यं नाम महाव्याधिरचिकित्सो विनाशनः । भ्रातरं वा सुतं वापि त्यजन्ति खलु भूमिपाः ॥ एवमुक्तस्तु रामेण लक्ष्मणो वाक्यमब्रवीत् । ईदृशो राज्यवृत्तान्तो राज्यहेतोर्न संशयः ॥ भ्रातॄन् पुत्रांश्च दारांश्च त्यजन्ते राज्यकारणात् । लुब्धास्त्वेवं प्रकुर्वन्ति लोभमोहवशं गताः ॥ पूर्वमासीन्महाराजा [जो] लोष्टको नाम भूमिपः । राज्यार्थं तेन पुत्राश्च भ्राता वैरनिराकृतः ॥ अन्यैरपि च दुर्वृत्तैः कृतमेव न संशयः । राज्यहेतोर्विशालाक्षो[क्ष] वैरसंग्रहणाय च ॥ मा विषादं कृथा वीर नैतत् क्षत्रियचेष्टितम् । न विनन्दन्ति राजानो दृष्ट्वात्मानं तथाविधम् ॥—इति ग. घ.

२. अस्यानन्तरम्—ननाद सुमहानादं पूरयन् वै नभःस्थलम्—इति छ.

३. भास्करोऽद्रितटादिव क.

४. अस्यानन्तरम्—अग्न्यर्कयोर्यदा [था] काशे मेरुमन्दरयोरिव । हिमवद्विन्ध्ययोश्चैव मैनाकक्रौञ्चयोरिव ॥ वज्रगोकर्णयोरेव महेन्द्रारिष्टयोरिव ॥—इति क. ग.

५. अस्यानन्तरम्—किं नु तत्कारणं येन शक्तेनापि न गण्यते—इति क.

तस्य चैवं ब्रुवाणस्य सुग्रीवस्य महात्मनः । करुणं दीनया वाचा राघवः पुनरब्रवीत् ॥ २८

सुग्रीव श्रूयतां तात क्रोधश्च व्यपनीयताम् । कारणं येन बाणोऽयं न मया स विसर्जितः ॥ २९

अलंकारेण वेषेण प्रमाणेन गतेन च । त्वं च सुग्रीव वाली च सदृशौ स्थः परस्परम् ॥ ३०

स्वरेण वर्चसा चैव प्रेक्षितेन च वानर । विक्रमेण च वाक्यैश्च व्यक्तिं वां नोपलक्षये ॥ ३१

ततोऽहं रूपसादृश्यान्मोहितो वानरोत्तम । नोत्सृजामि महावेगं शरं शत्रुनिबर्हणम् ॥ ३२

जीवितान्तकरं घोरं सादृश्यात्तु विशङ्कितः । मूलघातो न नौ स्याद्धि द्वयोरपि कृतो मया ॥ ३३

त्वयि वीरे विपन्ने हि अज्ञानाल्लाघवान्मया । मौढ्यं च मम बाल्यं च ख्यापितं स्याद्धरीश्वर ॥ ३४

दत्ताभयवधो नाम पातकं महदुच्यते । अहं च लक्ष्मणश्चैव सीता च वरवर्णिनी ॥ ३५

त्वदधीना वयं सर्वे वनेऽस्मिञ्शरणं भवान् । तस्माद्युध्यस्व भूयस्त्वं मा मा शङ्कीश्च वानर[१] ॥ ३६

अस्मिन् मुहूर्ते सुग्रीव पश्य वालिनमाहवे । निरस्तमिषुणैकेन वेष्टमानं महीतले ॥ ३७

अभिज्ञानं कुरुष्व त्वमात्मनो वानरेश्वर । येन त्वामभिजानीयां द्वन्द्वयुद्धमुपागतम् ॥ ३८

गजपुष्पीमिमां फुल्लामुत्पाट्य शुभलक्षणाम् । कुरु लक्ष्मण कण्ठेऽस्य सुग्रीवस्य महात्मनः ॥ ३९

ततो गिरितटे जातामुत्पाट्य कुसुमाकुलाम् । लक्ष्मणो गजपुष्पीं तां तस्य कण्ठे व्यसर्जयत् ॥ ४०

स तया शुशुभे श्रीमाँल्लतया कण्ठसक्तया[२] । मालयेव बलाकानां ससन्ध्य इव तोयदः ॥ ४१

विभ्राजमानो वपुषा रामवाक्यसमाहितः । जगाम सह रामेण किष्किन्धां वालिपालिताम् ॥ ४२

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
किष्किन्धाकाण्डे सुग्रीवप्रत्ययदानं नाम द्वादशः सर्गः

---

## त्रयोदशः सर्गः

### सप्तजनाश्रमप्रणामः

ऋश्यमूकात् स धर्मात्मा किष्किन्धां लक्ष्मणाग्रजः । जगाम सहसुग्रीवो वालिविक्रमपालिताम् ॥ १

समुद्यम्य महच्चापं रामः काञ्चनभूषितम् । शरांश्चादित्यसंकाशान् गृहीत्वा रणसाधकान् ॥ २

अग्रतस्तु ययौ तस्य राघवस्य महात्मनः । सुग्रीवः संहतग्रीवो[३] लक्ष्मणश्च महाबलः ॥ ३

पृष्ठतो हनुमान् वीरो नलो नीलश्च वानरः । तारश्चैव महातेजा हरियूथपयूथपः ॥ ४

ते वीक्षमाणा[1] वृक्षांश्च पुष्पभारावलम्बिनः । प्रसन्नाम्बुवहाश्चैव सरितः सागरंगमाः ॥ ५

---

1. ते इति । वीक्षमाणा व्यलोकयन्निति उत्तरेण संबन्धः । पार्श्वयोर्दृष्टिं विक्षिपतां तेषां वृक्षसलिलादयश्चक्षुर्गोचरा अभवन्नित्यर्थः ।

१. निःशङ्को वानरेश्वर ख. घ. छ.

२. अस्यानन्तरम्—विपरीत इवाकाशे सूर्यो नक्षत्रमालया—इति च. छ.

३. वालिविक्रमपालितामित्यादि संहतग्रीव- इत्यन्तम् ख. नास्ति ।

कन्दराणि च शैलांश्च निर्दराणि गुहास्तथा । शिखराणि च मुख्यानि दरीश्च प्रियदर्शनाः ॥ ६

वैदूर्यविमलैस्तोयैः[१] पद्मैश्चाकोशकुड्मलैः । शोभितान् सजलान् मार्गे तटाकांश्च व्यलोकयन् ॥ ७

कारण्डैः सारसैर्हंसैर्वञ्जुलैर्जलकुक्कुटैः । चक्रवाकैस्तथा चान्यैः शकुनैरुपनादितान् ॥ ८

मृदुशष्पाङ्कुराहारान्निर्भयान् वनगोचरान् । चरतः सर्वतोऽपश्यन् स्थलीषु हरिणान् स्थितान्[1] ॥९

तटाकवैरिणश्चापि शुक्लदन्तविभूषितान् । घोरानेकचरान् वन्यान् द्विरदान् कूलघातिनः ॥ १०

मत्तान् गिरितटोत्कृष्टाञ्जङ्गमानिव पर्वतान् । वारणान् वारिदप्रख्यान्[२] महीरेणुसमुक्षितान् ॥ ११

वने वनचरांश्चान्यान् खेचरांश्च विहंगमान् । पश्यन्तस्त्वरिता जग्मुः सुग्रीववशवर्तिनः ॥ १२

तेषां तु गच्छतां तत्र त्वरितं रघुनन्दनः । द्रुमषण्डं वनं दृष्ट्वा रामः सुग्रीवमब्रवीत् ॥ १३

एष मेघ इवाकाशे वृक्षषण्डः प्रकाशते । मेघसङ्घातविपुलः पर्यन्तकदलीवृतः ॥ १४

किमेतज्ज्ञातुमिच्छामि सखे कौतूहलं हि मे । कौतूहलापनयनं कर्तुमिच्छाम्यहं त्वया ॥ १५

तस्य तद्वचनं श्रुत्वा राघवस्य महात्मनः । गच्छन्नेवाचचक्षेऽथ सुग्रीवस्तन्महद्वनम् ॥ १६

एतद्राघव विस्तीर्णमाश्रमं श्रमनाशनम् । उद्यानवनसंपन्नं स्वादुमूलफलोदकम् ॥ १७

अत्र सप्तजना नाम मुनयः संशितव्रताः । सप्तैवासन्नधःशीर्षा नियतं जलशायिनः ॥ १८

सप्तरात्रकृताहारा वायुना वनवासिनः । दिवं वर्षशतैर्याताः सप्तभिः सकलेबराः ॥ १९

तेषामेवंप्रभावेण द्रुमप्राकारसंवृतम् । आश्रमं सुदुराधर्षमपि सेन्द्रैः सुरासुरैः ॥ २०

पक्षिणो वर्जयन्त्येतत्तथान्ये वनचारिणः । विशन्ति मोहाद्येऽप्यत्र निवर्तन्ते न ते पुनः ॥ २१

विभूषणरवाश्चात्र श्रूयन्ते सकलाक्षराः । तूर्यगीतस्वनाश्चात्र गन्धो दिव्यश्च राघव ॥ २२

त्रेताग्नयोऽपि दीप्यन्ते धूमो ह्येष प्रदृश्यते । वेष्टयन्निव वृक्षाग्रान् कपोताङ्गारुणो घनः ॥ २३

एते वृक्षाः प्रकाशन्ते धूमसंसक्तमस्तकाः । मेघजालप्रतिच्छन्ना वैदूर्यगिरयो यथा ॥ २४

कुरु प्रणामं धर्मात्मंस्तान् समुद्दिश्य राघव । लक्ष्मणेन सह भ्रात्रा प्रयतः संयताञ्जलिः ॥ २५

प्रणमन्ति हि ये तेषां मुनीनां भावितात्मनाम् । न तेषामशुभं किंचिच्छरीरे राम दृश्यते ॥ २६

ततो रामः सह भ्रात्रा लक्ष्मणेन कृताञ्जलिः । समुद्दिश्य महात्मानस्तानृषीनभ्यवादयत् ॥ २७

अभिवाद्य तु धर्मात्मा रामो भ्राता च लक्ष्मणः । सुग्रीवो वानराश्चैव जग्मुः संहृष्टमानसाः ॥ २८

ते गत्वा दूरमध्वानं तस्मात् सप्तजनाश्रमात् । ददृशुस्तां दुराधर्षां किष्किन्धां वालिपालिताम् ॥ २९

---

1. चरतः स्थितांश्च हरिणान् अपश्यन्निति चकाराध्याहारं विनापि सुयोजमेतत् । योजितं भूषणे । वनगोचरान् वनेषु स्वयं प्ररूढान् तृणाङ्कुराहारान् चरतो भक्षयतः स्थितान् हरिणानिति

१. पर्णैः च. छ.

२. वानरान् द्विरदप्रख्यान् ति,

ततस्तु रामानुजरामवानराः प्रगृह्य शस्त्राण्युदितार्कतेजसः ।
पुरीं सुरेशात्मजवीर्यपालितां वधाय शत्रोः पुनरागताः सह ॥ ३०

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
किष्किन्धाकाण्डे सप्तजनाश्रमप्रणामो नाम त्रयोदशः सर्गः

---

## चतुर्दशः सर्गः

### सुग्रीवगर्जनम्

सर्वे ते त्वरितं गत्वा किष्किन्धां वालिपालिताम् । वृक्षैरात्मानमावृत्य व्यतिष्ठन् गहने वने ॥ १
विस्तार्य सर्वतो दृष्टिं कानने काननप्रियः । सुग्रीवो विपुलग्रीवः क्रोधमाहारयद्भृशम् ॥ २
ततः स निनदं घोरं कृत्वा युद्धाय चाह्वयन् । परिवारैः परिवृतो नादैर्भिन्दन्निवाम्बरम् ॥ ३
गर्जन्निव महामेघो वायुवेगपुरःसरः । अथ बालार्कसदृशो दृप्तसिंहगतिस्तदा ॥ ४
दृष्ट्वा रामं क्रियादक्षं सुग्रीवो वाक्यमब्रवीत् । हरिवागुरया[1] व्याप्तां तप्तकाञ्चनतोरणाम् ॥ ५
प्राप्ताः स्म ध्वजयन्त्राढ्यां[2] किष्किन्धां वालिनः पुरीम् । प्रतिज्ञा या त्वया वीर कृता वालिवधे पुरा॥
सफलां तां कुरु क्षिप्रं लतां काल इवागतः । एवमुक्तस्तु धर्मात्मा सुग्रीवेण स राघवः ॥ ७
तमथोवाच सुग्रीवं वचनं शत्रुसूदनः । कृताभिज्ञानचिह्नस्त्वमनया गजसाह्वया ॥ ८
लक्ष्मणेन समुत्पाट्य यैषा कण्ठे कृता तव । शोभसे ह्यधिकं[3] वीर लतया कण्ठसक्तया ॥ ९
विपरीत[2] इवाकाशे सूर्यो नक्षत्रमालया । अद्य वालिसमुत्थं ते भयं वैरं च वानर ॥ १०
एकेनाहं प्रमोक्ष्यामि बाणमोक्षेण संयुगे । मम दर्शय सुग्रीव वैरिणं भ्रातृरूपिणम्[4] ॥ ११
अद्य वाली विनिहतो वनपांसुषु वेष्टते । यदि दृष्टिपथं प्राप्तो जीवन् स विनिवर्तते ॥ १२
ततो दोषेण मा गच्छेत् सद्यो गर्हेच्च मां भवान् । प्रत्यक्षं सप्त ते साला मया बाणेन दारिताः ॥१३
तेनावेहि बलेनाद्य वालिनं निहतं मया । अनृतं नोक्तपूर्वं मे वीर कृच्छ्रेऽपि तिष्ठता ॥ १४
धर्मलोभपरीतेन न च वक्ष्ये कथंचन । सफलां च करिष्यामि प्रतिज्ञां जहि संभ्रमम् ॥ १५
प्रसूतं कलमं क्षेत्रे वर्षेणेव शतक्रतुः । तदाह्वाननिमित्तं त्वं वालिनो हेममालिनः ॥ १६
सुग्रीव कुरु तं शब्दं निष्पतेद्येन वानरः । जितकाशी बलश्लाघी त्वया चाधर्षितः पुरा ॥ १७

---

1. प्रसारितजालकसदृशाकारं निवेशं कृत्वा-वस्थितैर्वानरैर्व्याप्तामित्यर्थः । कथंचिदन्तःप्रविष्टानां प्रतिपक्षाणां वानरैः परितो निगृह्यमाणानां दुर्निर्गममस्या द्वारमिति भावः ।

2. विपरीत इवेति अभूतोपमा ।

१. वालिनः पुरीम् क. ख.

२. पश्य प्राकारयन्त्राढ्याम् छ.

३. ह्यनया घ.

४. अथेत्यादि भ्रातृरूपिणमित्यन्तम् ग. नास्ति ।

निष्पतिष्यत्यसङ्गेन वाली स प्रियसंयुगः । रिपूणां धर्षणं शूरा मर्षयन्ति न संयुगे ॥ १८

जानन्तस्तु स्वकं वीर्यं स्त्रीसमक्षं विशेषतः । स तु रामवचः श्रुत्वा सुग्रीवो हेमपिङ्गलः ॥ १९

ननर्द क्रूरनादेन विनिर्भिन्दन्निवाम्बरम् । तस्य शब्देन वित्रस्ता गावो यान्ति हतप्रभाः ॥ २०

राजदोषपरामृष्टाः कुलस्त्रिय इवाकुलाः । द्रवन्ति च मृगाः शीघ्रं भग्ना इव रणे हयाः ॥ २१

पतन्ति च खगा भूमौ क्षीणपुण्या इव ग्रहाः ॥

ततः स जीमूतगणप्रणादो नादं ह्यमुञ्चत्त्वरया प्रतीतः ।

सूर्यात्मजः शौर्यविवृद्धतेजाः सरित्पतिर्वानिलचञ्चलोर्मिः ॥ २२

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
किष्किन्धाकाण्डे सुग्रीवगर्जनं नाम चतुर्दशः सर्गः

---

## पञ्चदशः सर्गः

### ताराहितोक्तिः

अथ तस्य निनादं तं सुग्रीवस्य महात्मनः । शुश्रावान्तःपुरगतो वाली भ्रातुरमर्षणः ॥ १

श्रुत्वा तु तस्य निनदं सर्वभूतप्रकम्पनम् । मदश्चैकपदे नष्टः क्रोधश्चापतितो महान् ॥ २

स तु रोषपरीताङ्गो वाली सन्ध्यातपप्रभः । उपरक्त इवादित्यः सद्यो निष्प्रभतां गतः ॥ ३

वाली दंष्ट्राकरालस्तु क्रोधाद्दीप्ताग्निलोचनः[1] । भात्युत्पतितपद्माभः समृणाल इव ह्रदः ॥ ४

शब्दं दुर्मर्षणं श्रुत्वा निष्पपात ततो हरिः । वेगेन चरणन्यासैर्दारयन्निव मेदिनीम् ॥ ५

तं तु तारा परिष्वज्य स्नेहाद्दर्शितसौहृदा । त्रस्ता प्रोवाच संभ्रान्ता हितोदर्कमिदं वचः ॥ ६

साधु क्रोधमिमं वीर नदीवेगमिवागतम् । शयनादुत्थितः कल्यं त्यज भुक्तामिव स्रजम् ॥ ७

कल्यमेतेन संग्रामं करिष्यसि हरीश्वर । वीर ते शत्रुबाहुल्यं फल्गुता वा न विद्यते ॥ ८

सहसा तव निष्क्रामो मम तावन्न रोचते । श्रूयतां चाभिधास्यामि यन्निमित्तं निवार्यसे ॥ ९

पूर्वमापतितः क्रोधात् स त्वामाह्वयते युधि । निष्पत्य च निरस्तस्ते हन्यमानो दिशो गतः ॥ १०

त्वया तस्य निरस्तस्य पीडितस्य विशेषतः । इहैत्य पुनराह्वानं शङ्कां जनयतीव मे ॥ ११

दर्पश्च व्यवसायश्च यादृशस्तस्य नर्दतः । निनादस्य च संरम्भो नैतदल्पं हि कारणम् ॥ १२

नासहायमहं मन्ये सुग्रीवं तमिहागतम् । अवष्टब्धसहायश्च यमाश्रित्यैष गर्जति ॥ १३

प्रकृत्या निपुणश्चैव बुद्धिमांश्चैव वानरः । अपरीक्षितवीर्येण सुग्रीवः सह नैष्यति[2] ॥ १४

पूर्वमेव मया वीर श्रुतं कथयतो वचः । अङ्गदस्य कुमारस्य वक्ष्याम्यद्य हितं वचः ॥ १५

अङ्गदस्तु कुमारोऽयं वनान्तमुपनिर्गतः । प्रवृत्तिस्तेन कथिता चारैराप्तैर्निवेदिता ॥ १६

---

१, दीप्ताग्निसंनिभः च. छ.    २, नापरीक्षितवीर्येण सुग्रीवः सख्यमेष्यति पुना.

अयोध्याधिपतेः पुत्रौ शूरौ समरदुर्जयौ । इक्ष्वाकूणां कुले जातौ प्रथितौ रामलक्ष्मणौ ॥ १७
सुग्रीवप्रियकामार्थं प्राप्तौ तत्र दुरासदौ । तव भ्रातुर्हि विख्यातः सहायो रणकर्कशः ॥ १८
रामः परबलामर्दी युगान्ताग्निरिवोत्थितः । निवासवृक्षः साधूनामापन्नानां परा गतिः ॥ १९
आर्तानां संश्रयश्चैव यशसश्चैकभाजनम् । ज्ञानविज्ञानसंपन्नो निदेशे निरतः पितुः ॥ २०
धातूनामिव शैलेन्द्रो गुणानामाकरो महान् । तत् क्षमो न विरोधस्ते सह तेन महात्मना ॥ २१
दुर्जयेनाप्रमेयेण रामेण रणकर्मसु । शूर वक्ष्यामि ते किंचिन्न चेच्छाम्यभ्यसूयितुम् ॥ २२
श्रूयतां क्रियतां चैव तव वक्ष्यामि यद्धितम् । यौवराज्येन सुग्रीवं तूर्णं साध्वभिषेचय ॥ २३
विग्रहं मा कृथा वीर भ्रात्रा राजन् यवीयसा । अहं हि ते क्षमं मन्ये तेन रामेण सौहृदम् ॥ २४
सुग्रीवेण च संप्रीतिं वैरमुत्सृज्य दूरतः । लालनीयो हि ते भ्राता यवीयानेष वानरः ॥ २५
तत्र वा सन्निहस्थो वा सर्वथा बन्धुरेव ते । न हि तेन समं बन्धुं भुवि पश्यामि कंचन ॥ २६
दानमानादिसत्कारैः कुरुष्व प्रत्यनन्तरम् । वैरमेतत् समुत्सृज्य तव पार्श्वे स तिष्ठतु ॥ २७
सुग्रीवो विपुलग्रीवस्तव बन्धुः सदा मतः । भ्रातुः सौहृदमालम्ब्य[1] नान्या गतिरिहास्ति ते ॥ २८
यदि ते मत्प्रियं कार्यं यदि चावैषि मां हिताम् । याच्यमानः प्रयत्नेन साधु वाक्यं कुरुष्व मे ॥ २९

प्रसीद पथ्यं शृणु जल्पितं हि मे न रोषमेवानुविधातुमर्हसि ।
क्षमो हि ते कोसलराजसूनुना न विग्रहः शक्रसमानतेजसा ॥ ३०

तदा हि तारा हितमेव वाक्यं तं वालिनं पथ्यमिदं बभाषे ।
न रोचते तद्वचनं हि तस्य कालाभिपन्नस्य विनाशकले ॥ ३१

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायां
किष्किन्धाकाण्डे ताराहितोक्तिर्नाम पञ्चदशः सर्गः

---

## षोडशः सर्गः

### वालिसंहारः

तामेवं ब्रुवतीं तारां ताराधिपनिभाननाम् । वाली निर्भर्त्सयामास वचनं चेदमब्रवीत् ॥ १
गर्जतोऽस्य ससंरम्भं भ्रातुः शत्रोर्विशेषतः । मर्षयिष्याम्यहं केन कारणेन वरानने ॥ २
अधर्षितानां शूराणां समरेष्वनिवर्तिनाम् । धर्षणामर्षणं भीरु मरणादतिरिच्यते ॥ ३
सोढुं न च समर्थोऽहं युद्धकामस्य संयुगे । सुग्रीवस्य च संरम्भं हीनग्रीवस्य गर्जतः ॥ ४
न च कार्यो विषादस्ते राघवं प्रति मत्कृते । धर्मज्ञश्च कृतज्ञश्च कथं पापं करिष्यति ॥ ५

---

१. आलम्ब च, छ,

निवर्तस्व सह स्त्रीभिः कथं भूयोऽनुगच्छसि । सौहृदं दर्शितं तारे मयि भक्तिः कृता त्वया ॥ ६
प्रतियोत्स्याम्यहं गत्वा सुग्रीवं जहि संभ्रमम् । दर्पमस्य विनेष्यामि न च प्राणैर्वियोक्ष्यते ॥ ७
अहं ह्याजिस्थितस्यास्य करिष्यामि यथेप्सितम् । वृक्षैर्मुष्टिप्रहारैश्च पीडितः प्रतियास्यति ॥ ८
न मे गर्वितमायस्तं सहिष्यति दुरात्मवान् । कृतं तारे सहायत्वं सौहृदं दर्शितं मयि ॥ ९
शापितासि मम प्राणैर्निवर्तस्व जनेन[१] च । अहं जित्वा निवर्तिष्ये तमहं भ्रातरं रणे ॥ १०
तं तु तारा परिष्वज्य वालिनं प्रियवादिनी । चकार रुदती मन्दं दक्षिणा सा प्रदक्षिणम् ॥ ११
ततः स्वस्त्ययनं कृत्वा मन्त्रविद्विजयैषिणी । अन्तःपुरं सह स्त्रीभिः प्रविष्टा शोकमोहिता ॥ १२
प्रविष्टायां तु तारायां सह स्त्रीभिः स्वमालयम् । नगरान्निर्ययौ क्रुद्धो महासर्प इव श्वसन् ॥ १३
स निष्पत्य महातेजा वाली परमरोषणः । सर्वतश्चारयन् दृष्टिं शत्रुदर्शनकाङ्क्षया ॥ १४
स ददर्श ततः श्रीमान् सुग्रीवं हेमपिङ्गलम् । सुसंवीतमवष्टब्धं दीप्यमानमिवानलम् ॥ १५
स तं दृष्ट्वा महावीर्यं सुग्रीवं पर्यवस्थितम् । गाढं परिदधे वासो वाली परमरोषणः ॥ १६
स वाली गाढसंवीतो मुष्टिमुद्यम्य वीर्यवान् । सुग्रीवमेवाभिमुखो ययौ योद्धुं कृतक्षणः[२] ॥ १७
श्लिष्टमुष्टिं समुद्यम्य संरब्धतरमागतः । सुग्रीवोऽपि तमुद्दिश्य वालिनं हेममालिनम्[३] ॥ १८
तं वाली क्रोधताम्राक्षः सुग्रीवं रणपण्डितम् । आपतन्तं महावेगमिदं वचनमब्रवीत् ॥ १९
एष मुष्टिर्मया बद्धो गाढः संनिहिताङ्गुलिः । मया वेगविमुक्तस्ते प्राणानादाय यास्यति ॥ २०
एवमुक्तस्तु सुग्रीवः क्रुद्धो वालिनमब्रवीत् । तव चैव हरन् प्राणान् मुष्टिः पततु मूर्धनि ॥ २१
ताडितस्तेन संक्रुद्धस्तमभिक्रम्य वेगितः । अभवच्छोणितोद्गारी सोत्पीड इव पर्वतः ॥ २२
सुग्रीवेण तु निःशङ्कं सालमुत्पाट्य तेजसा । गात्रेष्वभिहतो वाली वज्रेणेव महागिरिः ॥ २३
स तु वाली प्रचलितः सालताडनविह्वलः । गुरुभारसमाक्रान्ता नौः ससार्थेव सागरे[४] ॥ २४
तौ भीमबलविक्रान्तौ सुपर्णसमवेगिनौ । प्रवृद्धौ घोरवपुषौ चन्द्रसूर्याविवाम्बरे ॥ २५
परस्परममित्रघ्नौ छिद्रान्वेषणतत्परौ । ततोऽवर्धत वाली तु बलवीर्यसमन्वितः ॥ २६
सूर्यपुत्रो महावीर्यः सुग्रीवः परिहीयते । वालिना भग्नदर्पस्तु सुग्रीवो मन्दविक्रमः ॥ २७
वालिनं प्रति सामर्षो दर्शयामास [1]राघवम्[५] । वृक्षैः सशाखैः सशिखैर्वज्रकोटिनिभैर्नखैः ॥ २८
मुष्टिभिर्जानुभिः पद्भिर्बाहुभिश्च पुनः पुनः । तयोर्युद्धमभूद्घोरं वृत्रवासवयोरिव ॥ २९

---

1. राघवं दर्शयामास स्वहानिमिति शेष इति क्षणः ॥—इति ध. तिलकः ।

१. जयेन च. छ.

२. अस्यानन्तरम्—सुग्रीवो गाढसंवीतो मुष्टिमुद्यम्य वीर्यवान् । इन्द्रपुत्रं समाहूय ययौ योद्धुं कृत-

३. इदमर्धम् ध. नास्ति ।

४. सागरे नौरिवाभवत् ग. गुरुभारसमाक्रान्तो नौसार्थ इव सागरे च. छ.

५. लाघवम् च. छ.

तौ शोणिताक्तौ युध्येतां वानरौ वनचारिणौ । मेघाविव महाशब्दैस्तर्जयानौ परस्परम् ॥ ३०

हीयमानमथापश्यत् सुग्रीवं वानरेश्वरम् । प्रेक्षमाणं दिशश्चैव राघवं च मुहुर्मुहुः ॥ ३१

ततो रामो महातेजा आर्तं दृष्ट्वा हरीश्वरम् । शरं च वीक्षते वीरो वालिनो वधकारणात् ॥ ३२

ततो धनुषि संधाय शरमाशीविषोपमम् । पूरयामास तच्चापं कालचक्रमिवान्तकः ॥ ३३

तस्य ज्यातलघोषेण त्रस्ताः पत्ररथेश्वराः । प्रदुद्रुवुर्मृगाश्चैव युगान्त इव मोहिताः ॥ ३४

मुक्तस्तु वज्रनिर्घोषः प्रदीप्ताशनिसंनिभः । राघवेण महाबाणो वालिवक्षसि पातितः ॥ ३५

ततस्तेन महातेजा वीर्योत्सिक्तः कपीश्वरः । वेगेनाभिहतो वाली निपपात महीतले ॥ ३६

इन्द्रध्वज इवोद्धूतः पौर्णमास्यां महीतले । आश्वयुक्समये मासि गतश्रीको विचेतनः[1] ॥ ३७

नरोत्तमः कालयुगान्तकोपमं शरोत्तमं काञ्चनरूप्यभूषितम् ।
ससर्ज दीप्तं तममित्रमर्दनं सधूममग्निं मुखतो यथा हरः ॥ ३८

अथोक्षितः शोणिततोयविस्रवैः सुपुष्पिताशोक इवानिलोद्धतः ।
विचेतनो वासवसूनुराहवे विभ्रंशितेन्द्रध्वजवत् क्षितिं गतः ॥ ३९

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
किष्किन्धाकाण्डे वालिसंहारो नाम षोडशः सर्गः

---

## सप्तदशः सर्गः

### रामाधिक्षेपः

ततः शरेणाभिहतो रामेण रणकर्कशः । पपात सहसा वाली निकृत्त इव पादपः ॥ १

स भूमौ न्यस्तसर्वाङ्गस्तप्तकाञ्चनभूषणः । अपतद्देवराजस्य मुक्तरश्मिरिव ध्वजः ॥ २

तस्मिन्निपतिते भूमौ वानराणां[2] गणेश्वरे । नष्टचन्द्रमिव व्योम न व्यराजत मेदिनी ॥ ३

भूमौ निपतितस्यापि तस्य देहं महात्मनः । न श्रीर्जहाति न प्राणा न तेजो न पराक्रमः ॥ ४

शक्रदत्ता वरा माला काञ्चनी वज्रभूषिता । दधार हरिमुख्यस्य प्राणांस्तेजः श्रियं च सा ॥ ५

स तया मालया वीरो हैमया हरियूथपः । सन्ध्यानुगतपर्यन्तः पयोधर इवाभवत् ॥ ६

तस्य माला च देहश्च मर्मघाती च यः शरः । त्रिधेव रचिता लक्ष्मीः पतितस्यापि शोभते ॥ ७

तदस्त्रं तस्य वीरस्य स्वर्गमार्गप्रभावनम् । रामबाणासनोत्क्षिप्तमावहत् परमां गतिम् ॥ ८

तं तथा पतितं संख्ये गतार्चिषमिवानलम् । बहुमान्य च तं वीरं वीक्षमाणं शनैरिव ॥ ९

---

१. अस्यानन्तरम्—बाष्पसंरुद्धकण्ठस्तु वाली २. हर्यृक्षाणाम् ख.
आर्तस्वरः शनैः—इति पुना.

ययातिमिव पुण्यान्ते देवलोकात् परिच्युतम् । आदित्यमिव कालेन युगान्ते भुवि पातितम् ॥ १०

महेन्द्रमिव दुर्धर्षं महेन्द्रमिव दुःसहम् । महेन्द्रपुत्रं पतितं वालिनं हेममालिनम् ॥ ११

व्यूढोरस्कं महाबाहुं दीप्तास्यं हरिलोचनम् । लक्ष्मणानुगतो रामो ददर्शोपससर्प च[1] ॥ १२

तं दृष्ट्वा राघवं वाली लक्ष्मणं च महाबलम् । अब्रवीत् प्रश्रितं वाक्यं परुषं धर्मसंहितम्[2] ॥ १३

त्वं नराधिपतेः पुत्रः प्रथितः प्रियदर्शनः । कुलीनः सत्त्वसंपन्नस्तेजस्वी चरितव्रतः ॥ १४

पराङ्मुखवधं कृत्वा को नु प्राप्तस्त्वया गुणः । यदहं युद्धसंरब्धः शरेणोरसि ताडितः ॥ १५

रामः करुणवेदी च प्रजानां च हिते रतः । सानुक्रोशो महोत्साहः समयज्ञो दृढव्रतः ॥ १६

इति ते सर्वभूतानि कथयन्ति यशो भुवि । दमः शमः क्षमा धर्मो धृतिः सत्यं पराक्रमः ॥ १७

पार्थिवानां गुणा राजन् दण्डश्चाप्यपराधिषु । तान् गुणान् संप्रधार्याहमग्र्यं चाभिजनं तव ॥ १८

तारया प्रतिषिद्धोऽपि सुग्रीवेण समागतः । न मामन्येन संरब्धं प्रमत्तं योद्धुमर्हति ॥ १९

इति मे बुद्धिरुत्पन्ना बभूवादर्शने तव । न त्वां विनिहतात्मानं धर्मध्वजमधार्मिकम् ॥ ५०

जाने पापसमाचारं तृणैः कूपमिवावृतम् । सतां वेषधरं पापं प्रच्छन्नमिव पावकम् ॥ २१

नाहं त्वामभिजानामि धर्मच्छद्माभिसंवृतम् । विषये वा पुरे वा ते यदा नापकरोम्यहम्[3] ॥ २२

न च त्वामवजानेऽहं कस्मान्मां हंस्यकिल्बिषम् । फलमूलाशनं नित्यं वानरं वनगोचरम् ॥ २३

मामिहाप्रतियुध्यन्तमन्येन च समागतम् । त्वं नराधिपतेः पुत्रः प्रतीतः प्रियदर्शनः[4] ॥ २४

लिङ्गमप्यस्ति ते राजन् दृश्यते धर्मसंहितम् । कः क्षत्रियकुले जातः श्रुतवान्नष्टसंशयः ॥ २५

धर्मलिङ्गप्रतिच्छन्नः क्रूरं कर्म समाचरेत् । राम राजकुले जातो धर्मवानिति विश्रुतः ॥ २६

अभव्यो भव्यरूपेण किमर्थं परिधावसि । साम दानं क्षमा धर्मः सत्यं धृतिपराक्रमौ ॥ २७

पार्थिवानां गुणा राजन् दण्डश्चाप्यपराधिषु । वयं वनचरा राम मृगा मूलफलाशनाः ॥ २८

एषा प्रकृतिरस्माकं पुरुषस्त्वं नरेश्वरः । भूमिर्हिरण्यं रूप्यं च विग्रहे कारणानि च ॥ २९

अत्र कस्ते वने लोभो मदीयेषु फलेषु वा । नयश्च विनयश्चोभौ निग्रहानुग्रहावपि ॥ ३०

राजवृत्तिरसंकीर्णा न नृपाः कामवृत्तयः । त्वं तु कामप्रधानश्च कोपनश्चानवस्थितः ॥ ३१

राजवृत्तैरसंकीर्णः शरासनपरायणः । न तेऽस्त्यपचितिर्धर्मे नार्थे बुद्धिरवस्थिता ॥ ३२

इन्द्रियैः कामवृत्तः सन् कृष्यसे मनुजेश्वर । हत्वा बाणेन काकुत्स्थ मामिहानपराधिनम् ॥ ३३

---

१. अस्यानन्तरम्—तं तथा पतितं संख्ये गतार्चिषमिवानलम् । बहुमान्य च तं वीरं कृष्यमाणः[णौ] शनैरिव ॥ उपयातौ महावीरौ भ्रातरौ रामलक्ष्मणौ ।—इति ग.

२. अस्यानन्तरम्—बाष्पसंरुद्धकण्ठस्तु वाली सार्तस्वरं शनैः । अर्थसंहितया वाचा गर्वितं रणगर्वितः ॥ उवाच रामं संप्रेक्ष्य पङ्कलग्न इव द्विपः ।—इति ख.

३. पापं करोम्यहम् ति.

४. इदमर्धम् क. ग. घ. ङ. छ. नास्ति ।

किं वक्ष्यसि सतां मध्ये कृत्वा कर्म जुगुप्सितम् । राजहा ब्रह्महा गोघ्नश्चोरः प्राणिवधे रतः ॥ ३४
नास्तिकः परिवेत्ता च सर्वे निरयगामिनः । सूचकश्च कदर्यश्च मित्रघ्नो गुरुतल्पगः ॥ ३५
लोकं पापात्मनामेते गच्छन्त्यत्र न[1] संशयः । अधार्यं चर्म मे सद्भी रोमाण्यस्थि च वर्जितम् ॥ ३६
अभक्ष्याणि च मांसानि त्वद्विधैर्धर्मचारिभिः । पञ्च पञ्चनखा भक्ष्या ब्रह्मक्षत्रेण राघव ॥ ३७
शल्यकः श्वाविधो गोधा शशः कूर्मश्च पञ्चमः । चर्म चास्थि च मे राजन्न स्पृशन्ति मनीषिणः ॥३८
अभक्ष्याणि च मांसानि सोऽहं पञ्चनखो हतः । तारया वाक्यमुक्तोऽहं सत्यं सर्वज्ञया हितम् ॥३९
तदतिक्रम्य मोहेन कालस्य वशमागतः । त्वया नाथेन काकुत्स्थ न सनाथा वसुंधरा ॥ ४०
प्रमदा शीलसंपन्ना धूर्तेन पतिना यथा । शठो नैकृतिकः क्षुद्रो मिथ्याप्रश्रितमानसः ॥ ४१
कथं दशरथेन त्वं जातः पापो महात्मना । छिन्नचारित्रकक्ष्येण सतां धर्मातिवर्तिना ॥ ४२
त्यक्तधर्माङ्कुशेनाहं निहतो रामहस्तिना । अशुभं चाप्ययुक्तं च सतां चैव विगर्हितम् ॥ ४३
वक्ष्यसे चेदृशं कृत्वा सद्भिः सह समागतः । उदासीनेषु योऽस्मासु विक्रमस्ते प्रकाशितः ॥ ४४
अपकारिषु तं राजन्न हि पश्यामि विक्रमम् । दृश्यमानस्तु युध्येथा मया यदि नृपात्मज ॥ ४५
अद्य वैवस्वतं देवं पश्येस्त्वं निहतो मया । त्वयादृश्येन तु रणे निहतोऽहं दुरासदः ॥ ४६
प्रसुप्तः पन्नगेनेव नरः पानवशं गतः । मामेव यदि पूर्वं त्वमेतदर्थमचोदयः ॥ ४७
मैथिलीमहमेकाह्ना तव चानीतवान् [1]भवेः[2] । सुग्रीवप्रियकामेन यत्कृतेऽस्मि हतस्त्वया ॥ ४८
कण्ठे बद्ध्वा प्रदद्यां तेऽनिहतं रावणं रणे । न्यस्तां सागरतोये वा पाताले वापि मैथिलीम् ॥ ४९
आनयेयं तवादेशाच्छ्वेतामश्वतरीमिव । युक्तं यत् प्राप्नुयाद्राज्यं सुग्रीवः स्वर्गते मयि ॥ ५०
अयुक्तं यदधर्मेण त्वयाहं निहतो रणे । काममेवंविधो लोकः कालेन विनियुज्यते ॥ ५१
क्षमं चेद्भवता प्राप्तमुत्तरं साधु चिन्त्यताम् ॥

इत्येवमुक्त्वा परिशुष्कवक्त्रः शराभिघाताद्व्यथितो महात्मा ।
समीक्ष्य रामं रविसंनिकाशं तूष्णीं बभूवामरराजसूनुः[3] ॥ ५२

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
किष्किन्धाकाण्डे रामाधिक्षेपो नाम सप्तदशः सर्गः

---

1. भवेः इति पुरुषव्यत्ययः । भवेयमित्यर्थः । भवेदिति पाठमाश्रित्य व्यत्ययेनैव भवेयमिति व्याख्यातं भूषणे । अहम् आनीतवान् इत्येतत् भवेदिति वाक्यार्थकर्तृकं भवनम् इत्यपि व्याख्यातुं शक्यम् ।

१. गच्छन्ते नात्र च.

२. भवत् च. छ. अस्यानन्तरम्—राक्षसं च दुरात्मानं तव भार्यापहारिणम् । ग्रीवायां तु दशग्रीवं बद्ध्वा संप्रददे तव॥—इति क. ख. ग. घ.

३. अस्यानन्तरम्—तमुक्तवन्तं प्रवरं हरीणामथोत्तरं वाक्यमुवाच रामः । हितं च तथ्यं वचनं प्रसक्तं ससाम धर्मार्थसमाहितं च ॥ इति क. ख. घ. छ.

## अष्टादशः सर्गः

### वालिवधसमर्थनम्

इत्युक्तः प्रश्रितं वाक्यं धर्मार्थसहितं हितम् । परुषं वालिना रामो निहतेन विचेतसा ॥ १

तं निष्प्रभमिवादित्यं मुक्ततोयमिवाम्बुदम् । उक्तवाक्यं हरिश्रेष्ठमुपशान्तमिवानलम् ॥ २

धर्मार्थगुणसंपन्नं हरीश्वरमनुत्तमम् । अधिक्षिप्तस्तदा रामः पश्चाद्वालिनमब्रवीत् ॥ ३

धर्ममर्थं च कामं च समयं चापि लौकिकम् । अविज्ञाय कथं बाल्यान्मामिहाद्य विगर्हसे ॥ ४

अपृष्ट्वा बुद्धिसंपन्नान् वृद्धानाचार्यसंमतान् । सौम्य[1] वानरचापल्यात्त्वं मां वक्तुमिहेच्छसि ॥ ५

इक्ष्वाकूणामियं भूमिः सशैलवनकानना । मृगपक्षिमनुष्याणां निग्रहप्रग्रहावपि ॥ ६

तां पालयति धर्मात्मा भरतः सत्यवानृजुः । धर्मकामार्थतत्त्वज्ञो निग्रहानुग्रहे रतः ॥ ७

नयश्च विनयश्चोभौ यस्मिन् सत्यं च सुस्थितम् । विक्रमश्च यथादृष्टः स राजा देशकालवित् ॥ ८

तस्य धर्मकृतादेशा वयमन्ये च पार्थिवाः । चरामो वसुधां कृत्स्नां धर्मसंतानमिच्छवः[2] ॥ ९

तस्मिन्नृपतिशार्दूले भरते धर्मवत्सले । पालयत्यखिलां भूमिं कश्चरेद्धर्मनिग्रहम् ॥ १०

ते वयं धर्मविभ्रष्टं[3] स्वधर्मे परमे स्थिताः । भरताज्ञां पुरस्कृत्य निगृह्णीमो यथाविधि ॥ ११

त्वं तु संक्लिष्टधर्मा च कर्मणा च विगर्हितः । कामतन्त्रप्रधानश्च न स्थितो राजवर्त्मनि ॥ १२

ज्येष्ठो भ्राता पिता चैव यश्च विद्यां प्रयच्छति । त्रयस्ते पितरो ज्ञेया धर्मे वर्त्मनि वर्तिनः ॥ १३

यवीयानात्मनः पुत्रः शिष्यश्चापि गुणोदितः । पुत्रवत्ते त्रयश्चिन्त्या धर्मश्चेदत्र कारणम् ॥ १४

सूक्ष्मः परमदुर्ज्ञेयः सतां धर्मः प्लवंगम । हृदिस्थः सर्वभूतानामात्मा वेद शुभाशुभे ॥ १५

चपलश्चपलैः सार्धं वानरैरकृतात्मभिः । जात्यन्ध इव जात्यन्धैर्मन्त्रयन् द्रक्ष्यसे नु किम् ॥ १६

अहं तु व्यक्ततामस्य वचनस्य ब्रवीमि ते । न हि मां केवलं रोषात्त्वं विगर्हितुमर्हसि ॥ १७

तदेतत् कारणं पश्य यदर्थं त्वं मया हतः । भ्रातुर्वर्तसि भार्यायां त्यक्त्वा धर्मं सनातनम् ॥ १८

अस्य त्वं धरमाणस्य सुग्रीवस्य महात्मनः । रुमायां वर्तसे कामात् स्नुषायां पापकर्मकृत् ॥ १९

तद्व्यतीतस्य ते धर्मात् कामवृत्तस्य वानर । भ्रातृभार्यावमर्शेऽस्मिन् दण्डोऽयं प्रतिपादितः ॥ २०

न हि धर्मविरुद्धस्य लोकवृत्तादपेयुषः । दण्डादन्यत्र पश्यामि निग्रहं हरियूथप ॥ २१

न हि ते मर्षये पापं क्षत्रियोऽहं कुलोद्भवः । औरसीं भगिनीं वापि भार्यां वाप्यनुजस्य यः ॥ २२

प्रचरेत नरः कामात्तस्य दण्डो वधः स्मृतः । भरतस्तु महीपालो वयं चादेशवर्तिनः ॥ २३

त्वं तु धर्मादतिक्रान्तः कथं शक्यमुपेक्षितुम् । गुरुधर्मव्यतिक्रान्तं प्राज्ञो धर्मेण पालयन् ॥ २४

भरतः कामवृत्तानां निग्रहे पर्यवस्थितः । वयं तु भरतादेशं विधिं कृत्वा हरीश्वर ॥ २५

त्वद्विधान् भिन्नमर्यादान्नियन्तुं पर्यवस्थिताः । सुग्रीवेण च मे सख्यं लक्ष्मणेन यथा तथा ॥ २६

---

१. सौम्यच प्रभा. २. इच्छतः च. ३. मार्गविभ्रंशे च.

दारराज्यनिमित्तं च निःश्रेयसि रतः[1] स मे । प्रतिज्ञा च मया दत्ता तदा पावकसंनिधौ[2] ॥ २७
प्रतिज्ञाय कथं शक्यं[3] मद्विधेनानवेक्षितुम् । तदेभिः कारणैः सर्वैर्महद्भिर्धर्मसंहितैः ॥ २८
शासनं तव यद्युक्तं तद्भवाननुमन्यताम् । सर्वथा धर्म इत्येव द्रष्टव्यस्तव निग्रहः ॥ २९
वयस्यस्योपकर्तव्यं धर्ममेवानुपश्यतः । शक्यं त्वयापि तत् कार्यं धर्ममेवानुवर्तता ॥ ३०
श्रूयते मनुना गीतौ श्लोकौ चारित्रवत्सलौ । गृहीतौ धर्मकुशलैस्तत्तथा चरितं मया[4] ॥ ३१
राजभिर्धृतदण्डास्तु कृत्वा पापानि मानवाः । निर्मलाः स्वर्गमायान्ति सन्तः सुकृतिनो यथा ॥ ३२
शासनाद्वा विमोक्षाद्वा स्तेनः स्तेयाद्विमुच्यते । राजा त्वशासन् पापस्य तदवाप्नोति किल्बिषम् ॥ ३३
आर्येण मम मान्धात्रा व्यसनं घोरमीप्सितम् । श्रमणेन कृते पापे यथा पापं त्वया कृतम् ॥ ३४
अन्यैरपि कृतं पापं प्रमत्तैर्वसुधाधिपैः । प्रायश्चित्तं च कुर्वन्ति तेन तच्छाम्यते रजः ॥ ३५
तदलं परितापेन धर्मतः परिकल्पितः । वधो वानरशार्दूल न वयं स्ववशे स्थिताः ॥ ३६
शृणु चाप्यपरं भूयः कारणं हरिपुंगव । यच्छ्रुत्वा हेतुमद्वीर न मन्युं कर्तुमर्हसि ॥ ३७
न मे तत्र मनस्तापो न मन्युर्हरियूथप । वागुराभिश्च पाशैश्च कूटैश्च विविधैर्नराः ॥ ३८
प्रतिच्छन्नाश्च दृश्याश्च गृह्णन्ति सुबहून् मृगान् । प्रधावितान् वा वित्रस्तान् विस्रब्धांश्चापि निष्ठितान्॥
प्रमत्तानप्रमत्तान् वा नरा मांसार्थिनो भृशम । विध्यन्ति विमुखांश्चापि न च दोषोऽत्र विद्यते ॥ ४०
यान्ति राजर्षयश्चात्र मृगयां धर्मकोविदाः । तस्मात्त्वं निहतो युद्धे मया बाणेन वानर ॥ ४१
अयुध्यन् प्रतियुध्यन् वा यस्माच्छाखामृगो ह्यसि । दुर्लभस्य च धर्मस्य जीवितस्य शुभस्य च॥४२
राजानो वानरश्रेष्ठ प्रदातारो न संशयः । तान्न हिंस्यान्न चाक्रोशेन्नाक्षिपेन्नाप्रियं वदेत् ॥ ४३
देवा मनुष्यरूपेण चरन्त्येते महीतले । त्वं तु धर्ममविज्ञाय केवलं रोषमास्थितः ॥ ४४
प्रदूषयसि मां धर्मे पितृपैतामहे स्थितम् । एवमुक्तस्तु रामेण वाली प्रव्यथितो भृशम् ॥ ४५
न दोषं राघवे दध्यौ धर्मेऽधिगतनिश्चयः । प्रत्युवाच ततो रामं प्राञ्जलिर्वानरेश्वरः ॥ ४६
यत्त्वमात्थ नरश्रेष्ठ तदेवं नात्र संशयः । प्रतिवक्तुं प्रकृष्टे हि[6] नापकृष्टस्तु शक्नुयाम् ॥ ४७
यदयुक्तं मया पूर्वं प्रमादादुक्तमप्रियम् । तत्रापि खलु मे दोषं कर्तुं नार्हसि राघव ॥ ४८
त्वं हि दृष्टार्थतत्त्वज्ञः प्रजानां च हिते रतः । कार्यकारणसिद्धौ ते प्रसन्ना बुद्धिरव्यया ॥ ४९
मामप्यगतधर्माणं व्यतिक्रान्तपुरस्कृतम् । धर्मसंहितया वाचा धर्मज्ञ परिपालय ॥ ५०
न त्वात्मानमहं शोचे न तारां न च बान्धवान् । यथा पुत्रं गुणश्रेष्ठमङ्गदं कनकाङ्गदम् ॥ ५१

---

१. निःश्रेयसकरः पुन।.
२. वानरसंनिधौ च. छ.
३. प्रतिज्ञा च कथं शक्या च. छ.
४. हरे च. छ.
५. अस्यानन्तरम्—तस्मात्त्वं निहतः पापशरेण नतपर्वणा । गमिष्यसि च तांल्लोकान्शक्रसूनो मनोरमान् ॥—इति क.
६. प्रकृष्टेऽहम् छ.

स ममादर्शनाद्दीनो बाल्यात् प्रभृति लालितः । तटाक इव पीताम्बुरुपशोषं गमिष्यति ॥ ५२

बालश्चाकृतबुद्धिश्च एकपुत्रश्च मे प्रियः । तारेयो राम भवता रक्षणीयो महाबलः ॥ ५३

सुग्रीवे चाङ्गदे चैव विधत्स्व मतिमुत्तमाम् । त्वं हि शास्ता च गोप्ता च कार्याकार्यविधौ स्थितः ॥

या ते नरपते वृत्तिर्भरते लक्ष्मणे च या । सुग्रीवे चाङ्गदे राजंस्तां त्वमाधातुमर्हसि ॥ ५५

मद्दोषकृतदोषां तां यथा तारां तपस्विनीम् । सुग्रीवो नावमन्येत तथावस्थातुमर्हसि ॥ ५६

त्वया ह्यनुगृहीतेन राज्यं शक्यमुपासितुम् । त्वद्वशे वर्तमानेन तव चित्तानुवर्तिना ॥ ५७

शक्यं दिवं चार्जयितुं वसुधां चापि शासितुम् । त्वत्तोऽहं वधमाकाङ्क्षन् वार्यमाणोऽपि तारया ॥

सुग्रीवेण सह भ्रात्रा द्वन्द्वयुद्धमुपागतः । इत्युक्त्वा संनतो रामं विरराम हरीश्वरः ॥ ५९

स तमाश्वासयद्रामो वालिनं व्यक्तदर्शनम् । सामसंपन्नया वाचा धर्मतत्त्वार्थयुक्तया ॥ ६०

न संतापस्त्वया कार्य एतदर्थं प्लवङ्गम । न वयं भवता चिन्त्या नाप्यात्मा हरिसत्तम ॥ ६१

वयं भवद्विशेषेण धर्मतः कृतनिश्चयाः । दण्ड्ये यः पातयेद्दण्डं दण्ड्यो यश्चापि दण्ड्यते ॥ ६२

कार्यकारणसिद्धार्थावुभौ तौ नावसीदतः । तद्भवान् दण्डसंयोगादस्माद्विगतकिल्बिषः ॥ ६३

गतः स्वां प्रकृतिं धर्म्यां धर्मदृष्टेन वर्त्मना । त्यज शोकं च मोहं च भयं च हृदये स्थितम् ॥

त्वया विधानं हर्यग्र्य न शक्यमतिवर्तितुम्[1] । यथा त्वय्यङ्गदो नित्यं वर्तते वानरेश्वर ॥ ६५

तथा वर्तेत सुग्रीवे मयि चापि न संशयः ॥

स तस्य वाक्यं मधुरं महात्मनः समाहितं धर्मपथानुवर्तिनः ।
निशम्य रामस्य रणावमर्दिनो वचः सुयुक्तं निजगाद वानरः ॥ ६६

शराभितप्तेन विचेतसा मया प्रदूषितस्त्वं यदजानता प्रभो ।
इदं महेन्द्रोपम भीमविक्रम प्रसादितस्त्वं क्षम मे नरेश्वर ॥ ६७

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
किष्किन्धाकाण्डे वालिवधसमर्थनं नाम अष्टादशः सर्गः

---

## एकोनविंशः सर्गः

### तारागमनम्

स वानरमहाराजः शयानः शरविक्षतः । प्रत्युक्तो हेतुमद्वाक्यैर्नोत्तरं प्रत्यपद्यत ॥ १

अश्मभिः परिभिन्नाङ्गः पादपैराहतो भृशम् । रामबाणेन च क्रान्तो जीवितान्ते मुमोह सः ॥ २

---

१. गत इत्यादि अतिवर्तितुमित्यन्तम् ख. नास्ति ।

तं भार्या बाणमोक्षेण रामदत्तेन संयुगे । हतं प्लवगशार्दूलं तारा शुश्राव वालिनम् ॥ ३
सा सपुत्राप्रियं श्रुत्वा वधं भर्तुः सुदारुणम् । निष्पपात भृशं त्रस्ता मृगीव गिरिगह्वरात् ॥ ४
ये त्वङ्गदपरीवारा वानरा भीमविक्रमाः । ते सकार्मुकमालोक्य रामं त्रस्ताः प्रदुद्रुवुः ॥ ५
सा ददर्श ततस्त्रस्तान् हरीनापततो द्रुतम् । यूथादिव परिभ्रष्टान् मृगान्निहतयूथपान् ॥ ६
तानुवाच समासाद्य दुःखितान् दुःखिता सती । रामवित्रासितान् सर्वाननुबद्धानिवेषुभिः ॥ ७
वानरा राजसिंहस्य यस्य यूयं पुरःसराः । तं विहाय सुसंत्रस्ताः कस्माद्द्रवथ दुर्गताः ॥ ८
राज्यहेतोः स चेद्भ्राता भ्रात्रा रौद्रेण पातितः । रामेण प्रहितै रौद्रैर्मार्गणैर्दूरपातिभिः ॥ ९
कपिपत्न्या वचः श्रुत्वा कपयः कामरूपिणः । प्राप्तकालमविक्लिष्टमूचुर्वचनमङ्गनाम् ॥ १०
जीवपुत्रे निवर्तस्व पुत्रं रक्षस्व चाङ्गदम् । अन्तको रामरूपेण हत्वा नयति वालिनम् ॥ ११
क्षिप्तान् वृक्षान् समाविध्य विपुलाश्च शिलास्तथा । वाली वज्रसमैर्बाणै रामेण विनिपातितः ॥ १२
अभिद्रुतमिदं सर्वं विद्रुतं प्रसृतं बलम् । तस्मिन् प्लवगशार्दूले हते शक्रसमप्रभे ॥ १३
रक्ष्यतां नगरद्वारमङ्गदश्चाभिषिच्यताम् । पदस्थं वालिनः पुत्रं भजिष्यन्ति प्लवंगमाः ॥ १४
अथवारुचितं[1] स्थानमिह ते रुचिरानने । आविशन्ति हि दुर्गाणि क्षिप्रमन्यानि वानराः ॥ १५
अभार्याश्च सभार्याश्च सन्त्यत्र वनचारिणः । लुब्धेभ्यो विप्रयुक्तेभ्यः स्वेभ्यो नस्तुमुलं भयम् ॥ १६
अल्पान्तरगतानां तु श्रुत्वा वचनमङ्गना । आत्मनः प्रतिरूपं सा बभाषे चारुहासिनी ॥ १७
पुत्रेण मम किं कार्यं किं राज्येन किमात्मना । कपिसिंहे महाभागे तस्मिन् भर्तरि नश्यति ॥ १८
पादमूलं गमिष्यामि तस्यैवाहं महात्मनः । योऽसौ रामप्रयुक्तेन शरेण विनिपातितः ॥ १९
एवमुक्त्वा प्रदुद्राव रुदन्ती शोककर्शिता । शिरश्चोरश्च बाहुभ्यां दुःखेन समभिघ्नती ॥ २०
आव्रजन्ती ददर्शाथ पतिं निपतितं भुवि । हन्तारं दानवेन्द्राणां समरेष्वनिवर्तिनाम् ॥ २१
क्षेप्तारं पर्वतेन्द्राणां वज्राणामिव वासवम् । महावातसमाविष्टं महामेघौघनिःस्वनम् २२
शक्रतुल्यपराक्रान्तं वृष्ट्वेवोपरतं घनम् । नर्दन्तं नर्दतां भीमं शूरं शूरेण पातितम् ॥ २३
शार्दूलेनामिषस्यार्थे मृगराजं यथा हतम् । अर्चितं सर्वलोकस्य सपताकं सवेदिकम् ॥ २४
नागहेतोः सुपर्णेन चैत्यमुन्मथितं यथा । अवष्टभ्य च तिष्ठन्तं ददर्श धनुरुत्तमम् ॥ २५
रामं रामानुजं चैव भर्तुश्चैवानुजं शुभम् । तानतीत्य समासाद्य भर्तारं निहतं रणे ॥ २६
समीक्ष्य व्यथिता भूमौ संभ्रान्ता निपपात ह । सुप्त्वेव पुनरुत्थाय आर्यपुत्रेति शोचती ॥ २७

---

१. अथवा रुचितम् छ.

रुरोद सा पतिं दृष्ट्वा संदितं मृत्युदामभिः । तामवेक्ष्य तु सुग्रीवः क्रोशन्तीं कुररीमिव ॥ २८
विषादमगमत् कष्टं दृष्ट्वा चाङ्गदमागतम् ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
किष्किन्धाकाण्डे तारागमनं नाम एकोनविंशः सर्गः

---

## विंशः सर्गः

### ताराविलापः

रामचापविसृष्टेन शरेणान्तकरेण तम् । दृष्ट्वा विनिहतं भूमौ तारा ताराधिपानना ॥ १
सा समासाद्य भर्तारं पर्यष्वजत भामिनी । इषुणाभिहतं दृष्ट्वा वालिनं कुञ्जरोपमम्[1] ॥ २
वानरेन्द्रं महेन्द्राभं शोकसंतप्तमानसा । तारा तरुमिवोन्मूलं पर्यदेवयदातुरा ॥ ३
रणे दारुण विक्रान्त प्रवीर प्लवतां वर । [2]किं दीनां मां पुरोभागामद्य त्वं नाभिभाषसे ॥ ४
उत्तिष्ठ हरिशार्दूल भजस्व शयनोत्तमम् । नैवंविधाः शेरते हि भूमौ नृपतिसत्तमाः ॥ ५
अतीव खलु ते कान्ता वसुधा वसुधाधिप । गतासुरपि यां गात्रैर्मां विहाय निषेवसे ॥ ६
व्यक्तमन्या त्वया वीर धर्मतः संप्रवर्तता[3] । किष्किन्धेव पुरी रम्या स्वर्गमार्गे विनिर्मिता ॥ ७
यान्यस्माभिस्त्वया सार्धं वनेषु मधुगन्धिषु । विहृतानि त्वया काले तेषामुपरमः कृतः ॥ ८
निरानन्दा निराशाहं निमग्ना शोकसागरे । त्वयि पञ्चत्वमापन्ने महायूथपयूथपे ॥ ९
हृदयं सुस्थिरं [4]मन्ये दृष्ट्वा विनिहतं पतिम् । यन्न शोकाभिसंतप्तं स्फुटतेऽद्य सहस्रधा ॥ १०
सुग्रीवस्य त्वया भार्या हृता स च विवासितः । यत्तु तस्य त्वया व्युष्टिः प्राप्तेयं प्लवगाधिप ॥ ११
निःश्रेयसपरा मोहात्त्वया चाहं विगर्हिता । यैषाब्रवं हितं वाक्यं वानरेन्द्र हितैषिणी ॥ १२
रूपयौवनदृप्तानां दक्षिणानां च मानद । नूनमप्सरसामार्य चित्तानि प्रमथिष्यसि ॥ १३
कालो निःसंशयो नूनं जीवितान्तकरस्तव । बलाद्येनावपन्नोऽसि सुग्रीवस्यावशो वशम् ॥ १४
अस्थाने वालिनं हत्वा युद्ध्यमानं परेण च । न संतप्यति काकुत्स्थः कृत्वा कर्म सुगर्हितम्[5] ॥ १५
वैधव्यं शोकसंतापं कृपणं कृपणा सती । अदुःखोपचिता पूर्वं वर्तयिष्याम्यनाथवत् ॥ १६
लालितश्चाङ्गदो वीरः सुकुमारः सुखोचितः । वत्स्यते कामवस्थां मे पितृव्ये क्रोधमूर्छिते ॥ १७
कुरुष्व पितरं पुत्र सुदृष्टं धर्मवत्सलम् । दुर्लभं दर्शनं वत्स तव तस्य भविष्यति ॥ १८
समाश्वासय पुत्रं त्वं संदेशं संदिशस्व च । मूर्ध्नि चैनं समाघ्राय प्रवासं प्रस्थितो ह्यसि ॥ १९

---

१. इदमर्धम् ष. नास्ति ।
२. किं दीनामपुरोभागाम् ष.
किं दीनामनुरक्तां माम् छ.
३. संप्रवर्तिता ष. छ.
४. मद्यं प्र.
५. इदं पद्यम् ष. छ. नास्ति ।

रामेण हि महत् कर्म कृतं त्वामभिनिघ्नता । आनृण्यं च गतं तस्य सुग्रीवस्य प्रतिश्रवे ॥ २०

सकामो भव सुग्रीव रुमां त्वं प्रतिपत्स्यसे । भुङ्क्ष्व राज्यमनुद्विग्नः शस्तो भ्राता रिपुस्तव ॥ २१

किं मामेवं विलपतीं प्रेम्णा त्वं नाभिभाषसे । इमाः पश्य वरा बह्वीर्भार्यास्ते वानरेश्वर ॥ २२

तस्या विलपितं श्रुत्वा वानर्यः सर्वतश्च ताः । परिगृह्याङ्गदं दीनं दुःखार्ताः परिचुक्रुशुः ॥ २३

किमङ्गदं साङ्गदवीरबाहो विहाय यास्यद्य चिरप्रवासम् ।
न युक्तमेवं गुणसंनिकृष्टं विहाय पुत्रं प्रियपुत्र गन्तुम् ॥ २४

किमप्रियं ते प्रियचारुवेष मया कृतं नाथ सुतेन वा ते ।
सहाङ्गदां मामपहाय वीर यत् प्रस्थितो दीर्घमितः प्रवासम्[१] ॥ २५

यद्यप्रियं किंचिदसंप्रधार्य कृतं मया स्यात्तव दीर्घबाहो ।
क्षमस्व मे तद्धरिवंशनाथ व्रजामि मूर्ध्ना तव वीर पादौ ॥ २६

तथा तु तारा करुणं रुदन्ती भर्तुः समीपे सह वानरीभिः ।
व्यवस्यत प्रायमुपोपवेष्टुमनिन्द्यवर्णा भुवि यत्र वाली ॥ २७

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
किष्किन्धाकाण्डे ताराविलापो नाम विंशः सर्गः

---

## एकविंशः सर्गः

### हनुमदाश्वासनम्

ततो निपतितां तारां च्युतां तारामिवाम्बरात् । शनैराश्वासयामास हनुमान् हरियूथपः ॥ १

गुणदोषकृतं जन्तुः स्वकर्म फलहेतुकम्[1] । अव्यग्रस्तदवाप्नोति सर्वं प्रेत्य शुभाशुभम् ॥ २

शोच्या शोचसि कं शोच्यं दीनं दीनानुकम्पसे । कस्य को वा नु शोच्योऽस्ति देहेऽस्मिन्बुद्बुदोपमे ॥

अङ्गदस्तु कुमारोऽयं द्रष्टव्यो जीवपुत्रया । आयत्यां च विधेयानि समर्थान्यस्य चिन्तय ॥ ४

जानास्यनियतामेवं भूतानामागतिं गतिम् । तस्माच्छुभं हि कर्तव्यं पण्डितेनैहलौकिकम् ॥ ५

यस्मिन् हरिसहस्राणि प्रयुतान्यर्बुदानि च । वर्तयन्ति कृतांशानि[3] सोऽयं दिष्टान्तमागतः ॥ ६

यदयं न्यायदृष्टार्थः सामदानक्षमापरः । गतो धर्मजितां भूमिं नैनं शोचितुमर्हसि ॥ ७

सर्वे हि हरिशार्दूलाः पुत्रश्चायं तवाङ्गदः । इदं हर्यृक्षराज्यं च त्वत्सनाथमनिन्दिते ॥ ८

ताविमौ शोकसंतप्तौ[4] शनैः प्रेरय भामिनि । त्वया परिगृहीतोऽयमङ्गदः शास्तु मेदिनीम् ॥ ९

1. फलं हेतुः अनुष्ठापकं यस्य तत् कर्म फलहेतुकम् । फलस्य हेतुः । स्वार्थे कः, इति तु तिलकः ।
२. इदं पद्यं तिलके न व्याख्यातम् ।
३. कृतांशानि पुना.
१. पर्यदेवयत् ङ. ञ.
४. शोकसन्तापौ च. छ.

संततिश्च[1] यथा दृष्टा कृत्यं यच्चापि सांप्रतम्। राज्ञस्तत् क्रियतां तावदेष कालस्य निश्चयः॥ १०
संस्कार्यो हरिराजश्च अङ्गदश्चाभिषिच्यताम्। सिंहासनगतं पुत्रं पश्यन्ती शान्तिमेष्यसि॥ ११
सा तस्य वचनं श्रुत्वा भर्तृव्यसनपीडिता। अब्रवीदुत्तरं तारा हनुमन्तमवस्थितम्॥ १२
अङ्गदप्रतिरूपाणां पुत्राणामेकतः शतम्। हतस्याप्यस्य वीरस्य गात्रसंश्लेषणं वरम्॥ १३
न चाहं हरिराज्यस्य प्रभवाम्यङ्गदस्य वा। पितृव्यस्तस्य सुग्रीवः सर्वकार्येष्वनन्तरः॥ १४
न ह्येषा बुद्धिरास्थेया हनुमन्नङ्गदं प्रति। पिता हि बन्धुः पुत्रस्य न माता हरिसत्तम॥ १५

न हि मम हरिराजसंश्रयात् क्षमतरमस्ति परत्र चेह वा।
अभिमुखहतवीरसेवितं शयनमिदं मम सेवितुं क्षमम्॥ १६

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
किष्किन्धाकाण्डे हनुमदाश्वासनं नाम एकविंशः सर्गः

---

## द्वाविंशः सर्गः

### वाल्यनुशासनम्

वीक्षमाणस्तु मन्दासुः सर्वतो मन्दमुच्छ्वसन्। आदावेव तु सुग्रीवं ददर्श त्वात्मजाग्रतः[1]॥ १
तं प्राप्तविजयं वाली सुग्रीवं प्लवगेश्वरः। आभाष्य व्यक्तया वाचा सस्नेहमिदमब्रवीत्॥ २
सुग्रीव दोषेण न मां गन्तुमर्हसि किल्बिषात्। कृष्यमाणं भविष्येण बुद्धिमोहेन मां बलात्॥ ३
युगपद्विहितं तात न मन्ये सुखमावयोः। सौहार्दं भ्रातृयुक्तं हि तदिदं जातमन्यथा[2]॥ ४
प्रतिपद्य त्वमद्यैव राज्यमेषां वनौकसाम्। मामप्यद्यैव गच्छन्तं विद्धि वैवस्वतक्षयम्॥ ५
जीवितं च हि राज्यं च श्रियं च विपुलामिमाम्। प्रजहाम्येष वै तूर्णं महच्चागर्हितं यशः॥ ६
अस्यां त्वहमवस्थायां वीर वक्ष्यामि यद्वचः। यद्यप्यसुकरं राजन् कर्तुमेव तदर्हसि॥ ७
सुखार्हं सुखसंवृद्धं बालमेनमबालिशम्। बाष्पपूर्णमुखं पश्य भूमौ पतितमङ्गदम्॥ ८
मम प्राणैः प्रियतरं पुत्रं पुत्रमिवौरसम्। मया हीनमहीनार्थं सर्वतः परिपालय॥ ९
त्वमेवास्य हि दाता च परित्राता च सर्वतः। भयेष्वभयदश्चैव यथाहं प्लवगेश्वर॥ १०
एष तारात्मजः श्रीमांस्त्वया तुल्यपराक्रमः। रक्षसां तु वधे तेषामग्रतस्ते भविष्यति॥ ११
अनुरूपाणि कर्माणि विक्रम्य बलवान् रणे। करिष्यत्येष तारेयस्तरस्वी तरुणोऽङ्गदः॥ १२
सुषेणदुहिता चेयमर्थसूक्ष्मविनिश्चये। औत्पातिके च विविधे सर्वतः परिनिष्ठिता॥ १३
यदेषा साध्विति ब्रूयात् कार्यं तन्मुक्तसंशयम्। न हि तारामतं किंचिदन्यथा परिवर्तते॥ १४

---

1. सन्ततिश्चेति। सन्ततिर्हि यथा येन प्रकारेण भर्तृरहितया स्त्रिया रक्षणीया दृष्टा धर्मशास्त्रेषु तथा अङ्गदस्त्वया परिगृहीत इति पूर्वेण संबन्धः।

१. आत्मजं ततः छ. अनुजमग्रतः पुना.

२. तात नान्यथा च. छ.

राघवस्य च ते कार्यं कर्तव्यमविशङ्कया । स्यादधर्मो ह्यकरणे त्वां च हिंस्याद्विमानितः ॥ १५
इमां च मालामाधत्स्व दिव्यां सुग्रीव काञ्चनीम् । उदारा श्रीः स्थिता ह्यस्यां संप्रजह्यान्मृते मयि ॥
इत्येवमुक्तः सुग्रीवो वालिना भ्रातृसौहृदात् । हर्षं त्यक्त्वा पुनर्दीनो ग्रहग्रस्त इवोडुराट् ॥ १७
तद्वालिवचनाच्छान्तः कुर्वन् युक्तमतन्द्रितः । जग्राह सोऽभ्यनुज्ञातो मालां तां चैव काञ्चनीम् ॥१८
तां मालां काञ्चनीं दत्त्वा वाली दृष्ट्वात्मजं स्थितम् । संसिद्धः प्रेत्यभावाय स्नेहादङ्गदमब्रवीत् ॥१९
देशकालौ भजस्वाद्य क्षममाणः प्रियाप्रिये । सुखदुःखसहः काले सुग्रीववशगो भव ॥ २०
यथा हि त्वं महाबाहो लालितः सततं मया । न तथा वर्तमानं त्वां सुग्रीवो बहु मंस्यते ॥ २१
मास्यामित्रैर्गतं गच्छेर्मा शत्रुभिररिंदम । भर्तुरर्थपरो दान्तः सुग्रीववशगो भव ॥ २२
न चातिप्रणयः कार्यः कर्तव्योऽप्रणयश्च ते । उभयं हि महान् दोषस्तस्मादन्तरदृग्भव ॥ २३
इत्युक्त्वाथ विवृत्ताक्षः शरसंपीडितो भृशम् । विवृतैर्दशनैर्भीमैर्बभूवोत्क्रान्तजीवितः ॥ २४
ततो विचुक्रुशुस्तत्र वानरा हतयूथपाः । परिदेवयमानास्ते सर्वे प्लवगपुंगवाः ॥ २५
किष्किन्धा ह्यद्य शून्यासीत् स्वर्गते वानराधिपे । उद्यानानि च शून्यानि पर्वताः काननानि च ॥ २६
हते प्लवगशार्दूले निष्प्रभा वानराः कृताः । यस्योद्योगेन महता काननानि वनानि च ॥ २७
पुष्पौघेणानुबध्यन्ते करिष्यति तदद्य कः । येन दत्तं महद्युद्धं गन्धर्वस्य महात्मनः ॥ २८
गोलभस्य महाबाहोर्दश वर्षाणि पञ्च च । नैव रात्रौ न दिवसे तद्युद्धमुपशाम्यति ॥ २९
ततस्तु षोडशे वर्षे गोलभो विनिपातितः । तं हत्वा दुर्विनीतं तु वाली दंष्ट्राकरालवान् ॥ ३०
सर्वाभयकरोऽस्माकं कथमेष निपातितः ॥

हते तु वीरे प्लवगाधिपे तदा प्लवङ्गमास्तत्र न शर्म लेभिरे ।
वनेचराः सिंहयुते महावने यथा हि गावो निहते गवां पतौ ॥ ३१
ततस्तु तारा व्यसनार्णवाप्लुता मृतस्य भर्तुर्वदनं समीक्ष्य सा ।
जगाम भूमिं परिरभ्य वालिनं महाद्रुमं छिन्नमिवाश्रिता लता ॥ ३२

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
किष्किन्धाकाण्डे वाल्यनुशासनं नाम द्वाविंशः सर्गः

---

## त्रयोविंशः सर्गः

### अङ्गदाभिवादनम्

ततः समुपजिघ्रन्ती कपिराजस्य तन्मुखम् । पतिं लोकश्रुता[1] तारा मृतं वचनमब्रवीत् ॥ १
शेषे त्वं विषमे दुःखमनुक्त्वा वचनं मम । उपलोपचिते वीर सुदुःखे वसुधातले ॥ २

---

१. लोकाच्च्युतम् च. छ.

मत्तः प्रियतरा नूनं वानरेन्द्र मही तव । शेषे हि तां परिष्वज्य मां च न प्रतिभाषसे ॥ ३
सुग्रीवस्य वशं प्राप्तो विधिरेष भवत्यहो । सुग्रीव एव विक्रान्तो वीर साहसिकप्रिय ॥ ४
ऋक्षवानरमुख्यास्त्वां बलिनः पर्युपासते । एषां विलपितं कृच्छ्रमङ्गदस्य च शोचतः ॥ ५
मम चेमां गिरं श्रुत्वा किं त्वं न प्रतिबुध्यसे । इदं तद्वीरशयनं यत्र शेषे हतो युधि ॥ ६
शायिता निहता यत्र त्वयैव रिपवः पुरा । विशुद्धसत्त्वाभिजन प्रिययुद्ध मम प्रिय ॥ ७
मामनाथां विहायैकां गतस्त्वमसि मानद । शूराय न प्रदातव्या कन्या खलु विपश्चिता ॥ ८
शूरभार्यां हतां पश्य सद्यो मां विधवां कृताम् । अवभग्नश्च मे मानो भग्ना मे शाश्वती गतिः ॥ ९
अगाधे च निमग्नास्मि[1] विपुले शोकसागरे । अश्मसारमयं नूनमिदं मे हृदयं दृढम् ॥ १०
भर्तारं निहतं दृष्ट्वा यन्नाद्य शतधा गतम् । सुहृच्चैव हि भर्ता च प्रकृत्या मम च प्रियः ॥ ११
आहवे च पराक्रान्तः शूरः पञ्चत्वमागतः । पतिहीना तु या नारी कामं भवतु पुत्रिणी ॥ १२
धनधान्यैः सुपूर्णापि विधवेत्युच्यते जनैः । स्वगात्रप्रभवे वीर शेषे रुधिरकर्दमे ॥ १३
कृमिरागपरिस्तोमे त्वमात्मशयने यथा । रेणुशोणितसंवीतं गात्रं तव समन्ततः ॥ १४
परिरब्धुं न शक्नोमि भुजाभ्यां प्लवगर्षभ । कृतकृत्योऽद्य सुग्रीवो वैरेऽस्मिन्नतिदारुणे ॥ १५
यस्य रामविमुक्तेन हृतमेकेषुणा भयम् । शरेण हृदि लग्नेन गात्रसंस्पर्शने तव ॥ १६
वार्यामि त्वां[1] निरीक्षन्ती त्वयि पञ्चत्वमागते । उद्बबर्ह शरं नीलस्तस्य गात्रगतं तदा ॥ १७
गिरिगह्वरसंलीनं दीप्तमाशीविषं यथा । तस्य निष्कृष्यमाणस्य बाणस्य च बभौ द्युतिः ॥ १८
अस्तमस्तकसंरुद्धो रश्मिर्दिनकरादिव । पेतुः क्षतजधारास्तु व्रणेभ्यस्तस्य सर्वशः ॥ १९
ताम्रगैरिकसंपृक्ता धारा इव धराधरात् । अवकीर्णं विमार्जन्ती भर्तारं रणरेणुना ॥ २०
अस्रैर्नयनजैः शूरं सिषेचास्त्रसमाहतम् । रुधिरोक्षितसर्वाङ्गं दृष्ट्वा विनिहतं पतिम् ॥ २१
उवाच तारा पिङ्गाक्षं पुत्रमङ्गदमङ्गना । अवस्थां पश्चिमां पश्य पितुः पुत्र सुदारुणाम् ॥ २२
संप्रसक्तस्य वैरस्य गतोऽन्तः पापकर्मणा । बालसूर्योज्ज्वलतनुं प्रयान्तं यमसादनम् ॥ २३
अभिवादय राजानं पितरं पुत्र मानदम् । एवमुक्तः समुत्थाय जग्राह चरणौ पितुः ॥ २४
भुजाभ्यां पीनवृत्ताभ्यामङ्गदोऽहमिति ब्रुवन् । अभिवादयमानं त्वामङ्गदं त्वं यथा पुरा ॥ २५
दीर्घायुर्भव पुत्रेति किमर्थं नाभिभाषसे । अहं पुत्रसहाया त्वामुपासे गतचेतनम् ॥ २६
सिंहेन निहतं सद्यो गौः सवत्सेव गोवृषम् । इष्ट्वा संग्रामयज्ञेन रामप्रहरणाम्भसि ॥ २७
अस्मिन्नवभृथे स्नातः कथं पत्न्या मया विना । या दत्ता देवराजेन तव तुष्टेन संयुगे ॥ २८
शातकुम्भमयीं मालां तां ते पश्यामि नेह किम् । राजश्रीर्न जहाति त्वां गतासुमपि मानद ॥ २९
सूर्यस्यावर्तमानस्य शैलराजमिव प्रभा ॥

---

१. वारितास्मि ख. छ.

न मे वचः पथ्यमिदं त्वया कृतं न चास्मि शक्ता विनिवारणे तव ।
हता सपुत्रास्मि हतेन संयुगे सह त्वया श्रीर्विजहाति मामिह ॥ ३०

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
किष्किन्धाकाण्डे अङ्गदाभिवादनं नाम त्रयोविंशः सर्गः

---

## चतुर्विंशः सर्गः

### सुग्रीवताराश्वासनम्

तां त्वश्रुवेगेन दुरासदेन त्वभिप्लुतां शोकमहार्णवेन ।
पश्यंस्तदा वाल्यनुजस्तरस्वी भ्रातुर्वधेनाप्रतिमेन तेपे ॥ १

स बाष्पपूर्णेन मुखेन वीक्ष्य क्षणेन निर्विण्णमना मनस्वी ।
जगाम रामस्य शनैः समीपं भृत्यैर्वृतः संपरिदूयमानः ॥ २

स तं समासाद्य गृहीतचापमुदात्तमाशीविषतुल्यबाणम् ।
यशस्विनं लक्षणलक्षिताङ्गमवस्थितं राघवमित्युवाच ॥ ३

यथाप्रतिज्ञातमिदं नरेन्द्र कृतं त्वया दृष्टफलं च कर्म ।
ममाद्य भोगेषु नरेन्द्रपुत्र मनो निवृत्तं सह जीवितेन[1] ॥ ४

अस्यां महिष्यां तु भृशं रुदत्यां पुरे च विक्रोशति दुःखतप्ते ।
हतेऽग्रजे संशयितेऽङ्गदे च न राम राज्ये रमते मनो मे ॥ ५

क्रोधादमर्षादतिविप्रधर्षाद्भ्रातुर्वधो मेऽनुमतः पुरस्तात् ।
हते त्विदानीं हरियूथपेऽस्मिन् सुतीव्रमिक्ष्वाकुकुमार तप्ये ॥ ६

श्रेयोऽद्य मन्ये मम शैलमुख्ये तस्मिन्निवासश्चिरमृश्यमूके ।
यथा तथा वर्तयतः स्ववृत्त्या नेमं निहत्य त्रिदिवस्य लाभः ॥ ७

न त्वां जिघांसामि चरेति यन्मामयं महात्मा मतिमानुवाच ।
तस्यैव तद्राम वचोऽनुरूपमिदं पुनः कर्म च मेऽनुरूपम् ॥ ८

भ्राता कथं नाम महागुणस्य भ्रातुर्वधं राघव रोचयेत ।
राज्यस्य दुःखस्य च वीर सारं न चिन्तयन् कामपुरस्कृतः सन् ॥ ९

वधो हि मे मतो नासीत् स्वमाहात्म्याव्यतिक्रमात्[2] । ममासीद्बुद्धिदौरात्म्यात् प्राणहारी व्यतिक्रमः ॥ १०

---

१. हतजीवितेन ग. ति. रा.        २. स्वमाहात्म्यव्यतिक्रमात् ति.

द्रुमशाखावभग्नोऽहं मुहूर्तं परिनिष्टनन् । सान्त्वयित्वा त्वनेनोक्तो न पुनः कर्तुमर्हसि ॥ ११

भ्रातृत्वमार्यभावश्च धर्मश्चानेन रक्षितः । मया क्रोधश्च कामश्च कपित्वं च प्रदर्शितम् ॥ १२

अचिन्तनीयं परिवर्जनीयमनीप्सनीयं स्वनवेक्षणीयम् ।
प्राप्तोऽस्मि पाप्मानमिमं वयस्य भ्रातुर्वधात्त्वाष्ट्रवधादिवेन्द्रः ॥ १३

पाप्मानमिन्द्रस्य मही जलं च वृक्षाश्च कामं जगृहुः स्त्रियश्च ।
को नाम पाप्मानमिमं क्षमेत शाखामृगस्य प्रतिपत्तुमिच्छन् ॥ १४

नार्होमि संमानमिमं प्रजानां न यौवराज्यं कुत एव राज्यम् ।
अधर्मयुक्तं कुलनाशयुक्तमेवंविधं राघव कर्म कृत्वा ॥ १५

पापस्य कर्तास्मि विगर्हितस्य क्षुद्रस्य लोकापकृतस्य चैव ।
शोको महान् मामभिवर्ततेऽयं वृष्टेर्यथा निम्नमिवाम्बुवेगः ॥ १६

सोदर्यघातापरगात्रवालः संतापहस्ताक्षिशिरोविषाणः ।
एनोमयो मामभिहन्ति हस्ती दृप्तो नदीकूलमिव प्रवृद्धः ॥ १७

अंहो बतेदं नृवराविषह्यं[1] निवर्तते मे हृदि साधु वृत्तम् ।
विवर्णमग्नौ परितप्यमानं किट्टं यथा राघव जातरूपम्[1] ॥ १८

महाबलानां हरियूथपानामिदं कुलं राघव मन्निमित्तम् ।
अस्याङ्गदस्यापि च शोकतापादर्धस्थितप्राणमितीव मन्ये ॥ १९

सुतः सुलभ्यः सुजनः सुवश्यः कुतः सुपुत्रः सदृशोऽङ्गदेन ।
न चापि विद्येत स वीर देशो यस्मिन् भवेत् सोदरसंनिकर्षः ॥ २०

यद्यङ्गदो वीरवरार्हे[2] जीवेज्जीवेच्च माता परिपालनार्थम् ।
विना तु पुत्रं परितापदीना तारा न जीवेदिति निश्चितं मे ॥ २१

सोऽहं प्रवेक्ष्याम्यतिदीप्तमग्निं भ्रात्रा च पुत्रेण च सख्यमिच्छन् ।
इमे विचेष्यन्ति हरिप्रवीराः सीतां निदेशे तव वर्तमानाः ॥ २२

कृत्स्नं तु ते सेत्स्यति कार्यमेतन्मय्यप्रतीते मनुजेन्द्रपुत्र ।
कुलस्य हन्तारमजीवनार्हं रामानुजानीहि कृतागसं माम् ॥ २३

---

1. अंहः प्राप्य साधुवृत्तं विवर्तत इत्यत्र दृष्टान्तः अग्नाविति । अग्नौ परितप्यमानं सुवर्णं किट्टं दाहकक्षारद्रव्यं प्राप्य विवर्णं सत् निवर्तते भस्मीभवति तद्वत् ।

१. अविषह्य च. छ.

२. वीरवरार्ह च. छ. अथाङ्गदो वीरवरो न जीवेद् ति,

इत्येवमार्तस्य रघुप्रवीरः श्रुत्वा वचो वाल्यनुजस्य तस्य[1] ।
संजातबाष्पः परवीरहन्ता रामो मुहूर्तं विमना बभूव ॥ २४

तस्मिन् क्षणेऽभीक्ष्णमवेक्ष्यमाणः क्षितिक्षमावान् भुवनस्य गोप्ता ।
रामो रुदन्तीं व्यसने निमग्नां समुत्सुकः सोऽथ ददर्श ताराम् ॥ २५

तां चारुनेत्रां कपिसिंहनाथं पतिं समाश्लिष्य तदा शयानाम् ।
उत्थापयामासुरदीनसत्त्वां मन्त्रिप्रधानाः कपिवीरपत्नीम् ॥ २६

सा विस्फुरन्ती परिरभ्यमाणा भर्तुः सकाशादपनीयमाना ।
ददर्श रामं शरचापपाणिं स्वतेजसा सूर्यमिव ज्वलन्तम् ॥ २७

सुसंवृतं पार्थिवलक्षणैश्च तं चारुनेत्रं मृगशावनेत्रा ।
अदृष्टपूर्वं पुरुषप्रधानमयं स काकुत्स्थ इति प्रजज्ञे ॥ २८

तस्येन्द्रकल्पस्य दुरासदस्य महानुभावस्य समीपमार्या ।
आर्तातितूर्णं व्यसनाभिपन्ना जगाम तारा परिविह्वलन्ती ॥ २९

सा तं समासाद्य विशुद्धसत्त्वा शोकेन संभ्रान्तशरीरभावा ।
मनस्विनी वाक्यमुवाच तारा रामं रणोत्कर्षणलब्धलक्षम् ॥ ३०

त्वमप्रमेयश्च दुरासदश्च जितेन्द्रियश्चोत्तमधार्मिकश्च ।
अक्षय्यकीर्तिश्च विचक्षणश्च क्षितिक्षमावान् क्षतजोपमाक्षः ॥ ३१

त्वमात्तबाणासनबाणपाणिर्महाबलः संहननोपपन्नः ।
मनुष्यदेहाभ्युदयं विहाय दिव्येन देहाभ्युदयेन युक्तः ॥ ३२

येनैकबाणेन हतः प्रियो मे तेनैव मां त्वं जहि सायकेन ।
हता गमिष्यामि समीपमस्य न मामृते राम रमेत वाली ॥ ३३

स्वर्गेऽपि पद्मामलपत्रनेत्रः समेत्य संप्रेक्ष्य च मामपश्यन् ।
न ह्येष उच्चावचताम्रचूडा विचित्रवेषाप्सरसोऽभजिष्यत् ॥ ३४

स्वर्गेऽपि शोकं च विवर्णतां च मया विना प्राप्स्यति वीर वाली ।
रम्ये नगेन्द्रस्य तटावकाशे विदेहकन्यारहितो यथा त्वम् ॥ ३५

त्वं वेत्थ यावद्वनिताविहीनः प्राप्नोति दुःखं पुरुषः कुमारः ।
तत्त्वं प्रजानञ्जहि मां न वाली दुःखं ममादर्शनजं भजेत ॥ ३६

---

१. वालिजघन्यजस्य ख.

यद्यापि मन्येत भवान् महात्मा स्त्रीघातदोषो न भवेत्तु मह्यम् ।
आत्मेयमस्येति च मां जहि त्वं न स्त्रीवधः स्यान्मनुजेन्द्रपुत्र ॥ ३७

शास्त्रप्रयोगाद्विविधाच्च वेदादात्मा ह्यनन्यः पुरुषस्य दाराः ।
दारप्रदानान्न हि दानमन्यत् प्रदृश्यते[1] ज्ञानवतां हि लोके ॥ ३८

त्वं चापि मां तस्य मम प्रियस्य प्रदास्यसे धर्ममवेक्ष्य वीर ।
अनेन दानेन न लप्स्यसे त्वमधर्मयोगं मम वीर घातात् ॥ ३९

आर्तामनाथामपनीयमानामेवंविधामर्हसि मां निहन्तुम् ।
अहं हि मातङ्गविलासगामिना प्लवङ्गमानामृषभेण धीमता ॥ ४०

विना वरार्होत्तमहेममालिना चिरं न शक्ष्यामि नरेन्द्र जीवितुम् ।
इत्येवमुक्तस्तु विभुर्महात्मा तारां समाश्वास्य हितं बभाषे ॥ ४१

मा वीरभार्ये विमतिं कुरुष्व लोको हि सर्वो विहितो विधात्रा ।
तं चैव सर्वं सुखदुःखयोगं लोकोऽब्रवीत्तेन कृतं विधात्रा ॥ ४२

त्रयो हि लोका विहितं विधानं नातिक्रमन्ते वशगा हि तस्य ।
प्रीतिं परां प्राप्स्यसि तां तथैव पुत्रस्तु ते प्राप्स्यति यौवराज्यम् ॥ ४३

धात्रा विधानं विहितं तथैव न शूरपत्न्यः परिदेवयन्ति ।
आश्वासिता तेन तु राघवेण प्रभावयुक्तेन परंतपेन ॥
सा वीरपत्नी ध्वनता मुखेन सुवेषरूपा विरराम तारा ॥ ४४

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
किष्किन्धाकाण्डे सुग्रीवताराश्वासनं नाम चतुर्विंशः सर्गः

---

## पञ्चविंशः सर्गः

### वालिसंस्कारः

सुग्रीवं चैव तारां च साङ्गदां सहलक्ष्मणः । समानशोकः काकुत्स्थः सान्त्वयन्निदमब्रवीत् ॥ १
न शोकपरितापेन श्रेयसा युज्यते मृतः । यदत्रानन्तरं कार्यं तत्समाधातुमर्हथ ॥
लोकवृत्तमनुष्ठेयं कृतं वो बाष्पमोक्षणम् । न कालादुत्तरं किंचित् कर्म शक्यमुपासितुम् ॥ ३
नियतिः कारणं लोके नियतिः कर्मसाधनम् । नियतिः सर्वभूतानां नियोगेष्विह कारणम् ॥ ४

---

१, प्रदर्श्यते छ,

न कर्ता कस्यचित् कश्चिन्नियोगे चापि नेश्वरः। स्वभावे वर्तते लोकस्तस्य कालः परायणम्॥ ५
न कालः कालमत्येति न कालः परिहीयते। स्वभावं च समासाद्य न कश्चिदतिवर्तते॥ ६
न कालस्यास्ति बन्धुत्वं न हेतुर्न पराक्रमः। न मित्रज्ञातिसंबन्धः कारणं नात्मनो वशः॥ ७
किं तु कालपरीणामो द्रष्टव्यः साधु पश्यता। धर्मश्चार्थश्च कामश्च कालक्रमसमाहिताः॥ ८
इतः स्वां प्रकृतिं वाली गतः प्राप्तः क्रियाफलम्। धर्मार्थकामसंयोगैः[1] पवित्रं प्लवगेश्वरः॥ ९
स्वधर्मस्य च संयोगाज्जितस्तेन महात्मना। स्वर्गः परिगृहीतश्च प्राणानपरिरक्षता॥ १०
एषा वै नियतिः श्रेष्ठा यां गतो हरियूथपः। तदलं परितापेन प्राप्तकालमुपास्यताम्॥ ११
वचनान्ते तु रामस्य लक्ष्मणः परवीरहा। अवदत् प्रश्रितं वाक्यं सुग्रीवं गतचेतसम्॥ १२
कुरु त्वमस्य सुग्रीव प्रेतकार्यमनन्तरम्। ताराङ्गदाभ्यां सहितो वालिनो दहनं प्रति॥ १३
समाज्ञापय काष्ठानि शुष्काणि च बहूनि च। चन्दनादीनि दिव्यानि वालिसंस्कारकारणात्॥ १४
समाश्वासय चैनं त्वमङ्गदं दीनचेतसम्। मा भूर्बालिशबुद्धिस्त्वं त्वदधीनमिदं पुरम्॥ १५
अङ्गदस्त्वानयेन्माल्यं वस्त्राणि विविधानि च। घृतं तैलमथो गन्धान् यच्चात्र समनन्तरम्॥ १६
त्वं तार शिबिकां शिघ्रमादायागच्छ संभ्रमात्। त्वरा गुणवती युक्ता ह्यस्मिन् काले विशेषतः॥ १७
सज्जीभवन्तु प्लवगाः शिबिकावहनोचिताः। समर्था बलिनश्चैव निर्हरिष्यन्ति वालिनम्॥ १८
एवमुक्त्वा तु सुग्रीवं सुमित्रानन्दवर्धनः। तस्थौ भ्रातृसमीपस्थो लक्ष्मणः परवीरहा॥ १९
लक्ष्मणस्य वचः श्रुत्वा तारः संभ्रान्तमानसः। प्रविवेश गुहां शीघ्रं शिबिकासक्तमानसः॥ २०
आदाय शिबिकां तारः स तु पर्यापतत् पुनः। वानरैरुह्यमानां तां शूरैरुद्वहनोचितैः॥ २१
दिव्यां भद्रासनयुतां शिबिकां स्यन्दनोपमाम्। पक्षिकर्मभिराचित्रां द्रुमकर्मविभूषिताम्॥ २२
आचितां चित्रपत्तीभिः सुनिविष्टां समन्ततः। विमानमिव सिद्धानां जालवातायनान्विताम्॥ २३
सुनियुक्तां विशालां च सुकृतां विश्वकर्मणा। दारुपर्वतकोपेतां चारुकर्मपरिष्कृताम्॥ २४
वराभरणहारैश्च चित्रमाल्योपशोभिताम्। गुहागहनसंछन्नां रक्तचन्दनभूषिताम्[2]॥ २५
पुष्पौघैः समभिच्छन्नां पद्ममालाभिरेव च। तरुणादित्यवर्णाभिर्भ्राजमानाभिरावृताम्॥ २६
ईदृशीं शिबिकां दृष्ट्वा रामो लक्ष्मणमब्रवीत्। क्षिप्रं विनीयतां वाली प्रेतकार्यं विधीयताम्॥ २७
ततो वालिनमुद्यम्य सुग्रीवः शिबिकां तदा। आरोपयत विक्रोशन्नङ्गदेन सहैव तु॥ २८
आरोप्य शिबिकां चैव वालिनं गतजीवितम्। अलंकारैश्च विविधैर्माल्यैर्वस्त्रैश्च भूषितम्॥ २९
आज्ञापयत्तदा राजा सुग्रीवः प्लवगेश्वरः। और्ध्वदेहिकमार्यस्य क्रियतामनुरूपतः॥ ३०
विश्राणयन्तो रत्नानि विविधानि बहून्यपि। अग्रतः प्लवगा यान्तु शिबिका समनन्तरम्॥ ३१

---

१. सामदानार्थसंयोगैः पुना. सुनियुक्तामित्यादि रक्तचन्दनभूषितामित्यन्तम् ख.
२. सुदृढां शिल्पिभिः कृताम् ग. घ. नास्ति।

राज्ञामृद्धिविशेषा हि दृश्यन्ते भुवि यादृशाः । तादृशैरिह कुर्वन्तु वानरा भर्तृसत्क्रियाम्[1] ॥ ३२
अङ्गदं परिगृह्याशु तारप्रभृतयस्तदा । क्रोशन्तः प्रययुः सर्वे वानरा हतबान्धवाः ॥ ३३
ततः प्रणिहिताः सर्वा वानर्योऽस्य वशानुगाः । चुक्रुशुर्वीर वीरेति भूयः क्रोशन्ति ताः स्त्रियः ॥ ३४
ताराप्रभृतयः सर्वा वानर्यो हतयूथपाः । अनुजग्मुर्हि भर्तारं क्रोशन्त्यः करुणस्वनाः ॥ ३५
तासां रुदितशब्देन वानरीणां वनान्तरे । वनानि गिरयः सर्वे विक्रोशन्तीव सर्वतः ॥ ३६
पुलिने गिरिनद्यास्तु विविक्ते जलसंवृते । चितां चक्रुः सुबहवो वानराः शोककर्शिताः ॥ ३७
अवरोप्य ततः स्कन्धाच्छिबिकां वहनोचिताः । तस्थुरेकान्तमाश्रित्य सर्वे शोकसमन्विताः ॥ ३८
ततस्तारा पतिं दृष्ट्वा शिबिकातलशायिनम् । आरोप्याङ्के शिरस्तस्य विललाप सुदुःखिता ॥ ३९
हा वानरमहाराज हा नाथ मम वत्सल । हा महार्ह महाबाहो हा मम प्रिय पश्य माम् ॥ ४०
जनं न पश्यसीमं त्वं कस्माच्छोकाभिपीडितम् । प्रहृष्टमिव ते वक्त्रं गतासोरपि मानद ॥ ४१
अस्तार्कसमवर्णं च लक्ष्यते जीवतो यथा । एष त्वां रामरूपेण कालः कर्षति वानर ॥ ४२
येन स्म विधवाः सर्वाः कृता एकेषुणा रणे । इमास्तास्तव राजेन्द्र वानर्योऽप्लवगास्तव[2] ॥ ४३
पादैर्विकृष्टमध्वानमागताः किं न बुध्यसे । तवेष्टा ननु नामैता भार्याश्चन्द्रनिभाननाः ॥ ४४
इदानीं नेक्षसे कस्मात् सुग्रीवं प्लवगेश्वर । एते हि सचिवा राजंस्तारप्रभृतयस्तव ॥ ४५
पुरवासी जनश्चायं परिवार्यासतेऽनघ । विसर्जयैतान् प्लवगान् यथोचितमरिंदम ॥ ४६
ततः क्रीडामहे सर्वा वनेषु मदनोत्कटाः । एवं विलपतीं तारां पतिशोकपरिप्लुताम् ॥ ४७
उत्थापयन्ति स्म तदा वानर्यः शोककर्शिताः । सुग्रीवेण ततः सार्धमङ्गदः पितरं रुदन् ॥ ४८
चितामारोपयामास शोकेनाभिहतेन्द्रियः । ततोऽग्निं विधिवद्दत्त्वा सोऽपसव्यं चकार ह ॥ ४९
पितरं दीर्घमध्वानं प्रस्थितं व्याकुलेन्द्रियः । संस्कृत्य वालिनं ते तु विधिपूर्वं प्लवङ्गमाः ॥ ५०
आजग्मुरुदकं कर्तुं नदीं शीतजलां शिवाम् । ततस्ते सहितास्तत्र ह्यङ्गदं स्थाप्य चाग्रतः ॥ ५१
सुग्रीवतारासहिताः सिषिचुर्वालिने जलम् । सुग्रीवेणैव दीनेन दीनो भूत्वा महाबलः ॥ ५२
समानशोकः काकुत्स्थः प्रेतकार्याण्यकारयत् ॥

ततस्तु तं वालिनमग्र्यपौरुषं प्रकाशमिक्ष्वाकुवरेषुणा हतम् ।
प्रदीप्य दीप्ताग्निसमौजसं तदा सलक्ष्मणं राममुपेयिवान् हरिः ॥ ५३

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
किष्किन्धाकाण्डे वालिसंस्कारो नाम पञ्चविंशः सर्गः

---

१. तादृशं वालिनः क्षिप्रं प्राक्कुर्वन्त्वौर्ध्वदेहिकम् च. छ.
२. वानर्यस्त्यक्तवल्लभाः ख. वानर्यो वल्लभाः सदा च. छ. वानर्यः प्लवगास्तव रा.
३. विषीदति पुमा.

## षड्विंशः सर्गः

### सुग्रीवाभिषेकः

ततः शोकाभिसंतप्तं सुग्रीवं क्लिन्नवाससम् । शाखामृगमहामात्राः परिवार्योपतस्थिरे ॥ १
अभिगम्य महाबाहुं राममक्लिष्टकारिणम् । स्थिताः प्राञ्जलयः सर्वे पितामहमिवर्षयः ॥ २
ततः काञ्चनशैलाभस्तरुणार्कनिभाननः । अब्रवीत् प्राञ्जलिर्वाक्यं हनुमान् मारुतात्मजः ॥ ३
भवत्प्रसादात् सुग्रीवः पितृपैतामहं महत् । वानराणां सुदुष्प्रापं प्राप्तो राज्यमिदं प्रभो[1] ॥ ४
भवता समनुज्ञातैः प्रविश्य नगरं शुभम् । संविधास्यति कार्याणि सर्वाणि ससुहृद्गणः ॥ ५
स्नातोऽयं विविधैर्गन्धैरौषधैश्च यथाविधि । अर्चयिष्यति रत्नैश्च माल्यैश्च त्वां विशेषतः ॥ ६
इमां गिरिगुहां रम्यामभिगन्तुमितोऽर्हसि । कुरुष्व स्वामिसंबन्धं वानरान् संप्रहर्षयन् ॥ ७
एवमुक्तो हनुमता राघवः परवीरहा । प्रत्युवाच हनूमन्तं बुद्धिमान् वाक्यकोविदः ॥ ८
चतुर्दश समाः सौम्य ग्रामं वा यदि वा पुरम् । न प्रवेक्ष्यामि हनुमन् पितुर्निर्देशपालकः ॥ ९
सुसमृद्धां गुहां रम्यां सुग्रीवो वानरर्षभः । प्रविष्टो विधिवद्वीरः क्षिप्रं राज्येऽभिषिच्यताम् ॥ १०
एवमुक्त्वा हनूमन्तं रामः सुग्रीवमब्रवीत् । वृत्तज्ञो वृत्तसंपन्नमुदारबलविक्रमम् ॥ ११
इममप्यङ्गदं वीर यौवराज्येऽभिषेचय । ज्येष्ठस्य स सुतो ज्येष्ठः सदृशो विक्रमेण ते ॥ १२
अङ्गदोऽयमदीनात्मा यौवराज्यस्य भाजनम् । पूर्वोऽयं वार्षिको मासः श्रावणः सलिलागमः ॥ १३
प्रवृत्ताः सौम्य चत्वारो मासा वार्षिकसंज्ञकाः । नायमुद्योगसमयः प्रविश त्वं पुरीं शुभाम् ॥ १४
अस्मिन् वत्स्याम्यहं सौम्य पर्वते सहलक्ष्मणः । इयं गिरिगुहा रम्या विशाला युक्तमारुता ॥ १५
प्रभूतसलिला सौम्य प्रभूतकमलोत्पला । कार्त्तिके समनुप्राप्ते त्वं रावणवधे यत ॥ १६
एष नः समयः सौम्य प्रविश त्वं स्वमालयम् । अभिषिञ्चस्व राज्ये च सुहृदः संप्रहर्षय ॥ १७
इति रामाभ्यनुज्ञातः सुग्रीवो वानराधिपः । प्रविवेश पुरीं रम्यां किष्किन्धां वालिपालिताम् ॥ १८
तं वानरसहस्राणि प्रविष्टं वानरेश्वरम् । अभिवाद्य प्रविष्टानि सर्वतः पर्यवारयन् ॥ १९
ततः प्रकृतयः सर्वा दृष्ट्वा हरिगणेश्वरम् । प्रणम्य मूर्ध्ना पतिता वसुधायां समाहिताः ॥ २०
सुग्रीवः प्रकृतीः सर्वाः संभाष्योत्थाप्य वीर्यवान् । भ्रातुरन्तःपुरं सौम्यं प्रविवेश महाबलः ॥ २१
प्रविश्य त्वभिनिष्क्रान्तं सुग्रीवं वानरर्षभम् । अभ्यषिञ्चन्त सुहृदः सहस्राक्षमिवामराः ॥ २२
तस्य पाण्डरमाजह्रुश्छत्रं हेमपरिष्कृतम् । शुक्ले च वालव्यजने हेमदण्डे यशस्करे ॥ २३
तथा सर्वाणि रत्नानि सर्वबीजौषधानि च । सक्षीराणां च वृक्षाणां प्ररोहान् कुसुमानि च ॥ २४

---

१. अस्य स्थाने—वानराणां सुदंष्ट्राणां सम्पन्न- प्रभो ॥—इति पुना. बलशालिनाम् । महात्मनां सुदुष्प्रापं प्राप्तो राज्यमिदं

२. महात्मनामनुज्ञातः पुना.

शुक्लानि चैव वस्त्राणि श्वेतं चैवानुलेपनम् । सुगन्धीनि च माल्यानि स्थलजान्यम्बुजानि च ॥ २५
चन्दनानि च दिव्यानि गन्धांश्च विविधान् बहून् । अक्षतञ्जातरूपं च प्रियङ्गुमधुसर्पिषी ॥ २६
दधि चर्म च वैयाघ्रं वाराही[1] चाप्युपानहौ । समालम्भनमादाय रोचनां समनःशिलाम् ॥ २७
आजग्मुस्तत्र मुदिता वराः कन्यास्तु षोडश । ततस्ते वानरश्रेष्ठं यथाकालं यथाविधि ॥ २८
रत्नैर्वस्त्रैश्च भक्ष्यैश्च तोषयित्वा द्विजर्षभान् । ततः कुशपरिस्तीर्णं समिद्धं जातवेदसम् ॥ २९
मन्त्रपूतेन हविषा हुत्वा मन्त्रविदो जनाः । ततो हैमप्रतिष्ठाने वरास्तरणसंवृते ॥ ३०
प्रासादशिखरे रम्ये चित्रमाल्योपशोभिते । प्राङ्मुखं विविधैर्मन्त्रैः स्थापयित्वा वरासने ॥ ३१
नदीनदेभ्यः संहृत्य तीर्थेभ्यश्च समन्ततः । आहृत्य च समुद्रेभ्यः सर्वेभ्यो वानरर्षभाः ॥ ३२
अपः कनककुम्भेषु निधाय विमलाः शुभाः । शुभैर्वृषभशृङ्गैश्च कलशैश्चापि काञ्चनैः ॥ ३३
शास्त्रदृष्टेन विधिना महर्षिविहितेन च । गजो गवाक्षो गवयः शरभो गन्धमादनः ॥ ३४
मैन्दश्च द्विविदश्चैव हनुमाञ्जाम्बवान्नलः । अभ्यषिञ्चन्त सुग्रीवं प्रसन्नेन सुगन्धिना ॥ ३५
सलिलेन सहस्राक्षं वसवो वासवं यथा । अभिषिक्ते तु सुग्रीवे सर्वे वानरपुंगवाः ॥ ३६
प्रचुक्रुशुर्महात्मानो[2] हृष्टास्तत्र सहस्रशः । रामस्य तु वचः कुर्वन् सुग्रीवो हरिपुंगवः ॥ ३७
अङ्गदं संपरिष्वज्य यौवराज्येऽभ्यषेचयत् । अङ्गदे चाभिषिक्ते तु सानुक्रोशाः प्लवङ्गमाः ॥ ३८
साधु साध्विति सुग्रीवं महात्मानोऽभ्यपूजयन् । रामं चैव महात्मानं लक्ष्मणं च पुनः पुनः ॥ ३९
प्रीताश्च तुष्टुवुः सर्वे तादृशे तत्र वर्तिनि । हृष्टपुष्टजनाकीर्णा पताकाध्वजशोभिता ॥ ४०
बभूव नगरी रम्या किष्किन्धा गिरिगह्वरे ॥

निवेद्य रामाय तदा महात्मने महाभिषेकं कपिवाहिनीपतिः ।
रुमां च भार्यां प्रतिलभ्य वीर्यवानवाप राज्यं त्रिदशाधिपो यथा ॥ ४१

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
किष्किन्धाकाण्डे सुग्रीवाभिषेको नाम षड्विंशः सर्गः

---

## सप्तविंशः सर्गः

### माल्यवन्निवासः

अभिषिक्ते तु सुग्रीवे प्रविष्टे वानरे गुहाम् । आजगाम सह भ्रात्रा रामः प्रस्रवणं गिरिम् ॥ १
शार्दूलमृगसंघुष्टं सिंहैर्भीमरवैर्वृतम् । नानागुल्मलतागूढं बहुपादपसंकुलम् ॥ २
ऋक्षवानरगोपुच्छैर्मार्जारैश्च निषेवितम् । मेघराशिनिभं शैलं नित्यं शुचिजलाश्रयम् ॥ ३

---

१. वाराहौ ख. ब. वराध्यौं पुना. २. प्रचुक्रुशुः ख.

तस्य शैलस्य शिखरे महतीमायतां गुहाम् । प्रत्यगृह्णत वासार्थं रामः सौमित्रिणा सह ॥ ४
कृत्वा च समयं सौम्यः सुग्रीवेण सहानघः । कालयुक्तं महद्वाक्यमुवाच रघुनन्दनः ॥ ५
विनीतं भ्रातरं भ्राता लक्ष्मणं लक्ष्मिवर्धनम् । इयं गिरिगुहा रम्या विशाला युक्तमारुता ॥ ६
अस्यां वसाव सौमित्रे [1]वर्षरात्रमरिंदम । गिरिशृङ्गमिदं रम्यमुन्नतं पार्थिवात्मज ॥ ७
श्वेताभिः कृष्णताम्राभिः शिलाभिरुपशोभितम् । नानाधातुसमाकीर्णं दरीनिर्झरशोभितम् ॥ ८
विविधैर्वृक्षषण्डैश्च चारु चित्रलतावृतम् । नानाविहगसंघुष्टं मयूररवनादितम् ॥ ९
मालतीकुन्दगुल्मैश्च सिन्धुवारकुरण्टकैः । कदम्बार्जुनसर्जैश्च पुष्पितैरुपशोभितम् ॥ १०
इयं च नलिनी रम्या फुल्लपङ्कजमण्डिता । नातिदूरे गुहाया नौ भविष्यति नृपात्मज ॥ ११
प्रागुदक्प्रवणे देशे गुहा साधु भविष्यति । पश्चाच्चैवोन्नता सौम्य निवातेयं भविष्यति ॥ १२
गुहाद्वारे च सौमित्रे शिला समतला शुभा । श्लक्ष्णा चैवायता चैव भिन्नाञ्जनचयोपमा ॥ १३
गिरिशृङ्गमिदं तात पश्य चोत्तरतः शुभम् । भिन्नाञ्जनचयाकारमम्भोधरमिवोत्थितम् ॥ १४
दक्षिणस्यामपि दिशि स्थितं श्वेतमिवाम्बरम् । कैलासशिखरप्रख्यं नानाधातुविभूषितम् ॥ १५
प्राचीनवाहिनीं चैव नदीं भृशमकर्दमाम् । गुहायाः पूर्वतः पश्य त्रिकूटे जाह्नवीमिव ॥ १६
चम्पकैस्तिलकैस्तालैस्तमालैरतिमुक्तकैः । पद्मकैः सरलैश्चैव अशोकैश्चैव शोभिताम् ॥ १७
वानीरैस्तिनिशैश्चैव वकुलैः केतकैर्धवैः । हिन्तालैस्तिरिटैर्नीपैर्वेत्रकैः कृतमालकैः ॥ १८
तीरजैः शोभिता भाति नानारूपैस्ततस्ततः । वसनाभरणोपेता प्रमदेवाभ्यलंकृता ॥ १९
शतशः पक्षिसङ्घैश्च नानानादैर्विनादिता । अन्योन्यमतिरक्तैश्च चक्रवाकैरलंकृता ॥ २०
पुलिनैरतिरम्यैश्च हंससारससेवितैः । प्रहसन्तीव भात्येषा नारी सर्वविभूषिता ॥ २१
कचिन्नीलोत्पलैश्छन्ना भाति रक्तोत्पलैः कचित् । कचिदाभाति शुक्लैश्च दिव्यैः कुमुदकुड्मलैः ॥ २२
पारिप्लवशतैर्जुष्टा बर्हिणक्रौञ्चनादिता । रमणीया नदी सौम्य मुनिसङ्घैर्निषेविता ॥ २३
पश्य चन्दनवृक्षाणां पङ्क्तीः सुरुचिता इव । ककुभानां च दृश्यन्ते मनसेवोदिताः समम् ॥ २४
अहो सुरमणीयोऽयं देशः शत्रुनिषूदन । दृढं रंस्याव सौमित्रे साध्वत्र निवसावहे ॥ २५
इतश्च नातिदूरे सा किष्किन्धा चित्रकानना । सुग्रीवस्य पुरी रम्या भविष्यति नृपात्मज ॥ २६
गीतवादित्रनिर्घोषः श्रूयते जयतां वर । नर्दतां वानराणां च मृदङ्गाडम्बरैः सह ॥ २७
लब्ध्वा भार्यां कपिवरः प्राप्य राज्यं सुहृद्वृतः । ध्रुवं नन्दति सुग्रीवः संप्राप्य महतीं श्रियम् ॥ २८
इत्युक्त्वा न्यवसत्तत्र राघवः सहलक्ष्मणः । बहुदृश्यदरीकुञ्जे तस्मिन् प्रस्रवणे गिरौ ॥ २९
सुसुखेऽपि बहुद्रव्ये तस्मिन् हि धरणीधरे । वसतस्तस्य रामस्य रतिरल्पापि नाभवत् ॥ ३०
हृतां हि भार्यां स्मरतः प्राणेभ्योऽपि गरीयसीम् । उदयाभ्युदितं दृष्ट्वा शशाङ्कं च विशेषतः ॥ ३१

---

1. वर्षरात्रम् वार्षिकमासानित्यर्थः ।    १. सङ्घैः प्र.

आविवेश न तं निद्रा निशासु शयनं गतम् । तत्समुत्थेन शोकेन बाष्पोपहतचेतसम् ॥ ३२
तं शोचमानं काकुत्स्थं नित्यं शोकपरायणम् । तुल्यदुःखोऽब्रवीद्भ्राता लक्ष्मणोऽनुनयन् वचः॥ ३३
अलं वीर व्यथां गत्वा न त्वं शोचितुमर्हसि । शोचतो व्यवसीदन्ति सर्वार्था विदितं हि ते ॥ ३४
भवान् क्रियापरो लोके भवान् दैवपरायणः । आस्तिको धर्मशीलश्च व्यवसायी च राघव ॥ ३५
न ह्यव्यवसितः शत्रुं राक्षसं तं विशेषतः । समर्थस्त्वं रणे हन्तुं विक्रमैर्जिह्मकारिणम् ॥ ३६
समुन्मूलय शोकं त्वं व्यवसायं स्थिरं कुरु । ततः सपरिवारं तं निर्मूलं कुरु राक्षसम् ॥ ३७
पृथिवीमपि काकुत्स्थ ससागरवनाचलाम् । परिवर्तयितुं शक्तः किं पुनस्तं हि रावणम् ॥ ३८
शरत्कालं प्रतीक्षस्व प्रावृट्कालोऽयमागतः । ततः सराष्ट्रं सगणं रावणं त्वं वधिष्यसि ॥ ३९
अहं तु खलु ते वीर्यं प्रसुप्तं प्रतिबोधये । [1]दीप्तैराहुतिभिः काले भस्मच्छन्नमिवानलम् ॥ ४०
लक्ष्मणस्य तु तद्वाक्यं प्रतिपूज्य हितं शुभम् । राघवः सुहृदं स्निग्धमिदं वचनमब्रवीत् ॥ ४१
वाच्यं यदनुरक्तेन स्निग्धेन च हितेन च । सत्यविक्रमयुक्तेन तदुक्तं लक्ष्मण त्वया ॥ ४२
एष शोकः परित्यक्तः सर्वकार्यावसादकः । विक्रमेष्वप्रतिहतं तेजः प्रोत्साहयाम्यहम् ॥ ४३
शरत्कालं प्रतीक्षिष्ये स्थितोऽस्मि वचने तव । सुग्रीवस्य नदीनां च प्रसादमनुपालयन् ॥ ४४
उपकारेण वीरस्तु प्रतिकारेण युज्यते । अकृतज्ञोऽप्रतिकृतो हन्ति सत्त्ववतां मनः ॥ ४५

अथैवमुक्तः प्रणिधाय लक्ष्मणः कृताञ्जलिस्तत्प्रतिपूज्य भाषितम् ।
उवाच रामं स्वभिरामदर्शनं प्रदर्शयन् दर्शनमात्मनः शुभम् ॥ ४६
यथोक्तमेतत्तव सर्वमीप्सितं नरेन्द्र कर्ता न चिराद्धरीश्वरः ।
शरत्प्रतीक्षः क्षमतामिमं भवाञ्जलप्रपातं रिपुनिग्रहे धृतः ॥ ४७
नियम्य कोपं प्रतिपाल्यतां शरत् क्षमस्व मासांश्चतुरो मया सह ।
वसाचलेऽस्मिम् मृगराजसेविते संवर्धयञ्शत्रुवधे समुद्यमम् ॥ ४८

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
किष्किन्धाकाण्डे माल्यवन्निवासो नाम सप्तविंशः सर्गः

---

## अष्टाविंशः सर्गः

### प्रावृडुज्जृम्भणम्

स तथा वालिनं हत्वा सुग्रीवमभिषिच्य च । वसन् माल्यवतः पृष्ठे रामो लक्ष्मणमब्रवीत् ॥ १
अयं स कालः संप्राप्तः समयोऽद्य जलागमः । संपश्य त्वं नभो मेघैः संवृतं गिरिसंनिभैः ॥ २

---

1. दीप्तैः दीपकैः वाक्यैरिति शेषः ।

नवमासधृतं गर्भं भास्करस्य गभस्तिभिः । पीत्वा[1] रसं समुद्राणां द्यौः प्रसूते रसायनम् ॥ ३

शक्यमम्बरमारुह्य मेघसोपानपङ्क्तिभिः । कुटजार्जुनमालाभिरलंकर्तुं दिवाकरः[1] ॥ ४

सन्ध्यारागोत्थितैस्ताम्रैरन्तेष्वधिकपाण्डरैः । स्निग्धैरभ्रपटच्छेदैर्बद्धव्रणमिवाम्बरम् ॥ ५

मन्दमारुतनिश्वासं सन्ध्याचन्दनरञ्जितम् । आपाण्डुजलदं भाति कामातुरमिवाम्बरम् ॥ ६

एषा घर्मपरिक्लिष्टा नववारिपरिप्लुता । सीतेव शोकसंतप्ता मही बाष्पं विमुञ्चति ॥ ७

मेघोदरविनिर्मुक्ताः कह्लारसुखशीतलाः । शक्यमञ्जलिभिः पातुं वाताः केतकगन्धिनः ॥ ८

एष फुल्लार्जुनः शैलः केतकैरधिवासितः । सुग्रीव इव शान्तारिर्धाराभिरभिषिच्यते ॥ ९

मेघकृष्णाजिनधरा धारायज्ञोपवीतिनः । मारुतापूरितगुहाः प्राधीता इव पर्वताः ॥ १०

कशाभिरिव हैमीभिर्विद्युद्भिरभिताडितम् । अन्तःस्तनितनिर्घोषं सवेदनमिवाम्बरम् ॥ ११

नीलमेघाश्रिता विद्युत् स्फुरन्ती प्रतिभाति मे । स्फुरन्ती रावणस्याङ्के वैदेहीव तपस्विनी ॥ १२

इमास्ता मन्मथवतां हिताः प्रतिहता दिशः । अनुलिप्ता इव घनैर्नष्टग्रहनिशाकराः ॥ १३

क्वचिद्बाष्पाभिसंरुद्धान् वर्षागमसमुत्सुकान् । कुटजान् पश्य सौमित्रे पुष्पितान् गिरिसानुषु ॥ १४
मम शोकाभिभूतस्य कामसंदीपनान् स्थितान् ॥

रजः प्रशान्तं सहिमोऽद्य वायुर्निदाघदोषप्रसराः प्रशान्ताः ।
स्थिता हि यात्रा वसुधाधिपानां प्रवासिनो यान्ति नराः स्वदेशान् ॥ १५

संप्रस्थिता मानसवासलुब्धाः प्रियान्विताः संप्रति चक्रवाकाः ।
अभीक्ष्णवर्षोदकविक्षतेषु यानानि मार्गेषु न संपतन्ति ॥ १६

क्वचित् प्रकाशं क्वचिदप्रकाशं नभः प्रकीर्णाम्बुधरं विभाति ।
क्वचित् क्वचित् पर्वतसंनिरुद्धं रूपं यथा शान्तमहार्णवस्य ॥ १७

व्यामिश्रितं सर्जकदम्बपुष्पैर्नवं जलं पर्वतधातुताम्रम् ।
मयूरकेकाभिरनुप्रयातं शैलापगाः शीघ्रतरं वहन्ति ॥ १८

रसाकुलं षट्पदसंनिकाशं प्रभुज्यते जम्बुफलं प्रकामम् ।
अनेकवर्णं पवनावधूतं भूमौ पतत्याम्रफलं विपक्वम् ॥ १९

विद्युत्पताकाः सबलाकमालाः शैलेन्द्रकूटाकृतिसंनिकाशाः ।
गर्जन्ति मेघाः समुदीर्णनादा मत्ता गजेन्द्रा इव संयुगस्थाः ॥ २०

---

1. क्षारमपि समुद्रजलं पीत्वा गर्भधारणमाहिम्ना द्यौः रसायनं लोकजीवातुभूतं मधुरं च जलं प्रसूत- इत्यर्थः ।

१. दिवाकरम् च. छ.

वर्षोदकाप्यायितशाद्वलानि प्रवृत्तनृत्तोत्सवबर्हिणानि ।
वनानि निर्वृष्टवलाहकानि पश्यापराह्णेष्वधिकं विभान्ति ॥ २१

समुद्वहन्तः सलिलातिभारं बलाकिनो वारिधरा नदन्तः ।
महत्सु शृङ्गेषु महीधराणां विश्रम्य विश्रम्य पुनः प्रयान्ति ॥ २२

मेघाभिकामा परिसंपतन्ती संमोदिता भाति बलाकपङ्क्तिः ।
वातावधूता वरपौण्डरीकी लम्बेव माला रचिताम्बरस्य[1] ॥ २३

बालेन्द्रगोपान्तरचित्रितेन विभाति भूमिर्नवशाद्वलेन ।
गात्रानुवृत्तेन शुकप्रभेण नारीव लाक्षोक्षितकम्बलेन ॥ २४

निद्रा शनैः केशवमभ्युपैति द्रुतं नदी सागरमभ्युपैति ।
हृष्टा बलाका घनमभ्युपैति कान्ता सकामा प्रियमभ्युपैति ॥ २५

जाता वनान्ताः शिखिसंप्रनृत्ता जाताः कदम्बाः सकदम्बशाखाः ।
जाता वृषा गोषु समानकामा जाता मही सस्यवनाभिरामा ॥ २६

वहन्ति वर्षन्ति नदन्ति भान्ति ध्यायन्ति नृत्यन्ति समाश्वसन्ति ।
नद्यो घना मत्तगजा वनान्ताः प्रियाविहीनाः शिखिनः प्लवङ्गाः ॥ २७

प्रहर्षिताः केतकपुष्पगन्धमाघ्राय हृष्टा वननिर्झरेषु ।
प्रपातशब्दाकुलिता गजेन्द्राः सार्धं मयूरैः समदा नदन्ति ॥ २८

धारानिपातैरभिहन्यमानाः कदम्बशाखासु विलम्बमानाः ।
क्षणार्जितं पुष्परसावगाढं शनैर्मदं षट्चरणास्त्यजन्ति ॥ २९

अङ्गारचूर्णोत्करसंनिकाशैः फलैः सुपर्याप्तरसैः समृद्धैः ॥
जम्बूद्रुमाणां प्रविभान्ति शाखा निलीयमाना इव षट्पदौघैः ॥ ३०

तडित्पताकाभिरलंकृतानामुदीर्णगम्भीरमहारवाणाम् ।
विभान्ति रूपाणि बलाहकानां रणोद्यतानामिव वारणानाम् ॥ ३१

मार्गानुगः शैलवनानुसारी संप्रस्थितो मेघरवं निशम्य ।
युद्धाभिकामः प्रतिनागशङ्की[2] मत्तो गजेन्द्रः प्रतिसंनिवृत्तः ॥ ३२

क्वचित् प्रगीता इव षट्पदौघैः क्वचित् प्रनृत्ता इव नीलकण्ठैः ।
क्वचित् प्रमत्ता इव वारणेन्द्रैर्विभान्त्यनेकाश्रयिणो वनान्ताः ॥ ३३

---

१. रुचिराम्बरस्य क. २. प्रतिनादशङ्की ख.

कदम्बसर्जार्जुनकन्दलाढ्या वनान्तभूमिर्नववारिपूर्णा ।
मयूरमत्ताभिरुतप्रनृत्तैरापानभूमिप्रतिमा विभाति ॥ ३४

मुक्तासकाशं सलिलं पतद्वै सुनिर्मलं पत्रपुटेषु लग्नम् ।
हृष्टा विवर्णच्छदना विहङ्गाः सुरेन्द्रदत्तं तृषिताः पिबन्ति ॥ ३५

षट्पादतन्त्रीमधुराभिधानं प्लवङ्गमोदीरितकण्ठतालम् ।
आविष्कृतं मेघमृदङ्गनादैर्वनेषु संगीतमिव प्रवृत्तम् ॥ ३६

क्वचित् प्रनृत्तैः क्वचिदुन्नदद्भिः क्वचिच्च वृक्षाग्रनिषण्णकायैः[1] ।
व्यालम्बबर्हाभरणैर्मयूरैर्वनेषु संगीतमिव प्रवृत्तम् ॥ ३७

स्वनैर्घनानां प्लवगाः प्रबुद्धा विहाय निद्रां चिरसंनिरुद्धाम् ।
अनेकरूपाकृतिवर्णनादा नवाम्बुधाराभिहता नदन्ति ॥ ३८

नद्यः समुद्वाहितचक्रवाकास्तटानि शीर्णान्यपवाहयित्वा ।
दृप्ता नवप्राभृतपूर्णभोगा द्रुतं स्वभर्तारमुपोपयान्ति ॥ ३९

नीलेषु नीलाः प्रविभान्ति सक्ता मेघेषु मेघा नववारिपूर्णाः ।
दवाग्निदग्धेषु दवाग्निदग्धाः शैलेषु शैला इव बद्धमूलाः ॥ ४०

प्रहृष्टसंनादितबर्हिणानि सशक्रगोपाकुलशाद्वलानि ।
चरन्ति नीपार्जुनवासितानि गजाः सुरम्याणि वनान्तराणि ॥ ४१

नवाम्बुधाराहतकेसराणि द्रुतं परित्यज्य सरोरुहाणि ।
कदम्बपुष्पाणि सकेसराणि वनानि हृष्टा भ्रमराः पतन्ति ॥ ४२

मत्ता गजेन्द्रा मुदिता गवेन्द्रा वनेषु विश्रान्ततरा मृगेन्द्राः ।
रम्या नगेन्द्रा निभृता नरेन्द्राः प्रक्रीडितो वारिधरैः सुरेन्द्रः ॥ ४३

मेघाः समुद्धूतसमुद्रनादा महाजलौघैर्गगनावलम्बाः ।
नदीस्तटाकानि सरांसि वापीर्महीं च कृत्स्नामपवाहयन्ति[१] ॥ ४४

वर्षप्रवेगा विपुलाः पतन्ति प्रवान्ति वाताः समुदीर्णघोषाः ।
प्रनष्टकूलाः प्रवहन्ति शीघ्रं नद्यो जलैर्विप्रतिपन्नमार्गाः ॥ ४५

नरैर्नरेन्द्रा इव पर्वतेन्द्राः सुरेन्द्रदत्तैः पवनोपनीतैः ।
घनाम्बुकुम्भैरभिषिच्यमाना रूपं श्रियं स्वामिव दर्शयन्ति ॥ ४६

---

1. वृक्षाग्रावस्थिताः मयूराः गीतोपलक्षितनृत्तप्रेक्षका अत्र कल्प्यन्ते ।

१. अभिप्रयन्ति ख. ग.

घनोपगूढं गगनं सतारं[1] न भास्करो दर्शनमभ्युपैति ।
नवैर्जलौघैर्धरणी वितृप्ता तमोविलिप्ता न दिशः प्रकाशाः ॥ ४७

महान्ति कूटानि महीधराणां धाराभिधौतान्यधिकं विभान्ति ।
महाप्रमाणैर्विपुलैः प्रपातैर्मुक्ताकलापैरिव लम्बमानैः ॥ ४८

शैलोपलप्रस्खलमानवेगाः शैलोत्तमानां विपुलाः प्रपाताः ।
गुहासु संनादितबर्हिणासु हारा विशीर्यन्त इवाभिभान्ति ॥ ४९

शीघ्रप्रवेगा विपुलाः प्रपाता निर्धौतशृङ्गोपतला गिरीणाम् ।
मुक्ताकलापप्रतिमाः पतन्तो महागुहोत्सङ्गतलैर्ध्रियन्ते ॥ ५०

सुरतामर्दविच्छिन्नाः स्वर्गस्त्रीहारमौक्तिकाः । पतन्तीवाकुला दिक्षु तोयधाराः समन्ततः ॥ ५१

निलीयमानैर्विहगैर्निमीलद्भिश्च पङ्कजैः । विकसन्त्या च मालत्या गतोऽस्तं ज्ञायते रविः ॥ ५२

वृत्ता यात्रा नरेन्द्राणां सेना प्रतिनिवर्तते । वैराणि चैव मार्गाश्च सलिलेन समीकृताः ॥ ५३

मासि [2]प्रोष्ठपदे ब्रह्म ब्राह्मणानामधीयताम् । अयमध्यायसमयः सामगानामुपस्थितः ॥ ५४

निवृत्तकर्मायतनो नूनं संचितसंचयः । आषाढीमभ्युपगतो भरतः कोसलाधिपः ॥ ५५

नूनमापूर्यमाणायाः सरय्वा वर्धते रयः । मां समीक्ष्य समायान्तमयोध्याया इव स्वनः ॥ ५६

इमाः स्फीतगुणा वर्षाः सुग्रीवः सुखमश्नुते । विजितारिः सदारश्च राज्ये महति च स्थितः ॥ ५७

अहं तु हृतदारश्च राज्याच्च महतश्च्युतः । नदीकूलमिव क्लिन्नमवसीदामि लक्ष्मण ॥ ५८

शोकश्च मम विस्तीर्णो वर्षाश्च भृशदुर्गमाः । रावणश्च महाञ्शत्रुरपारं प्रतिभाति मे ॥ ५९

अयात्रां चैव दृष्ट्वेमां मार्गांश्च भृशदुर्गमान् । प्रणते चैव सुग्रीवे न मया किंचिदीरितम् ॥ ६०

अपि चातिपरिक्लिष्टं चिराद्दारैः समागतम् । आत्मकार्यगरीयस्त्वाद्वक्तुं नेच्छामि वानरम् ॥ ६१

स्वयमेव हि विश्रम्य ज्ञात्वा कालमुपागतम् । उपकारं च सुग्रीवो वेत्स्यते नात्र संशयः ॥ ६२

तस्मात् कालप्रतीक्षोऽहं स्थितोऽस्मि शुभलक्षण । सुग्रीवस्य नदीनां च प्रसादमनुपालयन् ॥ ६३

उपकारेण वीरो हि प्रतिकारेण युज्यते । अकृतज्ञोऽप्रतिकृतो हन्ति सत्त्ववतां मनः ॥ ६४

तेनैवमुक्तः प्रणिधाय लक्ष्मणः कृताञ्जलिस्तत् प्रतिपूज्य भाषितम् ।
उवाच रामं स्वभिरामदर्शनं प्रदर्शयन् दर्शनमात्मनः शुभम् ॥ ६५

यथोक्तमेतत्तव सर्वमीप्सितं नरेन्द्र कर्ता न चिराद्धरीश्वरः ।
शरत्प्रतीक्षः क्षमतामिमं भवाञ्जलप्रपातं रिपुनिग्रहे धृतः ॥ ६६

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
किष्किन्धाकाण्डे प्रावृड्जृम्भणं नाम अष्टाविंशः सर्गः

---

१. न ताराः पुना. २. भाद्रपदे क.

## एकोनत्रिंशः सर्गः

### हनुमत्प्रतिबोधनम्

समीक्ष्य विमलं व्योम गतविद्युद्बलाहकम् । सारसारवसंघुष्टं[1] रम्यज्योत्स्नानुलेपनम् ।। १
समृद्धार्थं च सुग्रीवं मन्दधर्मार्थसंग्रहम् । अत्यर्थमसतां मार्गमेकान्तगतमानसम् ।। २
निवृत्तकार्यं[2] सिद्धार्थं प्रमदाभिरतं सदा । प्राप्तवन्तमभिप्रेतान् सर्वानपि मनोरथान् ।। ३
स्वां च पत्नीमभिप्रेतां तारां चापि समीप्सिताम् । विहरन्तमहोरात्रं कृतार्थं विगतज्वरम् ।। ४
क्रीडन्तमिव देवेन्द्रं नन्दनेऽप्सरसां गणैः । मन्त्रिषु न्यस्तकार्यं च मन्त्रिणामनवेक्षकम् ।। ५
उत्सन्नराज्यसंदेशं कामवृत्तमवस्थितम् । निश्चितार्थोऽर्थतत्त्वज्ञः कालधर्मविशेषवित् ।। ६
प्रसाद्य वाक्यैर्मधुरैर्हेतुमद्भिर्मनोरमैः । वाक्यविद्वाक्यतत्त्वज्ञं हरीशं मारुतात्मजः ।। ७
हितं तथ्यं च पथ्यं च सामधर्मार्थनीतिमत् । प्रणयप्रीतिसंयुक्तं विश्वासकृतनिश्चयम् ।। ८
हरीश्वरमुपागम्य हनुमान् वाक्यमब्रवीत् । राज्यं प्राप्तं यशश्चैव कौली श्रीरपि वर्धिता ।। ९
मित्राणां संग्रहः शेषस्तं भवान् कर्तुमर्हति । यो हि मित्रेषु कालज्ञः सततं साधु वर्तते ।। १०
तस्य राज्यं च कीर्तिश्च प्रतापश्चाभिवर्धते । यस्य कोशश्च दण्डश्च मित्राण्यात्मा च भूमिप ।। ११
समवेतानि सर्वाणि स राज्यं महदश्नुते । तद्भवान् वृत्तसंपन्नः स्थितः पथि निरत्यये ।। १२
मित्रार्थमभिनीतार्थं यथावत् कर्तुमर्हति । संत्यज्य सर्वकर्माणि मित्रार्थं यो न वर्तते[3] ।। १३
संभ्रमाद्विकृतोत्साहः सोऽनर्थेनावरुध्यते[4] । यस्तु कालव्यतीतेषु मित्रकार्यमरिंदम ।। १४
स कृत्वा महतोऽप्यर्थान्न मित्रार्थेन युज्यते[5] । यदिदं वीर कार्यं नो मित्रकार्यमरिंदम ।। १५
क्रियतां राघवस्यैतद्वैदेह्याः परिमार्गणम्[6] । न च कालमतीतं ते निवेदयति कालवित् ।। १६
त्वरमाणोऽपि सन् प्राज्ञस्तव राजन् वशानुगः । कुलस्य हेतुः स्फीतस्य दीर्घबन्धुश्च राघवः ।। १७
अप्रमेयप्रभावश्च स्वयं चाप्रतिमो गुणैः । तस्य त्वं कुरु वै कार्यं पूर्वं तेन कृतं तव ।। १८
हरीश्वर हरिश्रेष्ठानाज्ञापयितुमर्हसि । न हि तावद्भवेत् कालो व्यतीतश्चोदनादृते ।। १९
चोदितस्य हि कार्यस्य भवेत् कालव्यतिक्रमः । अकर्तुरपि कार्यस्य भवान् कर्ता हरीश्वर ।। २०
किं पुनः प्रतिकर्तुस्ते राज्येन च वधेन[7] च । शक्तिमानपि विक्रान्तो वानरर्क्षगणेश्वर ।। २१

---

१. सारसाकुलसंघुष्टम् ख. घ.
२. निर्वृत्तकार्यम् च. छ.
३. योऽनुवर्तते च. यस्तु वर्तते छ.
४. संभ्रमाद्वि कृतोत्साहः सोऽनर्थैर्नावरुध्यते च. छ.
५. यस्त्वित्यादि युज्यत इत्यन्तम् ग. नास्ति ।
६. अस्यानन्तरम्—तदिदं वीर कार्यं ते कालातीतमरिंदम—इति च. छ.
७. धनेन च. छ.

कर्तुं दाशरथेः प्रीतिमाज्ञायां किं न[1] सज्जसे । कामं खलु शरैः शक्तः सुरासुरमहोरगान् ॥ २२
वशे दाशरथिः कर्तुं त्वत्प्रतिज्ञां तु काङ्क्षते । प्राणत्यागाविशङ्केन[2] कृतं तेन तव प्रियम् ॥ २३
तस्य मार्गाम वैदेहीं पृथिव्यामपि चाम्बरे । न देवा न च गन्धर्वा नासुरा न मरुद्गणाः ॥ २४
न च यक्षा भयं तस्य कुर्युः किमुत राक्षसाः । तदेवं शक्तियुक्तस्य पूर्वं प्रियकृतस्तव ॥ २५
रामस्यार्हसि पिङ्गेश कर्तुं सर्वात्मना प्रियम् । नाधस्तादवनौ नाप्सु गतिर्नोपरि चाम्बरे ॥ २६
कस्यचित् सज्जतेऽस्माकं कपीश्वर तवाज्ञया । तदाज्ञापय कः किं ते कृते कुत्र व्यवस्यतु ॥ २७
हरयो ह्यप्रधृष्यास्ते सन्ति कोट्यग्रतोऽनघाः । तस्य तद्वचनं श्रुत्वा काले साधु निवेदितम् ॥ २८
सुग्रीवः सत्त्वसंपन्नश्चकार मतिमुत्तमाम् । संदिदेशातिमतिमान्[3] नीलं नित्यकृतोद्यमम् ॥ २९
दिक्षु सर्वासु सर्वेषां सैन्यानामुपसंग्रहे । यथा सेना समग्रा मे यूथपालाश्च सर्वशः ॥ ३०
समागच्छन्त्यसङ्गेन सेनाग्राणि[4] तथा कुरु । ये त्वन्तपालाः प्लवगाः शीघ्रगा व्यवसायिनः ॥ ३१
समानयन्तु ते सैन्यं त्वरिताः शासनान्मम । स्वयं चानन्तरं सैन्यं भवानेवानुपश्यतु ॥ ३२
त्रिपञ्चरात्रादूर्ध्वं यः प्राप्नुयान्नेह वानरः । तस्य प्राणान्तिको दण्डो नात्र कार्या विचारणा ॥ ३३

हरींश्च वृद्धानुपयातु साङ्गदो भवान् ममाज्ञामधिकृत्य निश्चिताम् ।
इति व्यवस्थां हरिपुंगवेश्वरो विधाय वेश्म प्रविवेश वीर्यवान् ॥ ३४

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
किष्किन्धाकाण्डे हनुमत्प्रतिबोधनं नाम एकोनत्रिंशः सर्गः

---

## त्रिंशः सर्गः

### शरद्वर्णनम्

गुहां प्रविष्टे सुग्रीवे विमुक्ते गगने घनैः । वर्षरात्रोषितो रामः कामशोकाभिपीडितः ॥ १
पाण्डरं गगनं दृष्ट्वा विमलं चन्द्रमण्डलम् । शारदीं रजनीं चैव दृष्ट्वा ज्योत्स्नानुलेपनाम् ॥ २
कामवृत्तं च सुग्रीवं नष्टां च जनकात्मजाम् । बुद्ध्वा कालमतीतं च मुमोह परमातुरः ॥ ३
स तु संज्ञामुपागम्य मुहूर्तान्मतिमान् पुनः । मनःस्थामपि वैदेहीं चिन्तयामास राघवः ॥ ४
आसीनः पर्वतस्याग्रे हेमधातुविभूषिते । शारदं गगनं दृष्ट्वा जगाम मनसा प्रियाम् ॥ ५
दृष्ट्वा च विमलं व्योम गतविद्युद्बलाहकम् । सारसारावसंघुष्टं[5] विललापार्तया गिरा ॥ ६
सारसारावसंनादैः सारसारावनादिनी । याश्रमे रमते बाला साद्य मे रमते कथम् ॥ ७

---

१. नु ति.
२. प्राणत्यागप्रसङ्गेन क.
३. स सन्दिदेशातिबलम् ख. स संदिदेशाभिमतम् च. छ.
४. सेनाग्र्येण ति.
५. सारसाकुलसंघुष्टम् ख.

पुष्पितांश्चासनान् दृष्ट्वा काञ्चनानिव निर्मलान्[1] । कथं सा रमते बाला पश्यन्ती मामपश्यती ।। ८
या पुरा कलहंसानां स्वरेण कलभाषिणी । बुध्यते चारुसर्वाङ्गी साद्य मे बुध्यते कथम् ।। ९
निःस्वनं चक्रवाकाणां निशम्य सहचारिणाम् । पुण्डरीकविशालाक्षी कथमेषा भविष्यति ।। १०
सरांसि सरितो वापीः काननानि वनानि च । तां विना मृगशावाक्षीं चरन्नाद्य सुखं लभे ।। ११
अपि तां मद्वियोगाच्च सौकुमार्याच्च भामिनीम् । सुदूरं पीडयेत् कामः शरद्गुणनिरन्तरः ।। १२
एवमादि नरश्रेष्ठो विललाप नृपात्मजः । विहङ्ग इव सारङ्गः सलिलं त्रिदशेश्वरात् ।। १३
ततश्चञ्चूर्य रम्येषु फलार्थी गिरिसानुषु । ददर्श पर्युपावृत्तो लक्ष्मीवाँल्लक्ष्मणोऽग्रजम् ।। १४

तं चिन्तया दुःसहया परीतं विसंज्ञमेकं विजने मनस्वी ।
भ्रातुर्विषादात् परितापदीनः समीक्ष्य सौमित्रिरुवाच रामम् ।। १५

किमार्य कामस्य वशंगतेन किमात्मपौरुष्यपराभवेन ।
अयं ह्रिया[2] संह्रियते समाधिः किमत्र योगेन निवर्तते न[3] ।। १६

क्रियाभियोगं मनसः प्रसादं समाधियोगानुगतं च कालम् ।
सहायसामर्थ्यमदीनसत्त्व स्वकर्महेतुं च कुरुष्व हेतुम्[4] ।। १७

न जानकी मानववंशनाथ त्वया सनाथा सुलभा परेण ।
न चाग्निचूडां ज्वलितामुपेत्य न दह्यते वीर वरार्ह कश्चित् ।। १८

सलक्षणं लक्ष्मणमप्रधृष्यं स्वभावजं वाक्यमुवाच रामः ।
हितं च पथ्यं च नयप्रसक्तं ससाम धर्मार्थसमाहितं च ।। १९

निःसंशयं कार्यमवेक्षितव्यं क्रियाविशेषो ह्यनुवर्तितव्यः ।
ननु प्रवृत्तस्य दुरासदस्य कुमार कार्यस्य फलं न चिन्त्यम् ।। २०

अथ पद्मपलाशाक्षीं मैथिलीमनुचिन्तयन् । उवाच लक्ष्मणं रामो मुखेन परिशुष्यता ।। २१
तर्पयित्वा सहस्राक्षः सलिलेन वसुंधराम् । निर्वर्तयित्वा सस्यानि कृतकर्मा व्यवस्थितः ।। २२
स्निग्धगम्भीरनिर्घोषाः शैलद्रुमपुरोगमाः । विसृज्य सलिलं मेघाः परिश्रान्ता नृपात्मज ।। २३
नीलोत्पलदलश्यामाः श्यामीकृत्वा दिशो दश । विमदा इव मातङ्गाः शान्तवेगाः पयोधराः ।। २४
जलगर्भा महावेगाः कुटजार्जुनगन्धिनः । चरित्वा विरताः सौम्य वृष्टिवाताः समुद्यताः ।। २५
घनानां वारणानां च मयूराणां च लक्ष्मण । नादः प्रस्रवणानां च प्रशान्तः सहसानघ ।। २६

---

१. सारसारावेत्यादि निर्मलामित्यन्तम् ग. नास्ति ।
२. अयं सदा त्वः छ. अयं यदा गो.
३. निवर्तितेन च. छ.
४. तात पुना.

अभिवृष्टा महामेघैर्निर्मलाश्चित्रसानवः । अनुलिप्ता इवाभान्ति गिरयश्चन्द्ररश्मिभिः[१] ॥ २७

शाखासु सप्तच्छदपादपानां प्रभासु तारार्कनिशाकराणाम् ।
लीलासु चैवोत्तमवारणानां श्रियं विभज्याद्य शरत् प्रवृत्ता ॥ २८

संप्रत्यनेकाश्रयचित्तशोभा लक्ष्मीः शरत्कालगुणोपनीता ।
सूर्याग्रहस्तप्रतिबोधितेषु पद्माकरेष्वभ्यधिकं विभाति ॥ २९

सप्तच्छदानां कुसुमोपगन्धी षट्पादवृन्दैरनुगीयमानः ।
मत्तद्विपानां पवनोऽनुसारी दर्पं [२]वनेष्वभ्यधिकं करोति[३] ॥ ३०

अभ्यागतैश्चारुविशालपक्षैः स्मरप्रियैः पद्मरजोऽवकीर्णैः ।
महानदीनां पुलिनोपयातैः क्रीडन्ति हंसाः सह चक्रवाकैः ॥ ३१

मदप्रगल्भेषु च वारणेषु गवां समूहेषु च दर्पितेषु ।
प्रसन्नतोयासु च निम्नगासु विभाति लक्ष्मीर्बहुधा विभक्ता ॥ ३२

नभः समीक्ष्याम्बुधरैर्विमुक्तं विमुक्तबर्हाभरणा वनेषु ।
प्रियास्वसक्ता विनिवृत्तशोभा गतोत्सवा ध्यानपरा मयूराः ॥ ३३

मनोज्ञगन्धैः प्रियकैरनल्पैः पुष्पातिभारावनताग्रशाखैः ।
सुवर्णगौरैर्नयनाभिरामैरुद्द्योतितानीव वनान्तराणि ॥ ३४

प्रियान्वितानां नलिनीप्रियाणां वने रतानां कुसुमोद्धतानाम् ।
मदोत्कटानां मदलालसानां गजोत्तमानां गतयोऽद्य मन्दाः ॥ ३५

व्यभ्रं नभः शस्त्रविधौतवर्णं कृशप्रवाहाणि नदीजलानि ।
कल्हारशीताः पवनाः प्रवान्ति तमोविमुक्ताश्च दिशः प्रकाशाः ॥ ३६

सूर्यातपक्रामणनष्टपङ्का भूमिश्चिरोद्घाटितसान्द्ररेणुः[४] ।
अन्योन्यवैरेण समायुतानामुद्योगकालोऽद्य नराधिपानाम् ॥ ३७

शरद्गुणाप्यायितरूपशोभाः प्रहर्षिताः पांसुसमुक्षिताङ्गाः ।
मदोत्कटाः संप्रति युद्धलुब्धा वृषा गवां मध्यगता नदन्ति ॥ ३८

समन्मथास्तीव्रतरानुरागाः कुलान्विता मन्दगतिं करिण्यः ।
मदान्वितं संपरिवार्य यान्तं वनेषु भर्तारमनुप्रयान्ति ॥ ३९

---

१. चित्रदीप्तिभिः च. छ.
२. बिनेष्यन् पुना.
३. विभाति ति. क.
४. भूमिः समुत्पातितसान्द्ररेणुः ग. ख. घ. छ.

त्यक्त्वा वराण्यात्मविभूषणानि बर्हाणि तीरोपगता नदीनाम् ।
निर्भर्त्स्यमाना इव सारसौघैः प्रयान्ति दीना विमदा मयूराः ॥ ४०

वित्रास्य कारण्डवचक्रवाकान् महारवैर्भिन्नकटा गजेन्द्राः ।
सरःसु बद्धाम्बुजभूषणेषु विक्षोभ्य विक्षोभ्य जलं पिबन्ति ॥ ४१

व्यपेतपङ्कासु सुवालुकासु प्रसन्नतोयासु सगोकुलासु ।
ससारसारावविनादितासु नदीषु हृष्टा निपतन्ति हंसाः ॥ ४२

नदीवनप्रस्रवणोदकानामतिप्रवृद्धानिलबर्हिणानाम् ।
प्लवङ्गमानां च गतोत्सवानां द्रुतं रवाः संप्रति संप्रनष्टाः ॥ ४३

अनेकवर्णाः सुविनष्टकाया नवोदितेष्वम्बुधरेषु नष्टाः ।
क्षुधार्दिता घोरविषा बिलेभ्यश्चिरोषिता विप्रसरन्ति सर्पाः ॥ ४४

चञ्चच्चन्द्रकरस्पर्शहर्षोन्मीलिततारका। अहो रागवती सन्ध्या जहाति स्वयमम्बरम् ॥ ४५

दर्शयन्ति शरन्नद्यः पुलिनानि शनैः शनैः । नवसङ्गमसव्रीडा जघनानीव योषितः ॥ ४६

रात्रिः शशाङ्कोदितसौम्यवक्त्रा तारागणोन्मीलितचारुनेत्रा ।
ज्योत्स्नांशुकप्रावरणा विभाति नारीव शुक्लांशुकसंवृताङ्गी ॥ ४७

विपक्वशालिप्रसवानि भुक्त्वा प्रहर्षिता सारसचारुपङ्क्तिः ।
नभः समाक्रामति शीघ्रवेगा वातावधूता ग्रथितेव माला ॥ ४८

सुप्तैकहंसं कुमुदैरुपेतं महाह्रदस्थं सलिलं विभाति ।
घनैर्विमुक्तं निशि पूर्णचन्द्रं तारागणाकीर्णमिवान्तरिक्षम् ॥ ४९

प्रकीर्णहंसाकुलमेखलानां प्रबुद्धपद्मोत्पलमालिनीनाम् ।
वाप्युत्तमानामधिकाद्य लक्ष्मीर्वराङ्गनानामिव भूषितानाम् ॥ ५०

वेणुस्वनव्यञ्जिततूर्यमिश्रः प्रत्यूषकालानिलसंप्रवृद्धः ।
संमूर्छितो [1]गह्वरगोवृषाणामन्योऽन्यमापूरयतीव शब्दः ॥ ५१

नवैर्नदीनां कुसुमप्रहासैर्व्याधूयमानैर्मृदुमारुतेन ।
धौतामलक्षौमपटप्रकाशैः कूलानि काशैरुपशोभितानि ॥ ५२

वनप्रचण्डा मधुपानशौण्डाः प्रियान्विताः षट्चरणाः प्रहृष्टाः ।
वनेषु मत्ताः पवनानुयात्रां कुर्वन्ति पद्मासनरेणुगौराः ॥ ५३

---

१. गर्गर- च. छ.

जलं प्रसन्नं कुमुदं प्रहासं क्रौञ्चस्वनः शालिवनं विपक्वम् ।
मृदुश्च वायुर्विमलश्च चन्द्रः शंसन्ति वर्षव्यपनीतकालम् ॥ ५४

मीनोपसंदर्शितमेखलानां नदीवधूनां गतयोऽद्य मन्दाः ।
कान्तोपभुक्तालसगामिनीनां प्रभातकालेष्विव कामिनीनाम् ॥ ५५

सचक्रवाकानि सशैवलानि काशैर्दुकूलैरिव संवृतानि ।
सपत्रलेखानि सरोचनानि वधूमुखानीव नदीमुखानि ॥ ५६

प्रफुल्लबाणासनचित्रितेषु प्रहृष्टषट्पादनिकूजितेषु ।
गृहीतचापोद्यतचण्डदण्डः प्रचण्डचारोऽद्य वनेषु कामः ॥ ५७

लोकं सुवृष्ट्या परितोषयित्वा नदीस्तटाकानि च पूरयित्वा ।
निष्पन्नसस्यां वसुधां च कृत्वा त्यक्त्वा नभस्तोयधराः प्रनष्टाः ॥ ५८

प्रसन्नसलिलाः सौम्य कुररीभिर्विनादिताः । चक्रवाकगणाकीर्णा विभान्ति सलिलाशयाः ॥ ५९
असनाः सप्तपर्णाश्च कोविदाराश्च पुष्पिताः । दृश्यन्ते बन्धुजीवाश्च श्यामाश्च गिरिसानुषु ॥ ६०
हंससारसचक्राह्वैः कुररैश्च समन्ततः । पुलिनान्यवकीर्णानि नदीनां पश्य लक्ष्मण ॥ ६१
अन्योन्यं बद्धवैराणां जिगीषूणां नृपात्मज । उद्योगसमयः सौम्य पार्थिवानामुपस्थितः ॥ ६२
इयं सा प्रथमा यात्रा पार्थिवानां नृपात्मज । न च पश्यामि सुग्रीवमुद्योगं वा तथाविधम्[1] ॥ ६३
चत्वारो वार्षिका मासा गता वर्षशतोपमाः । मम शोकाभिभूतस्य सौम्य सीतामपश्यतः ॥ ६४
चक्रवाकीव भर्तारं पृष्ठतोऽनुगता वनम् । विषमं दण्डकारण्यमुद्यानमिव याङ्गना ॥ ६५
प्रियाविहीने दुःखार्ते हृतराज्ये विवासिते । कृपां न कुरुते राजा सुग्रीवो मयि लक्ष्मण ॥ ६६
अनाथो हृतराज्योऽयं रावणेन च धर्षितः । दीनो दूरगृहः कामी मां चैव शरणं गतः ॥ ६७
इत्येतैः कारणैः सौम्य सुग्रीवस्य दुरात्मनः । अहं वानरराजस्य परिभूतः परंतप ॥ ६८
स कालं परिसंख्याय सीतायाः परिमार्गणे । कृतार्थः समयं कृत्वा दुर्मतिर्नावबुध्यते ॥ ६९
स किष्किन्धां प्रविश्य त्वं ब्रूहि वानरपुंगवम् । मूर्खं ग्राम्यसुखे सक्तं सुग्रीवं वचनान्मम ॥ ७०
अर्थिनामुपपन्नानां पूर्वं चाप्युपकारिणाम् । आशां संश्रुत्य यो हन्ति स लोके पुरुषाधमः ॥ ७१
शुभं वा यदि वा पापं यो हि वाक्यमुदीरितम् । सत्येन परिगृह्णाति स वीरः पुरुषोत्तमः ॥ ७२
कृतार्था ह्यकृतार्थानां मित्राणां न भवन्ति ये । तान् मृतानपि क्रव्यादाः कृतघ्नान्नोपभुञ्जते ॥ ७३
नूनं काञ्चनपृष्ठस्य विकृष्टस्य मया रणे । द्रष्टुमिच्छति चापस्य रूपं विद्युद्गुणोपमम् ॥ ७४
घोरं ज्यातलनिर्घोषं क्रुद्धस्य मम संयुगे । निर्घोषमिव वज्रस्य पुनः संश्रोतुमिच्छति ॥ ७५
काममेवंगतेऽप्यस्य परिज्ञाते पराक्रमे । त्वत्सहायस्य मे वीर न चिन्ता स्यान्नृपात्मज ॥ ७६

---

१. ६२, ६३ पद्ये पुना. न स्तः ।

यदर्थमयमारम्भः कृतः परपुरंजय । समयं नाभिजानाति कृतार्थः प्लवगेश्वरः ॥ ७७

वर्षाः समयकालं तु प्रतिज्ञाय हरीश्वरः । व्यतीतांश्चतुरो मासान् विहरन्नावबुध्यते ॥ ७८

सामात्यपरिषत् क्रीडन् पानमेवोपसेवते । शोकदीनेषु नास्मासु सुग्रीवः कुरुते दयाम् ॥ ७९

उच्यतां गच्छ सुग्रीवस्त्वया वत्स महाबल । मम रोषस्य यद्रूपं ब्रूयाश्चैनमिदं वचः ॥ ८०

न च संकुचितः पन्था येन वाली हतो गतः । समये तिष्ठ सुग्रीव मा वालिपथमन्वगाः ॥ ८१

एक एव रणे वाली शरेण निहतो मया । त्वां तु सत्यादतिक्रान्तं हनिष्यामि सबान्धवम् ॥ ८२

तदेवं विहिते कार्ये यद्धितं पुरुषर्षभ । तत्तद्ब्रूहि नरश्रेष्ठ त्वर कालव्यतिक्रमः ॥ ८३

कुरुष्व सत्यं मयि वानरेश्वर प्रतिश्रुतं धर्ममवेक्ष्य शाश्वतम् ।
मा वालिनं प्रेत्य गतो यमक्षयं त्वमद्य पश्येर्मम चोदितैः शरैः ॥ ८४

स पूर्वजं तीव्रविवृद्धकोपं लालप्यमानं प्रसमीक्ष्य दीनम् ।
चकार तीव्रां मतिमुग्रतेजा हरीश्वरे मानववंशनाथः ॥ ८५

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
किष्किन्धाकाण्डे शरद्वर्णनं नाम त्रिंशः सर्गः

---

## एकत्रिंशः सर्गः

### लक्ष्मणक्रोधः

स कामिनं दीनमदीनसत्त्वं शोकाभिपन्नं समुदीर्णकोपम् ।
नरेन्द्रसूनुर्नरदेवपुत्रं रामानुजः पूर्वजमित्युवाच ॥ १

न वानरः स्थास्यति साधुवृत्ते न मंस्यते कर्मफलानुषङ्गान् ।
न भोक्ष्यते वानरराज्यलक्ष्मीं तथा हि नाभिक्रमतेऽस्य बुद्धिः । २

मतिक्षयाद्ग्राम्यसुखेषु सक्तस्तव प्रसादप्रतिकारबुद्धिः ।
हतोऽग्रजं पश्यतु वीर तस्य न राज्यमेवं विगुणस्य देयम् ॥ ३

न धारये कोपमुदीर्णवेगं निहन्मि सुग्रीवमसत्यमद्य ।
हरिप्रवीरैः सह वालिपुत्रो नरेन्द्रपुत्र्या[2] विचयं करोतु ॥ ४

तमात्तबाणासनमुत्पतन्तं निवेदितार्थं रणचण्डकोपम् ।
उवाच रामः परवीरहन्ता स्ववेक्षितं सानुनयं च वाक्यम् ॥ ५

न हि वै त्वद्विधो लोके पापमेवं समाचरेत् । [3]कोपमार्येण यो हन्ति स वीरः पुरुषोत्तमः ॥ ६

---

१. राघवं प्र. २. नरेन्द्रपत्न्या च. छ. ३. पापम् च. छ.

नेदमद्य त्वया ग्राह्यं साधुवृत्तेन लक्ष्मण । तां प्रीतिमनुवर्तस्व पूर्ववृत्तं च संगतम् ॥ ७
सामोपहितया वाचा रूक्षाणि परिवर्जयन् । वक्तुमर्हसि सुग्रीवं व्यतीतं कालपर्यये ॥ ८
सोऽग्रजेनानुशिष्टार्थो यथावत् पुरुषर्षभः । प्रविवेश पुरीं वीरो लक्ष्मणः परवीरहा ॥ ९
ततः शुभमतिः प्राज्ञो भ्रातुः प्रियहिते रतः । लक्ष्मणः प्रतिसंरब्धो जगाम भवनं कपेः ॥ १०
शक्रबाणासनप्रख्यं धनुः कालान्तकोपमम्[1] । प्रगृह्य गिरिशृङ्गाभं मन्दरः सानुमानिव ॥ ११
यथोक्तकारी वचनमुत्तरं चैव सोत्तरम् । बृहस्पतिसमो बुद्धया मत्वा रामानुजस्तदा ॥ १२
कामक्रोधसमुत्थेन भ्रातुः कोपाग्निना वृतः । प्रभञ्जन इवाप्रीतः प्रययौ लक्ष्मणस्तदा ॥ १३
सालतालाश्वकर्णांश्च तरसा पातयन् बहून् । पर्यस्यन् गिरिकूटानि द्रुमानन्यांश्च वेगितः ॥ १४
शिलाश्च शकलीकुर्वन् पद्भ्यां गज इवाशुगः । दूरमेकपदं त्यक्त्वा ययौ कार्यवशाद्‍द्रुतम् ॥ १५
तामपश्यद्बलाकीर्णां हरिराजमहापुरीम् । दुर्गामिक्ष्वाकुशार्दूलः किष्किन्धां गिरिसंकटे ॥ १६
रोषात् प्रस्फुरमाणोष्ठः सुग्रीवं प्रति लक्ष्मणः । ददर्श वानरान् भीमान् किष्किन्धाया बहिश्चरान् ॥ १७
तं दृष्ट्वा वानराः सर्वे लक्ष्मणं पुरुषर्षभम् । शैलशृङ्गाणि शतशः प्रवृद्धांश्च महीरुहान् ॥ १८
जगृहुः कुञ्जरप्रख्या वानराः पर्वतान्तरे । तान् गृहीतप्रहरणान् हरीन् दृष्ट्वा तु लक्ष्मणः ॥ १९
बभूव द्विगुणं क्रुद्धो बह्विन्धन इवानलः । तं ते भयपरीताङ्गाः क्रुद्धं दृष्ट्वा प्लवंगमाः ॥ २०
कालमृत्युयुगान्ताभं शतशो विद्रुता दिशः । ततः सुग्रीवभवनं प्रविश्य हरिपुंगवाः ॥ २१
क्रोधमागमनं चैव लक्ष्मणस्य न्यवेदयन् । तारया सहितः कामे[2] सक्तः कपिवृषो रहः ॥ २२
न तेषां कपिवीराणां शुश्राव वचनं तदा । ततः सचिवसंदिष्टा हरयो रोमहर्षणाः ॥ २३
गिरिकुञ्जरमेघाभा नगर्या निर्ययुस्तदा । नखदंष्ट्रायुधा घोराः सर्वे विकृतदर्शनाः ॥ २४
सर्वे शार्दूलदर्पाश्च सर्वे च विकृताननाः । दशनागबलाः केचित् केचिद्दशगुणोत्तराः ॥ २५
केचिन्नागसहस्रस्य बभूवुस्तुल्यविक्रमाः[3] । कृत्स्नां हि कपिभिर्व्याप्तां द्रुमहस्तैर्महाबलैः ॥ २६
अपश्यल्लक्ष्मणः क्रुद्धः किष्किन्धां तां दुरासदाम् । ततस्ते हरयः सर्वे प्राकारपरिघान्तरात् ॥ २७
निष्क्रम्योदग्रसत्त्वास्तु तस्थुराविष्कृतं तदा । सुग्रीवस्य प्रमादं च पूर्वजस्यार्थमात्मवान्[4] ॥ २८
बुद्ध्वा कोपवशं वीरः पुनरेव जगाम सः । स दीर्घोष्णमहोच्छ्वासः कोपसंरक्तलोचनः ॥ २९
बभूव नरशार्दूलः सधूम इव पावकः । बाणशल्यस्फुरज्जिह्वः सायकासनभोगवान् ॥ ३०
स्वतेजोविषसङ्घातः पञ्चास्य इव पन्नगः । तं दीप्तमिव कालाग्निं नागेन्द्रमिव कोपितम् ॥ ३१

---

१. कालान्तकोपमः च. छ.

२. कामी प्र.

३. अस्यानन्तरम्—सन्ति चौघबलाः केचित् केचिद्वायुबलोत्तराः । अप्रमेयबलाः केचित्तत्रासन् हरियूथपाः ॥ प्रतिपूर्णमिवाकाशं संछन्नमिव तद्वनम् । तेन वानरसैन्येन सुग्रीवस्य महात्मनः ॥ ततो द्वाराणि सर्वाणि चाङ्गदो राजशासनात् । पर्यधावत दुर्धर्षो नक्षत्राणीव चन्द्रमाः ॥—इति क. ख. घ. छ.

४. पूर्वजं चार्तमात्मवान् च.

समासाद्याङ्गदस्त्रासाद्विषादमगमद्भृशम् । सोऽङ्गदं रोषताम्राक्षः संदिदेश महायशाः ॥ ३२
सुग्रीवः कथ्यतां वत्स ममागमनमित्युत । एष रामानुजः प्राप्तस्त्वत्सकाशमरिंदमः ॥ ३३
भ्रातुर्व्यसनसंतप्तो द्वारि तिष्ठति लक्ष्मणः । तस्य वाक्ये यदि रुचिः क्रियतां साधु वानर ॥ ३४
इत्युक्त्वा शीघ्रमागच्छ वत्स वाक्यमिदं मम । लक्ष्मणस्य वचः श्रुत्वा शोकाविष्टोऽङ्गदोऽब्रवीत् ॥ ३५
पितुः समीपमागम्य सौमित्रिरयमागतः ॥

अथाङ्गदस्तस्य वचो निशम्य संभ्रान्तभावः परिदीनवक्त्रः ।
निपत्य तूर्णं नृपतेस्तरस्वी ततः कुमारश्चरणौ ववन्दे ॥ ३६
संगृह्य पादौ पितुरग्र्यतेजा जग्राह मातुः पुनरेव पादौ ।
पादौ रुमायाश्च निपीडयित्वा निवेदयामास ततस्तमर्थम् ॥ ३७

स निद्रामदसंवीतो वानरो न विबुद्धवान् । बभूव मदमत्तश्च मदनेन च मोहितः ॥ ३८
ततः किलकिलां चक्रुर्लक्ष्मणं प्रेक्ष्य वानराः । प्रसादयन्तस्तं क्रुद्धं भयमोहितचेतसः ॥ ३९
ते महौघनिभं दृष्ट्वा वज्राशनिसमस्वनम् । सिंहनादं समं चक्रुर्लक्ष्मणस्य समीपतः ॥ ४०
तेन शब्देन महता प्रत्यबुध्यत वानरः । मदविह्वलताम्राक्षो व्याकुलस्रग्विभूषणः ॥ ४१
अथाङ्गदवचः श्रुत्वा तेनैव च समागतौ । मन्त्रिणौ वानरेन्द्रस्य संमतोदारदर्शिनौ ॥ ४२
प्लक्षश्चैव प्रभावश्च मन्त्रिणावर्थधर्मयोः । वक्तुमुच्चावचं प्राप्तं लक्ष्मणं तौ शशंसतुः ॥ ४३
प्रसादयित्वा सुग्रीवं वचनैः सामनिश्चितैः[1] । आसीनं पर्युपासीनौ यथा शक्रं मरुत्पतिम्[2] ॥ ४४
सत्यसन्धौ महाभागौ भ्रातरौ रामलक्ष्मणौ । वयस्यभावं संप्राप्तौ राज्यार्हौ राज्यदायिनौ ॥ ४५
तयोरेको धनुष्पाणिर्द्वारि तिष्ठति लक्ष्मणः । यस्य भीताः प्रवेपन्तो नादान् मुञ्चन्ति वानराः ॥ ४६
स एष राघवभ्राता लक्ष्मणो वाक्यसारथिः । व्यवसायरथः प्राप्तस्तस्य रामस्य शासनात् ॥ ४७
अयं च दयितो राजंस्तारायास्तनयोऽङ्गदः । लक्ष्मणेन सकाशं ते प्रेषितस्त्वरयानघ ॥ ४८
सोऽयं रोषपरीताक्षो द्वारि तिष्ठति वीर्यवान् । वानरान् वानरपते चक्षुषा निर्दहन्निव ॥ ४९
तस्य मूर्ध्ना प्रणम्य त्वं सपुत्रः सह बन्धुभिः । गच्छ शीघ्रं महाराज रोषो ह्यस्य निवर्त्यताम् ॥ ५०
यदाह रामो धर्मात्मा तत्कुरुष्व समाहितः । राजंस्तिष्ठ स्वसमये भव सत्यप्रतिश्रवाः[3] ॥ ५१

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
किष्किन्धाकाण्डे लक्ष्मणक्रोधो नाम एकत्रिंशः सर्गः

---

१. अस्यानन्तरम्—सुग्रीवसचिवाः सर्वे मन्त्रार्थे समुपाविशन् । विनतश्च सुषेणश्च नीलोऽथ नल एव च ॥ अङ्गदो वालिसूनुश्च हनुमानपि बुद्धिमान् । एते सर्वे महात्मानः सुग्रीवं वानरोत्तमाः ॥—इति क. अस्यानन्तरम्—बलविक्रमयुक्ताश्च मन्त्रिणः स्वार्थनिर्णये । वक्तुरुच्चावचं प्राप्तं लक्ष्मणं ते शशंसिरे ॥ प्रसादयित्वा सुग्रीवं वचनैः सामनिश्चयैः । उवाच हनुमान् वीरो यथा शक्रं बृहस्पतिः ॥—इति क.

२. आसीनं पर्युपासीनावश्चक्रं सुरगणा इव क. ३. भवः प्र.

## द्वात्रिंशः सर्गः

### हनूमन्मन्त्रः

अङ्गदस्य वचः श्रुत्वा सुग्रीवः सचिवैः सह । लक्ष्मणं कुपितं श्रुत्वा मुमोचासनमात्मवान् ॥ १

सचिवानब्रवीद्वाक्यं निश्चित्य गुरुलाघवम् । मन्त्रज्ञान् मन्त्रकुशलो मन्त्रेषु परिनिष्ठितान् ॥ २

न मे दुर्व्याहृतं किंचिन्नापि मे दुरनुष्ठितम् । लक्ष्मणो राघवभ्राता क्रुद्धः किमिति चिन्तये ॥ ३

असुहृद्भिर्ममामित्रैर्नित्यमन्तरदर्शिभिः । मम दोषानसंभूताञ्श्रावितो राघवानुजः ॥ ४

अत्र तावद्यथाबुद्धि सर्वैरेव यथाविधि । भावस्य निश्चयस्तावद्विज्ञेयो निपुणं शनैः ॥ ५

न खल्वस्ति मम त्रासो लक्ष्मणान्नापि राघवात् । मित्रं त्वस्थानकुपितं जनयत्येव संभ्रमम् ॥ ६

सर्वथा सुकरं मित्रं दुष्करं परिपालनम् । अनित्यत्वात्तु चित्तानां प्रीतिरल्पेऽपि भिद्यते ॥ ७

अतो निमित्तं त्रस्तोऽहं रामेण तु महात्मना । यन्ममोपकृतं शक्यं प्रतिकर्तुं न तन्मया ॥ ८

सुग्रीवेणैवमुक्तस्तु हनुमान् मारुतात्मजः । उवाच स्वेन तर्केण मध्ये वानरमन्त्रिणाम् ॥ ९

सर्वथा नैतदाश्चर्यं यस्त्वं हरिगणेश्वर । न विस्मरसि सुस्निग्धमुपकारकृतं शुभम् ॥ १०

राघवेण तु वीरेण भयमुत्सृज्य दूरतः । त्वत्प्रियार्थं हतो वाली शक्रतुल्यपराक्रमः ॥ ११

सर्वथा प्रणयात् क्रुद्धो राघवो नात्र संशयः । भ्रातरं संप्रहितवाँल्लक्ष्मणं लक्ष्मिवर्धनम् ॥ १२

त्वं प्रमत्तो न जानीषे कालं कालविदां वर । फुल्लसप्तच्छदश्यामा प्रवृत्ता तु शरच्छिवा ॥ १३

निर्मलग्रहनक्षत्रा द्यौः प्रनष्टबलाहका । प्रसन्नाश्च दिशः सर्वाः सरितश्च सरांसि च ॥ १४

प्राप्तमुद्योगकालं तु नावैषि हरिपुंगव । त्वं प्रमत्त इति व्यक्तं लक्ष्मणोऽयमिहागतः ॥ १५

आर्तस्य हृतदारस्य परुषं परुषान्तरात् । वचनं मर्षणीयं ते राघवस्य महात्मनः ॥ १६

कृतापराधस्य हि ते नान्यत् पश्याम्यहं क्षमम् । अन्तरेणाञ्जलिं बद्ध्वा लक्ष्मणस्य प्रसादनात् ॥ १७

नियुक्तैर्मन्त्रिभिर्वाच्यो ह्यवश्यं पार्थिवो हितम् । अत एव भयं त्यक्त्वा ब्रवीम्यवधृतं वचः ॥ १८

अभिक्रुद्धः समर्थो हि चापमुद्यम्य राघवः । सदेवासुरगन्धर्वं वशे स्थापयितुं जगत् ॥ १९

न स क्षमः कोपयितुं यः प्रसाद्यः पुनर्भवेत् । पूर्वोपकारं स्मरता कृतज्ञेन विशेषतः ॥ २०

तस्य मूर्ध्ना प्रणम्य त्वं सपुत्रः ससुहृज्जनः । राजंस्तिष्ठ स्वसमये भर्तुर्भार्येव तद्वशे ॥ २१

न रामरामानुजशासनं त्वया कपीन्द्र युक्तं मनसाप्यपोहितुम् ।
मनो हि ते ज्ञास्यति मानुषं बलं सराघवस्यास्य सुरेन्द्रवर्चसः ॥ २२

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
किष्किन्धाकाण्डे हनूमन्मन्त्रो नाम द्वात्रिंशः सर्गः

## त्रयस्त्रिंशः सर्गः

### तारासान्त्ववचनम्

अथ प्रतिसमादिष्टो लक्ष्मणः परवीरहा । प्रविवेश गुहां [1]रम्यां किष्किन्धां रामशासनात् ॥ १
द्वारस्था हरयस्तत्र महाकाया महाबलाः । बभूवुर्लक्ष्मणं दृष्ट्वा सर्वे प्राञ्जलयः स्थिताः ॥ २
निःश्वसन्तं तु तं दृष्ट्वा क्रुद्धं दशरथात्मजम् । बभूवुर्हरयस्त्रस्ता न चैनं पर्यवारयन् ॥ ३
स तां रत्नमयीं श्रीमान् दिव्यां पुष्पितकाननाम् । रम्यां रत्नसमाकीर्णां ददर्श महतीं गुहाम् ॥ ४
हर्म्यप्रासादसंबाधां नानापण्योपशोभिताम् । सर्वकालफलैर्वृक्षैः पुष्पितैरुपशोभिताम् ॥ ५
देवगन्धर्वपुत्रैश्च वानरैः कामरूपिभिः । दिव्यमाल्याम्बरधरैः शोभितां प्रियदर्शनैः ॥ ६
चन्दनागरुपद्मानां गन्धैः सुरभिगन्धिनाम् । मैरेयाणां मधूनां च संमोदितमहापथाम् ॥ ७
विन्ध्यमेरुगिरिप्रख्यैः प्रासादैरुपशोभिताम्[2] । ददर्श गिरिनद्यश्च विमलास्तत्र राघवः ॥ ८
अङ्गदस्य गृहं रम्यं मैन्दस्य द्विविदस्य च । गवयस्य गवाक्षस्य गजस्य शरभस्य च ॥ ९
विद्युन्मालेश्च संपातेः सूर्याक्षस्य हनूमतः । वीरबाहोः सुबाहोश्च नलस्य च महात्मनः ॥ १०
कुमुदस्य सुषेणस्य तारजाम्बवतोस्तथा । दधिवक्त्रस्य नीलस्य सुपाटलसुनेत्रयोः ॥ ११
एतेषां कपिमुख्यानां राजमार्गे महात्मनाम् । ददर्श गृहमुख्यानि महासाराणि लक्ष्मणः ॥ १२
पाण्डराभ्रप्रकाशानि दिव्यमाल्ययुतानि च । प्रभूतधनधान्यानि स्त्रीरत्नैः शोभितानि च ॥ १३
पाण्डरेण तु सालेन परिक्षिप्तं दुरासदम् । वानरेन्द्रगृहं रम्यं महेन्द्रसदनोपमम् ॥ १४
शुक्लैः प्रासादशिखरैः कैलासशिखरोपमैः । सर्वकालफलैर्वृक्षैः पुष्पितैरुपशोभितम् ॥ १५
महेन्द्रदत्तैः श्रीमद्भिर्नीलजीमूतसंनिभैः । दिव्यपुष्पफलैर्वृक्षैः शीतच्छायैर्मनोहरैः ॥ १६
हरिभिः संवृतद्वारं[3] बलिभिः शस्त्रपाणिभिः । दिव्यमाल्यावृतं शुभ्रं तप्तकाञ्चनतोरणम् ॥ १७
सुग्रीवस्य गृहं रम्यं प्रविवेश महाबलः । अवार्यमाणः सौमित्रिर्महाभ्रमिव भास्करः ॥ १८
स सप्त कक्ष्या धर्मात्मा नानाजनसमाकुलाः । प्रविश्य सुमहद्गुप्तं ददर्शान्तःपुरं महत् ॥ १९
हैमराजतपर्यङ्कैर्बहुभिश्च वरासनैः । महार्हास्तरणोपेतैस्तत्र तत्रोपशोभितम् ॥ २०
प्रविशन्नेव सततं शुश्राव मधुरस्वरम् । तन्त्रीगीतसमाकीर्णं समगीतपदाक्षरम् ॥ २१
बह्वीश्च विविधाकारा रूपयौवनगर्विताः । स्त्रियः सुग्रीवभवने ददर्श स महाबलः ॥ २२
दृष्ट्वाभिजनसंपन्नाश्चित्रमाल्यकृतस्रजः । वरमाल्यकृतव्यग्रा भूषणोत्तमभूषिताः ॥ २३
नातृप्तान्नापि च व्यग्रान्नानुदात्तपरिच्छदान् । सुग्रीवानुचरांश्चापि लक्षयामास लक्ष्मणः ॥ २४
कूजितं नूपुराणां च काञ्चीनां निनदं तथा । स निशम्य ततः श्रीमान् सौमित्रिर्लज्जितोऽभवत् ॥२५

---

१. घोराम् च. छ. २. इदमर्धम् च. नास्ति ३. समताल- क.

रोषवेगप्रकुपितः श्रुत्वा चाभरणस्वनम् । चकार ज्यास्वनं वीरो दिशः शब्देन पूरयन् ॥ २६
चारित्रेण महाबाहुरपकृष्टः स लक्ष्मणः । तस्थावेकान्तमाश्रित्य रामशोकसमन्वितः ॥ २७
तेन चापस्वनेनाथ सुग्रीवः प्लवगाधिपः । विज्ञायागमनं त्रस्तः संचचाल वरासनात् ॥ २८
अङ्गदेन यथा मह्यं पुरस्तात् प्रतिवेदितम् । सुव्यक्तमेष संप्राप्तः सौमित्रिर्भ्रातृवत्सलः ॥ २९
अङ्गदेन समाख्यातं[1] ज्यास्वनेन च वानरः । बुबुधे लक्ष्मणं प्राप्तं मुखं चास्य व्यशुष्यत ॥ ३०
ततस्तारां हरिश्रेष्ठः सुग्रीवः प्रियदर्शनाम् । उवाच हितमव्यग्रस्त्रासंसंभ्रान्तमानसः ॥ ३१
किं नु तत् कारणं सुभ्रु प्रकृत्या मृदुमानसः । सरोष इव संप्राप्तो येनायं राघवानुजः ॥ ३२
किं पश्यसि कुमारस्य रोषस्थानमनिन्दिते । न खल्वकारणे कोपमाहरेन्नरसत्तमः ॥ ३३
यदस्य कृतमस्माभिर्बुध्यसे किंचिदप्रियम् । तद्बुद्ध्या संप्रधार्याशु क्षिप्रमर्हसि भाषितुम् ॥ ३४
अथवा स्वयमेवैनं द्रष्टुमर्हसि भामिनि[2] । वचनैः सान्त्वयुक्तैश्च प्रसादयितुमर्हसि ॥ ३५
त्वद्दर्शनविशुद्धात्मा न स कोपं करिष्यति । न हि स्त्रीषु महात्मानः क्वचित्कुर्वन्ति दारुणम् ॥ ३६
त्वया सान्त्वैरुपक्रान्तं प्रसन्नेन्द्रियमानसम् । ततः कमलपत्राक्षं द्रक्ष्याम्यहमरिंदमम् ॥ ३७

सा प्रस्खलन्ती मदविह्वलाक्षी प्रलम्बकाञ्चीगुणहेमसूत्रा ।
सलक्षणा लक्ष्मणसंनिधानं जगाम तारा नमिताङ्गयष्टिः ॥ ३८

स तां समीक्ष्यैव हरीशपत्नीं तस्थावुदासीनतया महात्मा ।
अवाङ्मुखोऽभून्मनुजेन्द्रपुत्रः स्त्रीसंनिकर्षाद्विनिवृत्तकोपः ॥ ३९

सा पानयोगाद्विनिवृत्तलज्जा दृष्टिप्रसादाच्च नरेन्द्रसूनोः ।
उवाच तारा प्रणयप्रगल्भं वाक्यं महार्थं परिसान्त्वपूर्वम् ॥ ४०

किं कोपमूलं मनुजेन्द्रपुत्र कस्ते न संतिष्ठति वाङ्निदेशे ।
कः शुष्कवृक्षं वनमापतन्तं दवाग्निमासीदति निर्विशङ्कः ॥ ४१

स तस्या वचनं श्रुत्वा सान्त्वपूर्वमशङ्कितम् । भूयः प्रणयदृष्टार्थं लक्ष्मणो वाक्यमब्रवीत् ॥ ४२
किमयं कामवृत्तस्ते लुप्तधर्मार्थसंग्रहः । भर्ता भर्तृहिते युक्ते न चैनमवबुध्यसे ॥ ४३
न चिन्तयति राज्यार्थं नास्माञ्शोकपरायणान् । सामात्यपरिषत्तारे पानमेवोपसेवते ॥ ४४
स मासांश्चतुरः कृत्वा प्रमाणं प्लवगेश्वरः । व्यतीतांस्तान् मदव्यग्रो विहरन्नावबुध्यते ॥ ४५
न हि धर्मार्थसिद्ध्यर्थं पानमेवं प्रशस्यते । पानादर्थश्च धर्मश्च कामश्च परिहीयते ॥ ४६
धर्मलोपो महांस्तावत् कृते ह्यप्रतिकुर्वतः । अर्थलोपश्च मित्रस्य नाशे गुणवतो महान् ॥ ४७
मित्रं ह्यर्थगुणश्रेष्ठं सत्यधर्मपरायणम् । तद्द्वयं तु परित्यक्तं न तु धर्मे व्यवस्थितम् ॥ ४८

---

१. समाख्यातः क. ग. घ.  २. भाषितुम् च.

तदेवं प्रस्तुते कार्ये कार्यमस्माभिरुत्तरम् । यत् कार्यं कार्यतत्त्वज्ञे तदुदाहर्तुमर्हसि ॥ ४९

सा तस्य धर्मार्थसमाधियुक्तं निशम्य वाक्यं मधुरस्वभावम् ।
तारा गतार्थे मनुजेन्द्रकार्ये विश्वासयुक्तं तमुवाच भूयः ॥ ५०

न कोपकालः क्षितिपालपुत्र न चातिकोपः स्वजने विधेयः ।
त्वदर्थकामस्य जनस्य तस्य प्रमादमप्यर्हसि वीर सोढुम् ॥ ५१

कोपं कथं नाम गुणप्रकृष्टः कुमार कुर्यादपकृष्टसत्त्वे ।
कस्त्वद्विधः कोपवशं हि गच्छेत् सत्त्वावरुद्धस्तपसः प्रसूतिः ॥ ५२

जानामि रोषं हरिवीरबन्धोर्जानामि कार्यस्य च कालसङ्गम् ।
जानामि कार्यं त्वयि यत्कृतं नस्तच्चापि जानामि यदत्र कार्यम् ॥ ५३

तच्चापि जानामि यथाविषह्यं बलं नरश्रेष्ठ शरीरजस्य ।
जानामि यस्मिंश्च जनेऽवबद्धं कामेन सुग्रीवमसक्तमद्य[१] ॥ ५४

न कामतन्त्रे तव बुद्धिरस्ति त्वं वै यथा मन्युवशं प्रपन्नः ।
न देशकालौ हि न चार्थधर्मावपेक्षते कामरतिर्मनुष्यः ॥ ५५

तं कामवृत्तं मम संनिकृष्टं कामाभियोगाच्च निवृत्तलज्जम् ।
क्षमस्व तावत् परवीरहन्तस्त्वद्भ्रातरं वानरवंशनाथम् ॥ ५६

महर्षयो धर्मतपोऽभिकामाः कामानुकामाः प्रतिबद्धमोहाः ।
अयं प्रकृत्या चपलः कपिस्तु कथं न सज्जेत सुखेषु राजा ॥ ५७

इत्येवमुक्त्वा वचनं महार्थं सा वानरी लक्ष्मणमप्रमेयम् ।
पुनः सखेलं मदविह्वलं च भर्तुर्हितं वाक्यमिदं बभाषे ॥ ५८

उद्योगस्तु चिराज्ञप्तः सुग्रीवेण नरोत्तम । कामस्यापि विधेयेन तवार्थप्रतिसाधने ॥ ५९
आगता हि महावीर्या हरयः कामरूपिणः । कोटीशतसहस्राणि नानानगनिवासिनः ॥ ६०
तदागच्छ महाबाहो चारित्रं रक्षितं त्वया । अच्छलं मित्रभावेन सतां दारावलोकनम् ॥ ६१
तारया चाभ्यनुज्ञातस्त्वरया चापि चोदितः । प्रविवेश महाबाहुरभ्यन्तरमरिंदमः ॥ ६२
ततः सुग्रीवमासीनं काञ्चने परमासने । महार्हास्तरणोपेते ददर्शादित्यसंनिभम् ॥ ६३
दिव्याभरणचित्राङ्गं दिव्यरूपं यशस्विनम् । दिव्यमाल्याम्बरधरं महेन्द्रमिव दुर्जयम् ॥ ६४

---

१. इदं पद्यम् ग. नास्ति ।

दिव्याभरणमाल्याभिः प्रमदाभिः समावृतम् । संरब्धतररक्ताक्षो बभूवान्तकसंनिभः ॥ ६५

रुमां तु वीरः परिरभ्य गाढं वरासनस्थो वरहेमवर्णः ।
ददर्श सौमित्रिमदीनसत्त्वं विशालनेत्रः सुविशालनेत्रम् ॥ ६६

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
किष्किन्धाकाण्डे तारासान्त्ववचनं नाम त्रयस्त्रिंशः सर्गः

---

## चतुस्त्रिंशः सर्गः

### सुग्रीवतर्जनम्

तमप्रतिहतं क्रुद्धं प्रविष्टं पुरुषर्षभम् । सुग्रीवो लक्ष्मणं दृष्ट्वा बभूव व्यथितेन्द्रियः ॥ १
क्रुद्धं निःश्वसमानं तं प्रदीप्तमिव तेजसा । भ्रातुर्व्यसनसंतप्तं दृष्ट्वा दशरथात्मजम् ॥ २
उत्पपात हरिश्रेष्ठो हित्वा सौवर्णमासनम् । महान् महेन्द्रस्य यथा स्वलंकृत इव ध्वजः ॥ ३
उत्पतन्तमनूत्पेतू रुमाप्रभृतयः स्त्रियः । सुग्रीवं गगने पूर्णं चन्द्रं तारागणा इव ॥ ४
संरक्तनयनः श्रीमान् विचचाल कृताञ्जलिः । बभूवावस्थितस्तत्र कल्पवृक्षो महानिव ॥ ५
रुमाद्वितीयं सुग्रीवं नारीमध्यगतं स्थितम् । अब्रवील्लक्ष्मणः क्रुद्धः सतारं शशिनं यथा ॥ ६
सत्त्वाभिजनसंपन्नः सानुक्रोशो जितेन्द्रियः । कृतज्ञः सत्यवादी च राजा लोके महीयते ॥ ७
यस्तु राजा स्थितो धर्मे मित्राणामुपकारिणाम् । मिथ्या प्रतिज्ञां कुरुते को नृशंसतरस्ततः ॥ ८
शतमश्वानृते हन्ति सहस्रं तु गवानृते । आत्मानं स्वजनं हन्ति पुरुषः पुरुषानृते ॥ ९
पूर्वं कृतार्थो मित्राणां न तत् प्रतिकरोति यः । कृतघ्नः सर्वभूतानां स वध्यः प्लवगेश्वर ॥ १०
गीतोऽयं ब्रह्मणा श्लोकः सर्वलोकनमस्कृतः । दृष्ट्वा कृतघ्नं क्रुद्धेन तं निबोध प्लवङ्गम ॥ ११
ब्रह्मघ्ने च सुरापे च गोघ्ने भग्नव्रते तथा । निष्कृतिर्विहिता सद्भिः कृतघ्ने नास्ति निष्कृतिः ॥ १२
अनार्यस्त्वं कृतघ्नश्च मिथ्यावादी च वानर । पूर्वं कृतार्थो रामस्य न तत् प्रतिकरोषि यत् ॥ १३
ननु नाम कृतार्थेन त्वया रामस्य वानर । सीताया मार्गणे यत्नः कर्तव्यः कृतमिच्छता ॥ १४
स त्वं ग्राम्येषु भोगेषु सक्तो मिथ्याप्रतिश्रवः । न त्वां रामो विजानीते सर्पं मण्डूकराविणम् ॥ १५
महाभागेन रामेण पापः करुणवेदिना । हरीणां प्रापितो राज्यं त्वं दुरात्मा महात्मना ॥ १६
कृतं चेन्नाभिजानीषे रामस्याक्लिष्टकर्मणः । सद्यस्त्वं निशितैर्बाणैर्हतो द्रक्ष्यसि वालिनम् ॥ १७
न च संकुचितः पन्था येन वाली हतो गतः । समये तिष्ठ सुग्रीव मा वालिपथमन्वगाः ॥ १८

न नूनमिक्ष्वाकुवरस्य कार्मुकच्युताञ्शरान् पश्यसि वज्रसंनिभान् ।
ततः सुखं नाम निषेवसे सुखी न रामकार्यं मनसाप्यवेक्षसे ॥ १९

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
किष्किन्धाकाण्डे सुग्रीवतर्जनं नाम चतुस्त्रिंशः सर्गः

---

## पञ्चत्रिंशः सर्गः

### तारासमाधानम्

तथा ब्रुवाणं सौमित्रिं प्रदीप्तमिव तेजसा । अब्रवीलक्ष्मणं तारा ताराधिपनिभानना ॥ १
नैवं लक्ष्मण वक्तव्यो नायं परुषमर्हति । हरीणामीश्वरः श्रोतुं तव वक्त्राद्विशेषतः ॥ २
नैवाकृतज्ञः सुग्रीवो न शठो नापि दारुणः । नैवाकृतकथो वीर न जिह्मश्च कपीश्वरः ॥ ३
उपकारं कृतं वीरो नाप्ययं विस्मृतः कपिः । रामेण वीर सुग्रीवो यदन्यैर्दुष्करं रणे[1] ॥ ४
रामप्रसादात् कीर्तिं च कपिराज्यं च शाश्वतम् । प्राप्तवानिह सुग्रीवो रुमां मां च परंतप ॥ ५
सुदुःखं शयितः पूर्वं प्राप्येदं सुखमुत्तमम् । प्राप्तकालं न जानीते विश्वामित्रो यथा मुनिः ॥ ६
घृताच्यां किल संसक्तो दश वर्षाणि लक्ष्मण । अहोऽमन्यत धर्मात्मा विश्वामित्रो महामुनिः ॥ ७
स हि प्राप्तं न जानीते कालं कालविदां वरः । विश्वामित्रो महातेजाः किं पुनर्यः पृथग्जनः ॥ ८
देहधर्मं गतस्यास्य परिश्रान्तस्य लक्ष्मण । अवितृप्तस्य कामेषु कामं क्षन्तुमिहार्हसि[1] ॥ ९
न च रोषवशं तात गन्तुमर्हसि लक्ष्मण । निश्चयार्थमविज्ञाय सहसा प्राकृतो यथा ॥ १०
सत्त्वयुक्ता हि पुरुषास्त्वद्विधाः पुरुषर्षभ । अविमृश्य न रोषस्य सहसा यान्ति वश्यताम् ॥ ११
प्रसादये त्वां धर्मज्ञ सुग्रीवार्थे समाहिता । महान् रोषसमुत्पन्नः संरम्भस्त्यज्यतामयम् ॥ १२
रुमां मां कपिराज्यं च[2] धनधान्यवसूनि च । रामप्रियार्थं सुग्रीवस्त्यजेदिति मतिर्मम ॥ १३
समानेष्यति सुग्रीवः[3] सीतया सह राघवम् । शशाङ्कमिव रोहिण्या निहत्वा रावणं रणे ॥ १४
शतकोटिसहस्राणि लङ्कायां किल [4]रक्षसाम् । अयुतानि च षट्त्रिंशत्सहस्राणि शतानि च ॥ १५
अहत्वा तांश्च दुर्धर्षान् राक्षसान् कामरूपिणः । न[5] शक्यो रावणो हन्तुं येन सा मैथिली हृता॥१६
ते न शक्या रणे हन्तुमसहायेन लक्ष्मण । रावणः क्रूरकर्मा च सुग्रीवेण विशेषतः ॥ १७
एवमाख्यातवान् वाली स ह्यभिज्ञो हरीश्वरः । आगमस्तु न मे व्यक्तः श्रवणात्तद्ब्रवीम्यहम् ॥ १८
त्वत्सहायनिमित्तं वै प्रेषिता हरिपुंगवाः । आनेतुं वानरान् युद्धे सुबहून् हरियूथपान् ॥ १९

1. यदन्यैर्दुष्करं रामेण कृतं च तमुपकारं न विस्मृत इति योजना ।
१. रामः क्षन्तुमिहार्हति पुना.
२. रुमां मामङ्गदं राज्यम् पुना.
३. त्यजेदित्यादि सुग्रीव इत्यन्तम् ग. नास्ति ।
४. राक्षसाः प्र.
५. अशक्यं रावणः प्र.

तांश्च प्रतीक्षमाणोऽयं विक्रान्तान् सुमहाबलान् । राघवस्यार्थसिद्धयर्थं न निर्याति हरीश्वरः ॥ २०
कृतात्र संस्था सौमित्रे सुग्रीवेण यथा पुरा । अद्य तैर्वानरैः सर्वैरागन्तव्यं महाबलैः ॥ २१
ऋक्षकोटिसहस्राणि गोलाङ्गूलशतानि च । अद्य त्वामुपयास्यन्ति जहि कोपमरिंदम ॥ २२
कोट्योऽनेकास्तु काकुत्स्थ कपीनां दीप्ततेजसाम् ॥
तव हि मुखमिदं निरीक्ष्य कोपात् क्षतजनिभे नयने निरीक्षमाणाः ।
हरिवरवनिता न यान्ति शान्तिं प्रथमभयस्य हि शङ्किताः स्म सर्वाः ॥ २३

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
किष्किन्धाकाण्डे तारासमाधानं नाम पञ्चत्रिंशः सर्गः

---

## षट्त्रिंशः सर्गः

### सुग्रीवलक्ष्मणानुरोधः

इत्युक्तस्तारया वाक्यं प्रश्रितं धर्मसंहितम् । मृदुस्वभावः सौमित्रिः प्रतिजग्राह तद्वचः ॥ १
तस्मिन् प्रतिगृहीते तु वाक्ये हरिगणेश्वरः । लक्ष्मणात् सुमहत्त्रासं वस्त्रं क्लिन्नमिवात्यजत् ॥ २
ततः कण्ठगतं माल्यं चित्रं बहुगुणं महत् । चिच्छेद विमदश्चासीत् सुग्रीवो वानरेश्वरः ॥ ३
स लक्ष्मणं भीमबलं सर्ववानरसत्तमः । अब्रवीत् प्रश्रितं वाक्यं सुग्रीवः संप्रहर्षयन् ॥ ४
प्रनष्टा श्रीश्च कीर्तिश्च कपिराज्यं च शाश्वतम् । रामप्रसादात् सौमित्रे पुनः प्राप्तमिदं मया ॥ ५
कः शक्तस्तस्य देवस्य विख्यातस्य स्वकर्मणा । तादृशं विक्रमं वीर प्रतिकर्तुमरिंदम[1] ॥ ६
सीतां प्राप्स्यति धर्मात्मा वधिष्यति च रावणम् । सहायमात्रेण मया राघवः स्वेन तेजसा ॥ ७
सहायकृत्यं किं तस्य येन सप्त महाद्रुमाः । शैलाश्च वसुधा चैव बाणेनैकेन दारिताः ॥ ८
धनुर्विस्फारयानस्य यस्य शब्देन लक्ष्मण । सशैला कम्पिता भूमिः सहायैस्तस्य किं नु वै ॥ ९
अनुयात्रां नरेन्द्रस्य करिष्येऽहं नरर्षभ । गच्छतो रावणं हन्तुं वैरिणं सपुरःसरम् ॥ १०
यदि किंचिदतिक्रान्तं विश्वासात् प्रणयेन वा । प्रेष्यस्य क्षमितव्यं मे न कश्चिन्नापराध्यति ॥ ११
इति तस्य ब्रुवाणस्य सुग्रीवस्य महात्मनः । अभवल्लक्ष्मणः प्रीतः प्रेम्णा चैनमुवाच ह ॥ १२
सर्वथा हि मम भ्राता सनाथो वानरेश्वर । त्वया नाथेन सुग्रीव प्रश्रितेन विशेषतः ॥ १३
यस्ते प्रभावः सुग्रीव यच्च ते शौचमार्जवम्[2] । [1]अर्हस्त्वं कपिराज्यस्य श्रियं भोक्तुमनुत्तमाम् ॥ १४
सहायेन च सुग्रीव त्वया रामः प्रतापवान् । वधिष्यति रणे शत्रूनचिरान्नात्र संशयः ॥ १५
धर्मज्ञस्य कृतज्ञस्य संग्रामेष्वनिवर्तिनः । उपपन्नं च युक्तं च सुग्रीव तव भाषितम् ॥ १६

---

1. ताभ्यामित्यध्याहारः । २. ईदृशम् . प्र.

१. तादृशं प्रतिकुर्वीत अंशेनापि नृपात्मज ति

दोषज्ञः सति सामर्थ्ये कोऽन्यो भाषितुमर्हति । वर्जयित्वा मम ज्येष्ठं त्वां च वानरसत्तम ॥ १७
सदृशश्चासि रामस्य विक्रमेण बलेन च । सहायो दैवतैर्दत्तश्चिराय हरिपुंगव ॥ १८
किं तु शीघ्रमितो वीर निष्क्राम त्वं मया सह । सान्त्वयस्व वयस्यं त्वं भार्याहरणकर्शितम् ॥ १९
यच्च शोकाभिभूतस्य श्रुत्वा रामस्य भाषितम् । मया त्वं परुषाण्युक्तस्तच्च त्वं क्षन्तुमर्हसि ॥ २०

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
किष्किन्धाकाण्डे सुग्रीवलक्ष्मणानुरोधो नाम षट्त्रिंशः सर्गः

---

## सप्तत्रिंशः सर्गः

### कपिसेनासमानयनम्

एवमुक्तस्तु सुग्रीवो लक्ष्मणेन महात्मना । हनुमन्तं स्थितं पार्श्वे सचिवं त्विदमब्रवीत् ॥ १
महेन्द्रहिमवद्विन्ध्यकैलासशिखरेषु च । मन्दरे पाण्डुशिखरे पञ्चशैलेषु ये स्थिताः ॥ २
तरुणादित्यवर्णेषु भ्राजमानेषु सर्वतः । पर्वतेषु समुद्रान्ते पश्चिमायां तु ये दिशि ॥ ३
आदित्यभवने चैव गिरौ सन्ध्याभ्रसंनिभे । पद्माचलवनं भीमाः संश्रिता हरिपुंगवाः ॥ ४
अञ्जनाम्बुदसंकाशाः कुञ्जरप्रतिमौजसः । अञ्जने पर्वते चैव ये वसन्ति प्लवङ्गमाः ॥ ५
महाशैलगुहावासा वानराः कनकप्रभाः । मेरुपार्श्वगताश्चैव ये धूम्रगिरिसंश्रिताः ॥ ६
तरुणादित्यवर्णाश्च पर्वते ये महारुणे । पिबन्तो मधु मैरेयं भीमवेगाः प्लवङ्गमाः ॥ ७
वनेषु च सुरम्येषु सुगन्धिषु महत्सु च । तापसानां च रम्येषु वनान्तेषु समन्ततः ॥ ८
तांस्तान् समानय क्षिप्रं पृथिव्यां सर्ववानरान् । सामदानादिभिः सर्वैराशु प्रेषय वानरान्[1] ॥ ९
प्रेषिताः प्रथमं ये च मया दूता महाजवाः । त्वरणार्थं तु भूयस्त्वं हरीन् संप्रेषयापरान् ॥ १०
ये प्रसक्ताश्च कामेषु दीर्घसूत्राश्च वानराः । इहानयस्व तान् सर्वाञ्शीघ्रं तु मम शासनात् ॥ ११
अहोभिर्दशभिर्ये हि नागच्छन्ति ममाज्ञया । हन्तव्यास्ते दुरात्मानो राजशासनदूषकाः ॥ १२
शतान्यथ सहस्राणां कोट्यश्च मम शासनात् । प्रयान्तु कपिसिंहानां दिशो मम मते स्थिताः ॥ १३
[2]मेघपर्वतसंकाशाश्छादयन्त इवाम्बरम् । घोररूपाः कपिश्रेष्ठा यान्तु मच्छासनादितः ॥ १४
ते गतिज्ञा गतिं गत्वा पृथिव्यां सर्ववानराः । आनयन्तु हरीन् सर्वांस्त्वरिताः शासनान्मम ॥ १५
तस्य वानरराजस्य श्रुत्वा वायुसुतो वचः । दिक्षु सर्वासु विक्रान्तान् प्रेषयामास वानरान् ॥ १६
ते पदं विष्णुविक्रान्तं पतत्रिज्योतिरध्वगाः । प्रयाताः प्रहिता राज्ञा हरयस्तत्क्षणेन वै ॥ १७
ते समुद्रेषु गिरिषु वनेषु च सरःसु च । वानरा वानरान् सर्वान् रामहेतोरचोदयन् ॥ १८
मृत्युकालोपमस्याज्ञां कपिराजस्य वानराः । सुग्रीवस्याययुः श्रुत्वा सुग्रीवभयदर्शिनः ॥ १९

---

१. ६, ७, ८, ९ पद्यानि घ. न सन्ति  २. मेरुमन्दर- छ.

ततस्तेऽञ्जनसंकाशा गिरेस्तस्मान्महाजवाः । तिस्रः कोट्यः प्लवङ्गानां निर्ययुर्यत्र राघवः ॥ २०
अस्तं गच्छति यत्रार्कस्तस्मिन् गिरिवरे स्थिताः । तप्तहेममहाभासस्तस्मात् कोट्यो दश च्युताः ॥२१
कैलासशिखरेभ्यश्च सिंहकेसरवर्चसाम् । ततः कोटिसहस्राणि वानराणामुपागमन् ॥ २२
फलमूलेन जीवन्तो हिमवन्तमुपाश्रिताः । तेषां कोटिसहस्राणां सहस्रं समवर्तत ॥ २३
अङ्गारकसमानानां भीमानां भीमकर्मणाम् । विन्ध्याद्वानरकोटीनां सहस्राण्यपतन् द्रुतम् ॥ २४
क्षीरोदवेलानिलयास्तमालवनवासिनः । नारिकेलाशनाश्चैव तेषां संख्या न विद्यते ॥ २५
वनेभ्यो गह्वरेभ्यश्च सरिद्भ्यश्च महौजसः । अगच्छद्वानरी सेना पिबन्तीव दिवाकरम् ॥ २६
ये तु त्वरयितुं याता वानराः सर्ववानरान् । ते वीरा हिमवच्छैले ददृशुस्तं महाद्रुमम् ॥ २७
तस्मिन् गिरिवरे रम्ये यज्ञो माहेश्वरः[1] पुरा । सर्वदेवमनस्तोषो बभौ दिव्यो मनोहरः ॥ २८
अन्ननिष्यन्दजातानि मूलानि च फलानि च । अमृतास्वादकल्पानि ददृशुस्तत्र वानराः ॥ २९
तदन्नसंभवं दिव्यं फलं मूलं मनोहरम् । यः कश्चित् सकृदश्नाति मासं भवति तर्पितः ॥ ३०
तानि मूलानि दिव्यानि फलानि च फलाशनाः । औषधानि च दिव्यानि जगृहुर्हरियूथपाः ॥ ३१
तस्माच्च यज्ञायतनात् पुष्पाणि सुरभीणि च । आनिन्युर्वानरा गत्वा सुग्रीवप्रियकारणात् ॥ ३२
ते तु सर्वे हरिवराः पृथिव्यां सर्ववानरान् । संचोदयित्वा त्वरिता यूथानां जग्मुरग्रतः ॥ ३३
ते तु तेन मुहूर्तेन यूथपाः शीघ्रगामिनः । किष्किन्धां त्वरया प्राप्ताः सुग्रीवो यत्र वानरः ॥ ३४
ते गृहीत्वौषधीः सर्वाः फलं मूलं च वानराः । तं प्रतिग्राहयामासुर्वचनं चेदमब्रुवन् ॥ ३५
सर्वे परिगताः शैलाः समुद्राश्च वनानि च । पृथिव्यां वानराः सर्वे शासनादुपयान्ति ते ॥ ३६
एवं श्रुत्वा ततो हृष्टः सुग्रीवः प्लवगाधिपः । प्रतिजग्राह तत् प्रीतस्तेषां सर्वमुपायनम् ॥ ३७

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
किष्किन्धाकाण्डे कपिसेनासमानयनं नाम सप्तत्रिंशः

---

## अष्टात्रिंशः सर्गः

### रामसमीपगमनम्

प्रतिगृह्य च तत् सर्वमुपायनमुपाहृतम् । वानरान् सान्त्वयित्वा च सर्वानेव व्यसर्जयत् ॥ १
विसर्जयित्वा स हरीञ्शूरांस्तान् कृतकर्मणः । मेने कृतार्थमात्मानं राघवं च महाबलम् ॥ २
स लक्ष्मणो भीमबलं सर्ववानरसत्तमम् । अब्रवीत् प्रश्रितं वाक्यं सुग्रीवं संप्रहर्षयन् ॥ ३
किष्किन्धाया विनिष्क्राम यदि ते सौम्य रोचते । तस्य तद्वचनं श्रुत्वा लक्ष्मणस्य सुभाषितम् ॥ ४
सुग्रीवः परमप्रीतो वाक्यमेतदुवाच ह । एवं भवतु गच्छावः स्थेयं त्वच्छासने मया ॥ ५
तमेवमुक्त्वा सुग्रीवो लक्ष्मणं शुभलक्षणम् । विसर्जयामास तदा तारामन्याश्च योषितः ॥ ६

---

1. माहेश्वरः महेश्वरदैवत्यः यज्ञोऽश्वमेधः इत्यर्थः । 1. महाजवाः ङ. च.

[1]एतेत्युक्तैर्हरिवरान् सुग्रीवः समुदाहरत् । तस्य तद्वचनं श्रुत्वा हरयः शीघ्रमाययुः ॥ ७
बद्धाञ्जलिपुटाः सर्वे ये स्युः स्त्रीदर्शनक्षमाः । तानुवाच ततः प्राप्तान् राजार्कसदृशप्रभः ॥ ८
उपस्थापयत क्षिप्रं शिबिकां मम वानराः । श्रुत्वा तु वचनं तस्य हरयः शीघ्रविक्रमाः ॥ ९
समुपस्थापयामासुः शिबिकां प्रियदर्शनाम् । तामुपस्थापितां दृष्ट्वा शिबिकां वानराधिपः ॥ १०
लक्ष्मणारुह्यतां शीघ्रमिति सौमित्रिमब्रवीत् । इत्युक्त्वा काञ्चनं यानं सुग्रीवः सूर्यसंनिभम् ॥ ११
बृहद्भिर्हरिभिर्युक्तामारुरोह सलक्ष्मणः । पाण्डरेणातपत्रेण ध्रियमाणेन मूर्धनि ॥ १२
शुक्लैश्च वालव्यजनैर्धूयमानैः समन्ततः । शङ्खभेरीनिनादैश्च वन्दिभिश्चाभिनन्दितः ॥ १३
निर्ययौ प्राप्य सुग्रीवो राज्यश्रियमनुत्तमाम् । स वानरशतैस्तीक्ष्णैर्बहुभिः शस्त्रपाणिभिः ॥ १४
परिकीर्णो ययौ तत्र यत्र रामो व्यवस्थितः । स तं देशमनुप्राप्य श्रेष्ठं रामनिषेवितम् ॥ १५
अवातरन्महातेजाः शिबिकायाः सलक्ष्मणः । आसाद्य च ततो रामं कृताञ्जलिपुटोऽभवत् ॥ १६
कृताञ्जलौ स्थिते तस्मिन् वानराश्चाभवंस्तथा । [2]तटाकमिव तद्दृष्ट्वा रामः कुड्मलपङ्कजम् ॥ १७
वानराणां महत् सैन्यं सुग्रीवे प्रीतिमानभूत् । पादयोः पतितं मूर्ध्ना तमुत्थाप्य हरीश्वरम् ॥ १८
प्रेम्णा च बहुमानाच्च राघवः परिषस्वजे । परिष्वज्य च धर्मात्मा निषीदेति ततोऽब्रवीत् ॥ १९
तं निषण्णं ततो दृष्ट्वा क्षितौ रामोऽब्रवीद्वचः । धर्ममर्थं च कामं च काले यस्तु निषेवते ॥ २०
विभज्य सततं वीर स राजा हरिसत्तम । हित्वा धर्मं तथार्थं च कामं यस्तु निषेवते ॥ २१
स वृक्षाग्रे यथा सुप्तः पतितः प्रतिबुध्यते । अमित्राणां वधे युक्तो मित्राणां संग्रहे रतः ॥ २२
त्रिवर्गफलभोक्ता तु राजा धर्मेण युज्यते । उद्योगसमयस्त्वेष प्राप्तः शत्रुविनाशन ॥ २३
संचिन्त्यतां हि पिङ्गेश हरिभिः सह मन्त्रिभिः । एवमुक्तस्तु सुग्रीवो रामं वचनमब्रवीत् ॥ २४
प्रनष्टा श्रीश्च कीर्तिश्च कपिराज्यं च शाश्वतम् । त्वत्प्रसादान्महाबाहो पुनः प्राप्तमिदं मया ॥ २५
तव देव प्रसादाच्च भ्रातुश्च जयतां वर । कृतं न प्रतिकुर्याद्यः पुरुषाणां स दूषकः ॥ २६
एते वानरमुख्याश्च शतशः शत्रुसूदन । प्राप्ताश्चादाय बलिनः पृथिव्यां सर्ववानरान् ॥ २७
ऋक्षाश्चावहिताः शूरा गोलाङ्गूलाश्च राघव । कान्तारवनदुर्गाणामभिज्ञा घोरदर्शनाः ॥ २८
देवगन्धर्वपुत्राश्च वानराः कामरूपिणः । स्वैः स्वैः परिवृताः सैन्यैर्वर्तन्ते पथि राघव ॥ २९
शतैः शतसहस्रैश्च कोटिभिश्च प्लवङ्गमाः । अयुतैश्चावृता वीराः शङ्कुभिश्च परंतप ॥ ३०
अर्बुदैरर्बुदशतैर्मध्यैश्चान्तैश्च वानराः । समुद्रैश्च परार्धैश्च हरयो हरियूथपाः ॥ ३१
आगमिष्यन्ति ते राजन् महेन्द्रसमविक्रमाः । मेरुमन्दरसंकाशा विन्ध्यमेरुकृतालयाः ॥ ३२
ते त्वामभिगमिष्यन्ति राक्षसं ये सबान्धवम् । निहत्य रावणं संख्ये ह्यानयिष्यन्ति मैथिलीम् ॥ ३३

---

१. यात इति झ. ञ. समन्ततः इत्यधिकं, झ, ञ.
२. एतदनन्तरम्—उद्धृताञ्जलिपद्मास्ते सुग्रीवस्य

ततस्तमुद्योगमवेक्ष्य बुद्धिमान् हरिप्रवीरस्य निदेशवर्तिनः ।
बभूव हर्षाद्वसुधाधिपात्मजः प्रबुद्धनीलोत्पलतुल्यदर्शनः ॥ ३४

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
किष्किन्धाकाण्डे रामसमीपगमनं नाम अष्टात्रिंशः सर्गः

---

## एकोनचत्वारिंशः सर्गः

### सेनानिवेशः

इति ब्रुवाणं सुग्रीवं रामो धर्मभृतां वरः । बाहुभ्यां संपरिष्वज्य प्रत्युवाच कृताञ्जलिम् ॥ १
यदिन्द्रो वर्षते वर्षं न तच्चित्रं भवेद्भुवि । आदित्यो वा सहस्रांशुः कुर्याद्वितिमिरं नभः ॥ २
चन्द्रमा रश्मिभिः कुर्यात् पृथिवीं[1] सौम्य निर्मलाम् । त्वद्विधो वापि मित्राणां[2] प्रतिकुर्यात् परंतप ॥ ३
एवं त्वयि न तच्चित्रं भवेद्यत् सौम्य शोभनम् । जानाम्यहं त्वां सुग्रीव सततं प्रियवादिनम् ॥ ४
त्वत्सनाथः सखे संख्ये जेतास्मि सकलानरीन् । त्वमेव मे सुहृन्मित्र साहाय्यं कर्तुमर्हसि ॥ ५
जहारात्मविनाशाय वैदेहीं राक्षसाधमः । वञ्चयित्वा तु पौलोमीमनुह्लादो यथा शचीम् ॥ ६
नचिरात्तं हनिष्यामि रावणं निशितैः शरैः । पौलोम्याः पितरं दृप्तं शतक्रतुरिवाहवे ॥ ७
एतस्मिन्नन्तरे चैव रजः समभिवर्तत । उष्णां तीव्रां सहस्रांशोश्छादयद्गगने प्रभाम् ॥ ८
दिशः पर्याकुलाश्चासन् रजसा तेन मूर्छिता । चचाल च मही सर्वा सशैलवनकानना ॥ ९
ततो नगेन्द्रसंकाशैस्तीक्ष्णदंष्ट्रैर्महाबलैः । कृत्स्ना संछादिता भूमिरसंख्येयैः प्लवङ्गमैः ॥ १०
निमेषान्तरमात्रेण ततस्तैर्हरियूथपैः । कोटीशतपरीवारैः कामरूपिभिरावृता ॥ ११
नादेयैः पार्वतेयैश्च सामुद्रैश्च महाबलैः । हरिभिर्मेघनिर्ह्रादैरन्यैश्च वनचारिभिः ॥ १२
तरुणादित्यवर्णैश्च शशिगौरैश्च वानरैः । पद्मकेसरवर्णैश्च श्वेतैर्मेरुकृतालयैः ॥ १३
कोटीसहस्रैर्दशभिः श्रीमान् परिवृतस्तदा । वीरः शतवलिर्नाम वानरः प्रत्यदृश्यत ॥ १४
ततः काञ्चनशैलाभस्ताराया वीर्यवान् पिता । अनेकैर्दशसाहस्रैः कोटिभिः प्रत्यदृश्यत ॥ १५
तथापरेण कोटीनां सहस्रेण समन्वितः । पिता रुमायाः संप्राप्तः सुग्रीवश्वशुरो विभुः ॥ १६
पद्मकेसरसंकाशस्तरुणार्कनिभाननः । बुद्धिमान् वानरश्रेष्ठः सर्ववानरसत्तमः ॥ १७
अनीकैर्बहुसाहस्रैर्वानराणां समन्वितः । पिता हनुमतः श्रीमान् केसरी प्रत्यदृश्यत ॥ १८
गोलाङ्गूलमहाराजो गवाक्षो भीमविक्रमः । वृतः कोटिसहस्रेण वानराणामदृश्यत ॥ १९
ऋक्षाणां भीमवेगानां धूम्रः शत्रुनिबर्हणः । वृतः कोटिसहस्राभ्यां द्वाभ्यां समभिवर्तत ॥ २०

---

१. रजनीं कुर्यात् प्रभया घ. २. प्रीतिम् पुना.

महाचलनिभैर्घोरैः पनसो नाम यूथपः । आजगाम महावीर्यस्तिसृभिः कोटिभिर्वृतः ॥ २१
नीलाञ्जनचयाकारो नीलो नामाथ यूथपः । अदृश्यत महाकायः कोटिभिर्दशभिर्वृतः ॥ २२
ततः काञ्चनशैलाभो गवयो नाम यूथपः । आजगाम महावीर्यः कोटिभिः पञ्चभिर्वृतः ॥ २३
दरीमुखश्च बलवान् यूथपोऽभ्याययौ तदा । वृतः कोटिसहस्रेण सुग्रीवं समुपस्थितः ॥ २४
मैन्दश्च द्विविदश्चोभावश्विपुत्रौ महाबलौ । कोटिकोटिसहस्रेण वानराणामदृश्यत[1] ॥ २५
गजश्च बलवान् वीरः कोटिभिस्तिसृभिर्वृतः । आजगाम महातेजाः सुग्रीवस्य समीपतः ॥ २६
ऋक्षराजो महातेजा जाम्बवान्नाम नामतः । कोटिभिर्दशभिः प्राप्तः सुग्रीवस्य वशे स्थितः ॥ २७
रुमण्वान्नाम विक्रान्तो वानरो वानरेश्वरम् । आययौ बलवांस्तूर्णं कोटीशतसमावृतः ॥ २८
ततः कोटिसहस्राणां सहस्रेण शतेन च । पृष्ठतोऽनुगतः प्राप्तो हरिभिर्गन्धमादनः ॥ २९
ततः पद्मसहस्रेण वृतः शङ्कुशतेन च । युवराजोऽङ्गदः प्राप्तः पितृतुल्यपराक्रमः ॥ ३०
ततस्ताराद्युतिस्तारो हरिर्भीमपराक्रमः । पञ्चभिर्हरिकोटीभिर्दूरतः प्रत्यदृश्यत ॥ ३१
इन्द्रजानुः कपिर्वीरो यूथपः प्रत्यदृश्यत । एकादशानां कोटीनामीश्वरस्तैश्च संवृतः ॥ ३२
ततो रम्भस्त्वनुप्राप्तस्तरुणादित्यसंनिभः । अयुतेनावृतश्चैव सहस्रेण शतेन च ॥ ३३
ततो यूथपतिर्वीरो दुर्मुखो नाम वानरः । प्रत्यदृश्यत कोटिभ्यां द्वाभ्यां परिवृतो बली ॥ ३४
कैलासशिखराकारैर्वानरैर्भीमविक्रमैः । वृतः कोटिसहस्रेण हनुमान् प्रत्यदृश्यत ॥ ३५
नलश्चापि महावीर्यः संवृतो द्रुमवासिभिः । कोटीशतेन संप्राप्तः सहस्रेण शतेन च ॥ ३६
ततो दधिमुखः श्रीमान् कोटिभिर्दशभिर्वृतः । संप्राप्तोऽभिमतस्तस्य सुग्रीवस्य महात्मनः ॥ ३७
शरभः कुमुदो वह्निर्वानरो रंह एव च । एते चान्ये च बहवो वानराः कामरूपिणः ॥ ३८
आवृत्य पृथिवीं सर्वां पर्वतांश्च वनानि च । यूथपाः समनुप्राप्तास्तेषां संख्या न विद्यते ॥ ३९
आगताश्च निविष्टाश्च पृथिव्यां सर्ववानराः । आप्लवन्तः प्लवन्तश्च गर्जन्तश्च प्लवङ्गमाः ॥ ४०
अभ्यवर्तन्त सुग्रीवं सूर्यमभ्रगणा इव । कुर्वाणा बहुशब्दांश्च प्रहृष्टा बाहुशालिनः ॥ ४१
शिरोभिर्वानरेन्द्राय सुग्रीवाय न्यवेदयन् । अपरे वानरश्रेष्ठाः संगम्य च यथोचितम् ॥ ४२
सुग्रीवेण समागम्य स्थिताः प्राञ्जलयस्तदा । सुग्रीवस्त्वरितो रामे सर्वांस्तान् वानरर्षभान् ॥ ४३
निवेदयित्वा धर्मज्ञः स्थितः प्राञ्जलिरब्रवीत् ॥

यथासुखं पर्वतनिर्झरेषु वनेषु सर्वेषु च वानरेन्द्राः ।
निवेशयित्वा विधिवद्बलानि बलं बलज्ञः प्रतिपत्तुमीष्टे ॥ ४४

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
किष्किन्धाकाण्डे सेनानिवेशो नाम एकोनचत्वारिंशः सर्गः

---

१. अदृश्यताम् च. छ.

## चत्वारिंशः सर्गः

### प्राचीप्रेषणम्

अथ राजा समृद्धार्थः सुग्रीवः प्लवगाधिपः । उवाच नरशार्दूलं रामं परबलार्दनम् ॥ १

आगता विनिविष्टाश्च बलिनः कामरूपिणः । वानरा वारणेन्द्राभा[1] ये मद्विषयवासिनः ॥ २

त इमे बहुविक्रान्तैर्हरिभिर्भीमविक्रमैः । आगता वानरा घोरा दैत्यदानवसंनिभाः ॥ ३

ख्यातकर्मापदानाश्च बलवन्तो जितक्लमाः । पराक्रमेषु विख्याता व्यवसायेषु चोत्तमाः ॥ ४

पृथिव्यम्बुचरा राम नानानगनिवासिनः । कोट्यग्रश इमे प्राप्ता वानरास्तव किंकराः ॥ ५

निदेशवर्तिनः सर्वे सर्वे गुरुहिते रताः । अभिप्रेतमनुष्ठातुं तव शक्ष्यन्त्यरिंदम ॥ ६

त इमे बहुसाहस्रैरनीकैर्भीमविक्रमैः । यन्मन्यसे नरव्याघ्र प्राप्तकालं तदुच्यताम् ॥ ७

त्वत्सैन्यं त्वद्वशे युक्तमाज्ञापयितुमर्हसि । काममेषामिदं कार्यं विदितं मम तत्त्वतः ॥ ८

तथापि तु यथातत्त्वमाज्ञापयितुमर्हसि[2] । तथा ब्रुवाणं सुग्रीवं रामो दशरथात्मजः ॥ ९

बाहुभ्यां संपरिष्वज्य इदं वचनमब्रवीत् । ज्ञायतां मम वैदेही यदि जीवति वा न वा ॥ १०

स च देशो महाप्राज्ञ यस्मिन् वसति रावणः । अधिगम्य तु वैदेहीं निलयं रावणस्य च ॥ ११

प्राप्तकालं विधास्यामि तस्मिन् काले सह त्वया । नाहमस्मिन् प्रभुः कार्ये वानरेश न लक्ष्मणः॥ १२

त्वमस्य हेतुः कार्यस्य प्रभुश्च प्लवगेश्वर । त्वमेवाज्ञापय विभो मम कार्यविनिश्चयम् ॥ १३

त्वं हि जानासि यत् कार्यं मम वीर न संशयः । सुहृद्द्वितीयो[3] विक्रान्तः प्राज्ञः कालविशेषवित् ॥

भवानस्मद्धिते युक्तः सुकृतार्थोऽर्थवित्तमः । एवमुक्तस्तु सुग्रीवो विनतं नाम यूथपम् ॥ १५

अब्रवीद्रामसांनिध्ये लक्ष्मणस्य च धीमतः । शैलाभं मेघनिर्घोषमूर्जितं प्लवगेश्वरः ॥ १६

सोमसूर्यात्मजैः सार्धं वानरैर्वानरोत्तम । देशकालनयैर्युक्तः कार्याकार्यविनिश्चये ॥ १७

वृतः शतसहस्रेण वानराणां तरस्विनाम् । अधिगच्छ दिशं पूर्वां[1] सशैलवनकाननाम् ॥ १८

तत्र सीतां च वैदेहीं निलयं रावणस्य च । मार्गध्वं गिरिशृङ्गेषु वनेषु च नदीषु च ॥ १९

नदीं भागीरथीं रम्यां सरयूं कौशिकीं तथा । कालिन्दीं यमुनां रम्यां यामुनं च महागिरिम् ॥ २०

सरस्वतीं च सिन्धुं च शोणं मणिनिभोदकम् । महीं कालमहीं चैव शैलकाननशोभिताम् ॥ २१

ब्रह्ममालान् विदेहांश्च मालवान् काशिकोसलान् । मागधांश्च महाग्रामान् पुण्ड्रान् वङ्गांस्तथैव च ॥

पत्तनं कोशकाराणां भूमिं च रजताकराम् । सर्वमेतद्विचेतव्यं मार्गयद्भिस्ततस्ततः ॥ २३

रामस्य दयितां भार्यां सीतां दशरथस्नुषाम् । समुद्रमवगाढांश्च पर्वतान् पत्तनानि च ॥ २४

मन्दरस्य च ये कोटिं संश्रिताः केचिदायताम्[4] । कर्णप्रावरणाश्चैव तथा चाप्योष्ठकर्णकाः ॥ २५

---

1. अत्र सुग्रीववचने प्राच्यादिर्दिग्विभागः हिमवद्विन्ध्यमध्यस्थितार्यावर्तापेक्षया द्रष्टव्यः ।

१. वानरेन्द्रा महेन्द्राभाः, प्र.

२. काममित्यादि अर्हसीत्यन्तम् घ. नास्ति ।

३. सुहृद्विनीतः गो. पाठान्तरम् ।

४. आलयाः ति.

घोरा लोहमुखाश्चैव जवनाश्चैकपादकाः । अक्षया बलवन्तश्च पुरुषाः पुरुषादकाः ॥ २६
किरातास्तीक्ष्णचूडाश्च[1] हेमाङ्गाः प्रियदर्शनाः । आममीनाशनास्तत्र किराता द्वीपवासिनः ॥ २७
अन्तर्जलचरा घोरा नरव्याघ्रा इति श्रुताः । एतेषामालयाः सर्वे विचेयाः काननौकसः ॥ २८
गिरिभिर्ये च गम्यन्ते प्लवनेन प्लवेन च । यत्नवन्तं यवद्वीपं सप्तराज्योपशोभितम् ॥ २९
सुवर्णरूप्यकं चैव सुवर्णाकरमण्डितम् । यवद्वीपमतिक्रम्य शिशिरो नाम पर्वतः ॥ ३०
दिवं स्पृशति शृङ्गेण देवदानवसेवितः । एतेषां गिरिदुर्गेषु प्रपातेषु वनेषु च ॥ ३१
मार्गध्वं सहिताः सर्वे रामपत्नीं यशस्विनीम् । ततो रक्तजलं शोणमगाधं शीघ्रगाहिनम्[2] ॥ ३२
गत्वा पारं समुद्रस्य सिद्धचारणसेवितम् । तस्य तीर्थेषु रम्येषु विचित्रेषु वनेषु च ॥ ३३
रावणः सह वैदेह्या मार्गितव्यस्ततस्ततः । पर्वतप्रभवा नद्यः सुरम्या बहुनिष्कुटाः ॥ ३४
मार्गितव्या दरीमन्तः पर्वताश्च वनानि च । ततः समुद्रद्वीपांश्च सुभीमान् द्रष्टुमर्हथ ॥ ३५
ऊर्मिमन्तं महारौद्रं क्रोशन्तमनिलोद्धतम् । तत्रासुरा महाकायाश्छायां गृह्णन्ति नित्यशः ॥ ३६
ब्रह्मणा समनुज्ञाता दीर्घकालं बुभुक्षिताः । तं कालमेघप्रतिमं महोरगनिषेवितम् ॥ ३७
अभिगम्य महानादं तीर्थेनैव महोदधिम् । ततो रक्तजलं भीमं लोहितं नाम सागरम् ॥ ३८
गता द्रक्ष्यथ तां चैव बृहतीं कूटशाल्मलीम् । गृहं च वैनतेयस्य नानारत्नविभूषितम् ॥ ३९
तत्र कैलाससंकाशं विहितं विश्वकर्मणा । तत्र शैलनिभा भीमा मन्देहा नाम राक्षसाः ॥ ४०
शैलशृङ्गेषु लम्बन्ते नानारूपा भयावहाः । ते पतन्ति जले नित्यं सूर्यस्योदयनं प्रति ॥ ४१
निहता ब्रह्मतेजोभिरहन्यहनि राक्षसाः । अभितप्ताश्च सूर्येण लम्बन्ते स्म पुनः पुनः ॥ ४२
ततः पाण्डरमेघाभं क्षीरोदं नाम सागरम् । गता द्रक्ष्यथ दुर्धर्षा मुक्ताहारमिव क्षितेः[3] ॥ ४३
तस्य मध्ये महाञ्श्वेत ऋषभो नाम पर्वतः । दिव्यगन्धैः कुसुमितै राजतैश्च नगैर्वृतः ॥ ४४
सरश्च राजतैः पद्मैर्ज्वलितैर्हेमकेसरैः । नाम्ना सुदर्शनं नाम राजहंसैः समाकुलम् ॥ ४५
विबुधाश्चारणा यक्षाः किंनराः साप्सरोगणाः । हृष्टाः समभिगच्छन्ति नलिनीं तां रिरंसवः ॥ ४६
क्षीरोदं समतिक्रम्य ततो द्रक्ष्यथ वानराः । जलोदं सागरश्रेष्ठं सर्वभूतभयावहम् ॥ ४७
तत्र तत् कोपजं तेजः कृतं हयमुखं महत् । अस्याहुस्तन्महावेगमोदनं सचराचरम् ॥ ४८
तत्र विक्रोशतां नादो भूतानां सागरौकसाम् । श्रूयते च समर्थानां दृष्ट्वा तद्वडवामुखम् ॥ ४९
स्वादूदस्योत्तरे देशे योजनानि त्रयोदश । जातरूपशिलो नाम महान् कनकपर्वतः ॥ ५०
तत्र चन्द्रप्रतीकाशं पन्नगं धरणीधरम् । पद्मपत्रविशालाक्षं ततो द्रक्ष्यथ वानराः ॥ ५१
आसीनं पर्वतस्याग्रे सर्वभूतनमस्कृतम् । सहस्रशिरसं देवमनन्तं नीलवाससम् ॥ ५२

---

१. कर्णचूडाश्च च. छ. शीघ्रवाहिनम् छ.
२. शीघ्रगामिनम् च. ३. इवोर्मिभिः च. छ.

त्रिशिराः काञ्चनः केतुस्तालस्तस्य महात्मनः । स्थापितः पर्वतस्याग्रे विराजति सवेदिकः ॥ ५३
पूर्वस्यां दिशि निर्माणं कृतं तत् त्रिदशेश्वरैः । ततः परं हेममयः श्रीमानुदयपर्वतः ॥ ५४
तस्य कोटिर्दिवं स्पृष्ट्वा शतयोजनमायता । जातरूपमयी दिव्या विराजति सवेदिका ॥ ५५
सालैस्तालैस्तमालैश्च कर्णिकारैश्च पुष्पितैः । जातरूपमयैर्दिव्यैः शोभते सूर्यसंनिभैः ॥ ५६
तत्र योजनविस्तारमुच्छ्रितं दशयोजनम् । शृङ्गं सौमनसं नाम जातरूपमयं ध्रुवम् ॥ ५७
तत्र पूर्वं पदं कृत्वा पुरा विष्णुस्त्रिविक्रमे । द्वितीयं शिखरे मेरोश्चकार पुरुषोत्तमः ॥ ५८
उत्तरेण परिक्रम्य जम्बूद्वीपं दिवाकरः । दृश्यो भवति भूयिष्ठं शिखरं तन्महोच्छ्रयम् ॥ ५९
तत्र वैखानसा नाम वालखिल्या महर्षयः । प्रकाशमाना दृश्यन्ते सूर्यवर्णास्तपस्विनः ॥ ६०
अयं सुदर्शनो द्वीपः पुरो यस्य प्रकाशते । यस्मिंस्तेजश्च चक्षुश्च सर्वप्राणभृतामपि ॥ ६१
शैलस्य तस्य शृङ्गेषु कन्दरेषु वनेषु च । रावणः सह वैदेह्या मार्गितव्यस्ततस्ततः ॥ ६२
काञ्चनस्य च शैलस्य सूर्यस्य च महात्मनः । आविष्टा तेजसा सन्ध्या पूर्वा रक्ता प्रकाशते ॥ ६३
पूर्वमेतत् कृतं द्वारं पृथिव्या भुवनस्य च । सूर्यस्योदयनं चैव पूर्वा ह्येषा दिगुच्यते ॥ ६४
तस्य शैलस्य पृष्ठेषु निर्झरेषु गुहासु च । रावणः सह वैदेह्या मार्गितव्यस्ततस्ततः ॥ ६५
ततः परमगम्या स्याद्दिक्पूर्वा त्रिदशावृता । रहिता चन्द्रसूर्याभ्यामदृश्या तिमिरावृता ॥ ६६
शैलेषु तेषु सर्वेषु कन्दरेषु वनेषु च । ये च नोक्ता मया देशा विचेया तेषु जानकी ॥ ६७
एतावद्वानरैः शक्यं गन्तुं वानरपुंगवाः । अभास्करममर्यादं न जानीमस्ततः परम् ॥ ६८
अधिगम्य तु वैदेहीं निलयं रावणस्य च । मासे पूर्णे निवर्तध्वमुदयं प्राप्य पर्वतम् ॥ ६९
ऊर्ध्वं मासान्न वस्तव्यं वसन् वध्यो भवेन्मम । सिद्धार्थाः संनिवर्तध्वमधिगम्य च मैथिलीम् ॥ ७०

महेन्द्रकान्तां वनषण्डमण्डितां दिशं चरित्वा निपुणेन वानराः ।
अवाप्य सीतां रघुवंशजप्रियां ततो निवृत्ताः सुखिनो भविष्यथ ॥ ७१

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
किष्किन्धाकाण्डे प्राचीप्रेषणं नाम चत्वारिंशः सर्गः

---

## एकचत्वारिंशः सर्गः

### दक्षिणाप्रेषणम्

ततः प्रस्थाप्य सुग्रीवस्तन्महद्वानरं बलम् । दक्षिणां प्रेषयामास वानरानभिलक्षितान् ॥ १
नीलमग्निसुतं चैव हनुमन्तं च वानरम् । पितामहसुतं चैव जाम्बवन्तं महाबलम् ॥ २
सुहोत्रं च शरारिं च शरगुल्मं तथैव च । गजं गवाक्षं गवयं सुषेणमृषभं तथा ॥ ३
मैन्दं च द्विविदं चैव विजयं गन्धमादनम् । उल्कामुखमसङ्गं च हुताशनसुतावुभौ ॥ ४

अङ्गदप्रमुखान् वीरान् वीरः कपिगणेश्वरः । वेगविक्रमसंपन्नान् संदिदेश विशेषवित् ॥ ५
तेषामग्रेसरं चैव [1]महाबलमथाङ्गदम् । विधाय हरिवीराणामादिशद्दक्षिणां दिशम् ॥ ६
ये केचन समुद्देशास्तस्यां दिशि सुदुर्गमाः । कपीशः कपिमुख्यानां स तेषां तानुदाहरत् ॥ ७
सहस्रशिरसं विन्ध्यं नानाद्रुमलतायुतम् । नर्मदां च नदीं दुर्गां महोरगनिषेविताम् ॥ ८
ततो गोदावरीं रम्यां कृष्णवेणीं महानदीम् । वरदां च महाभागां महोरगनिषेविताम्[2] ॥ ९
मेखलानुत्कलांश्चैव दशार्णनगराण्यपि । अश्ववन्तीमवन्तीं च सर्वमेवानुपश्यत ॥ १०
विदर्भानृष्टिकांश्चैव[3] रम्यान् माहिषकानपि । तथा वङ्गान् कलिङ्गांश्च कौशिकांश्च समन्ततः ॥ ११
अन्वीक्ष्य दण्डकारण्यं सपर्वतनदीगुहम् । नदीं गोदावरीं चैव सर्वमेवानुपश्यत ॥ १२
तथैवान्ध्रांश्च पुण्ड्रांश्च चोलान्पाण्ड्यान सकेरलान् । अयोमुखश्च गन्तव्यः पर्वतो धातुमण्डितः
विचित्रशिखरः श्रीमांश्चित्रपुष्पितकाननः । सचन्दनवनोद्देशो मार्गितव्यो महागिरिः ॥ १४
ततस्तामापगां दिव्यां प्रसन्नसलिलां शिवाम् । तत्र द्रक्ष्यथ कावेरीं विहृतामप्सरोगणैः ॥ १५
तस्यासीनं नगस्याग्रे मलयस्य महौजसम् । द्रक्ष्यथादित्यसंकाशमगस्त्यमृषिसत्तमम् ॥ १६
ततस्तेनाभ्यनुज्ञाताः प्रसन्नेन महात्मना । ताम्रपर्णीं ग्राहजुष्टां तरिष्यथ महात्मना ॥ १७
सा चन्दनवनैर्दिव्यैः प्रच्छन्ना द्वीपशालिनी । कान्तेव युवतिः कान्तं समुद्रमवगाहते ॥ १८
ततो हेममयं दिव्यं मुक्तामणिविभूषितम् । मुक्ताकवाटं पाण्ड्यानां गता द्रक्ष्यथ वानराः ॥ १९
ततः समुद्रमासाद्य संप्रधार्यार्थनिश्चयम् । अगस्त्येनान्तरे तत्र सागरे विनिवेशितः ॥ २०
चित्रसानुनगः श्रीमान् महेन्द्रः पर्वतोत्तमः । जातरूपमयः श्रीमानवगाढो महार्णवम् ॥ २१
नानाविधैर्नगैः फुल्लैर्लताभिश्चोपशोभितम् । देवर्षियक्षप्रवरैरप्सरोभिश्च सेवितम् ॥ २२
सिद्धचारणसङ्घैश्च प्रकीर्णं सुमनोहरम् । तमुपैति सहस्राक्षः सदा पर्वसु पर्वसु ॥ २३
द्वीपस्तस्यापरे पारे शतयोजनविस्तृतः । अगम्यो मानुषैर्दीप्तस्तं मार्गध्वं समन्ततः ॥ २४
तत्र सर्वात्मना सीता मार्गितव्या विशेषतः । स हि देशस्तु वध्यस्य रावणस्य दुरात्मनः ॥ २५
राक्षसाधिपतेर्वासः सहस्राक्षसमद्युतेः । दक्षिणस्य समुद्रस्य मध्ये तस्य तु राक्षसी ॥ २६
अङ्गारकेति विख्याता छायामाक्षिप्य भोजनी । एवं निःसंशयान् कृत्वा संशयान्नष्टसंशयाः ॥ २७
मृगयध्वं नरेन्द्रस्य पत्नीममिततेजसः । तमतिक्रम्य लक्ष्मीवान् समुद्रे शतयोजने ॥ २८
गिरिः पुष्पितको नाम सिद्धचारणसेवितः । चन्द्रसूर्यांशुसंकाशः सागराम्बुसमावृतः ॥ २९
भ्राजते विपुलैः शृङ्गैरम्बरं विलिखन्निव । तस्यैकं काञ्चनं शृङ्गं सेवते यं दिवाकरः ॥ ३०
श्वेतं राजतशृङ्गं च सेवते यं निशाकरः । न तं कृतघ्नाः पश्यन्ति न नृशंसा न नास्तिकाः ॥ ३१
प्रणम्य शिरसा शैलं तं विमार्गत वानराः । तमतिक्रम्य दुर्धर्षाः सूर्यवान्नाम पर्वतः ॥ ३२

---

१. महद्बलमसङ्गम्. झ. म.
२. इदमर्धं ति. नास्ति ।
३. विदर्भानृषिकांश्चैव च. छ.

अध्वना दुर्विगाहेन योजनानि चतुर्दश । ततस्तमप्यतिक्रम्य वैद्युतो नाम पर्वतः ॥ ३३
सर्वकामफलैर्वृक्षैः सर्वकालमनोहरैः । तत्र भुक्त्वा वरार्हाणि मूलानि च फलानि च ॥ ३४
मधूनि पीत्वा मुख्यानि परं गच्छत वानराः । तत्र नेत्रमनःकान्तः कुञ्जरो नाम पर्वतः ॥ ३५
अगस्त्यभवनं यत्र निर्मितं विश्वकर्मणा । तत्र योजनविस्तारमुच्छ्रितं दशयोजनम् ॥ ३६
शरणं काञ्चनं दिव्यं नानारत्नविभूषितम् । तत्र भोगवती नाम सर्पाणामालयः पुरी ॥ ३७
विशालकक्ष्या दुर्धर्षा सर्वतः परिरक्षिता । रक्षिता पन्नगैर्घोरैस्तीक्ष्णदंष्ट्रैर्महाविषैः ॥ ३८
सर्पराजो महाप्राज्ञो यस्यां वसति वासुकिः । निर्याय मार्गितव्या च सा च भोगवती पुरी ॥ ३९
तत्र चानन्तरा देशा ये केचन सुसंवृताः । तं च देशमतिक्रम्य महानृषभसंस्थितः ॥ ४०
सर्वरत्नमयः श्रीमानृषभो नाम पर्वतः । गोशीर्षकं पद्मकं च हरिं श्यामं च चन्दनम् ॥ ४१
दिव्यमुत्पद्यते यत्र तच्चैवाग्निसमप्रभम् । न तु तच्चन्दनं दृष्ट्वा स्प्रष्टव्यं च कदाचन ॥ ४२
रोहिता नाम गन्धर्वा घोरा रक्षन्ति तद्वनम् । तत्र गन्धर्वपतयः पञ्च सूर्यसमप्रभाः ॥ ४३
शैलूषो ग्रामणीः शिग्रुः शुभ्रो[1] बभ्रुस्तथैव च । रविसोमाग्निवपुषां निवासः पुण्यकर्मणाम् ॥ ४४
अन्ते पृथिव्या दुर्धर्षास्तत्र स्वर्गजितः स्थिताः । ततः परं न वः सेव्यः पितृलोकः सुदारुणः ॥ ४५
राजधानी यमस्यैषा कष्टेन तमसा वृता । एतावदेव युष्माभिर्वीरा वानरपुंगवाः ॥ ४६
शक्यं विचेतुं गन्तुं वा नातो गतिमतां गतिः । सर्वमेतत् समालोक्य यच्चान्यदपि दृश्यते ॥ ४७
गतिं विदित्वा वैदेह्याः संनिवर्तितुमर्हथ । यस्तु मासान्निवृत्तोऽग्रे दृष्टा सीतेति वक्ष्यति ॥ ४८
मत्तुल्यविभवो भोगैः सुखं स विहरिष्यति । ततः प्रियतरो नास्ति मम प्राणाद्विशेषतः ॥ ४९
कृतापराधो बहुशो मम बन्धुर्भविष्यति ॥

अमितबलपराक्रमा भवन्तो विपुलगुणेषु कुलेषु च प्रसूताः ।
मनुजपतिसुतां यथा लभध्वं तदधिगुणं पुरुषार्थमारभध्वम् ॥ ५०

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
किष्किन्धाकाण्डे दक्षिणाप्रेषणं नाम एकचत्वारिंशः सर्गः

---

## द्विचत्वारिंशः सर्गः

### प्रतीचीप्रेषणम्

अथ प्रस्थाप्य सुग्रीवस्तान् हरीन् दक्षिणां दिशम् । अब्रवीन्मेघसंकाशं सुषेणं नाम यूथपम् ॥ १
तारायाः पितरं राजा श्वशुरं भीमविक्रमम् । अब्रवीत् प्राञ्जलिर्वाक्यमभिगम्य प्रणम्य च ॥ २

---

१. शिक्षुः क. शुष्कः ग.

महर्षिपुत्रं[1] मारीचमर्चिष्मन्तं महाकपिम् । वृतं कपिवरैः शूरैर्महेन्द्रसदृशद्युतिम् ॥ ३
बुद्धिविक्रमसंपन्नं वैनतेयसमद्युतिम्[2] । मरीचिपुत्रान् मारीचानर्चिर्मालान् महाबलान्[3] ॥ ४
ऋषिपुत्रांश्च तान् सर्वान् प्रतीचीमादिशद्दिशम् । द्वाभ्यां शतसहस्राभ्यां कपीनां कपिसत्तमाः ॥ ५
सुषेणप्रमुखा यूयं वैदेहीं परिमार्गत । सुराष्ट्रान् सहबाह्लीकाञ्शूरान् भीमांस्तथैव च ॥ ६
स्फीताञ्जनपदान् रम्यान् विपुलानि पुराणि च । पुंनागगहनं कुक्षिं वकुलोद्दालकाकुलम् ॥ ७
तथा केतकषण्डांश्च मार्गध्वं हरियूथपाः । प्रत्यक्स्रोतोगमाश्चैव[4] नद्यः शीतजलाः शिवाः ॥ ८
तापसानामरण्यानि कान्तारा गिरयश्च ये । ततः स्थलीं मरुप्रायामत्युच्चशिरसः शिलाः ॥ ९
गिरिजालावृतां दुर्गां मार्गध्वं पश्चिमां दिशम् । ततः पश्चिममासाद्य समुद्रं द्रष्टुमर्हथ ॥ १०
तिमिनक्रायुतजलमक्षोभ्यमथ वानराः । ततः केतकषण्डेषु तमालगहनेषु च ॥ ११
कपयो विहरिष्यन्ति नारिकेलवनेषु च । तत्र सीतां च मार्गध्वं निलयं रावणस्य च[5] ॥ १२
वेलातटनिविष्टेषु पर्वतेषु वनेषु च । मुरचीपत्तनं चैव रम्यं चैव जटीपुरम् ॥ १३
अवन्तीमङ्गलेपां च तथा चालक्षितं वनम् । राष्ट्राणि च विशालानि पत्तनानि ततस्ततः ॥ १४
सिन्धुसागरयोश्चैव संगमे तत्र पर्वतः । महान् हेमगिरिर्नाम शतशृङ्गो महाद्रुमः ॥ १५
तस्य प्रस्थेषु रम्येषु सिंहाः पक्षगमाः स्थिताः । तिमिमत्स्यगजांश्चैव नीडान्यारोपयन्ति ते ॥ १६
तानि नीडानि सिंहानां गिरिशृङ्गगताश्च ये । दृप्तास्तृप्ताश्च मातङ्गास्तोयदस्वननिःस्वनाः ॥ १७
विचरन्ति विशालेऽस्मिंस्तोयपूर्णे समन्ततः । तस्य शृङ्गं दिवस्पर्शं काञ्चनं चित्रपादपम् ॥ १८
सर्वमाशु विचेतव्यं कपिभिः कामरूपिभिः । कोटिं तत्र समुद्रे तु काञ्चनीं शतयोजनाम् ॥ १९
दुर्दर्शां पारियात्रस्य गता द्रक्ष्यथ वानराः । कोट्यस्तत्र चतुर्विंशद्गन्धर्वाणां तरस्विनाम् ॥ २०
वसन्त्यग्निनिकाशानां महतां कामरूपिणाम् । पावकार्चिःप्रतीकाशाः समवेताः सहस्रशः ॥ २१
नात्यासादयितव्यास्ते [6]वानरैर्भीमविक्रमैः[7] । नादेयं च फलं तस्माद्देशात् किंचित् प्लवङ्गमैः[8] ॥ २२
दुरासदा हि ते वीराः सत्त्ववन्तो महाबलाः । फलमूलानि ते तत्र रक्षन्ते भीमविक्रमाः ॥ २३
तत्र यत्नश्च कर्तव्यो मार्गितव्या च जानकी । न हि तेभ्यो भयं किंचित् कपित्वमनुवर्तताम् ॥ २४
तत्र वैदूर्यवर्णाभो वज्रसंस्थानसंस्थितः । नानाद्रुमलताकीर्णो वज्रो नाम महागिरिः ॥ २५
श्रीमान् समुदितस्तत्र योजनानां शतं समम् । गुहास्तत्र विचेतव्याः प्रयत्नेन प्लवङ्गमाः ॥ २६
चतुर्भागे समुद्रस्य चक्रवान्नाम पर्वतः । तत्र चक्रं सहस्रारं निर्मितं विश्वकर्मणा ॥ २७
तत्र पञ्चजनं हत्वा हयग्रीवं च दानवम् । आजहार ततश्चक्रं शङ्खं च पुरुषोत्तमः ॥ २८
तस्य सानुषु चित्रेषु विशालासु गुहासु च । रावणः सह वैदेह्या मार्गितव्यस्ततस्ततः ॥ २९

---

१. मरीचिपुत्रम् च. छ.
२. वैनतेयसमं जवे छ.
३. इदमर्धम् घ. नास्ति ।
४. प्रत्यक्स्रोतोवहाश्चैव पुना.
५. इदमर्धम् घ. नास्ति ।
६. वानराः प्र.
७. क्रमाः प्र.
८. प्लवङ्गमाः प्र.

योजनानि चतुःषष्टिर्वराहो नाम पर्वतः । सुवर्णशृङ्गः सुश्रीमानगाधे वरुणालये ॥ ३०
तत्र प्राग्ज्योतिषं नाम जातरूपमयं पुरम् । यस्मिन् वसति दुष्टात्मा नरको नाम दानवः ॥ ३१
तत्र सानुषु चित्रेषु विशालासु गुहासु च । रावणः सह वैदेह्या मार्गितव्यस्ततस्ततः[1] ॥ ३२
तमतिक्रम्य शैलेन्द्रं काञ्चनान्तरनिर्दरः । पर्वतः सर्वसौवर्णो [2]धाराप्रस्रवणायुतः ॥ ३३
तं गजाश्च वराहाश्च सिंहा व्याघ्राश्च सर्वतः । अभिगर्जन्ति सततं तेन शब्देन दर्पिताः ॥ ३४
यस्मिन् हरिहयः श्रीमान् महेन्द्रः पाकशासनः । अभिषिक्तः सुरै राजा मेघवान्नाम पर्वतः ॥ ३५
तमतिक्रम्य शैलेन्द्रं महेन्द्रपरिपालितम् । षष्टिं गिरिसहस्राणि काञ्चनानि गमिष्यथ ॥ ३६
तरुणादित्यवर्णानि भ्राजमानानि सर्वतः । जातरूपमयैर्वृक्षैः शोभितानि सुपुष्पितैः ॥ ३७
तेषां मध्ये स्थितो राजा मेरुरुत्तरपर्वतः । आदित्येन प्रसन्नेन शैलो दत्तवरः पुरा ॥ ३८
तेनैवमुक्तः शैलेन्द्रः सर्व एव त्वदाश्रयाः । मत्प्रसादाद्भविष्यन्ति दिवा रात्रौ च काञ्चनाः ॥ ३९
त्वयि ये चापि वत्स्यन्ति देवगन्धर्वदानवाः । ते भविष्यन्ति रक्ताश्च प्रभया काञ्चनप्रभाः ॥ ४०
विश्वे देवाश्च मरुतो वसवश्च दिवौकसः । आगम्य पश्चिमां सन्ध्यां मेरुमुत्तरपर्वतम् ॥ ४१
आदित्यमुपतिष्ठन्ति तैश्च सूर्योऽभिपूजितः । अदृश्यः सर्वभूतानामस्तं गच्छति पर्वतम् ॥ ४२
योजनानां सहस्राणि दश तानि दिवाकरः । मुहुर्तार्धेन तं शीघ्रमभियाति शिलोच्चयम् ॥ ४३
शृङ्गे तस्य महद्दिव्यं भवनं सूर्यसंनिभम्[3] । प्रासादगणसंबाधं विहितं विश्वकर्मणा ॥ ४४
शोभितं तरुभिश्चित्रैर्नानापक्षिसमाकुलैः । निकेतं पाशहस्तस्य वरुणस्य महात्मनः ॥ ४५
अन्तरा मेरुमस्तं च तालो दशशिरा महान् । जातरूपमयः श्रीमान् भ्राजते चित्रवेदिकः ॥ ४६
तेषु सर्वेषु दुर्गेषु सरःसु च सरित्सु च । रावणः सह वैदेह्या मार्गितव्यस्ततस्ततः ॥ ४७
यत्र तिष्ठति धर्मात्मा तपसा स्वेन भावितः । मेरुसावर्णिरित्येव ख्यातो वै ब्रह्मणा समः ॥ ४८
प्रष्टव्यो मेरुसावर्णिर्महर्षिः सूर्यसंनिभः । प्रणम्य शिरसा भूमौ प्रवृत्तिं मैथिलीं प्रति ॥ ४९
एतावज्जीवलोकस्य भास्करो रजनीक्षये । कृत्वा वितिमिरं सर्वमस्तं गच्छति पर्वतम् ॥ ५०
एतावद्वानरैः शक्यं गन्तुं वानरपुंगवाः । अभास्करममर्यादं न जानीमस्ततः परम् ॥ ५१
अधिगम्य तु वैदेहीं निलयं रावणस्य च । अस्तं पर्वतमासाद्य पूर्णे मासे निवर्तत ॥ ५२
ऊर्ध्वं मासान्न वस्तव्यं वसन् वध्यो भवेन्मम । सहैव शूरो युष्माभिः श्वशुरो मे गमिष्यति ॥ ५३
श्रोतव्यं सर्वमेतस्य भवद्भिर्दिष्टकारिभिः । गुरुरेष महाबाहुः श्वशुरो मे महाबलः ॥ ५४
भवन्तश्चापि विक्रान्ताः प्रमाणं सर्वकर्मसु । प्रमाणमेनं संस्थाप्य पश्यध्वं पश्चिमां दिशम्[4] ॥ ५५

---

१. इदं पद्यम् ख. नास्ति ।
२. नाना- ङ.
३. अदृश्य इत्यादि संनिभमित्यन्तं क. नास्ति ।
४. अस्यानन्तरम्—भवन्तः परिपश्यन्तु यथा दृश्येत जानकी—इति ग. घ.

दृष्टायां तु नरेन्द्रस्य पत्न्याममिततेजसः[1] । कृतकृत्या भविष्यामः कृतस्य प्रतिकर्मणा ॥ ५६
अतोऽन्यदपि यत्किंचिन् कार्यस्यास्य हितं भवेत् । संप्रधार्य भवद्भिश्च देशकालार्थसंहितम् ॥ ५७

ततः सुषेणप्रमुखाः प्लवङ्गमाः सुग्रीववाक्यं निपुणं निशम्य ।
आमन्त्र्य सर्वे प्लवगाधिपं ते जग्मुर्दिशं तां वरुणाभिगुप्ताम् ॥ ५८

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
किष्किन्धाकाण्डे प्रतीचीप्रेषणं नाम द्विचत्वारिंशः सर्गः

---

## त्रिचत्वारिंशः सर्गः

### उदीचीप्रेषणम्

ततः संदिश्य सुग्रीवः श्वशुरं पश्चिमां दिशम् । वीरं शतवलिं नाम वानरं वानरर्षभः ॥ १
उवाच राजा धर्मज्ञः सर्ववानरसत्तमम् । वाक्यमात्महितं चैव रामस्य च हितं तथा ॥ २
वृतः शतसहस्रेण त्वद्विधानां वनौकसाम् । वैवस्वतसुतैः सार्धं प्रतिष्ठस्व स्वमन्त्रिभिः ॥ ३
दिशं ह्युदीचीं विक्रान्तां हिमशैलावतंसकाम् । सर्वतः परिमार्गध्वं रामपत्नीमनिन्दिताम् ॥ ४
अस्मिन् कार्ये विनिर्वृत्ते कृते दाशरथेः प्रिये । ऋणान्मुक्ता भविष्यामः कृतार्थार्थविदां वराः ॥ ५
कृतं हि प्रियमस्माकं राघवेण महात्मना । तस्य चेत् प्रतिकारोऽस्ति सफलं जीवितं भवेत् ॥ ६
अर्थिनः कार्यनिर्वृत्तिमकर्तुरपि यश्चरेत् । तस्य स्यात् सफलं जन्म किं पुनः पूर्वकारिणः ॥ ७
एतां बुद्धिं समास्थाय दृश्यते जानकी यथा । तथा भवद्भिः कर्तव्यमस्मत्प्रियहितैषिभिः ॥ ८
अयं हि सर्वभूतानां मान्यस्तु नरसत्तमः । अस्मासु चागतप्रीती रामः परपुरंजयः ॥ ९
इमानि वनदुर्गाणि नद्यः शैलान्तराणि च । भवन्तः परिमार्गन्तु बुद्धिविक्रमसंपदा ॥ १०
तत्र म्लेच्छान् पुलिन्दांश्च शूरसेनांस्तथैव च । प्रस्थलान् भरतांश्चैव कुरूंश्च सह मद्रकैः ॥ ११
काम्बोजान् यवनांश्चैव शकानारट्टकानपि । बाह्लीकानृषिकांश्चैव पौरवानथ टङ्कणान् ॥ १२
चीनान् परमचीनांश्च नीहारांश्च पुनः पुनः । अन्विष्य दरदांश्चैव हिमवन्तं विचिन्वथ ॥ १३
लोध्रपद्मकषण्डेषु देवदारुवनेषु च । रावणः सह वैदेह्या मार्गितव्यस्ततस्ततः ॥ १४
ततः सोमाश्रमं गत्वा देवगन्धर्वसेवितम् । कालं नाम महासानुं पर्वतं तं गमिष्यथ ॥ १५
महत्सु तस्य शृङ्गेषु निर्दरेषु गुहासु च । विचिनुध्वं महाभागां रामपत्नीमनिन्दिताम् ॥ १६
तमतिक्रम्य शैलेन्द्रं हेमगर्भं महागिरिम् । ततः सुदर्शनं नाम गन्तुमर्हथ पर्वतम् ॥ १७
ततो देवसखो नाम पर्वतः पतगालयः । नानापक्षिगणाकीर्णो विविधद्रुमभूषितः ॥ १८

---

१. इदमर्धम् ख. नास्ति ।

तस्य काननषण्डेषु निर्झरेषु गुहासु च । रावणः सह वैदेह्या मार्गितव्यस्ततस्ततः ॥ १९
तमतिक्रम्य चाकाशं सर्वतः शतयोजनम् । अपर्वतनदीवृक्षं सर्वसत्त्वविवर्जितम् ॥ २०
तं तु शीघ्रमतिक्रम्य कान्तारं रोमहर्षणम् । कैलासं पाण्डरं शैलं प्राप्य हृष्टा भविष्यथ ॥ २१
तत्र पाण्डरमेघाभं जाम्बूनदपरिष्कृतम् । कुबेरभवनं रम्यं निर्मितं विश्वकर्मणा ॥ २२
विशाला नलिनी यत्र प्रभूतकमलोत्पला । हंसकारण्डवाकीर्णा ह्यप्सरोगणसेविता ॥ २३
तत्र वैश्रवणो राजा सर्वभूतनमस्कृतः । धनदो रमते श्रीमान् गुह्यकैः सह यक्षराट् ॥ २४
तस्य चन्द्रनिकाशेषु पर्वतेषु गुहासु च । रावणः सह वैदेह्या मार्गितव्यस्ततस्ततः ॥ २५
क्रौञ्चं तु गिरिमासाद्य बिलं तस्य सुदुर्गमम् । अप्रमत्तैः प्रवेष्टव्यं दुष्प्रवेशं हि तत् स्मृतम् ॥ २६
वसन्ति हि महात्मानस्तत्र सूर्यसमप्रभाः । देवैरप्यर्चिताः सम्यग्दिव्यरूपा महर्षयः ॥ २७
क्रौञ्चस्य तु गुहाश्चान्याः सानूनि शिखराणि च । निर्दराश्च नितम्बाश्च विचेतव्यास्ततस्ततः ॥ २८
क्रौञ्चस्य शिखरं चापि निरीक्ष्य च ततस्ततः । अवृक्षं कामशैलं च मानसं विहगालयम् ॥ २९
न गतिस्तत्र भूतानां देवदानवरक्षसाम्[1] । स च सर्वैर्विचेतव्यः ससानुप्रस्थभूधरः ॥ ३०
क्रौञ्चं गिरिमतिक्रम्य मैनाको नाम पर्वतः । मयस्य भवनं यत्र दानवस्य स्वयं कृतम् ॥ ३१
मैनाकस्तु विचेतव्यः ससानुप्रस्थकन्दरः । स्त्रीणामश्वमुखीनां च निकेतास्तत्र तत्र तु ॥ ३२
तं देशं समतिक्रम्य आश्रमं सिद्धसेवितम् । सिद्धा वैखानसास्तत्र वालखिल्याश्च तापसाः ॥ ३३
वन्द्यास्ते तु तपःसिद्धास्तपसा वीतकल्मषाः । प्रष्टव्या चापि सीतायाः प्रवृत्तिर्विनयान्वितैः ॥ ३४
हेमपुष्करसंछन्नं तस्मिन् वैखानसं सरः । तरुणादित्यसंकाशैर्हंसैर्विचरितं शुभैः ॥ ३५
औपवाह्यः कुबेरस्य सार्वभौम इति स्मृतः । गजः पर्येति तं देशं सदा सह करेणुभिः ॥ ३६
तत् सरः समतिक्रम्य नष्टचन्द्रदिवाकरम् । अनक्षत्रगणं व्योम निष्पयोदमनादितम् ॥ ३७
गभस्तिभिरिवार्कस्य स तु देशः प्रकाशते । विश्राम्यद्भिस्तपःसिद्धैर्देवकल्पैः स्वयंप्रभैः ॥ ३८
तं तु देशमतिक्रम्य शैलोदा नाम निम्नगा । उभयोस्तीरयोस्तस्याः कीचका नाम वेणवः ॥ ३९
ते नयन्ति परं तीरं सिद्धान् प्रत्यानयन्ति च । उत्तराः कुरवस्तत्र कृतपुण्यप्रतिश्रयाः ॥ ४०
ततः काञ्चनपद्माभिः पद्मिनीभिः कृतोदकाः । नीलवैदूर्यपत्राढ्या नद्यस्तत्र सहस्रशः ॥ ४१
रक्तोत्पलवनैश्चात्र मण्डिताश्च हिरण्मयैः । तरुणादित्यसदृशैर्भान्ति तत्र जलाशयाः ॥ ४२
महार्हमणिपत्रैश्च काञ्चनप्रभकेसरैः । नीलोत्पलवनैश्चित्रैः स देशः सर्वतो वृतः ॥ ४३
निस्तुलाभिश्च मुक्ताभिर्मणिभिश्च महाधनैः । उद्भूतपुलिनास्तत्र जातरूपैश्च निम्नगाः ॥ ४४
सर्वरत्नमयैश्चित्रैरवगाढा नगोत्तमैः । जातरूपमयैश्चापि हुताशनसमप्रभैः ॥ ४५
नित्यपुष्पफलास्तत्र नगाः पत्ररथाकुलाः । दिव्यगन्धरसस्पर्शा सर्वकामान् स्रवन्ति च ॥ ४६

---

१. अस्यानन्तरम्—तत्र सर्वं विचेतव्यं पर्वतो देवमानसः—इति ख.

नानाकाराणि वासांसि फलन्त्यन्ये नगोत्तमाः । मुक्तावैदूर्यचित्राणि भूषणानि तथैव च ॥ ४७
स्त्रीणां चाप्यनुरूपाणि पुरुषाणां तथैव च । सर्वर्तुसुखसेव्यानि फलन्त्यन्ये नगोत्तमाः ॥ ४८
महार्हाणि च चित्राणि हैमान्यन्ये नगोत्तमाः । शयनानि प्रसूयन्ते चित्रास्तरणवन्ति च ॥ ४९
मनःकान्तानि माल्यानि फलन्त्यत्रापरे द्रुमाः । पानानि च महार्हाणि भक्ष्याणि विविधानि च ॥ ५०
स्त्रियश्च गुणसंपन्ना रूपयौवनलक्षिताः । गन्धर्वाः किंनराः सिद्धा नागा विद्याधरास्तथा ॥ ५१
रमन्ते सहितास्तत्र नारीभिर्भास्करप्रभाः । सर्वे सुकृतकर्माणः सर्वे रतिपरायणाः ॥ ५२
सर्वे कामार्थसहिता वसन्ति सहयोषितः । गीतवादित्रनिर्घोषः सोत्कृष्टहसितस्वनः ॥ ५३
श्रूयते सततं तत्र सर्वभूतमनोहरः । तत्र नामुदितः कश्चिन्नास्ति कश्चिदसत्प्रियः ॥ ५४
अहन्यहनि वर्धन्ते गुणास्तत्र मनोरमाः । समतिक्रम्य तं देशमुत्तरः पयसां निधिः ॥ ५५
तत्र सोमगिरिर्नाम मध्ये हेममयो महान् । इन्द्रलोकगता ये च ब्रह्मलोकगताश्च ये ॥ ५६
देवास्तं समवेक्षन्ते गिरिराजं दिवं गताः । स तु देशो विसूर्योऽपि तस्य भासा प्रकाशते ॥ ५७
सूर्यलक्ष्म्याभिविज्ञेयस्तपतेव विवस्वता । भगवानपि विश्वात्मा शम्भुरेकादशात्मकः ॥ ५८
ब्रह्मा वसति देवेशो ब्रह्मर्षिपरिवारितः । न कथंचन गन्तव्यं कुरूणामुत्तरेण वः ॥ ५९
अन्येषामपि भूतानां नातिक्रामति वै गतिः । स हि सोमगिरिर्नाम देवानामपि दुर्गमः ॥ ६०
तमालोक्य ततः क्षिप्रमुपावर्तितुमर्हथ । एतावद्वानरैः शक्यं गन्तुं वानरपुंगवाः ॥ ६१
अभास्करममर्यादं न जानीमस्ततः परम् । सर्वमेतद्विचेतव्यं यन्मया परिकीर्तितम् ॥ ६२
यदन्यदपि नोक्तं च तत्रापि क्रियतां मतिः ॥

ततः कृतं दाशरथेर्महत् प्रियं महत्तरं चापि ततो मम प्रियम् ।
कृतं भविष्यत्यनिलानलोपमा विदेहजादर्शनजेन कर्मणा ॥ ६३
ततः कृतार्थाः सहिताः सबान्धवा मयार्चिताः सर्वगुणैर्मनोरमैः ।
चरिष्यथोर्वीं प्रतिशान्तशत्रवः सहप्रियाः भूतधराः प्लवङ्गमाः ॥ ६४

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
किष्किन्धाकाण्डे उदीचीप्रेषणं नाम त्रिचत्वारिंशः सर्गः

---

## चतुश्चत्वारिंशः सर्गः

### हनूमत्संदेशः

विशेषेण तु सुग्रीवो हनुमत्यर्थमुक्तवान् । स हि तस्मिन् हरिश्रेष्ठे निश्चितार्थोऽर्थसाधने ॥ १
अब्रवीच्च हनूमन्तं विक्रान्तमनिलात्मजम् । सुग्रीवः परमप्रीतः प्रभुः सर्ववनौकसाम् ॥ २
न भूमौ नान्तरिक्षे वा नाम्बरे नामरालये । नाप्सु वा गतिसङ्गं ते पश्यामि हरिपुंगव ॥ ३

---

१. भास्वरः प्र.

सासुराः सहगन्धर्वाः सनागनरदेवताः । विदिताः सर्वलोकास्ते ससागरधराधराः ॥ ४
गतिर्वेगश्च तेजश्च लाघवं च महाकपे । पितुस्ते सदृशं वीर मारुतस्य महात्मनः ॥ ५
तेजसा वापि ते भूतं समं भुवि न विद्यते । तद्यथा लभ्यते सीता तत्त्वमेवोपपादय ॥ ६
त्वय्येव हनुमन्नस्ति बलं बुद्धिः पराक्रमः । देशकालानुवृत्तिश्च नयश्च नयपण्डित ॥ ७
ततः कार्यसमासङ्गमवगम्य हनूमति । विदित्वा हनुमन्तं च चिन्तयामास राघवः ॥ ८
सर्वथा निश्चितार्थोऽयं हनूमति हरीश्वरः । निश्चितार्थकरश्चापि हनुमान् कार्यसाधने ॥ ९
तदेवं प्रस्थितस्यास्य परिज्ञातस्य कर्मभिः । भर्त्रा परिगृहीतस्य ध्रुवः कार्यफलोदयः ॥ १०
तं समीक्ष्य महातेजा व्यवसायोत्तरं हरिम् । कृतार्थ इव संवृत्तः प्रहृष्टेन्द्रियमानसः ॥ ११
ददौ तस्मै ततः प्रीतः स्वनामाङ्कोपशोभितम् । अङ्गुलीयमभिज्ञानं राजपुत्र्याः परंतपः ॥ १२
अनेन त्वां हरिश्रेष्ठ चिह्नेन जनकात्मजा । मत्सकाशादनुप्राप्तमनुद्विग्नानुपश्यति ॥ १३
व्यवसायश्च ते वीर सत्त्वयुक्तश्च विक्रमः । सुग्रीवस्य च संदेशः सिद्धिं कथयतीव मे ॥ १४
स तद्गृह्य हरिश्रेष्ठः स्थाप्य मूर्ध्नि कृताञ्जलिः । वन्दित्वा चरणौ चैव प्रस्थितः प्लवगोत्तमः ॥ १५

स तत् प्रकर्षन् हरिणां महद्बलं बभूव वीरः पवनात्मजः कपिः ।
गताम्बुदे व्योम्नि विशुद्धमण्डलः शशीव नक्षत्रगणोपशोभितः ॥ १६

अतिबल बलमाश्रितस्तवाहं हरिवरविक्रम विक्रमैरनल्पैः ।
पवनसुत यथाधिगम्यते सा जनकसुता हनुमंस्तथा कुरुष्व ॥ १७

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
किष्किन्धाकाण्डे हनूमत्संदेशो नाम चतुश्चत्वारिंशः सर्गः

---

## पञ्चचत्वारिंशः सर्गः

### वानरबलप्रतिष्ठा

सर्वांश्चाहूय सुग्रीवः प्लवगान् प्लवगर्षभः । पुनस्तानब्रवीद्भूयो रामकार्यार्थसिद्धये ॥ १
एवमेतद्विचेतव्यं यन्मया परिकीर्तितम् । तदुग्रशासनं भर्तुर्विज्ञाय हरिपुंगवाः ॥ २
शलभा इव संछाद्य मेदिनीं संप्रतस्थिरे । रामः प्रस्रवणे तस्मिन् न्यवसत् सहलक्ष्मणः ॥ ३
प्रतीक्षमाणस्तं मासं यः सीताधिगमे कृतः । उत्तरां तु दिशं रम्यां गिरिराजसमावृताम् ॥ ४
प्रतस्थे हरिभिर्वीरो हरिः शतवलिस्तदा । पूर्वां दिशं प्रति ययौ विनतो हरियूथपः ॥ ५
ताराङ्गदादिसहितः प्लवगः पवनात्मजः । अगस्त्यचरितामाशां दक्षिणां हरियूथपः ॥ ६
पश्चिमां तु दिशं घोरां सुषेणः प्लवगेश्वरः । प्रतस्थे हरिशार्दूलो भृशं वरुणपालिताम् ॥ ७

ततः सर्वा दिशो राजा चोदयित्वा यथातथम् । कपिसेनापतीन् मुख्यान् मुमोद सुखितः सुखम् ॥८
एवं संचोदिताः सर्वे राज्ञा वानरयूथपाः । स्वां स्वां दिशमभिप्रेत्य त्वरिताः संप्रतस्थिरे ॥ ९
आनयिष्यामहे सीतां हनिष्यामश्च रावणम् । नदन्तश्चोन्नदन्तश्च गर्जन्तश्च प्लवङ्गमाः ॥ १०
क्ष्वेलन्तो धावमानाश्च विनदन्तो महाबलाः[1] । अहमेको हनिष्यामि प्राप्तं रावणमाहवे ॥ ११
ततश्चोन्मथ्य सहसा हरिष्ये जनकात्मजाम् । वेपमानां श्रमेणाद्य भवद्भिः स्थीयतामिति ॥ १२
एक एवाहरिष्यामि पातालादपि जानकीम् । [2]विमथिष्याम्यहं वृक्षान् पातयिष्याम्यहं गिरीन् ॥ १३
धरणीं दारयिष्यामि क्षोभयिष्यामि सागरान् । अहं योजनसंख्यायाः प्लविता नात्र संशयः ॥ १४
शतं योजनसंख्यायाः शतं समधिकं ह्यहम् । भूतले सागरे वापि शैलेषु च वनेषु च ॥ १५
पातालस्यापि वा मध्ये न ममाच्छिद्यते गतिः । इत्येकैकं तदा तत्र वानरा बलदर्पिताः ॥ १६
ऊचुश्च वचनं तत्र हरिराजस्य संनिधौ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
किष्किन्धाकाण्डे वानरबलप्रतिज्ञा नाम पञ्चचत्वारिंशः सर्गः

---

## षट्चत्वारिंशः सर्गः

### भूमण्डलभ्रमणकथनम्

गतेषु वानरेन्द्रेषु रामः सुग्रीवमब्रवीत् । कथं भवान् विजानीते सर्वं वै मण्डलं भुवः ॥ १
सुग्रीवस्तु ततो राममुवाच प्रणतात्मवान् । श्रूयतां सर्वमाख्यास्ये विस्तरेण नरर्षभ ॥ २
यदा तु दुन्दुभिं नाम दानवं महिषाकृतिम् । परिकालयते वाली मलयं प्रति पर्वतम् ॥ ३
तदा विवेश महिषो मलयस्य गुहां प्रति । विवेश वाली तत्रापि मलयं तज्जिघांसया ॥ ४
ततोऽहं तत्र निक्षिप्तो गुहाद्वारि विनीतवत् । न च निष्क्रमते वाली तदा संवत्सरे गते ॥ ५
ततः क्षतजवेगेन आपुपूरे तदा बिलम् । तदहं विस्मितो दृष्ट्वा भ्रातृशोकविषार्दितः ॥ ६
अथाहं कृतबुद्धिस्तु सुव्यक्तं निहतो गुरुः । [3]शिला पर्वतसंकाशा बिलद्वारि मया कृता ॥ ७
अशक्नुवन्निष्क्रमितुं महिषो विनशेदिति । ततोऽहमागां किष्किन्धां निराशस्तस्य जीविते ॥ ८
राज्यं च सुमहत् प्राप्तं तारया रुमया सह । मित्रैश्च सहितस्तत्र वसामि विगतज्वरः ॥ ९
आजगाम ततो वाली हत्वा तं दानवर्षभम् । ततोऽहमददां राज्यं गौरवाद्भययन्त्रितः ॥ १०
स मां जिघांसुर्दुष्टात्मा वाली प्रव्यथितेन्द्रियः । परिकालयते क्रोधाद्धावन्तं सचिवैः सह ॥ ११
ततोऽहं वालिना तेन सानुबन्धः प्रधावितः । नदीश्च विविधाः पश्यन् वनानि नगराणि च ॥१२

---

१. ययुः प्लवगसत्तमाः पुन.
२. विधमिष्यामि झ. अ.
३. एतदनन्तरम्—इति विभ्रान्तचित्तेन कार्याकार्यमजानता इत्यधिकं झ. अ.

आदर्शतलसंकाशा ततो वै पृथिवी मया । अलातचक्रप्रतिमा दृष्टा गोष्पदवत्तदा ॥ १३
पूर्वां दिशं ततो गत्वा पश्यामि विविधान् द्रुमान् । पर्वतांश्च नदी रम्याः सरांसि विविधानि च॥१४
उदयं तत्र पश्यामि पर्वतं धातुमण्डितम् । क्षीरोदं सागरं चैव नित्यमप्सरसालयम् ॥ १५
परिकाल्यमानस्तु वालिनाभिद्रुतस्तदा । पुनरावृत्य सहसा प्रस्थितोऽहं तदा विभो ॥ १६
पुनरावर्तमानस्तु वालिनाभिद्रुतो द्रुतम् । दिशस्तस्यास्ततो भूयः प्रस्थितो दक्षिणां दिशम् ॥ १७
विन्ध्यपादपसंकीर्णां चन्दनद्रुमशोभिताम् । द्रुमशैलांस्ततः पश्यन् भूयो दक्षिणतोऽपरान् ॥ १८
पश्चिमां तु दिशं प्राप्तो वालिना समभिद्रुतः । संपश्यन् विविधान् देशानस्तं च गिरिसत्तमम् ॥ १९
प्राप्य चास्तं गिरिश्रेष्ठमुत्तरां संप्रधावितः । हिमवन्तं च मेरुं च समुद्रं च तथोत्तरम् ॥ २०
यदा न विन्दे शरणं वालिना समभिद्रुतः । तदा मां बुद्धिसंपन्नो हनुमान् वाक्यमब्रवीत् ॥ २१
इदानीं मे स्मृतं राजन् यथा वाली हरीश्वरः । मतङ्गेन तदा शप्तो ह्यस्मिन्नाश्रममण्डले ॥ २२
प्रविशेद्यदि वै वाली मूर्धास्य शतधा भवेत् । तत्र वासः सुखोऽस्माकं निरुद्विग्नो भविष्यति ॥ २३
ततः पर्वतमासाद्य ऋश्यमूकं नृपात्मज । न विवेश तदा वाली मतङ्गस्य भयात्तदा ॥ २४
एवं मया तदा राजन् प्रत्यक्षमुपलक्षितम् । पृथिवीमण्डलं कृत्स्नं गुहामस्म्यागतस्ततः ॥ २५

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
किष्किन्धाकाण्डे भूमण्डलभ्रमणकथनं नाम षट्चत्वारिंशः सर्गः

---

## सप्तचत्वारिंशः सर्गः

### कपिसेनाप्रत्यागमनम्

दर्शनार्थं तु वैदेह्याः सर्वतः कपियूथपाः । व्यादिष्टाः कपिराजेन यथोक्तं जग्मुरञ्जसा ॥ १
सरांसि सरितः कक्षानाकाशं नगराणि च । नदीदुर्गांस्तथा शैलान् विचिन्वन्ति समन्ततः ॥ २
सुग्रीवेण समादिष्टाः सर्वे वानरयूथपाः । तत्र देशान् विचिन्वन्ति सशैलवनकाननान् ॥ ३
विचित्य दिवसं सर्वे सीताधिगमने धृताः । समायान्ति स्म मेदिन्यां निशाकालेषु वानराः ॥ ४
सर्वर्तुकांश्च देशेषु वानराः सफलान् द्रुमान् । आसाद्य रजनीं शय्यां चक्रुः सर्वेष्वहःसु ते ॥ ५
तदहः प्रथमं कृत्वा मासे प्रस्रवणं गताः । कपिराजेन संगम्य निराशाः कपियूथपाः ॥ ६
विचित्य तु दिशं पूर्वां यथोक्तां सचिवैः सह । अदृष्ट्वा विनतः सीतामाजगाम महाबलः ॥ ७
उत्तरां च दिशं सर्वां विचित्य स महाकपिः । आगतः सह सैन्येन वीरः शतवलिस्तदा ॥ ८
सुषेणः पश्चिमामाशां विचित्य सह वानरैः । समेत्य मासे संपूर्णे सुग्रीवमुपचक्रमे ॥ ९
तं प्रस्रवणपृष्ठस्थं समासाद्याभिवाद्य च । आसीनं सह रामेण सुग्रीवमिदमब्रुवन् ॥ १०

विचिताः पर्वताः सर्वे वनानि नगराणि[1] च । निम्नगाः सागरान्ताश्च सर्वे जनपदाश्च ये ॥ ११
गुहाश्च विचिताः सर्वास्त्वया याः परिकीर्तिताः । विचिताश्च महागुल्मा लताविततिसंतताः ॥ १२
गहनेषु च देशेषु दुर्गेषु विषमेषु च । सत्त्वान्यतिप्रमाणानि विचितानि[2] महान्ति[3] च ॥ १३

उदारसत्त्वाभिजनो महात्मा स मैथिलीं द्रक्ष्यति वानरेन्द्र[4] ।
दिशं तु यामेव गता तु सीता तामास्थितो वायुसुतो हनूमान् ॥ १४

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
किष्किन्धाकाण्डे कपिसेनाप्रत्यागमनं नाम सप्तचत्वारिंशः सर्गः

---

## अष्टचत्वारिंशः सर्गः

### कण्डूवनादिविचयः

सह ताराङ्गदाभ्यां तु गत्वा स हनुमान् कपिः । सुग्रीवेण यथोद्दिष्टं तं देशमुपचक्रमे ॥ १
स तु दूरमुपागम्य सर्वैस्तैः कपिसत्तमैः । विचिनोति स्म विन्ध्यस्य गुहाश्च गहनानि च ॥ २
पर्वताग्रनदीदुर्गान् सरांसि विपुलान् द्रुमान् । वृक्षषण्डांश्च विविधान् पर्वतान् घनपादपान् ॥ ३
अन्वेषमाणास्ते सर्वे वानराः सर्वतो दिशम् । न सीतां ददृशुर्वीरा मैथिलीं जनकात्मजाम् ॥ ४
ते भक्षयन्तो मूलानि फलानि विविधानि च । अन्वेषमाणा दुर्धर्षा न्यवसंस्तत्र तत्र ह ॥ ५
स तु देशो दुरन्वेषो गुहागहनवान् महान्[5] । निर्जलं निर्जनं शून्यं गहनं रोमहर्षणम् ॥ ६
त्यक्त्वा तु तं तदा देशं सर्वे वै हरियूथपाः । तादृशान्यप्यरण्यानि विचित्य भृशपीडिताः ॥ ७
देशमन्यं दुराधर्षं विविशुश्चाकुतोभयाः । यत्र वन्ध्यफला वृक्षा विपुष्पाः पर्णवर्जिताः ॥ ८
निस्तोयाः सरितो यत्र मूलं यत्र सुदुर्लभम् । न सन्ति महिषा यत्र न मृगा न च हस्तिनः ॥ ९
शार्दूलाः पक्षिणो वापि ये चान्ये वनगोचराः । न यत्र वृक्षा नौषध्यो न लता नापि वीरुधः ॥ १०
स्निग्धपत्राः स्थले यत्र पद्मिन्यः फुल्लपङ्कजाः । प्रेक्षणीयाः सुगन्धाश्च भ्रमरैश्च विवर्जिताः ॥ ११
कण्डुर्नाम महाभागः सत्यवादी तपोधनः । महर्षिः परमामर्षी नियमैर्दुष्प्रधर्षणः ॥ १२
तस्य तस्मिन् वने पुत्रो बालको दशवार्षिकः[6] । प्रनष्टो जीवितान्ताय क्रुद्धस्तत्र महामुनिः ॥ १३
तेन धर्मात्मना शप्तं कृत्स्नं तत्र महद्वनम् । अशरण्यं दुराधर्षं मृगपक्षिविवर्जितम् ॥ १४

---

१. गहनानि च. छ.
२. हतानि च. छ.
३. अस्यानन्तरम्—ये चैव गहना देशा विचितास्ते पुनः पुनः—इति रा.
४. वानरेन्द्रः च. छ.
५. अन्वेषमाणा इत्यादि महानित्यन्तम् क. नास्ति ।
६. बालो द्वादशवार्षिकः ग. बालः षोडशवार्षिकः च छ.

तस्य ते काननान्तांश्च गिरीणां कन्दराणि च । प्रभवाणि नदीनां च विचिन्वन्ति समाहिताः ॥ १५
तत्र चापि महात्मानो नापश्यञ्जनकात्मजाम् । हर्तारं रावणं वापि सुग्रीवप्रियकारिणः ॥ १६
ते प्रविश्याशु तं भीमं लतागुल्मसमावृतम् । ददृशुः क्रूरकर्माणमसुरं सुरनिर्भयम् ॥ १७
तं दृष्ट्वा वानरा घोरं स्थितं शैलमिवापरम् । गाढं परिहिताः सर्वे दृष्ट्वा तं पर्वतोपमम् ॥ १८
सोऽपि तान् वानरान् सर्वान्नष्टाः स्थेत्यब्रवीद्बली । अभ्यधावत संक्रुद्धो मुष्टिमुद्यम्य संहितम् ॥१९
तमापतन्तं सहसा वालिपुत्रोऽङ्गदस्तदा । रावणोऽयमिति ज्ञात्वा तलेनाभिजघान ह ॥ २०
स वालिपुत्राभिहतो वक्त्राच्छोणितमुद्वमन् । असुरो न्यपतद्भूमौ पर्यस्त इव पर्वतः ॥ २१
तेऽपि तस्मिन्निरुच्छ्वासे वानरा जितकाशिनः । व्यचिन्वन् प्रायशस्तत्र सर्वं तद्गिरिगह्वरम् ॥ २२
विचितं तु ततः कृत्वा सर्वं ते काननं पुनः । [1]अन्यदेवापरं घोरं विविशुर्गिरिगह्वरम् ॥ २३
ते विचित्य पुनः खिन्ना विनिष्पत्य समागताः । एकान्ते वृक्षमूले तु निषेदुर्दीनमानसाः ॥ २४

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
किष्किन्धाकाण्डे कण्डूवनादिविचयो नाम अष्टचत्वारिंशः सर्गः

---

## एकोनपञ्चाशः सर्गः

### रजतपर्वतविचयः

अथाङ्गदस्तदा सर्वान् वानरानिदमब्रवीत् । परिश्रान्तो महाप्राज्ञः समाश्वास्य शनैर्वचः ॥ १
वनानि गिरयो नद्यो दुर्गाणि गहनानि च । दर्यो गिरिगुहाश्चैव विचितानि समन्ततः ॥ २
तत्र तत्र सहास्माभिर्जानकी न च दृश्यते । तद्वा रक्षो हृता येन सीता सुरसुतोपमा ॥ ३
कालश्च नो महान् यातः सुग्रीवश्चोग्रशासनः । तस्माद्भवन्तः सहिता विचिन्वन्तु समन्ततः ॥ ४
विहाय तन्द्रीं शोकं च निद्रां चैव समुत्थिताम् । विचिनुध्वं यथा सीतां पश्यामो जनकात्मजाम् ॥५
अनिर्वेदं च दाक्ष्यं च मनसश्चापराजयम् । कार्यसिद्धिकराण्याहुस्तस्मादेतद्ब्रवीम्यहम् ॥ ६
अद्यापीदं वनं दुर्गं विचिन्वन्तु वनौकसः । खेदं त्यक्त्वा पुनः सर्वैर्वनमेतद्विचीयताम् ॥ ७
अवश्यं क्रियमाणस्य दृश्यते कर्मणः फलम् । अलं निर्वेदमागम्य न हि नो मीलनं क्षमम्[2] ॥ ८
सुग्रीवः क्रोधनो राजा तीक्ष्णदण्डश्च वानराः । भेतव्यं तस्य सततं रामस्य च महात्मनः ॥ ९
हितार्थमेतदुक्तं वः क्रियतां यदि रोचते । उच्यतां वा क्षमं यन्नः सर्वेषामेव वानराः ॥ १०
अङ्गदस्य वचः श्रुत्वा वचनं गन्धमादनः । उवाचाव्यक्तया वाचा पिपासाश्रमखिन्नया ॥ ११
सदृशं खलु वो वाक्यमङ्गदो यदुवाच ह । हितं चैवानुकूलं च क्रियतामस्य भाषितम् ॥ १२

---

1. अन्यद् विलक्षणम् ।  2. परं निर्वेदमागम्य न हि नोन्मीलनं क्षमम् इति.

पुनर्मार्गामहे शैलान् कन्दरांश्च दरीस्तथा । काननानि च शून्यानि गिरिप्रस्रवणानि च ॥ १३
यथोद्दिष्टानि सर्वाणि सुग्रीवेण महात्मना । विचिन्वन्तु वनं सर्वे गिरिदुर्गाणि सर्वशः ॥ १४
ततः समुत्थाय पुनर्वानरास्ते महाबलाः । विन्ध्यकाननसंकीर्णां विचेरुर्दक्षिणां दिशम् ॥ १५
ते शारदाभ्रप्रतिमं श्रीमद्रजतपर्वतम् । शृङ्गवन्तं दरीमन्तमधिरुह्य च वानराः ॥ १६
तत्र लोध्रवनं[1] रम्यं सप्तपर्णवनानि च । व्यचिन्वंस्ते हरिवराः सीतादर्शनकाङ्क्षिणः ॥ १७
तस्याग्रमधिरूढास्ते श्रान्ता विपुलविक्रमाः । न पश्यन्ति स्म वैदेहीं रामस्य महिषीं प्रियाम् ॥ १८
ते तु दृष्टिगतं दृष्ट्वा तं शैलं बहुकन्दरम् । अवारोहन्त हरयो वीक्षमाणाः समन्ततः ॥ १९
अवरुह्य ततो भूमिं श्रान्ता विगतचेतसः । स्थित्वा मुहूर्तं तत्राथ वृक्षमूलमुपाश्रिताः ॥ २०
ते मुहूर्तं समाश्वस्ताः किंचिद्भग्नपरिश्रमाः । पुनरेवोद्यताः कृत्स्नां मार्गितुं दक्षिणां दिशम् ॥ २१
हनुमत्प्रमुखास्ते तु प्रस्थिताः प्लवगर्षभाः । विन्ध्यमेवादितस्तावद्विचेरुस्ते ततस्ततः ॥ २२

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
किष्किन्धाकाण्डे रजतपर्वतविचयो नम एकोनपञ्चाशः सर्गः

---

## पञ्चाशः सर्गः

### ऋक्षबिलप्रवेशः

सह ताराङ्गदाभ्यां तु संगम्य हनुमान् कपिः । विचिनोति स्म विन्ध्यस्य गुहाश्च गहनानि च ॥ १
सिंहशार्दूलजुष्टाश्च शिलाश्च सरितस्तथा । विषमेषु नगेन्द्रस्य महाप्रस्रवणेषु च ॥ २
आसेदुस्तस्य शैलस्य कोटिं दक्षिणपश्चिमाम् । तेषां तत्रैव वसतां स कालो व्यत्यवर्तत ॥ ३
स हि देशो दुरन्वेषो गुहागहनवान् महान् । तत्र वायुसुतः सर्वं विचिनोति स्म पर्वतम् ॥ ४
परस्परेण रहिता अन्योन्यस्याविदूरतः । गजो गवाक्षो गवयः शरभो गन्धमादनः ॥ ५
मैन्दश्च द्विविदश्चैव सुषेणो हनुमानपि[2] । अङ्गदो युवराजश्च तारश्च वनगोचरः ॥ ६
गिरिजालावृतान् देशान् मार्गित्वा दक्षिणां दिशम् । विचिन्वन्तस्ततस्तत्र ददृशुर्विवृतं बिलम् ॥ ७
दुर्गमृक्षबिलं नाम दानवेनाभिरक्षितम् । क्षुत्पिपासापरीताश्च श्रान्ताश्च सलिलार्थिनः ॥ ८
अवकीर्णं लतावृक्षैर्ददृशुस्ते महाबिलम् । ततः क्रौञ्चाश्च हंसाश्च सारसाश्चापि निष्क्रमन् ॥ ९
जलार्द्राश्चक्रवाकाश्च रक्ताङ्गाः पद्मरेणुभिः । ततस्तद्बिलमासाद्य सुगन्धि दुरतिक्रमम् ॥ १०
विस्मयव्यग्रमनसो बभूवुर्वानरर्षभाः । संजातपरिशङ्कास्ते तद्बिलं प्लवगोत्तमाः ॥ ११

१. कोद्रवनम् च. २. जाम्बवान्नलः च.

अभ्यपद्यन्त संहृष्टास्तेजोवन्तो महाबलाः । नानासत्त्वसमाकीर्णं दैत्येन्द्रनिलयोपमम् ॥ १२
दुर्दर्शमतिघोरं च दुर्विगाहं च सर्वशः । ततः पर्वतकूटाभो हनुमान् पवनात्मजः ॥ १३
अब्रवीद्वानरान् सर्वान् कान्तारवनकोविदः । गिरिजालावृतान् देशान् मार्गित्वा दक्षिणां दिशम् ॥१४
वयं सर्वे परिश्रान्ता न च पश्याम मैथिलीम् । अस्माच्चापि बिलाद्धंसाः क्रौञ्चाश्च सह सारसैः ॥१५
जलार्द्राश्चक्रवाकाश्च निष्पतन्ति स्म सर्वतः । नूनं सलिलवानत्र कूपो वा यदि वा ह्रदः ॥ १६
तथा चेमे बिलद्वारे स्निग्धास्तिष्ठन्ति पादपाः । इत्युक्तास्तद्बिलं सर्वे विविशुस्तिमिरावृतम् ॥ १७
अचन्द्रसूर्यं हरयो ददृशू रोमहर्षणम् । निशाम्य तस्मात् सिंहांश्च तांस्तांश्च मृगपक्षिणः ॥ १८
प्रविष्टा हरिशार्दूला बिलं तिमिरसंवृतम् । न तेषां सज्जते चक्षुर्न तेजो न पराक्रमः ॥ १९
वायोरिव गतिस्तेषां दृष्टिस्तमसि वर्तते । ते प्रविष्टास्तु वेगेन तद्बिलं कपिकुञ्जराः ॥ २०
प्रकाशमभिरामं च ददृशुर्देशमुत्तमम् । ततस्तस्मिन् बिले दुर्गे नानापादपसंकुले ॥ २१
अन्योन्यं संपरिष्वज्य जग्मुर्योजनमन्तरम् । ते नष्टसंज्ञास्तृषिताः संभ्रान्ताः सलिलार्थिनः ॥ २२
परिपेतुर्बिले तस्मिन् कंचित्कालमतन्द्रिताः । ते कृशा दीनवदनाः परिश्रान्ताः प्लवङ्गमाः ॥ २३
आलोकं ददृशुर्वीरा निराशा जीविते तदा । ततस्तं देशमागम्य सौम्यं वितिमिरं वनम् ॥ २४
ददृशुः काञ्चनान् वृक्षान् दीप्तवैश्वानरप्रभान् । सालांस्तालांश्च पुंनागान् ककुभान् वञ्जुलान् धवान् ॥
चम्पकान्नागवृक्षांश्च कर्णिकारांश्च पुष्पितान् । स्तबकैः काञ्चनैश्चित्रै रक्तैः किसलयैस्तथा ॥ २६
आपीडैश्च लताभिश्च हेमाभरणभूषितान् । तरुणादित्यसंकाशान् [1] वैदूर्यमयवेदिकान् ॥ २७
विभ्राजमानान् वपुषा पादपांश्च हिरण्मयान् । नीलवैदूर्यवर्णाश्च पद्मिनीः पतगावृताः ॥ २८
महद्भिः काञ्चनैः पद्मैर्वृता बालार्कसंनिभैः । जातरूपमयैर्मत्स्यैर्महद्भिश्च सकच्छपैः ॥ २९
नलिनीस्तत्र ददृशुः प्रसन्नसलिलावृताः । काञ्चनानि विमानानि राजतानि तथैव च ॥ ३०
तपनीयगवाक्षाणि मुक्ताजालावृतानि च । हैमराजतभौमानि वैदूर्यमणिमन्ति च ॥ ३१
ददृशुस्तत्र हरयो गृहमुख्यानि सर्वशः । पुष्पितान् फलिनो वृक्षान् प्रवालमणिसंनिभान् ॥ ३२
काञ्चनभ्रमरांश्चैव मधूनि च समन्ततः । मणिकाञ्चनचित्राणि शयनान्यासनानि च ॥ ३३
महार्हाणि च यानानि ददृशुस्ते समन्ततः । हैमराजतकांस्यानां भाजनानां च संचयान् ॥ ३४
अगरूणां च दिव्यानां चन्दनानां च संचयान् । शुचीन्यभ्यवहार्याणि मूलानि च फलानि च ॥३५
महार्हाणि च पानानि मधूनि रसवन्ति च । दिव्यानामम्बराणां च महार्हाणां च संचयान् [2] ॥ ३६
कम्बलानां च चित्राणामजिनानां च संचयान् । तत्र तत्र च विन्यस्तान् दीप्तान् वैश्वानरप्रभान् ॥३७
ददृशुर्वानराः शुभ्राञ्जातरूपस्य संचयान् [3] । तत्र तत्र विचिन्वन्तो बिले तस्मिन् महाबलाः ॥ ३८

---

१. वैदूर्यकृत- झ. ञ.
२. २४,२५,२६-तमानि पद्यानि क. न सन्ति । दिव्यानामित्यादि सञ्चयानित्यन्तं ग. नास्ति ।
३. तत्र तत्रेत्यादि सञ्चयानित्यन्तं क. नास्ति ।

ददृशुर्वानराः शूराः स्त्रियं कांचिददूरतः । [1]तां दृष्ट्वा भृशसंत्रस्ताश्चीरकृष्णाजिनाम्बराम् ।। ३९
तापसीं नियताहारां ज्वलन्तीमिव तेजसा । विस्मिता हरयस्तत्र व्यवातिष्ठन्त सर्वशः ।। ४०
पप्रच्छ हनुमांस्तत्र कासि त्वं कस्य वा बिलम् ।।

ततो हनूमान् गिरिसंनिकाशः कृताञ्जलिस्तामभिवाद्य वृद्धाम् ।
पप्रच्छ का त्वं भवनं बिलं च रत्नानि हेमानि वदस्व कस्य ।। ४१

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
किष्किन्धाकाण्डे ऋक्षबिलप्रवेशो नाम एकपञ्चाशः सर्गः

---

## एकपञ्चाशः सर्गः

### स्वयंप्रभातिथ्यम्

इत्युक्त्वा हनुमांस्तत्र पुनः कृष्णाजिनाम्बराम् । अब्रवीत्तां महाभागां तापसीं धर्मचारिणीम् ।। १
इदं प्रविष्टाः सहसा बिलं तिमिरसंवृतम् । क्षुत्पिपासापरिश्रान्ताः परिखिन्नाश्च सर्वशः ।। २
महद्धरण्या विवरं प्रविष्टाः स्म पिपासिताः । इमांस्त्वेवंविधान् भावान् विविधानद्भुतोपमान् ।। ३
दृष्ट्वा वयं प्रव्यथिताः संभ्रान्ता नष्टचेतसः । कस्यैव काञ्चना वृक्षास्तरुणादित्यसंनिभाः ।। ४
शुचीन्यभ्यवहार्याणि मूलानि च फलानि च । काञ्चनानि विमानानि राजतानि गृहाणि च ।। ५
तपनीयगवाक्षाणि मणिजालावृतानि च । पुष्पिताः फलवन्तश्च पुण्याः सुरभिगन्धिनः ।। ६
इमे जाम्बूनदमयाः पादपाः कस्य तेजसा । काञ्चनानि च पद्मानि जातानि विमले जले ।। ७
कथं मत्स्याश्च सौवर्णाश्चरन्ति सह कच्छपैः । आत्मानमनुभावं च[2] कस्य चैतत्तपोबलम् ।। ८
अजानतां नः सर्वेषां सर्वमाख्यातुमर्हसि । एवमुक्ता हनुमता तापसी धर्मचारिणी ।। ९
प्रत्युवाच हनूमन्तं सर्वभूतहिते रता । मयो नाम महातेजा मायावी दानवर्षभः ।। १०
तेनेदं निर्मितं सर्वं मायया काञ्चनं वनम् । पुरा दानवमुख्यानां विश्वकर्मा बभूव ह ।। ११
येनेदं काञ्चनं दिव्यं निर्मितं भवनोत्तमम् । स तु वर्षसहस्राणि तपस्तप्त्वा महावने ।। १२
पितामहाद्वरं लेभे सर्वमौशनसं धनम् । वनं विधाय बलवान् सर्वकामेश्वरस्तदा ।। १३
उवास सुखितः कालं कंचिदस्मिन् महामते । तमप्सरसि हेमायां सक्तं दानवपुङ्गवम् ।। १४
विक्रम्यैवाशनिं गृह्य जघानेशः पुरंदरः । इदं च ब्रह्मणा दत्तं हेमायै वनमुत्तमम् ।। १५
शाश्वताः कामभोगाश्च गृहं चेदं हिरण्मयम् । दुहिता मेरुसावर्णेरहं तस्याः स्वयंप्रभा ।। १६
इदं रक्षामि भवनं हेमाया वानरोत्तम । मम प्रियसखी हेमा नृत्तगीतविशारदा ।। १७

---

१. तां च ते ददृशुः पुना. २. आत्मनः स्वानुभावाद्वा ग.

तया दत्तवरा चास्मि रक्षामि भवनोत्तमम् । किं कार्यं कस्य वा हेतोः कान्ताराणि प्रपश्यथ ॥ १८
कथं चेदं वनं दुर्गं युष्माभिरुपलक्षितम् । इमान्यभ्यवहार्याणि मूलानि च फलानि च ॥ १९
भुक्त्वा पीत्वा च पानीयं सर्वं मे वक्तुमर्हथ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
किष्किन्धाकाण्डे स्वयंप्रभातिथ्यं नाम एकपञ्चाशः सर्गः

---

## द्विपञ्चाशः सर्गः

### बिलप्रवेशकारणकथनम्

अथ तानब्रवीत् सर्वान् विश्रान्तान् हरियूथपान् । इदं वचनमेकाग्रा तापसी धर्मचारिणी ॥ १
वानरा यदि वः खेदः प्रनष्टः फलभक्षणात् । यदि चैतन्मया श्राव्यं श्रोतुमिच्छामि कथ्यताम् ॥ २
तस्यास्तद्वचनं श्रुत्वा हनुमान् मारुतात्मजः । आर्जवेन यथातत्त्वमाख्यातुमुपचक्रमे ॥ ३
राजा सर्वस्य लोकस्य महेन्द्रवरुणोपमः । रामो दाशरथिः श्रीमान् प्रविष्टो दण्डकावनम् ॥ ४
लक्ष्मणेन सह भ्रात्रा वैदेह्या चापि भार्यया । तस्य भार्या जनस्थानाद्रावणेन हृता बलात् ॥ ५
वीरस्तस्य सखा राज्ञः सुग्रीवो नाम वानरः । राजा वानरमुख्यानां येन प्रस्थापिता वयम् ॥ ६
अगस्त्याचरितामाशां दक्षिणां यमरक्षिताम् । सहैभिर्वानरैर्मुख्यैरङ्गदप्रमुखैर्वयम् ॥ ७
रावणं सहिताः सर्वे राक्षसं कामरूपिणम् । सीतया सह वैदेह्या मार्गध्वमिति चोदिताः ॥ ८
विचित्य तु वयं सर्वे समग्रां दक्षिणां दिशम् । बुभुक्षिताः परिश्रान्ता वृक्षमूलमुपाश्रिताः ॥ ९
विवर्णवदनाः सर्वे सर्वे ध्यानपरायणाः । नाधिगच्छामहे पारं मग्नाश्चिन्तामहार्णवे ॥ १०
चारयन्तस्ततश्चक्षुर्दृष्टवन्तो वयं बिलम् । लतापादपसंछन्नं तिमिरेण समावृतम् ॥ ११
अस्माद्धंसा जलक्लिन्नाः पक्षैः सलिलविस्रवैः । कुरराः सारसाश्चैव निष्पतन्ति पतत्रिणः ॥ १२
साध्वत्र प्रविशामेति मया तूक्ताः प्लवङ्गमाः । तेषामपि हि सर्वेषामनुमानमुपागतम् ॥ १३
गच्छाम प्रविशामेति भर्तृकार्यत्वरान्विताः । ततो गाढं निपतिता गृह्य हस्तौ परस्परम् ॥ १४
इदं प्रविष्टाः सहसा बिलं तिमिरसंवृतम् । एतन्नः कार्यमेतेन कृत्येन वयमागताः ॥ १५
त्वां चैवोपगताः सर्वे परिद्यूना बुभुक्षिताः । आतिथ्यधर्मदत्तानि मूलानि च फलानि च ॥ १६
अस्माभिरुपभुक्तानि बुभुक्षापरिपीडितैः । यत्त्वया रक्षिताः सर्वे म्रियमाणा बुभुक्षया ॥ १७
ब्रूहि प्रत्युपकारार्थं किं ते कुर्वन्तु वानराः । एवमुक्ता तु सर्वज्ञा वानरैस्तैः स्वयंप्रभा ॥ १८
प्रत्युवाच ततः सर्वानिदं वानरयूथपान् । सर्वेषां परितुष्टास्मि वानराणां महात्मनाम् ॥ १९
चरन्त्या मम धर्मेण न कार्यमिह केनचित् ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
किष्किन्धाकाण्डे बिलप्रवेशकारणकथनं नाम द्विपञ्चाशः सर्गः

## त्रिपञ्चाशः सर्गः

### अङ्गदादिनिर्वेदः

एवमुक्तः शुभं वाक्यं तापस्या धर्मसंहितम् । उवाच हनुमान् वाक्यं तामनिन्दितचेष्टिताम् ॥ १
शरणं त्वां प्रपन्नाः स्मः सर्वे वै धर्मचारिणि । यः कृतः समयोऽस्माकं सुग्रीवेण महात्मना ॥ २
स च कालो ह्यतिक्रान्तो बिले नः परिवर्तताम् । सा त्वमस्माद्बिलाद्घोरादुत्तारयितुमर्हसि ॥ ३
तस्मात् सुग्रीववचनादतिक्रान्तान् गतायुषः । त्रातुमर्हसि नः सर्वान् सुग्रीवभयशङ्कितान् ॥ ४
महच्च कार्यमस्माभिः कर्तव्यं धर्मचारिणि । तच्चापि न कृतं कार्यमस्माभिरिहवासिभिः ॥ ५
एवमुक्ता हनुमता तापसी वाक्यमब्रवीत् । जीवता दुष्करं मन्ये प्रविष्टेन निवर्तितुम् ॥ ६
तपसस्तु प्रभावेण नियमोपार्जितेन च । सर्वानेव बिलादस्मादुद्धरिष्यामि वानरान् ॥ ७
निमीलयत चक्षूंषि सर्वे वानरपुङ्गवाः । न हि निष्क्रमितुं शक्यमनिमीलितलोचनैः ॥ ८
ततः संमीलिताः सर्वे सुकुमाराङ्गुलैः करैः । सहसा पिदधुर्दृष्टिं हृष्टा गमनकाङ्क्षिणः ॥ ९
वानरास्तु महात्मानो हस्तरुद्धमुखास्तदा । निमेषान्तरमात्रेण बिलादुत्तारितास्तया ॥ १०
ततस्तान् वानरान् सर्वांस्तापसी धर्मचारिणी । निःसृतान् विषमात्तस्मात् समाश्वास्येदमब्रवीत् ॥ ११
एष विन्ध्यो गिरिः श्रीमान्नानाद्रुमलताकुलः । एष प्रस्रवणः शैलः सागरोऽयं महोदधिः ॥ १२
स्वस्ति वोऽस्तु गमिष्यामि भवनं वानरर्षभाः । इत्युक्त्वा तद्बिलं श्रीमत् प्रविवेश स्वयंप्रभा ॥ १३
ततस्ते ददृशुर्घोरं सागरं वरुणालयम् । अपारमभिगर्जन्तं घोरैरूर्मिभिराकुलम् ॥ १४
मयस्य मायाविहितं गिरिदुर्गं विचिन्वताम् । तेषां मासो व्यतिक्रान्तो यो राज्ञा समयः कृतः ॥ १५
विन्ध्यस्य तु गिरेः पादे संप्रपुष्पितपादपे । उपविश्य महात्मानश्चिन्तामापेदिरे तदा ॥ १६
ततः पुष्पातिभाराग्रांल्लताशतसमावृतान् । द्रुमान् वासन्तिकान् दृष्ट्वा बभूवुर्भयशङ्किताः ॥ १७
ते वसन्तमनुप्राप्तं[1] प्रतिवेद्य परस्परम् । नष्टसंदेशकालार्था निपेतुर्धरणीतले ॥ १८
ततस्तान् कपिवृद्धांस्तु शिष्टांश्चैव वनौकसः । वाचा मधुरयाभाष्य यथावदनुमान्य च ॥ १९
स तु सिंहवृषस्कन्धः पीनायतभुजः कपिः । युवराजो महाप्राज्ञ अङ्गदो वाक्यमब्रवीत् ॥ २०
शासनात् कपिराजस्य वयं सर्वे विनिर्गताः । मासः पूर्णो बिलस्थानां हरयः किं न बुध्यते ॥ २१
वयमाश्वयुजे मासि कालसंख्याव्यवस्थिताः । प्रस्थिताः सोऽपि चातीतः किमतः कार्यमुत्तरम् ॥ २२
भवन्तः प्रत्ययं प्राप्ता नीतिमार्गविशारदाः । हितेष्वभिरता भर्तुर्निसृष्टाः सर्वकर्मसु ॥ २३
कर्मस्वप्रतिमाः सर्वे दिक्षु विश्रुतपौरुषाः । मां पुरस्कृत्य निर्याताः पिङ्गाक्षेशप्रचोदिताः[1] ॥ २४
इदानीमकृतार्थानां मर्तव्यं नात्र संशयः । हरिराजस्य संदेशमकृत्वा कः सुखी भवेत् ॥ २५

---

1. अनुप्राप्तम् आसन्नमात्रमित्यर्थः । तदानीं वसन्तस्याप्राप्तेः ।

१. हितेष्वित्यादि चोदिता इत्यन्तम् क. नास्ति ।

तस्मिन्नतीते[1] काले तु सुग्रीवेण कृते स्वयम् । प्रायोपवेशनं युक्तं सर्वेषां च वनौकसाम् ॥ २६
तीक्ष्णः प्रकृत्या सुग्रीवः स्वामिभावे व्यवस्थितः । न क्षमिष्यति नः सर्वानपराधकृतो गतान् ॥ २७
अप्रवृत्तौ च सीतायाः पापमेव करिष्यति । तस्मात् क्षममिहाद्यैव गन्तुं प्रायोपवेशनम् ॥ २८
त्यक्त्वा पुत्रांश्च दारांश्च धनानि च गृहाणि च । ध्रुवं नो हिंसिता राजा सर्वान् प्रतिगतानितः ॥२९
वधेनाप्रतिरूपेण श्रेयान् मृत्युरिहैव नः । न चाहं यौवराज्येन सुग्रीवेणाभिषेचितः ॥ ३०
नरेन्द्रेणाभिषिक्तोऽस्मि रामेणाक्लिष्टकर्मणा । स पूर्वं बद्धवैरो मां राजा दृष्ट्वा व्यतिक्रमम् ॥ ३१
घातयिष्यति दण्डेन तीक्ष्णेन कृतनिश्चयः । किं मे सुहृद्भिर्व्यसनं पश्यद्भिर्जीवितान्तरे ॥ ३२
इहैव प्रायमासिष्ये पुण्ये सागररोधसि । एतच्छ्रुत्वा कुमारेण युवराजेन भाषितम् ॥ ३३
सर्वे ते वानरश्रेष्ठाः करुणं वाक्यमब्रुवन् । तीक्ष्णः प्रकृत्या सुग्रीवः प्रियासक्तश्च राघवः ॥ ३४
समीक्ष्याकृतकार्यांस्तु तस्मिंश्च समये गते[2] । अदृष्टायां तु वैदेह्यां दृष्ट्वा चैव समागतान् ॥ ३५
राघवप्रियकामार्थं घातयिष्यत्यसंशयम् । न क्षमं चापराद्धानां गमनं स्वामिपार्श्वतः[3] ॥ ३६
प्रधानभूताश्च वयं सुग्रीवस्य समागताः[4] । इहैव सीतामन्विष्य प्रवृत्तिमुपलभ्य वा ॥ ३७
नो चेद्गच्छाम तं वीरं गमिष्यामो यमक्षयम् ॥

प्लवङ्गमानां तु भयार्दितानां श्रुत्वा वचस्तार इदं बभाषे ।
अलं विषादेन बिलं प्रविश्य वसाम सर्वे यदि रोचते वः ॥ ३८
इदं हि मायाविहितं सुदुर्गमं प्रभूतवृक्षोदकभोज्यपेयकम् ।
इहास्ति नो नैव भयं पुरंदरान्न राघवाद्वानरराजतोऽपि वा ॥ ३९
श्रुत्वाङ्गदस्यापि वचोऽनुकूलमूचुश्च सर्वे हरयः प्रतीताः ।
यथा न हिंस्येम तथा विधानमसक्तमद्यैव विधीयतां नः ॥ ४०

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
किष्किन्धाकाण्डे अङ्गदादिनिर्वेदो नाम त्रिपञ्चाशः सर्गः

---

## चतुःपञ्चाशः सर्गः

### हनूमद्भेदनम्

तथा ब्रुवति तारे तु ताराधिपतिवर्चसि । अथ मेने हृतं राज्यं हनुमानङ्गदेन तत् ॥ १
बुद्ध्या ह्यष्टाङ्गया युक्तं चतुर्बलसमन्वितम् । चतुर्दशगुणं मेने हनुमान् वालिनः सुतम् ॥ २

---

१. कार्ये ङ. नास्ति ।
२. इदमर्धद्वयं च. छ. नास्ति ।
३. अदृष्टायामित्यादि पार्श्वे इत्यन्तम् ग.
४. इदमर्धद्वयं च. छ. नास्ति ।

आपूर्यमाणं शश्वच्च तेजोबलपराक्रमैः । शशिनं शुक्लपक्षादौ वर्धमानमिव श्रिया ॥ ३
बृहस्पतिसमं बुद्ध्या विक्रमे सदृशं पितुः । शुश्रूषमाणं तारस्य [1]शुक्रस्येव पुरंदरम् ॥ ४
भर्तुरर्थे परिश्रान्तं सर्वशास्त्रविशारदः । अभिसन्धातुमारेभे हनुमानङ्गदं ततः ॥ ५
स चतुर्णामुपायानां तृतीयमुपवर्णयन् । भेदयामास तान् सर्वान् वानरान् वाक्यसंपदा ॥ ६
तेषु सर्वेषु भिन्नेषु ततोऽभीषयदङ्गदम् । भीषणैर्बहुभिर्वाक्यैः कोपोपायसमन्वितैः ॥ ७
त्वं समर्थतरः पित्रा युद्धे तारेय वै धुरम् । दृढं धारयितुं शक्तः कपिराज्यं यथा पिता ॥ ८
नित्यमस्थिरचित्ता हि कपयो हरिपुङ्गव । नाज्ञाप्यं विषहिष्यन्ति पुत्रदारान् विना त्वया ॥ ९
त्वां नैते ह्यनुयुञ्जेयुः प्रत्यक्षं प्रवदामि ते । यथायं जाम्बवान्नीलः सुहोत्रश्च महाकपिः ॥ १०
न ह्यहं त इमे सर्वे सामदानादिभिर्गुणैः । दण्डेन वा त्वया शक्याः सुग्रीवादपकर्षितुम् ॥ ११
विगृह्यासनमप्याहुर्दुर्बलेन बलीयसः । आत्मरक्षाकरस्तस्मान्न विगृह्णीत दुर्बलः ॥ १२
यां चेमां मन्यसे धात्रीमेतद् बिलमिति श्रुतम् । एतल्लक्ष्मणबाणानामीषत्कार्यं विदारणे ॥ १३
स्वल्पं हि कृतमिन्द्रेण क्षिपता ह्यशनिं पुरा । लक्ष्मणो निशितैर्बाणैर्भिन्द्यात् पत्रपुटं यथा ॥ १४
लक्ष्मणस्य तु नाराचा बहवः सन्ति तद्विधाः । वज्राशनिसमस्पर्शा गिरीणामपि दारणाः ॥ १५
अवस्थाने यदैव त्वमासिष्यसि परंतप । तदैव हरयः सर्वे त्यक्ष्यन्ति कृतनिश्चयाः ॥ १६
स्मरन्तः पुत्रदाराणां नित्योद्विग्ना बुभुक्षिताः । खेदिता दुःखशय्याभिस्त्वां करिष्यन्ति पृष्ठतः ॥ १७
स त्वं हीनः सुहृद्भिश्च हितकामैश्च बन्धुभिः । तृणादपि भृशोद्विग्नः स्पन्दमानाद्भविष्यसि ॥१८
न च जातु न हिंस्युस्त्वां[1] घोरा लक्ष्मणसायकाः । अपवृत्तं जिघांसन्तो महावेगा दुरासदाः ॥ १९
अस्माभिस्तु गतं सार्धं विनीतवदुपस्थितम् । आनुपूर्व्यात्तु सुग्रीवो राज्ये त्वां स्थापयिष्यति ॥ २०
धर्मकामः पितृव्यस्ते प्रीतिकामो दृढव्रतः । शुचिः सत्यप्रतिज्ञश्च न त्वां जातु जिघांसति ॥ २१
प्रियकामश्च ते मातुस्तदर्थं चास्य जीवितम् । तस्यापत्यं च नास्त्यन्यत्तस्मादङ्गद गम्यताम् ॥ २२

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
किष्किन्धाकाण्डे हनूमद्भेदनं नाम चतुःपञ्चाशः सर्गः

---

## पञ्चपञ्चाशः सर्गः

### प्रायोपवेशः

श्रुत्वा हनुमतो वाक्यं प्रश्रितं धर्मसंहितम् । स्वामिसत्कारसंयुक्तमङ्गदो वाक्यमब्रवीत् ॥ १
स्थैर्यं सत्त्वं मनःशौचमानृशंस्यमथार्जवम् । विक्रमश्चैव धैर्यं च सुग्रीवे नोपपद्यते ॥ २
भ्रातुर्ज्येष्ठस्य यो भार्यां जीवतो महिषीं प्रियाम् । धर्मेण मातरं यस्तु स्वीकरोति जुगुप्सितः ॥ ३

---

1. 'विपरीतोपदेशग्रहे उपमैषा । शुक्र शब्दोऽत्र बृहस्पतिपर इति कश्चित्' इति तिलकः ।

१. अत्युग्रवेगा निशिताः छ.

कथं स धर्मं जानीते येन भ्रात्रा महात्मना । युद्धायाभिनियुक्तेन बिलस्य पिहितं मुखम् ॥ ४
सत्यात् पाणिगृहीतश्च कृतकर्मा महायशाः । विस्मृतो राघवो येन स कस्य तु कृतं स्मरेत् ॥ ५
लक्ष्मणस्य भयाद्येन नाधर्मभयभीरुणा । आदिष्टा मार्गितुं सीतां धर्मस्तस्मिन् कथं भवेत् ॥ ६
तस्मिन् पापे कृतघ्ने तु स्मृतिहीने चलात्मनि । आर्यः को विश्वसेज्जातु तत्कुलीनो जिजीविषुः ॥ ७
राज्ये पुत्रः प्रतिष्ठाप्यः सगुणो निर्गुणोऽपि वा । कथं शत्रुकुलीनं मां सुग्रीवो जीवयिष्यति ॥ ८
भिन्नमन्त्रोऽपराद्धश्च हीनशक्तिः कथं ह्यहम् । किष्किन्धां प्राप्य जीवेयमनाथ इव दुर्बलः ॥ ९
उपांशुदण्डेन हि मां बन्धनेनोपपादयेत् । शठः क्रूरो नृशंसश्च सुग्रीवो राज्यकारणात् ॥ १०
बन्धनाद्वावसादान्मे श्रेयः प्रायोपवेशनम् । अनुजानीत मां सर्वे गृहं गच्छन्तु वानराः ॥ ११
अहं वः प्रतिजानामि नागमिष्याम्यहं पुरीम् । इहैव प्रायमासिष्ये श्रेयो मरणमेव मे ॥ १२
अभिवादनपूर्वं तु राघवौ बलशालिनौ । अभिवादनपूर्वं तु राजा कुशलमेव च ॥ १३
वाच्यस्तातो यवीयान् मे सुग्रीवो वानरेश्वरः । आरोग्यपूर्वं कुशलं वाच्या माता रुमा च मे ॥ १४
मातरं चैव मे तारामाश्वासयितुमर्हथ । प्रकृत्या प्रियपुत्रा सा सानुक्रोशा तपस्विनी ॥ १५
विनष्टमिह मां श्रुत्वा व्यक्तं हास्यति जीवितम् । एतावदुक्त्वा वचनं वृद्धांस्तानभिवाद्य च ॥ १६
विवेश चाङ्गदो भूमौ रुदन् दर्भेषु दुर्मनाः । तस्य संविशतस्तत्र रुदन्तो वानरर्षभाः ॥ १७
नयनेभ्यः प्रमुमुचुरुष्णं वै वारि दुःखिताः । सुग्रीवं चैव निन्दन्तः प्रशंसन्तश्च वालिनम् ॥ १८
परिवार्याङ्गदं सर्वे व्यवास्यन् प्रायमासितुम् । मतं तद्वालिपुत्रस्य विज्ञाय प्लवगर्षभाः ॥ १९
उपस्पृश्योदकं तत्र प्राङ्मुखाः समुपाविशन् । दक्षिणाग्रेषु दर्भेषु उदक्तीरं समाश्रिताः ॥ २०
मुमूर्षवो हरिश्रेष्ठा एतत् क्षममिति स्म ह । रामस्य वनवासं च क्षयं दशरथस्य च ॥ २१
जनस्थानवधं चैव वधं चैव जटायुषः । हरणं चैव वैदेह्या वालिनश्च वधं रणे ॥ २२
रामकोपं च वदतां हरीणां भयमागतम् ॥

एवं वदद्भिर्बहुभिर्महीधरो महाद्रिकूटप्रतिमैः प्लवङ्गमैः ।
बभूव संनादितनिर्दरान्तरो भृशं नदद्भिर्जलदैरिवाम्बरम्[1] ॥ २३

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
किष्किन्धाकाण्डे प्रायोपवेशो नाम पञ्चपञ्चाशः सर्गः

---

## षट्पञ्चाशः सर्गः

### संपातिप्रश्नः

उपविष्टास्तु ते सर्वे यस्मिन् प्रायं गिरिस्थले । हरयो गृध्रराजश्च तं देशमुपचक्रमे ॥ १

---

१. उल्बणैः च. छ

संपातिर्नाम नाम्ना तु चिरजीवी विहङ्गमः । भ्राता जटायुषः श्रीमान् प्रख्यातबलपौरुषः ॥ २
कन्दरादभिनिष्क्रम्य स विन्ध्यस्य महागिरेः । उपविष्टान् हरीन् दृष्ट्वा हृष्टात्मा गिरमब्रवीत् ॥ ३
विधिः किल नरं लोके विधानेनानुवर्तते । यथायं विहितो भक्ष्यश्चिरान्मह्यमुपागतः ॥ ४
परंपराणां भक्षिष्ये वानराणां मृतं मृतम् । उवाचेदं वचः पक्षी तान्निरीक्ष्य प्लवङ्गमान् ॥ ५
तस्य तद्वचनं श्रुत्वा भक्ष्यलुब्धस्य पक्षिणः । अङ्गदः परमायस्तो हनुमन्तमथाब्रवीत् ॥ ६
पश्य सीतापदेशेन साक्षाद्वैवस्वतो यमः । इमं देशमनुप्राप्तो वानराणां विपत्तये ॥ ७
रामस्य न कृतं कार्यं राज्ञो न च वचः कृतम् । हरीणामियमज्ञाता विपत्तिः सहसागता ॥ ८
वैदेह्याः प्रियकामेन कृतं कर्म जटायुषा । गृध्रराजेन यत्तत्र श्रुतं वस्तदशेषतः ॥ ९
तथा सर्वाणि भूतानि तिर्यग्योनिगतान्यपि । प्रियं कुर्वन्ति रामस्य त्यक्त्वा प्राणान् यथा वयम् ॥१०
अन्योन्यमुपकुर्वन्ति स्नेहकारुण्ययन्त्रिताः । तेन तस्योपकारार्थं त्यजतात्मानमात्मना ॥ ११
प्रियं कृतं हि रामस्य धर्मज्ञेन जटायुषा । राघवार्थे परिश्रान्ता वयं संत्यक्तजीविताः ॥ १२
कान्ताराणि प्रपन्नाः स्म न च पश्याम मैथिलीम् । स सुखी गृध्रराजस्तु रावणेन हतो रणे ॥ १३
मुक्तश्च सुग्रीवभयाद्गतश्च परमां गतिम् । जटायुषो विनाशेन राज्ञो दशरथस्य च ॥ १४
हरणेन च वैदेह्याः संशयं हरयो गताः । रामलक्ष्मणयोर्वास अरण्ये सह सीतया ॥ १५
राघवस्य च बाणेन वालिनश्च तथा वधः । रामकोपादशेषाणां राक्षसानां तथा वधः ॥ १६
कैकेय्या वरदानेन इदं हि विकृतं कृतम् ॥

तदसुखमनुकीर्तितं वचो भुवि पतितांश्च समीक्ष्य वानरान् ।
भृशचलितमतिर्महामतिः कृपणमुदाहृतवान् स गृध्रराट् ॥ १७

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायां
किष्किन्धाकाण्डे संपातिप्रश्नो नाम षट्पञ्चाशः सर्गः

---

## सप्तपञ्चाशः सर्गः

### जटायुर्दिष्टकथनम्

तत्तु श्रुत्वा तदा वाक्यमङ्गदस्य मुखोद्गतम् । अब्रवीद्वचनं गृध्रस्तीक्ष्णतुण्डो महास्वनः ॥ १
कोऽयं गिरा घोषयति प्राणैः प्रियतरस्य मे । जटायुषो वधं भ्रातुः कम्पयन्निव मे मनः ॥ २
कथमासीज्जनस्थाने युद्धं राक्षसगृध्रयोः । नामधेयमिदं भ्रातुश्चिरस्याद्य मया श्रुतम् ॥ ३
इच्छेयं गिरिदुर्गाच्च भवद्भिरवतारितुम् । यवीयसो गुणज्ञस्य श्लाघनीयस्य विक्रमैः ॥ ४
अतिदीर्घस्य कालस्य तुष्टोऽस्मि परिकीर्तनात् । तदिच्छेयमहं श्रोतुं विनाशं वानरर्षभाः ॥ ५
भ्रातुर्जटायुषस्तस्य जनस्थाननिवासिनः । तस्यैव च मम भ्रातुः सखा दशरथः कथम् ॥ ६

यस्य रामः प्रियः पुत्रो ज्येष्ठो गुरुजनप्रियः । सूर्यांशुदग्धपक्षत्वान्न शक्नोम्युपसर्पितुम् ॥ ७
इच्छेयं पर्वतादस्मादवतर्तुमरिंदमाः[1] । शोकाद्भ्रष्टस्वरमपि श्रुत्वा ते हरियूथपाः ॥ ८
श्रद्दधुर्नैव तद्वाक्यं कर्मणा तस्य शङ्किताः । ते प्रायमुपविष्टास्तु दृष्ट्वा गृध्रं प्लवङ्गमाः ॥ ९
चक्रुर्बुद्धिं तदा रौद्रां सर्वान्नो भक्षयिष्यति । सर्वथा प्रायमासीनान् यदि नो भक्षयिष्यति ॥ १०
कृतकृत्या भविष्यामः क्षिप्रं सिद्धिमितो गताः । एतां बुद्धिं ततश्चक्रुः सर्वे ते वानरर्षभाः ॥ ११
अवतार्य गिरेः शृङ्गाद्गृध्रमाहाङ्गदस्तदा । बभूवर्क्षरजा नाम वानरेन्द्रः प्रतापवान् ॥ १२
ममार्यः पार्थिवः पक्षिन् धार्मिकस्तस्य चात्मजौ । सुग्रीवश्चैव वाली च पुत्रावोघबलावुभौ ॥ १३
लोके विश्रुतकर्माभूद्राजा वाली पिता मम । राजा कृत्स्नस्य जगत इक्ष्वाकूणां महारथः ॥ १४
रामो दाशरथिः श्रीमान् प्रविष्टो दण्डकावनम् । लक्ष्मणेन सह भ्रात्रा वैदेह्या चापि भार्यया ॥ १५
पितुर्निदेशनिरतो धर्म्यं पन्थानमाश्रितः । तस्य भार्या जनस्थानाद्रावणेन हृता बलात् ॥ १६
रामस्य तु पितुर्मित्रं जटायुर्नाम गृध्रराट् । ददर्श सीतां वैदेहीं ह्रियमाणां विहायसा ॥ १७
रावणं विरथं कृत्वा स्थापयित्वा च मैथिलीम् । परिश्रान्तश्च वृद्धश्च रावणेन हतो रणे ॥ १८
एवं गृध्रो हतस्तेन रावणेन बलीयसा । संस्कृतश्चापि रामेण गतश्च गतिमुत्तमाम् ॥ १९
ततो मम पितृव्येण सुग्रीवेण महात्मना । चकार राघवः सख्यं सोऽवधीत् पितरं मम ॥ २०
मम पित्रा विरुद्धो हि सुग्रीवः सचिवैः सह । निहत्य वालिनं रामस्ततस्तमभिषेचयत् ॥ २१
स राज्ये स्थापितस्तेन सुग्रीवो वानराधिपः । राजा वानरमुख्यानां येन प्रस्थापिता वयम् ॥ २२
एवं रामप्रयुक्तास्तु मार्गमाणास्ततस्ततः । वैदेहीं नाधिगच्छामो रात्रौ सूर्यप्रभामिव ॥ २३
ते वयं दण्डकारण्यं विचित्य सुसमाहिताः । अज्ञानात्तु प्रविष्टाः स्म धरण्या विवृतं बिलम् ॥ २४
मयस्य मायाविहितं तद्बिलं च विचिन्वताम् । व्यतीतस्तत्र नो मासो यो राज्ञा समयः कृतः ॥ २५
ते वयं कपिराजस्य सर्वे वचनकारिणः । कृतां संस्थामतिक्रान्ता भयात् प्रायमुपास्महे ॥ २६
क्रुद्धे तस्मिंस्तु काकुत्स्थे सुग्रीवे च सलक्ष्मणे । गतानामपि सर्वेषां तत्र नो नास्ति जीवितम् ॥ २७

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायां
किष्किन्धाकाण्डे जटायुर्दिष्टकथनं नाम सप्तपञ्चाशः सर्गः

---

## अष्टपञ्चाशः सर्गः

### सीताप्रवृत्त्युपलम्भः

इत्युक्तः करुणं वाक्यं वानरैस्त्यक्तजीवितैः । सबाष्पो[2] वानरान् गृध्रः प्रत्युवाच महास्वनः ॥ १

---

१. षटपञ्चाशः सर्गः अत्रपरिसमाप्नोति प्र. २. सबाष्पान् क.

यवीयान् मम स भ्राता जटायुर्नाम वानराः । यमाख्यात हतं युद्धे रावणेन बलीयसा ॥ २
वृद्धभावादपक्षत्वाच्छृण्वंस्तदपि मर्षये । न हि मे शक्तिरस्त्यद्य भ्रातुर्वैरविमोक्षणे ॥ ३
पुरा वृत्रवधे वृत्ते स चाहं च जयैषिणौ[1] । आदित्यमुपयातौ स्वो ज्वलन्तं रश्मिमालिनम् ॥ ४
आवृत्त्याकाशमार्गेण जवेन स्म गतौ भृशम् । मध्यं प्राप्ते दिनकरे जटायुरवसीदति ॥ ५
तमहं भ्रातरं दृष्ट्वा सूर्यरश्मिभिरर्दितम् । पक्षाभ्यां छादयामास स्नेहात् परमविह्वलम् ॥ ६
निर्दग्धपक्षः पतितो विन्ध्येऽहं वानरर्षभाः । अहमस्मिन् वसन् भ्रातुः प्रवृत्तिं नोपलक्षये ॥ ७
जटायुषस्त्वेवमुक्तो भ्रात्रा संपातिना तदा । युवराजो महाप्राज्ञः प्रत्युवाचाङ्गदस्तदा ॥ ८
जटायुषो यदि भ्राता श्रुतं ते गदितं मया । आख्याहि यदि जानासि निलयं तस्य रक्षसः ॥ ९
अदीर्घदर्शिनं तं वै रावणं राक्षसाधमम् । अन्तिके यदि वा दूरे यदि जानासि शंस नः ॥ १०
ततोऽब्रवीन्महातेजा ज्येष्ठो भ्राता जटायुषः । आत्मानुरूपं वचनं वानरान् संप्रहर्षयन् ॥ ११
निर्दग्धपक्षो गृध्रोऽहं हीनवीर्यः प्लवङ्गमाः । वाङ्मात्रेण तु रामस्य करिष्ये साह्यमुत्तमम् ॥ १२
जानामि वारुणाल्लँलोकान् विष्णोस्त्रैविक्रमानपि । महासुरविमर्दान् वाप्यमृतस्य[2] च मन्थनम् ॥ १३
रामस्य यदिदं कार्यं कर्तव्यं प्रथमं मया । जरया च हृतं तेजः प्राणाश्च शिथिला मम ॥ १४
तरुणी रूपसंपन्ना सर्वाभरणभूषिता । ह्रियमाणा मया दृष्टा रावणेन दुरात्मना ॥ १५
क्रोशन्ती राम रामेति लक्ष्मणेति च भामिनी । भूषणान्यपविध्यन्ती गात्राणि च विधून्वती ॥ १६
सूर्यप्रभेव शैलाग्रे तस्याः कौशेयमुत्तमम् । असिते राक्षसे भाति यथा वा तटिदम्बुदे ॥ १७
तां तु सीतामहं मन्ये रामस्य परिकीर्तनात् । श्रूयतां मे कथयतो निलयं तस्य रक्षसः ॥ १८
पुत्रो विश्रवसः साक्षाद्भ्राता वैश्रवणस्य च । अध्यास्ते नगरीं लङ्कां रावणो नाम राक्षसः ॥ १९
इतो द्वीपे समुद्रस्य संपूर्णे शतयोजने । तस्मिँल्लङ्का पुरी रम्या निर्मिता विश्वकर्मणा ॥ २०
जाम्बूनदमयैर्द्वारैश्चित्रैः काञ्चनवेदिकैः । प्राकारेणार्कवर्णेन महता सुसमावृता ॥ २१
तस्यां वसति वैदेही दीना कौशेयवासिनी । रावणान्तःपुरे रुद्धा राक्षसीभिः समावृता ॥ २२
जनकस्यात्मजां राज्ञस्तत्र द्रक्ष्यथ मैथिलीम् । लङ्कायामथ गुप्तायां सागरेण समन्ततः ॥ २३
संप्राप्य सागरस्यान्तं संपूर्णं शतयोजनम् । आसाद्य दक्षिणं तीरं ततो द्रक्ष्यथ रावणम् ॥ २४
तत्रैव त्वरिताः क्षिप्रं विक्रमध्वं प्लवङ्गमाः[3] । ज्ञानेन खलु पश्यामि दृष्ट्वा प्रत्यागमिष्यथ ॥ २५
आद्यः पन्थाः कुलिङ्गानां ये चान्ये धान्यजीविनः । द्वितीयो बलिभोजानां ये च वृक्षफलाशिनः ॥ २६
भासास्तृतीयं गच्छन्ति क्रौञ्चाश्च कुररैः सह । श्येनाश्चतुर्थं गच्छन्ति गृध्रा गच्छन्ति पञ्चमम् ॥ २७
बलवीर्योपपन्नानां रूपयौवनशालिनाम् । षष्ठस्तु पन्था हंसानां वैनतेयगतिः परा ॥ २८

---

१. परस्परजयैषिणौ च. छ.
२. देवासुरविमर्दांश्च ह्यमृतस्य पुना,
३. लङ्कामित्यादि प्लवङ्गमा इत्यन्तम् गो, अधिकमिति पुना,

वैनतेयाच्च नो जन्म सर्वेषां वानरर्षभाः । इहस्थोऽहं प्रपश्यामि रावणं जानकीं तथा ॥ २९
अस्माकमपि सौपर्णं[1] दिव्यं चक्षुर्बलं तथा । तस्मादाहारवीर्येण निसर्गेण च वानराः ॥ ३०
आयोजनशतात् साग्राद्वयं पश्याम नित्यशः । अस्माकं विहिता दृष्टिर्निसर्गेण च दूरतः ॥ ३१
विहिता पादमूले तु वृत्तिश्चरणयोधिनाम् । गर्हितं तु कृतं कर्म येन स्म पिशिताशिना ॥ ३२
प्रतीकार्यं च मे तस्य वैरं भ्रातुः कृतं भवेत्[1] । उपायो दृश्यतां कश्चिल्लङ्घने लवणाम्भसः[2] ॥ ३३
अभिगम्य तु वैदेहीं समृद्धार्था गमिष्यथ । समुद्रं नेतुमिच्छामि भवद्भिर्वरुणालयम् ॥ ३४
प्रदास्याम्युदकं भ्रातुः स्वर्गतस्य महात्मनः । ततो नीत्वा तु तं देशं तीरं नदनदीपतेः ॥ ३५
निर्दग्धपक्षं संपातिं वानराः सुमहौजसः । पुनस्तं प्रापयित्वा च तं देशं पतगेश्वरम् ॥ ३६
बभूवुर्वानरा[2] हृष्टाः प्रवृत्तिमुपलभ्य ते ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
किष्किन्धाकाण्डे सीताप्रवृत्त्युपलम्भो नाम अष्टपञ्चाशः सर्गः

---

## एकोनषष्टितमः सर्गः

### सुपार्श्ववचनानुवादः

ततस्तदमृतास्वादं गृध्रराजेन भाषितम्[3] । निशम्य वदतो[4] हृष्टास्ते वचः प्लवगर्षभाः ॥ १
जाम्बवान् वानरश्रेष्ठः सह सर्वैः प्लवङ्गमैः । भूतलात् सहसोत्थाय गृध्रराजमथाब्रवीत् ॥ २
क्व सीता केन वा दृष्टा को वा हरति मैथिलीम् । तदाख्यातु भवान् सर्वं गतिर्भव वनौकसाम् ॥ ३
को दाशरथिबाणानां वज्रवेगनिपातिनाम् । स्वयं लक्ष्मणमुक्तानां न चिन्तयति विक्रमम् ॥ ४
स हरीन् प्रीतिसंयुक्तान् सीताश्रुतिसमाहितान् । पुनराश्वासयन् प्रीत इदं वचनमब्रवीत् ॥ ५
श्रूयतामिह वैदेह्या यथा मे हरणं श्रुतम् । येन चापि ममाख्यातं यत्र वायतलोचना ॥ ६
अहमस्मिन् गिरौ दुर्गे बहुयोजनमायते । चिरान्निपतितो वृद्धः क्षीणप्राणपराक्रमः ॥ ७
तं मामेवंगतं पुत्रः सुपार्श्वो नाम नामतः । आहारेण यथाकालं बिभर्ति पततां वरः ॥ ८
तीक्ष्णकामास्तु गन्धर्वास्तीक्ष्णकोपा भुजङ्गमाः । मृगाणां तु भयं तीक्ष्णं ततस्तीक्ष्णक्षुधा वयम् ॥ ९
स कदाचित् क्षुधार्तस्य ममाहाराभिकाङ्क्षिणः । गतसूर्येऽहनि प्राप्तो मम पुत्रो ह्यनामिषः ॥ १०
स मया वृद्धभावाच्च कोपाच्च परिभर्त्सितः । क्षुत्पिपासापरीतेन कुमारः पततां वरः ॥ ११

---

1. बहवब्राह्मणोक्तचक्षुष्मती विद्यासिद्धं इति धामानि सन्ति वै । यावन्न गच्छेत् स तया तानि सार्धं तिलकः । सुपर्णस्य इति च युज्यते । सौवर्णं इति प्र. प्लवङ्गमाः ॥—इति घ.
2. अत्र वानरा इत्यधिकम्, आदरद्योतकं वा । ३. गृध्रराजाभिभाषितम् ति.
१. गर्हितमित्यादि भवेदित्यन्तं क. नास्ति । ४. वदतः तिः
२. अस्यानन्तरम्—द्वीपे द्वीपे समुद्रस्य तस्य

स मामाहारसंरोधात् पीडितं प्रीतिवर्धनः । अनुमान्य यथातत्त्वमिदं वचनमब्रवीत् ॥ १२
अहं तात यथाकालमामिषार्थी खमाप्लुतः । महेन्द्रस्य गिरेर्द्वारमावृत्य च समास्थितः ॥ १३
ततः सत्त्वसहस्राणां सागरान्तरचारिणाम् । पन्थानमेकोऽध्यवसं संनिरोद्धुमवाङ्मुखः ॥ १४
तत्र कश्चिन्मया दृष्टः सूर्योदयसमप्रभाम् । स्त्रियमादाय गच्छन् वै भिन्नाञ्जनचयोपमः ॥ १५
सोऽहमभ्यवहारार्थी तौ दृष्ट्वा कृतनिश्चयः । तेन साम्ना विनीतेन पन्थानमभियाचितः ॥ १६
न हि सामोपपन्नानां प्रहर्ता विद्यते क्वचित् । नीचेष्वपि जनः कश्चित् किमङ्ग बत मद्विधः ॥ १७
स यातस्तेजसा व्योम संक्षिपन्निव वेगितः । अथाहं खेचरैर्भूतैरभिगम्य सभाजितः ॥ १८
दिष्ट्या जीवति सीतेति[1] ह्यब्रुवन् मां महर्षयः । कथंचित् सकलत्रोऽसौ गतस्ते स्वस्त्यसंशयम् ॥ १९
एवमुक्तस्ततोऽहं तैः सिद्धैः परमशोभनैः । स च मे रावणो राजा रक्षसां प्रतिवेदितः ॥ २०
हरन् दाशरथेर्भार्यां रामस्य जनकात्मजाम् । भ्रष्टाभरणकौशेयां शोकवेगपराजिताम् ॥ २१
रामलक्ष्मणयोर्नाम क्रोशन्तीं मुक्तमूर्धजाम् । एष कालात्ययस्तावदिति कालविदां वरः ॥ २२
एतमर्थं समग्रं मे सुपार्श्वः प्रत्यवेदयत् । तच्छ्रुत्वापि हि मे बुद्धिर्नासीत् काचित् पराक्रमे ॥ २३
अपक्षोऽहं कथं पक्षी कर्म किंचिदुपक्रमे । यत्तु शक्यं मया कर्तुं वाग्बुद्धिगुणवर्तिना ॥ २४
श्रूयतां तत् प्रवक्ष्यामि भवतां पौरुषाश्रयम् । वाङ्मतिभ्यां तु सर्वेषां करिष्यामि प्रियं हि वः ॥ २५
यद्धि दाशरथेः कार्यं मम तन्नात्र संशयः । ते भवन्तो मतिश्रेष्ठा बलवन्तो मनस्विनः ॥ २६
प्रेषिताः कपिराजेन देवैरपि दुरासदाः । रामलक्ष्मणबाणाश्च निशिताः कङ्कपत्रिणः ॥ २७
त्रयाणामपि लोकानां पर्याप्तास्त्राणनिग्रहे । कामं खलु दशग्रीवस्तेजोबलसमन्वितः ॥ २८
भवतां तु समर्थानां न किंचिदपि दुष्करम् । तदलं कालसङ्गेन क्रियतां बुद्धिनिश्चयः ॥ २९
न हि कर्मसु सज्जन्ते बुद्धिमन्तो भवद्विधाः ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
किष्किन्धाकाण्डे सुपार्श्ववचनानुवादो नाम एकोनषष्टितमः सर्गः

---

## षष्टितमः सर्गः

### संपातिपुरावृत्तवर्णनम्

ततः कृतोदकं स्नातं तं गृध्रं हरियूथपाः । उपविष्टा गिरौ दुर्गे[2] परिवार्य समन्ततः ॥ १
तमङ्गदमुपासीनं तैः सर्वैर्हरिभिर्वृतम् । जनितप्रत्ययो हर्षात् संपातिः पुनरब्रवीत् ॥ २
कृत्वा निःशब्दमेकाग्राः शृण्वन्तु हरयो मम । तथ्यं[3] संकीर्तयिष्यामि यथा जानामि मैथिलीम् ॥ ३

---

१. जीवसि तातेति च. छ.　　२. रम्ये प्र.　　३. तत्त्वम् च. छ.

अस्य विन्ध्यस्य शिखरे पतितोऽस्मि पुरा ह्यहम् । सूर्यातपपरीताङ्गो निर्दग्धः सूर्यरश्मिभिः ॥ ४
लब्धसंज्ञस्तु षड्रात्राद्विवशो विह्वलन्निव । वीक्षमाणो दिशः सर्वा नाभिजानामि किंचन ॥ ५
ततस्तु सागराञ्शैलान्नदीः सर्वाः सरांसि च । वनानि च प्रदेशांश्च[1] समीक्ष्य मतिरागमत् ॥ ६
हृष्टपक्षिगणाकीर्णः कन्दरान्तरकूटवान् । दक्षिणस्योदधेस्तीरे विन्ध्योऽयमिति निश्चितः ॥ ७
आसीच्चात्राश्रमः पुण्यः सुरैरपि सुपूजितः । ऋषिर्निशाकरो नाम यस्मिन्नुग्रतपा भवत् ॥ ८
अष्टौ वर्षसहस्राणि तेनास्मिन्नृषिणा विना[2] । वसतो मम धर्मज्ञाः स्वर्गते तु निशाकरे ॥ ९
अवतीर्य च विन्ध्याग्रात् कृच्छ्रेण विषमाच्छनैः । तीक्ष्णदर्भां वसुमतीं दुःखेन पुनरागतः ॥ १०
तमृषिं द्रष्टुकामोऽस्मि दुःखेनाभ्यागतो भृशम् । जटायुषा मया चैव बहुशोऽधिगतो हि सः ॥ ११
तस्याश्रमपदाभ्याशे ववुर्वाताः सुगन्धिनः । वृक्षो नापुष्पितः कश्चिदफलो वा न विद्यते ॥ १२
उपेत्य चाश्रमं पुण्यं वृक्षमूलमुपाश्रितः । द्रष्टुकामः प्रतीक्षेऽहं भगवन्तं निशाकरम् ॥ १३
अथापश्यमदूरस्थमृषिं ज्वलिततेजसम् । कृताभिषेकं दुर्धर्षमुपावृत्तमुदङ्मुखम् ॥ १४
तमृक्षाः सृमरा व्याघ्राः सिंहा नागाः सरीसृपाः । परिवार्योपगच्छन्ति [3]धातारं प्राणिनो यथा ॥ १५
ततः प्राप्तमृषिं ज्ञात्वा तानि सत्त्वानि वै ययुः । प्रविष्टे राजनि यथा सर्वं सामात्यकं बलम् ॥ १६
ऋषिस्तु दृष्ट्वा मां प्रीतः प्रविष्टश्चाश्रमं पुनः । मुहूर्तमात्रान्निष्क्रम्य ततः कार्यमपृच्छत ॥ १७
सौम्य वैकल्यतां दृष्ट्वा रोम्णां ते नावगम्यते । अग्निदग्धाविमौ पक्षौ त्वक्चैव व्रणिता तव[4] ॥ १८
गृध्रौ द्वौ दृष्टपूर्वौ मे मातरिश्वसमौ जवे । गृध्राणां चैव राजानौ भ्रातरौ कामरूपिणौ ॥ १९
ज्येष्ठो हि त्वं[5] तु संपाते जटायुरनुजस्तव । मानुषं रूपमास्थाय गृह्णीतां चरणौ मम ॥ २०
किं ते व्याधिसमुत्थानं पक्षयोः पतनं कथम् । दण्डो वायं कृतः केन सर्वमाख्याहि पृच्छतः ॥ २१

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
किष्किन्धाकाण्डे संपातिपुरावृत्तवर्णनं नाम षष्टितमः सर्गः

---

## एकषष्टितमः सर्गः

### सूर्यानुगमनाख्यानम्

ततस्तद्दारुणं कर्म दुष्करं साहसात् कृतम् । आचचक्षे मुनेः सर्वं सूर्यानुगमनं तदा ॥ १

---

१. उदधिवेलां च च. छ.
२. गिरौ पुना.
३. दातारम् पुना.
४. प्राणाश्चापि शरीरके पुना.
५. ज्येष्ठोऽवितः पुना.

भगवन् व्रणयुक्तत्वाल्लज्जया व्याकुलेन्द्रियः । परिश्रान्तो[1] न शक्नोमि वचनं प्रतिभाषितुम् ॥ २
अहं चैव जटायुश्च सङ्घर्षाद्दर्पमोहितौ । आकाशं पतितौ वीरौ जिज्ञासन्तौ पराक्रमम् ॥ ३
कैलासशिखरे बद्ध्वा मुनीनामग्रतः पणम् । रविः स्यादनुयातव्यो यावदस्तं महागिरिम् ॥ ४
अथावां युगपत् प्राप्तावपश्याव महीतले । रथचक्रप्रमाणानि नगराणि पृथक्पृथक् ॥ ५
क्वचिद्वादित्रघोषांश्च ब्रह्मघोषांश्च शुश्रुवः । गायन्तीश्चाङ्गना बह्वीः पश्यावो रक्तवाससः ॥ ६
तूर्णमुत्पत्य चाकाशमादित्यपथमाश्रितौ । आवामालोकयावस्तद्वनं शाद्वलसंस्थितम्[2] ॥ ७
उपलैरिव संछन्ना दृश्यते भूः शिलोच्चयैः । आपगाभिश्च संवीता सूत्रैरिव वसुन्धरा ॥ ८
हिमवांश्चैव विन्ध्यश्च मेरुश्च सुमहान्नगः । भूतले संप्रकाशन्ते नागा इव जलाशये ॥ ९
तीव्रः स्वेदश्च खेदश्च भयं चासीत्तदावयोः । समाविशति मोहश्च तमो मूर्छा च दारुणा ॥ १०
न दिग्विज्ञायते याम्या नाग्नेयी न च वारुणी । युगान्ते नियतो लोको हतो दग्ध इवाग्निना ॥ ११
मनश्च मे हतं भूयः संनिवर्त्य तु संश्रयम् । यत्नेन महता ह्यस्मिन् पुनः संधाय चक्षुषी ॥ १२
यत्नेन महता भूयो रविः समवलोकितः । तुल्यः पृथ्वीप्रमाणेन भास्करः प्रतिभाति नौ ॥ १३
जटायुर्मामनापृच्छ्य निपपात महीं ततः । तं दृष्ट्वा तूर्णमाकाशादात्मानं मुक्तवानहम् ॥ १४
पक्षाभ्यां च मया गुप्तो जटायुर्न प्रदह्यते । प्रमादात्तत्र निर्दग्धः पतन् वायुपथादहम् ॥ १५
आशङ्के तं निपतितं जनस्थाने जटायुषम् । अहं तु पतितो विन्ध्ये दग्धपक्षो जडीकृतः ॥ १६
राज्येन हीनो भ्रात्रा च पक्षाभ्यां विक्रमेण च[3] । सर्वथा मर्तुमेवेच्छन् पतिष्ये शिखराद्गिरेः ॥ १७

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
किष्किन्धाकाण्डे सूर्यानुगमनाख्यानं नाम एकषष्टितमः सर्गः

---

## द्विषष्टितमः सर्गः

### निशाकरभविष्याख्यानम्

एवमुक्त्वा मुनिश्रेष्ठमरुदं दुःखितो भृशम् । अथ ध्यात्वा मुहूर्तं तु भगवानिदमब्रवीत् ॥ १
पक्षौ च ते प्रपक्षौ च पुनरन्यौ भविष्यतः । प्राणाश्च चक्षुषी चैव विक्रमश्च बलं च ते ॥ २
पुराणे सुमहत्कार्यं भविष्यति मया श्रुतम् । दृष्टं मे तपसा चैव श्रुत्वा च विदितं मम ॥ ३
राजा दशरथो नाम कश्चिदिक्ष्वाकुनन्दनः । तस्य पुत्रो महातेजा रामो नाम भविष्यति ॥ ४
अरण्यं च सह भ्रात्रा लक्ष्मणेन गमिष्यति । अस्मिन्नर्थे नियुक्तः सन् पित्रा सत्यपराक्रमः ॥ ५

---

१. बाष्पकण्ठः ध.
२. शाद्वलसन्निभम् च. छ.
३. अस्यानन्तरम्—सर्वथा मर्तुकामोऽहं रक्षणीयस्त्वया मुने—इति क.

नैर्ऋतो रावणो नाम तस्य भार्यां हरिष्यति । राक्षसेन्द्रो जनस्थानादवध्यः सुरदानवैः ॥ ६
सा च कामैः प्रलोभ्यन्ती भक्ष्यैर्भोज्यैश्च मैथिली । न भोक्ष्यति महाभागा दुःखे मग्ना यशस्विनी॥
परमान्नं तु वैदेह्या ज्ञात्वा दास्यति वासवः । यदन्नममृतप्रख्यं सुराणामपि दुर्लभम् ॥ ८
तदन्नं मैथिली प्राप्य विज्ञायेन्द्रादिदं त्विति । अग्रमुद्धृत्य रामाय भूतले निर्वपिष्यति ॥ ९
यदि जीवति मे भर्ता लक्ष्मणेन सह प्रभुः । देवत्वं गच्छतोर्वापि तयोरन्नमिदं त्विति ॥ १०
एष्यन्त्यन्वेषकास्तस्या रामदूताः प्लवङ्गमाः । आख्येया राममहिषी त्वया तेभ्यो विहङ्गम ॥ ११
सर्वथा हि न गन्तव्यमीदृशः क्व गमिष्यसि । देशकालौ प्रतीक्षस्व पक्षौ त्वं प्रतिपत्स्यसे ॥ १२
यदा प्रवृत्तिं तां सर्वामाख्यास्यसि विहङ्गम । तदैव पक्षौ वर्णश्च तव सर्वं भविष्यति[1] ॥ १३
नोत्सहेयमहं कर्तुमद्यैव त्वां सपक्षकम् । इहस्थस्त्वं तु लोकानां हितं कार्यं करिष्यसि ॥ १४
त्वयापि खलु तत् कार्यं तयोश्च नृपपुत्रयोः । ब्राह्मणानां सुराणां च मुनीनां वासवस्य च ॥ १५
इच्छाम्यहमपि द्रष्टुं भ्रातरौ रामलक्ष्मणौ । नेच्छे चिरं धारयितुं प्राणांस्त्यक्ष्ये कलेवरम् ॥ १६
महर्षिस्त्वब्रवीदेवं दृष्टतत्त्वार्थदर्शनः ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
किष्किन्धाकाण्डे निशाकरभविष्याख्यानं नाम द्विषष्टितमः सर्गः

---

## त्रिषष्टितमः सर्गः
### संपातिपक्षप्ररोहः

एतैरन्यैश्च बहुभिर्वाक्यैर्वाक्यविदां वरः । मां प्रशस्याभ्यनुज्ञाप्य प्रविष्टः स स्वमाश्रमम् ॥ १
कन्दरात्तु विसर्पित्वा पर्वतस्य शनैः शनैः । अहं विन्ध्यं समारुह्य भवतः प्रतिपालये ॥ २
अद्य त्वेतस्य कालस्य साग्रं वर्षशतं गतम् । देशकालप्रतीक्षोऽस्मि हृदि कृत्वा मुनेर्वचः ॥ ३
महाप्रस्थानमासाद्य स्वर्गते तु निशाकरे । मां निर्दहति संतापो वितर्कैर्बहुभिर्वृतम् ॥ ४
उत्थितां मरणे बुद्धिं मुनिवाक्यैर्निवर्तये । बुद्धिर्या तेन मे दत्ता प्राणानां रक्षणाय तु ॥ ५
सा मेऽपनयते दुःखं दीप्तेवाग्निशिखा तमः । बुद्ध्यता च मया वीर्यं रावणस्य दुरात्मनः ॥ ६
पुत्रः संतर्जितो वाग्भिर्न त्राता मैथिली कथम् । तस्या विलपितं श्रुत्वा तौ च सीताविनाकृतौ ॥ ७
न मे दशरथस्नेहात् पुत्रेणोत्पादितं प्रियम् । तस्य त्वेवं ब्रुवाणस्य संपातेर्वानरैः सह ॥ ८
उत्पेततुस्तदा पक्षौ समक्षं वनचारिणाम् । स दृष्ट्वा स्वां तनुं पक्षैरुद्गतैररुणच्छदैः ॥ ९
प्रहर्षमतुलं लेभे वानरांश्चेदमब्रवीत् । ऋषेर्निशाकरस्यैव प्रभावादमितात्मनः ॥ १०

---

१. इदं पद्यम् क. ग. घ. च. छ. नास्ति ।

आदित्यरश्मिनिर्दग्धौ पक्षौ मे पुनरुत्थितौ । यौवने वर्तमानस्य ममासीद्यः पराक्रमः ॥ ११
तमेवाद्यानुगच्छामि बलं पौरुषमेव च । सर्वथा क्रियतां यत्नः सीतामधिगमिष्यथ ॥ १२
पक्षलाभो ममायं वः सिद्धिप्रत्ययकारकः । इत्युक्त्वा स हरीन् सर्वान् संपातिः पतगोत्तमः ॥ १३
उत्पपात गिरेः शृङ्गाज्जिज्ञासुः खगमां गतिम् । तस्य तद्वचनं श्रुत्वा प्रीतिसंहृष्टमानसाः ॥ १४
बभूवुर्हरिशार्दूला विक्रमाभ्युदयोन्मुखाः ॥

अथ पवनसमानविक्रमाः प्लवगवराः प्रतिलब्धपौरुषाः ।
अभिजिदभिमुखा[1] दिशं ययुर्जनकसुतापरिमार्गणोन्मुखाः ॥ १५

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायाम् संहितायाम्
किष्किन्धाकाण्डे संपातिपक्षप्ररोहो नाम त्रिषष्टितमः सर्गः

---

## चतुःषष्टितमः सर्गः

### समुद्रलङ्घनमन्त्रणम्

आख्याता गृध्रराजेन समुत्पत्य प्लवङ्गमाः । संगम्य प्रीतिसंयुक्ता विनेदुः सिंहविक्रमाः ॥ १
संपातेर्वचनं श्रुत्वा हरयो रावणक्षयम् । हृष्टाः सागरमाजग्मुः सीतादर्शनकाङ्क्षिणः ॥ २
अभिक्रम्य तु तं देशं ददृशुर्भीमविक्रमाः । कृत्स्नं लोकस्य महतः प्रतिबिम्बमिव स्थितम्॥ ३
दक्षिणस्य समुद्रस्य समासाद्योत्तरां दिशम् । संनिवेशं ततश्चक्रुः सहिता वानरोत्तमाः ॥ ४
सत्त्वैर्महद्भिर्विकृतैः क्रीडद्भिर्विविधैर्जले । व्यात्तास्यैः सुमहाकायैरूर्मिभिश्च समाकुलम् ॥ ५
प्रसुप्तमिव चान्यत्र क्रीडन्तमिव चान्यतः । क्वचित् पर्वतमात्रैश्च जलराशिभिरावृतम् ॥ ६
संकुलं दानवेन्द्रैश्च पातालतलवासिभिः । रोमहर्षकरं दृष्ट्वा विषेदुः कपिकुञ्जराः ॥ ७
आकाशमिव दुष्पारं सागरं प्रेक्ष्य वानराः । विषेदुः सहसा सर्वे कथं कार्यमिति ब्रुवन् ॥ ८
विषण्णां वाहिनीं दृष्ट्वा सागरस्य निरीक्षणात् । आश्वासयामास हरीन् भयार्तान् हरिसत्तमः ॥ ९
तान् विषादेन महता विषण्णान् वानरर्षभान् । उवाच मतिमान् काले वालिसूनुर्महाबलः[2] ॥ १०
न विषादे मनः कार्यं विषादो दोषवत्तमः । विषादो हन्ति पुरुषं बालं क्रुद्ध इवोरगः ॥ ११
यो विषादं प्रसहते विक्रमे पर्युपस्थिते । तेजसा तस्य हीनस्य पुरुषार्थो न सिध्यति ॥ १२
इति ब्रुवति तस्मिंस्तु वालिपुत्रे महामतौ । आदित्योऽस्तं गतस्तत्र रजनी चाभ्यवर्तत[3] ॥ १३
तस्यां रात्र्यां व्यतीतायामङ्गदो वानरैः सह । हरिवृद्धैः समागम्य पुनर्मन्त्रममन्त्रयत् ॥ १४

---

१. अभिजिदभिमुखाम् ति.
२. इदं पद्यम् पुना. नास्ति ।
३. इदं पद्यम् क. ग. घ. च. छ. नास्ति ।

सा वानराणां ध्वजिनी परिवार्याङ्गदं बभौ। वासवं परिवार्येव मरुतां वाहिनी स्थिता॥ १५
कोऽन्यस्तां वानरीं सेनां शक्तः स्तम्भयितुं भवेत्। अन्यत्र वालितनयादन्यत्र च हनूमतः॥ १६
ततस्तान् हरिवृद्धांश्च तच्च सैन्यमरिंदमः। अनुमान्याङ्गदः श्रीमान् वाक्यमर्थवदब्रवीत्॥ १७
क इदानीं महातेजा लङ्घयिष्यति सागरम्। कः करिष्यति सुग्रीवं सत्यसन्धमरिंदमम्॥ १८
को वीरो योजनशतं लङ्घयेच्च प्लवङ्गमाः। इमांश्च यूथपान् सर्वान् मोक्षयेत् को महाभयात्॥१९
कस्य प्रभावाद्दारांश्च पुत्रांश्चैव गृहाणि च। इतो निवृत्ताः पश्येम सिद्धार्थाः सुखिनो वयम्॥२०
कस्य प्रसादाद्रामं च लक्ष्मणं च महाबलम्। अभिगच्छेम संहृष्टाः सुग्रीवं च महाबलम्॥ २१
यदि कश्चित् समर्थो वः सागरप्लवने हरिः। स ददात्विह नः शीघ्रं पुण्यामभयदक्षिणाम्॥ २२
अङ्गदस्य वचः श्रुत्वा न कश्चित् किंचिदब्रवीत्। स्तिमितेवाभवत्सर्वा तत्र सा हरिवाहिनी॥ २३
पुनरेवाङ्गदः प्राह तान् हरीन् हरिसत्तमः। सर्वे बलवतां श्रेष्ठा भवन्तो दृढविक्रमाः॥ २४
व्यपदेश्यकुले जाताः पूजिताश्चाप्यभीक्ष्णशः। न हि वो गमने सङ्गः कदाचित्कस्यचित्क्वचित्॥ २५
ब्रुवध्वं यस्य या शक्तिः प्लवने प्लवगर्षभाः॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायां
किष्किन्धाकाण्डे समुद्रलङ्घनमन्त्रणं नाम चतुःषष्टितमः सर्गः

---

## पञ्चषष्टितमः सर्गः

### बलेयत्ताविष्करणम्

ततोऽङ्गदवचः श्रुत्वा सर्वे ते वानरोत्तमाः। स्वं स्वं गतौ समुत्साहमाहुस्तत्र यथाक्रमम्॥ १
गजो गवाक्षो गवयः शरभो गन्धमादनः। मैन्दश्च द्विविदश्चैव सुषेणो जाम्बवांस्तथा॥ २
आबभाषे गजस्तत्र प्लवेयं दशयोजनम्। गवाक्षो योजनान्याह गमिष्यामीति विंशतिम्॥ ३
गवयो वानरस्तत्र वानरांस्तानुवाच ह। त्रिंशतं तु गमिष्यामि योजनानां प्लवङ्गमाः॥ ४
शरभस्तानुवाचाथ वानरान् वानरर्षभः। चत्वारिंशद्गमिष्यामि योजनानां प्लवङ्गमाः॥ ५
वानरांस्तु महातेजा अब्रवीद्गन्धमादनः। योजनानां गमिष्यामि पञ्चाशत्तु न संशयः॥ ६
मैन्दस्तु वानरस्तत्र वानरांस्तानुवाच ह। योजनानां परं षष्टिमहं प्लवितुमुत्सहे॥ ७
ततस्तत्र महातेजा द्विविदः प्रत्यभाषत। गमिष्यामि न संदेहः सप्ततिं योजनान्यहम्॥ ८
सुषेणस्तु हरिश्रेष्ठः प्रोक्तवान् कपिसत्तमान्। अशीतिं योजनानां तु प्लवेयं प्लवगेश्वराः॥ ९
तेषां कथयतां तत्र सर्वांस्ताननुमान्य च। ततो वृद्धतमस्तेषां जाम्बवान् प्रत्यभाषत॥ १०
पूर्वमस्माकमप्यासीत् कश्चिद्गतिपराक्रमः। ते वयं वयसः पारमनुप्राप्ताः स्म सांप्रतम्॥ ११

किं तु नैवं गते शक्यमिदं कार्यमुपेक्षितुम् । यदर्थं कपिराजश्च रामश्च कृतनिश्चयौ ॥ १२
सांप्रतं कालभेदेन या गतिस्तां निबोधत । नवतिं योजनानां तु गमिष्यामि न संशयः ॥ १३
तांस्तु सर्वान् हरिश्रेष्ठाञ्जाम्बवान् पुनरब्रवीत् । न खल्वेतावदेवासीद्गमने मे पराक्रमः ॥ १४
मया महाबलेश्चैव यज्ञे विष्णुः सनातनः । प्रदक्षिणीकृतः पूर्वं क्रममाणस्त्रिविक्रमम् ॥ १५
स इदानीमहं वृद्धः प्लवने मन्दविक्रमः । यौवने च तदासीन्मे बलमप्रतिमं परैः ॥ १६
संप्रत्येतावतीं शक्तिं गमने तर्कयाम्यहम् । नैतावता च संसिद्धिः कार्यस्यास्य भविष्यति ॥ १७
अथोत्तरमुदारार्थमब्रवीदङ्गदस्तदा । अनुमान्य महाप्राज्ञं जाम्बवन्तं महाकपिः ॥ १८
अहमेतद्गमिष्यामि योजनानां शतं महत् । निवर्तने तु मे शक्तिः स्यान्न वेति न निश्चिता ॥ १९
तमुवाच हरिश्रेष्ठं जाम्बवान् वाक्यकोविदः । ज्ञायते गमने शक्तिस्तव हर्यृक्षसत्तम ॥ २०
कामं शतं सहस्रं वा न ह्येष विधिरुच्यते । योजनानां भवाञ्शक्तो गन्तुं प्रतिनिवर्तितुम् ॥ २१
न हि प्रेषयिता तात स्वामी प्रेष्यः कथंचन । भवतायं जनः सर्वः प्रेष्यः प्लवगसत्तम ॥ २२
भवान् कलत्रमस्माकं स्वामिभावे व्यवस्थितः । स्वामी कलत्रं सैन्यस्य गतिरेषा परंतप ॥ २३
तस्मात् कलत्रवत्तत्र प्रतिपाल्यः सदा भवान् । अपि चैतस्य कार्यस्य भवान् मूलमरिंदम ॥ २४
मूलमर्थस्य संरक्ष्यमेष कार्यविदां नयः । मूले हि सति सिध्यन्ति गुणाः पुष्पफलोदयाः[1] ॥ २५
तद्भवानस्य कार्यस्य साधनं सत्यविक्रम । बुद्धिविक्रमसंपन्नो हेतुरत्र परंतप ॥ २६
गुरुश्च गुरुपुत्रश्च त्वं हि नः कपिसत्तम । भवन्तमाश्रित्य वयं समर्था ह्यर्थसाधने ॥ २७
उक्तवाक्यं महाप्राज्ञं जाम्बवन्तं महाकपिः प्रत्युवाचोत्तरं वाक्यं वालिसूनुरथाङ्गदः ॥ २८
यदि नाहं गमिष्यामि नान्यो वानरपुंगवः । पुनः खल्विदमस्माभिः कार्यं प्रायोपवेशनम् ॥ २९
न ह्यकृत्वा हरिपतेः संदेशं तस्य धीमतः । तत्रापि गत्वा प्राणानां पश्यामि[2] परिरक्षणम् ॥ ३०
स हि प्रसादे चात्यर्थं कोपे च हरिरीश्वरः । अतीत्य तस्य संदेशं विनाशो गमने भवेत् ॥ ३१
तद्यथा ह्यस्य कार्यस्य न भवत्यन्यथा गतिः । तद्भवानेव दृष्टार्थः संचिन्तयितुमर्हति ॥ ३२
सोऽङ्गदेन तदा वीरः प्रत्युक्तः प्लवगर्षभः । जाम्बवानुत्तरं वाक्यं प्रोवाचेदं ततोऽङ्गदम् ॥ ३३
अस्य ते वीर कार्यस्य न किंचित् परिहीयते । एष संचोदयाम्येनं यः कार्यं साधयिष्यति ॥ ३४

ततः प्रतीतं प्लवतां वरिष्ठमेकान्तमाश्रित्य सुखोपविष्टम् ।
संचोदयामास हरिप्रवीरो हरिप्रवीरं हनुमन्तमेव ॥ ३५

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
किष्किन्धाकाण्डे बलेयत्ताविष्करणं नाम पञ्चषष्टितमः सर्गः

---

१. सर्वे फलोदयाः ति. रा. २. न पश्ये ति.

## षट्षष्टितमः सर्गः

### हनूमद्बलसंधुक्षणम्

अनेकशतसाहस्रीं विषण्णां हरिवाहिनीम् । जाम्बवान् समुदीक्ष्यैवं हनुमन्तमथाब्रवीत् ॥ १

वीर वानरलोकस्य सर्वशास्त्रविशारद । तूष्णीमेकान्तमाश्रित्य हनुमन् किं न जल्पसि ॥ २

हनुमन् हरिराजस्य सुग्रीवस्य समो ह्यसि । रामलक्ष्मणयोश्चापि तेजसा च बलेन च ॥ ३

अरिष्टनेमिनः पुत्रो वैनतेयो महाबलः । गरुत्मानिति विख्यात उत्तमः सर्वपक्षिणाम् ॥ ४

बहुशो हि मया दृष्टः सागरे स महाबलः । भुजगानुद्धरन् पक्षी महावेगो महायशाः ॥ ५

पक्षयोर्यद्बलं तस्य तावद्भुजबलं तव । विक्रमश्चापि वेगश्च न ते तेनावहीयते ॥ ६

बलं बुद्धिश्च तेजश्च सत्त्वं च हरिपुंगव । विशिष्टं सर्वभूतेषु किमात्मानं न बुध्यसे ॥ ७

अप्सराप्सरसां श्रेष्ठा विख्याता पुञ्जिकस्थला । अञ्जनेति परिख्याता पत्नी केसरिणो हरेः ॥ ८

विख्याता त्रिषु लोकेषु रूपेणाप्रतिमा भुवि । अभिशापादभूत्तात वानरी कामरूपिणी ॥ ९

दुहिता वानरेन्द्रस्य कुञ्जरस्य महात्मनः । कपित्वे चारुसर्वाङ्गी कदाचित् कामरूपिणी ॥ १०

मानुषं विग्रहं कृत्वा रूपयौवनशालिनी । विचित्रमाल्याभरणा महार्हक्षौमवासिनी ॥ ११

अचरत् पर्वतस्याग्रे प्रावृडम्बुदसंनिभे । तस्या वस्त्रं विशालाक्ष्याः पीतं रक्तदशं शुभम् ॥ १२

स्थितायाः पर्वतस्याग्रे मारुतोऽपाहरच्छनैः । स ददर्श ततस्तस्या वृत्तावूरू सुसंहतौ ॥ १३

स्तनौ च पीनौ सहितौ सुजातं चारु चाननम् । तां विशालायतश्रोणीं तनुमध्यां यशस्विनीम् ॥ १४

दृष्ट्वैव शुभसर्वाङ्गीं पवनः काममोहितः । स तां भुजाभ्यां दीर्घाभ्यां पर्यष्वजत मारुतः ॥ १५

मन्मथाविष्टसर्वाङ्गो गतात्मा तामनिन्दिताम् । सा तु तत्रैव संभ्रान्ता[2] सुवृत्ता वाक्यमब्रवीत् ॥ १६

एकपत्नीव्रतमिदं को नाशयितुमिच्छति । अञ्जनाया वचः श्रुत्वा मारुतः प्रत्यभाषत ॥ १७

न त्वां हिंसामि सुश्रोणि मा भूत्ते सुभगे भयम् । मारुतोऽस्मि[3] गतो यत्त्वां परिष्वज्य यशस्विनीम् ॥

वीर्यवान् बुद्धिसंपन्नस्तव पुत्रो भविष्यति । महासत्त्वो महातेजा महाबलपराक्रमः ॥ १९

लङ्घने प्लवने चैव भविष्यति मया समः । एवमुक्ता ततस्तुष्टा जननी ते महाकपे ॥ २०

गुहायां त्वां महाबाहो प्रजज्ञे प्लवगर्षभम् । अभ्युत्थितं ततः सूर्यं बालो दृष्ट्वा महावने ॥ २१

फलं चेति जिघृक्षुस्त्वमुत्प्लुत्याभ्युद्गतो दिवम् । शतानि त्रीणि गत्वाथ योजनानां महाकपे ॥ २२

तेजसा तस्य निर्धूतो न विषादं गतस्ततः । तावदापततस्तूर्णमन्तरिक्षं महाकपे ॥ २३

क्षिप्तमिन्द्रेण ते वज्रं क्रोधाविष्टेन धीमता । तदा शैलाग्रशिखरे वामो हनुरभज्यत ॥ २४

---

१. अप्सरा प्र. तद्वस्त्रमपिधायन्ती—इति घ.

२. अस्यानन्तरम्—कुत्सयन्ती च मारुतम् । ३. मनसास्मि च ।

ततो हि नामधेयं ते हनुमानिति कीर्त्यते । ततस्त्वां निहतं दृष्ट्वा वायुर्गन्धवहः स्वयम् ॥ २५
त्रैलोक्ये भृशसंक्रुद्धो न ववौ वै प्रभञ्जनः । संभ्रान्ताश्च सुराः सर्वे त्रैलोक्ये क्षोभिते सति ॥ २६
प्रसादयन्ति संक्रुद्धं मारुतं भुवनेश्वराः । प्रसादिते च पवने ब्रह्मा तुभ्यं वरं ददौ ॥ २७
अशस्त्रवध्यतां तात समरे सत्यविक्रम । वज्रस्य च निपातेन विरुजं त्वां समीक्ष्य च ॥ २८
सहस्रनेत्रः प्रीतात्मा ददौ ते वरमुत्तमम् । स्वच्छन्दतश्च मरणं ते भूयादिति वै प्रभो ॥ २९
स त्वं केसरिणः पुत्रः क्षेत्रजो भीमविक्रमः । मारुतस्यौरसः पुत्रस्तेजसा चापि तत्समः ॥ ३०
ईदृशस्य च ते तात वर्णयामः कथं बलम् । कार्यं चालोकसामान्यं कर्तुं शक्तस्त्वमेव हि ॥ ३१
भवाञ्जीवातवेऽस्माकमञ्जनागर्भसंभव । त्वं हि वायुसुतो वत्स प्लवने चापि तत्समः ॥ ३२
वयमद्य गतप्राणा भवानस्मात्तु सांप्रतम् । दाक्ष्यविक्रमसंपन्नः पक्षिराज इवापरः ॥ ३३
त्रिविक्रमे मया तात सशैलवनकानना । त्रिःसप्तकृत्वः पृथिवी परिक्रान्ता प्रदक्षिणम् ॥ ३४
तथा चौषधयोऽस्माभिः संचिता देवशासनात् । निष्पन्नममृतं याभिस्तदासीन्नो महद्बलम् ॥ ३५
स इदानीमहं वृद्धः परिहीनपराक्रमः । सांप्रतं कालमस्माकं भवान् सर्वगुणान्वितः ॥ ३६
तद्विजृम्भस्व विक्रान्तः प्लवतामुत्तमो ह्यसि । त्वद्वीर्यं द्रष्टुकामेयं सर्ववानरवाहिनी ॥ ३७
उत्तिष्ठ हरिशार्दूल लङ्घयस्व महार्णवम् । परा हि सर्वभूतानां हनुमन् या गतिस्तव ॥ ३८
विषण्णा हरयः सर्वे हनूमन् किमुपेक्षसे । विक्रमस्व महावेगो विष्णुस्त्रीन् विक्रमानिव ॥ ३९

ततस्तु वै जाम्बवता प्रचोदितः प्रतीतवेगः पवनात्मजः कपिः ।
प्रहर्षयंस्तां हरिवीरवाहिनीं चकार रूपं महदात्मनस्तदा ॥ ४०

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
किष्किन्धाकाण्डे हनूमद्बलसंधुक्षणं नाम षट्षष्टितमः सर्गः

---

## सप्तषष्टितमः सर्गः

### लङ्घनावष्टम्भः

संस्तूयमानो हनुमान् व्यवर्धत महाबलः । समाविध्य च लाङ्गूलं हर्षाच्च बलमेयिवान् ॥ १
तस्य संस्तूयमानस्य वृद्धैर्वानरपुंगवैः । तेजसापूर्यमाणस्य रूपमासीदनुत्तमम् ॥ २
यथा विजृम्भते सिंहो विवृद्धो गिरिगह्वरे । मारुतस्यौरसः पुत्रस्तथा संप्रति जृम्भते ॥ ३
तं दृष्ट्वा जृम्भमाणं ते क्रमितुं शतयोजनम् । वीर्येणापूर्यमाणं च सहसा वानरोत्तमाः ॥ ४

सहसा शोकमुत्सृज्य प्रहर्षेण समन्विताः । विनेदुस्तुष्टुवुश्चापि हनुमन्तं महाबलम् ॥ ५
प्रहृष्टा विस्मिताश्चैव वीक्षन्ते स्म समन्ततः । त्रिविक्रमकृतोत्साहं नारायणमिव प्रजाः ॥ ६
अशोभत मुखं तस्य जृम्भमाणस्य धीमतः । अम्बरीषमिवादीप्तं विधूम इव पावकः ॥ ७
हरीणामुत्थितो मध्यात् संप्रहृष्टतनूरुहः । अभिवाद्य हरीन् वृद्धान् हनूमानिदमब्रवीत् ॥ ८
अरुजत् पर्वताग्राणि हुताशनसखोऽनिलः । बलवानप्रमेयश्च वायुराकाशगोचरः ॥ ९
तस्याहं शीघ्रवेगस्य शीघ्रगस्य महात्मनः । मारुतस्यौरसः पुत्रः प्लवने नास्ति मत्समः[1] ॥ १०
उत्सहेयं हि विस्तीर्णमालिखन्तमिवाम्बरम् । मेरुं गिरिमसङ्गेन परिगन्तुं सहस्रशः ॥ ११
बाहुवेगप्रणुन्नेन सागरेणाहमुत्सहे । समाप्लावयितुं लोकं सपर्वतनदीह्रदम् ॥ १२
ममोरुजङ्घावेगेन भविष्यति समुत्थितः । समुच्छ्रितमहाग्राहः समुद्रो वरुणालयः ॥ १३
पन्नगाशनमाकाशे पतन्तं पक्षिसेविते । वैनतेयमहं शक्तः परिगन्तुं सहस्रशः ॥ १४
उदयात् प्रस्थितं वापि ज्वलन्तं रश्मिमालिनम् । अनस्तमितमादित्यमभिगन्तुं समुत्सहे ॥ १५
ततो भूमिमसंस्पृश्य पुनरागन्तुमुत्सहे । प्रवेगेनैव महता भीमेन प्लवगर्षभाः ॥ १६
उत्सहेयमतिक्रान्तुं सर्वानाकाशगोचरान् । सागरं क्षोभयिष्यामि दारयिष्यामि मेदिनीम् ॥ १७
पर्वतान् कम्पयिष्यामि प्लवमानः प्लवङ्गमाः । हरिष्याम्यूरुवेगेन प्लवमानो महार्णवम् ॥ १८
लतानां विविधं पुष्पं पादपानां च सर्वशः । अनुयास्यति मामद्य प्लवमानं विहायसा ॥ १९
भविष्यति हि मे पन्थाः स्वातेः पन्था इवाम्बरे । चरन्तं घोरमाकाशमुत्पतिष्यन्तमेव वा ॥ २०
द्रक्ष्यन्ति निपतन्तं च सर्वभूतानि वानराः । महामेघप्रतीकाशं मां च द्रक्ष्यथ वानराः ॥ २१
दिवमावृत्य गच्छन्तं ग्रसमानमिवाम्बरम् । विधमिष्यामि जीमूतान् कम्पयिष्यामि पर्वतान् ॥ २२
सागरं क्षोभयिष्यामि प्लवमानः समाहितः । वैनतेयस्य सा शक्तिर्मम वा[2] मारुतस्य वा ॥ २३
ऋते सुपर्णराजानं मारुतं वा महाजवम् । न तद्भूतं प्रपश्यामि यन्मां प्लुतमनुव्रजेत् ॥ २४
निमेषान्तरमात्रेण निरालम्बनमम्बरम् । सहसा निपतिष्यामि घनाद्विद्युदिवोत्थिता ॥ २५
भविष्यति हि मे रूपं प्लवमानस्य सागरे । विष्णोर्विक्रममाणस्य पुरा त्रीन् विक्रमानिव ॥ २६
बुद्ध्या चाहं प्रपश्यामि मनश्चेष्टा च मे तथा । अहं द्रक्ष्यामि वैदेहीं प्रमोदध्वं प्लवङ्गमाः ॥ २७
मारुतस्य समो वेगे गरुडस्य समो जवे । अयुतं योजनानां तु गमिष्यामीति मे मतिः ॥ २८
वासवस्य सवज्रस्य ब्रह्मणो वा स्वयंभुवः । विक्रम्य सहसा हस्तादमृतं तदिहानये[2] ॥ २९
लङ्कां वापि समुत्क्षिप्य गच्छेयमिति मे मतिः । तमेवं वानरश्रेष्ठं गर्जन्तममितौजसम् ॥ ३०
प्रहृष्टा हरयस्तत्र समुदैक्षन्त विस्मिताः । तस्य तद्वचनं श्रुत्वा ज्ञातीनां शोकनाशनम् ॥ ३१

---

१. प्लवनेनास्मि तत्समः ति. तेज उत्तमम्—इति छ.
२. अस्यानन्तरम्—तेजश्चन्द्राग्निगृह्वायां सूर्याद्वा

उवाच परिसंहृष्टो जाम्बवान् हरिसत्तमम् । वीर केसरिणः पुत्र हनुमन् मारुतात्मज ॥ ३२

ज्ञातीनां विपुलः शोकस्त्वया तात विनाशितः । तव कल्याणरुचयः कपिमुख्याः समागताः ॥ ३३

मङ्गलं कार्यसिद्धयर्थं करिष्यन्ति समाहिताः । ऋषीणां च प्रसादेन कपिवृद्धमतेन च ॥ ३४

गुरूणां च प्रसादेन प्लवस्व त्वं महार्णवम् । स्थास्यामश्चैकपादेन यावदागमनं तव ॥ ३५

त्वद्गतानि च सर्वेषां जीवितानि वनौकसाम् । ततस्तु हरिशार्दूलस्तानुवाच वनौकसः ॥ ३६

नेयं मम मही वेगं लङ्घने धारयिष्यति । एतानीह नगस्यास्य शिलासंकटशालिनः ॥ ३७

शिखराणि महेन्द्रस्य स्थिराणि च महान्ति च । एषु वेगं करिष्यामि महेन्द्रशिखरेष्वहम् ॥ ३८

नानाद्रुमविकीर्णेषु धातुनिष्यन्दशोभिषु । एतानि मम [1]निष्पेषं पादयोः प्लवतां वराः ॥ ३९

प्लवतो धारयिष्यन्ति योजनानामितः शतम् । ततस्तं मारुतप्रख्यः स हरिर्मारुतात्मजः ॥ ४०

आरुरोह नगश्रेष्ठं महेन्द्रमरिमर्दनः । वृतं नानाविधैर्वृक्षैर्मृगसेवितशाद्वलम् ॥ ४१

लताकुसुमसंबाधं नित्यपुष्पफलद्रुमम् । सिंहशार्दूलचरितं मत्तमातङ्गसेवितम्[2] ॥ ४२

मत्तद्विजगणोद्घुष्टं सलिलोत्पीडसंकुलम् । महद्भिरुच्छ्रितं शृङ्गैर्महेन्द्रं स महाबलः ॥ ४३

विचचार हरिश्रेष्ठो महेन्द्रसमविक्रमः । पादाभ्यां पीडितस्तेन महाशैलो महात्मनः ॥ ४४

ररास सिंहाभिहतो महान् मत्त इव द्विपः । मुमोच सलिलोत्पीडान् विप्रकीर्णशिलोच्चयः ॥ ४५

वित्रस्तमृगमातङ्गः प्रकम्पितमहाद्रुमः[3] । नागगन्धर्वमिथुनैः पानसंसर्गकर्कशैः ॥ ४६

उत्पतद्भिश्च विहगैर्विद्याधरगणैरपि । त्यज्यमानमहासानुः संनिलीनमहोरगः ४७

चलशृङ्गशिलोद्घातस्तदाभूत् स महागिरिः[4] । निश्वसद्भिस्तदार्तैस्तु भुजङ्गैरर्धनिःसृतैः ४८

---

१. वेगं हि शिखराणि महान्ति च झ. ञ.

२. अस्यानन्तरम्—अनेकश्वापदाकीर्णं नानाविहगसेवितम् । आक्रम्य शृङ्गं पादाभ्यामुत्पातु[त]मुपचक्रमे ॥—इति ख.

३. ररास ... महाद्रुम इत्यस्य स्थाने—विशीर्णः सहसाधस्ताद्भूमौ समश्चिराः स्थितः । हनूमच्चरणद्वन्द्वपीडितस्य गिरेस्तदा ॥ बाष्पासारा इवापेतुः सर्वतस्तत्र निर्झराः । हनूमच्चरणाक्रान्ताद्गिरिशृङ्गादयो[धो]द्रुताः ॥ लम्बमानास्तु भुजगा विशीर्णान्त्रा इवाबभुः । संभ्रान्तवन्यमातङ्गप्रपीडितमहाद्रुमः ॥—इति ख.

४. त्यज्यमान ... महागिरिः इत्यस्य स्थाने—वानरेन्द्रपदाघातसंकीर्णतटानिस्वनैः । रक्षसां हि महोत्पातस्तदाभूत्स महागिरिः ॥ गुहाभ्यो निष्पतद्भिश्च सिंहैरुन्नतकन्धरैः । हरिपादावभग्नोऽद्रिर्वसास्थिरिव चाबभौ ॥—इति ध.

सपताक इवाभाति स तदा धरणीधरः । ऋषिभिस्त्राससंभ्रान्तैस्त्यज्यमानशिलोच्चयः ॥ ४९
सीदन् महति कान्तारे सार्थहीन इवाध्वगः ॥

स वेगवान् वेगसमाहितात्मा हरिप्रवीरः परवीरहन्ता ।
मनः समाधाय महानुभावो जगाम लङ्कां मनसा मनस्वी ॥ ५०

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
किष्किन्धाकाण्डे लङ्घनावष्टम्भो नाम सप्तषष्टितमः सर्गः

---

श्रीमद्वाल्मीकिरामायणे किष्किन्धाकाण्डः संपूर्णः

॥ श्रीः ॥

# ॥ श्रीमद्वाल्मीकिरामायणम् ॥

## ॥ अथ सुन्दरकाण्डः ॥

### प्रथमः सर्गः

### सागरलङ्घनम्

ततो रावणनीतायाः सीतायाः शत्रुकर्शनः । इयेष पदमन्वेष्टुं चारणाचरिते पथि ॥ १

दुष्करं निष्प्रतिद्वन्द्वं चिकीर्षन् कर्म वानरः । समुदग्रशिरोग्रीवो गवां पतिरिवाबभौ ॥ २

अथ वैदूर्यवर्णेषु शाद्वलेषु महाबलः । धीरः सलिलकल्पेषु विचचार यथासुखम् ॥ ३

द्विजान् वित्रासयन् धीमानुरसा पादपान् हरन् । मृगांश्च सुबहून्निघ्नन् प्रवृद्ध इव केसरी ॥ ४

नीललोहितमाञ्जिष्ठपत्रवर्णैः सितासितैः । स्वभावविहितैश्चित्रैर्धातुभिः समलंकृतम् ॥ ५

कामरूपिभिराविष्टमभीक्ष्णं सपरिच्छदैः । यक्षकिंनरगन्धर्वैर्देवकल्पैश्च पन्नगैः ॥ ६

स तस्य गिरिवर्यस्य तले नागवरायुते । तिष्ठन् कपिवरस्तत्र ह्रदे नाग इवाबभौ ॥ ७

स सूर्याय महेन्द्राय पवनाय स्वयंभुवे । भूतेभ्यश्चाञ्जलिं कृत्वा चकार गमने मतिम् ॥ ८

अञ्जलिं प्राङ्मुखः कुर्वन् पवनायात्मयोनये । ततो हि ववृधे[1] गन्तुं दक्षिणो दक्षिणां दिशम् ॥ ९

प्लवङ्गप्रवरैर्दृष्टः प्लवने कृतनिश्चयः । ववृधे रामवृद्ध्यर्थं समुद्र इव पर्वसु ॥ १०

निष्प्रमाणशरीरः सँल्लिलङ्घयिषुरर्णवम्[2] । बाहुभ्यां पीडयामास चरणाभ्यां च पर्वतम् ॥ ११

स चचालाचलश्चापि मुहूर्तं कपिपीडितः । तरूणां पुष्पिताग्राणां सर्वं पुष्पमशातयत् ॥ १२

तेन पादपमुक्तेन पुष्पौघेण सुगन्धिना । सर्वतः संवृतः शैलो बभौ पुष्पमयो यथा ॥ १३

तेन चोत्तमवीर्येण पीड्यमानः स पर्वतः[3] । सलिलं संप्रसुस्राव मदं मत्त इव द्विपः[4] ॥ १४

पीड्यमानस्तु बलिना महेन्द्रस्तेन पर्वतः । रीतीर्निर्वर्तयामास काञ्चनाञ्जनराजतीः ॥ १५

मुमोच च शिलाः शैलो विशालाः सुमनःशिलाः । मध्यमेनार्चिषा जुष्टो [5]धूमराजीरिवानलः ॥ १६

गिरिणा[6] पीड्यमानेन पीड्यमानानि सर्वतः । गुहाविष्टानि भूतानि विनेदुर्विकृतैः स्वरैः ॥ १७

स [7]महासत्त्वसंनादः शैलपीडानिमित्तजः । पृथिवीं पूरयामास दिशश्चोपवनानि च ॥ १८

---

१. ततोऽभिववृधे छ.

२. अस्यानन्तरम्—प्रगृह्य बलवान् बाहू लङ्कामभिमुखः स्थितः—इति ग.

३. इदमर्धं १५ श्लोकानन्तरं ग. दृश्यते ।

४. इदमर्धं ग. नास्ति ।

५. धूमराजिः ति.

६. हरिणा प्र.

७. स महान् प. छ.

शिरोभिः पृथुभिः सर्पा व्यक्तस्वस्तिकलक्षणैः । वमन्तः पावकं घोरं ददंशुर्दशनैः शिलाः ॥ १९

तास्तदा सविषैर्दष्टाः कुपितैस्तैर्महाशिलाः । जज्वलुः पावकोद्दीप्ता बिभिदुश्च सहस्रधा ॥ २०

यानि चौषधजालानि तस्मिञ्जातानि पर्वते । विषघ्नान्यपि नागानां न शेकुः शमितुं विषम्[१] ॥ २१

भिद्यतेऽयं गिरिर्भूतैरिति मत्वा तपस्विनः । त्रस्ता विद्याधरास्तस्मादुत्पेतुः स्त्रीगणैः सह ॥ २१

पानभूमिगतं हित्वा हैममासवभाजनम्[२] । पात्राणि च महार्हाणि करकांश्च हिरण्मयान् ॥ २३

लेह्यानुच्चावचान् भक्ष्यान् मांसानि विविधानि च । आर्षभाणि च चर्माणि खड्गांश्च कनकत्सरून्॥

कृतकण्ठगुणाः क्षीबा रक्तमाल्यानुलेपनाः । रक्ताक्षाः पुष्कराक्षाश्च गगनं प्रतिपेदिरे ॥ २५

हारनूपुरकेयूरपारिहार्यधराः स्त्रियः । विस्मिताः सस्मितास्तस्थुराकाशे रमणैः सह ॥ २६

दर्शयन्तो महाविद्यां विद्याधरमहर्षयः । [३]सप्रियास्तस्थुराकाशे वीक्षांचक्रुश्च पर्वतम् ॥ २७

शुश्रुवुश्च तदा शब्दमृषीणां भावितात्मनाम् । चारणानां च सिद्धानां स्थितानां विमलेऽम्बरे ॥ २८

एष पर्वतसंकाशो हनूमान् मारुतात्मजः । तितीर्षति महावेगः सागरं मकरालयम् ॥ २९

रामार्थं वानरार्थं च चिकीर्षन् कर्म दुष्करम् । समुद्रस्य परं पारं दुष्प्रापं प्राप्तुमिच्छति ॥ ३०

इति विद्याधराः श्रुत्वा वचस्तेषां तपस्विनाम् । तमप्रमेयं ददृशुः पर्वते वानरर्षभम् ॥ ३१

दुधुवे च स रोमाणि चकम्पे चाचलोपमः[४] । ननाद सुमहानादं स महानिव तोयदः ॥ ३२

आनुपूर्व्येण वृत्तं च लाङ्गूलं रोमभिश्चितम् । उत्पतिष्यन् विचिक्षेप पक्षिराज इवोरगम् ॥ ३३

तस्य लाङ्गूलमाविद्धमात्तवेगस्य पृष्ठतः । ददृशे गरुडेनेव ह्रियमाणो महोरगः ॥ ३४

बाहू संस्तम्भयामास महापरिघसंनिभौ । ससाद च कपिः कट्यां चरणौ संचुकोच च ॥ ३५

संहृत्य च भुजौ श्रीमांस्तथैव च शिरोधराम् । तेजः सत्त्वं तथा वीर्यमाविवेश स वीर्यवान् ॥ ३६

मार्गमालोकयन् दूरादूर्ध्वं प्रणिहितेक्षणः । रुरोध हृदये प्राणानाकाशमवलोकयन् ॥ ३७

पद्भ्यां दृढमवस्थानं कृत्वा स कपिकुञ्जरः । निकुञ्च्य कर्णौ हनुमानुत्पतिष्यन् महाबलः ॥ ३८

वानरान् वानरश्रेष्ठ इदं वचनमब्रवीत् । यथा [1]राघवनिर्मुक्तः शरः श्वसनविक्रमः ॥ ३९

---

1. यथेति । राघवनिर्मुक्तः शरो यथा संकल्पितं लक्ष्यस्य प्रदेशम् आदौ गच्छेत्, लक्ष्यस्य तत्र असंनिधाने च त्रिदिवमपि गच्छेत्, एवं क्रमेण यावल्लक्ष्यभूतः स राघवमनुगच्छति तावत्तमनुद्रवत्येव तथाहमपि करिष्यामीत्यर्थः । अतश्चास्य उपमानवाक्यस्य 'गमिष्यामि सुरालयम्' 'आनयिष्यामि रावणम्' इत्युत्तरत्रापि संबन्धः ॥

१. अस्यानन्तरम्—अपरे तु महाकाया वमन्तोऽग्निं स्वतेजसा । कन्दरेभ्यो विनिष्पेतुः कपिपादनिपीडिताः ॥ गिरेराक्रम्यमाणस्य तरवस्तरुणाङ्कुराः । मुमुचुः पुष्पवर्षाणि रक्तोत्पलसुगंधिनः ॥ गैरिकाञ्जनसंजुष्टा हरितालसमावृताः । व्यशीर्यन्त गिरेस्तस्य शिलास्ताः समनःशिलाः । सचन्दनरसस्ताम्रचित्रकाञ्चनधातुभिः। क्षिप्तैः शिखरनिर्भेदैर्दीप्तैर्गैरिकधातुभिः॥—इति घ. छ.

२. आसनभाजनम् ख.

३. सहिताः ख. च.

विस्मिताः छ.

४. अनलोपमः पुना.

अचलोत्तमः क. घ.

गच्छेत्तद्द्रमिष्यामि लङ्कां रावणपालिताम् । न हि द्रक्ष्यामि यदि तां लङ्कायां जनकात्मजाम् ॥ ४०
अनेनैव हि वेगेन गमिष्यामि सुरालयम् । यदि वा त्रिदिवे सीतां न द्रक्ष्यामि कृतश्रमः ॥ ४१
बद्ध्वा राक्षसराजानमानयिष्यामि रावणम् । सर्वथा कृतकार्योऽहमेष्यामि सह सीतया ॥ ४२
आनयिष्यामि वा लङ्कां समुत्पाट्य सरावणाम् । एवमुक्त्वा तु हनुमान् वानरान् वानरोत्तमः ॥ ४३
उत्पपाताथ वेगेन वेगवानविचारयन् । सुपर्णमिव चात्मानं मेने स कपिकुञ्जरः ॥ ४४
समुत्पतति तस्मिंस्तु वेगात्ते नगरोहिणः । संहृत्य विटपान् सर्वान् समुत्पेतुः समन्ततः ॥ ४५
स मत्तकोयष्टिभकान् पादपान् पुष्पशालिनः । उद्वहन्नूरुवेगेन जगाम विमलेऽम्बरे ॥ ४६
ऊरुवेगोद्धता वृक्षा मुहूर्तं कपिमन्वयुः । प्रस्थितं दीर्घमध्वानं स्वबन्धुमिव बान्धवाः ॥ ४७
तदूरुवेगोन्मथिताः सालाश्चान्ये नगोत्तमाः । अनुजग्मुर्हनूमन्तं सैन्या इव महीपतिम् ॥ ४८
सुपुष्पिताग्रैर्बहुभिः पादपैरन्वितः कपिः । हनूमान् पर्वताकारो बभूवाद्भुतदर्शनः ॥ ४९
सारवन्तोऽथ ये वृक्षा न्यमज्जल्ँलवणाम्भसि । भयादिव महेन्द्रस्य पर्वता वरुणालये ५०
स नानाकुसुमैः कीर्णः कपिः साङ्कुरकोरकैः । शुशुभे मेघसंकाशः खद्योतैरिव पर्वतः ॥ ५१
विमुक्तास्तस्य वेगेन मुक्त्वा पुष्पाणि ते द्रुमाः । अवशीर्यन्त सलिले निवृत्ताः सुहृदो यथा ॥ ५२
लघुत्वेनोपपन्नं तद्विचित्रं सागरेऽपतत् । द्रुमाणां विविधं पुष्पं कपिवायुसमीरितम्[1] ॥ ५३
पुष्पौघेनानुविद्धेन नानावर्णेन वानरः । बभौ मेघ इवोद्यन् वै[2] विद्युद्गणविभूषितः ॥ ५४
तस्य वेगसमाधूतैः पुष्पैस्तोयमदृश्यत[3] । ताराभिरभिरामाभिरुदिताभिरिवाम्बरम् ॥ ५५
तस्याम्बरगतौ बाहू ददृशाते प्रसारितौ । पर्वताग्राद्विनिष्क्रान्तौ पञ्चास्याविव पन्नगौ ॥ ५६
पिबन्निव बभौ श्रीमान् सोर्मिमालं महार्णवम् । पिपासुरिव चाकाशं ददृशे स महाकपिः ॥ ५७
तस्य विद्युत्प्रभाकारे वायुमार्गानुसारिणः । नयने संप्रकाशेते पर्वतस्थाविवानलौ ॥ ५८
पिङ्गे पिङ्गाक्षमुख्यस्य बृहती परिमण्डले[1] । चक्षुषी संप्रकाशेते चन्द्रसूर्याविवोदितौ[4] ५९
मुखं नासिकया तस्य ताम्रया ताम्रमाबभौ । सन्ध्यया समभिस्पृष्टं यथा सूर्यस्य मण्डलम् ॥ ६०
लाङ्गूलं च समाविद्धं प्लवमानस्य शोभते । अम्बरे वायुपुत्रस्य शक्रध्वज इवोच्छ्रितः ॥ ६१
लाङ्गूलचक्रेण महाञ्शुक्लदंष्ट्रोऽनिलात्मजः । व्यरोचत महाप्राज्ञः परिवेषीव भास्करः ॥ ६२
स्फिग्देशेनाभिताम्रेण रराज स महाकपिः । महता दारितेनेव गिरिर्गैरिकधातुना ॥ ६३
तस्य वानरसिंहस्य प्लवमानस्य सागरम् । कक्षान्तरगतो वायुर्जीमूत इव गर्जति ॥ ६४
खे यथा निपतन्त्युल्का ह्युत्तरान्ताद्विनिःसृता । दृश्यते सानुबन्धा च तथा स कपिकुञ्जरः ॥ ६५

---

1. बृहती च परिमण्डले अणुनी चेति विरोधः अपिशब्दप्रयोगाद्गम्यः वर्तुलाकारे इति परिहारः ।

१. अस्यानन्तरम्—ताराचितमिवाकाशं प्रबभौ स महार्णवः—इति ग. च. छ.

२. इवाकाशे छ.

३. पुष्पौघेनेत्यादि अदृश्यतेत्यन्तं घ. नास्ति ।

४. अम्बरे ख. ग. छ.

पतत्पतङ्गसंकाशो व्यायतः शुशुभे कपिः । प्रवृद्ध इव मातङ्गः कक्ष्यया बध्यमानया ॥ ६६
उपरिष्टाच्छरीरेण च्छायया चावगाढया । सागरे मारुताविष्टा नौरिवासीत्तदा कपिः ॥ ६७
यं यं देशं समुद्रस्य जगाम स महाकपिः । स स तस्योरुवेगेन सोन्माद इव लक्ष्यते ॥ ६८
सागरस्योर्मिमालानामुरसा शैलवर्ष्मणा । अभिघ्नंस्तु महावेगः पुप्लुवे स महाकपिः ॥ ६९
कपिवातश्च बलवान् मेघवातश्च निःसृतः । सागरं भीमनिर्घोषं कम्पयामासतुर्भृशम् ॥ ७०
विकर्षन्नूर्मिजालानि बृहन्ति लवणाम्भसः । पुप्लुवे कपिशार्दूलो विकिरन्निव रोदसी ॥ ७१
मेरुमन्दरसंकाशानुद्गतान् स महार्णवे । अत्यक्रामन्महावेगस्तरङ्गान् गणयन्निव ॥ ७२
तस्य वेगसमुद्धूतं जलं सजलदं तदा । अम्बरस्थं विबभ्राज शारदाभ्रमिवाततम् ॥ ७३
तिमिनक्रझषाः कूर्मा दृश्यन्ते विवृतास्तदा । वस्त्रापकर्षणेनेव शरीराणि शरीरिणाम् ॥ ७४
प्लवमानं समीक्ष्याथ भुजङ्गाः सागरालयाः । व्योम्नि तं कपिशार्दूलं सुपर्ण इति मेनिरे ॥ ७५
दशयोजनविस्तीर्णा त्रिंशद्योजनमायता । छाया वानरसिंहस्य जले चारुतराभवत् ॥ ७६
श्वेताभ्रघनराजीव वायुपुत्रानुगामिनी । तस्य सा शुशुभे छाया वितता लवणाम्भसि ॥ ७७
शुशुभे स महातेजा महाकायो महाकपिः । वायुमार्गे निरालम्बे पक्षवानिव पर्वतः ॥ ७८
येनासौ याति बलवान् वेगेन कपिकुञ्जरः । तेन मार्गेण सहसा द्रोणीकृत इवार्णवः ॥ ७९
आपाते पक्षिसङ्घानां पक्षिराज इवाबभौ । हनूमान् मेघजालानि प्रकर्षन् मारुतो यथा ॥ ८०
प्रविशन्नभ्रजालानि निष्पतंश्च पुनः पुनः । प्रच्छन्नश्च प्रकाशश्च चन्द्रमा इव लक्ष्यते ॥ ८१
पाण्डरारुणवर्णानि नीलमाञ्जिष्ठकानि च । कपिना कृष्यमाणानि महाभ्राणि चकाशिरे ॥ ८२
प्लवमानं तु तं दृष्ट्वा प्लवगं त्वरितं तदा । ववृषुः पुष्पवर्षाणि देवगन्धर्वचारणाः[१] ॥ ८३
तताप न हि तं सूर्यः प्लवन्तं वानरेश्वरम् । सिषेवे च तदा वायू रामकार्यार्थसिद्धये ॥ ८४
ऋषयस्तुष्टुवुश्चैनं प्लवमानं विहायसा । जगुश्च देवगन्धर्वाः प्रशंसन्तो महौजसम् ॥ ८५
नागाश्च तुष्टुवुर्यक्षा रक्षांसि विबुधाः खगाः । प्रेक्ष्याकाशे कपिवरं सहसा विहतक्लमम् ॥ ८६
तस्मिन् प्लवगशार्दूले प्लवमाने हनूमति । इक्ष्वाकुकुलमानार्थी चिन्तयामास सागरः ॥ ८७
साहाय्यं वानरेन्द्रस्य यदि नाहं हनूमतः । करिष्यामि भविष्यामि [1]सर्ववाच्यो विवक्षताम् ॥ ८८
अहमिक्ष्वाकुनाथेन सगरेण विवर्धितः । इक्ष्वाकुसचिवश्चायं नावसीदितुमर्हति ॥ ८९
तथा मया विधातव्यं विश्रमेत यथा कपिः । शेषं च मयि विश्रान्तः सुखेनातिपतिष्यति ॥ ९०
इति कृत्वा मतिं साध्वीं समुद्रश्छन्नमम्भसि । हिरण्यनाभं मैनाकमुवाच गिरिसत्तमम् ॥ ९१
त्वमिहासुरसङ्घानां पातालतलवासिनाम् । देवराज्ञा गिरिश्रेष्ठ परिघः संनिवेशितः ॥ ९२
त्वमेषां जातवीर्याणां[२] पुनरेवोत्पतिष्यताम् । पातालस्याप्रमेयस्य द्वारमावृत्य तिष्ठसि ॥ ९३

---

1. सर्ववाच्यः अत्यन्तनिन्द्यः                    २. ज्ञातवीर्याणाम् छ,

१. देवगन्धर्वदानवाः ङ.

तिर्यगूर्ध्वमधश्चैव शक्तिस्ते शैल वर्धितुम् । तस्मात् संचोदयामि त्वामुत्तिष्ठ नगसत्तम ॥ ९४

स एष कपिशार्दूलस्त्वामुपैष्यति वीर्यवान् । हनूमान् रामकार्यार्थं भीमकर्मा खमाप्लुतः[1] ॥ ९५

अस्य साह्यं मया कार्यमिक्ष्वाकुहितवर्तिनः[2] । मम हीक्ष्वाकवः पूज्याः परं पूज्यतमास्तव ॥ ९६

कुरु साचिव्यमस्माकं न नः कार्यमतिक्रमेत् । कर्तव्यमकृतं कार्यं सतां [1]मन्युमुदीरयेत्[3] ॥ ९७

सलिलादूर्ध्वमुत्तिष्ठ तिष्ठत्वेष कपिस्त्वयि । अस्माकमतिथिश्चैव पूज्यश्च प्लवतां वरः[4] ॥ ९८

चामीकरमहानाभ देवगन्धर्वसेवित । हनूमांस्त्वयि विश्रान्तस्ततः शेषं गमिष्यति ॥ ९९

काकुत्स्थस्यानृशंस्यं च मैथिल्याश्च विवासनम्[5] । श्रमं च प्लवगेन्द्रस्य समीक्ष्योत्थातुमर्हसि ॥ १००

हिरण्यनाभो मैनाको निशम्य लवणाम्भसः । उत्पपात जलात्तूर्णं महाद्रुमलतायुतः ॥ १०१

स सागरजलं भित्त्वा बभूवाभ्युत्थितस्तदा । यथा जलधरं भित्त्वा दीप्तरश्मिर्दिवाकरः ॥ १०२

स महात्मा मुहूर्तेन पर्वतः सलिलावृतः । दर्शयामास शृङ्गाणि सागरेण नियोजितः ॥ १०३

शातकुम्भमयैः शृङ्गैः सकिंनरमहोरगैः । आदित्योदयसंकाशैरालिखद्भिरिवाम्बरम् ॥ १०४

तप्तजाम्बूनदैः शृङ्गैः पर्वतस्य समुत्थितैः । आकाशं [2]शस्त्रसंकाशमभवत् काञ्चनप्रभम् ॥ १०५

जातरूपमयैः शृङ्गैर्भ्राजमानैः स्वयंप्रभैः । आदित्यशतसंकाशः सोऽभवद्गिरिसत्तमः[7] ॥ १०६

तमुत्थितमसङ्गेन हनुमानग्रतः स्थितम् । मध्ये लवणतोयस्य विघ्नोऽयमिति निश्चितः[8] ॥ १०७

स तमुच्छ्रितमत्यर्थं महावेगो महाकपिः । उरसा पातयामास जीमूतमिव मारुतः ॥ १०८

स तथा पातितस्तेन कपिना पर्वतोत्तमः । बुद्ध्वा तस्य कपेर्वेगं जहर्ष च ननाद च ॥ १०९

तमाकाशगतं वीरमाकाशे समुपस्थितः । प्रीतो हृष्टमना वाक्यमब्रवीन् पर्वतः कपिम् ॥ ११०

मानुषं धारयन् रूपमात्मनः शिखरे स्थितः । दुष्करं कृतवान् कर्म त्वमिदं वानरोत्तम ॥ १११

निपत्य मम शृङ्गेषु विश्रमस्व यथासुखम् । राघवस्य कुले जातैरुदधिः परिवर्धितः ॥ ११२

स त्वां रामहिते युक्तं प्रत्यर्चयति सागरः । कृते च प्रतिकर्तव्यमेष धर्मः सनातनः ॥ ११३

सोऽयं तत्प्रतिकारार्थी त्वत्तः संमानमर्हति । त्वन्निमित्तमनेनाहं बहुमानात्प्रचोदितः ॥ ११४

योजनानां शतं चापि कपिरेष खमाप्लुतः । तव सानुषु विश्रान्तः शेषं प्रक्रमतामिति ॥ ११५

तिष्ठ त्वं हरिशार्दूल मयि विश्रम्य गम्यताम् । तदिदं गन्धवत् स्वादु कन्दमूलफलं बहु ॥ ११६

[3]तदास्वाद्य हरिश्रेष्ठ विश्रम्य श्वो[9] गमिष्यसि । अस्माकमपि संबन्धः कपिमुख्य त्वयास्ति वै ॥ ११७

---

1. मन्युः चित्तवैकृतम् । अतः अवश्यकर्तव्यमकुर्वन् पश्चात् मन्युं गमिष्यसीति भावः।

2. शस्त्रसंकाशं नीलाभम् ।

3. समास्वाद्येति चेत् दृश्यते स पाठः श्लिष्टः ।

१. समाप्लुतः छ.

२. -कुलवर्तिनः च.

३. कुर्वित्यादि उदीरयेदित्यन्तं घ. नास्ति ।

४. वर पुना.

५. इ.मर्धम् ख. नास्ति । अस्य माद्य-मित्यादि विवासनमित्यन्तम् क्वचिन्नास्ति ।

६. वनः क.

७. इदं पद्यं ध. नास्ति ।

८. इदं पद्यं ख. नास्ति ।

९. विश्रान्तोऽनुगमिष्यसि च.

प्रख्यातस्त्रिषु लोकेषु महागुणपरिग्रहः। वेगवन्तः प्लवन्तो ये प्लवगा मारुतात्मज ॥ ११८
तेषां मुख्यतमं मन्ये त्वामहं कपिकुञ्जर। अतिथिः किल पूजार्हः प्राकृतोऽपि विजानता ॥ ११९
धर्मं जिज्ञासमानेन किं पुनर्यादृशो भवान्[1]। त्वं हि देववरिष्ठस्य मारुतस्य महात्मनः ॥ १२०
पुत्रस्तस्यैव वेगेन सदृशः कपिकुञ्जर। पूजिते त्वयि धर्मज्ञ पूजां प्राप्नोति मारुतः ॥ १२१
तस्मात्त्वं पूजनीयो मे शृणु चाप्यत्र कारणम्। पूर्वं कृतयुगे तात पर्वताः पक्षिणोऽभवन् ॥ १२२
तेऽभिजग्मुर्दिशः सर्वा गरुडानिलवेगिनः। ततस्तेषु प्रयातेषु देवसङ्घाः सहर्षिभिः ॥ १२३
भूतानि च भयं जग्मुस्तेषां पतनशङ्कया। ततः क्रुद्धः सहस्राक्षः पर्वतानां शतक्रतुः ॥ १२४
पक्षांश्चिच्छेद वज्रेण तत्र तत्र सहस्रशः। स मामुपगतः क्रुद्धो वज्रमुद्यम्य देवराट् ॥ १२५
ततोऽहं सहसा क्षिप्तः श्वसनेन महात्मना। अस्मिँल्लवणतोये च प्रक्षिप्तः प्लवगोत्तम ॥ १२६
गुप्तपक्षसमग्रश्च[2] तव पित्राभिरक्षितः। ततोऽहं मानयामि त्वां मान्यो हि मम मारुतः ॥ १२७
त्वया मे ह्येष संबन्धः कपिमुख्य महागुणः। अस्मिन्नेवं गते कार्ये सागरस्य ममैव च ॥ १२८
प्रीतिं प्रीतमनाः कर्तुं त्वमर्हसि महाकपे। श्रमं मोक्षय[3] पूजां च गृहाण कपिसत्तम ॥ १२९
प्रीतिं च बहु मन्यस्व प्रीतोऽस्मि तव दर्शनात्। एवमुक्तः कपिश्रेष्ठस्तं नगोत्तममब्रवीत् ॥ १३०
प्रीतोऽस्मि कृतमातिथ्यं मन्युरेषोऽपनीयताम्। त्वरते कार्यकालो मे ह्यहश्च व्यतिवर्तते ॥ १३१
प्रतिज्ञा च मया दत्ता न स्थातव्यमिहान्तरा। इत्युक्त्वा पाणिना शैलमालभ्य हरिपुंगवः ॥ १३२
जगामाकाशमाविश्य वीर्यवान् प्रहसन्निव। स पर्वतसमुद्राभ्यां बहुमानादवेक्षितः ॥ १३३
पूजितश्चोपपन्नाभिराशीर्भिरनिलात्मजः। अथोर्ध्वं दूरमुत्पत्य हित्वा शैलमहार्णवौ[4] ॥ १३४
पितुः पन्थानमास्थाय जगाम विमलेऽम्बरे। ततश्चोर्ध्वगतिं प्राप्य गिरिं तमवलोकयन् ॥ १३५
वायुसूनुर्निरालम्बे जगाम विमलेऽम्बरे[5]। तद्द्वितीयं हनुमतो दृष्ट्वा कर्म सुदुष्करम् ॥ १३६
प्रशशंसुः सुराः सर्वे सिद्धाश्च परमर्षयः। देवताश्चाभवन् हृष्टास्तत्रस्थास्तस्य कर्मणा ॥ १३७
काञ्चनस्य सुनाभस्य सहस्राक्षश्च वासवः। उवाच वचनं श्रीमान् परितोषात् सगद्गदम् ॥ १३८
सुनाभं पर्वतश्रेष्ठं स्वयमेव शचीपतिः। हिरण्यनाभ शैलेन्द्र परितुष्टोऽस्मि ते भृशम् ॥ १३९
अभयं ते प्रयच्छामि तिष्ठ सौम्य यथासुखम्। साह्यं कृतं त्वया सौम्य विक्रान्तस्य हनूमतः ॥ १४०
क्रमतो योजनशतं निर्भयस्य भये सति। रामस्यैष हितायैव[6] याति दाशरथेर्हरिः ॥ १४१
सत्क्रियां कुर्वता तस्य तोषितोऽस्मि भृशं त्वया। ततः प्रहर्षमगमद्विपुलं पर्वतोत्तमः ॥ १४२
देवतानां पतिं दृष्ट्वा परितुष्टं शतक्रतुम्। स वै दत्तवरः शैलो बभूवावस्थितस्तदा ॥ १४३

---

१. त्वादृशो महान् च.
२. गुप्तपक्षः छ.
३. मोचय छ.
४. शैलं महाकपिः क.
५. निरालम्बो जगाम कपिकुञ्जरः पुना. इदं पद्यम् घ. नास्ति।
६. हि दौत्येन छ.

हनूमांश्च मुहूर्तेन व्यतिचक्राम सागरम् । ततो देवाः सगन्धर्वाः सिद्धाश्च परमर्षयः ॥ १४४
अब्रुवन् सूर्यसंकाशां सुरसां नागमातरम् । अयं वातात्मजः श्रीमान् प्लवते सागरोपरि ॥ १४५
हनूमान्नाम तस्य त्वं मुहूर्तं विघ्नमाचर । राक्षसं रूपमास्थाय सुघोरं पर्वतोपमम् ॥ १४६
दंष्ट्राकरालं पिङ्गाक्षं वक्त्रं कृत्वा नभःस्पृशम्[१] । बलमिच्छामहे ज्ञातुं भूयश्चास्य पराक्रमम् ॥ १४७
त्वां विजेष्यत्युपायेन विषादं वा गमिष्यति । एवमुक्ता तु सा देवी दैवतैरभिसत्कृता ॥ १४८
समुद्रमध्ये सुरसा बिभ्रती राक्षसं वपुः । विकृतं च विरूपं च सर्वस्य च भयावहम् ॥ १४९
प्लवमानं हनूमन्तमावृत्येदमुवाच ह । मम भक्ष्यः प्रदिष्टस्त्वमीश्वरैर्वानरर्षभ ॥ १५०
अहं त्वां भक्षयिष्यामि प्रविशेदं ममाननम् । एवमुक्तः सुरसया प्राञ्जलिर्वानरर्षभः ॥ १५१
प्रहृष्टवदनः श्रीमान् सुरसां वाक्यमब्रवीत् । रामो दाशरथिः श्रीमान् प्रविष्टो दण्डकावनम् ॥ १५२
लक्ष्मणेन सह भ्रात्रा वैदेह्या चापि भार्यया । अन्यकार्यविषक्तस्य बद्धवैरस्य राक्षसैः ॥ १५३
तस्य सीता हृता भार्या रावणेन यशस्विनी । तस्याः सकाशं दूतोऽहं गमिष्ये रामशासनात् ॥ १५४
कर्तुमर्हसि रामस्य साह्यं विषयवासिनी । अथवा मैथिलीं दृष्ट्वा रामं चाक्लिष्टकारिणम् ॥ १५५
आगमिष्यामि ते वक्त्रं सत्यं प्रतिशृणोमि ते । एवमुक्ता हनुमता सुरसा कामरूपिणी ॥ १५६
अब्रवीन्नातिवर्तेन्मां कश्चिदेष वरो मम[२] । तं प्रयान्तं समुद्वीक्ष्य सुरसा वाक्यमब्रवीत् ॥ १५७
बलं जिज्ञासमाना वै नागमाता हनूमतः । प्रविश्य वदनं मेऽद्य गन्तव्यं वानरोत्तम ॥ १५८
वर एष पुरा दत्तो मम धात्रेति सत्वरा । व्यादाय वक्त्रं विपुलं स्थिता सा मारुतेः पुरः ॥ १५९
एवमुक्तः सुरसया क्रुद्धो वानरपुंगवः । अब्रवीत् कुरु वै वक्त्रं येन मां विषहिष्यसे ॥ १६०
इत्युक्त्वा सुरसां क्रुद्धो दशयोजनमायताम्[३] । दशयोजनविस्तारो बभूव हनुमांस्तदा ॥ १६१
तं दृष्ट्वा मेघसंकाशं दशयोजनमायतम् । चकार सुरसाप्यास्यं विंशद्योजनमायतम्[४] ॥ १६२
तद्दृष्ट्वा व्यादितं चास्यं वायुपुत्रः सुबुद्धिमान् । दीर्घजिह्वं सुरसया सुघोरं नरकोपमम् ॥ १६३
स संक्षिप्यात्मनः कायं जीमूत इव मारुतिः[५] । तस्मिन् मुहूर्ते हनुमान् बभूवाङ्गुष्ठमात्रकः ॥ १६४
सोऽभिपत्याशु तद्वक्त्रं निष्पत्य च महाजवः । अन्तरिक्षे स्थितः श्रीमानिदं[६] वचनमब्रवीत् ॥ १६५
प्रविष्टोऽस्मि हि ते वक्त्रं दाक्षायणि नमोऽस्तु ते । गमिष्ये यत्र वैदेही सत्यश्चासीद्वरस्तव ॥ १६६

---

१. राक्षसमित्यादि नभःस्पृशमित्यन्तं क. घ. नास्ति ।

२. इदमर्धं ग. नास्ति ।

३. इत्युक्ता सुरसा क्रुद्धा दशयोजनमायती ग. छ.

४. अस्यानन्तरम्—तां दृष्ट्वा विस्तृतास्यां तु वायुपुत्रः सुबुद्धिमान् । अतः परं हनूमांस्तु त्रिंशद्योजनमायतः॥ चकार सुरसा वक्त्रं चत्वारिंशत्तथायतम् । बभूव हनुमान् वीरः पञ्चाशद्योजनोच्छ्रितः ॥ चकार सुरसा वक्त्रं षष्टियोजनमायतम् । तथैव हनुमान् वीरः सप्ततीयोजनोच्छ्रितः॥चकार सुरसा वक्त्रमशीतीयोजनायतम् । हनूमानचलप्रख्यो नवतीयोजनोच्छ्रितः ॥ चकार सुरसा वक्त्रं शतयोजनमायतम् ।—इति ग. च.

५. बभूवाङ्गुष्ठमात्रकः ग. च.

६. प्रहसन्निदम् ग. छ.

तं दृष्ट्वा वदनान्मुक्तं चन्द्रं राहुमुखादिव । अब्रवीत् सुरसा देवी स्वेन रूपेण वानरम् ॥ १६७
अर्थसिद्ध्यै हरिश्रेष्ठ गच्छ सौम्य यथासुखम् । समानयस्व वैदेहीं राघवेण महात्मना ॥ १६८
तत्तृतीयं हनुमतो दृष्ट्वा कर्म सुदुष्करम् । साधु साध्विति भूतानि प्रशशंसुस्तदा हरिम्[1] ॥ १६९
जगामाकाशमाविश्य वेगेन गरुडोपमः । सेविते वारिधाराभिः पतगैश्च[2] निषेविते ॥ १७०
चरिते कैशिकाचार्यैरैरावतनिषेविते । सिंहकुञ्जरशार्दूलपतगोरगवाहनैः ॥ १७१
विमानैः संपतद्भिश्च विमलैः समलंकृते । वज्राशनिसमाघातैः पावकैरुपशोभिते ॥ १७२
कृतपुण्यैर्महाभागैः स्वर्गजिद्भिरलंकृते । वहता हव्यमत्यर्थं सेविते चित्रभानुना ॥ १७३
ग्रहनक्षत्रचन्द्रार्कतारागणविभूषिते । महर्षिगणगन्धर्वनागयक्षसमाकुले ॥ १७४
विविक्ते विमले विश्वे विश्वावसुनिषेविते । देवराजगजाक्रान्ते चन्द्रसूर्यपथे शिवे ॥ १७५
विताने जीवलोकस्य वितते ब्रह्मनिर्मिते । बहुशः सेविते वीरैर्विद्याधरगणैर्वरैः ॥ १७६
जगाम वायुमार्गे च गरुत्मानिव मारुतिः । हनुमान् मेघजालानि प्रकर्षन् मारुतो यथा ॥ १७७
कालागरुसवर्णानि रक्तपीतसितानि च । कपिना कृष्यमाणानि महाभ्राणि चकाशिरे ॥ १७८
प्रविशन्नभ्रजालानि निष्पतंश्च पुनः पुनः । प्रावृषीन्दुरिवाभाति निष्पतन् प्रविशंस्तदा ॥ १७९
प्रदृश्यमानः सर्वत्र हनुमान् मारुतात्मजः । भेजेऽम्बरं निरालम्बं लम्बपक्ष[3] इवाद्रिराट् ॥ १८०
प्लवमानं तु तं दृष्ट्वा सिंहिका नाम राक्षसी । मनसा चिन्तयामास प्रवृद्धा कामरूपिणी ॥ १८१
अद्य दीर्घस्य कालस्य भविष्याम्यहमाशिता । इदं हि मे महत् सत्त्वं चिरस्य वशमागतम् ॥ १८२
इति संचिन्त्य मनसा छायामस्य समाक्षिपत् । छायायां गृह्यमाणायां चिन्तयामास वानरः ॥ १८३
समाक्षिप्तोऽस्मि सहसा पङ्गूकृतपराक्रमः । प्रतिलोमेन वातेन महानौरिव सागरे ॥ १८४
तिर्यगूर्ध्वमधश्चैव वीक्षमाणस्ततः कपिः । ददर्श स महत्[4] सत्त्वमुत्थितं लवणाम्भसः ॥ १८५
तद्दृष्ट्वा चिन्तयामास मारुतिर्विकृताननम् । कपिराजेन कथितं[5] सत्त्वमद्भुतदर्शनम् ॥ १८६
छायाग्राहि महावीर्यं तदिदं नात्र संशयः । स तां बुद्ध्वार्थतत्त्वेन सिंहिकां मतिमान् कपिः ॥ १८७
व्यवर्धत महाकायः प्रावृषीव वलाहकः । तस्य सा कायमुद्वीक्ष्य वर्धमानं महाकपेः ॥ १८८
वक्त्रं प्रसारयामास पातालान्तरसंनिभम् । घनराजीव गर्जन्ती वानरं समभिद्रवत् ॥ १८९
स ददर्श ततस्तस्या विवृतं सुमहन्मुखम् । कायमात्रं च मेधावी मर्माणि च महाकपिः ॥ १९०
स तस्या विवृते वक्त्रे वज्रसंहननः कपिः । संक्षिप्य मुहुरात्मानं निपपात महाबलः ॥ १९१

---

१. अस्यानन्तरम्—स सागरमनाधृष्यमभ्येत्य वरुणालयम्—इति क. ग. च. छ.
२. पन्नगैश्च छ.
३. पक्षयुक्तः पुना.
४. महासत्त्वम् छ.
५. कपिराज्ञा यदाख्यातम् छ.

आस्ये तस्या निमज्जन्तं ददृशुः सिद्धचारणाः । ग्रस्यमानं यथा चन्द्रं पूर्णं पर्वणि राहुणा ॥ १९२

ततस्तस्या नखैस्तीक्ष्णैर्मर्माण्युत्कृत्य वानरः । उत्पपाताथ वेगेन मनःसंपातविक्रमः ॥ १९३

तां तु दृष्ट्या च धृत्या च दाक्षिण्येन निपात्य हि । स कपिप्रवरो वेगाद्ववृधे पुनरात्मवान् ॥ १९४

हृतहृत् सा हनुमता पपात विधुराम्भसि । स्वयंभुवेव हनुमान् सृष्टस्तस्या विनाशने[1] ॥ १९५

तां हतां वानरेणाशु पतितां वीक्ष्य सिंहिकाम् । भूतान्याकाशचारीणि तमूचुः प्लवगोत्तमम् ॥ १९६

भीममद्य कृतं कर्म महत् सत्त्वं त्वया हतम् । साधयार्थमभिप्रेतमरिष्टं प्लवतां वर ॥ १९७

यस्य त्वेतानि चत्वारि वानरेन्द्र यथा तव । स्मृतिर्धृतिर्मतिर्दाक्ष्यं[2] स कर्मसु न सीदति ॥ १९८

स तैः संभावितः पूज्यैः प्रतिपन्नप्रयोजनः । जगामाकाशमाविश्य पन्नगाशनवत् कपिः ॥ १९९

प्राप्तभूयिष्ठपारस्तु सर्वतः प्रतिलोकयन् । योजनानां शतस्यान्ते वनराजिं ददर्श सः ॥ २००

ददर्श च पतन्नेव विविधद्रुमभूषितम् । द्वीपं शाखामृगश्रेष्ठो मलयोपवनानि च ॥ २०१

सागरं सागरानूपं सागरानूपजान् द्रुमान् । सागरस्य च पत्नीनां मुखान्यपि विलोकयन् ॥ २०२

स महामेघसंकाशं समीक्ष्यात्मानमात्मवान् । निरुन्धन्तमिवाकाशं चकार मतिमान् मतिम् ॥ २०३

कायवृद्धिं प्रवेगं च मम दृष्ट्वैव राक्षसाः । मयि कौतूहलं कुर्युरिति मेने महाकपिः ॥ २०४

ततः शरीरं संक्षिप्य तन्महीधरसंनिभम् । पुनः प्रकृतिमापेदे वीतमोह इवात्मवान् ॥ २०५

तद्रूपमतिसंक्षिप्य हनूमान् प्रकृतौ स्थितः । त्रीन् क्रमानिव विक्रम्य बलिवीर्यहरो हरिः ॥ २०६

स चारुनानाविधरूपधारी परं समासाद्य समुद्रतीरम् ।
परैरशक्यं[3] [1]प्रतिपन्नरूपः समीक्षितात्मा[4] समवेक्षितार्थः ॥ २०७

ततः स लम्बस्य गिरेः समृद्धे विचित्रकूटे निपपात कूटे ।
सकेतकोद्दालकनारिकेले महाद्रिकूटप्रतिमो महात्मा ॥ २०८

ततस्तु संप्राप्य समुद्रतीरं समीक्ष्य लङ्कां गिरिराजमूर्ध्नि ।
कपिस्तु तस्मिन्निपपात पर्वते विधूय रूपं व्यथयन् मृगद्विजान् ॥ २०९

स सागरं दानवपन्नगायुतं बलेन विक्रम्य महोर्मिमालिनम् ।
निपत्य तीरे च महोदधेस्तदा ददर्श लङ्काममरावतीमिव ॥ २१०

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम

सुन्दरकाण्डे सागरलङ्घनं नाम प्रथमः सर्गः

---

1. परैः तरितुमशक्यं नीरमामाद्येत्यन्वयः । 'परैरशङ्क्यप्रतिपन्नरूपः' इति चेत् दृश्यते तदा तस्मिन् पाठे तरितुमित्याद्यध्याहारं विनैव योजना संभवति ।

१. इदमर्धम् च. छ. नास्ति.
२. धृतिर्दृष्टिर्मतिर्दाक्ष्यं च. छ.
३. अशक्यः च. छ.
४. समीक्षितासौ छ.

## द्वितीयः सर्गः

### निशागमप्रतीक्षा

स सागरमनाधृष्यमतिक्रम्य महाबलः । त्रिकूटशिखरे लङ्कां स्थितां स्वस्थो ददर्श ह ॥ १
ततः पादपमुक्तेन पुष्पवर्षेण वीर्यवान् । अभिवृष्टः स्थितस्तत्र बभौ पुष्पमयो यथा ॥ २
योजनानां शतं श्रीमांस्तीर्त्वाप्युत्तमविक्रमः[1] । अनिःश्वसन् कपिस्तत्र न ग्लानिमधिगच्छति ॥ ३
शतान्यहं योजनानां क्रमेयं सुबहून्यपि । किं पुनः सागरस्यान्तं संख्यातं शतयोजनम् ॥ ४
स तु वीर्यवतां श्रेष्ठः प्लवतामपि चोत्तमः । जगाम वेगवाँल्लङ्कां लङ्घयित्वा महोदधिम् ॥ ५
शाद्वलानि च नीलानि गन्धवन्ति वनानि च । गण्डवन्ति[2] च मध्येन जगाम नगवन्ति च ॥ ६
शैलांश्च तरुभिश्छन्नान् वनराजीश्च पुष्पिताः । अभिचक्राम तेजस्वी हनूमान् प्लवगर्षभः ॥ ७
स तस्मिन्नचले तिष्ठन् वनान्युपवनानि च । स नगाग्रे स्थितां लङ्कां ददर्श पवनात्मजः ॥ ८
सरलान् कर्णिकारांश्च खर्जूरांश्च सुपुष्पितान् । प्रियालान् मुचुलिन्दांश्च कुटजान् केतकानपि ॥ ९
प्रियङ्गून् गन्धपूर्णांश्च नीपान् सप्तच्छदांस्तथा । असनान् कोविदारांश्च करवीरांश्च पुष्पितान्[3] ॥१०
पुष्पभारनिबद्धांश्च तथा मुकुलितानपि । पादपान् विहगाकीर्णान् पवनाधूतमस्तकान् ॥ ११
हंसकारण्डवाकीर्णा वापीः पद्मोत्पलायुताः । आक्रीडान् विविधान् रम्यान् विविधांश्च जलाशयान् ॥
संततान् विविधैर्वृक्षैः सर्वर्तुफलपुष्पितैः । उद्यानानि च रम्याणि ददर्श कपिकुञ्जरः ॥ १३
समासाद्य च लक्ष्मीवाँल्लङ्कां रावणपालिताम् । परिखाभिः सपद्माभिः सोत्पलाभिरलंकृताम् ॥ १४
सीतापहरणात्तेन रावणेन सुरक्षिताम् । समन्ताद्विचरद्भिश्च राक्षसैः कामरूपिभिः[4] ॥ १५
काञ्चनेनावृतां रम्यां प्राकारेण महापुरीम् । गृहैश्च ग्रहसंकाशैः[5] शारदाम्बुदसंनिभैः ॥ १६
पाण्डराभिः प्रतोलीभिरुच्चाभिरभिसंवृताम् । अट्टालकशताकीर्णां पताकाध्वजमालिनीम् ॥ १७
तोरणैः काञ्चनैर्दीप्तां लतापङ्क्तिविचित्रितैः । ददर्श हनुमाँल्लङ्कां दिवि देवपुरीमिव ॥ १८
गिरिमूर्ध्नि स्थितां लङ्कां पाण्डरैर्भवनैः शुभैः । स ददर्श कपिः श्रीमान् पुरमाकाशगं यथा ॥ १९
पालितां राक्षसेन्द्रेण निर्मितां विश्वकर्मणा । प्लवमानामिवाकाशे ददर्श हनुमान् पुरीम् ॥ २०
वप्रप्राकारजघनां विपुलाम्बुवनाम्बराम्[6] । शतघ्नीशूलकेशान्तामट्टालकवतंसकाम् ॥ २१
मनसेव कृतां लङ्कां निर्मितां विश्वकर्मणा । द्वारमुत्तरमासाद्य चिन्तयामास वानरः ॥ २२
कैलासनिलयप्रख्यमालिखन्तमिवाम्बरम् । डीयमानमिवाकाशमुच्छ्रितैर्भवनोत्तमैः ॥ २३

---

१. अमितविक्रमः छ.
२. पुष्पवन्ति छ.
३. गण्डवन्तीत्यादि पुष्पितानित्यन्तम् ख. नास्ति ।
४. उग्रधन्विभिः च.
५. गिरिसंकाशैः ख. ग. छ.
६. नवाम्बरां च. छ.

संपूर्णां राक्षसैर्घोरैर्नागैर्भोगवतीमिव । अचिन्त्यां सुकृतां स्पष्टां कुबेराध्युषितां पुरा ॥ २४
दंष्ट्रिभिर्बहुभिः शूरैः शूलपट्टिशपाणिभिः । रक्षितां राक्षसैर्घोरैर्गुहामाशीविषैरिव ॥ २५
तस्याश्च महतीं गुप्तिं सागरं च समीक्ष्य सः । रावणं च रिपुं घोरं चिन्तयामास वानरः ॥ २६
आगत्यापीह हरयो भविष्यन्ति निरर्थकाः । न हि युद्धेन वै लङ्का शक्या जेतुं सुरैरपि ॥ २७
इमां तु विषमां दुर्गां लङ्कां रावणपालिताम् । प्राप्यापि स महाबाहुः किं करिष्यति राघवः ॥ २८
अवकाशो न सान्त्वस्य राक्षसेष्वभिगम्यते । न दानस्य न भेदस्य नैव युद्धस्य दृश्यते ॥ २९
चतुर्णामेव हि गतिर्वानराणां महात्मनाम् । वालिपुत्रस्य नीलस्य मम राज्ञश्च धीमतः ॥ ३०
यावज्जानामि वैदेहीं यदि जीवति वा न वा । तत्रैव चिन्तयिष्यामि दृष्ट्वा तां जनकात्मजाम् ॥ ३१
ततः स चिन्तयामास मुहूर्तं कपिकुञ्जरः । गिरिशृङ्गे स्थितस्तस्मिन् रामस्याभ्युदये रतः ॥ ३२
अनेन रूपेण मया न शक्या रक्षसां पुरी । प्रवेष्टुं राक्षसैर्गुप्ता क्रूरैर्बलसमन्वितैः ॥ ३३
उग्रौजसो महावीर्या बलवन्तश्च राक्षसाः । वञ्चनीया मया सर्वे जानकीं परिमार्गता ॥ ३४
लक्ष्यालक्ष्येण रूपेण रात्रौ लङ्कापुरी[2] मया । प्रवेष्टुं प्राप्तकालो मे कृत्यं साधयितुं महत् ॥ ३५
तां पुरीं तादृशीं दृष्ट्वा दुराधर्षां सुरासुरैः । हनूमांश्चिन्तयामास विनिःश्वस्य मुहुर्मुहुः ॥ ३६
केनोपायेन पश्येयं मैथिलीं जनकात्मजाम् । अदृष्टो राक्षसेन्द्रेण रावणेन दुरात्मना ॥ ३७
न विनश्येत् कथं कार्यं रामस्य विदितात्मनः । एकामेकश्च पश्येयं रहिते जनकात्मजाम् ॥ ३८
भूताश्चार्था विपद्यन्ते देशकालविरोधिताः । विक्लवं दूतमासाद्य तमः सूर्योदये यथा ॥ ३९
अर्थानर्थान्तरे बुद्धिर्निश्चितापि न शोभते । घातयन्ति हि कार्याणि दूताः पण्डितमानिनः ॥ ४०
न विनश्येत् कथं कार्यं वैक्लव्यं न कथं भवेत् । लङ्घनं च समुद्रस्य कथं नु न भवेद्वृथा ॥ ४१
मयि दृष्टे तु रक्षोभी रामस्य विदितात्मनः । भवेद्व्यर्थमिदं कार्यं रावणानर्थमिच्छतः ॥ ४२
न हि शक्यं क्वचित् स्थातुमविज्ञातेन राक्षसैः । अपि राक्षसरूपेण किमुतान्येन केनचित् ॥ ४३
वायुरप्यत्र नाज्ञातश्चरेदिति मतिर्मम । न ह्यस्त्यविदितं किंचिद्राक्षसानां बलीयसाम् ॥ ४४
इहाहं यदि तिष्ठामि स्वेन रूपेण संवृतः । विनाशमुपयास्यामि भर्तुरर्थश्च हीयते ॥ ४५
तदहं स्वेन रूपेण रजन्यां ह्रस्वतां गतः । लङ्कामभिगमिष्यामि राघवस्यार्थसिद्धये ॥ ४६
रावणस्य पुरीं रात्रौ प्रविश्य सुदुरासदाम् । विचिन्वन् भवनं सर्वं द्रक्ष्यामि जनकात्मजाम् ॥ ४७
इति संचिन्त्य हनुमान् सूर्यस्यास्तमयं कपिः । आचकाङ्क्षे तदा वीरो वैदेह्या दर्शनोत्सुकः ॥ ४८
सूर्ये चास्तं गते रात्रौ देहं संक्षिप्य मारुतिः । पृषदंशकमात्रः सन् बभूवाद्भुतदर्शनः ॥ ४९
प्रदोषकाले हनुमांस्तूर्णमुत्प्लुत्य वीर्यवान् । प्रविवेश पुरीं रम्यां सुविभक्तमहापथाम् ॥ ५०

---

१. नागैरित्यादि घोरैरित्यन्तम् ति. नास्ति । २. लङ्कापुरी. क. ख. ग. घ. च. छ.

प्रासादमालाविततां स्तम्भैः काञ्चनराजतैः । शातकुम्भमयैर्जालैर्गन्धर्वनगरोपमाम् ॥ ५१

सप्तभौमाष्टभौमैश्च स ददर्श महापुरीम् । तलैः स्फाटिकसंकीर्णैः कार्तस्वरविभूषितैः ॥ ५२

वैदूर्यमणिचित्रैश्च मुक्ताजालविराजितैः । तलैः शुशुभिरे तानि भवनान्यत्र रक्षसाम् ॥ ५३

काञ्चनानि विचित्राणि तोरणानि च रक्षसाम् । लङ्कामुद्द्योतयामासुः सर्वतः समलंकृताम् ॥ ५४

अचिन्त्यामद्भुताकारां दृष्ट्वा लङ्कां महाकपिः । आसीद्विषण्णो हृष्टश्च वैदेह्या दर्शनोत्सुकः ॥ ५५

स पाण्डरोद्विद्धविमानमालिनीं महार्हजाम्बूनदजालतोरणाम् ।
यशस्विनीं रावणबाहुपालितां क्षपाचरैर्भीमबलैः समावृताम् ॥ ५६

चन्द्रोऽपि साचिव्यमिवास्य कुर्वंस्तारागणैर्मध्यगतो विराजन् ।
ज्योत्स्नावितानेन वितत्य लोकमुत्तिष्ठते नैकसहस्ररश्मिः ॥ ५७

शङ्खप्रभं क्षीरमृणालवर्णमुद्गच्छमानं व्यवभासमानम् ।
ददर्श चन्द्रं स कपिप्रवीरः पोप्लूयमानं सरसीव हंसम् ॥ ५८

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
सुन्दरकाण्डे निशागमप्रतीक्षा नाम द्वितीयः सर्गः

---

## तृतीयः सर्गः

### लङ्काधिदेवताविजयः

स लम्बशिखरे लम्बे लम्बतोयदसंनिभे । सत्त्वमास्थाय मेधावी हनुमान् मारुतात्मजः ॥ १

निशि लङ्कां महासत्त्वो विवेश कपिकुञ्जरः । रम्यकाननतोयाढ्यां पुरीं रावणपालिताम् ॥ २

शारदाम्बुधरप्रख्यैर्भवनैरुपशोभिताम् । सागरोपमनिर्घोषां सागरानिलसेविताम् ॥ ३

सुपुष्टबलसंगुप्तां यथैव विटपावतीम् । चरुतोरणनिर्यूहां पाण्डरद्वारतोरणाम् ॥ ४

भुजगाचरितां गुप्तां शुभां भोगवतीमिव । तां सविद्युद्घनाकीर्णां ज्योतिर्गणनिषेविताम् ॥ ५

मन्दमारुतसंचारां[1] यथा चाप्यमरावतीम्[1] । शातकुम्भेन महता प्राकारेणाभिसंवृताम् ॥ ६

किङ्किणीजालघोषाभिः पताकाभिरलंकृताम् । आसाद्य सहसा हृष्टः प्राकारमभिपेदिवान् ॥ ७

विस्मयाविष्टहृदयः पुरीमालोक्य सर्वतः । जाम्बूनदमयैर्द्वारैर्वैदूर्यकृतवेदिकैः ॥ ८

वज्रस्फटिकमुक्ताभिर्मणिकुट्टिमभूषितैः । तप्तहाटकनिर्यूहै राजतामलपाण्डरैः ॥ ९

---

1. विद्युदित्यादिविशेषणत्रयबलात् लङ्काया विशेषणमिति बोध्यम् । विषदौपम्यं व्यङ्ग्यम् । शातकुम्भेनेत्याद्यमरावती-

१. चण्डमारुतनिर्ह्रादां यथेन्द्रस्यामरावतीं प्र.

वैदूर्यतलसोपानैः स्फाटिकान्तरपांसुभिः । चारुसंजवनोपेतैः खमिवोत्पतितैः शुभैः ॥ १०

क्रौञ्चबर्हिणसंघुष्टे राजहंसनिषेवितैः । तूर्याभरणनिर्घोषैः सर्वतः प्रतिनादिताम् ॥ ११

[1]वस्वोकसाराप्रतिमां समीक्ष्य नगरीं ततः । खमिवोत्पतितां लङ्कां जहर्ष हनुमान् कपिः ॥ १२

तां समीक्ष्य पुरीं लङ्कां राक्षसाधिपतेः शुभाम् । अनुत्तमामृद्धिमतीं चिन्तयामास वीर्यवान् ॥ १३

नेयमन्येन नगरी शक्या धर्षयितुं बलात् । रक्षिता रावणबलैरुद्यतायुधधारिभिः ॥ १४

कुमुदाङ्गदयोर्वापि सुषेणस्य महाकपेः । प्रसिद्धेयं भवेद्भूमिर्मैन्दद्विविदयोरपि ॥ १५

विवस्वतस्तनूजस्य हरेश्च कुशपर्वणः । ऋक्षस्य केतुमालस्य मम चैव गतिर्भवेत् ॥ १६

समीक्ष्य च महाबाहू राघवस्य पराक्रमम् । लक्ष्मणस्य च विक्रान्तमभवत् प्रीतिमान् कपिः ॥ १७

तां[2] रत्नवसनोपेतां गोष्ठागारावतंसकाम् । यन्त्रागारस्तनीमृद्धां प्रमदामिव भूषिताम् ॥ १८

तां नष्टतिमिरां दीपैर्भास्वरैश्च महागृहैः । नगरीं राक्षसेन्द्रस्य ददर्श स महाकपिः ॥ १९

अथ सा हरिशार्दूलं प्रविशन्तं महाबलम् । नगरी स्वेन रूपेण ददर्श पवनात्मजम् ॥ २०

सा तं हरिवरं दृष्ट्वा लङ्का रावणपालिता[१] । स्वयमेवोत्थिता तत्र विकृताननदर्शना ॥ २१

पुरस्तात् कपिवर्यस्य वायुसूनोरतिष्ठत । मुञ्चमाना महानादमब्रवीत् पवनात्मजम् ॥ २२

कस्त्वं केन च कार्येण इह प्राप्तो वनालय । कथयस्वेह यत्तत्त्वं यावत् प्राणा धरन्ति ते ॥ २३

न शक्या खल्वियं लङ्का प्रवेष्टुं वानर त्वया । रक्षिता रावणबलैरभिगुप्ता समन्ततः[२] ॥ २४

अथ तामब्रवीद्वीरो हनुमानग्रतः स्थिताम् । कथयिष्यामि ते तत्त्वं यन्मां त्वं परिपृच्छसि ॥ २५

का त्वं विरूपनयना पुरद्वारेऽवतिष्ठसे । किमर्थं चापि मां रुद्ध्वा निर्भर्त्सयसि दारुणा ॥ २६

हनूमद्वचनं श्रुत्वा लङ्का सा कामरूपिणी । उवाच वचनं क्रुद्धा परुषं पवनात्मजम् ॥ २७

अहं राक्षसराजस्य रावणस्य महात्मनः । आज्ञाप्रतीक्षा दुर्धर्षा रक्षामि नगरीमिमाम् ॥ २८

न शक्या मामवज्ञाय प्रवेष्टुं नगरी त्वया । अद्य प्राणैः परित्यक्तः स्वप्स्यसे निहतो मया ॥ २९

अहं हि नगरी लङ्का स्वयमेव प्लवङ्गम । सर्वतः परिरक्षामि ह्येतत्ते कथितं मया ॥ ३०

लङ्काया वचनं श्रुत्वा हनूमान् मारुतात्मजः । यत्नवान् स हरिश्रेष्ठः स्थितः शैल इवापरः ॥ ३१

स तां स्त्रीरूपविकृतां दृष्ट्वा वानरपुंगवः । आबभाषेऽथ मेधावी सत्त्ववान् प्लवगर्षभः ॥ ३२

द्रक्ष्यामि नगरीं लङ्कां साट्टप्राकारतोरणाम् । इत्यर्थमिह संप्राप्तः परं कौतूहलं हि मे ॥ ३३

वानान्युपवनानीह लङ्कायाः काननानि च । सर्वतो गृहमुख्यानि द्रष्टुमागमनं हि मे ॥ ३४

---

1. वस्वोकसारा अलका ।

2. तामित्यादि । समनन्तरश्लोकस्थं ददर्शेति पदमिहापि संबध्यते । तां प्रसिद्धां तां लङ्कामित्य- पुनरुक्तार्थकरणे एकवाक्यतयैव वा श्लोकद्वयं योज्यम् ।

१. सा कामरूपिणी ग.

२. इदं पद्यम् क. नास्ति ।

तस्य तद्वचनं श्रुत्वा लङ्का सा कामरूपिणी । भूय[1] एव पुनर्वाक्यं बभाषे परुषाक्षरम् ॥ ३५
मामनिर्जित्य दुर्बुद्धे राक्षसेश्वरपालिता । न शक्यमद्य ते द्रष्टुं पुरीयं वानराधम ॥ ३६
ततः स हरिशार्दूलस्तामुवाच निशाचरीम् । दृष्ट्वा पुरीमिमां भद्रे पुनर्यास्ये यथागतम् ॥ ३७
ततः कृत्वा महानादं सा वै लङ्का भयावहम् । तलेन वानरश्रेष्ठं ताडयामास वेगिता ॥ ३८
ततः स कपिशार्दूलो लङ्कया ताडितो भृशम् । ननाद सुमहानादं वीर्यवान् पवनात्मजः ॥ ३९
ततः संवर्तयामास वामहस्तस्य सोऽङ्गुलीः । मुष्टिनाभिजघानैनां हनुमान् क्रोधमूर्छितः ॥ ४०
स्त्री चेति मन्यमानेन नातिक्रोधः स्वयं कृतः । सा तु तेन प्रहारेण विह्वलाङ्गी निशाचरी ॥ ४१
पपात सहसा भूमौ विकृताननदर्शना । ततस्तु हनुमान् प्राज्ञस्तां दृष्ट्वा विनिपातिताम् ॥ ४२
कृपां चकार तेजस्वी मन्यमानः स्त्रियं तु ताम् । ततो वै भृशसंविग्ना लङ्का सा गद्गदाक्षरम् ॥ ४३
उवाच गर्वितं[1] वाक्यं हनूमन्तं प्लवङ्गमम् । प्रसीद सुमहाबाहो त्रायस्व हरिसत्तम ॥ ४४
समये सौम्य तिष्ठन्ति सत्त्ववन्तो महाबलाः । अहं तु नगरी लङ्का स्वयमेव प्लवङ्गम ॥ ४५
निर्जिताहं त्वया वीर विक्रमेण महाबल । इदं च तथ्यं शृणु वै ब्रुवत्या मे हरीश्वर ॥ ४६
स्वयंभुवा पुरा दत्तं वरदानं यथा मम । यदा त्वां वानरः कश्चिद्विक्रमाद्वशमानयेत् ॥ ४७
तदा त्वया हि विज्ञेयं रक्षसां भयमागतम् । स हि मे समयः सौम्यः प्राप्तोऽद्य तव दर्शनात् ॥ ४८
स्वयंभुविहितः सत्यो न तस्यास्ति व्यतिक्रमः । सीतानिमित्तं राज्ञस्तु रावणस्य दुरात्मनः ॥ ४९
रक्षसां चैव सर्वेषां विनाशः समुपस्थितः । तत् प्रविश्य हरिश्रेष्ठ पुरीं रावणपालिताम् ॥ ५०
विधत्स्व सर्वकार्याणि यानि यानीह वाञ्छसि ॥

प्रविश्य शापोपहतां हरीश्वर पुरीं शुभां राक्षसमुख्यपालिताम् ।
यदृच्छया त्वं जनकात्मजां सतीं विमार्ग सर्वत्र गतो यथासुखम् ॥ ५१

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
सुन्दरकाण्डे लङ्काधिदेवताविजयो नाम तृतीयः सर्गः

---

1. भूय एवेति । श्रुत्वेति पूर्वत्रान्वेति । तस्य हनूमतः तत् जिज्ञासितार्थस्यानभिधायकमेव वचनं द्वितीयवारमपि श्रुत्वेत्यर्थः । लङ्का हि प्रथममेकवारं 'कस्त्वं केन च कार्येण' इति स्वकीयप्रश्नानमुरूप हनूमतः सकाशात् 'का त्वं विरूपनयना' इति प्रतिप्रश्नमशृणोत् । एवं हनूमता पृष्टा च सा स्वकं वृत्तान्तं यथावदुपवर्ण्य 'एतत्ते कथितं मया' इत्युपसंजहार । मया तावत् सर्वमुक्तम्; त्वं पुनर्यत् पृष्टोऽसि कस्त्वमिति, यच्च प्रतिज्ञातवानासि 'कथयिष्यामि ते तत्त्वम्' इति तद्वक्तुमर्हसीति उपसंहाराभिप्रायः । तथा द्वितीयपर्यायेऽपि प्रश्नविरूपमेव किमपि प्रत्युच्यमाना पुनः क्रुद्धा सती परुषाक्षरं बभाषे इति संगमनीयम् । व्याख्यातृभिस्तु भूयः पुनः बभाषे इति यथाश्रुतमेव योजयित्वा पुनरुक्तिपरिहाराय भूयोऽतिशयेन परुषाक्षरं बभाषे इति विवृतम् ।

१. उवाचागर्वितं च.

## चतुर्थः सर्गः

### लङ्कापुरीप्रवेशः

स निर्जित्य पुरीं श्रेष्ठां लङ्कां तां कामरूपिणीम् । विक्रमेण महातेजा हनूमान् कपिसत्तमः ॥ १
अद्वारेण महाबाहुः प्राकारमभिपुप्लुवे । निशि लङ्कां महासत्त्वो विवेश कपिकुञ्जरः[१] ॥ २
प्रविश्य नगरीं लङ्कां कपिराजहितंकरः । चक्रेऽथ पादं सव्यं च शत्रूणां स तु मूर्धनि ॥ ३
प्रविष्टः सत्त्वसंपन्नो निशायां मारुतात्मजः । स महापथमास्थाय मुक्तपुष्पविराजितम् ॥ ४
ततस्तु तां पुरीं लङ्कां रम्यामभिययौ कपिः । हसितोत्कृष्टनिनदैस्तूर्यघोषपुरःसरैः ॥ ५
वज्राङ्कुशनिकाशैश्च वज्रजालविभूषितैः । गृहमुख्यैः पुरी रम्या बभासे द्यौरिवाम्बुदैः ॥ ६
प्रजज्वाल तदा लङ्का रक्षोगणगृहैः शुभैः[२] । सिताभ्रसदृशैश्चित्रैः पद्मस्वस्तिकसंस्थितैः ॥ ७
वर्धमानगृहैश्चापि सर्वतः सुविभूषिता । तां चित्रमाल्याभरणां कपिराजहितंकरः ॥ ८
राघवार्थं चरन् श्रीमान् ददर्श च ननन्द च । भवनाद्भवनं गच्छन् ददर्श पवनात्मजः ॥ ९
विविधाकृतिरूपाणि भवनानि ततस्ततः । शुश्राव मधुरं गीतं त्रिस्थानस्वरभूषितम् ॥ १०
स्त्रीणां मदसमृद्धानां दिवि चाप्सरसामिव । शुश्राव काञ्चीनिनदं नूपुराणां च निःस्वनम् ॥ ११
सोपाननिनदांश्चैव भवनेषु महात्मनाम् । आस्फोटितनिनादांश्च क्ष्वेलितांश्च ततस्ततः ॥ १२
शुश्राव जपतां तत्र मन्त्रान् रक्षोगृहेषु वै । स्वाध्यायनिरतांश्चैव यातुधानान् ददर्श सः ॥ १३
रावणस्तवसंयुक्तान् गर्जतो राक्षसानपि । राजमार्गं समावृत्य स्थितं रक्षोबलं महत् ॥ १४
ददर्श मध्यमे गुल्मे राक्षसस्य चरान् बहून् । दीक्षिताञ्जटिलान् मुण्डान् गोऽजिनाम्बरवाससः[३] ॥
दर्भमुष्टिप्रहरणानग्निकुण्डायुधांस्तथा । कूटमुद्गरपाणींश्च दण्डायुधधरानपि ॥ १६
एकाक्षानेककर्णांश्च लम्बोदरपयोधरान् । करालान् भुग्नवक्त्रांश्च विकटान् वामनांस्तथा ॥ १७
धन्विनः खड्गिनश्चैव शतघ्नीमुसलायुधान् । परिघोत्तमहस्तांश्च विचित्रकवचोज्ज्वलान् ॥ १८
नातिस्थूलान्नातिकृशान्नातिदीर्घातिह्रस्वकान् । नातिगौरान्नातिकृष्णान्नातिकुब्जान्न वामनान् ॥ १९
विरूपान् बहुरूपांश्च सुरूपांश्च सुवर्चसः । पताकाध्वजिनश्चैव ददर्श विविधायुधान् ॥ २०
शक्तिवृक्षायुधांश्चैव पट्टिशाशनिधारिणः । क्षेपणीपाशहस्तांश्च ददर्श स महाकपिः ॥ २१
स्रग्विणस्त्वनुलिप्तांश्च वराभरणभूषितान् । नानावेषसमायुक्तान् यथास्वैरगतान् बहून् ॥ २२
तीक्ष्णशूलधरांश्चैव वज्रिणश्च महाबलान् । शतसाहस्रमव्यग्रमारक्षं मध्यमं कपिः ॥ २३
रक्षोऽधिपतिनिर्दिष्टं ददर्शान्तःपुराग्रतः[४] । स तदा तद्गृहं दृष्ट्वा महाहाटकतोरणम् ॥ २४

---

१ इदमर्धम् च. नास्ति ।
२. इदमर्धम् ख. नास्ति ।
३. अस्यानन्तरम्—शास्त्रपाठरतांस्तत्र यातुधानान् ददर्श सः—इति क.
४. अस्यानन्तरम्—वायुसूनुस्तदा बाढं राक्षसाधिपवेश्मनः । वीथ्यां वीथ्यां गृहं वावचावत्सर्वं ददर्श सः ॥—इति क.

राक्षसेन्द्रस्य विख्यातमद्रिमूर्ध्नि प्रतिष्ठितम् । पुण्डरीकावतंसाभिः परिखाभिः समावृतम् ॥ २५
प्राकारावृतमत्यन्तं ददर्श स महाकपिः । त्रिविष्टपनिभं दिव्यं दिव्यनादविनादितम् ॥ २६
वाजिहेषितसंघुष्टं नादितं भूषणैस्तथा । रथैर्यानैर्विमानैश्च तथा गजहयैः शुभैः ॥ २७
वारणैश्च चतुर्दन्तैः श्वेताभ्रनिचयोपमैः । भूषितं रुचिरद्वारं मत्तैश्च मृगपक्षिभिः ॥ २८
रक्षितं सुमहावीर्यैर्यातुधानैः सहस्रशः । राक्षसाधिपतेर्गुप्तमाविवेश गृहं कपिः ॥ २९

सहेमजाम्बूनदचक्रवालं महार्हमुक्तामणिभूषितान्तम् ॥
परार्ध्यकालागरुचन्दनाक्तं स रावणान्तःपुरमाविवेश ॥ ३०

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
सुन्दरकाण्डे लङ्कापुरीप्रवेशो नाम चतुर्थः सर्गः

---

## पञ्चमः सर्गः

### भवनविचयः

ततः स मध्यं गतमंशुमन्तं ज्योत्स्नावितानं महदुद्वमन्तम् ।
ददर्श धीमान् दिवि भानुमन्तं गोष्ठे वृषं मत्तमिव भ्रमन्तम् ॥ १
लोकस्य पापानि विनाशयन्तं महोदधिं चापि समेधयन्तम् ।
भूतानि सर्वाणि विराजयन्तं ददर्श शीतांशुमथाभियान्तम् ॥ २
या भाति लक्ष्मीर्भुवि मन्दरस्था तथा प्रदोषेषु च सागरस्था ।
तथैव तोयेषु च पुष्करस्था रराज सा चारुनिशाकरस्था ॥ ३
हंसो यथा राजतपञ्जरस्थः सिंहो यथा मन्दरकन्दरस्थः ।
वीरो यथा गर्वितकुञ्जरस्थश्चन्द्रोऽपि बभ्राज तथाम्बरस्थः ॥ ४
स्थितः ककुद्मानिव तीक्ष्णशृङ्गो महाचलः श्वेत इवोच्चशृङ्गः ।
हस्तीव जाम्बूनदबद्धशृङ्गो रराज चन्द्रः परिपूर्णशृङ्गः ॥ ५
विनष्टशीताम्बुतुषारपङ्को महाग्रहग्राहविनष्टपङ्कः ।
प्रकाशलक्ष्म्याश्रयनिर्मलाङ्को रराज चन्द्रो भगवाञ्शशाङ्कः ॥ ६
शिलातलं प्राप्य यथा मृगेन्द्रो महारणं प्राप्य यथा गजेन्द्रः ।
राज्यं समासाद्य यथा नरेन्द्रस्तथा प्रकाशो विरराज चन्द्रः ॥ ७

प्रकाशचन्द्रोदयनष्टदोषः प्रवृद्धरक्षःपिशिताशदोषः ।
रामाभिरामेरितचित्तदोषः स्वर्गप्रकाशो भगवान् प्रदोषः ॥ ८

तन्त्रीस्वनाः कर्णसुखाः प्रवृत्ताः स्वपन्ति नार्यः पतिभिः सुवृत्ताः ।
नक्तंचराश्चापि तथा प्रवृत्ता विहर्तुमत्यद्भुतरौद्रवृत्ताः ॥ ९

मत्तप्रमत्तानि समाकुलानि रथाश्वभद्रासनसंकुलानि ।
वीरश्रिया चापि समाकुलानि ददर्श धीमान् स कपिः कुलानि ॥ १०

परस्परं चाधिकमाक्षिपन्ति भुजांश्च पीनानधिविक्षिपन्ति ।
मत्तप्रलापानधिविक्षिपन्ति मत्तानि चान्योन्यमधिक्षिपन्ति ॥ ११

रक्षांसि वक्षांसि च विक्षिपन्ति गात्राणि कान्तासु च विक्षिपन्ति ।
रूपाणि चित्राणि च विक्षिपन्ति दृढानि चापानि च विक्षिपन्ति ॥ १२

ददर्श कान्ताश्च समालपन्त्यस्तथापरास्तत्र पुनः स्वपन्त्यः ।
सुरूपवक्त्राश्च तथा हसन्त्यः क्रुद्धाः पराश्चापि विनिःश्वसन्त्यः ॥ १३

महागजैश्चापि तथा नदद्भिः सुपूजितैश्चापि तथा सुसद्भिः ।
रराज वीरैश्च विनिःश्वसद्भिर्ह्रदो भुजङ्गैरिव निःश्वसद्भिः ॥ १४

बुद्धिप्रधानान् रुचिराभिधानान् संश्रद्दधानाञ्जगतः प्रधानान् ।
नानाविधानान् रुचिराभिधानान् ददर्श तस्यां पुरि यातुधानान् ॥ १५

ननन्द दृष्ट्वा च स तान् सुरूपान्नानागुणानात्मगुणानुरूपान् ।
विद्योतमानान् स तदानुरूपान् ददर्श कांश्चिच्च पुनर्विरूपान् ॥ १६

ततो वरार्हाः सुविशुद्धभावास्तेषां स्त्रियस्तत्र महानुभावाः ।
प्रियेषु पानेषु च सक्तभावा ददर्श तारा इव सुप्रभावाः ॥ १७

श्रिया ज्वलन्तीस्त्रपयोपगूढा निशीथकाले रमणोपगूढाः ।
ददर्श काश्चित् प्रमदोपगूढा यथा विहङ्गाः कुसुमोपगूढाः ॥ १८

अन्याः पुनर्हर्म्यतलोपविष्टास्तत्र प्रियाङ्केषु सुखोपविष्टाः ।
भर्तुः प्रिया धर्मपरा निविष्टा ददर्श धीमान् मदनाभिविष्टाः ॥ १९

अप्रावृताः काञ्चनराजिवर्णाः काश्चित् परार्ध्यास्तपनीयवर्णाः ।
पुनश्च काश्चिच्छशलक्ष्मवर्णाः कान्तप्रहीणा रुचिराङ्गवर्णाः ॥ २०

ततः प्रियान् प्राप्य मनोऽभिरामान् सुप्रीतियुक्ताः प्रसमीक्ष्य रामाः[1] ।
गृहेषु हृष्टाः परमाभिरामा हरिप्रवीरः स ददर्श रामाः ॥ २१
चन्द्रप्रकाशाश्च हि वक्त्रमाला वक्राक्षिपक्ष्माश्च सुनेत्रमालाः ।
विभूषाणानां च ददर्श मालाः शतह्रदानामिव चारुमालाः ॥ २२
न त्वेव सीतां परमाभिजातां पथि स्थिते राजकुले प्रजाताम् ।
लतां प्रफुल्लामिव साधु जातां ददर्श तन्वीं मनसाभिजाताम् ॥ २३
सनातने वर्त्मनि संनिविष्टां रामेक्षणां तां मदनाभिविष्टाम् ।
भर्तुर्मनः श्रीमदनुप्रविष्टां स्त्रीभ्यो वराभ्यश्च सदा विशिष्टाम् ॥ २४
उष्णार्दितां सानुसृतास्रकण्ठीं पुरा वरार्होत्तमनिष्ककण्ठीम् ।
सुजातपक्ष्मामभिरक्तकण्ठीं वने प्रनृत्तामिव नीलकण्ठीम् ॥ २५
अव्यक्तरेखामिव चन्द्ररेखां पांसुप्रदिग्धामिव हेमरेखाम् ।
क्षतप्ररूढामिव बाणरेखां वायुप्रभिन्नामिव मेघरेखाम् ॥ २६
सीतामपश्यन् मनुजेश्वरस्य रामस्य पत्नीं वदतां वरस्य ।
बभूव दुःखाभिहतश्चिरस्य प्लवङ्गमो मन्द इवाचिरस्य ॥ २७

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायां
सुन्दरकाण्डे भवनविचयो नाम पञ्चमः सर्गः

---

## षष्ठः सर्गः

### रावणगृहावेक्षणम्

स निकामं विमानेषु विषण्णः[2] कामरूपधृत् । विचचार पुनर्लङ्कां लाघवेन समन्वितः ॥ १
आससादाथ लक्ष्मीवान् राक्षसेन्द्रनिवेशनम् । प्राकारेणार्कवर्णेन भास्वरेणाभिसंवृतम् ॥ २
रक्षितं राक्षसैर्भीमैः सिंहैरिव महद्वनम् । समीक्षमाणो भवनं चकाशे कपिकुञ्जरः ॥ ३
रूप्यकोपहितैश्चित्रैस्तोरणैर्हेमभूषितैः । विचित्राभिश्च कक्ष्याभिर्द्वारैश्च रुचिरैर्वृतम् ॥ ४
गजास्थितैर्महामात्रैः शूरैश्च विगतश्रमैः । उपस्थितमसंहार्यैर्हयैः स्यन्दनयायिभिः ॥ ५
सिंहव्याघ्रतनुत्राणैर्दान्तकाञ्चनराजतैः । घोषवद्भिर्विचित्रैश्च सदा विचरितं रथैः ॥ ६
बहुरत्नसमाकीर्णं परार्ध्यासनभाजनम् । महारथसमावासं महारथमहासनम्[3] ॥ ७

---

१. सुमनोऽभिरामाः ङ.
२. विचरन् ध.
३. महास्वनम् च.

हृद्यैश्च परमोदारैस्तैस्तैश्च मृगपक्षिभिः । विविधैर्बहुसाहस्रैः परिपूर्णं समन्ततः ॥ ८
विनीतैरन्तपालैश्च रक्षोभिश्च सुरक्षितम् । मुख्याभिश्च वरस्त्रीभिः परिपूर्णं समन्ततः ॥ ९
मुदितप्रमदारत्नं राक्षसेन्द्रनिवेशनम् । वराभरणसंह्रादैः समुद्रस्वननिःस्वनम् ॥ १०
तद्राजगुणसंपन्नं मुख्यैश्च वरचन्दनैः । महाजनैः समाकीर्णं सिंहैरिव महद्वनम् ॥ ११
भेरीमृदङ्गाभिरुतं शङ्खघोषविनादितम् । नित्यार्चितं पर्वहुतं पूजितं राक्षसैः सदा ॥ १२
समुद्रमिव गम्भीरं समुद्रमिव निःस्वनम् । महात्मनो महद्वेश्म महारत्नपरिच्छदम् ॥ १३
महारत्नसमाकीर्णं ददर्श स महाकपिः । विराजमानं वपुषा गजाश्वरथसंकुलम् ॥ १४
लङ्काभरणमित्येव सोऽमन्यत महाकपिः । चचार हनुमांस्तत्र रावणस्य समीपतः ॥ १५
गृहाद्गृहं राक्षसानामुद्यानानि च वानरः । वीक्षमाणो ह्यसंत्रस्तः प्रासादांश्च चचार सः ॥ १६
अवप्लुत्य महावेगः प्रहस्तस्य निवेशनम् । ततोऽन्यत् पुप्लुवे वेश्म महापार्श्वस्य वीर्यवान् ॥ १७
अथ मेघप्रतीकाशं कुम्भकर्णनिवेशनम् । विभीषणस्य च तथा पुप्लुवे स महाकपिः ॥ १८
महोदरस्य च गृहं विरूपाक्षस्य चैव हि । विद्युज्जिह्वस्य भवनं विद्युन्मालेस्तथैव च ॥ १९
वज्रदंष्ट्रस्य च तथा पुप्लुवे स महाकपिः । शुकस्य च महावेगः सारणस्य च धीमतः ॥ २०
तथा चेन्द्रजितो वेश्म जगाम हरियूथपः । जम्बुमालेः सुमालेश्च जगाम भवनं ततः ॥ २१
रश्मिकेतोश्च भवनं सूर्यशत्रोस्तथैव च । वज्रकायस्य च तथा पुप्लुवे स महाकपिः ॥ २२
धूम्राक्षस्य च संपातेर्भवनं मारुतात्मजः । विद्युद्रूपस्य भीमस्य घनस्य विघनस्य च ॥ २३
शुकनासस्य वक्रस्य शठस्य विकटस्य च । ह्रस्वकर्णस्य दंष्ट्रस्य रोमशस्य च रक्षसः ॥ २४
युद्धोन्मत्तस्य मत्तस्य ध्वजग्रीवस्य रक्षसः । विद्युज्जिह्वेन्द्रजिह्वानां तथा हस्तिमुखस्य च ॥ २५
करालस्य पिशाचस्य शोणिताक्षस्य चैव हि । क्रममाणः क्रमेणैव हनुमान् मारुतात्मजः ॥ २६
तेषु तेषु महार्हेषु भवनेषु महायशाः । तेषामृद्धिमतामृद्धिं ददर्श स महाकपिः ॥ २७
सर्वेषां समतिक्रम्य भवनानि समन्ततः । आससादाथ लक्ष्मीवान् राक्षसेन्द्रनिवेशनम् ॥ २८
रावणस्योपशायिन्यो ददर्श हरिसत्तमः । विचरन् हरिशार्दूलो राक्षसीर्विकृतेक्षणाः ॥ २९
शूलमुद्गरहस्ताश्च शक्तितोमरधारिणीः । ददर्श विविधान् गुल्मांस्तस्य रक्षःपतेर्गृहे ॥ ३०
राक्षसांश्च महाकायान्नानाप्रहरणोद्यतान् । रक्तान्श्वेतान् सितांश्चापि हरितांश्च महाजवान् ॥ ३१
कुलीनान् रूपसंपन्नान् गजान् परगजारुजान् । निष्ठितान् गजशिक्षायामैरावतसमान् युधि ॥ ३२
निहन्तॄन् परसैन्यानां गृहे तस्मिन् ददर्श सः । क्षरतश्च यथा मेघान् स्रवतश्च यथा गिरीन् ॥ ३३
मेघस्तनितनिर्घोषान् दुर्धर्षान् समरे परैः । सहस्रं वाहिनीस्तत्र जाम्बूनदपरिष्कृताः ॥ ३४

---

1. समाननामानो हि लोके बहवः पुरुषाः संभवन्ति । तेन विद्युज्जिह्वेन्द्रजिह्वानामिति बहुवचनमुपपद्यते । तथा एकस्य बहूनि नामान्यपि भवन्ति । एतन्नीत्यनुसरणे च श्रीमद्रामायणे पूर्वापरविरोधा बहवः परिहृता भवन्तीति संप्रदायः ॥

दद‍र्श राक्षसेन्द्रस्य रावणस्य निवेशने । शिबिका विविधाकाराः स कपिर्मारुतात्मजः ॥ ३५
हेमजालपरिच्छन्नास्तरुणादित्यवर्चसः । लतागृहाणि चित्राणि चित्रशालागृहाणि च ॥ ३६
क्रीडागृहाणि चान्यानि दारुपर्वतकानपि । कामस्य गृहकं रम्यं दिवागृहकमेव च ॥ ३७
ददर्श राक्षसेन्द्रस्य रावणस्य निवेशने । स मन्दरगिरिप्रख्यं मयूरस्थानसंकुलम् ॥ ३८
ध्वजयष्टिभिराकीर्णं ददर्श भवनोत्तमम् । अनेकरत्नसंकीर्णं निधिजालसमावृतम् ॥ ३९
धीरनिष्ठितकर्मान्तं[1] गृहं भूतपतेरिव । अर्चिर्भिश्चापि रत्नानां तेजसा रावणस्य च ॥ ४०
विरराजाथ तद्वेश्म रश्मिमानिव रश्मिभिः । जाम्बूनदमयान्येव शयनान्यासनानि च ॥ ४१
भाजनानि च शुभ्राणि ददर्श हरियूथपः । मध्वासवकृतक्लेदं मणिभाजनसंकुलम् ॥ ४२
मनोरममसंबाधं कुबेरभवनं यथा । नूपुराणां च घोषेण काञ्चीनां निनदेन च ॥ ४३
मृदङ्गतलघोषैश्च घोषवद्भिर्विनादितम् । प्रासादसङ्घातयुतं स्त्रीरत्नशतसंकुलम् ॥ ४४
सुव्यूढकक्ष्यं हनुमान् प्रविवेश महागृहम् ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
सुन्दरकाण्डे रावणगृहावेक्षणं नाम षष्ठः सर्गः

---

## सप्तमः सर्गः

### पुष्पकदर्शनम्

स वेश्मजालं बलवान् ददर्श व्यासक्तवैदूर्यसुवर्णजालम् ।
यथा महत् प्रावृषि मेघजालं विद्युत्पिनद्धं सविहङ्गजालम् ॥ १
निवेशनानां विविधाश्च शालाः प्रधानशङ्खायुधचापशालाः ।
मनोहराश्चापि पुनर्विशाला ददर्श वेश्माद्रिषु चन्द्रशालाः ॥ २
गृहाणि नानावसुराजितानि देवासुरैश्चापि सुपूजितानि ।
सर्वैश्च दोषैः परिवर्जितानि कपिर्ददर्श स्वबलार्जितानि ॥ ३
तानि प्रयत्नाभिसमाहितानि मयेन साक्षादिव निर्मितानि ।
महीतले सर्वगुणोत्तराणि ददर्श लङ्काधिपतेर्गृहाणि ॥ ४
ततो ददर्शोच्छ्रितमेघरूपं मनोहरं काञ्चनचारुरूपम् ।
रक्षोऽधिपस्यात्मबलानुरूपं गृहोत्तमं ह्यप्रतिरूपरूपम् ॥ ५

1. कर्माङ्गम् ति.

महीतले स्वर्गमिव प्रकीर्णं श्रिया ज्वलन्तं बहुरत्नकीर्णम् ।
नानातरूणां कुसुमावकीर्णं गिरेरिवाग्रं रजसावकीर्णम् ॥ ६

नारीप्रवेकैरिव दीप्यमानं तटिद्भिरम्भोदवदर्च्यमानम् ।
हंसप्रवेकैरिव वाह्यमानं श्रिया युतं खे सुकृतां विमानम् ॥ ७

यथा नगाग्रं बहुधातुचित्रं यथा नभश्च ग्रहचन्द्रचित्रम् ।
ददर्श युक्तीकृतमेघचित्रं विमानरत्नं बहुरत्नचित्रम् ॥ ८

मही कृता पर्वतराजिपूर्णा शैलाः कृता वृक्षवितानपूर्णाः ।
वृक्षाः कृताः पुष्पवितानपूर्णाः पुष्पं कृतं केसरपत्रपूर्णम् ॥ ९

कृतानि वेश्मानि च पाण्डराणि तथा सुपुष्पाण्यपि पुष्कराणि ।
पुनश्च पद्मानि सकेसराणि धन्यानि चित्राणि तथा वनानि ॥ १०

पुष्पाह्वयं नाम विराजमानं रत्नप्रभाभिश्च विघूर्णमानम् ।
वेश्मोत्तमानामपि चोच्चमानं महाकपिस्तत्र महाविमानम् ॥ ११

कृताश्च वैदूर्यमया विहङ्गा रूप्यप्रवालैश्च यथा विहङ्गाः ।
चित्राश्च नानावसुभिर्भुजङ्गा जात्यानुरूपास्तुरगाः शुभाङ्गाः ॥ १२

प्रवालजाम्बूनदपुष्पपक्षाः सलीलमावर्जितजिह्मपक्षाः ।
कामस्य साक्षादिव भान्ति पक्षाः कृता विहङ्गाः सुमुखाः सुपक्षाः ॥ १३

नियुज्यमानास्तु गजाः सुहस्ताः सकेसराश्चोत्पलपत्रहस्ताः ।
बभूव देवी च कृता सुहस्ता लक्ष्मीस्तथा पद्मिनि पद्महस्ता ॥ १४

इतीव तद्गृहमभिगम्य शोभनं सविस्मयो नगमिव चारुशोभनम् ।
पुनश्च तत् परमसुगन्धि सुन्दरं हिमात्यये नगमिव चारुकन्दरम् ॥ १५

ततः स तां कपिरभिपत्य पूजितां चरन् पुरीं दशमुखबाहुपालिताम् ।
अदृश्य तां जनकसुतां सुपूजितां सुदुःखितः पतिगुणवेगनिर्जिताम् ॥ १६

ततस्तदा बहुविधभावितात्मनः कृतात्मनो जनकसुतां सुवर्त्मनः ।
अपश्यतोऽभवदतिदुःखितं मनः सुचक्षुषः प्रविचरतो महात्मनः ॥ १७

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
सुन्दरकाण्डे पुष्पकदर्शनं नाम सप्तमः सर्गः

---

## अष्टमः सर्गः

### पुष्पकानुवर्णनम्

स तस्य मध्ये भवनस्य संस्थितं महद्विमानं बहुरत्नचित्रितम् ।
प्रतप्तजाम्बूनदजालकृत्रिमं ददर्श वीरः पवनात्मजः कपिः ॥ १
तदप्रमेयाप्रतिकारकृत्रिमं कृतं स्वयं साध्विति विश्वकर्मणा ।
दिवं गतं वायुपथे प्रतिष्ठितं व्यराजतादित्यपथस्य लक्ष्मवत् ॥ २
न तत्र किंचिन्न कृतं प्रयत्नतो न तत्र किंचिन्न महार्हरत्नवत् ।
न ते विशेषा नियताः सुरेष्वपि न तत्र किंचिन्न महाविशेषवत् ॥ ३
तपःसमाधानपराक्रमार्जितं मनःसमाधानविचारचारिणम् ।
अनेकसंस्थानविशेषनिर्मितं ततस्ततस्तुल्यविशेषदर्शनम् ॥ ४
मनः समाधाय तु शीघ्रगामिनं दुरावरं मारुततुल्यगामिनम् ।
महात्मनां पुण्यकृतां महर्द्धिनां यशस्विनामग्र्यमुदामिवालयम् ॥ ५
विशेषमालम्ब्य विशेषसंस्थितं विचित्रकूटं बहुकूटमण्डितम् ।
मनोऽभिरामं शरदिन्दुनिर्मलं विचित्रकूटं शिखरं गिरेर्यथा ॥ ६
वहन्ति यं कुण्डलशोभितानना महाशना व्योमचरा निशाचराः ।
निवृत्तविध्वस्तविशाललोचना महाजवा भूतगणाः सहस्रशः ॥ ७
वसन्तपुष्पोत्करचारुदर्शनं वसन्तमासादपि कान्तदर्शनम् ।
स पुष्पकं तत्र विमानमुत्तमं ददर्श तद्वानरवीरसत्तमः ॥ ८

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
सुन्दरकाण्डे पुष्पकानुवर्णनं नाम अष्टमः सर्गः

---

## नवमः सर्गः

### संकुलान्तःपुरम्

तस्यालयवरिष्ठस्य मध्ये विपुलमायतम् । ददर्श भवनश्रेष्ठं हनुमान् मारुतात्मजः ॥ १
अर्धयोजनविस्तीर्णमायतं योजनं हि तत् । भवनं राक्षसेन्द्रस्य बहुप्रासादसंकुलम् ॥ २
मार्गमाणस्तु वैदेहीं सीतामायतलोचनाम् । सर्वतः परिचक्राम हनुमानरिसूदनः ॥ ३
उत्तमं राक्षसावासं हनुमानवलोकयन् । आससादाथ लक्ष्मीवान् राक्षसेन्द्रनिवेशनम् ॥ ४

चतुर्विषाणैर्द्विरदैस्त्रिविषाणैस्तथैव च । परिक्षिप्तमसंबाधं रक्ष्यमाणमुदायुधैः ॥ ५
राक्षसीभिश्च पत्नीभी रावणस्य निवेशनम्[1] । आहृताभिश्च विक्रम्य राजकन्याभिरावृतम् ॥ ६
तन्नक्रमकराकीर्णं तिमिङ्गिलझषाकुलम् । वायुवेगसमाधूतं पन्नगैरिव सागरम् ॥ ७
या हि वैश्रवणे लक्ष्मीर्या चेन्द्रे हरिवाहने । सा रावणगृहे सर्वा नित्यमेवानपायिनी ॥ ८
या च राज्ञः कुबेरस्य यमस्य वरुणस्य च । तादृशी तद्विशिष्टा वा ऋद्धी रक्षोगृहेष्विह ॥ ९
तस्य हर्म्यस्य मध्यस्थं वेश्म चान्यत् सुनिर्मितम् । बहुनिर्यूहसंकीर्णं ददर्श पवनात्मजः ॥ १०
ब्रह्मणोऽर्थे कृतं दिव्यं दिवि यद्विश्वकर्मणा । विमानं पुष्पकं नाम सर्वरत्नविभूषितम्[2] ॥ ११
परेण तपसा लेभे यत् कुबेरः पितामहात् । कुबेरमोजसा जित्वा लेभे तद्राक्षसेश्वरः ॥ १२
ईहामृगसमायुक्तैः कार्तस्वरहिरण्मयैः । सुकृतैराचितं स्तम्भैः प्रदीप्तमिव च श्रिया ॥ १३
मेरुमन्दरसंकाशैरालिखद्भिरिवाम्बरम् । कूटागारैः शुभाकारैः सर्वतः समलंकृतम् ॥ १४
ज्वलनार्कप्रतीकाशं सुकृतं विश्वकर्मणा । हेमसोपानसंयुक्तं चारुप्रवरवेदिकम् ॥ १५
जालवातायनैर्युक्तं काञ्चनैः स्फाटिकैरपि । इन्द्रनीलमहानीलमणिप्रवरवेदिकम् ॥ १६
विद्रुमेण विचित्रेण मणिभिश्च महाधनैः । निस्तुलाभिश्च मुक्ताभिस्तलेनाभिविराजितम् ॥ १७
चन्दनेन च रक्तेन तपनीयनिभेन च । सुपुण्यगन्धिना युक्तमादित्यतरुणोपमम्[3] ॥ १८
विमानं पुष्पकं दिव्यमारुरोह महाकपिः । तत्रस्थः स तदा गन्धं पानभक्ष्यान्नसंभवम् ॥ १९
दिव्यं संमूर्छितं जिघ्रद्रूपवन्तमिवानिलम् । स गन्धस्तं महासत्त्वं बन्धुर्बन्धुमिवोत्तमम् ॥ २०
इत एहीत्युवाचेव तत्र यत्र स रावणः । ततस्तां प्रस्थितः शालां ददर्श महतीं शुभाम् ॥ २१
रावणस्य मनःकान्तां कान्तामिव वरस्त्रियम् । मणिसोपानविकृतां हेमजालविराजिताम् ॥ २२
स्फाटिकैरावृततलां दन्तान्तरितरूपिकाम् । मुक्ताभिश्च प्रवालैश्च रूप्यचामीकरैरपि ॥ २३
विभूषितां मणिस्तम्भैः सुबहुस्तम्भभूषिताम् । समैर्ऋजुभिरत्युच्चैः समन्तात् सुविभूषितैः ॥ २४
स्तम्भैः पक्षैरिवात्युच्चैर्दिवं संप्रस्थितामिव । महत्या कुथयास्तीर्णां पृथिवीलक्षणाङ्कया ॥ २५
पृथिवीमिव विस्तीर्णां सराष्ट्रगृहमालिनीम् । नादितां मत्तविहगैर्दिव्यगन्धाधिवासिताम्[4] ॥ २६
परार्ध्यास्तरणोपेतां रक्षोऽधिपनिषेविताम् । धूम्रामगरुधूपेन विमलां हंसपाण्डराम् ॥ २७
चित्रां पुष्पोपहारेण कल्माषीमिव सुप्रभाम् । मनःसंह्लादजननीं वर्णस्यापि प्रसादिनीम् ॥ २८
तां शोकनाशिनीं दिव्यां श्रियः संजननीमिव । इन्द्रियाणीन्द्रियार्थैश्च पञ्च पञ्चभिरुत्तमैः ॥ २९
तर्पयामास मातेव तदा रावणपालिता । स्वर्गोऽयं देवलोकोऽयमिन्द्रस्येयं पुरी भवेत् ॥ ३०

---

१. इदमर्धम् ग. नास्ति ।
२. कामगं कामदीपनं क. अस्यानन्तरम् कूटागारैर्वराकारैर्विविधैः समलंकृतम्—इति च. छ. त्रिलोकजनसेव्यं तद सर्वरत्नविभूषितम्—इति क.
३. तरुणादित्यसंनिभं क. अस्यानन्तरम्
४. २५, २६-तमे पद्ये घ, न स्तः ।

सिद्धिर्वेयं परा हि स्यादित्यमन्यत मारुतिः । प्रध्यायत इवापश्यत् प्रदीपांस्तत्र काञ्चनान् ॥ ३१

धूर्तानिव महाधूर्तैर्देवनेन पराजितान् । दीपानां च प्रकाशेन तेजसा रावणस्य च ॥ ३२

अर्चिर्भिर्भूषणानां च प्रदीप्तेवाभ्यमन्यत । ततोऽपश्यत् कुथासीनं नानावर्णाम्बरस्रजम् ॥ ३३

सहस्रं वरनारीणां नानावेषविभूषितम् । परिवृत्तेऽर्धरात्रे तु पाननिद्रावशंगतम् ॥ ३४

क्रीडित्वोपरतं रात्रौ प्रसुप्तं बलवत्तदा । तत् प्रसुप्तं विरुरुचे निःशब्दान्तरभूषणम् ॥ ३५

निःशब्दहंसभ्रमरं यथा पद्मवनं महत् । तासां संवृतदन्तानि मीलिताक्षाणि मारुतिः ॥ ३६

अपश्यत् पद्मगन्धीनि वदनानि सुयोषिताम् । प्रबुद्धानीव पद्मानि तासां भूत्वा क्षपाक्षये ॥ ३७

पुनः संवृतपत्राणि रात्राविव बभुस्तदा । इमानि मुखपद्मानि नियतं मत्तषट्पदाः ॥ ३८

अम्बुजानीव फुल्लानि प्रार्थयन्ति पुनः पुनः । इति चामन्यत श्रीमानुपपत्त्या महाकपिः ॥ ३९

मेने हि गुणतस्तानि समानि सलिलोद्भवैः । सा तस्य शुशुभे शाला ताभिः स्त्रीभिर्विराजिता ॥ ४०

शारदीव प्रसन्ना द्यौस्ताराभिरभिशोभिता । स च ताभिः परिवृतः शुशुभे राक्षसाधिपः ॥ ४१

यथा ह्युडुपतिः श्रीमांस्ताराभिरभिसंवृतः । याश्च्यवन्तेऽम्बरात्ताराः पुण्यशेषसमावृताः ॥ ४२

इमास्ताः संगताः कृत्स्ना इति मेने हरिस्तदा । ताराणामिव सुव्यक्तं महतीनां शुभार्चिषाम् ॥ ४३

प्रभा वर्णप्रसादाश्च विरेजुस्तत्र योषिताम् । व्यावृत्तकचपीनस्रक्प्रकीर्णवरभूषणाः ॥ ४४

पानव्यायामकालेषु निद्रापहृतचेतसः । व्यावृत्ततिलकाः काश्चित् काश्चिदुद्भ्रान्तनूपुराः ॥ ४५

पार्श्वे गलितहाराश्च काश्चित् परमयोषितः । मुक्ताहारावृताश्चान्याः काश्चिद्विस्रस्तवाससः ॥ ४६

व्याविद्धरशनादामाः किशोर्य इव वाहिताः । अकुण्डलधराश्चान्या विच्छिन्नमृदितस्रजः ॥ ४७

गजेन्द्रमृदिताः फुल्ला लता इव महावने । [1]चन्द्रांशुकिरणाभाश्च हाराः कासांचिदुत्कटाः ॥ ४८

हंसा इव बभुः सुप्ताः स्तनमध्येषु योषिताम् । अपरासां च वैदूर्याः कादम्बा इव पक्षिणः ॥ ४९

हेमसूत्राणि चान्यासां चक्रवाका इवाभवन् । हंसकारण्डवाकीर्णाश्चक्रवाकोपशोभिताः ॥ ५०

आपगा इव ता रेजुर्जघनैः पुलिनैरिव । [2]किंकिणीजालसंकोशास्ता हैमविपुलाम्बुजाः[3] ॥ ५१

भावग्राहा यशस्तीराः सुप्ता नद्य इवाबभुः । मृदुष्वङ्गेषु कासांचित् कुचाग्रेषु च संस्थिताः ॥ ५२

बभूवुर्भूषणानीव[4] शुभा भूषणराजयः । अंशुकान्ताश्च कासांचिन्मुखमारुतकम्पिताः ॥ ५३

उपर्युपरि वक्त्राणां व्याधूयन्ते पुनः पुनः । ताः पताका इवोद्धूताः पत्नीनां रुचिरप्रभाः ॥ ५४

नानावर्णाः सुवर्णानां वक्त्रमूलेषु रेजिरे । ववल्गुश्चात्र कासांचित् कुण्डलानि शुभार्चिषाम् ॥ ५५

मुखमारुतसंपर्कात् मन्दं[5] मन्दं सुयोषिताम् । शर्करासवगन्धैश्च प्रकृत्या सुरभिः सुखः ॥ ५६

---

१. शीतांशु- ख
२. किंकिणीजालसंकाशाः ख.
-सत्कोशाः गो. पाठान्तरम् ।
-संबाधाः ति. पाठान्तरम् ।
३. वक्त्रविपुलाम्बुजाः च. छ.
४. भ्रमराणीव च. छ.
५. -संसर्गान्मन्दम् च.

तासां वदननिःश्वासः सिषेवे रावणं तदा । रावणाननशङ्काश्च काश्चिद्रावणयोषितः ॥ ५७

मुखानि स्म सपत्नीनामुपाजिघ्रन् पुनः पुनः । अत्यर्थं सक्तमनसो रावणे ता वरस्त्रियः ॥ ५८

अस्वतन्त्राः सपत्नीनां प्रियमेवाचरंस्तदा । बाहूनुपनिधायान्याः पारिहार्यविभूषितान् ॥ ५९

अंशुकानि च रम्याणि प्रमदास्तत्र शिश्यिरे । अन्या वक्षसि चान्यस्यास्तस्याः काश्चित् पुनर्भुजम् ॥ ६०

अपरा त्वङ्कमन्यस्यास्तस्याश्चाप्यपरा भुजौ । ऊरुपार्श्वकटीपृष्ठमन्योन्यस्य समाश्रिताः ॥ ६१

परस्परनिविष्टाङ्ग्यो मदस्नेहवशानुगाः । अन्योन्यस्याङ्गसंस्पर्शात् प्रीयमाणाः सुमध्यमाः ॥ ६२

एकीकृतभुजाः सर्वाः सुषुपुस्तत्र योषितः[१] । अन्योन्यभुजसूत्रेण स्त्रीमाला ग्रथिता हि सा ॥ ६३

मालेव ग्रथिता सूत्रे शुशुभे मत्तषट्पदा । लतानां माधवे मासि फुल्लानां वायुसेवनात् ॥ ६४

अन्योन्यमालाग्रथितं संसक्तकुसुमोच्चयम् । व्यतिवेष्टितसुस्कन्धमन्योन्यभ्रमराकुलम् ॥ ६५

आसीद्वनमिवोद्धूतं स्त्रीवनं रावणस्य तत् । उचितेष्वपि सुव्यक्तं न तासां योषितां तदा ॥ ६६

विवेकः शक्य आधातुं भूषणाङ्गाम्बरस्रजाम् । रावणे सुखसंविष्टे काः स्त्रियो विविधप्रभाः ॥ ६७

ज्वलन्तः काञ्चना दीपाः प्रैक्षन्तानिमिषा इव । राजर्षिपितृदैत्यानां गन्धर्वाणां च योषितः ॥ ६८

राक्षसानां च याः कन्यास्तस्य कामवशं गताः । युद्धकामेन ताः सर्वा रावणेन हृताः स्त्रियः ॥ ६९

समदा मदनेनैव मोहिताः काश्चिदागताः ॥

न तत्र काश्चित् प्रमदाः प्रसह्य वीर्योपपन्नेन गुणेन लब्धाः ।
न चान्यकामापि न चान्यपूर्वा विना वरार्हां जनकात्मजां ताम् ॥ ७०

न चाकुलीना न च हीनरूपा नादक्षिणा नानुपचारयुक्ता ।
भार्याभवत्तस्य न हीनसत्त्वा न चापि कान्तस्य नकामनीया ॥ ७१

बभूव बुद्धिस्तु हरीश्वरस्य यदीदृशी राघवधर्मपत्नी ।
इमा यथा राक्षसराजभार्याः सुजातमस्येति हि साधुबुद्धेः[1] ॥ ७२

---

१. इदं पद्यम् च. नास्ति ।

1. इमा रावणस्य भार्याः यथा कुलशील-सौन्दर्यादिभिर्गुणैर्भूषिताः ईदृशी कुलशीलादिगुणयुता राघवधर्मपत्नी सीतापि यदि स्यात् इत्येकम् अवान्तर-वाक्यम् । यदीति दृढतरसंभावनाद्योतकम् । सीतापि ईदृशी सुदृढं संभाव्यते इत्यर्थः । अथ रावणगतमेव सविस्मयं चिन्तयति हनूमान्—सुजातमस्येति ॥ अस्य एवंविधातिशयितभोगसंपन्नस्य रावणस्य खलु सुजातं शोभन जन्मेत्यर्थः इति झटित्यन्तःपुरदर्शनमात्रेण साधुबुद्धेर्हनूमतो बुद्धिर्बभूवेत्यन्वयः । एकवाक्यत्वे तु सीता यदि ईदृशी स्यात् तदा अस्य रामस्य सुजातं शोभनम् अतिशयितो लाभ इति योज्यम् । यद्वा अस्य रावणस्य सीतासदृशभार्यासु निर्वृतस्य न अकार्ये प्रसक्तिरिति जन्म प्रशस्यम् इत्यर्थः । अथवा यथा इमा मया इदानीं दृश्यन्ते, तथा राघवधर्मपत्न्यपि मया यदि दृश्येत तदा तदन्वेषणपरस्य अस्य मम अन्वेषणप्रयासः सफल इति सुजातम् । ईदृशीति दृश्यमानत्वमात्रेण साम्यं विवक्षितमिति । इमा यथा रावणेनोपभुक्ताः तथा सीतापि यदीदृशी रावणभुक्ता भवेत् तदा रावणस्य सुजातम् । सीतायाम् उपेक्षणात् रावणवधाप्रवृत्तेरिति; इमा यथा भर्तृस्मरणादिनियताः सीतापि यदि ईदृशी राघवस्य स्मरणैकानियता स्यात्, तत्र विघ्नो रावणेन

पुनश्च सोऽचिन्तयदार्तरूपो ध्रुवं विशिष्टा गुणतो हि सीता ।
अथायमस्यां कृतवान् महात्मा लङ्केश्वरः कष्टमनार्यकर्म ॥ ७३

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
सुन्दरकाण्डे संकुलान्तःपुरं नाम नवमः सर्गः

---

## दशमः सर्गः

### मन्दोदरीदर्शनम्

तत्र दिव्योपमं मुख्यं स्फाटिकं रत्नभूषितम् । अवेक्षमाणो हनुमान् ददर्श शयनासनम् ॥ १
दान्तकाञ्चनचित्राङ्गैर्वैदूर्यैश्च वरासनैः । महार्हास्तरणोपेतैरुपपन्नं महाधनैः ॥ २
तस्य चैकतमे देशे सोऽग्र्यमालाविभूषितम् । ददर्श पाण्डरं छत्रं ताराधिपतिसंनिभम् ॥ ३
जातरूपपरिक्षिप्तं चित्रभानुसमप्रभम् । अशोकमालाविततं ददर्श परमासनम् ॥ ४
वालव्यजनहस्ताभिर्वीज्यमानं समन्ततः । गन्धैश्च विविधैर्जुष्टं वरधूपेन धूपितम् ॥ ५
परमास्तरणास्तीर्णमाविकाजिनसंवृतम् । दामभिर्वरमाल्यानां समन्तादुपशोभितम् ॥ ६
तस्मिञ्जीमूतसंकाशं[1] प्रदीप्तोत्तमकुण्डलम् । लोहिताक्षं महाबाहुं महारजतवाससम् ॥ ७
लोहितेनानुलिप्ताङ्गं चन्दनेन सुगन्धिना । सन्ध्यारक्तमिवाकाशे तोयदं सतडिद्गणम् ॥ ८
वृतमाभरणैर्दिव्यैः सुरूपं कामरूपिणम् । सवृक्षवनगुल्माढ्यं प्रसुप्तमिव मन्दरम् ॥ ९
क्रीडित्वोपरतं रात्रौ वराभरणभूषितम् । प्रियं राक्षसकन्यानां राक्षसानां सुखावहम् ॥ १०
पीत्वाप्युपरतं चापि ददर्श स महाकपिः । भास्वरे शयने वीरं प्रसुप्तं राक्षसाधिपम् ॥ ११
निःश्वसन्तं यथा नागं रावणं वानरर्षभः । आसाद्य परमोद्विग्नः सोऽपासर्पत् सुभीतवत् ॥ १२
अथारोहणमासाद्य वेदिकान्तरमाश्रितः । क्षीबं[१] राक्षसशार्दूलं प्रेक्षते स्म महाकपिः ॥ १३
शुशुभे राक्षसेन्द्रस्य स्वपतः शयनोत्तमम् । गन्धहस्तिनि संविष्टे यथा प्रस्रवणं महत् ॥ १४
[2]काञ्चनाङ्गदनद्धौ च ददर्श स महात्मनः । विक्षिप्तौ राक्षसेन्द्रस्य भुजाविन्द्रध्वजोपमौ ॥ १५

---

यदि न कृतः स्यादिति यावत्, तदैव अस्य रावणस्य भद्रमिति; इमा यथा स्वभर्त्रा संयुक्ताः एवं सीतापि ईदृशी राघवेण संयुक्ता यदि स्यात् यद्येनां रावणः प्रत्यर्पयेत् इति यावत्, तदा रावणस्य सुजातमिति चैवमादयो व्याख्याभेदाः तिलक-शिरोमणि-भूषणादिषु द्रष्टव्याः ॥

१. सुप्तम् च. छ.

1. जीमूतसंकाशं मेघेन अत्यन्तसदृशम् । अत एव कुण्डलसौवर्णवासोलोहितचन्दनयोगाच्च सतटिद्गणसन्ध्यारक्ततोयदाभेदेन विभाव्यमानमिति व्याख्येयम्।

2. काञ्चनेत्यादि श्लोकसप्तकमेकान्वयि । दीर्घतरे चास्मिन् पदसंदर्भे विक्षिप्तौ राक्षसेन्द्रस्य विक्षिप्तौ

मां हि धर्मात्मनः पत्नीं शचीमिव शचीपतेः । त्वदन्यस्त्रिषु लोकेषु प्रार्थयेन्मनसापि कः ॥ १४
राक्षसाधम रामस्य भार्याममिततेजसः । उक्तवानसि यत् पापं क्व गतस्तस्य मोक्ष्यसे ॥ १५
यथा दृप्तश्च मातङ्गः शशश्च सहितो वने । तथा द्विरदवद्रामस्त्वं नीच शशवत् स्मृतः ॥ १६
स त्वमिक्ष्वाकुनाथं वै क्षिपन्निह न लज्जसे । चक्षुषोर्विषयं तस्य न तावदुपगच्छसि ॥ १७
इमे ते नयने क्रूरे विरूपे कृष्णपिङ्गले । क्षितौ न पतिते कस्मान्मामनार्य निरीक्षतः ॥ १८
तस्य धर्मात्मनः पत्नीं स्नुषां दशरथस्य च । कथं व्याहरतो मां ते न जिह्वा व्यवशीर्यते[1] ॥ १९
असंदेशात्तु रामस्य तपसश्चानुपालनात् । न त्वां कुर्मि दशग्रीव भस्म भस्मार्हतेजसा ॥ २०
नापहर्तुमहं शक्या तस्य रामस्य धीमतः । विधिस्तव वधार्थाय विहितो नात्र संशयः ॥ २१
शूरेण धनदभ्रात्रा बलैः समुदितेन च । अपोह्य रामं कस्माद्धि दारचौर्यं त्वया कृतम् ॥ २२
सीताया वचनं श्रुत्वा रावणो राक्षसाधिपः । विवृत्य नयने क्रूरे जानकीमन्ववैक्षत ॥ २३
नीलजीमूतसंकाशो महाभुजशिरोधरः । सिंहसत्त्वगतिः श्रीमान् दीप्तजिह्वाग्रलोचनः ॥ २४
चलाग्रमुकुटप्रांशुश्चित्रमाल्यानुलेपनः । रक्तमाल्याम्बरधरस्तप्ताङ्गदविभूषणः ॥ २५
श्रोणीसूत्रेण महता मेचकेन सुसंवृतः । अमृतोत्पादनद्धेन भुजगेनेव मन्दरः ॥ २६
द्वाभ्यां स परिपूर्णाभ्यां भुजाभ्यां राक्षसेश्वरः । शुशुभेऽचलसंकाशः शृङ्गाभ्यामिव मन्दरः ॥ २७
तरुणादित्यवर्णाभ्यां कुण्डलाभ्यां विभूषितः । रक्तपल्लवपुष्पाभ्यामशोकाभ्यामिवाचलः ॥ २८
स कल्पवृक्षप्रतिमो वसन्त इव मूर्तिमान् । श्मशानचैत्यप्रतिमो भूषितोऽपि भयङ्करः ॥ २९
अवेक्षमाणो वैदेहीं कोपसंरक्तलोचनः । उवाच रावणः सीतां भुजङ्ग इव निःश्वसन् ॥ ३०
अनयेनाभिसंपन्नमर्थहीनमनुव्रते । नाशयाम्यहमद्य त्वां सूर्यः सन्ध्यामिवौजसा ॥ ३१
इत्युक्त्वा मैथिलीं राजा रावणः शत्रुरावणः । संदिदेश[2] ततः सर्वा राक्षसीर्घोरदर्शनाः ॥ ३२
एकाक्षीमेककर्णां च कर्णप्रावरणां तथा । गोकर्णीं हस्तिकर्णीं च लम्बकर्णीमकर्णिकाम् ॥ ३३
हस्तिपाद्यश्वपाद्यौ च गोपदीं पादचूलिकाम् । [1]एकाक्षीमेकपादीं च पृथुपादीमपादिकाम् ॥ ३४
अतिमात्रशिरोग्रीवामतिमात्रकुचोदरीम् । अतिमात्रास्यनेत्रां च दीर्घजिह्वामजिह्विकाम् ॥ ३५
अनासिकां सिंहमुखीं गोमुखीं सूकरीमुखीम् । यथा मद्वशगा सीता क्षिप्रं भवति जानकी ॥ ३६
तथा कुरुत राक्षस्यः सर्वाः क्षिप्रं समेत्य च । प्रतिलोमानुलोमैश्च सामदानादिभेदनैः ॥ ३७
आवर्जयत वैदेहीं दण्डस्योद्यमनेन च । इति प्रतिसमादिश्य राक्षसेन्द्रः पुनः पुनः ॥ ३८
काममन्युपरीतात्मा जानकीं पर्यतर्जयत्[3] । उपगम्य ततः क्षिप्रं राक्षसी [2]धान्यमालिनी ॥ ३९

---

1. एकाक्षीति द्विरुपादानं व्यक्तिभेदादिति माणत्वादिति श्रीगोविन्दराजः । तिलकः ।

2. धान्यमालिनी रावणस्य कनिष्ठपत्नी । इदं मन्दोदर्या उपलक्षणम् । उत्तरत्र हनूमद्वचने तथा वक्ष्य-

१. जिह्वा पाप न शीर्यते ख. घ. छ.
२. संददर्श ति.
३. प्रतिगर्जत ति.

परिष्वज्य दशग्रीवमिदं वचनमब्रवीत् । मया क्रीड महाराज सीतया किं तवानया ॥ ४०
विवर्णया कृपणया मानुष्या राक्षसेश्वर । नूनमस्या महाराज न दिव्यान् भोगसत्तमान् ॥ ४१
विदधात्यमरश्रेष्ठस्तव बाहुबलार्जितान् । अकामां कामयानस्य शरीरमुपतप्यते ॥ ४२
इच्छन्तीं कामयानस्य प्रीतिर्भवति शोभना[१] । एवमुक्तस्तु राक्षस्या समुत्क्षिप्तस्ततो बली ॥ ४३
प्रहसन् मेघसंकाशो राक्षसः स न्यवर्तत । प्रस्थितः स दशग्रीवः कम्पयन्निव मेदिनीम् ॥ ४४
ज्वलद्भास्करवर्णाभं प्रविवेश निवेशनम् । देवगन्धर्वकन्याश्च नागकन्याश्च सर्वतः ॥ ४५
परिवार्य दशग्रीवं विविशुस्तद्गृहोत्तमम् ॥

स मैथिलीं धर्मपरामवस्थितां प्रवेपमानां परिभर्त्स्य रावणः ।
विहाय सीतां मदनेन मोहितः स्वमेव वेश्म प्रविवेश भास्वरम् ॥ ४६

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
सुन्दरकाण्डे मासद्वयावधिकरणं नाम द्वाविंशः सर्गः

---

## त्रयोविंशः सर्गः

### राक्षसीप्ररोचनम्

इत्युक्त्वा मैथिलीं राजा रावणः शत्रुरावणः । संदिश्य च ततः सर्वा राक्षसीर्निर्जगाम ह ॥ १
निष्क्रान्ते राक्षसेन्द्रे तु पुनरन्तःपुरं गते । राक्षस्यो भीमरूपास्ताः सीतां समभिदुद्रुवुः ॥ २
ततः सीतामुपागम्य राक्षस्यः क्रोधमूर्छिताः । [1]परं परुषया वाचा वैदेहीमिदमब्रुवन् ॥ ३
पौलस्त्यस्य वरिष्ठस्य रावणस्य महात्मनः । दशग्रीवस्य भार्या त्वं सीते न बहुमन्यसे ॥ ४
ततस्त्वेकजटा नाम राक्षसी वाक्यमब्रवीत् । आमन्त्र्य क्रोधताम्राक्षी सीतां करतलोदरीम् ॥ ५
प्रजापतीनां षण्णां तु चतुर्थो यः प्रजापतिः । मानसो ब्रह्मणः पुत्रः पुलस्त्य इति विश्रुतः ॥ ६
पुलस्त्यस्य तु तेजस्वी महर्षिर्मानसः सुतः । नाम्ना स विश्रवा नाम प्रजापतिसमप्रभः ॥ ७
तस्य पुत्रो विशालाक्षि रावणः शत्रुरावणः । तस्य त्वं राक्षसेन्द्रस्य भार्या भवितुमर्हसि ॥ ८
मयोक्तं चारुसर्वाङ्गि वाक्यं किं नानुमन्यसे । ततो हरिजटा नाम राक्षसी वाक्यमब्रवीत् ॥ ९
विवर्त्य नयने कोपान्मार्जारसदृशेक्षणा । येन देवास्त्रयस्त्रिंशद्देवराजश्च निर्जिताः ॥ १०
तस्य त्वं राक्षसेन्द्रस्य भार्या भवितुमर्हसि । ततस्तु प्रघसा नाम राक्षसी क्रोधमूर्छिता ॥ ११
भर्त्सयन्ती [2]तदा घोरमिदं वचनमब्रवीत्[3] । वीर्योत्सिक्तस्य शूरस्य संग्रामेष्वनिवर्तिनः ॥ १२

---

1. परमिति । ततः परमिति योजितं तिलके । मूर्छाक्रियाविशेषणमपि योजयितुं शक्यमेतत् ।    २. महाघोरम् क.    ३. ततस्त्वित्यादि अब्रवीदित्यन्तम् घ. पुना.

१. अकामामित्यादि शोभनेत्यन्तं ख. नास्ति । नास्ति ।

बलिनो वीर्ययुक्तस्य भार्यात्वं किं न लिप्ससे । प्रियां बहुमतां भार्यां त्यक्त्वा राजा महाबलः ॥ १३
सर्वासां च महाभागां त्वामुपैष्यति रावणः । समृद्धं स्त्रीसहस्रेण नानारत्नोपशोभितम् ॥ १४
अन्तःपुरं समुत्सृज्य त्वामुपैष्यति रावणः । अन्या तु विकटा नाम राक्षसी वाक्यमब्रवीत्[१] ॥ १५
असकृद्देवता युद्धे नागगन्धर्वदानवाः । निर्जिताः समरे येन स ते पार्श्वमुपागतः ॥ १६
तस्य सर्वसमृद्धस्य रावणस्य महात्मनः । किमद्य राक्षसेन्द्रस्य भार्यात्वं नेच्छसेऽधमे ॥ १७
ततस्तु दुर्मुखी नाम राक्षसी वाक्यमब्रवीत् । यस्य सूर्यो न तपति भीतो यस्य च मारुतः ॥ १८
न वाति चासितापाङ्गि किं त्वं तस्य न तिष्ठसि । पुष्पवृष्टिं च तरवो मुमुचुर्यस्य वै भयात् ॥ १९
शैलाश्च सुभ्रूः पानीयं[२] जलदाश्च यदेच्छति । तस्य नैर्ऋतराजस्य राजराजस्य भामिनि ॥ २०
किं त्वं न कुरुषे बुद्धिं भार्यार्थे रावणस्य हि । साधु ते तत्त्वतो देवि कथितं साधु भामिनि ॥ २१
गृहाण सुस्मिते वाक्यमन्यथा न भविष्यसि ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
सुन्दरकाण्डे राक्षसीप्ररोचनं नाम त्रयोविंशः सर्गः

---

## चतुर्विंशः सर्गः

### राक्षसीनिर्भर्त्सनम्

ततः सीतां [३]समस्तास्ता राक्षस्यो विकृताननाः । परुषं परुषा नार्य ऊचुस्तां वाक्यमप्रियम् ॥ १
किं त्वमन्तःपुरे सीते सर्वभूतमनोहरे । महार्हशयनोपेते न वासमनुमन्यसे ॥ २
मानुषी मानुषस्यैव भार्यात्वं बहु मन्यसे । प्रत्याहर मनो रामान्न त्वं जातु भविष्यसि ॥ ३
त्रैलोक्यवसुभोक्तारं रावणं राक्षसेश्वरम् । भर्तारमुपसंगम्य विहरस्व यथासुखम् ॥ ४
मानुषी मानुषं तं तु राममिच्छसि शोभने । राज्याद्भ्रष्टमसिद्धार्थं विक्लवं त्वमनिन्दिते ॥ ५
राक्षसीनां वचः श्रुत्वा सीता पद्मनिभेक्षणा । नेत्राभ्यामश्रुपूर्णाभ्यामिदं वचनमब्रवीत् ॥ ६
यदिदं लोकविद्विष्टमुदाहरथ संगताः । नैतन्मनसि वाक्यं मे किल्बिषं[1] प्रतिभाति वः[४] ॥ ७
न मानुषी राक्षसस्य भार्या भवितुमर्हति । कामं खादत मां सर्वा न करिष्यामि वो वचः ॥ ८
दीनो वा राज्यहीनो वा यो मे भर्ता स मे गुरुः । तं नित्यमनुरक्तास्मि यथा सूर्यं सुवर्चला ॥ ९
यथा शची महाभागा शक्रं समुपतिष्ठति । अरुन्धती वसिष्ठं च रोहिणी शशिनं यथा ॥ १०
लोपामुद्रा यथागस्त्यं सुकन्या च्यवनं यथा । सावित्री सत्यवन्तं च कपिलं श्रीमती यथा ॥ ११
सौदासं मदयन्तीव केशिनी सगरं यथा । नैषधं दमयन्तीव भैमी पतिमनुव्रता ॥ १२

1. किल्बिषं पापावहार्थयुतम् ।
१. इदमर्धम् घ. नास्ति ।
२. शैला: सुस्रवुः पानीयम् पुना.
३. सीतामुपागम्य झ. ञ.
४. प्रतितिष्ठति पुना.

तथाहमिक्ष्वाकुवरं रामं पतिमनुव्रता। सीताया वचनं श्रुत्वा राक्षस्यः क्रोधमूर्छिताः॥ १३
भर्त्सयन्ति स्म परुषैर्वाक्यै रावणचोदिताः। अवलीनः स निर्वाक्यो हनुमाञ्शिंशपाद्रुमे॥ १४
सीतां संतर्जयन्तीस्ता राक्षसीरशृणोत् कपिः। तामभिक्रम्य संक्रुद्धा वेपमानां समन्ततः॥ १५
भृशं संलिलिहुर्दीप्तान् प्रलम्बान् दशनच्छदान्। ऊचुश्च परमक्रुद्धाः प्रगृह्याशु परश्वधान्॥ १६
नेयमर्हति भर्तारं रावणं राक्षसाधिपम्। संभर्त्स्यमाना भीमाभी राक्षसीभिर्वरानना। १७
सा बाष्पमपमार्जन्ती शिंशपां तामुपागमत्। ततस्तां शिंशपां सीता राक्षसीभिः समावृता॥ १८
अभिगम्य विशालाक्षी तस्थौ शोकपरिप्लुता। तां कृशां दीनवदनां मलिनाम्बरधारिणीम्[1]॥ १९
भर्त्सयांचक्रिरे सीतां राक्षस्यस्तां समन्ततः। ततस्तां विनता नाम राक्षसी भीमदर्शना॥ २०
अब्रवीत् कुपिताकारा कराला निर्णतोदरी। सीते पर्याप्तमेतावद्भर्तुः स्नेहो निदर्शितः॥ २१
सर्वत्रातिकृतं भद्रे व्यसनायोपकल्पते। परितुष्टास्मि भद्रं ते मानुषस्ते कृतो विधिः॥ २२
ममापि तु वचः पथ्यं ब्रुवन्त्याः कुरु मैथिलि। रावणं भज भर्तारं भर्तारं सर्वरक्षसाम्॥ २३
विक्रान्तं रूपवन्तं च सुरेशमिव वासवम्। दक्षिणं त्यागशीलं च सर्वस्य प्रियदर्शनम्॥ २४
मानुषं कृपणं रामं त्यक्त्वा रावणमाश्रय। दिव्याङ्गरागा वैदेही दिव्याभरणभूषिता॥ २५
अद्य प्रभृति सर्वेषां लोकानामीश्वरी भव। अग्नेः स्वाहा यथा देवी शचीवेन्द्रस्य शोभने॥ २६
किं ते रामेण वैदेहि कृपणेन गतायुषा। एतदुक्तं च मे वाक्यं यदि त्वं न करिष्यसि॥ २७
अस्मिन् मुहूर्ते सर्वास्त्वां भक्षयिष्यामहे वयम्। अन्या तु विकटा नाम लम्बमानपयोधरा॥ २८
अब्रवीत् कुपिता सीतां मुष्टिमुद्यम्य गर्जती। बहून्यप्रियरूपाणि वचनानि सुदुर्मते॥ २९
अनुक्रोशान्मृदुत्वाच्च सोढानि तव मैथिलि। न च नः कुरुषे वाक्यं हितं कालपुरःसरम्॥ ३०
आनीतासि समुद्रस्य पारमन्यैर्दुरासदम्। रावणान्तःपुरं घोरं प्रविष्टा चासि मैथिलि॥ ३१
रावणस्य गृहे रुद्धामस्माभिस्तु सुरक्षिताम्। न त्वां शक्तः परित्रातुमपि साक्षात् पुरंदरः॥ ३२
कुरुष्व हितवादिन्या वचनं मम मैथिलि। अलमश्रुप्रपातेन त्यज शोकमनर्थकम्॥ ३३
भज प्रीतिं प्रहर्षं च त्यजैतां नित्यदैन्यताम्। सीते राक्षसराजेन सह क्रीड यथासुखम्॥ ३४
जानासि हि यथा भीरु स्त्रीणां यौवनमध्रुवम्। यावन्न ते व्यतिक्रामेत्तावत् सुखमवाप्नुहि॥ ३५
उद्यानानि च रम्याणि पर्वतोपवनानि च। सह राक्षसराजेन चर त्वं मदिरेक्षणे॥ ३६
स्त्रीसहस्राणि ते सप्त वशे स्थास्यन्ति सुन्दरि। रावणं भज भर्तारं भर्तारं सर्वरक्षसाम्॥ ३७
उत्पाट्य वा ते हृदयं भक्षयिष्यामि मैथिलि। यदि मे व्याहृतं वाक्यं न यथावत् करिष्यसि॥ ३८
ततश्चण्डोदरी नाम राक्षसी क्रोधमूर्छिता। भ्रामयन्ती महच्छूलमिदं वचनमब्रवीत्॥ ३९
इमां हरिणलोलाक्षीं त्रासोत्कम्पिपयोधराम्। रावणेन हृतां दृष्ट्वा दौहृदो मे महानभूत्॥ ४०

---

१. -वासिनीम् क. छ.

यकृत्प्लीहमथोत्पीडं हृदयं च सबन्धनम् । आन्त्राण्यपि तथा शीर्षं खादेयमिति मे मतिः ॥ ४१
ततस्तु प्रघसा नाम राक्षसी वाक्यमब्रवीत् । कण्ठमस्या नृशंसायाः पीडयाम किमास्यते ॥ ४२
निवेद्यतां ततो राज्ञे मानुषी सा मृतेति ह । नात्र कश्चन संदेहः खादतेति स वक्ष्यति ॥ ४३
ततस्त्वजामुखी नाम राक्षसी वाक्यमब्रवीत्[1] । विशस्येमां ततः सर्वाः समान् कुरुत [2]पिण्डकान् ॥ ४४
विभजाम ततः सर्वा विवादो मे न रोचते । पेयमानीयतां क्षिप्रं लेह्यमुच्चावचं बहु ॥ ४५
ततः शूर्पणखा नाम राक्षसी वाक्यमब्रवीत् । अजामुख्या यदुक्तं हि तदेव मम रोचते ॥ ४६
सुरा चानीयतां क्षिप्रं सर्वशोकविनाशिनी । मानुषं मांसमास्वाद्य नृत्यामोऽथ निकुम्भिलाम् ॥ ४७
एवं संभर्त्स्यमाना सा सीता सुरसुतोपमा । राक्षसीभिः सुघोराभिर्धैर्यमुत्सृज्य रोदिति ॥ ४८

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
सुन्दरकाण्डे राक्षसीनिर्भर्त्सनं नाम चतुर्विंशः सर्गः

---

## पञ्चविंशः सर्गः

### सीतानिर्वेदः

तथा तासां वदन्तीनां परुषं दारुणं बहु । राक्षसीनामसौम्यानां रुरोद जनकात्मजा ॥ १
एवमुक्ता तु वैदेही राक्षसीभिर्मनस्विनी । उवाच परमत्रस्ता बाष्पगद्गदया गिरा ॥ २
न मानुषी राक्षसस्य भार्या भवितुमर्हति । कामं खादत मां सर्वा न करिष्यामि वो वचः ॥ ३
सा राक्षसीमध्यगता सीता सुरसुतोपमा । न शर्म लेभे दुःखार्ता रावणेन च तर्जिता ॥ ४
वेपते स्माधिकं सीता विशन्तीवाङ्गमात्मनः । वने यूथपरिभ्रष्टा मृगी कोकैरिवार्दिता ॥ ५
सा त्वशोकस्य विपुलां शाखामालम्ब्य पुष्पिताम् । चिन्तयामास शोकेन भर्तारं भग्नमानसा ॥ ६
सा स्नापयन्ती विपुलौ स्तनौ नेत्रजलस्रवैः । चिन्तयन्ती न शोकस्य तदान्तमधिगच्छति ॥ ७
सा वेपमाना पतिता प्रवाते कदली यथा । राक्षसीनां भयत्रस्ता विषण्णवदनाभवत् ॥ ८
तस्याः सा दीर्घविपुला वेपन्त्या सीतया तदा । ददृशे कम्पिनी वेणी व्यालीव परिसर्पती ॥ ९
सा निःश्वसन्ती दुःखार्ता शोकोपहतचेतना । आर्ता व्यसृजदश्रूणि मैथिली विललाप ह ॥ १०
हा रामेति च दुःखार्ता हा पुनर्लक्ष्मणेति च । हा श्वश्रु मम कौसल्ये हा सुमित्रेति भामिनी ॥ ११
लोकप्रवादः सत्योऽयं पण्डितैः समुदाहृतः । अकाले दुर्लभो मृत्युः स्त्रिया वा पुरुषस्य वा ॥ १२
यत्राहमेवं क्रूराभी राक्षसीभिरिहार्दिता । जीवामि हीना रामेण मुहूर्तमपि दुःखिता ॥ १३

---

१. अस्यानन्तरम्—एनां निहत्य दुर्बुद्धिं पास्यामो रुधिरं परम्—इति ग. २. पीलुकान् अ. च.

एषाल्पपुण्या कृपणा विनशिष्याम्यनाथवत् । समुद्रमध्ये नौः पूर्णा वायुवेगैरिवाहता ॥ १४
भर्तारं तमपश्यन्ती राक्षसीवशमागता । सीदामि खलु शोकेन कूलं तोयहतं यथा ॥ १५
तं पद्मदलपत्राक्षं सिंहविक्रान्तगामिनम् । धन्याः पश्यन्ति मे नाथं कृतज्ञं प्रियवादिनम् ॥ १६
सर्वथा तेन हीनाया रामेण विदितात्मना । तीक्ष्णं विषमिवास्वाद्य दुर्लभं मम जीवितम् ॥ १७
कीदृशं तु मया पापं पुरा जन्मान्तरे कृतम् । येनेदं प्राप्यते दुःखं मया घोरं सुदारुणम् ॥ १८
जीवितं त्यक्तुमिच्छामि शोकेन महता वृता । राक्षसीभिश्च रक्ष्यन्त्या रामो नासाद्यते मया ॥ १९
धिगस्तु खलु मानुष्यं धिगस्तु परवश्यताम् । न शक्यं यत् परित्यक्तुमात्मच्छन्देन जीवितम् ॥२०

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
सुन्दरकाण्डे सीतानिर्वेदो नाम पञ्चविंशः सर्गः

---

## षड्विंशः सर्गः

### प्राणत्यागसंप्रधारणम्

प्रसक्ताश्रुमुखी त्वेवं ब्रुवन्ती जनकात्मजा । अधोमुखमुखी बाला विलप्तुमुपचक्रमे ॥ १
उन्मत्तेव प्रमत्तेव भ्रान्तचित्तेव शोचती । उपावृत्ता किशोरीव विवेष्टन्ती महीतले ॥ २
राघवस्य प्रमत्तस्य[1] रक्षसा कामरूपिणा । रावणेन प्रमथ्याहमानीता क्रोशती बलात् ॥ ३
राक्षसीवशमापन्ना भर्त्स्यमाना सुदारुणम् । चिन्तयन्ती सुदुःखार्ता नाहं जीवितुमुत्सहे ॥ ४
न हि मे जीवितेनार्थो नैवार्थैर्न च भूषणैः । वसन्त्या राक्षसीमध्ये विना रामं महारथम् ॥ ५
अश्मसारमिदं नूनमथवाप्यजरामरम् । हृदयं मम येनेदं न दुःखेनावशीर्यते[2] ॥ ६
धिङ्मामनार्यामसतीं याहं तेन विनाकृता । मुहूर्तमपि रक्षामि जीवितं पापजीविता[3] ॥ ७
का च मे जीविते श्रद्धा सुखे वा तं प्रियं विना । भर्तारं सागरान्ताया वसुधायाः प्रियंवदम् ॥ ८
भिद्यतां भक्ष्यतां वापि शरीरं विसृजाम्यहम् । न चाप्यहं चिरं दुःखं सहेयं प्रियवर्जिता ॥ ९
चरणेनापि सव्येन न स्पृशेयं निशाचरम् । रावणं किं पुनरहं कामयेयं विगर्हितम् ॥ १०
प्रत्याख्यानं[4] न जानाति नात्मनं नात्मनः कुलम् । यो नृशंसस्वभावेन मां प्रार्थयितुमिच्छति ॥११
छिन्ना भिन्ना प्रभिन्ना वा दीप्ता[5] वाग्नौ प्रदीपिता । रावणं नोपतिष्ठेयं किं प्रलापेन वश्चिरम् ॥ १२
ख्यातः प्राज्ञः कृतज्ञश्च सानुक्रोशश्च राघवः । सद्वृत्तो निरनुक्रोशः शङ्के मद्भाग्यसंक्षयात् ॥ १३
राक्षसानां जनस्थाने सहस्राणि चतुर्दश । येनैकेन निरस्तानि स मां किं नाभिपद्यते ॥ १४

---

१. अप्रमेयस्य ग. छ.
२. इदं पद्यम् घ. नास्ति ।
३. ८, ९ पद्ये प्र. नस्तः
४. प्रत्याख्यातं गो.
५. विभक्ता वा दीप्ते च. छ.

निरुद्धा रावणेनाहमल्पवीर्येण रक्षसा । समर्थः खलु मे भर्ता रावणं हन्तुमाहवे[1] ॥ १५
विराधो दण्डकारण्ये येन राक्षसपुंगवः । रणे रामेण निहतः स मां किं नाभिपद्यते ॥ १६
कामं मध्ये समुद्रस्य लङ्केयं दुष्प्रधर्षणा । न तु राघवबाणानां गतिरोधीह विद्यते ॥ १७
किं नु तत् कारणं येन रामो दृढपराक्रमः । रक्षसापहृतां भार्यामिष्टां नाभ्यवपद्यते ॥ १८
इहस्थां मां न जानीते शङ्के लक्ष्मणपूर्वजः । जानन्नपि हि तजेस्वी धर्षणं मर्षयिष्यति ॥ १९
हृतेति योऽधिगत्वा मां राघवाय निवेदयेत् । गृध्रराजोऽपि स रणे रावणेन निपातितः ॥ २०
कृतं कर्म महत्तेन मां तथाभ्यवपद्यता । तिष्ठता रावणद्वन्द्वे[2] वृद्धेनापि जटायुषा ॥ २१
यदि मामिह जानीयाद्वर्तमानां स राघवः । अद्य बाणैरभिक्रुद्धः कुर्याल्लोकमराक्षसम् ॥ २२
विधमेच्च पुरीं लङ्कां शोषयेच्च महोदधिम् । रावणस्य च नीचस्य कीर्तिं नाम च नाशयेत् ॥ २३
ततो निहतनाथानां राक्षसीनां गृहे गृहे । यथाहमेवं रुदती तथा भूयो न संशयः ॥ २४
अन्विष्य रक्षसां[3] लङ्कां कुर्याद्रामः सलक्ष्मणः । न हि ताभ्यां रिपुर्दृष्टो मुहूर्तमपि जीवति ॥ २५
चिताधूमाकुलपथा गृध्रमण्डलसंकुला । अचिरेण तु लङ्केयं श्मशानसदृशी भवेत् ॥ २६
अचिरेणैव कालेन प्राप्स्याम्येव मनोरथम् । दुष्प्रस्थानोऽयमाभाति[4] सर्वेषां वो विपर्ययः[5] ॥ २७
यादृशानीह दृश्यन्ते लङ्कायामशुभानि वै । अचिरेणैव कालेन भविष्यति हतप्रभा ॥ २८
नूनं लङ्का हते पापे रावणे राक्षसाधमे । शोषं यास्यति दुर्धर्षा प्रमदा विधवा यथा ॥ २९
पुण्योत्सवसमुत्था च नष्टभर्त्री सराक्षसी । भविष्यति पुरी लङ्का नष्टभर्त्री यथाङ्गना ॥ ३०
नूनं राक्षसकन्यानां रुदन्तीनां गृहे गृहे । श्रोष्यामि नचिरादेव दुःखार्तानामिह ध्वनिम् ॥ ३१
सान्धकारा हतद्योता हतराक्षसपुंगवा । भविष्यति पुरी लङ्का निर्दग्धा रामसायकैः ॥ ३२
यदि नाम स शूरो मां रामो रक्तान्तलोचनः । जानीयाद्वर्तमानां हि रावणस्य निवेशने ॥ ३३
अनेन तु नृशंसेन रावणेनाधमेन मे । समयो यस्तु निर्दिष्टस्तस्य कालोऽयमागतः ॥ ३४
स च मे विहितो मृत्युरस्मिन् दुष्टे न वर्तते[6] । अकार्यं ये न जानन्ति नैर्ऋताः पापकारिणः ॥ ३५
अधर्मात्तु महोत्पातो भविष्यति हि सांप्रतम् । नैते धर्मं विजानन्ति राक्षसाः पिशिताशनाः ॥ ३६
ध्रुवं मां प्रातराशार्थे राक्षसः कल्पयिष्यति । साहं कथं चरिष्यामि तं विना प्रियदर्शनम् ॥ ३७
रामं रक्तान्तनयनमपश्यन्ती सुदुःखिता । यदि कश्चित् प्रदाता मे विषस्याद्य भवेदिह ॥ ३८
क्षिप्रं वैवस्वतं देवं पश्येयं पतिना विना । नाजानाज्जीवतीं रामः स मां लक्ष्मणपूर्वजः ॥ ३९
जानन्तौ तौ न कुर्यातां नोर्व्यां हि मम मार्गणम् । नूनं ममैव शोकेन स वीरो लक्ष्मणाग्रजः ॥ ४०
देवलोकमितो यातस्त्यक्त्वा देहं महीतले । धन्या देवाः सगन्धर्वाः सिद्धाश्च परमर्षयः ॥ ४१

---

१. १२, १३ -अमे पद्ये ति. न स्तः ।
२. -वधे ति.
३. अन्विष्याराक्षसाम् छ.
४. आख्याति च. छ.
५. विपर्ययम् च. छ.
६. इदमर्धम् च. छ. नास्ति ।

मम पश्यन्ति ये नाथं रामं राजीवलोचनम् । अथवा न हि तस्यार्थो धर्मकामस्य धीमतः ॥ ४२
मया रामस्य राजर्षेर्भार्यया परमात्मनः । दृश्यमाने भवेत् प्रीतिः सौहृदं नास्त्यपश्यतः ॥ ४३
नाशयन्ति कृतघ्नास्तु न रामो नाशयिष्यति । किं नु मे न गुणाः केचित् किं वा भाग्यक्षयो मम॥४४
याहं सीदामि रामेण हीना मुख्येन भामिनी । श्रेयो मे जीवितान्मर्तुं विहीनाया महात्मनः ॥ ४५
रामादक्लिष्टचारित्राच्छूराच्छत्रुनिबर्हणात् । अथवा न्यस्तशस्त्रौ तौ वने मूलफलाशिनौ ॥ ४६
भ्रातरौ हि नरश्रेष्ठौ संवृत्तौ वनगोचरौ । अथवा राक्षसेन्द्रेण रावणेन दुरात्मना ॥ ४७
छद्मना सादितौ शूरौ भ्रातरौ रामलक्ष्मणौ । साहमेवं गते काले मर्तुमिच्छामि सर्वथा ॥ ४८
न च मे विहितो मृत्युरस्मिन् दुःखेऽपि वर्तति । धन्याः खलु महात्मानो मुनयस्त्यक्तकिल्बिषाः॥४९
जितात्मानो महाभागा येषां न स्तः प्रियाप्रिये । प्रियान्न संभवेद्दुःखमप्रियान्नाधिकं भयम् ॥ ५०
ताभ्यां हि ये वियुज्यन्ते नमस्तेषां महात्मनाम् । साहं त्यक्ता प्रियार्हेण रामेण विदितात्मना ॥ ५१
प्राणांस्त्यक्ष्यामि पापस्य रावणस्य गता वशम् ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम
सुन्दरकाण्डे प्राणत्यागसंप्रधारणं नाम षड्विंशः सर्गः

---

## सप्तविंशः सर्गः

### त्रिजटास्वप्नः

इत्युक्ताः सीतया घोरा राक्षस्यः क्रोधमूर्छिताः । काश्चिज्जग्मुस्तदाख्यातुं रावणस्य तरस्विनः ॥ १
ततः सीतामुपागम्य राक्षस्यो घोरदर्शनाः । पुनः परुषमेकार्थमनर्थार्थमथाब्रुवन् ॥ २
अद्येदानीं तवानार्ये सीते पापविनिश्चये । राक्षस्यो भक्षयिष्यामो मांसमेतद्यथासुखम् ॥ ३
सीतां ताभिरनार्याभिर्दृष्ट्वा संतर्जितां तदा । राक्षसी त्रिजटा वृद्धा प्रबुद्धा[1] वाक्यमब्रवीत् ॥ ४
आत्मानं खादतानार्या न सीतां भक्षयिष्यथ । जनकस्य सुतामिष्टां स्नुषां दशरथस्य च ॥ ५
स्वप्नो ह्यद्य मया दृष्टो दारुणो रोमहर्षणः । राक्षसानामभावाय भर्तुरस्या जयाय च ॥ ६
एवमुक्तास्त्रिजटया राक्षस्यः क्रोधमूर्छिताः । सर्वा एवाब्रुवन् भीतास्त्रिजटां तामिदं वचः ॥ ७
कथयस्व त्वया दृष्टः स्वप्नोऽयं कीदृशो निशि । तासां तु वचनं श्रुत्वा राक्षसीनां मुखाच्च्युतम् ॥८
उवाच वचनं काले त्रिजटा स्वप्नसंश्रितम् । गजदन्तमयीं दिव्यां शिबिकामन्तरिक्षगाम् ॥ ९
युक्तां हंससहस्रेण स्वयमास्थाय राघवः । शुक्लमाल्याम्बरधरो लक्ष्मणेन सहागतः ॥ १०
स्वप्ने चाद्य मया दृष्टा सीता शुक्लाम्बरावृता । सागरेण परिक्षिप्तं श्वेतं पर्वतमास्थिता ॥ ११
रामेण संगता सीता भास्करेण प्रभा यथा । राघवश्च मया दृष्टश्चतुर्दन्तं महागजम् ॥ १२

---

१. शयाना च. छ.

आरूढः शैलसंकाशं चकास[1] सहलक्ष्मणः। ततस्तौ नरशार्दूलौ दीप्यमानौ स्वतेजसा॥ १३
शुक्लमाल्याम्बरधरौ जानकीं पर्युपस्थितौ। ततस्तस्य नगस्याग्रे ह्याकाशस्थस्य दन्तिनः॥ १४
भर्त्रा परिगृहीतस्य जानकी स्कन्धमाश्रिता। भर्तुरङ्कात् समुत्पत्य ततः कमललोचना॥ १५
चन्द्रसूर्यौ मया दृष्टौ पाणिना परिमार्जती। ततस्ताभ्यां कुमाराभ्यामास्थितः स गजोत्तमः॥ १६
सीतया च विशालाक्ष्या लङ्काया उपरि स्थितः। पाण्डरर्षभयुक्तेन रथेनाष्टयुजा स्वयम्॥ १७
इहोपयातः काकुत्स्थः सीतया सह भार्यया। लक्ष्मणेन सह भ्रात्रा विमाने पुष्पके स्थितः॥ १८
शुक्लमाल्याम्बरधरो लक्ष्मणेन समागतः[2]। आरुह्य पुष्पकं दिव्यं विमानं सूर्यसंनिभम्॥ १९
उत्तरां दिशमालोक्य जगाम पुरुषोत्तमः। साण्डं त्रिभुवनं भीमं सर्वतः सचराचरम्॥ २०
एवं स्वप्ने मया दृष्टो रामो विष्णुपराक्रमः। लक्ष्मणेन सह भ्रात्रा सीतया सह राघवः॥ २१
न हि रामो महातेजाः शक्यो जेतुं सुरासुरैः। राक्षसैर्वापि चान्यैर्वा स्वर्गः पापजनैरिव॥ २२
रावणश्च मया दृष्टः क्षितौ तैलसमुक्षितः। रक्तवासाः पिबन् मत्तः करवीरकृतस्रजः॥ २३
विमानात् पुष्पकादद्य रावणः पतितो भुवि। कृष्यमाणः स्त्रिया दृष्टो मुण्डः कृष्णाम्बरः पुनः॥ २४
रथेन खरयुक्तेन रक्तमाल्यानुलेपनः। पिबंस्तैलं हसन्नृत्यन् भ्रान्तचित्ताकुलेन्द्रियः॥ २५
गर्दभेन ययौ शीघ्रं दक्षिणां दिशमास्थितः। पुनरेव मया दृष्टो रावणो राक्षसेश्वरः॥ २६
पतितोऽवाक्शिरा भूमौ गर्दभाद्भयमोहितः। सहसोत्थाय संभ्रान्तो भयार्तो मदविह्वलः॥ २७
उन्मत्त इव दिग्वासा दुर्वाक्यं प्रलपन् मुहुः। दुर्गन्धं दुःसहं घोरं तिमिरं नरकोपमम्॥ २८
मलपङ्कं प्रविश्याशु मग्नस्तत्र स रावणः। कण्ठे बद्ध्वा दशग्रीवं प्रमदा रक्तवासिनी॥ २९

---

१. चचार च. छ

२. अस्यानन्तरम् एते श्लोकाः प्रक्षिप्ताः॥ सर्वं ग्रस्तं मया दृष्टं रामेणाक्लिष्टकर्मणा॥ क्षीरोदधिजले मध्ये श्वेतः शैलः समुच्छ्रितः। तस्य मूर्ध्नि ततः श्वेतश्चतुर्दन्तो महागजः॥तस्य पृष्ठे स्थितः श्रीमान् रामो राजीवलोचनः। लक्ष्मणेन सह भ्रात्रा सीतया सह भार्यया॥ [ततः सीता समुत्पत्य भर्तुरङ्काश्रिता सती। बाहुभ्यां संपरिष्वज्य संपूर्णं चन्द्रमण्डलम्—इति घ.] ततोऽन्यत्र मया दृष्टो रामो रक्तान्तलोचनः॥ आसीनः प्राङ्मुखः श्रीमानासने परमे शुभे॥ अभिषिक्तस्तु काकुत्स्थः सर्वदेवैर्नमस्कृतः। ब्रह्मर्षीणां गणैः सर्वैः सर्वतीर्थजलेन च॥ शुक्लमाल्याम्बरधरा शुक्लगन्धानुलेपना। सीता तत्र पृथुश्रोणी रराज जनकात्मजा॥ ततो देवाः सगन्धर्वाः सिद्धाश्च परमर्षयः। ब्रह्माणमग्रतः कृत्वा रामं तत्र ववन्दिरे॥ पुनरेव मया दृष्टो रामो रमयतां वरः। विष्णुरेव स्वयं भूत्वा तस्मिन्नास्ते वरासने॥ परं ब्रह्म परं सत्यं परं ज्ञानं परं तपः। परं बीजं परं क्षेत्रं परं कारणकारणम्॥ शङ्खचक्रधरः श्रीमान् पुण्डरीकायतेक्षणः। श्रीवत्सवक्षा नित्यश्रीरजय्यः शाश्वतो ध्रुवः॥ एवंभूतो महातेजा रामः कमललोचनः। सर्वलोकेश्वरः श्रीमान् रराज रघुनन्दनः॥ ततो महेन्द्रः पितरो मुनीन्द्रा गन्धर्वविद्याधरपन्नगेश्वराः। कृताभिषेकं परिवार्य रामं प्रतुष्टुवुः प्राञ्जलयः प्रहृष्टाः॥ ततस्तु सर्वाप्सरसः प्रहृष्टा नृत्यन्ति गायन्ति समेत्य तत्र। वाद्यं प्रकुर्वन्ति नदन्ति शङ्खा वंशाश्च वीणा मुरजाश्च भेर्यः॥ नृत्यन्ति गायन्ति समेत्य तत्र वाद्यं प्रकुर्वन्ति सुरेन्द्रनार्यः। वंशाश्च वीणाप्रमुखाश्च भेर्यो नदन्ति शङ्खाः पणवाश्च सर्वे॥ ततोऽन्यत्र मया दृष्टो रामः सत्यपराक्रमः। लक्ष्मणेन सह भ्रात्रा सीतया सह वीर्यवान्॥

काली कर्दमलिप्ताङ्गी दिशं याम्यां प्रकर्षति । एवं तत्र मया दृष्टः कुम्भकर्णो निशाचरः[१] ॥ ३०
रावणस्य सुताः सर्वे मुण्डास्तैलसमुक्षिताः । वराहेण दशग्रीवः शिंशुमारेण चेन्द्रजित् ॥ ३१
उष्ट्रेण कुम्भकर्णश्च प्रयातो दक्षिणां दिशम् । एकस्तत्र मया दृष्टः श्वेतच्छत्रो विभीषणः ॥ ३२
शुक्लमाल्याम्बरधरः शुक्लगन्धानुलेपनः । शङ्खदुन्दुभिनिर्घोषैर्नृत्तगीतैरलंकृतः ॥ ३३
आरुह्य शैलसंकाशं मेघस्तनितनिःस्वनम् । चतुर्दन्तं गजं दिव्यमास्ते तत्र विभीषणः ॥ ३४
चतुर्भिः सचिवैः सार्धं वैहायसमुपस्थितः । समाजश्च मया दृष्टो गीतवादित्रनिःस्वनः ॥ ३५
पिबतां रक्तमाल्यानां रक्षसां रक्तवाससाम् । लङ्का चेयं पुरी रम्या सवाजिरथकुञ्जरा ॥ ३६
सागरे पतिता दृष्टा भग्नगोपुरतोरणा । लङ्का दृष्टा मया स्वप्ने रावणेनाभिरक्षिता ॥ ३७
दग्धा रामस्य दूतेन वानरेण तरस्विना । पीत्वा तैलं प्रनृत्ताश्च प्रहसन्त्यो महास्वनाः ॥ ३८
लङ्कायां भस्मरूक्षायां प्रविष्टा राक्षसस्त्रियः । कुम्भकर्णादयश्चेमे सर्वे राक्षसपुंगवाः ॥ ३९
रक्तं निवसनं गृह्य प्रविष्टा गोमयह्रदे । अपगच्छत नश्यध्वं सीतामाप स राघवः ॥ ४०
घातयेत् परमामर्षी सर्वैः सार्धं हि राक्षसैः[२] । प्रियां बहुमतां भार्यां वनवासमनुव्रताम् ॥ ४१
भर्त्सितां तर्जितां वापि नानुमंस्यति राघवः । तदलं क्रूरवाक्यैर्वः सान्त्वमेवाभिधीयताम् ॥ ४२
अभियाचाम वैदेहीमेतद्धि मम रोचते । यस्यामेवंविधः स्वप्नो दुःखितायां प्रदृश्यते ॥ ४३
सा दुःखैर्विविधैर्मुक्ता प्रियं प्राप्नोत्यनुत्तमम् । भर्त्सितामपि याचध्वं राक्षस्यः किं विवक्षया ॥ ४४
राघवाद्धि भयं घोरं राक्षसानामुपस्थितम् । प्रणिपातप्रसन्ना हि मैथिली जनकात्मजा ॥ ४५
अलमेषा परित्रातुं राक्षसीर्महतो भयात् । अपि चास्या विशालाक्ष्या न किंचिदुपलक्षये ॥ ४६
विरूपमपि चाङ्गेषु सुसूक्ष्ममपि लक्षणम् । छायावैगुण्यमात्रं तु शङ्के दुःखमुपस्थितम् ॥ ४७
अदुःखार्हामिमां देवीं वैहायसमुपस्थिताम् । अर्थसिद्धिं तु वैदेह्याः पश्याम्यहमुपस्थिताम् ॥ ४८
राक्षसेन्द्रविनाशं च विजयं राघवस्य च । निमित्तभूतमेतत्तु श्रोतुमस्या महत् प्रियम् ॥ ४९
दृश्यते च स्फुरच्चक्षुः पद्मपत्रमिवायतम् । ईषच्च हृषितो वास्या दक्षिणाया ह्यदक्षिणः ॥ ५०
अकस्मादेव वैदेह्या बाहुरेकः प्रकम्पते । करेणुहस्तप्रतिमः सव्यश्चोरुरनुत्तमः ॥ ५१
वेपमानः सूचयति राघवं पुरतः स्थितम् ॥

पक्षी च शाखानिलयः प्रहृष्टः[३] पुनः पुनश्चोत्तमसान्त्ववादी ।
सुस्वागतां वाचमुदीरयाणः पुनः पुनश्चोदयतीव हृष्टः ॥ ५२

---

१. अस्यानन्तरम्—प्रयातो दक्षिणामाशां हर्तारमाहवे—इति घ.
प्रविष्टः कर्दमं ह्रदम्—इति क. ख. ग. घ. ३. शाखानिलयं प्रविष्टः छ.
२. अस्यानन्तरम्—रावणं राघवो घोरं भर्या-

ततः सा ह्रीमती बाला भर्तुर्विजयहर्षिता । अवोचद्यदि तत्तथ्यं भवेयं शरणं हि वः[1] ॥ ५३

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
सुन्दरकाण्डे त्रिजटास्वप्नो नाम सप्तविंशः सर्गः

---

## अष्टाविंशः सर्गः

### उद्बन्धनव्यवसायः

सा राक्षसेन्द्रस्य वचो निशम्य तद्रावणस्याप्रियमप्रियार्ता ।
सीता वितत्रास यथा वनान्ते सिंहाभिपन्ना गजराजकन्या ॥ १

सा राक्षसीमध्यगता च भीरुर्वाग्भिर्भृशं रावणतर्जिता च ।
कान्तारमध्ये विजने विसृष्टा बालेव कन्या विललाप सीता ॥ २

सत्यं बतेदं प्रवदन्ति लोके नाकालमृत्युर्भवतीति सन्तः ।
यत्राहमेवं परिभर्त्स्यमाना जीवामि किंचित् क्षणमप्यपुण्या ॥ ३

सुखाद्विहीनं बहुदुःखपूर्णमिदं तु नूनं हृदयं स्थिरं मे ।
विदीर्यते यन्न सहस्रधाद्य वज्राहतं शृङ्गमिवाचलस्य ॥ ४

नैवास्ति दोषो मम नूनमत्र वध्याहमस्याप्रियदर्शनस्य ।
भावं न चास्याहमनुप्रदातुमलं द्विजो मन्त्रमिवाद्विजाय ॥ ५

नूनं ममाङ्गान्यचिरादनार्यः शस्त्रैः शितैश्छेत्स्यति राक्षसेन्द्रः ।
तस्मिन्ननागच्छति लोकनाथे गर्भस्थजन्तोरिव शल्यकृन्तः ॥ ६

दुःखं बतेदं मम दुःखिताया मासौ चिरायाधिगमिष्यतो द्वौ ।
बद्धस्य वध्यस्य तथा निशान्ते [2]राजोपरोधादिव तस्करस्य ॥ ७

हा राम हा लक्ष्मण हा सुमित्रे हा राममातः सह मे जनन्या ।
एषा विपद्याम्यहमल्पभाग्या महार्णवे नौरिव मूढवाता ॥ ८

तरस्विनौ धारयता मृगस्य सत्त्वेन रूपं मनुजेन्द्रपुत्रौ ।
नूनं विशस्तौ मम कारणात्तौ सिंहर्षभौ द्वाविव वैद्युतेन ॥ ९

---

१. इदं पद्यम् च. छ. नास्ति । २. राजापराधात् च. छ.

नूनं स कालो मृगरूपधारी मामल्पभाग्यां लुलुभे तदानीम् ।
यत्रार्यपुत्रं विससर्ज मूढा रामानुजं लक्ष्मणपूर्वजं च ॥ १०

हा राम सत्यव्रत दीर्घबाहो हा पूर्णचन्द्रप्रतिमानवक्त्र ।
हा जीवलोकस्य हितः प्रियश्च वध्यां न मां वेत्सि हि राक्षसानाम् ॥ ११

अनन्यदेवत्वमियं क्षमा च भूमौ च शय्या नियमश्च धर्मे ।
पतिव्रतात्वं विफलं ममेदं कृतं कृतघ्नेष्विव मानुषाणाम् ॥ १२

मोघो हि धर्मश्चरितो मयायं तथैकपत्नीत्वमिदं निरर्थम्
या त्वां न पश्यामि कृशा विवर्णा हीना त्वया संगमने निराशा ॥ १३

पितुर्निदेशं नियमेन कृत्वा वनान्निवृत्तश्चरितव्रतश्च ।
स्त्रीभिस्तु मन्ये विपुलेक्षणाभिस्त्वं रंस्यसे वीतभयः कृतार्थः ॥ १४

अहं तु राम त्वयि जातकामा चिरं विनाशाय निबद्धभावा ।
मोघं चरित्वाथ तपोव्रतं च त्यक्ष्यामि धिग्जीवितमल्पभाग्या ॥ १५

सा जीवितं क्षिप्रमहं त्यजेयं विषेण शस्त्रेण शितेन वापि ।
विषस्य दाता न हि मेऽस्ति कश्चिच्छस्त्रस्य वा वेश्मनि राक्षसस्य[1] ॥ १६

इतीव देवी बहुधा विलप्य सर्वात्मना राममनुस्मरन्ती ।
प्रवेपमाना परिशुष्कवक्त्रा नगोत्तमं पुष्पितमाससाद ॥ १७

शोकाभितप्ता बहुधा विचिन्त्य सीताथ वेण्युद्ग्रथनं गृहीत्वा ।
उद्बध्य वेण्युद्ग्रथनेन शीघ्रमहं गमिष्यामि यमस्य मूलम् ॥ १८

उपस्थिता सा मृदुसर्वगात्री शाखां गृहीत्वाथ नगस्य तस्य ।
तस्यास्तु रामं प्रविचिन्तयन्त्या रामानुजं स्वं च कुलं शुभाङ्ग्याः ॥ १९

शोकानिमित्तानि तथा बहूनि धैर्यार्जितानि प्रवराणि लोके ।
प्रादुर्निमित्तानि[2] तदा बभूवुः पुरापि सिद्धान्युपलक्षितानि ॥ २०

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायां
सुन्दरकाण्डे उद्बन्धनव्यवसायो नाम अष्टाविंशः सर्गः

---

१. इदं पद्यं प्र. नास्ति ।—इति च. छ.   २. तस्या विशोकानि पुना.

## एकोनत्रिंशः सर्गः

### शुभनिमित्तानि

तथागतां ता व्यथितामनिन्दितां व्यपेतहर्षां परिदीनमानसाम् ।
शुभां निमित्तानि शुभानि भेजिरे नरं श्रिया जुष्टमिवोपजीविनः ॥ १

तस्याः शुभं वाममरालपक्ष्मराजीवृतं कृष्णविशालशुक्लम् ।
प्रास्पन्दतैकं नयनं सुकेश्या मीनाहतं पद्ममिवाभिताम्रम् ॥ २

भुजश्च चार्वञ्चितपीनवृत्तः परार्ध्यकालागरुचन्दनार्हः ।
अनुत्तमेनाध्युषितः प्रियेण चिरेण वामः समवेपताशु ॥ ३

गजेन्द्रहस्तप्रतिमश्च पीनस्तयोर्द्वयोः संहतयोः सुजातः ।
प्रस्पन्दमानः पुनरूरुरस्या रामं पुरस्तात् स्थितमाचचक्षे ॥ ४

शुभं पुनर्हेमसमानवर्णमीषद्रजोध्वस्तमिवामलाक्ष्याः ।
वासः स्थितायाः [1]शिखराग्रदत्याः किंचित् परिस्रंसत चारुगात्र्याः ॥ ५

एतैर्निमित्तैरपरैश्च सुभ्रूः संबोधिता प्रागपि साधु सिद्धैः ।
वातातपक्लान्तमिव प्रनष्टं वर्षेण बीजं प्रतिसंजहर्ष ॥ ६

तस्याः पुनर्बिम्बफलाधरोष्ठं स्वक्षिभ्रुकेशान्तमरालपक्ष्म ।
वक्त्रं बभासे स्मितशुक्लदंष्ट्रं राहोर्मुखाच्चन्द्र इव प्रमुक्तः ॥ ७

सा वीतशोका व्यपनीततन्द्री शान्तज्वरा हर्षविवृद्धसत्त्वा ।
अशोभतार्या वदनेन शुक्ले शीतांशुना रात्रिरिवोदितेन ॥ ८

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
सुन्दरकाण्डे शुभनिमित्तानि नाम एकोनत्रिंशः सर्गः

---

## त्रिंशः सर्गः

### हनूमत्कृत्याकृत्यविचिन्तनम्

हनुमानपि विश्रान्तः सर्वं शुश्राव तत्त्वतः । सीतायास्त्रिजटायाश्च राक्षसीनां च तर्जनम् ॥ १
अवेक्षमाणस्तां देवीं देवतामिव नन्दने । ततो बहुविधां चिन्तां चिन्तयामास वानरः ॥ २

1. शिखरं दाडिमबीजम् ।

यां कपीनां सहस्राणि सुबहून्ययुतानि च । दिक्षु सर्वासु मार्गन्ते सेयमासादिता मया ॥ ३
चारेण तु सुयुक्तेन शत्रोः शक्तिमवेक्षता । गूढेन चरता तावदवेक्षितमिदं मया ॥ ४
राक्षसानां विशेषश्च पुरी चेयमवेक्षिता । राक्षसाधिपतेरस्य प्रभावो रावणस्य च ॥ ५
युक्तं तस्याप्रमेयस्य सर्वसत्त्वदयावतः । समाश्वासयितुं भार्यां पतिदर्शनकाङ्क्षिणीम् ॥ ६
अहमाश्वासयाम्येनां पूर्णचन्द्रनिभाननाम् । अदृष्टदुःखां दुःखार्तां दुःखस्यान्तमगच्छतीम् ॥ ७
यदि ह्यहमिमां देवीं शोकोपहतचेतनाम् । अनाश्वास्य गमिष्यामि दोषवद्गमनं भवेत् ॥ ८
गते हि मयि तत्रेयं राजपुत्री यशस्विनी । परित्राणमविन्दन्ती जानकी जीवितं त्यजेत् ॥ ९
मया च स महाबाहुः पूर्णचन्द्रनिभाननः । समाश्वासयितुं न्याय्यः सीतादर्शनलालसः ॥ १०
निशाचरीणां प्रत्यक्षमनर्हं चापि भाषणम् । कथं नु खलु कर्तव्यमिदं कृच्छ्रगतो ह्यहम् ॥ ११
अनेन रात्रिशेषेण यदि नाश्वास्यते मया । सर्वथा नास्ति संदेहः परित्यक्ष्यति जीवितम् ॥ १२
रामश्च यदि पृच्छेन्मां किं मां सीताब्रवीद्वचः । किमहं तं प्रतिब्रूयामसंभाष्य सुमध्यमाम् ॥ १३
सीतासंदेशरहितं मामितस्त्वरया गतम् । निर्दहेदपि काकुत्स्थः क्रुद्धस्तीव्रेण चक्षुषा ॥ १४
यदि चोद्योजयिष्यामि भर्तारं रामकारणात् । व्यर्थमागमनं तस्य ससैन्यस्य भविष्यति ॥ १५
अन्तरं त्वहमासाद्य राक्षसीनामिह स्थितः । शनैराश्वासयिष्यामि संतापबहुलामिमाम् ॥ १६
अहं त्वतितनुश्चैव वानरश्च विशेषतः । वाचं चोदाहरिष्यामि मानुषीमिह संस्कृताम् ॥ १७
यदि वाचं प्रदास्यामि द्विजातिरिव संस्कृताम् । रावणं मन्यमाना मां सीता भीता भविष्यति ॥ १८
वानरस्य विशेषेण कथं स्यादभिभाषणम् । अवश्यमेव वक्तव्यं मानुषं वाक्यमर्थवत् ॥ १९
मया सान्त्वयितुं शक्या नान्यथेयमनिन्दिता । सेयमालोक्य मे रूपं जानकी भाषितं तथा ॥ २०
रक्षोभिस्त्रासिता पूर्वं भूयस्त्रासं गमिष्यति । ततो जातपरित्रासा शब्दं कुर्यान्मनस्विनी ॥ २१
जानाना मां विशालाक्षी रावणं कामरूपिणम् । सीतया च कृते शब्दे सहसा राक्षसीगणः ॥ २२
नानाप्रहरणो घोरः समेयादन्तकोपमः । ततो मां संपरिक्षिप्य सर्वतो विकृताननाः ॥ २३
वधे च ग्रहणे चैव कुर्युर्यत्नं यथाबलम् । गृह्य शाखाः प्रशाखाश्च स्कन्धांश्चोत्तमशाखिनाम् ॥ २४
दृष्ट्वा विपरिधावन्तं भवेयुर्भयशङ्किताः । मम रूपं च संप्रेक्ष्य वने विचरतो महत् ॥ २५
राक्षस्यो भयवित्रस्ता[1] भवेयुर्विकृताननाः । ततः कुर्युः समाह्वानं राक्षस्यो रक्षसामपि ॥ २६
राक्षसेन्द्रनियुक्तानां राक्षसेन्द्रनिवेशने । ते शूलशक्तिनिस्त्रिंशविविधायुधपाणयः ॥ २७
आपतेयुर्विमर्देऽस्मिन् वेगेनोद्वेगकारणात्[2] । संरुद्धस्तैस्तु परितो विधमन् रक्षसां बलम् ॥ २८
शक्नुयां न तु संप्राप्तुं परं पारं महोदधेः । मां वा गृह्णीयुराप्लुत्य बहवः शीघ्रकारिणः ॥ २९
स्यादियं चागृहीतार्था मम च ग्रहणं भवेत् । हिंसाभिरुचयो हिंस्युरिमां वा जनकात्मजाम् ॥ ३०

---

१. भवेयुरित्यादि -वित्रस्ता इत्यन्तम् ख. नास्ति । २. उद्विग्नकारिणः च. छ.

विपन्नं स्यात्ततः कार्यं रामसुग्रीवयोरिदम् । उद्देशे नष्टमार्गेऽस्मिन् राक्षसैः परिवारिते ॥ ३१
सागरेण परिक्षिप्ते गुप्ते वसति जानकी । विशस्ते वा गृहीते वा रक्षोभिर्मयि संयुगे ॥ ३२
नान्यं पश्यामि रामस्य साहाय्यं[1] कार्यसाधने । विमृशंश्च न पश्यामि यो हते मयि वानरः ॥ ३३
शतयोजनविस्तीर्णं लङ्घयेत महोदधिम् । कामं हन्तुं समर्थोऽस्मि सहस्राण्यपि रक्षसाम् ॥ ३४
न तु शक्ष्यामि संप्राप्तुं परं पारं महोदधेः । असत्यानि च युद्धानि संशयो मे न रोचते ॥ ३५
कश्च निःसंशयं कार्यं कुर्यात् प्राज्ञः ससंशयम् । प्राणत्यागश्च वैदेह्या भवेदनभिभाषणे ॥ ३६
एष दोषो महान् हि स्यान्मम सीताभिभाषणे । भूताश्चार्था विनश्यन्ति देशकालविरोधिताः ॥ ३७
विक्लवं दूतमासाद्य तमः सूर्योदये यथा । अर्थानर्थान्तरे बुद्धिर्निश्चितापि न शोभते ॥ ३८
घातयन्ति हि कार्याणि दूताः पण्डितमानिनः । न विनश्येत् कथं कार्यं वैक्लव्यं न कथं भवेत् ॥ ३९
लङ्घनं च समुद्रस्य कथं नु न वृथा भवेत् । कथं नु खलु वाक्यं मे शृणुयान्नोद्विजेत वा ॥ ४०
इति संचिन्त्य हनुमांश्चकार मतिमान् मतिम् । राममक्लिष्टकर्माणं स्वबन्धुमनुकीर्तयन् ॥ ४१
नैनामुद्वेजयिष्यामि तद्बन्धुगतमानसाम् । इक्ष्वाकूणां वरिष्ठस्य रामस्य विदितात्मनः ॥ ४२
शुभानि धर्मयुक्तानि वचनानि समर्पयन्[1] । श्रावयिष्यामि सर्वाणि मधुरां प्रब्रुवन् गिरम् ॥ ४३
श्रद्धास्यति यथा हीयं तथा सर्वं समादधे ॥

इति स बहुविधं महानुभावो जगतिपतेः प्रमदामवेक्षमाणः ।
मधुरमवितथं जगाद वाक्यं द्रुमविटपान्तरमास्थितो हनूमान् ॥ ४४

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
सुन्दरकाण्डे हनूमत्कृत्याकृत्यविचिन्तनं नाम त्रिंशः सर्गः

---

## एकत्रिंशः सर्गः

### रामवृत्तसंश्रवः

एवं बहुविधां चिन्तां चिन्तयित्वा महाकपिः । संश्रवे मधुरं वाक्यं वैदेह्या व्याजहार ह ॥ १
राजा दशरथो नाम रथकुञ्जरवाजिमान् । पुण्यशीलो महाकीर्तिर्ऋजुरासीन्महायशाः ॥ २
राजर्षीणां गुणश्रेष्ठस्तपसा चर्षिभिः समः । चक्रवर्तिकुले जातः पुरंदरसमो बले ॥ ३
अहिंसारतिरक्षुद्रो घृणी सत्यपराक्रमः । मुख्यश्चेक्ष्वाकुवंशस्य लक्ष्मीवाँल्लक्ष्मिवर्धनः ॥ ४
पार्थिवव्यञ्जनैर्युक्तः पृथुश्रीः पार्थिवर्षभः । पृथिव्यां चतुरन्तायां विश्रुतः सुखदः सुखी ॥ ५

---

1. सहाय एव साहाय्य इति भूषणव्याख्या । २. इक्ष्वाकूणाम् पुमा.
१. नैनामित्यादि समर्पयन्नित्यन्तम् ख. नास्ति ।

तस्य पुत्रः प्रियो ज्येष्ठस्ताराधिपनिभाननः । रामो नाम विशेषज्ञः श्रेष्ठः सर्वधनुष्मताम् ॥ ६
रक्षिता स्वस्य वृत्तस्य स्वजनस्यापि रक्षिता । रक्षिता जीवलोकस्य धर्मस्य च परंतपः ॥ ७
तस्य सत्याभिसन्धस्य वृद्धस्य वचनात् पितुः । सभार्यः सह च भ्रात्रा वीरः प्रव्राजितो वनम् ॥ ८
तेन तत्र महारण्ये मृगयां परिधावता । राक्षसा निहताः शूरा बहवः कामरूपिणः ॥ ९
जनस्थानवधं श्रुत्वा हतौ च खरदूषणौ । ततस्त्वमर्षापहृता जानकी रावणेन तु ॥ १०
वञ्चयित्वा वने रामं मृगरूपेण मायया । स मार्गमाणस्तां देवीं रामः सीतामनिन्दिताम् ॥ ११
आससाद वने मित्रं सुग्रीवं नाम वानरम् । ततः स वालिनं हत्वा रामः परपुरंजयः ॥ १२
प्रायच्छत् कपिराज्यं तत् सुग्रीवाय महाबलः । सुग्रीवेणापि संदिष्टा हरयः कामरूपिणः ॥ १३
दिक्षु सर्वासु तां देवीं विचिन्वन्ति सहस्रशः । अहं संपातिवचनाच्छतयोजनमायतम् ॥ १४
अस्या हेतोर्विशालाक्ष्याः सागरं वेगवान् प्लुतः । यथारूपां यथावर्णां यथालक्ष्मीं च निश्चिताम् ॥
अश्रौषं राघवस्याहं सेयमासादिता मया । विररामैवमुक्त्वासौ वाचं वानरपुंगवः ॥ १६
जानकी चापि तच्छ्रुत्वा विस्मयं परमं गता । ततः सा वक्रकेशान्ता सुकेशी केशसंवृतम् ॥ १७
उन्नम्य वदनं भीरुः शिंशपामन्ववैक्षत ॥

निशम्य सीता वचनं कपेश्च दिशश्च सर्वाः प्रदिशश्च वीक्ष्य ।
स्वयं प्रहर्षं परमं जगाम सर्वात्मना राममनुस्मरन्ती ॥ १८
सा तिर्यगूर्ध्वं च तथाप्यधस्तान्निरीक्षमाणा तमचिन्त्यबुद्धिम् ।
ददर्श पिङ्गाधिपतेरमात्यं वातात्मजं सूर्यमिवोदयस्थम् ॥ १९

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
सुन्दरकाण्डे रामवृत्तसंश्रवो नाम एकत्रिंशः सर्गः

---

## द्वात्रिंशः सर्गः

### सीतावितर्कः

ततः शाखान्तरे लीनं दृष्ट्वा चलितमानसा । वेष्टितार्जुनवस्त्रं तं विद्युत्सङ्घातपिङ्गलम् ॥ १
सा ददर्श कपिं तत्र प्रश्रितं प्रियवादिनम् । फुल्लाशोकोत्कराभासं तप्तचामीकरेक्षणम् ॥ २
मैथिली चिन्तयामास विस्मयं परमं गता । अहो भीममिदं रूपं वानरस्य दुरासदम् ॥ ३
दुर्निरीक्ष्यमिति ज्ञात्वा पुनरेव मुमोह सा । विललाप भृशं सीता करुणं भयमोहिता ॥ ४
राम रामेति दुःखार्ता लक्ष्मणेति च भामिनी । रुरोद बहुधा सीता मन्दं मन्दस्वरा सती ॥ ५

सा तं दृष्ट्वा हरिश्रेष्ठं विनीतवदुपस्थितम् । मैथिली चिन्तयामास स्वप्नोऽयमिति भामिनी ॥ ६

सा वीक्षमाणा पृथुभुग्नवक्त्रं शाखामृगेन्द्रस्य यथोक्तकारम् ।
ददर्श पिङ्गाधिपतेरमात्यं[1] वातात्मजं बुद्धिमतां वरिष्ठम् ॥ ७

सा तं समीक्ष्यैव भृशं विसंज्ञा गतासुकल्पेव बभूव सीता ।
चिरेण संज्ञां प्रतिलभ्य भूयो विचिन्तयामास विशालनेत्रा ॥ ८

स्वप्ने[2] मयायं विकृतोऽद्य दृष्टः शाखामृगः शास्त्रगणैर्निषिद्धः ।
स्वस्त्यस्तु रामाय सलक्ष्मणाय तथा पितुर्मे जनकस्य राज्ञः ॥ ९

स्वप्नोऽपि नायं न हि मेऽस्ति निद्रा शोकेन दुःखेन च पीडितायाः ।
सुखं हि मे नास्ति यतोऽस्मि हीना तेनेन्दुपूर्णप्रतिमाननेन ॥ १०

रामेति रामेति सदैव बुद्ध्या विचिन्त्य वाचा ब्रुवती तमेव ।
तस्यानुरूपां च कथां तमर्थमेवं प्रपश्यामि तथा शृणोमि ॥ ११

अहं हि तस्याद्य मनोभवेन संपीडिता तद्गतसर्वभावा ।
विचिन्तयन्ती सततं तमेव तथैव पश्यामि यथा शृणोमि[3] ॥ १२

मनोरथः स्यादिति चिन्तयामि तथापि बुद्ध्या च वितर्कयामि ।
किं कारणं तस्य हि नास्ति रूपं सुव्यक्तरूपश्च वदत्ययं माम् ॥ १३

नमोऽस्तु वाचस्पतये सवज्रिणे स्वयंभुवे चैव हुताशनाय च ।
अनेन चोक्तं यदिदं ममाग्रतो वनौकसा तच्च तथास्तु नान्यथा ॥ १४

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायां
सुन्दरकाण्डे सीतावितर्को नाम द्वात्रिंशः

---

## त्रयस्त्रिंशः सर्गः

### हनूमज्जानकीसंवादोपक्रमः

सोऽवतीर्य द्रुमात्तस्माद्विद्रुमप्रतिमाननः । विनीतवेषः कृपणः प्रणिपत्योपसृत्य च ॥ १

तामब्रवीन्महातेजा हनूमान् मारुतात्मजः । शिरस्यञ्जलिमाधाय सीतां मधुरया गिरा ॥ २

का नु पद्मपलाशाक्षि क्लिष्टकौशेयवासिनि । द्रुमस्य शाखामालम्ब्य तिष्ठसि त्वमनिन्दिते ॥ ३

किमर्थं तव नेत्राभ्यां वारि स्रवति शोकजम् । पुण्डरीकपलाशाभ्यां विप्रकीर्णमिवोदकम् ॥ ४

---

१. पिङ्गप्रवरं महार्हम् क. ख.
२, स्वप्नः क. ख, ग.
३. इदं पद्यम् ख. नास्ति ।

सुराणामसुराणां वा नागगन्धर्वरक्षसाम् । यक्षाणां किंनराणां वा का त्वं भवसि शोभने ॥ ५
का त्वं भवसि रुद्राणां मरुतां वा वरानने । वसूनां वा वरारोहे देवता प्रतिभासि मे ॥ ६
किं नु चन्द्रमसा हीना पतिता विबुधालयात् । रोहिणी ज्योतिषां श्रेष्ठा श्रेष्ठा सर्वगुणान्विता ॥ ७
का त्वं भवसि कल्याणि त्वमनिन्दितलोचने । कोपाद्वा यदि वा मोहाद्भर्तारमसितेक्षणे ॥ ८
वसिष्ठं कोपयित्वा त्वं नासि कल्याण्यरुन्धती । को नु पुत्रः पिता भ्राता भर्ता वा ते सुमध्यमे ॥९
अस्माल्लोकादमुं लोकं गतं त्वमनुशोचसि । रोदनादतिनिःश्वासाद्भूमिसंस्पर्शनादपि ॥ १०
न त्वां देवीमहं मन्ये राज्ञः संज्ञावधारणात्[1] । व्यञ्जनानि च ते यानि लक्षणानि च लक्षये ॥ ११
महिषी भूमिपालस्य राजकन्यासि मे मता । रावणेन जनस्थानाद्बलादपहृता यदि ॥ १२
सीता त्वमसि भद्रं ते तन्ममाचक्ष्व पृच्छतः । यथा हि तव वै दैन्यं रूपं चाप्यतिमानुषम् ॥ १३
तपसा चान्वितो वेषस्त्वं राममहिषी ध्रुवम् । सा तस्य वचनं श्रुत्वा रामकीर्तनहर्षिता ॥ १४
उवाच वाक्यं वैदेही हनुमन्तं द्रुमाश्रितम् । पृथिव्यां राजसिंहानां मुख्यस्य विदितात्मनः ॥ १५
स्नुषा दशरथस्याहं शत्रुसैन्यप्रमाथिनः । दुहिता जनकस्याहं वैदेहस्य महात्मनः ॥ १६
सीता च नाम नाम्नाहं भार्या रामस्य धीमतः । समा द्वादश तत्राहं राघवस्य निवेशने ॥ १७
भुञ्जाना मानुषान् भोगान् सर्वकामसमृद्धिनी । ततस्त्रयोदशे वर्षे राज्ये चेक्ष्वाकुनन्दनम् ॥ १८
अभिषेचयितुं राजा सोपाध्यायः प्रचक्रमे । तस्मिन् संभ्रियमाणे तु राघवस्याभिषेचने ॥ १९
कैकेयी नाम भर्तारमिदं[2] वचनमब्रवीत् । न पिबेयं न खादेयं प्रत्यहं मम भोजनम् ॥ २०
एष मे जीवितस्यान्तो रामो यद्यभिषिच्यते । यत्तदुक्तं त्वया वाक्यं प्रीत्या नृपतिसत्तम ॥ २१
तच्चेन्न वितथं कार्यं वनं गच्छतु राघवः । स राजा सत्यवाग्देव्या वरदानमनुस्मरन् ॥ २२
मुमोह वचनं श्रुत्वा कैकेय्याः क्रूरमप्रियम् । ततस्तु स्थविरो राजा सत्ये धर्मे व्यवस्थितः ॥ २३
ज्येष्ठं यशस्विनं पुत्रं रुदन् राज्यमयाचत । स पितुर्वचनं श्रीमानभिषेकात् परं प्रियम् ॥ २४
मनसा पूर्वमासाद्य वाचा प्रतिगृहीतवान् । दद्यान्न प्रतिगृह्णीयान्न ब्रूयात् किंचिदप्रियम्[3] ॥ २५
अपि जीवितहेतोर्वा रामः सत्यपराक्रमः । स विहायोत्तरीयाणि महार्हाणि महायशाः ॥ २६
विसृज्य मनसा राज्यं जनन्यै मां समादिशत् । साहं तस्याग्रतस्तूर्णं प्रस्थिता वनचारिणी ॥ २७
न हि मे तेन हीनाया वासः स्वर्गेऽपि रोचते । प्रागेव तु महाभागः सौमित्रिर्मित्रनन्दनः ॥ २८
पूर्वजस्यानुयात्रार्थे द्रुमचीरैरलंकृतः । ते वयं भर्तुरादेशं बहुमान्य दृढव्रताः ॥ २९
प्रविष्टाः स्म पुरादृष्टं वनं गम्भीरदर्शनम् । वसतो दण्डकारण्ये तस्याहममितौजसः ॥ ३०

---

१. रोदनादित्यादि संज्ञावधारणात् इत्यन्तम् ख. नास्ति । २. देवी च. छ. ३. सत्यं ब्रूयान्न चानृतम् पुना.

रक्षसापहृता भार्या रावणेन दुरात्मना । द्वौ मासौ तेन मे कालो जीविताऽनुग्रहः कृतः ॥ ३१
ऊर्ध्वं द्वाभ्यां तु मासाभ्यां ततस्त्यक्ष्यामि जीवितम् ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
सुन्दरकाण्डे हनूमज्जानकीसंवादो नाम त्रयस्त्रिंशः सर्गः

---

## चतुस्त्रिंशः सर्गः

### रावणशङ्कानिवारणम्

तस्यास्तद्वचनं श्रुत्वा हनुमान् हरियूथपः । दुःखाद्दुःखाभिभूतायाः सान्त्वमुत्तरमब्रवीत् ॥ १
अहं रामस्य संदेशाद्देवि दूतस्तवागतः । वैदेहि कुशली रामस्त्वां च कौशलमब्रवीत् ॥ २
यो ब्राह्ममस्त्रं वेदांश्च वेद वेदविदां वरः । स त्वां दाशरथी रामो देवि कौशलमब्रवीत् ॥ ३
लक्ष्मणश्च महातेजा भर्तुस्तेऽनुचरः प्रियः । कृतवाञ्शोकसंतप्तः शिरसा तेऽभिवादनम् ॥ ४
सा तयोः कुशलं देवी निशम्य नरसिंहयोः । प्रीतिसंहृष्टसर्वाङ्गी हनुमन्तमथाब्रवीत् ॥ ५
कल्याणी बत गाथेयं लौकिकी प्रतिभाति मा । एति जीवन्तमानन्दो नरं वर्षशतादपि ॥ ६
तया समागते तस्मिन् प्रीतिरुत्पादिताद्भुता । परस्परेण चालापं विश्वस्तौ तौ प्रचक्रतुः ॥ ७
तस्यास्तद्वचनं श्रुत्वा हनुमान् हरियूथपः । सीतायाः शोकदीनायाः समीपमुपचक्रमे ॥ ८
यथा यथा समीपं स हनुमानुपसर्पति । तथा तथा रावणं सा तं सीता परिशङ्कते ॥ ९
अहो धिग्दुष्कृतमिदं कथितं हि यदस्य मे । रूपान्तरमुपागम्य स एवायं हि रावणः ॥ १०
तामशोकस्य शाखां सा विमुक्त्वा शोककर्शिता । तस्यामेवानवद्याङ्गी धरण्यां समुपाविशत् ॥ ११
हनुमानपि दुःखार्तां तां दृष्ट्वा भयमोहिताम् । अवन्दत महाबाहुस्ततस्तां जनकात्मजाम् ॥ १२
सा चैनं भयवित्रस्ता भूयो नैवाभ्युदैक्षत । तं दृष्ट्वा वन्दमानं तु सीता शशिनिभानना ॥ १३
अब्रवीद्दीर्घमुच्छ्वस्य वानरं मधुरस्वरा । मायां प्रविष्टो मायावी यदि त्वं रावणः स्वयम् ॥ १४
उत्पादयसि मे भूयः संतापं तन्न शोभनम् । स्वं परित्यज्य रूपं यः परिव्राजकरूपधृत् ॥ १५
जनस्थाने मया दृष्टस्त्वं स एवासि रावणः । उपवासकृशां दीनां कामरूप निशाचर ॥ १६
संतापयसि मां भूयः संतप्तां तन्न शोभनम् । अथवा नैतदेवं हि यन्मया परिशङ्कितम् ॥ १७
मनसो हि मम प्रीतिरुत्पन्ना तव दर्शनात् । यदि रामस्य दूतस्त्वमागतो भद्रमस्तु ते ॥ १८
पृच्छामि त्वां हरिश्रेष्ठ प्रिया रामकथा हि मे । गुणान् रामस्य कथय प्रियस्य मम वानर ॥ १९
चित्तं हरसि मे सौम्य नदीकूलं यथा रयः । अहो स्वप्नस्य सुखता याहमेवं चिराहृता ॥ २०
प्रेषितं नाम पश्यामि राघवेण वनौकसम् । स्वप्नेऽपि यद्यहं वीरं राघवं सहलक्ष्मणम् ॥ २१

पश्येयं नावसीदेयं स्वप्नोऽपि मम मत्सरी। नाहं स्वप्नमिमं मन्ये स्वप्ने दृष्ट्वा हि वानरम्॥ २२
न शक्योऽभ्युदयः प्राप्तुं प्राप्तश्चाभ्युदयो मम। किं नु स्याच्चित्तमोहोऽयं भवेद्वातगतिस्त्वियम्॥ २३
उन्मादजो विकारो वा स्यादियं मृगतृष्णिका। अथवा नायमुन्मादो मोहोऽप्युन्मादलक्षणः॥ २४
संबुध्ये चाहमात्मानमिमं चापि वनौकसम्। इत्येवं बहुधा सीता संप्रधार्य बलाबलम्॥ २५
रक्षसां कामरूपत्वान्मेने तं राक्षसाधिपम्। एतां बुद्धिं तदा कृत्वा सीता सा तनुमध्यमा॥ २६
न प्रतिव्याजहाराथ वानरं जनकात्मजा। सीतायाश्चिन्तितं बुद्ध्वा हनुमान् मारुतात्मजः॥ २७
श्रोत्रानुकूलैर्वचनैस्तदा तां संप्रहर्षयत्। आदित्य इव तेजस्वी लोककान्तः शशी यथा॥ २८
राजा सर्वस्य लोकस्य देवो वैश्रवणो यथा। विक्रमेणोपपन्नश्च यथा विष्णुर्महायशाः॥ २९
सत्यवादी मधुरवाग्देवो वाचस्पतिर्यथा। रूपवान् सुभगः श्रीमान् कंदर्प इव मूर्तिमान्॥ ३०
स्थानक्रोधः प्रहर्ता च श्रेष्ठो लोके महारथः। बाहुच्छायामवष्टब्धो यस्य लोको महात्मनः॥ ३१
अपकृष्याश्रमपदान्मृगरूपेण राघवम्। शून्ये येनापनीतासि तस्य द्रक्ष्यसि यत् फलम्॥ ३२
नचिराद्रावणं संख्ये यो वधिष्यति वीर्यवान्। रोषप्रमुक्तैरिषुभिर्ज्वलद्भिरिव पावकैः॥ ३३
तेनाहं प्रेषितो दूतस्त्वत्सकाशमिहागतः। त्वद्वियोगेन दुःखार्तः स त्वां कौशलमब्रवीत्॥ ३४
लक्ष्मणश्च महातेजाः सुमित्रानन्दवर्धनः। अभिवाद्य महाबाहुः स त्वां कौशलमब्रवीत्॥ ३५
रामस्य च सखा देवि सुग्रीवो नाम वानरः। राजा वानरमुख्यानां स त्वां कौशलमब्रवीत्॥ ३६
नित्यं स्मरति ते रामः[1] ससुग्रीवः सलक्ष्मणः। दिष्ट्या जीवसि वैदेहि राक्षसीवशमागता॥ ३७
नचिराद्द्रक्ष्यसे रामं लक्ष्मणं च महाबलम्। मध्ये वानरकोटीनां सुग्रीवं चामितौजसम्॥ ३८
अहं सुग्रीवसचिवो हनुमान्नाम वानरः। प्रविष्टो नगरीं लङ्कां लङ्घयित्वा महोदधिम्॥ ३९
कृत्वा मूर्ध्नि पदन्यासं रावणस्य दुरात्मनः। त्वां द्रष्टुमुपयातोऽहं समाश्रित्य पराक्रमम्॥ ४०
नाहमस्मि तथा देवि यथा मामवगच्छसि। विशङ्का त्यज्यतामेषा श्रद्धत्स्व वदतो मम॥ ४१

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
सुन्दरकाण्डे रावणशङ्कानिवारणं नाम चतुस्त्रिंशः सर्गः

---

## पञ्चत्रिंशः सर्गः

### विश्वासोत्पादनम्

तां तु रामकथां श्रुत्वा वैदेही वानरर्षभात्। उवाच वचनं सौम्यमिदं मधुरया गिरा॥

---

१. रामस्त्वाम् च. छ.

क्व ते रामेण संसर्गः कथं जानासि लक्ष्मणम्। वानराणां नराणां च कथमासीत् समागमः ॥ २
यानि रामस्य लिङ्गानि लक्ष्मणस्य च वानर। तानि भूयः समाचक्ष्व न मां शोकः समाविशेत् ॥ ३
कीदृशं तस्य संस्थानं रूपं रामस्य कीदृशम्। कथमूरू कथं बाहू लक्ष्मणस्य च शंस मे ॥ ४
एवमुक्तस्तु वैदेह्या हनुमान् पवनात्मजः। ततो रामं यथातत्त्वमाख्यातुमुपचक्रमे ॥ ५
जानती बत दिष्ट्या मां वैदेहि परिपृच्छसि। भर्तुः कमलपत्राक्षि संस्थानं लक्ष्मणस्य च ॥ ६
यानि रामस्य चिह्नानि लक्ष्मणस्य च यानि वै। लक्षितानि विशालाक्षि वदतः शृणु तानि मे ॥ ७
रामः कमलपत्राक्षः सर्वसत्त्वमनोहरः। रूपदाक्षिण्यसंपन्नः प्रसूतो जनकात्मजे ॥ ८
तेजसादित्यसंकाशः क्षमया पृथिवीसमः। बृहस्पतिसमो बुद्ध्या यशसा वासवोपमः ॥ ९
रक्षिता जीवलोकस्य स्वजनस्य च रक्षिता। रक्षिता स्वस्य वृत्तस्य धर्मस्य च परंतपः ॥ १०
रामो भामिनि लोके[1]ऽस्मिंश्चातुर्वर्ण्यस्य रक्षिता। मर्यादानां च लोकस्य कर्ता कारयिता च सः ॥ ११
अर्चिष्मानर्चितो नित्यं ब्रह्मचर्यव्रते स्थितः। साधूनामुपकारज्ञः प्रचारज्ञश्च कर्मणाम् ॥ १२
राजविद्याविनीतश्च ब्राह्मणानामुपासिता। श्रुतवाञ्शीलसंपन्नो विनीतश्च परंतपः ॥ १३
यजुर्वेदविनीतश्च वेदविद्भिः सुपूजितः। धनुर्वेदे च वेदेषु वेदाङ्गेषु च निष्ठितः ॥ १४
विपुलांसो महाबाहुः कम्बुग्रीवः शुभाननः। गूढजत्रुः सुताम्राक्षो रामो देवि जनैः श्रुतः ॥ १५
दुन्दुभिस्वननिर्घोषः स्निग्धवर्णः प्रतापवान्। समः समविभक्ताङ्गो वर्णं श्यामं समाश्रितः ॥ १६
त्रिस्थिरस्त्रिप्रलम्बश्च त्रिसमस्त्रिषु चोन्नतः। त्रिताम्रस्त्रिषु च स्निग्धो गम्भीरस्त्रिषु नित्यशः ॥ १७
त्रिवलीमांस्त्र्यवनतश्चतुर्व्यङ्गस्त्रिशीर्षवान्। चतुष्कलश्चतुर्लेखश्चतुष्किष्कुश्चतुःसमः ॥ १८
चतुर्दशसमद्वन्द्वश्चतुर्दंष्ट्रश्चतुर्गतिः। महोष्ठहनुनासश्च पञ्चस्निग्धोऽष्टवंशवान् ॥ १९
दशपद्मो दशबृहत् त्रिभिर्व्याप्तो द्विशुक्लवान्। षडुन्नतो नवतनुस्त्रिभिर्व्याप्नोति राघवः ॥ २०
सत्यधर्मपरः श्रीमान् संग्रहानुग्रहे रतः। देशकालविभागज्ञः सर्वलोकप्रियंवदः ॥ २१
भ्राता च तस्य द्वैमात्रः[2] सौमित्रिरपराजितः। अनुरागेण रूपेण गुणैश्चैव तथाविधः ॥ २२
तावुभौ नरशार्दूलौ त्वद्दर्शनसमुत्सुकौ। विचिन्वन्तौ महीं कृत्स्नामस्माभिरभिसंगतौ ॥ २३
त्वामेव मार्गमाणौ तौ विचरन्तौ वसुन्धराम्। ददर्शतुर्मृगपतिं पूर्वजेनावरोपितम् ॥ २४
ऋश्यमूकस्य पृष्ठे तु बहुपादपसंकुले। भ्रातुर्भयार्तमासीनं सुग्रीवं प्रियदर्शनम् ॥ २५
वयं तु हरिराजं तं सुग्रीवं सत्यसंगरम्। परिचर्यास्महे राज्यात् पूर्वजेनावरोपितम् ॥ २६
ततस्तौ चीरवसनौ धनुःप्रवरपाणिनौ। ऋश्यमूकस्य शैलस्य रम्यं देशमुपागतौ ॥ २७
स तौ दृष्ट्वा नरव्याघ्रौ धन्विनौ वानरर्षभः। अवप्लुतो गिरेस्तस्य शिखरं भयमोहितः ॥ २८

---

१. लोकस्य च.
२. वैमात्र इति पाठान्तरमिति तिलकः।

ततः स शिखरे तस्मिन् वानरेन्द्रो व्यवस्थितः । तयोः समीपं मामेव प्रेषयामास सत्वरम् ॥ २९
तावहं पुरुषव्याघ्रौ सुग्रीववचनात् प्रभू । रूपलक्षणसंपन्नौ कृताञ्जलिरुपस्थितः ॥ ३०
तौ परिज्ञाततत्त्वार्थौ मया प्रीतिसमन्वितौ । पृष्ठमारोप्य तं देशं प्रापितौ पुरुषर्षभौ ॥ ३१
निवेदितौ च तत्त्वेन सुग्रीवाय महात्मने । तयोरन्योन्यसंलापाद्भृशं प्रीतिरजायत ॥ ३२
तत्र तौ प्रीतिसंपन्नौ हरीश्वरनरेश्वरौ । परस्परकृताश्वासौ कथया पूर्ववृत्तया ॥ ३३
तं ततः सान्त्वयामास सुग्रीवं लक्ष्मणाग्रजः । स्त्रीहेतोर्वालिना भ्रात्रा निरस्तमुरुतेजसा ॥ ३४
ततस्त्वन्नाशजं शोकं रामस्याक्लिष्टकर्मणः । लक्ष्मणो वानरेन्द्राय सुग्रीवाय न्यवेदयत् ॥ ३५
स श्रुत्वा वानरेन्द्रस्तु लक्ष्मणेनेरितं वचः । तदासीन्निष्प्रभोऽत्यर्थं ग्रहग्रस्त इवांशुमान् ॥ ३६
ततस्त्वद्गात्रशोभीनि रक्षसा ह्रियमाणया । यान्याभरणजालानि पातितानि महीतले ॥ ३७
तानि सर्वाणि रामाय आनीय हरियूथपाः । संहृष्टा दर्शयामासुर्गतिं तु न विदुस्तव ॥ ३८
तानि रामाय दत्तानि मयैवोपहृतानि च । स्वनवन्त्यवकीर्णानि तस्मिन् विगतचेतसि ॥ ३९
तान्यङ्के दर्शनीयानि कृत्वा बहुविधं तव । तेन देवप्रकाशेन देवेन परिदेवितम् ॥ ४०
पश्यतस्तानि [1]रुदतस्ताम्यतश्च पुनः पुनः[2] । प्रादीपयन्[3] दाशरथेस्तानि शोकहुताशनम् ॥ ४१
शयितं च चिरं तेन दुःखार्तेन महात्मना । मयापि विविधैर्वाक्यैः कृच्छ्रादुत्थापितः पुनः[4] ॥ ४२
तानि दृष्ट्वा महार्हाणि दर्शयित्वा मुहुर्मुहुः । राघवः सहसौमित्रिः सुग्रीवे संन्यवेशयत् ॥ ४३
स तवादर्शनादार्ये राघवः परितप्यते । महता ज्वलता नित्यमग्निनेवाग्निपर्वतः ॥ ४४
त्वत्कृते तमनिद्रा च शोकश्चिन्ता च राघवम् । तापयन्ति महात्मानमग्न्यगारमिवाग्नयः ॥ ४५
तवादर्शनशोकेन राघवः परिचाल्यते । महता भूमिकम्पेन महानिव शिलोच्चयः ॥ ४६
काननानि सुरम्याणि नदीः प्रस्रवणानि च । चरन्न रतिमाप्नोति त्वामपश्यन्नृपात्मजे[5] ॥ ४७
स त्वां मनुजशार्दूलः क्षिप्रं प्राप्स्यति राघवः । समित्रबान्धवं हत्वा रावणं जनकात्मजे ॥ ४८
सहितौ रामसुग्रीवावुभावकुरुतां तदा । समयं वालिनं हन्तुं तव चान्वेषणं प्रति ॥ ४९
ततस्ताभ्यां कुमाराभ्यां वीराभ्यां स हरीश्वरः । किष्किन्धां समुपागम्य वाली युधि निपातितः ॥ ५०
ततो निहत्य तरसा रामो वालिनमाहवे । सर्वेषां हरिसङ्घानां सुग्रीवमकरोत् पतिम् ॥ ५१
रामसुग्रीवयोरैक्यं देव्येवं समजायत । हनूमन्तं च मां विद्धि तयोर्दूतमिहागतम् ॥ ५२
स्वराज्यं प्राप्य सुग्रीवः समानीय हरीश्वरान् । त्वदर्थं प्रेषयामास दिशो दश महाबलान् ॥ ५३
आदिष्टा वानरेन्द्रेण सुग्रीवेण महौजसा । अद्रिराजप्रतीकाशाः सर्वतः प्रस्थिता महीम् ॥ ५४

---

१. दधतस्तानि क.
२. इदमर्धम् ति. नास्ति ।
३. प्रादीपयद् ति.
४. प्रादीपयन्नित्यादि पुनरित्यन्तम् ख. नास्ति ।
५. नृपात्मजः ख.

ततस्तु मार्गमाणास्ते सुग्रीववचनानुगाः । चरन्ति वसुधां कृत्स्नां वयमन्ये च वानराः ॥ ५५
अङ्गदो नाम लक्ष्मीवान् वालिसूनुर्महाबलः । प्रस्थितः कपिशार्दूलस्त्रिभागबलसंवृतः ॥ ५६
तेषां नो विप्रनष्टानां विन्ध्ये पर्वतसत्तमे । भृशं शोकपरीतानामहोरात्रगणा गताः ॥ ५७
ते वयं कार्यनैराश्यात् कालस्यातिक्रमेण च । भयाच्च कपिराजस्य प्राणांस्त्यक्तुं व्यवस्थिताः॥५८
विचित्य वनदुर्गाणि गिरिप्रस्रवणानि च । अनासाद्य पदं देव्याः प्राणांस्त्यक्तुं व्यवस्थिताः ॥
ततस्तस्य गिरेर्मूर्ध्नि वयं प्रायमुपास्महे । दृष्ट्वा प्रायोपविष्टांश्च सर्वान् वानरपुंगवान् ॥ ६०
भृशं शोकार्णवे मग्नः पर्यदेवयदङ्गदः । तव नाशं च वैदेहि वालिनश्च तथा वधम् ॥ ६१
प्रयोपवेशमस्माकं मरणं च जटायुषः । तेषां नः स्वामिसंदेशान्निराशानां मुमूर्षताम् ॥ ६२
कार्यहेतोरिवायातः शकुनिर्वीर्यवान् महान् । गृध्रराजस्य सोदर्यः[1] संपातिर्नाम गृध्रराट् ॥ ६३
श्रुत्वा भ्रातृवधं कोपादिदं वचनमब्रवीत् । यवीयान् केन मे भ्राता हतः क्व च निपातितः ॥६४
एतदाख्यातुमिच्छामि भवद्भिर्वानरोत्तमाः । अङ्गदोऽकथयत्तस्य जनस्थाने महद्वधम् ॥ ६५
रक्षसा भीमरूपेण त्वामुद्दिश्य यथातथम् । जटायुषो वधं श्रुत्वा दुःखितः सोऽरुणात्मजः॥६६
त्वामाह स वरारोहे वसन्तीं रावणालये । तस्य तद्वचनं श्रुत्वा संपातेः प्रीतिवर्धनम् ॥ ६७
अङ्गदप्रमुखाः सर्वे ततः संप्रस्थिता वयम् । विन्ध्यादुत्थाय संप्राप्ताः सागरस्यान्तमुत्तरम् ॥ ६८
त्वद्दर्शनकृतोत्साहा हृष्टास्तुष्टाः प्लवङ्गमाः । अङ्गदप्रमुखाः सर्वे वेलोपान्तमुपस्थिताः ॥ ६९
चिन्तां जग्मुः पुनर्भीतास्त्वद्दर्शनसमुत्सुकाः । अथाहं हरिसैन्यस्य सागरं प्रेक्ष्य सीदतः ॥ ७०
व्यवधूय भयं तीव्रं योजनानां शतं प्लुतः । लङ्का चापि मया रात्रौ प्रविष्टा राक्षसाकुला ॥ ७१
रावणश्च मया दृष्टस्त्वं च शोकपरिप्लुता । एतत्ते सर्वमाख्यातं यथावृत्तमनिन्दिते ॥ ७२
अभिभाषस्व मां देवि दूतो दाशरथेरहम् । तं मां रामकृतोद्योगं त्वन्निमित्तमिहागतम् ॥ ७३
सुग्रीवसचिवं देवि बुध्यस्व पवनात्मजम् । कुशली तव काकुत्स्थः सर्वशस्त्रभृतां वरः ॥ ७४
गुरोराराधने युक्तो लक्ष्मणश्च सुलक्षणः । तस्य वीर्यवतो देवि भर्तुस्तव हिते रतः ॥ ७५
अहमेकस्तु संप्राप्तः सुग्रीववचनादिह । मयेयमसहायेन चरता कामरूपिणा ॥ ७६
दक्षिणा दिगनुक्रान्ता त्वन्मार्गविचयैषिणा । दिष्ट्याहं हरिसैन्यानां त्वन्नाशमनुशोचताम् ॥ ७७
अपनेष्यामि संतापं तवाधिगमशंसनात् । दिष्ट्या हि मम न व्यर्थं देवि सागरलङ्घनम् ॥ ७८
प्राप्स्याम्यहमिदं दिष्ट्या त्वद्दर्शनकृतं यशः । राघवश्च महावीर्यः क्षिप्रं त्वामभिपत्स्यते ॥ ७९
समित्रबान्धवं हत्वा रावणं राक्षसाधिपम् । माल्यवान्नाम वैदेहि गिरीणामुत्तमो गिरिः ॥ ८०
ततो गच्छति गोकर्णं पर्वतं केसरी हरिः । स च देवर्षिभिर्दिष्टः पिता मम महाकपिः ॥ ८१
तीर्थे नदीपतेः पुण्ये शम्बसादनमुद्धरत् । तस्याहं हरिणः क्षेत्रे जातो वातेन मैथिलि ॥ ८२

---

१. अग्रजो गृध्रराजस्य ख.

## अष्टचत्वारिंशः सर्गः

### इन्द्रजिदभियोगः

ततस्तु रक्षोऽधिपतिर्महात्मा हनूमताक्षे निहते कुमारे ।
मनः समाधाय तदेन्द्रकल्पं समादिदेशेन्द्रजितं स रोषात् ॥ १

त्वमस्त्रविच्छस्त्रविदां वरिष्ठः सुरासुराणामपि शोकदाता ।
सुरेषु सेन्द्रेषु च दृष्टकर्मा पितामहाराधनसंचितास्त्रः ॥ २

तवास्त्रबलमासाद्य नासुरा न मरुद्गणाः । [1]न शेकुः समरे स्थातुं सुरेश्वरसमाश्रिताः[1] ॥ ३

न कश्चित् त्रिषु लोकेषु संयुगे नगतश्रमः । भुजवीर्याभिगुप्तश्च तपसा चाभिरक्षितः ॥ ४
देशकालविभागज्ञस्त्वमेव मतिसत्तमः ॥

न तेऽस्त्यशक्यं समरेषु कर्मणा[2] न तेऽस्त्यकार्यं मतिपूर्वमन्त्रणे ।
न सोऽस्ति कश्चित् त्रिषु संग्रहेषु वै न वेद यस्तेऽस्त्रबलं बलं च ते ॥ ५

ममानुरूपं तपसो बलं च ते पराक्रमश्चास्त्रबलं च संयुगे ।
न त्वां समासाद्य रणावमर्दे मनः श्रमं गच्छति निश्चितार्थम् ॥ ६

निहताः किंकराः सर्वे जम्बुमाली च राक्षसः । अमात्यपुत्रा वीराश्च पञ्च सेनाग्रयायिनः ॥ ७

बलानि सुसमृद्धानि साश्वनागरथानि च । सहोदरस्ते दयितः कुमारोऽक्षश्च सूदितः ॥ ८
न हि तेष्वेव मे सारो यस्त्वय्यरिनिषूदन ॥

इदं हि दृष्ट्वा मतिमन् महद्बलं कपेः प्रभावं च पराक्रमं च ।
त्वमात्मनश्चापि समीक्ष्य सारं कुरुष्व वेगं स्वबलानुरूपम् ॥ ९

बलावमर्द[3]स्त्वयि संनिकृष्टे यथागते शाम्यति शान्तशत्रौ[4] ।
तथा समीक्ष्यात्मबलं परं च समारभस्वास्त्रविदां वरिष्ठ ॥ १०

न वीर सेना गणशोच्यवन्ति न वज्रमादाय विशालसारम् ।
न मारुतस्यास्य गतिप्रमाणं न चाग्निकल्पः करणेन हन्तुम् ॥ ११

तमेवमर्थं प्रसमीक्ष्य सम्यक् स्वकर्मसाम्याद्धि समाहितात्मा ।
स्मरंश्च दिव्यं धनुषोऽस्त्रवीर्यं व्रजाक्षतं कर्म समारभस्व ॥ १२

---

1. नासुराः, न मरुद्गणाः, न सुरेश्वरसमाश्रिताः अन्ये केचिदपि समरे स्थातुं शेकुरिति योजने 'नासुराः नशक्नन्ति' इत्याद्यध्याहारक्लेशो भूषणादिव्याख्याङ्गीकृतः न प्रसज्यत इति बोध्यम् ।

१. इदमर्धम् ख. नास्ति ।
२. कर्मणाम् ति. ।
३. बलावमर्दैः ति ।
४. शान्तशत्रुः ति. शान्तशत्रो. तीर्थः ।

न खल्वियं मतिः श्रेष्ठा[1] यत्त्वां संप्रेषयाम्यहम् । इयं च राजधर्माणां क्षत्त्रस्य च मतिर्मता ॥ १३
नानाशस्त्रैश्च संग्रामे वैशारद्यमरिंदम । अवश्यमेव बोद्धव्यं काम्यश्च विजयो रणे ॥ १४
ततः पितुस्तद्वचनं निशम्य प्रदक्षिणं दक्षसुतप्रभावः ।
चकार भर्तारमहीनसत्त्वो[2] रणाय वीरः प्रतिपन्नबुद्धिः ॥ १५
ततस्तैः स्वगणैरिष्टैरिन्द्रजित् प्रतिपूजितः । युद्धोद्धतः कृतोत्साहः संग्रामं प्रत्यपद्यत ॥ १६
श्रीमान् पद्मपलाशाक्षो राक्षसाधिपतेः सुतः । निर्जगाम महातेजाः समुद्र इव पर्वसु ॥ १७
स पक्षिराजानिलतुल्यवेगैर्व्यालैश्चतुर्भिः सिततीक्ष्णदंष्ट्रैः ।
रथं समायुक्तमसङ्गवेगं समारुरोहेन्द्रजिदिन्द्रकल्पः ॥ १८
स रथी धन्विनां श्रेष्ठः शस्त्रज्ञोऽस्त्रविदां वरः । रथेनाभिययौ क्षिप्रं हनूमान् यत्र सोऽभवत् ॥ १९
स तस्य रथनिर्घोषं ज्यास्वनं कार्मुकस्य च । निशम्य हरिवीरोऽसौ संप्रहृष्टतरोऽभवत् ॥ २०
सुमहच्चापमादाय शितशल्यांश्च सायकान् । हनुमन्तमभिप्रेत्य जगाम रणपण्डितः ॥ २१
तस्मिंस्ततः संयति जातहर्षे रणाय निर्गच्छति बाणपाणौ ।
दिशश्च सर्वाः कलुषा बभूवुर्मृगाश्च रौद्रा बहुधा विनेदुः ॥ २२
समागतास्तत्र तु नागयक्षा महर्षयश्चक्रचराश्च सिद्धाः ।
नभः समावृत्य च पक्षिसङ्घा विनेदुरुच्चैः परमप्रहृष्टाः ॥ २३
आयान्तं सरथं दृष्ट्वा तूर्णमिन्द्रजितं कपिः । विननाद महानादं व्यवर्धत च वेगवान् ॥ २४
इन्द्रजित्तु रथं दिव्यमास्थितश्चित्रकार्मुकः । धनुर्विस्फारयामास तटिदूर्जितनिःस्वनम् ॥ २५
ततः समेतावतितीक्ष्णवेगौ महाबलौ तौ रणनिर्विशङ्कौ ।
कपिश्च रक्षोऽधिपतेश्च पुत्रः सुरासुरेन्द्राविव बद्धवैरौ ॥ २६
स तस्य वीरस्य महारथस्य धनुष्मतः संयति संमतस्य ।
शरप्रवेगं व्यहनत् प्रवृद्धश्चचार मार्गे पितुरप्रमेयः ॥ २७
ततः शरानायततीक्ष्णशल्यान् सुपत्रिणः काञ्चनचित्रपुङ्खान् ।
मुमोच वीरः परवीरहन्ता सुसंनतान् वज्रनिपातवेगान् ॥ २८
स तस्य तु स्यन्दननिःस्वनं च मृदङ्गभेरीपटहस्वनं च ।
विकृष्यमाणस्य च कार्मुकस्य निशम्य घोषं पुनरुत्पपात ॥ २९
शराणामन्तरेष्वाशु व्यवर्तत महाकपिः । हरिस्तस्याभिलक्ष्यस्य मोहयँल्लक्ष्यसंग्रहम् ॥ ३०
शराणामग्रतस्तस्य पुनः समभिवर्तत । प्रसार्य हस्तौ हनुमानुत्पपातानिलात्मजः ॥ ३१
तावुभौ वेगसंपन्नौ रणकर्मविशारदौ । सर्वभूतमनोग्राहि चक्रतुर्युद्धमुत्तमम् ॥ ३२

---

१. मतिश्रेष्ठ पुना. । २. अदीनसत्वः च.

हनूमतो वेद न राक्षसोऽन्तरं न मारुतिस्तस्य महात्मनोऽन्तरम् ।
परस्परं निर्विषहौ बभूवतुः समेत्य तौ देवसमानविक्रमौ ॥ ३३

ततस्तु लक्ष्ये स विहन्यमाने शरेष्वमोघेषु च संपतत्सु ।
जगाम चिन्तां महतीं महात्मा समाधिसंयोगसमाहितात्मा ॥ ३४

ततो मतिं राक्षसराजसूनुश्चकार तस्मिन् हरिवीरमुख्ये ।
अवध्यतां तस्य कपेः समीक्ष्य कथं निगच्छेदिति निग्रहार्थम् ॥ ३५

ततः पैतामहं वीरः सोऽस्त्रमस्त्रविदां वरः । संदधे सुमहातेजास्तं हरिप्रवरं प्रति ॥ ३६

अवध्योऽयमिति ज्ञात्वा तमस्त्रेणास्त्रतत्त्ववित् । निजग्राह महाबाहुर्मारुतात्मजमिन्द्रजित् ॥ ३७

तेन बद्धस्ततोऽस्त्रेण राक्षसेन स वानरः । अभवन्निर्विचेष्टश्च पपात च महीतले ॥ ३८

ततोऽथ बुद्ध्वा स तदस्त्रबन्धं प्रभोः प्रभावाद्विगतात्मवेगः ।
पितामहानुग्रहमात्मनश्च विचिन्तयामास हरिप्रवीरः ॥ ३९

ततः स्वायंभुवैर्मन्त्रैर्ब्रह्मास्त्रमभिमन्त्रितम् । हनूमांश्चिन्तयामास वरदानं पितामहात् ॥ ४०

न मेऽस्य बन्धस्य च शक्तिरस्ति विमोक्षणे लोकगुरोः प्रभावात् ।
इत्येव मत्वा विहितोऽस्त्रबन्धो मयात्मयोनेरनुवर्तितव्यः ॥ ४१

स वीर्यमस्त्रस्य कपिर्विचार्य पितामहानुग्रहमात्मनश्च ।
विमोक्षशक्तिं परिचिन्तयित्वा पितामहाज्ञामनुवर्तते स्म ॥ ४२

अस्त्रेणापि हि बद्धस्य भयं मम न जायते । पितामहमहेन्द्राभ्यां रक्षितस्यानिलेन च ॥ ४३

ग्रहणे वापि रक्षोभिर्महान् मे गुणदर्शनः । राक्षसेन्द्रेण संवादस्तस्माद्गृह्णन्तु मां परे ॥ ४४

स निश्चितार्थः परवीरहन्ता समीक्ष्यकारी विनिवृत्तचेष्टः ।
परैः प्रसह्याभिगतैर्निगृह्य ननाद तैस्तैः[1] परिभर्त्स्यमानः ॥ ४५

ततस्तं राक्षसा दृष्ट्वा निर्विचेष्टमरिंदमम् । बबन्धुः शणवल्कैश्च द्रुमचीरैश्च संहतैः ॥ ४६

स रोचयामास परैश्च बन्धनं प्रसह्य वीरैरभिनिग्रहं च ।
कौतूहलान्मां यदि राक्षसेन्द्रो द्रष्टुं व्यवस्येदिति निश्चितार्थः ॥ ४७

स बद्धस्तेन वल्केन विमुक्तोऽस्त्रेण वीर्यवान् । अस्त्रबन्धः स चान्यं हि न बन्धमनुवर्तते ॥ ४८

अथेन्द्रजित्तु द्रुमचीरबद्धं विचार्य वीरः कपिसत्तमं तम् ।
विमुक्तमस्त्रेण जगाम चिन्तां नान्येन बद्धो ह्यनुवर्ततेऽस्त्रम् ॥ ४९

अहो महत् कर्म कृतं निरर्थकं न राक्षसैर्मन्त्रगतिर्विमृष्टा ।
पुनश्च नास्त्रे विहतेऽस्त्रमन्यत् प्रवर्तते संशयिताः स्म सर्वे ॥ ५०

---

1. तस्तैरिति, नानाविधैर्वचोभिरित्यर्थः । परैर्निगृह्य परिभर्त्स्यमानो ननादेत्यन्वयः ।

अस्त्रेण हनुमान् मुक्तो नात्मानवबुध्यत । कृष्यमाणस्तु रक्षोभिस्तैश्च बन्धैर्निपीडितः ॥ ५१

हन्यमानस्ततः क्रूरै राक्षसैः काष्ठमुष्टिभिः । समीपं राक्षसेन्द्रस्य प्राकृष्यत स वानरः ॥ ५२

अथेन्द्रजित्तं प्रसमीक्ष्य मुक्तमस्त्रेण बद्धं द्रुमचीरसूत्रैः ।
व्यदर्शयत्तत्र महाबलं तं हरिप्रवीरं सगणाय राज्ञे ॥ ५३

तं मत्तमिव मातङ्गं बद्धं कपिवरोत्तमम् । राक्षसा राक्षसेन्द्राय रावणाय न्यवेदयन् ॥ ५४

कोऽयं कस्य कुतो वात्र किं कार्यं को व्यपाश्रयः । इति राक्षसवीराणां तत्र संजज्ञिरे कथाः ॥ ५५

हन्यतां दह्यतां वापि भक्ष्यतामिति चापरे । राक्षसास्तत्र संक्रुद्धाः परस्परमथाब्रुवन् ॥ ५६

अतीत्य मार्गं महसा महात्मा स तत्र रक्षोऽधिपपादमूले ।
ददर्श राज्ञः परिचारवृद्धान् गृहं महारत्नविभूषितं च ॥ ५७

स ददर्श महातेजा रावणः कपिसत्तमम् । रक्षोभिर्विकृताकारैः कृष्यमाणमितस्ततः ॥ ५८

राक्षसाधिपतिं चापि ददर्श कपिसत्तमः । तेजोबलसमायुक्तं तपन्तमिव भास्करम् ॥ ५९

स रोषसंवर्तिततास्रदृष्टिर्दशाननस्तं कपिमन्ववेक्ष्य ।
अथोपविष्टान् कुलशीलवृद्धान् समादिशत्तं प्रति मन्त्रिमुख्यान् ॥ ६०

यथाक्रमं तैः स कपिर्विपृष्टः कार्यार्थमर्थस्य च मूलमादौ ।
निवेदयामास हरीश्वरस्य दूतः सकाशादहमागतोऽस्मि ॥ ६१

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
सुन्दरकाण्डे इन्द्रजिदभियोगो नाम अष्टचत्वारिंशः सर्गः

---

## एकोनपञ्चाशः सर्गः

### रावणप्रभावदर्शनम्

ततः स कर्मणा तस्य विस्मितो भीमविक्रमः । हनुमान् रोषताम्राक्षो रक्षोऽधिपमवैक्षत ॥ १

भ्राजमानं महार्हेण काञ्चनेन विराजता । मुक्ताजालावृतेनाथ मकुटेन महाद्युतिम् ॥ २

वज्रसंयोगसंयुक्तैर्महार्हमणिविग्रहैः । हैमैराभरणैश्चित्रैर्मनसेव प्रकल्पितैः ॥ ३

महार्हक्षौमसंवीतं रक्तचन्दनरूषितम् । स्वनुलिप्तं विचित्राभिर्विविधाभिश्च भक्तिभिः ४

विवृतै[1]र्दर्शनीयैश्च रक्ताक्षैर्भीमदर्शनैः । दीप्ततीक्ष्णमहादंष्ट्रैः प्रलम्बदशनच्छदैः ॥ ५

शिरोभिर्दशभिर्वीरं भ्राजमानं महौजसम् । नानाव्यालसमाकीर्णैः शिखरैरिव मन्दरम् ॥ ६

नीलाञ्जनचयप्रख्यं हारेणोरसि राजता । पूर्णचन्द्राभवक्त्रेण सबलाकमिवाम्बुदम् ॥ ७

बाहुभिर्बद्धकेयूरैश्चन्दनोत्तमरूषितैः । भ्राजमानाङ्गदैः पीनैः पञ्चशीर्षैरिवोरगैः ॥ ८

महति स्फाटिके चित्रे रत्नसंयोगसंस्कृते । उत्तमास्तरणास्तीर्णे सूपविष्टं वरासने ॥ ९

---

१. विपुलैः क. ग. छ.

अलंकृताभिरत्यर्थं प्रमदाभिः समन्ततः । वालव्यजनहस्ताभिरारात् समुपसेवितम् ॥ १०
दुर्धरेण प्रहस्तेन महापार्श्वेन रक्षसा । मन्त्रिभिर्मन्त्रतत्त्वज्ञैर्निकुम्भेन च मन्त्रिणा ॥ ११
उपोपविष्टं रक्षोभिश्चतुर्भिर्बलदर्पितैः । कृत्स्नं परिवृतं लोकं[1] चतुर्भिरिव सागरैः ॥ १२
मन्त्रिभिर्मन्त्रतत्त्वज्ञैरन्यैश्च शुभबुद्धिभिः । अन्वास्यमानं सचिवैः[2] सुरैरिव सुरेश्वरम् ॥ १३
अपश्यद्राक्षसपतिं हनुमानतितेजसम् । विष्ठितं मेरुशिखरे सतोयमिव तोयदम् ॥ १४
स तैः संपीड्यमानोऽपि रक्षोभिर्भीमविक्रमैः । विस्मयं परमं गत्वा रक्षोऽधिपमवैक्षत ॥ १५
भ्राजमानं ततो दृष्ट्वा हनुमान् राक्षसेश्वरम् । मनसा चिन्तयामास तेजसा तस्य मोहितः ॥ १६
अहो रूपमहो धैर्यमहो सत्त्वमहो द्युतिः । अहो राक्षसराजस्य सर्वलक्षणयुक्तता ॥ १७
यद्यधर्मो न बलवान् स्यादयं राक्षसेश्वरः । स्यादयं सुरलोकस्य सशक्रस्यापि रक्षिता ॥ १८
अस्य क्रूरैर्नृशंसैश्च कर्मभिर्लोककुत्सितैः । तेन[3] बिभ्यति खल्वस्माल्लोकाः सामरदानवाः ॥ १९
अयं ह्युत्सहते क्रुद्धः कर्तुमेकार्णवं जगत् । इति चिन्तां बहुविधामकरोन्मतिमान् कपिः ॥ २०
दृष्ट्वा राक्षसराजस्य प्रभावममितौजसः ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
सुन्दरकाण्डे रावणप्रभावदर्शनं नाम एकोनपञ्चाशः सर्गः

---

## पञ्चाशः सर्गः

### प्रहस्तप्रश्नः

तमुद्वीक्ष्य महाबाहुः पिङ्गाक्षं पुरतः स्थितम् । रोषेण महताविष्टो रावणो लोकरावणः ॥ १
शङ्काहतात्मा दध्यौ स कपीन्द्रं तेजसावृतम् । किमेष भगवान्नन्दी भवेत् साक्षादिहागतः ॥ २
येन शप्तोऽस्मि कैलासे मया संचालिते पुरा । सोऽयं वानरमूर्तिः स्यात् किंस्विद्बाणोऽपि वासुरः ॥ ३
स राजा रोषताम्राक्षः प्रहस्तं मन्त्रिसत्तमम् । कालयुक्तमुवाचेदं वचो विपुलमर्थवत् ॥ ४
दुरात्मा पृच्छ्यतामेष कुतः किं वास्य कारणम् । वनभङ्गे च कोऽस्यार्थो राक्षसीनां च तर्जने ॥ ५
मत्पुरीमप्रधृष्यां वागमने किं प्रयोजनम् । आयोधने वा किं कार्यं पृच्छ्यतामेष दुर्मतिः ॥ ६
रावणस्य वचः श्रुत्वा प्रहस्तो वाक्यमब्रवीत् । समाश्वसिहि भद्रं ते न भीः कार्या त्वया कपे ॥ ७
यदि तावत्त्वमिन्द्रेण प्रेषितो रावणालयम् । तत्त्वमाख्याहि मा भूत्ते भयं वानर मोक्ष्यसे ॥ ८
यदि वैश्रवणस्य त्वं यमस्य वरुणस्य वा । [4]चाररूपमिदं कृत्वा प्रविष्टो नः पुरीमिमाम् ॥ ९
विष्णुना प्रेषितो वापि दूतो विजयकाङ्क्षिणा । न हि ते वानरं तेजो रूपमात्रं तु वानरम् ॥ १०

---

१. कृत्स्नः परिवृतो लोकः च. छ. ३. खे न ति, पाठान्तरम् ।
२. रक्षोभिः च. ४. चाररूपम् छ.

तत्त्वतः कथयस्वाद्य ततो वानर मोक्ष्यसे । अनृतं वदतश्चापि दुर्लभं तव जीवितम् ॥ ११
अथवा यन्निमित्तं[1] ते प्रवेशो रावणालये । एवमुक्तो हरिवरस्तदा रक्षोगणेश्वरम् ॥ १२
अब्रवीन्नास्मि शक्रस्य यमस्य वरुणस्य वा । धनदेन न मे सख्यं विष्णुना नास्मि चोदितः ॥ १३
जातिरेव मम त्वेषा वानरोऽहमिहागतः । दर्शने राक्षसेन्द्रस्य दुर्लभे तदिदं मया ॥ १४
वनं राक्षसराजस्य दर्शनार्थे विनाशितम् । ततस्ते राक्षसाः प्राप्ता बलिनो युद्धकाङ्क्षिणः ॥ १५
रक्षणार्थं तु देहस्य प्रतियुद्धा मया रणे । अस्त्रपाशैर्न शक्योऽहं बन्धुं देवासुरैरपि ॥ १६
पितामहादेव वरो ममाप्येषोऽभ्युपागतः । राजानं द्रष्टुकामेन मयास्त्रमनुवर्तितम् ॥ १७
विमुक्तो ह्यहमस्त्रेण राक्षसैस्त्वभिपीडितः । केनचिद्राजकार्येण संप्राप्तोऽस्मि तवान्तिकम् ॥ १८
दूतोऽहमिति विज्ञेयो राघवस्यामितौजसः । श्रूयतां चापि वचनं मम पथ्यमिदं प्रभो ॥ १९

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
सुन्दरकाण्डे प्रहस्तप्रश्नो नाम पञ्चाशः सर्गः

---

## एकपञ्चाशः सर्गः

### हनूमदुपदेशः

तं समीक्ष्य महासत्त्वं सत्त्ववान् हरिसत्तमः । वाक्यमर्थवदव्यग्रस्तमुवाच दशाननम् ॥ १
अहं सुग्रीवसंदेशादिह प्राप्तस्तवालयम् । राक्षसेन्द्र हरीशस्त्वां भ्राता कुशलमब्रवीत् ॥ २
भ्रातुः शृणु समादेशं सुग्रीवस्य महात्मनः । धर्मार्थोपहितं वाक्यमिह चामुत्र च क्षमम् ॥ ३
राजा दशरथो नाम रथकुञ्जरवाजिमान् । पितेव बन्धुर्लोकस्य सुरेश्वरसमद्युतिः ॥ ४
ज्येष्ठस्तस्य महाबाहुः पुत्रः प्रियकरः प्रभुः । पितुर्निदेशान्निष्क्रान्तः प्रविष्टो दण्डकावनम् ॥ ५
लक्ष्मणेन सह भ्रात्रा सीतया चापि भार्यया । रामो नाम महातेजा धर्म्यं पन्थानमाश्रितः ॥ ६
तस्य भार्या वने नष्टा सीता पतिमनुव्रता । वैदेहस्य सुता राज्ञो जनकस्य महात्मनः ॥ ७
स मार्गमाणस्तां देवीं राजपुत्रः सहानुजः । ऋश्यमूकमनुप्राप्तः सुग्रीवेण समागतः ॥ ८
तस्य तेन प्रतिज्ञातं सीतायाः परिमार्गणम् । सुग्रीवस्यापि रामेण हरिराज्यं निवेदितम् ॥ ९
ततस्तेन मृधे हत्वा राजपुत्रेण वालिनम् । सुग्रीवः स्थापितो राज्ये हर्यृक्षाणां गणेश्वरः ॥ १०
त्वया विज्ञातपूर्वश्च वाली वानरपुंगवः । रामेण निहतः संख्ये शरेणैकेन वानरः ॥ ११
स सीतामार्गणे व्यग्रः सुग्रीवः सत्यसंगरः । हरीन् संप्रेषयामास दिशः सर्वा हरीश्वरः ॥ १२
तां हरीणां सहस्राणि शतानि नियुतानि च । दिक्षु सर्वासु मार्गन्ते ह्यधश्चोपरि चाम्बरे ॥ १३
वैनतेयसमाः केचित् केचित्तत्रानिलोपमाः । असङ्गगतयः शीघ्रा हरिवीरा महाबलाः ॥ १४
अहं तु हनुमान्नाम मारुतस्यौरसः सुतः । सीतायास्तु कृते तूर्णं शतयोजनमायतम् ॥ १५

---

१. यन्निमित्तः छ.

समुद्रं लङ्घयित्वैव तां दिदृक्षुरिहागतः। भ्रमता च मया दृष्टा गृहे ते जनकात्मजा ॥ १६
तद्भवान् दृष्टधर्मार्थस्तपःकृतपरिग्रहः। परदारान् महाप्राज्ञ नोपरोद्धुं त्वमर्हसि ॥ १७
न हि धर्मविरुद्धेषु बह्वपायेषु कर्मसु। मूलघातिषु सज्जन्ते बुद्धिमन्तो भवद्विधाः ॥ १८
कश्च लक्ष्मणमुक्तानां रामकोपानुवर्तिनाम्। शराणामग्रतः स्थातुं शक्तो देवासुरेष्वपि ॥ १९
न चापि त्रिषु लोकेषु राजन् विद्येत कश्चन। राघवस्य व्यलीकं यः कृत्वा सुखमवाप्नुयात् ॥ २०
तत् त्रिकालहितं वाक्यं धर्म्यमर्थानुबन्धि च। मन्यस्व नरदेवाय जानकी प्रतिदीयताम् ॥ २१
दृष्टा हीयं मया देवी लब्धं यदिह दुर्लभम्। उत्तरं कर्म यच्छेषं निमित्तं तत्र राघवः ॥ २२
लक्षितेयं मया सीता तथा शोकपरायणा। गृह्य[1] यां नाभिजानासि पञ्चास्यामिव पन्नगीम् ॥ २३
नेयं जरयितुं शक्या सासुरैरमरैरपि। विषसंसृष्टमत्यर्थं भुक्तमन्नमिवौजसा ॥ २४
तपःसंतापलब्धस्ते योऽयं धर्मपरिग्रहः। न स नाशयितुं न्याय्य आत्मप्राणपरिग्रहः ॥ २५
अवध्यतां तपोभिर्यां भवान् समनुपश्यति। आत्मनः सासुरैर्देवैर्हेतुस्तत्राप्ययं महान् ॥ २६
सुग्रीवो न हि देवोऽयं नासुरो न च राक्षसः। न दानवो न गन्धर्वो न यक्षो न च पन्नगः ॥ २७
तस्मात् प्राणपरित्राणं कथं राजन् करिष्यसि। ननु धर्मोपसंहारमधर्मफलसंहितम् ॥ २८
तदेव फलमन्वेति धर्मश्चाधर्मनाशनः। प्राप्तं धर्मफलं तावद्भवता नात्र संशयः ॥ २९
फलमस्याप्यधर्मस्य क्षिप्रमेव प्रपत्स्यसे। जनस्थानवधं बुद्ध्वा बुद्ध्वा वालिवधं तथा ॥ ३०
रामसुग्रीवसख्यं च बुध्यस्व हितमात्मनः। कामं खल्वहमप्येकः सवाजिरथकुञ्जराम् ॥ ३१
लङ्कां नाशयितुं शक्तस्तस्यैष तु न निश्चयः। रामेण हि प्रतिज्ञातं हर्यृक्षगणसंनिधौ ॥ ३२
उत्सादनममित्राणां सीता यैस्तु प्रधर्षिता। अपकुर्वन् हि रामस्य साक्षादपि पुरंदरः ॥ ३३
न सुखं प्राप्नुयादन्यः किं पुनस्त्वद्विधो जनः। यां सीतेत्यभिजानासि येयं तिष्ठति ते वशे ॥ ३४
कालरात्रीति तां विद्धि सर्वलङ्काविनाशिनीम्। तदलं कालपाशेन सीताविग्रहरूपिणा ॥ ३५
स्वयं स्कन्धावसक्तेन [2]क्षममात्मनि चिन्त्यताम्। सीतायास्तेजसा दग्धां रामकोपप्रपीडिताम् ॥ ३६
दह्यमानामिमां पश्य पुरीं साट्टप्रतोलिकाम्। स्वानि मित्राणि मन्त्रींश्च ज्ञातीन्भ्रातॄन्सुतान्हितान् ॥ ३७
भोगान् दारांश्च लङ्कां च मा विनाशमुपानय। सत्यं राक्षसराजेन्द्र शृणुष्व वचनं मम ॥ ३८
रामदासस्य दूतस्य वानरस्य विशेषतः। सर्वाँल्लोकान् सुसंहृत्य सभूतान् सचराचरान् ॥ ३९
पुनरेव तथा स्रष्टुं शक्तो रामो महायशाः। देवासुरनरेन्द्रेषु यक्षरक्षोगणेषु च ॥ ४०
विद्याधरेषु सर्वेषु गन्धर्वेषूरगेषु च। सिद्धेषु किंनरेन्द्रेषु पतत्रिषु च सर्वतः ॥ ४१
सर्वभूतेषु सर्वत्र सर्वकालेषु नास्ति सः। यो रामं प्रतियुध्येत विष्णुतुल्यपराक्रमम् ॥ ४२
सर्वलोकेश्वरस्यैवं कृत्वा विप्रियमीदृशम्। रामस्य राजसिंहस्य दुर्लभं तव जीवितम् ॥ ४३

---

१. गृह्य पुना. २. क्षेमम पुना.

देवाश्च दैत्याश्च निशाचरेन्द्रगन्धर्वविद्याधरनागयक्षाः ।
रामस्य लोकत्रयनायकस्य स्थातुं न शक्ताः समरेषु सर्वे ॥ ४४
ब्रह्मा स्वयंभूश्चतुराननो वा रुद्रस्त्रिनेत्रस्त्रिपुरान्तको वा ।
इन्द्रो महेन्द्रः सुरनायको वा त्रातुं न शक्ता युधि रामवध्यम् ॥ ४५
स सौष्ठवोपेतमदीनवादिनः कपेर्निशम्याप्रतिमोऽप्रियं वचः ।
दशाननः कोपविवृत्तलोचनः समादिशत्तस्य वधं महाकपेः ॥ ४६

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
सुन्दरकाण्डे हनूमदुपदेशो नाम एकपञ्चाशः सर्गः

---

## द्विपञ्चाशः सर्गः

### दूतवधनिवारणम्

तस्य तद्वचनं श्रुत्वा वानरस्य महात्मनः । आज्ञापयत्तस्य वधं रावणः क्रोधमूर्छितः ॥ १
वधे तस्य समाज्ञप्ते रावणेन दुरात्मना । निवेदितवतो दौत्यं नानुमेने विभीषणः ॥ २
तं रक्षोऽधिपतिं क्रुद्धं तच्च कार्यमुपस्थितम् । विदित्वा चिन्तयामास कार्यं कार्यविधौ स्थितः ॥ ३
निश्चितार्थस्ततः साम्ना पूज्यं[1] शत्रुजिदग्रजम् । उवाच हितमत्यर्थं वाक्यं वाक्यविशारदः ॥ ४
क्षमस्व रोषं त्यज राक्षसेन्द्र प्रसीद मद्वाक्यमिदं शृणुष्व ।
वधं न कुर्वन्ति परावरज्ञा दूतस्य सन्तो वसुधाधिपेन्द्राः ॥ ५
राजधर्मविरुद्धं च लोकवृत्तेश्च गर्हितम् । तव चासदृशं वीर कपेरस्य प्रमापणम् ॥ ६
धर्मज्ञश्च कृतज्ञश्च राजधर्मविशारदः । परावरज्ञो भूतानां त्वमेव परमार्थवित् ॥ ७
गृह्यन्ते यदि रोषेण त्वादृशोऽपि विपश्चितः । ततः शास्त्रविपश्चित्त्वं श्रम एव हि केवलम् ॥ ८
तस्मात् प्रसीद शत्रुघ्न राक्षसेन्द्र दुरासद । युक्तायुक्तं विनिश्चित्य दूते दण्डो विधीयताम् ॥ ९
विभीषणवचः श्रुत्वा रावणो राक्षसेश्वरः । रोषेण महताविष्टो वाक्यमुत्तरमब्रवीत् ॥ १०
न पापानां वधे पापं विद्यते शत्रुसूदन । तस्मादेनं वधिष्यामि वानरं पापकारिणम् ॥ ११
अधर्ममूलं बहुरोषयुक्तमनार्यजुष्टं वचनं निशम्य ।
उवाच वाक्यं परमार्थतत्त्वं विभीषणो बुद्धिमतां वरिष्ठः ॥ १२
प्रसीद लङ्केश्वर राक्षसेन्द्र धर्मार्थयुक्तं वचनं शृणुष्व ।
दूतानवध्यान् समरेषु[2] राजन् सर्वेषु सर्वत्र वदन्ति सन्तः ॥ १३
असंशयं शत्रुरयं प्रवृद्धः कृतं ह्यनेनाप्रियमप्रमेयम् ।
न दूतवध्यां प्रवदन्ति सन्तो दूतस्य दृष्टा बहवो हि दण्डाः ॥ १४

---

१. साम्ना पूज्य च. २, समयेषु च. छ,

वैरूप्यमङ्गेषु कशाभिघातो मौण्ड्यं तथा लक्षणसंनिपातः ।
एतान् हि दूते प्रवदन्ति दण्डान् वधस्तु दूतस्य न नः श्रुतोऽपि ॥ १५

कथं च धर्मार्थविनीतबुद्धिः परावरप्रत्ययनिश्चितार्थः ।
भवद्विधः कोपवशे हि तिष्ठेत् कोपं नियच्छन्ति हि सत्त्ववन्तः ॥ १६

न धर्मवादे न च लोकवृत्ते न शास्त्रबुद्धिग्रहणेषु चापि ।
विद्येत कश्चित्तव वीर तुल्यस्त्वं ह्युत्तमः सर्वसुरासुराणाम् ॥ १७

शूरेण वीरेण निशाचरेन्द्र सुरासुराणामपि दुर्जयेन ।
त्वया प्रगल्भाः सुरदैत्यसङ्घा जिताश्च युद्धेष्वसकृन्नरेन्द्राः[1] ॥ १८

इत्थंविधस्यामरदैत्यशत्रोः शूरस्य वीरस्य तवाजितस्य ।
कुर्वन्ति मूढा मनसो व्यलीकं प्राणैर्वियुक्ता ननु ये पुरा ते[2] ॥ १९

न चाप्यस्य कपेर्घाते कंचित् पश्याम्यहं गुणम् । तेष्वयं पात्यतां दण्डो यैरयं प्रेषितः कपिः ॥ २०

साधुर्वा यदि वासाधुः परैरेष समर्पितः । ब्रुवन् परार्थं परवान्न दूतो वधमर्हति ॥ २१

अपि चास्मिन् हते राजन्नान्यं पश्यामि खेचरम् । इह यः पुनरागच्छेत् परं पारं महोदधेः ॥ २२

तस्मान्नास्य वधे यत्नः कार्यः परपुरंजय । भवान् सेन्द्रेषु देवेषु यत्नमास्थातुमर्हति ॥ २३

अस्मिन् विनष्टे न हि दूतमन्यं पश्यामि यस्तौ नरराजपुत्रौ ।
युद्धाय युद्धप्रिय दुर्विनीतावुद्योजयेद्दीर्घपथावरुद्धौ[3] ॥ २४

पराक्रमोत्साहमनस्विनां च सुरासुराणामपि दुर्जयेन ।
त्वया मनोनन्दन नैर्ऋतानां युद्धायतिर्नाशयितुं न युक्ता ॥ २५

हिताश्च शूराश्च समाहिताश्च कुलेषु जाताश्च महागुणेषु ।
मनस्विनः शस्त्रभृतां वरिष्ठाः कोट्यग्रतस्ते सुभृताश्च योधाः ॥ २६

तदेकदेशेन बलस्य तावत् केचित्तवादेशकृतोऽभियान्तु ।
तौ राजपुत्रौ विनिगृह्य मूढौ परेषु ते भावयितुं प्रभावम् ॥ २७

---

१. अस्यानन्तरम् ....पराक्रमोत्साहमनास्विनां च सुरासुराणामपि दुर्जयेन । त्वयाप्रमेयेण सुरेन्द्रसङ्घा जिताश्च युद्धेष्वसकृन्नरेन्द्राः ॥ इति ग. घ.

२. १८-१९-तमे पद्ये च. न स्तः ।

३. अस्यानन्तरम्—अस्मिन् हते वानरयूथमुख्ये सर्वेऽपवादं प्रवदन्ति सन्तः । न हि प्रपश्यामि गुणान् यशो वा लोकापवादो भवति प्रसिद्धः ॥ इति—ख. ग. घ. छ.

एतदनन्तरम्—मूढैः प्रगल्भैरपि दुर्विनीतैर्यैर्वानरोऽयं पुरुषैर्विसृष्टः । तेषां वधार्थं कुरु वीर यत्नं शीघ्रं विनाशाय निशाचरेन्द्र ॥ कुरुष्व तावत्परमं प्रयत्नं धर्मं समास्थाय नरेन्द्रशत्रो(इदमर्धम् घ. नास्ति) । देवेषु सर्वेषु सवासवेषु दैत्येषु सर्वेषु सदानवेषु ॥ कृत्वा प्रयत्नं सुदृढं सुशीघ्रं मद्वाक्यमेतन्मनसा प्रगृह्य । तौ राजपुत्रौ विनिगृह्य मूढौ जयं परं प्राप्स्यसि राक्षसेन्द्र ॥—इति ख. ग. घ.

निशाचराणामधिपोऽनुजस्य[1] विभीषणस्योत्तमवाक्यमिष्टम् ।
जग्राह बुद्ध्या सुरलोकशत्रुर्महाबलो राक्षसराजमुख्यः[2] ॥ २८
क्रोधं च जातं हृदये निरुध्य विभीषणोक्तं वचनं सुपूज्य ।
उवाच रक्षोऽधिपतिर्महात्मा विभीषणं शस्त्रभृतां वरिष्ठम्[3] ॥ २९

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम् सुन्दरकाण्डे दूतवधनिवारणं नाम द्विपञ्चाशः सर्गः

---

## त्रिपञ्चाशः सर्गः

### पावकशैत्यम्

तस्य तद्वचनं श्रुत्वा दशग्रीवो महात्मनः । देशकालहितं वाक्यं भ्रातुरुत्तरमब्रवीत् ॥ १
सम्यगुक्तं हि भवता दूतवध्या विगर्हिता । अवश्यं तु वधादन्यः क्रियतामस्य निग्रहः ॥ २
कपीनां किल लाङ्गूलमिष्टं भवति भूषणम् । तदस्य दीप्यतां शीघ्रं तेन दग्धेन गच्छतु ॥ ३
ततः पश्यन्त्विमं दीनमङ्गवैरूप्यकर्शितम् । समित्रज्ञातयः सर्वे बान्धवाः ससुहृज्जनाः ॥ ४
आज्ञापयद्राक्षसेन्द्रः पुरं सर्वं सचत्वरम् । लाङ्गूलेन प्रदीप्तेन रक्षोभिः परिणीयताम् ॥ ५
तस्य तद्वचनं श्रुत्वा राक्षसाः कोपकर्कशाः । वेष्टयन्ति स्म लाङ्गूलं जीर्णैः कार्पासकैः पटैः ॥ ६
संवेष्ट्यमाने लाङ्गूले व्यवर्धत महाकपिः । शुष्कमिन्धनमासाद्य वनेष्विव हुताशनः[4] ॥ ७
तैलेन परिषिच्याथ तेऽग्निं तत्रावपातयन् । लाङ्गूलेन प्रदीप्तेन राक्षसांस्तानपातयत् ॥ ८
स तु रोषपरीतात्मा बालसूर्यसमाननः । लाङ्गूलं संप्रदीप्तं तद् द्रष्टुं तस्य हनूमतः ॥ ९
सहस्त्रीबालवृद्धाश्च जग्मुः प्रीता[5] निशाचराः । स भूयः संगतैः क्रूरै राक्षसैर्हरिसत्तमः ॥ १०
निबद्धः कृतवान् वीरस्तत्कालसदृशीं मतिम् । कामं खलु न मे शक्ता निबद्धस्यापि राक्षसाः ॥ ११
छित्त्वा पाशान् समुत्पत्य हन्यामहमिमान् पुनः । यदि भर्तृहितार्थाय चरन्तं भर्तृशासनात् ॥ १२
बध्नन्त्येते दुरात्मानो न तु मे निष्कृतिः कृता । सर्वेषामेव पर्याप्तो राक्षसानामहं युधि ॥ १३
रामस्य किं तु प्रीत्यर्थं विषहिष्येऽहमीदृशम् । लङ्का चारयितव्या वै पुनरेव भवेदिति ॥ १४
रात्रौ न हि सुदृष्टा मे दुर्गकर्मविधानतः । अवश्यमेव द्रष्टव्या मया लङ्का निशाक्षये ॥ १५
कामं बन्धैश्च मे भूयः पुच्छस्योद्दीपनेन च । पीडां कुर्वन्तु रक्षांसि न मेऽस्ति मनसः श्रमः ॥ १६
ततस्ते संवृताकारं सत्त्ववन्तं महाकपिम् । परिगृह्य ययुर्हृष्टा राक्षसाः कपिकुञ्जरम् ॥ १७

---

१. तस्यानुजस्याधिकमर्थतत्त्वम् छ.

२. अस्यानन्तरम्—दध्यौ पुनस्तं प्रति वानरेन्द्रं स राक्षसेन्द्रो मतिमान् महात्मा । किं वाद्भुतं ब्राह्मणमेव तेजः सर्वस्य धातुर्जगतोऽथ विष्णोः ॥ यद्देवदेवस्य परं च तेजस्तदेव तेजः कपिरेष वीरः । वधाय मे वैष्णवतेज एतन्निस्संशयोऽयं कपिरूपधारि॥ इत्येवमेतद्बहुधा विचिन्त्य रक्षोऽधिपःक्रोधवशं जगाम ।—इति ख. ग. ।

३. इदं पद्यम् च. नास्ति ।

४. हुताशनम् पुना.

५. प्रीतिम् छ.

शङ्खभेरीनिनादैश्च घोषयन्तः स्वकर्मभिः। राक्षसाः क्रूरकर्माणश्चारयन्ति स्म तां पुरीम् ॥ १८
अन्वीयमानो रक्षोभिर्ययौ सुखमरिंदमः। हनूमांश्चारयामास राक्षसानां महापुरीम् ॥ १९
अथापश्यद्विमानानि विचित्राणि महाकपिः। संवृतान् भूमिभागांश्च सुविभक्तांश्च चत्वरान् ॥ २०
वीथीश्च गृहसंबाधाः कपिः[1] शृङ्गाटकानि च। तथा रथ्योपरथ्याश्च तथैव च गृहान्तरान् ॥ २१
गृहांश्च मेघसंकाशान् ददर्श पवनात्मजः। चत्वरेषु चतुष्केषु राजमार्गे तथैव च ॥ २२
घोषयन्ति कपिं सर्वे चार इत्येव[2] राक्षसाः। स्त्रीबालवृद्धा निर्जग्मुस्तत्र तत्र कुतूहलात् ॥ २३
तं प्रदीपितलाङ्गूलं हनुमन्तं दिदृक्षवः। दीप्यमाने ततस्तस्य लाङ्गूलाग्रे हनूमतः ॥ २४
राक्षस्यस्ता विरूपाक्ष्यः शंसुर्देव्यास्तदप्रियम्। यस्त्वया कृतसंवादः सीते ताम्रमुखः कपिः ॥ २५
लाङ्गूलेन प्रदीप्तेन स एष परिणीयते। श्रुत्वा तद्वचनं क्रूरमात्मापहरणोपमम् ॥ २६
वैदेही शोकसंतप्ता हुताशनमुपागमत्। मङ्गलाभिमुखी तस्य सा तदासीन्महाकपेः ॥ २७
उपतस्थे विशालाक्षी प्रयता हव्यवाहनम्। यद्यस्ति पतिशुश्रूषा यद्यस्ति चरितं तपः ॥ २८
यदि वास्त्येकपत्नीत्वं शीतो भव हनूमतः। यदि कश्चिदनुक्रोशस्तस्य मय्यस्ति धीमतः ॥ २९
यदि वा भाग्यशेषो मे शीतो भव हनूमतः। यदि मां वृत्तसंपन्नां तत्समागमलालसाम् ॥ ३०
स विजानाति धर्मात्मा शीतो भव हनूमतः। यदि मां तारयेदार्यः सुग्रीवः सत्यसंगरः ॥ ३१
अस्माद्दुःखाम्बुसंरोधाच्छीतो भव हनूमतः[3]। ततस्तीक्ष्णार्चिरव्यग्रः प्रदक्षिणशिखोऽनलः ॥ ३२
जज्वाल मृगशावाक्ष्याः शंसन्निव शिवं कपेः। हनुमज्जनकश्चापि पुच्छानलयुतोऽनिलः ॥ ३३
ववौ स्वास्थ्यकरो देव्याः प्रालेयानिलशीतलः। दह्यमाने च लाङ्गूले चिन्तयामास वानरः ॥ ३४
प्रदीप्तोऽग्निरयं कस्मान्न मां दहति सर्वतः। दृश्यते च महाज्वालो न करोति च मे रुजम् ॥ ३५
शिशिरस्येव संपातो लाङ्गूलाग्रे प्रतिष्ठितः। अथवा तदिदं व्यक्तं यद्दृष्टं प्लवता मया ॥ ३६
रामप्रभावादाश्चर्यं पर्वतः सरितां पतौ। यदि तावत् समुद्रस्य मैनाकस्य च धीमतः ॥ ३७
रामार्थं संभ्रमस्तादृक्किमग्निर्न करिष्यति। सीतायाश्चानृशंस्येन तेजसा राघवस्य च ॥ ३८
पितुश्च मम सख्येन न मां दहति पावकः। भूयः स चिन्तयामास मुहूर्तं कपिकुञ्जरः ॥ ३९
उत्पपाताथ वेगेन ननाद च महाकपिः। पुरद्वारं ततः श्रीमाञ्शैलशृङ्गमिवोन्नतम् ॥ ४०
विभक्तरक्षःसंबाधमाससादानिलात्मजः। स भूत्वा शैलसंकाशः क्षणेन पुनरात्मवान् ॥ ४१
ह्रस्वतां परमां[4] प्राप्तो बन्धनान्यवशातयत्। विमुक्तश्चाभवच्छ्रीमान् पुनः पर्वतसंनिभः ॥ ४२
वीक्षमाणश्च ददृशे परिघं तोरणाश्रितम्। स तं गृह्य महाबाहुः कालायसपरिष्कृतम् ॥ ४३
रक्षिणस्तान् पुनः सर्वान् सूदयामास मारुतिः ॥

---

१. अपि छ. ति. नास्ति।
२. चारीक इति च. छ. ४. हनूमान् ह्रस्वताम् क.
३. यदि कश्चिदित्यादि हनूमतः इत्यन्तम्

स तान्निहत्वा रणचण्डविक्रमः समीक्षमाणः पुनरेव लङ्काम् ।
प्रदीप्तलाङ्गूलकृतार्चिमाली प्रकाशतादित्य इवार्चिमाली ॥ ४४

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
सुन्दरकाण्डे पावकशैत्यं नाम त्रिपञ्चाशः सर्गः

---

## चतुःपञ्चाशः सर्गः

### लङ्कादाहः

वीक्षमाणस्ततो लङ्कां कपिः कृतमनोरथः । वर्धमानसमुत्साहः कार्यशेषमचिन्तयत् ॥ १

किं नु खल्ववशिष्टं मे कर्तव्यमिह साम्प्रतम् । यदेषां रक्षसां भूयः संतापजननं भवेत् ॥ २

वनं तावत् प्रमथितं प्रकृष्टा राक्षसा हताः । बलैकदेशः क्षपितः शेषं दुर्गविनाशनम् ॥ ३

दुर्गे विनाशिते कर्म भवेत् सुखपरिश्रमम् । अल्पयत्नेन कार्येऽस्मिन् मम स्यात् सफलः श्रमः ॥ ४

यो ह्ययं मम लाङ्गूले दीप्यते हव्यवाहनः । अस्य संतर्पणं न्याय्यं कर्तुमेभिर्गृहोत्तमैः ॥ ५

ततः प्रदीप्तलाङ्गूलः सविद्युदिव तोयदः । भवनाग्रेषु लङ्काया विचचार महाकपिः ॥ ६

गृहाद्गृहं राक्षसानामुद्यानानि च वानरः । वीक्षमाणो ह्यसंत्रस्तः प्रासादांश्च चचार सः ॥ ७

अवप्लुत्य महावेगः प्रहस्तस्य निवेशनम् । अग्निं तत्र स निक्षिप्य श्वसनेन समो बली ॥ ८

ततोऽन्यत्पुप्लुवे वेश्म महापार्श्वस्य वीर्यवान् । मुमोच हनुमानग्निं कालानलशिखोपमम् ॥ ९

वज्रदंष्ट्रस्य च तथा पुप्लुवे स महाकपिः । शुकस्य च महातेजाः सारणस्य च धीमतः ॥ १०

तथा चेन्द्रजितो वेश्म ददाह हरियूथपः । जम्बुमालेः सुमालेश्च ददाह भवनं ततः ॥ ११

रश्मिकेतोश्च भवनं सूर्यशत्रोस्तथैव च । ह्रस्वकर्णस्य दंष्ट्रस्य रोमशस्य च रक्षसः ॥ १२

युद्धोन्मत्तस्य मत्तस्य ध्वजग्रीवस्य रक्षसः । विद्युज्जिह्वस्य घोरस्य तथा हस्तिमुखस्य च ॥ १३

करालस्य विशालस्य[1] शोणिताक्षस्य चैव हि । कुम्भकर्णस्य भवनं मकराक्षस्य चैव हि ॥ १४

यज्ञशत्रोश्च भवनं ब्रह्मशत्रोस्तथैव च । नरान्तकस्य कुम्भस्य निकुम्भस्य दुरात्मनः ॥ १५

वर्जयित्वा महातेजा विभीषणगृहं प्रति । क्रममाणः क्रमेणैव ददाह हरिपुंगवः ॥ १६

तेषु तेषु महार्हेषु भवनेषु महायशाः । गृहेष्वृद्धिमतामृद्धिं ददाह स महाकपिः ॥ १७

सर्वेषां समतिक्रम्य राक्षसेन्द्रस्य वीर्यवान् । आससादाथ लक्ष्मीवान् रावणस्य निवेशनम् ॥ १८

ततस्तस्मिन् गृहे मुख्ये नानारत्नविभूषिते । मेरुमन्दरसंकाशे सर्वमङ्गलशोभिते ॥ १९

प्रदीप्तमग्निमुत्सृज्य लाङ्गूलाग्रे प्रतिष्ठितम् । ननाद हनुमान् वीरो युगान्ते जलदो यथा ॥ २०

---

१. पिशाचस्य च. छ.

श्वसनेन च संयोगादतिवेगो महाबलः । कालाग्निरिव संदीप्तः प्रावर्धत हुताशनः ॥ २१

प्रवृद्धमग्निं पवनस्तेषु वेश्मस्वचारयत्[1] । अभूच्छ्वसनसंयोगादतिवेगो हुताशनः ॥ २२

तानि काञ्चनजालानि मुक्तामणिमयानि च । भवनानि व्यशीर्यन्त रत्नवन्ति महान्ति च ॥ २३

तानि भग्नविमानानि निपेतुर्धरणीतले । भवनानीव सिद्धानामम्बरात् पुण्यसंक्षये ॥ २४

संजज्ञे तुमुलः शब्दो राक्षसानां प्रधावताम् । स्वगृहस्य परित्राणे भग्नोत्साहोर्जितश्रियाम् ॥ २५

नूनमेषोऽग्निरायातः कपिरूपेण हा इति । क्रन्दन्त्यः सहसा पेतुः स्तनंधयधराः स्त्रियः ॥ २६

काश्चिदग्निपरीताङ्ग्यो हर्म्येभ्यो मुक्तमूर्धजाः । पतन्त्यो रेजिरेऽभ्रेभ्यः सौदामिन्य इवाम्बरात्॥२७

वज्रविद्रुमवैदूर्यमुक्तारजतसंहितान् । विचित्रान् भवनाद्धातून् स्यन्दमानान् ददर्श सः ॥ २८

नाग्निस्तृप्यति काष्ठानां तृणानां च यथा तथा । हनूमान् राक्षसेन्द्राणां वधे किंचिन्न तृप्यति[2] ॥ २९

नाग्नेर्नापि विशस्तानां राक्षसानां वसुन्धरा[3] । न हनूमद्विशस्तानां राक्षसानां वसुंधरा ॥ ३०

क्वचित् किंशुकसंकाशाः क्वचिच्छाल्मलिसंनिभाः । क्वचित् कुङ्कुमसंकाशाः शिखा वह्नेश्चकाशिरे[4]॥३१

हनूमता वेगवता वानरेण महात्मना । लङ्कापुरं प्रदग्धं तद्रुद्रेण त्रिपुरं यथा ॥ ३२

ततस्तु लङ्कापुरपर्वताग्रे समुत्थितो भीमपराक्रमोऽग्निः ।
प्रसार्य चूडावलयं प्रदीप्तो हनूमता वेगवता विसृष्टः ॥ ३३

युगान्तकालानलतुल्यवेगः समारुतोऽग्निर्ववृधे दिविस्पृक् ।
विधूमरश्मिर्भवनेषु सक्तो रक्षःशरीराज्यसमर्पितार्चिः ॥ ३४

आदित्यकोटीसदृशः सुतेजा लङ्कां समस्तां परिवार्य तिष्ठन् ।
शब्दैरनेकैरशनिप्ररूढैर्भिन्दन्निवाण्डं प्रबभौ महाग्निः ॥ ३५

तत्राम्बरादग्निरतिप्रवृद्धो रूक्षप्रभः किंशुकपुष्पचूडः ।
निर्वाणधूमाकुलराजयश्च नीलोत्पलाभाः प्रचकाशिरेऽभ्राः ॥ ३६

वज्री महेन्द्रस्त्रिदशेश्वरो वा साक्षाद्यमो वा वरुणोऽनिलो वा ।
रुद्रोऽग्निरर्को धनदश्च सोमो न वानरोऽयं स्वयमेव कालः ॥ ३७

किं ब्रह्मणः सर्वपितामहस्य सर्वस्य धातुश्चतुराननस्य ।
इहागतो वानररूपधारी रक्षोपसंहारकरः प्रकोपः ॥ ३८

किं वैष्णवं वा कपिरूपमेत्य रक्षोविनाशाय परं सुतेजः ।
अनन्तमव्यक्तमचिन्त्यमेकं स्वमायया सांप्रतमागतं वा ॥ ३९

---

१. वेश्मसु चारयन् छ.
२. इदमर्धम् च. नास्ति ।
३. इदमर्धम् छ. नास्ति ।
४. इदं पद्यम् पुना. नास्ति ।

इत्येवमूचुर्बहवो विशिष्टा रक्षोगणास्तत्र समेत्य सर्वे ।
सप्राणिसङ्घां सगृहां सवृक्षां दग्धां पुरीं तां सहसा समीक्ष्य ॥ ४०

ततस्तु लङ्का सहसा प्रदग्धा सराक्षसा साश्वरथा सनागा ।
सपक्षिसङ्घा समृगा सवृक्षा रुरोद दीना तुमुलं सशब्दम् ॥ ४१

हा तात हा पुत्रक कान्त मित्र हा जीवितं भोगयुतं [1]सुपुण्यम् ।
रक्षोभिरेवं बहुधा ब्रुवद्भिः शब्दः कृतो घोरतरः सुभीमः ॥ ४२

हुताशनज्वालसमावृता सा हतप्रवीरा परिवृत्तयोधा ।
हनूमतः क्रोधबलाभिभूता बभूव शापोपहतेव लङ्का ॥ ४३

स संभ्रमत्रस्तविषण्णराक्षसां समुज्ज्वलज्ज्वालहुताशनाङ्किताम् ।
ददर्श लङ्कां हनुमान् महामनाः स्वयंभुकोपोपहतामिवावनिम् ॥ ४४

भङ्क्त्वा वनं पादपरत्नसंकुलं हत्वा तु रक्षांसि महान्ति संयुगे ।
दग्ध्वा पुरीं तां गृहरत्नमालिनीं तस्थौ हनूमान् पवनात्मजः कपिः ॥ ४५

त्रिकूटशृङ्गाग्रतले विचित्रे प्रतिष्ठितो वानरराजसिंहः ।
प्रदीप्तलाङ्गूलकृतार्चिमाली व्यराजतादित्य इवांशुमाली ॥ ४६

स राक्षसांस्तान् सुबहूंश्च हत्वा वनं च भङ्क्त्वा बहुपादपं तत् ।
विसृज्य रक्षोभवनेषु चाग्निं जगाम रामं मनसा महात्मा ॥ ४७

ततस्तु तं वानरवीरमुख्यं महाबलं मारुततुल्यवेगम् ।
महामतिं वायुसुतं वरिष्ठं प्रतुष्टुवुर्देवगणाश्च सर्वे ॥ ४८

भङ्क्त्वा वनं महातेजा हत्वा रक्षांसि संयुगे । दग्ध्वा लङ्कापुरीं रम्यां रराज स महाकपिः ॥ ४९
तत्र देवाः सगन्धर्वाः सिद्धाश्च परमर्षयः । दृष्ट्वा लङ्कां प्रदग्धां तां विस्मयं परमं गताः ॥ ५०
तं दृष्ट्वा वानरश्रेष्ठं हनुमन्तं महाकपिम् । कालाग्निरिति संचिन्त्य सर्वभूतानि तत्रसुः ॥ ५१

देवाश्च सर्वे मुनिपुंगवाश्च गन्धर्वविद्याधरकिंनराश्च ।
भूतानि सर्वाणि महान्ति तत्र जग्मुः परां प्रीतिमतुल्यरूपाम् ॥ ५२

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
सुन्दरकाण्डे लङ्कादाहो नाम चतुःपञ्चाशः सर्गः

---

१. जीवितेशाङ्ग हतम् पुना. । जीवितं भोगहतम् इति पाठान्तरम् ।

## पञ्चपञ्चाशः सर्गः

### हनूमद्विभ्रमः

लङ्कां समस्तां संदीप्य लाङ्गूलाग्निं महाबलः । निर्वापयामास तदा समुद्रे हरिसत्तमः ॥ १
संदीप्यमानां विध्वस्तां त्रस्तरक्षोगणां पुरीम् । अवेक्ष्य हनुमाँल्लङ्कां चिन्तयामास वानरः ॥ २
तस्याभूत् सुमहांस्त्रासः कुत्सा चात्मन्यजायत । लङ्कां प्रदहता कर्म किंस्वित् कृतमिदं मया ॥ ३
धन्यास्ते पुरुषश्रेष्ठा ये बुद्ध्या कोपमुत्थितम् । निरुन्धन्ति महात्मानो दीप्तमग्निमिवाम्भसा ॥ ४
क्रुद्धः पापं न कुर्यात् कः क्रुद्धो हन्याद्गुरूनपि । क्रुद्धः परुषया वाचा नरः साधूनधिक्षिपेत् ॥ ५
वाच्यावाच्यं प्रकुपितो न विजानाति कर्हि चित् । नाकार्यमस्ति क्रुद्धस्य नावाच्यं विद्यते क्वचित् ॥ ६
यः समुत्पतितं क्रोधं क्षमयैव निरस्यति । यथोरगस्त्वचं जीर्णां स वै पुरुष उच्यते ॥ ७
धिगस्तु मां सुदुर्बुद्धिं निर्लज्जं पापकृत्तमम् । अचिन्तयित्वा तां सीतामग्निदं स्वामिघातकम् ॥ ८
यदि दग्धा त्वियं लङ्का नूनमार्यापि जानकी । दग्धा तेन मया भर्तुर्हतं कार्यमजानता ॥ ९
यदर्थमयमारम्भस्तत्कार्यमवसादितम् । मया हि दहता लङ्कां न सीता परिरक्षिता ॥ १०
ईषत्कार्यमिदं कार्यं कृतमासीन्न संशयः । तस्य क्रोधाभिभूतेन मया मूलक्षयः कृतः ॥ ११
विनष्टा जानकी नूनं न ह्यदग्धः प्रदृश्यते । लङ्कायां कश्चिदुद्देशः सर्वा भस्मीकृता पुरी ॥ १२
यदि तद्विहतं कार्यं मम प्रज्ञाविपर्ययात् । इहैव प्राणसंन्यासो ममापि ह्यद्य रोचते ॥ १३
किमग्नौ निपताम्यद्य आहोस्विद्वडवामुखे । शरीरमाहो सत्त्वानां दद्मि सागरवासिनाम् ॥ १४
कथं हि जीवता शक्यो मया द्रष्टुं हरीश्वरः । तौ वा पुरुषशार्दूलौ कार्यसर्वस्वघातिना ॥ १५
मया खलु तदेवेदं रोषदोषात् प्रदर्शितम् । प्रथितं त्रिषु लोकेषु कपित्वमनवस्थितम् ॥ १६
धिगस्तु राजसं भावमनीशमनवस्थितम् । ईश्वरेणापि यद्रागान्मया सीता न रक्षिता ॥ १७
विनष्टायां तु सीतायां तावुभौ विनशिष्यतः । तयोर्विनाशे सुग्रीवः सबन्धुर्विनशिष्यति ॥ १८
एतदेव वचः श्रुत्वा भरतो भ्रातृवत्सलः । धर्मात्मा सहशत्रुघ्नः कथं शक्ष्यति जीवितुम् ॥ १९
इक्ष्वाकुवंशे धर्मिष्ठे गते नाशमसंशयम् । भविष्यन्ति प्रजाः सर्वाः शोकसंतापपीडिताः ॥ २०
तदहं भाग्यरहितो लुप्तधर्मार्थसंग्रहः । रोषदोषपरीतात्मा व्यक्तं लोकविनाशनः ॥ २१
इति चिन्तयतस्तस्य निमित्तान्युपपेदिरे । पूर्वमप्युपलब्धानि साक्षात् पुनरचिन्तयत् ॥ २२
अथवा चारुसर्वाङ्गी रक्षिता स्वेन तेजसा । न नशिष्यति कल्याणी नाग्निरग्नौ प्रवर्तते ॥ २३
न हि धर्मात्मनस्तस्य भार्याममिततेजसः । स्वचारित्राभिगुप्तां तां स्प्रष्टुमर्हति पावकः ॥ २४
नूनं रामप्रभावेण वैदेह्याः सुकृतेन च । यन्मां दहनकर्मायं नादहद्धव्यवाहनः ॥ २५
त्रयाणां भरतादीनां भ्रातॄणां देवता च या । रामस्य च मनःकान्ता सा कथं विनशिष्यति ॥ २६
यद्वा दहनकर्मायं सर्वत्र प्रभुरव्ययः । न मे दहति लाङ्गूलं कथमार्यां प्रधक्ष्यति ॥ २७

पुनश्चाचिन्तयत्तत्र हनुमान् विस्मितस्तदा । हिरण्यनाभस्य गिरेर्जलमध्ये प्रदर्शनम् ॥ २८
तपसा सत्यवाक्येन अनन्यत्वाच्च भर्तरि । अपि सा निर्दहेदग्निं न तामग्निः प्रधक्ष्यति ॥ २९
स तथा चिन्तयंस्तत्र देव्या धर्मपरिग्रहम् । शुश्राव हनुमान् वाक्यं चारणानां महात्मनाम् ॥ ३०
अहो खलु कृतं कर्म दुष्करं हि हनूमता । अग्निं विसृजताभीक्ष्णं भीमं राक्षससद्मनि ॥ ३१
प्रपलायितरक्षःस्त्रीबालवृद्धसमाकुला । जनकोलाहलाध्माता क्रन्दन्तीवाद्रिकन्दरे ॥ ३२
दग्धेयं नगरी सर्वा साट्टप्राकारतोरणा । जानकी न च दग्धेति विस्मयोऽद्भुत एव नः ॥ ३३
इति शुश्राव हनुमान् वाचंताममृतोपमाम् । बभूव चास्य मनसो हर्षस्तत्कालसंभवः[1] ॥ ३४
स निमित्तैश्च दृष्टार्थैः कारणैश्च महागुणैः । ऋषिवाक्यैश्च हनुमानभवत् प्रीतमानसः ॥ ३५

ततः कपिः प्राप्तमनोरथार्थस्तामक्षतां राजसुतां विदित्वा ।
प्रत्यक्षतस्तां पुनरेव दृष्ट्वा प्रतिप्रयाणाय मतिं चकार ॥ ३६

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
सुन्दरकाण्डे हनूमद्विभ्रमो नाम पञ्चपञ्चाशः सर्गः

---

## षट्पञ्चाशः सर्गः

### प्रतिप्रयाणोत्पतनम्

ततस्तां शिंशपामूले जानकीं पर्यवस्थिताम् । अभिवाद्याब्रवीद्दिष्ट्या पश्यामि त्वामिहाक्षताम् ॥ १
ततस्तं प्रस्थितं सीता वीक्षमाणा पुनः पुनः । भर्तृस्नेहान्वितं वाक्यं हनूमन्तमभाषत[2] ॥ २
काममस्य त्वमेवैकः कार्यस्य परिसाधने । पर्याप्तः परवीरघ्न यशस्यस्ते बलोदयः ॥ ३
शरैः सुसंकुलां कृत्वा लङ्कां परबलार्दनः । मां नयेद्यदि काकुत्स्थस्तत्तस्य सदृशं भवेत् ॥ ४
तद्यथा तस्य विक्रान्तमनुरूपं महात्मनः । भवेदाहवशूरस्य तथा त्वमुपपादय ॥ ५

---

१. इदं पद्यम् च. छ. नास्ति ।

२. अस्यानन्तरम्—यदि त्वं मन्यसे तात वसैकाहमिहानघ । क्वचित्सुसंवृते देशे विश्रान्तः श्वो गमिष्यसि ॥ मम चैवाल्पभाग्यायाःसांनिध्यात्तव वानर । शोकस्यास्याप्रमेयस्य मुहूर्तं स्यादपि क्षयः ॥ गते हि हरिशार्दूल पुनः संप्राप्तये त्वयि । प्राणेष्वपि न विश्वासो मम वानरपुङ्गव ॥ अदर्शनं च ते वीर भूयो मां दारयिष्यति । दुःखाद्दुःखतरं प्राप्तां दुर्मनःशोककर्शिताम् ॥ अयं च वीर संदेहस्तिष्ठतीव ममाग्रतः । सुमहत्सु सहायेषु हर्यृक्षेषु महाबलः ॥ कथं नु खलु दुष्पारं संतरिष्यति सागरम् । तानि हर्यृक्षसैन्यानि तौ वा दशरथात्मजौ ॥ त्रयाणामेवभूतानां सागरस्यापि लङ्घने । शक्तिः स्याद्वैनतेयस्य तव वा मारुतस्य वा ॥ तदत्र कार्यनिर्बन्धे समुत्पन्ने दुरासदे । किं पश्यसि समाधानं त्वं हि कार्यविदां वरः ॥—इति पुना.

तदर्थोपहितं वाक्यं प्रश्रितं हेतुसंहितम् । निशम्य हनुमांस्तस्य वाक्यमुत्तरमब्रवीत्[1] ॥ ६
क्षिप्रमेष्यति काकुत्स्थो हर्यृक्षप्रवरैर्वृतः । यस्ते युधि विजित्यारीञ्शोकं व्यपनयिष्यति ॥ ७
एवमाश्वास्य वैदेहीं हनुमान् मारुतात्मजः । गमनाय मतिं कृत्वा वैदेहीमभ्यवादयत्[2] ॥ ८
ततः स कपिशार्दूलः स्वामिसंदर्शनोत्सुकः । आरुरोह गिरिश्रेष्ठमरिष्टमरिमर्दनः ॥ ९
तुङ्गपद्मकजुष्टाभिर्नीलाभिर्वनराजिभिः । सोत्तरीयमिवाम्भोदैः शृङ्गान्तरविलम्बिभिः ॥ १०
बोध्यमानमिव प्रीत्या दिवाकरकरैः शुभैः । उन्मिषन्तमिवोद्धूतैर्लोचनैरिव धातुभिः ॥ ११
तोयौघनिःस्वनैर्मन्द्रैः प्राधीतमिव सर्वतः । प्रगीतमिव विस्पष्टैर्नानाप्रस्रवणस्वनैः ॥ १२
देवदारुभिरत्युच्चैरूर्ध्वबाहुमिव स्थितम् । प्रपातजलनिर्घोषैः प्राक्रुष्टमिव [3]सर्वतः ॥ १३
वेपमानमिव श्यामैः कम्पमानैः शरद्वनैः । वेणुभिर्मारुतोद्धूतैः कूजन्तमिव कीचकैः ॥ १४
निःश्वसन्तमिवामर्षाद्घोरैराशीविषोत्तमैः । नीहारकृतगम्भीरैर्ध्यायन्तमिव गह्वरैः ॥ १५
मेघपादनिभैः पादैः प्रक्रान्तमिव सर्वतः । जृम्भमाणमिवाकाशे शिखरैरभ्रशालिभिः ॥ १६
कूटैश्च बहुधाकीर्णैः शोभितं बहुकन्दरैः । सालतालाश्वकर्णैश्च वंशैश्च बहुभिर्वृतम् ॥ १७
लतावितानैर्विततैः पुष्पवद्भिरलंकृतम् । नानामृगगणाकीर्णं धातुनिष्यदभूषितम् ॥ १८
बहुप्रस्रवणोपेतं शिलासंचयसंकटम् । महर्षियक्षगन्धर्वकिंनरोरगसेवितम् ॥ १९
लतापादपसंबाधं सिंहाध्युषितकन्दरम् । व्याघ्रसङ्घसमाकीर्णं स्वादुमूलफलोदकम् ॥ २०
तमारुरोह हनुमान् पर्वतं प्लवगोत्तमः । रामदर्शनशीघ्रेण प्रहर्षेणाभिचोदितः ॥ २१
तेन पादतलाक्रान्ता रम्येषु गिरिसानुषु । सघोषाः समशीर्यन्त शिलाश्चूर्णीकृतास्ततः ॥ २२
स तमारुह्य शैलेन्द्रं व्यवर्धत महाकपिः । दक्षिणादुत्तरं पारं प्रार्थयँल्लवणाम्भसः ॥ २३
अधिरुह्य ततो वीरः पर्वतं पवनात्मजः । ददर्श सागरं भीमं मीनोरगनिषेवितम् ॥ २४
स मारुत इवाकाशं मारुतस्यात्मसंभवः । प्रपेदे हरिशार्दूलो दक्षिणादुत्तरां दिशम् ॥ २५
स तदा पीडितस्तेन कपिना पर्वतोत्तमः । ररास सह तैर्भूतैः प्रविशन् वसुधातलम् ॥ २६
कम्पमानैश्च शिखरैः पतद्भिरपि च द्रुमैः । तस्योरुवेगोन्मथिताः पादपाः पुष्पशालिनः ॥ २७

---

१. अस्यानन्तरम्—देवि हर्यृक्षसैन्यानामीश्वरः प्लवतां वरः । सुग्रीवः सत्त्वसंपन्नस्तवार्थे कृतनिश्चयः॥ स वानरसहस्राणां कोटीभिरभिसंवृतः । क्षिप्रमेष्यति वैदेहि सुग्रीवः प्लवगाधिपः ॥ तौ च वीरौ नरवरौ सहितौ रामलक्ष्मणौ । आगम्य नगरीं लङ्कां सायकैर्विधमिष्यतः ॥ सगणं राक्षसं हत्वा न चिराद्रघुनन्दनः । त्वामादाय वरारोहे स्वां पुरीं प्रति यास्यति ॥ समाश्वसिहि भद्रं ते भव त्वं कालकाङ्क्षिणी । क्षिप्रं द्रक्ष्यसि रामेण निहतं रावणं रणे ॥ निहते राक्षसेन्द्रे च सपुत्रामात्यबान्धवे । त्वं समेष्यसि रामेण शशाङ्केनेव रोहिणी ॥ इति च. पुना. ।

२. अस्यानन्तरम्—राक्षसान् प्रवरान् हत्वा नाम विश्राव्य चात्मनः । समाश्वास्य च वैदेहीं दर्शयित्वा परं बलम् ॥ नगरीमाकुलां कृत्वा वञ्चयित्वा च रावणम् । दर्शयित्वा बलं घोरं वैदेहीमभिवाद्य च । प्रतिगन्तुं मनश्चक्रे पुनर्मध्येन सागरम् ॥—इति पुना.

३. पर्वतम् झ.

निपेतुर्भूतले रुग्णाः शक्रायुधहता इव । कन्दरोदरसंस्थानां पीडितानां महौजसाम् ॥ २८
सिंहानां निनदो भीमो नभो भिन्दन् हि शुश्रुवे । स्रस्तव्याविद्धवसना व्याकुलीकृतभूषणाः ॥ २९
विद्याधर्यः समुत्पेतुः सहसा धरणीधरात् । अतिप्रमाणा बलिनो दीप्तजिह्वा महाविषाः ॥ ३०
निपीडितशिरोग्रीवा व्यवेष्टन्त महाहयः । किंनरोरगगन्धर्वयक्षविद्याधरास्तदा ॥ ३१
पीडितं तं नगवरं त्यक्त्वा गगनमास्थिताः । स च भूमिधरः श्रीमान् बलिना तेन पीडितः ॥ ३२
सवृक्षशिखरोदग्रः प्रविवेश रसातलम् । दशयोजनविस्तारस्त्रिंशद्योजनमुच्छ्रितः ॥ ३३
धरण्यां समतां यातः स बभूव धराधरः । स लिलङ्घयिषुर्भीमं सलीलं लवणार्णवम् ॥ ३४
कल्लोलास्फालवेलान्तमुत्पपात नभो हरिः ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
सुन्दरकाण्डे प्रतिप्रयाणोत्पतनं नाम षट्पञ्चाशः सर्गः

---

## सप्तपञ्चाशः सर्गः

### हनूमत्प्रत्यागमनम्

सचन्द्रकुमुदं रम्यं सार्ककारण्डवं शुभम् । तिष्यश्रवणकादम्बमभ्रशैवालशाद्वलम् ॥ १
पुनर्वसुमहामीनं लोहिताङ्गमहाग्रहम् । ऐरावतमहाद्वीपं स्वातीहंसविलोलितम् ॥ २
वातसङ्घातजालोर्मि [1] चन्द्रांशुशिशिराम्बुमत् । भुजङ्गयक्षगन्धर्वप्रबुद्धकमलोत्पलम् ॥ ३
हनुमान् मारुतगतिर्महानौरिव सागरम् । अपारमपरिश्रान्तः पुप्लुवे गगनार्णवम् ॥ ४
ग्रसमान इवाकाशं ताराधिपमिवोल्लिखन् । हरन्निव सनक्षत्रं गगनं सार्कमण्डलम् ॥ ५
मारुतस्यात्मजः श्रीमान् कपिर्व्योमचरो महान् । हनुमान् मेघजालानि विकर्षन्निव गच्छति ॥ ६
पाण्डरारुणवर्णानि नीलमाञ्जिष्ठकानि च । हरितारुणवर्णानि महाभ्राणि चकाशिरे ॥ ७
प्रविशन्नभ्रजालानि निष्क्रामंश्च पुनः पुनः । प्रच्छन्नश्च प्रकाशश्च [2] चन्द्रमा इव लक्ष्यते ॥ ८
विविधाभ्रघनापन्नगोचरो धवलाम्बरः । दृश्यादृश्यतनुर्वीरस्तदा चन्द्रायतेऽम्बरे ॥ ९
तार्क्ष्यायमाणो गगने बभासे वायुनन्दनः । दारयन् मेघबृन्दानि निष्पतंश्च पुनः पुनः ॥ १०
नदन्नादेन महता मेघस्वनमहास्वनः । प्रवरान् राक्षसान् हत्वा नाम विश्राव्य चात्मनः ॥ ११
आकुलां नगरीं कृत्वा व्यथयित्वा च रावणम् । अर्दयित्वा बलं घोरं वैदेहीमभिवाद्य च ॥ १२
आजगाम महातेजाः पुनर्मध्येन सागरम् । पर्वतेन्द्रं सुनाभं च समुपस्पृश्य वीर्यवान् ॥ १३
ज्यामुक्त इव नराचो महावेगोऽभ्युपागतः । स किंचिदनुसंप्राप्तः समालोक्य महागिरिम् ॥ १४

---

१. 'वातोर्मिचन्द्रांशु'- च. छ.   २. प्रकाशश्चाप्रकाशश्च प्र.

महेन्द्रं मेघसंकाशं ननाद हरिपुंगवः । स पूरयामास कपिर्दिशो दश समन्ततः ॥ १५
नदन्नादेन महता मेघस्वनमहास्वनः । स तं देशमनुप्राप्तः सुहृद्दर्शनलालसः ॥ १६
ननाद हरिशार्दूलो लाङ्गूलं चाप्यकम्पयत् । तस्य नानद्यमानस्य सुपर्णाचरिते पथि ॥ १७
फलतीवास्य घोषेण गगनं सार्कमण्डलम् । ये तु तत्रोत्तरे तीरे समुद्रस्य महाबलाः ॥ १८
पूर्वं संविष्ठिताः शूरा वायुपुत्रदिदृक्षवः । महतो वायुनुन्नस्य तोयदस्येव गर्जितम् ॥ १९
शुश्रुवुस्ते तदा घोषमूरुवेगं हनूमतः । ते दीनवदनाः सर्वे शुश्रुवुः काननौकसः ॥ २०
वानरेन्द्रस्य निर्घोषं पर्जन्यनिनदोपमम् । निशम्य नदतो नादं वानरास्ते समन्ततः ॥ २१
बभूवुरुत्सुकाः सर्वे सुहृद्दर्शनकाङ्क्षिणः । जाम्बवांस्तु हरिश्रेष्ठः प्रीतिसंहृष्टमानसः २२
उपामन्त्र्य हरीन् सर्वानिदं वचनमब्रवीत् । सर्वथा कृतकार्योऽसौ हनूमान्नात्र संशयः ॥ २३
न ह्यस्याकृतकार्यस्य नाद एवंविधो भवेत् । तस्य बाहूरुवेगं च निनादं च महात्मनः ॥ २४
निशम्य हरयो हृष्टाः समुत्पेतुस्ततस्ततः । ते नगाग्रान्नगाग्राणि शिखराच्छिखराणि च ॥ २५
प्रहृष्टाः समपद्यन्त हनूमन्तं दिदृक्षवः । ते प्रीताः पादपाग्रेषु गृह्य शाखाः सुपुष्पिताः ॥ २६
वासांसीव प्रशाखाश्च समाविध्यन्त वानराः । गिरिगह्वरसंलीनो यथा गर्जति मारुतः ॥ २७
एवं जगर्ज बलवान् हनूमान् मारुतात्मजः । तमभ्रघनसंकाशमापतन्तं महाकपिम् ॥ २८
दृष्ट्वा ते वानराः सर्वे तस्थुः प्राञ्जलयस्तदा । ततस्तु वेगवांस्तस्य गिरेर्गिरिनिभः कपिः ॥ २९
निपपात महेन्द्रस्य शिखरे पादपाकुले । हर्षेणापूर्यमाणोऽसौ रम्ये पर्वतनिर्झरे ॥ ३०
छिन्नपक्ष इवाकाशात् पपात धरणीधरः । ततस्ते प्रीतमनसः सर्वे वानरपुंगवाः ॥ ३१
हनूमन्तं महात्मानं परिवार्योपतस्थिरे । परिवार्य च ते सर्वे परां प्रीतिमुपागताः ॥ ३२
प्रहृष्टवदनाः सर्वे तमरोगमुपागतम् । उपायनानि चादाय मूलानि च फलानि च ॥ ३३
प्रत्यर्चयन् हरिश्रेष्ठं हरयो मारुतात्मजम्[1] । हनूमांस्तु गुरून् वृद्धाञ्जाम्बवत्प्रमुखांस्तदा ॥ ३४
कुमारमङ्गदं चैव सोऽवन्दत महाकपिः । स ताभ्यां पूजितः पूज्यः कपिभिश्च प्रसादितः ॥ ३५
दृष्टा सीतेति विक्रान्तः संक्षेपेण न्यवेदयत् । निषसाद च हस्तेन गृहीत्वा वालिनः सुतम् ॥ ३६
रमणीये वनोद्देशे महेन्द्रस्य गिरेस्तदा । हनुमानब्रवीद्धृष्टस्तदा तान् वानरर्षभान् ॥ ३७
अशोकवनिकासंस्था दृष्टा सा जनकात्मजा । रक्ष्यमाणा सुघोराभी राक्षसीभिरनिन्दिता ॥ ३८
एकवेणीधरा दीना रामदर्शनलालसा । उपवासपरिश्रान्ता जटिला मलिना कृशा ॥ ३९
ततो दृष्टेति वचनं महार्थममृतोपमम् । निशम्य मारुतेः सर्वे मुदिता वानरा भवन् ॥ ४०
क्ष्वेलन्त्यन्ये नदन्त्यन्ये गर्जन्त्यन्ये महाबलाः । चक्रुः किलिकिलामन्ये प्रतिगर्जन्ति चापरे ॥ ४१

---

१. अस्यानन्तरम्—विनेदुर्मुदिताः केचित् वानरर्षभाः ॥—इति पुना. ।
केचित्किलकिलां तथा । हृष्टाः पादपशाखाश्च आनिन्यु-

केचिदुच्छ्रितलांगूलाः प्रहृष्टाः कपिकुञ्जराः । अञ्चितायतदीर्घाणि लांगूलानि प्रविव्यधुः ॥ ४२
अपरे च हनूमन्तं वानरा वारणोपमम् । आप्लुत्य गिरिशृङ्गेभ्यः संस्पृशन्ति स्म हर्षिताः ॥ ४३
उक्तवाक्यं हनूमन्तमङ्गदस्तमथाब्रवीत् । सर्वेषां हरिवीराणां मध्ये वाचमनुत्तमाम् ॥ ४४
सत्त्वे वीर्ये न ते कश्चित् समो वानर विद्यते । यदवप्लुत्य विस्तीर्णं सागरं पुनरागतः ॥ ४५
जीवितस्य प्रदाता नस्त्वमेको वानरोत्तम । त्वत्प्रसादात् समेष्यामः सिद्धार्था राघवेण तु[1] ॥ ४६
अहो स्वामिनि ते भक्तिरहो वीर्यमहो धृतिः । दिष्ट्या दृष्टा त्वया देवी रामपत्नी यशस्विनी ॥ ४७
दिष्ट्या त्यक्ष्यति काकुत्स्थः शोकं सीतावियोगजम् । ततोऽङ्गदं हनूमन्तं जाम्बवन्तं च वानराः ॥
परिवार्य प्रमुदिता भेजिरे विपुलाः शिलाः । श्रोतुकामाः समुद्रस्य लङ्घनं वानरोत्तमाः ॥ ४९
दर्शनं चापि लङ्कायाः सीताया रावणस्य च । तस्थुः प्राञ्जलयः सर्वे हनुमद्वदनोन्मुखाः ॥ ५०
तस्थौ तत्राङ्गदः श्रीमान् वानरैर्बहुभिर्वृतः । उपास्यमानो विबुधैर्दिवि देवपतिर्यथा ॥ ५१

हनूमता कीर्तिमता यशस्विना तथाङ्गदेनाङ्गदबद्धबाहुना ।
मुदा तदाध्यासितमुन्नतं महन्महीधराग्रं ज्वलितं श्रियाभवत् ॥ ५२

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायां
सुन्दरकाण्डे हनूमत्प्रत्यागमनं नाम सप्तपञ्चाशः सर्गः

---

## अष्टपञ्चाशः सर्गः

### हनूमद्वृत्तानुकथनम्

ततस्तस्य गिरेः शृङ्गे महेन्द्रस्य महाबलाः । हनुमत्प्रमुखाः प्रीतिं हरयो जग्मुरुत्तमाम् ॥ १
तं ततः प्रीतिसंहृष्टः प्रीतिमन्तं महाकपिम् । जाम्बवान् कार्यवृत्तान्तमपृच्छदनिलात्मजम् ॥ २
कथं दृष्टा त्वया देवी कथं वा तत्र वर्तते । तस्यां वा स कथंवृत्तः क्रूरकर्मा दशाननः ॥ ३
तत्त्वतः सर्वमेतन्नः प्रब्रूहि त्वं महाकपे । संमार्गिता कथं देवी किं च सा प्रत्यभाषत[2] ॥ ४
श्रुतार्थाश्चिन्तयिष्यामो भूयः कार्यविनिश्चयम् । यश्चार्थस्तत्र वक्तव्यो गतैरस्माभिरात्मवान् ॥ ५
रक्षितव्यं च यत्तत्र तद्भवान् व्याकरोतु नः । स नियुक्तस्ततस्तेन संप्रहृष्टतनूरुहः ॥ ६
प्रणम्य शिरसा देव्यै सीतायै प्रत्यभाषत । प्रत्यक्षमेव भवतां महेन्द्राग्रात् खमाप्लुतः ॥ ७
उदधेर्दक्षिणं पारं काङ्क्षमाणः समाहितः । गच्छतश्च हि मे घोरं विघ्नरूपमिवाभवत् ॥ ८
काञ्चनं शिखरं दिव्यं पश्यामि सुमनोहरम् । स्थितं पन्थानमावृत्य मेने विघ्नं च तं नगम् ॥ ९

---

१. इदं पद्यम् च. छ. नास्ति।　　२. इदमर्धम् च. छ. नास्ति।

उपसङ्क्रम्य तं दिव्यं काञ्चनं नगसत्तमम् । कृता मे मनसा बुद्धिर्भेत्तव्योऽयं मयेति च ॥ १०
प्रहतं च मया तस्य लाङ्गूलेन महागिरेः । शिखरं सूर्यसंकाशं व्यशीर्यत सहस्रधा ॥ ११
व्यवसायं च तं बुद्ध्वा स होवाच महागिरिः । पुत्रेति मधुरां वाणीं मनः प्रह्लादयन्निव ॥ १२
पितृव्यं चापि मां विद्धि सखायं मातरिश्वनः । मैनाकमिति विख्यातं निवसन्तं महोदधौ ॥ १३
पक्षवन्तः पुरा पुत्र बभूवुः पर्वतोत्तमाः । छन्दतः पृथिवीं चेरुर्बाधमानाः समन्ततः ॥ १४
श्रुत्वा नगानां चरितं महेन्द्रः पाकशासनः । चिच्छेद भगवान् पक्षान् वज्रेणैषां सहस्रशः ॥ १५
अहं तु मोक्षितस्तस्मात्तव पित्रा महात्मना । मारुतेन तदा वत्स प्रक्षिप्तोऽस्मि महार्णवे ॥ १६
रामस्य च मया साह्ये वर्तितव्यमरिंदम । रामो धर्मभृतां श्रेष्ठो महेन्द्रसमविक्रमः ॥ १७
एतच्छ्रुत्वा वचस्तस्य मैनाकस्य महात्मनः । कार्यमावेद्य तु गिरेरुद्यतं च मनो मम ॥ १८
तेन चाहमनुज्ञातो मैनाकेन महात्मना । स चाप्यन्तर्हितः शैलो मानुषेण वपुष्मता ॥ १९
शरीरेण महाशैलः शैलेन च महोदधौ । उत्तमं जवमास्थाय शेषं पन्थानमास्थितः ॥ २०
ततोऽहं सुचिरं कालं वेगेनाभ्यगमं पथि । ततः पश्याम्यहं देवीं सुरसां नागमातरम् ॥ २१
समुद्रमध्ये सा देवी वचनं मामभाषत । मम भक्षः प्रदिष्टस्त्वममरैर्हरिसत्तम ॥ २२
अतस्त्वां भक्षयिष्यामि विहितस्त्वं चिरस्य मे । एवमुक्तः सुरसया प्राञ्जलिः प्रणतः स्थितः ॥ २३
विवर्णवदनो भूत्वा वाक्यं चेदमुदीरयन्[1] । रामो दाशरथिः श्रीमान् प्रविष्टो दण्डकावनम् ॥ २४
लक्ष्मणेन सह भ्रात्रा सीतया च परंतपः । तस्य सीता हृता भार्या रावणेन दुरात्मना ॥ २५
तस्याः सकाशं दूतोऽहं गमिष्ये रामशासनात् । कर्तुमर्हसि रामस्य साहाय्यं विषये सति ॥ २६
अथवा मैथिलीं दृष्ट्वा रामं चाक्लिष्टकारिणम् । आगमिष्यामि ते वक्त्रं सत्यं प्रतिशृणोमि ते ॥ २७
एवमुक्ता मया सा तु सुरसा कामरूपिणी । अब्रवीन्नातिवर्तेत[2] कश्चिदेष वरो मम ॥ २८
एवमुक्तः सुरसया दशयोजनमायतः । ततोऽर्धगुणविस्तारो बभूवाहं क्षणेन तु ॥ २९
मत्प्रमाणाधिकं चैव व्यादितं तु मुखं तया । तद्दृष्ट्वा व्यादितं चास्यं ह्रस्वं ह्यकरवं वपुः ॥ ३०
तस्मिन् मुहूर्ते च पुनर्बभूवाङ्गुष्ठमात्रकः । अभिपत्याशु तद्वक्त्रं निर्गतोऽहं ततः क्षणात् ॥ ३१
अब्रवीत् सुरसा देवी स्वेन रूपेण मां पुनः । अर्थसिद्ध्यै हरिश्रेष्ठ गच्छ सौम्य यथासुखम् ॥ ३२
समानय च वैदेहीं राघवेण महात्मना । सुखी भव महाबाहो प्रीतास्मि तव वानर ॥ ३३
ततोऽहं साधु साध्विति[3] सर्वभूतैः प्रशंसितः । ततोऽन्तरिक्षं विपुलं प्लुतोऽहं गरुडो यथा ॥ ३४
छाया मे निगृहीता च न च पश्यामि किंचन । सोऽहं विगतवेगस्तु दिशो दश विलोकयन् ॥ ३५
न किंचित्तत्र पश्यामि येन मेऽपहृता गतिः । ततो मे बुद्धिरुत्पन्ना किं नाम गगने मम ॥ ३६

---

१. उदैरयम् छ, २. नातिवर्तेन्मामम् च. ३. साध्वीति च.

ईदृशो विघ्न उत्पन्नो रूपं यत्र न दृश्यते । अधोभागेन मे दृष्टिः शोचता पातिता मया ॥ ३७
ततोऽद्राक्षमहं भीमां राक्षसीं सलिलेशयाम् । प्रहस्य च महानादं मुक्तोऽहं भीमया तया ॥ ३८
अवस्थितमसंभ्रान्तमिदं वाक्यमशोभनम् । कासि गन्ता महाकाय क्षुधिताया ममेप्सितः ॥ ३९
भक्ष्यः प्रीणय मे देहं चिरमाहारवर्जितम् । बाढमित्येव तां वाणीं प्रत्यगृह्णामहं ततः ॥ ४०
आस्यप्रमाणादधिकं तस्याः कायमपूरयम् । तस्याश्चास्यं महद्भीमं वर्धते मम भक्षणे ॥ ४१
न च मां सा तु बुबुधे मम वा निकृतं कृतम् । ततोऽहं विपुलं रूपं संक्षिप्य निमिषान्तरात् ॥ ४२
तस्या हृदयमादाय प्रपतामि नभःस्थलम् । सा विसृष्टभुजा भीमा पपात लवणाम्भसि ॥ ४३
मया पर्वतसंकाशा निकृत्तहृदया सती । शृणोमि खगतानां च सिद्धानां चारणैः सह ॥ ४४
राक्षसी सिंहिका भीमा क्षिप्रं हनुमता हता । तां हत्वा पुनरेवाहं कृत्यमात्ययिकं स्मरन् ॥ ४५
गत्वा चाहं महाध्वानं पश्यामि नगमण्डितम् । दक्षिणं तीरमुदधेर्लङ्का यत्र च सा पुरी ॥ ४६
अस्तं दिनकरे याते रक्षसां निलयं पुरम् । प्रविष्टोऽहमविज्ञातो रक्षोभिर्भीमविक्रमैः ॥ ४७
तत्र प्रविशतश्चापि कल्पान्तघनसंनिभा । अट्टहासं विमुञ्चन्ती नारी काप्युत्थिता पुरः ॥ ४८
जिघांसन्तीं ततस्तां तु ज्वलदग्निशिरोरुहाम् । सव्यमुष्टिप्रहारेण पराजित्य सुभैरवाम् ॥ ४९
प्रदोषकाले प्रविशं[1] भीतयाहं तयोदितः । अहं लङ्कापुरी वीर निर्जिता विक्रमेण ते ॥ ५०
यस्मात्तस्माद्विजेतासि सर्वरक्षांस्यशेषतः । तत्राहं सर्वरात्रं तु विचिन्वञ्जनकात्मजाम् ॥ ५१
रावणान्तःपुरगतो न चापश्यं सुमध्यमाम् । ततः सीतामपश्यंस्तु रावणस्य निवेशने ॥ ५२
शोकसागरमासाद्य न पारमुपलक्षये । शोचता च मया दृष्टं प्राकारेण समावृतम् ॥ ५३
काञ्चनेन विकृष्टेन गृहोपवनमुत्तमम् । [1]सप्राकारमवप्लुत्य पश्यामि बहुपादपम् ॥ ५४
अशोकवनिकामध्ये शिंशपापादपो महान् । तमारुह्य च पश्यामि काञ्चनं कदलीवनम् ॥ ५५
अदूरे शिंशपावृक्षात् पश्यामि वरवर्णिनीम् । श्यामां कमलपत्राक्षीमुपवासकृशाननाम् ॥ ५६
तदेकवासःसंवीतां रजोध्वस्तशिरोरुहाम् । शोकसंतापदीनाङ्गीं सीतां भर्तृहिते स्थिताम् ॥ ५७
राक्षसीभिर्विरूपाभिः क्रूराभिरभिसंवृताम् । मांसशोणितभक्षाभिर्व्याघ्रीभिर्हरिणीमिव ॥ ५८
सा मया राक्षसीमध्ये तर्ज्यमाना मुहुर्मुहुः । एकवेणीधरा दीना भर्तृचिन्तापरायणा ॥ ५९
भूमिशय्या विवर्णाङ्गी पद्मिनीव हिमागमे । रावणाद्विनिवृत्तार्था मर्तव्यकृतनिश्चया ॥ ६०
कथंचिन्मृगशावाक्षी तूर्णमासादिता मया । तां दृष्ट्वा तादृशीं नारीं रामपत्नीं यशस्विनीम् ॥ ६१
तत्रैव शिंशपावृक्षे पश्यन्नहमवस्थितः । ततो हलहलाशब्दं काञ्चीनूपुरमिश्रितम् ॥ ६२
शृणोम्यधिकगम्भीरं रावणस्य निवेशने । ततोऽहं परमोद्विग्नः स्वरूपं प्रतिसंहरन् ॥ ६३
अहं तु शिंशपावृक्षे पक्षीव गहने स्थितः । ततो रावणदाराश्च रावणश्च महाबलः ॥ ६४

---

1. प्रविशम् इति प्राविशमित्यस्य आर्षः प्रयोगः। प्रविशन् भीमया ख. १. तं प्राकारम् ङ.

तं देशं समनुप्राप्ता यत्र सीताभवत् स्थिता । तद्दृष्ट्वाथ वरारोहा सीता रक्षोगणेश्वरम् ॥ ६५
संकुच्योरू स्तनौ पीनौ बाहुभ्यां परिरभ्य च । वित्रस्तां परमोद्विग्नां वीक्षमाणां ततस्ततः ॥ ६६
त्राणं किंचिदपश्यन्तीं वेपमानां तपस्विनीम् । तामुवाच दशग्रीवः सीतां परमदुःखिताम् ॥ ६७
अवाक्शिराः प्रपतितो बहु मन्यस्व भामिनि । यदि चेत्त्वं तु दर्पान्मां नाभिनन्दसि गर्विते ॥
द्वौ मासावन्तरं सीते पास्यामि रुधिरं तव । एतच्छ्रुत्वा वचस्तस्य रावणस्य दुरात्मनः ॥ ६९
उवाच परमक्रुद्धा सीता वचनमुत्तमम् । राक्षसाधम रामस्य भार्याममिततेजसः ॥ ७०
इक्ष्वाकुकुलनाथस्य स्नुषां दशरथस्य च । अवाच्यं वदतो जिह्वा कथं न पतिता तव ॥ ७१
किंस्विद्वीर्यं तवानार्य यो मां भर्तुरसंनिधौ । अपहृत्यागतः पाप तेनादृष्टो महात्मना ॥ ७२
न त्वं रामस्य सदृशो दास्येऽप्यस्य न युज्यसे । अजेयः सत्यवादी च रणश्लाघी च राघवः ॥
जानक्या परुषं वाक्यमेवमुक्तो दशाननः । जज्वाल सहसा कोपाच्चितास्थ इव पावकः ॥ ७४
विवृत्य नयने क्रूरे मुष्टिमुद्यम्य दक्षिणम् । मैथिलीं हन्तुमारब्धः स्त्रीभिर्हाहाकृतं तदा ॥ ७५
स्त्रीणां मध्यात् समुत्पत्य तस्य भार्या दुरात्मनः । वरा मन्दोदरी[1] नाम तया स प्रतिषेधितः ॥
उक्तश्च मधुरां वाणीं तया स मदनार्दितः । सीतया तव किं कार्यं महेन्द्रसमविक्रम ॥ ७७
देवगन्धर्वकन्याभिर्यक्षकन्याभिरेव च । सार्धं प्रभो रमस्वेह सीतया किं करिष्यसि ॥ ७८
ततस्ताभिः समेताभिर्नारीभिः स महाबलः । प्रसाद्य सहसा नीतो भवनं स्वं निशाचरः ॥ ७९
याते तस्मिन् दशग्रीवे राक्षस्यो विकृताननाः । सीतां निर्भर्त्सयामासुर्वाक्यैः क्रूरैः सुदारुणैः ॥
तृणवद्भाषितं तासां गणयामास जानकी । तर्जितं च तदा तासां सीतां प्राप्य निरर्थकम् ॥८१
वृथा गर्जितनिश्चेष्टा राक्षस्यः पिशिताशनाः । रावणाय शशंसुस्ताः सीताव्यवसितं महत् ॥ ८२
ततस्ताः सहिताः सर्वा विहताशा निरुद्यमाः । परिक्षिप्य समन्तात्तां निद्रावशमुपागताः ॥ ८३
तासु चैव प्रसुप्तासु सीता भर्तृहिते रता । विलप्य करुणं दीना प्रशुशोच सुदुःखिता ॥ ८४
तासां मध्यात् समुत्थाय त्रिजटा वाक्यमब्रवीत् । आत्मानं खादत क्षिप्रं न सीता विनशिष्यति ॥८५
जनकस्यात्मजा साध्वी स्नुषा दशरथस्य च । स्वप्नो ह्यद्य मया दृष्टो दारुणो रोमहर्षणः ॥ ८६
रक्षसां च विनाशाय भर्तुरस्या जयाय च । अलमस्मान्[2] परित्रातुं राघवाद्राक्षसीगणम् ॥ ८७
अभियाचाम वैदेहीमेतद्धि मम रोचते । तस्या ह्येवंविधः स्वप्नो दुःखितायाः प्रदृश्यते ॥ ८८
सा दुःखैर्विविधैर्मुक्ता सुखमाप्नोत्यनुत्तमम् । प्रणिपातप्रसन्ना हि मैथिली जनकात्मजा ॥ ८९
ततः सा ह्रीमती बाला भर्तुर्विजयहर्षिता । अवोचद्यदि तत्तथ्यं भवेयं शरणं हि वः ॥ ९०
तां चाहं तादृशीं दृष्ट्वा सीताया दारुणां दशाम् । चिन्तयामास विक्रान्तो न च मे निर्वृतं मनः॥९१

---

1. पूर्वं धान्यमालिन्या अयं प्रतिषेध उक्तः । इदानीं मन्दोदर्येति वचनद्वयानुसारादुभाभ्यामपि प्रतिषेधः कृत इति मन्तव्यम् ।

१. यक्षीयः च. छ.
२. अस्मात् च. छ.

संभाषणार्थं च मया जानक्याश्चिन्तितो विधिः। इक्ष्वाकूणां हि वंशस्तु ततो मम पुरस्कृतः ॥ ९२
श्रुत्वा तु गदितां वाचं राजर्षिगणपूजिताम्। प्रत्यभाषत मां देवी बाष्पैः पिहितलोचना ॥ ९३
कस्त्वं केन कथं चेह प्राप्तो वानरपुंगव। का च रामेण ते प्रीतिस्तन्मे शंसितुमर्हसि ॥ ९४
तस्यास्तद्वचनं श्रुत्वा ह्यहमप्यब्रवं वचः। देवि रामस्य भर्तुस्ते सहायो भीमविक्रमः ॥ ९५
सुग्रीवो नाम विक्रान्तो वानरेन्द्रो महाबलः। तस्य मां विद्धि भृत्यं त्वं हनुमन्तमिहागतम् ॥ ९६
भर्त्राहं प्रेषितस्तुभ्यं रामेणाक्लिष्टकर्मणा। इदं च पुरुषव्याघ्रः श्रीमान् दाशरथिः स्वयम् ॥ ९७
अङ्गुलीयमभिज्ञानमदात्तुभ्यं यशस्विनि। तदिच्छामि त्वयाज्ञप्तं देवि किं करवाण्यहम् ॥ ९८
रामलक्ष्मणयोः पार्श्वं नयामि त्वां किमुत्तरम्। एतच्छ्रुत्वा विदित्वा च सीता जनकनन्दिनी ॥ ९९
आह रावणमुत्साद्य राघवो मां नयत्विति। प्रणम्य शिरसा देवीमहमार्यामनिन्दिताम् ॥ १००
राघवस्य मनोह्लादमभिज्ञानमयाचिषम्। अथ मामब्रवीत् सीता गृह्यतामयमुत्तमः ॥ १०१
मणिर्येन महाबाहू रामस्त्वां बहु मन्यते। इत्युक्त्वा तु वरारोहा मणिप्रवरमद्भुतम् ॥ १०२
प्रायच्छत् परमोद्विग्ना वाचा मां संदिदेश ह। ततस्तस्यै प्रणम्याहं राजपुत्र्यै समाहितः ॥ १०३
प्रदक्षिणं परिक्राममिहाभ्युद्गतमानसः। उक्तोऽहं[1] पुनरेवेदं निश्चित्य मनसा तया ॥ १०४
हनुमन् मम वृत्तान्तं वक्तुमर्हसि राघवे। यथा श्रुत्वैव न चिरात्तावुभौ रामलक्ष्मणौ ॥ १०५
सुग्रीवसहितौ वीरावुपेयातां तथा कुरु। यद्यन्यथा भवेदेतद्द्वौ मासौ जीवितं मम ॥ १०६
न मां द्रक्ष्यति काकुत्स्थो म्रिये साहमनाथवत्। तच्छ्रुत्वा करुणं वाक्यं क्रोधो मामभ्यवर्तत ॥ १०७
उत्तरं च मया दृष्टं कार्यशेषमनन्तरम्। ततोऽवर्धत मे कायस्तदा पर्वतसंनिभः ॥ १०८
युद्धकाङ्क्षी वनं तच्च विनाशयितुमारभे। तद्भग्नं वनषण्डं तु भ्रान्तत्रस्तमृगद्विजम् ॥ १०९
प्रतिबुद्धा निरीक्षन्ते राक्षस्यो विकृताननाः। मां च दृष्ट्वा वने तस्मिन् समागम्य ततस्ततः ॥ ११०
ताः समभ्यागताः क्षिप्रं रावणायाचचक्षिरे। राजन् वनमिदं दुर्गं तव भग्नं दुरात्मना ॥ १११
वानरेण ह्यविज्ञाय तव वीर्यं महाबल। दुर्बुद्धेस्तस्य राजेन्द्र तव विप्रियकारिणः ॥ ११२
वधमाज्ञापय क्षिप्रं यथासौ विलयं व्रजेत्। तच्छ्रुत्वा राक्षसेन्द्रेण विसृष्टा भृशदुर्जयाः ॥ ११३
राक्षसाः किंकरा नाम रावणस्य मनोऽनुगाः। तेषामशीतिसाहस्रं शूलमुद्गरपाणिनाम् ॥ ११४
मया तस्मिन् वनोद्देशे परिघेण निषूदितम्। तेषां तु हतशेषा ये ते गत्वा लघुविक्रमाः ॥ ११५
निहतं च महत् सैन्यं रावणायाचचक्षिरे। ततो मे बुद्धिरुत्पन्ना चैत्यप्रासादमाक्रमम् ॥ ११६
तत्रस्थान् राक्षसान् हत्वा शतं स्तम्भेन वै पुनः। ललामभूतो लङ्कायाः स च विध्वंसितो मया ॥ ११७
ततः प्रहस्तस्य सुतं जम्बुमालिनमादिशत्। राक्षसैर्बहुभिः सार्धं घोररूपैर्भयानकैः ॥ ११८
तमहं बलसंपन्नं राक्षसं रणकोविदम्। परिघेणातिघोरेण सूदयामि सहानुगम् ॥ ११९

---

१, उत्तरम् च,

तच्छ्रुत्वा राक्षसेन्द्रस्तु मन्त्रिपुत्रान् महाबलान् । पदातिबलसंपन्नान् प्रेषयामास रावणः ॥ १२०
परिघेणैव तान् सर्वान्नयामि यमसादनम् । मन्त्रिपुत्रान् हताञ्छ्रुत्वा समरे लघुविक्रमान् ॥ १२१
पञ्च सेनाग्रगाञ्शूरान् प्रेषयामास रावणः । तानहं सहसैन्यान् वै सर्वानेवाभ्यसूदयम् ॥ १२२
ततः पुनर्दशग्रीवः पुत्रमक्षं महाबलम् । बहुभी राक्षसैः सार्धं प्रेषयामास रावणः ॥ १२३
तं तु मन्दोदरीपुत्रं कुमारं रणपण्डितम् । सहसा खं समुत्क्रान्तं पादयोश्च गृहीतवान् ॥ १२४
तमासीनं[1] शतगुणं भ्रामयित्वा व्यपेषयम् । तमक्षमागतं भग्नं निशम्य स दशाननः ॥ १२५
तत इन्द्रजितं नाम द्वितीयं रावणः सुतम् । व्यादिदेश सुसंक्रुद्धो बलिनं युद्धदुर्मदम् ॥ १२६
तच्चाप्यहं बलं सर्वं तं च राक्षसपुंगवम् । नष्टौजसं रणे कृत्वा परं हर्षमुपागमम् ॥ १२७
महता हि महाबाहुः प्रत्ययेन महाबलः । प्रेषितो रावणेनैव सह वीरैर्मदोत्कटैः ॥ १२८
सोऽविषह्यं हि मां बुद्ध्वा स्वसैन्यं चावमर्दितम् । ब्राह्मेणास्त्रेण स तु मां प्राबध्नाच्चातिवेगितः ॥१२९
रज्जुभिश्चाभिबध्नन्ति ततो मां तत्र राक्षसाः । रावणस्य समीपं च गृहीत्वा मामुपानयन् ॥ १३०
दृष्ट्वा संभाषितश्चाहं रावणेन दुरात्मना । पृष्टश्च लङ्कागमनं राक्षसानां च तं वधम् ॥ १३१
तत्सर्वं च मया तत्र सीतार्थमिति जल्पितम् । तस्यास्तु[2] दर्शनाकाङ्क्षी प्राप्तस्त्वद्भवनं विभो ॥ १३२
मारुतस्यौरसः पुत्रो वानरो हनुमानहम् । रामदूतं च मां विद्धि सुग्रीवसचिवं कपिम् ॥ १३३
सोऽहं दूत्येन रामस्य त्वत्सकाशमिहागतः । सुग्रीवश्च महातेजाः स त्वां कुशलमब्रवीत् ॥ १३४
धर्मार्थकामसहितं हितं पथ्यमुवाच च । वसतो ऋश्यमूके मे पर्वते विपुलद्रुमे ॥ १३५
राघवो रणविक्रान्तो मित्रत्वं समुपागतः । तेन मे कथितं राज्ञा भार्या मे रक्षसा हृता ॥ १३६
तत्र साहाय्यमस्माकं कार्यं सर्वात्मना त्वया । मया च कथितं तस्मै वालिनश्च वधं प्रति ॥ १३७
तत्र साहाय्यहेतोर्मे समयं कर्तुमर्हसि । वालिना हृतराज्येन सुग्रीवेण सह प्रभुः ॥ १३८
चक्रेऽग्निसाक्षिकं सख्यं राघवः सहलक्ष्मणः । तेन वालिनमुत्पाट्य शरेणैकेन संयुगे ॥ १३९
वानराणां महाराजः कृतः स प्लवतां प्रभुः । तस्य साहाय्यमस्माभिः कार्यं सर्वात्मना त्विह ॥ १४०
तेन प्रस्थापितस्तुभ्यं समीपमिह धर्मतः । क्षिप्रमानीयतां सीता दीयतां राघवाय च ॥ १४१
यावन्न हरयो वीरा विधमन्ति बलं तव । वानराणां प्रभावो हि न केन विदितः पुरा ॥ १४२
देवतानां सकाशं च ये गच्छन्ति निमन्त्रिताः । इति वानरराजस्त्वामाहेत्यभिहितो मया ॥ १४३
मामैक्षत ततः क्रुद्धश्चक्षुषा प्रदहन्निव । तेन वध्योऽहमाज्ञप्तो रक्षसा रौद्रकर्मणा ॥ १४४
मत्प्रभावमविज्ञाय रावणेन दुरात्मना । ततो विभीषणो नाम तस्य भ्राता महामतिः ॥ १४५
तेन राक्षसराजोऽसौ याचितो मम कारणात् । नैवं राक्षसशार्दूल त्यज्यतामेष निश्चयः ॥ १४६

---

१. चर्मासिनम् च. छ. २. तस्याहम् ग. अस्याहम् च. छ.

राजशास्त्रव्यपेतो हि मार्गः संसेव्यते त्वया। दूतवध्या न दृष्टा हि राजशास्त्रेषु राक्षस ॥ १४७
दूतेन वेदितव्यं च यथार्थं हितवादिना। सुमहत्यपराधेऽपि दूतस्यातुलविक्रम ॥ १४८
विरूपकरणं दृष्टं न वधोऽस्तीह शास्त्रतः। विभीषणेनैवमुक्तो रावणः संदिदेश तान् ॥ १४९
राक्षसानेतदेवास्य लाङ्गूलं दह्यतामिति। ततस्तस्य वचः श्रुत्वा मम पुच्छं समन्ततः ॥ १५०
वेष्टितं शणवल्कैश्च जीर्णैः कार्पासजैः पटैः। राक्षसाः सिद्धसंनाहास्ततस्ते चण्डविक्रमाः ॥ १५१
तदादहन्त मे पुच्छं निघ्नन्तः काष्ठमुष्टिभिः। बद्धस्य बहुभिः पाशैर्यन्त्रितस्य च राक्षसैः ॥ १५२
न मे पीडा [1]भवेत् काचिद्दिदृक्षोर्नगरीं दिवा[2]। ततस्ते राक्षसाः शूरा बद्धं मामग्निसंवृतम् ॥ १५३
अघोषयन् राजमार्गे नगरद्वारमागताः। ततोऽहं सुमहद्रूपं संक्षिप्य पुनरात्मनः ॥ १५४
विमोचयित्वा तं बन्धं प्रकृतिस्थः स्थितः पुनः। आयसं परिघं गृह्य तानि रक्षांस्यसूदयम् ॥ १५५
ततस्तन्नगरद्वारं वेगेनाप्लुतवानहम्। पुच्छेन च प्रदीप्तेन तां पुरीं साट्टगोपुराम् ॥ १५६
दहाम्यहमसंभ्रान्तो युगान्ताग्निरिव प्रजाः[3]। विनष्टा जानकी व्यक्तं न ह्यदग्धः प्रदृश्यते ॥ १५७
लङ्कायां कश्चिदुद्देशः सर्वा भस्मीकृता पुरी। दहता च मया लङ्कां दग्धा सीता न संशयः ॥ १५८
रामस्य हि महत् कार्यं मयेदं वितथीकृतम्। इति शोकसमाविष्टश्चिन्तामहमुपागतः ॥ १५९
अथाहं वाचमश्रौषं चारणानां शुभाक्षराम्। जानकी न च दग्धेति विस्मयोदन्तभाषिणाम् ॥ १६०
ततो मे बुद्धिरुत्पन्ना श्रुत्वा तामद्भुतां गिरम्। अदग्धा जानकीत्येव निमित्तैश्चोपलक्षिता ॥ १६१
दीप्यमाने तु लाङ्गूले न मां दहति पावकः। हृदयं च प्रहृष्टं मे वाताः सुरभिगन्धिनः ॥ १६२
तैर्निमित्तैश्च दृष्टार्थैः कारणैश्च महागुणैः। ऋषिवाक्यैश्च सिद्धार्थैरभवं हृष्टमानसः ॥ १६३
पुनर्दृष्ट्वा च वैदेहीं विसृष्टश्च तया पुनः। ततः पर्वतमासाद्य तत्रारिष्टमहं पुनः ॥ १६४
प्रतिप्लवनमारेभे युष्मद्दर्शनकाङ्क्षया। ततः पवनचन्द्रार्कसिद्धगन्धर्वसेवितम् ॥ १६५
पन्थानमहमाक्रम्य भवतो दृष्टवानिह। राघवस्य प्रभावेण भवतां चैव तेजसा ॥ १६६
सुग्रीवस्य च कार्यार्थं मया सर्वमनुष्ठितम्। एतत् सर्वं मया तत्र यथावदुपपादितम् ॥ १६७
अत्र यन्न कृतं शेषं तत् सर्वं क्रियतामिति ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
सुन्दरकाण्डे हनूमद्वृत्तानुकथनं नाम अष्टपञ्चाशः सर्गः

---

१. अभवत् रा.।
२. इदमर्धम् च. छ. नास्ति।
३. अस्यानन्तरम्—ततो मे ह्यभवत् त्रासो लङ्कां दग्धां (दग्ध्वा छ.) समीक्ष्य तु—इति ग. घ. ङ.

## एकोनषष्टितमः सर्गः

### अनन्तरकार्यप्ररोचनम्

एतदाख्याय तत् सर्वं हनुमान् मारुतात्मजः । भूयः समुपचक्राम वचनं वक्तुमुत्तरम् ॥ १
सफलो राघवोद्योगः सुग्रीवस्य च संभ्रमः । शीलमासाद्य सीताया मम च प्रवणं[1] मनः[2] ॥ २
तपसा धारयेल्लोकान् क्रुद्धो[3] वा निर्दहेदपि । सर्वथातिप्रवृद्धोऽसौ रावणो राक्षसाधिपः ॥ ३
तस्य[4] तां स्पृशतो गात्रं तपसा न विनाशितम् । न तदग्निशिखा कुर्यात् संस्पृष्टा पाणिना सती ॥ ४
जनकस्यात्मजा कुर्याद्यत् क्रोधकलुषीकृता । जाम्बवत्प्रमुखान् सर्वाननुज्ञाप्य महाहरीन् ॥ ५
अस्मिन्नेवंगते कार्ये भवतां च निवेदिते । न्याय्यं स्म सह वैदेह्या द्रष्टुं तौ पार्थिवात्मजौ ॥ ६
अहमेकोऽपि पर्याप्तः सराक्षसगणां पुरीम् । तां लङ्कां तरसा हन्तुं रावणं च महाबलम् ॥ ७
किं पुनः सहितो वीरैर्बलवद्भिः कृतात्मभिः । कृतास्त्रैः प्लवगैः शूरैर्भवद्भिर्विजयैषिभिः ॥ ८
अहं तु रावणं युद्धे ससैन्यं सपुरःसरम् । सहपुत्रं वधिष्यामि सहोदरयुतं युधि ॥ ९
ब्राह्ममैन्द्रं च रौद्रं च वायव्यं वारुणं तथा । यदि शक्रजितोऽस्त्राणि दुर्निरीक्ष्याणि संयुगे ॥ १०
तान्यहं विधमिष्यामि निहनिष्यामि राक्षसान् । भवतामभ्यनुज्ञातो विक्रमो मे रुणद्धि तम् ॥ ११
मयातुला विसृष्टा हि शैलवृष्टिर्निरन्तरा । देवानपि रणे हन्यात् किं पुनस्तान्निशाचरान् ॥ १२
सागरोऽप्यतियाद्वेलां मन्दरः प्रचलेदपि । न जाम्बवन्तं समरे कम्पयेदरिवाहिनी ॥ १३
सर्वराक्षससङ्घानां राक्षसा ये च पूर्वकाः[5] । अलमेको विनाशाय वीरो वालिसुतः कपिः ॥ १४
पनसस्योरुवेगेन नीलस्य च महात्मनः । मन्दरोऽपि विशीर्येत किं पुनर्युधि राक्षसाः ॥ १५
सदेवासुरयक्षेषु गन्धर्वोरगपक्षिषु । मैन्दस्य प्रतियोद्धारं शंसत द्विविदस्य वा ॥ १६
अश्विपुत्रौ महाभागावेतौ प्लवगसत्तमौ । एतयोः प्रतियोद्धारं न पश्यामि रणाजिरे ॥ १७
पितामहवरोत्सेकात् परमं दर्पमास्थितौ । अमृतप्राशिनावेतौ सर्ववानरसत्तमौ ॥ १८
अश्विनोर्माननार्थं हि सर्वलोकपितामहः । सर्वावध्यत्वमतुलमनयोर्दत्तवान् पुरा ॥ १९
वरोत्सेकेन मत्तौ च प्रमथ्य महतीं चमूम् । सुराणाममृतं वीरौ पीतवन्तौ प्लवङ्गमौ ॥ २०
एतावेव हि संक्रुद्धौ सवाजिरथकुञ्जराम् । लङ्कां नाशयितुं शक्तौ सर्वे तिष्ठन्तु वानराः ॥ २१
मयैव निहता लङ्का दग्धा भस्मीकृता पुनः । राजमार्गेषु सर्वत्र नाम विश्रावितं मया ॥ २२
जयत्यतिबलो रामो लक्ष्मणश्च महाबलः । राजा जयति सुग्रीवो राघवेणाभिपालितः २३
अहं कोसलराजस्य दासः पवनसंभवः । हनुमानिति सर्वत्र नाम विश्रावितं मया ॥ २४
अशोकवनिकामध्ये रावणस्य दुरात्मनः । अधस्ताच्छिंशपावृक्षे साध्वी करुणमास्थिता ॥ २५

---

१. प्रीणितम् पुना. ।
२. अस्यानन्तरम्—आर्यायाः सदृशं शीलं सीतायाः प्लवगर्षभाः—इति पुना. ।
३. क्रुद्धा पुना. ।
४. यस्य क. ख. च.
५. पूर्वजाः पुना. ।

राक्षसीभिः परिवृता शोकसंतापकर्शिता । मेघलेखापरिवृता चन्द्रलेखेव निष्प्रभा ॥ २६
अचिन्तयन्ती वैदेही रावणं बलदर्पितम् । पतिव्रता च सुश्रोणी अवष्टब्धा च जानकी ॥ २७
अनुरक्ता हि वैदेही रामं सर्वात्मना शुभा । अनन्यचित्ता रामे च पौलोमीव पुरंदरे ॥ २८
तदेकवासःसंवीता रजोध्वस्ता तथैव च । शोकसंतापदीनाङ्गी सीता भर्तृहिते रता ॥ २९
सा मया राक्षसीमध्ये तर्ज्यमाना मुहुर्मुहुः । राक्षसीभिर्विरूपाभिर्दृष्टा हि प्रमदावने ॥ ३०
एकवेणीधरा दीना भर्तृचिन्तापरायणा । अधःशय्या विवर्णाङ्गी पद्मिनीव हिमागमे ॥ ३१
रावणाद्विनिवृत्तार्था मर्तव्यकृतनिश्चया । कथंचिन्मृगशावाक्षी विश्वासमुपपादिता ॥ ३२
ततः संभाषिता चैव सर्वमर्थं च दर्शिता । रामसुग्रीवसख्यं च श्रुत्वा प्रीतिमुपागता ॥ ३३
नियतः समुदाचारो भक्तिर्भर्तरि चोत्तमा । यन्न हन्ति दशग्रीवं स महात्मा दशाननः[1] ॥ ३४
निमित्तमात्रं रामस्तु वधे तस्य भविष्यति । सा प्रकृत्यैव तन्वङ्गी तद्वियोगाच्च कर्शिता ॥ ३५
प्रतिपत्पाठशीलस्य विद्येव तनुतां गता । एवमास्ते महाभागा सीता शोकपरायणा ॥ ३६
यदत्र प्रतिकर्तव्यं तत् सर्वमुपपाद्यताम् ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
सुन्दरकाण्डे अनन्तरकार्यप्ररोचनं नाम एकोनषष्टितमः सर्गः

---

## षष्टितमः सर्गः

### अङ्गदजाम्बवत्संवादः

तस्य तद्वचनं श्रुत्वा वालिसूनुरभाषत । अयुक्तं तु विना देवीं दृष्टवद्भिश्च वानराः ॥ १
समीपं गन्तुमस्माभी राघवस्य महात्मनः[2] । दृष्टा देवी न चानीता इति तत्र निवेदनम् ॥ २
अयुक्तमिव पश्यामि भवद्भिः ख्यातविक्रमैः । न हि नः प्लवने कश्चिन्नापि कश्चित् पराक्रमे ॥ ३
तुल्यः सामरदैत्येषु लोकेषु हरिसत्तमाः[3] । तेष्वेवं हतवीरेषु राक्षसेषु हनूमता ॥ ४
किमन्यदत्र कर्तव्यं गृहीत्वा याम जानकीम् । रामलक्ष्मणयोर्मध्ये न्यस्याम जनकात्मजाम् ॥ ५

---

१. कृतागसम् च. छ.

२. अस्यानन्तरम्—अश्विपुत्रौ महावेगौ बलवन्तौ प्लवङ्गमौ । पितामहवरोत्सेकात्परमं दर्पमास्थितौ ॥ अश्विनोर्माननार्थं हि सर्वलोकपितामहः । सर्वावध्यत्वमतुलमनयोर्दत्तवान् पुरा ॥ वरोत्सेकेन मत्तौ च प्रमथ्य महतीं चमूम् । सुराणाममृतं वीरौ पीतवन्तौ महाबलौ ॥ एतावेव हि संक्रुद्धौ सवाजिरथकुञ्जराम् । लङ्कां नाशयितुं शक्तौ सर्वे तिष्ठन्तु वानराः ॥ अहमेकोऽपि पर्याप्तः सराक्षसगणां पुरीम् । तां लङ्कां तरसा हन्तुं रावणं च महाबलम् । किं पुनः सहितो वीरैर्बलवद्भिः कृतात्मभिः ॥ कृतास्त्रैः प्लवगैः शक्तैर्भवद्भिर्विजयैषिभिः । वायुसूनोर्बलेनैव दग्धा लङ्केति नः श्रुतम् ॥ इति पुना.

३. अस्यानन्तरम्—जित्वा लङ्कां सरक्षौघां हत्वा तं रावणं रणे । सीतामादाय गच्छामः सिद्धार्था हृष्टमानसाः ॥—इति पुना.

किं व्यलीकैस्तु तान् सर्वान् वानरान् वानरर्षभान् । वयमेव हि गत्वा तान् हत्वा राक्षसपुंगवान्॥
राघवं द्रष्टुमर्हामः सुग्रीवं सहलक्ष्मणम् । तमेवं कृतसंकल्पं जाम्बवान् हरिसत्तमः ॥ ७
उवाच परमप्रीतो वाक्यमर्थवदर्थवित् । नैषा बुद्धिर्महाबुद्धे यद्ब्रवीषि महाकपे ॥ ८
विचेतुं वयमाज्ञप्ता दक्षिणां दिशमुत्तमाम् । नानेतुं कपिराजेन नैव रामेण धीमता ॥ ९
कथंचिन्निर्जितां सीतामस्माभिर्नाभिरोचयेत् । राघवो नृपशार्दूलः कुलं व्यपदिशन् स्वकम् ॥ १०
प्रतिज्ञाय स्वयं राजा सीताविजयमग्रतः । सर्वेषां कपिमुख्यानां कथं मिथ्या करिष्यति ॥ ११
विफलं कर्म च कृतं भवेत्तुष्टिर्न तस्य च । वृथा च दर्शितं वीर्यं भवेद्वानरपुंगवाः ॥ १२
तस्माद्गच्छाम वै सर्वे यत्र रामः सलक्ष्मणः । सुग्रीवश्च महातेजाः कार्यस्यास्य निवेदने ॥ १३

न तावदेषा मतिरक्षमा नो यथा भवान् पश्यति राजपुत्र ।
यथा तु रामस्य मतिर्निविष्टा तथा भवान् पश्यतु कार्यसिद्धिम् ॥ १४

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
सुन्दरकाण्डे अङ्गदजाम्बवत्संवादो नाम षष्टितमः सर्गः

---

## एकषष्टितमः सर्गः

### मधुवनप्रवेशः

ततो जाम्बवतो वाक्यमगृह्णत वनौकसः । अङ्गदप्रमुखा वीरा हनूमांश्च महाकपिः ॥ १
प्रीतिमन्तस्ततः सर्वे वायुपुत्रपुरःसराः । महेन्द्राग्रं परित्यज्य पुप्लुवुः प्लवगर्षभाः ॥ २
मेरुमन्दरसंकाशा मत्ता इव महागजाः । छादयन्त इवाकाशं महाकाया महाबलाः ॥ ३
सभाज्यमानं भूतैस्तमात्मवन्तं महाबलम् । हनुमन्तं महावेगं वहन्त इव दृष्टिभिः ॥ ४
राघवे चार्थनिर्वृत्तिं कर्तुं च परमं यशः । समाधाय समृद्धार्थाः कर्मसिद्धिभिरुन्नताः ॥ ५
प्रियाख्यानोन्मुखाः सर्वे सर्वे युद्धाभिनन्दिनः । सर्वे रामप्रतीकारे निश्चितार्था मनस्विनः ॥ ६
प्लवमानाः खमुत्पत्य ततस्ते काननौकसः । नन्दनोपममासेदुर्वनं द्रुमलतायुतम् ॥ ७
यत्तन्मधुवनं नाम सुग्रीवस्याभिरक्षितम् । अधृष्यं सर्वभूतानां सर्वभूतमनोहरम् ॥ ८
यद्रक्षति महावीर्यः सदा दधिमुखः कपिः । मातुलः कपिमुख्यस्य सुग्रीवस्य महात्मनः ॥ ९
ते तद्वनमुपागम्य बभूवुः परमोत्कटाः । वानरा वानरेन्द्रस्य मनःकान्ततमं महत् ॥ १०
ततस्ते वानरा हृष्टा दृष्ट्वा मधुवनं महत् । कुमारमभ्ययाचन्त मधूनि मधुपिङ्गलाः ॥ ११
ततः कुमारस्तान् वृद्धाञ्जाम्बवत्प्रमुखान् कपीन् । अनुमान्य ददौ तेषां निसर्गं मधुभक्षणे ॥ १२
ततश्चानुमताः सर्वे संप्रहृष्टा वनौकसः । मुदिताः प्रेरिताश्चापि प्रनृत्यन्तोऽभवंस्ततः ॥ १३

गायन्ति केचित् प्रणमन्ति केचिन्नृत्यन्ति केचित् प्रहसन्ति केचित् ।
पतन्ति केचिद्विचरन्ति केचित् प्लवन्ति केचित् प्रलपन्ति केचित् ॥ १४

परस्परं केचिदुपाश्रयन्ते परस्परं केचिदुपाक्रमन्ते ।
परस्परं केचिदुपब्रुवन्ते परस्परं केचिदुपारमन्ते ॥ १५

द्रुमाद्द्रुमं केचिदभिद्रवन्ति क्षितौ नगाग्रान्निपतन्ति केचित् ।
महीतलात् केचिदुदीर्णवेगा महाद्रुमाग्राण्यभिसंपतन्ति ॥ १६

गायन्तमन्यः प्रहसन्नुपैति हसन्तमन्यः प्ररुदन्नुपैति ।
रुदन्तमन्यः प्रणदन्नुपैति नदन्तमन्यः प्रणुदन्नुपैति ॥ १७

समाकुलं तत् कपिसैन्यमासीन्मधुप्रपानोत्कटसत्त्वचेष्टम् ।
न चात्र कश्चिन्न बभूव मत्तो न चात्र कश्चिन्न बभूव तृप्तः ॥ १८

ततो वनं तैः परिभक्ष्यमाणं द्रुमांश्च विध्वंसितपत्रपुष्पान् ।
समीक्ष्य कोपाद्दधिवक्त्रनामा निवारयामास कपिः कपींस्तान् ॥ १९

स तैः प्रवृद्धैः परिभर्त्स्यमानो वनस्य गोप्ता हरिवीरवृद्धः ।
चकार भूयो मतिमुग्रतेजा वनस्य रक्षां प्रति वानरेभ्यः ॥ २०

उवाच कांश्चित् परुषाणि धृष्टमसक्तमन्यांश्च तलैर्जघान ।
समेत्य कैश्चित् कलहं चकार तथैव साम्नोपजगाम कांश्चित् ॥ २१

स तैर्मदात् संपरिवार्य वाक्यैर्बलाच्च तेन प्रतिवार्यमाणैः ।
प्रधर्षितस्त्यक्तभयैः समेत्य प्रकृष्यते चाप्यनवेक्ष्य दोषम् ॥ २२

नखैस्तुदन्तो दशनैर्दशन्तस्तलैश्च पादैश्च समापयन्तः ।
मदात् कपिं तं कपयः समग्रा महावनं निर्विषयं च चक्रुः ॥ २३

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
सुन्दरकाण्डे मधुवनप्रवेशो नाम एकषष्टितमः सर्गः

---

## द्विषष्टितमः सर्गः

### दधिमुखखिलीकारः

तानुवाच हरिश्रेष्ठो हनुमान् वानरर्षभः । अव्यग्रमनसो यूयं मधु सेवत वानराः ॥

अहमावारयिष्यामि युष्माकं परिपन्थिनः । श्रुत्वा हनुमतो वाक्यं हरीणां प्रवरोऽङ्गदः ॥ २
प्रत्युवाच प्रसन्नात्मा पिबन्तु हरयो मधु । अवश्यं कृतकार्यस्य वाक्यं हनुमतो मया ॥ ३
अकार्यमपि कर्तव्यं किमङ्ग पुनरीदृशम् । अङ्गदस्य मुखाच्छ्रुत्वा वचनं वानरर्षभाः ॥ ४
साधु साध्विति संहृष्टा वानराः प्रत्यपूजयन् । पूजयित्वाङ्गदं सर्वे वानरा वानरर्षभम् ॥ ५
जग्मुर्मधुवनं यत्र नदीवेगा इव द्रुतम् । ते प्रविष्टा मधुवनं पालानाक्रम्य वीर्यतः ॥ ६
अतिसर्गाच्च पटवो दृष्ट्वा श्रुत्वा च मैथिलीम् । पपुः सर्वे मधु तदा रसवत्फलमाददुः ॥ ७
उत्पत्य च ततः सर्वे वनपालान् समागतान् । ताडयन्ति स्म शतशः सक्तान् मधुवने तदा ॥ ८
मधूनि द्रोणमात्राणि बाहुभिः परिगृह्य ते । पिबन्ति सहिताः सर्वे निघ्नन्ति स्म तथापरे ॥ ९
केचित् पीत्वापविध्यन्ति मधूनि मधुपिङ्गलाः । मधूच्छिष्टेन केचिच्च जघ्नुरन्योन्यमुत्कटाः ॥ १०
अपरे वृक्षमूले तु शाखां गृह्य व्यवस्थिताः । अत्यर्थं च मदग्लानाः पर्णान्यास्तीर्य शेरते ॥ ११
उन्मत्तभूताः प्लवगा मधुमत्ताश्च हृष्टवत् । क्षिपन्ति च तदान्योन्यं स्खलन्ति च तथापरे ॥ १२
केचित् क्ष्वेलां प्रकुर्वन्ति केचित् कूजन्ति हृष्टवत् । हरयो मधुना मत्ताः केचित् सुप्ता महीतले ॥१३
कृत्वा किंचिद्धसन्त्यन्ये केचित् कुर्वन्ति चेतरत् । कृत्वा किंचिद्वदन्त्यन्ये केचिद्बुध्यन्ति चेतरत् ॥१४
येऽप्यत्र मधुपालाः स्युः प्रेष्या दधिमुखस्य तु । तेऽपि तैर्वानरैर्भीमैः प्रतिषिद्धा दिशो गताः ॥ १५
जानुभिस्तु प्रकृष्टाश्च देवमार्गं च दर्शिताः । अब्रुवन् परमोद्विग्ना गत्वा दधिमुखं वचः ॥ १६
हनूमता दत्तवरैर्हतं मधुवनं बलात् । वयं च जानुभिः कृष्टा देवमार्गं च दर्शिताः ॥ १७
ततो दधिमुखः क्रुद्धो वनपस्तत्र वानरः । हतं मधुवनं श्रुत्वा सान्त्वयामास तान् हरीन् ॥ १८
इहागच्छत गच्छामो वानरान् बलदर्पितान् । बलेन वारयिष्यामो मधु भक्षयतो वयम् ॥ १९
श्रुत्वा दधिमुखस्येदं वचनं वानरर्षभाः । पुनर्वीरा मधुवनं तेनैव सहिता ययुः ॥ २०
मध्ये चैषां दधिमुखः प्रगृह्य तरसा तरुम् । समभ्यधावद्वेगेन ते च सर्वे प्लवङ्गमाः ॥ २१
ते शिलाः पादपांश्चापि पर्वतांश्चापि वानराः । गृहीत्वाभ्यगमन् क्रुद्धा यत्र ते कपिकुञ्जराः ॥ २२
ते स्वामिवचनं वीरा हृदयेष्ववसज्य तत् । त्वरया ह्यभ्यधावन्त सालतालशिलायुधाः ॥ २३
वृक्षस्थांश्च तलस्थांश्च वानरान् बलदर्पितान् । अभ्यक्रामंस्ततो वीराः पालास्तत्र सहस्रशः ॥ २४
अथ दृष्ट्वा दधिमुखं क्रुद्धं वानरपुंगवाः । अभ्यधावन्त वेगेन हनुमत्प्रमुखास्तदा ॥ २५
तं सवृक्षं महाबाहुमापतन्तं महाबलम् । आर्यकं प्राहरत्तत्र बाहुभ्यां कुपितोऽङ्गदः ॥ २६
मदान्धश्च न वेदैनमार्यकोऽयं ममेति सः । अथैनं निष्पिपेषाशु वेगवद्वसुधातले ॥ २७
स भग्नबाहूरुभुजो विह्वलः शोणितोक्षितः । मुमोह सहसा वीरो मुहूर्तं कपिकुञ्जरः ॥ २८
स समाश्वस्य सहसा संक्रुद्धो राजमातुलः । वानरान् वारयामास दण्डेन मधुमोहितान् ॥ २९
स कथंचिद्विमुक्तस्तैर्वानरैर्वानरर्षभः । उवाचैकान्तमाश्रित्य भृत्यान् स्वान् समुपागतान् ॥ ३०
एते तिष्ठन्तु गच्छामो भर्ता नो यत्र वानरः । सुग्रीवो विपुलग्रीवः सह रामेण तिष्ठति ॥ ३१

सर्वं चैवाङ्गदे दोषं श्रावयिष्यामि पार्थिवे । अमर्षी वचनं श्रुत्वा घातयिष्यति वानरान् ॥ ३२

इष्टं मधुवनं ह्येतत् सुग्रीवस्य महात्मनः । पितृपैतामहं दिव्यं देवैरपि दुरासदम् ॥ ३३

स वानरानिमान् सर्वान् मधुलुब्धान् गतायुषः । घातयिष्यति दण्डेन सुग्रीवः ससुहृज्जनान् ॥ ३४

वध्या ह्येते दुरात्मानो नृपाज्ञापरिभाविनः । अमर्षप्रभवो रोषः सफलो नो भविष्यति ॥ ३५

एवमुक्त्वा दधिमुखो वनपालान् महाबलः । जगाम सहसोत्पत्य वनपालैः समन्वितः ॥ ३६

निमेषान्तरमात्रेण स हि प्राप्तो वनालयः । सहस्रांशुसुतो धीमान् सुग्रीवो यत्र वानरः ॥ ३७

रामं च लक्ष्मणं चैव दृष्ट्वा सुग्रीवमेव च । समप्रतिष्ठां जगतीमाकाशान्निपपात ह ॥ ३८

संनिपत्य महावीर्यः सर्वैस्तैः परिवारितः । हरिर्दधिमुखः पालैः पालानां परमेश्वरः ॥ ३९

स दीनवदनो भूत्वा कृत्वा शिरसि चाञ्जलिम् । सुग्रीवस्य शुभौ मूर्ध्ना चरणौ प्रत्यपीडयत् ॥ ४०

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
सुन्दरकाण्डे दधिमुखखिलीकारो नाम द्विषष्टितमः सर्गः

---

## त्रिषष्टितमः सर्गः

सुग्रीवहर्षः

ततो मूर्ध्ना निपतितं वानरं वानरर्षभः । दृष्ट्वैवोद्विग्नहृदयो वाक्यमेतदुवाच ह ॥ १

उत्तिष्ठोत्तिष्ठ कस्मात्त्वं पादयोः पतितो मम । अभयं ते भयं वीर सर्वमेवाभिधीयताम्[1] ॥ २

स तु विश्वासितस्तेन सुग्रीवेण महात्मना । उत्थाय सुमहाप्राज्ञो वाक्यं दधिमुखोऽब्रवीत् ॥ ३

नैवर्क्षरजसा राजन्न त्वया नापि वालिना । वनं निसृष्टपूर्वं हि भक्षितं तच्च वानरैः ॥ ४

एभिः प्रधर्षिताश्चैव वानरा[2] वनरक्षिभिः । मधून्यचिन्तयित्वेमान् भक्षयन्ति पिबन्ति च ॥ ५

शिष्टमत्रापविध्यन्ति भक्षयन्ति तथापरे । निवार्यमाणास्ते सर्वे भ्रुकुटिं[3] दर्शयन्ति हि ॥ ६

इमे हि संरब्धतरास्तथा तैः संप्रधर्षिताः । वारयन्तो वनात्तस्मात् क्रुद्धैर्वानरपुङ्गवैः ॥ ७

ततस्तैर्बहुभिर्वीरैर्वानरैर्वानरर्षभ । संरक्तनयनैः क्रोधाद्धरयः प्रविचालिताः ॥ ८

पाणिभिर्निहताः केचित् केचिज्जानुभिराहताः । प्रकृष्टाश्च यथाकामं देवमार्गं च दर्शिताः ॥ ९

एवमेते हताः शूरास्त्वयि तिष्ठति भर्तरि । कृत्स्नं मधुवनं चैव प्रकामं तैः प्रभक्ष्यते ॥ १०

---

१. अस्यानन्तरम्—किं सम्भ्रमाद्धितं कृत्स्न ब्रूहि यद्वक्तुमर्हसि । कच्चिन्मधुवने स्वस्ति श्रोतुमिच्छामि वानर ॥—इति पुना.

२. वारिता छ.

३. भ्रुवौ वै छ.

एवं विज्ञाप्यमानं तु सुग्रीवं वानरर्षभम् । अपृच्छत्तं महाप्राज्ञो लक्ष्मणः परवीरहा ॥ ११
किमयं वानरो राजन् वनपः प्रत्युपस्थितः । कं चार्थमभिनिर्दिश्य दुःखितो वाक्यमब्रवीत्[1] ॥ १२
एवमुक्तस्तु सुग्रीवो लक्ष्मणेन महात्मना । लक्ष्मणं प्रत्युवाचेदं वाक्यं वाक्यविशारदः ॥ १३
आर्य लक्ष्मण संप्राह वीरो दधिमुखः कपिः । अङ्गदप्रमुखैर्वीरैर्भक्षितं मधु वानरैः ॥ १४
विचित्य दक्षिणामाशामागतैर्हरिपुङ्गवैः । नैषामकृतकृत्यानामीदृशः स्यादुपक्रमः ॥ १५
आगतैश्च प्रमथितं यथा मधुवनं हि तैः । धर्षितं च वनं कृत्स्नमुपयुक्तं च वानरैः[2] ॥ १६
वनं यदभिपन्नं तैः[3] साधितं कर्म वानरैः । दृष्टा देवी न संदेहो न चान्येन हनूमता ॥ १७
न ह्यन्यः साधने हेतुः कर्मणोऽस्य हनूमतः । कार्यसिद्धिर्मतिश्चैव तस्मिन् वानरपुङ्गवे ॥ १८
व्यवसायश्च वीर्यं च श्रुतं चापि प्रतिष्ठितम् । जाम्बवान् यत्र नेता स्यादङ्गदश्च महाबलः ॥ १९
हनूमांश्चाप्यधिष्ठाता न तस्य गतिरन्यथा । अङ्गदप्रमुखैर्वीरैर्हतं मधुवनं किल[4] ॥ २०
वारयन्तश्च सहितास्तथा जानुभिराहताः । एतदर्थमयं प्राप्तो वक्तुं मधुरवागिह ॥ २१
नाम्ना दधिमुखो नाम हरिः प्रख्यातविक्रमः । दृष्टा सीता महाबाहो सौमित्रे पश्य तत्त्वतः ॥ २२
अभिगम्य तथा सर्वे पिबन्ति मधु वानराः । न चाप्यदृष्ट्वा वैदेहीं विश्रुताः पुरुषर्षभ ॥ २३
वनं दत्तवरं दिव्यं धर्षयेयुर्वनौकसः । ततः प्रहृष्टो धर्मात्मा लक्ष्मणः सहराघवः ॥ २४
श्रुत्वा कर्णसुखां वाणीं सुग्रीववदनाच्च्युताम् । प्राहृष्यत भृशं रामो लक्ष्मणश्च महाबलः ॥ २५
श्रुत्वा दधिमुखस्येदं सुग्रीवस्तु प्रहृष्य च । वनपालं पुनर्वाक्यं सुग्रीवः प्रत्यभाषत ॥ २६
प्रीतोऽस्मि सोऽहं यद्भुक्तं वनं तैः कृतकर्मभिः । मर्षितं मर्षणीयं च चेष्टितं कृतकर्मणाम् ॥ २७

इच्छामि शीघ्रं हनुमत्प्रधानाञ्छाखामृगांस्तान् मृगराजदर्पान् ।
द्रष्टुं कृतार्थान् सह राघवाभ्यां श्रोतुं च सीताधिगमे प्रयत्नम् ॥ २८

प्रीतिस्फीताक्षौ संप्रहृष्टौ कुमारौ दृष्ट्वा सिद्धार्थौ वानराणां च राजा ।
अङ्गैः संहृष्टैः कर्मसिद्धिं विदित्वा बाह्वोरासन्नां सोऽतिमात्रं ननन्द ॥ २९

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
सुन्दरकाण्डे सुग्रीवहर्षो नाम त्रिषष्टितमः सर्गः

---

१. किमयं वनपो राजन् भवन्तम् छ.
२. इदं पद्यम् ग. नास्ति ।
३. अभिपन्नास्ते छ.
४. अस्यानन्तरम्—विचित्य दक्षिणामाशामागतैर्हरिपुङ्गवैः । आगतैश्चाप्रधृष्यं तद्धतं मधुवनं हि तैः ॥ धर्षितं च वनं कृत्स्नमुपयुक्तं च वानरैः ।—इति ग.

## चतुःषष्टितमः सर्गः

### हनूमदाद्यागमनम्

सुग्रीवेणैवमुक्तस्तु हृष्टो दधिमुखः कपिः । राघवं लक्ष्मणं चैव सुग्रीवं चाभ्यवादयत् ॥ १
स प्रणम्य च सुग्रीवं राघवौ च महाबलौ । वानरैः सहितः[1] शूरैर्दिवमेवोत्पपात ह ॥ २
स यथैवागतः पूर्वं तथैव त्वरितं[2] गतः । निपत्य गगनाद्भूमौ तद्वनं प्रविवेश ह ॥ ३
स प्रविष्टो मधुवनं ददर्श हरियूथपान् । विमदानुत्थितान् सर्वान् मेहमानान् मधूदकम् ॥ ४
स तानुपागमद्वीरो बद्ध्वा करपुटाञ्जलिम् । उवाच वचनं श्लक्ष्णमिदं हृष्टवदङ्गदम् ॥ ५
सौम्य रोषो न कर्तव्यो यदेभिरभिवारितः । अज्ञानाद्रक्षिभिः क्रोधाद्भवन्तः प्रतिषेधिताः ॥ ६
युवराजस्त्वमीशश्च वनस्यास्य महाबल । मौर्ख्यात् पूर्वं कृतो दोषस्तं भवान् क्षन्तुमर्हति ॥ ७
यथैव हि पिता तेऽभूत् पूर्वं हरिगणेश्वरः । तथा त्वमपि सुग्रीवो नान्यस्तु हरिसत्तमे ॥ ८
आख्यातं हि मया गत्वा पितृव्यस्य तवानघ । इहोपयानं सर्वेषामेतेषां वनचारिणाम् ॥ ९
स त्वदागमनं श्रुत्वा सहैभिर्हरियूथपैः । प्रहृष्टो न तु रुष्टोऽसौ वनं श्रुत्वा प्रधर्षितम् ॥ १०
प्रहृष्टो मां पितृव्यस्ते सुग्रीवो वानरेश्वरः । शीघ्रं प्रेषय सर्वांस्तानिति होवाच पार्थिवः ॥ ११
श्रुत्वा दधिमुखस्यैतद्वचनं श्लक्ष्णमङ्गदः । अब्रवीत्तान् हरिश्रेष्ठो वाक्यं वाक्यविशारदः ॥ १२
शङ्के श्रुतोऽयं वृत्तान्तो रामेण हरियूथपाः[3] । तत् क्षमं नेह नः स्थातुं कृते कार्ये परंतपाः ॥ १३
पीत्वा मधु यथाकामं विश्रान्ता वनचारिणः । किं शेषं गमनं तत्र सुग्रीवो यत्र मे गुरुः ॥ १४
सर्वे यथा मां वक्ष्यन्ति समेत्य हरियूथपाः । तथास्मि[4]कर्ता कर्तव्ये भवद्भिः परवानहम् ॥ १५
नाज्ञापयितुमीशोऽहं युवराजोऽस्मि यद्यपि । अयुक्तं कृतकर्माणो यूयं धर्षयितुं मया ॥ १६
ब्रुवतश्चाङ्गदस्यैवं श्रुत्वा वचनमव्ययम् । प्रहृष्टमनसो वाक्यमिदमूचुर्वनौकसः ॥ १७
एवं वक्ष्यति को राजन् प्रभुः सन् वानरर्षभः । ऐश्वर्यमदमत्तो हि सर्वोऽहमिति मन्यते ॥ १८
तव चेदं सुसदृशं वाक्यं नान्यस्य कस्यचित् । संनतिर्हि तवाख्याति भविष्यच्छुभयोग्यताम् ॥ १९
सर्वे वयमपि प्राप्तास्तत्र गन्तुं कृतक्षणाः । स यत्र हरिवीराणां सुग्रीवः पतिरव्ययः ॥ २०
त्वया ह्यनुक्तैर्हरिभिर्नैव शक्यं पदात् पदम् । क्वचिद्गन्तुं हरिश्रेष्ठ ब्रूमः सत्यमिदं तु ते ॥ २१
एवं तु वदतां तेषामङ्गदः प्रत्यभाषत । बाढं गच्छाम इत्युक्त्वा उत्पपात महीतलात् ॥ २२
उत्पतन्तमनूत्पेतुः सर्वे ते हरियूथपाः । कृत्वाकाशं निराकाशं यन्त्रोत्क्षिप्ता इवाचलाः ॥ २३
तेऽम्बरं सहसोत्पत्य वेगवन्तः प्लवङ्गमाः । विनदन्तो महानादं घना वातेरिता यथा ॥ २४

---

१. सहितैः च.
सह तैः छ.
२. त्वरितः छ.
३. इदं पद्यम् च. छ. नास्ति ।
४. अस्यानन्तरम्—अयं च हर्षादाख्याति तेन जानामि हेतुना—इति पुना.

अङ्गदे ह्यननुप्राप्ते सुग्रीवो वानराधिपः । उवाच शोकोपहतं रामं कमललोचनम् ॥ २५
समाश्वसिहि भद्रं ते दृष्टा देवी न संशयः । नागन्तुमिह शक्यं तैरतीते समये हि नः[1] ॥ २६
न मत्सकाशमागच्छेत् कृत्ये हि विनिपातिते । युवराजो महाबाहुः प्लवतां प्रवरोऽङ्गदः ॥ २७
यद्यप्यकृतकृत्यानामीदृशः स्यादुपक्रमः । भवेत् स दीनवदनो भ्रान्तविप्लुतमानसः ॥ २८
पितृपैतामहं चैतत् पूर्वकैरभिरक्षितम् । न मे मधुवनं हन्यादहृष्टः प्लवगेश्वरः ॥ २९
कौसल्या सुप्रजा राम समाश्वसिहि सुव्रत । दृष्टा देवी न संदेहो न चान्येन हनूमता ॥ ३०
न ह्यन्यः कर्मणो हेतुः साधनेऽस्य हनूमतः । हनूमति हि सिद्धिश्च मतिश्च मतिसत्तम ॥ ३१
व्यवसायश्च वीर्यं च सूर्ये तेज इव ध्रुवम् । जाम्बवान् यत्र नेता स्यादङ्गदश्च बलेश्वरः ॥ ३२
हनुमांश्चाप्यधिष्ठाता न तस्य गतिरन्यथा । मा भूश्चिन्तासमायुक्तः संप्रत्यमितविक्रम[2] ॥ ३३
ततः किलकिलाशब्दं शुश्रावासन्नमम्बरे । हनुमत्कर्मदृप्तानां नर्दतां काननौकसाम् ॥ ३४
किष्किन्धामुपयातानां सिद्धिं कथयतामिव । ततः श्रुत्वा निनादं तं कपीनां कपिसत्तमः ॥ ३५
आयताञ्चितलाङ्गूलः सोऽभवद्धृष्टमानसः । आजग्मुस्तेऽपि हरयो रामदर्शनकाङ्क्षिणः ॥ ३६
अङ्गदं पुरतः कृत्वा हनूमन्तं च वानरम् । तेऽङ्गदप्रमुखा वीराः प्रहृष्टाश्च मुदान्विताः ॥ ३७
निपेतुर्हरिराजस्य समीपे राघवस्य च । हनुमांश्च महाबाहुः प्रणम्य शिरसा ततः ॥ ३८
नियतामक्षतां देवीं राघवाय न्यवेदयत् । निश्चितार्थस्ततस्तस्मिन् सुग्रीवः पवनात्मजे ॥ ३९
लक्ष्मणः प्रीतिमान् प्रीतं बहुमानादवैक्षत । प्रीत्या च रममाणोऽथ राघवः परवीरहा ॥ ४०
बहुमानेन महता हनुमन्तमवैक्षत ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
सुन्दरकाण्डे हनुमदाद्यागमनं नाम चतुःषष्टितमः सर्गः

---

## पञ्चषष्टितमः सर्गः

### चूडामणिप्रदानम्

ततः प्रस्रवणं शैलं ते गत्वा चित्रकाननम् । प्रणम्य शिरसा रामं लक्ष्मणं च महाबलम् १
युवराजं पुरस्कृत्य सुग्रीवमभिवाद्य च । प्रवृत्तिमथ सीतायाः प्रवक्तुमुपचक्रमुः ॥ २
रावणान्तःपुरे रोधं राक्षसीभिश्च तर्जनम् । रामे समनुरागं च यश्चायं समयः कृतः ॥ ३
एतदाख्यान्ति ते सर्वे हरयो रामसंनिधौ । वैदेहीमक्षतां श्रुत्वा रामस्तूत्तरमब्रवीत् ॥ ४

---

१. अस्यानन्तरम्—अङ्गदस्य प्रहर्षाच्च जानामि संगताः काननौकसः । नैषामकृतकार्याणामीदृशः स्यादुपक्रमः ॥ वनभङ्गेन जानामि मधूनां भक्षणेन शुभदर्शन—इति पुना.

२. अस्यानन्तरम्—यदा हि दर्पितोदग्राः च ।—इति पुना.

क्व सीता वर्तते देवी कथं च मयि वर्तते । एतन्मे सर्वमाख्यात वैदेहीं प्रति वानराः ॥ ५
रामस्य गदितं श्रुत्वा हरयो रामसंनिधौ । चोदयन्ति हनूमन्तं सीतावृत्तान्तकोविदम् ॥ ६
श्रुत्वा ते वचनं तेषां हनुमान् मारुतात्मजः । प्रणम्य शिरसा देव्यै सीतायै तां दिशं प्रति ॥ ७
उवाच वाक्यं वाक्यज्ञः सीताया दर्शनं यथा[1] । समुद्रं लङ्घयित्वाहं शतयोजनमायतम् ॥ ८
अगच्छं जानकीं सीतां मार्गमाणो दिदृक्षया । तत्र लङ्केति नगरी रावणस्य दुरात्मनः ॥ ९
दक्षिणस्य समुद्रस्य तीरे वसति दक्षिणे । तत्र सीता मया दृष्टा रावणान्तःपुरे सती ॥ १०
संन्यस्य त्वयि जीवन्ती राम राम मनोरथम् । दृष्टा मे राक्षसीमध्ये तर्ज्यमाना मुहुर्मुहुः ॥ ११
राक्षसीभिर्विरूपाभी रक्षिता प्रमदावने । दुःखमापद्यते देवी तवादुःखोचिता सती ॥ १२
रावणान्तःपुरे रुद्धा राक्षसीभिः सुरक्षिता । एकवेणीधरा दीना त्वयि चिन्तापरायणा ॥ १३
अधःशय्या विवर्णाङ्गी पद्मिनीव हिमागमे । रावणाद्विनिवृत्तार्था मर्तव्यकृतनिश्चया ॥ १४
देवी कथंचित् काकुत्स्थ त्वन्मना मार्गिता मया । इक्ष्वाकुवंशविख्यातिं शनैः कीर्तयतानघ ॥ १५
सा मया नरशार्दूल विश्वासमुपपादिता । ततः संभाषिता देवी सर्वमर्थं च दर्शिता ॥ १६
रामसुग्रीवसख्यं च श्रुत्वा प्रीतिमुपागता । नियतः समुदाचारो भक्तिश्चास्यास्तथा त्वयि ॥ १७
एवं मया महाभागा दृष्टा जनकनन्दिनी । उग्रेण तपसा युक्ता त्वद्भक्त्या पुरुषर्षभ ॥ १८
अभिज्ञानं च मे दत्तं यथावृत्तं तवान्तिके । चित्रकूटे महाप्राज्ञ वायसं प्रति राघव ॥ १९
विज्ञाप्यश्च नरव्याघ्रो रामो वायुसुत त्वया । अखिलेनेह यद्दृष्टमिति मामाह जानकी ॥ २०
अयं चास्मै प्रदातव्यो यत्नात् सुपरिरक्षितः । ब्रुवता वचनान्येवं सुग्रीवस्योपशृण्वतः ॥ २१
एष चूडामणिः श्रीमान् मया सुपरिरक्षितः । मनःशिलायास्तिलको गण्डपार्श्वे निवेशितः ॥ २२
त्वया प्रनष्टे तिलके तं किल स्मर्तुमर्हसि । एष निर्यातितः श्रीमान् मया ते वारिसंभवः ॥ २३
एवं दृष्ट्वा प्रमोदिष्ये व्यसने त्वामिवानघ । जीवितं धारयिष्यामि मासं दशरथात्मज ॥ २४
ऊर्ध्वं मासान्न जीवेयं रक्षसां वशमागता । इति मामब्रवीत् सीता कृशाङ्गी वरवर्णिनी[2] ॥ २५
रावणान्तःपुरे रुद्धा मृगीवोत्फुल्ललोचना । एतदेव मयाख्यातं सर्वं राघव यद्यथा ॥ २६
सर्वथा सागरजले संतारः प्रविधीयताम् ॥

तौ जाताश्वासौ राजपुत्रौ विदित्वा तच्चाभिज्ञानं राघवाय प्रदाय ।
देव्या चाख्यातं सर्वमेवानुपूर्व्याद्वाचा संपूर्णं वायुपुत्रः शशंस ॥ २७

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
सुन्दरकाण्डे चूडामणिप्रदानं नाम पञ्चषष्टितमः सर्गः

---

१. अस्यानन्तरम्—तं मणिं काञ्चनं दिव्यं प्राञ्जलिरब्रवीत् ॥—इति पुना. दीप्यमानं स्वतेजसा । दत्त्वा रामाय हनुमांस्ततः  २. धर्मचारिणी च.

## षट्षष्टितमः सर्गः

### सीताभाषितप्रश्नः

एवमुक्तो हनुमता रामो दशरथात्मजः । तं मणिं हृदये कृत्वा प्ररुरोद सलक्ष्मणः ॥ १
तं तु दृष्ट्वा मणिश्रेष्ठं राघवः शोककर्शितः । नेत्राभ्यामश्रुपूर्णाभ्यां सुग्रीवमिदमब्रवीत् ॥ २
यथैव धेनुः स्रवति स्नेहाद्वत्सस्य वत्सला । तथा ममापि हृदयं मणिरत्नस्य दर्शनात् ॥ ३
मणिरत्नमिदं दत्तं वैदेह्याः श्वशुरेण मे । वधूकाले यथाबद्धमधिकं मूर्ध्नि शोभते ॥ ४
अयं हि जलसंभूतो मणिः सज्जनपूजितः । यज्ञे परमतुष्टेन दत्तः शक्रेण धीमता ॥ ५
इमं दृष्ट्वा मणिश्रेष्ठं यथा तातस्य दर्शनम् । अद्यास्म्यवगतः सौम्य वैदेहस्य तथा विभोः ॥ ६
अयं हि शोभते तस्याः प्रियाया मूर्ध्नि मे मणिः । अद्यास्य दर्शनेनाहं प्राप्तां तामिव चिन्तये ॥ ७
किमाह सीता वैदेही ब्रूहि सौम्य पुनः पुनः । पिपासुमिव[1] तोयेन सिञ्चन्ती वाक्यवारिणा ॥ ८
इतस्तु किं दुःखतरं यदिमं वारिसंभवम् । मणिं पश्यामि सौमित्रे वैदेहीमागतं[2] विना ॥ ९
चिरं जीवति वैदेही यदि मासं धरिष्यति । न जीवेयं क्षणमपि विना तामसितेक्षणाम् ॥ १०
नय मामपि तं देशं यत्र दृष्टा मम प्रिया । न तिष्ठेयं क्षणमपि प्रवृत्तिमुपलभ्य च ॥ ११
कथं सा मम सुश्रोणी भीरुभीरुः सती सदा । भयावहानां घोराणां मध्ये तिष्ठति रक्षसाम् ॥ १२
शारदस्तिमिरोन्मुक्तो नूनं चन्द्र इवाम्बुदैः । आवृतं वदनं तस्या न विराजति राक्षसैः ॥ १३
किमाह सीता हनुमंस्तत्त्वतः कथयाद्य मे । एतेन खलु जीविष्ये भेषजेनातुरो यथा ॥ १४
मधुरा मधुरालापा किमाह मम भामिनी । मद्विहीना वरारोहा हनुमन् कथयस्व मे ॥ १५

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायां सुन्दरकाण्डे सीताभाषितप्रश्नो नाम षट्षष्टितमः सर्गः

---

## सप्तषष्टितमः सर्गः

### सीताभाषितानुवचनम

एवमुक्तस्तु हनुमान् राघवेण महात्मना । सीताया भाषितं सर्वं न्यवेदयत राघवे ॥ १
इदमुक्तवती देवी जानकी पुरुषर्षभ । पूर्ववृत्तमभिज्ञानं चित्रकूटे यथातथम् ॥ २
सुखसुप्ता त्वया सार्धं जानकी पूर्वमुत्थिता । वायसः सहसोत्पत्य विददार स्तनान्तरे ॥ ३
पर्यायेण च सुप्तस्त्वं देव्यङ्के भरताग्रज । पुनश्च किल पक्षी स देव्या जनयति व्यथाम् ॥ ४
पुनः पुनरुपागम्य विरराद भृशं किल । ततस्त्वं बोधितस्तस्याः शोणितेन समुक्षितः ॥ ५

---

१. परासुमिव ति,　　२. आगताम् छ,

वायसेन च तेनैवं सततं बाध्यमानया । बोधितः किल देव्या त्वं सुखसुप्तः परंतप ॥ ६
तां तु दृष्ट्वा महाबाहो दारितां च स्तनान्तरे । आशीविष इव क्रुद्धो निःश्वसन्नभ्यभाषथाः ॥ ७
नखाग्रैः केन ते भीरु दारितं तु स्तनान्तरम् । कः क्रीडति सरोषेण पञ्चवक्त्रेण भोगिना ॥ ८
निरीक्षमाणः सहसा वायसं समवैक्षथाः । नखैः सरुधिरैस्तीक्ष्णैस्तामेवाभिमुखं स्थितम् ॥ ९
सुतः किल स शक्रस्य वायसः पततां वरः । धरान्तरचरः शीघ्रं पवनस्य गतौ समः ॥ १०
ततस्तस्मिन् महाबाहो कोपसंवर्तितेक्षणः । वायसे त्वं कृथाः क्रूरां मतिं मतिमतां वर ॥ ११
स दर्भं संस्तराद्गृह्य ब्रह्मास्त्रेण ह्ययोजयः । स दीप्त इव कालाग्निर्जज्वालाभिमुखः खगम् ॥ १२
क्षिप्तवांस्त्वं प्रदीप्तं हि दर्भं तं वायसं प्रति । ततस्तु वायसं दीप्तः स दर्भोऽनुजगाम ह ॥ १३
स पित्रा च परित्यक्तः सुरैश्च समहर्षिभिः । त्रीँल्लोकान् संपरिक्रम्य त्रातारं नाधिगच्छति ॥ १४
पुनरेवागतस्त्रस्तस्त्वत्सकाशमरिंदम । स तं निपतितं भूमौ शरण्यः शरणागतम् ॥ १५
वधार्हमपि काकुत्स्थ कृपया पर्यपालयः । मोघमस्त्रं न शक्यं तु कर्तुमित्येव राघव ॥ १६
भवांस्तस्याक्षि काकस्य हिनस्ति स्म स दक्षिणम् । राम त्वां स नमस्कृत्य राज्ञे दशरथाय च ॥
विसृष्टस्तु तदा काकः प्रतिपेदे स्वमालयम् । एवमस्त्रविदां श्रेष्ठः सत्त्ववाञ्शीलवानपि ॥ १८
किमर्थमस्त्रं रक्षःसु न योजयति राघवः । न नागा नापि गन्धर्वा नासुरा न मरुद्गणाः ॥ १९
न च सर्वे रणे शक्ता रामं प्रति समासितुम् । तस्य वीर्यवतः कश्चिद्यद्यस्ति मयि संभ्रमः ॥२०
क्षिप्रं सुनिशितैर्बाणैर्हन्यतां युधि रावणः । भ्रातुरादेशमाज्ञाय लक्ष्मणो वा परंतपः ॥ २१
स किमर्थं नरवरो न मां रक्षति राघवः । शक्तौ तौ पुरुषव्याघ्रौ वाय्वग्निसमतेजसौ ॥ २२
सुराणामपि दुर्धर्षौ किमर्थं मामुपेक्षतः । ममैव दुष्कृतं किंचिन्महदस्ति न संशयः ॥ २३
समर्थावपि तौ[1] यन्मां नावेक्षेते परंतपौ । वैदेह्या वचनं श्रुत्वा करुणं साश्रु भाषितम् ॥ २४
पुनरप्यहमार्यां तामिदं वचनमब्रवम् । त्वच्छोकविमुखो रामो देवि सत्येन ते शपे ॥ २५
रामे दुःखाभिभूते तु लक्ष्मणः परितप्यते । कथंचिद्भवती दृष्टा न कालः परिशोचितुम् ॥ २६
इमं मुहूर्तं[2] दुःखानामन्तं द्रक्ष्यसि भामिनि । तावुभौ नरशार्दूलौ राजपुत्रावनिन्दितौ ॥ २७
त्वद्दर्शनकृतोत्साहौ लङ्कां भस्मीकरिष्यतः । हत्वा च समरे रौद्रं रावणं सहबान्धवम् ॥ २८
राघवस्त्वां वरारोहे स्वां पुरीं नयिता ध्रुवम् । यत्तु रामो विजानीयादभिज्ञानमनिन्दिते ॥ २९
प्रीतिसंजननं तस्य प्रदातुं त्वमिहार्हसि । साभिवीक्ष्य दिशः सर्वा वेण्युद्ग्रथनमुत्तमम् ॥ ३०
मुक्त्वा वस्त्राद्ददौ मह्यं मणिमेतं महाबल । प्रतिगृह्य मणिं दिव्यं तव हेतो रघूद्वह ॥ ३१
शिरसा तां प्रणम्यार्यामहमागमने त्वरे । गमने च कृतोत्साहमवेक्ष्य वरवर्णिनी ॥ ३२
विवर्धमानं च हि मामुवाच जनकात्मजा । अश्रुपूर्णमुखी दीना बाष्पसंदिग्धभाषिणी ॥ ३३

---

१. सहितौ च. २. अस्मिन् मुहूर्ते ख. छ.

ममोत्पतनसंभ्रान्ता शोकवेगसमाहता[1] । हनुमन् सिंहसंकाशौ तावुभौ रामलक्ष्मणौ ॥ ३४
सुग्रीवं च सहामात्यं सर्वान् ब्रूया ह्यनामयम् । मामुवाच ततः सीता सभाग्योऽसि महाकपे ॥ ३५
यद्द्रक्ष्यसि महाबाहुं रामं कमललोचनम् । लक्ष्मणं च महाबाहुं देवरं मे यशस्विनम् ॥ ३६
सीतयाप्येवमुक्तोऽहमब्रवं मैथिलीं तथा । पृष्ठमारोह मे देवि क्षिप्रं जनकनन्दिनि ॥ ३७
यावत्ते दर्शयाम्यद्य ससुग्रीवं सलक्ष्मणम् । राघवं च महाभागे भर्तारमसितेक्षणे ॥ ३८
साब्रवीन्मां ततो देवी नैष धर्मो महाकपे । यत्ते पृष्ठं सिषेवेऽहं स्ववशा हरिपुङ्गव ॥ ३९
पुरा च यदहं वीर स्पृष्टा गात्रेषु रक्षसा । तत्राहं किं करिष्यामि कालेनोपनिपीडिता ॥ ४०
गच्छ त्वं कपिशार्दूल यत्र तौ नृपतेः सुतौ । इत्येवं सा समाभाष्य भूयः संदेष्टुमास्थिता[2] ॥४१
यथा च स महाबाहुर्मां तारयति राघवः । अस्माद्दुःखाम्बुसंरोधात्त्वं समाधातुमर्हसि ॥ ४२

इमं च तीव्रं मम शोकवेगं रक्षोभिरेभिः परिभर्त्सनं च ।
ब्रूयास्तु रामस्य गतः समीपं शिवश्च तेऽध्वास्तु हरिप्रवीर ॥ ४३

एतत्तवार्यो नृपराजसिंह सीता वचः प्राह विषादपूर्वम् ।
एतच्च बुद्ध्वा गदितं मया त्वं श्रद्धत्स्व सीतां कुशलां समग्राम् ॥ ४४

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम
सुन्दरकाण्डे सीताभाषितानुवचनं नाम सप्तषष्टितमः सर्गः

---

## अष्टषष्टितमः सर्गः

### हनूमत्समाश्वासवचनानुवादः

अथाहमुत्तरं देव्या पुनरुक्तः ससंभ्रमः । तव स्नेहान्नरव्याघ्र सौहार्दादनुमान्य वै ॥ १
एवं बहुविधं वाच्यो रामो दाशरथिस्त्वया । यथा मामाप्नुयाच्छीघ्रं हत्वा रावणमाहवे ॥ २
यदि वा मन्यसे वीर वसैकाहमरिंदम । कस्मिंश्चित् संवृते देशे विश्रान्तः श्वो गमिष्यसि ॥ ३
मम चाप्यल्पभाग्यायाः सांनिध्यात्तव वानर । अस्य शोकविपाकस्य मुहूर्तं स्याद्विमोक्षणम् ॥ ४
गते हि त्वयि विक्रान्ते पुनरागमनाय वै । प्राणानामपि संदेहो मम स्यान्नात्र संशयः ॥ ५
तवादर्शनजः शोको भूयो मां परितापयेत् । दुःखाद्दुःखपराभूतां दुर्गतां दुःखभागिनीम् ॥ ६
अयं च वीर संदेहस्तिष्ठतीव ममाग्रतः । सुमहांस्त्वत्सहायेषु हर्यृक्षेषु हरीश्वर ॥ ७
कथं नु खलु दुष्पारं तरिष्यन्ति महोदधिम् । तानि हर्यृक्षसैन्यानि तौ वा नरवरात्मजौ ॥ ८

---

१. शोकवेगवशंगता छ. २. मामुवाचेत्यादि आश्विसेत्यन्तम् च. छ. झ. ञ. नास्ति ।

त्रयाणामेव भूतानां सागरस्यास्य लङ्घने । शक्तिः स्याद्वैनतेयस्य वायोर्वा तव वानघ[1] ॥ ९
तदस्मिन् कार्यनिर्योगे वीरैवं दुरतिक्रमे । किं पश्यसि समाधानं त्वं हि कार्यविदां वरः ॥ १०
काममस्य त्वमेवैकः कार्यस्य परिसाधने । पर्याप्तः परवीरघ्न यशस्यस्ते बलोदयः ॥ ११
बलैः समग्रैर्यदि मां हत्वा रावणमाहवे । विजयी स्वां पुरीं रामो नयेत्तत् स्याद्यशस्करम् ॥ १२
यथाहं तस्य वीरस्य वनादुपधिना हृता । रक्षसा तद्भयादेव तथा नार्हति राघवः ॥ १३
बलैस्तु संकुलां कृत्वा लङ्कां परबलार्दनः । मां नयेद्यदि काकुत्स्थस्तत्तस्य सदृशं भवेत् ॥ १४
तद्यथा तस्य विक्रान्तमनुरूपं महात्मनः । भवत्याहवशूरस्य तथा त्वमुपपादय ॥ १५
तदर्थोपहितं वाक्यं प्रश्रितं हेतुसंहितम् । निशम्याहं ततः शेषं वाक्यमुत्तरमब्रवम् ॥ १६
देवि हर्यृक्षसैन्यानामीश्वरः प्लवतां वरः[2] । सुग्रीवः सत्त्वसंपन्नस्तवार्थे कृतनिश्चयः ॥ १७
तस्य विक्रमसंपन्नाः सत्त्ववन्तो महाबलाः । मनःसंकल्पसंपाता निदेशे हरयः स्थिताः ॥ १८
येषां नोपरि नाधस्तान्न तिर्यक् सज्जते गतिः । न च कर्मसु सीदन्ति महत्स्वमिततेजसः ॥ १९
असकृत्तैर्महाभागैर्वानरैर्बलदर्पितैः[3] । प्रदक्षिणीकृता भूमिर्वायुमार्गानुसारिभिः ॥ २०
मद्विशिष्टाश्च तुल्याश्च सन्ति तत्र वनौकसः । मत्तः प्रत्यवरः कश्चिन्नास्ति सुग्रीवसंनिधौ ॥ २१
अहं तावदिह प्राप्तः किं पुनस्ते महाबलाः । न हि प्रकृष्टाः प्रेष्यन्ते प्रेष्यन्ते हीतरे जनाः ॥ २२
तदलं परितापेन देवि मन्युर्व्यपैतु ते । एकोत्पातेन ते लङ्कामेष्यन्ति हरियूथपाः ॥ २३
मम पृष्ठगतौ तौ च चन्द्रसूर्याविवोदितौ । त्वत्सकाशं महाभागे नृसिंहावागमिष्यतः ॥ २४
अरिघ्नं सिंहसंकाशं क्षिप्रं द्रक्ष्यसि राघवम् । लक्ष्मणं च धनुष्पाणिं लङ्काद्वारमुपस्थितम् ॥ २५
नखदंष्ट्रायुधान् वीरान् सिंहशार्दूलविक्रमान् । वानरान् वारणेन्द्राभान् क्षिप्रं द्रक्ष्यसि संगतान् ॥ २६
शैलाम्बुदनिकाशानां लङ्कामलयसानुषु । नर्दतां कपिमुख्यानामचिराच्छ्रोष्यसि स्वनम् ॥ २७
निवृत्तवनवासं च त्वया सार्धमरिंदमम् । अभिषिक्तमयोध्यायां क्षिप्रं द्रक्ष्यसि राघवम् ॥ २८

ततो मया वाग्भिरदीनभाषिणा शिवाभिरिष्टाभिरभिप्रसादिता ।
जगाम शान्तिं मम मैथिलात्मजा तवापि शोकेन तदाभिपीडिता ॥ २९

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
सुन्दरकाण्डे हनूमत्समाश्वासवचनानुवादो नाम अष्टषष्टितमः सर्गः ।

---

श्रीमद्वाल्मीकिरामायणे सुन्दरकाण्डः संपूर्णः

---

१. तव वा मारुतस्य वा च.   २. वर च.   ३. -संयुतैः च.

॥ श्रीः ॥

# ॥ श्रीमद्वाल्मीकिरामायणम् ॥

## ॥ अथ युद्धकाण्डः ॥

### प्रथमः सर्गः

हनूमत्प्रशंसनम्

श्रुत्वा हनुमतो वाक्यं यथावदभिभाषितम् । रामः प्रीतिसमायुक्तो वाक्यमुत्तरमब्रवीत् ॥ १
कृतं हनुमता कार्यं सुमहद्भुवि दुष्करम् । मनसापि यदन्येन न शक्यं धरणीतले ॥ २
न हि तं परिपश्यामि यस्तरेत महोदधिम् । अन्यत्र गरुडाद्वायोरन्यत्र च हनूमतः ॥ ३
देवदानवयक्षाणां गन्धर्वोरगरक्षसाम् । [1]अप्रधृष्यां पुरीं लङ्कां रावणेन सुरक्षिताम् ॥ ४
[1]यो वीर्यबलसंपन्नो द्विषद्भिरनिवारितः । प्रविष्टः सत्त्वमाश्रित्य श्वसन् को नाम निष्क्रमेत् ॥५
को विशेत्सुदुराधर्षां राक्षसैश्च सुरक्षिताम् । यो वीर्यबलसंपन्नो न समः स्याद्धनूमतः ॥ ६
भृत्यकार्यं हनुमता सुग्रीवस्य कृतं महत् । एवं विधाय स्वबलं सदृशं विक्रमस्य च ॥ ७
यो हि भृत्यो नियुक्तः सन् भर्त्रा कर्मणि दुष्करे । कुर्यात्तदनुरागेण तमाहुः पुरुषोत्तमम् ॥ ८
भृत्यस्तु यः परं कार्यं न कुर्यान्नृपतेः प्रियम् । भृत्यो युक्तः समर्थश्च तमाहुर्मध्यमं नरम् ॥ ९
नियुक्तो नृपतेः कार्यं न कुर्याद्यः समाहितः । भृत्यो युक्तः समर्थश्च तमाहुः पुरुषाधमम् ॥१०
तन्नियोगे नियुक्तेन कृतं कृत्यं हनूमता । न चात्मा लघुतां नीतः सुग्रीवश्चापि तोषितः ॥ ११
अहं च रघुवंशश्च लक्ष्मणश्च महाबलः । वैदेह्या दर्शनेनाद्य धर्मतः परिरक्षिताः ॥ १२
इदं तु मम दीनस्य मनो भूयः प्रकर्षति । यदिहास्य प्रियाख्यातुर्न कुर्मि सदृशं प्रियम् ॥ १३
एष सर्वस्वभूतस्तु परिष्वङ्गो हनूमतः । मया कालमिमं प्राप्य [2]दत्तश्चास्तु महात्मनः ॥ १४
इत्युक्त्वा प्रीतिहृष्टाङ्गो रामस्तं परिषस्वजे । हनूमन्तं महात्मानं कृतकार्यमुपागतम् ॥ १५
ध्यात्वा पुनरुवाचेदं वचनं रघुसत्तमः । हरीणामीश्वरस्यैव सुग्रीवस्योपशृण्वतः ॥ १६
सर्वथा सुकृतं तावत्सीतायाः परिमार्गणम् । सागरं तु समासाद्य भूयो नष्टं मनो मम ॥ १७
कथं नाम समुद्रस्य दुष्पारस्य महाम्भसः । हरयो दक्षिणं पारं गमिष्यन्ति समाहिताः ॥ १८
यद्यप्येष तु वृत्तान्तो वैदेह्या गदितो मम । समुद्रपारगमने हरीणां किमिवोत्तरम् ॥ १९
इत्युक्त्वा शोकसंभ्रान्तो रामः शत्रुनिबर्हणः । हनुमन्तं महाबाहुस्ततो ध्यानमुपागमत् ॥ २०

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
युद्धकाण्डे हनूमत्प्रशंसनं नाम प्रथमः सर्गः

१. अर्धमिदं घ. नास्ति. २. दत्तस्तस्य.

## द्वितीयः सर्गः

### रामप्रोत्साहनम्

तं तु शोकपरिद्यूनं रामं दशरथात्मजम्। उवाच वचनं श्रीमान् सुग्रीवः शोकनाशनम् ॥ १
किं त्वं संतप्यसे वीर यथान्यः प्राकृतस्तथा। मैवं भूस्त्यज संतापं कृतघ्न इव सौहृदम् ॥ २
संतापस्य च ते स्थानं न हि पश्यामि राघव। प्रवृत्तावुपलब्धायां ज्ञाते च निलये रिपोः ॥ ३
मतिमाञ्शास्त्रवित्प्राज्ञः पण्डितश्चासि राघव। त्यजेमां [1]प्राकृतां बुद्धिं कृतात्मेवात्म[2]दूषणीम् ॥ ४
समुद्रं लङ्घयित्वा तु महानक्रसमाकुलम्। लङ्कामारोहयिष्यामो हनिष्यामश्च रावणम्[3] ॥ ५
निरुत्साहस्य दीनस्य शोकपर्याकुलात्मनः। सर्वार्था व्यवसीदन्ति व्यसनं चाधिगच्छति ॥ ६
इमे शूराः समर्थाश्च सर्वे नो हरियूथपाः। त्वत्प्रियार्थं कृतोत्साहाः प्रवेष्टुमपि पावकम् ॥ ७
एषां हर्षेण जानामि तर्कश्चास्ति दृढो मम। विक्रमेण समानेष्ये सीतां हत्वा यथा रिपुम् ॥ ८
रावणं पापकर्माणं तथा त्वं कर्तुमर्हसि। सेतुमत्र यथा बद्ध्वा[4] यथा पश्याम तां पुरीम् ॥ ९
तस्य राक्षसराजस्य तथा त्वं कुरु राघव। तां दृष्ट्वा तु पुरीं लङ्कां त्रिकूटशिखरे स्थिताम् ॥ १०
हतं च रावणं युद्धे दर्शनादुपधारय। अबद्ध्वा सागरे सेतुं घोरे तु वरुणालये ॥ ११
लङ्का नो मर्दितुं शक्या सेन्द्रैरपि सुरासुरैः। सेतुर्बद्धः[5] समुद्रे च यावल्लङ्कासमीपतः ॥ १२
सर्वं तीर्णं च मे सैन्यं जितमित्युपधारय[6]। इमे हि समरे शूरा हरयः कामरूपिणः[7] ॥ १३
तदलं विक्लवा बुद्धी राजन् सर्वार्थनाशिनी। पुरुषस्य हि लोकेऽस्मिञ्शोकः शौर्यापकर्षणः ॥ १४
तत्तु[8] कार्यं मनुष्येण शौण्डीर्यमवलम्बता। तदलंकरणायैव कर्तुर्भवति सत्वरम्[9] ॥ १५
अस्मिन् काले महाप्राज्ञ सत्त्वमातिष्ठ तेजसा। शूराणां हि मनुष्येण त्वद्विधानां महात्मनाम् ॥
विनष्टे वा प्रनष्टे वा क्षमं न ह्यनुशोचितुम्[10]। त्वं तु बुद्धिमतां श्रेष्ठः सर्वशास्त्रार्थकोविदः ॥ १७
मद्विधैः सचिवैः सार्धमरिं जेतुमिहार्हसि। न हि पश्याम्यहं कंचित्त्रिषु लोकेषु राघव ॥ १८
गृहीतधनुषो यस्ते तिष्ठेदभिमुखो रणे। वानरेषु समासक्तं न ते कार्यं विपत्स्यते ॥ १९
अचिराद्द्रक्ष्यसे सीतां तीर्त्वा सागरमक्षयम्। तदलं शोकमालम्ब्य क्रोधमालम्ब भूपते ॥ २०
निश्चेष्टाः क्षत्रिया मन्दाः सर्वे चण्डस्य बिभ्यति। लङ्घनार्थं च घोरस्य समुद्रस्य नदीपतेः ॥ २१
सहास्माभिरिहोपेतः सूक्ष्मबुद्धिर्विचारय। सर्वं तीर्णं च मे सैन्यं जितमित्युपधारय ॥ २२

---

१. पापिकाम् च. छ.।
२. र्थदूषणीम् इति पाठ भेदः।
३. तं रिपुम् च.।
४. बध्येत् च.।
५. सेतुबन्धः पुना.।
६. उपधार्यताम् ग. छ.।
७. अस्यानन्तरम्—तानरीन् विधमिष्यन्ति शिलापादपवृष्टिभिः—इति च.। शक्ता लङ्कां समानेतुं समुत्पाट्य सराक्षसाम्—इति छ.।
८. यत्तु च.।
९. इदमर्धम् च. छ. नास्ति।
१०. शोकः सर्वार्थनाशनः च.।

इमे हि समरे शूरा हरयः कामरूपिणः । तानरीन् विधमिष्यन्ति शिलापादपवृष्टिभिः ॥ २३
कथंचित् परिपश्यामि लङ्घितं[1] वरुणालयम् । हतमित्येव तं मन्ये युद्धे समितिनन्दन ॥ २४
किमुक्त्वा बहुधा चापि सर्वथा विजयी भवान् । निमित्तानि च पश्यामि मनो मे संप्रहृष्यति ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
युद्धकाण्डे रामप्रोत्साहनं नाम द्वितीयः सर्गः

---

## तृतीयः सर्गः

### लङ्कादुर्गादिकथनम्

सुग्रीवस्य वचः श्रुत्वा हेतुमत्परमार्थवित् । प्रतिजग्राह काकुत्स्थो हनुमन्तमथाब्रवीत् ॥ १
तपसा सेतुबन्धेन सागरोच्छोषणेन वा । सर्वथापि समर्थोऽस्मि[2] सागरस्यास्य लङ्घने ॥ २
कति दुर्गाणि दुर्गाया लङ्काया ब्रूहि तानि मे । ज्ञातुमिच्छामि तत्सर्वं दर्शनादिव वानर ॥ ३
बलस्य परिमाणं च द्वारदुर्गक्रियामपि । गुप्तिकर्म च लङ्काया रक्षसां सदनानि च ॥ ४
यथासुखं यथावच्च लङ्कायामसि दृष्टवान् । सर्वमाचक्ष्व तत्त्वेन सर्वथा कुशलो ह्यसि ॥ ५
श्रुत्वा रामस्य वचनं हनूमान् मारुतात्मजः । वाक्यं वाक्यविदां श्रेष्ठो रामं पुनरथाब्रवीत् ॥ ६
श्रूयतां सर्वमाख्यास्ये दुर्गकर्मविधानतः । गुप्ता पुरी यथा लङ्का रक्षिता च यथा बलैः ॥ ७
राक्षसाश्च यथा स्निग्धा रावणस्य च तेजसा । परां समृद्धिं लङ्कायाः सागरस्य च भीमताम् ॥ ८
विभागं च बलौघस्य निर्देशं वाहनस्य च । एवमुक्त्वा हरिश्रेष्ठः कथयामास तत्त्वतः ॥ ९
हृष्टा प्रमुदिता लङ्का मत्तद्विपसमाकुला । महती रथसंपूर्णा रक्षोगणसमाकुला ॥ १०
वाजिभिश्च सुसंपूर्णा सा पुरी दुर्गमा परैः । दृढबद्धकवाटानि महापरिघवन्ति च ॥ ११
चत्वारि विपुलान्यस्या द्वाराणि सुमहान्ति च । [3]तत्रेषूपलयन्त्राणि बलवन्ति महान्ति च ॥ १२
आगतं प्रतिसैन्यं तैस्तत्र प्रतिनिवार्यते[4] । द्वारेषु संस्कृता भीमाः कालायसमयाः शिताः ॥ १३
शतशो रचिता वीरैः शतघ्न्यो रक्षसां गणैः । सौवर्णश्च महांस्तस्याः प्राकारो दुष्प्रधर्षणः[5] ॥ १४
मणिविद्रुमवैदूर्यमुक्ताविरचितान्तरः । सर्वतश्च महाभीमाः शीततोयवहाः शुभाः ॥ १५
अगाधा ग्राहवत्यश्च परिघा मीनसेविताः । द्वारेषु तासां चत्वारः संक्रमाः परमायताः ॥ १६
यन्त्रैरुपेता बहुभिर्महद्भिर्गृहपङ्क्तिभिः । त्रायन्ते संक्रमास्तत्र परसैन्यागमे सति ॥ १७

१. संतरिष्यामस्ते वयम् च.
संतरिष्यामस्तं वयम् छ. ।
२. सर्वथा सुसमर्थोऽस्मि च. छ. ।
३. वप्रेषूपल. छ. ।
४. आगतं परसैन्यं तु तत्र तैः प्रतिहन्यते च. ।
५. द्वारेषु इत्यादि दुष्प्रधर्षण इत्यन्तम् क. नास्ति ।

यन्त्रैस्तैरवकीर्यन्ते परिघासु समन्ततः। एकस्त्वकम्प्यो बलवान् संक्रमः सुमहान् दृढः ॥ १८
काञ्चनैर्बहुभिः स्तम्भैर्वेदिकाभिश्च शोभितः। स्वयं प्रकृतिसंपन्नो युयुत्सू राम रावणः ॥ १९
उत्थितश्चाप्रमत्तश्च बलानामनुदर्शने। लङ्का पुनर्निरालम्बा देवदुर्गा भयावहा ॥ २०
नादेयं पार्वतं वान्यं कृत्रिमं च चतुर्विधम्। स्थिता पारे समुद्रस्य दूरपारस्य राघव ॥ २१
नौपथोऽपि च नास्त्यत्र निरादेशश्च सर्वतः। शैलाग्रे रचिता दुर्गा सा पूर्देवपुरोपमा ॥ २२
वाजिवारणसंपूर्णा लङ्का परमदुर्जया। परिघाश्च शतघ्न्यश्च यन्त्राणि विविधानि च ॥ २३
शोभयन्ति पुरीं लङ्कां रावणस्य दुरात्मनः। अयुतं रक्षसामत्र पूर्वद्वारं समाश्रितम् ॥ २४
शूलहस्ता दुराधर्षाः सर्वे खड्गाग्रयोधिनः। नियुतं रक्षसामत्र दक्षिणद्वारमाश्रितम् ॥ २५
चतुरङ्गेण सैन्येन योधास्तत्राप्यनुत्तमाः। प्रयुतं रक्षसामत्र पश्चिमद्वारमाश्रितम् ॥ २६
चर्मखड्गधराः सर्वे तथा सर्वास्त्रकोविदाः। न्यर्बुदं रक्षसामत्र उत्तरद्वारमाश्रितम् ॥ २७
रथिनश्चाश्ववाहाश्च कुलपुत्राः सुपूजिताः। शतशोऽथ सहस्राणि मध्यमं स्कन्धमाश्रिताः ॥ २८
यातुधाना दुराधर्षाः साग्रकोटिश्च रक्षसाम्। ते मया संक्रमा भग्नाः परिखाश्चावपूरिताः ॥ २९
दग्धा च नगरी लङ्का प्राकाराश्चावसादिताः। बलैकदेशः क्षपितो राक्षसानां महात्मनाम् ॥ ३०
येन केन च मार्गेण तराम वरुणालयम्। हतेति नगरी लङ्का वानरैरवधार्यताम् ॥ ३१
अङ्गदो द्विविदो मैन्दो जाम्बवान् पनसो नलः। नीलः सेनापतिश्चैव बलशेषेण किं तव ॥ ३२
प्लवमाना हि गत्वा तां रावणस्य महापुरीम्। सपर्वतवनां भित्त्वा सखातां सप्रतोरणाम् ॥ ३३
सप्राकारां सभवनामानयिष्यन्ति राघव। एवमाज्ञापय क्षिप्रं बलानां सर्वसंग्रहम् ॥ ३४
मुहूर्तेन तु युक्तेन प्रस्थानमभिरोचय ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
युद्धकाण्डे लङ्कादुर्गादिकथनं नाम तृतीयः सर्गः

---

## चतुर्थः सर्गः

### रामाभिषेणनम्

श्रुत्वा हनुमतो वाक्यं यथावदनुपूर्वशः। ततोऽब्रवीन्महातेजा रामः सत्यपराक्रमः ॥ १
यां निवेदयसे लङ्कां पुरीं भीमस्य रक्षसः। क्षिप्रमेनां मथिष्यामि सत्यमेतद्ब्रवीमि ते ॥ २
अस्मिन् मुहूर्ते सुग्रीव प्रयाणमभिरोचये। युक्तो मुहूर्तो विजयः प्राप्तो मध्यं दिवाकरः ॥ ३
अस्मिन् मुहूर्ते विजये प्राप्ते मध्यं दिवाकरे[1]। सीतां हृत्वा तु मे यातु[2] क्वासौ यास्यति यास्यतः ॥

---

१. इदमर्धम् ख. ग. नास्ति। २. जातु च. छ.।

सीता श्रुत्वाभियानं मे आशामेष्यति जीविते। जीवितान्तेऽमृतं स्पृष्ट्वा पीत्वामृतमिवातुरः[1] ॥५
उत्तरा फल्गुनी ह्यद्य श्वस्तु हस्तेन योक्ष्यते। अभिप्रयाम सुग्रीव सर्वानीकसमावृताः ॥ ६
निमित्तानि च धन्यानि[2] यानि प्रादुर्भवन्ति च। निहत्य रावणं सीतामानयिष्यामि जानकीम् ॥ ७
उपरिष्टाद्धि नयनं स्फुरमाणमिदं मम। [3]विजयं समनुप्राप्तं शंसतीव मनोरथम् ॥ ८
ततो वानरराजेन लक्ष्मणेन च पूजितः। उवाच रामो धर्मात्मा पुनरप्यर्थकोविदः[4] ॥ ९
अग्रे यातु बलस्यास्य नीलो मार्गमवेक्षितुम्। वृतः शतसहस्रेण वानराणां तरस्विनाम् ॥ १०
फलमूलवता नील शीतकाननवारिणा। पथा मधुमता चाशु सेनां सेनापते नय ॥ ११
दूषयेयुर्दुरात्मानः पथि मूलफलोदकम्। राक्षसाः परिरक्षेथास्तेभ्यस्त्वं नित्यमुद्यतः ॥ १२
निम्नेषु गिरिदुर्गेषु वनेषु च वनौकसः। अभिप्लुत्याभिपश्येयुः परेषां निहितं बलम् ॥ १३
यच्च फल्गु बलं किंचित्तदत्रैवोपयुज्यताम्। एतद्धि कृत्यं घोरं नो विक्रमेण प्रयुध्यताम् ॥ १४
सागरौघनिभं भीममग्रानीकं महाबलाः। कपिसिंहाः प्रकर्षन्तु शतशोऽथ सहस्रशः ॥ १५
गजश्च गिरिसंकाशो गवयश्च महाबलः। गवाक्षश्चाग्रतो यान्तु वाहिन्या वानरर्षभाः ॥ १६
यातु वानरवाहिन्या वानरः प्लवतां वरः। पालयन् दक्षिणं पार्श्वमृषभो वानरर्षभः ॥ १७
गन्धहस्तीव दुर्धर्षस्तरस्वी गन्धमादनः। यातु वानरवाहिन्याः सव्यं पार्श्वमधिष्ठितः ॥ १८
यास्यामि बलमध्येऽहं बलौघमभिहर्षयन्। अधिरुह्य हनूमन्तमैरावतमिवेश्वरः ॥ १९
अङ्गदेनैष संयातु लक्ष्मणश्चान्तकोपमः। सार्वभौमेन भूतेशो द्रविणाधिपतिर्यथा ॥ २०
जाम्बवांश्च सुषेणश्च वेगदर्शी च वानरः। ऋक्षराजो महासत्त्वः कुक्षिं रक्षन्तु ते त्रयः ॥ २१
राघवस्य वचः श्रुत्वा सुग्रीवो वाहिनीपतिः। व्यादिदेश महावीर्यान् वानरान् वानरर्षभः॥ २२
ते वानरगणाः सर्वे समुत्पत्य युयुत्सवः। गुहाभ्यः शिखरेभ्यश्च आशु पुप्लुविरे तदा ॥ २३
ततो वानरराजेन लक्ष्मणेन च पूजितः। जगाम रामो धर्मात्मा ससैन्यो दक्षिणां दिशम् ॥२४
शतैः शतसहस्रैश्च कोटीभिरयुतैरपि। वारणाभैश्च हरिभिर्ययौ परिवृतस्तदा ॥ २५
तं यान्तमनुयाति स्म महती हरिवाहिनी। [5]हृष्टाः प्रमुदिताः सर्वे सुग्रीवेणाभिपालिताः ॥ २६
आप्लवन्तः प्लवन्तश्च गर्जन्तश्च प्लवङ्गमाः। क्ष्वेलन्तो विनदन्तश्च जग्मुर्वै दक्षिणां दिशम् ॥ २७
भक्षयन्तः सुगन्धीनि मधूनि च फलानि च। उद्वहन्तो महावृक्षान् मञ्जरीपुञ्जधारिणः ॥ २८
अन्योन्यं सहसा दृप्ता निर्वहन्ति क्षिपन्ति च। पततश्चोत्पतन्त्यन्ये पातयन्त्यपरे परान् ॥ २९

१. पीत्वा विषमिवातुरः च. छ.।
२. पश्यामि पुना.।
३. विजयमित्यादेः अर्थकोविद इत्यन्तस्य स्थाने हृदयं चापि सुदृढं शंसतीव मनोरथम्—इति क.।
४. अस्यानन्तरम्—पश्चार्धमिव लोकस्य प्रचेताश्चेतसा वृतः। जघनं कपिसेनायाः कपिराजोऽपकर्षतु ॥—इति घ.।
५. दृप्ताः च.।

रावणो नो निहन्तव्यः सर्वे च रजनीचराः । इति गर्जन्ति हरयो राघवस्य समीपतः ॥ ३०
पुरस्तादृषभो वीरो नीलः कुमुद एव च । पन्थानं शोधयन्ति स्म वानरैर्बहुभिर्वृताः ॥ ३१
मध्ये तु राजा सुग्रीवो रामो लक्ष्मण एव च । बलिभिर्बहुभिः शूरैर्वृताः शत्रुनिबर्हणैः ॥ ३२
हरिः शतबलिर्वीरः कोटीभिर्दशभिर्वृतः । सर्वामेको ह्यवष्टभ्य ररक्ष हरिवाहिनीम् ॥ ३३
कोटीशतपरीवारः केसरी पनसो गजः । अर्कश्चातिबलः पार्श्वमेकं तस्याभिरक्षति ॥ ३४
सुषेणो जाम्बवांश्चैव ऋक्षैश्च[1] बहुभिर्वृतौ । सुग्रीवं पुरतः कृत्वा जघनं संररक्षतुः ॥ ३५
तेषां सेनापतिर्वीरो नीलो वानरपुंगवः । संपतन् प्लवतां[2] श्रेष्ठस्तद्बलं पर्यपालयत् ॥ ३६
दरीमुखः प्रजङ्घश्च रम्भोऽथ रभसः कपिः । सर्वतश्च ययुर्वीरास्त्वरयन्तः प्लवङ्गमान् ॥ ३७
एवं ते हरिशार्दूला गच्छन्तो बलदर्पिताः । अपश्यंस्ते गिरिश्रेष्ठं सह्यं द्रुमलतायुतम् ॥ ३८
सरांसि च सुफुल्लानि तटाकानि महान्ति च[3] । रामस्य शासनं ज्ञात्वा भीमकोपस्य भीतवत् ॥
वर्जयन्नगराभ्याशांस्तथा जनपदानपि । सागरौघनिभं भीमं तद्वानरबलं महत् ॥ ४०
निःससर्प महाघोषं भीमघोष इवार्णवः । तस्य दाशरथेः पार्श्वे शूरास्ते कपिकुञ्जराः ॥ ४१
तूर्णमापुप्लुवुः सर्वे सदश्वा इव चोदिताः । कपिभ्यामुह्यमानौ तौ शुशुभाते नरर्षभौ ॥ ४२
महद्भ्यामिव संस्पृष्टौ ग्रहाभ्यां चन्द्रभास्करौ । ततो वानरराजेन लक्ष्मणेन च पूजितः ॥ ४३
जगाम रामो धर्मात्मा ससैन्यो दक्षिणां दिशम् । तमङ्गदगतो रामं लक्ष्मणः शुभया गिरा ॥
उवाच परिपूर्णार्थो वचनं[4] प्रतिभानवान् । हृतामवाप्य वैदेहीं क्षिप्रं हत्वा च रावणम् ॥ ४५
समृद्धार्थः समृद्धार्थामयोध्यां प्रति यास्यसि । महान्ति च निमित्तानि दिवि भूमौ च राघव ॥
शुभानि तव पश्यामि सर्वाण्येवार्थसिद्धये । अनुवाति शुभो वायुः सेनां मृदुहितः सुखः ॥ ४७
पूर्णवल्गुस्वराश्चेमे प्रवदन्ति मृगद्विजाः । प्रसन्नाश्च दिशः सर्वा विमलश्च दिवाकरः ॥ ४८
उशना च प्रसन्नार्चिरनु त्वां भार्गवो गतः । ब्रह्मराशिर्विशुद्धश्च शुद्धाश्च परमर्षयः ॥ ४९
अर्चिष्मन्तः प्रकाशन्ते ध्रुवं सर्वे प्रदक्षिणम् । त्रिशङ्कुर्विमलो भाति राजर्षिः सपुरोहितः ॥ ५०
पितामहः[5] पुरोऽस्माकमिक्ष्वाकूणां महात्मनाम् । विमले च प्रकाशेते विशाखे निरुपद्रवे ॥ ५१
नक्षत्रवरमस्माकमिक्ष्वाकूणां महात्मनाम्[6] । नैर्ऋतं नैर्ऋतानां च नक्षत्रमभिपीड्यते ॥ ५२
मूलो मूलवता स्पृष्टो धूप्यते धूमकेतुना । सर्वं चैतद्विनाशाय राक्षसानामुपस्थितम् ॥ ५३
काले कालगृहीतानां नक्षत्रं ग्रहपीडितम् । प्रसन्नाः सुरसाश्चापो वनानि फलवन्ति च ॥ ५४

---

१. ऋक्षः छ. ।
२. पतताम् च. छ. ।
३. वनानि च च. ।
४. स्मृतिमान् च. ।
५. पितामहवरः च. छ. ।
६. विमले इत्यादि महात्मनामित्यन्तम् क. नास्ति ।

प्रवान्त्यभ्यधिकं गन्धान् यथर्तुकुसुमा द्रुमाः। व्यूढानि कपिसैन्यानि प्रकाशन्तेऽधिकं प्रभो ॥५५
देवानामिव सैन्यानि सङ्ग्रामे तारकामये[1]। एवमार्य समीक्ष्यैतान् प्रीतो भवितुमर्हसि ॥ ५६
इति भ्रातरमश्वास्य हृष्टः सौमित्रिरब्रवीत्। अथावृत्य महीं कृत्स्नां जगाम महती चमूः॥ ५७
ऋक्षवानरशार्दूलैर्नखदंष्ट्रायुधैर्वृता। कराग्रैश्चरणाग्रैश्च वानरैरुत्थितं रजः॥ ५८
भीममन्तर्दधे लोकं निवार्य सवितुः प्रभाम्। सपर्वतवनाकाशां दक्षिणां हरिवाहिनी॥ ५९
छादयन्ती ययौ भीमा द्यामिवाम्बुदसन्ततिः। उत्तरन्त्यां च सेनायां सततं बहुयोजनम्॥ ६०
नदीस्रोतांसि सर्वाणि सस्यन्दुर्विपरीतवत्। सरांसि विमलाम्भांसि द्रुमाकीर्णांश्च पर्वतान्॥ ६१
समान् भूमिप्रदेशांश्च वनानि फलवन्ति च। मध्येन च समन्ताच्च तिर्यक्चाधश्च साविशत्॥६२
समावृत्य महीं कृत्स्नां जगाम महती चमूः। ते हृष्टमनसः सर्वे जग्मुर्मारुतरंहसः॥ ६३
हरयो राघवस्यार्थे[1] समारोपितविक्रमाः। हर्षवीर्यबलोद्रेकान् दर्शयन्तः परस्परम्॥ ६४
यौवनोत्सेकजान् दर्पान् विविधांश्चक्रुरध्वनि। तत्र केचिद्द्रुतं जग्मुरुपेतुश्च तथापरे॥ ६५
केचित्किलकिलां चक्रुर्वानरा वनगोचराः। प्रास्फोटयंश्च पुच्छानि संनिजघ्नुः पदान्यपि॥ ६६
भुजान् विक्षिप्य शैलांश्च द्रुमानन्ये बभञ्जिरे[2]। आरोहन्तश्च शृङ्गाणि गिरीणां गिरिगोचराः॥
महानादान् विमुञ्चन्ति क्ष्वेलामन्ये प्रचक्रिरे। ऊरुवेगैश्च ममृदुर्लताजालान्यनेकशः॥ ६८
जृम्भमाणाश्च विक्रान्ता विचिक्रीडुः शिलाद्रुमैः। शतैः शतसहस्रैश्च कोटीभिश्च सहस्रशः॥६९
वानराणां सुघोराणां यूथैः परिवृता मही। सा स्म याति दिवारात्रं महती हरिवाहिनी॥ ७०
हृष्टा प्रमुदिता सेना सुग्रीवेणाभिरक्षिता। वानरास्त्वरितं यान्ति सर्वे युद्धाभिनन्दिनः॥ ७१
मुमोक्षयिषवः[3] सीतां मुहूर्तं क्वापि नासत। ततः पादपसंबाधं नानामृगसमायुतम्॥ ७२
सह्यपर्वतमासेदुर्मलयं च महीधरम्। काननानि विचित्राणि नदीप्रस्रवणानि च॥ ७३
पश्यन्नभिययौ रामः सह्यस्य मलयस्य च। चम्पकांस्तिलकांश्चूतानशोकान् सिन्धुवारकान्॥७४
करवीरांश्च तिनिशान् भञ्जन्ति स्म प्लवङ्गमाः। अङ्कोलांश्च करञ्जांश्च प्लक्षन्यग्रोधतिन्दुकान्[4]॥७५
जम्बूकामलकान्नीपान् भञ्जन्ति स्म प्लवङ्गमाः प्रस्तरेषु च रम्येषु विविधाः काननद्रुमाः॥ ७६
वायुवेगप्रचलिताः पुष्पैरवकिरन्ति तान्। मारुतः सुखसंस्पर्शो वाति चन्दनशीतलः॥ ७७
षट्पदैरनुकूजद्भिर्वनेषु मधुगन्धिषु। अधिकं शैलराजस्तु धातुभिः सुविभूषितः॥ ७८
धातुभ्यः प्रसृतो रेणुर्वायुवेगविघट्टितः। सुमहद्वानरानीकं छादयामास सर्वतः॥ ७९

---

1. तारकासुरस्य आमये विनाशने।

१. जग्मुरित्यादि राघवस्यार्थे इत्यन्तम् क. नास्ति।

२. केचिदित्यादि बभञ्जिरे इत्यन्तम् ग. नास्ति।

३. प्रमोक्षयिषवः च.।

४. इदं पद्यम् क. नास्ति।

गिरिप्रस्थेषु रम्येषु सर्वतः संप्रपुष्पिताः। केतक्यः सिन्दुवाराश्च वासन्त्यश्च मनोरमाः॥ ८०
माधव्यो गन्धपूर्णाश्च कुन्दगुल्माश्च पुष्पिताः। चिरिबिल्वा मधूकाश्च वञ्जुला वकुलास्तथा॥
स्फूर्जकास्तिलकाश्चैव नागवृक्षाश्च पुष्पिताः। चूताः पाटलयश्चैव कोविदाराश्च पुष्पिताः॥
मुचुलिन्दार्जुनाश्चैव शिंशपाः कुटजास्तथा। धवाः शल्मलयश्चैव रक्ताः कुरबकास्तथा। ८३
हिन्तालास्तिनिशाश्चैव [1]चूर्णका नीपकास्तथा[2]। नीलाशोकाश्च वरणा अङ्कोलाः पद्मकास्तथा॥
प्लवमानैः प्लवङ्गैस्तु सर्वे पर्याकुलीकृताः। वाप्यस्तस्मिन् गिरौ शीताः पल्वलानि तथैव च॥८५
चक्रवाकानुचरिताः कारण्डवनिषेविताः। प्लवैः क्रौञ्चैश्च संकीर्णा वराहमृगसेविताः॥ ८६
ऋक्षैस्तरक्षुभिः सिंहैः शार्दूलैश्च भयावहैः। व्यालैश्च बहुभिर्भीमैः सेव्यमानः समन्ततः॥ ८७
पद्मैः सौगन्धिकैः फुल्लैः कुमुदैश्चोत्पलैस्तथा। वारिजैर्विविधैः पुष्पै रम्यास्तत्र जलाशयाः॥ ८८
तस्य सानुषु कूजन्ति नानाद्विजगणास्तथा। स्नात्वा पीत्वोदकान्यत्र जले क्रीडन्ति वानराः॥
अन्योन्यं प्लावयन्ति स्म शैलमारुह्य वानराः। फलान्यमृतगन्धीनि मूलानि कुसुमानि च॥ ९०
बभञ्जुर्वानरास्तत्र पादपानां मदोत्कटाः। द्रोणमात्रप्रमाणानि लम्बमानानि वानराः॥ ९१
ययुः पिबन्तो हृष्टास्ते मधूनि मधुपिङ्गलाः। पादपानवभञ्जन्तो विकर्षन्तस्तथा लताः॥ ९२
विधमन्तो गिरिवरान् प्रययुः प्लवगर्षभाः। वृक्षेभ्योऽन्ये तु कपयो नर्दन्तो मधुदर्पिताः॥ ९३
अन्ये वृक्षान् प्रपद्यन्ते प्रपतन्त्यपि चापरे। बभूव वसुधा तैस्तु संपूर्णा हरियूथपैः॥ ९४
यथा कलमकेदारैः पक्वैरिव वसुन्धरा। महेन्द्रमथ संप्राप्य रामो राजीवलोचनः॥ ९५
अध्यारोहन्महाबाहुः शिखरं द्रुमभूषितम्। ततः शिखरमारुह्य रामो दशरथात्मजः॥ ९६
कूर्ममीनसमाकीर्णमपश्यत्सलिलाकरम्। ते सह्यं समतिक्रम्य मलयं च महागिरिम्॥ ९७
आसेदुरानुपूर्व्येण समुद्रं भीमनिःस्वनम्। अवरुह्य जगामाशु वेलावनमनुत्तमम्॥ ९८
रामो रमयतां श्रेष्ठः ससुग्रीवः सलक्ष्मणः। अथ धौतोपलतलां तोयौघैः सहसोत्थितैः॥ ९९
वेलामासाद्य विपुलां रामो वचनमब्रवीत्। एते वयमनुप्राप्ताः सुग्रीव वरुणालयम्॥ १००
इहेदानीं विचिन्ता सा या नः पूर्वं समुत्थिता। अतः परमतीरोऽयं सागरः सरितां पतिः॥
न चायमनुपायेन शक्यस्तरितुमर्णवः। तदिहैव निवेशोऽस्तु मन्त्रः प्रस्तूयतामिति॥ १०२
यथेदं वानरबलं परं पारमवाप्नुयात्। इतीव स महाबाहुः सीताहरणकर्शितः॥ १०३
रामः सागरमासाद्य वासमाज्ञापयत्तदा। सर्वाः सेना निवेश्यन्तां वेलायां हरिपुङ्गव॥ १०४
संप्राप्तो मन्त्रकालो नः सागरस्यास्य लङ्घने। स्वां स्वां सेनां समुत्सृज्य मा च कश्चित्कुतो व्रजेत्॥
गच्छन्तु वानराः शूराः ज्ञेयं छन्नं भयं च नः। रामस्य वचनं श्रुत्वा सुग्रीवः सहलक्ष्मणः॥
सेनां न्यवेशयत्तीरे सागरस्य द्रुमायुते। विरराज समीपस्थं सागरस्य च तद्बलम्॥ १०७

१. रक्ता इत्यादि तिनिशाश्चैवेत्यन्तम् क. नास्ति। २. इदमर्धम् ग. नास्ति

मधुपाण्डुजलः श्रीमान् द्वितीय इव सागरः । वेलावनमुपागम्य ततस्ते हरिपुंगवाः ॥ १०८
विनिविष्टाः परं पारं काङ्क्षमाणा महोदधेः । तेषां निविशमानानां सैन्यसन्नाहनिःस्वनः॥१०९
अन्तर्धाय महानादमर्णवस्य प्रशुश्रुवे । सा वानराणां ध्वजिनी सुग्रीवेणाभिपालिता ॥ ११०
त्रिधा निविष्टा महती रामस्यार्थपराभवत् । सा महार्णवमासाद्य हृष्टा वानरवाहिनी ॥ १११
वायुवेगसमाधूतं पश्यमाना महार्णवम् । दूरपारमसंबाधं रक्षोगणनिषेवितम् ॥ ११२
पश्यन्तो वरुणावासं निषेदुर्हरियूथपाः । चण्डनक्रग्रहं घोरं क्षपादौ दिवसक्षये ॥ ११३
हसन्तमिव फेनौघैर्नृत्यन्तमिव चोर्मिभिः । चन्द्रोदयसमुद्धूतं प्रतिचन्द्रसमाकुलम् ॥ ११४
पिनष्टीव तरङ्गाग्रैरर्णवः[1] फेनचन्दनम् । तदादाय करैरिन्दुर्लिम्पतीव दिगङ्गनाः ॥ ११५
चण्डानिलमहाग्राहैः कीर्णं तिमितिमिङ्गिलैः । दीप्तभोगैरिवाकीर्णं भुजङ्गैर्भुजगालयम् ॥ ११६
अवगाढं महासत्त्वैर्नानाशैलसमाकुलम् । सुदुर्गं दुर्गमार्गं तमगाधमसुरालयम् ॥ ११७
मकरैर्नागभोगैश्च विगाढा वातलोलिताः । उत्पेतुश्च निपेतुश्च प्रवृद्धा जलराशयः ॥ ११८
अग्निचूर्णमिवाविद्धं भास्वराम्बु महोरगम् । सुरारिविषयं घोरं पातालविषमं सदा ॥ ११९
सागरं चाम्बरप्रख्यमम्बरं सागरोपमम् । सागरं चाम्बरं चेति निर्विशेषमदृश्यत[2] ॥ १२०
संपृक्तं नभसाप्यम्भः संपृक्तं च नभोऽम्भसा । तादृग्रूपे स्म दृश्येते तारारत्नसमाकुले ॥ १२१
समुत्पतितमेघस्य वीचिमालाकुलस्य च । विशेषो न द्वयोरासीत्सागरस्याम्बरस्य च ॥ १२२
अन्योन्यमाहताः सक्ताः सस्वनुर्भीमनिःस्वनाः । ऊर्मयः सिन्धुराजस्य[3] महाभेर्य इवाहवे॥१२३
रत्नौघजलसन्नादं विषक्तमिव वायुना । उत्पतन्तमिव क्रुद्धं यादोगणसमाकुलम् ॥ १२४
ददृशुस्ते महोत्साहा वाताहतमपां पतिम् । अनिलोद्धतमाकाशे प्रवल्गन्तमिवोर्मिभिः[4]॥ १२५
ततो विस्मयमापन्ना ददृशुर्हरयस्तदा । भ्रान्तोर्मिजलसन्नादं प्रलोलमिव सागरम् ॥ १२६

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
युद्धकाण्डे रामाभिषेणनं नाम चतुर्थः सर्गः

---

## पञ्चमः सर्गः

### रामविप्रलम्भः

सा तु नीलेन विधिवत्स्वारक्षा सुसमाहिता । सागरस्योत्तरे तीरे साधु सेना निवेशिता ॥ १
मैन्दश्च द्विविदश्चोभौ तत्र वानरपुंगवौ । विचेरतुश्च तां सेनां रक्षार्थं सर्वतो दिशम् ॥ २

---

१. समुद्रः इति क्वाचित्कः पाठः ।
२. इदमर्धम् ग. नास्ति ।
३. सस्वनुरित्यादि सिन्धुराजस्येत्यन्तम् घ. नास्ति ।
४. इदमर्धम् क. नास्ति ।

निविष्टायां तु सेनायां तीरे नदनदीपतेः। पार्श्वस्थं लक्ष्मणं दृष्ट्वा रामो वचनमब्रवीत् ॥ ३
शोकश्च किल कालेन गच्छता ह्यपगच्छति। मम चापश्यतः कान्तामहन्यहनि वर्धते ॥ ४
न मे दुःखं प्रिया दूरे न मे दुःखं हृतेति वा। एतदेवानुशोचामि वयोऽस्या ह्यतिवर्तते ॥ ५
वाहि वात यतः कान्ता तां स्पृष्ट्वा मामपि स्पृश। त्वयि मे गात्रसंस्पर्शश्चन्द्रे दृष्टिसमागमः ॥६
तन्मे दहति गात्राणि विषं पीतमिवाशये। हा नाथेति प्रिया सा मां ह्रियमाणा यदब्रवीत् ॥
तद्वियोगेन्धनवता तच्चिन्ताविपुलार्चिषा। रात्रिंदिवं शरीरं मे दह्यते मदनाग्निना ॥ ८
अवगाह्यार्णवं स्वप्स्ये सौमित्रे भवता विना। कथंचित्प्रज्वलन् कामो न मां सुप्तं जले दहेत् ॥ ९
बह्वेतत्कामयानस्य शक्यमेतेन जीवितुम्। यदहं सा च वामोरूरेकां धरणिमाश्रितौ ॥ १०
केदारस्येव केदारः सोदकस्य निरूदकः। उपस्नेहेन जीवामि जीवन्तीं यच्छृणोमि ताम् ॥ ११
कदा नु खलु सुश्रोणीं शतपत्रायतेक्षणाम्। विजित्य शत्रून् द्रक्ष्यामि सीतां स्फीतामिव श्रियम्॥
कदा नु चारुबिम्बोष्ठं तस्याः पद्ममिवाननम्। ईषदुन्नम्य पास्यामि रसायनमिवातुरः ॥ १३
तस्यास्तु संहतौ पीनौ स्तनौ तालफलोपमौ। कदा नु खलु सोत्कम्पौ श्लिष्यन्त्या मां भजिष्यतः॥
सा नूनमसितापाङ्गी रक्षोमध्यगता सती। मन्नाथा नाथहीनेव त्रातारं नाधिगच्छति ॥ १५
कथं जनकराजस्य दुहिता सा मम प्रिया। राक्षसीमध्यगा शेते स्नुषा दशरथस्य च ॥ १६
कदा विक्षोभ्य रक्षांसि सा विधूयोत्पतिष्यति। विधूय जलदान्नीलाञ्शशिरेखा शरत्स्विव ॥ १७
स्वभावतनुका नूनं शोकेनानशनेन च। भूयस्तनुतरा सीता देशकालविपर्ययात् ॥ १८
कदा नु राक्षसेन्द्रस्य निधायोरसि सायकान्। सीतां प्रत्याहरिष्यामि[1] शोकमुत्सृज्य मानसम् ॥
कदा नु खलु मां साध्वी सीता सुरसुतोपमा। सोत्कण्ठा कण्ठमालम्ब्य मोक्ष्यत्यानन्दजं पयः ॥
कदा शोकमिमं घोरं मैथिलीविप्रयोगजम्। सहसा विप्रमोक्ष्यामि वासः शुक्लेतरं यथा ॥ २१
एवं विलपतस्तस्य तत्र रामस्य धीमतः। दिनक्षयान्मन्दरुचिर्भास्करोऽस्तमुपागमत् ॥ २२
आश्वासितो लक्ष्मणेन रामः सन्ध्यामुपासत। स्मरन् कमलपत्राक्षीं सीतां शोकाकुलीकृतः ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
युद्धकाण्डे रामविप्रलम्भो नाम पञ्चमः सर्गः

## षष्ठः सर्गः

### रावणमन्त्रणम्

लङ्कायां तु कृतं कर्म घोरं दृष्ट्वा भयावहम्। राक्षसेन्द्रो हनुमता शक्रेणेव महात्मना ॥ १
अब्रवीद्राक्षसान् सर्वान् ह्रिया किंचिदवाङ्मुखः। धर्षिता च प्रविष्टा च लङ्का दुष्प्रसहा पुरी ॥२

---

१. शोकेनेत्यादि प्रत्याहरिष्यामीत्यन्तम् घ. नास्ति।

तेन वानरमात्रेण दृष्टा सीता च जानकी । प्रासादो धर्षितश्चैत्यः प्रवला राक्षसा हताः ३
आकुला च पुरी लङ्का सर्वा हनुमता कृता । किं करिष्यामि भद्रं वः किं वा युक्तमनन्तरम् ॥
उच्यतां नः समर्थं यत्कृतं च सुकृतं भवेत् । मन्त्रमूलं हि विजयं प्राहुरार्या मनस्विनः ॥ ५
तस्माद्वै रोचये मन्त्रं रामं प्रति महाबलाः । त्रिविधाः पुरुषा लोके उत्तमाधममध्यमाः ॥ ६
तेषां तु समवेतानां गुणदोषौ वदाम्यहम् । [1]मन्त्रस्त्रिभिर्हि संयुक्तः[1] समर्थैर्मन्त्रनिर्णये ॥ ७
मित्रैर्वापि समानार्थैर्बान्धवैरपि वाधिकैः[2] । सहितो मन्त्रयित्वा यः कर्मारम्भान् प्रवर्तयेत् ॥ ८
दैवे च कुरुते यत्नं तमाहुः पुरुषोत्तमम् । एकोऽर्थं विमृशेदेको धर्मे प्रकुरुते मनः ॥ ९
एकः कार्याणि कुरुते तमाहुर्मध्यमं नरम् । गुणदोषावनिश्चित्य त्यक्त्वा धर्मव्यपाश्रयम्[3] ॥ १०
करिष्यामीति यः कार्यमुपेक्षेत्स नराधमः । यथेमे पुरुषा नित्यमुत्तमाधममध्यमाः ॥ ११
एवं मन्त्रा हि विज्ञेया उत्तमाधममध्यमाः । ऐकमत्यमुपागम्य शास्त्रदृष्टेन चक्षुषा ॥ १२
मन्त्रिणो यत्र निरतास्तमाहुर्मन्त्रमुत्तमम् । बह्व्योऽपि मतयो भूत्वा मन्त्रिणामर्थनिर्णये ॥ १३
पुनर्यत्रैकतां प्राप्ताः स मन्त्रो मध्यमः स्मृतः । अन्योन्यं मतिमास्थाय यत्र संप्रतिभाष्यते ॥ १४
न चैकमत्ये श्रेयोऽस्ति मन्त्रः सोऽधम उच्यते । तस्मात्सुमन्त्रितं साधु भवन्तो मतिसत्तमाः ॥
कार्यं संप्रतिपद्यन्तामेतत्कृत्यं मतं मम । वानराणां हि वीराणां सहस्रैः परिवारितः ॥ १६
रामोऽभ्येति पुरीं लङ्कामस्माकमुपरोधकः । तरिष्यति च सुव्यक्तं राघवः सागरं सुखम् ॥ १७
तरसा युक्तरूपेण सानुजः सबलानुगः । समुद्रमुच्छोषयति वीर्येणान्यत्करोति वा ॥ १८
अस्मिन्नेवंगते कार्ये विरुद्धे वानरैः सह । हितं पुरे च सैन्ये च सर्वं संमन्त्र्यतां मम ॥ १९

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
युद्धकाण्डे रावणमन्त्रणं नाम षष्ठः सर्गः

---

## सप्तमः सर्गः

### सचिवोक्तिः

इत्युक्ता राक्षसेन्द्रेण राक्षसास्ते महाबलाः । ऊचुः प्राञ्जलयः सर्वे रावणं राक्षसेश्वरम् ॥ १
द्विषत्पक्षमविज्ञाय नीतिबाह्यास्त्वबुद्धयः । अविज्ञायात्मपक्षं च राजानं भीषयन्ति हि[4] ॥ २
राजन् परिघशक्त्यृष्टिशूलपट्टससंकुलम् । सुमहन्नो बलं कस्माद्विषादं भजते भवान् ॥ ३

1. मन्त्रस्त्रिभिर्हि संयुक्तः इत्यत्र वाक्यं विभज्य पूर्वत्र हेतुतया योजनं श्लिष्टम् ।

१. मन्त्रिभिर्हितसंयुक्तः च. छ. ।

२. बान्धवैरपि वा हितैः च. । बान्धवैर्वा समाहितैः छ. ।

३. दैवव्यपाश्रयम् पुना. ।

४. इदमर्धम् ग. नास्ति ।

त्वया भोगवतीं गत्वा निर्जिताः पन्नगा युधि । कैलासशिखरावासी यक्षैर्बहुभिरावृतः ॥ ४
सुमहत्कदनं कृत्वा वश्यस्ते धनदः कृतः । स महेश्वरसख्येन श्लाघ्यमानस्त्वया विभो ॥ ५
निर्जितः समरे रोषाल्लोकपालो महाबलः । विनिहत्य च यक्षौघान् विक्षोभ्य च विगृह्य च ॥ ६
त्वया कैलासशिखराद्विमानमिदमाहृतम् । मयेन दानवेन्द्रेण त्वद्भयात्सख्यमिच्छता ॥ ७
दुहिता तव भार्यार्थे दत्ता राक्षसपुंगव । दानवेन्द्रो मधुर्नाम वीर्योत्सिक्तो दुरासदः ॥ ८
विगृह्य वशमानीतः कुम्भीनस्याः सुखावहः । निर्जितास्ते महाबाहो नागा गत्वा रसातलम् ॥
वासुकिस्तक्षकः शङ्खो जटी च वशमाहृताः । अक्षया बलवन्तश्च शूरा लब्धवराः पुरा ॥ १०
त्वया संवत्सरं युद्ध्वा समरे दानवा विभो । स्वबलं समुपाश्रित्य नीता वशमरिंदम ॥ ११
मायाश्चाधिगतास्तत्र बहवो राक्षसाधिप । निर्जिताः समरे रोषाल्लोकपाला महाबलाः ॥ १२
देवलोकमितो गत्वा शक्रश्चापि विनिर्जितः[1] । शूराश्च बलवन्तश्च वरुणस्य सुता रणे ॥ १३
निर्जितास्ते महाबाहो चतुर्विधबलानुगाः । मृत्युदण्डमहाग्राहं शाल्मलिद्रुममण्डितम् ॥ १४
कालपाशमहावीचिं यमकिङ्करपन्नगम्[2] । अवगाह्य त्वया राजन् यमलोकमहार्णवम्[3] ॥ १५
जयश्च विपुलः प्राप्तो मृत्युश्च प्रतिषेधितः । सुयुद्धेन च ते सर्वे लोकास्तत्र सुतोषिताः[4] ॥ १६
क्षत्रियैर्बहुभिर्वीरैः शक्रतुल्यपराक्रमैः । आसीद्वसुमती पूर्णा महद्भिरिव पादपैः ॥ १७
तेषां वीर्यगुणोत्साहैर्न समो राघवो रणे । प्रसह्य ते त्वया राजन् हताः परमदुर्जयाः ॥ १८
तिष्ठ वा किं महाराज श्रमेण तव वानरान् । अयमेको महाबाहुरिन्द्रजित्क्षपयिष्यति ॥ १९
अनेन हि महाराज माहेश्वरमनुत्तमम् । इष्ट्वा यज्ञं वरो लब्धो लोके परमदुर्लभः ॥ २०
शक्तितोमरमीनं च विनिकीर्णान्त्रशैवलम् । गजकच्छपसंबाधमश्वमण्डूकसंकुलम् ॥ २१
रुद्रादित्यमहाग्राहं मरुद्वसुमहोरगम् । रथाश्वगजतोयौघं पदातिपुलिनं महत् ॥ २२
अनेन हि समासाद्य देवानां बलसागरम् । गृहीतो दैवतपतिर्लङ्कां चापि प्रवेशितः ॥ २३
पितामहनियोगाच्च मुक्तः शम्बरवृत्रहा । गतस्त्रिविष्टपं राजन् सर्वदेवनमस्कृतः ॥ २४
तमेव त्वं महाराज विसृजेन्द्रजितं सुतम् । यावद्वानरसेनां तां सरामां नयति क्षयम् ॥ २५
राजन्नापदयुक्तेयमागता प्राकृताज्जनात् । हृदि नैव त्वया कार्या त्वं वधिष्यसि राघवम् ॥ २६

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायां
युद्धकाण्डे सचिवोक्तिर्नाम सप्तमः सर्गः

---

१. निर्जिता इत्यादि विनिर्जित इत्यन्तम् च. नास्ति ।
२. इदमर्धम् ख. नास्ति ।
३. यमस्य बलसागरम् च. छ. ।
४. विलोलिताः च. ।

## अष्टमः सर्गः

### प्रहस्तादिवचनम्

ततो नीलाम्बुदनिभः प्रहस्तो नाम राक्षसः। अब्रवीत्प्राञ्जलिर्वाक्यं शूरः सेनापतिस्तदा ॥ १
देवदानवगन्धर्वाः पिशाचपतगोरगाः। न त्वां धर्षयितुं शक्ताः किं पुनर्मानवौ[1] रणे ॥ २
सर्वे प्रमत्ता विश्वस्ता वञ्चिताः स्म हनूमता। न हि मे जीवतो गच्छेज्जीवन् स वनगोचरः ॥ ३
सर्वां सागरपर्यन्तां सशैलवनकाननाम्। करोम्यवानरां भूमिमाज्ञापयतु मां भवान् ॥ ४
रक्षां चैव विधास्यामि वानराद्रजनीचर। नागमिष्यति ते दुःखं किंचिदात्मापराधजम् ॥ ५
अब्रवीत्तु सुसंक्रुद्धो दुर्मुखो नाम राक्षसः। इदं न क्षमणीयं हि सर्वेषां नः प्रधर्षणम् ॥ ६
अयं परिभवो भूयः पुरस्यान्तःपुरस्य च। श्रीमतो राक्षसेन्द्रस्य वानरेण प्रधर्षणम् ॥ ७
अस्मिन् मुहूर्ते हत्वैको निवर्तिष्यामि वानरान्। प्रविष्टान् सागरं भीममम्बरं वा रसातलम् ॥ ८
ततोऽब्रवीत्सुसंक्रुद्धो[2] वज्रदंष्ट्रो महाबलः। प्रगृह्य परिघं घोरं मांसशोणितरूषितम् ॥ ९
किं वो हनुमता कार्यं कृपणेन दुरात्मना। रामे तिष्ठति दुर्धर्षे ससुग्रीवे सलक्ष्मणे ॥ १०
अद्य रामं ससुग्रीवं परिघेण सलक्ष्मणम्। आगमिष्यामि हत्वैको विक्षोभ्य हरिवाहिनीम् ॥ ११
इदं ममापरं वाक्यं शृणु राजन् यदीच्छसि। उपायकुशलो ह्येवं जयेच्छत्रूनतन्द्रितः ॥ १२
कामरूपधराः शूराः सुभीमा भीमदर्शनाः। राक्षसा वै सहस्राणि राक्षसाधिप निश्चिताः ॥ १३
काकुत्स्थमुपसंगम्य बिभ्रतो मानुषं वपुः। सर्वे ह्यसंभ्रमा भूत्वा ब्रुवन्तु रघुसत्तमम् ॥ १४
प्रेषिता भरतेन स्म तव भ्रात्रा यवीयसा। तवागमनमुद्दिश्य कृत्यमात्ययिकं त्विति[3] ॥ १५
स हि सेनां समुत्थाप्य क्षिप्रमेवोपयास्यति। ततो वयमितस्तूर्णं शूलशक्तिगदाधराः ॥ १६
चापबाणासिहस्ताश्च त्वरितास्तत्र याम हे। आकाशे गणशः स्थित्वा हत्वा तां हरिवाहिनीम्[4] ॥
अश्मशस्त्रमहावृष्ट्या प्रापयाम यमक्षयम्। एवं चेदुपसर्पेतामनयं रामलक्ष्मणौ ॥ १८
अवश्यमपनीतेन जहतामेव जीवितम्। कौम्भकर्णिस्ततो वीरो निकुम्भो नाम वीर्यवान् ॥ १९
अब्रवीत्परमक्रुद्धो रावणं लोकरावणम्। सर्वे भवन्तस्तिष्ठन्तु महाराजेन संगताः ॥ २०
अहमेको हनिष्यामि राघवं सहलक्ष्मणम्। सुग्रीवं च हनूमन्तं सर्वानेव च वानरान् ॥ २१
ततो वज्रहनुर्नाम राक्षसः पर्वतोपमः। क्रुद्धः परिलिहन् वक्त्रं जिह्वया वाक्यमब्रवीत् ॥ २२
स्वैरं कुर्वन्तु कार्याणि भवन्तो विगतज्वराः। एकोऽहं भक्षयिष्यामि तान् सर्वान् हरियूथपान् ॥

---

१. वानराः च. छ.।

२. दुर्मुख इत्यादि सुसंक्रुद्ध इत्यन्तम् ग. नास्ति।

३. इदमर्धम् च. नास्ति।

४. प्रेषिता इत्यादि हरिवाहिनीमित्यन्तम् ख. नास्ति।

स्वस्थाः क्रीडन्तु निश्चिन्ताः पिबन्तो मधु वारुणीम्। अहमेको वधिष्यामि सुग्रीवं सहलक्ष्मणम्॥
अङ्गदं च हनूमन्तं रामं च रणकुञ्जरम्॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
युद्धकाण्डे प्रहस्तादिवचनं नाम अष्टमः सर्गः

## नवमः सर्गः

### विभीषणसमालोचनम्

ततो निकुम्भो रभसः सूर्यशत्रुर्महाबलः। सुप्तघ्नो यज्ञहा रक्षो महापार्श्वो महोदरः॥ १
अग्निकेतुश्च दुर्धर्षो रश्मिकेतुश्च वीर्यवान्। इन्द्रजिच्च महातेजा बलवान् रावणात्मजः॥ २
प्रहस्तोऽथ विरूपाक्षो वज्रदंष्ट्रो महाबलः। धूम्राक्षश्चातिकायश्च दुर्मुखश्चैव राक्षसः॥ ३
परिघान्पट्टसान्प्रासाञ्शक्तिशूलपरश्वधान्। चापानि च सबाणानि खड्गांश्च विपुलाञ्शितान्॥
प्रगृह्य परमक्रुद्धाः समुत्पत्य च राक्षसाः। अब्रुवन् रावणं सर्वे प्रदीप्ता इव तेजसा॥ ५
अद्य रामं वधिष्यामः सुग्रीवं च सलक्ष्मणम्। कृपणं च हनूमन्तं लङ्का येन प्रधर्षिता[1]॥ ६
तान्गृहीतायुधान्सर्वान्वारयित्वा विभीषणः। अब्रवीत्प्राञ्जलिर्वाक्यं पुनः प्रत्युपवेश्य तान्॥
अप्युपायैस्त्रिभिस्तात योऽर्थः प्राप्तुं न शक्यते। तस्य विक्रमकालांस्तान् युक्तानाहुर्मनीषिणः॥
प्रमत्तेष्वभियुक्तेषु दैवेन प्रहतेषु च। विक्रमास्तात सिध्यन्ति परीक्ष्य विधिना कृताः॥ ९
अप्रमत्तं कथं तं तु विजिगीषुं बले स्थितम्। जितरोषं दुराधर्षं प्रधर्षयितुमिच्छथ॥ १०
समुद्रं लङ्घयित्वा तु घोरं नदनदीपतिम्। गतं हनुमतो लोके को[2] विन्द्यात्तर्कयेत वा॥ ११
बलान्यपरिमेयाणि वीर्याणि च निशाचराः। परेषां सहसावज्ञा न कर्तव्या कथंचन॥ १२
किं च राक्षसराजस्य रामेणापकृतं पुरा। आजहार जनस्थानाद्यस्य भार्यां यशस्विनः[3]॥ १३
खरो यद्यतिवृत्तस्तु रामेण निहतो रणे। अवश्यं प्राणिनां प्राणा रक्षितव्या यथाबलम्॥ १४
अयशस्यमनायुष्यं परदाराभिमर्शनम्। अर्थक्षयकरं घोरं पापस्य च पुनर्भवम्॥ १५
एतन्निमित्तं वैदेही भयं नः सुमहद्भवेत्। आहृता सा परित्याज्या कलहार्थे कृतेन किम्[4]॥ १६
न नः क्षमं वीर्यवता तेन धर्मानुवर्तिना। वैरं निरर्थकं कर्तुं दीयतामस्य मैथिली॥ १७
यावन्न सगजां साश्वां बहुरत्नसमाकुलाम्। पुरीं दारयते बाणैर्दीयतामस्य मैथिली॥ १८
यावत्सुघोरा महती दुर्धर्षा हरिवाहिनी। नावस्कन्दति नो लङ्कां दीयतामस्य मैथिली॥ १९
विनश्येद्धि पुरी लङ्का शूराः सर्वे च राक्षसाः। रामस्य दयिता पत्नी स्वयं यदि न दीयते॥ २०

---

१. प्रदीपिताः छ.।
२. विद्यात् पुनः।
३. यशस्विनीम् घ. छ.।
४. कलहार्थेन किंचन घ.।
कलहार्थेन तेन किम् छ.।

प्रसादये त्वां बन्धुत्वात्कुरुष्व वचनं मम । हितं तथ्यमहं ब्रूमि दीयतामस्य मैथिली ॥ २१

पुरा शरत्सूर्यमरीचिसन्निभान्नवान् सुपुङ्खान् सुदृढान्नृपात्मजः ।

सृजत्यमोघान् विशिखान् वधाय ते प्रदीयतां दाशरथाय मैथिली ॥ २२

त्यजस्व कोपं सुखधर्मनाशनं भजस्व धर्मं रतिकीर्तिवर्धनम् ।

प्रसीद जीवेम सपुत्रबान्धवाः प्रदीयतां दाशरथाय मैथिली ॥ २३

विभीषणवचः श्रुत्वा रावणो राक्षसेश्वरः । विसर्जयित्वा तान् सर्वान् प्रविवेश स्वकं गृहम् ॥ २४

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
युद्धकाण्डे विभीषणसमालोचनं नाम नवमः सर्गः

---

## दशमः सर्गः

### विभीषणपथ्योपदेशः

ततः प्रत्युषसि प्राप्ते प्राप्तधर्मार्थनिश्चयः । राक्षसाधिपतेर्वेश्म भीमकर्मा विभीषणः ॥ १

शैलाग्रचयसंकाशं शैलशृङ्गमिवोन्नतम् । सुविभक्तमहाकक्ष्यं महाजनपरिग्रहम् ॥ २

मतिमद्भिर्महामात्रैरनुरक्तैरधिष्ठितम् । राक्षसैश्चाप्तपर्याप्तैः सर्वतः परिरक्षितम् ॥ ३

मत्तमातङ्गनिःश्वासैर्व्याकुलीकृतमारुतम् । शङ्खघोषमहाघोषं तूर्यनादानुनादितम् ॥ ४

प्रमदाजनसंबाधं प्रजल्पितमहापथम् । तप्तकाञ्चननिर्यूहं भूषणोत्तमभूषितम् ५

गन्धर्वाणामिवावासमालयं मरुतामिव । रत्नसंचयसंबाधं भवनं भोगिनामिव ॥ ६

तं महाभ्रमिवादित्यस्तेजोविस्तृतरश्मिमान् । अग्रजस्यालयं वीरः प्रविवेश महाद्युतिः ॥ ७

पुण्यान् पुण्याहघोषांश्च वेदविद्भिरुदाहृतान् । शुश्राव सुमहातेजा भ्रातुर्विजयसंश्रितान् ॥ ८

पूजितान् दधिपात्रैश्च सर्पिर्भिः सुमनोऽक्षतैः । मन्त्रवेदविदो विप्रान् ददर्श सुमहाबलः ॥ ९

स पूज्यमानो रक्षोभिर्दीप्यमानः स्वतेजसा । आसनस्थं महाबाहुर्ववन्दे धनदानुजम् ॥ १०

स राजदृष्टिसंपन्नमासनं हेमभूषितम् । जगाम समुदाचारं प्रयुज्याचारकोविदः ॥ ११

स रावणं महात्मानं विजने मन्त्रिसन्निधौ । उवाच हितमत्यर्थं वचनं हेतुनिश्चितम् ॥ १२

प्रसाद्य भ्रातरं ज्येष्ठं सान्त्वेनोपस्थितक्रमः । देशकालार्थसंवादी दृष्टलोकपरावरः ॥ १३

यदा प्रभृति वैदेही संप्राप्तेमां पुरीं तव । तदाप्रभृति दृश्यन्ते निमित्तान्यशुभानि नः ॥ १४

सस्फुलिङ्गः सधूमार्चिः सधूमकलुषोदयः । मन्त्रसंधुक्षितोऽप्यग्निर्न सम्यगभिवर्धते ॥ १५

अग्निष्ठेष्वग्निशालासु तथा ब्रह्मस्थलीषु च । सरीसृपाणि दृश्यन्ते हव्येषु च पिपीलिकाः ॥ १६

गवां पयांसि स्कन्नानि विमदा वीरकुञ्जराः । दीनमश्वाः प्रहेषन्ते न च ग्रासाभिनन्दिनः ॥ १७

खरोष्ट्राश्वतरा राजन् भिन्नरोमाः स्रवन्ति नः। न स्वभावेऽवतिष्ठन्ते विधानैरपि चिन्तताः॥ १८
वायसाः सङ्घशः क्रूरा व्याहरन्ति समन्ततः। समवेताश्च दृश्यन्ते विमानाग्रेषु सङ्घशः॥ १९
गृध्राश्च परिलीयन्ते पुरीमुपरि पिण्डिताः। उपपन्नाश्च सन्ध्ये द्वे व्याहरन्त्यशिवं शिवाः॥ २०
क्रव्यादानां मृगाणां च पुरद्वारेषु सङ्घशः। श्रूयन्ते विपुला घोषाः सविस्फूर्जितनिःस्वनाः॥२१
तदेवं प्रस्तुते कार्ये प्रायश्चित्तमिदं क्षमम्। रोचते यदि वैदेही राघवाय प्रदीयताम्॥ २२
इदं च यदि वा मोहाल्लोभाद्वा व्याहृतं मया। तत्रापि च महाराज न दोषं कर्तुमर्हसि॥ २३
अयं च दोषः सर्वस्य जनस्यास्योपलक्ष्यते। रक्षसां राक्षसीनां च पुरस्यान्तःपुरस्य च॥ २४
प्रापणे[1] चास्य मन्त्रस्य निवृत्ताः सर्वमन्त्रिणः। अवश्यं च मया वाच्यं यद्दृष्टमपि वा श्रुतम्॥
संप्रधार्य यथान्यायं तद्भवान् कर्तुमर्हति। इति स्म मन्त्रिणां मध्ये भ्राता भ्रातरमूचिवान्॥
रावणं राक्षसश्रेष्ठं पथ्यमेतद्विभीषणः॥

हितं महार्थं मृदु हेतुसंहितं व्यतीतकालायतिसंप्रतिक्षमम्।
निशम्य तद्वाक्यमुपस्थितज्वरः प्रसङ्गवानुत्तरमेतदब्रवीत्॥ २७
भयं न पश्यामि कुतश्चिदप्यहं न राघवः प्राप्स्यति जातु मैथिलीम्।
सुरैः सहेन्द्रैरपि संगतः कथं ममाग्रतः स्थास्यति लक्ष्मणाग्रजः॥ २८
इतीदमुक्त्वा सुरसैन्यनाशनो महाबलः संयति चण्डविक्रमः।
दशाननो भ्रातरमाप्तवादिनं विसर्जयामास तदा विभीषणम्॥ २९

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
युद्धकाण्डे विभीषणपथ्योपदेशो नाम दशमः सर्गः

---

## एकादशः सर्गः

### द्वितीयमन्त्राधिवेशः

स बभूव कृशो राजा मैथिलीकाममोहितः। असंमानाच्च सुहृदां पापः पापेन कर्मणा॥ १
अतीतसमये काले तस्मिन् वै युधि रावणः। अमात्यैश्च सुहृद्भिश्च [2]प्राप्तकालममन्यत॥ २
स हेमजालविततं मणिविद्रुमभूषितम्। उपगम्य विनीताश्वमरुरोह महारथम्॥ ३
तमास्थाय रथश्रेष्ठं महामेघसमस्वनम्। प्रययौ राक्षसश्रेष्ठो दशग्रीवः सभां प्रति॥ ४
असिचर्मधरा योधाः सर्वायुधधरास्तथा। राक्षसा राक्षसेन्द्रस्य पुरस्तात्संप्रतस्थिरे॥ ५
नानाविकृतवेषाश्च नानाभूषणभूषिताः। पार्श्वतः पृष्ठतश्चैनं परिवार्य ययुस्तदा॥ ६
रथैश्चातिरथाः शीघ्रं मत्तैश्च वरवारणैः। अनूत्पेतुर्दशग्रीवमाक्रीडद्भिश्च वाजिभिः॥ ७

---

१. श्रावणे च. छ.। २. मन्त्रकालंग.

गदापरिघहस्ताश्च शक्तितोमरपाणयः । परश्वधधराश्चान्ये तथान्ये शूलपाणयः ॥ ८
ततस्तूर्यसहस्राणां संजज्ञे निःस्वनो महान् । तुमुलः शङ्खशब्दश्च सभां गच्छति रावणे ॥ ९
स नेमिघोषेण महान् सहसाभिविनादयन्[1] । राजमार्गं श्रिया जुष्टं प्रतिपेदे महारथः ॥ १०
विमलं चातपत्राणां प्रगृहीतमशोभत । पाण्डरं राक्षसेन्द्रस्य पूर्णस्ताराधिपो यथा ॥ ११
हेममञ्जरिगर्भे च शुद्धस्फटिकविग्रहे । चामरव्यजने चास्य रेजतुः सव्यदक्षिणे ॥ १२
ते कृताञ्जलयः सर्वे रथस्थं पृथिवीस्थिताः । राक्षसा राक्षसश्रेष्ठं शिरोभिस्तं ववन्दिरे ॥ १३
राक्षसैः स्तूयमानः सञ्जयाशीर्भिररिन्दम । आससाद महातेजाः सभां सुविहितां शुभाम् ॥ १४
सुवर्णरजतस्थूणां विशुद्धस्फटिकान्तराम् । विराजमानो वपुषा रुक्मपट्टोत्तरच्छदाम् ॥ १५
तां पिशाचशतैः षड्भिरभिगुप्तां सदा शुभाम् । प्रविवेश महातेजाः सुकृतां विश्वकर्मणा ॥ १६
तस्यां तु वैदूर्यमयं प्रियकाजिनसंवृतम् । महत्सोपाश्रयं भेजे रावणः परमासनम् ॥ १७
ततः शशासेश्वरवद्दूताँल्लघुपराक्रमान् । समानयत मे क्षिप्रमिहैतान् राक्षसानिति ॥ १८
कृत्यमस्ति महज्जातं सामर्थ्यमिह नो महत् । राक्षसास्तद्वचः श्रुत्वा लङ्कायां परिचक्रमुः ॥ १९
अनुगेहमवस्थाय विहारशयनेषु च । उद्यानेषु च रक्षांसि चोदयन्तो ह्यभीतवत् ॥ २०
ते रथान् रुचिरानेके दृप्तानेके पृथग्घयान् । नागानन्येऽधिरुरुहुर्जग्मुश्चैके पदातयः ॥ २१
सा पुरी परमाकीर्णा रथकुञ्जरवाजिभिः । संपतद्भिर्विरुरुचे गरुत्मद्भिरिवाम्बरम् ॥ २२
ते वाहनान्यवस्थाप्य यानानि विविधानि च । सभां पद्भिः प्रविविशुः सिंहा गिरिगुहामिव २३
राज्ञः पादौ गृहीत्वा तु राज्ञा ते प्रतिपूजिताः । पीठेष्वन्ये बृसीष्वन्ये भूमौ केचिदुपाविशन्॥
ते समेत्य सभायां वै राक्षसा राजशासनात् । यथार्हमुपतस्थुस्ते रावणं राक्षसाधिपम् ॥ २५
मन्त्रिणश्च यथा मुख्या निश्चितार्थेषु पण्डिताः । अमात्याश्च गुणोपेताः सर्वज्ञा बुद्धिदर्शनाः ॥
समेयुस्तत्र शतशः शूराश्च बहवस्तदा । सभायां हेमवर्णायां सर्वार्थस्य सुखाय वै ॥ २७
रम्यायां राक्षसेन्द्रस्य समेयुस्तत्र सङ्घशः । राक्षसा राक्षसश्रेष्ठं परिवार्योपतस्थिरे[2] ॥ २८

ततो महात्मा विपुलं सुयुग्यं वरार्हजाम्बूनदचित्रिताङ्गम् ।
रथं समास्थाय ययौ यशस्वी विभीषणः संसदमग्रजस्य ॥ २९

स पूर्वजायावरजः शशंस नामाथ पश्चाच्चरणौ ववन्दे ।
शुकः प्रहस्तश्च तथैव तेभ्यो ददौ यथार्हं पृथगासनानि ॥ ३०

सुवर्णनानामणिभूषणानां सुवाससां संसदि राक्षसानाम् ।
तेषां परार्ध्यागरुचन्दनानां स्रजश्च गन्धाः प्रववुः समन्तात् ॥ ३१

---

१. महताभिविनादयन् छ. । २ इदमर्धम् च. नास्ति ।

न चुक्रुशुर्नानृतमाह कश्चित्सभासदो नैव जजल्पुरुच्चैः ।
संसिद्धार्थाः सर्व एवोग्रवीर्या भर्तुः सर्वे ददृशुश्चाननं ते ॥ ३२
स रावणः शस्त्रभृतां मनस्विनां महाबलानां समितौ मनस्वी ।
तस्यां सभायां प्रभया चकाशे मध्ये वसूनामिव वज्रहस्तः ॥ ३३

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
युद्धकाण्डे द्वितीयमन्त्राधिवेशो नाम एकादशः सर्गः

---

## द्वादशः सर्गः

### कुम्भकर्णमतिः

स तां परिषदं कृत्स्नां समीक्ष्य समितिंजयः । प्रचोदयामास तदा प्रहस्तं वाहिनीपतिम् ॥ १
सेनापते यथा ते स्युः कृतविद्याश्चतुर्विधाः । योधा नगररक्षायां[1] तथा व्यादेष्टुमर्हसि ॥ २
स प्रहस्तः प्रणीतात्मा चिकीर्षन् राजशासनम् । विनिक्षिपद्बलं सर्वं बहिरन्तश्च मन्दिरे ॥ ३
ततो विनिक्षिप्य बलं पृथङ्नगरगुप्तये । प्रहस्तः प्रमुखे राज्ञो निषसाद जगाद च । ४
निहितं बहिरन्तश्च बलं बलवतस्तव । कुरुष्वाविमनाः कृत्यं यदभिप्रेतमस्ति ते ॥ ५
प्रहस्तस्य वचः श्रुत्वा राजा राज्यहिते रतः । सुखेप्सुः सुहृदां मध्ये व्याजहार स रावणः ॥ ६
प्रियाप्रिये सुखं दुःखं लाभालाभौ हिताहिते । धर्मकामार्थकृच्छ्रेषु यूयमर्हथ वेदितुम् ॥ ७
सर्वकृत्यानि युष्माभिः समारब्धानि सर्वदा । मन्त्रकर्मनियुक्तानि न जातु विफलानि मे ॥ ८
ससोमग्रहनक्षत्रैर्मरुद्भिरिव वासवः । भवद्भिरहमत्यर्थं वृतः श्रियमवाप्नुयाम् ॥ ९
अहं तु खलु सर्वान् वः समर्थयितुमुद्यतः । कुम्भकर्णस्य तु स्वप्नान्नेममर्थमचोदयम् ॥ १०
अयं हि सुप्तः षण्मासान् कुम्भकर्णो महाबलः । सर्वशस्त्रभृतां मुख्यः स इदानीं समुत्थितः ॥ ११
इयं च दण्डकारण्याद्रामस्य महिषी प्रिया । रक्षोभिश्चरिताद्देशादानीता जनकात्मजा ॥ १२
सा मे न शय्यामारोढुमिच्छत्यलसगामिनी[2] । त्रिषु लोकेषु चान्या मे न सीतासदृशी मता ॥
तनुमध्या पृथुश्रोणी शारदेन्दुनिभानना । हेमबिम्बनिभा सौम्या मायेव मयनिर्मिता ॥ १४
सुलोहिततलौ श्लक्ष्णौ चरणौ सुप्रतिष्ठितौ । दृष्ट्वा ताम्रनखौ तस्या दीप्यते मे शरीरजः ॥ १५
हुताग्नेरर्चिसंकाशामेनां सौरीमिव प्रभाम् । दृष्ट्वा सीतां विशालाक्षीं कामस्य वशमेयिवान्[3] ॥ १६
उन्नसं वदनं वल्गु विपुलं चारुलोचनम् । पश्यंस्तदा वशस्तस्याः कामस्य वशमेयिवान् ॥ १७
क्रोधहर्षसहायेन दुर्वर्णकरणेन च । शोकसंतापनित्येन कामेन कलुषीकृतः ॥ १८

---

१. योधानधिकरक्षायाम् च. ।
२. अस्यानन्तरम्—तरुणी रूपसंपन्ना मत्त-मातङ्गगामिनी—इति क. ।
३. इदमर्धम् च. नास्ति ।

सा तु संवत्सरं कालं मामयाचत भामिनी । प्रतीक्षमाणा भर्तारं राममायतलोचना ॥ १९
तन्मया चारुनेत्रायाः प्रतिज्ञातं वचः शुभम् । श्रान्तोऽहं सततं कामाद्यातो हय इवाध्वनि ॥२०
कथं सागरमक्षोभ्यं [1]तरिष्यन्ति वनौकसः । बहुसत्त्वसमाकीर्णं तौ वा दशरथात्मजौ ॥ २१
अथवा कपिनैकेन कृतं नः कदनं महत् । दुर्ज्ञेयाः कार्यगतयो ब्रूत यस्य यथामति ॥ २२
मानुषान्मे भयं नास्ति तथापि तु विमृश्यताम् । तदा देवासुरे युद्धे युष्माभिः सहितोऽजयम् ॥
ते मे भवन्तश्च तथा सुग्रीवप्रमुखान् हरीन् । परे पारे समुद्रस्य पुरस्कृत्य नृपात्मजौ ॥ २४
सीतायाः पदवीं प्राप्तौ संप्राप्तौ वरुणालयम् । अदेया च यथा सीता वध्यौ दशरथात्मजौ॥ २५
भवद्भिर्मन्त्र्यतां मन्त्रः सुनीतिश्चाभिधीयताम् । न हि शक्तिं प्रपश्यामि जगत्यन्यस्य कस्यचित् ॥
सागरं वानरैस्तीर्त्वा निश्चयेन जयो मम । तस्य कामपरीतस्य निशम्य परिदेवितम् ॥ २७
कुम्भकर्णः प्रचुक्रोध वचनं चेदमब्रवीत् ॥

यदा तु रामस्य सलक्ष्मणस्य प्रसह्य सीता खलु सा इहाहृता ।
सकृत्समीक्ष्यैव सुनिश्चितं तदा भजेत चित्तं यमुनेव यामुनम् ॥ २८

सर्वमेतन्महाराज कृतमप्रतिमं तव । विधीयेत सहास्माभिरादावेवास्य कर्मणः ॥ २९
न्यायेन राजा कार्याणि यः करोति दशानन । न स संतप्यते पश्चान्निश्चितार्थमतिर्नृपः ॥ ३०
अनुपायेन कर्माणि विपरीतानि यानि च । क्रियमाणानि दुष्यन्ति हवींष्यप्रयतेष्विव ॥ ३१
यः पश्चात्पूर्वकार्याणि कुरुते बुद्धिमोहितः । पूर्वं चोत्तरकार्याणि न स वेद नयानयौ ॥ ३२
चपलस्य तु कृत्येषु प्रसमीक्ष्याधिकं बलम् । [2]छिद्रमन्ये प्रपद्यन्ते क्रौञ्चस्य खमिव द्विजाः॥ ३३
त्वयेदं महदारब्धं कार्यमप्रतिचिन्तितम् । दिष्ट्या त्वां नावधीद्रामो विषमिश्रमिवामिषम्॥ ३४
तस्मात्त्वया समारब्धं कर्म ह्यप्रतिमं परैः । अहं समीकरिष्यामि हत्वा शत्रूंस्तवानघ[3]॥ ३५
यदि शक्रविवस्वन्तौ यदि पावकमारुतौ । तावहं योधयिष्यामि कुबेरवरुणावपि ॥ ३६
गिरिमात्रशरीरस्य शितशूलधरस्य च[4]। नर्दतस्तीक्ष्णदंष्ट्रस्य बिभियाद्वै पुरन्दरः ॥ ३७
पुनर्मां स द्वितीयेन शरेण निहनिष्यति । ततोऽहं तस्य पास्यामि रुधिरं काममाश्वस ॥ ३८

वधेन वै दाशरथेः सुखावहं जयं तवाहर्तुमहं यतिष्ये ।
हत्वा च रामं सह लक्ष्मणेन खादामि सर्वान् हरियूथमुख्यान् ॥ ३९

---

१. उत्तरन्ति घ. ।
२. क्षिप्रम् च. छ. ।
३. अस्यानन्तरम् — अहमुत्सादयिष्यामि शत्रूंस्तव विशांपते—इति च. ।
४. महापरिघयोधिनः च. ।

रमस्व कामं पिब चाग्र्यवारुणीं कुरुष्व कार्याणि हितानि विज्वरः ।
मया तु रामे गमिते यमक्षयं चिराय सीता वशगा भविष्यति ॥ ४०

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
युद्धकाण्डे कुम्भकर्णमतिर्नाम द्वादशः सर्गः

---

## त्रयोदशः सर्गः

### महापार्श्ववचोऽभिनन्दनम्

रावणं क्रुद्धमाज्ञाय महापार्श्वो महाबलः । मुहूर्तमनुसंचिन्त्य प्राञ्जलिर्वाक्यमब्रवीत् ॥ १
यः खल्वपि वनं प्राप्य मृगव्यालसमाकुलम् । न पिबेन्मधु संप्राप्तं स नरो बालिशो भवेत् ॥ २
ईश्वरस्येश्वरः कोऽस्ति तव शत्रुनिबर्हण । रमस्व सह वैदेह्या शत्रूनाक्रम्य मूर्धसु ॥ ३
बलात्कुक्कुटवृत्तेन वर्तस्व सुमहाबल । आक्रम्य सीतां वैदेहीं तथा भुङ्क्ष्व रमस्व च ॥ ४
लब्धकामस्य ते पश्चादागमिष्यति यद्भयम् । प्राप्तमप्राप्तकालं वा सर्वं प्रतिसहिष्यसि ५
कुम्भकर्णः सहास्माभिरिन्द्रजिच्च महाबलः । प्रतिषेधयितुं शक्तौ सवज्रमपि वज्रिणम् ६
उपप्रदानं सान्त्वं वा भेदं वा कुशलैः कृतम् । समतिक्रम्य दण्डेन सिद्धिमर्थेषु रोचय ॥ ७
इह प्राप्तान् वयं सर्वाञ्शत्रूंस्तव महाबल । वशे शस्त्रप्रपातेन करिष्यामो न संशयः ॥ ८
एवमुक्तस्तदा राजा महापार्श्वेन रावणः । तस्य संपूजयन् वाक्यमिदं वचनमब्रवीत् ॥ ९
महापार्श्व निबोध त्वं रहस्यं किंचिदात्मनः । चिरवृत्तं तदाख्यास्ये यदवाप्तं मया पुरा ॥ १०
पितामहस्य भवनं गच्छन्तीं पुञ्जिकस्थलाम् । चञ्चूर्यमाणामद्राक्षमाकाशेऽग्निशिखामिव ॥ ११
सा प्रसह्य मया भुक्ता कृता विवसना ततः । स्वयंभूभवनं प्राप्ता लोलिता नलिनी यथा ॥ १२
तस्य तच्च तदा मन्ये ज्ञातमासीन्महात्मनः । अथ संकुपितो वेधा[1] मामिदं वाक्यमब्रवीत् ॥ १३
अद्यप्रभृति यामन्यां बलान्नारीं गमिष्यसि । तदा ते शतधा मूर्धा फलिष्यति न संशयः ॥ १४
इत्यहं तस्य शापस्य भीतः प्रसभमेव ताम् । नारोपये बलात्सीतां वैदेहीं शयने स्वके[2] ॥ १५
सागरस्येव मे वेगो मारुतस्येव मे गतिः । नैतद्दाशरथिर्वेद ह्यासादयति तेन माम् ॥ १६
यस्तु सिंहमिवासीनं सुप्तं गिरिगुहाशये । क्रुद्धं मृत्युमिवासीनं प्रबोधयितुमिच्छति ॥ १७
न मत्तो निर्गतान् बाणान् द्विजिह्वानिव पन्नगान् । रामः पश्यति संग्रामे तेन मामभिगच्छति ॥
क्षिप्रं वज्रोपमैर्बाणैः शतधा कार्मुकच्युतैः । राममादीपयिष्यामि उल्काभिरिव कुञ्जरम् ॥ १९
तच्चास्य बलमादास्ये बलेन महता वृतः । उदयन् सविता काले नक्षत्राणामिव प्रभाम् ॥ २०

---

१. देवः च. छ. । २. शुभे च.

न वासवेनापि सहस्रचक्षुषा युधास्मि शक्यो वरुणेन वा पुनः ।
मया त्वियं बाहुबलेन निर्जिता पुरी पुरा वैश्रवणेन पालिता ॥ २१

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
युद्धकाण्डे महापार्श्ववचोऽभिनन्दनं नाम त्रयोदशः सर्गः

---

## चतुर्दशः सर्गः

### प्रहस्तविभीषणविवादः

निशाचरेन्द्रस्य निशम्य वाक्यं स कुम्भकर्णस्य च गर्जितानि ।
विभीषणो राक्षसराजमुख्यमुवाच वाक्यं हितमर्थयुक्तम् ॥ १

वृतो हि बाह्वन्तरभोगराशिश्चिन्ताविषः सुस्मिततीक्ष्णदंष्ट्रः ।
पञ्चाङ्गुलीपञ्चशिरोऽतिकायः सीतामहाहिस्तव केन राजन्[1] ॥ २

यावन्न लङ्कां समभिद्रवन्ति वलीमुखाः पर्वतकूटमात्राः ।
दंष्ट्रायुधाश्चैव नखायुधाश्च प्रदीयतां दाशरथाय मैथिली ॥ ३

यावन्न गृह्णन्ति शिरांसि बाणा रामेरिता राक्षसपुंगवानाम् ।
वज्रोपमा वायुसमानवेगाः प्रदीयतां दाशरथाय मैथिली ॥ ४

न कुम्भकर्णेन्द्रजितौ च राजंस्तथा महापार्श्वमहोदरौ वा ।
निकुम्भकुम्भौ च तथातिकायः स्थातुं न शक्ता युधि राघवस्य ॥ ५

जीवंस्तु रामस्य न मोक्ष्यसे त्वं गुप्तः सवित्राप्यथ वा मरुद्भिः ।
न वासवस्याङ्कगतो न मृत्योर्न खं[2] न पातालमनुप्रविष्टः ॥ ६

निशम्य वाक्यं तु विभीषणस्य ततः प्रहस्तो वचनं बभाषे ।
न नो भयं विद्म न दैवतेभ्यो न दानवेभ्यो ह्यथवा कुतश्चित् ॥ ७

न यक्षगन्धर्वमहोरगेभ्यो भयं न संख्ये पतगोत्तमेभ्यः ।
कथं नु रामाद्भविता भयं नो नरेन्द्रपुत्रात्समरे कदाचित् ॥ ८

प्रहस्तवाक्यं त्वहितं निशम्य विभीषणो राजहितानुकाङ्क्षी ।
ततो महार्थं[3] वचनं बभाषे धर्मार्थकामेषु निविष्टबुद्धिः ॥ ९

---

१. अस्यानन्तरम्—पुरा शरान् सूर्यमरीचिसंनिभान् सुवर्णपुङ्खान् सुदृढान्नृपात्मजः । सृजत्यमोघान् विशिखान् वधाय ते प्रदीयतां दाशरथाय मैथिली ॥—इति ग. ।

२. नभः च. ।

३. महात्मा च. छ. ।

प्रहस्त राजा च महोदरश्च त्वं कुम्भकर्णश्च यदर्थजातम् ।
ब्रवीथ रामं प्रति तन्न शक्यं यथा गतिः स्वर्गमधर्मबुद्धेः ॥ १०

वधस्तु रामस्य मया त्वया वा प्रहस्त सर्वैरपि राक्षसैर्वा ।
कथं भवेदर्थविशारदस्य महार्णवं तर्तुमिवाप्लवस्य ॥ ११

धर्मप्रधानस्य महारथस्य इक्ष्वाकुवंशप्रभवस्य राज्ञः ।
प्रहस्त[1] देवाश्च तथाविधस्य कृत्येषु शक्तस्य भवन्ति मूढाः ॥ १२

तीक्ष्णा न तावत्तव[2] कङ्कपत्रा दुरासदा राघवविप्रमुक्ताः ।
भित्त्वा शरीरं प्रविशन्ति बाणाः प्रहस्त तेनैव विकत्थसे त्वम्[3] ॥ १३

न रावणो नातिबलस्त्रिशीर्षो न कुम्भकर्णोऽस्य[4] सुतो निकुम्भः ।
न चेन्द्रजिद्दाशरथिं प्रसोढुं त्वं वा रणे शक्रसमं समर्थाः ॥ १४

देवान्तको वापि नरान्तको वा तथातिकायोऽतिरथो महात्मा ।
अकम्पनश्चाद्रिसमानसारः स्थातु न शक्ता युधि राघवस्य ॥ १५

अयं हि राजा व्यसनाभिभूतो मित्रैरमित्रप्रतिमैर्भवद्भिः ।
अन्वास्यते राक्षसनाशनाय तीक्ष्णः प्रकृत्या ह्यसमीक्ष्यकारी ॥ १६

अनन्तभोगेन सहस्रमूर्ध्ना नागेन भीमेन महाबलेन ।
बलात्परिक्षिप्तमिमं भवन्तो राजानमुत्क्षिप्य विमोचयन्तु ॥ १७

यावद्धि केशग्रहणात्[5] सुहृद्भिः समेत्य सर्वैः परिपूर्णकामैः ।
निगृह्य राजा परिरक्षितव्यो भूतैर्यथा भीमबलैर्गृहीतः ॥ १८

सुवारिणा[6] राघवसागरेण प्रच्छाद्यमानस्तरसा भवद्भिः ।
युक्तस्त्वयं तारयितुं समेत्य काकुत्स्थपातालमुखे पतन् सः ॥ १९

इदं पुरस्यास्य सराक्षसस्य राज्ञश्च पथ्यं ससुहृज्जनस्य ।
सम्यग्घि वाक्यं सततं ब्रवीमि नरेन्द्रपुत्राय ददाम पत्नीम् ॥ २०

---

१. पुरोऽस्य पुना. । —इति च. ।

२. नता यस्तव च. छ. ।

३. अस्यानन्तरम्—भित्त्वा न तावत्प्रविशन्ति कायं प्राणान्तिकास्तेऽशनितुल्यवेगाः । शिताः शरा राघवविप्रमुक्ताः प्रहस्त तेनैव विकत्थसे त्वम् ॥

४. कुम्भकर्णस्य छ ।

५. केशग्रहणम् च. छ.

६. संहारिणा च. छ. ।

परस्य वीर्यं स्वबलं च बुद्धा स्थानं क्षयं चैव तथैव वृद्धिम् ।
तथा स्वपक्षेऽप्यनुमृश्य बुद्ध्या वदेत्क्षमं स्वामिहितं च मन्त्री ॥ २१

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
युद्धकाण्डे प्रहस्तविभीषणविवादो नाम चतुर्दशः सर्गः

---

## पञ्चदशः सर्गः

### इन्द्रजिद्विभीषणविवादः

बृहस्पतेस्तुल्यमतेर्वचस्तन्निशम्य यत्नेन विभीषणस्य ।
ततो महात्मा वचनं बभाषे तत्रेन्द्रजिन्नैर्ऋतयोधमुख्यः ॥ १

किं नाम ते तात कनिष्ठवाक्यमनर्थकं चैव सुभीतवच्च ।
अस्मिन् कुले योऽपि भवेन्न जातः सोऽपीदृशं नैव वदेन्न कुर्यात् ॥ २

सत्त्वेन वीर्येण पराक्रमेण शौर्येण धैर्येण च तेजसा च ।
एकः कुलेऽस्मिन् पुरुषो विमुक्तो विभीषणस्तात कनिष्ठ एषः ॥ ३

किं नाम तौ राक्षस राजपुत्रावस्माकमेकेन हि राक्षसेन ।
सुप्राकृतेनापि रणे निहन्तुं शक्यौ कुतो भीषयसे स्म भीरो ॥ ४

त्रिलोकनाथो ननु देवराजः शक्रो मया भूमितले निविष्टः ।
भयार्दिताश्चापि दिशः प्रपन्नाः सर्वे तथा देवगणाः समग्राः ॥ ५

ऐरावतो विस्वरमुन्नदन् स निपातितो भूमितले मया तु ।
विकृष्य दन्तौ तु मया प्रसह्य वित्रासिता देवगणाः समग्राः ॥ ६

सोऽहं सुराणामपि दर्पहन्ता दैत्योत्तमानामपि शोकदाता ।
कथं नरेन्द्रात्मजयोर्न शक्तो मनुष्ययोः प्राकृतयोः सुवीर्यः ॥ ७

अथेन्द्रकल्पस्य दुरासदस्य महौजसस्तद्वचनं निशम्य ।
ततो महार्थं वचनं बभाषे विभीषणः शस्त्रभृतां वरिष्ठः ॥ ८

न तात मन्त्रे मम निश्चयोऽस्ति बालस्त्वमद्याप्यविपक्वबुद्धिः ।
तस्मात्त्वया ह्यात्मविनाशनाय वचोऽर्थहीनं बहु विप्रलप्तम् ॥ ९

पुत्रप्रवादेन तु रावणस्य त्वमिन्द्रजिन्मित्रमुखोऽसि शत्रुः ।
यस्येदृशं राघवतो विनाशं निशम्य मोहादनुमन्यसे त्वम् ॥ १०

त्वमेव वध्यश्च सुदुर्मतिश्च स चापि वध्यो य इहानयत्त्वाम् ।
बालं दृढं साहसिकं च योऽद्य प्रावेशयन्मन्त्रकृतां समीपम् ॥ ११

[1]मूढोऽप्रगल्भोऽविनयोपपन्नस्तीक्ष्णस्वभावोऽल्पमतिर्दुरात्मा ।
मूर्खस्त्वमत्यन्तसुदुर्मतिश्च त्वमिन्द्रजिद्बालतया ब्रवीषि ॥ १२

को ब्रह्मदण्डप्रतिमप्रकाशानर्चिष्मतः कालनिकाशरूपान् ।
सहेत बाणान् यमदण्डकल्पान् समीक्ष्य मुक्तान् युधि राघवेण ॥ १३

धनानि रत्नानि विभूषणानि वासांसि दिव्यानि मणींश्च चित्रान् ।
सीतां च रामाय निवेद्य देवीं वसेम राजन्निह वीतशोकाः ॥ १४

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
युद्धकाण्डे इन्द्रजिद्विभीषणविवादो नाम पञ्चदशः सर्गः

---

## षोडशः सर्गः

### विभीषणाक्रोशः

सुनिविष्टं हितं वाक्यमुक्तवन्तं विभीषणम् । अब्रवीत्परुषं वाक्यं रावणः कालचोदितः ॥ १
वसेत्सह सपत्नेन क्रुद्धेनाशीविषेण वा । न तु मित्रप्रवादेन संवसेच्छत्रुसेविना ॥ २
जानामि शीलं ज्ञातीनां सर्वलोकेषु राक्षस । हृष्यन्ति व्यसनेष्वेते ज्ञातीनां ज्ञातयः सदा ॥ ३
प्रधानं साधकं वैद्यं धर्मशीलं च राक्षस । ज्ञातयो ह्यवमन्यन्ते शूरं परिभवन्ति च ॥ ४
नित्यमन्योन्यसंहृष्टा व्यसनेष्वाततायिनः । प्रच्छन्नहृदया घोरा ज्ञातयस्तु भयावहाः ॥ ५
श्रूयन्ते हस्तिभिर्गीताः श्लोकाः पद्मवने क्वचित् । पाशहस्तान्नरान् दृष्ट्वा शृणु तान् गदतो मम॥
नाग्निर्नान्यानि शस्त्राणि न नः पाशा भयावहाः। घोराः स्वार्थप्रयुक्तास्तु ज्ञातयो नो भयावहाः॥
उपायमेते वक्ष्यन्ति ग्रहणे नात्र संशयः । कृत्स्नाद्भयाज्ज्ञातिभयं सुकष्टं विदितं च नः ॥ ८
विद्यते गोषु संपन्नं विद्यते ब्राह्मणे दमः । विद्यते स्त्रीषु चापल्यं विद्यते ज्ञातितो भयम् ॥ ९
ततो नेष्टमिदं सौम्य यदहं लोकसत्कृतः । ऐश्वर्येणाभिजातश्च रिपूणां मूर्ध्न्यवस्थितः[2]॥ १०
यथा पुष्करपर्णेषु पतितास्तोयबिन्दवः । न श्लेषमुपगच्छन्ति तथानार्येषु सौहृदम् ॥ ११
यथा मधुकरस्तर्षाद्रसं विन्दन्न विद्यते । तथा त्वमपि तत्रैव तथानार्येषु सौहृदम् ॥ १२
यथा पूर्वं गजः स्नात्वा गृह्य हस्तेन वै रजः । दूषयत्यात्मनो देहं तथानार्येषु सौहृदम् ॥ १३
यथा शरदि मेघानां सिञ्चतामपि गर्जताम् । न भवत्यम्बुसंक्लेदस्तथानार्येषु सौहृदम् ॥ १४

---

१. मूढः प्रगल्भो विनयोपपन्नः च । २. मूर्ध्नि च स्थितः छ, ।

अन्यस्त्वेवंविधं ब्रूयाद्वाक्यमेतन्निशाचर । अस्मिन् मुहुर्ते न भवेत्त्वां तु धिक्कुलपांसनम् ॥१५
इत्युक्तः परुषं वाक्यं न्यायवादी विभीषणः । उत्पपात गदापाणिश्चतुर्भिः सह राक्षसैः ॥ १६
अब्रवीच्च तदा वाक्यं जातक्रोधो विभीषणः । अन्तरिक्षगतः श्रीमान् भ्रातरं राक्षसाधिपम् ॥१७
स त्वं भ्रातासि मे राजन् ब्रूहि मां यद्यदिच्छसि । ज्येष्ठो मान्यः पितृसमो न च धर्मपथे स्थितः॥
इदं तु परुषं वाक्यं न क्षमाम्यनृतं[1] तव । सुनीतं हितकामेन वाक्यमुक्तं दशानन ॥ १९
न गृह्णन्त्यकृतात्मानः कालस्य वशमागताः । सुलभाः पुरुषा राजन् सततं प्रियवादिनः ॥ २०
अप्रियस्य तु पथ्यस्य वक्ता श्रोता च दुर्लभः । बद्धं कालस्य पाशेन सर्वभूतापहारिणा ॥ २१
न नश्यन्तमुपेक्षेयं प्रदीप्तं शरणं यथा । दीप्तपावकसंकाशैः शितैः काञ्चनभूषणैः ॥ २२
न त्वामिच्छाम्यहं द्रष्टुं रामेण निहतं शरैः । शूराश्च बलवन्तश्च कृतास्त्राश्च रणाजिरे ॥ २३
कालाभिपन्नाः सीदन्ति यथा वालुकसेतवः । तन्मर्षयतु यच्चोक्तं गुरुत्वाद्धितमिच्छता ॥ २४
आत्मानं सर्वथा रक्ष पुरीं चेमां सराक्षसाम् । स्वस्ति तेऽस्तु गमिष्यामि सुखी भव मया विना[2] ॥

निवार्यमाणस्य मया हितैषिणा न रोचते ते वचनं निशाचर ।
परीतकाला हि गतायुषो नरा हितं न गृह्णन्ति सुहृद्भिरीरितम् ॥ २६

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
युद्धकाण्डे विभीषणाक्रोशो नाम षोडशः सर्गः

---

## सप्तदशः सर्गः

### विभीषणशरणागतिनिवेदनम्

इत्युक्त्वा परुषं वाक्यं रावणं रावणानुजः । आजगाम मुहूर्तेन यत्र रामः सलक्ष्मणः ॥ १
तं मेरुशिखराकारं दीप्तामिव शतह्रदाम् । गगनस्थं महीस्थास्ते ददृशुर्वानराधिपाः ॥ २
स हि मेघाचलप्रख्यो वज्रायुधसमप्रभः । वरायुधधरो वीरो दिव्याभरणभूषितः ॥ ३
ये चाप्यनुचरास्तस्य चत्वारो भीमविक्रमाः । तेऽपि वर्मायुधोपेता भूषणैश्च विभूषिताः[3] ॥ ४
तमात्मपञ्चमं दृष्ट्वा सुग्रीवो वानराधिपः । वानरैः सह दुर्धर्षश्चिन्तयामास बुद्धिमान् ॥ ५
चिन्तयित्वा मुहूर्तं तु वानरांस्तानुवाच ह । हनुमत्प्रमुखान् सर्वानिदं वचनमुत्तमम् ॥ ६
एष सर्वायुधोपेतश्चतुर्भिः सह राक्षसैः । राक्षसोऽभ्येति पश्यध्वमस्मान् हन्तुं न संशयः ॥ ७
सुग्रीवस्य वचः श्रुत्वा सर्वे ते वानरोत्तमाः । सालानुद्यम्य शैलांश्च इदं वचनमब्रुवन् ॥ ८

---

१. अहितम् क. छ. ।

२. अस्यानन्तरम्—नूनं न ते राक्षस कश्चिदस्ति रक्षोनिकायेषु सुहृत् सखा वा । हितोपदेशस्य न मन्त्रवक्ता यो वारयेत्त्वां स्वयमेव पापात् ॥—इति छ. ।

३. ३, ४ पद्ये च. न स्तः।

शीघ्रं व्यादिश नो राजन् वधायैषां दुरात्मनाम्। निपतन्ति हता यावद्धरण्यामल्पतेजसः ॥ ९
तेषां संभाषमाणानामन्योन्यं स विभीषणः । उत्तरं तीरमासाद्य खस्थ एव व्यतिष्ठत ॥ १०
उवाच च महाप्राज्ञः स्वरेण महता महान्। सुग्रीवं तांश्च संप्रेक्ष्य सर्वान् वानरयूथपान् ॥ ११
रावणो नाम दुर्वृत्तो राक्षसो राक्षसेश्वरः । तस्याहमनुजो भ्राता विभीषण इति श्रुतः ॥ १२
तेन सीता जनस्थानाद्धृता हत्वा जटायुषम् । रुद्धा च विवशा दीना राक्षसीभिः सुरक्षिता॥ १३
तमहं हेतुभिर्वाक्यैर्विविधैश्च न्यदर्शयम् । साधु निर्यात्यतां सीता रामायेति पुनः पुनः ॥ १४
स च न प्रतिजग्राह रावणः कालचोदितः । उच्यमानं हितं वाक्यं विपरीत इवौषधम् ॥ १५
सोऽहं परुषितस्तेन दासवच्चावमानितः । त्यक्त्वा पुत्रांश्च दारांश्च राघवं शरणं गतः ॥ १६
सर्वलोकशरण्याय राघवाय महात्मने । निवेदयत मां क्षिप्रं विभीषणमुपस्थितम् ॥ १७
एतत्तु वचनं श्रुत्वा सुग्रीवो लघुविक्रमः । लक्ष्मणस्याग्रतो रामं संरब्धमिदमब्रवीत् ॥ १८
रावणस्यानुजो भ्राता विभीषण इति श्रुतः । चतुर्भिः सह रक्षोभिर्भवन्तं शरणं गतः ॥ १९
मन्त्रे व्यूहे नये चारे युक्तो भवितुमर्हसि । वानराणां च भद्रं ते परेषां च परंतप ॥ २०
अन्तर्धानगता ह्येते राक्षसाः कामरूपिणः । शूराश्च निकृतिज्ञाश्च तेषु जातु न विश्वसेत् ॥ २१
प्रणिधी राक्षसेन्द्रस्य रावणस्य भवेदयम् । अनुप्रविश्य सोऽस्मासु भेदं कुर्यान्न संशयः ॥ २२
अथवा स्वयमेवैष छिद्रमासाद्य बुद्धिमान्। अनुप्रविश्य विश्वस्ते कदाचित्प्रहरेदपि ॥ २३
मित्राटविबलं चैव मौलं भृत्यबलं तथा । सर्वमेतद्बलं ग्राह्यं वर्जयित्वा द्विषद्बलम् ॥ २४
प्रकृत्या राक्षसो ह्येष भ्रातामित्रस्य वै प्रभो । आगतश्च रिपोः पक्षात्कथमस्मिन् हि विश्वसेत् ॥
रावणेन प्रणिहितं तमवेहि विभीषणम्। तस्याहं निग्रहं मन्ये क्षमं क्षमवतां वर ॥ २६
राक्षसो जिह्मया बुद्ध्या संदिष्टोऽयमुपस्थितः । प्रहर्तुं मायया छन्नो विश्वस्ते त्वयि राघव ॥ २७
प्रविष्टः शत्रुसैन्यं हि प्राज्ञः शत्रुरतर्कितः । निहन्यादन्तरं लब्ध्वा उलूक इव वायसान् ॥ २८
वध्यतामेष दण्डेन तीव्रेण सचिवैः सह । रावणस्य नृशंसस्य भ्राता ह्येष विभीषणः ॥ २९
एवमुक्त्वा तु तं रामं संरब्धो वाहिनीपतिः । वाक्यज्ञो वाक्यकुशलं ततो मौनमुपागमत्॥ ३०
सुग्रीवस्य तु तद्वाक्यं श्रुत्वा रामो महायशाः । समीपस्थानुवाचेदं हनुमत्प्रमुखान् हरीन् ॥ ३१
यदुक्तं कपिराजेन रावणावरजं प्रति । वाक्यं हेतुमदर्थ्यं च भवद्भिरपि तच्छ्रुतम् ॥ ३२
सुहृदा ह्यर्थकृच्छ्रेषु युक्तं बुद्धिमता सता । समर्थेनापि संदेष्टुं शाश्वतीं भूतिमिच्छता ॥ ३३
इत्येवं परिपृष्टास्ते स्वं स्वं मतमतन्द्रिताः । सोपचारं तदा राममूचुर्हितचिकीर्षवः ॥ ३४
अज्ञातं नास्ति ते किंचित्त्रिषु लोकेषु राघव। आत्मानं सूचयन् राम पृच्छस्यस्मान् सुहृत्तया॥ ३५
त्वं हि सत्यव्रतः शूरो धार्मिको दृढविक्रमः । परीक्ष्यकारी स्मृतिमान्निसृष्टात्मा सुहृत्सु च॥ ३६
तस्मादेकैकशस्तावद्ब्रुवन्तु सचिवास्तव । हेतुतो मतिसंपन्नाः समर्थाश्च पुनः पुनः ॥ ३७

इत्युक्ते राघवायाथ मतिमानङ्गदोऽग्रतः । विभीषणपरीक्षार्थमुवाच वचनं हरिः ॥ ३८
शत्रोः सकाशात्संप्राप्तः सर्वथा शङ्क्य एव हि । विश्वासयोग्यः सहसा न कर्तव्यो विभीषणः ॥
छादयित्वात्मभावं हि चरन्ति शठबुद्धयः । प्रहरन्ति च रन्ध्रेषु सोऽनर्थः सुमहान् भवेत् ॥ ४०
अर्थानर्थौ विनिश्चित्य व्यवसायं भजेत ह । गुणतः संग्रहं कुर्याद्दोषतस्तु विसर्जयेत् ॥ ४१
यदि दोषो महांस्तस्मिंस्त्यज्यतामविशङ्कितम् । गुणान् वापि बहूञ्ज्ञात्वा संग्रहः क्रियतां नृप ॥
शरभस्त्वथ निश्चित्य साध्यं वचनमब्रवीत । क्षिप्रमस्मिन्नरव्याघ्र चारः प्रतिविधीयताम् ॥ ४३
प्रणिधाय हि चारेण यथावत्सूक्ष्मबुद्धिना । परीक्ष्य च ततः कार्यो यथान्यायं परिग्रहः ॥ ४४
जाम्बवांस्त्वथ संप्रेक्ष्य शास्त्रबुद्ध्या विचक्षणः[1] । वाक्यं विज्ञापयामास गुणवद्दोषवर्जितम् ॥ ४५
बद्धवैराच्च पापाच्च राक्षसेन्द्राद्विभीषणः । अदेशकाले संप्राप्तः सर्वथा शङ्क्यतामयम् ॥ ४६
ततो मैन्दस्तु संप्रेक्ष्य नयापनयकोविदः । वाक्यं वचनसंपन्नो बभाषे हेतुमत्तरम् ॥ ४७
वचनं[2] नाम तस्यैष रावणस्य विभीषणः । पृच्छ्यतां मधुरेणायं शनैर्नरवरेश्वर ॥ ४८
भावमस्य तु विज्ञाय ततस्तत्त्वं करिष्यसि । यदि दुष्टो न दुष्टो वा बुद्धिपूर्वं नरर्षभ ॥ ४९
अथ संस्कारसंपन्नो हनूमान् सचिवोत्तमः । उवाच वचनं श्लक्ष्णमर्थवन्मधुरं लघु ॥ ५०
न भवन्तं मतिश्रेष्ठं समर्थं वदतां वरम् । अतिशाययितुं शक्तो बृहस्पतिरपि ब्रुवन् ॥ ५१
न वादान्नापि सङ्घर्षान्नाधिक्यान्न च कामतः । वक्ष्यामि वचनं राजन् यथार्थं राम गौरवात् ५२
अर्थानर्थनिमित्तं हि यदुक्तं सचिवैस्तव । तत्र दोषं प्रपश्यामि क्रिया न ह्युपपद्यते ॥ ५३
ऋते नियोगात्सामर्थ्यमवबोद्धुं न शक्यते । सहसा विनियोगो हि दोषवान् प्रतिभाति मा ॥५४
चारप्रणिहितं युक्तं यदुक्तं सचिवैस्तव । अर्थस्यासंभवात्तत्र कारणं नोपपद्यते ॥ ५५
अदेशकाले संप्राप्त इत्ययं यद्विभीषणः । विवक्षा तत्र मेऽस्तीयं तां निबोध यथामति ॥ ५६
स एष देशः कालश्च भवतीति यथा तथा । पुरुषात्पुरुषं प्राप्य तथा दोषगुणावपि ॥ ५७
दौरात्म्यं रावणे दृष्ट्वा विक्रमं च तथा त्वयि । युक्तमागमनं तस्य सदृशं तस्य बुद्धितः ५८
अज्ञातरूपैः पुरुषैः स राजन् पृच्छ्यतामिति । यदुक्तमत्र मे प्रेक्षा काचिदस्ति समीक्षिता ॥५९
पृच्छ्यमानो विशङ्केत सहसा बुद्धिमान् वचः । तत्र मित्रं प्रदुष्येत मिथ्या पृष्टं सुखागतम् ॥६०
अशक्यः सहसा राजन् भावो वेत्तुं परस्य वै । अन्तः स्वभावैर्गीतैस्तैर्नैपुण्यं पश्यता भृशम् ॥
न त्वस्य ब्रुवतो जातु लक्ष्यते दुष्टभावता । प्रसन्नं वदनं चापि तस्मान्मे नास्ति संशयः ॥६२
अशङ्कितमतिः स्वस्थो न शठः परिसर्पति । न चास्य दुष्टा वाक् चापि तस्मान्नास्तीह संशयः॥
आकारश्छाद्यमानोऽपि न शक्यो विनिगूहितुम् । बलाद्धि विवृणोत्येव भावमन्तर्गतं नृणाम् ॥

---

१. हेत्वर्थं विनयान्वितम् क. । २. अनुजः पुना. ।

देशकालोपपन्नं च कार्यं कार्यविदां वर । सफलं कुरुते क्षिप्रं प्रयोगेणाभिसंहितम् ॥ ६५
उद्योगं तव संप्रेक्ष्य मिथ्यावृत्तं च रावणम् । वालिनश्च वधं श्रुत्वा सुग्रीवं चाभिषेचितम् ॥ ६६
राज्यं प्रार्थयमानश्च बुद्धिपूर्वमिहागतः[1] । एतावत्तु पुरस्कृत्य युज्यते त्वस्य संग्रहः ॥ ६७
यथाशक्ति मयोक्तं तु राक्षसस्यार्जवं प्रति । त्वं प्रमाणं तु शेषस्य श्रुत्वा बुद्धिमतां वर ॥ ६८

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
युद्धकाण्डे विभीषणशरणागतिनिवेदनं नाम सप्तदशः सर्गः

---

## अष्टादशः सर्गः

### विभीषणसंग्रहनिर्णयः

अथ रामः प्रसन्नात्मा श्रुत्वा वायुसुतस्य ह । प्रत्यभाषत दुर्धर्षः श्रुतवानात्मनि स्थितम् ॥ १
ममापि तु विवक्षास्ति काचित्प्रति विभीषणम् । श्रुतमिच्छामि तत्सर्वं भवद्भिः श्रेयसि स्थितैः ॥
मित्रभावेन संप्राप्तं न त्यजेयं कथंचन । दोषो यद्यपि तस्य स्यात्सतामेतदगर्हितम् ॥ ३
सुग्रीवस्त्वथ तद्वाक्यमाभाष्य च विमृश्य च । ततः शुभतरं वाक्यमुवाच हरिपुंगवः ॥ ४
सुदुष्टो वाप्यदुष्टो वा किमेष रजनीचरः । ईदृशं व्यसनं प्राप्तं भ्रातरं यः परित्यजेत् ॥ ५
को नाम स भवेत्तस्य यमेष न परित्यजेत् । वानराधिपतेर्वाक्यं श्रुत्वा सर्वानुदीक्ष्य च ॥ ६
ईषदुत्स्मयमानस्तु लक्ष्मणं पुण्यलक्षणम् । इति होवाच काकुत्स्थो वाक्यं सत्यपराक्रमः ॥ ७
अनधीत्य च शास्त्राणि वृद्धाननुपसेव्य च । न शक्यमीदृशं वक्तुं यदुवाच हरीश्वरः ॥ ८
अस्ति सूक्ष्मतरं किंचिद्यदत्र प्रतिभाति मे । प्रत्यक्षं लौकिकं वापि विद्यते सर्वराजसु ॥ ९
अमित्रास्तत्कुलीनाश्च प्रातिदेश्याश्च कीर्तिताः । व्यसनेषु प्रहर्तारस्तस्मादयमिहागतः ॥ १०
अपापास्तत्कुलीनाश्च मानयन्ति स्वकान् हितान् । एष प्रायो नरेन्द्राणां शङ्कनीयस्तु शोभनः ॥
यस्तु दोषस्त्वया प्रोक्तो ह्यादानेऽरिबलस्य च । तत्र ते कीर्तयिष्यामि यथाशास्त्रमिदं शृणु ॥
न वयं तत्कुलीनाश्च राज्यकाङ्क्षी च राक्षसः । पण्डिता हि भविष्यन्ति तस्माद्ग्राह्यो विभीषणः ॥
अव्यग्राश्च प्रहृष्टाश्च न भविष्यन्ति संगताः । प्रणादश्च महानेष ततोऽस्य भयमागतम् ॥ १४
इति भेदं गमिष्यन्ति तस्माद्ग्राह्यो विभीषणः । न सर्वे भ्रातरस्तात भवन्ति भरतोपमाः ॥ १५
मद्विधा वा पितुः पुत्राः सुहृदो वा भवद्विधाः । एवमुक्तस्तु रामेण सुग्रीवः सहलक्ष्मणः । ॥
उत्थायेदं महाप्राज्ञः प्रणतो वाक्यमब्रवीत् । रावणेन प्रणिहितं तमवेहि विभीषणम् ॥ १७
तस्याहं निग्रहं मन्ये क्षमं क्षमवतां वर । राक्षसो जिह्मया बुद्ध्या संदिष्टोऽयमिहागतः ॥ १८

१. अस्यानन्तरम्—अथैष भ्रातरं त्यक्त्वा राक्षसैः ॥—इति घ. ।
भवन्तं शरणं गतः । देशकालोपपन्नो हि आगतः सह

प्रहर्तुं त्वयि विश्वस्ते प्रच्छन्नो मयि वानघ। लक्ष्मणे वा महाबाहो स वध्यः सचिवैः सह ॥ १९
रावणस्य नृशंसस्य भ्राता ह्येष विभीषणः। एवमुक्त्वा रघुश्रेष्ठं सुग्रीवो वाहिनीपतिः ॥ २०
वाक्यज्ञो वाक्यकुशलं ततो मौनमुपागमत्। सुग्रीवस्य तु तद्वाक्यं श्रुत्वा रामो विमृश्य च ॥ २१
ततः शुभतरं वाक्यमुवाच हरिपुंगवम्। सुदुष्टो वाप्यदुष्टो वा किमेष रजनीचरः ॥ २२
सूक्ष्ममप्यहितं कर्तुं [1]ममाशक्तः कथंचन। पिशाचान् दानवान् यक्षान् पृथिव्यां चैव राक्षसान् ॥
अङ्गुल्यग्रेण तान् हन्यामिच्छन् हरिगणेश्वर। श्रूयते हि कपोतेन शत्रुः शरणमागतः ॥ २४
अर्चितश्च यथान्यायं स्वैश्च मांसैर्निमन्त्रितः। स हि तं प्रतिजग्राह भार्याहर्तारमागतम् ॥ २५
कपोतो वानरश्रेष्ठ किं पुनर्मद्विधो जनः। ऋषेः कण्वस्य पुत्रेण कण्डुना परमर्षिणा ॥ २६
शृणु गाथां पुरा गीतां धर्मिष्ठां सत्यवादिना। बद्धाञ्जलिपुटं दीनं याचन्तं शरणागतम् ॥ २७
न हन्यादानृशंस्यार्थमपि शत्रुं परंतप। आर्तो वा यदि वा दृप्तः परेषां शरणागतः ॥ २८
अपि[2] प्राणान् परित्यज्य रक्षितव्यः कृतात्मना। तं चेद्भयाद्वा मोहाद्वा कामाद्वापि न रक्षति ॥ २९
स्वया शक्त्या यथान्यायं[3] तत्पापं लोकगर्हितम्। विनष्टः पश्यतो यस्यारक्षितुः शरणागतः[4] ॥ ३०
आदाय सुकृतं तस्य सर्वं गच्छेदरक्षितः। एवं दोषो महानत्र प्रपन्नानामरक्षणे[5] ॥ ३१
अस्वर्ग्यं चायशस्यं च बलवीर्यविनाशनम्[6]। करिष्यामि यथार्थं तु कण्डोर्वचनमुत्तमम् ॥ ३२
धर्मिष्ठं च यशस्यं च स्वर्ग्यं स्यात्तु फलोदयम्[7]। सकृदेव प्रपन्नाय तवास्मीति च याचते ॥ ३३
अभयं सर्वभूतेभ्यो ददाम्येतद्व्रतं मम। आनयैनं हरिश्रेष्ठ दत्तमस्याभयं मया ॥ ३४
विभीषणो वा सुग्रीव यदि वा रावणः स्वयम्। रामस्य तु वचः श्रुत्वा सुग्रीवः प्लवगेश्वरः ॥ ३५
प्रत्यभाषत काकुत्स्थं सौहार्देनाभिचोदितः। किमत्र चित्रं धर्मज्ञ लोकनाथ सुखावह ॥ ३६
यत्त्वमार्यं प्रभाषेथाः सत्त्ववान् सत्पथे स्थितः। मम चाप्यन्तरात्मायं शुद्धं वेत्ति विभीषणम् ॥ ३७
अनुमानाच्च भावाच्च सर्वतः सुपरीक्षितः। तस्मात्क्षिप्रं सहास्माभिस्तुल्यो भवतु राघव ॥ ३८
विभीषणो महाप्राज्ञः सखित्वं चाभ्युपैतु नः ॥

ततस्तु सुग्रीववचो निशम्य तद्धरीश्वरेणाभिहितं नरेश्वरः।
विभीषणेनाशु जगाम संगमं पतत्रिराजेन यथा पुरंदरः ॥ ३९

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
युद्धकाण्डे विभीषणसंग्रहनिर्णयो नाम अष्टादशः सर्गः

---

१. मम शक्तः पुना.।
२. अरिः च.।
३. यथासत्त्वम् च.।
४. २९, ३० पद्ये क. न स्तः।
५. इदमर्धम् क. नास्ति।
६. अस्यानन्तरम्—शरणागतसंत्राणं कथमस्मद्विधश्चरेत् [त्यजेत्]—इति ख.।
७. फलोदये क. छ.।

## एकोनविंशः सर्गः

### शरतल्पसंवेशः

राघवेणाभये दत्ते संनतो रावणानुजः। विभीषणो महाप्राज्ञो भूमिं समवलोकयन्॥ १
खात्पपातावनीं हृष्टो भक्तैरनुचरैः सह। स तु रामस्य धर्मात्मा निपपात विभीषणः॥ २
पादयोः शरणान्वेषी चतुर्भिः सह राक्षसैः। अब्रवीच्च तदा रामं वाक्यं तत्र विभीषणः॥ ३
धर्मयुक्तं च युक्तं च मनसः[1] संप्रहर्षणम्। अनुजो रावणस्याहं तेन चास्म्यवमानितः॥ ४
भवन्तं सर्वभूतानां शरण्यं शरणं गतः। परित्यक्ता मया लङ्का मित्राणि च धनानि च॥ ५
भवद्गतं मे राज्यं च जीवितं च सुखानि च। तस्य तद्वचनं श्रुत्वा रामो वचनमब्रवीत्॥ ६
वचसा सान्त्वयित्वैनं लोचनाभ्यां पिबन्निव। आख्याहि मम तत्त्वेन राक्षसानां बलाबलम्॥ ७
एवमुक्तं तदा रक्षो रामेणाक्लिष्टकर्मणा। रावणस्य बलं सर्वमाख्यातुमुपचक्रमे॥ ८
अवध्यः सर्वभूतानां देवदानवराक्षसाम्[2]। राजपुत्र दशग्रीवो वरदानात्स्वयंभुवः॥ ९
रावणानन्तरो भ्राता मम ज्येष्ठश्च वीर्यवान्। कुम्भकर्णो महातेजाः शक्रप्रतिबलो युधि॥ १०
राम सेनापतिस्तस्य प्रहस्तो यदि वा श्रुतः। कैलासे येन संग्रामे माणिभद्रः पराजितः॥ ११
बद्धगोधाङ्गुलित्राणस्त्ववध्यकवचो युधि। धनुरादाय तिष्ठन् स त्वदृश्यो भवतीन्द्रजित्॥ १२
संग्रामे स महाव्यूहे[3] तर्पयित्वा हुताशनम्। अन्तर्धानगतः शत्रूनिन्द्रजिद्धन्ति राघव॥ १३
महोदरमहापार्श्वौ राक्षसश्चाप्यकम्पनः। अनीकपास्तु तस्यैते लोकपालसमा युधि॥ १४
दशकोटिसहस्राणि रक्षसां कामरूपिणाम्। मांसशोणितभक्षाणां लङ्कापुरनिवासिनाम्॥ १५
स तैः परिवृतो राजा लोकपालानयोधयत्। सह देवैस्तु ते भग्ना रावणेन महात्मना[4]॥ १६
विभीषणवचः श्रुत्वा रामो दृढपराक्रमः। अन्वीक्ष्य मनसा सर्वमिदं वचनमब्रवीत्॥ १७
यानि कर्मापदानानि रावणस्य विभीषण। आख्यातानि च तत्त्वेन ह्यवगच्छामि तान्यहम्॥
अहं हत्वा दशग्रीवं सप्रहस्तं सहानुजम्। राजानं त्वां करिष्यामि सत्यमेतद्ब्रवीमि ते॥ १९
रसातलं वा प्रविशेत्पातालं वापि रावणः। पितामहसकाशं वा न मे जीवन् विमोक्ष्यते॥
अहत्वा रावणं संख्ये सपुत्रबलबान्धवम्। अयोध्यां न प्रवेक्ष्यामि त्रिभिस्तैर्भ्रातृभिः शपे॥ २१
श्रुत्वा तु वचनं तस्य रामस्याक्लिष्टकर्मणः। शिरसा वन्द्य धर्मात्मा वक्तुमेवोपचक्रमे॥ २२
राक्षसानां वधे साह्यं लङ्कायाश्च प्रधर्षणे। करिष्यामि यथाप्राणं प्रवेक्ष्यामि च वाहिनीम्॥ २३
इति ब्रुवाणं रामस्तु परिष्वज्य विभीषणम्। अब्रवील्लक्ष्मणं प्रीतः समुद्राज्जलमानय॥ २४
तेन चैनं महाप्राज्ञमभिषिञ्च विभीषणम्। राजानं रक्षसां क्षिप्रं प्रसन्ने मयि मानद॥ २५
एवमुक्तस्तु सौमित्रिरभ्यषिञ्चद्विभीषणम्। मध्ये वानरमुख्यानां राजानं रामशासनात्॥ २६

---

१. साम्प्रतं घ. ङ.।
२. गन्धर्वामरराक्षसाम् क.।
३. संग्रामसमयव्यूहे च.।
४. दुरात्मना पुना.

तं प्रसादं तु रामस्य दृष्ट्वा सद्यः प्लवङ्गमाः। प्रचुक्रुशुर्महात्मानं साधु साध्विति चाब्रुवन् ॥ २७
अब्रवीच्च हनूमांस्तं सुग्रीवश्च विभीषणम्[1]। कथं सागरमक्षोभ्यं तराम वरुणालयम् ॥ २८
सैन्यैः परिवृताः सर्वे वानराणां महौजसाम्। उपायं नाधिगच्छामो यथा नदनदीपतिम् ॥२९
तराम तरसा सर्वे ससैन्या वरुणालयम्[2]। एवमुक्तस्तु धर्मज्ञः प्रत्युवाच विभीषणः ॥ ३०
समुद्रं राघवो राजा शरणं गन्तुमर्हति। खानितः सगरेणायमप्रमेयो महोदधिः ॥ ३१
कर्तुमर्हति रामस्य ज्ञातेः कार्यं महोदधिः। एवं विभीषणेनोक्तो राक्षसेन विपश्चिता ॥ ३२
आजगामाथ सुग्रीवो यत्र रामः सलक्ष्मणः। ततश्चाख्यातुमारेभे विभीषणवचः शुभम् ॥ ३३
सुग्रीवो विपुलग्रीवः सागरस्योपवेशनम्। प्रकृत्या धर्मशीलस्य राघवस्याप्यरोचत ॥ ३४
स लक्ष्मणं महातेजाः सुग्रीवं च हरीश्वरम्। सत्क्रियार्थं क्रियादक्षः स्मितपूर्वमभाषत ३५
विभीषणस्य मन्त्रोऽयं मम लक्ष्मण रोचते। ब्रूहि त्वं सहसुग्रीवस्तवापि यदि रोचते ॥ ३६
सुग्रीवः पण्डितो नित्यं भवान् मन्त्रविचक्षणः। उभाभ्यां संप्रधार्यार्थं रोचते यत्तदुच्यताम् ॥
एवमुक्तौ तु तौ वीरावुभौ सुग्रीवलक्ष्मणौ। समुदाचारसंयुक्तमिदं वचनमूचतुः ॥ ३८
किमर्थं नौ नरव्याघ्र न रोचिष्यति राघव। विभीषणेन यच्चोक्तमस्मिन् काले सुखावहम् ॥३९
अबद्ध्वा सागरे सेतुं घोरेऽस्मिन् वरुणालये। लङ्का नासादितुं शक्या सेन्द्रैरपि सुरासुरैः ॥४०
विभीषणस्य शूरस्य यथार्थं क्रियतां वचः। अलं कालात्ययं कृत्वा समुद्रोऽयं नियुज्यताम् ॥
यथा सैन्येन गच्छेम[3] पुरीं रावणपालिताम्। एवमुक्तः कुशास्तीर्णे तीरे नदनदीपतेः ॥ ४२
संविवेश तदा रामो वेद्यामिव हुताशनः ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
युद्धकाण्डे शरतल्पसंवेशो नाम एकोनविंशः सर्गः

---

## त्रिंशः सर्गः

### सुग्रीवभेदनोपायः

ततो निविष्टां ध्वजिनीं सुग्रीवेणाभिपालिताम्। ददर्श राक्षसोऽभ्येत्य शार्दूलो नाम वीर्यवान् ॥
चारो राक्षसराजस्य रावणस्य दुरात्मनः। तां दृष्ट्वा सर्वमव्यग्रं प्रतिगम्य स राक्षसः ॥ २
प्रविश्य लङ्कां वेगेन रावणं वाक्यमब्रवीत्। एष वानरऋक्षौघो लङ्कां समभिवर्तते ॥ ३
अगाधश्चाप्रमेयश्च द्वितीय इव सागरः। पुत्रौ दशरथस्येमौ भ्रातरौ रामलक्ष्मणौ ॥ ४
उत्तमायुधसंपन्नौ सीतायाः पदमागतौ। एतौ सागरमासाद्य संनिविष्टौ महाद्युती ॥ ५

---

१. मध्य इत्यादि विभीषणमित्यन्तम् ग. नास्ति। नास्ति।
२. सैन्यैरित्यादि वरुणालयमित्यन्तम् घ. ३. गच्छामः च. छ.।

बलमाकाशमावृत्य सर्वतो दशयोजनम् । तत्त्वभूतं महाराज क्षिप्रं वेदितुमर्हसि ॥ ६

तव दूता महाराज क्षिप्रमर्हन्त्यवेक्षितुम् । उपप्रदानं सान्त्वं वा भेदो वात्र प्रयुज्यताम् ॥ ७

शार्दूलस्य वचः श्रुत्वा रावणो राक्षसेश्वरः । उवाच सहसा व्यग्रः संप्रधार्यार्थमात्मनः ॥ ८

शुकं नाम तदा रक्षो वाक्यमर्थविदां वरम् । सुग्रीवं ब्रूहि गत्वा त्वं राजानं वचनान्मम ॥ ९
यथासंदेशमक्लीबं श्लक्ष्णया परया गिरा ॥

त्वं वै महाराजकुलप्रसूतो महाबलश्चर्क्षरजःसुतश्च ।
न कश्चिदर्थस्तव नास्त्यनर्थस्तथा हि मे भ्रातृसमो हरीश ॥ १०

अहं यद्यहरं भार्यां राजपुत्रस्य धीमतः । किं तत्र तव सुग्रीव किष्किन्धां प्रति गम्यताम् ॥ ११

न हीयं हरिभिर्लङ्का शक्या प्राप्तुं कथंचन । देवैरपि सगन्धर्वैः किं पुनर्नरवानरैः ॥ १२

स तथा राक्षसेन्द्रेण संदिष्टो रजनीचरः । शुको विहङ्गमो भूत्वा तूर्णमाप्लुत्य चाम्बरम् ॥ १३

स गत्वा दूरमध्वानमुपर्युपरि सागरम् । संस्थितो ह्यम्बरे वाक्यं सुग्रीवमिदमब्रवीत् ॥ १४

सर्वमुक्तं यथादिष्टं रावणेन दुरात्मना । तं प्रापयन्तं वचनं तूर्णमाप्लुत्य वानराः ॥ १५

प्रापद्यन्त दिवं क्षिप्रं लोप्तुं हन्तुं च मुष्टिभिः । स तैः प्लवङ्गैः प्रसभं निगृहीतो निशाचरः ॥ १६

गगनाद्भूतले चाशु परिगृह्य निपातितः । वानरैः पीड्यमानस्तु शुको वचनमब्रवीत् ॥ १७

न दूतान् घ्नन्ति काकुत्स्थ वार्यन्तां साधु वानराः । यस्तु हित्वा मतं भर्तुः स्वमतं संप्रभाषते ॥ १८

अनुक्तवादी दूतः सन् स दूतो वधमर्हति । शुकस्य वचनं श्रुत्वा रामस्तु परिदेवितम् ॥ १९

उवाच मा वधिष्टेति घ्नतः शाखामृगर्षभान् । स च पत्रलघुर्भूत्वा हरिभिर्दर्शिते भये ॥ २०

अन्तरिक्षस्थितो भूत्वा पुनर्वचनमब्रवीत् । सुग्रीव सत्त्वसंपन्न महाबलपराक्रम ॥ २१
किं मया खलु वक्तव्यो रावणो लोकरावणः ॥

स एवमुक्तः प्लवगाधिपस्तदा प्लवङ्गमानामृषभो महाबलः ।
उवाच वाक्यं रजनीचरस्य चारं शुकं दीनमदीनसत्त्वः ॥ २२

न मेऽसि मित्रं न तथानुकम्प्यो न चोपकर्तासि न मे प्रियोऽसि ।
अरिश्च रामस्य सहानुबन्धः स मेऽसि वालीव वधार्ह वध्यः ॥ २३

निहन्म्यहं त्वां ससुतं सबन्धुं सज्ञातिवर्गं रजनीचरेश ।
लङ्कां च सर्वां महता बलेन क्षिप्रं करिष्यामि समेत्य भस्म ॥ २४

न मोक्ष्यसे रावण राघवस्य सुरैः सहेन्द्रैरपि मूढ गुप्तः ।
अन्तर्हितः सूर्यपथं गतो वा नभो न पातालमनुप्रविष्टः ॥ २५

गिरीशपादाम्बुजसंगतो वा हतोऽसि रामेण सहानुजस्त्वम्[१] ॥

तस्य ते त्रिषु लोकेषु न पिशाचं न राक्षसम्। त्रातारमनुपश्यामि न गन्धर्वं न चासुरम् ॥ २६

अवधीर्य जरावृद्धं[२] गृध्रराजं जटायुषम्[३]। किं नु ते रामसान्निध्ये सकाशे लक्ष्मणस्य वा २७

हृता सीता विशालाक्षी यां त्वं गृह्य न बुध्यसे। महाबलं महाप्राज्ञं दुर्धर्षममरैरपि ॥ २८

न बुध्यसे रघुश्रेष्ठं यस्ते प्राणान् हरिष्यति। ततोऽब्रवीद्वालिसुतस्त्वङ्गदो हरिसत्तमः ॥ २९

नायं दूतो महाराज चारिकः प्रतिभाति मा। तुलितं हि बलं सर्वमनेनात्रैव तिष्ठता ॥ ३०

गृह्यतां मा गमल्लङ्कामेतद्धि मम रोचते। ततो राज्ञा समादिष्टाः समुत्प्लुत्य वलीमुखाः ॥ ३१

जगृहुस्तं बबन्धुश्च विलपन्तमनाथवत्। शुकस्तु वानरैश्चण्डैस्तत्र तैः संप्रपीडितः ॥ ३२

व्याक्रोशत महात्मानं रामं दशरथात्मजम्। लुप्येते मे बलात्पक्षौ भिद्येते च तथाक्षिणी॥ ३३

[1]यां च रात्रिं मरिष्यामि जाये रात्रिं च यामहम्। एतस्मिन्नन्तरे काले यन्मया ह्यशुभं कृतम्॥ ३४

सर्वं तदुपपद्येथा जह्यां चेद्यदि जीवितम्। नाघातयत्तदा रामः श्रुत्वा तत्परिदेवनम् ॥ ३५

वानरानब्रवीद्रामो मुच्यतां दूत आगतः ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
युद्धकाण्डे सुग्रीवभेदनोपायो नाम विंशः सर्गः

---

## एकविंशः सर्गः

### समुद्रसंक्षोभः

ततः सागरवेलायां दर्भानास्तीर्य राघवः। अञ्जलिं प्राङ्मुखः कृत्वा प्रतिशिश्ये महोदधिम्[४] ॥

बाहुं भुजगभोगाभमुपधायारिसूदनः। जातरूपमयैश्चैव भूषणैर्भूषितं पुरा ॥ २

वरकाञ्चनकेयूरमुक्ताप्रवरभूषणैः। भुजैः परमनारीणामभिमृष्टमनेकधा ॥ ३

चन्दनागरुभिश्चैव पुरस्तादधिवासितम्। बालसूर्यप्रतीकाशैश्चन्दनैरुपशोभितम् ॥ ४

शयने चोत्तमाङ्गेन सीतायाः शोभितं पुरा। तक्षकस्येव संभोगं गङ्गाजलनिषेवितम् ॥ ५

संयुगे युगसंकाशं शत्रूणां शोककर्धनम्। सुहृदानन्दनं दीर्घं सागरान्तव्यपाश्रयम् ॥ ६

अस्यता च पुनः सव्यं ज्याघातविगतत्वचम्। दक्षिणो दक्षिणं बाहुं महापरिघसन्निभम् ॥

---

1. यामित्यादि। जननमारभ्य मरणपर्यन्तं मया कृतं सर्वमपि पापं तवैव भवेदित्यर्थः।

१. इदमर्धम् च. छ. अ. नास्ति।

२. अवधीस्त्वं जरावृद्धम् क. ख. घ. पुना.। अवधीर्यजरावृद्धम् च. छ.।

३. गृध्रराजमपक्षकम् घ.। अक्षमं किं जटायुषम् च.। गृध्रराजानमक्षमम् छ.।

४. महोदधेः च.।

गोसहस्रप्रदातारमुपधाय महद्भुजम् । अद्य मे मरणं वाथ तरणं सागरस्य वा ॥ ८
इति रामो मतिं कृत्वा महाबाहुर्महोदधिम् । अधिशिश्ये च विधिवत् प्रयतो नियतो मुनिः ॥ ९
तस्य रामस्य सुप्तस्य कुशास्तीर्णे महीतले । नियमादप्रमत्तस्य निशास्तिस्रोऽतिचक्रमुः[१] ॥ १०
स त्रिरात्रोषितस्तत्र नयज्ञो धर्मवत्सलः । उपासत तदा रामः सागरं सरितां पतिम् ॥ ११
न च दर्शयते मन्दस्तदा[२] रामस्य सागरः । प्रयतेनापि रामेण यथार्हमभिपूजितः ॥ १२
समुद्रस्य ततः क्रुद्धो रामो रक्तान्तलोचनः । समीपस्थमुवाचेदं लक्ष्मणं शुभलक्षणम् ॥ १३
अवलेपः समुद्रस्य न दर्शयति यत् स्वयम् । प्रशमश्च क्षमा चैव आर्जवं प्रियवादिता ॥ १४
असामर्थ्यफला ह्येते[३] निर्गुणेषु सतां गुणाः । आत्मप्रशंसिनं दुष्टं धृष्टं विपरिधावकम् ॥ १५
सर्वत्रोत्सृष्टदण्डं च लोकः सत्कुरुते नरम् । न साम्ना शक्यते कीर्तिर्न साम्ना शक्यते यशः १६
प्राप्तुं लक्ष्मण लोकेऽस्मिञ्जयो वा रणमूर्धनि । अद्य मद्बाणनिर्भिन्नैर्मकरैर्मकरालयम् ॥ १७
निरुद्धतोयं सौमित्रे प्लवद्भिः पश्य सर्वतः । [४]भोगिनां पश्य भोगानि मया छिन्नानि लक्ष्मण १८
महाभोगानि मत्स्यानां करिणां च करानिह । सशङ्खशुक्तिकाजालं समीनमकरं शरैः ॥ १९
अद्य युद्धेन महता समुद्रं परिशोषये। क्षमया हि समायुक्तं मामयं मकरालयः ॥ २०
असमर्थं विजानाति धिक् क्षमामीदृशे जने । न दर्शयति साम्ना मे सागरो रूपमात्मनः॥ २१
चापमानय सौमित्रे शरांश्चाशीविषोपमान् । समुद्रं शोषयिष्यामि पद्भ्यां यान्तु प्लवङ्गमाः ॥ २२
अद्याक्षोभ्यमपि क्रुद्धः क्षोभयिष्यामि सागरम् । वेलासु कृतमर्यादं सहस्रोर्मिसमाकुलम् ॥ २३
निर्मर्यादं करिष्यामि सायकैर्वरुणालयम् । महार्णवं क्षोभयिष्ये महानक्रसमाकुलम् ॥ २४
एवमुक्त्वा धनुष्पाणिः क्रोधविस्फारितेक्षणः । बभूव रामो दुर्धर्षो युगान्ताग्निरिव ज्वलन्॥ २५
संपीड्य च धनुर्घोरं कम्पयित्वा शरैर्जगत् । मुमोच विशिखानुग्रान् वज्रानिव शतक्रतुः ॥ २६
ते ज्वलन्तो महावेगास्तेजसा सायकोत्तमाः । प्रविशन्ति समुद्रस्य सलिलं त्रस्तपन्नगम् ॥ २७
तोयवेगः समुद्रस्य सनक्रमकरो महान् । संबभूव महाघोरः समारुतरवस्तदा ॥ २८
महोर्मिमालावितततः शङ्खशुक्तिसमावृतः । सधूमः परिवृत्तोर्मिः सहसासीन्महोदधिः ॥ २९
व्यथिताः पन्नगाश्चासन् दीप्तास्या दीप्तलोचनाः । दानवाश्च महावीर्याः पातालतलवासिनः ॥
ऊर्मयः सिन्धुराजस्य सनक्रमकरास्तदा। विन्ध्यमन्दरसङ्काशाः समुत्पेतुः सहस्रशः ॥ ३१
आघूर्णिततरङ्गौघः संभ्रान्तोरगराक्षसः। उद्वर्तितमहाग्राहः संवृत्तः सलिलाशयः ॥ ३२

१ व्यतिक्रमुः छ. ।
२. न च दर्शयते रूपं मन्दः पुनः ।
३. असामर्थ्यं फलन्त्येते च. छ. ।
४. भोगिनामित्यादि करानिह इत्यस्य स्थाने—महाभोगानि नागानां भोगिनां पश्य लक्ष्मण । मया छिन्नानि मत्स्यानां करिणां च करानिह ॥ इति गो. पाठ ऊह्यते । अस्यैव स्थाने—महाभोगानि मत्स्यानां करिणां च करानिह । भोगिनां पश्य नागानां मया छिन्नानि लक्ष्मण ॥—इति च. छ. ।

ततस्तु तं राघवमुग्रवेगं प्रकर्षमाणं धनुरप्रमेयम् ।
सौमित्रिरुत्पत्य समुच्छ्वसन्तं मा मेति चोक्त्वा धनुराललम्बे ॥ ३३

एतद्विनापि ह्युदधेस्तवाद्य संपत्स्यते वीरतमस्य कार्यम् ।
भवद्विधाः कोपवशं न यान्ति दीर्घं भवान् पश्यतु साधुवृत्तम् ॥ ३४

अन्तर्हितैश्चैव तथान्तरिक्षे ब्रह्मर्षिभिश्चैव सुरर्षिभिश्च ।
शब्दः कृतः कष्टमिति ब्रुवद्भिर्मा मेति चोक्त्वा महता स्वरेण[1] ॥ ३५

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
युद्धकाण्डे समुद्रसंक्षोभो नाम एकविंशः सर्गः

---

## द्वाविंशः सर्गः

### सेतुबन्धः

अथोवाच रघुश्रेष्ठः सागरं दारुणं वचः । अद्य त्वां शोषयिष्यामि सपातालं महार्णव ॥ १
शरनिर्दग्धतोयस्य परिशुष्कस्य सागर । मया शोषितसत्त्वस्य पांसुरुत्पद्यते महान् ॥ २
मत्कार्मुकविसृष्टेन शरवर्षेण सागर । पारं तेऽद्य गमिष्यन्ति पद्भिरेव प्लवङ्गमाः ॥ ३
विचिन्वन्नाभिजानासि पौरुषं वापि विक्रमम् । दानवालय संतापं मत्तो नाम गमिष्यसि[2] ॥ ४
ब्राह्मेणास्त्रेण संयोज्य ब्रह्मदण्डनिभं शरम् । संयोज्य धनुषि श्रेष्ठे विचकर्ष महाबलः ॥ ५
तस्मिन् विकृष्टे सहसा राघवेण शरासने । रोदसी संपफालेव पर्वताश्च चकम्पिरे ॥ ६
तमश्च लोकमावव्रे दिशश्च न चकाशिरे । परिचुक्षुभिरे चाशु सरांसि सरितस्तथा ॥ ७
तिर्यक् च सह नक्षत्रैः सङ्गतौ चन्द्रभास्करौ । भास्करांशुभिरादीप्तं तमसा च समावृतम् ॥ ८
प्रचकाशे तदाकाशमुल्काशतविदीपितम् । अन्तरिक्षाच्च निर्घाता निर्जग्मुरतुलस्वनाः ॥ ९
पुस्फुरुश्च घना दिव्या दिवि मारुतपङ्क्तयः । बभञ्ज च तदा वृक्षाञ्जलदानुद्वहन्नपि ॥ १०
आरुजंश्चैव[3] शैलाग्राञ्शिखराणि प्रभञ्जनः । दिविस्पृशो महामेघाः सङ्गताः समहास्वनाः ॥
मुमुचुर्वैद्युतानग्नींस्ते महाशनयस्तदा । यानि भूतानि दृश्यानि चुक्रुशुश्चाशनेः समम् ॥ १२
अदृश्यानि च भूतानि मुमुचुर्भैरवस्वनम् । शिश्यिरे चापि भूतानि संत्रस्तान्युद्विजन्ति च ॥ १३
संप्रविव्यथिरे चापि न च पस्पन्दिरे भयात् । सहभूतैः सतोयोर्मिः सनागः सहराक्षसः ॥ १४
सहसाभूत्ततो वेगाद्भीमवेगो महोदधिः । योजनं व्यतिचक्राम वेलामन्यत्र संप्लवात् ॥ १५
तं तदा समतिक्रान्तं नातिचक्राम राघवः । समुद्धतममित्रघ्नो रामो नदनदीपतिम् ॥ १६

१. ३४, ३५ पद्ये च. न स्तः । नाधिगमिष्यसि च. छ. । ३. अरुजन् गो. छ. ।

ततो मध्यात् समुद्रस्य सागरः स्वयमुत्थितः । उदयन् हि महाशैलान्मेरोरिव दिवाकरः ॥ १७
पन्नगैः सह दीप्तास्यैः समुद्रः प्रत्यदृश्यत । स्निग्धवैदूर्यसंकाशो जाम्बूनदविभूषितः ॥ १८
रक्तमाल्याम्बरधरः पद्मपत्रनिभेक्षणः । सर्वपुष्पमयीं दिव्यां शिरसा धारयन् स्रजम् ॥ १९
जातरूपमयैश्चैव तपनीयविभूषितैः । आत्मजानां च रत्नानां भूषितो भूषणोत्तमैः ॥ २०
धातुभिर्मण्डितः शैलो विविधैर्हिमवानिव । एकावलीमध्यगतं तरलं पाटलप्रभम् । २१
विपुलेनोरसा बिभ्रत्कौस्तुभस्य सहोदरम्[1] । आघूर्णिततरङ्गौघः कालिकानिलसंकुलः । २२
उद्वर्तितमहाग्राहः संभ्रान्तोरगराक्षसः । देवतानां सरूपाभिः नानारूपाभिरीश्वरः[2] ॥ २३
गङ्गासिन्धुप्रधानाभिरापगाभिः समावृतः[3] । सागरः समुपक्रम्य पूर्वमामन्त्र्य वीर्यवान् ॥ २४
अब्रवीत्प्राञ्जलिर्वाक्यं राघवं शरपाणिनम् । पृथिवी वायुराकाशमापो ज्योतिश्च राघव ॥ २५
स्वभावे सौम्य तिष्ठन्ति शाश्वतं मार्गमाश्रिताः । तत्स्वभावो ममाप्येष यदगाधोऽहमप्लवः॥ २६
विकारस्तु भवेद्राध एतत्ते वेदयाम्यहम् । न कामान्न च लोभाद्वा न भयात् पार्थिवात्मज ॥२७
ग्राहनक्राकुलजलं स्तम्भयेयं कथंचन । विधास्ये येन गन्तासि[4] विषहिष्ये ह्यहं तथा ॥ २८
ग्राहा न प्रहरिष्यन्ति यावत्सेना तरिष्यति । हरीणां तरणे राम करिष्यामि यथा स्थलम् ॥
तमब्रवीत्तदा राम उद्यतो हि नदीपते । अमोघोऽयं महाबाणः कस्मिन् देशे निपात्यताम् ॥ ३०
रामस्य वचनं श्रुत्वा तं च दृष्ट्वा महाशरम् । महोदधिर्महातेजा राघवं वाक्यमब्रवीत् ॥ ३१
उत्तरेणावकाशोऽस्ति कश्चित्पुण्यतमो मम । द्रुमकुल्य इति ख्यातो लोके ख्यातो यथा भवान्॥
उग्रदर्शनकर्माणो बहवस्तत्र दस्यवः । आभीरप्रमुखाः पापाः पिबन्ति सलिलं मम ॥ ३३
तैस्तु संस्पर्शनं प्राप्तैर्न सहे पापकर्मभिः । अमोघः क्रियतां राम तत्र तेषु शरोत्तमः ॥ ३४
तस्य तद्वचनं श्रुत्वा सागरस्य महात्मनः[5] । मुमोच तं शरं दीप्तं वीरः सागरदर्शनात् ॥ ३५
तेन तन्मरुकान्तारं पृथिव्यां खलु विश्रुतम् । निपातितः शरो यत्र दीप्ताशनिसमप्रभः ॥ ३६
ननाद च तदा तत्र वसुधा शल्यपीडिता । तस्माद्व्रणमुखात्तोयमुत्पपात रसातलात् ॥ ३७
स बभूव तदा कूपो व्रण इत्यभिविश्रुतः । सततं चोत्थितं तोयं समुद्रस्येव दृश्यते ॥ ३८
अवदारणशब्दश्च दारुणः समपद्यत । तस्मात्तद्बाणपातेन त्वपः कुक्षिष्ववशोषयत् ॥ ३९
विख्यातं त्रिषु लोकेषु मरुकान्तारमेव तत् । शोषयित्वा ततः कुक्षिं रामो दशरथात्मजः ॥४०
वरं तस्मै ददौ विद्वान् मरवेऽमरविक्रमः । पशव्यश्चाल्परोगश्च फलमूलरसायुतः ॥ ४१
बहुस्नेहो बहुक्षीरः सुगन्धिर्विविधौषधः । एवमेतैर्गुणैर्युक्तो बहुभिः सततं मरुः ॥ ४२
रामस्य वरदानाच्च शिवः पन्था बभूव ह । तस्मिन् दग्धे तदा कुक्षौ समुद्रः सरितां पतिः ॥

१. एकावलीत्यादि सहोदरमित्यन्तम् क. ग. घ. नास्ति ।
२. इदमर्धम् च. नास्ति ।
३. इदमर्धम् क. घ. नास्ति ।
४. राम येनापि च. छ. ।
५. स राघवः च. छ ।

राघवं सर्वशास्त्रज्ञमिदं वचनमब्रवीत् । अयं सौम्य नलो नाम तनुजो[1] विश्वकर्मणः ॥ ४४
पित्रा दत्तवरः श्रीमान् प्रतिमो विश्वकर्मणा[2] । एष सेतुं महोत्साहः करोतु मयि वानरः ॥ ४५
तमहं धारयिष्यमि तथा ह्येष यथा पिता । एवमुक्त्वोदधिर्नष्टः समुत्थाय नलस्तदा ॥ ४६
अब्रवीद्वानरश्रेष्ठो वाक्यं रामं महाबलः[3] । अहं सेतुं करिष्यामि विस्तीर्णे वरुणालये ॥ ४७
पितुः सामर्थ्यमास्थाय तत्त्वमाह महोदधिः । दण्ड एव वरो लोके पुरुषस्येति मे मतिः ॥ ४८
धिक् क्षमामकृतज्ञेषु सान्त्वं दानमथापि वा । अयं हि सागरो भीमः सेतुकर्मदिदृक्षया ॥ ४९
ददौ दण्डभयाद्गाधं राघवाय महोदधिः । मम मातुर्वरो दत्तो मन्दरे विश्वकर्मणा ॥ ५०
मया तु सदृशः पुत्रस्तव देवि भविष्यति । औरसस्तस्य पुत्रोऽहं सदृशो विश्वकर्मणा[4] ॥ ५१
स्मारितोऽस्म्यहमेतेन तत्त्वमाह महोदधिः । न चाप्यहमनुक्तो वै प्रब्रूयामात्मनो गुणान् ॥ ५२
समर्थश्चाप्यहं सेतुं कर्तुं वै वरुणालये । काममद्यैव बध्नन्तु सेतुं वानरपुंगवाः ॥ ५३
ततोऽतिसृष्टा रामेण सर्वतो हरियूथपाः । अभिपेतुर्महारण्यं हृष्टाः शतसहस्रशः ॥ ५४
ते नगान्नगसंकाशाः शाखामृगगणर्षभाः । बभञ्जुर्वानरास्तत्र प्रचकर्षुश्च सागरम् ॥ ५५
ते सालैश्चाश्वकर्णैश्च धवैर्वंशैश्च वानराः । कुटजैरर्जुनैस्तालैस्तिलकैस्तिनिशैरपि ॥ ५६
बिल्वैश्च सप्तपर्णैश्च कर्णिकारैश्च पुष्पितैः । चूतैश्चाशोकवृक्षैश्च सागरं समपूरयत् ॥ ५७
समूलांश्च विमूलांश्च पादपान् हरिसत्तमाः । इन्द्रकेतूनिवोद्यम्य प्रजह्रुर्हरयस्तरून् ॥ ५८
तालान् दाडिमगुल्मांश्च नारिकेलान् विभीतकान् । बकुलान् खदिरान्निम्बान् समाजह्रुः समन्ततः ॥
हस्तिमात्रान् महाकायाः पाषाणांश्च महाबलाः । पर्वतांश्च समुत्पाट्य यत्नैः[5] परिवहन्ति च ॥ ६०
प्रक्षिप्यमाणैरचलैः सहसा जलमुद्धतम् । समुत्पतितमाकाशमुपासर्पत्ततस्ततः ॥ ६१
समुद्रं क्षोभयामासुर्वानराश्च समन्ततः । सूत्राण्यन्ये प्रगृह्णन्ति व्यायतं शतयोजनम् ॥ ६२
दशयोजनविस्तारं शतयोजनमायतम्[6] । नलश्चक्रे महासेतुं मध्ये नदनदीपतेः ॥ ६३
स तथा क्रियते सेतुर्वानरैर्घोरकर्मभिः । दण्डानन्ये प्रगृह्णन्ति विचिन्वन्ति तथा परे ॥ ६४
वानराः शतशस्तत्र रामस्याज्ञापुरःसराः । मेघाभैः पर्वताग्रैश्च तृणैः काष्ठैर्बबन्धिरे ॥ ६५

१. तनयः पुना. ।

२. इदमर्धम् ख. नास्ति ।

३. महाबलम् पुना. ।

४. अस्यानन्तरम्—पित्रोः प्रसादात् काकुत्स्थ ततः सेतुं करोम्यहम् । नलस्य वचनं श्रुत्वा राघवो रघुनन्दनः ॥ मात्रे किमर्थं ते तातो वरं तस्यै ददौ पुरा । कथयस्व कपिश्रेष्ठ इति ह्योवाच वानरम् ॥ श्रुत्वा रघुपतेर्वाक्यं नलो वचनमब्रवीत् । पिता मे मन्दरप्रस्थे विश्वकर्मा तपश्चरत् [स्यति] ॥ अहं बालतया क्रीडन्नेकदा रघुसत्तम । तपस्विनापि तातेन पूजितं तेन दैवतम् ॥ अज्ञानात् सागरे मग्नं पुनः पुनरवाकिरम् । माता विचिन्त्य पित्रे मे ददौ दैवमतन्द्रिता ॥ ध्यानावसाने जनको मामवोचद्रुषान्वितः । इतः प्रभृति यत्क्षिप्तं तन्मग्नं न भविष्यति ॥ ततस्तदनु मां तूर्णमित्यवोचत्पिता मम ।—इति छ. ।

५. यन्त्रैः च. छ. ।

६. इदमर्धम् च. छ. नास्ति ।

पुष्पिताग्रैश्च तरुभिः सेतुं बध्नन्ति वानराः। पाषाणांश्च गिरिप्रख्यान् गिरीणां शिखराणि च ॥
दृश्यन्ते परिधावन्तो गृह्य वारणसंनिभाः। शिलानां क्षिप्यमाणानां शैलानां च निपात्यताम् ॥
बभूव तुमुलः शब्दस्तदा तस्मिन् महोदधौ। कृतानि प्रथमेनाह्ना योजनानि चतुर्दश ॥ ६८
प्रहृष्टैर्गजसंकाशैस्त्वरमाणैः प्लवङ्गमैः। द्वितीयेन तथा चाह्ना योजनानि तु विंशतिः ॥ ६९
कृतानि प्लवगैस्तूर्णं भीमकायैर्महाबलैः। अह्ना तृतीयेन तथा योजनानि कृतानि तु ॥ ७०
त्वरमाणैर्महाकायैरेकविंशतिरेव च। चतुर्थेन तथा चाह्ना द्वाविंशतिरथापि च ॥ ७१
योजनानि महावेगैः कृतानि त्वरितैस्तु तैः। पञ्चमेन तथा चाह्ना प्लवगैः क्षिप्रकारिभिः ॥७२
योजनानि त्रयोविंशत्सुवेलमधिकृत्य वै। स वानरवरः श्रीमान् विश्वकर्मात्मजो बली ॥ ७३
बबन्ध सागरे सेतुं यथा चास्य पिता तथा। स नलेन कृतः सेतुः सागरे मकरालये ॥ ७४
शुशुभे सुभगः [1]श्रीमान् स्वातीपथ इवाम्बरे। ततो देवाः सगन्धर्वाः सिद्धाश्च परमर्षयः ॥७५
आगम्य गगने तस्थुर्द्रष्टुकामास्तदद्भुतम्। दशयोजनविस्तीर्णं शतयोजनमायतम् ॥ ७६
ददृशुर्देवगन्धर्वा नलसेतुं सुदुष्करम्। आप्लवन्तः प्लवन्तश्च गर्जन्तश्च प्लवङ्गमाः ॥ ७७
तदचिन्त्यमसह्यं च अद्भुतं रोमहर्षणम्। ददृशुः सर्वभूतानि सागरे सेतुबन्धनम् ॥ ७८
तानि कोटिसहस्राणि वानराणां महौजसाम्। बध्नन्तः सागरे सेतुं जग्मुः पारं महोदधेः ॥७९
विशालः सुकृतः श्रीमान् सुभूमिः सुसमाहितः। अशोभत महासेतुः सीमन्त इव सागरे ॥८०
ततः पारे समुद्रस्य गदापाणिर्विभीषणः। परेषामभिघातार्थमतिष्ठत् सचिवैः सह ॥ ८१
सुग्रीवस्तु ततः प्राह रामं सत्यपराक्रमम्। हनुमन्तं त्वमारोह अङ्गदं चापि लक्ष्मणः ॥ ८२
अयं हि विपुलो वीर सागरो मकरालयः। वैहायसौ युवामेतौ वानरौ तारयिष्यतः ॥ ८३
अग्रतस्तस्य सैन्यस्य श्रीमान् रामः सलक्ष्मणः। जगाम धन्वी धर्मात्मा सुग्रीवेण समन्वितः ॥८४
अन्ये मध्येन गच्छन्ति पार्श्वतोऽन्ये प्लवङ्गमाः। सलिले प्रपतन्त्यन्ये मार्गमन्ये न लेभिरे ॥८५
केचिद्वैहायसगताः सुपर्णा इव पुप्लुवुः। घोषेण महता तस्य सिन्धोर्घोषं समुच्छ्रितम् ॥ ८६
भीममन्तर्दधे भीमा तरन्ती हरिवाहिनी। वानराणां हि सा तीर्णा वाहिनी नलसेतुना ॥८७
तीरे निविविशे राज्ञो बहुमूलफलोदके ॥

तदद्भुतं राघवकर्म दुष्करं समीक्ष्य देवाः सह सिद्धचारणैः।
उपेत्य रामं सहसा महर्षिभिः समभ्यषिञ्चन् सुशुभैर्जलैः पृथक् ॥ ८८

1. श्रीमानित्यादि सुभग इत्यन्तम् क. नास्ति।

जयस्व शत्रूघ्ननरदेव मेदिनीं ससागरां पालय शाश्वतीः समाः ।
इतीव रामं नरदेवसत्कृतं शुभैर्वचोभिर्विविधैरपूजयन् ॥ ८९

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
युद्धकाण्डे सेतुबन्धो नाम द्वाविंशः सर्गः

---

## त्रयोविंशः सर्गः

### लङ्काभिषेणनम्

निमित्तानि निमित्तज्ञो दृष्ट्वा लक्ष्मणपूर्वजः । सौमित्रिं संपरिष्वज्य इदं वचनमब्रवीत् ॥ १
परिगृह्योदकं शीतं वनानि फलवन्ति च । बलौघं संविभज्येमं व्यूह्य तिष्ठेम लक्ष्मण ॥ २
लोकक्षयकरं भीमं भयं पश्याम्युपस्थितम् । निबर्हणं प्रवीराणामृक्षवानररक्षसाम् ॥ ३
वाताश्च कलुषा वान्ति कम्पते च वसुन्धरा । पर्वताग्राणि वेपन्ते पतन्ति च महीरुहाः ॥ ४
मेघाः क्रव्यादसंकाशाः परुषाः परुषस्वनाः । क्रूराः क्रूरं प्रवर्षन्ति मिश्रं शोणितबिन्दुभिः ॥५
रक्तचन्दनसंकाशा सन्ध्या परमदारुणा । ज्वलतः प्रपतत्येतदादित्यादग्निमण्डलम् ॥ ६
दीना दीनस्वराः क्रूराः सर्वतो मृगपक्षिणः । प्रत्यादित्यं विनर्दन्ति जनयन्तो महद्भयम् ॥ ७
रजन्यामप्रकाशस्तु संतापयति चन्द्रमाः । कृष्णरक्तांशुपर्यन्तो लोकक्षय इवोदितः ॥ ८
ह्रस्वो रूक्षोऽप्रशस्तश्च परिवेषः सुलोहितः । आदित्ये विमले नीलं लक्ष्म लक्ष्मण दृश्यते ॥ ९
रजसा महता चापि नक्षत्राणि हतानि च । युगान्तमिव लोकानां पश्य शंसन्ति लक्ष्मण ॥ १०
काकाः श्येनास्तथा गृध्रा नीचैः परिपतन्ति च । शिवाश्चाप्यशिवान्नदान्नदन्ति सुमहाभयान् ॥ ११
शैलैः शूलैश्च खड्गैश्च विसृष्टैः कपिराक्षसैः । भविष्यत्यावृता भूमिर्मांसशोणितकर्दमा ॥ १२
क्षिप्रमद्यैव दुर्धर्षां पुरीं रावणपालिताम् । अभियाम जवेनैव सर्वतो हरिभिर्वृताः ॥ १३
इत्येवमुक्त्वा धर्मात्मा धन्वी संग्रामहर्षणः । प्रतस्थे पुरतो रामो लङ्कामभिमुखो विभुः ॥ १४
सविभीषणसुग्रीवास्ततस्ते वानरर्षभाः । प्रतस्थिरे विनर्दन्तो निश्चिता द्विषतां वधे ॥ १५
राघवस्य प्रियार्थं तु धृतानां वीर्यशालिनाम् । हरीणां कर्मचेष्टाभिस्तुतोष रघुनन्दनः ॥ १६

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
युद्धकाण्डे लङ्काभिषेणनं नाम त्रयोविंशः सर्गः

---

## चतुर्विंशः सर्गः

### रावणप्रतिज्ञा

सा वीरसमिती राज्ञा विरराज व्यवस्थिता । शशिना शुभनक्षत्रा पौर्णमासीव शारदी ॥ १
प्रचचाल च वेगेन त्रस्ता चैव वसुंधरा । पीड्यमाना बलौघेन तेन सागरवर्चसा ॥ २

ततः शुश्रुवुराकृष्टं लङ्कायां काननौकसः । भेरीमृदङ्गसंघुष्टं तुमुलं रोमहर्षणम् ॥ ३
बभूवुस्तेन घोषेण संहृष्टा हरियूथपाः । अमृष्यमाणास्तं घोषं विनेदुर्घोषवत्तरम् ॥ ४
राक्षसास्तु प्लवङ्गानां शुश्रुवुश्चापि गर्जितम् । नर्दतामिव दृप्तानां मेघानामम्बरे स्वनम् ॥ ५
दृष्ट्वा दाशरथिर्लङ्कां चित्रध्वजपताकिनीम् । [1]जगाम मनसा सीतां दूयमानेन चेतसा ॥ ६
अत्र सा मृगशावाक्षी रावणेनोपरुध्यते । अभिभूता ग्रहेणेव लोहिताङ्गेन रोहिणी ॥ ७
दीर्घमुष्णं च निःश्वस्य समुद्वीक्ष्य च लक्ष्मणम् । उवाच वचनं वीरस्तत्कालहितमात्मनः[1] ॥ ८
आलिखन्तीमिवाकाशमुत्थितां पश्य लक्ष्मण । मनसेव कृतां लङ्कां नगाग्रे विश्वकर्मणा ॥ ९
विमानैर्बहुभिर्लङ्का संकीर्णा भुवि राजते । विष्णोः पदमिवाकाशं छादितं पाण्डरैर्घनैः ॥ १०
पुष्पितैः शोभिता लङ्का वनैश्चैत्ररथोपमैः । नानापतङ्गसंघुष्टैः फलपुष्पोपगैः शुभैः ॥ ११
पश्य मत्तविहङ्गानि प्रलीनभ्रमराणि च । कोकिलाकुलषण्डानि दोधवीति शिवोऽनिलः ॥ १२
इति दाशरथी रामो लक्ष्मणं समभाषत । बलं च तद्वै विभजञ्शास्त्रदृष्टेन कर्मणा ॥ १३
शशास कपिसेनाया बलमादाय वीर्यवान् । अङ्गदः सह नीलेन तिष्ठेदुरसि दुर्जयः ॥ १४
तिष्ठेद्वानरवाहिन्या वानरौघसमावृतः । आश्रित्य दक्षिणं पार्श्वमृषभो वानरर्षभः ॥ १५
गन्धहस्तीव दुर्धर्षस्तरस्वी गन्धमादनः । तिष्ठेद्वानरवाहिन्याः सव्यं पार्श्वं समाश्रितः ॥ १६
मूर्ध्नि स्थास्याम्यहं युक्तो लक्ष्मणेन समन्वितः । जाम्बवांश्च सुषेणश्च वेगदर्शी च वानरः ॥ १७
ऋक्षमुख्या महात्मानः कुक्षिं रक्षन्तु ते त्रयः । जघनं कपिसेनायाः कपिराजोऽभिरक्षतु ॥ १८
पश्चार्धमिव लोकस्य प्रचेतास्तेजसा वृतः । सुविभक्तमहाव्यूहा महावानररक्षिता ॥ १९
अनीकिनी सा विबभौ यथा द्यौः साभ्रसंप्लवा । प्रगृह्य गिरिशृङ्गाणि महतश्च महीरुहान् ॥ २०
आसेदुर्वानरा लङ्कां मिमर्दयिषवो[2] रणे । शिखरैर्विकिरामैनां लङ्कां मुष्टिभिरेव वा ॥ २१
इति स्म दधिरे सर्वे मनांसि हरिसत्तमाः । ततो रामो महातेजाः सुग्रीवमिदमब्रवीत् ॥ २२
सुविभक्तानि सैन्यानि शुक एष विमुच्यताम् । रामस्य वचनं श्रुत्वा वानरेन्द्रो महाबलः ॥ २३
मोचयामास तं दूतं शुकं रामस्य शासनात् । मोचितो रामवाक्येन वानरैश्चाभिपीडितः ॥ २४
शुकः परमसंत्रस्तो रक्षोऽधिपमुपागमत् । रावणः प्रहसन्नेव शुकं वाक्यमभाषत ॥ २५
किमिमौ ते सितौ पक्षौ लूनपक्षश्च दृश्यसे । कच्चिन्नानेकचित्तानां तेषां त्वं वशमागतः ॥ २६
ततः स भयसंविग्नस्तथा राज्ञाभिचोदितः । वचनं प्रत्युवाचेदं राक्षसाधिपमुत्तमम् ॥ २७
सागरस्योत्तरे तीरेऽब्रवं ते वचनं तथा । यथासंदेशमक्लिष्टं सान्त्वयञ्श्लक्ष्णया गिरा ॥ २८

1. दूयमानेन चेतसोपलक्षितो रामः सीतां मनसा जगाम सस्मारेत्यर्थः । तेन मनसा चेतसा इत्यपौनरुक्त्यम् ।

१. सदृशं वचः घ. ।
२. विमर्दयिषवः च. छ.

क्रुद्धैस्तैरहमुत्प्लुत्य दृष्टमात्रैः प्लवङ्गमैः । गृहीतोऽस्म्यपि चारब्धो हन्तुं लोप्तुं च मुष्टिभिः ॥
नैव संभाषितुं शक्याः संप्रश्नोऽत्र न लभ्यते । प्रकृत्या कोपनास्तीक्ष्णा वानरा राक्षसाधिप ॥
स च हन्ता विराधस्य कबन्धस्य खरस्य च । सुग्रीवसहितो रामः सीतायाः पदमागतः ॥३१
स कृत्वा सागरे सेतुं तीर्त्वा च लवणोदधिम् । एष रक्षांसि निर्धूय धन्वी तिष्ठति राघवः ॥
ऋक्षवानरमुख्यानामनीकानि सहस्रशः । गिरिमेघनिकाशानां छादयन्ति वसुंधराम् ॥ ३३
राक्षसानां बलौघस्य वानरेन्द्रबलस्य च । नैतयोर्विद्यते सन्धिर्देवदानवयोरिव ॥ ३४
पुरा प्राकारमायान्ति क्षिप्रमेकतरं कुरु । सीतां वास्मै प्रयच्छाशु युद्धं वापि[१] प्रदीयताम् ॥
शुकस्य वचनं श्रुत्वा रावणो वाक्यमब्रवीत् । रोषसंरक्तनयनो निर्दहन्निव चक्षुषा ॥ ३६
यदि मां प्रति युध्येरन् देवगन्धर्वदानवाः । नैव सीतां प्रयच्छामि सर्वलोकभयादपि ॥ ३७
कदा नामाभिधावन्ति राघवं मामकाः शराः । वसन्ते पुष्पितं मत्ता भ्रमरा इव पादपम् ॥
कदा तूणीशयैर्दीप्तैर्गणशः कार्मुकच्युतैः । शरैरादीपयाम्येनमुल्काभिरिव कुञ्जरम् ॥ ३९
तच्चास्य बलमादास्ये बलेन महता वृतः । ज्योतिषामिव सर्वेषां प्रभामुद्यन् दिवाकरः ॥ ४०
सागरस्येव मे वेगो मारुतस्येव मे गतिः । न हि दाशरथिर्वेद तेन मां योद्धुमिच्छति ॥
न मे तूणीशयान् बाणान् सविषानिव पन्नगान् । रामः पश्यति संग्रामे तेन मां योद्धुमिच्छति ॥
न जानाति पुरा वीर्यं मम युद्धे स राघवः । मम चापमयीं वीणां शरकोणैः प्रवादिताम् ॥४३
ज्याशब्दतुमुलां घोरामार्तभीतमहास्वनाम् । नाराचतलसन्नादां तां ममाहितवाहिनीम् ॥ ४४
अवगाह्य महारङ्गं वादयिष्याम्यहं रणे ॥

न वासवेनापि सहस्रचक्षुषा यथास्मि शक्यो वरुणेन वा स्वयम् ।
यमेन वा धर्षयितुं शराग्निना महाहवे वैश्रवणेन वा पुनः ॥ ४५

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
युद्धकाण्डे रावणप्रतिज्ञा नाम चतुर्विंशः सर्गः

## पञ्चविंशः सर्गः

### शुकसारणप्रेषणादिकं

सबले सागरं तीर्णे रामे दशरथात्मजे । अमात्यौ रावणः श्रीमानब्रवीच्छुकसारणौ ॥ १
समग्रं सागरं तीर्णं दुस्तरं वानरं बलम्[1] । अभूतपूर्वं रामेण सागरे सेतुबन्धनम् ॥ २

1. वानरं बलं सागरं तीर्णं समुद्रमतरत् इत्येतदभूतपूर्वमिति योजना ।

१. सुयुद्धं वा च, छ.

सागरे सेतुबन्धं तु न श्रद्दध्यां कथंचन । अवश्यं चापि संख्येयं तन्मया वानरं बलम् ॥ ३
भवन्तौ वानरं सैन्यं प्रविश्यानुपलक्षितौ । परिमाणं च वीर्यं च ये च मुख्याः प्लवङ्गमाः ॥ ४
मन्त्रिणो ये च रामस्य सुग्रीवस्य च संमताः । ये पूर्वमभिवर्तन्ते ये च शूराः प्लवङ्गमाः ॥ ५
स च सेतुर्यथा बद्धः सागरे सलिलाशये । निवेशं[1] च यथा तेषां वानराणां महात्मनाम् ॥ ६
रामस्य व्यवसायं च वीर्यं प्रहरणानि च । लक्ष्मणस्य च वीरस्य[१] तत्त्वतो ज्ञातुमर्हथः ॥ ७
कश्च सेनापतिस्तेषां वानराणां महौजसाम् । एतज्ज्ञात्वा यथातत्त्वं शीघ्रमागन्तुमर्हथः ॥ ८
इति प्रतिसमादिष्टौ राक्षसौ शुकसारणौ । हरिरूपधरौ वीरौ प्रविष्टौ वानरं बलम् ॥ ९
ततस्तद्वानरं सैन्यमचिन्त्यं रोमहर्षणम् । संख्यातुं नाध्यगच्छेतां तदा तौ शुकसारणौ ॥ १०
संस्थितं पर्वताग्रेषु निर्झरेषु गुहासु च । समुद्रस्य च तीरेषु वनेषूपवनेषु च ॥ ११
तरमाणं च तीर्णं च तर्तुकामं च सर्वशः । निविष्टं निविशच्चैव भीमनादं महाबलम् ॥ १२
तद्बलार्णवमक्षोभ्यं ददृशाते निशाचरौ । तौ ददर्श महातेजाः प्रतिच्छन्नौ विभीषणः ॥ १३
आचचक्षेऽथ रामाय गृहीत्वा शुकसारणौ । तस्येमौ राक्षसेन्द्रस्य मन्त्रिणौ शुकसारणौ ॥ १४
लङ्कायाः समनुप्राप्तौ चारौ परपुरंजय । तौ दृष्ट्वा व्यथितौ रामं निराशौ जीविते तदा ॥ १५
कृताञ्जलिपुटौ भीतौ वचनं चेदमूचतुः । आवामिहागतौ सौम्य रावणप्रहिताबुभौ ॥ १६
परिज्ञातुं बलं कृत्स्नं तवेदं रघुनन्दन । तयोस्तद्वचनं श्रुत्वा रामो दशरथात्मजः ॥ १७
अब्रवीत्प्रहसन् वाक्यं सर्वभूतहिते रतः । यदि दृष्टं बलं कृत्स्नं वयं वा सुपरीक्षिताः ॥ १८
यथोक्तं वा कृतं कार्यं छन्दतः प्रतिगम्यताम् । अथ किंचिददृष्टं वा भूयस्तद्द्रष्टुमर्हथः ॥ १९
विभीषणो वा कार्त्स्न्येन भूयः संदर्शयिष्यति । न चेदं ग्रहणं प्राप्य भेतव्यं जीवितं प्रति ॥
न्यस्तशस्त्रौ गृहीतौ वा न दूतौ वधमर्हथः । प्रच्छन्नौ च[२] विमुञ्चैतौ चारौ रात्रिंचरावुभौ ॥
शत्रुपक्षस्य सततं विभीषणविकर्षणौ[३] । प्रविश्य नगरीं लङ्कां भवद्भ्यां धनदानुजः ॥ २२
वक्तव्यो रक्षसां राजा यथोक्तं वचनं मम । यद्बलं च समाश्रित्य सीतां मे हृतवानसि ॥ २३
तद्दर्शय यथाकामं ससैन्यः सहबान्धवः । श्वः कल्ये नगरीं लङ्कां सप्राकारां सतोरणाम् ॥ २४
रक्षसां च बलं पश्य शरैर्विध्वंसितं मया । [४]क्रोधं भीममहं मोक्ष्ये ससैन्ये त्वयि रावण ॥ २५
श्वः कल्ये वज्रवान् वज्रं दानवेष्विव वासवः । इति प्रतिसमादिष्टौ राक्षसौ शुकसारणौ ॥
जयेति प्रतिनन्द्यैतौ राघवं धर्मवत्सलम् । आगम्य नगरीं लङ्कामब्रूतां राक्षसाधिपम् ॥ २७
विभीषणगृहीतौ तु वधार्हौ राक्षसेश्वर । दृष्ट्वा धर्मात्मना मुक्तौ रामेणामिततेजसा ॥ २८

1. निवेशमिति नपुंसकमार्षम् ।
१. वीर्यं च च. ।
२. पृच्छमानौ च. छ. ।
३. अस्यानन्तरम्-ततस्तु राघवो दृष्ट्वा राक्षसावब्रवीत् स्वयम्—इति घ. ।
४. घोरं रोषमहं मोक्ष्ये बलं धारय रावण- इति. घ. ।

एकस्थानगता यत्र चत्वारः पुरुषर्षभाः । लोकपालोपमाः शूराः कृतास्त्रा दृढविक्रमाः ॥ २९
रामो दाशरथिः श्रीमाँल्लक्ष्मणश्च विभीषणः । सुग्रीवश्च महातेजा महेन्द्रसमविक्रमः ॥ ३०
एते शक्ताः पुरीं लङ्कां सप्राकारां सतोरणाम् । उत्पाट्य संक्रामयितुं सर्वे तिष्ठन्तु वानराः ॥ ३१
यादृशं तस्य रामस्य रूपं प्रहरणानि च । वधिष्यति पुरीं लङ्कामेकस्तिष्ठन्तु ते त्रयः ॥ ३२
रामलक्ष्मणगुप्ता सा सुग्रीवेण च वाहिनी । बभूव दुर्धर्षतरा सेन्द्रैरपि सुरासुरैः ॥ ३३
व्यक्तः सेतुस्तथा बद्धो दशयोजनविस्तृतः । शतयोजनमायामस्तीर्णा सेना च सागरम् ॥ ३४
निविष्टो दक्षिणे तीरे रामः स च नदीपतेः । तीर्णस्य तरमाणस्य बलस्यान्तो न विद्यते[1] ॥ ३५

प्रहृष्टरूपा ध्वजिनी वनौकसां महात्मनां संप्रति योद्धुमिच्छताम् ।
अलं विरोधेन शमो विधीयतां प्रदीयतां दाशरथाय मैथिली ॥ ३६

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
युद्धकाण्डे शुकसारणप्रेषणादिकं नाम पञ्चविंशः सर्गः

---

## षड्विंशः सर्गः

### कपिबलावेक्षणम्

तद्वचः पथ्यमक्लीबं सारणेनाभिभाषितम् । निशम्य रावणो राजा प्रत्यभाषत सारणम् ॥ १
यदि मामभियुञ्जीरन् देवगन्धर्वदानवाः । नैव सीतां प्रदास्यामि सर्वलोकभयादपि ॥ २
त्वं तु सौम्य परित्रस्तो हरिभिः पीडितो भृशम् । प्रतिप्रदानमद्यैव सीतायाः साधु मन्यसे ॥ ३
को हि नाम सपत्नो मां समरे जेतुमर्हति । इत्युक्त्वा परुषं वाक्यं रावणो राक्षसाधिपः ॥ ४
आरुरोह ततः श्रीमान् प्रासादं हिमपाण्डरम् । बहुतालसमुत्सेधं[2] रावणोऽथ दिदृक्षया ॥ ५
ताभ्यां चराभ्यां सहितो रावणः क्रोधमूर्छितः । पश्यमानः समुद्रं च पर्वतांश्च वनानि च ॥ ६
ददर्श पृथिवीदेशं सुसंपूर्णं प्लवङ्गमैः । तदपारमसङ्ख्येयं वानराणां महद्बलम् ॥ ७
आलोक्य रावणो राजा परिपप्रच्छ सारणम् । एषां वानरमुख्यानां के शूराः के महाबलाः ॥ ८
के पूर्वमभिवर्तन्ते महोत्साहाः समन्ततः । केषां शृणोति सुग्रीवः के वा यूथपयूथपाः ॥ ९
सारणाचक्ष्व तत्त्वेन किंप्रभावाः[3] प्लवङ्गमाः । सारणो राक्षसेन्द्रस्य वचनं परिपृच्छतः ॥ १०
आचचक्षेऽथ मुख्यज्ञो मुख्यांस्तत्र वनौकसः । एष योऽभिमुखो लङ्कां नर्दंस्तिष्ठति वानरः ॥ ११
यूथपानां सहस्राणां शतेन परिवारितः । यस्य घोषेण महता सप्राकारा सतोरणा ॥ १२

१. व्यक्त इत्यादि विद्यत इत्यन्तम् क. ग, घ. च. नास्ति ।
२. बहुसालसमुत्सेधम् घ. ।
३. के प्रधानाः ख. छ. ।

लङ्का प्रवेपते सर्वा सशैलवनकानना। सर्वशाखामृगेन्द्रस्य सुग्रीवस्य महात्मनः॥ १३
बलाग्रे तिष्ठते वीरो नीलो नामैष यूथपः। बाहू प्रगृह्य यः पद्भ्यां महीं गच्छति वीर्यवान्॥
लङ्कामभिमुखः क्रोधादभीक्ष्णं च विजृम्भते। गिरिशृङ्गप्रतीकाशः पद्मकिञ्जल्कसन्निभः॥ १५
स्फोटयत्यभिसंरब्धो लाङ्गूलं च पुनः पुनः। यस्य लाङ्गूलशब्देन स्वनन्ति प्रदिशो दश[1]॥ १६
एष वानरराजेन सुग्रीवेणाभिषेचितः। यौवराज्येऽङ्गदो नाम त्वामाह्वयति संयुगे॥ १७
वालिनः सदृशः पुत्रः सुग्रीवस्य सदा प्रियः। राघवार्थे पराक्रान्तः शक्रार्थे वरुणो यथा॥ १८
एतस्य सा मतिः सर्वा यद्दृष्टा जनकात्मजा। हनूमता वेगवता राघवस्य हितैषिणा॥ १९
बहूनि वानरेन्द्राणामेष यूथानि वीर्यवान्। परिगृह्याभियाति त्वां स्वेनानीकेन दुर्जयः॥ २०
अनु वालिसुतस्यापि बलेन महतावृतः। वीरस्तिष्ठति संग्रामे सेतुहेतुरयं नलः॥ २१
ये तु विष्टभ्य गात्राणि क्ष्वेलयन्ति नदन्ति च। उत्थाय च विजृम्भन्ते क्रोधेन हरिपुंगवाः॥
एते दुष्प्रसहा घोराश्चण्डाश्चण्डपराक्रमाः। अष्टौ शतसहस्राणि दशकोटिशतानि च॥ २३
य एनमनुगच्छन्ति वीराश्चन्दनवासिनः। एषैवाशंसते लङ्कां स्वेनानीकेन मर्दितुम्॥ २४
श्वेतो रजतसंकाशश्चपलो भीमविक्रमः। बुद्धिमान् वानरो वीरस्त्रिषु लोकेषु विश्रुतः॥ २५
तूर्णं सुग्रीवमागम्य पुनर्गच्छति सत्वरः। विभजन् वानरीं सेनामनीकानि प्रहर्षयन्॥ २६
यः पुरा गोमतीतीरे रम्यं पर्येति पर्वतम्। नाम्ना संकोचनो[2] नाम नानानगयुतो गिरिः॥ २७
तत्र राज्यं प्रशास्त्येष कुमुदो नाम यूथपः। योऽसौ शतसहस्राणां सहस्रं[3] परिकर्षति॥ २८
यस्य वाला बहुव्यामा दीर्घा लाङ्गूलमाश्रिताः। ताम्राः पीताः सिताः श्वेताः प्रकीर्णा घोरकर्मणः॥
अदीनो रोषणश्चण्डः संग्राममभिकाङ्क्षति। एषोऽप्याशंसते लङ्कां स्वेनानीकेन मर्दितुम्॥ ३०
यस्त्वेष सिंहसंकाशः कपिलो दीर्घकेसरः। निभृतः प्रेक्षते लङ्कां दिधक्षन्निव चक्षुषा॥ ३१
विन्ध्यं कृष्णगिरिं सह्यं पर्वतं च सुदर्शनम्। राजन् सततमध्यास्ते रम्भो नामैष यूथपः॥ ३२
शतं शतसहस्राणां त्रिंशच्च हरिपुंगवः। यमेते वानराः शूराश्चण्डाश्चण्डपराक्रमाः॥ ३३
परिवार्यानुगच्छन्ति लङ्कां मर्दितुमोजसा। यस्तु कर्णौ विवृणुते जृम्भते च पुनः पुनः॥ ३४
न च संविजते मृत्योर्न च युद्धाद्विधावति। प्रकम्पते च रोषेण तिर्यक् च पुनरीक्षते॥ ३५
पश्यल्लाँङ्गूलमपि च क्ष्वेलते च महाबलः। महाजवो वीतभयो रम्यं साल्वेयपर्वतम्॥ ३६
राजन् सततमध्यास्ते शरभो नाम यूथपः[4]। एतस्य बलिनः सर्वे विहारा नाम यूथपाः॥ ३७
राजञ्शतसहस्राणि चत्वारिंशत्तथैव च। यस्तु मेघ इवाकाशं महानावृत्य तिष्ठति॥ ३८
मध्ये वानरवीराणां सुराणामिव वासवः। भेरीणामिव संनादो यस्यैष श्रूयते महान्॥ ३९

१. प्रकम्पन्ते दिशो दश घ.।
२. संरोचनः पुना.।
३. सहस्रम् च. छ.।
४. यमेत इत्यादि यूथप इत्यन्तम् ग.नास्ति।

घोषः शाखामृगेन्द्राणां संग्राममभिकाङ्क्षताम् । एष पर्वतमध्यास्ते पारियात्रमनुत्तमम् ॥ ४०
युद्धे दुष्प्रसहो नित्यं पनसो नाम यूथपः । एनं शतसहस्राणां[1] शतार्धं पर्युपासते ॥ ४१
यूथपा यूथपश्रेष्ठं येषां यूथानि भागशः । यस्तु भीमां प्रवल्गन्तीं चमूं तिष्ठति शोभयन् ॥ ४२
स्थितां तीरे समुद्रस्य द्वितीय इव भास्करः । एष दर्दुरसंकाशो विनतो नाम यूथपः ॥ ४३
पिबंश्चरति पर्णासां नदीनामुत्तमां नदीम् । षष्टिः शतसहस्राणि बलमस्य प्लवङ्गमाः ॥ ४४
त्वामाह्वयति युद्धाय क्रोधनो नाम यूथपः[2] । विक्रान्ता बलवन्तश्च यथा यूथानि भागशः ॥ ४५
यस्तु गैरिकवर्णाभं वपुः पुष्यति वानरः । अवमत्य सदा सर्वान् वानरान् बलदर्पितान् ॥ ४६
गवयो नाम तेजस्वी त्वां क्रोधादभिवर्तते । एनं शतसहस्राणि सप्ततिः पर्युपासते[3]॥ ४७
एषैवाशंसते लङ्कां स्वेनानीकेन मर्दितुम् । एते दुष्प्रसहा घोरा बलिनः कामरूपिणः[4]॥ ४८
यूथपा यूथपश्रेष्ठा एषां यूथानि भागशः[5]॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
युद्धकाण्डे कपिबलावेक्षणं नाम षड्विंशः सर्गः

---

## सप्तविंशः सर्गः

### हरादिवानरपराक्रमाख्यानम्

तांस्तु तेऽहं प्रवक्ष्यामि प्रेक्षमाणस्य यूथपान् । राघवार्थे पराक्रान्ता ये न रक्षन्ति जीवितम् ॥
स्निग्धा यस्य बहुव्यामा वाला लाङ्गूलमाश्रिताः । ताम्राः पीताः सिताः श्वेताः प्रकीर्णा घोरकर्मणः॥
प्रगृहीताः प्रकाशन्ते सूर्यस्येव मरीचयः । पृथिव्यां चानुकृष्यन्ते हरो नामैष यूथपः ॥ ३
यं पृष्ठतोऽनुगच्छन्ति शतशोऽथ सहस्रशः । द्रुमानुद्यम्य सहसा लङ्कारोहणतत्पराः ॥ ४
एष कोटिसहस्रेण वानराणां महौजसाम् । आकाङ्क्षते त्वां संग्रामे जेतुं परपुरंजय[6]॥ ५
यूथपा हरिराजस्य किङ्कराः समुपस्थिताः । नीलानिव महामेघांस्तिष्ठतो यांस्तु पश्यसि ॥ ६
असिताञ्जनसंकाशान् युद्धे सत्यपराक्रमान् । असंख्येयाननिर्देश्यान् परं पारमिवोदधेः ॥ ७
पर्वतेषु च ये केचिद्विषमेषु नदीषु च । एते त्वामभिवर्तन्ते राजन्नृक्षाः सुदारुणाः ॥ ८

१. संग्राममित्यादि शतसहस्राणामित्यन्तम् क. नास्ति ।

२. पिबन्नित्यादि यूथप इत्यन्तम् क. नास्ति ।

३. अस्यानन्तरम्—हरीणां यूथपाः सन्ति बलिनां च महौजसाम्—इति ख. ।

४. वीरा येषां संख्या न विद्यते ति. ।

५. अस्यानन्तरम्—इमे महाराज महापराक्रमाः कपिप्रवीरास्तव ये सुकीर्तिताः । विवृत्तदर्पा बलिनस्तु दुर्जया रणे समग्रैरपि देवदानवैः ॥ तद्वानरं सैन्यमभीक्ष्णभीमं बलं च वीर्यं च समीक्ष्य तेषाम् । श्रुत्वा त्वसंख्यां च ततः स राजा विषण्णरूपोऽभवदल्पबुद्धिः ॥—इति ग. ।

६. इदं पद्यम् क. ख. ग. घ. च. नास्ति ।

एषां मध्ये स्थितो राजन् भीमाक्षो भीमदर्शनः । पर्जन्य इव जीमूतैः समन्तात्परिवारितः ॥ ९
ऋक्षवन्तं गिरिश्रेष्ठमध्यास्ते नर्मदां पिबन् । सर्वर्क्षाणामधिपतिर्धूम्रो नामैष यूथपः ॥ १०
यवीयानस्य तु भ्राता पश्यैनं पर्वतोपमम् । भ्रात्रा समानो रूपेण विशिष्टस्तु पराक्रमैः[1] ॥ ११
स एष जाम्बवान्नाम महायूथपयूथपः । प्रक्रान्तो[2] गुरुवर्ती च संप्रहारेष्वमर्षणः ॥ १२
एतेन साह्यं सुमहत्कृतं शक्रस्य धीमता । दैवासुरे जाम्बवता लब्धाश्च बहवो वराः ॥ १३
आरुह्य पर्वताग्रेभ्यो महाभ्रविपुलाः शिलाः । मुञ्चन्ति विपुलाकारा न मृत्योरुद्विजन्ति च ॥ १४
राक्षसानां च सदृशाः पिशाचानां च लोमशाः । एतस्य सैन्या बहवो विचरन्त्यमितेजसः ॥ १५
यं त्वेनमभिसंरब्धं प्लवमानमिव स्थितम्[3] । प्रेक्षन्ते वानराः सर्वे स्थिता यूथपयूथपम् ॥ १६
एष राजन् सहस्राक्षं पर्युपास्ते हरीश्वरः । बलेन बलसंपन्नो दम्भो नामैष यूथपः ॥ १७
यः स्थितं योजने शैलं गच्छन् पार्श्वेन सेवते । ऊर्ध्वं तथैव कायेन गतः प्राप्नोति योजनम् ॥ १८
यस्मान्न परमं रूपं चतुष्पादेषु विद्यते । श्रुतः सन्नादनो नाम वानराणां पितामहः ॥ १९
येन युद्धं पुरा दत्तं रणे शक्रस्य धीमतः । पराजयश्च न प्राप्तः सोऽयं यूथपयूथपः ॥ २०
यस्य विक्रममाणस्य शक्रस्येव पराक्रमः । एष गन्धर्वकन्यायामुत्पन्नः कृष्णवर्त्मनः ॥ २१
तदा दैवासुरे युद्धे साह्यार्थं त्रिदिवौकसाम् । यस्य वैश्रवणो राजा जम्बूमुपनिषेवते ॥ २२
यो राजा पर्वतेन्द्राणां बहुकिन्नरसेविनाम् । विहारसुखदो नित्यं भ्रातुस्ते राक्षसाधिप ॥ २३
तत्रैष वसति श्रीमान् बलवान् वानरर्षभः । युद्धेष्वकत्थनो नित्यं क्रथनो नाम यूथपः ॥ २४
वृतः कोटिसहस्रेण हरीणां समुपस्थितः । एषैवाशंसते लङ्कां स्वेनानीकेन मर्दितुम् ॥ २५
यो गङ्गामनु पर्येति त्रासयन् हस्तियूथपान् । हस्तिनां वानराणां च पूर्ववैरमनुस्मरन् ॥ २६
एष यूथपतिर्नेता गच्छन् गिरिगुहाशयः । गजान् योधयते वन्यान् गिरींश्चैव महीरुहान् ॥ २७
हरीणां वाहिनीमुख्यो नदीं हैमवतीमनु । उशीरबीजमाश्रित्य पर्वतं मन्दरोपमम् ॥ २८
रमते वानरश्रेष्ठो दिवि शक्र इव स्वयम् । एनं शतसहस्राणां सहस्रमनुवर्तते ॥ २९
वीर्यविक्रमदृप्तानां नर्दतां बाहुशालिनाम् । स एष नेता चैतेषां वानराणां महात्मनाम्[4] ॥ ३०
स एष दुर्धरो राजन् प्रमाथी नाम यूथपः । वातेनेवोद्धतं मेघं यमेनमनुपश्यसि ॥ ३१
अनीकमपि संरब्धं वानराणां तरस्विनाम् । उद्धूतमरुणाभासं पवनेन समन्ततः ॥ ३२
विवर्तमानं बहुधा यत्रैतद्बहुलं रजः । एते सितमुखा घोरा गोलाङ्गूला महाबलाः ॥ ३३
शतं शतसहस्राणि दृष्ट्वा वै सेतुबन्धनम् । गोलाङ्गूलं महावेगं गवाक्षं नाम यूथपम् ॥ ३४
परिवार्याभिवर्तन्ते लङ्कां मर्दितुमोजसा । भ्रमराचरिता यत्र सर्वकालफलद्रुमाः ॥ ३५

---

१. पराक्रमे क. ।
२. प्रशान्तः क. ख. घ. ।
३. अवस्थितम् घ. ।
४. तरस्विनाम् घ. ।

यं सूर्यस्तुल्यवर्णाभमनु पर्येति पर्वतम् । यस्य भासा सदा भान्ति तद्वर्णा मृगपक्षिणः ॥ ३६
यस्य प्रस्थं महात्मानो न त्यजन्ति महर्षयः । सर्वकामफला वृक्षाः सदा फलसमन्विताः ॥ ३७
मधूनि च महार्हाणि यस्मिन् पर्वतसत्तमे । तत्रैष रमते राजन् रम्ये काञ्चनपर्वते ॥ ३८
मुख्यो वानरमुख्यानां केसरी नाम यूथपः । षष्टिर्गिरिसहस्राणां रम्याः काञ्चनपर्वताः ॥ ३९
तेषां मध्ये गिरिवरस्त्वमिवानघ रक्षसाम् । तत्रैते कपिलाः श्वेतास्ताम्रास्या मधुपिङ्गलाः ॥ ४०
निवसन्त्युत्तमगिरौ तीक्ष्णदंष्ट्रा नखायुधाः । सिंहा इव चतुर्दंष्ट्रा व्याघ्रा इव दुरासदाः ॥ ४१
सर्वे वैश्वानरसमा ज्वलिताशीविषोपमाः । सुदीर्घाञ्चितलाङ्गूला मत्तमातङ्गसन्निभाः ॥ ४२
महापर्वतसंकाशा महाजीमूतनिःस्वनाः । वृत्तपिङ्गलरक्ताक्षा भीमभीमगतिस्वराः ॥ ४३
मर्दयन्तीव ते सर्वे तस्थुर्लङ्कां समीक्ष्य ते । एष चैषामधिपतिर्मध्ये तिष्ठति वीर्यवान् ॥ ४४
जयार्थी नित्यमादित्यमुपतिष्ठति बुद्धिमान् । नाम्ना पृथिव्यां विख्यातो राजञ्शतबलीति यः ॥
एषैवाशंसते लङ्कां स्वेनानीकेन मर्दितुम् । विक्रान्तो बलवाञ्शूरः पौरुषे स्वे व्यवस्थितः ॥ ४६
रामप्रियार्थं प्राणानां दयां न कुरुते हरिः । गजो गवाक्षो गवयो नलो नीलश्च वानरः ॥ ४७
एकैक एव यूथानां कोटिभिर्दशभिर्वृतः । तथान्ये वानरश्रेष्ठा विन्ध्यपर्वतवासिनः ॥ ४८
न शक्यं ते बहुत्वात्तु संख्यातुं लघुविक्रमाः ॥

सर्वे महाराज महाप्रभावाः सर्वे महाशैलनिकाशकायाः ।
सर्वे समर्थाः पृथिवीं क्षणेन कर्तुं प्रविध्वस्तविकीर्णशैलाम् ॥ ४९

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
युद्धकाण्डे हरादिवानरपराक्रमाख्यानं नाम सप्तविंशः सर्गः

---

## अष्टाविंशः सर्गः

### मैन्दादिपराक्रमाख्यानम्

सारणस्य वचः श्रुत्वा रावणं राक्षसाधिपम् । बलमादिश्य तत्सर्वं[1] शुको वाक्यमथाब्रवीत् ॥ १
स्थितान् पश्यसि यानेतान् मत्तानिव महाद्विपान् । न्यग्रोधानिव गाङ्गेयान् सालान् हैवमतानिव ॥
एते दुष्प्रसहा राजन् बलिनः कामरूपिणः । दैत्यदानवसंकाशा युद्धे देवपराक्रमाः ॥ ३
एषां कोटिसहस्राणि नव पञ्च च सप्त च । तथा शङ्खसहस्राणि तथा वृन्दशतानि च ॥ ४
एते सुग्रीवसचिवाः किष्किन्धानिलयाः सदा । हरयो देवगन्धर्वैरुत्पन्नाः कामरूपिणः ॥ ५
यौ तौ पश्यसि तिष्ठन्तौ कुमारौ देवरूपिणौ । मैन्दश्च द्विविदश्चोभौ ताभ्यां नास्ति समो युधि ॥
ब्रह्मणा समनुज्ञातावमृतप्राशिनावुभौ । आशंसेते युधा लङ्कामेतौ मर्दितुमोजसा[2] ॥ ७

---

१. बलमालोकयन् सर्वम् ख. ।
२. अस्यानन्तरम्--यावेतावेतयोः पार्श्वे स्थितौ पर्वतसन्निभौ। सुमुखोऽसुमुखश्चैव मृत्युपुत्रौ पितुः समौ। प्रेक्षन्तौ नगरीं लङ्कां कोटिभिर्दशभिर्वृतौ ।-इति छ. ।

यं तु पश्यसि तिष्ठन्तं प्रभिन्नमिव कुञ्जरम् । यो बलात्क्षोभयेत्क्रुद्धः समुद्रमपि वानरः ॥ ८
एषोऽभिगन्ता लङ्काया वैदेह्यास्तव च प्रभो । एनं पश्य पुरा दृष्टं वानरं पुनरागतम् ॥ ९
ज्येष्ठः केसरिणः पुत्रो वातात्मज इति श्रुतः । हनुमानिति विख्यातो लङ्घितो येन सागरः॥१०
कामरूपी हरिश्रेष्ठो बलरूपसमन्वितः । अनिवार्यगतिश्चैव यथा सततगः प्रभुः ॥ ११
उद्यन्तं भास्करं दृष्ट्वा बालः किल पिपासितः । त्रियोजनसहस्रं तु अध्वानमवतीर्य हि ॥ १२
आदित्यमाहरिष्यामि न मे क्षुत्प्रतियास्यति । इति संचिन्त्य मनसा पुरैष[1] बलदर्पितः ॥ १३
अनाधृष्यतमं देवमपि देवर्षिदानवैः । अनासाद्यैव पतितो भास्करोदयने गिरौ ॥ १४
पतितस्य कपेरस्य हनुरेका शिलातले । किंचिद्भिन्ना दृढहनोर्हनुमानेष तेन वै ॥ १५
सत्यमागमयोगेन ममैष विदितो हरिः । नास्य शक्यं बलं रूपं प्रभावो वापि भाषितुम् ॥ १६
एष आशंसते लङ्कामेको मर्दितुमोजसा । येन जाज्वल्यते सौम्य धूमकेतुस्तवाद्य वै ॥ १७
लङ्कायां निहितश्चापि कथं न स्मरसे कपिम् । यश्चैषोऽनन्तरः शूरः श्यामः पद्मनिभेक्षणः ॥
इक्ष्वाकूणामतिरथो लोके विख्यातपौरुषः । यस्मिन्न चलते धर्मो यो धर्मं नातिवर्तते ॥ १९
यो ब्राह्ममस्त्रं वेदांश्च वेद वेदविदां वरः । यो भिन्द्याद्गगनं बाणैः पर्वतानपि दारयेत् ॥ २०
यस्य मृत्योरिव क्रोधः शक्रस्येव पराक्रमः । यस्य भार्या जनस्थानात्सीता चापहृता त्वया ॥ २१
स एष रामस्त्वां योद्धुं राजन् समभिवर्तते । यस्यैष दक्षिणे पार्श्वे शुद्धजाम्बूनदप्रभः ॥ २२
विशालवक्षास्ताम्राक्षो नीलकुञ्चितमूर्धजः । एषोऽस्य लक्ष्मणो नाम भ्राता प्राणसमः प्रियः ॥२३
नये युद्धे च कुशलः सर्वशास्त्रविशारदः[2] । अमर्षी दुर्जयो जेता विक्रान्तो बुद्धिमान् बली॥२४
रामस्य दक्षिणो बाहुर्नित्यं प्राणो बहिश्चरः । न ह्येष राघवस्यार्थे जीवितं परिरक्षति ॥ २५
एषैवाशंसते युद्धे निहन्तुं सर्वराक्षसान् । यस्तु सव्यमसौ पक्षं रामस्याश्रित्य तिष्ठति ॥ २६
रक्षोगणपरिक्षिप्तो राजा ह्येष विभीषणः । श्रीमता राजराजेन लङ्कायामभिषेचितः ॥ २७
त्वामेव प्रतिसंरब्धो युद्धायैषोऽभिवर्तते । यं तु पश्यसि तिष्ठन्तं मध्ये गिरिमिवाचलम् ॥ २८
सर्वशाखामृगेन्द्राणां भर्तारमपराजितम् । तेजसा यशसा बुद्ध्या ज्ञानेनाभिजनेन च ॥ २९
यः कपीनतिबभ्राज हिमवानिव पर्वतान् । किष्किन्धां यः समध्यास्ते गुहां सगहनद्रुमाम् ॥
दुर्गां पर्वतदुर्गस्थां प्रधानैः सह यूथपैः । यस्यैषा काञ्चनी माला शोभते शतपुष्करा ॥ ३१
कान्ता देवमनुष्याणां यस्यां लक्ष्मीः प्रतिष्ठिता । एतां च मालां तारां च कपिराज्यं च शाश्वतम्॥
सुग्रीवो वालिनं हत्वा रामेण प्रतिपादितः । शतं शतसहस्राणां कोटिमाहुर्मनीषिणः ॥ ३३
शतं कोटिसहस्राणां शङ्ख इत्यभिधीयते । शतं शङ्खसहस्राणां महाशङ्ख इति स्मृतम् ॥ ३४
महाशङ्खसहस्राणां शतं बृन्दमिति स्मृतम् । शतं बृन्दसहस्राणां महाबृन्दमिति स्मृतम् ॥ ३५

---

१. पुप्लुवे पुना. । २. सर्वशस्त्रभृतां वरः छ. ।

महावृन्दसहस्राणां शतं पद्ममिति स्मृतम्। शतं पद्मसहस्राणां महापद्ममिति स्मृतम् ॥ ३६
महापद्मसहस्राणां शतं खर्वमिहोच्यते। शतं खर्वसहस्राणां महाखर्वमिति स्मृतम् ॥ ३७
महाखर्वसहस्राणां समुद्रमभिधीयते। शतं समुद्रसाहस्रमोघ इत्यभिधीयते ॥ ३८
शतमोघसहस्राणां महौघ इति विश्रुतः। एवं कोटिसहस्रेण शङ्कूनां च शतेन च ॥ ३९
महाशङ्कुसहस्रेण तथा वृन्दशतेन च। महावृन्दसहस्रेण तथा पद्मशतेन च ॥ ४०
महापद्मसहस्रेण तथा खर्वशतेन च। समुद्रेण शतेनैव महौघेन तथैव च ॥ ४१
एष कोटिमहौघेन समुद्रसदृशेन च। विभीषणेन सचिवै राक्षसैः परिवारितः ॥ ४२
सुग्रीवो वानरेन्द्रस्त्वां युद्धार्थमभिवर्तते। महाबलवृतो नित्यं महाबलपराक्रमः ॥ ४३

इमां महाराज समीक्ष्य वाहिनीमुपस्थितां प्रज्वलितग्रहोपमाम्।
ततः प्रयत्नः परमो विधीयतां यथा जयः स्यान्न परैः पराजयः ॥ ४४

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
युद्धकाण्डे मैन्दादिपराक्रमाख्यानं नाम अष्टाविंशः सर्गः

---

## एकोनत्रिंशः सर्गः

### शार्दूलादिचारप्रेषणम्

शुकेन तु समाख्यातांस्तान् दृष्ट्वा हरियूथपान्। लक्ष्मणं च महावीर्यं भुजं रामस्य दक्षिणम् ॥ १
समीपस्थं च रामस्य भ्रातरं स्वं विभीषणम्। सर्ववानरराजं च सुग्रीवं भीमविक्रमम् ॥ २
गजं गवाक्षं गवयं मैन्दं द्विविदमेव च। अङ्गदं चैव बलिनं वज्रहस्तात्मजात्मजम् ॥ ३
हनूमन्तं च विक्रान्तं जाम्बवन्तं च दुर्जयम्। सुषेणं कुमुदं नीलं नलं च प्लवगर्षभम्[1] ॥ ४
किंचिदाविग्नहृदयो जातक्रोधश्च रावणः। भर्त्सयामास तौ वीरौ कथान्ते शुकसारणौ ॥ ५
अधोमुखौ तौ प्रणतावब्रवीच्छुकसारणौ। रोषगद्गदया वाचा संरब्धः परुषं वचः ॥ ६
न तावत्सदृशं नाम सचिवैरुपजीविभिः। विप्रियं नृपतेर्वक्तुं निग्रहप्रग्रहे प्रभोः ॥ ७
रिपूणां प्रतिकूलानां युद्धार्थमभिवर्तताम्[2]। उभाभ्यां[3] सदृशं नाम वक्तुमप्रस्तवे स्तवम् ॥ ८
आचार्या गुरवो वृद्धा वृथा वां पर्युपासिताः। सारं यद्राजशास्त्राणामनुजीव्यं न गृह्यते ॥ ९
गृहीतो वा न विज्ञातो भारो ज्ञानस्य वोह्यते। ईदृशैः सचिवैर्युक्तो मूर्खैर्दिष्ट्या धराम्यहम् ॥
किं नु मृत्योर्भयं नास्ति वक्तुं मां परुषं वचः। यस्य मे शासतो जिह्वा प्रयच्छति शुभाशुभम् ॥
अप्येव दहनं स्पृष्ट्वा वने तिष्ठन्ति पादपाः। राजदोषपरामृष्टास्तिष्ठन्ते नापराधिनः ॥ १२

१. ३-४ पद्ये क. ग. न स्तः। २. अभिधावताम् ख. ग.। ३. युवाभ्याम् घ.

हन्यामहं त्विमौ पापौ शत्रुपक्षप्रशंसकौ । यदि पूर्वोपकारैर्मे न क्रोधो मृदुतां व्रजेत् ॥ १३
अपध्वंसत गच्छध्वं[1] संनिकर्षादितो मम । न हि वां हन्तुमिच्छामि स्मराम्युपकृतानि वाम् ॥
हतावेव कृतघ्नौ तौ मयि स्नेहपराङ्मुखौ । एवमुक्तौ तु सव्रीडौ तावुभौ शुकसारणौ ॥ १५
रावणं जयशब्देन प्रतिनन्द्याभिनिःसृतौ । अब्रवीच्च दशग्रीवः समीपस्थं महोदरम् ॥ १६
उपस्थापय मे शीघ्रं चारान्नीतिविशारदान् । महोदरस्तथोक्तस्तु शीघ्रमाज्ञापयच्चरान् ॥ १७
ततश्चाराः संत्वरिताः प्राप्ताः पार्थिवशासनात् । उपस्थिताः प्राञ्जलयो वर्धयित्वा जयाशिषा १८
तानब्रवीत्ततो वाक्यं रावणो राक्षसाधिपः । चारान् प्रत्यायितान्[2] शूरान् भक्तान् विगतसाध्वसान् ॥
इतो[3] गच्छत रामस्य व्यवसायं परीक्षथ । [4]मन्त्रेष्वभ्यन्तरा येऽस्य प्रीत्या तेन समागताः ॥
कथं स्वपिति जागर्ति किमन्यच्च करिष्यति । विज्ञाय निपुणं सर्वमागन्तव्यमशेषतः ॥ २१
चारेण विदितः शत्रुः पण्डितैर्वसुधाधिपैः । युद्धे स्वल्पेन यत्नेन समासाद्य निरस्यते ॥ २२
चारास्तु ते तथेत्युक्त्वा प्रहृष्टा राक्षसेश्वरम् । शार्दूलमग्रतः कृत्वा ततश्चक्रुः प्रदक्षिणम् ॥ २३
ततस्ते तं महात्मानं चारा राक्षससत्तमम् । कृत्वा प्रदक्षिणं जग्मुर्यत्र रामः सलक्ष्मणः ॥ २४
ते सुवेलस्य शैलस्य समीपे रामलक्ष्मणौ । प्रच्छन्ना ददृशुर्गत्वा ससुग्रीवविभीषणौ ॥ २५
प्रेक्षमाणाश्चमूं तां च बभूवुर्भयविक्लवाः । ते तु धर्मात्मना दृष्टा राक्षसेन्द्रेण राक्षसाः ॥ २६
विभीषणेन तत्रस्था निगृहीता यदृच्छया । शार्दूलो ग्राहितस्त्वेकः पापोऽयमिति राक्षसः ॥
मोचितः सोऽपि रामेण बध्यमानः प्लवङ्गमैः । आनृशंस्येन रामस्य मोचिता राक्षसाः परे ॥
वानरैरर्दितास्ते तु विक्रान्तैर्लघुविक्रमैः । पुनर्लङ्कामनुप्राप्ताः श्वसन्तो नष्टचेतसः ॥ २९
ततो दशग्रीवमुपस्थितास्तु ते चारा बहिर्नित्यचरा निशाचराः ।
गिरेः सुवेलस्य समीपवासिनं न्यवेदयन् रामबलं[5] महाबलाः ॥ ३०

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
युद्धकाण्डे शार्दूलादिचारप्रेषणं नाम एकोनत्रिंशः सर्गः

---

## त्रिंशः सर्गः

### वानरबलसंख्यानम्

ततस्तमक्षोभ्यबलं लङ्काधिपतये चराः । सुवेले राघवं शैले निविष्टं प्रत्यवेदयन् ॥ १
चाराणां रावणः श्रुत्वा प्राप्तं रामं महाबलम् । जातोद्वेगोऽभवत्किंचिच्छार्दूलं वाक्यमब्रवीत् ॥

---

१. नश्यध्वम् पुना. ।
२. प्रत्यधिकान् ख. ।
प्रत्ययितान् ग. । प्रत्यायिकान् घ.
३. छन्नाः ख. ।
४. मन्त्रिषु च. छ. ।
५. भीमबलम् च. छ. ।

अयथावच्च ते वर्णो दीनश्चासि निशाचर । नासि कच्चिदमित्राणां क्रुद्धानां वशमागतः ॥ ३
इति तेनानुशिष्टस्तु वाचं मन्दमुदीरयत्[1] । तदा राक्षसशार्दूलं शार्दूलो भयविह्वलः ॥ ४
न ते चारयितुं शक्या राजन् वानरपुंगवाः । विक्रान्ता बलवन्तश्च राघवेण च रक्षिताः ॥ ५
नापि संभाषितुं शक्याः संप्रश्नोऽत्र न लभ्यते । सर्वतो रक्ष्यते पन्था वानरैः पर्वतोपमैः ॥ ६
प्रविष्टमात्रे ज्ञातोऽहं बले तस्मिन्नचारिते । बलाद्गृहीतो रक्षोभिर्बहुधास्मि विचालितः[2] ॥ ७
जानुभिर्मुष्टिभिर्दन्तैस्तलैश्चाभिहतो भृशम् । परिणीतोऽस्मि हरिभिर्बलवद्भिरमर्षणैः ॥ ८
परिणीय च सर्वत्र नीतोऽहं रामसंसदम् । रुधिरादिग्धसर्वाङ्गो विह्वलश्चलितेन्द्रियः ॥ ९
हरिभिर्वध्यमानश्च याचमानः कृताञ्जलिः । राघवेण परित्रातो मा मेति च[3] यदृच्छया ॥ १०
एष शैलैः शिलाभिश्च पूरयित्वा महार्णवम् । द्वारमाश्रित्य लङ्काया रामस्तिष्ठति सायुधः ॥ ११
गारुडं व्यूहमास्थाय सर्वतो हरिभिर्वृतः । मां विसृज्य महातेजा लङ्कामेवाभिवर्तते ॥ १२
पुरा प्राकारमायाति क्षिप्रमेकतरं कुरु । सीतां वास्मै प्रयच्छाशु सुयुद्धं वा प्रदीयताम् ॥ १३
मनसा तं तदा प्रेक्ष्य[4] तच्छ्रुत्वा राक्षसाधिपः । शार्दूलं सुमहद्वाक्यमथोवाच स रावणः ॥१४
यदि मां प्रति युध्येरन् देवगन्धर्वदानवाः । नैव सीतां प्रदास्यामि सर्वलोकभयादपि ॥ १५
एवमुक्त्वा महातेजा रावणः पुनरब्रवीत् । चारिता भवता सेना केऽत्र शूराः प्लवङ्गमाः ॥ १६
कीदृशाः किंप्रभाः सौम्य[5] वानरा ये दुरासदाः । कस्य पुत्राश्च पौत्राश्च तत्त्वमाख्याहि राक्षस ॥
तथात्र प्रतिपत्स्यामि ज्ञात्वा तेषां बलाबलम् । अवश्यं बलसंख्यानं कर्तव्यं युद्धमिच्छताम् ॥
अथैवमुक्तः शार्दूलो रावणेनोत्तमश्चरः । इदं वचनमारेभे वक्तुं रावणसंनिधौ ॥ १९
अथर्क्षरजसः पुत्रो युधि राजा सुदुर्जयः । गद्गदस्याथ पुत्रोऽत्र जाम्बवानिति विश्रुतः ॥ २०
गद्गदस्यैव पुत्रोऽन्यो गुरुपुत्रः शतक्रतोः । कदनं यस्य पुत्रेण कृतमेकेन रक्षसाम् ॥ २१
सुषेणश्चापि धर्मात्मा पुत्रो धर्मस्य वीर्यवान् । सौम्यः सोमात्मजश्चात्र राजन् दधिमुखः कपिः ॥
सुमुखो दुर्मुखश्चात्र वेगदर्शी च वानरः । मृत्युर्वानररूपेण नूनं सृष्टः स्वयंभुवा ॥ २३
पुत्रो हुतवहस्याथ नीलः सेनापतिः स्वयम् । अनिलस्य च पुत्रोऽत्र हनुमानिति विश्रुतः ॥ २४
नप्ता[6] शक्रस्य दुर्धर्षो बलवानङ्गदो युवा । मैन्दश्च द्विविदश्चोभौ बलिनावश्विसंभवौ ॥ २५
पुत्रा वैवस्वतस्यात्र पञ्च कालान्तकोपमाः । गजो गवाक्षो गवयः शरभो गन्धमादनः ॥ २६
दश वानरकोट्यश्च शूराणां युद्धकाङ्क्षिणाम् । श्रीमतां देवपुत्राणां शेषं नाख्यातुमुत्सहे ॥२७
पुत्रो दशरथस्यैष सिंहसंहननो युवा । दूषणो निहतो येन खरश्च त्रिशिरास्तथा ॥ २८

---

१. उदीरयन् पुना. ।
२. बलिभिर्हरिभिर्व[वि]प्रकारिभिः ख. ।
३. जीवामीति च. छ. ।
४. संततापाथ ध. ।
५. सौम्याः प्र. ।
६. पौत्रः ख. ।

नास्ति रामस्य सदृशो विक्रमे भुवि कश्चन । विराधो निहतो येन कबन्धश्चान्तकोपमः[१] ॥२९
वक्तुं न शक्तो रामस्य नरः कश्चिद्गुणान् क्षितौ । जनस्थानगता येन यावन्तो[२] राक्षसा हताः॥३०
लक्ष्मणश्चात्र धर्मात्मा मातङ्गानामिवर्षभः । यस्य बाणपथं प्राप्य न जीवेदपि वासवः ॥ ३१
श्वेतो ज्योतिर्मुखश्चात्र भास्करस्यात्मसंभवौ । वरुणस्य च पुत्रोऽन्यो हेमकूटः प्लवङ्गमः ॥ ३२
विश्वकर्मसुतो वीरो नलः प्लवगसत्तमः । विक्रान्तो बलवानत्र वसुपुत्रः सुदुर्धरः ॥ ३३
राक्षसानां वरिष्ठश्च तव भ्राता विभीषणः । परिगृह्य पुरीं लङ्कां राघवस्य हिते रतः ॥ ३४
इति सर्वं समाख्यातं तवेदं वानरं बलम् । सुवेलेऽधिष्ठितं शैले शेषकार्ये भवान् गतिः ॥ ३५

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
युद्धकाण्डे वानरबलसंख्यानं नाम त्रिंशः सर्गः

---

## एकत्रिंशः सर्गः

### विद्युज्जिह्वमायाप्रयोगः

ततस्तमक्षोभ्यबलं लङ्काधिपतये चराः । सुवेले राघवं शैले निविष्टं प्रत्यवेदयन् ॥ १
चाराणां रावणः श्रुत्वा प्राप्तं रामं महाबलम् । जातोद्वेगोऽभवत्किंचित्सचिवानिदमब्रवीत् ॥ २
मन्त्रिणः शीघ्रमायान्तु सर्वे वै सुसमाहिताः । अयं नो मन्त्रकालो हि संप्राप्त इति राक्षसाः ॥
तस्य तच्छासनं श्रुत्वा मन्त्रिणोऽभ्यागमन् द्रुतम् । ततः स मन्त्रयामास सचिवै राक्षसैः सह ॥
मन्त्रयित्वा स दुर्धर्षः क्षमं यत्समनन्तरम् । विसर्जयित्वा सचिवान् प्रविवेश स्वमालयम् ॥ ५
ततो राक्षसमाहूय विद्युज्जिह्वं महाबलम् । मायाविनं महामायः प्राविशद्यत्र मैथिली ॥ ६
विद्युज्जिह्वं च मायाज्ञमब्रवीद्राक्षसाधिपः । मोहयिष्यावहे सीतां मायया जनकात्मजाम् ॥ ७
शिरो मायामयं गृह्य राघवस्य निशाचर । त्वं मां समुपतिष्ठस्व महच्च सशरं धनुः ॥ ८
एवमुक्तस्तथेत्याह विद्युज्जिह्वो निशाचरः । दर्शयामास तां मायां सुप्रयुक्तां स रावणे[३]॥ ९
तस्य तुष्टोऽभवद्राजा प्रददौ च विभूषणम् । अशोकवनिकायां तु सीतादर्शनलालसः ॥ १०
नैर्ऋतानामधिपतिः संविवेश महाबलः । ततो दीनामदैन्यार्हां ददर्श धनदानुजः ॥ ११
अधोमुखीं शोकपरामुपविष्टां महीतले । भर्तारमेव ध्यायन्तीमशोकवनिकां गताम् ॥ १२
उपास्यमानां घोराभी राक्षसीभिरदूरतः[४]। उपसृत्य ततः सीतां प्रहर्षं नाम कीर्तयन् ॥ १३

---

१. अन्धकोपमः छ. ।
२. तावन्तः पुना. ।
३. इदमर्धम् च. छ. नास्ति ।
४. अस्यानन्तरम्—राक्षसीभिर्वृतां सीतां पूर्णचन्द्रनिभाननाम् । उत्पातमेघराजीभिश्चन्द्ररेखामिवावृताम् ॥ भूषणैरुत्तमैः कैश्चिन्मङ्गलार्थमलंकृताम् । चरन्तीं मारुतोद्धूतां क्षिप्तां पुष्पलतामिव ॥ हर्षशोकान्तरे मग्नां विषादस्य विलक्षणाम् । स्तिमितामिव गाम्भीर्यान्नदीं भागीरथीमिव ॥—ख. छ. ।

इदं च वचनं धृष्टमुवाच जनकात्मजाम् । सान्त्व्यमाना मया भद्रे यमुपाश्रित्य वल्गसे ॥ १४
खरहन्ता स ते भर्ता राघवः समरे हतः । छिन्नं ते सर्वतो मूलं दर्पस्ते विहतो मया ॥ १५
व्यसनेनात्मनः सीते मम भार्या भविष्यसि । विसृजेमां मतिं मूढे किं मृतेन करिष्यसि ॥ १६
भवस्व भद्रे भार्याणां सर्वासामीश्वरी मम । अल्पपुण्ये निवृत्तार्थे मूढे पण्डितमानिनि ॥ १७
शृणु भर्तृवधं सीते घोरं वृत्रवधं यथा । समायातः समुद्रान्तं मां हन्तुं किल राघवः ॥ १८
वानरेन्द्रप्रणीतेन बलेन महता वृतः । संनिविष्टः समुद्रस्य पीड्य तीरमथोत्तरम् ॥ १९
बलेन महता रामो व्रजत्यस्तं दिवाकरे । अथाध्वनि परिश्रान्तमर्धरात्रे स्थितं बलम् ॥ २०
सुखसंसुप्तमासाद्य चारितं प्रथमं चरैः । तत्प्रहस्तप्रणीतेन बलेन महता मम ॥ २१
बलमस्य हतं रात्रौ यत्र रामः सलक्ष्मणः । पट्टसान्परिघांश्चक्रान्दण्डान् खड्गान् महायसान् २२
बाणजालानि शूलानि भास्वरान्कूटमुद्गरान् । यष्टीश्च तोमराञ्शक्तीश्चक्राणि मुसलानि च ॥२३
उद्यम्योद्यम्य रक्षोभिर्वानरेषु निपातिताः । अथ सुप्तस्य रामस्य प्रहस्तेन प्रमाथिना ॥ २४
असक्तं कृतहस्तेन शिरश्छिन्नं महासिना । विभीषणः समुत्पत्य निगृहीतो यदृच्छया ॥ २५
दिशः प्रव्राजितः सर्वैर्लक्ष्मणः प्लवगैः सह । सुग्रीवो ग्रीवया शेते भग्नया प्लवगाधिपः ॥ २६
निरस्तहनुकः शेते हनुमान् राक्षसैर्हतः । जाम्बवानथ जानुभ्यामुत्पतन्निहतो युधि ॥ २७
पट्टसैर्बहुभिश्छिन्नो निकृत्तः पादपो यथा । मैन्दश्च द्विविदश्चोभौ निहतौ वानरर्षभौ ॥ २८
निश्वसन्तौ रुदन्तौ च रुधिरेण परिप्लुतौ । असिना व्यायतौ छिन्नौ मध्ये ह्यरिनिषूदनौ ॥ २९
अनुतिष्ठति मेदिन्यां पनसः पनसो यथा । नाराचैर्बहुभिश्छिन्नः शेते दर्यां दरीमुखः ॥ ३०
कुमुदस्तु महातेजा निष्कूजः[1] सायकैः कृतः । अङ्गदो बहुभिश्छिन्नः शरैरासाद्य राक्षसैः ॥ ३१
परितो[2] रुधिरोद्गारी क्षितौ निपतिताङ्गदः । हरयो मथिता नागै रथजातैस्तथापरे ॥ ३२
शायिता मृदिताश्चाश्वैर्वायुवेगैरिवाम्बुदाः । प्रसृताश्चापरे त्रस्ता हन्यमाना जघन्यतः ॥ ३३
अभिद्रुतास्तु रक्षोभिः सिंहैरिव महाद्विपाः । सागरे पतिताः केचित्केचिद्गगनमाश्रिताः ॥ ३४
ऋक्षा वृक्षानुपारूढा वानरीं वृत्तिमाश्रिताः । सागरस्य च तीरेषु शैलेषु च वनेषु च ॥ ३५
पिङ्गलास्ते विरूपाक्षैर्बहुभिर्बहवो हताः । एवं तव हतो भर्ता ससैन्यो मम सेनया ॥ ३६
क्षतजार्द्रं रजोध्वस्तमिदं चास्याहृतं शिरः । ततः परमदुर्धर्षो रावणो राक्षसाधिपः । ३७
सीतायामुपशृण्वत्यां[3] राक्षसीमिदमब्रवीत् । राक्षसं क्रूरकर्माणं विद्युज्जिह्वं त्वमानय ॥ ३८
येन तद्राघवशिरः संग्रामात्स्वयमाहृतम् । विद्युज्जिह्वस्ततो गृह्य शिरस्तत्सशरासनम् ॥ ३९

---

१. निकृतः ग. पातितः घ.
२. पतितः ङ. ३. शृण्वन्त्यां प्र.

प्रणामं शिरसा कृत्वा रावणस्याग्रतः स्थितः। तमब्रवीत्ततो राजा रावणो राक्षसं स्थितम् ॥
विद्युज्जिह्वं महाजिह्वं समीपपरिवर्तिनम्। अग्रतः कुरु सीतायाः शीघ्रं दाशरथेः शिरः ॥ ४१
अवस्थां पश्चिमां भर्तुः कृपणा साधु पश्यतु। एवमुक्तं तु तद्रक्षः शिरस्तत्प्रियदर्शनम् ॥ ४२
उपनिक्षिप्य सीतायाः क्षिप्रमन्तरधीयत। रावणश्चापि चिक्षेप भास्वरं कार्मुकं महत् ॥ ४३
त्रिषु लोकेषु विख्यातं सीतामिदमुवाच च[1]। इदं तत्तव रामस्य कार्मुकं ज्यासमायुतम्[2] ॥४४
इह प्रहस्तेनानीतं हत्वा तं निशि मानुषम् ॥

स विद्युज्जिह्वेन सहैव तच्छिरो तनुश्च भूमौ विनिकीर्य रावणः।
विदेहराजस्य सुतां यशस्विनीं ततोऽब्रवीत्तां भव मे वशानुगा ॥ ४५

इत्यार्षे श्रीमद्रामयणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायां
युद्धकाण्डे विद्युज्जिह्वमायाप्रयोगो नाम एकत्रिंशः सर्गः

---

## द्वात्रिंशः सर्गः

### सीताविलापः

सा सीता तच्छिरो दृष्ट्वा तच्च कार्मुकमुत्तमम्। सुग्रीवप्रतिसंसर्गमाख्यातं च हनूमता ॥ १
नयने मुखवर्णं च भर्तुस्तत्सदृशं मुखम्। केशान् केशान्तदेशं च तं च चूडामणिं शुभम् ॥ २
एतैः सर्वैरभिज्ञानैरभिज्ञाय सुदुःखिता। विजगर्हेऽत्र कैकेयीं क्रोशन्ती कुररी यथा ॥ ३
सकामा भव कैकेयी हतोऽयं कुलनन्दनः। कुलमुत्सादितं सर्वं त्वया कलहशीलया ॥ ४
आर्येण किं ते कैकेयि कृतं रामेण विप्रियम्। यद्गृहाच्चीरवसनं दत्त्वा प्रव्राजितो वनम्[3] ॥ ५
एवमुक्त्वा तु वैदेही वेपमाना तपस्विनी। जगाम जगतीं बाला छिन्ना तु कदली यथा ॥ ६
सा मुहूर्तात्समाश्वस्य प्रतिलभ्य च चेतनाम्। तच्छिरः समुपाघ्राय विललापायतेक्षणा ॥ ७
हा हतास्मि महाबाहो वीरव्रतमनुव्रत। इमां ते पश्चिमावस्थां गतास्मि विधवा कृता ॥ ८
प्रथमं मरणं नार्या भर्तुर्वैगुण्यमुच्यते। सुवृत्त साधुवृत्तायाः संवृत्तस्त्वं ममाग्रतः ॥ ९
दुःखाद्दुःखं प्रपन्नाया मग्नायाः[4] शोकसागरे। यो हि मामुद्यतस्त्रातुं सोऽपि त्वं विनिपातितः ॥
सा श्वश्रूर्मम कौसल्या त्वया पुत्रेण राघव। वत्सेनेव यथा धेनुर्विवत्सा वत्सला कृता ॥ ११

---

१. रामस्य तदिति ब्रुवन् घ.।
२. समन्वितम् झ.।
३. अस्यानन्तरम्–इदानीं स हि धर्मात्मा राक्षसैश्च कथं हतः—इति ग. छ.।
४. मग्नया छ.।

आदिष्टं दीर्घमायुस्ते दैवज्ञैरपि राघव । अनृतं वचनं तेषामल्पायुरसि राघव ॥ १२
अथवा नश्यति प्रज्ञा प्राज्ञस्यापि सतस्तव । पचत्येनं यथा कालो भूतानां प्रभवो ह्ययम् ॥ १३
अदृष्टं मृत्युमापन्नः कस्मात्त्वं नयशास्त्रवित् । व्यसनानामुपायज्ञः कुशलो ह्यसि वर्जने ॥ १४
तथा त्वं संपरिष्वज्य रौद्रयातिनृशंसया । कालरात्र्या मयाच्छिद्य हृतः कमललोचन ॥ १५
उपशेषे महाबाहो मां विहाय तपस्विनीम् । प्रियामिव समाश्लिष्य पृथिवीं पुरुषर्षभ ॥ १६
अर्चितं सततं यत्तद्गन्धमाल्यैर्मया तव । इदं ते मत्प्रियं वीर धनुः काञ्चनभूषणम् ॥ १७
पित्रा दशरथेन त्वं श्वशुरेण ममानघ । सर्वैश्च पितृभिः सार्धं नूनं स्वर्गे समागतः ॥ १८
दिवि नक्षत्रभूतस्त्वं महत्कर्मकृतां प्रियम् । पुण्यं राजर्षिवंशं त्वमात्मनः समुपेक्षसे ॥ १९
किं मां न प्रेक्षसे राजन् किं मां न प्रतिभाषसे । बालां बाल्येन संप्राप्तां भार्यां मां सहचारिणीम् ॥
संश्रुतं गृह्णता पाणिं चरिष्यामीति यत्त्वया । स्मर तन्मम काकुत्स्थ नय मामपि दुःखिताम् ॥ २१
कस्मान्मामपहाय त्वं गतो गतिमतां वर । अस्माल्लोकादमुं लोकं त्यक्त्वा मामपि दुःखिताम् ॥ २२
कल्याणैरुचितं यत्तत्परिष्वक्तं मयैव तु । क्रव्यादैस्तच्छरीरं ते नूनं विपरिकृष्यते ॥ २३
अग्निष्टोमादिभिर्यज्ञैरिष्टवानाप्तदक्षिणैः । अग्निहोत्रेण संस्कारं केन त्वं तु न लप्स्यसे ॥ २४
प्रव्रज्यामुपपन्नानां त्रयाणामेकमागतम् । परिप्रक्ष्यति कौसल्या लक्ष्मणं शोकलालसा ॥ २५
स तस्याः परिपृच्छन्त्या वधं मित्रबलस्य ते । तव चाख्यास्यते नूनं निशायां राक्षसैर्वधम् ॥ २६
सा त्वां सुप्तं हतं श्रुत्वा मां च रक्षोगृहं गताम् । हृदयेनावदीर्णेन न भविष्यति राघव ॥ २७
मम हेतोरनार्याया अनघः पार्थिवात्मजः । रामः सागरमुत्तीर्य सत्त्ववान् गोष्पदे हतः ॥ २८
अहं दाशरथेनोढा मोहात्स्वकुलपांसनी । आर्यपुत्रस्य रामस्य भार्या मृत्युरजायत ॥ २९
नूनमन्यां मया जातिं वारितं दानमुत्तमम् । याहमद्येह शोचामि भार्या सर्वातिथेरपि ॥ ३०
साधु पातय मां क्षिप्रं रामस्योपरि रावण । समानय पतिं पत्न्या कुरु कल्याणमुत्तमम् ॥ ३१
शिरसा मे शिरश्चास्य कायं कायेन योजय । रावणानुगमिष्यामि गतिं भर्तुर्महात्मनः[2] ॥ ३२
इति सा दुःखसंतप्ता विललापायतेक्षणा । भर्तुः शिरो धनुस्तत्र समीक्ष्य च पुनः पुनः ॥ ३३
एवं लालप्यमानायां सीतायां तत्र राक्षसः । अभिचक्राम भर्तारमनीकस्थः कृताञ्जलिः ॥ ३४
विजयस्वार्यपुत्रेति सोऽभिवाद्य प्रसाद्य च । न्यवेदयदनुप्राप्तं प्रहस्तं वाहिनीपतिम् ॥ ३५
अमात्यैः सहितैः सर्वैः प्रहस्तः समुपस्थितः । तेन दर्शनकामेन वयं प्रस्थापिताः प्रभो ॥ ३६
नूनमस्ति महाराज राजभावात्क्षमान्वितम् । किंचिदात्ययिकं कार्यं तेषां त्वं दर्शनं कुरु ॥ ३७

१. किन्तु ङ. ।

२. अस्यानन्तरम्—मुहूर्तमपि नेच्छामि जीवितुं पापजीविता । श्रुतं मया वेदविदां ब्राह्मणानां पितुर्गृहे ॥ यासां स्त्रीणां प्रियो भर्ता तासां लोका महोदयाः । क्षमा यस्मिन् दमस्त्यागः सत्यं धर्मः कृतज्ञता ॥ अहिंसा चैव भूतानां तमृते का गतिर्मम । इति छ. ।

एतच्छ्रुत्वा दशग्रीवो राक्षसप्रतिवेदितम् । अशोकवनिकां त्यक्त्वा मन्त्रिणां दर्शनं ययौ ॥ ३८
स तु सर्वं समर्थ्यैव मन्त्रिभिः कृत्यमात्मनः । सभां प्रविश्य विदधे विदित्वा रामविक्रमम्॥ ३९
अन्तर्धानं तु तच्छीर्षं तच्च कार्मुकमुत्तमम् । जगाम रावणस्यैव निर्याणसमनन्तरम् ॥ ४०
राक्षसेन्द्रस्तु तैः सार्धं मन्त्रिभिर्भीमविक्रमैः । समर्थयामास तदा रामकार्यविनिश्चयम् ॥ ४१
अविदूरस्थितान् सर्वान् बलाध्यक्षान् हितैषिणः । अब्रवीत्कालसदृशं रावणो राक्षसाधिपः ॥४२
शीघ्रं भेरीनिनादेन स्फुटकोणाहतेन मे । समानयध्वं सैन्यानि वक्तव्यं च न कारणम् ॥ ४३

ततस्तथेति प्रतिगृह्य तद्वचो बलाधिपास्ते महदात्मनो बलम् ।
समानयंश्चैव समागमं च ते न्यवेदयन् भर्तरि युद्धकाङ्क्षिणि ॥ ४४

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
युद्धकाण्डे सीताविलापो नाम द्वात्रिंशः सर्गः ।

---

## त्रयस्त्रिंशः सर्गः

### सरमासमाश्वासनम्

सीतां तु मोहितां दृष्ट्वा सरमा नाम राक्षसी । आससादाथ वैदेहीं प्रियां प्रणयिनीं सखीम्[1] १
मोहितां राक्षसेन्द्रेण सीतां परमदुःखिताम् । आश्वासयामास तदा सरमा मृदुभाषिणी ॥ २
सा हि तत्र कृता मित्रं सीतया रक्ष्यमाणया । रक्षन्ती रावणादिष्टा सानुक्रोशा दृढव्रता ॥ ३
सा ददर्श ततः सीतां सरमा नष्टचेतनाम् । उपावृत्योत्थितां ध्वस्तां वडवामिव पांसुलाम् ॥ ४
तां समाश्वासयामास सखी स्नेहेन सुव्रता । समाश्वसिहि वैदेहि मा भूत्ते मनसो व्यथा[2]॥ ५
उक्ता यद्रावणेन त्वं प्रत्युक्तं च स्वयं त्वया । सखीस्नेहेन तद्भीरु मया सर्वं प्रतिश्रुतम् ॥ ६
लीनया गगने शून्ये भयमुत्सृज्य रावणात् । तव हेतोर्विशालाक्षि न हि मे जीवितं प्रियम् ॥७
स संभ्रान्तश्च निष्क्रान्तो यत्कृते राक्षसाधिपः । तच्च मे विदितं सर्वमभिनिष्क्रम्य मैथिलि॥ ८
न शक्यं सौप्तिकं कर्तुं रामस्य विदितात्मनः । वधश्च पुरुषव्याघ्रे तस्मिन्नैवोपपद्यते ॥ ९
न त्वेव वानरा हन्तुं शक्याः पादपयोधिनः । सुरा देवर्षभेणेव रामेण हि सुरक्षिताः ॥ १०
दीर्घवृत्तभुजः श्रीमान् महोरस्कः प्रतापवान् । धन्वी संहननोपेतो धर्मात्मा भुवि विश्रुतः ॥११
विक्रान्तो रक्षिता नित्यमात्मनश्च परस्य च । लक्ष्मणेन सह भ्रात्रा कुशली नयशास्त्रवित् ॥१२
हन्ता परबलौघानामचिन्त्यबलपौरुषः । न हतो राघवः श्रीमान् सीते शत्रुनिबर्हणः ॥ १३

---

१. प्रणयिनी सखी पुना. । २. इदमर्धम् क. ख. नास्ति

अयुक्तबुद्धिकृत्येन सर्वभूतविरोधिना । इयं प्रयुक्ता रौद्रेण माया मायाविदा त्वयि[1] ॥ १४
शोकस्ते विगतः सर्वः कल्याणं त्वामुपस्थितम् । ध्रुवं त्वां भजते लक्ष्मीः प्रियं प्रीतिकरं शृणु॥१५
उत्तीर्य सागरं रामः सह वानरसेनया । संनिविष्टः समुद्रस्य तीरमासाद्य दक्षिणम् ॥ १६
दृष्टो मे परिपूर्णार्थः काकुत्स्थः सहलक्ष्मणः । स हि तैः सागरान्तःस्थैर्बलैस्तिष्ठति रक्षितः १७
अनेन प्रेषिता ये च राक्षसा लघुविक्रमाः । राघवस्तीर्ण इत्येव प्रवृत्तिस्तैरिहाहृता ॥ १८
स तां श्रुत्वा विशालाक्षि प्रवृत्तिं राक्षसाधिपः । एष मन्त्रयते सर्वैः सचिवैः सह रावणः ॥१९
इति ब्रुवाणा सरमा राक्षसी सीतया सह । सर्वोद्योगेन सैन्यानां शब्दं शुश्राव भैरवम् ॥ २०
दण्डनिर्घातवादिन्याः श्रुत्वा भेर्या महास्वनम् । उवाच सरमा सीतामिदं मधुरभाषिणी ॥ २१
संनाहजननी ह्येषा भैरवा भीरु भेरिका । भेरीनादं च गम्भीरं शृणु तोयदनिःस्वनम् ॥ २२
कल्प्यन्ते मत्तमातङ्गा युज्यन्ते रथवाजिनः । हृष्यन्ते तुरगारूढाः प्रासहस्ताः सहस्रशः ॥ २३
तत्र तत्र च संनद्धाः संपतन्ति पदातयः । आपूर्यन्ते राजमार्गाः सैन्यैरद्भुतदर्शनैः ॥ २४
वेगवद्भिर्नदद्भिश्च तोयौघैरिव सागरः । शस्त्राणां च प्रसन्नानां चर्मणां वर्मणां तथा ॥ २५
रथवाजिगजानां च भूषितानां च रक्षसाम् । संभ्रमो रक्षसामेष हृषितानां तरस्विनाम्[2] ॥ २६
प्रभां विसृजतां पश्य नानावर्णां समुत्थिताम् । वनं निर्दहतो घर्मे यथा रूपं विभावसोः॥ २७
घण्टानां शृणु निर्घोषं रथानां शृणु निःस्वनम् । हयानां हेषमाणानां शृणु तूर्यध्वनिं यथा॥२८
उद्यतायुधहस्तानां राक्षसेन्द्रानुयायिनाम् । संभ्रमो रक्षसामेष तुमुलो रोमहर्षणः ॥ २९
श्रीस्त्वां भजति शोकघ्नी रक्षसां भयमागतम् । रामः कमलपत्राक्षो दैत्यानामिव वासवः ॥ ३०
विनिर्जित्य जितक्रोधस्त्वामचिन्त्यपराक्रमः । रावणं समरे हत्वा भर्ता त्वाधिगमिष्यति ॥ ३१
विक्रमिष्यति रक्षःसु भर्ता ते सहलक्ष्मणः । यथा शत्रुषु शत्रुघ्नो विष्णुना सह वासवः ॥ ३२
आगतस्य हि रामस्य क्षिप्रमङ्कगतां सतीम् । अहं द्रक्ष्यामि सिद्धार्थां त्वां शत्रौ विनिपातिते ॥
अश्रूण्यानन्दजानि त्वं वर्तयिष्यसि शोभने । समागम्य परिष्वज्य तस्योरसि महोरसः ॥ ३४
अचिरान्मोक्ष्यते सीते देवि ते जघनं गताम् । धृतामेतां बहून् मासान् वेणीं रामो महाबलः॥
तस्य दृष्ट्वा मुखं देवि पूर्णचन्द्रमिवोदितम् । मोक्ष्यसे शोकजं वारि निर्मोकमिव पन्नगी ॥ ३६
रावणं समरे हत्वा नचिरादेव मैथिलि । त्वया समग्रः प्रियया सुखार्हो लप्स्यते सुखम् ॥ ३७
समागता त्वं वीर्येण[3] मोदिष्यसि महात्मना । सुवर्षेण समायुक्ता यथा सस्येन मेदिनी ॥ ३८

---

१. अस्यानन्तरम्—रावणेन शठेन त्वां वशमानेतुमिच्छता—इति ख. घ. ।

२. इदमर्धम् क. ख. ग. घ. च. छ. नास्ति ।

३. सभाजिता त्वां रामेण पुना. ।

गिरिवरमभितोऽनुवर्तमानो हय इव मण्डलमाशु यः करोति ।
तमिह शरणमभ्युपेहि देवं दिवसकरं प्रभवो ह्ययं प्रजानाम् ॥ ३९

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
युद्धकाण्डे सरमासमाश्वासनं नाम त्रयस्त्रिंशः सर्गः

---

## चतुस्त्रिंशः सर्गः

### रावणनिश्चयकथनम्

अथ तां जातसंतापां तेन वाक्येन मोहिताम् । सरमा ह्लादयामास पृथिवीं द्यौरिवाम्भसा[1] ॥ १
ततस्तस्या हितं सख्याश्चिकीर्षन्ती सखी वचः । उवाच काले कालज्ञा स्मितपूर्वाभिभाषिणी ॥
उत्सहेयमहं गत्वा त्वद्वाक्यमसितेक्षिणे । निवेद्य कुशलं रामे प्रतिच्छन्ना निवर्तितुम् ॥ ३
न हि मे क्रममाणाया[2] निरालम्बे विहायसि । समर्थो गतिमन्वेतुं पवनो गरुडोऽपि वा ॥ ४
एवं ब्रुवाणां तां सीतां सरमां पुनरब्रवीत् । मधुरं श्लक्ष्णया वाचा पूर्वं शोकाभिपन्नया ॥ ५
समर्था गगनं गन्तुमपि वा त्वं रसातलम् । अवगच्छाम्यकर्तव्यं कर्तव्यं ते मदन्तरे ॥ ६
मत्प्रियं यदि कर्तव्यं यदि बुद्धिः स्थिरा तव । ज्ञातुमिच्छामि तं गत्वा किं करोतीति रावणः ॥
स हि मायाबलः क्रूरो रावणः शत्रुरावणः । मां मोहयति दुष्टात्मा पीतमात्रेव वारुणी ॥ ८
तर्जापयति मां नित्यं भर्त्सापयति चासकृत् । राक्षसीभिः सुघोराभिर्या मां रक्षन्ति नित्यशः ९
उद्विग्ना शङ्किता चास्मिं न स्वस्थं च मनो मम । तद्भयाच्चाहमुद्विग्ना अशोकवनिकां गता ॥
या हि नाम कथा तस्य निश्चितं वापि यद्भवेत् । निवेदयेथाः सर्वं तत्परो मे स्यादनुग्रहः ॥ ११
सा त्वेवं ब्रुवतीं सीतां सरमा वल्गुभाषिणी । उवाच वदनं तस्याः स्पृशन्ती बाष्पविक्लवम् ॥
एष ते यद्यभिप्रायस्तदा गच्छामि जानकि । गृह्य शत्रोरभिप्रायमुपावृत्तां च पश्य माम् ॥ १३
एवमुक्त्वा ततो गत्वा समीपं तस्य रक्षसः । शुश्राव कथितं तस्य रावणस्य समन्त्रिणः ॥ १४
सा श्रुत्वा निश्चयं तस्य निश्चयज्ञा दुरात्मनः । पुनरेवागमत्क्षिप्रमशोकवनिकां तदा ॥ १५
सा प्रविष्टा पुनस्तत्र ददर्श जनकात्मजाम् । प्रतीक्षमाणां स्वामेव भ्रष्टपद्मामिव श्रियम् ॥ १६
तां तु सीता पुनः प्राप्तां सरमां वल्गुभाषिणीम् । परिष्वज्य च सुस्निग्धं ददौ च स्वयमासनम् ॥
इहासीना सुखं सर्वमाख्याहि मम तत्त्वतः । क्रूरस्य निश्चयं तस्य रावणस्य दुरात्मनः ॥ १८
एवमुक्त्वा तु सरमा सीतया वेपमानया । कथितं सर्वमाचष्ट रावणस्य समन्त्रिणः[3] ॥ १९

१. मही दग्धामिवाम्भसा ग. घ. नास्ति ।
२. चिकीर्षन्तीत्यादि क्रममाणया इत्यन्तम् ३. १५—१९ क. न सन्ति

जनन्या राक्षसेन्द्रो वै त्वन्मोक्षार्थं बृहद्वचः । अविद्धेन[1] च वैदेहि मन्त्रिवृद्धेन बोधितः ॥ २०
दीयतामभिसत्कृत्य मनुजेन्द्राय मैथिली । निदर्शनं ते पर्याप्तं जनस्थाने यदद्भुतम् ॥ २१
लङ्घनं च समुद्रस्य दर्शनं च हनूमतः । वधं च रक्षसां युद्धे कः कुर्यान्मानुषो भुवि ॥ २२
एवं स मन्त्रिवृद्धेन मात्रा च बहु भाषितः । न त्वामुत्सहते मोक्तुमर्थमर्थपरो यथा ॥ २३
नोत्सहत्यमृतो मोक्तुं युद्धे त्वामिति[१] मैथिलि । सामात्यस्य नृशंसस्य निश्चयो ह्येष वर्तते ॥ २४
तदेषा निश्चिता बुद्धिर्मृत्युलोभादुपस्थिता । भयान्न सक्तस्त्वां[२] मोक्तुमनिरस्तस्तु संयुगे ॥ २५
राक्षसानां च सर्वेषामात्मनश्च वधेन हि । निहत्य रावणं संख्ये सर्वथा निशितैः शरैः ॥ २६
प्रतिनेष्यति रामस्त्वामयोध्यामसितेक्षणे । एतस्मिन्नन्तरे शब्दो भेरीशङ्खसमाकुलः ॥ २७
श्रुतो वानरसैन्यानां कम्पयन् धरणीतलम् ॥

श्रुत्वा तु तद्वानरसैन्यशब्दं लङ्कागता राक्षसराजभृत्याः ।
नष्टौजसो दैन्यपरीतचेष्टाः श्रेयो न पश्यन्ति नृपस्य दोषैः ॥ २८

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
युद्धकाण्डे रावणनिश्चयकथनं नाम चतुस्त्रिंशः सर्गः

---

## पञ्चत्रिंशः सर्गः

### माल्यवदुपदेशः

तेन शङ्खविमिश्रेण भेरीशब्देन नादिना[३] । उपयाति महाबाहू रामः परपुरंजयः ॥ १
तं निनादं निशम्याथ रावणो राक्षसेश्वरः । मुहूर्तं ध्यानमास्थाय सचिवानभ्युदैक्षत ॥ २
अथ तान् सचिवांस्तत्र सर्वानाभाष्य रावणः । सभां संनादयन् सर्वामित्युवाच महाबलः ॥ ३
जगत्संतापनः क्रूरोऽगर्हयन्[४] राक्षसेश्वरः । तरणं सागरस्यापि विक्रमं बलसंचयम् ॥ ४
यदुक्तवन्तो रामस्य भवन्तस्तन्मया श्रुतम् । भवतश्चाप्यहं वेद्मि युद्धे सत्यपराक्रमान् ५
तूष्णीकानीक्षतोऽन्योन्यं[५] विदित्वा रामविक्रमम् । ततस्तु सुमहाप्राज्ञो माल्यवान्नाम राक्षसः ॥
रावणस्य वचः श्रुत्वा इति मातामहोऽब्रवीत्[६] । विद्यास्वभिविनीतो यो राजा राजन्नयानुगः ॥
स शास्ति चिरमैश्वर्यमरींश्च कुरुते वशे । संदधानो हि कालेन विगृह्णंश्चारिभिः सह ॥ ८
स्वपक्षवर्धनं कुर्वन् महदैश्वर्यमश्नुते[७] । हीयमानेन कर्तव्यो राज्ञा सन्धिः समेन च ॥ ९

---

1. अविन्ध्य इति भारते दृश्यते ।
१. इह गो. ।
२. मोक्तुमित्यादि त्वामित्यन्तम् क. नास्ति ।
३. राघवः च. छ. ।
४. गर्हयन् च. छ. ।
५. किं तूष्णीका भवन्तो वै ख. ।
६. मातुः पैतामहोऽब्रवीत् च. छ. ।
७. अस्यानन्तरम्—सपर्वतवनां कृत्स्नां महीं प्राप्यापि भूमिपः । तेजोऽभिदर्शयन्नर्थं [?] क्षिप्रमेवावहीयते ॥—इति ख. ।

न शत्रुमवमन्येत ज्यायान् कुर्वीत विग्रहम् । तन्मह्यं रोचते सन्धिः सह रामेण रावण ॥ १०
यदर्थमभियुक्ताः स्म सीता तस्मै प्रदीयताम् । यस्य देवर्षयः सर्वे गन्धर्वाश्च जयैषिणः ॥ ११
विरोधं मा गमस्तेन सन्धिस्ते तेन रोचताम्[1] । असृजद्भगवान् पक्षौ द्वावेव हि पितामहः॥१२
सुराणामसुराणां च धर्माधर्मौ तदाश्रयौ । धर्मो हि श्रूयते पक्षो ह्यमराणां महात्मनाम् ॥ १३
अधर्मो रक्षसां पक्षो ह्यसुराणां च रावण । धर्मो वै ग्रसतेऽधर्मं ततः कृतमभूद्युगम् ॥ १४
अधर्मो ग्रसते धर्मं ततस्तिष्यः प्रवर्तते । तत्त्वया चरता लोकान् धर्मो विनिहतो महान्॥ १५
अधर्मः प्रगृहीतश्च तेनास्मद्बलिनः परे । स प्रमादाद्विवृद्धस्तेऽधर्मोऽहिर्ग्रसते[2] हि नः ॥ १६
विवर्धयति पक्षं च सुराणां सुरभावनः । विषयेषु प्रसक्तेन यत्किंचित्कारिणा त्वया ॥ १७
ऋषीणामग्निकल्पनामुद्वेगो जनितो महान् । तेषां प्रभावो दुर्धर्षः प्रदीप्त इव पावकः ॥ १८
तपसा भावितात्मानो धर्मस्यानुग्रहे रताः । मुख्यैर्यज्ञैर्यजन्त्येते नित्यं तैस्तैर्द्विजातयः ॥ १९
जुह्वत्यग्नींश्च विधिवद्वेदांश्चोच्चैरधीयते । अभिभूय च रक्षांसि ब्रह्मघोषानुदैरयन् ॥ २०
दिशोऽपि विद्रुताः सर्वाः स्तनयित्नुरिवोष्णगे । ऋषीणामग्निकल्पानामग्निहोत्रसमुत्थितः ॥ २१
आदत्ते रक्षसां तेजो धूमो व्याप्य दिशो दश । तेषु तेषु च देशेषु पुण्येष्वेव दृढव्रतैः ॥ २२
चर्यमाणं तपस्तीव्रं संतापयति राक्षसान् । देवदानवयक्षेभ्यो गृहीतश्च वरस्त्वया ॥ २३
मानुषा वानरा ऋक्षा गोलाङ्गूला महाबलाः । बलवन्त इहागम्य गर्जन्ति दृढविक्रमाः ॥ २४
उत्पातान् विविधान् दृष्ट्वा घोरान् बहुविधांस्तथा । विनाशमनुपश्यामि सर्वेषां रक्षसामहम् ॥२५
खराभिस्तनिता घोरा मेघाः प्रतिभयंकराः । शोणितेनाभिवर्षन्ति लङ्कामुष्णेन सर्वतः ॥ २६
रुदतां वाहनानां च प्रपतन्त्यस्रबिन्दवः । ध्वजा ध्वस्ता विवर्णाश्च न प्रभान्ति यथा पुरा ॥२७
व्याला गोमायवो गृध्रा वाश्यन्ति च सुभैरवम् । प्रविश्य लङ्कामनिशं समवायांश्च कुर्वते ॥ २८
कालिकाः पाण्डरैर्दन्तैः प्रहसन्त्यग्रतः स्थिताः । स्त्रियः स्वप्नेषु मुष्णन्त्यो गृहाणि प्रतिभाष्य च ॥
गृहाणां बलिकर्माणि श्वानः पर्युपभुञ्जते । खरा गोषु प्रजायन्ते मूषिका नकुलेषु च[3] ॥ ३०
मार्जारा द्वीपिभिः सार्धं सूकराः शुनकैः सह । किंनरा राक्षसैश्चापि समीयुर्मानुषैः सह[4] ॥३१
पाण्डरा रक्तपादाश्च विहङ्गाः कालचोदिताः । राक्षसनां विनाशाय कपोता विचरन्ति च ॥ ३२
वीचीकूचीति वाश्यन्त्यः शारिका वेश्मसु स्थिताः । पतन्ति ग्रथिताश्चापि निर्जिताः कलहैषिणः ॥
पक्षिणश्च मृगाः सर्वे प्रत्यादित्यं रुदन्ति च । करालो विकटो मुण्डः पुरुषः कृष्णपिङ्गलः॥ ३४

---

१. अस्यानन्तरम्—कामाद्वा यदि वा लोभान्मोहाद्वा यत् पुरा कृतम् । कृत्रिमं त्रिषु लोकेषु क्रियतां सांप्रतं हितम् ॥—इति ख. ।

२. अभिग्रसते च. छ. ।

३. नकुलैः सह च. छ. ।

४. इदमर्धम् च. नास्ति ।

कालो गृहाणि सर्वेषां काले कालेऽन्ववेक्षते । एतान्यन्यानि दुष्टानि निमित्तान्युत्पतन्ति च ॥
विष्णुं मन्यामहे रामं मानुषं देहमास्थितम् । न हि मानुषमात्रोऽसौ राघवो दृढविक्रमः ॥ ३६
येन बद्धः समुद्रस्य स सेतुः परमाद्भुतः । कुरुष्व नरराजेन सन्धिं रामेण रावण ॥ ३७
ज्ञात्वा प्रधार्य कार्याणि क्रियतामायतिक्षमम् ॥

इदं वचस्तत्र निगद्य माल्यवान् परीक्ष्य रक्षोऽधिपतेर्मनः पुनः ।
अनुत्तमेषूत्तमपौरुषो बली बभूव तूष्णीं समवेक्ष्य रावणम्[1] ॥ ३८

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
युद्धकाण्डे माल्यवदुपदेशो नाम पञ्चत्रिंशः सर्गः

---

## षट्त्रिंशः सर्गः

### पुरद्वाररक्षा

तत्तु माल्यवतो वाक्यं हितमुक्तं दशाननः । न मर्षयति दुष्टात्मा कालस्य वशमागतः ॥ १
स बद्ध्वा भ्रुकुटिं वक्त्रे क्रोधस्य वशमागतः । अमर्षात्परिवृत्ताक्षो माल्यवन्तमथाब्रवीत् ॥ २
हितबुद्ध्या यदहितं वचः परुषमुच्यते । परपक्षं प्रविश्यैव नैतच्छ्रोत्रं गतं मम ॥ ३
मानुषं कृपणं राममेकं शाखामृगाश्रयम् । समर्थं मन्यसे केन त्यक्तं पित्रा वनालयम् ॥ ४
रक्षसामीश्वरं मां च देवतानां भयंकरम् । हीनं मां मन्यसे केन[2] ह्यहीनं सर्वविक्रमैः ॥ ५
वीरद्वेषेण वा शङ्के पक्षपातेन वा रिपोः । त्वयाहं परुषाण्युक्तः [3]परप्रोत्साहनेन वा ॥ ६
प्रभवन्तं पदस्थं हि परुषं कोऽभिधास्यति । पण्डितः शास्त्रतत्त्वज्ञो विना प्रोत्साहनाद्रिपोः ॥७
आनीय च वनात्सीतां पद्महीनामिव श्रियम् । किमर्थं प्रतिदास्यामि राघवस्य भयादहम् ॥ ८
वृतं वानरकोटीभिः ससुग्रीवं सलक्ष्मणम् । पश्य कैश्चिदहोभिस्त्वं राघवं निहतं मया ॥ ९
द्वन्द्वे यस्य न तिष्ठन्ति दैवतान्यपि संयुगे । स कस्माद्रावणो युद्धे भयमाहारयिष्यति ॥ १०
द्विधा भज्येयमप्येवं न नमेयं तु कस्यचित् । एष मे सहजो दोषः स्वभावो दुरतिक्रमः ॥ ११
यदि तावत्समुद्रे तु सेतुर्बद्धो यदृच्छया । रामेण विस्मयः कोऽत्र येन ते भयमागतम् ॥ १२
स तु तीर्त्वार्णवं रामः सह वानरसेनया । प्रतिजानामि ते सत्यं न जीवन् प्रतियास्यति ॥१३
एवं ब्रुवाणं संरब्धं रुष्टं विज्ञाय रावणम् । व्रीडितो माल्यवान् वाक्यं नोत्तरं प्रत्यपद्यत ॥ १४

---

१. अस्यानन्तरम्—स तद्वचो माल्यवता प्रभाषितं दशाननेन प्रतिशुश्रुवे तदा । भृशं जगर्हे च सुदुष्टमानसो मुमूर्षुरित्युग्रवचोऽभ्युदीरयत्–इति घ.।

२. त्यक्तमित्यादि केनेत्यन्तम् घ. नास्ति ।

३. मम पुना. ।

चिन्तयन् मनसा तस्य दुष्कर्मपरिपाकजम् । पापं नाशयति ह्येनं स्वस्य राष्ट्रस्य राक्षसैः ॥ १५
जयाशिषा च राजानं वर्धयित्वा यथोचितम् । माल्यवाननभ्यनुज्ञातो जगाम स्वं निवेशनम् ॥
रावणस्तु सहामात्यो मन्त्रयित्वा विमृश्य च । लङ्कायामतुलां गुप्तिं कारयामास राक्षसः ॥१७
स व्यादिदेश पूर्वस्यां प्रहस्तं द्वारि राक्षसम् । दक्षिणस्यां महावीर्यौ महापार्श्वमहोदरौ ॥ १८
व्यादिदेश महाकायौ राक्षसैर्बहुभिर्वृतौ । पश्चिमायामथो द्वारि पुत्रमिन्द्रजितं तथा ॥ १९
व्यादिदेश महामायं बहुभी राक्षसैर्वृतम् । उत्तरस्यां पुरद्वारि व्यादिश्य शुकसारणौ । २०
स्वयं चात्र भविष्यामि मन्त्रिणस्तानुवाच ह । राक्षसं तु विरूपाक्षं महावीर्यपराक्रमम् ॥ २१
मध्यमेऽस्थापयद्गुल्मे बहुभिः सह राक्षसैः । एवं विधानं लङ्कायाः कृत्वा राक्षसपुंगवः ॥ २२
कृतकृत्यमिवात्मानं मन्यते कालचोदितः ॥

विसर्जयामास ततः स मन्त्रिणो विधानमाज्ञाप्य पुरस्य पुष्कलम् ।
जयाशिषा मन्त्रिगणेन पूजितो विवेश चान्तःपुरमृद्धिमन्महत् ॥ २३

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
युद्धकाण्डे पुरद्वाररक्षा नाम षट्त्रिंशः सर्गः

---

## सप्तत्रिंशः सर्गः

### रामगुल्मविभागः

नरवानरराजौ तौ स च वायुसुतः कपिः । जाम्बवानृक्षराजश्च राक्षसश्च विभीषणः ॥ १
अङ्गदो वालिपुत्रश्च सौमित्रिः शरभः कपिः । सुषेणः सहदायादो मैन्दो द्विविद एव च ॥ २
गजो गवाक्षो गवयो[1] नलोऽथ पनसस्तथा । अमित्रविषयं प्राप्ताः समवेताः समर्थयन् ॥ ३
इयं सा लक्ष्यते लङ्का पुरी रावणपालिता । सासुरोरगगन्धर्वैरमरैरपि दुर्जया ॥ ४
कार्यसिद्धिं पुरस्कृत्य मन्त्रयध्वं विनिर्णये । नित्यं संनिहितो ह्यत्र रावणो राक्षसाधिपः ॥ ५
तथा तेषु ब्रुवाणेषु रावणावरजोऽब्रवीत् । वाक्यमग्राम्यपदवत्पुष्कलार्थं विभीषणः ॥ ६
अनलः शरभश्चैव संपातिः प्रघसस्तथा । गत्वा लङ्कां ममामात्याः पुरीं पुनरिहागताः ॥ ७
भूत्वा शकुनयः सर्वे प्रविष्टाश्च रिपोर्बलम् । विधानं विहितं यच्च तद्दृष्ट्वा समुपस्थिताः ॥ ८
संविधानं यदाहुस्ते रावणस्य दुरात्मनः । राम तद्ब्रुवतः सर्वं याथातथ्येन मे शृणु ॥ ९
पूर्वं प्रहस्तः सबलो द्वारमासाद्य तिष्ठति । दक्षिणं च महावीर्यौ महापार्श्वमहोदरौ ॥ १०
इन्द्रजित्पश्चिमद्वारं राक्षसैर्बहुभिर्वृतः । पट्टसासिधनुष्मद्भिः शूलमुद्गरपाणिभिः ॥ ११
नानाप्रहरणैः शूरैरावृतो रावणात्मजः । राक्षसानां सहस्रैस्तु बहुभिः शस्त्रपाणिभिः ॥ १२

---

१. कुमुदः च. छ.

युक्तः परमसंविग्नो राक्षसैर्बहुभिर्वृतः[1]। उत्तरं नगरद्वारं रावणः स्वयमास्थितः ॥ १३
विरूपाक्षस्तु महता शूलखड्गधनुष्मता । बलेन राक्षसैः सार्धं मध्यमं गुल्ममास्थितः ॥ १४
एतानेवंविधान् गुल्माँल्लङ्कायां समुदीक्ष्य ते । मामकाः सचिवाः सर्वे पुनः शीघ्रमिहागताः॥१५
गजानां च सहस्रं च रथनामयुतं पुरे। हयानामयुते द्वे च साग्रकोटिश्च रक्षसाम् ॥ १६
विक्रान्ता बलवन्तश्च संयुगेष्वाततायिनः । इष्टा राक्षसराजस्य नित्यमेते निशाचराः ॥ १७
एकैकस्यात्र युद्धार्थे राक्षसस्य विशांपते । परिवारः सहस्राणां सहस्रमुपतिष्ठते ॥ १८
एतां प्रवृत्तिं लङ्कायां मन्त्रिप्रोक्तां विभीषणः । एवमुक्त्वा महाबाहू राक्षसांस्तानदर्शयत् ॥ १९
लङ्कायां सचिवैः सर्वं रामाय प्रत्यवेदयत् । रामं कमलपत्राक्षमिदमुत्तरमब्रवीत् ॥ २०
रावणावरजः श्रीमान् रामप्रियचिकीर्षया । कुबेरं तु यदा राम रावणः प्रत्ययुध्यत ॥ २१
षष्टिः शतसहस्राणि तदा निर्यान्ति राक्षसाः । पराक्रमेण वीर्येण तेजसा सत्त्वगौरवात् ॥ २२
सदृशा येऽत्र दर्पेण रावणस्य दुरात्मनः । अत्र मन्युर्न कर्तव्यो रोषये त्वां न भीषये ॥ २३
समर्थो ह्यसि वीर्येण सुराणामपि निग्रहे । तद्भवांश्चतुरङ्गेण बलेन महता वृतः ॥ २४
व्यूह्येदं वानरानीकं निर्मथिष्यसि रावणम् । रावणावरजे वाक्यमेवं ब्रुवति राघवः ॥ २५
शत्रूणां प्रतिघातार्थमिदं वचनमब्रवीत् । पूर्वद्वारे तु लङ्काया नीलो वानरपुंगवः ॥ २६
प्रहस्तप्रतियोद्धा स्याद्वानरैर्बहुभिर्वृतः । अङ्गदो वालिपुत्रस्तु बलेन महता वृतः ॥ २७
दक्षिणे बाधतां द्वारे महापार्श्वमहोदरौ । हनुमान् पश्चिमद्वारं निपीड्य पवनात्मजः ॥ २८
प्रविशत्वप्रमेयात्मा बहुभिः कपिभिर्वृतः । दैत्यदानवसंङ्घानामृषीणां च महात्मनाम् ॥ २९
विप्रकारप्रियः क्षुद्रो वरदानबलान्वितः । परिक्रामति यः सर्वाल्लोँकान् संतापयन् प्रजाः॥ ३०
तस्याहं राक्षसेन्द्रस्य स्वयमेव वधे धृतः । उत्तरं नगरद्वारमहं सौमित्रिणा सह ॥ ३१
निपीड्याभिप्रवेक्ष्यामि सबलो यत्र रावणः । वानरेन्द्रश्च बलवानृक्षराजश्च वीर्यवान् ॥ ३२
राक्षसेन्द्रानुजश्चैव गुल्मे भवतु मध्यमे[2]। न चैव मानुषं रूपं कार्यं हरिभिराहवे ॥ ३३
एषा भवतु संज्ञा नो युद्धेऽस्मिन् वानरे बले । वानरा एव नश्चिह्नं स्वजनेऽस्मिन् भविष्यति॥
वयं तु मानुषेणैव सप्त योत्स्यामहे परान् । अहमेष सह भ्रात्रा लक्ष्मणेन महौजसा॥ ३५
आत्मना पञ्चमश्चायं सखा मम विभीषणः । स रामः कृत्यसिद्ध्यर्थमेवमुक्त्वा विभीषणम्॥ ३६
सुवेलारोहणे बुद्धिं चकार मतिमान् मतिम् । रमणीयतरं दृष्ट्वा सुवेलस्य गिरेस्तटम् ॥ ३७

---

१. पञ्चसाशीत्यादि वृत इत्यन्तम् ख. नास्ति । २. गुल्मो भवतु मध्यमः छ. ।

ततस्तु रामो महता बलेन प्रच्छाद्य सर्वां पृथिवीं महात्मा ।
प्रहृष्टरूपोऽभिजगाम लङ्कां कृत्वा मतिं सोऽरिवधे महात्मा[1] ॥ ३८

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
युद्धकाण्डे रामगुल्मविभागो नाम सप्तत्रिंशः सर्गः

---

## अष्टात्रिंशः सर्गः

### सुवेलारोहणम्

स तु कृत्वा सुवेलस्य मतिमारोहणं प्रति । लक्ष्मणानुगतो रामः सुग्रीवमिदमब्रवीत् ॥ १
विभीषणं च धर्मज्ञमनुरक्तं निशाचरम् । मन्त्रज्ञं च विधिज्ञं च श्लक्ष्णया परया गिरा ॥ २
सुवेलं साधु शैलेन्द्रमिमं धातुशतैश्चितम् । अध्यारोहामहे सर्वे वत्स्यामोऽत्र निशामिमाम् ॥ ३
लङ्कां चालोकयिष्यामो निलये तस्य रक्षसः । येन मे मरणान्ताय हृता भार्या दुरात्मना ॥ ४
येन धर्मो न विज्ञातो न तद्वृत्तं कुलं[१] तथा । राक्षस्या नीचया बुद्ध्या येन तद्गर्हितं कृतम् ॥ ५
तस्मिन् मे वर्तते रोषः कीर्तिते राक्षसाधमे । यस्यापराधान्नीचस्य वधं द्रक्ष्यामि रक्षसाम् ॥ ६
एको हि कुरुते पापं कालपाशवशं गतः । नीचेनात्मापचारेण कुलं तेन विनश्यति ॥ ७
एवं संमन्त्रयन्नेव सक्रोधो रावणं प्रति । रामः सुवेलं वासाय चित्रसानुमुपारुहत् ॥ ८
पृष्ठतो लक्ष्मणश्चैनमन्वगच्छत्समाहितः । सशरं चापमुद्यम्य सुमहद्विक्रमे रतः ॥ ९
तमन्वरोहत्सुग्रीवः सामात्यः सविभीषणः । हनुमानङ्गदो नीलो मैन्दो द्विविद एव च ॥ १०
गजो गवाक्षो गवयः शरभो गन्धमादनः । पनसः कुमुदश्चैव हरो रम्भश्च यूथपः ॥ ११
जाम्बवांश्च सुषेणश्च ऋषभश्च महामतिः । दुर्मुखश्च महातेजास्तथा शतवलिः कपिः ॥ १२
एते चान्ये च बहवो वानराः शीघ्रगामिनः । ते वायुवेगप्रवणास्तं गिरिं गिरिचारिणः ॥ १३
अध्यारोहन्त शतशः सुवेलं यत्र राघवः[२] । ते त्वदीर्घेण कालेन गिरिमारुह्य सर्वतः ॥ १४
ददृशुः शिखरे तस्य विषक्तामिव खे पुरीम् । तां शुभां प्रवरद्वारां प्राकारपरिशोभिताम् ॥ १५
लङ्कां राक्षससंपूर्णां ददृशुर्हरियूथपाः । प्राकारचयसंस्थैश्च तदा नीलैर्निशाचरैः ॥ १६
ददृशुस्ते हरिश्रेष्ठाः प्राकारमपरं कृतम् । ते दृष्ट्वा वानराः सर्वे राक्षसान् युद्धकाङ्क्षिणः ॥ १७

---

1. महात्मा । महाबल इत्यर्थः ।

१. न वृत्तं न कुलम् ग. घ. ।

२. अस्यानन्तरम्—ततः सुवेलमारुह्य रामस्तैः सह वानरैः । निषसाद गिरेस्तस्य शृङ्गे समतले शुभे ॥ ततः कपिगणाः सर्वे समाश्रुत्य द्वियोजनम् । सुवेलमध्यमारोहन् प्लवन्तो दक्षिणामुखाः ॥—क. ख.

मुमुचुर्विविधान्नादांस्तत्र रामस्य पश्यतः । ततोऽस्तमगमत्सूर्यः सन्ध्यया प्रतिरञ्जितः ॥ १८
पूर्णचन्द्रप्रदीप्ता च क्षपा समभिवर्तते[1] ॥

ततः स रामो हरिवाहिनीपतिर्विभीषणेन प्रतिनन्द्य सत्कृतः ।
सलक्ष्मणो यूथपयूथसंवृतः सुवेलपृष्ठे न्यवसद्यथासुखम्[2] ॥ १९

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
युद्धकाण्डे सुवेलारोहणं नाम अष्टात्रिंशः सर्गः

---

## एकोनचत्वारिंशः सर्गः

### लङ्कादर्शनम्

तां रात्रिमुषितास्तत्र सुवेले हरिपुंगवाः । लङ्कायां ददृशुर्वीरा वनान्युपवनानि च ॥ १
समसौम्यानि रम्याणि विशालान्यायतानि च । दृष्टिरम्याणि ते दृष्ट्वा बभूवुर्जातविस्मयाः ॥ २
चम्पकाशोकपुन्नागसालतालसमाकुला । तमालवनसंछन्ना नागमालासमावृता ॥ ३
हिन्तालैरर्जुनैर्नीपैः सप्तपर्णैश्च पुष्पितैः । तिलकैः कर्णिकारैश्च पाटलैश्च समन्ततः ॥ ४
शुशुभे पुष्पिताग्रैश्च लतापरिगतैर्द्रुमैः । लङ्का बहुविधैर्दिव्यैर्यथेन्द्रस्यामरावती ॥ ५
विचित्रकुसुमोपेतै रक्तकोमलपल्लवैः । शाद्वलैश्च तथा नीलैश्चित्राभिर्वनराजिभिः ॥ ६
गन्धाढ्यान्यभिरम्याणि पुष्पाणि च फलानि च । धारयन्त्यगमास्तत्र भूषणानीव मानवाः ॥ ७
तच्चैत्ररथसंकाशं मनोज्ञं नन्दनोपमम् । वनं सर्वर्तुकं रम्यं शुशुभे षट्पदायुतम् ॥ ८
नत्यूहकोयष्टिबकैर्नृत्यमानैश्च बर्हिभिः । रुतं परभृतानां च शुश्रुवुर्वननिर्झरे ॥ ९
नित्यमत्तविहङ्गानि भ्रमराचरितानि च । कोकिलाकुलषण्डानि विहङ्गाभिरुतानि च ॥ १०
भृङ्गराजाभिगीतानि भ्रमरैः सेवितानि च । कोणालकविघुष्टानि सारसाभिरुतानि च ॥ ११
विविशुस्ते ततस्तानि वनान्युपवनानि च । हृष्टाः प्रमुदिता वीरा हरयः कामरूपिणः ॥ १२
तेषां प्रविशतां तत्र वानराणां महौजसाम् । पुष्पसंसर्गसुरभिर्ववौ घ्राणसुखोऽनिलः ॥ १३
अन्ये तु हरिवीराणां यूथान्निष्क्रम्य यूथपाः । सुग्रीवेणाभ्यनुज्ञाता लङ्कां जग्मुः पताकिनीम् ॥ १४
वित्रासयन्तो विहगांस्त्रासयन्तो मृगद्विपान् । कम्पयन्तश्च तां लङ्कां नादैस्ते नदतां वराः ॥ १५
कुर्वन्तस्ते महावेगा महीं चरणपीडिताम् । रजश्च सहसैवोर्ध्वं जगाम चरणोत्थितम् ॥ १६

---

१. अस्यानन्तरम् —सुवेलपृष्ठं प्राप्ता सा महती राघवानुगा । शुशुभे वानरी सेना प्रदोषसमये स्थिता ॥—इति ख. ।

२. अस्यानन्तरम्—तथा सुवेलस्य गिरेस्तु तस्य शृङ्गे वनस्थः सचिवैः समेतः । व्यभासयत्तां प्रजनीमुपेयिवान् प्रभासिभिश्चन्द्रमरीचिभिः शुभैः ॥ ततः क्षपान्ते सचिवः (वान्) स राघवः प्रयाणमाज्ञापयतेत्युवाच ह । प्रचोद्य चैनानथ दक्षिणोन्मुखांस्ततस्तु लङ्कां पुनरभ्युदैक्षत ॥—इति ख. ।

ऋक्षाः सिंहा वराहाश्च महिषा वारणा मृगाः। तेन शब्देन वित्रस्ता जग्मुर्भीता दिशो दश ॥
शिखरं तत्त्रिकूटस्य प्रांशु चैकं दिविस्पृशम्। समन्तात्पुष्पसंछन्नं महारजतसंनिभम् ॥ १८
शतयोजनविस्तीर्णं विमलं चारुदर्शनम्। श्लक्ष्णं श्रीमन्महच्चैव दुष्प्रापं शकुनैरपि ॥ १९
मनसापि दुरारोहं किं पुनः कर्मणा जनैः। निविष्टा तत्र शिखरे लङ्का रावणपालिता ॥ २०
शतयोजनविस्तीर्णा त्रिंशद्योजनमायता। सा पुरी गोपुरैरुच्चैः पाण्डराम्बुदसंनिभैः ॥ २१
काञ्चनेन च सालेन राजतेन च शोभिता। प्रासादैश्च विमानैश्च लङ्का परमभूषिता ॥ २२
घनैरिवातपापाये मध्यमं वैष्णवं पदम्। यस्यां स्तम्भसहस्रेण प्रासादः समलंकृतः ॥ २३
कैलासशिखराकारो दृश्यते खमिवोल्लिखन्। चैत्यः स राक्षसेन्द्रस्य बभूव पुरभूषणम् ॥ २४
शतेन रक्षसां नित्यं यः समग्रेण रक्ष्यते। मनोज्ञां काननवतीं पर्वतैरुपशोभिताम् ॥ २५
नानाधातुविचित्रैश्च उद्यानैरुपशोभिताम्। नानाविहगसंघुष्टां नानामृगनिषेविताम् ॥ २६
नानाकुसुमसंछन्नां नानाराक्षससेविताम्[1]। तां समृद्धां समृद्धार्थो लक्ष्मीवाँल्लक्ष्मणाग्रजः ॥ २७
रावणस्य पुरीं रामो ददर्श सह वानरैः। तां महागृहसंबाधां दृष्ट्वा लक्ष्मणपूर्वजः ॥ २८
नगरीममरप्रख्यो विस्मयं प्राप वीर्यवान् ॥

तां रत्नपूर्णां बहुसंविधानां प्रासादमालाभिरलंकृतां च।
पुरीं महायन्त्रकवाटमुख्यां ददर्श रामो महता बलेन ॥ ॥ २९

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
युद्धकाण्डे लङ्कादर्शनं नाम एकोनचत्वारिंशः सर्गः

---

## चत्वारिंशः सर्गः

### रावणसुग्रीवनियुद्धम्

ततो रामः सुवेलाग्रं योजनद्वयमण्डलम्। आरुरोह ससुग्रीवो हरियूथपसंवृतः ॥ १
स्थित्वा मुहूर्तं तत्रैव दिशो दश विलोकयन्। त्रिकूटशिखरे रम्ये निर्मितां विश्वकर्मणा ॥ २
ददर्श लङ्कां सुन्यस्तां रम्यकाननशोभिताम्। तस्यां गोपुरशृङ्गस्थं राक्षसेन्द्रं दुरासदम् ॥ ३
श्वेतचामरपर्यन्तं विजयच्छत्रशोभितम्। रक्तचन्दनसंलिप्तं रत्नाभरणभूषितम् ॥ ४
नीलजीमूतसंकाशं हेमसंछादिताम्बरम्। ऐरावतविषाणाग्रैरुत्कृष्टकिणवक्षसम् ॥ ५
शशलोहितरागेण संवीतं रक्तवाससा। सन्ध्यातपेन संवीतं मेघराशिमिवाम्बरे ॥ ६
पश्यतां वानरेन्द्राणां राघवस्यापि पश्यतः। दर्शनाद्राक्षसेन्द्रस्य सुग्रीवः सहसोत्थितः ॥ ७

---

१. इदमर्धम् क. नास्ति।

क्रोधवेगेन संयुक्तः सत्त्वेन च बलेन च । अचलाग्रादथोत्थाय पुप्लुवे गोपुरस्थले ॥ ८
स्थित्वा मुहूर्तं संप्रेक्ष्य निर्भयेनान्तरात्मना । तृणीकृत्य च तद्रक्षः सोऽब्रवीत्परुषं वचः ॥ ९
लोकनाथस्य रामस्य सखा दासोऽस्मि राक्षस । न मया मोक्ष्यसेऽद्य त्वं पार्थिवेन्द्रस्य तेजसा॥
इत्युक्त्वा सहसोत्पत्य पुप्लुवे तस्य चोपरि । आकृष्य मकुटं चित्रं पातयामास तद्भुवि[1] ॥ ११
समीक्ष्य तूर्णमायान्तमाबभाषे निशाचरः । सुग्रीवस्त्वं परोक्षं मे हीनग्रीवो भविष्यसि ॥ १२
इत्युक्त्वोत्थाय तं क्षिप्रं बाहुभ्यामाक्षिपत्तले । कन्दुवत्तं समुत्थाय बाहुभ्यामाक्षिपद्धरिः ॥ १३

परस्परं स्वेदविदिग्धगात्रौ परस्परं शोणितदिग्धदेहौ ।
परस्परं श्लिष्टनिरुद्धचेष्टौ परस्परं शाल्मलिकिंशुकौ यथा ॥ १४
मुष्टिप्रहारैश्च तलप्रहारैररत्निघातैश्च कराग्रघातैः ।
तौ चक्रतुर्युद्धमसह्यरूपं महाबलौ वानरराक्षसेन्द्रौ ॥ १५
कृत्वा नियुद्धं भृशमुग्रवेगौ कालं चिरं गोपुरवेदिमध्ये ।
उत्क्षिप्य चाक्षिप्य विनम्य देहौ पादक्रमाद्गोपुरवेदिलग्नौ ॥ १६
अन्योन्यमाविध्य विलग्नदेहौ तौ पेततुः सालनिखातमध्ये ।
उत्पेततुर्भूतलमस्पृशन्तौ स्थित्वा मुहूर्तं त्वभिनिश्वसन्तौ ॥ १७
आलिङ्ग्य चावल्य च बाहुयोक्त्रैः संयोजयामासतुराहवे तौ ।
संरम्भशिक्षाबलसंप्रयुक्तौ संचेरतुः संप्रति युद्धमार्गैः ॥ १८
शार्दूलसिंहाविव जातदर्पौ गजेन्द्रपोताविव संप्रयुक्तौ ।
संहत्य चापीड्य च तावुरोभ्यां निपेततुर्वै युगपद्धरण्याम् ॥ १९
उद्यम्य चान्योन्यमधिक्षिपन्तौ संचक्रमाते बहुयुद्धमार्गैः ।
व्यायामशिक्षाबलसंप्रयुक्तौ क्लमं न तौ जग्मतुराशु वीरौ। २०
बाहूत्तमैर्वारणवारणाभैर्निवारयन्तौ वरवारणाभौ ।
चिरेण कालेन तु संप्रयुक्तौ संचेरतुर्मण्डलमार्गमाशु ॥ २१

तौ परस्परमासाद्य यत्तावन्योन्यसूदने । मार्जाराविव भक्षार्थे वितस्थाते मुहुर्मुहुः ॥ २२
मण्डनानि विचित्राणि स्थानानि विविधानि च । गोमूत्रिकाणि चित्राणि गतप्रत्यागतानि च ॥
तिरश्चीनगतान्येव तथा वक्रगतानि च । परिमोक्षं प्रहाराणां वर्जनं परिधावनम् ॥ २४
अभिद्रवणमाप्लावमास्थानं च सविग्रहम् । परावृत्तमपावृत्तमवद्रुतमवप्लुतम् ॥ २५
उपन्यस्तमपन्यस्तं युद्धमार्गविशारदौ । तौ संचेरतुरन्योन्यं वानरेन्द्रश्च रावणः ॥ २६

1. पातयित्वापतद्भुवि च. छ. ।

एतस्मिन्नन्तरे रक्षो मायाबलमथात्मनः । आरब्धुमुपसंपेदे ज्ञात्वा तं वानराधिपः ॥ २७
उत्पपात तदाकाशं जितकाशी जितक्लमः । रावणः स्थित एवात्र हरिराजेन वञ्चितः ॥ २८
अथ हरिवरनाथः प्राप्य संग्रामकीर्तिं निशिचरपतिमाजौ योजयित्वा श्रमेण ।
गगनमतिविशालं लङ्घयित्वार्कसूनुर्हरिवरगणमध्ये रामपार्श्वं जगाम ॥ २९
इति स सवितृसूनुस्तत्र तत्कर्म कृत्वा पवनगतिरनीकं प्राविशत्संप्रहृष्टः ।
रघुवरनृपसूनोर्वर्धयन् युद्धहर्षं तरुमृगगणमुख्यैः पूज्यमानो हरीन्द्रः[1] ॥ ३०

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
युद्धकाण्डे रावणसुग्रीवनियुद्धं नाम चत्वारिंशः सर्गः

---

## एकचत्वारिंशः सर्गः

### अङ्गददूत्यम्

अथ तस्मिन्निमित्तानि दृष्ट्वा लक्ष्मणपूर्वजः । सुग्रीवं संपरिष्वज्य तदा वचनमब्रवीत् ॥ १
असंमन्त्र्य मया सार्धं तदिदं साहसं कृतम् । एवं साहसकर्माणि न कुर्वन्ति जनेश्वराः ॥ २
संशये स्थाप्य मां चेदं बलं च सविभीषणम् । कष्टं कृतमिदं वीर साहसं साहसप्रिय ॥ ३
इदानीं मा कृथा वीर एवंविधमचिन्तितम् । त्वयि किंचित्समापन्ने किं कार्यं सीतया मम ॥ ४
भरतेन महाबाहो लक्ष्मणेन यवीयसा । शत्रुघ्नेन च शत्रुघ्न स्वशरीरेण वा पुनः ॥ ५
त्वयि चानागते पूर्वमिति मे निश्चिता मतिः । जानतश्चापि ते वीर्यं महेन्द्रवरुणोपम ॥ ६
हत्वाहं रावणं युद्धे सपुत्रबलवाहनम् । अभिषिच्य च लङ्कायां विभीषणमथापि च ॥ ७
भरते राज्यमावेश्य त्यक्ष्ये देहं महाबल । तमेवंवादिनं रामं सुग्रीवः प्रत्यभाषत ॥ ८
तव भार्यापहर्तारं दृष्ट्वा राघव रावणम् । मर्षयामि कथं वीर जानन् पौरुषमात्मनः ॥ ९
इत्येवंवादिनं वीरमभिनन्द्य स राघवः । लक्ष्मणं लक्ष्मिसंपन्नमिदं वचनमब्रवीत् ॥ १०
परिगृह्योदकं शीतं वनानि फलवन्ति च । बलौघं संविभज्येमं व्यूह्य तिष्ठेम लक्ष्मण ॥ ११
लोकक्षयकरं भीमं भयं पश्याम्युपस्थितम् । निबर्हणं प्रवीराणामृक्षवानररक्षसाम् ॥ १२
वाताश्च परुषा वान्ति कम्पते च वसुंधरा । पर्वताग्राणि वेपन्ते पतन्ति धरणीरुहाः ॥ १३
मेघाः क्रव्यादसंकाशाः परुषाः परुषस्वनाः । क्रूराः क्रूरं प्रवर्षन्ति मिश्रं शोणितबिन्दुभिः ॥ १४
रक्तचन्दनसंकाशा सन्ध्या परमदारुणा । ज्वलच्च निपतत्येतदादित्यादग्निमण्डलम् ॥ १५
आदित्यमभिवाश्यन्ति जनयन्तो महद्भयम् । दीना दीनस्वरा घोरा अप्रशस्ता मृगद्विजाः ॥ १६
रजन्यामप्रकाशश्च संतापयति चन्द्रमाः । कृष्णरक्तांशुपर्यन्तो यथा लोकस्य संक्षये ॥ १७

१. इदं पद्यम् घ. नास्ति ।

ह्रस्वो रूक्षोऽप्रशस्तश्च परिवेषः सुलोहितः। आदित्यमण्डले नीलं लक्ष्म लक्ष्मण दृश्यते ॥ १८
दृश्यन्ते न यथावच्च नक्षत्राण्यभिवर्तते। युगान्तमिव लोकस्य पश्य लक्ष्मण शंसति ॥ १९
काकाः श्येनास्तथा गृध्रा नीचैः परिपतन्ति च। शिवाश्चाप्यशिवा वाचः प्रवदन्ति महास्वनाः॥
शैलैः शूलैश्च खड्गैश्च विमुक्तैः कपिराक्षसैः। भविष्यत्यावृता भूमिर्मांसशोणितकर्दमा[1] ॥ २१
क्षिप्रमद्य दुराधर्षां लङ्कां रावणपालिताम्। अभियाम जवेनैव सर्वतो हरिभिर्वृताः ॥ २२
इत्येवं संवदन् वीरो लक्ष्मणं लक्ष्मणाग्रजः। तस्मादवातरच्छीघ्रं पर्वताग्रान्महाबलः ॥ २३
अवतीर्य च धर्मात्मा तस्माच्छैलात्स राघवः। परैः परमदुर्धर्षं ददर्श बलमात्मनः ॥ २४
संनह्य तु ससुग्रीवः कपिराजबलं महत्। कालज्ञो राघवः काले संयुगायाभ्यचोदयत् ॥ २५
ततः काले महाबाहुर्बलेन महता वृतः। प्रस्थितः पुरतो धन्वी लङ्कामभिमुखः पुरीम् ॥ २६
तं विभीषणसुग्रीवौ हनुमाञ्जाम्बवान्नलः। ऋक्षराजस्तथा नीलो लक्ष्मणश्चान्वयुस्तदा ॥ २७
ततः पश्चात्सुमहती पृतनर्क्षवनौकसाम्। प्रच्छाद्य महतीं भूमिमनुयाति स्म राघवम् ॥ २८
शैलशृङ्गाणि शतशः प्रवृद्धांश्च महीरुहान्। जगृहुः कुञ्जरप्रख्या वानराः परवारणाः ॥ २९
तौ त्वदीर्घेण कालेन भ्रातरौ रामलक्ष्मणौ। रावणस्य पुरीं लङ्कामासेदतुररिंदमौ ॥ ३०
पताकामालिनीं रम्यामुद्यानवनशोभिताम्। चित्रवप्रां सुदुष्प्रापामुच्चैःप्राकारतोरणाम् ॥ ३१
तां सुरैरपि दुर्धर्षां रामवाक्यप्रचोदिताः। यथानिवेशं संपीड्य न्यविशन्त वनौकसः ॥ ३२
लङ्कायास्तूत्तरद्वारं शैलशृङ्गमिवोन्नतम्। रामः सहानुजो धन्वी जुगोप च रुरोध च ॥ ३३
लङ्कामुपनिविष्टश्च रामो दशरथात्मजः। लक्ष्मणानुचरो वीरः पुरीं रावणपालिताम् ॥ ३४
उत्तरद्वारमासाद्य यत्र तिष्ठति रावणः। नान्यो रामाद्धि तद्द्वारं समर्थः परिरक्षितुम् ॥ ३५
रावणाधिष्ठितं भीमं वरुणेनेव सागरम्। सायुधै राक्षसैर्भीमैरभिगुप्तं समन्ततः ॥ ३६
लघूनां त्रासजननं पातालमिव दानवैः। विन्यस्तानि च योधानां बहूनि विविधानि च ॥ ३७
ददर्शायुधजालानि तत्रैव कवचानि च। पूर्वं तु द्वारमासाद्य नीलो हरिचमूपतिः ॥ ३८
अतिष्ठत्सह मैन्देन द्विविदेन च वीर्यवान्। अङ्गदो दक्षिणद्वारं जग्राह सुमहाबलः ॥ ३९
ऋषभेण गवाक्षेण गजेन गवयेन च। हनुमान् पश्चिमद्वारं ररक्ष बलवान् कपिः ॥ ४०
प्रमाथिप्रघसाभ्यां च वीरैरन्यैश्च संगतः। मध्यमे च स्वयं गुल्मे सुग्रीवः समतिष्ठत ॥ ४१
सह सर्वैर्हरिश्रेष्ठैः सुपर्णश्वसनोपमैः। वानराणां तु षट्त्रिंशत्कोट्यः प्रख्यातयूथपाः ॥ ४२
निपीड्योपनिविष्टाश्च सुग्रीवो यत्र वानरः। शासनेन तु रामस्य लक्ष्मणः सविभीषणः ॥ ४३
द्वारे द्वारे हरीणां तु कोटिं कोटिं न्यवेशयत्। पश्चिमेन तु रामस्य सुग्रीवः[2] सहजाम्बवान् ॥

१. इदं पद्यम् च. छ. नास्ति। २. सुषेणः पुना.।

अदूरान्मध्यमे गुल्मे तस्थौ बहुबलानुगः । ते तु वानरशार्दूलाः शार्दूला इव दंष्ट्रिणः ॥ ४५
गृहीत्वा द्रुमशैलाग्रान् हृष्टा युद्धाय तस्थिरे । सर्वे विकृतलाङ्गूलाः सर्वे दंष्ट्रानखायुधाः ॥ ४६
सर्वे विकृतचित्राङ्गाः सर्वे च विकृताननाः । दशनागबलाः केचित्केचिद्दशगुणोत्तराः ॥ ४७
केचिन्नागसहस्रस्य बभूवुस्तुल्यविक्रमाः । सन्ति चौघबलाः केचित्केचिच्छतगुणोत्तराः ॥ ४८
अप्रमेयबलाश्चान्ये तत्रासन् हरियूथपाः । अद्भुतश्च विचित्रश्च तेषामासीत्समागमः ॥ ४९
तत्र वानरसैन्यानां शलभानामिवोद्यमः[1] । परिपूर्णमिवाकाशं संछन्नेव च मेदिनी ॥ ५०
लङ्कामुपनिविष्टैश्च संपतद्भिश्च वानरैः । शतं शतसहस्राणां पृथगृक्षवनौकसाम् ॥ ५१
लङ्काद्वाराण्युपाजग्मुरन्ये योद्धुं समन्ततः । आवृतः स गिरिः सर्वैस्तैः समन्तात्प्लवङ्गमैः ॥ ५२
अयुतानां सहस्रं च पुरीं तामभ्यवर्तत । वानरैर्बलवद्भिश्च बभूव द्रुमपाणिभिः ॥ ५३
संवृता सर्वतो लङ्का दुष्प्रवेशापि वायुना । राक्षसा विस्मयं जग्मुः सहसाभिनिपीडिताः ॥ ५४
वानरैर्मेघसंकाशैः शक्रतुल्यपराक्रमैः । महाञ्शब्दोऽभवत्तत्र बलौघस्याभिवर्ततः ॥ ५५
सागरस्येव भिन्नस्य यथा स्यात्सलिलस्वनः । तेन शब्देन महता सप्राकारा सतोरणा ॥ ५६
लङ्का प्रचलिता सर्वा सशैलवनकानना । रामलक्ष्मणगुप्ता सा सुग्रीवेण च वाहिनी ॥ ५७
बभूव दुर्धर्षतरा सर्वैरपि सुरासुरैः । राघवः संनिवेश्यैव सैन्यं स्वं रक्षसां वधे ॥ ५८
संमन्त्र्य मन्त्रिभिः सार्धं निश्चित्य च पुनः पुनः । आनन्तर्यमभिप्रेप्सुः क्रमयोगार्थतत्त्ववित् ॥
विभीषणस्यानुमते राजधर्ममनुस्मरन् । अङ्गदं वालितनयं समाहूयेदमब्रवीत् ॥ ६०
गत्वा सौम्य दशग्रीवं ब्रूहि मद्वचनात्कपे । लङ्घयित्वा पुरीं लङ्कां भयं त्यक्त्वा गतव्यथः ॥ ६१
भ्रष्टश्रीक गतैश्वर्य मुमूर्षो नष्टचेतन[2] । ऋषीणां देवतानां च गन्धर्वाप्सरसां तथा ॥ ६२
नागानामथ यक्षाणां राज्ञां च रजनीचर । यच्च पापं कृतं मोहादवलिप्तेन राक्षस ॥ ६३
तस्य पापस्य संप्राप्ता व्युष्टिरद्य दुरासदा[3] । नूनमद्य गतो दर्पः स्वयंभूवरदानजः ॥ ६४
यस्य दण्डधरस्तेऽहं दाराहरणकर्शितः । दण्डं धारयमाणस्तु लङ्काद्वारे व्यवस्थितः ॥ ६५
पदवीं देवतानां च महर्षीणां च राक्षस । राजर्षीणां च सर्वेषां गमिष्यसि मया हतः ॥ ६६
बलेन येन वै सीतां मायया राक्षसाधम । मामतिक्रामयित्वा त्वं हृतवांस्तद्विदर्शय ॥ ६७
अराक्षसमिमं लोकं कर्तास्मि निशितैः शरैः । न चेच्छरणमभ्येषि मामुपादाय मैथिलीम् ॥ ६८
धर्मात्मा रक्षसां श्रेष्ठः संप्राप्तोऽयं विभीषणः । लङ्कैश्वर्यं ध्रुवं श्रीमानयं प्राप्नोत्यकण्टकम् ॥ ६९
न हि राज्यमधर्मेण भोक्तुं क्षणमपि त्वया । शक्यं मूर्खसहायेन पापेनाविदितात्मना ॥ ७०
युध्यस्व वा धृतिं कृत्वा शौर्यमालम्ब्य राक्षस । मच्छरैस्त्वं रणे शान्तस्ततः पूतो भविष्यसि ॥

१. शैलानामिव संगमः क. । ३. इदमर्धम् क. ग. घ. ङ. छ.
२. भ्रष्टश्रीकं गतैश्वर्यं मुमूर्षुं नष्टचेतनम् । नास्ति ।
पुना, ।

यद्वा विशसि लोकांस्त्रीन् पक्षी भूत्वा मनोजवः । मम चक्षुष्पथं प्राप्य न जीवन् प्रतियास्यसि ॥
ब्रवीमि त्वां हितं वाक्यं क्रियतामौर्ध्वदैहिकम् । सुदृष्टा क्रियतां लङ्का जीवितं ते मयि स्थितम् ॥
इत्युक्तः स तु तारेयो रामेणाक्लिष्टकर्मणा । जगामाकाशमाविश्य मूर्तिमानिव हव्यवाट् ॥ ७४
सोऽतिपत्य मुहूर्तेन श्रीमान् रावणमन्दिरम् । ददर्शासीनमव्यग्रं रावणं सचिवैः सह ॥ ७५
ततस्तस्या विदूरे स निपत्य हरिपुंगवः । दीप्ताग्निसदृशस्तस्थावङ्गदः कनकाङ्गदः ॥ ७६
तद्रामवचनं सर्वमन्यूनाधिकमुत्तमम् । सामात्यं श्रावयामास निवेद्यात्मानमात्मना ॥ ७७
दूतोऽहं कोसलेन्द्रस्य रामस्याक्लिष्टकर्मणः । वालिपुत्रोऽङ्गदो नाम यदि ते श्रोत्रमागतः ॥ ७८
आह त्वां राघवो रामः कौसल्यानन्दवर्धनः । निष्पत्य प्रतियुध्यस्व नृशंस पुरुषो भव ॥ ७९
हन्तास्मि त्वां सहामात्यं सपुत्रज्ञातिबान्धवम् । निरुद्विग्नास्त्रयो लोका भविष्यन्ति हते त्वयि ॥
देवदानवयक्षणां गन्धर्वोरगरक्षसाम् । शत्रुमद्योद्धरिष्यामि त्वामृषीणां च कण्टकम् ॥ ८१
विभीषणस्य चैश्वर्यं भविष्यति हते त्वयि । न चेत्सत्कृत्य वैदेहीं प्रणिपत्य प्रदास्यसि ॥ ८२
इत्येवं परुषं वाक्यं ब्रुवाणे हरिपुंगवे । अमर्षवशमापन्नो निशाचरगणेश्वरः ॥ ८३
ततः स रोषताम्राक्षः शशास सचिवांस्तदा । गृह्यतामेष दुर्मेधा वध्यतामिति चासकृत् ॥ ८४
रावणस्य वचः श्रुत्वा दीप्ताग्निसमतेजसः । जगृहुस्तं ततो घोराश्चत्वारो रजनीचराः ॥ ८५
ग्राहयामास तारेयः स्वयमात्मानमात्मवान् । बलं दर्शयितुं वीरो यातुधानगणे तदा ॥ ८६
स तान् बाहुद्वये सक्तानादाय पतगानिव । प्रासादं शैलसंकाशमुत्पपाताङ्गदस्तदा ॥ ८७
तेऽन्तरिक्षाद्विनिर्धूतास्तस्य वेगेन राक्षसाः । भूमौ निपतिताः सर्वे राक्षसेन्द्रस्य पश्यतः ॥ ८८
ततः प्रासादशिखरं शैलशृङ्गमिवोन्नतम् । ददर्श राक्षसेन्द्रस्य वालिपुत्रः प्रतापवान् ॥ ८९
तत्पफाल पदाक्रान्तं दशग्रीवस्य पश्यतः । पुरा हिमवतः शृङ्गं वज्रिणेव विदारितम् ॥ ९०
भङ्क्त्वा[1] प्रासादशिखरं नाम विश्राव्य चात्मनः । विनद्य सुमहानादमुत्पपात विहायसम् ॥९१
व्यथयन् राक्षसान् सर्वान् हर्षयंश्चापि वानरान् । स वानराणां मध्ये तु रामपार्श्वमुपागतः[2]॥
रावणस्तु परं चक्रे क्रोधं प्रासादधर्षणात् । विनाशं चात्मनः पश्यन्निश्वासपरमोऽभवत् ॥ ९३
रामस्तु बहुभिर्हृष्टैर्निनदद्भिः प्लवङ्गमैः । वृतो रिपुवधाकाङ्क्षी युद्धायैवाभ्यवर्तत ॥ ९४
सुषेणस्तु महावीर्यो गिरिकूटोपमो हरिः । बहुभिः संवृतस्तत्र वानरैः कामरूपिभिः ॥ ९५
चतुर्द्वाराणि सर्वाणि सुग्रीववचनात्कपिः । पर्यक्रामत दुर्धर्षो नक्षत्राणीव चन्द्रमाः ॥ ९६
तेषामक्षौहिणिशतं समवेक्ष्य वनौकसाम् । लङ्कामुपनिविष्टानां सागरं चाभिवर्तताम् ॥ ९७
राक्षसा विस्मयं जग्मुस्त्रासं जग्मुस्तथापरे । अपरे समरोद्धर्षाद्धर्षमेव प्रपेदिरे ॥ ९८
कृत्स्नं हि कपिभिर्व्याप्तं प्राकारपरिखान्तरम् । ददृशू राक्षसा दीनाः प्राकारं वानरीकृतम् ॥
हाहाकारं प्रकुर्वन्ति राक्षसा भयमोहिताः ॥

---

१. भित्त्वा क. । २. इदमर्धम् क. नास्ति ।

तस्मिन् महाभीषणके प्रवृत्ते कोलाहले राक्षसराजधान्याम् ।
प्रगृह्य रक्षांसि महायुधानि युगान्तवाता इव संविचेरुः ॥ १००

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
युद्धकाण्डे अङ्गदद्रुत्यं नाम एकचत्वारिंशः सर्गः

---

## द्विचत्वारिंशः सर्गः

### युद्धारम्भः

ततस्ते राक्षसास्तत्र गत्वा रावणमन्दिरम् । न्यवेदयन् पुरीं रुद्धां रामेण सह वानरैः ॥ १
रुद्धां तु नगरीं श्रुत्वा जातक्रोधो निशाचरः । विधानं द्विगुणं कृत्वा प्रासादं सोऽध्यरोहत ॥ २
स ददर्शावृतां लङ्कां सशैलवनकाननाम् । असंख्येयैर्हरिगणैः सर्वतो युद्धकाङ्क्षिभिः ॥ ३
स दृष्ट्वा वानरैः सर्वां वसुधां कपिलीकृताम्[1] । कथं क्षपयितव्याः स्युरिति चिन्तापरोऽभवत् ॥ ४
स चिन्तयित्वा सुचिरं धैर्यमालम्ब्य रावणः । राघवं हरियूथांश्च ददर्शायतलोचनः ॥ ५
राघवः सह सैन्येन मुदितो नाम पुप्लुवे । लङ्कां ददर्श गुप्तां वै सर्वतो राक्षसैर्वृताम् ॥ ६
दृष्ट्वा दाशरथिर्लङ्कां चित्रध्वजपताकिनीम् । जगाम सहसा सीतां दूयमानेन चेतसा ॥ ७
अत्र सा मृगशावाक्षी मत्कृते जनकात्मजा । पीड्यते शोकसंतप्ता कृशा स्थण्डिलशायिनी ॥ ८
पीड्यमानां स धर्मात्मा वैदेहीमनुचिन्तयन् । क्षिप्रमाज्ञापयामास वानरान् द्विषतां वधे ॥ ९
एवमुक्ते तु वचने रामेणाक्लिष्टकर्मणा । सङ्घर्षमाणाः प्लवगाः सिंहनादैरनादयन् ॥ १०
शिखरैर्विकिरामैनां लङ्कां मुष्टिभिरेव वा । इति स्म दधिरे सर्वे मनांसि हरियूथपाः ॥ ११
उद्यम्य गिरिशृङ्गाणि शिखराणि महान्ति च । तरूंश्चोत्पाट्य विविधांस्तिष्ठन्ति हरियूथपाः[2] ॥
प्रेक्षतो राक्षसेन्द्रस्य तान्यनीकानि भागशः । राघवप्रियकामार्थं लङ्कामारुरुहुस्तदा ॥ १३
ते ताम्रवक्त्रा हेमाभा रामार्थे त्यक्तजीविताः । लङ्कामेवाभ्यवर्तन्त सालतालशिलायुधाः ॥ १४
ते द्रुमैः पर्वताग्रैश्च मुष्टिभिश्च प्लवङ्गमाः । प्राकाराग्राण्यरण्यानि[3] ममन्थुस्तोरणानि च ॥ १५
परिखाः पूरयन्ति स्म प्रसन्नसलिलायुताः । पांसुभिः पर्वताग्रैश्च[4] तृणैः काष्ठैश्च वानराः ॥ १६
ततः सहस्रयूथाश्च कोटियूथाश्च वानराः । कोटीशतयुताश्चान्ये लङ्कामारुरुहुस्तदा ॥ १७
काञ्चनानि प्रमृद्नन्तस्तोरणानि प्लवङ्गमाः । कैलासशिखराभानि गोपुराणि प्रमथ्य च ॥ १८
आप्लवन्तः प्लवन्तश्च गर्जन्तश्च प्लवङ्गमाः । लङ्कां तामभिधावन्ति महावारणसंनिभाः ॥ १९

१. कबलीकृताम् च. छ. ।
२. इदं पद्यम् ग. नास्ति । ख. नास्ति ।
३. असंख्यानि झ. ।
४. मुष्टिभिरित्यादि पर्वताग्रैरित्यन्तम् क.

जयत्यतिबलो रामो लक्ष्मणश्च महाबलः। राजा जयति सुग्रीवो राघवेणाभिपालितः॥ २०
इत्येवं घोषयन्तश्च गर्जन्तश्च प्लवङ्गमाः। अभ्यधावन्त लङ्कायाः प्राकारं कामरूपिणः॥ २१
वीरबाहुः सुबाहुश्च नलश्च वनगोचरः। निपीड्योपनिविष्टास्ते प्राकारं हरियूथपाः॥ २२
एतस्मिन्नन्तरे चक्रुः स्कन्धावारनिवेशनम्। पूर्वद्वारं तु कुमुदः कोटीभिर्दशभिर्वृतः॥ २३
आवृत्य बलवांस्तस्थौ हरिभिर्जितकाशिभिः। साहाय्यार्थं तु तस्यैव निविष्टः प्रघसो हरिः॥२४
पनसश्च महाबाहुर्वानरैर्बहुभिर्वृतः। दक्षिणं द्वारमागम्य वीरः शतवलिः कपिः॥ २५
आवृत्य बलवांस्तस्थौ विंशत्या कोटिभिर्वृतः। सुषेणः पश्चिमद्वारं गतस्तारापिता हरिः॥ २६
आवृत्य बलवांस्तस्थौ षष्टिकोटिभिरावृतः। उत्तरं द्वारमासाद्य रामः सौमित्रिणा सह॥ २७
आवृत्य बलवांस्तस्थौ सुग्रीवश्च हरीश्वरः। गोलाङ्गूलो महाकायो गवाक्षो भीमदर्शनः॥ २८
वृतः कोट्या महावीर्यस्तस्थौ रामस्य पार्श्वतः। ऋक्षाणां भीमवेगानां धूम्रः शत्रुनिबर्हणः॥ २९
वृतः कोट्या महावीर्यस्तस्थौ रामस्य पार्श्वतः। संनद्धस्तु महावीर्यो गदापाणिर्विभीषणः॥ ३०
वृतो यत्तैस्तु सचिवैस्तस्थौ तत्र महाबलः। गजो गवाक्षो गवयः शरभो गन्धमादनः॥ ३१
समन्तात्परिधावन्तो ररक्षुर्हरिवाहिनीम्। ततः कोपपरीतात्मा रावणो राक्षसेश्वरः॥ ३२
निर्याणं सर्वसैन्यानां द्रुतमाज्ञापयत्तदा। एतच्छ्रुत्वा ततो वाक्यं रावणस्य मुखोद्गतम्॥ ३३
सहसा भीमनिर्घोषमुद्घुष्टं रजनीचरैः। ततः प्रचोदिता भेर्यश्चन्द्रपाण्डरपुष्कराः॥ ३४
हेमकोणाहता भीमा राक्षसानां समन्ततः। विनेदुश्च महाघोषाः शङ्खाः शतसहस्रशः॥ ३५
राक्षसानां सुघोराणां मुखमारुतपूरिताः। ते बभुः शुकनीलाङ्गाः सशङ्खा रजनीचराः॥ ३६
विद्युन्मण्डलसंनद्धाः सबलाका इवाम्बुदाः। निष्पतन्ति ततः सैन्या हृष्टा रावणचोदिताः॥
समये पूर्यमाणस्य वेगा इव महोदधेः। ततो वानरसैन्येन मुक्तो नादः समन्ततः॥ ३८
मलयः पूरितो येन ससानुप्रस्थकन्दरः। शङ्खदुन्दुभिसंघुष्टः सिंहनादस्तरस्विनाम्॥ ३९
पृथिवीं चान्तरिक्षं च सागरं चैव नादयन्। गजानां बृंहितैः सार्धं हयानां हेषितैरपि॥ ४०
रथानां नेमिघोषैश्च रक्षसां पादनिस्वनैः। एतस्मिन्नन्तरे घोरः संग्रामः समवर्तत॥ ४१
रक्षसां वानराणां च यथा देवासुरे पुरा। ते गदाभिः प्रदीप्ताभिः शक्तिशूलपरश्वधैः॥ ४२
निजघ्नुर्वानरान् घोराः कथयन्तः स्वविक्रमान्। वानराश्च महावीर्या राक्षसाञ्जघ्नुराहवे॥ ४३
जयत्यतिबलो रामो लक्ष्मणश्च महाबलः। राजा जयति सुग्रीव इति शब्दो महानभूत्॥ ४४
राजञ्जय जयेत्युक्त्वा स्वस्वनामकथान्ततः। निजघ्नुस्तानि रक्षांसि नखैर्दन्तैश्च वेगिताः॥ ४५
राक्षसास्त्वपरे भीमाः प्राकारस्था महीगतान्। भिण्डिपालैश्च खड्गैश्च शूलैश्चैव व्यदारयन्॥४६
वानराश्चापि संक्रुद्धाः प्राकारस्थान् महीगताः। राक्षसान् पातयामासुः समाप्लुत्य प्लवङ्गमाः॥

स संप्रहारस्तुमुलो मांसशोणितकर्दमः । रक्षसां वानराणां च संबभूवाद्भुतोपमः[1] ॥ ४८

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
युद्धकाण्डे युद्धारम्भो नाम द्विचत्वारिंशः सर्गः

---

## त्रिचत्वारिंशः सर्गः

### द्वन्द्वयुद्धम्

युध्यतां तु ततस्तेषां वानराणां महात्मनाम् । रक्षसां संबभूवाथ बलकोपः सुदारुणः ॥ १
ते हयैः काञ्चनापीडैर्ध्वजैश्चाग्निशिखोपमैः । रथैश्चादित्यसंकाशैः कवचैश्च मनोरमैः ॥ २
निर्ययू राक्षसव्याघ्रा नादयन्तो दिशो दश । राक्षसा भीमकर्माणो रावणस्य जयैषिणः ॥ ३
वानराणामपि चमूर्बृहती जयमिच्छताम् । अभ्यधावत तां सेनां रक्षसां कामरूपिणाम् ॥ ४
एतस्मिन्नन्तरे तेषामन्योन्यमभिधावताम् । रक्षसां वानराणां च द्वन्द्वयुद्धमवर्तत ॥ ५
अङ्गदेनेन्द्रजित्सार्धं वालिपुत्रेण राक्षसः । अयुध्यत महातेजास्त्र्यम्बकेण यथान्धकः ॥ ६
प्रजङ्घेन च संपातिर्नित्यं दुर्मर्षणो रणे । जम्बुमालिनमारब्धो हनुमानपि वानरः ॥ ७
संगतः सुमहाक्रोधो राक्षसो रावणानुजः । समरे तीक्ष्णवेगेन मित्रघ्नेन विभीषणः ॥ ८
तपनेन गजः सार्धं राक्षसेन महाबलः । निकुम्भेन महातेजा नीलोऽपि समयुध्यत ॥ ९
वानरेन्द्रस्तु सुग्रीवः प्रघसेन समागतः । संगतः समरे श्रीमान् विरूपाक्षेण लक्ष्मणः[2] ॥ १०
अग्निकेतुश्चदुर्धर्षो रश्मिकेतुश्च राक्षसः । सुप्तघ्नो यज्ञकोपश्च रामेण सह संगताः ॥ ११
वज्रमुष्टिस्तु मैन्देन द्विविदेनाशनिप्रभः । राजसाभ्यां सुघोराभ्यां कपिमुख्यौ समागतौ ॥ १२
वीरः प्रतपनो घोरो राक्षसो रणदुर्धरः । समरे तीक्ष्णवेगेन नलेन समयुध्यत ॥ १३
धर्मस्य पुत्रो बलवान् सुषेण इति विश्रुतः । स विद्युन्मालिना सार्धमयुध्यत महाकपिः ॥ १४
वानराश्चापरे भीमा राक्षसैरपरैः सह । द्वन्द्वं समीयुर्बहुधा युद्धाय बहुभिः सह ॥ १५
तत्रासीत्सुमहद्युद्धं तुमुलं रोमहर्षणम् । रक्षसां वानराणां च वीराणां जयमिच्छताम् ॥ १६
हरिराक्षसदेहेभ्यः प्रभूताः केशशाद्वलाः । शरीरसङ्घाटवहाः प्रसुस्रुः शोणितापगाः ॥ १७
आजघानेन्द्रजित्क्रुद्धो वज्रेणेव शतक्रतुः । अङ्गदं गदया वीरं शत्रुसैन्यविदारणम् ॥ १८
तस्य काञ्चनचित्राङ्गं रथं साश्वं ससारथिम् । जघान समरे श्रीमानङ्गदो वेगवान् कपिः ॥ १९
संपातिस्तु त्रिभिर्बाणैः प्रजङ्घेन समाहतः । निजघानाश्वकर्णेन प्रजङ्घं रणमूर्धनि ॥ २०

---

१. अस्यानन्तरम्—वनौकसां तत्र भृशं इति ग. घ. । निनादो लङ्कागतानां च निशाचराणाम् । प्रस्फोटिताक्ष्वेलितसिंहनादैर्द्वाभ्यां महद्भ्यामिव सागराभ्याम् ॥

२. ९-१० पद्ये घ. न स्तः ।

जम्बुमाली रथस्थस्तु रथशक्त्या महाबलः । बिभेद समरे क्रुद्धो हनूमन्तं स्तनान्तरे ॥ २१
तस्य तं रथमास्थाय हनूमान् मारुतात्मजः । प्रममाथ तलेनाशु सह तेनैव रक्षसा ॥ २२
नदन् प्रतपनो घोरो नलं सोऽप्यन्वधावत । नलः प्रतपनस्याशु पातयामास चक्षुषी ॥ २३
भिन्नगात्रः शरैस्तीक्ष्णैः क्षिप्रहस्तेन रक्षसा । प्रजघानाद्रिशृङ्गेण तपनं मुष्टिना गजः ॥ २४
भिन्नगात्रैः शरैस्तीक्ष्णैर्मित्रघ्नेन विभीषणः । मित्रघ्नं गदया क्रुद्धो निजघान विभीषणः[१] ॥ २५
ग्रसन्तमिव सैन्यानि[२] प्रघसं वानराधिपः । सुग्रीवः सप्तपर्णेन निर्बिभेद जघान च ॥ २६
प्रपीड्य शरवर्षेण राक्षसं भीमदर्शनम् । निजघान विरूपाक्षं शरेणैकेन लक्ष्मणः ॥ २७
अग्निकेतुश्च दुर्धर्षो रश्मिकेतुश्च राक्षसः । सुप्तघ्नो यज्ञकोपश्च रामं निर्बिभिदुः शरैः ॥ २८
तेषां चतुर्णां रामस्तु शिरांसि निशितैः शरैः । क्रुद्धश्चतुर्भिश्चिच्छेद घोरैरग्निशिखोपमैः[३] ॥ २९
वज्रमुष्टिस्तु मैन्देन मुष्टिना निहतो रणे । पपात सरथः साश्वः पुराट्ट इव भूतले[४] ॥ ३०
निकुम्भस्तु रणे नीलं नीलाञ्जनचयप्रभम् । निर्बिभेद शरैस्तीक्ष्णैः करैर्मेघमिवांशुमान् ॥ ३१
पुनः शरशतेनाथ क्षिप्रहस्तो निशाचरः । बिभेद समरे नीलं निकुम्भः प्रजहास च ॥ ३२
तस्यैव रथचक्रेण नीलो विष्णुरिवाहवे । शिरश्चिच्छेद समरे निकुम्भस्य च सारथेः ॥ ३३
वज्राशनिसमस्पर्शो द्विविदोऽप्यशनिप्रभम् । जघान गिरिशृङ्गेण मिषतां सर्वरक्षसाम् ॥ ३४
द्विविदं वानरेन्द्रं तु नगयोधिनमाहवे । शरैरशनिसंकाशैः स विव्याधाशनिप्रभः ॥ ३५
स शरैरतिविद्धाङ्गो द्विविदः क्रोधमूर्छितः । सालेन सरथं साश्वं निजघानाशनिप्रभम्[५] ॥ ३६
विद्युन्माली रथस्थस्तु शरैः काञ्चनभूषणैः । सुषेणं ताडयामास ननाद च मुहुर्मुहुः ॥ ३७
तं रथस्थमथो दृष्ट्वा सुषेणो वानरोत्तमः । गिरिशृङ्गेण महता रथमाशु न्यपातयत् ॥ ३८
लाघवेन तु संयुक्तो विद्युन्माली निशाचरः । अपक्रम्य रथात्तूर्णं गदापाणिः क्षितौ स्थितः ॥ ३९
ततः क्रोधसमाविष्टः सुषेणो हरिपुंगवः । शिलां सुमहतीं गृह्य निशाचरमभिद्रवत् ॥ ४०
तमापतन्तं गदया विद्युन्माली निशाचरः[६] । वक्षस्यभिजघानाशु सुषेणं हरिसत्तमम् ॥ ४१
गदाप्रहारं तं घोरमचिन्त्य प्लवगोत्तमः । तां शिलां पातयामास तस्योरसि महामृधे ॥ ४२

---

१. प्रजघानेत्यादि विभीषण इत्यन्तम् क. ग. घ. च. छ. नास्ति ।

२. सृजन्तं शरपत्राणि ख. ।

३. वज्रमुष्टिस्तु इत्यादि अग्निशिखोपमैरित्यन्तम् [१२.२९] घ. नास्ति ।

४. अस्यानन्तरम्—मित्रघ्नमरिदर्पघ्न आपतन्तं विभीषणः । आसाद्य गदया गुर्व्या जघान रणमूर्धनि ॥ भिन्नगात्रः शरैस्तीक्ष्णैः क्षिप्रहस्तेन रक्षसा—इति छ. ।

५. जघानेत्यादि अशनिप्रभमित्यन्तम् क. नास्ति ।

अस्यानन्तरम्—नदन् प्रतपनो घोरो नलं सोऽप्यन्वधावत । नलः प्रतपनस्याशु पातयामास चक्षुषी ॥—इति छ. ।

६. अपक्रम्येत्यादि निशाचर इत्यन्तम् क. नास्ति ॥

शिलाप्रहाराभिहतो विद्युन्माली निशाचरः । निष्पिष्टहृदयो भूमौ गतासुर्निपपात ह ॥ ४३
एवं तैर्वानरैः शूरैः शूरास्ते रजनीचराः । द्वन्द्वे विमृदितास्तत्र दैत्या इव दिवौकसैः ॥ ४४
[1]भग्नैः खड्गैर्गदाभिश्च शक्तितोमरपट्टसैः । अपविद्धैश्च भिन्नैश्च रथैः सांग्रामिकैर्हयैः ॥ ४५
निहतैः कुञ्जरैर्मत्तैस्तथा वानरराक्षसैः । चक्राक्षयुगदण्डैश्च भग्नैर्धरणिसंश्रितैः ॥ ४६
बभूवायोधनं घोरं गोमायुगणसंकुलम् । कबन्धानि समुत्पेतुर्दिक्षु वानररक्षसाम् ॥ ४७
विमर्दे तुमुले तस्मिन् देवासुररणोपमे ॥

विदार्यमाणा हरिपुंगवैस्तदा निशाचराः शोणितदिग्धगात्राः ।
पुनः सुयुद्धं तरसा समास्थिता दिवाकरस्यास्तमयाभिकाङ्क्षिणः ॥ ४८

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
युद्धकाण्डे द्वन्द्वयुद्धं नाम त्रिचत्वारिंशः सर्गः

---

## चतुश्चत्वारिंशः सर्गः

### निशायुद्धम्

युध्यतामेव तेषां तु तदा वानररक्षसाम् । रविरस्तं गतो रात्रिः प्रवृत्ता प्राणहारिणी ॥ १
अन्योन्यं बद्धवैराणां घोराणां जयमिच्छताम् । संप्रवृत्तं निशायुद्धं तदा वानररक्षसाम् ॥ २
राक्षसोऽसीति हरयो हरिश्चासीति राक्षसाः । अन्योन्यं समरे जघ्नुस्तस्मिंस्तमसि दारुणे[2] ॥ ३
जहि दारय चैहीति कथं विद्रवसीति च । एवं सुतुमुलः शब्दस्तस्मिंस्तमसि शुश्रुवे ॥ ४
कालाः काञ्चनसन्नाहास्तस्मिंस्तमसि राक्षसाः । संप्रादृश्यन्त शैलेन्द्रा दीप्तौषधिवना इव ॥ ५
तस्मिंस्तमसि दुष्पारे राक्षसाः क्रोधमूर्छिताः । परिपेतुर्महावेगा भक्षयन्तः प्लवङ्गमान् ॥ ६
ते हयान् काञ्चनापीडान् ध्वजांश्चाग्निशिखोपमान् । आप्लुत्य दशनैस्तीक्ष्णैर्भीमकोपा व्यदारयन्॥
वानरा बलिनो युद्धेऽक्षोभयन् राक्षसीं चमूम् । कुञ्जरान्कुञ्जरारोहान्पताकाध्वजिनो रथान् ॥
चकर्षुश्च ददंशुश्च दशनैः क्रोधमूर्छिताः । लक्ष्मणश्चापि रामश्च शरैराशीविषोपमैः ॥ ९
दृश्यादृश्यानि रक्षांसि प्रवराणि निजघ्नतुः । तुरङ्गखुरविध्वस्तं रथनेमिसमुत्थितम् ॥ १०
रुरोध कर्णनेत्राणि युध्यतां धरणीरजः । वर्तमाने महाघोरे संग्रामे रोमहर्षणे ॥ ११
रुधिरोदा[3] महाघोरा नद्यस्तत्र प्रसुस्रुवुः । ततो भेरीमृदङ्गानां पणवानां च निःस्वनः ॥ १२

---

१. शरैः झ. ।

२. अस्यानन्तरम्--मा गाः सुयोध तिष्ठेति मल्लयुद्धं प्रयच्छ मे । अन्योन्यं शकिलार्यां मां हित्वा कुत्र च गच्छसि ॥ श्रमं हि वा मया गच्छ क्षणं युध्यस्व निर्वृतः । इत्यन्योन्यं राक्षसानां वानराणां महात्मनाम् ॥ —इति छ. ।

३. रुधिरौघाः झ. ।

शङ्खवेणुस्वनोन्मिश्रः संबभूवाद्भुतोपमः । हतानां [1]स्तनमानानां राक्षसानां च निःस्वनः ॥ १३
शस्तानां वानराणां च संबभूवातिदारुणः । हतैर्वानरवीरैश्च शक्तिशूलपरश्वधैः ॥ १४
निहतैः पर्वताग्रैश्च राक्षसैः कामरूपिभिः । शस्त्रपुष्पोपहारा च तत्रासीद्युद्धमेदिनी ॥ १५
दुर्ज्ञेया दुर्निवेशा च शोणितास्रावकर्दमा । स बभूव निशा घोरा हरिराक्षसहारिणी ॥ १६
कालरात्रीव भूतानां सर्वेषां दुरतिक्रमा । ततस्ते राक्षसास्तत्र तस्मिंस्तमसि दारुणे ॥ १७
राममेवाभ्यवर्तन्त संस्पृष्टाः[2] शरवृष्टिभिः । तेषामापततां शब्दः क्रुद्धानामपि गर्जताम् ॥ १८
उद्वर्त इव सप्तानां समुद्राणां प्रशुश्रुवे । तेषां रामः शरैः षड्भिः षड्जघान निशाचरान् ॥ १९
निमेषान्तरमात्रेण शितैरग्निशिखोपमैः । यज्ञशत्रुश्च दुर्धर्षो महापार्श्वमहोदरौ ॥ २०
वज्रदंष्ट्रो महाकायस्तौ चोभौ शुकसारणौ । ते तु रामेण बाणौघैः सर्वे मर्मसु ताडिताः ॥ २१
युद्धादपसृतास्तत्र सावशेषायुषोऽभवन् । तत्र काञ्चनचित्राङ्गैः शरैरग्निशिखोपमैः ॥ २२
दिशश्चकार विमलाः प्रदिशश्च महाबलः । रामनामाङ्कितैर्बाणैर्व्याप्तं तद्रणमण्डलम्[3] ॥ २३
ये त्वन्ये राक्षसा भीमा रामस्याभिमुखे स्थिताः । तेऽपि नष्टाः समासाद्य पतङ्गा इव पावकम् ॥
सुवर्णपुङ्खैर्विशिखैः संपतद्भिः सहस्रशः । बभूव रजनी चित्रा खद्योतैरिव शारदी ॥ २५
राक्षसानां च निनदैर्हरीणां चापि निःस्वनैः । सा बभूव निशा घोरा भूयो घोरतरा तदा ॥
तेन शब्देन महता प्रवृद्धेन समन्ततः[4] । त्रिकूटः कन्दराकीर्णः प्रव्याहरदिवाचलः ॥ २७
गोलाङ्गूला महाकायास्तमसा तुल्यवर्चसः । संपरिष्वज्य बाहुभ्यां भक्षयन् रजनीचरान् ॥ २८
अङ्गदस्तु रणे शत्रुं निहन्तुं समुपस्थितः । रावणिं निजघानाशु सारथिं च हयानपि ॥ २९
वर्तमाने तदा घोरे संग्रामे भृशदारुणे । इन्द्रजित्तु रथं त्यक्त्वा हताश्वो हतसारथिः ॥ ३०
अङ्गदेन महाकायस्तत्रैवान्तरधीयत । तत्कर्म वालिपुत्रस्य सर्वे देवाः सहर्षिभिः ॥ ३१
तुष्टुवुः पूजनार्हस्य तौ चोभौ रामलक्ष्मणौ । प्रभावं सर्वभूतानि विदुरिन्द्रजितो युधि ॥ ३२
अदृश्यः सर्वभूतानां योऽभवद्युधि दुर्जयः । तेन ते तं महात्मानं तुष्टा दृष्ट्वा प्रधर्षितम् ॥ ३३
ततः प्रहृष्टाः कपयः ससुग्रीवविभीषणाः । साधु साध्विति नेदुश्च दृष्ट्वा शत्रुं प्रधर्षितम् ॥ ३४
इन्द्रजित्तु तदा तेन निर्जितो भीमकर्मणा । संयुगे वालिपुत्रेण क्रोधं चक्रे सुदारुणम्[5] ॥ ३५
सोऽन्तर्धानगतः पापो रावणी रणकर्शितः[6] । ब्रह्मदत्तवरो वीरो रावणिः क्रोधमूर्छितः[7] ॥ ३६

---

१. हन्यमानानां. झ. ।

२. संसृष्टाः च. ।

३. इदमर्धम् च. नास्ति ।

४. बभूवेत्यादि समन्तत इत्यन्तम् घ. नास्ति ।

५. अस्यानन्तरम् — एतस्मिन्नन्तरे रामो वानरान् वाक्यमब्रवीत् । सर्वे भवन्तस्तिष्ठन्तु कपिराजेन संगताः ॥ स ब्रह्मणा दत्तवरस्त्रैलोक्यं बाधते भृशम् । भवतामर्थसिद्ध्यर्थं कालेन स समागतः ॥ अद्यैव क्षमितव्यं [?] मे भवन्तो विगतज्वराः । इति च. छ. ।

६. रणकर्कशः च. छ. ।

७. इदमर्धम् च. छ. नास्ति ।

अदृश्यो निशितान् बाणान् मुमोचाशनिवर्चसः । स रामं लक्ष्मणं चैव घोरैर्नागमयैः शरैः ॥ ३७
बिभेद समरे क्रुद्धः सर्वगात्रेषु राक्षसः । मायया संवृतस्तत्र मोहयन् राघवौ युधि ॥ ३८
अदृश्यः सर्वभूतानां कूटयोधी निशाचरः । बबन्ध शरबन्धेन भ्रातरौ रामलक्ष्मणौ ॥ ३९
तौ तेन पुरुषव्याघ्रौ क्रुद्धेनाशीविषैः शरैः । सहसा निहतौ वीरौ तदा प्रैक्षन्त वानराः ॥ ४०
प्रकाशरूपस्तु यदा न शक्तस्तौ बाधितुं राक्षसराजपुत्रः ।
मायां प्रयोक्तुं समुपाजगाम बबन्ध तौ राजसुतौ दुरात्मा ॥ ४१

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
युद्धकाण्डे निशायुद्धं नाम चतुश्चत्वारिंशः सर्गः

---

## पञ्चचत्वारिंशः सर्गः

### नागपाशबन्धः

स तस्य गतिमन्विच्छन् राजपुत्रः प्रतापवान् । दिदेशातिबलो रामो दश वानरयूथपान् ॥ १
द्वौ सुषेणस्य दायादौ नीलं च प्लवगर्षभम् । अङ्गदं वालिपुत्रं च शरभं च तरस्विनम् ॥ २
विनतं जाम्बवन्तं च सानुप्रस्थं महाबलम् । ऋषभं चर्षभस्कन्धमादिदेश परंतपः ॥ ३
ते संप्रहृष्टा हरयो भीमानुद्यम्य पादपान् । आकाशं विविशुः सर्वे मार्गमाणा दिशो दश ॥ ४
तेषां वेगवतां वेगमिषुभिर्वेगवत्तरैः । अस्त्रवित्परमास्त्रैस्तु वारयामास रावणिः ॥ ५
ते भीमवेगा हरयो नाराचैः क्षतविग्रहाः । अन्धकारे न ददृशुर्मेघैः सूर्यमिवावृतम् ॥ ६
रामलक्ष्मणयोरेव सर्वदेहभिदः शरान् । भृशमावेशयामास रावणिः समितिंजयः ॥ ७
निरन्तरशरीरौ तौ भ्रातरौ रामलक्ष्मणौ । क्रुद्धेनेन्द्रजिता वीरौ पन्नगैः शरतां गतैः ॥ ८
तयोः क्षतजमार्गेण सुस्राव रुधिरं बहु । तावुभौ च प्रकाशेते पुष्पिताविव किंशुकौ ॥ ९
ततः पर्यन्तरक्ताक्षो भिन्नाञ्जनचयोपमः । रावणिर्भ्रातरौ वाक्यमन्तर्धानगतोऽब्रवीत् ॥ १०
युध्यमानमनालक्ष्यं शक्रोऽपि त्रिदशेश्वरः । द्रष्टुमासादितुं वापि न शक्तः किं पुनर्युवाम् ॥ ११
प्रावृताविषुजालेन राघवौ कङ्कपत्रिणा । एष रोषपरीतात्मा नयामि यमसादनम् ॥ १२
एवमुक्त्वा तु धर्मज्ञौ भ्रातरौ रामलक्ष्मणौ । निर्बिभेद शितैर्बाणैः प्रजहर्ष ननाद च ॥ १३
भिन्नाञ्जनचयश्यामो विस्फार्य विपुलं धनुः । भूयोभूयः शरान् घोरान् विससर्ज महामृधे ॥ १४
ततो मर्मसु मर्मज्ञो मज्जयन्निशिताञ्शरान् । रामलक्ष्मणयोर्वीरो ननाद च मुहुर्मुहुः ॥ १५
बद्धौ तु शरबन्धेन तावुभौ रणमूर्धनि । निमेषान्तरमात्रेण न शेकतुरुदीक्षितुम् ॥ १६
ततो विभिन्नसर्वाङ्गौ शरशल्याचितावुभौ । ध्वजाविव महेन्द्रस्य रज्जुमुक्तौ प्रकम्पितौ ॥ १७
तौ संप्रचलितौ वीरौ मर्मभेदेन कर्शितौ । निपेततुर्महेष्वासौ जगत्यां जगतीपती ॥ १८
तौ वीरशयने वीरौ शयानौ रुधिरोक्षितौ । शरवेष्टितसर्वाङ्गावार्तौ परमपीडितौ ॥ १९

न ह्यविद्धं तयोर्गात्रे बभूवाङ्गुलमन्तरम् । नानिर्भिन्नं न चास्तब्धमाकराग्रादजिह्मगैः ॥ २०
तौ तु क्रूरेण निहतौ रक्षसा कामरूपिणा । असृक् सुस्रुवतुस्तीव्रं जलं प्रस्रवणाविव ॥ २१
पपात प्रथमं रामो विद्धो मर्मसु मार्गणैः । क्रोधादिन्द्रजिता येन पुरा शक्रो विनिर्जितः ॥ २२
रुक्मपुङ्खैः प्रसन्नाग्रैरधोगतिभिराशुगैः । नाराचैरर्धनाराचैर्भल्लैरञ्जलिकैरपि ॥ २३
विव्याध वत्सदन्तैश्च सिंहदंष्ट्रैः क्षुरैस्तथा । स वीरशयने शिश्ये विज्यमादाय कार्मुकम् ॥ २४
भिन्नमुष्टिपरीणाहं त्रिनतं रत्नभूषितम् । बाणपातान्तरे रामं पतितं पुरुषर्षभम् ॥ २५
स तत्र लक्ष्मणो दृष्ट्वा निराशो जीवितेऽभवत् । रामं कमलपत्राक्षं शरबन्धपरिक्षतम् ॥ २६
शुशोच भ्रातरं दृष्ट्वा पतितं धरणीतले । हरयश्चापि तं दृष्ट्वा संतापं परमं गताः ॥ २७
शोकार्ताश्चुक्रुशुर्घोरमश्रुपूरितलोचनाः[1] ॥

बद्धौ तु वीरौ पतितौ शयानौ तौ वानराः संपरिवार्य तस्थुः ।
समागता वायुसुतप्रमुख्या विषादमार्ताः परमं च जग्मुः ॥ २८

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायां
युद्धकाण्डे नागपाशबन्धो नाम पञ्चचत्वारिंशः सर्गः

---

## षट्चत्वारिंशः सर्गः

### सुग्रीवाद्यनुशोकः

ततो द्यां पृथिवीं चैव वीक्षमाणा वनौकसः । ददृशुः संततौ बाणैर्भ्रातरौ रामलक्ष्मणौ ॥ १
वृष्ट्वेवोपरते देवे कृतकर्मणि राक्षसे । आजगामाथ तं देशं ससुग्रीवो विभीषणः ॥ २
नीलद्विविदमैन्दाश्च सुषेणकुमुदाङ्गदाः । तूर्णं हनुमता सार्धमन्वशोचन्त राघवौ ॥ ३
अचेष्टौ मन्दनिःश्वासौ शोणितौघपरिप्लुतौ । शरजालाचितौ स्तब्धौ शयानौ शरतल्पयोः ॥ ४
निःश्वसन्तौ यथा सर्पौ निश्चेष्टौ मन्दविक्रमौ । रुधिरस्रावदिग्धाङ्गौ तापनीयाविव ध्वजौ ॥ ५
तौ वीरशयने वीरौ शयानौ मन्दचेष्टितौ । यूथपैस्तैः परिवृतौ बाष्पव्याकुललोचनैः ॥ ६
राघवौ पतितौ दृष्ट्वा शरजालसमावृतौ । बभूवुर्व्यथिताः सर्वे वानराः सविभीषणाः ॥ ७
अन्तरिक्षं निरीक्षन्तो दिशः सर्वाश्च वानराः । न चैनं मायया छन्नं ददृशू रावणिं रणे ॥ ८
तं तु मायाप्रतिच्छन्नं माययैव विभीषणः । वीक्षमाणो ददर्शाथ भ्रातुः पुत्रमवस्थितम् ॥ ९
तमप्रतिमकर्माणमप्रतिद्वन्द्वमाहवे । ददर्शान्तर्हितं वीरं वरदानाद्विभीषणः ॥ १०
तेजसा यशसा चैव विक्रमेण च संयुतम् । इन्द्रजित्त्वात्मनः कर्म तौ शयानौ समीक्ष्य च ॥
उवाच परमप्रीतो हर्षयन् सर्वनैर्ऋतान् । दूषणस्य च हन्तारौ खरस्य च महाबलौ ॥ १२

---

1. इदमर्धम् च. छ. नास्ति ।

सादितौ मामकैर्बाणैर्भ्रातरौ रामलक्ष्मणौ । नेमौ मोक्षयितुं शक्यावेतस्मादिषुबन्धनात् ॥ १३
सर्वैरपि समागम्य सर्षिसङ्घैः सुरासुरैः । यत्कृते चिन्तयानस्य शोकार्तस्य पितुर्मम ॥ १४
अस्पृष्ट्वा शयनं गात्रैस्त्रियामा याति शर्वरी । कृत्स्नेयं यत्कृते लङ्का नदी वर्षास्विवाकुला ॥ १५
सोऽयं मूलहरोऽनर्थः सर्वेषां निहतो मया । रामस्य लक्ष्मणस्यापि सर्वेषां च वनौकसाम् ॥ १६
विक्रमा निष्फलाः सर्वे यथा शरदि तोयदाः । एवमुक्त्वा तु तान् सर्वान् राक्षसान् परिपार्श्वतः ॥
यूथपानपि तान् सर्वांस्ताडयामास रावणिः । नीलं नवभिराहत्य मैन्दं च द्विविदं तथा ॥ १८
त्रिभिस्त्रिभिरमित्रघ्नस्तताप प्रवरेषुभिः । जाम्बवन्तं महेष्वासो विद्ध्वा बाणेन वक्षसि ॥ १९
हनूमतो वेगवतो विससर्ज शरान् दश । गवाक्षं शरभं चैव द्वावप्यमिततेजसौ ॥ २०
द्वाभ्यां द्वाभ्यां महावेगो विव्याध युधि रावणिः । गोलाङ्गूलेश्वरं चैव वालिपुत्रमथाङ्गदम् ॥ २१
विव्याध बहुभिर्बाणैस्त्वरमाणोऽथ रावणिः । तान् वानरवरान् भित्त्वा शरैरग्निशिखोपमैः ॥ २२
ननाद बलवांस्तत्र महासत्त्वः स रावणिः । तानर्दयित्वा बाणौघैस्त्रासयित्वा च वानरान् ॥ २३
प्रजहास महाबाहुर्वचनं चेदमब्रवीत् । शरबन्धेन घोरेण मया बद्धौ चमूमुखे ॥ २४
सहितौ भ्रातरावेतौ निशामयत राक्षसाः । एवमुक्तास्तु ते सर्वे राक्षसाः कूटयोधिनः ॥ २५
परं विस्मयमाजग्मुः कर्मणा तेन हर्षिताः । विनेदुश्च महानादान् सर्वतो जलदोपमाः ॥ २६
हतो राम इति ज्ञात्वा रावणिं समपूजयन् । निष्पन्दौ तु तदा दृष्ट्वा तावुभौ रामलक्ष्मणौ ॥२७
वसुधायां निरुच्छ्वासौ हतावित्यन्वमन्यत । हर्षेण तु समाविष्ट इन्द्रजित्समितिंजयः ॥ २८
प्रविवेश पुरीं लङ्कां हर्षयन् सर्वराक्षसान् । रामलक्ष्मणयोर्दृष्ट्वा शरीरे सायकैश्चिते ॥ २९
सर्वाणि चाङ्गोपाङ्गानि सुग्रीवं भयमाविशत् । तमुवाच परित्रस्तं वानरेन्द्रं विभीषणः ॥ ३०
सबाष्पवदनं दीनं शोकव्याकुललोचनम् । अलं त्रासेन सुग्रीव बाष्पवेगो निगृह्यताम् ॥ ३१
एवंप्रायाणि युद्धानि विजयो नास्ति नैष्ठिकः । सशेषभाग्यतास्माकं यदि वीर भविष्यति ॥ ३२
मोहमेतौ प्रहास्येते महात्मानौ महाबलौ । पर्यवस्थापयात्मानमनाथं मां च वानर ॥ ३३
सत्यधर्माभिरक्तानां नास्ति मृत्युकृतं भयम् । एवमुक्त्वा ततस्तस्य जलक्लिन्नेन पाणिना ॥ ३४
सुग्रीवस्य शुभे नेत्रे प्रममार्ज विभीषणः । ततः सलिलमादाय विद्यया परिजप्य च ॥ ३५
सुग्रीवनेत्रे धर्मात्मा स ममार्ज विभीषणः । प्रमृज्य वदनं तस्य कपिराजस्य धीमतः ॥ ३६
अब्रवीत्कालसंप्राप्तमसंभ्रममिदं वचः । न कालः कपिराजेन्द्र वैक्लव्यमवलम्बितुम्[1] ॥ ३७
अतिस्नेहोऽप्यकालेऽस्मिन् मरणायोपकल्पते । तस्मादुत्सृज्य वैक्लव्यं सर्वकार्यविनाशनम् ॥३८
हितं रामपुरोगाणां सैन्यानामनुचिन्त्यताम् । अथवा रक्ष्यतां रामो यावत्संज्ञाविपर्ययः ॥ ३९

१. अनुवर्तितुम् च. छ. ।

लब्धसंज्ञौ हि काकुत्स्थौ भयं नो व्यपनेष्यतः। नैतत्किंचन रामस्य न च रामो मुमूर्षति ॥ ४०
न ह्येनं हास्यते लक्ष्मीर्दुर्लभा या गतायुषाम्। तस्मादाश्वासयात्मानं बलं चाश्वासय स्वकम् ॥
यावत्कार्याणि[१] सर्वाणि पुनः संस्थापयाम्यहम्। एते हि फुल्लनयनास्त्रासादागतसाध्वसाः[1] ॥ ४२
कर्णे कर्णे प्रकथिता हरयो हरिसत्तम। मां तु दृष्ट्वा प्रधावन्तमनीकं संप्रहर्षितुम् ॥ ४३
त्यजन्तु हरयस्त्रासं भुक्तपूर्वामिव स्रजम्। समाश्वास्य तु सुग्रीवं राक्षसेन्द्रो विभीषणः ॥ ४४
विद्रुतं वानरानीकं तत्समाश्वासयत्पुनः। इन्द्रजित्तु महामायः सर्वसैन्यसमावृतः ॥ ४५
विवेश नगरीं लङ्कां पितरं चाभ्युपागमत्। तत्र रावणमासीनमभिवाद्य कृताञ्जलिः ॥ ४६
आचचक्षे प्रियं पित्रे निहतौ रामलक्ष्मणौ। उत्पपात ततो हृष्टः पुत्रं च परिषस्वजे ॥ ४७
रावणो रक्षसां मध्ये श्रुत्वा शत्रू निपातितौ। उपाघ्राय स मूर्ध्न्येनं पप्रच्छ प्रीतमानसः ॥ ४८
पृच्छते च यथावृत्तं पित्रे सर्वं न्यवेदयत्। यथा तौ शरबन्धेन निश्चेष्टौ निष्प्रभौ कृतौ[२] ॥ ४९

स हर्षवेगानुगतान्तरात्मा श्रुत्वा वचस्तस्य महारथस्य।
जहौ ज्वरं दाशरथेः समुत्थितं प्रहृष्य वाचाभिननन्द पुत्रम् ॥ ५०

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
युद्धकाण्डे सुग्रीवाद्यनुशोको नाम षट्चत्वारिंशः सर्गः

---

## सप्तचत्वारिंशः सर्गः

### नागबद्धरामलक्ष्मणप्रदर्शनम्

प्रतिप्रविष्टे लङ्कां तु कृतार्थे रावणात्मजे। राघवं परिवार्यार्ता ररक्षुर्वानरर्षभाः ॥ १
हनूमानङ्गदो नीलः सुषेणः कुमुदो नलः। गजो गवाक्षो गवयः शरभो गन्धमादनः ॥ २
जाम्बवानृषभः स्कन्धो रम्भः शतवलिः पृथुः[3]। व्यूढानीकाश्च यत्ताश्च द्रुमानादाय सर्वतः ॥ ३
वीक्षमाणा दिशः सर्वास्तिर्यगूर्ध्वं च वानराः। तृणेष्वपि च चेष्टत्सु राक्षसा इति मेनिरे ॥ ४
रावणश्चापि संहृष्टो विसृज्येन्द्रजितं सुतम्। आजुहाव ततः सीतारक्षिणी राक्षसीस्तदा ॥ ५
राक्षस्यस्त्रिजटा चैव शासनात्समुपस्थिताः। ता उवाच ततो हृष्टो राक्षसी राक्षसाधिपः ॥ ६
हताविन्द्रजिताख्यात वैदेह्या रामलक्ष्मणौ। पुष्पकं च समारोप्य दर्शयध्वं हतौ रणे ॥ ७

---

1. त्रासात् भयात्। आगतसाध्वसाः उत्पन्नस्तम्भप्रलयरोमाञ्चाः।

१. सैन्यानि घ.।

२. अस्यानन्तरम्-विस्मृत्यान्तर्हितं कृत्वा घोरं तच्छरबन्धनम्। रावणोऽकारयल्लङ्कां पताकाध्वजमालिनीम् ॥ घोषयित्वा तु लङ्कायां प्रहृष्टो राक्षसेश्वरः। राघवो लक्ष्मणश्चैव हताविन्द्रजिता रणे ॥—इति ख.।

३. अस्यानन्तरम्—एते सर्वे महोत्साहा वानरा भीमविक्रमाः—इति ख. घ.।

यदाश्रयादवष्टब्धा नेयं मामुपतिष्ठति । सोऽस्या भर्ता सह भ्रात्रा निरस्तो रणमूर्धनि ॥ ८
निर्विशङ्का निरुद्विग्ना निरपेक्षा च मैथिली । मामुपस्थास्यते सीता सर्वाभरणभूषिता ॥ ९
अद्य कालवशं प्राप्तं रणे रामं सलक्ष्मणम् । स्ववेक्ष्य विनिवृत्ताशा चान्यां गतिमपश्यती ॥१०
निरपेक्षा विशालाक्षी मामुपस्थास्यते स्वयम् । तस्य तद्वचनं श्रुत्वा रावणस्य दुरात्मनः ॥ ११
राक्षस्यस्तास्तथेत्युक्त्वा जग्मुर्वै यत्र पुष्पकम् । ततः पुष्पकमादाय राक्षस्यो रावणाज्ञया ॥ १२
अशोकवनिकास्थां तां मैथिलीं समुपानयन् । तामादाय तु राक्षस्यो भर्तृशोकपराजिताम् ॥१३
सीतामारोपयामासुर्विमानं पुष्पकं तदा । ततः पुष्पकमारोप्य सीतां त्रिजटया सह ॥ १४
जग्मुर्दर्शयितुं तस्यै राक्षस्यो रामलक्ष्मणौ । रावणोऽकारयल्लङ्कां पताकाध्वजमालिनीम् ॥ १५
प्राघोषयत हृष्टश्च लङ्कायां राक्षसेश्वरः । राघवो लक्ष्मणश्चैव हताविन्द्रजिता रणे ॥ १६
विमानेनापि सीता तु गत्वा त्रिजटया सह । ददर्श वानराणां तु सर्वं सैन्यं निपातितम् ॥ १७
प्रहृष्टमनसश्चापि ददर्श पिशिताशनान् । वानरांश्चापि दुःखार्तान् रामलक्ष्मणपार्श्वतः ॥ १८
ततः सीता ददर्शोभौ शयानौ शरतल्पयोः । लक्ष्मणं चापि रामं च विसंज्ञौ शरपीडितौ ॥ १९
विध्वस्तकवचौ वीरौ विप्रविद्धशरासनौ । सायकैश्छिन्नसर्वाङ्गौ शरस्तम्बमयौ क्षितौ ॥ २०
तौ दृष्ट्वा भ्रातरौ तत्र वीरौ सा पुरुषर्षभौ । शयानौ पुण्डरीकाक्षौ कुमाराविव पावकी ॥ २१
शरतल्पगतौ वीरौ तथाभूतौ नरर्षभौ । दुःखार्ता सुभृशं सीता सुचिरं विललाप ह ॥ २२
भर्तारमनवद्याङ्गी लक्ष्मणं चासितेक्षणा । प्रेक्ष्य पांसुषु वेष्टन्तौ रुरोद जनकात्मजा ॥ २३

सा बाष्पशोकाभिहता समीक्ष्य तौ भ्रातरौ देवसमप्रभावौ ।
वितर्कयन्ती निधनं तयोः सा दुःखान्विता वाक्यमिदं जगाद ॥ २४

इत्यार्षे श्रीमद्रामायणे वाल्मीकिये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
युद्धकाण्डे नागबद्धरामलक्ष्मणप्रदर्शनं नाम सप्तचत्वारिंशः सर्गः

---

## अष्टचत्वारिंशः सर्गः

### सीताश्वासनम्

भर्तारं निहतं दृष्ट्वा लक्ष्मणं च महाबलम् । विललाप भृशं सीता करुणं शोककर्शिता ॥ १
ऊचुर्लक्षणिनो ये मां पुत्रिण्यविधवेति च । तेऽद्य सर्वे हते रामे ज्ञानिनोऽनृतवादिनः ॥ २
यज्वनो महिषीं ये मामूचुः पत्नीं च सत्रिणः । तेऽद्य सर्वे हते रामे ज्ञानिनोऽनृतवादिनः ॥ ३
ऊचुः संश्रवणे ये मां द्विजाः कार्तान्तिकाः शुभाम् । तेऽद्य सर्वे हते रामे ज्ञानिनोऽनृतवादिनः
वीरपार्थिवपत्नी त्वं ये धन्येति च मां विदुः । तेऽद्य सर्वे हते रामे ज्ञानिनोऽनृतवादिनः ॥ ५
इमानि खलु पद्मानि पादयोर्यैः किल स्त्रियः । आधिराज्येऽभिषिच्यन्ते नरेन्द्रैः पतिभिः सह ॥

वैधव्यं यान्ति यैर्नार्योऽलक्षणैर्भाग्यदुर्लभाः । नात्मनस्तानि पश्यामि पश्यन्ती हतलक्षणा ॥ ७
सत्यनामानि पद्मानि स्त्रीणामुक्तानि लक्षणैः । तान्यद्य निहते रामे वितथानि भवन्ति मे ॥ ८
केशाः सूक्ष्माः समा नीला भ्रुवौ चासंगते मम । वृत्ते चारोमशे जङ्घे दन्ताश्चाविरला मम ॥९
शङ्खे नेत्रे करौ पादौ गुल्फावूरू च मे चितौ । अनुवृत्तनखाः स्निग्धाः समाश्चाङ्गुलयो मम ॥
स्तनौ चाविरलौ पीनौ ममेमौ मग्नचूचुकौ । मग्ना चोत्सङ्गिनी नाभिः पार्श्वोरस्काश्च मे चिताः ॥
मम वर्णो मणिनिभो मृदून्यङ्गरुहाणि च । प्रतिष्ठितां द्वादशभिर्मामूचुः शुभलक्षणाम् ॥ १२
समग्रयवमच्छिद्रं पाणिपादं च वर्णवत् । मन्दस्मितेत्येव च मां कन्यालक्षणिनो विदुः ॥ १३
आधिराज्येऽभिषेको मे ब्राह्मणैः पतिना सह । कृतान्तकुशलैरुक्तं तत्सर्वं वितथीकृतम् ॥ १४
शोधयित्वा जनस्थानं प्रवृत्तिमुपलभ्य च । तीर्त्वा सागरमक्षोभ्यं भ्रातरौ गोष्पदे हतौ ॥ १५
ननु वारुणमाग्नेयमैन्द्रं वायव्यमेव च । अस्त्रं ब्रह्मशिरश्चैव राघवौ प्रत्यपद्यताम् ॥ १६
अदृश्यमानेन रणे मायया वासवोपमौ । मम नाथावनाथाया निहतौ रामलक्ष्मणौ ॥ १७
न हि दृष्टिपथं प्राप्य राघवस्य रणे रिपुः । जीवन् प्रतिनिवर्तेत यद्यपि स्यान्मनोजवः ॥ १८
न कालस्यातिभारोऽस्ति कृतान्तश्च सुदुर्जयः । यत्र रामः सह भ्रात्रा शेते युधि निपातितः ॥
न शोचामि तथा रामं लक्ष्मणं च महाबलम् । नात्मानं जननीं वापि यथा श्वश्रूं तपस्विनीम् ॥
सानुचिन्तयते नित्यं समाप्तव्रतमागतम् । कदा द्रक्ष्यामि सीतां च लक्ष्मणं च सराघवम् ॥ २१
परिदेवयमानां तां राक्षसी त्रिजटाब्रवीत् । मा विषादं कृथा देवि भर्तायं तव जीवति ॥ २२
कारणानि च वक्ष्यामि महान्ति सदृशानि च । यथेमौ जीवतो देवि भ्रातरौ रामलक्ष्मणौ॥२३
न हि कोपपरीतानि हर्षपर्युत्सुकानि च । भवन्ति युधि योधानां मुखानि निहते पतौ ॥ २४
इदं विमानं वैदेहि पुष्पकं नाम नामतः । दिव्यं त्वां धारयेन्नैवं यद्येतौ गतजीवितौ ॥ २५
हतवीरप्रधाना हि हतोत्साहा निरुद्यमा । सेना भ्रमति संख्येषु हतकर्णेव नौर्जले ॥ २६
इयं पुनरसंभ्रान्ता निरुद्विग्ना तरस्विनी । सेना रक्षति काकुत्स्थौ मया प्रीत्या निवेदितौ ॥ २७
सा त्वं भव सुविस्रब्धा अनुमानैः सुखोदयैः । अहतौ पश्य काकुत्स्थौ स्नेहादेतद्ब्रवीमि ते ॥
अनृतं नोक्तपूर्वं मे न च वक्ष्ये कदाचन । चारित्रसुखशीलत्वात्प्रविष्टासि मनो मम ॥ २९
नेमौ शक्यौ रणे जेतुं सेन्द्रैरपि सुरासुरैः । तादृशं दर्शनं दृष्ट्वा मया चावेदितं तव ॥ ३०
इदं च सुमहच्चिह्नं शनैः पश्यस्व मैथिलि । निःसंज्ञावप्युभावेतौ नैव लक्ष्मीर्विमुञ्चति ॥ ३१
प्रायेण गतसत्त्वानां पुरुषाणां गतायुषाम् । दृश्यमानेषु वक्त्रेषु परं भवति वैकृतम् ॥ ३२
त्यज शोकं च मोहं च दुःखं च जनकात्मजे । रामलक्ष्मणयोरर्थे नाद्य शक्यमजीवितुम् ॥ ३३
श्रुत्वा तु वचनं तस्याः सीता सुरसुतोपमा । कृताञ्जलिरुवाचेदमेवमस्त्विति मैथिली ॥ ३४
विमानं पुष्पकं तत्तु संनिवर्त्य मनोजवम् । दीना त्रिजटया सीता लङ्कामेव प्रवेशिता ॥ ३५

ततस्त्रिजटया सार्धं पुष्पकादवरुह्य सा । अशोकवनिकामेव राक्षसीभिः प्रवेशिता ॥ ३६

प्रविश्य सीता बहुवृक्षषण्डां तां राक्षसेन्द्रस्य विहारभूमिम् ।
संप्रेक्ष्य संचिन्त्य च राजपुत्री परं विषादं समुपाजगाम ॥ ३७

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
युद्धकाण्डे सीताश्वासनं नाम अष्टचत्वारिंशः सर्गः

---

## एकोनपञ्चाशः सर्गः

### रामनिर्वेदः

घोरेण शरबन्धेन बद्धौ दशरथात्मजौ । निःश्वसन्तौ यथा नागौ शयानौ रुधिरोक्षितौ ॥ १
सर्वे ते वानरश्रेष्ठाः ससुग्रीवा महाबलाः । परिवार्य महात्मानौ तस्थुः शोकपरिप्लुताः ॥ २
एतस्मिन्नन्तरे रामः प्रत्यबुध्यत वीर्यवान् । स्थिरत्वात्सत्त्वयोगाच्च शरैः संदानितोऽपि सन् ॥ ३
ततो दृष्ट्वा सरुधिरं विषण्णं गाढमर्पितम् । भ्रातरं दीनवदनं पर्यदेवयदातुरः[1] ॥ ४
किं नु मे सीतया कार्यं किं कार्यं[2] जीवितेन वा । शयानं योऽद्य पश्यामि भ्रातरं युधि निर्जितम् ॥
शक्या सीतासमा नारी मर्त्यलोके विचिन्वता । न लक्ष्मणसमो भ्राता सचिवः सांपरायिकः ॥
परित्यक्ष्याम्यहं प्राणान् वानराणां तु पश्यताम् । यदि पञ्चत्वमापन्नः सुमित्रानन्दवर्धनः ॥ ७
किं नु वक्ष्यामि कौसल्यां मातरं किं नु कैकयीम् । कथमम्बां सुमित्रां च पुत्रदर्शनलालसाम् ॥
विवत्सां वेपमानां च क्रोशन्तीं कुररीमिव । कथमाश्वासयिष्यामि यदि यास्यामि तं विना ॥९
कथं वक्ष्यामि शत्रुघ्नं भरतं च यशस्विनम् । मया सह वनं यातो विना तेन गतः पुनः ॥१०
उपालम्भं न शक्ष्यामि सोढुं बत सुमित्रया । इहैव देहं त्यक्ष्यामि न हि जीवितुमुत्सहे ॥ ११
धिङ्मां दुष्कृतकर्माणमनार्यं यत्कृते ह्यसौ । लक्ष्मणः पतितः शेते शरतल्पे गतासुवत् ॥ १२
त्वं नित्यं सुविषण्णं मामाश्वासयसि लक्ष्मण । गतासुर्नाद्य शक्नोषि मामार्तमभिभाषितुम् ॥ १३
येनाद्य निहता युद्धे राक्षसा विनिपातिताः । तस्यामेव क्षितौ वीरः स शेते निहतः परैः ॥१४
शयानः शरतल्पेऽस्मिन् स्वशोणितपरिप्लुतः । शरजालैश्चितो भाति भास्करोऽस्तमिव व्रजन् ॥
बाणाभिहतमर्मत्वान्न शक्नोत्यभिभाषितुम् । रुजा चाब्रुवतोऽप्यस्य दृष्टिरागेण सूच्यते ॥ १६
यथैव मां वनं यान्तमनुयातो महाद्युतिः । अहमप्यनुयास्यामि तथैवैनं यमक्षयम् ॥ १७
इष्टबन्धुजनो नित्यं मां च नित्यमनुव्रतः । इमामद्य गतोऽवस्थां ममानार्यस्य दुर्नयैः ॥ १८

---

१. अस्य स्थाने — प्रत्यवेक्ष्य तदात्मानं मुदाहरत् ।— इति ख. । शोणितौघपरिच्छदम् । विललाप तदा रामो मन्दमश्रूणि वर्तयन् ॥ लक्ष्मणं पतितं दृष्ट्वा मन्त्रगोत्र-

२. लब्धया क. घ. ।

सुरुष्टेनापि वीरेण लक्ष्मणेन न संस्मरे । परुषं विप्रियं वापि श्रावितं तु कदाचन ॥ १९
विससर्जैकवेगेन पञ्च बाणशतानि यः । इष्वस्त्रेष्वधिकस्तस्मात्कार्तवीर्याच्च लक्ष्मणः ॥ २०
अस्त्रैरस्त्राणि यो हन्याच्छक्रस्यापि महात्मनः । सोऽयमुर्व्यां हतः शेते महार्हशयनोचितः॥ २१
तच्च मिथ्याप्रलप्तं मां प्रवक्ष्यति न संशयः । यन्मया न कृतो राजा राक्षसानां विभीषणः ॥२२
अस्मिन् मुहूर्ते सुग्रीव प्रतियातुमितोऽर्हसि । मत्वा हीनं मया राजन् रावणोऽभिद्रवेद्बली ॥२३
अङ्गदं तु पुरस्कृत्य ससैन्यः ससुहृज्जनः । सागरं तर सुग्रीव नीलेन च नलेन च ॥ २४
कृतं हनुमता कार्यं यदन्यैर्दुष्करं रणे । ऋक्षराजेन तुष्यामि गोलाङ्गूलाधिपेन च ॥ २५
अङ्गदेन कृतं कर्म मैन्देन द्विविदेन च । युद्धं केसरिणा संख्ये घोरं संपातिना कृतम् ॥ २६
गवयेन गवाक्षेण शरभेण गजेन च । अन्यैश्च हरिभिर्युद्धं मदर्थे त्यक्तजीवितैः ॥ २७
न चातिक्रमितुं शक्यं दैवं सुग्रीव मानुषैः । यत्तु शक्यं वयस्येन सुहृदा च परंतप ॥ २८
कृतं सुग्रीव तत्सर्वं भवता धर्मभीरुणा । मित्रकार्यं कृतमिदं भवद्भिर्वानरर्षभाः ॥ २९
अनुज्ञाता मया सर्वे यथेष्टं गन्तुमर्हथ । शुश्रुवुस्तस्य ते सर्वे वानराः परिदेवनम् ॥ ३०
वर्तयांचक्रुरश्रूणि नेत्रैः कृष्णेतरेक्षणाः । ततः सर्वाण्यनीकानि स्थापयित्वा विभीषणः ॥ ३१
आजगाम गदापाणिस्त्वरितो यत्र राघवः । तं दृष्ट्वा त्वरितं यान्तं नीलाञ्जनचयोपमम् ॥ ३२
वानरा दुद्रुवः सर्वे मन्यमानास्तु रावणिम् । निश्चेष्टौ विगतज्ञानौ रणरेणुसमुक्षितौ ॥ ३३
शयानौ शरतल्पस्थौ द्रष्टुमायाद्विभीषणः ॥

[1]तं राक्षसेन्द्रात्मजशङ्कया ते निपातितौ राजसुतौ च दृष्ट्वा ।
विभीषणं विव्यथिरे च दृष्ट्वा मेघा यथा वायुहताः प्लवङ्गाः[१] ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
युद्धकाण्डे रामनिर्वेदो नाम एकोनपञ्चाशः सर्गः

---

## पञ्चाशः सर्गः

### नागपाशविमोक्षणम्

अथोवाच[2] महातेजा हरिराजो महाबलः । किमियं व्यथिता सेना मूढवातेव नौर्जले ॥ १

---

१. निश्चेष्टावित्यादि प्लवङ्गा इत्यन्तम् च. नास्ति ।

1. पद्यमिदं व्याख्यातृभिर्विवृतम् । अत्र पूर्वोत्तरार्धयोर्दृष्ट्वेति पुनरुक्तम् । तदुत्तरार्धे दृष्ट्वेत्यत्र वृष्ट्वेति पाठोऽभ्यूह्यते । यथा लोके वर्षन्तः संहता मेघा वायुना हताः छिन्ना भिन्नाश्च प्रव्यथन्ते तथा प्लवङ्गमाश्च विव्यथिरे इति दृष्टान्तार्थः ॥

2. विभीषणमायान्तं दृष्ट्वा रावणात्मजशङ्कया वित्रस्ता वानराः प्रदुद्रुवुरिति पूर्वसर्गान्ते प्रतिपादितम् । अस्मिन्नवसरे सुग्रीवाङ्गदयोः शङ्कासमाधानवचनानि षड्भिः श्लोकैर्निबध्नाति अत्रभवान् कविः । तदिदमत्र व्यङ्ग्यम्—दारुणं खलु युद्धेऽस्मिन् इन्द्रजिता चेष्टितं यदस्थाने भ्रान्ता वानरा भयेन विद्रवन्ति ; न केवलमेतावत् सुग्रीवोऽपि तथा किमप्यत्याहितमिन्द्रजितेति आशङ्कत इति । यदाह— 'नानिमित्तमिदं मन्ये भवितव्यं भयेन तु' इति ।

सुग्रीवस्य वचः श्रुत्वा वालिपुत्रोऽङ्गदोऽब्रवीत्। न त्वं पश्यसि रामं च लक्ष्मणं च महाबलम्॥
शरजालाचितौ वीरावुभौ दशरथात्मजौ। शरतल्पे महात्मानौ शयानौ रुधिरोक्षितौ॥ ३
अथाब्रवीद्वानरेन्द्रः सुग्रीवः पुत्रमङ्गदम्। नानिमित्तमिदं मन्ये भवितव्यं भयेन तु॥ ४
विषण्णवदना ह्येते त्यक्तप्रहरणा दिशः। प्रपलायन्ति हरयस्त्रासादुत्फुल्ललोचनाः॥ ५
अन्योन्यस्य न लज्जन्ते न निरीक्षन्ति पृष्ठतः। विप्रकर्षन्ति चान्योन्यं पतितं लङ्घयन्ति च॥६
एतस्मिन्नन्तरे वीरो गदापाणिर्विभीषणः। सुग्रीवं वर्धयामास राघवं च जयाशिषा॥ ७
विभीषणं तं सुग्रीवो दृष्ट्वा वानरभीषणम्। ऋक्षराजं समीपस्थं जाम्बवन्तमुवाच ह॥ ८
विभीषणोऽयं संप्राप्तो यं दृष्ट्वा वानरर्षभाः। विद्रवन्ति परित्रस्ता रावणात्मजशङ्कया॥ ९
शीघ्रमेतान् सुसंत्रस्तान् बहुधा विप्रधावितान्। पर्यवस्थापयाख्याहि विभीषणमुपस्थितम्॥ १०
सुग्रीवेणैवमुक्तस्तु जाम्बवानृक्षपार्थिवः। वानरान् सान्त्वयामास संनिरुध्य प्रधावतः॥ ११
ते निवृत्ताः पुनः सर्वे वानरास्त्यक्तसंभ्रमाः। ऋक्षराजवचः श्रुत्वा तं च दृष्ट्वा विभीषणम्॥१२
विभीषणस्तु रामस्य दृष्ट्वा गात्रं शरैश्चितम्। लक्ष्मणस्य च धर्मात्मा बभूव व्यथितेन्द्रियः॥ १३
जलक्लिन्नेन हस्तेन तयोर्नेत्रे प्रमृज्य च। शोकसंपीडितमना रुरोद विललाप च॥ १४
इमौ तौ सत्त्वसंपन्नौ विक्रान्तौ प्रियसंयुगौ। इमामवस्थां गमितौ राक्षसैः कूटयोधिभिः॥ १५
भ्रातुः पुत्रेण मे तेन दुष्पुत्रेण दुरात्मना। राक्षस्या जिह्मया बुद्ध्या[1] चालितावृजुविक्रमौ॥१६
शरैरिमावलं विद्धौ रुधिरेण समुक्षितौ। वसुधायामिमौ सुप्तौ दृश्येते शल्यकाविव॥ १७
ययोर्वीर्यमुपाश्रित्य प्रतिष्ठा काङ्क्षिता मया। तावुभौ देहनाशाय प्रसुप्तौ पुरुषर्षभौ॥ १८
जीवन्नद्य विपन्नोऽस्मि नष्टराज्यमनोरथः। प्राप्तप्रतिज्ञश्च रिपुः सकामो रावणः कृतः॥ १९
एवं विलपमानं तं परिष्वज्य विभीषणम्। सुग्रीवः सत्त्वसंपन्नो हरिराजोऽब्रवीदिदम्॥ २०
राज्यं प्राप्स्यसि धर्मज्ञ लङ्कायां नात्र संशयः। रावणः सह पुत्रेण स्वकामं नेह लप्स्यते॥ २१
न रुजा पीडितावेतावुभौ राघवलक्ष्मणौ। त्यक्त्वा मोहं वधिष्येते सगणं रावणं रणे॥ २२
तमेनं सान्त्वयित्वा तु समाश्वास्य च राक्षसम्। सुषेणं श्वशुरं पार्श्वे सुग्रीवस्तमुवाच ह॥ २३
सह शूरैर्हरिगणैर्लब्धसंज्ञावरिंदमौ। गच्छ त्वं भ्रातरौ गृह्य किष्किन्धां रामलक्ष्मणौ॥ २४
अहं तु रावणं हत्वा सपुत्रं सहबान्धवम्। मैथिलीमानयिष्यामि शक्रो नष्टामिव श्रियम्॥ २५
श्रुत्वैतद्वानरेन्द्रस्य सुषेणो वाक्यमब्रवीत्। दैवासुरं महद्युद्धमनुभूतं सुदारुणम्॥ २६
तदा स्म दानवा देवाञ्शरसंस्पर्शकोविदाः। निजघ्नुः शस्त्रविदुषश्छादयन्तो मुहुर्मुहुः॥ २७

---

इदं वानराणां विद्रवणमपूर्वेण निमित्तेन विनेति नाहं मन्ये, भवितव्यं त्वत्र केनापि भयकारणेन इन्द्रजित्प्रयुक्तेनेत्यर्थः। एवं हि चिन्ताक्रान्तस्य सुग्रीवस्य विभीषणागमनमेतदत्यन्तरुचितं संवृत्तमिति उक्तं भवति। अहो अनन्यसामान्या महर्षेरितिवृत्तसंगमनशैली, ध्वनिप्राधान्यं च॥

१, वञ्चितौ ङ.

तानार्तान्नष्टसञ्ज्ञांश्च परासूंश्च बृहस्पतिः । विद्याभिर्मन्त्रयुक्ताभिरोषधीभिश्चिकित्सति ॥ २८
तान्यौषधान्यानयितुं क्षीरोदं यान्तु सागरम् । जवेन वानराः शीघ्रं संपातिपनसादयः ॥ २९
हरयस्तु विजानन्ति पार्वतीस्ता महौषधीः । संजीवकरणीं दिव्यां विशल्यां देवनिर्मिताम्॥ ३०
चन्द्रश्च नाम द्रोणश्च क्षीरोदे सागरोत्तमे । अमृतं यत्र मथितं तत्र ते परमौषधी ॥ ३१
ते तत्र निहिते देवैः पर्वते परमौषधी । अयं वायुसुतो राजन् हनुमांस्तत्र गच्छतु ॥ ३२
एतस्मिन्नन्तरे वायुर्मेघांश्चापि[1] सविद्युतः । पर्यस्यन् सागरे तोयं कम्पयन्निव मेदिनीम् ॥ ३३
महता पक्षवातेन सर्वद्वीपमहाद्रुमाः । निपेतुर्भग्नविटपाः समूला लवणाम्भसि ॥ ३४
अभवन् पन्नगास्त्रस्ता भोगिनस्तत्रवासिनः । शीघ्रं सर्वाणि यादांसि जग्मुश्च लवणार्णवम्॥ ३५
ततो मुहूर्ताद्गरुडं वैनतेयं महाबलम् । वानरा ददृशुः सर्वे ज्वलन्तमिव पावकम् ॥ ३६
तमागतमभिप्रेक्ष्य नागास्ते विप्रदुद्रुवुः । यैस्तौ[1] सत्पुरुषौ बद्धौ शरभूतैर्महाबलौ ॥ ३७
ततः सुपर्णः काकुत्स्थौ दृष्ट्वा प्रत्यभिनन्दितः । विममर्श च पाणिभ्यां मुखे चन्द्रसमप्रभे ॥ ३८
वैनतेयेन संस्पृष्टास्तयोः संरुरुहुर्व्रणाः । सुवर्णे च तनू स्निग्धे तयोराशु बभूवतुः ॥ ३९
तेजो वीर्यं बलं चौज उत्साहश्च महागुणः । प्रदर्शनं च बुद्धिश्च स्मृतिश्च द्विगुणा तयोः॥ ४०
तावुत्थाप्य महावीर्यौ गरुडो वासवोपमौ । उभौ तौ सस्वजे हृष्टौ रामश्चैनमुवाच ह ॥ ४१
भवत्प्रसादाद्व्यसनं रावणिप्रभवं महत् । आवामिह व्यतिक्रान्तौ पूर्ववद्बलिनौ कृतौ ॥ ४२
यथा तातं दशरथं यथाजं च पितामहम् । तथा भवन्तमासाद्य हृदयं मे प्रसीदति ॥ ४३
को भवान् रूपसंपन्नो दिव्यस्रगनुलेपनः । वसानो विरजे वस्त्रे दिव्याभरणभूषितः ॥ ४४
तमुवाच महातेजा वैनतेयो महाबलः । पतत्रिराजः प्रीतात्मा हर्षपर्याकुलेक्षणः ॥ ४५
अहं सखा ते काकुत्स्थ प्रियः प्राणो बहिश्चरः । गरुत्मानिह संप्राप्तो युवयोः साह्यकारणात् ४६
असुरा वा महावीर्या दानवा वा महाबलाः । सुराश्चापि सगन्धर्वाः पुरस्कृत्य शतक्रतुम् ॥ ४७
नेमं मोक्षयितुं शक्ताः शरबन्धं सुदारुणम् । मायाबलादिन्द्रजिता निर्मितं क्रूरकर्मणा ॥ ४८
एते नागाः काद्रवेयास्तीक्ष्णदंष्ट्रा विषोल्बणाः । रक्षोमायाप्रभावेन शरा भूत्वा त्वदाश्रिताः४९
सभाग्यश्चासि धर्मज्ञ राम सत्यपराक्रम । लक्ष्मणेन सह भ्राता समरे रिपुघातिना ॥ ५०
इमं श्रुत्वा तु वृत्तान्तं त्वरमाणोऽहमागतः । सहसा युवयोः स्नेहात्सखित्वमनुपालयन् ॥ ५१
मोक्षितौ च महाघोरादस्मात्सायकबन्धनात् । अप्रमादश्च कर्तव्यो युवाभ्यां नित्यमेव हि ॥५२
प्रकृत्या राक्षसाः सर्वे संग्रामे कूटयोधिनः । शूराणां शुद्धभावानां भवतामार्जवं बलम् ॥ ५३
तन्न विश्वसितव्यं वो राक्षसानां रणाजिरे । एतेनैवोपमानेन नित्यं जिह्मा हि राक्षसाः ॥ ५४
एवमुक्त्वा ततो रामं सुपर्णः सुमहाबलः । परिष्वज्य सुहृत्स्निग्धमाप्रष्टुमुपचक्रमे ॥ ५५

१. मेघाश्चापि पुना. ।

सखे राघव धर्मज्ञ रिपूणामपि वत्सल । अभ्यनुज्ञातुमिच्छामि गमिष्यामि यथागतम् ॥ ५६
न च कौतूहलं कार्यं सखित्वं प्रति राघव । कृतकर्मा रणे वीरः सखित्वमनुवेत्स्यसि ॥ ५७
बालवृद्धावशेषां तु लङ्कां कृत्वा शरोर्मिभिः । रावणं च रिपुं हत्वा सीतां समुपलप्स्यसे ॥ ५८
इत्येवमुक्त्वा वचनं सुपर्णः शीघ्रविक्रमः । रामं च विरुजं कृत्वा मध्ये तेषां वनौकसाम् ॥ ५९
प्रदक्षिणं ततः कृत्वा परिष्वज्य च वीर्यवान् । जगामाकाशमाविश्य सुपर्णः पवनो यथा ॥ ६०
विरुजौ राघवौ दृष्ट्वा ततो वानरयूथपाः । सिंहनादांस्तदा नेदुर्लाङ्गूलान् दुधुवुस्तदा ॥ ६१
ततो भेरीः समाजघ्नुर्मृदङ्गांश्चाप्यनादयन् । दध्मुः शङ्खान् संप्रहृष्टाः क्ष्वेलन्त्यपि यथापुरम् ॥
आस्फोट्यास्फोट्य विक्रान्ता वानरा नगयोधिनः । द्रुमानुत्पाट्य विविधांस्तस्थुः शतसहस्रशः॥
विसृजन्तो महानादांस्त्रासयन्तो निशाचरान् । लङ्काद्वाराण्युपाजग्मुर्योद्धुकामाः प्लवङ्गमाः ॥ ६४

ततस्तु भीमस्तुमुलो निनादो बभूव शाखामृगयूथपानाम् ।
क्षये निदाघस्य यथा घनानां नादः सुभीमो नदतां निशीथे ॥ ६५

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
युद्धकाण्डे नागपाशविमोक्षणं नाम पञ्चाशः सर्गः

---

## एकपञ्चाशः सर्गः

### धूम्राक्षाभिषेणनम्

तेषां सुतुमुलं शब्दं वानराणां तरस्विनाम् । नर्दतां राक्षसैः सार्धं तदा शुश्राव रावणः ॥ १
स्निग्धगम्भीरनिर्घोषं श्रुत्वा स निनदं भृशम् । सचिवानां ततस्तेषां मध्ये वचनमब्रवीत् ॥ २
यथासौ संप्रहृष्टानां वानराणां समुत्थितः । बहूनां सुमहान्नादो मेघानामिव गर्जताम् ॥ ३
व्यक्तं सुमहती प्रीतिरेतेषां नात्र संशयः । तथा हि विपुलैर्नादैश्चुक्षुभे वरुणालयः ॥ ४
तौ तु बद्धौ शरैस्तीक्ष्णैर्भ्रातरौ रामलक्ष्मणौ । अयं च सुमहान्नादः शङ्कां जनयतीव मे ॥ ५
एतत्तु वचनं चोक्त्वा मन्त्रिणो राक्षसेश्वरः । उवाच नैर्ऋतांस्तत्र समीपपरिवर्तिनः ॥ ६
ज्ञायतां तूर्णमेतेषां सर्वेषां वनचारिणाम् । शोककाले समुत्पन्ने हर्षकारणमुत्थितम् ॥ ७
तथोक्तास्तेन संभ्रान्ताः प्राकारमधिरुह्य ते । ददृशुः पालितां सेनां सुग्रीवेण महात्मना ॥ ८
तौ च मुक्तौ सुघोरेण शरबन्धेन राघवौ । समुत्थितौ महावेगौ विषेदुः प्रेक्ष्य राक्षसाः ॥ ९
संत्रस्तहृदयाः सर्वे प्राकारादवरुह्य ते । विषण्णवदना घोरा राक्षसेन्द्रमुपस्थिताः ॥ १०
तदप्रियं दीनमुखा रावणस्य निशाचराः । कृत्स्नं निवेदयामासुर्यथावद्वाक्यकोविदाः ॥ ११
यौ ताविन्द्रजिता युद्धे भ्रातरौ रामलक्ष्मणौ । निबद्धौ शरबन्धेन निष्प्रकम्पभुजौ कृतौ ॥ १२
विमुक्तौ शरबन्धेन तौ दृश्येते रणाजिरे । पाशानिव गजौ छित्त्वा गजेन्द्रसमविक्रमौ ॥ १३

तच्छ्रुत्वा वचनं तेषां राक्षसेन्द्रो महाबलः । चिन्ताशोकसमाक्रान्तो विषण्णवदनोऽब्रवीत्॥ १४

घोरैर्दत्तवरैर्बद्धौ शरैराशीविषोपमैः । अमोघैः सूर्यसंकाशैः प्रमथ्येन्द्रजिता युधि ॥ १५

तदस्त्रबन्धमासाद्य यदि मुक्तौ रिपू मम । संशयस्थमिदं सर्वमनुपश्याम्यहं बलम् ॥ १६

निष्फलाः खलु संवृत्ताः शरा वासुकितेजसः । आदत्तं यैस्तु संग्रामे रिपूणां मम जीवितम् ॥

एवमुक्त्वा तु संक्रुद्धो निःश्वसन्नुरगो यथा । अब्रवीद्रक्षसां मध्ये धूम्राक्षं नाम राक्षसम् ॥ १८

बलेन महता युक्तो रक्षसां भीमविक्रम । त्वं वधायाभिनिर्याहि रामस्य सह वानरैः ॥ १९

एवमुक्तस्तु धूम्राक्षो राक्षसेन्द्रेण धीमता । कृत्वा प्रणामं संहृष्टो निर्जगाम नृपालयात् ॥ २०

अभिनिष्क्रम्य तद्द्वारं बलाध्यक्षमुवाच ह । त्वरयस्व बलं तूर्णं किं चिरेण युयुत्सतः ॥ २१

धूम्राक्षवचनं श्रुत्वा बलाध्यक्षो बलानुगः । बलमुद्योजयामास रावणस्याज्ञया द्रुतम् ॥ २२

ते बद्धघण्टा बलिनो घोररूपा निशाचराः । विगर्जमानाः संहृष्टा धूम्राक्षं पर्यवारयन् ॥ २३

विविधायुधहस्ताश्च शूलमुद्गरपाणयः । गदाभिः पट्टिसैर्दण्डैरायसैर्मुसलैर्भृशम् ॥ २४

परिघैर्भिण्डिपालैश्च भल्लैः प्रासैः परश्वधैः । निर्ययू राक्षसा दिग्भ्यो नर्दन्तो जलदा यथा ॥ २५

रथैः कवचिनस्त्वन्ये ध्वजैश्च समलंकृतैः । सुवर्णजालविहितैः खरैश्च विविधाननैः ॥ २६

हयैः परमशीघ्रैश्च गजेन्द्रैश्च मदोत्कटैः । निर्ययू राक्षसव्याघ्रा व्याघ्रा इव दुरासदाः ॥ २७

वृकसिंहमुखैर्युक्तं खरैः कनकभूषणैः । आरुरोह रथं दिव्यं धूम्राक्षः खरनिःस्वनः ॥ २८

स निर्यातो महावीर्यो धूम्राक्षो राक्षसैर्वृतः । प्रहसन् पश्चिमद्वारं हनूमान् यत्र यूथपः ॥ २९

रथप्रवरमास्थाय खरयुक्तं खरस्वनम् । प्रयान्तं तु महाघोरं राक्षसं भीमविक्रमम् ॥ ३०

अन्तरिक्षगता घोराः शकुनाः प्रत्यवारयन् । रथशीर्षे महान् भीमो गृध्रश्च निपपात ह ॥ ३१

ध्वजाग्रे ग्रथिताश्चैव निपेतुः कुणपाशनाः । रुधिरार्द्रो महाञ्श्वेतः कबन्धः पतितो भुवि ॥३२

विस्वरं चोत्सृजन्नादं धूम्राक्षस्य समीपतः । ववर्ष रुधिरं देवः संचचाल च मेदिनी ॥ ३३

प्रतिलोमं ववौ वायुर्निर्घातसमनिःस्वनः । तिमिरौघावृतास्तत्र दिशश्च न चकाशिरे ॥ ३४

स तूत्पातांस्तदा दृष्ट्वा राक्षसानां भयावहान् । प्रादुर्भूतान् सुघोरांश्च धूम्राक्षो व्यथितोऽभवत् ॥
मुमुहू राक्षसाः सर्वे धूम्राक्षस्य पुरःसराः ॥

ततः सुभीमो बहुभिर्निशाचरैर्वृतोऽभिनिष्क्रम्य रणोत्सुको बली ।
ददर्श तां राघवबाहुपालितां महौघकल्पां बहु वानरीं चमूम् ॥ ३६

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
युद्धकाण्डे धूम्राक्षाभिषेणनं नाम एकपञ्चाशः सर्गः

---

## द्विपञ्चाशः सर्गः

### धूम्राक्षवधः

धूम्राक्षं प्रेक्ष्य निर्यान्तं राक्षसं भीमविक्रमम् । विनेदुर्वानराः सर्वे प्रहृष्टा युद्धकाङ्क्षिणः ॥ १
तेषां सुतुमुलं युद्धं संजज्ञे हरिरक्षसाम् । अन्योन्यं पादपैर्घोरं निघ्नतां शूलमुद्गरैः ॥ २
घोरैश्च परिघैश्चित्रैस्त्रिशूलैश्चापि संहतैः । राक्षसैर्वानरा घोरैर्विनिकृत्ताः समन्ततः ॥ ३
वानरै राक्षसाश्चापि द्रुमैर्भूमौ समीकृताः । राक्षसाश्चापि संक्रुद्धा वानरान्निशितैः शरैः ॥ ४
विव्यधुर्घोरसंकाशैः कङ्कपत्रैरजिह्मगैः । ते गदाभिश्च भीमाभिः पट्टसैः कूटमुद्गरैः ॥ ५
घोरैश्च परिघैश्चित्रैस्त्रिशूलैश्चापि संशितैः[1] । विदार्यमाणा रक्षोभिर्वानरास्ते महाबलाः ॥ ६
अमर्षाज्जनितोद्धर्षाश्चक्रुः कर्माण्यभीतवत् । शरनिर्भिन्नगात्रास्ते शूलनिर्भिन्नदेहिनः[2] ॥ ७
जगृहुस्ते द्रुमांस्तत्र शिलाश्च हरियूथपाः । ते भीमवेगा हरयो नर्दमानास्ततस्ततः ॥ ८
ममन्थू राक्षसान् भीमान्नामानि च बभाषिरे । तद्बभूवाद्भुतं घोरं युद्धं वानररक्षसाम् ॥ ९
शिलाभिर्विविधाभिश्च बहुभिश्चैव पादपैः । राक्षसा मथिताः केचिद्वानरैर्जितकाशिभिः ॥ १०
ववमू रुधिरं केचिन्मुखै रुधिरभोजनाः । पार्श्वेषु दारिताः केचित्केचिद्राशीकृता द्रुमैः ॥ ११
शिलाभिश्चूर्णिताः केचित्केचिद्दन्तैर्विदारिताः । ध्वजैर्विमथितैर्भग्नैः[3] खरैश्च विनिपातितैः ॥ १२
रथैर्विध्वंसितैश्चापि पतितै रजनीचरैः । गजेन्द्रैः पर्वताकारैः पर्वताग्रैर्वनौकसाम् ॥ १३
मथितैर्वाजिभिः कीर्णं सारोहैर्वसुधातलम् । वानरैर्भीमविक्रान्तैराप्लुत्याप्लुत्य वेगितैः ॥ १४
राक्षसाः करजैस्तीक्ष्णैर्मुखेषु विनिकर्तिताः । विवर्णवदना भूयो विप्रकीर्णशिरोरुहाः ॥ १५
मूढाः शोणितगन्धेन निपेतुर्धरणीतले । अन्ये परमसंक्रुद्धा राक्षसा भीमनिःस्वनाः ॥ १६
तलैरेवाभिधावन्ति वज्रस्पर्शसमैर्हरीन् । वानरैरापतन्तस्ते वेगिता वेगवत्तरैः ॥ १७
मुष्टिभिश्चरणैर्दन्तैः पादपैश्चावपोथिताः । वानरैर्हन्यमानास्ते राक्षसा विप्रदुद्रुवुः ॥ १८
सैन्यं तु विद्रुतं दृष्ट्वा धूम्राक्षो राक्षसर्षभः । क्रोधेन कदनं चक्रे वानराणां युयुत्सताम् ॥ १९
प्रासैः प्रमथिताः केचिद्वानराः शोणितस्रवाः । मुद्गरैराहताः केचित्पतिता धरणीतले ॥ २०
परिघैर्मथिताः केचिद्भिण्डिपालैर्विदारिताः । पट्टसैराहताः केचिद्विह्वलन्तो गतासवः ॥ २१
केचिद्विनिहताः शूलै रुधिरार्द्रा वनौकसः । केचिद्विद्राविता नष्टाः सबलै राक्षसैर्युधि ॥ २२
विभिन्नहृदयाः केचिदेकपार्श्वेन दारिताः । विदारितास्त्रिशूलैश्च केचिदान्त्रैर्विनिःसृताः ॥ २३
तत्सुभीमं महायुद्धं हरिराक्षससंकुलम् । प्रबभौ शब्दबहुलं शिलापादपसंकुलम् ॥ २४
धनुर्ज्यातन्त्रिमधुरं हिक्कातालसमन्वितम् । मन्दस्तनितसंगीतं युद्धगान्धर्वमाबभौ ॥ २५

१. इदमर्धम् च. नास्ति ।
२. मस्तकाः ङ. ।
३. खेटैश्च ङ.

धूम्राक्षस्तु धनुष्पाणिर्वानरान् रणमूर्धनि । हसन् विद्रावयामास दिशस्तु शरवृष्टिभिः ॥ २६
धूम्राक्षेणार्दितं सैन्यं व्यथितं वीक्ष्य मारुतिः । अभ्यवर्तत संक्रुद्धः प्रगृह्य विपुलां शिलाम् ॥ २७
क्रोधाद्द्विगुणताम्राक्षः पितृतुल्यपराक्रमः । शिलां तां पातयामास धूम्राक्षस्य रथं प्रति ॥ २८
आपतन्तीं शिलां दृष्ट्वा गदामुद्यम्य संभ्रमात् । रथादाप्लुत्य वेगेन वसुधायां व्यतिष्ठत ॥ २९
सा प्रमथ्य रथं तस्य निपपात शिला भुवि । सचक्रकूबरं साश्वं सध्वजं सशरासनम् ॥ ३०
स भङ्क्त्वा तु रथं तस्य हनूमान् मारुतात्मजः । रक्षसां कदनं चक्रे सस्कन्धविटपैर्द्रुमैः ॥ ३१
विभिन्नशिरसो भूत्वा राक्षसाः शोणितोक्षिताः । द्रुमैः प्रव्यथिताश्चान्ये निपेतुर्धरणीतले ॥ ३२
विद्राव्य राक्षसं सैन्यं हनूमान् मारुतात्मजः । गिरेः शिखरमादाय धूम्राक्षमभिदुद्रुवे ॥ ३३
तमापतन्तं धूम्राक्षो गदामुद्यम्य वीर्यवान् । विनर्दमानः सहसा हनूमन्तमभिद्रवत् ॥ ३४
तस्य क्रुद्धस्य रोषेण गदां तां बहुकण्टकाम् । पातयामास धूम्राक्षो मस्तके तु हनूमतः ॥ ३५
ताडितः स तया तत्र गदया भीमरूपया । स कपिर्मारुतबलस्तं प्रहारमचिन्तयन् ॥ ३६
धूम्राक्षस्य शिरोमध्ये गिरिशृङ्गमपातयत् । स विह्वलितसर्वाङ्गो गिरिशृङ्गेण ताडितः ॥ ३७
पपात सहसा भूमौ विकीर्ण इव पर्वतः । धूम्राक्षं निहतं दृष्ट्वा हतशेषा निशाचराः ॥ ३८
त्रस्ताः प्रविविशुर्लङ्कां वध्यमानाः प्लवङ्गमैः ॥

स तु पवनसुतो निहत्य शत्रुं क्षतजवहाः सरितश्च संनिकीर्य ।
रिपुवधजनितश्रमो महात्मा मुदमगमत्कपिभिश्च पूज्यमानः ॥ ३९

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
युद्धकाण्डे धूम्राक्षवधो नाम द्विपञ्चाशः सर्गः

---

## त्रिपञ्चाशः सर्गः

### वज्रदंष्ट्रयुद्धम्

धूम्राक्षं निहतं श्रुत्वा रावणो राक्षसेश्वरः । क्रोधेन महताविष्टो निःश्वसन्नुरगो यथा ॥ १
दीर्घमुष्णं विनिःश्वस्य क्रोधेन कलुषीकृतः । अब्रवीद्राक्षसं शूरं वज्रदंष्ट्रं महाबलम् ॥ २
गच्छ त्वं वीर निर्याहि राक्षसैः परिवारितः । जहि दाशरथिं रामं सुग्रीवं वानरैः सह ॥ ३
तथेत्युक्त्वा द्रुततरं मायावी राक्षसेश्वरः । निर्जगाम बलैः सार्धं बहुभिः परिवारितः ॥ ४
नागैरश्वैः खरैरुष्ट्रैः संयुक्तः सुसमाहितः । पताकाध्वजचित्रैश्च रथैश्च समलंकृतः ॥ ५
ततो विचित्रकेयूरमुकुटैश्च विभूषितः । तनुत्राणि च संरुध्य सधनुर्निर्ययौ द्रुतम् ॥ ६
पताकालंकृतं दीप्तं तप्तकाञ्चनभूषणम् । रथं प्रदक्षिणं कृत्वा समारोहच्चमूपतिः ॥ ७
यष्टिभिस्तोमरैश्चित्रैः शूलैश्च मुसलैरपि । भिण्डिपालैश्च पाशैश्च शक्तिभिः पट्टसैरपि ॥ ८

खड्गैश्चक्रैर्गदाभिश्च निशितैश्च परश्वधैः । पदातयश्च निर्यान्ति विविधाः शस्त्रपाणयः ॥ ९
विचित्रवाससः सर्वे दीप्ताः राक्षसपुंगवाः । गजा मदोत्कटाः शूराश्चलन्त इव पर्वताः ॥ १०
ते युद्धकुशलै रूढास्तोमराङ्कुशपाणिभिः । अन्ये लक्षणसंयुक्ताः शूरा रूढा महाबलाः ॥ ११
तद्राक्षसबलं घोरं विप्रस्थितमशोभत । प्रावृट्काले यथा मेघा नर्दमानाः सविद्युतः ॥ १२
निःसृता दक्षिणद्वारादङ्गदो यत्र यूथपः । तेषां निष्क्रममाणानामशुभं समजायत ॥ १३
आकाशाद्विघनात्तीव्रा उल्काश्चाभ्यपतंस्तदा । वमन्त्यः पावकज्वालाः शिवा घोरं ववाशिरे ॥
व्याहरन्ति मृगाघोरा रक्षसां निधनं तदा । समापतन्तो योधास्तु प्रास्खलन् भयमोहिताः ॥१५
एतानौत्पातिकान् दृष्ट्वा वज्रदंष्ट्रो महाबलः । धैर्यमालम्ब्य तेजस्वी निर्जगाम रणोत्सुकः ॥१६
तांस्तु विद्रवतो[1] दृष्ट्वा वानरा जितकाशिनः । प्रणेदुः सुमहानादान् पूरयंश्च दिशो दश ॥१७
ततः प्रवृत्तं तुमुलं हरीणां राक्षसैः सह । घोराणां भीमरूपाणामन्योन्यवधकाङ्क्षिणाम् ॥ १८
निष्पतन्तो महोत्साहा भिन्नदेहशिरोधराः । रुधिरोक्षितसर्वाङ्गा न्यपतञ्जगतीतले ॥ १९
केचिदन्योन्यमासाद्य शूराः परिघपाणयः । चिक्षिपुर्विविधं शस्त्रं समरेष्वनिवर्तिनः ॥ २०
द्रुमाणां च शिलानां च शस्त्राणां चापि निःस्वनः । श्रूयते सुमहांस्तत्र घोरो हृदयभेदनः ॥२१
रथनेमिस्वनस्तत्र धनुषश्चापि निःस्वनः । शङ्खभेरीमृदङ्गानां बभूव तुमुलः स्वनः ॥ २२
केचिदस्त्राणि संत्यज्य बाहुयुद्धमकुर्वत । तलैश्च चरणैश्चापि मुष्टिभिश्च द्रुमैरपि ॥ २३
जानुभिश्च हताः केचिद्भिन्नदेहाश्च राक्षसाः । शिलाभिश्चूर्णिताः केचिद्वानरैर्युद्धदुर्मदैः ॥ २४
वज्रदंष्ट्रो भृशं बाणै रणे वित्रासयन् हरीन् । चचार लोकसंहारे पाशहस्त इवान्तकः ॥ २५
बलवन्तोऽस्त्रविदुषो नानाप्रहरणा रणे । जघ्नुर्वानरसैन्यानि राक्षसाः क्रोधमूर्छिताः ॥ २६
निघ्नतो राक्षसान् दृष्ट्वा सर्वान् वालिसुतो रणे । क्रोधेन द्विगुणाविष्टः संवर्तक इवानलः ॥ २७
तान् राक्षसगणान् सर्वान् वृक्षमुद्यम्य वीर्यवान् । अङ्गदः क्रोधताम्राक्षः सिंहः क्षुद्रमृगानिव ॥
चकार कदनं घोरं शक्रतुल्यपराक्रमः । अङ्गदाभिहतास्तत्र राक्षसा भीमविक्रमाः ॥ २९
विभिन्नशिरसः पेतुर्विकृत्ता इव पादपाः । रथैरश्वैर्ध्वजैश्चित्रैः शरीरैर्हरिरक्षसाम् ॥ ३०
रुधिरेण च संछन्ना भूमिर्भयकरी तदा । हारकेयूरवस्त्रैश्च शस्त्रैश्च समलंकृता ॥ ३१
भूमिर्भाति रणे तत्र शारदीव यथा निशा । अङ्गदस्य च वेगेन तद्राक्षसबलं महत् ॥ ३२
प्राकम्पत तदा तत्र पवनेनाम्बुदो यथा ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
युद्धकाण्डे वज्रदंष्ट्रयुद्धं नाम त्रिपञ्चाशः सर्गः

१. निष्क्रमतः च. छ.

## चतुःपञ्चाशः सर्गः

### वज्रदंष्ट्रवधः

बलस्य च निघातेन अङ्गदस्य जयेन च। राक्षसः क्रोधमाविष्टो वज्रदंष्ट्रो महाबलः॥ १
स विस्फार्य धनुर्घोरं शक्राशनिसमस्वनम्। वानराणामनीकानि प्राकिरच्छरवृष्टिभिः॥ २
राक्षसाश्चापि मुख्यास्ते रथेषु समवस्थिताः। नानाप्रहरणाः शूराः प्रायुध्यन्त तदा रणे॥ ३
वानराणां तु शूरा ये सर्वे ते प्लवगर्षभाः। अयुध्यन्त शिलाहस्ताः समवेताः समन्ततः॥ ४
तत्रायुधसहस्राणि तस्मिन्नायोधने भृशम्। राक्षसाः कपिमुख्येषु पातयांचक्रिरे तदा॥ ५
वानराश्चापि रक्षःसु गिरीन् वृक्षान् महाशिलाः। प्रवीराः पातयामासुर्मत्तवारणसंनिभाः॥ ६
शूराणां युध्यमानानां समरेष्वनिवर्तिनाम्। तद्राक्षसगणानां च सुयुद्धं समवर्तत॥ ७
प्रभिन्नशिरसः केचिद्भिन्नैः पादैश्च बाहुभिः। शस्त्रैरर्पितदेहास्तु रुधिरेण समुक्षिताः॥ ८
हरयो राक्षसाश्चैव शेरते गां समाश्रिताः। कङ्कगृध्रबलाढ्याश्च[1] गोमायुगणसंकुलाः॥ ९
कबन्धानि समुत्पेतुर्भीरूणां भीषणानि वै। भुजपाणिशिरश्छिन्नाश्छिन्नकायाश्च भूतले॥ १०
वानरा राक्षसाश्चापि निपेतुस्तत्र वै रणे। ततो वानरसैन्येन हन्यमानं निशाचरम्॥ ११
प्राभज्यत बलं सर्वं वज्रदंष्ट्रस्य पश्यतः[2]। राक्षसान् भयवित्रस्तान् हन्यमानान् प्लवङ्गमैः॥ १२
दृष्ट्वा स रोषताम्राक्षो वज्रदंष्ट्रः प्रतापवान्। प्रविवेश धनुष्पाणिस्त्रासयन् हरिवाहिनीम्॥ १३
शरैर्विदारयामास कङ्कपत्रैरजिह्मगैः। बिभेद वानरांस्तत्र सप्ताष्टौ नव पञ्च च॥ १४
विव्याध परमक्रुद्धो वज्रदंष्ट्रः प्रतापवान्। त्रस्ताः सर्वे हरिगणाः शरैः संकृत्तकन्धराः॥ १५
अङ्गदं संप्रधावन्ति प्रजापतिमिव प्रजाः। ततो हरिगणान् भग्नान् दृष्ट्वा वालिसुतस्तदा॥ १६
क्रोधेन वज्रदंष्ट्रं तमुदीक्षन्तमुदैक्षत। वज्रदंष्ट्रोऽङ्गदश्चोभौ संगतौ हरिराक्षसौ॥ १७
चेरतुः परमक्रुद्धौ हरिमत्तगजाविव। ततः शरसहस्रेण वालिपुत्रं महाबलः॥ १८
जघान मर्मदेशेषु मातङ्गमिव तोमरैः। रुधिरोक्षितसर्वाङ्गो वालिसूनुर्महाबलः॥ १९
चिक्षेप वज्रदंष्ट्राय वृक्षं भीमपराक्रमः। दृष्ट्वापतन्तं तं वृक्षमसंभ्रान्तश्च राक्षसः॥ २०
चिच्छेद बहुधा सोऽपि निकृत्तः पतितो भुवि। तं दृष्ट्वा वज्रदंष्ट्रस्य विक्रमं प्लवगर्षभः॥ २१
प्रगृह्य विपुलं शैलं चिक्षेप च ननाद च। समापतन्तं तं दृष्ट्वा रथादाप्लुत्य वीर्यवान्॥ २२
गदापाणिरसंभ्रान्तः पृथिव्यां समतिष्ठत। अङ्गदेन शिला क्षिप्ता[3] गत्वा तु रणमूर्धनि॥ २३
सचक्रकूबरं साश्वं प्रममाथ रथं तदा। ततोऽन्यं गिरिमाक्षिप्य विपुलं द्रुममभूषितम्॥ २४
वज्रदंष्ट्रस्य शिरसि पातयामास सोऽङ्गदः। अभवच्छोणितोद्गारी वज्रदंष्ट्रः स मूर्छितः॥ २५

---

१. कङ्कगृध्रबलैराढ्या च. छ.। २. पार्श्वतः झ.। ३. साङ्गदेन गदाक्षिप्ता च. छ.।

मुहूर्तमभवन्मूढो गदामालिङ्ग्य निःश्वसन् । स लब्धसंज्ञो गदया वालिपुत्रमवस्थितम् ॥ २६
जघान परमक्रुद्धो वक्षोदेशे निशाचरः । गदां त्यक्त्वा ततस्तत्र मुष्टियुद्धमवर्तत ॥ २७
अन्योन्यं जघ्नतुस्तत्र तावुभौ हरिराक्षसौ । रुधिरोद्गारिणौ तौ तु प्रहारैर्जनितश्रमौ[1] ॥ २८
बभूवतुः सुविक्रान्तावङ्गारकबुधाविव । ततः परमतेजस्वी अङ्गदः कपिकुञ्जरः ॥ २९
उत्पाट्य वृक्षं स्थितवान् बहुपुष्पफलान्वितम् । जग्राह चार्षभं चर्म खड्गं च विपुलं शुभम् ॥३०
किङ्किणीजालसंछन्नं चर्मणा च परिष्कृतम् । विचित्रांश्चेरतुर्मार्गान् रुषितौ कपिराक्षसौ ॥ ३१
जघ्नतुश्च तदान्योन्यं निर्दयं जयकाङ्क्षिणौ । व्रणैः सास्रैरशोभेतां पुष्पिताविव किंशुकौ ॥ ३२
युध्यमानौ परिश्रान्तौ जानुभ्यामवनीं गतौ । निमेषान्तरमात्रेण अङ्गदः कपिकुञ्जरः ॥ ३३
उदतिष्ठत दीप्ताक्षो दण्डाहत इवोरगः । निर्मलेन सुधौतेन खड्गेनास्य महच्छिरः ॥ ३४
जघान वज्रदंष्ट्रस्य वालिसूनुर्महाबलः । रुधिरोक्षितगात्रस्य बभूव पतितं द्विधा ॥ ३५
स रोषपरिवृत्ताक्षं शुभं खड्गहतं शिरः । वज्रदंष्ट्रं हतं दृष्ट्वा राक्षसा भयमोहिताः ॥ ३६
त्रस्ताः प्रत्यपतँल्लङ्कां वध्यमानाः प्लवङ्गमैः । विषण्णवदना दीना ह्रिया किंचिदवाङ्मुखाः ॥ ३७

निहत्य तं वज्रधरप्रभावः स वालिसूनुः कपिसैन्यमध्ये ।
जगाम हर्षं महितो महाबलः सहस्रनेत्रस्त्रिदशैरिवावृतः ॥ ३८

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायां
युद्धकाण्डे वज्रदंष्ट्रवधो नाम चतुःपञ्चाशः सर्गः

---

## पञ्चपञ्चाशः सर्गः

### अकम्पनयुद्धम्

वज्रदंष्ट्रं हतं श्रुत्वा वालिपुत्रेण रावणः । बलाध्यक्षमुवाचेदं कृताञ्जलिमवस्थितम् ॥ १
शीघ्रं निर्यान्तु दुर्धर्षा राक्षसा भीमविक्रमाः । अकम्पनं पुरस्कृत्य सर्वशस्त्रास्त्रकोविदम्[2] ॥ २
एष शास्ता च गोप्ता च नेता च युधि संमतः । भूतिकामश्च मे नित्यं नित्यं च समरप्रियः ॥३
एष जेष्यति काकुत्स्थौ सुग्रीवं च महाबलम् । वानरांश्चापरान् घोरान् हनिष्यति परंतपः ॥४
परिगृह्य स तामाज्ञां रावणस्य महाबलः । बलं संत्वरयामास तदा लघुपराक्रमः ॥ ५
ततो नानाप्रहरणा भीमाक्षा भीमदर्शनाः । निष्पेतू रक्षसां मुख्या बलाध्यक्षप्रचोदिताः ॥ ६
रथमास्थाय विपुलं तप्तकाञ्चनकुण्डलः । मेघाभो मेघवर्णश्च मेघस्वनमहास्वनः ॥ ७
राक्षसैः संवृतो भीमैस्तदा निर्यात्यकम्पनः । न हि कम्पयितुं शक्यः सुरैरपि महामृधे ॥ ८

---

१. झर्झरीकृतौ. झ. । २. सर्वशस्त्रप्रकोविदम् च. छ. ।

अकम्पनस्ततस्तेषामादित्य इव तेजसा । तस्य निर्धावमानस्य संरब्धस्य युयुत्सया ॥ ९
अकस्माद्दैन्यमागच्छद्धयानां रथवाहिनाम् । व्यस्फुरन्नयनं चास्य सव्यं युद्धाभिनन्दिनः ॥ १०
विवर्णो मुखवर्णश्च गद्गदश्चाभवत्स्वनः । अभवत्सुदिने चापि दुर्दिनं रूक्षमारुतम् ॥ ११
ऊचुः खगा मृगाः सर्वे वाचः क्रूरा भयावहाः । स सिंहोपचितस्कन्धः शार्दूलसमविक्रमः॥ १२
तानुत्पातानचिन्त्यैव निर्जगाम रणाजिरम् । तदा निर्गच्छतस्तस्य रक्षसः सह राक्षसैः ॥ १३
बभूव सुमहान्नादः क्षोभयन्निव सागरम् । तेन शब्देन वित्रस्ता वानराणां महाचमूः ॥ १४
द्रुमशैलप्रहरणा योद्धुं समवतिष्ठत । तेषां युद्धं महारौद्रं संजज्ञे हरिरक्षसाम् ॥ १५
रामरावणयोरर्थे समभित्यक्तजीविनाम्[1] । सर्वे ह्यतिबलाः शूराः सर्वे पर्वतसंनिभाः ॥ १६
हरयो राक्षसाश्चैव परस्परजिघांसवः । तेषां विनर्दतां शब्दः संयुगेऽतितरस्विनाम् ॥ १७
शुश्रुवे सुमहान् क्रोधादन्योन्यमभिगर्जताम् । रजश्चारुणवर्णाभं सुभीममभवद्भृशम् ॥ १८
उद्भूतं हरिरक्षोभिः संरुरोध दिशो दश । अन्योन्यं रजसा तेन कौशेयोद्धूतपाण्डुना ॥ १९
संवृतानि च भूतानि ददृशुर्न रणाजिरे । न ध्वजा न पताका वा वर्म वा तुरगोऽपि वा ॥ २०
आयुधं स्यन्दनं वापि ददृशे तेन रेणुना । शब्दश्च सुमहांस्तेषां नर्दतामभिधावताम् ॥ २१
श्रूयते तुमुले युद्धे न रूपाणि चकाशिरे । हरीनेव सुसंक्रुद्धा हरयो जघ्नुराहवे ॥ २२
राक्षसाश्चापि रक्षांसि निजघ्नुस्तिमिरे तदा । परांश्चैव विनिघ्नन्तः स्वांश्च वानरराक्षसाः ॥ २३
रुधिरार्द्रां तदा चक्रुर्महीं पङ्कानुलेपनाम् । ततस्तु रुधिरौघेण सिक्तं व्यपगतं रजः ॥ २४
शरीरशवसंकीर्णा बभूव च वसुंधरा । द्रुमशक्तिशिलाप्रासैर्गदापरिघतोमरैः ॥ २५
हरयो राक्षसाश्चैव जघ्नुरन्योन्यमोजसा । बाहुभिः परिघाकारैर्युध्यन्तः पर्वतोपमाः ॥ २६
हरयो भीमकर्माणो राक्षसाञ्जघ्नुराहवे । राक्षसास्त्वपि संक्रुद्धाः प्रासतोमरपाणयः ॥ २७
कपीन्निजघ्निरे तत्र शस्त्रैः परमदारुणैः । अकम्पनः सुसंक्रुद्धो राक्षसानां चमूपतिः ॥ २८
संहर्षयति तान् सर्वान् राक्षसान् भीमविक्रमान् । हरयस्त्वपि रक्षांसि महाद्रुममहाश्मभिः ॥ २९
विदारयन्त्यभिक्रम्य शस्त्राण्याच्छिद्य वीर्यतः । एतस्मिन्नन्तरे वीरा हरयः कुमुदो नलः ॥ ३०
मैन्दश्च द्विविदः क्रुद्धाश्चक्रुर्वेगमनुत्तमम् । ते तु वृक्षैर्महावेगा राक्षसानां चमूमुखे ॥ ३१
कदनं सुमहच्चक्रुर्लीलया हरियूथपाः । ममन्थू राक्षसान् सर्वे वानरा गणशो भृशम् ॥ ३२

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
युद्धकाण्डे अकम्पनयुद्धं नाम पञ्चपञ्चाशः सर्गः

---

1. देहिनां क्ष. ।

## षट्पञ्चाशः सर्गः

### अकम्पनवधः

तद्दृष्ट्वा सुमहत्कर्म कृतं वानरसत्तमैः । क्रोधमाहारयामास युधि तीव्रमकम्पनः ॥ १
क्रोधमूर्छितरूपस्तु धून्वन् परमकार्मुकम् । दृष्ट्वा तु कर्म शत्रूणां सारथिं वाक्यमब्रवीत् ॥ २
तत्रैव तावत्त्वरितं रथं प्रापय सारथे । यत्रैते बहवो घ्नन्ति सुबहून् राक्षसान् रणे ॥ ३
एतेऽत्र बलवन्तो हि भीमकायाश्च वानराः । द्रुमशैलप्रहरणास्तिष्ठन्ति प्रमुखे मम ॥ ४
एतान्निहन्तुमिच्छामि समरश्लाघिनो ह्यहम् । एतैः प्रमथितं सर्वं दृश्यते राक्षसं बलम् ॥ ५
ततः प्रजवनाश्वेन रथेन रथिनां वरः । हरीनभ्यहनत्क्रोधाच्छरजालैरकम्पनः ॥ ६
न स्थातुं वानराः शेकुः किं पुनर्योद्धुमाहवे । अकम्पनशरैर्भग्नाः सर्व एव विदुद्रुवुः ॥ ७
तान् मृत्युवशमापन्नानकम्पनवशं गतान् । समीक्ष्य हनुमाञ्ज्ञातीनुपतस्थे महाबलः ॥ ८
तं महाप्लवगं दृष्ट्वा सर्वे प्लवगयूथपाः । समेत्य समरे वीराः संहृष्टाः पर्यवारयन् ॥ ९
अवस्थितं हनूमन्तं ते दृष्ट्वा हरियूथपाः । बभूवुर्बलवन्तो हि बलवन्तं समाश्रिताः ॥ १०
अकम्पनस्तु शैलाभं हनूमन्तमवस्थितम् । महेन्द्र इव धाराभिः शरैरभिववर्ष ह ॥ ११
अचिन्तयित्वा बाणौघाञ्शरीरे पतिताञ्शितान् । अकम्पनवधार्थाय मनो दध्रे महाबलः ॥ १२
स प्रसह्य महातेजा हनूमान् मारुतात्मजः । अभिदुद्राव तद्रक्षः कम्पयन्निव मेदिनीम् ॥ १३
तस्याभिनर्दमानस्य दीप्यमानस्य तेजसा । बभूव रूपं दुर्धर्षं दीप्तस्येव विभावसोः ॥ १४
आत्मानमप्रहरणं ज्ञात्वा क्रोधसमन्वितः । शैलमुत्पाटयामास वेगेन हरिपुंगवः ॥ १५
तं गृहीत्वा महाशैलं पाणिनैकेन मारुतिः । स विनद्य महानादं भ्रामयामास वीर्यवान् ॥ १६
ततस्तमभिदुद्राव राक्षसेन्द्रमकम्पनम् । पुरा हि नमुचिं संख्ये वज्रेणेव पुरंदरः ॥ १७
अकम्पनस्तु तद्दृष्ट्वा गिरिशृङ्गं समुद्यतम् । दूरादेव महाबाणैरर्धचन्द्रैर्व्यदारयत् ॥ १८
तत्पर्वताग्रमाकाशे रक्षोबाणविदारितम् । विशीर्णं पतितं दृष्ट्वा हनुमान् क्रोधमूर्छितः ॥ १९
सोऽश्वकर्णं समासाद्य रोषदर्पान्वितो हरिः । तूर्णमुत्पाटयामास महागिरिमिवोच्छ्रितम् ॥ २०
तं गृहीत्वा महास्कन्धं सोऽश्वकर्णं महाद्युतिः । प्रहस्य परया प्रीत्या भ्रामयामास संयुगे ॥ २१
प्रधावन्नुरुवेगेन प्रभञ्जंस्तरसा द्रुमान् । हनुमान् परमक्रुद्धश्चरणैर्दारयन् क्षितिम् ॥ २२
गजांश्च सगजारोहान् सरथान् रथिनस्तथा । जघान हनुमान् धीमान् राक्षसांश्च पदातिगान् ॥
तमन्तकमिव क्रुद्धं समरे प्राणहारिणम् । हनुमन्तमभिप्रेक्ष्य राक्षसा विप्रदुद्रुवुः ॥ २४
तमापतन्तं संक्रुद्धं राक्षसानां भयावहम् । ददर्शाकम्पनो वीरश्चुक्रोध च ननाद च ॥ २५
स चतुर्दशभिर्बाणैः शितैर्देहविदारणैः । निर्बिभेद हनूमन्तं महावीर्यमकम्पनः ॥ २६

स तदा प्रतिविद्धस्तु बह्वीभिः शरवृष्टिभिः । हनुमान् ददृशे वीरः प्ररूढ इव सानुमान्॥ २७
विरराज महाकायो महावीर्यो महामनाः । पुष्पिताशोकसंकाशो विधूम इव पावकः ॥ २८
ततोऽन्यं वृक्षमुत्पाट्य कृत्वा वेगमनुत्तमम्। शिरस्यभिजघानाशु राक्षसेन्द्रमकम्पनम् ॥ २९
स वृक्षेण हतस्तेन सक्रोधेन महात्मना । राक्षसो वानरेन्द्रेण पपात च ममार च ॥ ३०
तं दृष्ट्वा निहतं भूमौ राक्षसेन्द्रमकम्पनम् । व्यथिता राक्षसाः सर्वे क्षितिकम्प इव द्रुमाः ॥ ३१
त्यक्तप्रहरणाः सर्वे राक्षसास्ते पराजिताः । लङ्कामभिययुस्त्रस्ता वानरैस्तैरभिद्रुताः ॥ ३२
ते मुक्तकेशाः संभ्रान्ता भग्नमानाः पराजिताः । स्रवच्छ्रमजलैरङ्गैः श्वसन्तो विप्रदुद्रुवुः ॥ ३३
अन्योन्यं प्रममन्थुस्ते विविशुर्नगरं भयात् । पृष्ठतस्ते हनूमन्तं प्रेक्षमाणा मुहुर्मुहुः ॥ ३४
तेषु लङ्कां प्रविष्टेषु राक्षसेषु महाबलाः । समेत्य हरयः सर्वे हनुमन्तमपूजयन् ॥ ३५
सोऽपि प्रहृष्टस्तान् सर्वान् हरीन् प्रत्यभ्यपूजयत् । हनुमान् सत्त्वसंपन्नो यथार्हमनुकूलतः ॥ ३६
विनेदुश्च यथाप्राणं हरयो जितकाशिनः । चकृषुश्च पुनस्तत्र सप्राणानपि राक्षसान् ॥ ३७

स वीरशोभामभजन्महाकपिः समेत्य रक्षांसि निहत्य मारुतिः ।
महासुरं भीमममित्रनाशनं यथैव विष्णुर्बलिनं चमूमुखे ॥ ३८

अपूजयन् देवगणास्तदा कपिं स्वयं च रामोऽतिबलश्च लक्ष्मणः ॥
तथैव सुग्रीवमुखाः प्लवङ्गमा विभीषणश्चैव महाबलस्तथा ॥ ३९

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
युद्धकाण्डे अकम्पनवधो नाम षट्पञ्चाशः सर्गः

---

## सप्तपञ्चाशः सर्गः

### प्रहस्तयुद्धम्

अकम्पनवधं श्रुत्वा क्रुद्धो वै राक्षसेश्वरः । किंचिद्दीनमुखश्चापि सचिवांस्तानुदैक्षत ॥ १
स तु ध्यात्वा मुहूर्तं तु मन्त्रिभिः संविचार्य च । ततस्तु रावणः पूर्वदिवसे राक्षसाधिपः ॥ २
पुरीं परिययौ लङ्कां सर्वान् गुल्मानवेक्षितुम् । तां राक्षसगणैर्गुप्तां गुल्मैर्बहुभिरावृताम् ॥ ३
ददर्श नगरीं लङ्कां पताकाध्वजमालिनीम् । रुद्धां तु नगरीं दृष्ट्वा रावणो राक्षसेश्वरः ॥ ४
उवाचामर्षतः काले प्रहस्तं युद्धकोविदम् । पुरस्योपनिविष्टस्य सहसा पीडितस्य च ॥ ५
नान्यं युद्धात्प्रपश्यामि मोक्षं युद्धविशारद । अहं वा कुम्भकर्णो वा त्वं वा सेनापतिर्मम ॥ ६
इन्द्रजिद्वा निकुम्भो वा वहेयुर्भारमीदृशम् । स त्वं बलमतः शीघ्रमादाय परिगृह्य च ॥ ७

विजयायाभिनिर्याहि यत्र सर्वे वनौकसः । निर्याणादेव ते नूनं चपला हरिवाहिनी ॥ ८
नर्दतां राक्षसेन्द्राणां श्रुत्वा नादं द्रविष्यति । चपला ह्यविनीताश्च चलचित्ताश्च वानराः ॥ ९
न सहिष्यन्ति ते नादं सिंहनादमिव द्विपाः । विद्रुते च बले तस्मिन् रामः सौमित्रिणा सह ॥
अवशस्ते निरालम्बः प्रहस्त वशमेष्यति । आपत्संशयिता श्रेयो न तु निःसंशयीकृता ॥ ११
प्रतिलोमानुलोमं वा यद्वा नो मन्यसे हितम् । रावणेनैवमुक्तस्तु प्रहस्तो वाहिनीपतिः ॥ १२
राक्षसेन्द्रमुवाचेदमसुरेन्द्रमिवोशना । राजन् मन्त्रितपूर्वं न कुशलैः सह मन्त्रिभिः ॥ १३
विवादश्चापि नो वृत्तः समवेक्ष्य परस्परम् । प्रदानेन तु सीतायाः श्रेयो व्यवसितं मया ॥ १४
अप्रदाने पुनर्युद्धं दृष्टमेतत्तथैव नः । सोऽहं दानैश्च मानैश्च सततं पूजितस्त्वया ॥ १५
सान्त्वैश्च विविधैः काले किं न कुर्यां प्रियं तव । न हि मे जीवितं रक्ष्यं पुत्रदारधनानि वा ॥
त्वं पश्य मां जुहूषन्तं त्वदर्थं जीवितं युधि । एवमुक्त्वा तु भर्तारं रावणं वाहिनीपतिः ॥ १७
उवाचेदं बलाध्यक्षान् प्रहस्तः पुरतः स्थितान् । समानयत मे शीघ्रं राक्षसानां महद्बलम् ॥ १८
मद्बाणाशनिवेगेन हतानां च रणाजिरे । अद्य तृप्यन्तु मांसादाः पक्षिणः काननौकसाम् ॥ १९
इत्युक्तास्ते प्रहस्तेन बलाध्यक्षाः कृतत्वराः । बलमुद्योजयामासुस्तस्मिन् राक्षसमन्दिरे ॥ २०
सा बभूव, मुहूर्तेन तिग्मनानाविधायुधैः । लङ्का राक्षसवीरैस्तैर्गजैरिव समाकुला ॥ २१
हुताशनं तर्पयतां ब्राह्मणांश्च नमस्यताम् । आज्यगन्धप्रतिवहः सुरभिर्मारुतो ववौ ॥ २२
स्रजश्च विविधाकारा जगृहुस्त्वभिमन्त्रिताः । संग्रामसज्जाः संहृष्टा धारयन् राक्षसास्तदा ॥ २३
सधनुष्काः कवचिनो वेगादाप्लुत्य राक्षसाः । रावणं प्रेक्ष्य राजानं प्रहस्तं पर्यवारयन् ॥ २४
अथामन्त्र्य च राजानं भेरीमाहत्य भैरवाम् । आरुरोह रथं दिव्यं प्रहस्तः सज्जकल्पितम् ॥ २५
हयैर्महाजवैर्युक्तं सम्यक्सूतसुसंयतम् । महाजलदनिर्घोषं साक्षाच्चन्द्रार्कभास्वरम् ॥ २६
उरगध्वजदुर्धर्षं सुवरूथं स्ववस्करम् । सुवर्णजालसंयुक्तं प्रहसन्तमिव श्रिया ॥ २७
ततस्तं रथमास्थाय रावणार्पितशासनः । लङ्काया निर्ययौ तूर्णं बलेन महता वृतः ॥ २८
ततो दुन्दुभिनिर्घोषः पर्जन्यनिनदोपमः । वादित्राणां च निनदः पूरयन्निव सागरम् ॥ २९
शुश्रुवे शङ्खशब्दश्च प्रयाते वाहिनीपतौ । निनदन्तः स्वरान् घोरान् राक्षसा जग्मुरग्रतः ॥ ३०
भीमरूपा महाकायाः प्रहस्तस्य पुरःसराः । नरान्तकः कुम्भहनुर्महानादः समुन्नतः ॥ ३१
प्रहस्तसचिवा ह्येते निर्ययुः परिवार्य तम् । व्यूढेनैव सुघोरेण पूर्वद्वारात् स निर्ययौ ॥ ३२
गजयूथनिकाशेन बलेन महता वृतः । सागरप्रतिमौघेन वृतस्तेन बलेन सः ॥ ३३
प्रहस्तो निर्ययौ तूर्णं कालान्तकयमोपमः । तस्य निर्याणघोषेण राक्षसानां च नर्दताम् ॥ ३४
लङ्कायां सर्वभूतानि विनेदुर्विकृतैः स्वरैः । व्यभ्रमाकाशमाविश्य मांसशोणितभोजनाः ॥ ३५
मण्डलान्यपसव्यानि खगाश्चक्रू रथं प्रति । वमन्त्यः पावकज्वालाः शिवा घोरा ववाशिरे ॥ ३६

अन्तरिक्षात्पपातोल्का वायुश्च परुषो ववौ । अन्योन्यमभिसंरब्धा ग्रहाश्च न चकाशिरे ॥ ३७
मेघाश्च खरनिर्घोषा रथस्योपरि रक्षसः । ववृषू रुधिरं चास्य सिषिचुश्च पुरःसरान् ॥ ३८
केतुमूर्धनि गृध्रोऽस्य निलीनो दक्षिणामुखः । तुदन्नुभयतः पार्श्वं समग्रामहरत्प्रभाम् ॥ ३९
सारथेर्बहुशश्चास्य संग्राममवगाहतः । प्रतोदो न्यपतद्धस्तात्सूतस्य हयसादिनः ॥ ४०
निर्याणश्रीश्च यास्यासीद्भास्वरा वसुदुर्लभा[1] । सा ननाश मुहूर्तेन समे च स्खलिता हयाः॥४१
प्रहस्तं त्वभिनिर्यान्तं प्रख्यातबलपौरुषम् । युधि नानाप्रहरणा कपिसेनाभ्यवर्तत ॥ ४२
अथ घोषः सुतुमुलो हरीणां समजायत । वृक्षानारुजतां चैव गुर्वीरागृह्णतां शिलाः ॥ ४३
नदतां राक्षसानां च वानराणां च गर्जताम् । उभे प्रमुदिते सैन्ये रक्षोगणवनौकसाम् ॥ ४४
वेगितानां समर्थानामन्योन्यवधकाङ्क्षिणाम् । परस्परं चाह्वयतां निनादः श्रूयते महान् ॥ ४५

ततः प्रहस्तः कपिराजवाहिनीमभिप्रतस्थे विजयाय दुर्मतिः ।
विवृद्धवेगां च विवेश तां चमूं यथा मुमूर्षुः शलभो विभावसुम् ॥ ४६

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
युद्धकाण्डे प्रहस्तयुद्धं नाम सप्तपञ्चाशः सर्गः

---

## अष्टपञ्चाशः सर्गः

### प्रहस्तवधः

ततः प्रहस्तं निर्यान्तं दृष्ट्वा भीमपराक्रमम् । उवाच सस्मितं रामो विभीषणमरिंदमः ॥ १
क एष सुमहाकायो बलेन महता वृतः । आचक्ष्व मे महाबाहो वीर्यवन्तं निशाचरम् ॥ २
राघवस्य वचः श्रुत्वा प्रत्युवाच विभीषणः । एष सेनापतिस्तस्य प्रहस्तो नाम राक्षसः ॥ ३
लङ्कायां राक्षसेन्द्रस्य त्रिभागबलसंवृतः । वीर्यवानस्त्रविच्छूरः प्रख्यातश्च पराक्रमे ॥ ४
ततः प्रहस्तं निर्यान्तं भीमं भीमपराक्रमम् । गर्जन्तं सुमहाकायं राक्षसैरभिसंवृतम् ॥ ५
ददर्श महती सेना वानराणां बलीयसाम् । अतिसंजातरोषाणां प्रहस्तमभिगर्जताम् ॥ ६
खड्गशक्त्यृष्टिबाणाश्च शूलानि मुसलानि च । गदाश्च परिघाः प्रासा विविधाश्च परश्वधाः॥ ७
धनूंषि च विचित्राणि राक्षसानां जयैषिणाम् । प्रगृहीतान्यशोभन्त वानरानभिधावताम् ॥ ८
जगृहुः पादपांश्चापि पुष्पितान् वानरर्षभाः । शिलाश्च विपुला दीर्घा योद्धुकामाः प्लवङ्गमाः॥ ९
तेषामन्योन्यमासाद्य संग्रामः सुमहानभूत् । बहूनामश्मवृष्टिं च शरवृष्टिं च वर्षताम् ॥ १०
बहवो राक्षसा युद्धे बहून् वानरयूथपान् । वानरा राक्षसांश्चापि निजघ्नुर्बहवो बहून् ॥ ११

---

१. च सुदुर्लभा पुना. ।

शूलैः प्रमथिताः केचित्केचिच्च परमायुधैः । परिघैराहताः केचित्केचिच्छिन्नाः परश्वधैः ॥ १२
निरुच्छ्वासाः कृताः केचित्पतिता धरणीतले । विभिन्नहृदयाः केचिदिषुसंधानसंदिताः ॥ १३
केचिद्द्विधा कृताः खड्गैः स्फुरन्तः पतिता भुवि । वानरा राक्षसैः शूलैः पार्श्वतश्च विदारिताः[1] ॥
वानरैश्चापि संक्रुद्धै राक्षसौघाः समन्ततः । पादपैर्गिरिशृङ्गैश्च संपिष्टा वसुधातले ॥ १५
वज्रस्पर्शतलैर्हस्तैर्मुष्टिभिश्च हता भृशम् । वेमुः शोणितमास्येभ्यो विशीर्णदशनेक्षणाः ॥ १६
आर्तस्वनं च स्वनतां सिंहनादं च नर्दताम् । बभूव तुमुलः शब्दो हरीणां रक्षसां युधि ॥ १७
वानरा राक्षसाः क्रुद्धा वीरमार्गमनुव्रताः । विवृत्तनयनाः क्रूराश्चक्रुः कर्माण्यभीतवत् ॥ १८
नरान्तकः कुम्भहनुर्महानादः समुन्नतः । एते प्रहस्तसचिवाः सर्वे जघ्नुर्वनौकसः ॥ १९
तेषामापततां शीघ्रं निघ्नतां चापि वानरान् । द्विविदो गिरिशृङ्गेण जघानैकं नरान्तकम् ॥ २०
दुर्मुखः पुनरुत्पाट्य कपिः स विपुलद्रुमम् । राक्षसं क्षिप्रहस्तस्तु समुन्नतमपोथयत् ॥ २१
जाम्बवांस्तु सुसंक्रुद्धः प्रगृह्य महतीं शिलाम् । पातयामास तेजस्वी महानादस्य वक्षसि ॥ २२
अथ कुम्भहनुस्तत्र तारेणासाद्य वीर्यवान् । वृक्षेणाभिहतो मूर्ध्नि प्राणान् संत्याजयद्रणे ॥ २३
अमृष्यमाणस्तत्कर्म प्रहस्तो रथमास्थितः । चकार कदनं घोरं धनुष्पाणिर्वनौकसाम् ॥ २४
आवर्त इव संजज्ञे उभयोः सेनयोस्तदा । क्षुभितस्याप्रमेयस्य सागरस्येव निःस्वनः ॥ २५
महता हि शरौघेण प्रहस्तो युद्धकोविदः । अर्दयामास संक्रुद्धो वानरान् परमाहवे ॥ २६
वानराणां शरीरैश्च राक्षसानां च मेदिनी । बभूव निचिता घोरा पतितैरिव पर्वतैः ॥ २७
सा मही रुधिरौघेण प्रच्छन्ना संप्रकाशते । संछन्ना माधवे मासि पलाशैरिव पुष्पितैः ॥ २८
हतवीरौघवप्रां तु भग्नायुधमहाद्रुमाम् । शोणितौघमहातोयां यमसागरगामिनीम् ॥ २९
यकृत्प्लीहमहापङ्कां विनिकीर्णान्त्रशैवलाम् । भिन्नकायशिरोमीनामङ्गावयवशाद्वलाम् ॥ ३०
गृध्रहंसगणाकीर्णां कङ्कसारससेविताम् । मेदःफेनसमाकीर्णामार्तस्तनितनिःस्वनाम् ॥ ३१
तां कापुरुषदुस्तारां युद्धभूमिमयीं नदीम् । नदीमिव घनापाये हंससारससेविताम् ॥ ३२
राक्षसाः कपिमुख्याश्च तेरुस्तां दुस्तरां नदीम् । यथा पद्मरजोध्वस्तां नलिनीं गजयूथपाः ॥ ३३
ततः सृजन्तं बाणौघान् प्रहस्तं स्यन्दने स्थितम् । ददर्श तरसा नीलो विनिघ्नन्तं प्लवङ्गमान् ॥
उद्धूत इव वायुः खे महदभ्रबलं बलात् । समीक्ष्याभिद्रुतं युद्धे प्रहस्तो वाहिनीपतिः ॥ ३५
रथेनादित्यवर्णेन नीलमेवाभिदुद्रुवे । स धनुर्धन्विनां श्रेष्ठो विकृष्य परमाहवे ॥ ३६
नीलाय व्यसृजद्बाणान् प्रहस्तो वाहिनीपतिः । ते प्राप्य विशिखा नीलं विनिर्भिद्य समाहिताः ॥
महीं जग्मुर्महावेगा रुषिता इव पन्नगाः । नीलः शरैरभिहतो निशितैर्ज्वलनोपमैः ॥ ३८

१. पार्श्वतश्चावदारिताः घ. ।

स तं परमदुर्धर्षमापतन्तं महाकपिः । प्रहस्तं ताडयामास वृक्षमुत्पाट्य वीर्यवान् ॥ ३९

स तेनाभिहतः क्रुद्धो नदन् राक्षसपुंगवः । ववर्ष शरवर्षाणि प्लवङ्गानां चमूपतौ ॥ ४०

तस्य बाणगणान् घोरान् राक्षसस्य महाबलः । अपारयन् वारयितुं प्रत्यगृह्णान्निमीलितः ॥ ४१

यथैव गोवृषो वर्षं शारदं शीघ्रमागतम् । एवमेव प्रहस्तस्य शरवर्षं दुरासदम् ॥ ४२

निमीलिताक्षः सहसा नीलः सेहे सुदारुणम् । रोषितः शरवर्षेण सालेन महता महान् ॥ ४३

प्रजघान हयान्नीलः प्रहस्तस्य मनोजवान् । ततः स चापमुद्गृह्य प्रहस्तस्य महाबलः ॥ ४४

बभञ्ज तरसा नीलो ननाद च पुनः पुनः । विधनुस्तु कृतस्तेन प्रहस्तो वाहिनीपतिः ॥ ४५

प्रगृह्य मुसलं घोरं स्यन्दनादवपुप्लुवे । तावुभौ वाहिनीमुख्यौ जातवैरौ तरस्विनौ ॥ ४६

स्थितौ क्षतजदिग्धाङ्गौ प्रभिन्नाविव कुञ्जरौ । उल्लिखन्तौ सुतीक्ष्णाभिर्दंष्ट्राभिरितरेतरम् ॥ ४७

सिंहशार्दूलसदृशौ सिंहशार्दूलचेष्टितौ । विक्रान्तविजयौ वीरौ समरेष्वनिवर्तिनौ ॥ ४८

काङ्क्षमाणौ यशः प्राप्तुं वृत्रवासवयोः समौ । आजघान तदा नीलं ललाटे मुसलेन सः ॥

प्रहस्तः परमायत्तस्तस्य सुस्राव शोणितम् । ततः शोणितदिग्धाङ्गः प्रगृह्य सुमहातरुम् ॥ ५०

प्रहस्तस्योरसि क्रुद्धो विससर्ज महाकपिः । तमचिन्त्यप्रहारं स प्रगृह्य मुसलं महत् ॥ ५१

अभिदुद्राव बलिनं बलान्नीलं प्लवङ्गमम् । तमुग्रवेगं संरब्धमापतन्तं महाकपिः ॥ ५२

ततः संप्रेक्ष्य जग्राह महावेगो महाशिलाम् । तस्य युद्धाभिकामस्य मृधे मुसलयोधिनः ॥ ५३

प्रहस्तस्य शिलां नीलो मूर्ध्नि तूर्णमपातयत् । सा तेन कपिमुख्येन विमुक्ता महती शिला ॥ ५४

बिभेद बहुधा घोरा प्रहस्तस्य शिरस्तदा । स गतासुर्गतश्रीको गतसत्त्वो गतेन्द्रियः ॥ ५५

पपात सहसा भूमौ छिन्नमूल इव द्रुमः । प्रभिन्नशिरसस्तस्य बहु सुस्राव शोणितम् ॥ ५६

शरीरादपि सुस्राव गिरेः प्रस्रवणं यथा । हते प्रहस्ते नीलेन तदकम्प्यं महद्बलम् ॥ ५७

रक्षसामप्रहृष्टानां लङ्कामभिजगाम ह । न शेकुः समरे स्थातुं निहते वाहिनीपतौ ॥ ५८

सेतुबन्धं समासाद्य विकीर्णं सलिलं यथा । हते तस्मिंश्चमूमुख्ये राक्षसास्ते निरुद्यमाः ॥ ५९

रक्षःपतिगृहं गत्वा ध्यानमूकत्वमास्थिताः । प्राप्ताः शोकार्णवं तीव्रं निःसंज्ञा इव तेऽभवन् ॥ ६०

ततस्तु नीलो विजयी महाबलः प्रशस्यमानः स्वकृतेन कर्मणा ।
समेत्य रामेण सलक्ष्मणेन च प्रहृष्टरूपस्तु बभूव यूथपः ॥ ६१

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
युद्धकाण्डे प्रहस्तवधो नाम अष्टपञ्चाशः सर्गः

## एकोनषष्टितमः सर्गः

### रावणाभिषेणनम्

तस्मिन् हते राक्षससैन्यपाले प्लवङ्गमानामृषभेण युद्धे ।
भीमायुधं सागरतुल्यवेगं विदुद्रुवे राक्षसराजसैन्यम् ॥ १

गत्वाथ रक्षोऽधिपतेः शशंसुः सेनापतिं पावकसूनुशस्तम् ॥
तच्चापि तेषां वचनं निशम्य रक्षोऽधिपः क्रोधवशं जगाम ॥ २

संख्ये प्रहस्तं निहतं निशम्य शोकार्दितः क्रोधपरीतचेताः ।
उवाच तान्नैर्ऋतयोधमुख्यानिन्द्रो यथा चामरयोधमुख्यान् ॥ ३

नावज्ञा रिपवे कार्या यैरिन्द्रबलसूदनः । सूदितः सैन्यपालो मे सानुयात्रः सकुञ्जरः ॥ ४
सोऽहं रिपुविनाशाय विजयायाविचारयन् । स्वयमेव गमिष्यामि रणशीर्षं तदद्भुतम् ॥ ५
अद्य तद्वानरानीकं रामं च सहलक्ष्मणम् । निर्दहिष्यामि बाणौघैर्वनं दीप्तैरिवाग्निभिः ॥ ६
अद्य संतर्पयिष्यामि पृथिवीं कपिशोणितैः[1] ॥

स एवमुक्त्वा ज्वलनप्रकाशं रथं तुरङ्गोत्तमराजयुक्तम् ।
प्रकाशमानं वपुषा ज्वलन्तं समारुरोहामरराजशत्रुः ॥ ७

स शङ्खभेरीपणवप्रणादैरास्फोटितक्ष्वेलितसिंहनादैः ।
पुण्यैः स्तवैश्चाप्यभिपूज्यमानस्तदा ययौ राक्षसराजमुख्यः ॥ ८

स शैलजीमूतनिकाशरूपैर्मांसादनैः पावकदीप्तनेत्रैः ।
बभौ वृतो राक्षसराजमुख्यो भूतैर्वृतो रुद्र इवामरेशः ॥ ९

ततो नगर्याः सहसा महौजसा निष्क्रम्य तद्वानरसैन्यमुग्रम् ।
महार्णवाभ्रस्तनितं ददर्श समुद्यतं पादपशैलहस्तम् ॥ १०

तद्राक्षसानीकमतिप्रचण्डमालोक्य रामो भुजगेन्द्रबाहुः ।
विभीषणं शस्त्रभृतां वरिष्ठमुवाच सेनानुगतः पृथुश्रीः ॥ ११

नानापताकाध्वजशस्त्रजुष्टं प्रासासिशूलायुधशस्त्रजुष्टम् ।
सैन्यं [2]गजेन्द्रोपमनागजुष्टं कस्येदमक्षोभ्यमभीरुजुष्टम् ॥ १२

ततस्तु रामस्य निशम्य वाक्यं विभीषणः शक्रसमानवीर्यः ।
शशंस रामस्य बलप्रवेकं महात्मनां राक्षसपुंगवानाम् ॥ १३

---

१. इदमर्धम् च. नास्ति । एतदनन्तरम्—रामं च लक्ष्मणं चैव नयिष्यामि यमक्षयम् । झ.

२. महेन्द्रोपम- पुना. । नगेन्द्रोपम- झ. ।

योऽसौ गजस्कन्धगतो महात्मा नवोदितार्कोपमताम्रवक्त्रः ।
प्रकम्पयन्नागशिरोऽभ्युपैति ह्यकम्पनं त्वेनमवेहि राजन् ॥ १४

योऽसौ रथस्थो मृगराजकेतुर्धून्वन् धनुः शक्रधनुःप्रकाशम् ।
करीव भात्युग्रविवृत्तदंष्ट्रः स इन्द्रजिन्नाम वरप्रधानः ॥ १५

यश्चैष विन्ध्यास्तमहेन्द्रकल्पो धन्वी रथस्थोऽतिरथोऽतिवीरः ।
विस्फारयंश्चापमतुल्यमानं नाम्नातिकायोऽतिविवृद्धकायः ॥ १६

योऽसौ नवार्कोदितताम्रचक्षुरारुह्य घण्टानिनदप्रणादम् ।
गजं खरं गर्जति वै महात्मा महोदरो नाम स एष वीरः ॥ १७

योऽसौ हयं काञ्चनचित्रभाण्डमारुह्य सन्ध्याभ्रगिरिप्रकाशम् ।
प्रासं समुद्यम्य मरीचिनद्धं पिशाच एषोऽशनितुल्यवेगः ॥ १८

यश्चैष शूलं निशितं प्रगृह्य विद्युत्प्रभं किंकरवज्रवेगम् ।
वृषेन्द्रमास्थाय गिरिप्रकाशमायाति योऽसौ त्रिशिरा यशस्वी ॥ १९

असौ च जीमूतनिकाशरूपः कुम्भः पृथुव्यूढसुजातवक्षाः ।
समाहितः पन्नगराजकेतुर्विस्फारयन् भाति धनुर्विधून्वन् ॥ २०

यश्चैष जाम्बूनदवज्रजुष्टं दीप्तं सधूमं परिघं प्रगृह्य ।
आयाति रक्षोबलकेतुभूतस्त्वसौ निकुम्भोऽद्भुतघोरकर्मा ॥ २१

यश्चैष चापासिशरौघजुष्टं पताकिनं पावकदीप्तरूपम् ।
रथं समास्थाय विभात्युदग्रो नरान्तकोऽसौ नगशृङ्गयोधी ॥ २२

यश्चैष नानाविधघोररूपैर्व्याघ्रोष्ट्रनागेन्द्रमृगाश्ववक्त्रैः ।
भूतैर्वृतो भाति विवृत्तनेत्रैः सोऽसौ सुराणामपि दर्पहन्ता ॥ २३

यत्रैतदिन्दुप्रतिमं विभाति च्छत्रं सितं सूक्ष्मशलाकमग्र्यम् ।
अत्रैष रक्षोऽधिपतिर्महात्मा भूतैर्वृतो रुद्र इवावभाति ॥ २४

असौ किरीटी चलकुण्डलास्यो नगेन्द्रविन्ध्योपमभीमकायः ।
महेन्द्रवैवस्वतदर्पहन्ता रक्षोऽधिपः सूर्य इवावभाति ॥ २५

प्रत्युवाच ततो रामो विभीषणमरिंदमम् । अहो दीप्तो महातेजा रावणो राक्षसेश्वरः ॥ २६

आदित्य इव दुष्प्रेक्षो रश्मिभिर्भाति रावणः । सुव्यक्तं लक्षये ह्यस्य रूपं तेजःसमावृतम् ॥ २७

देवदानववीराणां वपुर्नैवंविधं भवेत् । यादृशं राक्षसेन्द्रस्य वपुरेतत्प्रकाशते ॥ २८

सर्वे पर्वतसंकाशाः सर्वे पर्वतयोधिनः । सर्वे दीप्तायुधधरा योधाश्चास्य महौजसः ॥ २९

भाति राक्षसराजोऽसौ प्रदीप्तैर्भीमविक्रमैः। भूतः परिवृतस्तीक्ष्णैर्देहवद्भिरिवान्तकः ॥ ३०
दिष्ट्यायमद्य पापात्मा मम दृष्टिपथं गतः। अद्य क्रोधं विमोक्ष्यामि सीताहरणसंभवम् ॥ ३१
एवमुक्त्वा ततो रामो धनुरादाय वीर्यवान्। लक्ष्मणानुचरस्तस्थौ समुद्धृत्य शरोत्तमम् ॥ ३२

ततः स रक्षोऽधिपतिर्महात्मा रक्षांसि तान्याह महाबलानि।
द्वारेषु चर्यागृहगोपुरेषु सुनिर्वृतास्तिष्ठत निर्विशङ्काः ॥ ३३

इहागतं मां सहितं भवद्भिर्वनौकसश्छिद्रमिदं विदित्वा।
शून्यां पुरीं दुष्प्रसहां प्रमथ्य प्रधर्षयेयुः सहसा समेताः ॥ ३४

विसर्जयित्वा सहितांस्ततस्तान् गतेषु रक्षःसु यथानियोगम्।
व्यदारयद्वानरसागरौघं महाझषः पूर्णमिवार्णवौघम् ॥ ३५

तमापतन्तं सहसा समीक्ष्य दीप्तेषुचापं युधि राक्षसेन्द्रम्।
महत्समुत्पाट्य महीधराग्रं दुद्राव रक्षोऽधिपतिं हरीशः ॥ ३६

तच्छैलशृङ्गं बहुवृक्षसानुं प्रगृह्य चिक्षेप निशाचराय।
तमापतन्तं सहसा समीक्ष्य बिभेद बाणैस्तपनीयपुङ्खैः ॥ ३७

तस्मिन् प्रवृद्धोत्तमसानुवृक्षे शृङ्गे विकीर्णे पतिते पृथिव्याम्।
महाहिकल्पं शरमन्तकाभं समाददे राक्षसलोकनाथः ॥ ३८

स तं गृहीत्वानिलतुल्यवेगं सविस्फुलिङ्गज्वलनप्रकाशम्।
बाणं महेन्द्राशनितुल्यवेगं चिक्षेप सुग्रीववधाय रुष्टः ॥ ३९

स सायको रावणबाहुमुक्तः शक्राशनिप्रख्यवपुः शिताग्रः।
सुग्रीवमासाद्य बिभेद वेगाद्गुहेरिता क्रौञ्चमिवोग्रशक्तिः ॥ ४०

स सायकार्तो विपरीतचेताः कूजन् पृथिव्यां निपपात वीरः।
तं प्रेक्ष्य भूमौ पतितं विसंज्ञं नेदुः प्रहृष्टा युधि यातुधानाः ॥ ४१

ततो गवाक्षो गवयः सुदंष्ट्रस्तथर्षभो ज्योतिमुखो नभश्च।
शैलान् समुद्यम्य विवृद्धकायाः प्रदुद्रुवुस्तं प्रति राक्षसेन्द्रम् ॥ ४२

तेषां प्रहारान् स चकार मोघान् रक्षोऽधिपो बाणगणैः शिताग्रैः।
तान् वानरेन्द्रानपि बाणजालैर्बिभेद जाम्बूनदचित्रपुङ्खैः ॥ ४३

ते वानरेन्द्रास्त्रिदशारिबाणैर्भिन्ना निपेतुर्भुवि भीमकायाः।
ततस्तु तद्वानरसैन्यमुग्रं प्रच्छादयामास स बाणजालैः ॥ ४४

ते वध्यमानाः पतिताः प्रवीरा नानद्यमाना भयशल्यविद्धाः ।
शाखामृगा रावणसायकार्ता जग्मुः शरण्यं शरणं स्म रामम् ॥ ४५
ततो महात्मा स धनुर्धनुष्मानादाय रामः सहसा जगाम ।
तं लक्ष्मणः प्राञ्जलिरभ्युपेत्य उवाच वाक्यं परमार्थयुक्तम् ॥ ४६
काममार्यः सुपर्याप्तो वधायास्य दुरात्मनः । विधमिष्याम्यहं नीचमनुजानीहि मां प्रभो ॥ ४७
तमब्रवीन्महातेजा रामः सत्यपराक्रमः । गच्छ यत्नपरश्चापि भव लक्ष्मण संयुगे ॥ ४८
रावणो हि महावीर्यो रणेऽद्भुतपराक्रमः । त्रैलोक्येनापि संक्रुद्धो दुष्प्रसह्यो न संशयः ॥ ४९
तस्य च्छिद्राणि मार्गस्व स्वच्छिद्राणि च [1]लक्षय । चक्षुषा धनुषा यत्नाद्रक्षात्मानं समाहितः ॥
राघवस्य वचः श्रुत्वा परिष्वज्याभिपूज्य च । अभिवाद्य ततो रामं ययौ सौमित्रिराहवम् ॥ ५१
स रावणं वारणहस्तबाहुर्ददर्श दीप्तोद्यतभीमचापम् ।
प्रच्छादयन्तं शरवृष्टिजालैस्तान् वानरान् भिन्नविकीर्णदेहान् ॥ ५२
तमालोक्य महातेजा हनुमान् मारुतात्मजः । निवार्य शरजालानि प्रदुद्राव स रावणम् ॥ ५३
रथं तस्य समासाद्य भुजमुद्यम्य दक्षिणम् । त्रासयन् रावणं धीमान् हनुमान् वाक्यमब्रवीत् ॥
देवदानवगन्धर्वैर्यक्षैश्च सह राक्षसैः । अवध्यत्वं त्वया प्राप्तं वानरेभ्यस्तु ते भयम् ॥ ५५
एष मे दक्षिणो बाहुः पञ्चशाखः समुद्यतः । विधमिष्यति ते देहाद्भूतात्मानं चिरोषितम् ॥ ५६
श्रुत्वा हनुमतो वाक्यं रावणो भीमविक्रमः । संरक्तनयनः क्रोधादिदं वचनमब्रवीत् ॥ ५७
क्षिप्रं प्रहर निःशङ्कं स्थिरां कीर्तिमवाप्नुहि । ततस्त्वां ज्ञातविक्रान्तं नाशयिष्यामि वानर ॥ ५८
रावणस्य वचः श्रुत्वा वायुसूनुर्वचोऽब्रवीत् । प्रहृतं हि मया पूर्वमक्षं स्मर सुतं तव ॥ ५९
एवमुक्तो महातेजा रावणो राक्षसेश्वरः । आजघानानिलसुतं तलेनोरसि वीर्यवान् ॥ ६०
स तलाभिहतस्तेन चचाल च मुहुर्मुहुः । स्थित्वा मुहूर्तं तेजस्वी स्थैर्यं कृत्वा महामतिः ॥ ६१
आजघानाभिसंक्रुद्धस्तलेनैवामरद्विषम् । ततस्तलेनाभिहतो वानरेण महात्मना ॥ ६२
दशग्रीवः समाधूतो यथा भूमिचलेऽचलः । संग्रामे तं तथा दृष्ट्वा रावणं तलताडितम् ॥ ६३
ऋषयो वानराः सिद्धा नेदुर्देवाः सहासुरैः । अथाश्वास्य महातेजा रावणो वाक्यमब्रवीत् ॥ ६४
साधु वानर वीर्येण श्लाघनीयोऽसि मे रिपुः । रावणेनैवमुक्तस्तु मारुतिर्वाक्यमब्रवीत् ॥ ६५
धिगस्तु मम वीर्येण यस्त्वं जीवसि रावण । सकृत्तु प्रहरेदानीं दुर्बुद्धे किं विकत्थसे ॥ ६६
ततस्त्वां मामिका मुष्टिर्नयिष्यति यमक्षयम् । ततो मारुतिवाक्येन क्रोधस्तस्य तदाज्वलत् ॥ ६७
संरक्तनयनो यत्नान्मुष्टिमुद्यम्य दक्षिणम् । पातयामास वेगेन वानरोरसि वीर्यवान् ॥ ६८
हनुमान् वक्षसि व्यूढे संचचाल हतः पुनः । विह्वलं तु तदा दृष्ट्वा हनुमन्तं महाबलम् ॥ ६९
रथेनातिरथः शीघ्रं नीलं प्रति समभ्यगात् । राक्षसानामधिपतिर्दशग्रीवः प्रतापवान् ॥ ७०

1. गोपय ङ.

पन्नगप्रतिमैर्भीमैः परमर्मातिभेदिभिः। शरैरादीपयामास नीलं हरिचमूपतिम्॥ ७१
स शरौघसमायस्तो नीलः कपिचमूपतिः। करेणैकेन शैलाग्रं रक्षोऽधिपतयेऽसृजत्॥ ७२
हनुमानपि तेजस्वी समाश्वस्तो महामनाः। विप्रेक्षमाणो युद्धेप्सुः सरोषमिदमब्रवीत्॥ ७३
नीलेन सह संयुक्तं रावणं राक्षसेश्वरम्। अन्येन युध्यमानस्य न युक्तमभिधावनम्॥ ७४
रावणोऽपि महातेजास्तच्छृङ्गं सप्तभिः शरैः। आजघान सुतीक्ष्णाग्रैस्तद्विकीर्णं पपात ह॥ ७५
तद्विकीर्णं गिरेः शृङ्गं दृष्ट्वा हरिचमूपतिः। कालाग्निरिव जज्वाल क्रोधेन परवीरहा॥ ७६
सोऽश्वकर्णान् धवान् सालांश्चूतांश्चापि सुपुष्पितान्। अन्यांश्च विविधान् वृक्षान्नीलश्चिक्षेप संयुगे
स तान् वृक्षान् समासाद्य प्रतिचिच्छेद रावणः। अभ्यवर्षत्सुघोरेण शरवर्षेण पावकिम्॥ ७८
अभिवृष्टः शरौघेण मेघेनेव महाचलः। ह्रस्वं कृत्वा तदा रूपं ध्वजाग्रे निपपात ह॥ ७९
पावकात्मजमालोक्य ध्वजाग्रे रामुपस्थितम्। जज्वाल रावणः क्रोधात्ततो नीलो ननाद च॥
ध्वजाग्रे धनुषश्चाग्रे किरीटाग्रे च तं हरिम्। लक्ष्मणोऽथ हनूमांश्च दृष्ट्वा रामश्च विस्मिताः॥
रावणोऽपि महातेजाः कपिलाघवविस्मितः। अस्त्रमाहारयामास दीप्तमाग्नेयमद्भुदम्॥ ८२
ततस्ते चुक्रुशुर्हृष्टा लब्धलक्षाः प्लवङ्गमाः। नीललाघवसंभ्रान्तं दृष्ट्वा रावणमाहवे॥ ८३
वानराणां च नादेन संरब्धो रावणस्तदा। संभ्रमाविष्टहृदयो न किंचित् प्रत्यपद्यत॥ ८४
आग्नेयेनाथ संयुक्तं गृहीत्वा रावणः शरम्। ध्वजशीर्षस्थितं नीलमुदैक्षत निशाचरः॥ ८५
ततोऽब्रवीन्महातेजा रावणो राक्षसेश्वरः। कपे लाघवयुक्तोऽसि मायया परयानया॥ ८६
जीवितं खलु रक्षस्व यदि शक्तोऽसि वानर। तानि तान्यात्मरूपाणि सृजसि त्वमनेकशः॥
तथापि त्वां मया मुक्तः सायकोऽस्त्रप्रयोजितः। जीवितं परिरक्षन्तं जीविताद्भ्रंशयिष्यति॥
एवमुक्त्वा महाबाहू रावणो राक्षसेश्वरः। संधाय बाणमस्त्रेण चमूपतिमताडयत्॥ ८९
सोऽस्त्रयुक्तेन बाणेन नीलो वक्षसि ताडितः। निर्दह्यमानः सहसा निपपात महीतले॥ ९०
पितृमाहात्म्यसंयोगादात्मनश्चापि तेजसा। जानुभ्यामपतद्भूमौ न च प्राणैर्व्ययुज्यत॥ ९१
विसंज्ञं वानरं दृष्ट्वा दशग्रीवो रणोत्सुकः। रथेनाम्बुदनादेन सौमित्रिमभिदुद्रुवे॥ ९२
आसाद्य रणमध्ये तु वारयित्वा स्थितो ज्वलन्। धनुर्विस्फारयामास कम्पयन्निव मेदिनीम्॥

तमाह सौमित्रिरदीनसत्त्वो विस्फारयन्तं धनुरप्रमेयम्।
अभ्येहि मामेव निशाचरेन्द्र न वानरांस्त्वं प्रतियोद्धुमर्हः॥ ९४

स तस्य वाक्यं प्रतिपूर्णघोषं ज्याशब्दमुग्रं च निशम्य राजा।
आसाद्य सौमित्रिमवस्थितं तं कोपान्वितो वाक्यमुवाच रक्षः॥ ९५

दिष्ट्यासि मे राघव दृष्टिमार्गं प्राप्तोऽन्तगामी विपरीतबुद्धिः॥
अस्मिन् क्षणे यास्यसि मृत्युदेशं संसाद्यमानो मम बाणजालैः॥ ९६

तमाह सौमित्रिरविस्मयानो गर्जन्तमुद्वृत्तशिताग्रदंष्ट्रम् ।
राजन्न गर्जन्ति महाप्रभावा विकत्थसे पापकृतां वरिष्ठ ॥ ९७

जानामि वीर्यं तव राक्षसेन्द्र बलं प्रतापं च पराक्रमं च ।
अवस्थितोऽहं शरचापपाणिरागच्छ किं मोघविकत्थनेन ॥ ९८

स एवमुक्तः कुपितः ससर्ज रक्षोऽधिपः सप्त शरान् सुपुङ्खान् ।
ताँल्लक्ष्मणः काञ्चनचित्रपुङ्खैश्चिच्छेद बाणैर्निशिताग्रधारैः ॥ ९९

तान् प्रेक्षमाणः सहसा निकृत्तान्निकृत्तभोगानिव पन्नगेन्द्रान् ।
लङ्केश्वरः क्रोधवशं जगाम ससर्ज चान्यान्निशितान् पृषत्कान् ॥ १००

स बाणवर्षं तु ववर्ष तीव्रं रामानुजः कार्मुकसंप्रयुक्तम् ।
क्षुरार्धचन्द्रोत्तमकर्णिभल्लैः शरांश्च चिच्छेद न चुक्षुभे च ॥ १०१

स बाणजालान्यथ तानि तानि मोघानि पश्यंस्त्रिदशारिराजः ।
विसिष्मिये लक्ष्मणलाघवेन पुनश्च बाणान्निशितान् मुमोच ॥ १०२

स लक्ष्मणश्चाशु शराञ्शिताग्रान् महेन्द्रवज्राशनितुल्यवेगान् ।
संधाय चापे ज्वलनप्रकाशान् ससर्ज रक्षोऽधिपतेर्वधाय ॥ १०३

स तान् प्रचिच्छेद हि राक्षसेन्द्रश्छित्त्वा च ताँल्लक्ष्मणमाजघान ।
शरेण कालाग्निसमप्रभेण स्वयंभुदत्तेन ललाटदेशे ॥ १०४

स लक्ष्मणो रावणसायकार्तश्चचाल चापं शिथिलं प्रगृह्य ।
पुनश्च संज्ञां प्रतिलभ्य कृच्छ्राच्चिच्छेद चापं त्रिदशेन्द्रशत्रोः ॥ १०५

निकृत्तचापं त्रिभिराजघान बाणैस्तदा दाशरथिः शिताग्रैः ।
स सायकार्तो विचचाल राजा कृच्छ्राच्च संज्ञां पुनराससाद ॥ १०६

स कृत्तचापः शरताडितश्च मेदार्द्रगात्रो रुधिरावसिक्तः ।
जग्राह शक्तिं समुदग्रशक्तिः स्वयंभुदत्तां युधि देवशत्रुः ॥ १०७

स तां विधूमानलसंनिकाशां वित्रासिनीं वानरवाहिनीनाम् ।
चिक्षेप शक्तिं तरसा ज्वलन्तीं सौमित्रये राक्षसराष्ट्रनाथः ॥ १०८

तामापतन्तीं भरतानुजोऽस्त्रैर्जघान बाणैश्च हुताग्निकल्पैः ।
तथापि सा तस्य विवेश शक्तिर्बाह्वन्तरं दाशरथेर्विशालम् ॥ १०९

स शक्तिमाञ्शक्तिसमाहतः सन् मुहुः प्रजज्वाल रघुप्रवीरः ।
तं विह्वलन्तं सहसाभ्युपेत्य जग्राह राजा तरसा भुजाभ्याम् ॥ ११०

हिमवान् मन्दरो मेरुस्त्रैलोक्यं वा सहामरैः। शक्यं भुजाभ्यामुद्धर्तुं न संख्ये भरतानुजः ॥१११
शक्त्या ब्राह्मयापि सौमित्रिस्ताडितस्तु स्तनान्तरे। विष्णोरचिन्त्यं स्वं भागमात्मानं प्रत्यनुस्मरन्॥
ततो दानवदर्पघ्नं सौमित्रिं देवकण्टकः। तं पीडयित्वा बाहुभ्यामप्रभुर्लङ्घनेऽभवत्[1]॥ ११३
अथ वायुसुतः क्रुद्धो रावणं समभिद्रवत्। आजघानोरसि क्रुद्धो वज्रकल्पेन मुष्टिना॥ ११४
तेन मुष्टिप्रहारेण रावणो राक्षसेश्वरः। जानुभ्यामपतद्भूमौ चचाल च पपात च॥ ११५
आस्यैः सनेत्रश्रवणैर्ववाम रुधिरं बहु। विघूर्णमानो निश्चेष्टो रथोपस्थ उपाविशत्॥ ११६
विसंज्ञो मूर्छितश्चासीन्न च स्थानं समालभत्। विसंज्ञं रावणं दृष्ट्वा समरे भीमविक्रमम्॥ ११७
ऋषयो वानराः सर्वे नेदुर्देवाः सवासवाः। हनुमानपि तेजस्वी लक्ष्मणं रावणार्दितम् ॥११८
अनयद्राघवाभ्याशं बाहुभ्यां परिगृह्य तम्। वायुसूनोः सुहृत्त्वेन भक्त्या परमया च सः ॥११९
शत्रूणामप्रकम्प्योऽपि लघुत्वमगमत्कपेः। तं समुत्सृज्य सा शक्तिः सौमित्रिं युधि दुर्जयम्॥
रावणस्य रथे तस्मिन् स्थानं पुनरुपागता। आश्वस्तश्च विशल्यश्च लक्ष्मणः शत्रुसूदनः॥ १२१
विष्णोर्भागममीमांस्यमात्मानं प्रत्यनुस्मरन्। रावणोऽपि महातेजाः प्राप्य संज्ञां महाहवे ॥१२२
आददे निशितान् बणाञ्जग्राह च महद्धनुः। निपातितमहावीरां द्रवन्तीं वानरीं चमूम् ॥१२३
राघवस्तु रणे दृष्ट्वा रावणं समभिद्रवत्। अथैनमुपसंगम्य हनुमान् वाक्यमब्रवीत्॥ १२४
मम पृष्ठं समारुह्य राक्षसं शास्तुमर्हसि। विष्णुर्यथा गरुत्मन्तं बलवन्तं समाहितः॥ १२५
तच्छ्रुत्वा राघवो वाक्यं वायुपुत्रेण भाषितम्। आरुरोह महाशूरो बलवन्तं महाकपिम् ॥१२६
रथस्थं रावणं संख्ये ददर्श मनुजाधिपः। तमालोक्य महातेजाः प्रदुद्राव स राघवः॥ १२७
वैरोचनिमिव क्रुद्धो विष्णुरभ्युद्यतायुधः। ज्याशब्दमकरोत्तीव्रं वज्रनिष्पेषनिःस्वनम्॥ १२८
गिरा गम्भीरया रामो राक्षसेन्द्रमुवाच ह। तिष्ठ तिष्ठ मम त्वं हि कृत्वा विप्रियमीदृशम् ॥१२९
क्व नु राक्षसशार्दूल गतो मोक्षमवाप्स्यसि॥

यदीन्द्रवैवस्वतभास्करान् वा स्वयंभुवैश्वानरशंकरान् वा।
गमिष्यसि त्वं दश वा दिशोऽथवा तथापि मे नाद्य गतो विमोक्ष्यसे॥ १३०
यश्चैव शक्त्याभिहतस्त्वयाद्य इच्छन्[2] विषादं सहसाभ्युपेतः।
स एव रक्षोगणराज मृत्युः सपुत्रदारस्य तवाद्य युद्धे॥ १३१
एतेन चाप्यद्भुतदर्शनानि शरैर्जनस्थानकृतालयानि।
चतुर्दशान्यात्तवरायुधानि रक्षःसहस्राणि निषूदितानि॥ १३२

राघवस्य वचः श्रुत्वा राक्षसेन्द्रो महाकपिम्। वायुपुत्रं महावीर्यं वहन्तं राघवं रणे॥ १३३

---

१. अस्यानन्तरम्—अथैवं वैष्णवं भागं मानुषं देहमास्थितम्—इति च. छ.। २. गच्छन् क. ति.।

रोषेण महताविष्टः पूर्ववैरमनुस्मरन्[1] । आजघान शरैस्तीक्ष्णैः कालानलशिखोपमैः ॥ १३४

राक्षसेनाहवे तस्य ताडितस्यापि सायकैः । स्वभावतेजोयुक्तस्य भूयस्तेजोऽभ्यवर्धत ॥ १३५

ततो रामो महातेजा रावणेन कृतव्रणम् । दृष्ट्वा प्लवगशार्दूलं क्रोधस्य वशमेयिवान् ॥ १३६

तस्याभिचङ्क्रम्य रथं सचक्रं साश्वध्वजच्छत्रमहापताकम् ।
ससारथिं साशनिशूलखड्गं रामः प्रचिच्छेद शरैः सुपुङ्खैः ॥ १३७

अथेन्द्रशत्रुं तरसा जघान बाणेन वज्राशनिसंनिभेन ।
भुजान्तरे व्यूढसुजातरूपे वज्रेण मेरुं भगवानिवेन्द्रः ॥ १३८

यो वज्रपाताशनिसंनिपातान्न चुक्षुभे नापि चचाल राजा ।
स रामबाणाभिहतो भृशार्तश्चचाल चापं च मुमोच वीरः ॥ १३९

तं विह्वलन्तं प्रसमीक्ष्य रामः समाददे दीप्तमथार्धचन्द्रम् ।
तेनार्कवर्णं सहसा किरीटं चिच्छेद रक्षोऽधिपतेर्महात्मा ॥ १४०

तं निर्विषाशीविषसंनिकाशं शान्तार्चिषं सूर्यमिवाप्रकाशम् ।
गतश्रियं कृत्तकिरीटकूटमुवाच रामो युधि राक्षसेन्द्रम् ॥ १४१

कृतं त्वया कर्म महत् सुभीमं हतप्रवीरश्च कृतस्त्वयाहम् ।
तस्मात् परिश्रान्त इति व्यवस्यन्न त्वां शरैर्मृत्युवशं नयामि ॥ १४२

गच्छानुजानामि रणार्दितस्त्वं प्रविश्य रात्रिंचरराज लङ्काम् ।
आश्वास्य निर्याहि रथी च धन्वी तदा बलं द्रक्ष्यसि मे रथस्थः ॥ १४३

स एवमुक्तो हतदर्पहर्षो निकृत्तचापासिहताश्वसूतः ।
शरार्दितः कृत्तमहाकिरीटो विवेश लङ्कां सहसा स राजा ॥ १४४

तस्मिन् प्रविष्टे रजनीचरेन्द्रे महाबले दानवदेवशत्रौ ।
हरीन् विशल्यान् सह लक्ष्मणेन चकार रामः परमाहवाग्रे ॥ १४५

तस्मिन् प्रभिन्ने त्रिदशेन्द्रशत्रौ सुरासुरा भूतगणा दिशश्च ।
ससागराः सर्षिमहोरगाश्च तथैव भूम्यम्बुचराश्च हृष्टाः ॥ १४६

**इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्**
**युद्धकाण्डे रावणाभिषेणनं नाम एकोनषष्टितमः सर्गः**

———

१. इदमर्धम् च. छ. नास्ति

## षष्टितमः सर्गः

### कुम्भकर्णप्रबोधः

स प्रविश्य पुरीं लङ्कां रामबाणभयार्दितः । भग्नदर्पस्तदा राजा बभूव व्यथितेन्द्रियः ॥ १
मातङ्ग इव सिंहेन गरुडेनेव पन्नगः । अभिभूतोऽभवद्राजा राघवेण महात्मना ॥ २
ब्रह्मदण्डप्रकाशानां विद्युत्सदृशवर्चसाम् । स्मरन् राघवबाणानां विव्यथे राक्षसेश्वरः ॥ ३
स काञ्चनमयं दिव्यमाश्रित्य परमासनम् । विप्रेक्षमाणो रक्षांसि रावणो वाक्यमब्रवीत् ॥ ४
सर्वं तत्खलु मे मोघं यत्तप्तं परमं तपः । यत्समानो महेन्द्रेण मानुषेणास्मि निर्जितः ॥ ५
इदं तद्ब्रह्मणो घोरं वाक्यं मामभ्युपस्थितम् । मानुषेभ्यो विजानीहि भयं त्वमिति तत्तथा ॥ ६
देवदानवगन्धर्वैर्यक्षराक्षसपन्नगैः । अवध्यत्वं मया प्राप्तं मानुषेभ्यो न याचितम् ॥ ७
विदितं मानुषं मन्ये रामं दशरथात्मजम् । इक्ष्वाकुकुलनाथेन अनरण्येन यत्पुरा ॥ ८
उत्पत्स्यते हि मद्वंशे पुरुषो राक्षसाधम । यस्त्वां सपुत्रं सामात्यं सबलं साश्वसारथिम् ॥ ९
निहनिष्यति संग्रामे त्वां कुलाधम दुर्मते । शप्तोऽहं वेदवत्या च यदा[1] सा धर्षिता पुरा ॥
सेयं सीता महाभागा जाता जनकनन्दिनी । उमा नन्दीश्वरश्चापि रम्भा वरुणकन्यका ॥ ११
यथोक्तास्तन्मया[2] प्राप्तं न मिथ्या ऋषिभाषितम् । एतदेवाभ्युपागम्य यत्नं कर्तुमिहार्हथ ॥ १२
राक्षसाश्चापि तिष्ठन्तु चर्यागोपुरमूर्धसु । स चाप्रतिमगम्भीरो देवदानवदर्पहा ॥ १३
ब्रह्मशापाभिभूतस्तु कुम्भकर्णो विबोध्यताम् । स पराजितमात्मानं प्रहस्तं च निषूदितम् ॥ १४
ज्ञात्वा रक्षोबलं भीममादिदेश महाबलः । द्वारेषु यत्नः क्रियतां प्राकारश्चाधिरुह्यताम् ॥ १५
निद्रावशसमाविष्टः कुम्भकर्णो विबोध्यताम् । सुखं स्वपिति निश्चिन्तः कालोपहतचेतनः ॥ १६
नव षट् सप्त चाष्टौ च मासान् स्वपिति राक्षसः । मन्त्रयित्वा प्रसुप्तोऽयमितस्तु नवमेऽहनि ॥
तं तु बोधयत क्षिप्रं कुम्भकर्णं महाबलम् । स तु संख्ये महाबाहुः ककुदः सर्वरक्षसाम् ॥ १८
वानरान् राजपुत्रौ च क्षिप्रमेव वधिष्यति । एष केतुः परः संख्ये मुख्यो वै सर्वरक्षसाम् ॥ १९
कुम्भकर्णः सदा शेते मूढो ग्राम्यसुखे रतः । रामेण हि निरस्तस्य संग्रामेऽस्मिन् सुदारुणे ॥
भविष्यति न मे शोकः कुम्भकर्णे विबोधिते । किं करिष्याम्यहं तेन शक्रतुल्यबलेन हि ॥ २१
ईदृशे व्यसने प्राप्ते यो न साह्याय कल्पते । ते तु तद्वचनं श्रुत्वा राक्षसेन्द्रस्य राक्षसाः ॥ २२
जग्मुः परमसंभ्रान्ताः कुम्भकर्णनिवेशनम् । ते रावणसमादिष्टा मांसशोणितभोजनाः ॥ २३
गन्धमाल्यांस्तथा भक्ष्यानादाय सहसा ययुः । तां प्रविश्य महाद्वारां सर्वतो योजनायताम् ॥
कुम्भकर्णगुहां रम्यां सर्वगन्धप्रवाहिनीम् । कुम्भकर्णस्य निःश्वासादवधूता महाबलाः ॥ २५
प्रतिष्ठमानाः कृच्छ्रेण यत्नात्प्रविविशुर्गुहाम् । तां प्रविश्य गुहां रम्यां शुभां काञ्चनकुट्टिमाम् ॥

१. यथा ति. । या मया झ. २. तपसा च. छ. ।

ददृशुर्नैर्ऋतव्याघ्रं शयानं भीमदर्शनम् । ते तु तं विकृतं सुप्तं विकीर्णमिव पर्वतम् ॥ २७
कुम्भकर्णं महानिद्रं सहिताः प्रत्यबोधयन् । ऊर्ध्वरोमाञ्चिततनुं श्वसन्तमिव पन्नगम् ॥ २८
त्रासयन्तं महाश्वासैः शयानं भीमदर्शनम् । भीमनासापुटं तं तु पातालविपुलाननम् ॥ २९
शय्यायां न्यस्तसर्वाङ्गं मेदोरुधिरगन्धिनम् । काञ्चनाङ्गदनद्धाङ्गं किरीटिनमरिंदमम् ॥ ३०
ददृशुर्नैर्ऋतव्याघ्रं कुम्भकर्णं महाबलम् । ततश्चक्रुर्महात्मानः कुम्भकर्णाग्रतस्तदा ॥ ३१
मांसानां मेरुसंकाशं राशिं परमतर्पणम् । मृगाणां महिषाणां च वराहाणां च संचयान् ॥ ३२
चक्रुर्नैर्ऋतशार्दूला राशिमन्नस्य चाद्भुतम् । ततः शोणितकुम्भांश्च मद्यानि विविधानि च ॥ ३३
पुरस्तात् कुम्भकर्णस्य चक्रुस्त्रिदशशत्रवः । लिलिपुश्च परार्ध्येन चन्दनेन परंतपम् ॥ ३४
दिव्यैराच्छादयामासुर्माल्यैर्गन्धैः सुगन्धिभिः । धूपं सुगन्धं ससृजुस्तुष्टुवुश्च परंतपम् ॥ ३५
जलदा इव चोन्नेदुर्यातुधानास्ततस्ततः । शङ्खानापूरयामासुः शशाङ्कसदृशप्रभान् ॥ ३६
तुमुलं युगपच्चापि विनेदुश्चाप्यमर्षिताः । नेदुरास्फोटयामासुश्चिक्षिपुस्ते निशाचराः ॥ ३७
कुम्भकर्णविबोधार्थं चक्रुस्ते विपुलं स्वनम् ॥

सशङ्खभेरीपणवप्रणादमास्फोटितक्ष्वेलितसिंहनादम् ।
दिशो द्रवन्तस्त्रिदिवं किरन्तः श्रुत्वा विहङ्गाः सहसा निपेतुः ॥ ३८
यदा [1]भृशं तैर्निनदैर्महात्मा न कुम्भकर्णो बुबुधे प्रसुप्तः ।
ततो भुशुण्ठीर्मुसलानि सर्वे रक्षोगणास्ते जगृहुर्गदाश्च ॥ ३९
तं शैलशृङ्गैर्मुसलैर्गदाभिर्वृक्षैस्तलैर्मुद्गरमुष्टिभिश्च ।
सुखप्रसुप्तं भुवि कुम्भकर्णं रक्षांस्युदग्राणि तदा निजघ्नुः ॥ ४०

तस्य निःश्वासवातेन कुम्भकर्णस्य रक्षसः । राक्षसा बलवन्तोऽपि स्थातुं नाशक्नुवन् पुरः॥ ४१
ततः परिहिता गाढं राक्षसा भीमविक्रमाः । मृदङ्गपणवान् भेरीः शङ्खकुम्भगणांस्तदा ॥ ४२
दशराक्षससाहस्रा युगपत् पर्यवादयन् । नीलाञ्जनचयाकारास्ते तु तं प्रत्यबोधयन् ॥ ४३
अभिघ्नन्तो नदन्तश्च नैव संविविदे तु सः । यदा चैनं न शेकुस्ते प्रतिबोधयितुं तदा ॥ ४४
ततो गुरुतरं यत्नं दारुणं समुपाक्रमन् । अश्वानुष्ट्रान् खरान्नागाञ्जघ्नुर्दण्डकशाङ्कुशैः ॥ ४५
भेरीशङ्खमृदङ्गांश्च सर्वप्राणैरवादयन् । निजघ्नुश्चास्य गात्राणि महाकाष्ठकटङ्करैः ॥ ४६
मुद्गरैर्मुसलैश्चैव सर्वप्राणसमुद्यतैः । तेन शब्देन महता लङ्का समभिपूरिता ॥ ४७
सपर्वतवना सर्वा सोऽपि नैव प्रबुध्यते । ततः सहस्रं भेरीणां युगपत् समहन्यत ॥ ४८
मृष्टकाञ्चनकोणानामसक्तानां समन्ततः । एवमप्यतिनिद्रस्तु यदा नैव प्रबुध्यते ॥ ४९

---

१. भृशार्तैः च. ।

शापस्य वशमापन्नस्ततः क्रुद्धा निशाचराः । महाक्रोधसमाविष्टाः सर्वे भीमपराक्रमाः ॥ ५०
तद्रक्षो बोधयिष्यन्तश्चक्रुरन्ये पराक्रमम् । अन्ये भेरीः समाजघ्नुरन्ये चक्रुर्महास्वनम् ॥ ५१
केशानन्ये प्रलुलुपुः कर्णावन्ये दशन्ति च । उदकुम्भशतान्यन्ये समसिञ्चन्त कर्णयोः ॥ ५२
न कुम्भकर्णः पस्पन्दे महानिद्रावशं गतः । अन्ये च बलिनस्तस्य कूटमुद्गरपाणयः ॥ ५३
मूर्ध्नि वक्षसि गात्रेषु पातयन् कूटमुद्गरान् । रज्जुबन्धनबद्धाभिः शतघ्नीभिश्च सर्वतः ॥ ५४
वध्यमानो महाकायो न प्राबुध्यत राक्षसः । वारणानां सहस्रं तु शरीरेऽस्य प्रधावितम् ॥ ५५
कुम्भकर्णस्ततो बुद्धः स्पर्शं परमबुध्यत ॥

स पात्यमानैर्गिरिशृङ्गवृक्षैरचिन्तयंस्तान् विपुलान् प्रहारान् ।
निद्राक्षयात् क्षुद्भयपीडितश्च विजृम्भमाणः सहसोत्पपात ॥ ५६

स नागभोगाचलशृङ्गकल्पौ विक्षिप्य बाहू गिरिशृङ्गसारौ ।
विवृत्य वक्त्रं बडवामुखाभं निशाचरोऽसौ विकृतं जजृम्भे ॥ ५७

तस्य जाजृम्भमाणस्य वक्त्रं पातालसंनिभम् । ददृशे मेरुशृङ्गाग्रे दिवाकर इवोदितः ॥ ५८
स जृम्भमाणोऽतिबलः प्रतिबुद्धो निशाचरः । निःश्वासश्चास्य संजज्ञे पर्वतादिव मारुतः ॥ ५९
रूपमुत्तिष्ठतस्तस्य कुम्भकर्णस्य तद्बभौ । तपान्ते सबलाकस्य मेघस्येव विवर्षतः[1] ॥ ६०
तस्य दीप्ताग्निसदृशे विद्युत्सदृशवर्चसी । ददृशाते महानेत्रे दीप्ताविव महाग्रहौ ॥ ६१
ततस्त्वदर्शयन् सर्वान् भक्ष्यांश्च विविधान् बहून् । वराहान् महिषांश्चैव स बभक्ष महाबलः ॥ ६२
अदन् बुभुक्षितो मांसं शोणितं तृषितः पिबन् । मेदःकुम्भांश्च मद्यं च पपौ शक्ररिपुस्तदा ॥ ६३
ततस्तृप्त इति ज्ञात्वा समुत्पेतुर्निशाचराः । शिरोभिश्च प्रणम्यैनं सर्वतः पर्यवारयन् ॥ ६४
निद्राविशदनेत्रस्तु कलुषीकृतलोचनः । चारयन् सर्वतो दृष्टिं तान् ददर्श निशाचरान् ॥ ६५
स सर्वान् सान्त्वयामास नैर्ऋतान्नैर्ऋतर्षभः । बोधनाद्विस्मितश्चापि राक्षसानिदमब्रवीत् ॥ ६६
किमर्थमहमादृत्य भवद्भिः प्रतिबोधितः । कच्चित् सुकुशलं राज्ञो भयं वा नेह किंचन[2] ॥ ६७
अथवा ध्रुवमन्येभ्यो भयं परमुपस्थितम् । यदर्थमेवं त्वरितैर्भवद्भिः प्रतिबोधितः ॥ ६८
अद्य राक्षसराजस्य भयमुत्पाटयाम्यहम् । पातयिष्ये महेन्द्रं वा शातयिष्ये[3] तथानलम् ॥ ६९
न ह्यल्पकारणे सुप्तं बोधयिष्यति मां गुरुः । तदाख्यातार्थतत्त्वेन मत्प्रबोधनकारणम् ॥ ७०
एवं ब्रुवाणं संरब्धं कुम्भकर्णं महाबलम् । यूपाक्षः सचिवो राज्ञः कृताञ्जलिरुवाच ह ॥ ७१
न नो दैवकृतं किंचिद्भयमस्ति कदाचन । मानुषान्नो भयं राजंस्तुमुलं संप्रबाधते ॥ ७२
न दैत्यदानवेभ्यो वा भयमस्ति हि तादृशम् । यादृशं मानुषं राजन् भयमस्मानुपस्थितम् ॥ ७३

---

१. सविद्युतः ख. ।
२. भयवानेष वा न किम् च. छ. ।
३. शीतयिष्ये च. झ. ,
शोषयिष्येऽथवा जलम् क. ।

वानरैः पर्वताकारैर्लङ्केयं परिवारिता । सीताहरणसंतप्ताद्रामान्नस्तुमुलं भयम् ॥ ७४
एकेन वानरेणेयं पूर्वं दग्धा महापुरी । कुमारो निहतश्चाक्षः सानुयात्रः सकुञ्जरः ॥ ७५
स्वयं रक्षोऽधिपश्चापि पौलस्त्यो देवकण्टकः । [१]व्रजेति संयुगे मुक्तो रामेणादित्यतेजसा ॥ ७६
यन्न देवैः कृतो[1]राजा नापि दैत्यैर्न दानवैः । कृतः स इह रामेण विमुक्तः प्राणसंशयात् ॥ ७७
स यूपाक्षवचः[2] श्रुत्वा भ्रातुर्युधि पराजयम् । कुम्भकर्णो विवृत्ताक्षो यूपाक्षमिदमब्रवीत् ॥ ७८
सर्वमद्यैव यूपाक्ष हरिसैन्यं सलक्ष्मणम् । राघवं च रणे हत्वा पश्चाद्द्रक्ष्यामि रावणम् ॥ ७९
राक्षसांस्तर्पयिष्यामि हरीणां मांसशोणितैः । रामलक्ष्मणयोश्चापि स्वयं पास्यामि शोणितम् ॥

तत्तस्य वाक्यं ब्रुवतो निशम्य सगर्वितं रोषविवृद्धदोषम् ।
महोदरो नैर्ऋतयोधमुख्यः कृताञ्जलिर्वाक्यमिदं बभाषे ॥ ८१

रावणस्य वचः श्रुत्वा गुणदोषौ विमृश्य च । पश्चादपि महाबाहो शत्रून् युधि विजेष्यसि ॥ ८२
महोदरवचः श्रुत्वा राक्षसैः परिवारितः । कुम्भकर्णो महातेजाः संप्रतस्थे महाबलः ॥ ८३
तं समुत्थाप्य भीमाक्षं भीमरूपपराक्रमम् । राक्षसास्त्वरिता जग्मुर्दशग्रीवनिवेशनम् ॥ ८४
ततो गत्वा दशग्रीवमासीनं परमासने । ऊचुर्बद्धाञ्जलिपुटाः सर्व एव निशाचराः ॥ ८५
प्रबुद्धः कुम्भकर्णोऽयं भ्राता ते राक्षसर्षभ । कथं तत्रैव निर्यातु[3] द्रक्ष्यस्येनमिहागतम् ॥ ८६
रावणस्त्वब्रवीद्धृष्टो राक्षसांस्तानुपस्थितान् । द्रष्टुमेनमिहेच्छामि यथान्यायं च पूज्यताम् ॥ ८७
तथेत्युक्त्वा तु ते सर्वे पुनरागम्य राक्षसाः । कुम्भकर्णमिदं वाक्यमूचू रावणचोदिताः ॥ ८८
द्रष्टुं त्वां काङ्क्षते राजा सर्वराक्षसपुंगवः । गमने क्रियतां बुद्धिर्भ्रातरं संप्रहर्षय ॥ ८९
कुम्भकर्णस्तु दुर्धर्षो भ्रातुराज्ञाय शासनम् । तथेत्युक्त्वा महाबाहुः शयनादुत्पपात ह ॥ ९०
प्रक्षाल्य वदनं हृष्टः स्नातः परमभूषितः । पिपासुस्त्वरयामास पानं बलसमीरणम् ॥ ९१
ततस्ते त्वरितास्तस्य राक्षसा रावणाज्ञया । मद्यकुम्भांश्च विविधान् क्षिप्रमेवोपहारयन् ॥ ९२
पीत्वा घटसहस्रे द्वे गमनायोपचक्रमे । ईषत्समुत्कटो मत्तस्तेजोबलसमन्वितः ॥ ९३
कुम्भकर्णो बभौ हृष्टः[२] कालान्तकयमोपमः । भ्रातुः स भवनं गच्छन् रक्षोगणसमन्वितः ॥ ९४
कुम्भकर्णपदन्यासैरकम्पयत मेदिनीम् ॥

---

1. कृत इति ; प्रापित इत्यर्थः । देवादिभिर्यामवस्थां न प्रापितो रावणः तामवस्थामिदानीं रामेण स प्रापितः ।

2. युद्धे भ्रातू रावणस्य सम्बन्धि, तमधिकृत्येत्यर्थः । यूपाक्षस्य वचनं पराभवं श्रुत्वा तादृशवचःश्रवणमात्रेणात्मानं पराभूतं मन्यमान इति यावत् । यद्वा भ्रातुः पराभवं रावणपराभवबोधकं वचः श्रुत्वेति शब्दार्थयोरभेदाभिप्रायेण गमयितव्यम् ।

3. निर्यात्विति ; द्रक्ष्यसि इति च काकुः । कथमिति, किमत्र विधेयमित्यर्थः ।

१. मृतेति च. छ. ।

२. रुष्टः पुनः ।

स राजमार्गं वपुषा प्रकाशयन् सहस्ररश्मिर्धरणीमिवांशुभिः ।
जगाम तत्राञ्जलिमालया वृतः शतक्रतुर्गेहमिव स्वयंभुवः ॥ ९५

तं राजमार्गस्थममित्रघातिनं वनौकसस्ते[1] सहसा बहिः स्थिताः ।
दृष्ट्वाप्रमेयं गिरिशृङ्गकल्पं वितत्रसुस्ते हरियूथपालाः ॥ ९६

केचिच्छरण्यं शरणं स्म रामं व्रजन्ति केचिद्व्यथिताः पतन्ति ।
केचिद्दिशः स्म व्यथिताः प्रयान्ति केचिद्भयार्ता भुवि शेरते स्म ॥ ९७

तमद्रिशृङ्गप्रतिमं किरीटिनं स्पृशन्तमादित्यमिवात्मतेजसा ।
वनौकसः प्रेक्ष्य विवृद्धमद्भुतं भयार्दिता दुद्रुविरे ततस्ततः ॥ ९८

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
युद्धकाण्डे कुम्भकर्णप्रबोधो नाम षष्टितमः सर्गः

---

## एकषष्टितमः सर्गः

### कुम्भकर्णवृत्तकथनम्

ततो रामो महातेजा धनुरादाय वीर्यवान् । किरीटिनं महाकायं कुम्भकर्णं ददर्श ह ॥ १
तं दृष्ट्वा राक्षसश्रेष्ठं पर्वताकारदर्शनम् । क्रममाणमिवाकाशं पुरा नारायणं प्रभुम् ॥ २
सतोयाम्बुदसंकाशं काञ्चनाङ्गदभूषणम् । दृष्ट्वा पुनः प्रदुद्राव वानराणां महाचमूः ॥ ३
विद्रुतां वाहिनीं दृष्ट्वा वर्धमानं च राक्षसम् । सविस्मयमिदं रामो विभीषणमुवाच ह ॥ ४
कोऽसौ पर्वतसंकाशः किरीटी हरिलोचनः । लङ्कायां दृश्यते वीर सविद्युदिव तोयदः ॥ ५
पृथिव्याः केतुभूतोऽसौ महानेकोऽत्र दृश्यते । यं दृष्ट्वा वानराः सर्वे विद्रवन्ति ततस्ततः ॥ ६
आचक्ष्व मे महान् कोऽसौ रक्षो वा यदि वासुरः । न मयैवंविधं भूतं दृष्टपूर्वं कदाचन ॥ ७
स पृष्टो राजपुत्रेण रामेणाक्लिष्टकर्मणा । विभीषणो महाप्राज्ञः काकुत्स्थमिदमब्रवीत् ॥ ८
येन वैवस्वतो युद्धे वासवश्च पराजितः । सैष विश्रवसः पुत्रः कुम्भकर्णः प्रतापवान् ॥ ९
अस्य प्रमाणात्सदृशो राक्षसोऽन्यो न विद्यते ॥

एतेन देवा युधि दानवाश्च यक्षा भुजङ्गाः पिशिताशनाश्च ।
गन्धर्वविद्याधरकिन्नराश्च सहस्रशो राघव संप्रभग्नाः ॥ १०

1. वनौकस इति ; इदं वनवासनियतसमापतन्नानाविधभीषणाकृतिदर्शना इत्यर्थान्तरे संक्रमितम् । त इति ; विख्यातपौरुषत्वादिधर्मशतयोगिन इति व्यङ्ग्यम् । तेन उत्तरार्धे 'ते हरियूथपालाः' इत्यनेन न पुनरुक्त्यनुपयोगौ । वनौकसो हरियूथपालाश्च वितत्रसुरिति चकारोऽध्याहृतो भूषणे । सहयूथपालैरिति रा. पाठः ।

शूलपाणिं विरूपाक्षं कुम्भकर्णं महाबलम् । हन्तुं न शेकुस्त्रिदशाः कालोऽयमिति मोहिताः ॥
प्रकृत्या ह्येष तेजस्वी कुम्भकर्णो महाबलः । अन्येषां राक्षसेन्द्राणां वरदानकृतं बलम् ॥ १२
एतेन जातमात्रेण क्षुधार्तेन महात्मना । भक्षितानि सहस्राणि सत्त्वानां सुबहून्यपि ॥ १३
तेषु संभक्ष्यमाणेषु प्रजा भयनिपीडिताः । यान्ति स्म शरणं शक्रं तमप्यर्थं न्यवेदयन् ॥ १४

स कुम्भकर्णं कुपितो महेन्द्रो जघान वज्रेण शितेन वज्री ।
स शक्रवज्राभिहतो महात्मा चचाल कोपाच्च भृशं ननाद ॥ १५

तस्य नानद्यमानस्य कुम्भकर्णस्य धीमतः । श्रुत्वा निनादं वित्रस्ता भूयो भूमिर्वितत्रसे ॥ १६
तत्र कोपान्महेन्द्रस्य कुम्भकर्णो महाबलः । विकृष्यैरावताद्दन्तं जघानोरसि वासवम् ॥ १७
कुम्भकर्णप्रहारार्तो विजज्वाल स वासवः । ततो विषेदुः सहसा देवब्रह्मर्षिदानवाः ॥ १८
प्रजाभिः सह शक्रश्च ययौ स्थानं स्वयंभुवः । कुम्भकर्णस्य दौरात्म्यं शशंसुस्ते प्रजापतेः ॥ १९
प्रजानां भक्षणं चापि देवानां चापि धर्षणम् । आश्रमध्वंसनं चापि परस्त्रीहरणं भृशम् ॥ २०
एवं प्रजा यदि त्वेष भक्षयिष्यति नित्यशः । अचिरेणैव कालेन शून्यो लोको भविष्यति ॥
वासवस्य वचः श्रुत्वा सर्वलोकपितामहः । रक्षांस्यावाहयामास[1] कुम्भकर्णं ददर्श ह ॥ २२
कुम्भकर्णं समीक्ष्यैव वितत्रास प्रजापतिः । दृष्ट्वा विश्वास्य चैवेदं[2] स्वयंभूरिदमब्रवीत् ॥ २३
ध्रुवं लोकविनाशाय पौलस्त्येनासि निर्मितः । तस्मात्त्वमद्यप्रभृति मृतकल्पः शयिष्यसे ॥ २४
ब्रह्मशापाभिभूतोऽथ निपपाताग्रतः प्रभोः । ततः परमसंभ्रान्तो रावणो वाक्यमब्रवीत् ॥ २५
विवृद्धः काञ्चनो वृक्षः फलकाले निकृत्यते । न नप्तारं स्वकं न्याय्यं शप्तुमेवं प्रजापते ॥ २६
न मिथ्यावचनश्च त्वं स्वप्स्यत्येष न संशयः । कालस्तु क्रियतामस्य शयने जागरे तथा ॥ २७
रावणस्य वचः श्रुत्वा स्वयंभूरिदमब्रवीत् । शयिता ह्येष षण्मासानेकाहं जागरिष्यति ॥ २८
एकेनाह्ना त्वसौ वीरश्चरन् भूमिं बुभुक्षितः । व्यात्तास्यो भक्षयेल्लोकान् संक्रुद्ध इव पावकः॥२९
सोऽसौ व्यसनमापन्नः कुम्भकर्णमबोधयत् । त्वत्पराक्रमभीतश्च राजा संप्रति रावणः ॥ ३०
स एष निर्गतो वीरः शिबिराद्भीमविक्रमः । वानरान् भृशसंक्रुद्धो भक्षयन् परिधावति ॥ ३१
कुम्भकर्णं समीक्ष्यैव हरयोऽद्य प्रविद्रुताः । कथमेनं रणे क्रुद्धं वारयिष्यन्ति वानराः ॥ ३२
उच्यन्तां वानराः सर्वे यन्त्रमेतत्समुच्छ्रितम् । इति विज्ञाय हरयो भविष्यन्तीह निर्भयाः॥ ३३
विभीषणवचः श्रुत्वा हेतुमत्सुमुखेरितम् । उवाच राघवो वाक्यं नीलं सेनापतिं तदा ॥ ३४
गच्छ सैन्यानि सर्वाणि व्यूह्य तिष्ठस्व पावके । द्वाराण्यादाय लङ्कायाश्चर्याश्चाप्यथ संक्रमान् ॥

---

1. आवाहयामास समीपं प्रापितवानित्यर्थः। द्वयनिर्वाह इति भूषणे। गायत्रीलक्षणेन मन्त्रेण आजुहावेति तु तिलकः।

2. इदं रक्षः इदं वक्ष्यमाणम् इति इदंशब्द- द्वयनिर्वाह इति भूषणे। कुम्भकर्णमथाश्वस्ता इति ति. पाठः।

शैलशृङ्गाणि वृक्षांश्च शिलाश्चाप्युपसंहर । तिष्ठन्तु वानराः सर्वे सायुधाः शैलपाणयः ॥ ३६
राघवेण समादिष्टो नीलो हरिचमूपतिः । शशास वानरानीकं यथावत्कपिकुञ्जरः ॥ ३७
ततो गवाक्षः शरभो हनुमानङ्गदस्तदा । शैलशृङ्गाणि शैलाभा गृहीत्वा द्वारमभ्ययुः ॥ ३८
रामवाक्यमुपश्रुत्य हरयो जितकाशिनः । पादपैरर्दयन् वीरा वानराः परवाहिनीम् ॥ ३९
ततो हरीणां तदनीकमुग्रं रराज शैलोद्यतदीप्तहस्तम् ।
गिरेः समीपानुगतं यथैव महन्महाम्भोधरजालमुग्रम् ॥ ४०

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
युद्धकाण्डे कुम्भकर्णवृत्तकथनं नाम एकषष्टितमः सर्गः

---

## द्विषष्टितमः सर्गः

### रावणाभ्यर्थना

स तु राक्षसशार्दूलो निद्रामदसमाकुलः । राजमार्गं श्रिया जुष्टं ययौ विपुलविक्रमः ॥ १
राक्षसानां सहस्रैश्च वृतः परमदुर्जयः । गृहेभ्यः पुष्पवर्षेण कीर्यमाणस्तदा ययौ ॥ २
स हेमजालविततं भानुभास्वरदर्शनम् । ददर्श विपुलं रम्यं राक्षसेन्द्रनिवेशनम् ॥ ३
स तत्तदा सूर्य इवाभ्रजालं प्रविश्य रक्षोऽधिपतेर्निवेशम् ।
ददर्श दूरेऽग्रजमासनस्थं स्वयंभुवं शक्र इवासनस्थम् ॥ ४
भ्रातुः स भवनं गच्छन् रक्षोगणसमन्वितम् । कुम्भकर्णः पदन्यासैरकम्पयत मेदिनीम् ॥ ५
सोऽभिगम्य गृहं भ्रातुः कक्ष्यामभिविगाह्य च । ददर्शोद्विग्नमासीनं विमाने पुष्पके गुरुम् ॥ ६
अथ दृष्ट्वा दशग्रीवः कुम्भकर्णमुपस्थितम् । तूर्णमुत्थाय संहृष्टः संनिकर्षमुपानयत् ॥ ७
अथासीनस्य पर्यङ्के कुम्भकर्णो महाबलः । भ्रातुर्ववन्दे चरणौ किं कृत्यमिति चाब्रवीत् ॥ ८
उत्पत्य चैनं मुदितो रावणः परिषस्वजे । स भ्रात्रा संपरिष्वक्तो यथावच्चाभिनन्दितः ॥ ९
कुम्भकर्णः शुभं दिव्यं प्रतिपेदे वरासनम् । स तदासनमाश्रित्य कुम्भकर्णो महाबलः ॥ १०
संरक्तनयनः कोपाद्रावणं वाक्यमब्रवीत् । किमर्थमहमादृत्य त्वया राजन् विबोधितः ॥ ११
शंस कस्माद्भयं तेऽस्ति कोऽद्य प्रेतो भविष्यति । भ्रातरं रावणः क्रुद्धं कुम्भकर्णमवस्थितम् ॥
ईषत्तु परिवृत्ताभ्यां नेत्राभ्यां वाक्यमब्रवीत् । अद्य ते सुमहान् कालः शयानस्य महाबल ॥ १३
सुखितस्त्वं न जानीषे मम रामकृतं भयम् । एष दाशरथी रामः सुग्रीवसहितो बली ॥ १४
समुद्रं सबलस्तीर्त्वा मूलं[2] नः परिकृन्तति । हन्त पश्यस्व लङ्कायां[1] वनान्युपवनानि च ॥ १५

---

1. स्वलङ्कायामिति पदविभागे लङ्काशब्दो द्वीपपरः ।

१. रराज दीप्तोद्यतवृक्षशैलम् ङ.
२. कुलम् पुना. ।

सेतुना सुखमागम्य[1] वानरैकार्णवं कृतम् । ये रक्षसां मुख्यतमा हतास्ते वानरैर्युधि ॥ १६
वानराणां क्षयं युद्धे न पश्यामि कदाचन । न चापि वानरा युद्धे जितपूर्वाः कदाचन ॥ १७
तदेतद्भयमुत्पन्नं त्रायस्वेह[१] महाबल । नाशय त्वमिमानद्य तदर्थं बोधितो भवान् ॥ १८
सर्वक्षपितकोशं च स त्वमभ्यवपद्य माम् । त्रायस्वेमां पुरीं लङ्कां बालवृद्धावशेषिताम् ॥ १९
भ्रातुरर्थे महाबाहो कुरु कर्म सुदुष्करम् । मयैवं नोक्तपूर्वो हि कश्चिद्भ्रातः परंतप ॥ २०
त्वय्यस्ति तु मम स्नेहः परा संभावना च मे । दैवासुरेषु युद्धेषु बहुशो राक्षसर्षभ ॥ २१
त्वया देवाः प्रतिव्यूह्य निर्जिताश्चासुरा युधि । तदेतत्सर्वमातिष्ठ वीर्यं भीमपराक्रम ॥ २२
न हि ते सर्वभूतेषु दृश्यते सदृशो बली ॥

कुरुष्व मे प्रियहितमेतदुत्तमं यथाप्रियं प्रियरण बान्धवप्रिय ।
स्वतेजसा विधम सपत्नवाहिनीं शरद्घनं पवन इवोद्यतो महान् ॥ २३

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
युद्धकाण्डे रावणाभ्यर्थना नाम द्विषष्टितमः सर्गः

---

## त्रिषष्टितमः सर्गः

### कुम्भकर्णानुशोकः

तस्य राक्षसराजस्य निशम्य परिदेवितम् । कुम्भकर्णो बभाषेऽथ वचनं प्रजहास च ॥ १
दृष्टो दोषो हि योऽस्माभिः पुरा मन्त्रविनिर्णये । हितेष्वनभिरक्तेन सोऽयमासादितस्त्वया ॥ २
शीघ्रं खल्वभ्युपेतं त्वां फलं पापस्य कर्मणः । निरयेष्वेव पतनं यथा दुष्कृतकर्मणः ॥ ३
प्रथमं वै महाराज कृत्यमेतदचिन्तितम् । केवलं वीर्यदर्पेण नानुबन्धो विचारितः ॥ ४
यः पश्चात्पूर्वकार्याणि कुर्यादैश्वर्यमास्थितः । पूर्वं चोत्तरकार्याणि न स वेद नयानयौ ॥ ५
देशकालविहीनानि कर्माणि विपरीतवत् । क्रियमाणानि दुष्यन्ति हवींष्यप्रयतेष्विव ॥ ६
[2]त्रयाणां पञ्चधा योगं कर्मणां यः प्रपश्यति । सचिवैः समयं कृत्वा स सभ्ये वर्तते पथि ॥ ७
यथागमं च यो राजा समयं विचिकीर्षति । बुध्यते सचिवान् बुद्ध्या सुहृदश्चानुपश्यति ॥ ८
धर्ममर्थं च कामं च सर्वान् वा रक्षसां पते । भजते पुरुषः काले त्रीणि द्वन्द्वानि वा पुनः ॥
त्रिषु चैतेषु यच्छ्रेष्ठं श्रुत्वा तन्नावबुध्यते । राजा वा राजमात्रो वा व्यर्थं तस्य बहु श्रुतम् ॥ १०
उपप्रदानं सान्त्वं वा भेदं काले च विक्रमम् । योगं च रक्षसां श्रेष्ठ तावुभौ च नयानयौ ॥ ११

---

1. वानरैकार्णवमिति । एकार्णवशब्दो निरन्तरव्याप्तौ लोके निरूढ इत्युक्तम् । एकार्णवीकृतमिति गो. पाठः ।

2. त्रयाणां कर्मणां क्षयवृद्धिस्थानानाम् । पञ्चधा योगस्तु कर्मणामारम्भोपायः, पुरुषद्रव्यसंपत्, देशकालविभागः, विपत्तिप्रतीकारः, कार्यसिद्धिश्चेति ।

१. त्रायस्वेमाम् च. छ. ।

काले धर्मार्थकामान् यः संमन्त्र्य सचिवैः सह । निषेवेतात्मवाँल्लोके न स व्यसनमाप्नुयात् ॥
हितानुबन्धमालोच्य कार्याकार्यमिहात्मनः । राजा सहार्थतत्त्वज्ञैः सचिवैः स हि जीवति॥ १३
अनभिज्ञाय शास्त्रार्थान् पुरुषाः पशुबुद्धयः । प्रागल्भ्याद्वक्तुमिच्छन्ति मन्त्रेष्वभ्यन्तरीकृताः ॥
अशास्त्रविदुषां तेषां न कार्यमहितं वचः । अर्थशास्त्रानभिज्ञानां विपुलां श्रियमिच्छताम् ॥१५
अहितं च हिताकारं धाष्टर्याज्जल्पन्ति ये नराः । अवेक्ष्य मन्त्रबाह्यास्ते कर्तव्याः कृत्यदूषणाः॥
विनाशयन्तो भर्तारं सहिताः शत्रुभिर्बुधैः । विपरीतानि कृत्यानि कारयन्तीह मन्त्रिणः ॥ १७
तान् भर्ता मित्रसंकाशानमित्रान् मन्त्रनिर्णये । व्यवहारेण जानीयात्सचिवानुपसंहितान् ॥ १८
चपलस्येह कृत्यानि सहसानुप्रधावतः । छिद्रमन्ये प्रपद्यन्ते क्रौञ्चस्य[1] खमिव द्विजाः ॥ १९
यो हि शत्रुमभिज्ञाय[1] नात्मानमभिरक्षति । अवाप्नोति हि सोऽनर्थान् स्थानाच्च व्यवरोप्यते ॥
यदुक्तमिह ते पूर्वं क्रियतामनुजेन च । तदेव नो हितं कार्यं यदिच्छसि च तत्कुरु ॥ २१
तत्तु श्रुत्वा दशग्रीवः कुम्भकर्णस्य भाषितम् । भ्रुकुटिं चैव संचक्रे क्रुद्धश्चैनमभाषत ॥ २२
मान्यो गुरुरिवाचार्यः किं मां त्वमनुशाससि । किमेवं वाक्छ्रमं कृत्वा काले युक्तं विधीयताम्॥
विभ्रमाच्चित्तमोहाद्वा बलवीर्याश्रयेण वा । नाभिपन्नमिदानीं यद्व्यर्थास्तस्य पुनः कथाः ॥ २४
अस्मिन् काले तु यद्युक्तं तदिदानीं विधीयताम् । गतं तु नानुशोचन्ति गतं तु गतमेव हि ॥
ममापनयजं दोषं विक्रमेण समीकुरु । यदि खल्वस्ति मे स्नेहो विक्रमं वावगच्छसि ॥ २६
यदि वा कार्यमेतत्ते हृदि कार्यतमं मतम् । स सुहृद्यो विपन्नार्थं दीनमभ्यवपद्यते ॥ २७
स बन्धुर्योऽपनीतेषु साहाय्यायोपकल्पते । तमथैवं ब्रुवाणं तु वचनं धीरदारुणम् ॥ २८
रुष्टोऽयमिति विज्ञाय शनैः श्लक्ष्णमुवाच ह । अतीव हि समालक्ष्य भ्रातरं क्षुभितेन्द्रियम् ॥
कुम्भकर्णः शनैर्वाक्यं बभाषे परिसान्त्वयन् । अलं राक्षसराजेन्द्र संतापमुपपद्यते ॥ ३०
रोषं च संपरित्यज्य स्वस्थो भवितुमर्हसि । नैतन्मनसि कर्तव्यं मयि जीवति पार्थिव ॥ ३१
तमहं नाशयिष्यामि यत्कृते परितप्यसे । अवश्यं तु हितं वाच्यं सर्वावस्थं मया तव ॥ ३२
बन्धुभावादभिहितं भ्रातृस्नेहाच्च पार्थिव । सदृशं यत्तु कालेऽस्मिन् कर्तुं स्निग्धेन बन्धुना ॥ ३३
शत्रूणां कदनं पश्य क्रियमाणं मया रणे । अद्य पश्य महाबाहो मया समरमूर्धनि ॥ ३४
हते रामे सह भ्रात्रा द्रवन्तीं हरिवाहिनीम्[2]। अद्य रामस्य तद्दृष्ट्वा मयानीतं रणाच्छिरः॥३५
सुखी भव महाबाहो सीता भवतु दुःखिता । अद्य रामस्य पश्यन्तु निधनं सुमहत्प्रियम् ॥ ३६
लङ्कायां राक्षसाः सर्वे ये ते निहतबान्धवाः । अद्य शोकपरीतानां स्वबन्धुवधकारणात् ॥ ३७
शत्रोर्युधि विनाशेन करोम्यस्रप्रमार्जनम् । अद्य पर्वतसंकाशं ससूर्यमिव तोयदम् ॥ ३८

1. क्रौञ्चस्य स्कन्दशक्तिविदारितस्य तन्नाम्नः पर्वतस्य खं रन्ध्रं द्विजाः पक्षिण इवेत्यर्थः ।

१. अवज्ञाय पुना. ।

२. परवाहिनीम् च. ।

विकीर्णं पश्य समरे सुग्रीवं प्लवगोत्तमम् । कथं त्वं राक्षसैरेभिर्मया च परिरक्षितः ॥ ३९
जिघांसुभिर्दाशरथिं वध्यसे त्वमिहानघ । अथ पूर्वं हते तेन मयि त्वां हन्ति राघवः ॥ ४०
नाहमात्मनि संतापं गच्छेयं राक्षसाधिप । कामं त्विदानीमपि मां व्यादिश त्वं परंतप ॥ ४१
न परः प्रेषणीयस्ते युद्धायातुलविक्रम । अहमुत्सादयिष्यामि शत्रूंस्तव महाबल ॥ ४२
यदि शक्रो यदि यमो यदि पावकमारुतौ । तानहं योधयिष्यामि कुबेरवरुणावपि ॥ ४३
गिरिमात्रशरीरस्य शितशूलधरस्य मे । नर्दतस्तीक्ष्णदंष्ट्रस्य बिभीयाच्च पुरंदरः ॥ ४४
अथवा त्यक्तशस्त्रस्य मृद्नतस्तरसा रिपून् । न मे प्रतिमुखे स्थातुं कश्चिच्छक्तो जिजीविषुः ॥४५
नैव शक्त्या न गदया नासिना [1]नेषुभिः शितैः । हस्ताभ्यामेव संरब्धो हनिष्याम्यपि वज्रिणम्॥
यदि मे मुष्टिवेगं स राघवोऽद्य सहिष्यते । ततः पास्यन्ति बाणौघा रुधिरं राघवस्य तु [2] ॥४७
चिन्तया बाध्यसे राजन् किमर्थं मयि तिष्ठति । सोऽहं शत्रुविनाशाय तव निर्यातुमुद्यतः ॥४८
मुञ्च रामाद्भयं राजन् हनिष्यामीह संयुगे । राघवं लक्ष्मणं चैव सुग्रीवं च महाबलम् ॥ ४९
हनुमन्तं च रक्षोघ्नं लङ्का येन प्रदीपिता । हरींश्चापि हनिष्यामि संयुगे समवस्थितान् ॥ ५०
असाधारणमिच्छामि तव दातुं महद्यशः । यदि चेन्द्राद्भयं राजन् यदि वापि स्वयंभुवः [3] ॥५१
अपि देवाः शयिष्यन्ते क्रुद्धे मयि महीतले । यमं च शमयिष्यामि भक्षयिष्यामि पावकम् ॥
आदित्यं पातयिष्यामि सनक्षत्रं महीतले । शतक्रतुं वधिष्यामि पास्यामि वरुणालयम् ॥ ५३
पर्वतांश्चूर्णयिष्यामि दारयिष्यामि मेदिनीम् । दीर्घकालं प्रसुप्तस्य कुम्भकर्णस्य विक्रमम् ॥ ५४
अद्य पश्यन्तु भूतानि भक्ष्यमाणानि सर्वशः । नन्विदं त्रिदिवं सर्वमाहारस्य न पूर्यते ॥ ५५

वधेन ते दाशरथेः सुखार्हं सुखं समाहर्तुमहं व्रजामि ।
निकृत्य रामं सह लक्ष्मणेन खादामि सर्वान् हरियूथमुख्यान् ॥ ५६
रमस्व कामं पिब चाग्र्यवारुणीं कुरुष्व कृत्यानि विनीयतां ज्वरः ।
मयाद्य रामे गमिते यमक्षयं चिराय सीता वशगा भविष्यति ॥ ५७

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
युद्धकाण्डे कुम्भकर्णानुशोको नाम त्रिषष्टितमः सर्गः

---

## चतुःषष्टितमः सर्गः

### सीताप्रलोभनोपायः

तदुक्तमतिकायस्य बलिनो बाहुशालिनः । कुम्भकर्णस्य वचनं श्रुत्वोवाच महोदरः ॥ १
कुम्भकर्ण कुले जातो धृष्टः प्राकृतदर्शनः । अवलिप्तो न शक्नोषि कृत्यं सर्वत्र वेदितुम् ॥ २

---

१. निशितैः शरैः इति मुद्रितकोशेषु
२. मे पुना । अस्यानन्तरम्—लक्ष्मणस्य च पास्यामि चिरकाल[ं]पिपास[ि]तः—इति क. ख.
३. अस्यानन्तरम्—तं तेऽहं नाशयिष्यामि नैशं तम इवांशुमान्—इति क. ख. ।

न हि राजा न जानीते कुम्भकर्ण नयानयौ। त्वं तु कैशोरकाद्धृष्टः केवलं वक्तुमिच्छसि ॥३
स्थानं वृद्धिं च हानिं च देशकालविभागवित्। आत्मनश्च परेषां च बुध्यते राक्षसर्षभः ॥ ४
यत्त्वशक्यं बलवता कर्तुं प्राकृतबुद्धिना। अनुपासितवृद्धेन कः कुर्यात्तादृशं बुधः ॥ ५
यांस्तु धर्मार्थकामांस्त्वं ब्रवीषि पृथगाश्रयान्। अनुबोद्धुं स्वभावे तान्न हि लक्षणमस्ति ते ॥ ६
कर्म चैव हि सर्वेषां कारणानां प्रयोजकम्। श्रेयः पापीयसां चात्र फलं भवति कर्मणाम् ॥ ७
निःश्रेयसफलावेव धर्मार्थावितरावपि। अधर्मानर्थयोः प्राप्तिः फलं च प्रत्यवायिकम् ॥ ८
ऐहलौकिकपारत्रं कर्म पुंभिर्निषेव्यते। कर्माण्यपि तु कल्यानि लभते काममास्थितः ॥ ९
तत्र क्लृप्तमिदं राज्ञा हृदि कार्यं मतं च नः। शत्रौ हि साहसं यत्स्यात्किमिवात्रापनीयते ॥
एकस्यैवाभियाने तु हेतुर्यः कथितस्त्वया। तत्राप्यनुपपन्नं ते वक्ष्यामि यदसाधु च ॥ ११
येन पूर्वं जनस्थाने बहवोऽतिबला हताः। राक्षसा राघवं तं त्वं कथमेको जयिष्यसि ॥ १२
ये पुरा निर्जितास्तेन जनस्थाने महौजसः। राक्षसांस्तान् पुरे सर्वान् भीतानद्यापि पश्यसि ॥
तं सिंहमिव संक्रुद्धं रामं दशरथात्मजम्। सर्पं सुप्तमिवाबुध्य प्रबोधयितुमिच्छसि ॥ १४
ज्वलन्तं तेजसा नित्यं क्रोधेन च दुरासदम्। कस्तं मृत्युमिवासह्यमासादयितुमर्हति ॥ १५
संशयस्थमिदं सर्वं शत्रोः प्रतिसमासने। एकस्य गमनं तत्र न हि मे रोचते भृशम् ॥ १६
हीनार्थः सुसमृद्धार्थं को रिपुं प्राकृतं यथा। निश्चित्य जीवितत्यागे वशमानेतुमिच्छति ॥ १७
यस्य नास्ति मनुष्येषु सदृशो राक्षसोत्तम। कथमाशंससे योद्धुं तुल्येनेन्द्रविवस्वतोः ॥ १८
एवमुक्त्वा तु संरब्धं कुम्भकर्णं महोदरः। उवाच रक्षसां मध्ये रावणं लोकरावणम् ॥ १९
लब्ध्वा पुनस्त्वं वैदेहीं किमर्थं संप्रजल्पसि। यदीच्छसि तदा सीता वशगा ते भविष्यति॥२०
दृष्टः कश्चिदुपायो मे सीतोपस्थानकारकः। रुचिरश्चेत्स्वया बुद्ध्या राक्षसेश्वर तं शृणु ॥ २१
अहं द्विजिह्वः संह्रादी कुम्भकर्णो वितर्दनः। पञ्च रामवधायैते निर्यान्त्वित्यवघोषय ॥ २२
ततो गत्वा वयं युद्धं दास्यामस्तस्य यत्नतः। जेष्यामो यदि ते शत्रून्नोपायैः कृत्यमस्ति नः ॥
अथ जीवति नः शत्रुर्वयं च कृतसंयुगाः। ततस्तदभिपत्स्यामो मनसा यत्समीक्षितम् ॥ २४
वयं युद्धादिहैष्यामो रुधिरेण समुक्षिताः। विदार्य स्वतनुं बाणै रामनामाङ्कितैः शितैः ॥ २५
भक्षितो राघवोऽस्माभिर्लक्ष्मणश्चेति वादिनः। तव पादौ ग्रहीष्यामस्त्वं नः कामं प्रपूरय ॥
ततोऽवघोषय पुरे गजस्कन्धेन पार्थिव। हतो रामः सह भ्रात्रा ससैन्य इति सर्वतः ॥ २७
प्रीतो नाम ततो भूत्वा भृत्यानां त्वमरिंदम। भोगांश्च परिवारांश्च कामांश्च वसु दापय ॥ २८
ततो माल्यानि वासांसि वीराणामनुलेपनम्। पेयं च बहु योधेभ्यः स्वयं च मुदितः पिब ॥
ततोऽस्मिन् बहुलीभूते कौलीने सर्वतो गते। भक्षितः ससुहृद्रामो राक्षसैरिति विश्रुते ॥ ३०
प्रविश्याश्वास्य चापि त्वं सीतां रहसि सान्त्वय। धनधान्यैश्च कामैश्च रत्नैश्चैनां प्रलोभय ॥३१
अनयोपधया राजन् भयशोकानुबन्धया। अकामा त्वद्वशं सीता नष्टनाथा गमिष्यति ॥ ३२

रञ्जनीयं हि भर्तारं विनष्टमवगम्य सा । नैराश्यात् स्त्रीलघुत्वाच्च त्वद्वशं प्रतिपत्स्यते ॥ ३३
सा पुरा सुखसंवृद्धा सुखार्हा दुःखकर्शिता । त्वय्यधीनं सुखं ज्ञात्वा सर्वथोपगमिष्यति ॥ ३४
एतत् सुनीतं मम दर्शनेन रामं हि दृष्ट्वैव भवेदनर्थः ।
इहैव ते सेत्स्यति मोत्सुको भूर्महानयुद्धेन सुखस्य लाभः ॥ ३५
अनष्टसैन्यो[१] ह्यनवाप्तसंशयो रिपूनयुद्धेन जयन्नराधिपः ।
यशश्च पुण्यं च महन्महीपते श्रियं च कीर्तिं च चिरं समश्नुते ॥ ३६

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
युद्धकाण्डे सीताप्रलोभनोपायो नाम चतुःषष्टितमः सर्गः

---

## पञ्चषष्टितमः सर्गः

### कुम्भकर्णाभिषेणनम्

स तथोक्तस्तु निर्भर्त्स्य कुम्भकर्णो महोदरम् । अब्रवीद्राक्षसश्रेष्ठं भ्रातरं रावणं ततः ॥ १
सोऽहं तव भयं घोरं वधात्तस्य दुरात्मनः । रामस्याद्य प्रमार्जामि निर्वैरो हि सुखी भव ॥ २
गर्जन्ति न वृथा शूरा निर्जला इव तोयदाः । पश्य संपद्यमानं तु गर्जितं युधि कर्मणा[1] ॥ ३
न मर्षयति चात्मानं संभावयति नात्मना । अदर्शयित्वा शूरास्तु कर्म कुर्वन्ति दुष्करम् ॥ ४
विक्लवानामबुद्धीनां राज्ञां पण्डितमानिनाम् । शृण्वतां सादितमिदं त्वद्विधानां महोदर ॥ ५
युद्धे कापुरुषैर्नित्यं भवद्भिः प्रियवादिभिः । राजानमनुगच्छद्भिः कृत्यमेतद्धि सादितम् ॥ ६
राजशेषा कृता लङ्का क्षीणः कोशो बलं हतम् । राजानमिममासाद्य सुहृच्चिह्नममित्रकम् ॥ ७
एष निर्याम्यहं युद्धमुद्यतः शत्रुनिर्जये । दुर्नयं भवतामद्य समीकर्तुमिहाहवे ॥ ८
एवमुक्तवतो वाक्यं कुम्भकर्णस्य धीमतः । प्रत्युवाच ततो वाक्यं प्रहसन् राक्षसाधिपः ॥ ९
महोदरोऽयं रामात्तु परित्रस्तो न संशयः । न हि रोचयते तात युद्धं युद्धविशारद ॥ १०
कश्चिन्मे त्वत्समो नास्ति सौहृदेन बलेन च । गच्छ शत्रुवधाय त्वं कुम्भकर्ण जयाय च ॥ ११
तस्मात्तु भयनाशार्थं भवान् संबोधितो मया । अयं हि कालः सुहृदां राक्षसानामरिंदम ॥ १२
तद्गच्छ शूलमादाय पाशहस्त इवान्तकः । वानरान् राजपुत्रौ च भक्षयादित्यतेजसौ ॥ १३
समालोक्य तु ते रूपं विद्रविष्यन्ति वानराः । रामलक्ष्मणयोश्चापि हृदये प्रस्फुटिष्यतः ॥ १४

---

1. तोयदानकर्माणो हि मेघा यदा रिक्तजला भवन्ति तदा निरर्थकं न गर्जन्ति यथा तथा स्वविक्रमानुरूपमव्यवस्यन्तः शूरा नैव गर्जन्ति । वृथा त्वयमवसन्नबलो महोदरो गर्जति । तत् पश्य मे युध्यतः, तोयदा इत्यस्य समुदायार्थमात्रं स्वीकृत्य व्यतिरेक दृष्टान्तता स्वीकारेऽपिश्चिष्यत्येवार्थः । अभिवर्षतो जलपूर्णस्येव पयोदस्य, कर्मणा स्वयमेव संपद्यमानं गर्जितमिति व्याख्येयम् ॥

१. अदृष्टसैन्यो. ज. झ.

एवमुक्त्वा महाराजः कुम्भकर्णं महाबलम् । पुनर्जातमिवात्मानं मेने राक्षसपुंगवः ॥ १५
कुम्भकर्णबलाभिज्ञो जानंस्तस्य पराक्रमम् । बभूव मुदितो राजा शशाङ्क इव निर्मलः ॥ १६
इत्येवमुक्तः संहृष्टो निर्जगाम महाबलः । राज्ञस्तु वचनं श्रुत्वा कुम्भकर्णः समुद्यतः ॥ १७
आददे निशितं शूलं वेगाच्छत्रुनिबर्हणम् । [1]सर्वकालायसं दीप्तं तप्तकाञ्चनभूषणम् ॥ १८
इन्द्राशनिसमं भीमं वज्रप्रतिमगौरवम् । देवदानवगन्धर्वयक्षकिन्नरसूदनम् ॥ १९
रक्तमाल्यं महाधाम स्वतश्चोद्गतपावकम् । आदाय निशितं शूलं शत्रुशोणितरञ्जितम् ॥ २०
कुम्भकर्णो महातेजा रावणं वाक्यमब्रवीत् । गमिष्याम्यहमेकाकी तिष्ठत्विह बलं महत् ॥ २१
अद्य तान् क्षुभितान् क्रुद्धो भक्षयिष्यामि वानरान् । कुम्भकर्णवचः श्रुत्वा रावणो वाक्यमब्रवीत्
सैन्यैः परिवृतो गच्छ शूलमुद्गरपाणिभिः । वानरा हि महात्मानः शीघ्राः सुव्यवसायिनः ॥२३
एकाकिनं प्रमत्तं वा नयेयुर्दशनैः क्षयम् । तस्मात् परमदुर्धर्षैः सैन्यैः परिवृतो व्रज ॥ २४
रक्षसामहितं सर्वं शत्रुदक्षं निषूदय । अथासनात् समुत्पत्य स्रजं मणिकृतान्तराम् ॥ २५
आबबन्ध महातेजाः कुम्भकर्णस्य रावणः । अङ्गदान्यङ्गुलीवेष्टान् वराण्याभरणानि च ॥ २६
हारं च शशिसंकाशमाबबन्ध महात्मनः । दिव्यानि च सुगन्धीनि माल्यदामानि रावणः ॥२७
श्रोत्रे चासञ्जयामास श्रीमती चास्य कुण्डले । काञ्चनाङ्गदकेयूरनिष्काभरणभूषितः ॥ २८
कुम्भकर्णो बृहत्कर्णः सुहुतोऽग्निरिवाबभौ । श्रोणीसूत्रेण महता मेचकेन व्यराजत ॥ २९
अमृतोत्पादने नद्धो भुजङ्गेनेव मन्दरः ॥

स काञ्चनं भारसहं निवातं विद्युत्प्रभं दीप्तमिवात्मभासा ।
आबध्यमानः कवचं रराज सन्ध्याभ्रसंवीत इवाद्रिराजः ॥ ३०

सर्वाभरणनद्धाङ्गः शूलपाणिः स राक्षसः । त्रिविक्रमकृतोत्साहो नारायण इवाबभौ ॥ ३१
भ्रातरं संपरिष्वज्य कृत्वा चाभिप्रदक्षिणम् । प्रणम्य शिरसा तस्मै संप्रतस्थे महाबलः ॥ ३२
निष्पतन्तं महाकायं महानादं महाबलम् । तमाशीर्भिः प्रशस्ताभिः प्रेषयामास रावणः ॥ ३३
शङ्खदुन्दुभिनिर्घोषैः सैन्यैश्चापि वरायुधैः । तं गजैश्च तुरंगैश्च स्यन्दनैश्चाम्बुदस्वनैः ॥ ३४
अनुजग्मुर्महात्मानं रथिनो रथिनां वरम् । सर्पैरुष्ट्रैः खरैरश्वैः सिंहद्विपमृगद्विजैः ॥ ३५
अनुजग्मुश्च तं घोरं कुम्भकर्णं महाबलम् ॥

स पुष्पवर्षैरवकीर्यमाणो धृतातपत्रः शितशूलपाणिः ।
मदोत्कटः शोणितगन्धमत्तो विनिर्ययौ दानवदेवशत्रुः ॥ ३६

पदातयश्च बहवो महानादा महाबलाः । अन्वयू राक्षसा भीमा भीमाक्षाः शस्त्रपाणयः ॥ ३७
रक्ताक्षाः सुमहाकाया नीलाञ्जनचयोपमाः । शूलानुद्यम्य खड्गांश्च निशितांश्च परश्वधान् ॥ ३८

१. सर्वं कालायसम् ति.।

बहुव्यामांश्च परिघान् गदाश्च मुसलानि च। तालस्कन्धांश्च विपुलान् क्षेपणीयान् दुरासदान्॥
अथान्यद्वपुरादाय दारुणं रोमहर्षणम्। निष्पपात महातेजाः कुम्भकर्णो महाबलः॥ ४०
धनुःशतपरीणाहः स षट्शतसमुच्छ्रितः। रौद्रः शकटचक्राक्षो महापर्वतसंनिभः॥ ४१
संनिवर्त्य च रक्षांसि दग्धशैलोपमो महान्। कुम्भकर्णो महावक्त्रः प्रहसन्निदमब्रवीत्॥ ४२
अद्य वानरमुख्यानां तानि यूथानि भागशः। निर्दहिष्यामि संक्रुद्धः शलभानिव पावकः॥ ४३
नापराध्यन्ति मे कामं वानरा वनचारिणः। जातिरस्मद्विधानां सा पुरोद्यानविभूषणम्॥ ४४
पुररोधस्य मूलं तु राघवः सहलक्ष्मणः। हते तस्मिन् हतं सर्वं तं वधिष्यामि संयुगे॥ ४५
एवं तस्य ब्रुवाणस्य कुम्भकर्णस्य राक्षसाः। नादं चक्रुर्महाघोरं कम्पयन्त इवार्णवम्॥ ४६
तस्य निष्पततस्तूर्णं कुम्भकर्णस्य धीमतः। बभूवुर्घोररूपाणि निमित्तानि समन्ततः॥ ४७
उल्काशनियुता मेघा बभूवुर्गर्दभारुणाः। ससागरवना चैव वसुधा समकम्पत॥ ४८
घोररूपाः शिवा नेदुः सज्वालकवलैर्मुखैः[1]। मण्डलान्यपसव्यानि बबन्धुश्च विहङ्गमाः॥ ४९
निष्पपात च मालेव गृध्रोऽस्य पथि गच्छतः। प्रास्फुरन्नयनं चास्य सव्यो बाहुरकम्पत॥ ५०
निपपात तदा चोल्का ज्वलन्ती भीमनिःस्वना। आदित्यो निष्प्रभश्चासीन्न प्रवाति सुखोऽनिलः॥
अचिन्तयन् महोत्पातानुत्थितान् रोमहर्षणान्। निर्ययौ कुम्भकर्णस्तु कृतान्तबलचोदितः॥ ५२
स लङ्घयित्वा प्राकारं पद्भ्यां पर्वतसंनिभः। ददर्शाभ्रघनप्रख्यं वानरानीकमद्भुतम्॥ ५३
ते दृष्ट्वा राक्षसश्रेष्ठं वानराः पर्वतोपमम्। वायुनुन्ना इव घना ययुः सर्वा दिशस्तदा॥ ५४

तद्वानरानीकमतिप्रचण्डं दिशो द्रवद्भिन्नमिवाभ्रजालम्।
स कुम्भकर्णः समवेक्ष्य हर्षान्ननाद भूयो घनवद्घनाभः॥ ५५

ते तस्य घोरं निनदं निशम्य यथा निनादं दिवि वारिदस्य।
पेतुर्धरण्यां बहवः प्लवङ्गा निकृत्तमूला इव सालवृक्षाः॥ ५६

विपुलपरिघवान् स कुम्भकर्णो रिपुनिधनाय विनिःसृतो महात्मा।
कपिगणभयमाददत् सुभीमं प्रभुरिव किङ्करदण्डवान् युगान्ते॥ ५७

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
युद्धकाण्डे कुम्भकर्णाभिषेणनं नाम पञ्चषष्टितमः सर्गः

---

1. उद्गच्छज्ज्वालानि कबलानि वह्निपिण्डाः येषु, तैर्मुखैरित्यर्थः

## षट्षष्टितमः सर्गः

### वानरपर्यवस्थापनम्

स लङ्घयित्वा प्राकारं गिरिकूटोपमो महान् । निर्ययौ नगरात्तूर्णं कुम्भकर्णो महाबलः ॥ १
स ननाद महानादं समुद्रमभिनादयन् । जनयन्निव निर्घातान् विधमन्निव पर्वतान् ॥ २
तमवध्यं मघवता यमेन वरुणेन वा । प्रेक्ष्य भीमाक्षमायान्तं वानरा विप्रदुद्रुवुः ॥ ३
तांस्तु विप्रद्रुतान् दृष्ट्वा वालिपुत्रोऽङ्गदोऽब्रवीत् । नलं नीलं गवाक्षं च कुमुदं च महाबलम् ॥
आत्मानमत्र विस्मृत्य वीर्याण्यभिजनानि च । क्व गच्छत भयत्रस्ताः प्राकृता हरयो यथा ॥ ५
साधु सौम्या निवर्तध्वं किं प्राणान् परिरक्षथ । नालं युद्धाय वै रक्षो महतीयं विभीषिका ॥६
महतीमुत्थितामेनां राक्षसानां विभीषिकाम् । विक्रमाद्विधमिष्यामो निवर्तध्वं प्लवङ्गमाः ॥ ७
कृच्छ्रेण तु समाश्वस्य संगम्य च ततस्ततः । वृक्षाद्रिहस्ता हरयः संप्रतस्थू रणाजिरम् ॥ ८
ते निवृत्य तु संक्रुद्धाः कुम्भकर्णं वनौकसः । निजघ्नुः परमक्रुद्धाः समदा इव कुञ्जराः ॥ ९
प्रांशुभिर्गिरिशृङ्गैश्च शिलाभिश्च महाबलः । पादपैः पुष्पिताग्रैश्च हन्यमानो न कम्पते ॥ १०
तस्य गात्रेषु पतिता भिद्यन्ते शतशः शिलाः । पादपाः पुष्पिताग्राश्च भग्नाः पेतुर्महीतले ॥ ११
सोऽपि सैन्यानि संक्रुद्धो वानराणां महौजसाम् । ममन्थ परमायत्तो वनान्यग्निरिवोत्थितः ॥ ·
लोहिताार्द्रास्तु बहवः शेरते वानरर्षभाः । निरस्ताः पतिता भूमौ ताम्रपुष्पा इव द्रुमाः ॥ १३
लङ्घयन्तः प्रधावन्तो वानरा नावलोकन् । केचित् समुद्रे पतिताः केचिद्गगनमाश्रिताः ॥ १४
वध्यमानास्तु ते वीरा राक्षसेन बलीयसा । सागरं येन ते तीर्णाः पथा तेन प्रदुद्रुवुः ॥ १५
ते स्थलानि तथा निम्नं विषण्णवदना भयात् । ऋक्षा वृक्षान् समारूढाः केचित् पर्वतमाश्रिताः ॥
ममज्जुरर्णवे केचिद्गुहाः केचित् समाश्रिताः । निपेतुः प्लवगाः केचित् केचिन्नैवावतस्थिरे ॥
केचिद्भूमौ निपतिताः केचित् सुप्ता मृता इव । तान् समीक्ष्याङ्गदो भग्नान् वानरानिदमब्रवीत् ॥
अवतिष्ठत युध्यामो निवर्तध्वं प्लवङ्गमाः । भग्नानां वो न पश्यामि परिगम्य महीमिमाम् ॥ १९
स्थानं सर्वे निवर्तध्वं किं प्राणान् परिरक्षथ । निरायुधानां द्रवतामसङ्गगतिपौरुषाः ॥ २०
दारा ह्यपहसिष्यन्ति स वै घातस्तु जीविनाम् । कुलेषु जाताः सर्वे स्म विस्तीर्णेषु महत्सु च ॥
क्व गच्छथ भयत्रस्ता हरयः प्राकृता यथा । अनार्याः खलु यद्भीतास्त्यक्त्वा वीर्यं प्रधावत ॥
विकत्थनानि वो यानि तदा वै जनसंसदि । तानि वः क्व नु यातानि सोदग्राणि महान्ति च ॥
भीरुप्रवादाः श्रूयन्ते यस्तु जीवति धिक्कृतः । मार्गः सत्पुरुषैर्जुष्टः सेव्यतां त्यज्यतां भयम् ॥
शयामहेऽथ निहताः पृथिव्यामल्पजीविताः । दुष्प्रापं ब्रह्मलोकं वा प्राप्नुमो युधि सूदिताः ॥
संप्राप्नुयामः कीर्तिं वा निहत्वा शत्रुमाहवे । जीवितं वीरलोकस्य भोक्ष्यामो[1] वसु वानराः ॥

---

१. मोक्ष्यामः च. छ. ।

न कुम्भकर्णः काकुत्स्थं दृष्ट्वा जीवन् गमिष्यति । दीप्यमानमिवासाद्य पतङ्गो ज्वलनं यथा ॥२७
पलायनेन चोद्दिष्टाः[1] प्राणान् रक्षामहे वयम् । एकेन बहवो भग्ना यशो नाशं गमिष्यति ॥२८
एवं ब्रुवाणं तं शूरमङ्गदं कनकाङ्गदम् । द्रवमाणास्ततो वाक्यमूचुः शूरविगर्हितम् ॥ २९
कृतं नः कदनं घोरं कुम्भकर्णेन रक्षसा । न स्थानकालो गच्छामो दयितं जीवितं हि नः ॥३०
एतावदुक्त्वा वचनं सर्वे ते भेजिरे दिशः । भीमं भीमाक्षमायान्तं दृष्ट्वा वानरयूथपाः ॥ ३१
द्रवमाणास्तु ते वीरा अङ्गदेन वलीमुखाः । सान्त्वैश्चैवानुमानैश्च ततः सर्वे निवर्तिताः ॥ ३२
प्रहर्षमुपनीताश्च वालिपुत्रेण धीमता । आज्ञाप्रतीक्षास्तस्थुश्च सर्वे वानरयूथपाः ॥ ३३

ऋषभशरभमैन्दधूम्रनीलाः कुमुदसुषेणगवाक्षरम्भताराः ।
द्विविदपनसवायुपुत्रमुख्यास्त्वरिततराभिमुखं रणं प्रयाताः ॥ ३४

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
युद्धकाण्डे वानरपर्यवस्थापनं नाम षट्षष्टितमः सर्गः

---

## सप्तषष्टितमः सर्गः

### कुम्भकर्णवधः

ते निवृत्ता महाकायाः श्रुत्वाङ्गदवचस्तदा । नैष्ठिकीं बुद्धिमासाद्य सर्वे संग्रामकाङ्क्षिणः ॥ १
समुदीरितवीर्याश्च समारोपितविक्रमाः । पर्यवस्थापिता वाक्यैरङ्गदेन वलीमुखाः ॥ २
प्रयाताश्च गता हर्षं मरणे कृतनिश्चयाः । चक्रुः सुतुमुलं युद्धं वानरास्त्यक्तजीविताः ॥ ३
अथ वृक्षान् महाकायाः सानूनि सुमहान्ति च । वानरास्तूर्णमुद्यम्य कुम्भकर्णमभिद्रुताः ॥ ४
स कुम्भकर्णः संक्रुद्धो गदामुद्यम्य वीर्यवान् । अर्दयन् सुमहाकायः समन्ताद्व्याक्षिपद्रिपून् ॥ ५
शतानि सप्त चाष्टौ च सहस्राणि च वानराः । प्रकीर्णाः शेरते भूमौ कुम्भकर्णेन पोथिताः ॥६
षोडशाष्टौ च दश च विंशत् त्रिंशत्तथैव च । परिक्षिप्य च बाहुभ्यां खादन् विपरिधावति ॥७
भक्षयन् भृशसंक्रुद्धो गरुडः पन्नगानिव । कृच्छ्रेण च समाश्वस्ताः संगम्य च ततस्ततः ॥ ८
वृक्षाद्रिहस्ता हरयस्तस्थुः संग्राममूर्धनि । ततः पर्वतमुत्पाट्य द्विविदः प्लवगर्षभः ॥ ९
दुद्राव गिरिशृङ्गाभं विलम्ब इव तोयदः । तं समुत्पत्य चिक्षेप कुम्भकर्णस्य वानरः ॥ १०
तमप्राप्तो महाकायं तस्य सैन्येऽपतत्तदा । ममर्दाश्वान् गजांश्चापि रथांश्चैव नगोत्तमः ॥ ११
तानि चान्यानि रक्षांसि पुनश्चान्यद्गिरेः शिरः । तच्छैलशृङ्गाभिहतं हताश्वं हतसारथि ॥ १२
रक्षसां रुधिरक्लिन्नं बभूवायोधनं महत् । रथिनो वानरेन्द्राणां शरैः कालान्तकोपमैः ॥ १३

---

1. उद्दिष्टा इति, महावीरेषु सर्वेषु सर्वैर्गणिताः । व्याख्यातारः । 'पलायनेन चेत् दिष्टात्' इति अथवा उद्दिष्टाः पलायिता एत इति जनैरपदिष्टा इति चेद्दृश्यते स पाठः श्लिष्टः ॥

शिरांसि नदतां जह्नुः सहसा भीमनिःस्वनाः । वानराश्च महात्मानः समुत्पाट्य महाद्रुमान् ॥
रथानश्वान् गजानुष्ट्रान् राक्षसानभ्यसूदयन् । हनूमाञ्शैलशृङ्गाणि वृक्षांश्च विविधान् बहून् ॥
ववर्ष कुम्भकर्णस्य शिरस्यम्बरमास्थितः । तानि पर्वतशृङ्गाणि शूलेन स बिभेद ह ॥ १६
बभञ्ज वृक्षवर्षं च कुम्भकर्णो महाबलः ॥

ततो हरीणां तदनीकमुग्रं दुद्राव शूलं निशितं प्रगृह्य ।
तस्थौ ततोऽस्यापततः पुरस्तान्महीधराग्रं हनुमान् प्रगृह्य ॥ १७
स कुम्भकर्णं कुपितो जघान वेगेन शैलोत्तमभीमकायम् ।
स चुक्षुभे तेन तदाभिभूतो मेदार्द्रगात्रो रुधिरावसिक्तः ॥ १८
स शूलमाविध्य तडित्प्रकाशं गिरिं यथा प्रज्वलिताग्रशृङ्गम् ।
बाह्वन्तरे मारुतिमाजघान गुहोऽचलं क्रौञ्चमिवोग्रशक्त्या ॥ १९
स शूलनिर्भिन्नमहाभुजान्तरः प्रविह्वलः शोणितमुद्वमन् मुखात् ।
ननाद भीमं हनुमान् महाहवे युगान्तमेघस्तनितस्वनोपमम् ॥ २०
ततो विनेदुः सहसा प्रहृष्टा रक्षोगणास्तं व्यथितं समीक्ष्य ।
प्लवङ्गमास्तु व्यथिता भयार्ताः प्रदुद्रुवुः संयति कुम्भकर्णात् ॥ २१

ततस्तु नीलो बलवान् पर्यवस्थापयन् बलम् । प्रविचिक्षेप शैलाग्रं कुम्भकर्णाय धीमते ॥ २२
तमापतन्तं संप्रेक्ष्य मुष्टिनाभिजघान ह । मुष्टिप्रहाराभिहतं तच्छैलाग्रं व्यशीर्यत ॥ २३
सविस्फुलिङ्गं सज्वालं निपपात महीतले । ऋषभः शरभो नीलो गवाक्षो गन्धमादनः ॥ २४
पञ्च वानरशार्दूलाः कुम्भकर्णमुपाद्रवन् । शैलैर्वृक्षैस्तलैः पादैर्मुष्टिभिश्च महाबलाः ॥ २५
कुम्भकर्णं महाकायं सर्वतोऽभिप्रदुद्रुवुः । स्पर्शानिव प्रहारांस्तान् वेदयानो न विव्यथे ॥ २६
ऋषभं तु महावेगं बाहुभ्यां परिषस्वजे । कुम्भकर्णभुजाभ्यां तु पीडितो वानरर्षभः ॥ २७
निपपातर्षभो भीमः प्रमुखाद्वान्तशोणितः । मुष्टिना शरभं हत्वा जानुना नीलमाहवे ॥ २८
आजघान गवाक्षं तु तलेनेन्द्ररिपुस्तदा । पादेनाभ्यहनत् क्रुद्धस्तरसा गन्धमादनम् ॥ २९
दत्तप्रहारव्यथिता मुमुहुः शोणितोक्षिताः । निपेतुस्ते तु मेदिन्यां निकृत्ता इव किंशुकाः ॥ ३०
तेषु वानरमुख्येषु पतितेषु महात्मसु । वानराणां सहस्राणि कुम्भकर्णं प्रदुद्रुवुः ॥ ३१
तं शैलमिव शैलाभाः सर्वे ते प्लवगर्षभाः । समारुह्य समुत्पत्य ददंशुश्च महाबलाः ॥ ३२
तं नखैर्दशनैश्चापि मुष्टिभिर्जानुभिस्तथा । कुम्भकर्णं महाकायं ते जघ्नुः प्लवगर्षभाः ॥ ३३
स वानरसहस्रैस्तैराचितः पर्वतोपमः । रराज राक्षसव्याघ्रो गिरिरात्मरुहैरिव ॥ ३४
बाहुभ्यां वानरान् सर्वान् प्रगृह्य सुमहाबलः । भक्षयामास संक्रुद्धो गरुडः पन्नगानिव ॥ ३५

प्रक्षिप्ताः कुम्भकर्णेन वक्त्रे पातालसंनिभे । नासापुटाभ्यां निर्जग्मुः कर्णाभ्यां चैव वानराः ॥
भक्षयन् भृशसंक्रुद्धो हरीन् पर्वतसंनिभः । बभञ्ज वानरान् सर्वान् संक्रुद्धो राक्षसोत्तमः ॥ ३७
मांसशोणितसंक्लेदां भूमिं कुर्वन् स राक्षसः । चचार हरिसैन्येषु कालाग्निरिव मूर्छितः ॥ ३८
वज्रहस्तो यथा शक्रः पाशहस्त इवान्तकः । शूलहस्तो बभौ संख्ये कुम्भकर्णो महाबलः ॥३९
यथा शुष्काण्यरण्यानि ग्रीष्मे दहति पावकः । तथा वानरसैन्यानि कुम्भकर्णो विनिर्दहत् ॥
ततस्ते वध्यमानास्तु हतयूथा विनायकाः । वानरा भयसंविग्ना विनेदुर्विस्वरं भृशम् ॥ ४१
अनेकशो वध्यमानाः कुम्भकर्णेन वानराः । राघवं शरणं जग्मुर्व्यथिताः खिन्नचेतसः ॥ ४२
प्रभग्नान् वानरान् दृष्ट्वा वज्रहस्तसुतात्मजः । अभ्यधावत वेगेन कुम्भकर्णं महाहवे ॥ ४३
शैलशृङ्गं महद्गृह्य विनदंश्च मुहुर्मुहुः । त्रासयन् राक्षसान् सर्वान् कुम्भकर्णपदानुगान् ॥ ४४
चिक्षेप शैलशिखरं कुम्भकर्णस्य मूर्धनि । स तेनाभिहतोऽत्यर्थं गिरिशृङ्गेण मूर्धनि ॥ ४५
कुम्भकर्णः प्रजज्वाल कोपेन महता तदा । सोऽभ्यधावत वेगेन वालिपुत्रममर्षणः ॥ ४६
कुम्भकर्णो महानादस्त्रासयन् सर्ववानरान् । शूलं ससर्ज वै रोषादङ्गदे स महाबलः ॥ ४७
तमापतन्तं बुद्ध्वा तु युद्धमार्गविशारदः । लाघवान्मोचयामास बलवान् वानरर्षभः ॥ ४८
उत्पत्य चैनं सहसा तलेनोरस्यताडयत् । स तेनाभिहतः कोपात् प्रमुमोहाचलोपमः ॥ ४९
स लब्धसंज्ञो बलवान् मुष्टिमावर्त्य राक्षसः । अपहस्तेन चिक्षेप विसंज्ञः स पपात ह ॥ ५०
तस्मिन् प्लवगशार्दूले विसंज्ञे पतिते भुवि । तच्छूलं समुपादाय सुग्रीवमभिदुद्रुवे ॥ ५१
तमापतन्तं संप्रेक्ष्य कुम्भकर्णं महाबलम् । उत्पपात तदा वीरः सुग्रीवो वानराधिपः ॥ ५२
पर्वताग्रं समुत्क्षिप्य समाविध्य महाकपिः । अभिदुद्राव वेगेन कुम्भकर्णं महाबलम् ॥ ५३
तमापतन्तं संप्रेक्ष्य कुम्भकर्णः प्लवङ्गमम् । तस्थौ विवृतसर्वाङ्गो वानरेन्द्रसमुन्मुखः ॥ ५४
कपिशोणितदिग्धाङ्गं भक्षयन्तं प्लवङ्गमान् । कुम्भकर्णं स्थितं दृष्ट्वा सुग्रीवो वाक्यमब्रवीत् ॥५५
पातिताश्च त्वया वीराः कृतं कर्म सुदुष्करम् । भक्षितानि च सैन्यानि प्राप्तं ते परमं यशः ॥
त्यज तद्वानरानीकं प्राकृतैः किं करिष्यसि । सहस्वैकनिपातं मे पर्वतस्यास्य राक्षस ॥ ५७
तद्वाक्यं हरिराजस्य सत्त्वधैर्यसमन्वितम् । श्रुत्वा राक्षसशार्दूलः कुम्भकर्णोऽब्रवीद्वचः ॥ ५८
प्रजापतेस्तु पौत्रस्त्वं तथैवर्क्षरजःसुतः । श्रुतपौरुषसंपन्नः तस्माद्गर्जसि वानर ॥ ५९

स कुम्भकर्णस्य वचो निशम्य व्याविध्य शैलं सहसा मुमोच ।
तेनाजघानोरसि कुम्भकर्णं शैलेन वज्राशनिसंनिभेन ॥ ६०

तच्छैलशृङ्गं सहसा विकीर्णं भुजान्तरे तस्य तदा विशाले ।
ततो विषेदुः सहसा प्लवङ्गा रक्षोगणाश्चापि मुदा विनेदुः ॥ ६१

स शैलशृङ्गाभिहतश्चुकोप ननाद कोपाच्च विवृत्य वक्त्रम् ।
व्याविध्य शूलं च तडित्प्रकाशं चिक्षेप हर्यृक्षपतेर्वधाय ॥ ६२

तत् कुम्भकर्णस्य भुजप्रविद्धं शूलं शितं काञ्चनदामजुष्टम् ।
क्षिप्तं समुत्पत्य निगृह्य दोर्भ्यां बभञ्ज वेगेन सुतोऽनिलस्य ॥ ६३

कृतं भारसहस्रस्य शूलं कालायसं महत् । बभञ्ज जानुन्यारोप्य प्रहृष्टः प्लवगर्षभः ॥ ६४

शूलं भग्नं हनुमता दृष्ट्वा वानरवाहिनी । हृष्टा ननाद बहुशः सर्वतश्चापि दुद्रुवे ॥ ६५

बभूवाथ परित्रस्तो राक्षसो विमुखोऽभवत्[1]। सिंहनादं च ते चक्रुः प्रहृष्टा वनगोचराः ॥ ६६
मारुतिं पूजयांचक्रुर्दृष्ट्वा शूलं तथागतम् ॥

स तत्तदा भग्नमवेक्ष्य शूलं चुकोप रक्षोऽधिपतिर्महात्मा ।
उत्पाट्य लङ्कामलयात् स शृङ्गं जघान सुग्रीवमुपेत्य तेन ॥ ६७

स शैलशृङ्गाभिहतो विसंज्ञः पपात भूमौ युधि वानरेन्द्रः ।
तं प्रेक्ष्य भूमौ पतितं विसंज्ञं नेदुः प्रहृष्टास्त्वथ यातुधानाः ॥ ६८

तमभ्युपेत्याद्भुतघोरवीर्यं स कुम्भकर्णो युधि वानरेन्द्रम् ।
जहार सुग्रीवमभिप्रगृह्य यथानिलो मेघमतिप्रचण्डः ॥ ६९

स तं महामेघनिकाशरूपमुत्पाट्य गच्छन् युधि कुम्भकर्णः ।
रराज मेरुप्रतिमानरूपो मेरुर्यथाभ्युच्छ्रितघोरशृङ्गः ॥ ७०

ततस्तमुत्पाट्य जगाम वीरः संस्तूयमानो युधि राक्षसेन्द्रैः ।
शृण्वन्निनादं त्रिदशालयानां प्लवङ्गराजग्रहविस्मितानाम् ॥ ७१

ततस्तमादाय तदा स मेने हरीन्द्रमिन्द्रोपममिन्द्रवीर्यः ।
अस्मिन् हृते सर्वमिदं हृतं स्यात् सराघवं सैन्यमितीन्द्रशत्रुः ॥ ७२

विद्रुतां वाहिनीं दृष्ट्वा वानराणां ततस्ततः । कुम्भकर्णेन सुग्रीवं गृहीतं चापि वानरम् ॥ ७३

हनुमांश्चिन्तयामास मतिमान् मारुतात्मजः । एवं गृहीते सुग्रीवे किं कर्तव्यं मया भवेत् ॥ ७४

यद्वै न्याय्यं मया कर्तुं तत् करिष्यामि सर्वथा । भूत्वा पर्वतसंकाशो नाशयिष्यामि राक्षसम् ॥

मया हते संयति कुम्भकर्णे महाबले मुष्टिविकीर्णदेहे ।
विमोचिते वानरपार्थिवे च भवन्तु हृष्टाः प्लवगाः समस्ताः ॥ ७६

अथवा स्वयमप्येष मोक्षं प्राप्स्यति पार्थिवः । गृहीतोऽयं यदि भवेत् त्रिदशैः सासुरोरगैः ॥७७

---

१. इदमर्धम् च. नास्ति ।

मन्ये न तावदात्मानं बुध्यते वानराधिपः । शैलप्रहाराभिहतः कुम्भकर्णेन संयुगे ॥ ७८
अयं मुहूर्तात् सुग्रीवो लब्धसंज्ञो महाहवे । आत्मनो वानरणां च यत्पथ्यं तत्करिष्यति ॥ ७९
मया तु मोक्षितस्यास्य सुग्रीवस्य महात्मनः । अप्रीतिश्च भवेत् कष्टा कीर्तिनाशश्च शाश्वतः ॥
तस्मान्मुहूर्तं काङ्क्षिष्ये विक्रमं पार्थिवस्य नः । भिन्नं च वानरानीकं तावदाश्वासयाम्यहम् ॥
इत्येवं चिन्तयित्वा तु हनुमान् मारुतात्मजः । भूयः संस्तम्भयामास वानराणां महाचमूम् ॥

स कुम्भकर्णोऽथ विवेश लङ्कां स्फुरन्तमादाय महाकपिं तम् ।
विमानचर्यागृहगोपुरस्थैः पुष्पाग्र्यवर्षैरवकीर्यमाणः ॥ ८३

लाजगन्धोदवर्षैस्तु सिच्यमाना शनैः शनैः । राजमार्गस्य शीतत्वात् संज्ञामाप महाबलः ॥८४

ततः स संज्ञामुपलभ्य कृच्छ्राद्बलीयसस्तस्य भुजान्तरस्थः ।
अवेक्षमाणः पुरराजमार्गं विचिन्तयामास मुहुर्महात्मा ॥ ८५
एवं गृहीतेन कथं नु नाम शक्यं मया संप्रतिकर्तुमद्य ।
तथा करिष्यामि यथा हरीणां भविष्यतीष्टं च हितं च कार्यम् ॥ ८६
ततः कराग्रैः सहसा समेत्य राजा हरीणाममरेन्द्रशत्रुम् ।
खरैश्च कर्णौ दशनैश्च नासां ददंश पार्श्वेषु च कुम्भकर्णम् ॥ ८७
स कुम्भकर्णो हृतकर्णनासो विदारितस्तेन विमर्दितश्च ।
रोषाभिभूतः क्षतजार्द्रगात्रः सुग्रीवमाविध्य पिपेष भूमौ ॥ ८८
स भूतले भीमबलाभिपिष्टः सुरारिभिस्तैरभिहन्यमानः ।
जगाम खं वेगवदभ्युपेत्य पुनश्च रामेण समाजगाम ॥ ८९

कर्णनासाविहीनस्तु कुम्भकर्णो महाबलः । रराज शोणितैः सिक्तो गिरिः प्रस्रवणैरिव ॥ ९०
शोणितार्द्रो महाकायो राक्षसो भीमविक्रमः । युद्धायाभिमुखो भूयो मनश्चक्रे महाबलः ॥ ९१
अमर्षाच्छोणितोद्गारी शुशुभे रावणानुजः । नीलाञ्जनचयप्रख्यः ससन्ध्य इव तोयदः ॥ ९२

गते तु तस्मिन् सुरराजशत्रुः क्रोधात् प्रदुद्राव रणाय भूयः ।
अनायुधोऽस्मीति विचिन्त्य रौद्रो घोरं तदा मुद्गरमाससाद ॥ ९३
ततः स पुर्याः सहसा महौजा निष्क्रम्य तद्वानरसैन्यमुग्रम् ।
तेनैव रूपेण बभञ्ज रुष्टः प्रहारमुष्ट्या च पदेन सद्यः[1] ॥ ९४
बभक्ष रक्षो युधि कुम्भकर्णः प्रजा युगान्ताग्निरिव प्रदीप्तः ।
बुभुक्षितः शोणितमांसगृध्नुः प्रविश्य तद्वानरसैन्यमुग्रम् ॥ ९५

---

१. इदमर्धम् पुना. नास्ति ।

चखाद रक्षांसि हरीन् पिशाचानृक्षांश्च मोहाद्युधि कुम्भकर्णः ।
यथैव मृत्युर्हरते युगान्ते स भक्षयामास हरींश्च मुख्यान् ॥ ९६
एकं द्वौ त्रीन् बहून् क्रुद्धो वानरान् सह राक्षसैः । समादायैकहस्तेन प्रचिक्षेप त्वरन् मुखे ॥
संप्रस्रवंस्तदा मेदः शोणितं च महाबलः । वध्यमानो नगेन्द्राग्रैर्भक्षयामास वानरान् ॥ ९८
ते भक्ष्यमाणा हरयो रामं जग्मुस्तदा गतिम् । कुम्भकर्णो भृशं क्रुद्धः कपीन् खादन् प्रधावति॥
शतानि सप्त चाष्टौ च विंशत् त्रिंशत्तथैव च । संपरिष्वज्य बाहुभ्यां खादन् विपरिधावति॥१००
मेदोवसाशोणितदिग्धगात्रः कर्णावसक्तग्रथितान्त्रमालः ।
ववर्ष शूलानि सुतीक्ष्णदंष्ट्रः कालो युगान्ताग्निरिव प्रवृद्धः[१] ॥ १०१
तस्मिन् काले सुमित्रायाः पुत्रः परबलार्दनः । चकार लक्ष्मणः क्रुद्धो युद्धं परपुरंजयः ॥१०२
स कुम्भकर्णस्य शरान्शरीरे सप्त वीर्यवान् । निचखानाददे बाणान् विससर्ज च लक्ष्मणः ॥
भिद्यमानस्तदा तैस्तु विषेहे तत् स राक्षसः[२] । ततश्चुकोप बलवान् सुमित्रानन्दवर्धनः ॥ १०४
अथास्य कवचं शुभ्रं जाम्बूनदमयं शुभम् । प्रच्छादयामास शरैः सन्ध्याभ्रैरिव[३] मारुतः[1] ॥१०५
नीलाञ्जनचयप्रख्यैः शरैः काञ्चनभूषणैः । आच्छाद्यमानः[४] शुशुभे मेघैः सूर्य इवांशुमान्[2]॥
ततः स राक्षसो भीमः सुमित्रानन्दवर्धनम् । सावज्ञमेवं प्रोवाच वाक्यं मेघौघनिःस्वनम् ॥१०७
अन्तकस्यापि क्रुद्धस्य भयदातारमाहवे । युध्यता मामभीतेन ख्यापिता वीरता त्वया ॥ १०८
प्रगृहीतायुधस्येव मृत्योरिव महामृधे । तिष्ठन्नप्यग्रतः पूज्यः किमु[५] युद्धप्रदायकः ॥ १०९
ऐरावतगजारूढो वृतः सर्वामरैः प्रभुः । नैव शक्रोऽपि समरे स्थितपूर्वः कदाचन ॥ ११०

1. अभ्रैरिव मारुत इति प्रसिद्धा लोकोक्तिः । अतोऽप्रयुक्तमपि गगनमिति कर्मवाचि पदमस्ति । शुभ्रमिति उपमेयकवचविशेषणबलादपि तद्गुणविशिष्टं गगनमेवोपस्थाप्यते । गगनं चावाङ्मुखीभूतमहाकटाहकल्पं लोकैः प्रतीयत इति तेन यथाप्रतीयमानेन कुम्भकर्णवक्षस्यवाङ्मुखनिबद्धस्य महतः कवचस्योपमा युक्ता । तत्रेन्द्रनीलसवर्णतया प्रतीयमानस्य नभसः सुवर्णमयस्य कवचस्य च रूपतो वैसादृश्यं परिहर्तुं सन्ध्येत्यभ्रविशेषणम् । तेन सन्ध्याभ्रकरणकप्रकृताच्छादनक्रियासाध्यं सादृश्यमादायोपमितिक्रिया निष्पादनीया । शुभ्रं कवचमस्येति । कवचमात्रमिदं शुभ्रं लक्ष्यते ; यस्य तु संबन्धि कवचं सोऽस्य प्रतिसंबन्धी कुम्भकर्णोऽशुभ्र एवेति भावः । यथा लोके मारुतः कुतोऽपि सहसा समूह्य मेघान् गगनमाच्छादयति तथा शरजालेन लक्ष्मणः कुम्भकर्णस्य कवचमाच्छादयामासेत्यर्थः । सन्ध्याभ्रैरिव तोयद इति पाठेऽपि तोयं प्रयच्छति अवखण्डयतीति वा व्युत्पाद्य मारुत एव व्याख्येयः ॥

2. स्वभावत एवांशुमानपि सूर्यो यदा मेघैराच्छाद्यते तदा तदंशुविच्छुरणात् उद्गच्छत्किरणाङ्कुरैरिव स्थितैर्मेघैराच्छाद्यमानः शोभते यथा तथा काञ्चनभूषणैर्मेघसवर्णैः शरैराच्छाद्यमानः कुम्भकर्णः शुशुभ इत्यर्थः ॥

१. प्रदीप्तः ङना. ।
२. अस्य स्थाने—पीड्यमानस्तदस्त्रं तु विशेषं तत् स राक्षसः—इति ति. ।
३. तोयदः च. छ. ।
४. आपीयमानः घ. आवार्यमाणः छ. ।
५. को मे च. छ. ।

शृणु मे वीर संक्षोभं श्लाघनीयोऽसि मे रिपुः[१]। अद्य त्वयाहं सौमित्रे [२]बालेनापि पराक्रमैः ॥
तोषितो गन्तुमिच्छामि त्वामनुज्ञाप्य राघवम्। सत्त्वधैर्यबलोत्साहैस्तोषितोऽहं रणे त्वया ॥
राममेवैकमिच्छामि हन्तुं यस्मिन् हते हतम्। रामे मया चेन्निहते येऽन्ये स्थास्यन्ति संयुगे ॥
तानहं योधयिष्यामि स्वबलेन प्रमाथिना। इत्युक्तवाक्यं तद्रक्षः प्रोवाच स्तुतिसंहितम् ॥ ११४
मृधे घोरतरं[1] वाक्यं सौमित्रिः प्रहसन्निव। यत्त्वं[३] शक्रादिभिर्देवैरसह्यः प्राप्य पौरुषम्[४] ॥ ११५
तत् सत्यं नान्यथा वीर दृष्टस्तेऽद्य पराक्रमः। एष दाशरथी रामस्तिष्ठत्यद्रिरिवापरः[५] ॥ ११६
मनोरथो रात्रिचर[2] तत्समीपे भविष्यति[६]। इति श्रुत्वा ह्यनादृत्य लक्ष्मणं स निशाचरः ॥ ११७
अतिक्रम्य च सौमित्रिं कुम्भकर्णो महाबलः। राममेवाभिदुद्राव दारयन्निव मेदिनीम् ॥ ११८
अथ दाशरथी रामो रौद्रमस्त्रं प्रयोजयन्। कुम्भकर्णस्य हृदये ससर्ज निशिताञ्शरान् ॥ ११९
तस्य रामेण विद्धस्य सहसाभिप्रधावतः। अङ्गारमिश्राः क्रुद्धस्य मुखान्निश्चेरुरर्चिषः ॥ १२०
रामास्त्रविद्धो घोरं वै नदन् राक्षसपुंगवः। अभ्यधावत संक्रुद्धो हरीन् विद्रावयन् रणे ॥ १२१
तस्योरसि निमग्नाश्च शरा बर्हिणवाससः[७]। हस्ताच्चापि परिभ्रष्टा पपातोर्व्यां महाबलः ॥ १२२
आयुधानि च सर्वाणि विप्रकीर्यन्त भूतले। स निरायुधमात्मानं यदा मेने महाबलः ॥ १२३
मुष्टिभ्यां चरणाभ्यां च चकार कदनं महत्। स बाणैरतिविद्धाङ्गः क्षतजेन समुक्षितः ॥ १२४
रुधिरं प्रतिसुस्राव गिरिः प्रस्रवणं यथा। स तीव्रेण च कोपेन रुधिरेण च मूर्छितः ॥ १२५
वानरान् राक्षसानृक्षान् खादन् विपरिधावति। अथ शृङ्गं समाविध्य भीमं भीमपराक्रमः ॥
चिक्षेप राममुद्दिश्य बलवानन्तकोपमः। अप्राप्तमन्तरा रामः सप्तभिस्तैरजिह्मगैः ॥ १२७
शरैः काञ्चनचित्राङ्गैश्चिच्छेद पुरुषर्षभः। तन्मेरुशिखराकारं द्योतमानमिव श्रिया ॥ १२८
द्वे शते वानरेन्द्राणां पतमानमपातयत्। तस्मिन् काले स धर्मात्मा लक्ष्मणो वाक्यमब्रवीत् ॥
कुम्भकर्णवधे युक्तो योगान् परिमृशन् बहून्। नैवायं वानरान् राजन्नापि जानाति राक्षसान् ॥
मत्तः शोणितगन्धेन स्वान् परांश्चैव खादति। साध्वेनमधिरोहन्तु सर्वे ते वानरर्षभाः ॥ १३१
यूथपाश्च[3] यथा मुख्यास्तिष्ठन्त्वस्य समन्ततः। अप्ययं दुर्मतिः काले गुरुभारप्रपीडितः ॥ १३२
प्रपतन् राक्षसो भूमौ नान्यान् हन्यात् प्लवङ्गमान्। तस्य तद्वचनं श्रुत्वा राजपुत्रस्य धीमतः ॥

---

1. घोरतरमिति रक्षसो विशेषणम्।

2. हे रात्रिचर! रामस्य निकटे तव मनोरथः फलिष्यति इतीयं प्रहासोक्तिः।

3. यथामुख्या इत्यत्र यथेति विभज्य यथायोगमिति स्थानक्रियाविशेषणं योजितं व्याख्यानेषु ॥

१. इदमर्धम् च. नास्ति ।

२. बलेन च. छ. ।

३. यस्त्वम् च. ।

४. असह्यं प्राह पौरुषम् च. छ. ।

५. अचलः घ. पुना ।

६. इदमर्धम् च. नास्ति ।

७. अस्यानन्तरम् — रेजुर्नीलाद्रिनिकटे प्रवृत्तस्येव [नृत्यन्त इव] बर्हिणः—इति छ. ।

ते समारुरुहुर्हृष्टाः कुम्भकर्णं प्लवङ्गमाः । कुम्भकर्णस्तु संक्रुद्धः समारूढः प्लवङ्गमैः ॥ १३४
व्यधूनयत्तान् वेगेन दुष्टहस्तीव हस्तिपान् । तान् दृष्ट्वा निर्धुतान् रामो[1] दुष्टोऽयमिति राक्षसः॥
समुत्पपात वेगेन धनुरुत्तममाददे । क्रोधताम्रेक्षणो वीरो निर्दहन्निव चक्षुषा ॥ १३६
राघवो राक्षसं रोषादभिदुद्राव वेगितः । यूथपान् हर्षयन् सर्वान् कुम्भकर्णभयार्दितान् ॥१३७

स चापमादाय भुजङ्गकल्पं दृढज्यमुग्रं तपनीयचित्रम् ।
हरीन् समाश्वस्य समुत्पपात रामो निबद्धोत्तमतूणबाणः ॥ १३८

स वानरगणैस्तैस्तु वृतः परमदुर्जयः । लक्ष्मणानुचरो रामः संप्रतस्थे महाबलः ॥ १३९
स ददर्श महात्मानं किरीटिनमरिंदमम् । शोणिताप्लुतसर्वाङ्गं कुम्भकर्णं महाबलम् ॥ १४०
सर्वान् समभिधावन्तं यथा रुष्टं दिशागजम् । मार्गमाणं हरीन् क्रुद्धं राक्षसैः परिवारितम् ॥
विन्ध्यमन्दरसंकाशं काञ्चनाङ्गदभूषणम् । स्रवन्तं रुधिरं वक्त्राद्वर्षमेघमिवोत्थितम् ॥ १४२
जिह्वया परिलिह्यन्तं शोणितं शोणितेक्षणम् । मृद्गन्तं वानरानीकं कालन्तकयमोपमम् ॥ १४३
तं दृष्ट्वा राक्षसश्रेष्ठं प्रदीप्तानलवर्चसम् । विस्फारयामास तदा कार्मुकं पुरुषर्षभः ॥ १४४
स तस्य चापनिर्घोषात् कुपितो राक्षसर्षभः । अमृष्यमाणस्तं घोषमभिदुद्राव राघवम् ॥ १४५
पुरस्ताद्राघवस्यार्थे गदायुक्तो विभीषणः । अभिदुद्राव वेगेन भ्राता भ्रातरमाहवे ॥ १४६
विभीषणं पुरो दृष्ट्वा कुम्भकर्णोऽब्रवीदिदम् । प्रहरस्व रणे शीघ्रं क्षत्रधर्मे स्थिरो भव ॥ १४७
भ्रातृस्नेहं परित्यज्य राघवस्य प्रियं कुरु । असत्कार्यं कृतं वत्स यस्त्वं राममुपागतः ॥ १४८
त्वमेको रक्षसां लोके सत्यधर्माभिरक्षिता[2] । नास्ति धर्माभिरक्तानां व्यसनं तु कदाचन ॥
संतानार्थं त्वमेवैकः कुलस्यास्य भविष्यसि । राघवस्य प्रसादात्त्वं रक्षसां राज्यमाप्स्यसि ॥१५०
प्रकृत्या मम दुर्धर्ष शीघ्रं मार्गादपक्रम[3] । न स्थातव्यं पुरस्तान्मे संभ्रमान्नष्टचेतसः ॥ १५१
न वेद्मि संयुगे शक्तः स्वान् परान् वा निशाचर । रक्षणीयोऽसि मे वत्स सत्यमेतद्ब्रवीमि ते ॥
एवमुक्तो वचस्तेन कुम्भकर्णेन धीमता । विभीषणो महाबाहुः कुम्भकर्णमुवाच ह ॥ १५३
गदितं मे कुलस्यास्य रक्षणार्थमरिंदम । न श्रुतं[4] सर्वरक्षोभिस्ततोऽहं राममागतः[5] ॥ १५४
एवमुक्त्वाश्रुपूर्णाक्षो गदापाणिर्विभीषणः । एकान्तमाश्रितो भूत्वा चिन्तयामास संस्थितः[6] ॥

ततस्तु वातोद्धतमेघकल्पं भुजङ्गराजोत्तमभोगबाहुम् ।
तमापतन्तं धरणीधराभमुवाच रामो युधि कुम्भकर्णम् ॥ १५६

१. रुष्टः पुनः ।
२. रक्षितः प्र. ।
३. अस्य स्थाने—श्रुत्वा मम वचो भ्रात[तः] शीघ्रं मार्गादपाकुरु—इति ग. ।
४. कृतम् ग. ।
५. अस्यानन्तरम्—कृतं तु तन्महाभा[ग] सुकृतं दुष्कृतं तु वा—इति छ. ।
६. पुरस्तात् (१४६) इत्यादि संस्थित इत्यन्तम् च. नास्ति ।

आगच्छ रक्षोऽधिप[1] मा विषादमवस्थितोऽहं प्रगृहीतचापः ।
अवेहि मां शक्रसपत्न रामं मया मुहूर्ताद्भविता विचेताः ॥ १५७

रामोऽयमिति विज्ञाय जहास विकृतस्वनम् । अभ्यधावत संक्रुद्धो हरीन् विद्रावयन् रणे ॥
पातयन्निव सर्वेषां हृदयानि वनौकसाम् । प्रहस्य विकृतं भीमं स मेघस्तनितोपमम् ॥ १५९
कुम्भकर्णो महातेजा राघवं वाक्यमब्रवीत् । नाहं विराधो विज्ञेयो न कबन्धः खरो न च ॥
न वाली न च मारीचः कुम्भकर्णोऽहमागतः । पश्य मे मुद्गरं घोरं सर्वकालायसं महत् ॥
अनेन निर्जिता देवा दानवाश्च पुरा मया । [2]विकर्णनास इति मां नावज्ञातुं त्वमर्हसि ॥१६२
स्वल्पापि हि न मे पीडा कर्णनासाविनाशनात् । दर्शयेक्ष्वाकुशार्दूल वीर्यं गात्रेषु मे लघु ॥
ततस्त्वां भक्षयिष्यामि दृष्टपौरुषविक्रमम् ॥

स कुम्भकर्णस्य वचो निशम्य रामः सुपुङ्खान् विससर्ज बाणान् ।
तैराहतो वज्रसमप्रवेगैर्न चुक्षुभे न व्यथते सुरारिः ॥ १६४
यैः सायकैः सालवरा निकृत्ता वाली हतो वानरपुंगवश्च ।
ते कुम्भकर्णस्य तदा शरीरे वज्रोपमा न व्यथयांबभूवुः ॥ १६५
स वारिधारा इव सायकांस्तान् पिबञ्शरीरेण महेन्द्रशत्रुः ।
जघान रामस्य शरप्रवेगं व्याविध्य तं मुद्गरमुग्रवेगम् ॥ १६६
ततस्तु रक्षः क्षतजानुलिप्तं वित्रासनं देवमहाचमूनाम् ।
विव्याध तं मुद्गरमुग्रवेगं विद्रावयामास चमूं हरीणाम् ॥ १६७
वायव्यमादाय ततो वरास्त्रं रामः प्रचिक्षेप निशाचराय ।
समुद्गरं तेन जघान बाहुं स कृत्तबाहुस्तुमुलं ननाद ॥ १६८
स तस्य बाहुर्गिरिशृङ्गकल्पः समुद्गरो राघवबाणकृत्तः ।
पपात तस्मिन् हरिराजसैन्ये जघान तां वानरवाहिनीं च ॥ १६९
ते वानरा भग्नहतावशेषाः पर्यन्तमाश्रित्य तदा विषण्णाः ।
प्रवेपिताङ्गा ददृशुः सुघोरं नरेन्द्ररक्षोऽधिपसंनिपातम् ॥ १७०
स कुम्भकर्णोऽस्त्रनिकृत्तबाहुर्महेन्द्रकृत्ताग्र[१] इवाचलेन्द्रः ।
उत्पाटयामास करेण वृक्षं ततोऽभिदुद्राव रणे नरेन्द्रम् ॥ १७१
स तस्य बाहुं सहसालवृक्षं समुद्यतं पन्नगभोगकल्पम् ।
ऐन्द्रास्त्रयुक्तेन जघान रामो बाणेन जाम्बूनदचित्रितेन ॥ १७२

1. मा विषादमिति ; गच्छेत्यनुषङ्गः ।
2. विकर्णनास इति । विकृतकर्णनास इत्यर्थः । एतेन 'कुण्डलालंकृतम्' इत्यादेः कुण्डलविनाकृतमित्यादितिलकव्याख्याक्लेशोऽग्रे (१८२) नात्यन्तमादरणीय इति द्रष्टव्यम् ।

१. महान् निकृत्ताग्रः च. ।

स कुम्भकर्णस्य भुजो निकृत्तः पपात भूमौ गिरिसंनिकाशः ।
विवेष्टमानोऽभिजघान वृक्षाञ्शैलाञ्शिला वानरराक्षसांश्च ॥ १७३

तं छिन्नबाहुं समवेक्ष्य रामः समापतन्तं सहसा नदन्तम् ।
द्वावर्धचन्द्रौ निशितौ प्रगृह्य चिच्छेद पादौ युधि राक्षसस्य ॥ १७४

तौ तस्य पादौ प्रदिशो दिशश्च गिरीन् गुहाश्चैव महार्णवं च ।
लङ्कां च सेनां कपिराक्षसानां विनादयन्तौ विनिपेततुश्च ॥ १७५

निकृत्तबाहुर्विनिकृत्तपादो विदार्य वक्त्रं बडबामुखाभम् ।
दुद्राव रामं सहसाभिगर्जन् राहुर्यथा चन्द्रमिवान्तरिक्षे ॥ १७६

अपूरयत्तस्य मुखं शिताग्रै रामः शरैर्हेमपिनद्धपुङ्खैः ।
स पूर्णवक्त्रो न शशाक वक्तुं चुकूज कृच्छ्रेण मुमोह चापि ॥ १७७

अथाददे सूर्यमरीचिकल्पं स ब्रह्मदण्डान्तककालकल्पम् ।
अरिष्टमैन्द्रं निशितं सुपुङ्खं रामः शरं मारुततुल्यवेगम् ॥ १७८

तं वज्रजाम्बूनदचारुपुङ्खं प्रदीप्तसूर्यज्वलनप्रकाशम् ।
महेन्द्रवज्राशनितुल्यवेगं रामः प्रचिक्षेप निशाचराय ॥ १७९

स सायको राघवबाहुचोदितो दिशः स्वभासा दश संप्रकाशयन् ।
विधूमवैश्वानरदीप्तदर्शनो जगाम शक्राशनिवीर्यविक्रमः ॥ १८०

स तन्महापर्वतकूटसंनिभं निवृत्तदंष्ट्रं चलचारुकुण्डलम् ।
चकर्त रक्षोऽधिपतेः शिरस्तथा यथैव वृत्रस्य पुरा पुरंदरः ॥ १८१

कुम्भकर्णशिरो भाति कुण्डलालंकृतं महत् । [1]आदित्येऽभ्युदिते रात्रौ मध्यस्थ इव चन्द्रमाः ॥

तद्रामबाणाभिहतं पपात रक्षःशिरः पर्वतसंनिकाशम् ।
बभञ्ज चर्यागृहगोपुराणि प्राकारमुच्चं तमपातयच्च ॥ १८३

न्यपतत् कुम्भकर्णोऽथ स्वकायेन निपातयन् । प्लवङ्गमानां कोट्यश्च परितः संप्रधावताम् ॥

तच्चातिकायं हिमवत्प्रकाशं रक्षस्ततस्तोयनिधौ पपात ।
ग्राहान् वरान् मीनवरान् भुजङ्गान् ममर्द भूमिं च तदा विवेश ॥ १८५

तस्मिन् हते ब्राह्मणदेवशत्रौ महाबले संयति कुम्भकर्णे ।
चचाल भूर्भूमिधराश्च सर्वे हर्षाच्च देवास्तुमुलं प्रणेदुः ॥ १८६

1. आदित्ये अदितिदेवताके पुनर्वसुनक्षत्रे भाति कुम्भकर्णस्य शिर इति श्रीगोविन्दराजः ॥ अभ्युदिते तयोः पुनर्वस्वोर्मध्ये विद्यमानश्चन्द्रमा इव

ततस्तु देवर्षिमहर्षिपन्नगाः सुराश्च भूतानि सुपर्णगुह्यकाः ।
सयक्षगन्धर्वगणा नभोगताः प्रहर्षिता रामपराक्रमेण ॥ १८७
ततस्तु ते तस्य वधेन भूरिणा मनस्विनो नैर्ऋतराजबान्धवाः ।
विनेदुरुच्चैर्व्यथिता रघूत्तमं हरिं समीक्ष्यैव यथा सुरार्दिताः ॥ १८८
स देवलोकस्य तमो निहत्य सूर्यो यथा राहुमुखाद्विमुक्तः ।
तथा व्यभासीद्भुवि वानरौघे निहत्य रामो युधि कुम्भकर्णम् ॥ १८९
प्रहर्षमीयुर्बहवस्तु वानराः प्रबुद्धपद्मप्रतिमैरिवाननैः ।
अपूजयन् राघवमिष्टभागिनं हते रिपौ भीमबले दुरासदे ॥ १९०
स कुम्भकर्णं सुरसङ्घमर्दनं महत्सु युद्धेषु पराजितश्रमम् ।
ननन्द हत्वा भरताग्रजो रणे महासुरं वृत्रमिवामराधिपः ॥ १९१

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
युद्धकाण्डे कुम्भकर्णवधो नाम सप्तषष्टितमः सर्गः

---

## अष्टषष्टितमः सर्गः

### रावणानुशोकः

कुम्भकर्णं हतं दृष्ट्वा राघवेण महात्मना । राक्षसा राक्षसेन्द्राय रावणाय न्यवेदयन् ॥ १
राजन् स कालसंकाशः संयुक्तः कालधर्मणा[1] । विद्राव्य वानरीं सेनां भक्षयित्वा च वानरान् ॥ २
प्रतपित्वा[2] मुहूर्तं च प्रशान्तो रामतेजसा । कायेनार्धप्रविष्टेन समुद्रं भीमदर्शनम् ॥ ३
निकृत्तकण्ठोरुभुजो विक्षरन् रुधिरं बहु । रुद्ध्वा द्वारं शरीरेण लङ्कायाः पर्वतोपमः ॥ ४
कुम्भकर्णस्तव भ्राता काकुत्स्थशरपीडितः । अगण्डभूतो[3] विकृतो दावदग्ध इव द्रुमः[4] ॥ ५
ममार राक्षसो घोरः कुम्भकर्णो महाद्युतिः[5] । तं श्रुत्वा निहतं संख्ये कुम्भकर्णं महाबलम् ॥ ६
रावणः शोकसंतप्तो मुमोह च पपात च । पितृव्यं निहतं श्रुत्वा देवान्तकनरान्तकौ ॥ ७
त्रिशिराश्चातिकायश्च रुरुदुः शोकपीडिताः । भ्रातरं निहतं श्रुत्वा रामेणाक्लिष्टकर्मणा ॥ ८
महोदरमहापार्श्वौ शोकाक्रान्तौ बभूवतुः । ततः कृच्छ्रात् समासाद्य संज्ञां राक्षसपुंगवः ॥ ९
कुम्भकर्णवधाद्दीनो विललाप स रावणः । हा वीर रिपुदर्पघ्न कुम्भकर्ण महाबल ॥ १०

१. कालकर्मणा छ. ।
२. योधयित्वा क. ग. घ. ।
३. कबन्धभूतः क. ।
४. इवाचलः क. ख. घ. ।
५. इदमर्धम् घ. नास्ति ।

त्वं मां विहाय वै दैवाद्यातोऽसि यमसादनम् । मम शल्यमनुद्धृत्य बान्धवानां महाबल ॥ ११
शत्रुसैन्यं प्रताप्यैकः क्व मां संत्यज्य गच्छसि । इदानीं खल्वहं नास्मि यस्य मे दक्षिणो भुजः ॥
पतितो यं समाश्रित्य न बिभेमि सुरासुरात् । कथमेवंविधो वीरो देवदानवदर्पहा ॥ १३
कालाग्निरुद्रप्रतिमो राघवेण रणे हतः । यस्य ते वज्रनिष्पेषो न कुर्याद्व्यसनं सदा ॥ १४
स कथं रामबाणार्तः प्रसुप्तोऽसि महीतले । एते देवगणाः सार्धमृषिभिर्गगने स्थिताः ॥ १५
निहतं त्वां रणे दृष्ट्वा निनदन्ति प्रहर्षिताः । ध्रुवमद्यैव संहृष्टा लब्धलक्षाः प्लवङ्गमाः ॥ १६
आरोक्ष्यन्ति हि दुर्गाणि लङ्काद्वाराणि सर्वशः । राज्येन नास्ति मे कार्यं किं करिष्यामि सीतया ॥
कुम्भकर्णविहीनस्य जीविते नास्ति मे रतिः । यद्यहं भ्रातृहन्तारं न हन्मि युधि राघवम् ॥ १८
ननु मे मरणं श्रेयो न चेदं व्यर्थजीवितम् । अद्यैव तं गमिष्यामि देशं यत्रानुजो मम ॥ १९
न हि भ्रातॄन् समुत्सृज्य क्षणं जीवितुमुत्सहे । देवा हि मां हसिष्यन्ति दृष्ट्वा पूर्वापकारिणम् ॥
कथमिन्द्रं जयिष्यामि कुम्भकर्ण हते त्वयि । तदिदं मामनुप्राप्तं विभीषणवचः शुभम् ॥ २१
यदज्ञानान्मया तस्य न गृहीतं महात्मनः । विभीषणवचो यावत् कुम्भकर्णप्रहस्तयोः ॥ २२
विनाशोऽयं समुत्पन्नो मां व्रीडयति दारुणः । तस्यायं कर्मणः प्राप्तो विपाको मम शोकदः ॥
यन्मया धार्मिकः श्रीमान् स निरस्तो विभीषणः ॥

इति बहुविधमाकुलान्तरात्मा कृपणमतीव विलप्य कुम्भकर्णम् ।
न्यपतदथ दशाननो भृशार्तस्तमनुजमिन्द्ररिपुं हतं विदित्वा ॥ २४

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
युद्धकाण्डे रावणानुशोको नाम अष्टषष्टितमः सर्गः

## एकोनसप्ततितमः सर्गः

### नरान्तकवधः

एवं विलपमानस्य रावणस्य दुरात्मनः । श्रुत्वा शोकाभितप्तस्य त्रिशिरा वाक्यमब्रवीत् ॥ १
एवमेव महावीर्यो हतो नस्तातमध्यमः । न तु सत्पुरुषा राजन् विलपन्ति यथा भवान् ॥ २
नूनं त्रिभुवनस्यापि पर्याप्तस्त्वमसि प्रभो । स कस्मात् प्राकृत इव शोचस्यात्मानमीदृशम् ॥ ३
ब्रह्मदत्तास्ति ते शक्तिः कवचः सायको धनुः । सहस्रखरसंयुक्तो रथो मेघस्वनो महान् ॥ ४
त्वयासकृद्विशस्त्रेण विशस्ता देवदानवाः । स सर्वायुधसंपन्नो राघवं शास्तुमर्हसि ॥ ५
कामं तिष्ठ महाराज निर्गमिष्याम्यहं रणम् । उद्धरिष्यामि ते शत्रून् गरुडः पन्नगानिव ॥ ६
शम्बरो देवराजेन नरको विष्णुना यथा । तथाद्य शयिता रामो मया युधि निपातितः ॥ ७
श्रुत्वा त्रिशिरसो वाक्यं रावणो राक्षसाधिपः । पुनर्जातमिवात्मानं मन्यते कालचोदितः ॥ ८

श्रुत्वा त्रिशिरसो वाक्यं देवान्तकनरान्तकौ। अतिकायश्च तेजस्वी बभूवुर्युद्धहर्षिताः ॥ ९
ततोऽहमहमित्येव गर्जन्तो नैर्ऋतर्षभाः। रावणस्य सुता वीराः शक्रतुल्यपराक्रमाः ॥ १०
अन्तरिक्षगताः सर्वे सर्वे मायाविशारदाः। सर्वे त्रिदशदर्पघ्नाः सर्वे च रणदुर्जयाः ॥ ११
सर्वे सुबलसंपन्नाः सर्वे विस्तीर्णकीर्तयः। सर्वे समरमासाद्य न श्रूयन्ते पराजिताः ॥ १२
देवैरपि सगन्धर्वैः सकिन्नरमहोरगैः। सर्वेऽस्त्रविदुषो वीराः सर्वे युद्धविशारदाः ॥ १३
सर्वे प्रवरविज्ञानाः सर्वे लब्धवरास्तथा ॥

स तैस्तदा भास्करतुल्यवर्चसैः सुतैर्वृतः शत्रुबलप्रमर्दनैः।
रराज राजा मघवान् यथामरैर्वृतो महादानवदर्पनाशनैः ॥ १४

स पुत्रान् संपरिष्वज्य भूषयित्वा च भूषणैः। आशीर्भिश्च प्रशस्ताभिः प्रेषयामास संयुगे ॥
युद्धोन्मत्तं च मत्तं च भ्रातरौ चापि रावणः। महापार्श्वं प्रमत्तं च भ्रातरं च महोदरम्[1] ॥ १६
रक्षणार्थं कुमाराणां प्रेषयामास संयुगे। तेऽभिवाद्य महात्मानं रावणं रिपुरावणम् ॥ १७
कृत्वा प्रदक्षिणं चैव महाकायाः प्रतस्थिरे। सर्वौषधीभिर्गन्धैश्च समालभ्य महाबलाः ॥ १८
निर्जग्मुर्नैर्ऋतश्रेष्ठाः षडेते युद्धकाङ्क्षिणः। त्रिशिराश्चातिकायश्च देवान्तकनरान्तकौ ॥ १९
महोदरमहापार्श्वौ निर्जग्मुः कालचोदिताः। ततः सुदर्शनं नागं नीलजीमूतसंनिभम् ॥ २०
ऐरावतकुले जातमारुरोह महोदरः। सर्वायुधसमायुक्तः तूणीभिश्च स्वलंकृतः[2] ॥ २१
रराज गजमास्थाय सवितेवास्तमूर्धनि। हयोत्तमसमायुक्तं सर्वायुधसमाकुलम् ॥ २२
आरुरोह रथश्रेष्ठं त्रिशिरा रावणात्मजः। त्रिशिरा रथमास्थाय विरराज धनुर्धरः ॥ २३
सविद्युदुल्कः शैलाग्रे सेन्द्रचाप इवाम्बुदः। त्रिभिः किरीटैः शुशुभे त्रिशिराः स रथोत्तमे ॥ २४
हिमवानिव शैलेन्द्रस्त्रिभिः काञ्चनपर्वतैः। अतिकायोऽपि तेजस्वी राक्षसेन्द्रसुतस्तदा ॥ २५
आरुरोह रथश्रेष्ठं श्रेष्ठः सर्वधनुष्मताम्। सुचक्राक्षं सुसंयुक्तं स्वनुकर्षं सुकूबरम् ॥ २६
तूणीबाणासनैर्दीप्तं प्रासासिपरिघाकुलम्। स काञ्चनविचित्रेण मकुटेन विराजता ॥ २७
भूषणैश्च बभौ मेरुः किरणैरिव भास्वतः[3]। स रराज रथे तस्मिन् राजसूनुर्महाबलः ॥ २८
वृतो नैर्ऋतशार्दूलैर्वज्रपाणिरिवामरैः। हयमुच्चैःश्रवःप्रख्यं श्वेतं कनकभूषणम् ॥ २९
मनोजवं महाकायमारुरोह नरान्तकः। गृहीत्वा प्रासमुल्काभं विरराज नरान्तकः ॥ ३०
शक्तिमादाय तेजस्वी गुहः शिखिगतो यथा। देवान्तकः समादाय परिघं वज्रभूषणम् ॥ ३१
परिगृह्य गिरिं दोर्भ्यां वपुर्विष्णोर्विडम्बयन्। महापार्श्वो महाकायो गदामादाय वीर्यवान् ॥ ३२
विरराज गदापाणिः कुबेर इव संयुगे। प्रतस्थिरे महात्मानो बलैरप्रतिमैर्वृताः ॥ ३३
सुरा इवामरावत्या बलैरप्रतिमैर्वृताः। तान् गजैश्च तुरङ्गैश्च रथैश्चाम्बुदनिस्वनैः ॥ ३४

१. इदमर्धम् च. छ. नास्ति। च. छ.।
२. सर्वायुधसमायुक्तं तूणीभिश्च स्वलंकृतम् ३. भासयन् च.।

अनुजग्मुर्महात्मानो[1] राक्षसाः प्रवरायुधाः । ते विरेजुर्महात्मानः कुमाराः सूर्यवर्चसः ॥ ३५
किरीटिनः श्रिया जुष्टा ग्रहा दीप्ता इवाम्बरे । प्रगृहीता बभौ तेषां छत्राणामावलिः सिता ॥
शारदाभ्रप्रतीकाशा हंसावलिरिवाम्बरे । मरणं वापि निश्चित्य शत्रूणां वा पराजयम् ३७
इति कृत्वा मतिं वीरा निर्जग्मुः संयुगार्थिनः । जगर्जुश्च प्रणेदुश्च चिक्षिपुश्चापि सायकान् ॥
जगृहुश्चापि ते वीरा निर्यान्तो युद्धदुर्मदाः । क्ष्वेलितास्फोटनिनदैश्चचाल च वसुंधरा ॥ ३९
रक्षसां सिंहनादैश्च पुस्फोटेव तदाम्बरम् । तेऽभिनिष्क्रम्य मुदिता राक्षसेन्द्रा महाबलाः ॥४०
ददृशुर्वानरानीकं समुद्यतशिलानगम् । हरयोऽपि महात्मानो ददृशुर्नैर्ऋतं बलम् ॥ ४१
हस्त्यश्वरथसंबाधं किङ्किणीशतनादितम् । नीलजीमूतसंकाशं समुद्यतमहायुधम् ॥ ४२
दीप्तानलरविप्रख्यैः सर्वतो नैर्ऋतैर्वृतम् । तद्दृष्ट्वा बलमायान्तं लब्धलक्षाः प्लवङ्गमाः ॥ ४३
समुद्यतमहाशैलाः संप्रणेदुर्महाबलाः । अमृष्यमाणा रक्षांसि प्रतिनर्दन्ति वानराः ॥ ४४

ततः समुद्घुष्टरवं निशम्य रक्षोगणा वानरयूथपानाम् ।
अमृष्यमाणाः परहर्षमुग्रं महाबला भीमतरं विनेदुः ॥ ४५

ते राक्षसबलं घोरं प्रविश्य हरियूथपाः । विचेरुरुद्यतैः शैलैर्नगाः शिखरिणो यथा ॥ ४६
केचिदाकाशमाविश्य केचिदुर्व्यां प्लवङ्गमाः । रक्षःसैन्येषु संक्रुद्धाश्चेरुर्द्रुमशिलायुधाः ॥ ४७
द्रुमांश्च विपुलस्कन्धान् गृह्य वानरपुंगवाः । तद्युद्धमभवद्धोरं रक्षोवानरसंकुलम् ॥ ४८
ते पादपशिलाशैलैश्चक्रुर्वृष्टिमनूपमाम् । बाणौघैर्वार्यमाणाश्च हरयो भीमविक्रमाः ॥ ४९
सिंहनादान् विनेदुश्च रणे वानरराक्षसाः । शिलाभिश्चूर्णयामासुर्यातुधानान् प्लवङ्गमाः ॥ ५०
निजघ्नुः संयुगे क्रुद्धाः कवचाभरणावृतान् । केचिद्रथगतान् वीरान् गजवाजिगतानपि ॥ ५१
निजघ्नुः सहसाप्लुत्य यातुधानान् प्लवङ्गमाः । शैलशृङ्गाचिताङ्गाश्च मुष्टिभिर्वान्तलोचनाः ॥
चेलुः पेतुश्च नेदुश्च तत्र राक्षसपुंगवाः । राक्षसाश्च शरैस्तीक्ष्णैर्बिभिदुः कपिकुञ्जरान् ॥ ५३
शूलमुद्गरखड्गैश्च जघ्नुः प्रासैश्च शक्तिभिः । अन्योन्यं पातयामासुः परस्परजयैषिणः ॥ ५४
रिपुशोणितदिग्धाङ्गास्तत्र वानरराक्षसाः । ततः शैलैश्च खड्गैश्च विसृष्टैर्हरिराक्षसैः ॥ ५५
मुहूर्तेनावृता भूमिरभवच्छोणिताप्लुता । विकीर्णपर्वताकारै रक्षोभिररिमर्दनैः ॥ ५६
आसीद्वसुमती पूर्णा तदा युद्धमदान्वितैः । आक्षिप्ताः क्षिप्यमाणाश्च भग्नशूलाश्च वानरैः ॥ ५७
पुनरङ्गैस्तथा चक्रुरासन्ना युद्धमद्भुतम् । वानरान् वानरैरेव जघ्नुस्ते रजनीचराः ॥ ५८
राक्षसान् राक्षसैरेव जघ्नुस्ते वानरा अपि । आक्षिप्य च शिलास्तेषां निजघ्नू राक्षसा हरीन् ॥
तेषां चाच्छिद्य शस्त्राणि जघ्नू रक्षांसि वानराः । निजघ्नुः शैलशूलास्त्रैर्बिभिदुश्च परस्परम् ॥
सिंहनादान् विनेदुश्च रणे वानरराक्षसाः । छिन्नवर्मतनुत्राणा राक्षसा वानरैर्हताः ॥ ६१
रुधिरं प्रस्रुतास्तत्र रससारमिव द्रुमाः । रथेन च रथं चापि वारणेनैव वारणम् ॥ ६२

---

१. बलैरित्यादि महात्मान इत्यन्तम् ग. नास्ति ।

हयेन च हयं केचिन्निजघ्नुर्वानरा रणे । प्रहृष्टमनसः सर्वे प्रगृहीतमहाशिलाः ॥ ६३
हरयो राक्षसाञ्जघ्नुर्द्रुमैश्च बहुशाखिभिः । तद्युद्धमभवद्घोरं रक्षोवानरसंकुलम्[1] ॥ ६४
क्षुरप्रैरर्धचन्द्रैश्च भल्लैश्च निशितैः शरैः । राक्षसा वानरेन्द्राणां चिच्छिदुः पादपाञ्शिलाः ॥६५
विकीर्णैः पर्वताग्रैश्च द्रुमैश्छिन्नैश्च संयुगे । हतैश्च कपिरक्षोभिर्दुर्गमा वसुधाभवत् ॥ ६६

ते वानरा गर्वितहृष्टचेष्टाः संग्राममासाद्य भयं विमुच्य ।
युद्धं तु सर्वे सह राक्षसैस्तैर्नानायुधाश्चक्रुरदीनसत्त्वाः ॥ ६७

तस्मिन् प्रवृत्ते तुमुले विमर्दे प्रहृष्यमाणेषु वलीमुखेषु ।
निपात्यमानेषु च राक्षसेषु महर्षयो देवगणाश्च नेदुः ॥ ६८

ततो हयं मारुततुल्यवेगमारुह्य शक्तिं निशितां प्रगृह्य ।
नरान्तको वानरराजसैन्यं महार्णवं मीन इवाविवेश ॥ ६९

स वानरान् सप्तशतानि वीरः प्रासेन दीप्तेन विनिर्बिभेद ।
एकक्षणेनेन्द्ररिपुर्महात्मा जघान सैन्यं हरिपुंगवानाम् ॥ ७०

ददृशुश्च महात्मानं हयपृष्ठे प्रतिष्ठितम् । चरन्तं हरिसैन्येषु विद्याधरमहर्षयः ॥ ७१
स तस्य ददृशे मार्गो मांसशोणितकर्दमः । पतितैः पर्वताकारैर्वानरैरभिसंवृतः ॥ ७२
यावद्विक्रमितुं बुद्धिं चक्रुः प्लवगपुंगवाः । तावदेतानतिक्रम्य निर्बिभेद नरान्तकः[2] ॥ ७३
ज्वलन्तं प्रासमुद्यम्य संग्रामाग्रे नरान्तकः[3] । ददाह हरिसैन्यानि वनानीव विभावसुः ॥ ७४
यावदुत्पाटयामासुर्वृक्षाञ्शैलान् वनौकसः । तावत् प्रासहताः पेतुर्वज्रकृत्ता इवाचलाः ॥ ७५
दिक्षु सर्वासु बलवान् विचचार नरान्तकः । प्रमृद्नन् सर्वतो युद्धे प्रावृट्काले यथानिलः ७६
न शेकुर्धावितुं वीरा न स्थातुं स्पन्दितुं भयात् । उत्पतन्तं स्थितं यान्तं सर्वान् विव्याध वीर्यवान्
एकेनान्तककल्पेन प्रासेनादित्यतेजसा । भिन्नानि हरिसैन्यानि निपेतुर्धरणीतले ॥ ७८
वज्रनिष्पेषसदृशं प्रासस्याभिनिपातनम् । नशेकुर्वानराः सोढुं ते विनेदुर्महास्वनम् ॥ ७९
पततां हरिवीराणां रूपाणि प्रचकाशिरे । वज्रभिन्नाग्रकूटानां शैलानां पततामिव ॥ ८०
ये तु पूर्वं महात्मानः कुम्भकर्णेन पातिताः । ते स्वस्था वानरश्रेष्ठाः सुग्रीवमुपतस्थिरे ॥ ८१
विप्रेक्षमाणः सुग्रीवो ददर्श हरिवाहिनीम् । नरान्तकभयत्रस्तां विद्रवन्तीमितस्ततः ॥ ८२
विद्रुतां वाहिनीं दृष्ट्वा स ददर्श नरान्तकम् । गृहीतप्रासमायान्तं हयपृष्ठे प्रतिष्ठितम् ॥ ८३
अथोवाच महातेजाः सुग्रीवो वानराधिपः । कुमारमङ्गदं वीरं शक्रतुल्यपराक्रमम् ॥ ८४

---

१. प्रहृष्टेत्यादि संकुलमित्यन्तम् नास्ति ।

२. अस्यानन्तरम्—त[य]तो यतः सुसंक्रुद्धः पुना प्रासपाणिर्नरान्तकः । ततस्ततस्ते मन्यन्ते कालोऽयमिति वानरः ॥—इति छ. ।

३. इदमर्धम् क. ख. ग. नास्ति ।

गच्छ त्वं राक्षसं वीरं योऽसौ तुरगमास्थितः । क्षोभयन्तं हरिबलं क्षिप्रं प्राणैर्वियोजय ॥ ८५
स भर्तुर्वचनं श्रुत्वा निष्पपाताङ्गदस्ततः । [1]अनीकान्मेघसंकाशान्मेघानीकादिवांशुमान्[1] ॥ ८६
शैलसङ्घातसंकाशो हरीणामुत्तमोऽङ्गदः । रराजाङ्गदसंनद्धः सधातुरिव पर्वतः ॥ ८७
निरायुधो महातेजाः केवलं नखदंष्ट्रवान् । नरान्तकमभिक्रम्य वालिपुत्रोऽब्रवीद्वचः ॥ ८८
तिष्ठ किं प्राकृतैरेभिर्हरिभिस्त्वं करिष्यसि । अस्मिन् वज्रसमस्पर्शं प्रासं क्षिप ममोरसि ॥ ८९
अङ्गदस्य वचः श्रुत्वा प्रचुक्रोध नरान्तकः । संदश्य दशनैरोष्ठं विनिःश्वस्य भुजङ्गवत् ॥ ९०
अभिगम्याङ्गदं क्रुद्धो वालिपुत्रं नरान्तकः ॥

प्रासं समाविध्य तदाङ्गदाय समुज्ज्वलन्तं सहसोत्ससर्ज ।
स वालिपुत्रोरसि वज्रकल्पे बभूव भग्नो न्यपतच्च भूमौ ॥ ९१
तं प्रासमालोक्य तदा विभग्नं सुपर्णकृत्तोरगभोगकल्पम् ।
तलं समुद्यम्य स वालिपुत्रस्तुरङ्गमं तस्य जघान मूर्ध्नि ॥ ९२
निभग्नतालुः स्फुटिताक्षितारो निष्क्रान्तजिह्वोऽचलसंनिकाशः ।
स तस्य वाजी निपपात भूमौ तलप्रहारेण निशीर्णमूर्धा ॥ ९३
नरान्तकः क्रोधवशं जगाम हतं तुरङ्गं पतितं निरीक्ष्य ।
स मुष्टिमुद्यम्य महाप्रभावो जघान शीर्षे युधि वालिपुत्रम् ॥ ९४
अथाङ्गदो मुष्टिविभिन्नमूर्धा सुस्राव तीव्रं रुधिरं भृशोष्णम् ।
मुहुर्विजज्वाल मुमोह चापि संज्ञां समासाद्य विसिष्मिये च ॥ ९५
अथाङ्गदो वज्रसमानवेगं संवर्त्य मुष्टिं गिरिशृङ्गकल्पम् ।
निपातयामास तथा महात्मा नरान्तकस्योरसि वालिपुत्रः ॥ ९६
स मुष्टिनिष्पिष्टविभिन्नवक्षा ज्वालावमच्छोणितदिग्धगात्रः ।
नरान्तको भूमितले पपात यथाचलो वज्रनिपातभग्नः ॥ ९७
अथान्तरिक्षे त्रिदशोत्तमानां वनौकसां चैव महाप्रनादः ।
बभूव तस्मिन्निहतेऽग्र्यवीरे नरान्तके वालिसुतेन संख्ये ॥ ९८
अथाङ्गदो राममनःप्रहर्षणं सुदुष्करं तत्[2] कृतवान् हि विक्रमम् ।
विसिष्मिये सोऽप्यतिवीर्यविक्रमः पुनश्च युद्धे स बभूव हर्षितः ॥ ९९

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
युद्धकाण्डे नरान्तकवधो नाम एकोनसप्ततितमः सर्गः

---

1. मेघानीकादिति । अनीकसदृशान्मेघादित्यर्थः । तदत्रानीकमेघयोः परस्परसादृश्यप्रतिपादनात् तृतीयं सदृशं प्रतिषिद्धं वेदितव्यम् ।

१. अंशुमानिव वीर्यवान् पुना. ।
२. 'तं पुना. ।

## सप्ततितमः सर्गः

### देवान्तकादिवधः

नरान्तकं हतं दृष्ट्वा चुक्रुशुर्नैर्ऋतर्षभाः। देवान्तकस्त्रिमूर्धा च पौलस्त्यश्च महोदरः ॥ १
आरूढो मेघसंकाशं वारणेन्द्रं महोदरः। वालिपुत्रं महावीर्यमभिदुद्राव वीर्यवान् ॥ २
भ्रातृव्यसनसंतप्तस्तथा देवान्तको बली। आदाय परिघं दीप्तमङ्गदं समभिद्रवत् ॥ ३
रथमादित्यसंकाशं युक्तं परमवाजिभिः। आस्थाय त्रिशिरा वीरो वालिपुत्र मथाभ्ययात् ॥ ४
स त्रिभिर्देवदर्पघ्नैर्नैर्ऋतेन्द्रैरभिद्रुतः। वृक्षमुत्पाटयामास महाविटपमङ्गदः ॥ ५
देवान्तकाय तं वीरश्चिक्षेप सहसाङ्गदः। महावृक्षं महाशाखं शक्रो दीप्तमिवाशनिम् ॥ ६
त्रिशिरास्तं प्रचिच्छेद शरैराशीविषोपमैः। स वृक्षं कृत्तमालोक्य उत्पपात तदाङ्गदः ॥ ७
स ववर्ष ततो वृक्षाञ्शैलांश्च कपिकुञ्जरः। तान् प्रचिच्छेद संक्रुद्धस्त्रिशिरा निशितैः शरैः ॥ ८
परिघाग्रेण तान् वृक्षान् बभञ्ज च सुरान्तकः। त्रिशिराश्चाङ्गदं वीरमभिदुद्राव सायकैः ॥ ९
गजेन समभिद्रुत्य वालिपुत्रं महोदरः। जघानोरसि संक्रुद्धस्तोमरैर्वज्रसंनिभैः। १०
देवान्तकश्च संक्रुद्धः परिघेण तदाङ्गदम्। उपगम्याभिहत्याशु व्यपचक्राम वेगवान् ॥ ११
स त्रिभिर्नैर्ऋतश्रेष्ठैर्युगपत् समभिद्रुतः। न विव्यथे महातेजा वालिपुत्रः प्रतापवान् ॥ १२
स वेगवान् महावेगं कृत्वा परमदुर्जयः। तलेन भृशमुत्पत्य जघानास्य महागजम् ॥ १३
तस्य तेन प्रहारेण नागराजस्य संयुगे। पेततुर्लोचने तस्य विननाद स वारणः ॥ १४
विषाणं चास्य निष्कृष्य वालिपुत्रो महाबलः। देवान्तकमभिप्लुत्य ताडयामास संयुगे ॥ १५
स विह्वलितसर्वाङ्गो वातोद्धूत इव द्रुमः। लाक्षारससवर्णं च सुस्राव रुधिरं मुखात् ॥ १६
अथाश्वस्य महातेजाः कृच्छ्राद्देवान्तको बली। आविध्य परिघं घोरमाजघान तदाङ्गदम् ॥ १७
परिघाभिहतश्चापि वानरेन्द्रात्मजस्तदा। जानुभ्यां पतितो भूमौ पुनरेवोत्पपात ह ॥ १८
तमुत्पतन्तं त्रिशिरास्त्रिभिर्बाणैरजिह्मगैः। घोरैर्हरिपतेः पुत्रं ललाटेऽभिजघान ह ॥ १९
ततोऽङ्गदं परिक्षिप्तं त्रिभिर्नैर्ऋतपुंगवैः। हनुमानपि विज्ञाय नीलश्चापि प्रतस्थतुः ॥ २०
ततश्चिक्षेप शैलाग्रं नीलस्त्रिशिरसे तदा। तद्रावणसुतो धीमान् बिभेद निशितैः शरैः ॥ २१
तद्बाणशतनिर्भिन्नं विदारितशिलातलम्। सविस्फुलिङ्गं सज्वालं निपपात गिरेः शिरः ॥ २२
ततो जृम्भितमालोक्य हर्षाद्देवान्तकस्तदा। परिघेणाभिदुद्राव मारुतात्मजमाहवे ॥ २३
तमापतन्तमुत्प्लुत्य हनुमान् मारुतात्मजः। आजघान तदा मूर्ध्नि वज्रकल्पेन मुष्टिना ॥ २४
शिरसि प्रहरन् वीरस्तदा वायुसुतो बली। नादेनाकम्पयच्चैव राक्षसान् स महाकपिः ॥ २५

स मुष्टिनिष्पिष्टविकीर्णमूर्धा निर्वान्तदन्ताक्षिविलम्बिजिह्वः।
देवान्तको राक्षसराजसूनुर्गतासुरुर्व्यां सहसा पपात ॥ २६

तस्मिन् हते राक्षसयोधमुख्ये महाबले संयति देवशत्रौ ।
क्रुद्धस्त्रिमूर्धा निशिताग्रमुग्रं ववर्ष नीलोरसि बाणवर्षम् ॥ २७

महोदरस्तु संक्रुद्धः कुञ्जरं पर्वतोपमम् । भूयः समधिरुह्याशु मन्दरं रश्मिमानिव ॥ २८

ततो बाणमयं वर्षं नीलस्योरस्यपातयत् । गिरौ वर्षं तडिच्चक्रचापवानिव तोयदः ॥ २९

ततः शरौघैरभिवर्ष्यमाणो विभिन्नगात्रः कपिसैन्यपालः ।
नीलो बभूवाथ निसृष्टगात्रो विष्टम्भितस्तेन महाबलेन ॥ ३०

ततस्तु नीलः प्रतिलभ्य संज्ञां शैलं समुत्पाट्य सवृक्षषण्डम् ।
ततः समुत्पत्य भृशोग्रवेगो महोदरं तेन जघान मूर्ध्नि ॥ ३१

ततः स शैलेन्द्रनिपातभग्नो महोदरस्तेन महाद्विपेन ।
विपोथितो भूमितले गतासुः पपात वज्राभिहतो यथाद्रिः ॥ ३२

पितृव्यं निहतं दृष्ट्वा त्रिशिराश्चापमाददे । हनुमन्तं च संक्रुद्धो विव्याध निशितैः शरैः ॥ ३३

स वायुसूनुः कुपितश्चिक्षेप शिखरं गिरेः । त्रिशिरास्तच्छरैस्तीक्ष्णैर्बिभेद बहुधा बली ॥ ३४

तद्व्यर्थं शिखरं दृष्ट्वा द्रुमवर्षं महाकपिः । विससर्ज रणे तस्मिन् रावणस्य सुतं प्रति ॥ ३५

तमापतन्तमाकाशे द्रुमवर्षं प्रतापवान् । त्रिशिरा निशितैर्बाणैश्चिच्छेद च ननाद च ॥ ३६

ततो हनूमानुत्प्लुत्य हयांस्त्रिशिरसस्तदा । विददार नखैः क्रुद्धो गजेन्द्रं मृगराडिव ॥ ३७

अथ शक्तिं समादाय कालरात्रिमिवान्तकः । चिक्षेपानिलपुत्राय त्रिशिरा रावणात्मजः ॥ ३८

दिवः क्षिप्तामिवोल्कां तां शक्तिं क्षिप्तामसंगताम् । गृहीत्वा हरिशार्दूलो बभञ्ज च ननाद च ॥

तां दृष्ट्वा घोरसंकाशां शक्तिं भग्नां हनूमता । प्रहृष्टा वानरगणा विनेदुर्जलदा इव ॥ ४०

ततः खड्गं समुद्यम्य त्रिशिरा राक्षसोत्तमः । निजधान तदा व्यूढे वायुपुत्रस्य वक्षसि ॥ ४१

खड्गप्रहाराभिहतो हनूमान् मारुतात्मजः । आजघान त्रिशिरसं तलेनोरसि वीर्यवान् ॥ ४२

स तलाभिहतस्तेन स्रस्तहस्तायुधो भुवि । निपपात महातेजास्त्रिशिरास्त्यक्तचेतनः ॥ ४३

स तस्य पततः खड्गं समाच्छिद्य महाकपिः । ननाद गिरिसंकाशस्त्रासयन् सर्वनैर्ऋतान् ॥ ४४

अमृष्यमाणस्तं घोषमुत्पपात निशाचरः । उत्पत्य च हनूमन्तं ताडयामास मुष्टिना ॥ ४५

तेन मुष्टिप्रहारेण संचुकोप महाकपिः । कुपितश्च निजग्राह किरीटे राक्षसर्षभम् ॥ ४६

हनूमान् रोषताम्राक्षो राक्षसं परवीरहा[१] ॥

स तस्य शीर्षाण्यसिना शितेन किरीटजुष्टानि सकुण्डलानि ।
क्रुद्धः प्रचिच्छेद सुतोऽनिलस्य त्वष्टुः सुतस्येव शिरांसि शक्रः ॥ ४७

१. इदमर्धम् च. नास्ति ।

तान्यायताक्षाण्यगसंनिभानि प्रदीप्तवैश्वानरलोचनानि ।
पेतुः शिरांसीन्द्ररिपोर्धरण्यां ज्योतींषि मुक्तानि यथार्कमार्गात् ॥ ४८
तस्मिन् हते देवरिपौ त्रिशीर्षे हनूमता शक्रपराक्रमेण ।
नेदुः प्लवङ्गाः प्रचचाल भूमी रक्षांस्यथो दुद्रुविरे समन्तात् ॥ ४९
हतं त्रिशिरसं दृष्ट्वा तथैव च महोदरम् । हतौ प्रेक्ष्य दुराधर्षौ देवान्तकनरान्तकौ ॥ ५०
चुकोप परमामर्षी मत्तो राक्षसपुंगवः । जग्राहार्चिष्मतीं घोरां गदां सर्वायसीं शुभाम् ॥ ५१
हेमपट्टपरिक्षिप्तां मांसशोणितफेनिलाम् । विराजमानां वपुषा शत्रुशोणितरञ्जिताम् ॥ ५२
तेजसा संप्रदीप्ताग्रां रक्तमाल्यविभूषिताम् । ऐरावतमहापद्मसार्वभौमभयावहाम् ॥ ५३
गदामादाय संक्रुद्धो मत्तो राक्षसपुंगवः । हरीन् समभिदुद्राव युगान्ताग्निरिव ज्वलन् ॥ ५४
अथर्षभः समुत्पत्य वानरो रावणानुजम् । मत्तानीकमुपागम्य तस्थौ तस्याग्रतो बली ॥ ५५
तं पुरस्तात् स्थितं दृष्ट्वा वानरं पर्वतोपमम् । आजघानोरसि क्रुद्धो गदया वज्रकल्पया ॥ ५६
स तयाभिहतस्तेन गदया वानरर्षभः । भिन्नवक्षाः समाधूतः सुस्राव रुधिरं बहु ॥ ५७
स संप्राप्य चिरात् संज्ञामृषभो वानरर्षभः । क्रुद्धो विस्फुरमाणोष्ठो महापार्श्वमुदैक्षत ॥ ५८
स वेगवान् वेगवदभ्युपेत्य तं राक्षसं वानरयूथमुख्यः ।
संवर्त्य मुष्टिं सहसा जघान बाह्वान्तरे शैलनिकाशरूपः ॥ ५९
स कृत्तमूलः सहसेव वृक्षः पपात भूमौ क्षतजोक्षिताङ्गः ।
तां चास्य घोरां यमदण्डकल्पां गदां प्रगृह्याशु तदा सहर्षः ॥ ६०
मुहूर्तमासीत् स गतासुकल्पः प्रत्यागतात्मा सहसा सुरारिः ।
उपेत्य सन्ध्याभ्रसमानवर्णस्तं वारिराजात्मजमाजघान[1] ॥ ६१
अभिजग्राह वेगेन गदां तस्य महात्मनः । गृहीत्वा तां गदां भीमामाविध्य च पुनः पुनः॥ ६२
मत्तानीकं महात्मानं जघान रणमूर्धनि । स स्वया गदया भग्नो विशीर्णदशनेक्षणः ॥ ६३
निपपात ततो मत्तो वज्राहत इवाचलः । विशीर्णनयने भूमौ गतसत्त्वे गतायुषि ॥ ६४
पतिते राक्षसे तस्मिन् विद्रुतं राक्षसं बलम् । उन्मत्तस्तु तदा दृष्ट्वा गतासुं भ्रातरं रणे ॥ ६५
चुकोप परमक्रुद्धः प्रलयाग्निसमद्युतिः ॥
ततः समादाय गदां स वीरो वित्रासयन् वानरसैन्यमुग्रम् ।
दुद्राव वेगेन तु सैन्यमध्ये दहन् यथा वह्निरतिप्रचण्डः ॥ ६६
आपतन्तं तदा दृष्ट्वा राक्षसं भीमविक्रमम् । शैलमादाय दुद्राव गवाक्षः पर्वतोपमः ॥ ६७
जिघांसू राक्षसं भीमं तं शैलेन महाबलः । आपतन्तं तदा दृष्ट्वा उन्मत्तोऽपि महागिरिम्॥ ६८

१. क्रुद्ध इत्यादि आजघानेत्यन्तम् च. छ. नास्ति ।

चिच्छेद गदया वीरः शतधा तत्र संयुगे । चूर्णीकृतं गिरिं दृष्ट्वा रक्षसा कपिकुञ्जरः ॥ ६९
विस्मितोऽभून्महाबाहुर्जगर्ज च मुहुर्मुहुः । उन्मत्तस्तु सुसंक्रुद्धो ज्वलन्तीं राक्षसोत्तमः ॥ ७०
गदामादाय वेगेन कपेर्वक्षस्यताडयत् । स तया गदया वीरस्ताडितः कपिकुञ्जरः ॥ ७१
पपात भूमौ निःसंज्ञः सुस्राव रुधिरं बहु । पुनः संज्ञामथास्थाय वानरः स समुत्थितः ॥ ७२
तलेन ताडयामास ततस्तस्य शिरः कपिः । तेन प्रताडितो वीरो राक्षसः पर्वतोपमः ॥ ७३
विस्रस्तदन्तनयनो निपपात महीतले । सुस्राव रुधिरं सोष्णं गतासुश्च ततोऽभवत्[1] ॥ ७४

तस्मिन् हते भ्रातरि रावणस्य तन्नैर्ऋतानां बलमर्णवाभम् ।
त्यक्तायुधं केवलजीवितार्थं दुद्राव भिन्नार्णवसंनिकाशम् ॥ ७५

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
युद्धकाण्डे देवान्तकादिवधो नाम सप्ततितमः सर्गः

---

## एकसप्ततितमः सर्गः

### अतिकायवधः

स्वबलं व्यथितं दृष्ट्वा तुमुलं रोमहर्षणम् । भ्रातॄंश्च निहतान् दृष्ट्वा शक्रतुल्यपराक्रमान् ॥ १
पितृव्यौ चापि संदृश्य समरे संनिपूदितौ । युद्धोन्मत्तं च मत्तं च भ्रातरौ राक्षसर्षभौ ॥ २
चुकोप च महातेजा ब्रह्मदत्तवरो युधि । अतिकायोऽद्रिसंकाशो देवदानवदर्पहा ॥ ३
स भास्करसहस्रस्य सङ्घातमिव भास्वरम् । रथमास्थाय शक्रारिरभिदुद्राव वानरान् ॥ ४
स विस्फार्य महच्चापं किरीटी मृष्टकुण्डलः । नाम विश्रावयामास ननाद च महास्वनम् ॥ ५
तेन सिंहप्रणादेन नामविश्रावणेन च । ज्याशब्देन च भीमेन त्रासयामास वानरान् ॥ ६
ते दृष्ट्वा देहमाहात्म्यं कुम्भकर्णोऽयमुत्थितः । भयार्ता वानराः सर्वे संश्रयन्ते परस्परम् ॥ ७
ते तस्य रूपमालोक्य यथा विष्णोस्त्रिविक्रमे । भयाद्वानरयूथास्ते विद्रवन्ति ततस्ततः ॥ ८
तेऽतिकायं समासाद्य वानरा मूढचेतसः । शरण्यं शरणं जग्मुर्लक्ष्मणाग्रजमाहवे ॥ ९
ततोऽतिकायं काकुत्स्थो रथस्थं पर्वतोपमम् । ददर्श धन्विनं दूराद्गर्जन्तं कालमेघवत् ॥ १०
स तं दृष्ट्वा महाकायं राघवस्तु विसिष्मिये । वानरान् सान्त्वयित्वाथ विभीषणमुवाच ह ॥ ११
कोऽसौ पर्वतसंकाशो धनुष्मान् हरिलोचनः । युक्ते हयसहस्रेण विशाले स्यन्दने स्थितः ॥ १२
य एष निशितैः शूलैः सुतीक्ष्णैः प्रासतोमरैः । अर्चिष्मद्भिर्वृतो भाति भूतैरिव महेश्वरः ॥ १३
कालजिह्वाप्रकाशाभिर्य एषोऽतिविराजते । आवृतो रथशक्तीभिर्विद्युद्भिरिव तोयदः ॥ १४

---

१. उन्मत्तस्तु इत्यादि ततोऽभवदित्यन्तम् च. नास्ति ।

धनूंषि चास्य सज्यानि हेमपृष्ठानि सर्वशः । शोभयन्ति रथश्रेष्ठं शक्रचाप इवाम्बरम् ॥ १५
क एष रक्षःशार्दूलो रणभूमिं विराजयन् । अभ्येति रथिनां श्रेष्ठो रथेनादित्यतेजसा ॥ १६
ध्वजशृङ्गप्रतिष्ठेन राहुणाभिविराजते । सूर्यरश्मिनिभैर्बाणैर्दिशो दश विराजयन् ॥ १७
त्रिणतं मेघनिर्ह्रादं हेमपृष्ठमलंकृतम् । शतक्रतुधनुःप्रख्यं धनुश्चास्य विराजते ॥ १८
सध्वजः सपताकश्च सानुकर्षो महारथः । चतुःसादिसमायुक्तो मेघस्तनितनिःस्वनः ॥ १९
विंशतिर्दश चाष्टौ च तूण्योऽस्य[1] रथमास्थिताः । कार्मुकाणि च भीमानि ज्याश्च काञ्चनपिङ्गलाः॥
द्वौ च खड्गौ रथगतौ पार्श्वस्थौ पार्श्वशोभितौ । चतुर्हस्तत्सरुयुतौ व्यक्तहस्तदशायतौ ॥ २१
रक्तकण्ठगुणो धीरो महापर्वतसंनिभः । कालः कालमहावक्त्रो मेघस्थ इव भास्करः ॥ २२
काञ्चनाङ्गदनद्धाभ्यां भुजाभ्यामेष शोभते । शृङ्गाभ्यामिव तुङ्गाभ्यां हिमवान् पर्वतोत्तमः॥२३
कुण्डलाभ्यां तु यस्यैतद्भाति वक्त्रं शुभेक्षणम् । पुनर्वस्वन्तरगतं पूर्णबिम्बमिवैन्दवम् ॥ २४
आचक्ष्व मे महाबाहो त्वमेनं राक्षसोत्तमम् । यं दृष्ट्वा वानराः सर्वे भयार्ता विद्रुता दिशः ॥
स पृष्टो राजपुत्रेण रामेणामिततेजसा । आचचक्षे महातेजा राघवाय विभीषणः ॥ २६
दशग्रीवो महातेजा राजा वैश्रवणानुजः । भीमकर्मा महोत्साहो रावणो राक्षसाधिपः ॥ २७
तस्यासीद्वीर्यवान् पुत्रो रावणप्रतिमो रणे । वृद्धसेवी श्रुतिधरः सर्वास्त्रविदुषां वरः ॥ २८
अश्वपृष्ठे रथे नागे खड्गे धनुषि कर्षणे । भेदे सान्त्वे च दाने च नये मन्त्रे च संमतः ॥ २९
यस्य बाहू समाश्रित्य लङ्का वसति निर्भया । तनयं धान्यमालिन्या अतिकायमिमं विदुः ॥३०
एतेनाराधितो ब्रह्मा तपसा भावितात्मना । अस्त्राणि चाप्यवाप्तानि रिपवश्च पराजिताः॥ ३१
सुरासुरैरवध्यत्वं दत्तमस्मै स्वयंभुवा । एतच्च कवचं दिव्यं रथश्चैषोऽर्कभास्वरः ॥ ३२
एतेन शतशो देवा दानवाश्च पराजिताः । रक्षितानि च रक्षांसि यक्षाश्चापि निषूदिताः॥ ३३
वज्रं विष्टम्भितं येन बाणैरिन्द्रस्य धीमतः । पाशः सलिलराजस्य रणे प्रतिहतस्तथा ॥ ३४
एषोऽतिकायो बलवान् राक्षसानामथर्षभः । रावणस्य सुतो धीमान् देवदानवदर्पहा ॥ ३५
तदस्मिन् क्रियतां यत्नः क्षिप्रं पुरुषपुंगव । पुरा वानरसैन्यानि क्षयं नयति सायकैः ॥ ३६
ततोऽतिकायो बलवान् प्रविश्य हरिवाहिनीम् । विस्फारयामास धनुर्ननाद च पुनः पुनः ॥३७
तं भीमवपुषं दृष्ट्वा रथस्थं रथिनां वरम् । अभिपेतुर्महात्मानो ये प्रधाना वनौकसः ॥ ३८
कुमुदो द्विविदो मैन्दो नीलः शरभ एव च । पादपैर्गिरिशृङ्गैश्च युगपत् समभिद्रवन् ॥ ३९
तेषां वृक्षांश्च शैलांश्च शरैः काञ्चनभूषणैः । अतिकायो महातेजाश्चिच्छेदास्त्रविदां वरः ॥ ४०
तांश्चैव सर्वान् स हरीञ्शरैः सर्वायसैर्बली । विव्याधाभिमुखान् संख्ये भीमकायो निशाचरः ॥

---

१. तूणास्य ति.

तेऽर्दिता बाणवर्षेण भग्नगात्राः प्लवङ्गमाः । न शेकुरतिकायस्य प्रतिकर्तुं महारणे ॥ ४२
तत् सैन्यं हरिवीराणां त्रासयामास राक्षसः । मृगयूथमिव क्रुद्धो हरिर्यौवनदर्पितः ॥ ४३

स राक्षसेन्द्रो हरिसैन्यमध्ये नायुध्यमानं निजघान कंचित् ।
उपेत्य रामं स धनुःकलापी सगर्वितं वाक्यमिदं बभाषे ॥ ४४
रथे स्थितोऽहं शरचापपाणिर्न प्राकृतं कंचन योधयामि ।
यश्चास्ति कश्चिद्व्यवसाययुक्तो ददातु मे क्षिप्रमिहाद्य युद्धम् ॥ ४५
तत्तस्य वाक्यं ब्रुवतो निशम्य चुकोप सौमित्रिरमित्रहन्ता ।
अमृष्यमाणश्च समुत्पपात जग्राह चापं च ततः स्मयित्वा ॥ ४६

क्रुद्धः सौमित्रिरुत्पत्य तूणादाक्षिप्य सायकम् । पुरस्तादतिकायस्य विचकर्ष महद्धनुः ॥ ४७
पूरयन् स महीं शैलानाकाशं सागरं दिशः । ज्याशब्दो लक्ष्मणस्योग्रस्त्रासयन्[1] रजनीचरान् ॥
सौमित्रेश्चापनिर्घोषं श्रुत्वा प्रतिभयं तदा । विसिष्मिये महातेजा राक्षसेन्द्रात्मजो बली ॥ ४९
अथातिकायः कुपितो दृष्ट्वा लक्ष्मणमुत्थितम् । आदाय निशितं बाणमिदं वचनमब्रवीत् ॥ ५०
बालस्त्वमसि सौमित्रे विक्रमेष्वविचक्षणः । गच्छ किं कालसदृशं मां योधयितुमिच्छसि ॥५१
न हि मद्बाहुसृष्टानामस्त्राणां हिमवानपि । सोढुमुत्सहते वेगमन्तरिक्षमथो मही ॥ ५२
सुखप्रसुप्तं कालाग्निं [1]निबोधयितुमिच्छसि । न्यस्य चापं निवर्तस्व मा प्राणाञ्जहि मद्गतः ॥५३
अथवा त्वं प्रतिष्टब्धो न निवर्तितुमिच्छसि । तिष्ठ प्राणान् परित्यज्य गमिष्यसि यमक्षयम् ॥
पश्य मे निशितान् बाणानरिदर्पनिषूदनान् । ईश्वरायुधसंकाशांस्तप्तकाञ्चनभूषणान् ॥ ५५
एष ते सर्पसंकाशो बाणः पास्यति शोणितम् । मृगराज इव क्रुद्धो नागराजस्य शोणितम् ॥
इत्येवमुक्त्वा संक्रुद्धः शरं धनुषि संदधे ॥

श्रुत्वातिकायस्य वचः सरोषं सगर्वितं संयति राजपुत्रः ।
स संचुकोपातिबलो मनस्वी[2] उवाच वाक्यं च ततो महार्थम् ॥ ५७
न वाक्यमात्रेण भवान् प्रधानो न कत्थनात् सत्पुरुषा भवन्ति ।
मयि स्थिते धन्विनि बाणपाणौ निदर्शयस्वात्मबलं दुरात्मन् ॥ ५८

कर्मणा सूचयात्मानं न विकत्थितुमर्हसि । पौरुषेण तु यो युक्तः स तु शूर इति स्मृतः ॥५९
सर्वायुधसमायुक्तो धन्वी त्वं रथमास्थितः । शरैर्वा यदि वाप्यस्त्रैर्दर्शयस्व पराक्रमम् ॥ ६०
ततः शिरस्ते निशितैः पातयिष्याम्यहं शरैः । मारुतः कालसंपक्वं वृन्तात्तालफलं यथा ॥ ६१

1. त्रासयन्निति । उदभूदिति शेषः १. विबोधयितुम् पुना. । २. वृहच्छ्रीः च. छ. ।

अद्य ते मामका बाणास्तप्तकाञ्चनभूषणाः । पास्यन्ति रुधिरं गात्राद्बाणशल्यान्तरोत्थितम् ॥६२
बालोऽयमिति विज्ञाय न मावज्ञातुमर्हसि । बालो वा यदि वा वृद्धो मृत्युं जानीहि संयुगे ॥
बालेन विष्णुना लोकास्त्रयः क्रान्तास्त्रिभिः क्रमैः । इत्येवमुक्त्वा संक्रुद्धः शरान् धनुषि संदधे[1] ॥
लक्ष्मणस्य वचः श्रुत्वा हेतुमत् परमार्थवत् । अतिकायः प्रचुक्रोध बाणं चोत्तममाददे ॥ ६५
ततो विद्याधरा भूता देवा दैत्या महर्षयः । गुह्यकाश्च महात्मानस्तद्युद्धं द्रष्टुमागमन् ॥ ६६
ततोऽतिकायः कुपितश्चापमारोप्य सायकम् । लक्ष्मणाय प्रचिक्षेप संक्षिपन्निव चाम्बरम् ॥ ६७
तमापतन्तं निशितं शरमाशीविषोपमम् । अर्धचन्द्रेण चिच्छेद लक्ष्मणः परवीरहा ॥ ६८
तं निकृत्तं शरं दृष्ट्वा कृत्तभोगमिवोरगम् । अतिकायो भृशं क्रुद्धः पञ्च बाणान् समाददे ॥६९
ताञ्शरान् संप्रचिक्षेप लक्ष्मणाय निशाचरः । तानप्राप्ताञ्शरैस्तीक्ष्णैश्चिच्छेद भरतानुजः ॥ ७०
स ताञ्छित्त्वा शरैस्तीक्ष्णैर्लक्ष्मणः परवीरहा । आददे निशितं बाणं ज्वलन्तमिव तेजसा ॥७१
तमादाय धनुःश्रेष्ठे योजयामास लक्ष्मणः । विचकर्ष च वेगेन विससर्ज च वीर्यवान् ॥ ७२
पूर्णायतविसृष्टेन शरेण नतपर्वणा । ललाटे राक्षसश्रेष्ठमाजघान स वीर्यवान् ॥ ७३
स ललाटे शरो मग्नस्तस्य भीमस्य रक्षसः । ददृशे शोणितेनाक्तः पन्नगेन्द्र इवाचले ॥ ७४
राक्षसः प्रचकम्पे च लक्ष्मणेषुप्रपीडितः । रुद्रबाणहतं घोरं यथा त्रिपुरगोपुरम् ॥ ७५
चिन्तयामास चाश्वस्य विमृश्य च महाबलः । साधु बाणनिपातेन श्लाघनीयोऽसि मे रिपुः ॥
विधायैवं विनम्यास्यं नियम्य च भुजावुभौ । स रथोपस्थमास्थाय रथेन प्रचचार ह ॥ ७७
एकं त्रीन् पञ्च सप्तेति सायकान् राक्षसर्षभः । आददे संदधे चापि विचकर्षोत्ससर्ज च ॥७८
ते बाणाः कालसंकाशा राक्षसेन्द्रधनुश्च्युताः । हेमपुङ्खा रविप्रख्याश्चक्रुर्दीप्तमिवाम्बरम् ॥ ७९
ततस्तान् राक्षसोत्सृष्टाञ्शरौघान् राघवानुजः । असंभ्रान्तः प्रचिच्छेद निशितैर्बहुभिः शरैः ॥
ताञ्शरान् युधि संप्रेक्ष्य निकृत्तान् रावणात्मजः । चुकोप त्रिदशेन्द्रारिर्जग्राह निशितं शरम् ॥
स संधाय महातेजास्तं बाणं सहसोत्सृजत् । ततः सौमित्रिमायान्तमाजघान स्तनान्तरे ॥ ८२
अतिकायेन सौमित्रिस्ताडितो युधि वक्षसि । सुस्राव रुधिरं तीव्रं मदं मत्त इव द्विपः ॥ ८३
स चकार तदात्मानं विशल्यं सहसा विभुः । जग्राह च शरं तीक्ष्णमस्त्रेणापि च संदधे ॥ ८४
आग्नेयेन तदास्त्रेण योजयामास सायकम् । स जज्वाल तदा बाणो धनुष्यस्य महात्मनः ॥८५
अतिकायोऽपि तेजस्वी सौरमस्त्रं समादधे । तेन बाणं भुजङ्गाभं हेमपुङ्खमयोजयत् ॥ ८६
तदस्त्रं ज्वलितं घोरं लक्ष्मणः शरमाहितम् । अतिकायाय चिक्षेप कालदण्डमिवान्तकः ॥ ८७
आग्नेयेनाभिसंयुक्तं दृष्ट्वा बाणं निशाचरः । उत्ससर्ज तदा बाणं दीप्तं सूर्यास्त्रयोजितम् ॥ ८८
तावुभावम्बरे बाणावन्योन्यमभिजघ्नतुः । तेजसा संप्रदीप्ताग्रौ क्रुद्धाविव भुजङ्गमौ ॥ ८९

---

१. इदमर्धम् च. नास्ति ।

तावन्योन्यं विनिर्दह्य पेततुः पृथिवीतले । निरर्चिषौ भस्मकृतौ न भ्राजेते शरोत्तमौ ॥ ९०
ततोऽतिकायः संक्रुद्धस्त्वस्त्रमैषीकमुत्सृजत् । तत् प्रचिच्छेद सौमित्रिरस्त्रेणैन्द्रेण वीर्यवान् ॥
ऐषीकं निहतं दृष्ट्वा रुषितो रावणात्मजः । याम्येनास्त्रेण संक्रुद्धो योजयामास सायकम् ॥ ९२
ततस्तदस्त्रं चिक्षेप लक्ष्मणाय निशाचरः । वायव्येन तदस्त्रेण निजघान स लक्ष्मणः ॥ ९३
अथैनं शरधाराभिर्धाराभिरिव तोयदः । अभ्यवर्षत् सुसंक्रुद्धो लक्ष्मणो रावणात्मजम् ॥ ९४
तेऽतिकायं समासाद्य कवचे वज्रभूषिते । भग्नाग्रशल्याः सहसा पेतुर्बाणा महीतले ॥ ९५
तान् मोघानभिसंप्रेक्ष्य लक्ष्मणः परवीरहा । अभ्यवर्षन्महेषूणां सहस्रेण महायशाः ॥ ९६
स वृष्यमाणो बाणौघैरतिकायो महाबलः । अवध्यकवचः संख्ये राक्षसो नैव विव्यथे ॥ ९७
शरं चाशीविषाकारं लक्ष्मणाय व्यपासृजत् । स तेन विद्धः सौमित्रिर्मर्मदेशे शरेण ह ॥ ९८
मुहूर्तमात्रं निःसंज्ञः अभवच्छत्रुतापनः । ततः संज्ञामुपालभ्य चतुर्भिः सायकोत्तमैः ॥ ९९
निजघान हयान् संख्ये सारथिं च महाबलः । ध्वजस्योन्मथनं कृत्वा शरवर्षैररिंदमः ॥ १००
असंभ्रान्तः स सौमित्रिः ताञ्शरानभिलक्षितान् । मुमोच लक्ष्मणो बाणान् वधार्थं तस्य रक्षसः[1]
न शशाक रुजं कर्तुं युधि तस्य शरोत्तमः । अथैनमभ्युपागम्य वायुर्वाक्यमुवाच ह ॥ १०२
ब्रह्मदत्तवरो ह्येष अवध्यकवचावृतः । ब्राह्मेणास्त्रेण भिन्ध्येनमेष वध्यो हि नान्यथा ॥ १०३
अवध्य एष ह्यन्येषामस्त्राणां कवची बली ॥

ततस्तु वायोर्वचनं निशम्य सौमित्रिरिन्द्रप्रतिमानवीर्यः ।
समाददे बाणममोघवेगं तद्ब्राह्ममस्त्रं सहसा नियोज्य ॥ १०४

तस्मिन् महास्त्रे तु नियोज्यमाने सौमित्रिणा बाणवरे शिताग्रे ।
दिशश्च चन्द्रार्कमहाग्रहाश्च नभश्च तत्रास चचाल चोर्वी ॥ १०५

तं ब्रह्मणोऽस्त्रेण नियोज्य चापे शरं सुपुङ्खं यमदूतकल्पम् ।
सौमित्रिरिन्द्रारिसुतस्य तस्य ससर्ज बाणं युधि वज्रकल्पम् ॥ १०६

तं लक्ष्मणोत्सृष्टममोघवेगं समापतन्तं ज्वलनप्रकाशम् ।
सुवर्णवज्रोत्तमचित्रपुङ्खं तदातिकायः समरे ददर्श ॥ १०७

तं प्रेक्षमाणः सहसातिकायो जघान बाणैर्निशितैरनेकैः ।
स सायकस्तस्य सुपर्णवेगस्तदातिकायस्य जगाम पार्श्वम् ॥ १०८

तमागतं प्रेक्ष्य तदातिकायो बाणं प्रदीप्तान्तककालकल्पम् ।
जघान शक्त्यृष्टिगदाकुठारैः शूलैर्हलैश्चाप्यविपन्नचेताः[2] ॥ १०९

---

१. शरमित्यादि रक्षस इत्यन्तम् च. नास्ति । २. अविपन्नचेष्टः पुना

तान्यायुधान्यद्भुतविग्रहाणि मोघानि कृत्वा स शरोऽग्निदीप्तः ।
प्रगृह्य तस्यैव किरीटजुष्टं ततोऽतिकायस्य शिरो जहार ॥ ११०

तच्छिरः सशिरस्त्राणं लक्ष्मणेषुप्रपीडितम् । पपात सहसा भूमौ शृङ्गं हिमवतो यथा ॥ १११
तं तु भूमौ निपतितं दृष्ट्वा विक्षिप्तभूषणम् । बभूवुर्व्यथिताः सर्वे हतशेषा निशाचराः ॥ ११२
ते विषण्णमुखा दीनाः प्रहारजनितश्रमाः । विनेदुरुच्चैर्बहवः सहसा विस्वरैः स्वरैः ॥ ११३
ततस्ते त्वरितं याता निरपेक्षा निशाचराः । पुरीमभिमुखा भीता द्रवन्तो नायके हते ॥११४

प्रहर्षयुक्ता बहवस्तु वानराः प्रबुद्धपद्मप्रतिमाननास्तदा ।
अपूजयँल्लक्ष्मणमिष्टभागिनं हते रिपौ भीमबले दुरासदे ॥ ११५
अतिबलमतिकायमभ्रकल्पं युधि विनिपात्य स लक्ष्मणः प्रहृष्टः ।
त्वरितमथ तदा स रामपार्श्वं कपिनिवहैश्च सुपूजितो जगाम[1]॥ ११६

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
युद्धकाण्डे अतिकायवधो नाम एकसप्ततितमः सर्गः

---

## द्विसप्ततितमः सर्गः

### रावणमन्युशल्याविष्कारः

अतिकायं हतं श्रुत्वा लक्ष्मणेन महौजसा । उद्वेगमगमद्राजा वचनं चेदमब्रवीत् ॥ १
धूम्राक्षः परमामर्षी धन्वी शस्त्रभृतां वरः । अकम्पनः प्रहस्तश्च कुम्भकर्णस्तथैव च ॥ २
एते महाबला वीरा राक्षसा युद्धकाङ्क्षिणः । जेतारः परसैन्यानां परैर्नित्यापराजिताः ॥ ३
निहतास्ते महावीर्या रामेणाक्लिष्टकर्मणा । राक्षसाः सुमहाकाया नानाशस्त्रविशारदाः ॥ ४
अन्ये च बहवः शूरा महात्मानो निपातिताः । प्रख्यातबलवीर्येण पुत्रेणेन्द्रजिता मम ॥ ५
यौ हि तौ भ्रातरौ वीरौ बद्धौ दत्तवरैः शरैः । यन्न शक्यं सुरैः सर्वैरसुरैर्वा महाबलैः ॥ ६
मोक्तुं तद्बन्धनं घोरं यक्षगन्धर्वकिन्नरैः । तन्न जाने प्रभावैर्वा मायया मोहनेन वा ॥ ७
शरबन्धाद्विमुक्तौ तौ भ्रातरौ रामलक्ष्मणौ । ये योधा निर्गताः शूरा राक्षसा मम शासनात् ॥८
ते सर्वे निहता युद्धे वानरैः सुमहाबलैः । तं न पश्याम्यहं युद्धे योऽद्य रामं सलक्ष्मणम् ॥ ९
शासयेत् सबलं वीरं ससुग्रीवविभीषणम । अहो नु बलवान् रामो महदस्त्रबलं च वै ॥ १०
यस्य विक्रममासाद्य राक्षसा निधनं गताः । तं मन्ये राघवं वीरं नारायणमनामयम् ॥ ११
तद्भयाद्धि पुरी लङ्का पिहितद्वारतोरणा[2]। अप्रमत्तैश्च सर्वत्र गुप्तै रक्ष्या पुरी त्वियम् ॥ १२

---

१. इदं पद्यम् क. ख. ग. घ. नास्ति । २. तमित्यादि तोरणेत्यन्तम् पुना. नास्ति ।

अशोकवनिकायां च यत्र सीताभिरक्ष्यते। निष्क्रामो वा प्रवेशो वा ज्ञातव्यः सर्वथैव नः ॥
यत्र यत्र भवेद्गुल्मस्तत्र तत्र पुनः पुनः। सर्वतश्चापि तिष्ठध्वं स्वैः स्वैः परिवृता बलैः ॥ १४
द्रष्टव्यं च पदं तेषां वानराणां निशाचराः। प्रदोषे वार्धरात्रे वा प्रत्यूषे वापि सर्वतः ॥ १५
नावज्ञा तत्र कर्तव्या वानरेषु कदाचन। द्विषतां बलमुद्युक्तमापतन् किं स्थितं सदा ॥ १६
ततस्ते राक्षसाः सर्वे श्रुत्वा लङ्काधिपस्य तत्। वचनं सर्वमातिष्ठन् यथावत्तु महाबलाः ॥ १७
स तान् सर्वान् समादिश्य रावणो राक्षसाधिपः। मन्युशल्यं वहन् दीनः प्रविवेश स्वमालयम् ॥

ततः स संदीपितकोपवह्निर्निशाचराणामधिपो महाबलः।
तदेव पुत्रव्यसनं विचिन्तयन् मुहुर्मुहुश्चैव तदा व्यनिःश्वसत् ॥ १९

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
युद्धकाण्डे रावणमन्युशल्याविष्कारो नाम द्विसप्ततितमः सर्गः

---

## त्रिसप्ततितमः सर्गः

### इन्द्रजिन्मायायुद्धम्

ततो हतान् राक्षसपुंगवांस्तान् देवान्तकादित्रिशिरोऽतिकायान्।
रक्षोगणास्तत्र हतावशिष्टास्ते रावणाय त्वरितं शशंसुः ॥ १
ततो हतांस्तान् सहसा निशम्य राजा मुमोहाश्रुपरिप्लुताक्षः।
पुत्रक्षयं भ्रातृवधं च घोरं विचिन्त्य राजा विपुलं प्रदध्यौ ॥ २
ततस्तु राजानमुदीक्ष्य दीनं शोकार्णवे संपरिपुप्लुवानम्।
रथर्षभो राक्षसराजसूनुस्तमिन्द्रजिद्वाक्यमिदं बभाषे ॥ ३
न तात मोहं प्रतिगन्तुमर्हसि यत्रेन्द्रजिज्जीवति राक्षसेन्द्र।
मद्बाणनिर्भिन्नविकीर्णदेहाः प्राणैर्वियुक्ताः समरे पतन्ति[1] ॥ ४
नेन्द्रारिबाणाभिहतो हि कश्चित् प्राणान् समर्थः समरेऽभिपातुम्।
पश्याद्य रामं सह लक्ष्मणेन मद्बाणनिर्भिन्नविकीर्णदेहम् ॥ ५
गतायुषं भूमितले शयानं शितैः शरैराचितसर्वगात्रम्।
इमां प्रतिज्ञां शृणु शक्रशत्रोः सुनिश्चितां पौरुषदैवयुक्ताम् ॥ ६
अद्यैव रामं सह लक्ष्मणेन संतर्पयिष्यामि शरैरमोघैः।
अद्येन्द्रवैवस्वतविष्णुमित्रसाध्याश्विवैश्वानरचन्द्रसूर्याः ॥ ७

---

१. इदमर्धम् च. नास्ति।

द्रक्ष्यन्तु मे विक्रममप्रमेयं विष्णोरिवोग्रं बलियज्ञवाटे ।
स एवमुक्त्वा त्रिदशेन्द्रशत्रुरापृच्छय राजानमदीनसत्त्वः ॥ ८
समारुरोहानिलतुल्यवेगं रथं खरश्रेष्ठसमाधियुक्तम् ॥

तमास्थाय महातेजा रथं हरिरथोपमम् । जगाम सहसा तत्र यत्र युद्धमरिंदमः ॥ ९
तं प्रस्थितं महात्मानमनुजग्मुर्महाबलाः । संहर्षमाणा बहवो धनुःप्रवरपाणयः ॥ १०
गजस्कन्धगताः केचित् केचित् प्रवरवाजिभिः । व्याघ्रवृश्चिकमार्जारैः खरोष्ट्रैश्च भुजङ्गमैः ॥ ११
वराहैः श्वापदैः सिंहैः जम्बुकैः पर्वतोपमैः । शशहंसमयूरैश्च राक्षसा भीमविक्रमाः[1] ॥ १२
प्रासमुद्गरनिस्त्रिंशपरश्वधगदाधराः[2] । सशङ्खनिनदैः पूर्णैर्भेरीणां चापि निःस्वनैः ॥ १३
जगाम त्रिदशेन्द्रारिः स्तूयमानो निशाचरैः[3] । सशङ्खशशिवर्णेन च्छत्रेण रिपुसूदनः ॥ १४
रराज प्रतिपूर्णेन नभश्चन्द्रमसा यथा । अवीज्यत ततो वीरो हैमैर्हेमविभूषितैः ॥ १५
चारुचामरमुख्यैश्च मुख्यः सर्वधनुष्मताम् । स तु दृष्ट्वा विनिर्यान्तं बलेन महता वृतम् ॥ १६
राक्षसाधिपतिः श्रीमान् रावणः पुत्रमब्रवीत् । त्वमप्रतिरथः पुत्र त्वया वै वासवो जितः ॥ १७
किं पुनर्मानुषं धृष्यं विहनिष्यसि राघवम् । तथोक्तो राक्षसेन्द्रेण प्रत्यगृह्णान्महाशिषः[4] ॥ १८
ततस्त्विन्द्रजिता लङ्का सूर्यप्रतिमतेजसा । रराजाप्रतिवीरेण द्यौरिवार्केण भास्वता ॥ १९
स संप्राप्य महातेजा युद्धभूमिमरिंदमः । स्थापयामास रक्षांसि रथं प्रति समन्ततः ॥ २०
ततस्तु हुतभोक्तारं हुतभुक्सदृशप्रभः । जुहाव राक्षसश्रेष्ठो मन्त्रवद्विधिवत्तदा ॥ २१
स हविर्लाजसंस्कारैः माल्यगन्धपुरस्कृतैः । जुहुवे पावकं दीप्तं राक्षसेन्द्रः प्रतापवान् ॥ २२
शस्त्राणि शरपत्राणि समिधोऽथ विभीतकाः । लोहितानि च वासांसि स्रुवं कार्ष्णायसं तथा ॥
स तत्राग्निं समास्तीर्य शरपत्रैः सतोमरैः । छागस्य कृष्णवर्णस्य गलं जग्राह जीवतः ॥ २४
सकृदेव समिद्धस्य विधूमस्य महार्चिषः । बभूवुस्तानि लिङ्गानि विजयं यान्यदर्शयन् ॥ २५
प्रदक्षिणावर्तशिखस्तप्तकाञ्चनभूषणः । हविस्तत् प्रतिजग्राह पावकः स्वयमुत्थितः ॥ २६
सोऽस्त्रमाहारयामास ब्राह्ममिन्द्ररिपुस्तदा । धनुश्चात्मरथं चैव सर्वं तत्राभ्यमन्त्रयत् ॥ २७
तस्मिन्नाहूयमानेऽस्त्रे हूयमाने च पावके । [5]सार्कग्रहेन्दुनक्षत्रं वितत्रास नभःस्थलम् ॥ २८

स पावकं पावकदीप्ततेजा हुत्वा महेन्द्रप्रतिमप्रभावः ।
सचापबाणासिरथाश्वसूतः खेऽन्तर्दधेत्मानमचिन्त्यरूपः ॥ २९

---

१. व्याघ्रेत्यादि भीमपराक्रमा इत्यन्तम् च. नास्ति ।

२. अस्यानन्तरम् — भुसुण्डीमुद्गरायष्टीशतघ्नीपरिघायुधाः—इति क. ख. ।

३. आर्जि वेगेन वीर्यवान् क. ख. घ. ।

४. स इत्यादि महाशिष इत्यन्तम् च. नास्ति ।

५. सार्धम् च. ।

ततो हयरथाकीर्णं पताकाध्वजशोभितम् । निर्ययौ राक्षसबलं नर्दमानं युयुत्सया ॥ ३०
ते शरैर्बहुभिः शस्त्रैस्तीक्ष्णवेगैरलंकृतैः । तोमरैरंकुशैश्चापि वानराञ्जघ्नुराहवे ॥ ३१
रावणिस्तु ततः क्रुद्धस्तान्निरीक्ष्य निशाचरान् । हृष्टा भवन्तो युध्यन्तु वानराणां जिघांसया ॥
ततस्ते राक्षसाः सर्वे नर्दन्तो जयकाङ्क्षिणः । अभ्यवर्षंस्ततो घोरान् वानराञ्शरवृष्टिभिः॥ ३३
स तु नालीकनाराचैर्गदाभिर्मुसलैरपि । रक्षोभिः संवृतः संख्ये वानरान् विचकर्त ह ॥ ३४
ते वध्यमानाः समरे वानराः पादपायुधाः । अभ्यद्रवन्त सहिता रावणिं रणकर्कशम् ॥ ३५
इन्द्रजित्तु ततः क्रुद्धो महातेजा महाबलः । वानराणां शरीराणि व्यधमद्रावणात्मजः ॥ ३६
शरेणैकेन च हरीन्नव पञ्च च सप्त च । चिच्छेद समरे क्रुद्धो राक्षसान् संप्रहर्षयन् ॥ ३७
स शरैः सूर्यसंकाशैः शातकुम्भविभूषितैः । वानरान् समरे वीरः प्रममाथ सुदुर्जयः ॥ ३८
ते भिन्नगात्राः समरे वानराः शरपीडिताः । पेतुर्मथितसंकल्पाः सुरैरिव महासुराः ॥ ३९
तं तपन्तमिवादित्यं घोरैर्बाणगभस्तिभिः । अभ्यधावन्त संक्रुद्धाः संयुगे वानरर्षभाः ॥ ४०
ततस्तु वानराः सर्वे भिन्नदेहा विचेतसः । व्यथिता विद्रवन्ति स्म रुधिरेण समुक्षिताः ॥ ४१
रामस्यार्थे पराक्रम्य वानरास्त्यक्तजीविताः । नर्दन्तस्तेऽभिवृत्तास्तु समरे सशिलायुधाः ॥ ४२
ते द्रुमैः पर्वताग्रैश्च शिलाभिश्च प्लवङ्गमाः । अभ्यवर्षन्त समरे रावणिं पर्यवस्थिताः ॥ ४३
तद्द्रुमाणां शिलानां च वर्षं प्राणहरं महत् । व्यपोहत महातेजा रावणिः समितिंजयः ॥ ४४
ततः पावकसंकाशैः शरैराशीविषोपमैः । वानराणामनीकानि बिभेद समरे प्रभुः ॥ ४५
अष्टादशशरैस्तीक्ष्णैः स विद्ध्वा गन्धमादनम् । विव्याध नवभिश्चैव नलं दूरादवस्थितम् ॥ ४६
सप्तभिस्तु महावीर्यो मैन्दं मर्मविदारणैः । पञ्चभिर्विशिखैश्चैव गजं विव्याध संयुगे ॥ ४७
जाम्बवन्तं तु दशभिः नीलं त्रिंशद्भिरेव च । सुग्रीवमृषभं चैव सोऽङ्गदं द्विविदं तथा ॥ ४८
घोरैर्दत्तवरैस्तीक्ष्णैः निष्प्राणानकरोत्तदा । अन्यानपि तथा मुख्यान् वानरान् बहुभिः शरैः ॥
अर्दयामास संक्रुद्धः कालाग्निरिव मूर्छितः । स शरैः सूर्यसंकाशैः सुमुक्तैः शीघ्रगामिभिः ॥५०
वानराणामनीकानि निर्ममन्थ महारणे । आकुलां वानरीं सेनां शरजालेन मोहिताम् ॥ ५१
हृष्टः स परया प्रीत्या ददर्श क्षतजोक्षिताम् । पुनरेव महातेजा राक्षसेन्द्रात्मजो बली ॥ ५२
संसृज्य बाणवर्षं च शस्त्रवर्षं च दारुणम् । ममर्द वानरानीकं इन्द्रजित्त्वरितो बली ॥ ५३

स्वसैन्यमुत्सृज्य समेत्य तूर्णं महारणे वानरवाहिनीषु ।
अदृश्यमानः शरजालमुग्रं ववर्ष नीलाम्बुधरो यथाम्बु ॥ ५४
ते शक्रजिद्बाणविशीर्णदेहा मायाहता विस्वरमुन्नदन्तः ।
रणे निपेतुर्हरयोऽद्रिकल्पा यथेन्द्रवज्राभिहता नगेन्द्राः ॥ ५५
ते केवलं संददृशुः शिताग्रान् बाणान् रणे वानरवाहिनीषु ।

मायानिगूढं तु सुरेन्द्रशत्रुं न चावृतं राक्षसमभ्यपश्यन् ॥ ५६

ततः स रक्षोऽधिपतिर्महात्मा सर्वा दिशो बाणगणैः शिताग्रैः ।
प्रच्छादयामास रविप्रकाशैर्विषादयामास च वानरेन्द्रान् ॥ ५७

स शूलनिस्त्रिंशपरश्वधानि व्याविध्य दीप्तानलसंनिभानि ।
सविस्फुलिङ्गोज्ज्वलपावकानि ववर्ष तीव्रं प्लवगेन्द्रसैन्ये ॥ ५८

ततो ज्वलनसंकाशैः शितैर्वानरयूथपाः । ताडिताः शक्रजिद्बाणैः प्रफुल्ला इव किंशुकाः ॥ ५९

तेऽन्योन्यमभिसर्पन्तो निनदन्तश्च विस्वरम् । राक्षसेन्द्रास्त्रनिर्भिन्ना निपेतुर्वानरर्षभाः ॥ ६०

उदीक्षमाणा गगनं केचिन्नेत्रेषु ताडिताः । शरैर्विविशुरन्योन्यं पेतुश्च जगतीतले ॥ ६१

हनूमन्तं च सुग्रीवमङ्गदं गन्धमादनम् । जाम्बवन्तं सुषेणं च वेगदर्शिनमेव च ॥ ६२

मैन्दं च द्विविदं नीलं गवाक्षं गजगोमुखौ । केसरिं हरिलोमानं विद्युद्दंष्ट्रं च वानरम् ॥ ६३

सूर्याननं ज्योतिमुखं तथा दधिमुखं हरिम् । पावकाक्षं नलं चैव कुमुदं चैव वानरम् ॥ ६४

प्रासैः शूलैः शितैर्बाणैरिन्द्रजिन्मन्त्रसंहितैः । विव्याध हरिशार्दूलान् सर्वांस्तान् राक्षसोत्तमः ॥

स वै गदाभिर्हरियूथमुख्यान्निर्भिद्य बाणैस्तपनीयपुङ्खैः ।
ववर्ष रामं शरवृष्टिजालैः सलक्ष्मणं भास्कररश्मिकल्पैः ॥ ६६

स बाणवर्षैरभिवर्ष्यमाणो धारानिपातानिव तानचिन्त्य[1] ।
समीक्षमाणः परमाद्भुतश्री रामस्तदा लक्ष्मणमित्युवाच ॥ ६७

असौ पुनर्लक्ष्मण राक्षसेन्द्रो ब्रह्मास्त्रमाश्रित्य सुरेन्द्रशत्रुः ।
निपातयित्वा हरिसैन्यमुग्रमस्माञ्शरैरर्दयति प्रसक्तः ॥ ६८

स्वयंभुवा दत्तवरो महात्मा स्वमास्थितोऽन्तर्हितभीमकायः ।
कथं नु शक्यो युधि नष्टदेहो निहन्तुमद्येन्द्रजिदुद्यतास्त्रः ॥ ६९

मन्ये स्वयंभूर्भगवानचिन्त्यो यस्यैतदस्त्रं प्रभवश्च योऽस्य ।
बाणावपातांस्त्वमिहाद्य धीमन् मया सहाव्यग्रमनाः सहस्व ॥ ७०

प्रच्छादयत्येष हि राक्षसेन्द्रः सर्वा दिशः सायकवृष्टिजालैः ।
एतच्च सर्वं पतिताग्र्यशूरं न भ्राजते वानरराजसैन्यम् ॥ ७१

आवां तु दृष्ट्वा पतितौ विसंज्ञौ निवृत्तयुद्धौ गतरोषहर्षौ ।
ध्रुवं प्रवेक्ष्यत्यमरारिवासमसौ समादाय रणाग्रलक्ष्मीम् ॥ ७२

[1] तान् विचिन्त्य छ. ।

ततस्तु ताविन्द्रजिदस्त्रजालैर्बभूवतुस्तत्र तथा विशस्तौ ।
स चापि तौ तत्र विषादयित्वा ननाद हर्षाद्युधि राक्षसेन्द्रः ॥ ७३
स तत्तदा वानरसैन्यमेवं रामं च संख्ये सह लक्ष्मणेन ।
विषादयित्वा सहसा विवेश पुरीं दशग्रीवभुजाभिगुप्ताम् ॥ ७४

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
युद्धकाण्डे इन्द्रजिन्मायायुद्धं नाम त्रिसप्ततितमः सर्गः

## चतुःसप्ततितमः सर्गः

### ओषधिपर्वतानयनम्

तयोस्तदा सादितयो रणाग्रे मुमोह सैन्यं हरिपुंगवानाम् ।
सुग्रीवनीलाङ्गदजाम्बवन्तो न चापि किंचित् प्रतिपेदिरे ते ॥ १
ततो विषण्णं समवेक्ष्य सैन्यं विभीषणो बुद्धिमतां वरिष्ठः ।
उवाच शाखामृगराजवीरानाश्वासयन्नप्रतिमैर्वचोभिः ॥ २
मा भैष्ट नास्त्यत्र विषादकालो यदार्यपुत्रौ ह्यवशौ विषण्णौ ।
स्वयंभुवो वाक्यमथोद्वहन्तौ यत् सादिताविन्द्रजिदस्त्रजालैः[1] ॥ ३
तस्मै तु दत्तं परमास्त्रमेतत् स्वयंभुवा ब्राह्मममोघवेगम् ।
तन्मानयन्तौ युधि राजपुत्रौ निपातितौ कोऽत्र विषादकालः ॥ ४

ब्राह्ममस्त्रं ततो धीमान् मानयित्वा तु मारुतिः । विभीषणवचः श्रुत्वा हनुमांस्तमथाब्रवीत् ॥ ५
एतस्मिन्निहते सैन्ये वानराणां तरस्विनाम् । यो यो धारयते प्राणांस्तं तमाश्वासयावहै ॥ ६
तावुभौ युगपद्वीरौ हनुमद्राक्षसोत्तमौ । उल्काहस्तौ तदा रात्रौ रणशीर्षे विचेरतुः ॥ ७
भिन्नलाङ्गूलहस्तोरुपादाङ्गुलिशिरोधरैः । स्रवद्भिः क्षतजं गात्रैः प्रस्रवद्भिस्ततस्ततः ॥ ८
पतितैः पर्वताकारैर्वानरैरभिसंकुलाम् । शस्त्रैश्च पतितैर्दीप्तैर्ददृशाते वसुंधराम् ॥ ९
सुग्रीवमङ्गदं नीलं शरभं गन्धमादनम् । गवाक्षं च सुषेणं च वेगदर्शिनमाहुकम् ॥ १०
मैन्दं नलं ज्योतिमुखं द्विविदं पनसं तथा । एतांश्चान्यांस्ततो वीरौ ददृशाते हतान् रणे ॥ ११
सप्तषष्टिर्हताः कोट्यो वानराणां तरस्विनाम् । अह्नः पञ्चमशेषेण वल्लभेन स्वयंभुवः ॥ १२
सागरौघनिभं भीमं दृष्ट्वा बाणार्दितं बलम् । मार्गते जाम्बवन्तं स हनुमान् सविभीषणः ॥ १३

१. अस्यानन्तरम्—विभीषणस्तत्र वराद्विधातुरासादितोऽस्त्रेण निरीक्षमाणः। सेनां हरीणां द्रुहिणास्त्रदूनां स्वस्थं हनूमन्तमुवाच दृष्ट्वा ॥—इति क. ख. ग. ।

स्वभावजरया युक्तं वृद्धं शरशतैश्चितम् । प्रजापतिसुतं वीरं शाम्यन्तमिव पावकम् ॥ १४
दृष्ट्वा तमुपसंगम्य पौलस्त्यो वाक्यमब्रवीत् । कच्चिदार्य शरैस्तीक्ष्णैः प्राणा न ध्वंसितास्तव॥ १५
विभीषणवचः श्रुत्वा जाम्बवानृक्षपुंगवः । कृच्छ्रादभ्युद्गिरन् वाक्यमिदं वचनमब्रवीत् ॥ १६
नैर्ऋतेन्द्र महावीर्य स्वरेण त्वाभिलक्षये । पीड्यमानः शितैर्बाणैर्न त्वां पश्यामि चक्षुषा ॥१७
अञ्जना सुप्रजा येन मातरिश्वा स नैर्ऋत । हनुमान् वानरश्रेष्ठः प्राणान् धारयते क्वचित्॥१८
श्रुत्वा जाम्बवतो वाक्यमुवाचेदं विभीषणः । आर्यपुत्रावतिक्रम्य कस्मात् पृच्छसि मारुतिम् ॥
नैव राजनि सुग्रीवे नाङ्गदे नापि राघवे । आर्य संदर्शितः स्नेहः यथा वायुसुते परः ॥ २०
विभीषणवचः श्रुत्वा जाम्बवान् वाक्यमब्रवीत् । शृणु नैर्ऋतशार्दूल यस्मात् पृच्छामि मारुतिम् ॥
तस्मिञ्जीवति वीरे तु हतमप्यहतं बलम् । हनुमत्युज्झितप्राणे जीवन्तोऽपि वयं हताः ॥ २२
धरते मारुतिस्तात मारुतप्रतिमो यदि । वैश्वानरसमो वीर्ये जीविताशा ततो भवेत् ॥ २३
ततो वृद्धमुपागम्य नियमेनाभ्यवादयत् । गृह्य जाम्बवतः पादौ हनुमान् मारुतात्मजः ॥ २४
श्रुत्वा हनुमतो वाक्यं तथापि व्यथितेन्द्रियः । पुनर्जातमिवात्मानं मन्यते स्मर्क्षपुंगवः ॥ २५
ततोऽब्रवीन्महातेजा हनुमन्तं स जाम्बवान् । आगच्छ हरिशार्दूल वानरांस्त्रातुमर्हसि ॥ २६
नान्यो विक्रमपर्याप्तस्त्वमेषां परमः सखा । त्वत्पराक्रमकालोऽयं नान्यं पश्यामि कंचन ॥ २७
ऋक्षवानरवीराणामनीकानि प्रहर्षय । विशल्यौ कुरु चाप्येतौ सादितौ रामलक्ष्मणौ ॥ २८
गत्वा परममध्वानमुपर्युपरि सागरम् । हिमवन्तं नगश्रेष्ठं हनुमन् गन्तुमर्हसि ॥ २९
ततः काञ्चनमत्युच्चमृषभं पर्वतोत्तमम् । कैलासशिखरं चापि द्रक्ष्यस्यरिनिषूदन ॥ ३०
तयोः शिखरयोर्मध्ये प्रदीप्तमतुलप्रभम् । सर्वौषधियुतं वीर द्रक्ष्यस्योषधिपर्वतम् ॥ ३१
तस्य वानरशार्दूल चतस्रो मूर्ध्नि संभवाः । द्रक्ष्यस्योषधयो दीप्ता दीपयन्त्यो दिशो दश ॥३२
मृतसंजीवनीं चैव विशल्यकरणीमपि । सावर्ण्यकरणीं चैव संधानकरणीं तथा ॥ ३३
ताः सर्वा हनुमन् गृह्य क्षिप्रमागन्तुमर्हसि । आश्वासय हरीन् प्राणैर्योज्य गन्धवहात्मज॥ ३४
श्रुत्वा जाम्बवतो वाक्यं हनुमान् हरिपुंगवः । आपूर्यत बलोद्धर्षैस्तोयवेगैरिवार्णवः ॥ ३५
स पर्वततटाग्रस्थः पीडयन् पर्वतोत्तमम् । हनुमान् दृश्यते वीरो द्वितीय इव पर्वतः ॥ ३६
हरिपादविनिर्भग्नो निषसाद स सर्वतः । न शशाक तदात्मानं सोढुं भृशनिपीडितः ॥ ३७
तस्य पेतुर्नगा भूमौ हरिवेगाच्च जज्वलुः । शृङ्गाणि च व्यशीर्यन्त पीडितस्य हनूमता ॥ ३८
तस्मिन् संपीड्यमाने तु भग्नद्रुमशिलातले । न शेकुर्वानराः स्थातुं घूर्णमाने नगोत्तमे ॥ ३९
सा घूर्णितमहाद्वारा प्रभग्नगृहगोपुरा । लङ्का त्रासाकुला रात्रौ प्रनृत्तेवाभवत्तदा ॥ ४०
पृथिवीधरसंकाशो निपीड्य धरणीधरम् । पृथिवीं क्षोभयामास सार्णवां मारुतात्मजः ॥ ४१
आरुरोह तदा तस्माद्धरिर्मलयपर्वतम् । मेरुमन्दरसंकाशं नानाप्रस्रवणाकुलम् ॥ ४२

नानाद्रुमलताकीर्णं विकासिकमलोत्पलम् । सेवितं देवगन्धर्वैः षष्टियोजनमुच्छ्रितम् ॥ ४३
विद्याधरैर्मुनिगणैरप्सरोभिर्निषेवितम् । नानामृगगणाकीर्णं बहुकन्दरशोभितम् ॥ ४४
सर्वानाकुलयंस्तत्र यक्षगन्धर्वकिन्नरान् । हनुमान् मेघसंकाशो ववृधे मारुतात्मजः[1] ॥ ४५
पद्भ्यां तु शैलमापीड्य बडबामुखवन्मुखम् । विवृत्योग्रं ननादोच्चैस्त्रासयन्निव राक्षसान् ॥ ४६
तस्य नानद्यमानस्य श्रुत्वा निनदमद्भुतम् । लङ्कास्था राक्षसाः सर्वे न शेकुः स्पन्दितुं भयात् ॥
नमस्कृत्वाथ रामाय मारुतिर्भीमविक्रमः । राघवार्थे परं कर्म समीहत परंतपः ॥ ४८

स पुच्छमुद्यम्य भुजङ्गकल्पं विनम्य पृष्ठं श्रवणे निकुञ्च्य ।
विवृत्य वक्त्रं बडबामुखाभमापुप्लुवे व्योमनि चण्डवेगः ॥ ४९
स वृक्षषण्डांस्तरसा जहार शैलाञ्शिलाः प्राकृतवानरांश्च ।
बाहूरुवेगोद्धतसंप्रणुन्नास्ते क्षीणवेगाः सलिले निपेतुः ॥ ५०
स तौ प्रसार्योरगभोगकल्पौ भुजौ भुजङ्गारिनिकाशवीर्यः ।
जगाम मेरुं नगराजमग्र्यं दिशः प्रकर्षन्निव वायुसूनुः ॥ ५१
स सागरं घूर्णितवीचिमालं तदा भृशं भ्रामितसर्वसत्त्वम् ।
समीक्षमाणः सहसा जगाम चक्रं यथा विष्णुकराग्रमुक्तम् ॥ ५२
स पर्वतान् वृक्षगणान् सरांसि नदीस्तटाकानि पुरोत्तमानि ।
स्फीताञ्जनान्तानपि संप्रवीक्ष्य जगाम वेगात् पितृतुल्यवेगः ॥ ५३

आदित्यपथमाश्रित्य जगाम स गतक्लमः । हनुमांस्त्वरितो वीरः पितृतुल्यपराक्रमः ॥ ५४
जवेन महता युक्तो मारुतिर्मारुतो यथा । जगाम हरिशार्दूलो दिशः शब्देन पूरयन् ॥ ५५
स्मरञ्जाम्बवतो वाक्यं मारुतिर्वातरंहसा । ददर्श सहसा चापि हिमवन्तं महाकपिः ॥ ५६
नानाप्रस्रवणोपेतं बहुकन्दरनिर्झरम् । श्वेताभ्रचयसंकाशैः शिखरैश्चारुदर्शनैः ॥ ५७
शोभितं विविधैर्वृक्षैरगमत् पर्वतोत्तमम् ॥

स तं समासाद्य महानगेन्द्रमतिप्रवृद्धोत्तमहेमशृङ्गम्[2] ।
ददर्श पुण्यानि महाश्रमाणि सुरर्षिसङ्घोत्तमसेवितानि ॥ ५८
स ब्रह्मकोशं रजतालयं च शक्रालयं रुद्रशरप्रमोक्षम् ।
हयाननं ब्रह्मशिरश्च दीप्तं ददर्श वैवस्वतकिङ्करांश्च ॥ ५९

---

१. ४२—४५ पद्यानि क. ख. ग. न सन्ति । २. घोरशृङ्गम् च. छ. ।

वज्रालयं वैश्रवणालयं च सूर्यप्रभं सूर्यनिबन्धनं च ।
ब्रह्मासनं शंकरकार्मुकं च ददर्श नाभिं च वसुंधरायाः[1] ॥ ६०

कैलासमग्र्यं हिमवच्छिलां च तथर्षभं काञ्चनशैलमग्र्यम् ।
संदीप्तसर्वौषधिसंप्रदीप्तं ददर्श सर्वौषधिपर्वतेन्द्रम् ॥ ६१

स तं समीक्ष्यानलरश्मिदीप्तं विसिष्मिये वासवदूतसूनुः ।
आवृत्य तं चौषधिपर्वतेन्द्रं तत्रौषधीनां विचयं चकार ॥ ६२

स योजनसहस्राणि समतीत्य महाकपिः । दिव्यौषधिधरं शैलं व्यचरन्मारुतात्मजः ॥ ६३

महौषध्यस्ततः सर्वास्तस्मिन् पर्वतसत्तमे । विज्ञायार्थिनमायान्तं ततो जग्मुरदर्शनम् ॥ ६४

स ता महात्मा हनुमानपश्यंश्चुकोप कोपाच्च भृशं ननाद ।
अमृष्यमाणोऽग्निनिकाशचक्षुर्महीधरेन्द्रं तमुवाच वाक्यम् ॥ ६५

किमेतदेवं सुविनिश्चितं ते यद्राघवे नासि कृतानुकम्पः ।
पश्याद्य मद्बाहुबलाभिभूतो विशीर्णमात्मानमथो नगेन्द्र ॥ ६६

स तस्य शृङ्गं सनगं सनागं सकाञ्चनं धातुसहस्रजुष्टम् ।
विकीर्णकूटज्वलिताग्रसानुं प्रगृह्य वेगात् सहसोन्ममाथ ॥ ६७

स तं समुत्पाट्य खमुत्पपात वित्रास्य लोकान् ससुरासुरेन्द्रान् ।
संस्तूयमानः खचरैरनेकैर्जगाम वेगाद्गरुडोग्रवेगः ॥ ६८

स भास्कराध्वानमनुप्रपन्नस्तं भास्कराभं शिखरं प्रगृह्य ।
बभौ तदा भास्करसंनिकाशो रवेः समीपे प्रतिभास्कराभः ॥ ६९

स तेन शैलेन भृशं रराज शैलोपमो गन्धवहात्मजस्तु ।
सहस्रधारेण सपावकेन चक्रेण खे विष्णुरिवार्पितेन ॥ ७०

तं वानराः प्रेक्ष्य विनेदुरुच्चैः स तानपि प्रेक्ष्य मुदा ननाद ।
तेषां समुद्घुष्टरवं निशम्य लङ्कालया भीमतरं विनेदुः ॥ ७१

ततो महात्मा निपपात तस्मिञ्शैलोत्तमे वानरसैन्यमध्ये ।
हर्युत्तमेभ्यः शिरसाभिवाद्य विभीषणं तत्र स सस्वजे च ॥ ७२

तावप्युभौ मानुषराजपुत्रौ तं गन्धमाघ्राय महौषधीनाम् ।
बभूवतुस्तत्र तदा विशल्यावुत्तस्थुरन्ये च हरिप्रवीराः ॥ ७३

---

१. अस्यानन्तरम्— विघ्नेश्वरं तत्र सनन्दिकेशं स्कन्दं वृषं देवगणैर्ददर्श । उमां सुदुर्गां [उमां स दुर्गां ?] मथकन्यकाभिर्विलासयन्तीं ददर्शाऽप्रमेयवीर्यः ॥—इति ग. ।

सर्वे विशल्या विरुजः क्षणेन हरिप्रवीरा निहताश्च ये स्युः ।
गन्धेन तासां प्रवरौषधीनां सुप्ता निशान्तेष्विव संप्रबुद्धाः ॥ ७४

यदाप्रभृति लङ्कायां युध्यन्ते कपिराक्षसाः । तदाप्रभृति मानार्थमाज्ञया रावणस्य च ॥ ७५

ये हन्यन्ते रणे तत्र राक्षसाः कपिकुञ्जरैः । हताहतास्तु क्षिप्यन्ते सर्व एव तु सागरे ॥ ७६

ततो हरिर्गन्धवहात्मजस्तु तमोषधीशैलमुदग्रवीर्यः ।
निनाय वेगाद्धिमवन्तमेव पुनश्च रामेण समाजगाम ॥ ७७

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
युद्धकाण्डे ओषधिपर्वतानयनं नाम चतुःसप्ततितमः सर्गः

## पञ्चसप्ततितमः सर्गः

### लङ्कादाहः

ततोऽब्रवीन्महातेजाः सुग्रीवो वानराधिपः । अर्थ्यं विज्ञापयंश्चापि हनुमन्तमिदं वचः ॥ १

यतो हतः कुम्भकर्णः कुमाराश्च निषूदिताः । नेदानीमुपनिर्हारं रावणो दातुमर्हति ॥ २

ये ये महाबलाः सन्ति लघवश्च प्लवङ्गमाः । लङ्कामभ्युत्पतन्त्वाशु गृह्योल्काः प्लवगर्षभाः ॥ ३

ततोऽस्तं गत आदित्ये रौद्रे तस्मिन्निशामुखे । लङ्कामभिमुखाः सोल्का जग्मुस्ते प्लवगर्षभाः॥

उल्काहस्तैर्हरिगणैः सर्वतः समभिद्रुताः । आरक्षस्था विरूपाक्षाः सहसा विप्रदुद्रुवुः ॥ ५

गोपुराट्टप्रतोलीषु चर्यासु विविधासु च । प्रासादेषु च संहृष्टाः ससृजुस्ते हुताशनम् ॥ ६

तेषां गृहसहस्राणि ददाह हुतभुक्तदा । प्रासादाः पर्वताकाराः पतन्ति धरणीतले ॥ ७

अगरुर्दह्यते तत्र वरं च हरिचन्दनम् । मौक्तिका मणयः स्निग्धा वज्रं चापि प्रवालकम् ॥ ८

क्षौमं च दह्यते तत्र कौशेयं चापि शोभनम् । आविकं विविधं चौर्णं काञ्चनं भाण्डमायुधम् ॥

नानाविकृतसंस्थानं वाजिभाण्डपरिच्छदौ । गजग्रैवेयकक्ष्याश्च रथभाण्डाश्च संस्कृताः ॥ १०

तनुत्राणि च योधानां हस्त्यश्वानां च वर्म च । खड्गा धनूंषि ज्याबाणास्तोमराङ्कुशशक्तयः॥ ११

रोमजं वालजं चर्म व्याघ्रजं चाण्डजं बहु । मुक्तामणिविचित्रांश्च प्रासादांश्च समन्ततः ॥ १२

विविधानस्त्रसंयोगानग्निर्दहति तत्र वै । नानाविधान् गृहच्छन्दान् ददाह हुतभुक्तदा ॥ १३

आवासान् राक्षसानां च सर्वेषां गृहगर्धिनाम् । हेमचित्रतनुत्राणां स्रग्दामाम्बरधारिणाम्॥ १४

शीधुपानचलाक्षाणां मदविह्वलगामिनाम् । कान्तालम्बितवस्त्राणां शत्रुसंजातमन्युनाम् ॥ १५

गदाशूलासिहस्तानां खादतां पिबतामपि । शयनेषु महार्हेषु प्रसुप्तानां प्रियैः सह ॥ १६

त्रस्तानां गच्छतां तूर्णं पुत्रानादाय सर्वतः । तेषां शतसहस्राणि तदा लङ्कानिवासिनाम्॥ १७

अदहत् पावकस्तत्र जज्वाल च पुनः पुनः । सारवन्ति महार्हाणि गम्भीरगुणवन्ति च ॥ १८
हेमचन्द्रार्धचन्द्राणि चन्द्रशालोत्तमानि च । रत्नचित्रगवाक्षाणि साधिष्ठानानि सर्वशः ॥ १९
मणिविद्रुमचित्राणि स्पृशन्तीव दिवाकरम् । क्रौञ्चबर्हिणवीणानां भूषणानां च निःस्वनैः ॥२०
नादितान्यचलाभानि वेश्मान्यग्निर्ददाह सः । ज्वलनेन परीतानि तोरणानि चकाशिरे ॥ २१
विद्युद्भिरिव नद्धानि मेघजालानि घर्मगे । ज्वलनेन परीतानि निपेतुर्भवनान्यथ ॥ २२
वज्रिवज्रहतानीव शिखराणि महागिरेः । विमानेषु प्रसुप्ताश्च दह्यमाना वराङ्गनाः ॥ २३
त्यक्ताभरणसर्वाङ्गा हा हेत्युच्चैर्विचुक्रुशुः । तानि निर्दह्यमानानि दूरतः प्रचकाशिरे ॥ २४
हिमवच्छिखराणीव दीप्तौषधिवनानि च । हर्म्याग्रैर्दह्यमानैश्च ज्वालाप्रज्वलितैरपि ॥ २५
रात्रौ सा दृश्यते लङ्का पुष्पितैरिव किंशुकैः । हस्त्यध्यक्षैर्गजैर्मुक्तैर्मुक्तैश्च तुरगैरपि ॥ २६
बभूव लङ्का लोकान्ते भ्रान्तग्राह इवार्णवः । अश्वं मुक्तं गजो दृष्ट्वा कचिद्भीतोऽपसर्पति ॥२७
भीतो भीतं गजं दृष्ट्वा कचिदश्वो निवर्तते । लङ्कायां दह्यमानायां शुशुभे स महार्णवः ॥ २८
छायासंसक्तसलिलो लोहितोद इवार्णवः । सा बभूव मुहूर्तेन हरिभिर्दीपिता पुरी ॥ २९
लोकस्यास्य क्षये घोरे प्रदीप्तेव वसुंधरा । नारीजनस्य धूमेन व्याप्तस्योच्चैर्विनेदुषः ॥ ३०
स्वनो ज्वलनतप्तस्य शुश्रुवे दशयोजनम् । प्रदग्धकायानपरान् राक्षसान्निर्गतान् बहिः ॥ ३१
सहसाभ्युत्पतन्ति स्म हरयोऽथ युयुत्सवः । उद्घुष्टं वानराणां च राक्षसानां च निस्वनः ॥३२
दिशो दश समुद्रं च पृथिवीं चान्वनादयत् । विशल्यौ तु महात्मानौ तावुभौ रामलक्ष्मणौ ॥
असंभ्रान्तौ जगृहतुस्तदोभे धनुषी वरे । ततो विस्फारयानस्य रामस्य धनुरुत्तमम् ॥ ३४
बभूव तुमुलः शब्दो राक्षसानां भयावहः । अशोभत तदा रामो धनुर्विस्फारयन् महत् ॥ ३५
भगवानिव संक्रुद्धो भवो वेदमयं धनुः । उद्घुष्टं वानराणां च राक्षसानां च निस्वनम् ॥ ३६
ज्याशब्दस्तावुभौ शब्दावति रामस्य शुश्रुवे । वानरोद्घुष्टघोषश्च राक्षसानां च निस्वनः ॥ ३७
ज्याशब्दश्चापि रामस्य त्रयं व्याप्तं दिशो दश । तस्य कार्मुकमुक्तैश्च शरैस्तत् पुरगोपुरम् ॥
कैलासशृङ्गप्रतिमं विकीर्णमपतद्भुवि । ततो रामशरान् दृष्ट्वा विमानेषु गृहेषु च ॥ ३९
संनाहो राक्षसेन्द्राणां तुमुलः समपद्यत । तेषां संनह्यमानानां सिंहनादं च कुर्वताम् ॥ ४०
शर्वरी राक्षसेन्द्राणां रौद्रीव समपद्यत । आदिष्टा वानरेन्द्रास्तु सुग्रीवेण महात्मना ॥ ४१
आसन्नद्वारमासाद्य युध्यध्वं प्लवगर्षभाः । यश्च वो वितथं कुर्यात्तत्र तत्र ह्युपस्थितः ॥ ४२
स हन्तव्यो हि संप्लुत्य राजशासनदूषकः । तेषु वानरमुख्येषु दीप्तोल्कोज्ज्वलपाणिषु ॥ ४३
स्थितेषु द्वारमासाद्य रावणं मन्युराविशत् । तस्य [1]जृम्भितविक्षोभाद्व्यामिश्रा वै दिशो दश॥४४
रूपवानिव रुद्रस्य मन्युर्गात्रेष्वदृश्यत । स निकुम्भं च कुम्भं च कुम्भकर्णात्मजावुभौ ॥ ४५

१. जृम्भितविक्षेपात् च.

प्रेषयामास संक्रुद्धो राक्षसैर्बहुभिः सह । यूपाक्षः शोणिताक्षश्च प्रजङ्घः कम्पनस्तथा ॥ ४६
निर्ययुः कौम्भकर्णिभ्यां सह रावणशासनात् । शशास चैव तान् सर्वान् राक्षसान् सुमहाबलान्
नादयन् गच्छतात्रैव जयध्वं शीघ्रमेव च । ततस्तु चोदितास्तेन राक्षसा ज्वलितायुधाः ॥ ४८
लङ्काया निर्ययुर्वीराः प्रणदन्तः पुनः पुनः । रक्षसां भूषणस्थाभिर्भाभिः स्वाभिश्च सर्वशः ॥ ४९
चक्रुस्ते सप्रभं व्योम हरयश्चाग्निभिः सह । तत्र ताराधिपस्याभा ताराणां च तथैव च ॥ ५०
तयोराभरणस्था च बलयोर्द्यामभासयन् । चन्द्राभा भूषणाभा च गृहाणां ज्वलतां च भाः ॥ ५१
हरिराक्षससैन्यानि भ्राजयामास सर्वतः । तत्र चोर्ध्वं प्रदीप्तानां गृहाणां सागरः पुनः ॥ ५२
भाभिः संसक्तपातालश्चलोर्मिः शुशुभेऽधिकम् । पताकाध्वजसंसक्तमुत्तमासिपरश्वधम् ॥ ५३
भीमाश्वरथमातङ्गं नानापत्तिसमाकुलम् । दीप्तशूलगदाखड्गप्रासतोमरकार्मुकम् ॥ ५४
तद्राक्षसबलं घोरं भीमविक्रमपौरुषम् । ददृशे ज्वलितप्रासं किङ्किणीशतनादितम् ॥ ५५
हेमजालाजितभुजं व्यावेष्टितपरश्वधम् । व्याघूर्णितमहाशस्त्रं बाणसंसक्तकार्मुकम् ॥ ५६
गन्धमाल्यमधूत्सेकसंमोदितमहानिलम् । घोरं शूरजनाकीर्णं महाम्बुधरनिस्वनम् ॥ ५७
तद्दृष्ट्वा बलमायान्तं राक्षसानां सुदारुणम् । संचचाल प्लवङ्गानां बलमुच्चैर्ननाद च ॥ ५८
जवेनाप्लुत्य च पुनस्तद्बलं रक्षसां महत् । अभ्ययात् प्रत्यरिबलं पतङ्गा इव पावकम् ॥ ५९
तेषां भुजपरामर्शव्यामृष्टपरिघाशनि । राक्षसानां बलं श्रेष्ठं भूयस्तरमशोभत ॥ ६०
तत्रोन्मत्ता इवोत्पेतुर्हरयोऽथ युयुत्सवः । तरुशैलैरभिघ्नन्तो मुष्टिभिश्च निशाचरान् ॥ ६१
तथैवापततां तेषां कपीनामसिभिः शितैः । शिरांसि सहसा जह्रू राक्षसा भीमदर्शनाः ॥ ६२
दशनैर्हृतकर्णाश्च मुष्टिनिष्कीर्णमस्तकाः । शिलाप्रहारभग्नाङ्गा विचेरुस्तत्र राक्षसाः ॥ ६३
तथैवाप्यपरे तेषां कपीनामभिलक्षिताः । प्रवीरानभितो जघ्नू राक्षसानां तरस्विनाम् ॥ ६४
तथैवाप्यपरे तेषां कपीनामसिभिः शितैः । हरिवीरान्निजघ्नुश्च घोररूपा निशाचराः ॥ ६५
घ्नन्तमन्यं जघानान्यः पातयन्तमपातयत् । गर्हमाणं जगर्हेऽन्यो दशन्तमपरोऽदशत् ॥ ६६
देहीत्यन्यो ददात्यन्यो ददामीत्यपरः पुनः । किं क्लेशयसि तिष्ठेति तत्रान्योन्यं बभाषिरे ॥ ६७
विप्रलम्बितवस्त्रं च विमुक्तकवचायुधम् । समुद्यतमहाप्रासं यष्टिशूलासिसंकुलम् ॥ ६८
प्रावर्तत महारौद्रं युद्धं वानररक्षसाम् । वानरान् दश सप्तेति राक्षसा जघ्नुराहवे ॥ ६९
राक्षसान् दश सप्तेति वानराश्चाभ्यपातयन् । विस्रस्तकेशवसनं विध्वस्तकवचध्वजम् ॥ ७०
बलं राक्षसमालम्ब्य वानराः पर्यवारयन् । ववृधे तुमुलं युद्धं रक्षसां वानरैः सह[1] ॥ ७१

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
युद्धकाण्डे लङ्कादाहो नाम पञ्चसप्ततितमः सर्गः

---

१. इदमर्धम् च. नास्ति ।

# षट्सप्ततितमः सर्गः

## कम्पनादिवधः

प्रवृत्ते संकुले तस्मिन् घोरे वीरजनक्षये । अङ्गदः कम्पनं वीरमाससाद रणोत्सुकः ॥ १
आहूय सोऽङ्गदं कोपात्ताडयामास वेगितः । गदया कम्पनः पूर्वं स चचाल भृशाहतः ॥ २
स संज्ञां प्राप्य तेजस्वी चिक्षेप शिखरं गिरेः । अर्दितश्च प्रहारेण कम्पनः पतितो भुवि ॥ ३
ततस्तु कम्पनं दृष्ट्वा शोणिताक्षो हतं रणे । रथेनाभ्यपतत् क्षिप्रं तत्राङ्गदमभीतवत् ॥ ४
सोऽङ्गदं निशितैर्बाणैस्तदा विव्याध वेगितः । शरीरदारणैस्तीक्ष्णैः कालाग्निसमविग्रहैः ॥ ५
क्षुरक्षुरप्रैर्नाराचैर्वत्सदन्तैः शिलीमुखैः । कर्णिशल्यविपाठैश्च बहुभिर्निशितैः शरैः ॥ ६
अङ्गदः प्रतिविद्धाङ्गो वालिपुत्रः प्रतापवान् । धनुरुग्रं रथं बाणान् ममर्द तरसा बली ॥ ७
शोणिताक्षस्ततःक्षिप्रमसिचर्म समाददे । उत्पपात दिवं क्रुद्धो वेगवानविचारयन् ॥ ८
तं क्षिप्रतरमाप्लुत्य परामृश्याङ्गदो बली । करेण तस्य तं खड्गं समाच्छिद्य ननाद च ॥ ९
तस्यांसफलके खड्गं निजघान ततोऽङ्गदः । यज्ञोपवीतवच्चैनं चिच्छेद कपिकुञ्जरः ॥ १०
तं प्रगृह्य महाखड्गं विनद्य च पुनः पुनः । वालिपुत्रोऽभिदुद्राव रणशीर्षे परानरीन् ॥ ११
आयसीं तु गदां वीरः प्रगृह्य कनकाङ्गदः । शोणिताक्षः समाविध्य तमेवानुपपात ह ॥ १२
प्रजङ्घसहितो वीरो यूपाक्षस्तु ततो बली । रथेनाभिययौ क्रुद्धो वालिपुत्रं महाबलम् ॥ १३
तयोर्मध्ये कपिश्रेष्ठः शोणिताक्षप्रजङ्घयोः विशाखयोर्मध्यगतः पूर्णचन्द्र इवाभवत् ॥ १४
अङ्गदं परिरक्षन्तौ मैन्दो द्विविद एव च । तस्य तस्थतुरभ्याशे परस्परदिदृक्षया ॥ १५
अभिपेतुर्महाकायाः प्रतियत्ता महाबलाः । राक्षसा वानरान् रोषादसिचर्मगदाधराः ॥ १६
त्रयाणां वानरेन्द्राणां त्रिभी राक्षसपुंगवैः । संसक्तानां महद्युद्धमभवद्रोमहर्षणम् ॥ १७
ते तु वृक्षान् समादाय संप्रचिक्षिपुराहवे । खड्गेन प्रतिचिच्छेद तान् प्रजङ्घो महाबलः[1] ॥ १८
रथानश्वान् द्रुमैः शैलैस्ते प्रचिक्षिपुराहवे । शरौघैः प्रतिचिच्छेद तान् यूपाक्षो निशाचरः॥ १९
सृष्टान् द्विविदमैन्दाभ्यां द्रुमानुत्पाट्य वीर्यवान् । बभञ्ज गदया मध्ये शोणिताक्षः प्रतापवान्॥
उद्यम्य विपुलं खड्गं परमर्मनिकृन्तनम् । प्रजङ्घो वालिपुत्राय अभिदुद्राव वेगितः ॥ २१
तमभ्याशगतं दृष्ट्वा वानरेन्द्रो महाबलः । आजघानाश्वकर्णेन द्रुमेणातिबलस्तदा ॥ २२
बाहुं चास्य सनिस्त्रिंशमाजघान स मुष्टिना । वालिपुत्रस्य घातेन स पपात क्षितावसिः ॥ २३
तं दृष्ट्वा पतितं भूमौ खड्गमुत्पलसंनिभम्[2] । मुष्टिं संवर्तयामास वज्रकल्पं महाबलः ॥ २४
ललाटे स महावीर्यमङ्गदं वानरर्षभम् । आजघान महातेजाः स मुहूर्तं चचाल ह ॥ २५

१. यूपाक्षो निशाचरः प्र. । २. खड्गं मुसलसंनिभम् ग. ।

स संज्ञां प्राप्य तेजस्वी वालिपुत्रः प्रतापवान् । प्रजङ्घस्य शिरः कायात् खड्गेनापातयत् क्षितौ ॥
स यूपाक्षोऽश्रुपूर्णाक्षः पितृव्ये निहते रणे । अवरुह्य रथात् क्षिप्रं क्षीणेषुः खड्गमाददे ॥ २७
तमापतन्तं संप्रेक्ष्य यूपाक्षं द्विविदस्त्वरन् । आजघानोरसि क्रुद्धो जग्राह च बलाद्बली ॥ २८
गृहीतं भ्रातरं दृष्ट्वा शोणिताक्षो महाबलः । आजघान गदाग्रेण वक्षसि द्विविदं ततः ॥ २९
स गदाभिहतस्तेन चचाल च महाबलः । उद्यतां च पुनस्तस्य जहार द्विविदो गदाम् ॥ ३०
एतस्मिन्नन्तरे वीरो मैन्दो वानरयूथपः । यूपाक्षं ताडयामास तलेनोरसि वीर्यवान् ॥ ३१
तौ शोणिताक्षयूपाक्षौ प्लवङ्गाभ्यां तरस्विनौ । चक्रतुः समरे तीव्रमाकर्षोत्पाटनं भृशम् ॥ ३२
द्विविदः शोणिताक्षं तु विददार नखैर्मुखे । निष्पिपेष च वेगेन क्षितावाविध्य वीर्यवान् ॥ ३३
यूपाक्षमपि संक्रुद्धो मैन्दो वानरयूथपः । पीडयामास बाहुभ्यां स पपात हतः क्षितौ ॥ ३४
हतप्रवीरा व्यथिता राक्षसेन्द्रचमूस्तदा । जगामाभिमुखी सा तु कुम्भकर्णसुतो यतः ॥ ३५
आपतन्तीं च वेगेन कुम्भस्तां सान्त्वयच्चमूम् । अथोत्कृष्टं महावीर्यैर्लब्धलक्षैः प्लवङ्गमैः ॥ ३६
निपातितमहावीरां दृष्ट्वा रक्षश्चमूं ततः । कुम्भः प्रचक्रे तेजस्वी रणे कर्म सुदुष्करम् ॥ ३७
सधनुर्धन्विनां श्रेष्ठः प्रगृह्य सुसमाहितः । मुमोचाशीविषप्रख्याञ्शरान् देहविदारणान् ॥ ३८
तस्य तच्छुशुभे भूयः सशरं धनुरुत्तमम् । विद्युदैरावतार्चिष्मद्द्वितीयेन्द्रधनुर्यथा ॥ ३९
आकर्णाकृष्टमुक्तेन जघान द्विविदं तदा । तेन हाटकपुङ्खेन पत्रिणा पत्रवाससा ॥ ४०
सहसाभिहतस्तेन विप्रमुक्तपदः स्फुरन् । निपपाताद्रिकूटाभो विह्वलः प्लवगोत्तमः ॥ ४१
मैन्दस्तु भ्रातरं दृष्ट्वा भग्नं तत्र महाहवे । अभिदुद्राव वेगेन प्रगृह्य महतीं शिलाम् ॥ ४२
तां शिलां तु प्रचिक्षेप राक्षसाय महाबलः । बिभेद तां शिलां कुम्भः प्रसन्नैः पञ्चभिः शरैः ॥
संधाय चान्यं सुमुखं शरमाशीविषोपमम् । आजघान महातेजा वक्षसि द्विविदाग्रजम् ॥ ४४
स तु तेन प्रहारेण मैन्दो वानरयूथपः । मर्मण्यभिहतस्तेन पपात भुवि मूर्छितः ४५
अङ्गदो मातुलौ दृष्ट्वा पतितौ तु महाबलौ । अभिदुद्राव वेगेन कुम्भमुद्यतकार्मुकम् ॥ ४६
तमापतन्तं विव्याध कुम्भः पञ्चभिरायसैः । त्रिभिश्चान्यैः शितैर्बाणैर्मातङ्गमिव तोमरैः ॥ ४७
सोऽङ्गदं विविधैर्बाणैः कुम्भो विव्याध वीर्यवान् । अकुण्ठधारैर्निशितैस्तीक्ष्णैः कनकभूषणैः ॥
अङ्गदः प्रतिविद्धाङ्गो वालिपुत्रो न कम्पते । शिलापादपवर्षाणि तस्य मूर्ध्नि ववर्ष ह ॥ ४९
स प्रचिच्छेद तान् सर्वान् बिभेद च पुनः शिलाः । कुम्भकर्णात्मजः श्रीमान् वालिपुत्रसमीरितान्
आपतन्तं च संप्रेक्ष्य कुम्भो वानरयूथपम् । भ्रुवोर्विव्याध बाणाभ्यामुल्काभ्यामिव कुञ्जरम् ॥
तस्य सुस्राव रुधिरं पिहिते चास्य लोचने । अङ्गदः पाणिना नेत्रे पिधाय रुधिरोक्षिते ॥ ५२
सालमासन्नमेकेन परिजग्राह पाणिना । संपीड्य चोरसि स्कन्धं करेणाभिनिवेश्य च ॥ ५३
किंचिदभ्यवनम्यैनमुन्ममाथ यथा गजः । तमिन्द्रकेतुप्रतिमं वृक्षं मन्दरसंनिभम् ॥ ५४

समुत्सृजन्तं वेगेन पश्यतां सर्वरक्षसाम्। स बिभेद शितैर्बाणैः सप्तभिः कायभेदनैः ॥ ५५
अङ्गदो विव्यथेऽभीक्ष्णं ननाद च मुमोह च। अङ्गदं व्यथितं दृष्ट्वा सीदन्तमिव सागरे ॥५६
दुरासदं हरिश्रेष्ठं रामायान्ये न्यवेदयन्। रामस्तु व्यथितं श्रुत्वा वालिपुत्रं रणाजिरे ॥ ५७
व्यादिदेश हरिश्रेष्ठाञ्जाम्बवत्प्रमुखांस्ततः। ते तु वानरशार्दूलाः श्रुत्वा रामस्य शासनम् ॥ ५८
अभिपेतुः सुसंक्रुद्धाः कुम्भमुद्यतकार्मुकम्। ततो द्रुमशिलाहस्ताः कोपसंरक्तलोचनाः ॥ ५९
रिरक्षिषन्तोऽभ्यपतन्नङ्गदं वानरर्षभाः। जाम्बवांश्च सुषेणश्च वेगदर्शी च वानरः ॥ ६०
कुम्भकर्णात्मजं वीरं क्रुद्धाः समभिदुद्रुवुः। समीक्ष्यापततस्तांस्तु वानरेन्द्रान् महाबलान् ॥ ६१
आववार शरौघेण नगेनेव जलाशयम्। तस्य बाणपथं प्राप्य न शेकुरतिवर्तितुम् ॥ ६२
वानरेन्द्रा महात्मानो वेलामिव महोदधिः। तांस्तु दृष्ट्वा हरिगणाञ्शरवृष्टिभिरर्दितान् ॥ ६३
अङ्गदं पृष्ठतः कृत्वा भ्रातृजं प्लवगेश्वरः। अभिदुद्राव वेगेन सुग्रीवः कुम्भमाहवे ॥ ६४
शैलसानुचरं नागं वेगवानिव केसरी। उत्पाट्य च महाशैलानश्वकर्णान् धवान् बहून् ॥ ६५
अन्यांश्च विविधान् वृक्षांश्चिक्षेप च महाबलः। तां छादयन्तीमाकाशं वृक्षवृष्टिं दुरासदाम् ॥६६
कुम्भकर्णात्मजः शीघ्रं चिच्छेद निशितैः शरैः। अभिलक्षेण तीव्रेण कुम्भेन निशितैः शरैः ॥
आचितास्ते द्रुमा रेजुर्यथा घोराः शतघ्नयः। द्रुमवर्षं तु तच्छिन्नं दृष्ट्वा कुम्भेन वीर्यवान् ॥६८
वानराधिपतिः श्रीमान् महासत्त्वो न विव्यथे। निर्भिद्यमानः सहसा सहमानश्च ताञ्शरान् ॥
कुम्भस्य धनुराक्षिप्य बभञ्जेन्द्रधनुष्प्रभम्। अवप्लुत्य ततः शीघ्रं कृत्वा कर्म सुदुष्करम् ॥ ७०
अब्रवीत् कुपितः कुम्भं भग्नशृङ्गमिमं द्विपम्। निकुम्भाग्रज वीर्यं ते बाणवेगवदद्भुतम् ॥ ७१
संनतिश्च प्रभावश्च तव वा रावणस्य वा। प्रह्लादबलिवृत्रघ्नकुबेरवरुणोपम ॥ ७२
एकस्त्वमनुजातोऽसि पितरं बलवृत्ततः। त्वामेवैकं महाबाहुं चापहस्तमरिंदमम् ॥ ७३
त्रिदशा नातिवर्तन्ते जितेन्द्रियमिवाधयः। विक्रमस्व महाबुद्धे कर्माणि मम पश्यतः ॥ ७४
वरदानात् पितृव्यस्ते सहते देवदानवान्। कुम्भकर्णस्तु वीर्येण सहते च सुरासुरान् ॥ ७५
धनुषीन्द्रजितस्तुल्यः प्रतापे रावणस्य च। त्वमद्य रक्षसां लोके श्रेष्ठोऽसि बलवीर्यतः ॥ ७६
महाविमर्दं समरे मया सह तवाद्भुतम्। अद्य भूतानि पश्यन्तु शक्रशम्बरयोरिव ॥ ७७
कृतमप्रतिमं कर्म दर्शितं चास्त्रकौशलम्। पातिता हरिवीराश्च त्वया वै भीमविक्रमाः ॥ ७८
उपालम्भभयाच्चापि नासि वीर मया हतः। [1]कृतकर्मपरश्रान्तो विश्रान्तः पश्य मे बलम् ॥ ७९
तेन सुग्रीववाक्येन सावमानेन मानितः[1]। अग्नेराज्याहुतस्येव तेजस्तस्याभ्यवर्धत ॥ ८०
ततः कुम्भस्तु सुग्रीवं बाहुभ्यां जगृहे तदा। गजाविवाहितमदौ[2] निःश्वसन्तौ मुहुर्मुहुः ॥ ८१

1. मानिनः इति चेद्दृश्यते स पाठः श्लिष्टः। २. गजाविवातीतमदौ ति. पाठान्तरम्।
१. कृतकर्मा परिश्रान्तः च. छ.।

अन्योन्यगात्रग्रथितौ कर्षन्ताावितरेतरम् । विधूमां[१] मुखतो ज्वालां विसृजन्तौ परिश्रमात् ॥ ८२
तयोः पादाभिघाताच्च निमग्ना चाभवन्मही । व्याघूर्णिततरङ्गश्च चुक्षुभे वरुणालयः ॥ ८३
ततः कुम्भं समुत्क्षिप्य सुग्रीवो लवणाम्भसि । पातयामास वेगेन दर्शयन्नुदधेस्तलम्[२] ॥ ८४
ततः कुम्भनिपातेन जलराशिः समुत्थितः । विन्ध्यमन्दरसंकाशो विससर्प समन्ततः ॥ ८५
ततः कुम्भः समुत्पत्य सुग्रीवमभिपत्य च । आजघानोरसि क्रुद्धो वज्रवेगेन मुष्टिना ॥ ८६
तस्य चर्म च पुस्फोट बहु सुस्राव शोणितम् । स च मुष्टिर्महावेगः प्रतिजघ्नेऽस्थिमण्डले ॥ ८७
तदा वेगेन तत्रासीत्तेजः प्रज्वलितं मुहुः । वज्रनिष्पेषसंजाता ज्वाला मेरौ यथा गिरौ ॥ ८८
स तत्राभिहतस्तेन सुग्रीवो वानरर्षभः । मुष्टिं संवर्तयामास वज्रकल्पं महाबलः ॥ ८९
अर्चिःसहस्रविकचं रविमण्डलसप्रभम् । स मुष्टिं पातयामास कुम्भस्योरसि वीर्यवान् ॥ ९०
स तु तेन प्रहारेण विह्वलो भृशताडितः । निपपात तदा कुम्भो गतार्चिरिव पावकः ॥ ९१
मुष्टिनाभिहतस्तेन निपपाताशु राक्षसः । लोहिताङ्ग इवाकाशाद्दीप्तरश्मिर्यदृच्छया ॥ ९२
कुम्भस्य पततो रूपं भग्नस्योरसि मुष्टिना । बभौ रुद्राभिपन्नस्य यथा रूपं गवांपतेः[1] ॥ ९३

तस्मिन् हते भीमपराक्रमेण प्लवङ्गमानामृषभेण युद्धे ।
मही सशैला सवना चचाल भयं च रक्षांस्यधिकं विवेश ॥ ९४

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
युद्धकाण्डे कम्पनादिवधो नाम षट्सप्ततितमः सर्गः

---

## सप्तसप्ततितमः सर्गः

### निकुम्भवधः

निकुम्भो भ्रातरं दृष्ट्वा सुग्रीवेण निपातितम् । प्रदहन्निव कोपेन वानरेन्द्रमवैक्षत ॥ १
ततः स्रग्दामसंनद्धं दत्तपञ्चाङ्गुलं शुभम् । आददे परिघं वीरो नगेन्द्रशिखरोपमम् ॥ २
हेमपट्टपरिक्षिप्तं वज्रविद्रुमभूषितम् । यमदण्डोपमं भीमं रक्षसां भयनाशनम् ॥ ३
तमाविध्य महातेजाः शक्रध्वजसमं तदा । विननाद विवृत्तास्यो निकुम्भो भीमविक्रमः ॥ ४
उरोगतेन निष्केण भुजस्थैरङ्गदैरपि । कुण्डलाभ्यां च चित्राभ्यां मालया च विचित्रया ॥ ५
निकुम्भो भूषणैर्भाति तेन स परिघेण च । यथेन्द्रधनुषा मेघः सविद्युत्स्तनयित्नुमान् ॥ ६
परिघाग्रेण पुस्फोट वातग्रन्थिर्महात्मनः । प्रजज्वाल सघोषश्च विधूम इव पावकः ॥ ७

---

1. गवांपतेरिति । सूर्यस्येत्यर्थः । २. उदधेः स्थलम् पाठान्तरम् ।
१. सुधूमाम् च. । सधूमाम् छ. ।

नगर्या विटपावत्या गन्धर्वभवनोत्तमैः। सह चैवामरावत्या सर्वैश्च भवनैः सह ॥ ८
सतारग्रहनक्षत्रं सचन्द्रं समहाग्रहम्। निकुम्भपरिघाघूर्णं भ्रमतीव नभःस्थलम् ॥ ९
दुरासदश्च संजज्ञे परिघाभरणप्रभः। कपीनां स निकुम्भाग्निर्युगान्ताग्निरिवोत्थितः ॥ १०
राक्षसा वानराश्चापि न शेकुः स्पन्दितुं भयात्। हनुमांस्तु विवृत्योरस्तस्थौ तस्याग्रतो बली ॥
परिघोपमबाहुस्तु परिघं भास्करप्रभम्। बली बलवतस्तस्य पातयामास वक्षसि ॥ १२
स्थिरे तस्योरसि व्यूढे परिघः शतधा कृतः। विशीर्यमाणः सहसा उल्काशतमिवाम्बरे ॥ १३
स तु तेन प्रहारेण विचचाल महाकपिः। परिघेण समाधूतो यथा भूमितलेऽचलः[1] ॥ १४
स तदाभिहतस्तेन हनुमान् प्लवगोत्तमः। मुष्टिं संवर्तयामास बलेनातिमहाबलः ॥ १५
तमुद्यम्य महातेजा निकुम्भोरसि वीर्यवान्। अभिचिक्षेप वेगेन वेगवान् वायुविक्रमः ॥ १६
ततः पुस्फोट चर्मास्य प्रसुस्राव च शोणितम्। मुष्टिना तेन संजज्ञे ज्वाला विद्युदिवोत्थिता ॥
स तु तेन प्रहारेण निकुम्भो विचचाल ह। स्वस्थश्चापि निजग्राह हनुमन्तं महाबलम् ॥ १८
विचुक्रुशुस्तदा संख्ये भीमं लङ्कानिवासिनः। निकुम्भेनोद्यतं दृष्ट्वा हनुमन्तं महाबलम् ॥ १९
स तदा ह्रियमाणोऽपि कुम्भकर्णात्मजेन ह। आजघानानिलसुतो वज्रकल्पेन मुष्टिना २०
आत्मानं मोचयित्वाथ क्षितावभ्यवपद्यत। हनुमानुन्ममाथाशु निकुम्भं मारुतात्मजः ॥ २१
निक्षिप्य परमायत्तो निकुम्भं निष्पिपेष ह। उत्पत्य चास्य वेगेन पपातोरसि वीर्यवान् ॥ २२
परिगृह्य च बाहुभ्यां परिवृत्य शिरोधराम्। उत्पाटयामास शिरो भैरवं नदतो महत्[2] ॥ २३

अथ विनदति सादिते निकुम्भे पवनसुतेन रणे बभूव युद्धम्।
दशरथसुतराक्षसेन्द्रसून्वोर्भृशतरमागतरोपयोः सुभीमम् ॥ २४
व्यपेते तु जीवे निकुम्भस्य हृष्टा निनेदुः प्लवङ्गा दिशः सस्वनुश्च।
चचालेव चोर्वी पफालेव च द्यौर्भयं राक्षसानां बलं चाविवेश ॥ २५

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
युद्धकाण्डे निकुम्भवधो नाम सप्तसप्ततितमः सर्गः

---

## अष्टसप्ततितमः सर्गः

### मकराक्षाभिषेणनम्

निकुम्भं च हतं श्रुत्वा कुम्भं च विनिपातितम्। रावणः परमामर्षी प्रजज्वालानलो यथा ॥

---

१. भूमिचले च. छ.

२. अस्यानन्तरम्—अथ देवाः सगन्धर्वा विद्याधरमहोरगाः। आकाशचारिणः सर्वे अप्सरोभिः सहामराः ॥ हनूमन्तं महाबाहुं वायुपुत्रमरिंदमम्। प्रशंसन्तः परैवाक्यैः प्रसन्नैरभ्य[स्य?]पूजयन् ॥— इति घ.।

नैर्ऋतः क्रोधशोकाभ्यां द्वाभ्यां तु परिमूर्छितः । खरपुत्रं विशालाक्षं मकराक्षमचोदयत् ॥ २
गच्छ पुत्र मयाज्ञप्तो बलेनाभिसमन्वितः । राघवं लक्ष्मणं चैव जहि तांश्च वनौकसः ॥ ३
रावणस्य वचः श्रुत्वा शूरमानी खरात्मजः । बाढमित्यब्रवीद्धृष्टो मकराक्षो निशाचरः ॥ ४
सोऽभिवाद्य दशग्रीवं कृत्वा चापि प्रदक्षिणम् । निर्जगाम गृहाच्छुभ्राद्रावणस्याज्ञया बली ॥ ५
समीपस्थं बलाध्यक्षं खरपुत्रोऽब्रवीदिदम् । रथश्चानीयतां शीघ्रं सैन्यं चाहूयतां त्वरात् ॥ ६
तस्य तद्वचनं श्रुत्वा बलाध्यक्षो निशाचरः । स्यन्दनं च बलं चैव समीपं प्रत्यपादयत् ॥ ७
प्रदक्षिणं रथं कृत्वा आरुरोह निशाचरः । सूतं संचोदयमास शीघ्रं मे रथमावह ॥ ८
अथ तान् राक्षसान् सर्वान् मकराक्षोऽब्रवीदिदम् । यूयं सर्वे प्रयुध्यध्वं पुरस्तान्मम राक्षसाः ॥
अहं राक्षसराजेन रावणेन महात्मना । आज्ञप्तः समरे हन्तुं तावुभौ रामलक्ष्मणौ ॥ १०
अद्य रामं वधिष्यामि लक्ष्मणं च निशाचराः । शाखामृगं च सुग्रीवं वानरांश्च शरोत्तमैः ॥ ११
अद्य शूलनिपातैश्च वानराणां महाचमूम् । प्रदहिष्यामि संप्राप्तः शुष्केन्धनमिवानलः ॥ १२
मकराक्षस्य तच्छ्रुत्वा वचनं ते निशाचराः । सर्वे नानायुधोपेता बलवन्तः समागताः ॥ १३
ते कामरूपिणः सर्वे दंष्ट्रिणः पिङ्गलेक्षणाः । मातङ्गा इव नर्दन्तो ध्वस्तकेशा भयानकाः ॥ १४
परिवार्य महाकाया महाकायं खरात्मजम् । अभिजग्मुस्ततो हृष्टाश्चालयन्तो वसुंधराम् ॥ १५
शङ्खभेरीसहस्राणामाहतानां समन्ततः । क्ष्वेलितास्फोटितानां च ततः शब्दो महानभूत् ॥ १६
प्रभ्रष्टोऽथ करात्तस्य प्रतोदः सारथेस्तदा । पपात सहसा चैव ध्वजस्तस्य च रक्षसः ॥ १७
तस्य ते रथयुक्ताश्च हया विक्रमवर्जिताः । चरणैराकुलैर्गत्वा दीनाः सास्रमुखाययुः ॥ १८
प्रवाति पवनस्तस्मिन् सपांसुः खरदारुणः । निर्याणे तस्य रौद्रस्य मकराक्षस्य दुर्मतेः ॥ १९
तानि दृष्ट्वा निमित्तानि राक्षसा वीर्यवत्तमाः । अचिन्त्य निर्गताः सर्वे यत्र तौ रामलक्ष्मणौ ॥

घनगजमहिषाङ्गतुल्यवर्णाः समरमुखेष्वसकृद्गदासिभिन्नाः ।
अहमहमिति युद्धकौशलास्ते रजनिचराः परिबभ्रमुर्वदन्तः[1] ॥ २१

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
युद्धकाण्डे मकराक्षाभिषेणनं नाम अष्टसप्ततितमः सर्गः

---

## एकोनाशीतितमः सर्गः

### मकराक्षवधः

निर्गतं मकराक्षं ते दृष्ट्वा वानरयूथपाः । आप्लुत्य सहसा सर्वे योद्धुकामा व्यवस्थिताः ॥ १

१. परितः समुन्नदन्तः च. छ. ।

ततः प्रवृत्तं सुमहत्तद्युद्धं रोमहर्षणम् । निशाचरैः प्लवङ्गानां देवानां दानवैरिव ॥ २
वृक्षशूलनिपातैश्च शिलापरिघपातनैः । अन्योन्यं मर्दयन्ति स्म तदा कपिनिशाचराः ॥ ३
शक्तिखड्गगदाकुन्तैस्तोमरैश्च निशाचराः । पट्टसैर्भिण्डिपालैश्च निर्घातैश्च समन्ततः ॥ ४
पाशमुद्गरदण्डैश्च निखातैश्चापरे तदा । कदनं कपिवीराणां चक्रुस्ते रजनीचराः ॥ ५
बाणौघैरर्दिताश्चापि खरपुत्रेण वानराः । संभ्रान्तमनसः सर्वे दुद्रुवुर्भयपीडिताः ॥ ६
तान् दृष्ट्वा राक्षसाः सर्वे द्रवमाणान् वलीमुखान् । नेदुस्ते सिंहवद्धृष्टा राक्षसा जितकाशिनः ॥
विद्रवत्सु तदा तेषु वानरेषु समन्ततः । रामस्तान् वारयामास शरवर्षेण राक्षसान् ॥ ८
वारितान् राक्षसान् दृष्ट्वा मकराक्षो निशाचरः । क्रोधानलसमाविष्टो वचनं चेदमब्रवीत् ॥ ९
क्वासौ रामः सुदुर्बुद्धिर्येन मे निहतः पिता । जनस्थानगतः पूर्वं सानुगः सपरिच्छदः ॥ १०
अद्य गन्तास्मि वैरस्य पारं वै रजनीचराः । सुहृदां चैव सर्वेषां निहतानां रणाजिरे ॥ ११
हत्वा रामं सुदुर्बुद्धिं लक्ष्मणं च सवानरम् । तेषां शोणितनिष्यन्दैः करिष्ये सलिलक्रियाम् ॥
एवमुक्त्वा महाबाहुर्युद्धे स रजनीचरः । व्यलोकयत तत् सर्वं बलं रामदिदृक्षया ॥ १३
आहूयमानः कपिभिर्बहुभिर्बलशालिभिः । युद्धाय स महातेजा रामादन्यं न चेच्छति ॥ १४
मार्गमाणस्तदा रामं बलवान् रजनीचरः । रथेनाम्बुदघोषेण व्यचरत्तामनीकिनीम् ॥ १५
दृष्ट्वा राममदूरस्थं लक्ष्मणं च महारथम् । सघोषं पाणिनाहूय ततो वचनमब्रवीत्[1] ॥ १६
तिष्ठ राम मया सार्धं द्वन्द्वयुद्धं ददामि ते । त्याजयिष्यामि ते प्राणान् धनुर्मुक्तैः शितैः शरैः ॥
यत्तदा दण्डकारण्ये पितरं हतवान् मम । मदग्रतः स्वकर्मस्थं दृष्ट्वा रोषोऽभिवर्धते ॥ १८
दह्यन्ते भृशमङ्गानि दुरात्मन् मम राघव । यन्मयासि न दृष्टस्त्वं तस्मिन् काले महाहवे ॥ १९
दिष्ट्यासि दर्शनं राम मम त्वं प्राप्तवानिह । काङ्क्षितोऽसि क्षुधार्तस्य सिंहस्येवेतरो मृगः ॥
अद्य मद्बाणवेगेन प्रेतराड्विषयं गतः । ये त्वया निहता वीराः सह तैश्च समेष्यसि ॥ २१
बहुनात्र किमुक्तेन शृणु राम वचो मम । पश्यन्तु सकला लोकास्त्वां मां चैव रणाजिरे ॥ २२
अस्त्रैर्वा गदया वापि बाहुभ्यां वा महाहवे । अभ्यस्तं येन वा राम तेनैव युधि वर्तताम् ॥ २३
मकराक्षवचः श्रुत्वा रामो दशरथात्मजः । अब्रवीत् प्रहसन् वाक्यमुत्तरोत्तरवादिनम् ॥ २४
कत्थसे किं वृथा रक्षो बहून्यसदृशानि तु । न रणे शक्यते जेतुं विना युद्धेन वाग्बलात् ॥ २५
चतुर्दश सहस्राणि रक्षसां त्वत्पिता च यः । त्रिशिरा दूषणश्चैव दण्डके निहता मया ॥ २६
स्वाशितास्तव मांसेन गृध्रगोमायुवायसाः । भविष्यन्त्यद्य वै पाप तीक्ष्णतुण्डनखाङ्कुराः ॥ २७
रुधिरार्द्रमुखा हृष्टा रक्तपक्षाः खगाश्च ये । खे तथा वसुधायां च भ्रमिष्यन्ति समन्ततः[2] ॥ २८

---

१. १०—१६ पद्यानि च. न सन्ति । २. इदं पद्यम् च. नास्ति ।

राघवेणैवमुक्तस्तु खरपुत्रो निशाचरः । बाणौघानमुचत्तस्मै राघवाय रणाजिरे ॥ २९
ताञ्शराञ्शरवर्षेण रामश्चिच्छेद नैकधा । निपेतुर्भुवि ते छिन्ना रुक्मपुङ्खाः सहस्रशः ॥ ३०
तद्युद्धमभवत्तत्र समेत्यान्योन्यमोजसा । रक्षसः खरपुत्रस्य सूनोर्दशरथस्य च ॥ ३१
जीमूतयोरिवाकाशे शब्दो ज्यातलयोस्तदा । धनुर्मुक्तः स्वनोत्कृष्टः श्रूयते च रणाजिरे ॥ ३२
देवदानवगन्धर्वाः किन्नराश्च महोरगाः । अन्तरिक्षगताः सर्वे द्रष्टुकामास्तदद्भुतम् ॥ ३३
विद्धमन्योन्यगात्रेषु द्विगुणं वर्धते परम् । कृतप्रतिकृतान्योन्यं कुरुतां तौ रणाजिरे ॥ ३४
राममुक्तांस्तु बाणौघान् राक्षसस्त्वच्छिनद्रणे । रक्षोमुक्तांस्तु रामो वै नैकधा प्राच्छिनच्छरैः ॥
बाणौघैर्विततः सर्वा दिशश्च प्रदिशस्तथा । संछन्ना वसुधा द्यौश्च समन्तान्न प्रकाशते ॥ ३६
ततः क्रुद्धो महाबाहुर्धनुश्चिच्छेद रक्षसः । अष्टाभिरथ नाराचैः सूतं विव्याध राघवः ॥ ३७
भित्त्वा शरैः रथं रामो रथाश्वान् समपातयत् । विरथो वसुधां तिष्ठन् मकराक्षो निशाचरः ॥
तत्तिष्ठद्वसुधां रक्षः शूलं जग्राह पाणिना । त्रासनं सर्वभूतानां युगान्ताग्निसमप्रभम् ॥ ३९
विभ्राम्य तु महच्छूलं प्रज्वलन्तं[1] निशाचरः । स क्रोधात् प्राहिणोत्तस्मै राघवाय महाहवे ॥४०
तमापतन्तं ज्वलितं खरपुत्रकराच्च्युतम् । बाणैस्तु त्रिभिराकाशे शूलं चिच्छेद राघवः ॥ ४१
स च्छिन्नो नैकधा शूलो दिव्यहाटकमण्डितः । व्यशीर्यत महोल्केव रामबाणार्दिता भुवि ॥
तच्छूलं निहतं दृष्ट्वा रामेणाक्लिष्टकर्मणा । साधु साध्विति भूतानि व्याहरन्ति नभोगताः ॥४३
तं दृष्ट्वा निहतं शूलं मकराक्षो निशाचरः । मुष्टिमुद्यम्य काकुत्स्थं तिष्ठ तिष्ठेति चाब्रवीत् ॥४४
स तं दृष्ट्वा पतन्तं वै प्रहस्य रघुनन्दनः । पावकास्त्रं ततो रामः संदधे तु शरासने ॥ ४५
तेनास्त्रेण हतं रक्षः काकुत्स्थेन तदा रणे । संछिन्नहृदयं तत्र पपात च ममार च ॥ ४६
दृष्ट्वा ते राक्षसाः सर्वे मकराक्षस्य पातनम् । लङ्कामेवाभ्यधावन्त रामबाणार्दितास्तदा ॥ ४७

दशरथनृपपुत्रबाणवेगै रजनिचरं निहतं खरात्मजं तम् ।
ददृशुरथ सुरा भृशं प्रहृष्टा गिरिमिव वज्रहतं यथा विकीर्णम् ॥ ४८

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
युद्धकाण्डे मकराक्षवधो नाम एकोनाशीतितमः सर्गः

---

## अशीतितमः सर्गः

### तिरोहितरावणियुद्धम्

मकराक्षं हतं श्रुत्वा रावणः समितिंजयः । क्रोधेन महताविष्टो दन्तान् कटकटापयन् ॥ १

1. प्रज्वलन्तम् च. छ. ।

कुपितश्च तदा तत्र किं कार्यमिति चिन्तयन् । आदिदेशाथ संक्रुद्धो रणायेन्द्रजितं सुतम् ॥ २
जहि वीर महावीर्यौ भ्रातरौ रामलक्ष्मणौ । अदृश्यो दृश्यमानो वा सर्वथा त्वं बलाधिकः ॥३
त्वमप्रतिमकर्माणमिन्द्रं जयसि संयुगे । किं पुनर्मानुषौ दृष्ट्वा न वधिष्यसि संयुगे ॥ ४
तथोक्तो राक्षसेन्द्रेण प्रतिगृह्य पितुर्वचः । यज्ञभूमौ स विधिवत् पावकं जुहुवेन्द्रजित् ॥ ५
जुह्वतश्चापि तत्राग्निं रक्तोष्णीषधराः स्त्रियः । आजग्मुस्तत्र संभ्रान्ता राक्षस्यो यत्र रावणिः ॥ ६
शस्त्राणि शरपत्राणि समिधोऽथ बिभीतकाः । लोहितानि च वासांसि स्रुवं कार्ष्णायसं तथा ॥
सर्वतोऽग्निं समास्तीर्य शरपत्रैः सतोमरैः । छागस्य कृष्णवर्णस्य गलं जग्राह जीवतः ॥ ८
शरहोमसमिद्धस्य[1] विधूमस्य महार्चिषः । बभूवुस्तानि लिङ्गानि विजयं दर्शयन्ति च ॥ ९
प्रदक्षिणावर्तशिखस्तप्तहाटकसंनिभः । हविस्तत् प्रतिजग्राह पावकः स्वयमुत्थितः ॥ १०
हुत्वाग्निं तर्पयित्वा च देवदानवराक्षसान् । आरुरोह रथश्रेष्ठमन्तर्धानगतं शुभम् ॥ ११
स वाजिभिश्चतुर्भिश्च बाणैश्च निशितैर्युतः । आरोपितमहाचापः शुशुभे स्यन्दनोत्तमः ॥ १२
जाज्वल्यमानो वपुषा तपनीयपरिच्छदः । मृगैश्चन्द्रार्धचन्द्रैश्च स रथः समलंकृतः ॥ १३
जाम्बूनदमहाकम्बुर्दीप्तपावकसंनिभः । बभूवेन्द्रजितः केतुर्वैदूर्यसमलंकृतः ॥ १४
तेन चादित्यकल्पेन ब्रह्मास्त्रेण च पालितः । स बभूव दुराधर्षो रावणिः सुमहाबलः ॥ १५
सोऽभिनिर्याय नगरादिन्द्रजित् समितिंजयः । हुत्वाग्निं राक्षसैर्मन्त्रैरन्तर्धानगतोऽब्रवीत् ॥ १६
अद्य हत्वा रणे यौ तौ मिथ्याप्रव्रजितौ वने । जयं पित्रे प्रदास्यामि रावणाय रणार्जितम् ॥१७
अद्य निर्वानरामुर्वीं हत्वा रामं सलक्ष्मणम् । करिष्ये परमप्रीतिमित्युक्त्वान्तरधीयत ॥ १८
आपपाताथ संक्रुद्धो दशग्रीवेण चोदितः । तीक्ष्णकार्मुकनाराचैस्तीक्ष्णैस्त्विन्द्ररिपू रणे ॥ १९
स ददर्श महावीर्यौ नागौ त्रिशिरसाविव । सृजन्ताविषुजालानि वीरौ वानरमध्यगौ ॥ २०
इमौ ताविति संचिन्त्य सज्यं कृत्वा च कार्मुकम् । संततानेषुधाराभिः पर्जन्य इव वृष्टिमान् ॥
स तु वैहायसं प्राप्य सरथो रामलक्ष्मणौ । अचक्षुर्विषये तिष्ठन् विव्याध निशितैः शरैः ॥ २२
तौ तस्य शरवेगेन परीतौ रामलक्ष्मणौ । धनुषी सशरे कृत्वा दिव्यमस्त्रं प्रचक्रतुः ॥ २३
प्रच्छादयन्तौ गगनं शरजालैर्महाबलौ । तमस्त्रैः सूर्यसंकाशैर्नैव पस्पृशतुः शरैः ॥ २४
स हि धूमान्धकारं च चक्रे प्रच्छादयन्नभः । दिशश्चान्तर्दधे श्रीमान्नीहारतमसावृताः ॥ २५
नैव ज्यातलनिर्घोषो न च नेमिखुरस्वनः । शुश्रुवे चरतस्तस्य न च रूपं प्रकाशते ॥ २६
घनान्धकारे तिमिरे [2]शिलावर्षमिवाद्भुतम् । स ववर्ष महाबाहुर्नाराचशरवृष्टिभिः ॥ २७
स रामं सूर्यसंकाशैः शरैर्दत्तवरो भृशम् । विव्याध समरे क्रुद्धः सर्वगात्रेषु रावणिः ॥ २८
तौ हन्यमानौ नाराचैर्धाराभिरिव पर्वतौ । हेमपुङ्खान्नरव्याघ्रौ तिग्मान् मुमुचतुः शरान् ॥ २९

---

१. सकृदेव समिद्धस्य च. छ. ।    २. शरवर्षम् च. छ. ।

अन्तरिक्षे समासाद्य रावणिं कङ्कपत्रिणः । निकृत्य पतगा भूमौ पेतुस्ते शोणितोक्षिताः ॥ ३०
अतिमात्रं शरौघेण पीड्यमानौ नरोत्तमौ । तानिषून् पततो भल्लैरनेकैर्निचकृन्ततुः ॥ ३१
यतो हि ददृशाते तौ शरान्निपततः शितान् । ततस्तु तौ दाशरथी ससृजातेऽस्त्रमुत्तमम्॥ ३२
रावणिस्तु दिशः सर्वा रथेनातिरथः पतन् । विव्याध तौ दाशरथी लघ्वस्त्रो निशितैः शरैः॥३३
तेनातिविद्धौ तौ वीरौ रुक्मपुङ्खैः सुसंहितैः । बभूवतुर्दाशरथी पुष्पिताविव किंशुकौ ॥ ३४
नास्य वेद गतिं कश्चिन्न च रूपं धनुः शरान् । न चान्यद्विदितं किंचित् सूर्यस्येवाभ्रसंप्लवे॥३५
तेन विद्धाश्च हरयो निहताश्च गतासवः । बभूवुः शतशस्तत्र पतिता धरणीतले ॥ ३६
लक्ष्मणस्तु सुसंक्रुद्धो भ्रातरं वाक्यमब्रवीत् । ब्राह्ममस्त्रं प्रयोक्ष्यामि वधार्थं सर्वरक्षसाम् ॥ ३७
तमुवाच ततो रामो लक्ष्मणं शुभलक्षणम् । नैकस्य हेतो रक्षांसि पृथिव्यां हन्तुमर्हसि ॥ ३८
अयुध्यमानं प्रच्छन्नं प्राञ्जलिं शरणागतम् । पलायन्तं प्रमत्तं वा न त्वं हन्तुमिहार्हसि ॥ ३९
अस्यैव तु वधे यत्नं करिष्यावो महाबल । आदेक्ष्यावो महावेगानस्त्रानाशीविषोपमान् ॥४०
तमेनं मायिनं क्षुद्रमन्तर्हितरथं बलात् । राक्षसं निहनिष्यन्ति दृष्ट्वा वानरयूथपाः ॥ ४१

यद्येष भूमिं विशते दिवं वा रसातलं वापि नभःस्थलं वा ।
एवं निगूढोऽपि ममास्त्रदग्धः पतिष्यते भूमितले गतासुः ॥ ४२

इत्येवमुक्त्वा वचनं महात्मा रघुप्रवीरः प्लवगर्षभैर्वृतः ।
वधाय रौद्रस्य नृशंसकर्मणस्तदा महात्मा त्वरितं निरीक्षते ॥ ४३

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
युद्धकाण्डे तिरोहितरावणियुद्धं नाम अशीतितमः सर्गः

---

## एकाशीतितमः सर्गः

### मायासीतावधः

विज्ञाय तु मनस्तस्य राघवस्य महात्मनः । संनिवृत्याहवात्तस्मात् संविवेश पुरं ततः ॥ १
सोऽनुस्मृत्य वधं तेषां राक्षसानां तरस्विनाम् । क्रोधताम्रेक्षणः शूरो निर्जगाम महाद्युतिः २
स पश्चिमेन द्वारेण निर्ययौ राक्षसैर्वृतः । इन्द्रजित्तु महावीर्यः पौलस्त्यो देवकण्टकः ॥ ३
इन्द्रजित्तु ततो दृष्ट्वा भ्रातरौ रामलक्ष्मणौ । रणायाभ्युद्यतौ वीरौ मायां प्रादुष्करोत्तदा ॥ ४
इन्द्रजित्तु रथे स्थाप्य सीतां मायामयीं ततः । बलेन महतावृत्य तस्या वधमरोचयत् ॥ ५
मोहनार्थं तु सर्वेषां बुद्धिं कृत्वा सुदुर्मतिः । हन्तुं सीतां व्यवसितो वानराभिमुखो ययौ ॥ ६
तं दृष्ट्वा त्वभिनिर्यान्तं नगर्याः काननौकसः । उत्पेतुरभिसंक्रुद्धाः शिलाहस्ता युयुत्सवः ॥ ७

हनुमान् पुरतस्तेषां जगाम कपिकुञ्जरः । प्रगृह्य सुमहच्छृङ्गं पर्वतस्य दुरासदम् ॥ ८
स ददर्श हतानन्दां सीतामिन्द्रजितो रथे । एकवेणीधरां दीनामुपवासकृशाननाम् ॥ ९
परिक्लिष्टैकवसनाममृजां राघवप्रियाम् । रजोमलाभ्यामालिप्तैः सर्वगात्रैर्वरस्त्रियम् ॥ १०
तां निरीक्ष्य मुहूर्तं तु मैथिलीत्यध्यवस्य तु । बभूवाचिरदृष्टा हि तेन सा जनकात्मजा ॥ ११
तां दीनां मलदिग्धाङ्गीं रथस्थां दृश्य मैथिलीम् । बाष्पपर्याकुलमुखो हनुमान् व्यथितोऽभवत् ॥
अब्रवीत्तां तु शोकार्तां निरानन्दां तपस्विनीम् । सीतां रथस्थितां दृष्ट्वा राक्षसेन्द्रसुताश्रिताम् ॥
किं समर्थितमस्येति चिन्तयन् स महाकपिः । सह तैर्वानरश्रेष्ठैरभ्यधावत रावणिम् ॥ १४
तद्वानरबलं दृष्ट्वा रावणिः क्रोधमूर्छितः । कृत्वा विकोशं निस्त्रिंशं मूर्ध्नि सीतां परामृशत् ॥ १५
तां स्त्रियं पश्यतां तेषां ताडयामास रावणिः । क्रोशन्तीं राम रामेति मायया योजितां रथे ॥
गृहीतमूर्धजां दृष्ट्वा हनुमान् दैन्यमागतः । शोकजं वारि नेत्राभ्यामसृजन्मारुतात्मजः ॥ १७
तां दृष्ट्वा चारुसर्वाङ्गीं रामस्य महिषीं प्रियाम् । अब्रवीत्परुषं वाक्यं क्रोधाद्रक्षोऽधिपात्मजम् ॥
दुरात्मन्नात्मनाशाय केशपक्षे परामृशः । ब्रह्मर्षीणां कुले जातो राक्षसीं योनिमाश्रितः । १९
धिक्त्वां पापसमाचारं यस्य ते मतिरीदृशी । नृशंसानार्य दुर्वृत्त क्षुद्र पापपराक्रम । २०
अनार्यस्येदृशं कर्म घृणा ते नास्ति निर्घृण । च्युता गृहाच्च राज्याच्च रामहस्ताच्च मैथिली ॥२१
किं तवैषापराद्धा हि यदेनां हन्तुमिच्छसि । सीतां च हत्वा न चिरं जीविष्यसि कथंचन ॥२२
वधार्हकर्मणानेन मम हस्तगतो ह्यसि । ये च स्त्रीघातिनां लोका लोकवध्यैश्च[1] कुत्सिताः ॥२३
इह जीवितमुत्सृज्य प्रेत्य तान् प्रतिपत्स्यसे । इति ब्रुवाणो हनुमान् सायुधैर्हरिभिर्वृतः ॥ २४
अभ्यधवात संक्रुद्धो राक्षसेन्द्रसुतं प्रति । आपतन्तं महावीर्यं तदनीकं वनौकसाम् ॥ २५
रक्षसां भीमवेगानामनीकं तु[१] न्यवारयत् । स तां बाणसहस्रेण विक्षोभ्य हरिवाहिनीम् ॥ २६
हरिश्रेष्ठं हनुमन्तमिन्द्रजित् प्रत्युवाच ह । सुग्रीवस्त्वं च रामश्च यन्निमित्तमिहागताः ॥२७
तां हनिष्यामि वैदेहीमद्यैव तव पश्यतः । इमां हत्वा ततो रामं लक्ष्मणं त्वां च वानर ॥२८
सुग्रीवं च वधिष्यामि तं चानार्यं विभीषणम् । न हन्तव्याः स्त्रियश्चेति यद्ब्रवीषि प्लवङ्गम॥ २९
पीडाकरममित्राणां यत् स्यात् कर्तव्यमेव तत्[२] । तमेवमुक्त्वा रुदतीं सीतां मायामयीं तदा ॥
शितधारेण खड्गेन निजघानेन्द्रजित् स्वयम् । यज्ञोपवीतमाधूय भिन्ना तेन तपस्विनी ॥ ३१
सा पृथिव्यां पृथुश्रोणी पपात प्रियदर्शना । तामिन्द्रजित् स्वयं हत्वा हनुमन्तमुवाच ह ॥ ३२

1. लोकवध्यैः दस्युप्रभृतिभिरपि कुत्सिता गर्हिता इत्यर्थः । गोविन्दराजस्तु 'लोकवध्येषु' इति पठित्वा, हे लोकवध्य एषु चतुर्दशसु लोकेषु ये कुत्सिता लोका इति व्याचख्यौ ।

१. अनीकेन पुनः ।

२. अस्यानन्तरम्—ताटकाया वधं रामः किमर्थं कृतवान् पुरा । तदहं हन्मि रामस्य महिषीं जनकात्मजाम् ॥—इति ग. घ. ।

मया रामस्य पश्येमां कोपेन च निषूदिताम् । एषा विशस्ता वैदेही विफलो वः परिश्रमः॥३३
ततः खड्गेन महता हत्वा तामिन्द्रजित् स्वयम् । हृष्टः स रथमास्थाय विननाद महास्वनम् ॥
वानराः शुश्रुवुः शब्दमदूरे प्रत्यवस्थिताः । व्यादितास्यस्य नदतस्तद्दुर्गं संश्रितस्य च ॥ ३५

तथा तु सीतां विनिहत्य दुर्मतिः प्रहृष्टचेताः स बभूव रावणिः ।
तं हृष्टरूपं समुदीक्ष्य वानरा विषण्णरूपाः सहसा प्रदुद्रुवुः ॥ ३६

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
युद्धकाण्डे मायासीतावधो नाम एकाशीतितमः सर्गः

---

## द्व्यशीतितमः सर्गः

### हनूमदादिनिर्वेदः

श्रुत्वा तु भीमनिर्ह्रादं शक्राशनिसमस्वनम् । वीक्षमाणा दिशः सर्वा दुद्रुवुर्वानरर्षभाः ॥ १
तानुवाच ततः सर्वान् हनुमान् मारुतात्मजः । विषण्णवदनान् दीनांस्त्रस्तान् विद्रवतः पृथक् ॥
कस्माद्विषण्णवदना विद्रवध्वं प्लवङ्गमाः । त्यक्तयुद्धसमुत्साहाः शूरत्वं क्व नु वो गतम् ॥ ३
पृष्ठतोऽनुव्रजध्वं मामग्रतो यान्तमाहवे । शूरैरभिजनोपेतैरयुक्तं हि निवर्तितुम् ॥ ४
एवमुक्ताः सुसंहृष्टा वायुपुत्रेण वानराः । शैलशृङ्गाण्यगांश्चैव जगृहुर्हृष्टमानसाः ॥ ५
अभिपेतुश्च गर्जन्तो राक्षसान् वानरर्षभाः । परिवार्य हनूमन्तमन्वयुश्च महाहवे ॥ ६
स तैर्वानरमुख्यैश्च हनुमान् सर्वतो वृतः । हुताशन इवार्चिष्मानदहच्छत्रुवाहिनीम् ॥ ७
स राक्षसानां कदनं चकार सुमहाकपिः । वृतो वानरसैन्येन कालान्तकयमोपमः ॥ ८
स तु कोपेन चाविष्टः शोकेन च महाकपिः । हनुमान् रावणिरथेऽपातयन्महतीं शिलाम् ॥ ९
तामापतन्तीं दृष्ट्वैव रथः सारथिना तदा । विधेयाश्वसमायुक्तः सुदूरमपवाहितः ॥ १०
तमिन्द्रजितमप्राप्य रथस्थं सहसारथिम् । विवेश धरणीं भित्त्वा सा शिला व्यर्थमुद्यता ॥ ११
पतितायां शिलायां तु रक्षसां व्यथिता चमूः । निपतन्त्या च शिलया राक्षसा मथिता भृशम्॥
तमभ्यधावञ्शतशो नदन्तः काननौकसः । ते द्रुमांश्च महावीर्या गिरिशृङ्गाणि चोद्यताः ॥१३
क्षिपन्तीन्द्रजितं संख्ये वानरा भीमविक्रमाः । वृक्षशैलमहावर्षं विसृजन्तः प्लवङ्गमाः ॥ १४
शत्रूणां कदनं चक्रुर्नेदुश्च विविधैः स्वरैः । वानरैस्तैर्महावीर्यैर्घोररूपा निशाचराः ॥ १५
वीर्यादभिहता वृक्षैर्व्यवेष्टन्त रणाजिरे । स्वसैन्यमभिवीक्ष्याथ वानरार्दितमिन्द्रजित् ॥ १६
प्रगृहीतायुधः क्रुद्धः परानभिमुखो ययौ । स शरौघानवसृजन् स्वसैन्येनाभिसंवृतः ॥ १७
जघान कपिशार्दूलान् सुबहून् दृष्टविक्रमः । शूलैरशनिभिः खड्गैः पट्टसैः कूटमुद्गरैः ॥ १८

ते चाप्यनुचारास्तस्य वानराञ्जघ्नुरोजसा । सस्कन्धविटपैः सालैः शिलाभिश्च महाबलः ॥ १९
हनुमान् कदनं चक्रे रक्षसां भीमकर्मणाम् । स निवार्य परानीकमब्रवीत्तान् वनौकसः ॥ २०
हनुमान् संनिवर्तध्वं न नः साध्यमिदं बलम् । त्यक्त्वा प्राणान् विवेष्टन्तो रामप्रियचिकीर्षवः ॥
यन्निमित्तं हि युध्यामो हता सा जनकात्मजा । इममर्थं हि विज्ञाप्य रामं सुग्रीवमेव च ॥ २२
तौ यत् प्रतिविधास्येते तत् करिष्यामहे वयम् । इत्युक्त्वा वानरश्रेष्ठो वारयन् सर्ववानरान्॥२३
शनैः शनैरसंत्रस्तः सबलः संन्यवर्तत । ततः प्रेक्ष्य हनूमन्तं व्रजन्तं यत्र राघवः ॥ २४
स होतुकामो दुष्टात्मा गतश्चैत्यनिकुम्भिलाम् । निकुम्भिलामधिष्ठाय पावकं जुहुवेन्द्रजित् ॥
यज्ञभूम्यां तु विधिवत् पावकस्तेन रक्षसा । हूयमानः प्रजज्वाल मांसशोणितभुक् तदा ॥ २६
सोऽर्चिः पिनद्धो[1] ददृशे होमशोणिततर्पितः । सन्ध्यागत इवादित्यः सुतीव्रोऽग्निः समुत्थितः ॥

अथेन्द्रजिद्राक्षसभूतये तु जुहाव हव्यं विधिना विधानवित् ।
दृष्ट्वा व्यतिष्ठन्त च राक्षसास्ते महासमूहेषु नयानयज्ञाः ॥ २८

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
युद्धकाण्डे हनूमदादिनिर्वेदो नाम द्व्यशीतितमः सर्गः

---

## त्र्यशीतितमः सर्गः

### रामाश्वासनम्

राघवश्चापि विपुलं तं राक्षसवनौकसाम् । श्रुत्वा संग्रामनिर्घोषं जाम्बवन्तमुवाच ह ॥ १
सौम्य नूनं हनुमता क्रियते कर्म दुष्करम् । श्रूयते हि यथा भीमः सुमहानायुधस्वनः ॥ २
तद्गच्छ कुरु साहाय्यं स्वबलेनाभिसंवृतः । क्षिप्रमृक्षपते तस्य कपिश्रेष्ठस्य युध्यतः ॥ ३
ऋक्षराजस्तथोक्तस्तु स्वेनानीकेन संवृतः । आगच्छत् पश्चिमं द्वारं हनुमान् यत्र वानरः ॥ ४
अथायान्तं हनूमन्तं ददर्शर्क्षपतिः पथि । वानरैः कृतसंग्रामैः श्वसद्भिरभिसंवृतम् ॥ ५
दृष्ट्वा पथि हनूमांश्च तदृक्षबलमुद्यतम् । नीलमेघनिभं भीमं संनिवार्य न्यवर्तत ॥ ६
स तेन हरिसैन्येन संनिकर्षं महायशाः । शीघ्रमागम्य रामाय दुःखितो वाक्यमब्रवीत् ॥ ७
समरे युध्यमानानामस्माकं प्रेक्षतां पुरः । जघान रुदतीं सीतामिन्द्रजिद्रावणात्मजः ॥ ८
उद्भ्रान्तचित्तस्तां दृष्ट्वा विषण्णोऽहमरिंदम । तदहं भवतो वृत्तं विज्ञापयितुमागतः ॥ ९
तस्य तद्वचनं श्रुत्वा राघवः शोकमूर्छितः । निपपात तदा भूमौ छिन्नमूल इव द्रुमः ॥ १०
तं भूमौ देवसंकाशं पतितं प्रेक्ष्य राघवम् । अभिपेतुः समुत्पत्य सर्वतः कपिसत्तमाः ॥ ११

1. सार्चिः पिनद्धः पुना.।

असिञ्चन् सलिलैश्चैनं पद्मोत्पलसुगन्धिभिः । प्रदहन्तमनासाद्यं सहसाग्निमिवोच्छिखम् ॥ १२
तं लक्ष्मणोऽथ बाहुभ्यां परिष्वज्य सुदुःखितः । उवाच राममस्वस्थं वाक्यं हेत्वर्थसंयुतम् ॥१३
शुभे वर्त्मनि तिष्ठन्तं त्वामार्य विजितेन्द्रियम् । अनर्थेभ्यो न शक्नोति त्रातुं धर्मो निरर्थकः ॥
भूतानां स्थावराणां च जङ्गमानां च दर्शनम् । यथास्ति न तथा धर्मस्तेन नास्तीति मे मतिः ॥
यथैव स्थावरं व्यक्तं जङ्गमं च तथाविधम् । नायमर्थस्तथा युक्तस्त्वद्विधो न विपद्यते ॥ १६
यद्यधर्मो भवेद्भूतो रावणो नरकं व्रजेत् । भवांश्च धर्मयुक्तो वै नैवं व्यसनमाप्नुयात् ॥ १७
तस्य च व्यसनाभावाद्व्यसनं च गते त्वयि । धर्मो भवत्यधर्मश्च परस्परविरोधिनौ ॥ १८
धर्मेणोपलभेद्धर्ममधर्मं चाप्यधर्मतः । यद्यधर्मेण युज्येयुर्येष्वधर्मः प्रतिष्ठितः ॥ १९
यदि धर्मेण युज्येरन्नाधर्मरुचयो जनाः । धर्मेण चरतां धर्मस्तथा चैषां फलं भवेत् ॥ २०
यस्मादर्था विवर्धन्ते येष्वधर्मः प्रतिष्ठितः । क्लिश्यन्ते धर्मशीलाश्च तस्मादेतौ निरर्थकौ ॥ २१
वध्यन्ते पापकर्माणो यद्यधर्मेण राघव । वधकर्महतोऽधर्मः स हतः कं वधिष्यति ॥ २२
अथवा विहितेनायं हन्यते हन्ति वा परम् । विधिरालिप्यते तेन न स पापेन कर्मणा ॥ २३
अदृष्टप्रतिकारेण त्वव्यक्तेनासता सता । कथं शक्यं परं प्राप्तं धर्मेणारिविकर्शन ॥ २४
यदि सत् स्यात् सतां मुख्य नासत् स्यात्तव किंचन । त्वया यदीदृशं प्राप्तं तस्मात् सन्नोपपद्यते ॥
अथवा दुर्बलः क्लीबो बलं धर्मोऽनुवर्तते । दुर्बलो हृतमर्यादो न सेव्य इति मे मतिः ॥ २६
बलस्य यदि चेद्धर्मो गुणभूतः पराक्रमे । धर्ममुत्सृज्य वर्तस्व यथा धर्मे तथा बले ॥ २७
अथ चेत् सत्यवचनं धर्मः किल परंतप । अनृतस्त्वय्यकरुणः किं न बद्धस्त्वया पिता ॥ २८
यदि धर्मो भवेद्भूतः अधर्मो वा परंतप । न स्म हत्वा मुनिं वज्री कुर्यादिज्यां शतक्रतुः ॥२९
अधर्मसंश्रितो धर्मो विनाशयति राघव । सर्वमेतद्यथाकामं काकुत्स्थ कुरुते नरः ॥ ३०
मम चेदं मतं तात धर्मोऽयमिति राघव । धर्ममूलं त्वया छिन्नं राज्यमुत्सृजता तदा ॥ ३१
अर्थेभ्यो हि विवृद्धेभ्यः संवृत्तेभ्यस्ततस्ततः । क्रियाः सर्वाः प्रवर्तन्ते पर्वतेभ्य इवापगाः ॥ ३२
अर्थेन हि वियुक्तस्य पुरुषस्याल्पतेजसः । व्युच्छिद्यन्ते क्रियाः सर्वा ग्रीष्मे कुसरितो यथा ॥
सोऽयमर्थं परित्यज्य सुखकामः सुखैधितः । पापमारभते कर्तुं ततो दोषः प्रवर्तते ॥ ३४
यस्यार्थास्तस्य मित्राणि यस्यार्थास्तस्य बान्धवाः । यस्यार्थाः स पुमाँल्लोके यस्यार्थाः स च पण्डितः॥
यस्यार्थाःस च विक्रान्तो यस्यार्थाःस च बुद्धिमान् । यस्यार्थाःस महाभागो यस्यार्थाःस गुणाधिकः[1] ॥
अर्थस्यैते परित्यागे दोषाः प्रव्याहृता मया । राज्यमुत्सृजता वीर येन बुद्धिस्त्वया कृता ॥ ३७
यस्यार्था धर्मकामार्थास्तस्य सर्वं प्रदक्षिणम् । अधनेनार्थकामेन नार्थः शक्यो विचिन्वता ॥ ३८
हर्षः कामश्च दर्पश्च धर्मः क्रोधः शमो दमः । अर्थादेतानि सर्वाणि प्रवर्तन्ते नराधिप ॥ ३९

१. महागुणः च. छ. ।

येषां नश्यत्ययं लोकश्चरतां धर्मचारिणाम्। तेऽर्थास्त्वयि न दृश्यन्ते दुर्दिनेषु यथा ग्रहाः ॥
त्वयि प्रव्राजिते वीर गुरोश्च वचने स्थिते। रक्षसापहृता भार्या प्राणैः प्रियतरा तव ॥ ४१
तदद्य विपुलं वीर दुःखमिन्द्रजिता कृतम्। कर्मणा व्यपनेष्यामि तस्मादुत्तिष्ठ राघव ॥ ४२
उत्तिष्ठ नरशार्दूल दीर्घबाहो दृढव्रत। किमात्मानं [1]महात्मानमात्मानं नावबुध्यसे ॥ ४३
अयमनघ तवोदितः प्रियार्थं जनकसुतानिधनं निरीक्ष्य रुष्टः।
सहयगजरथां सराक्षसेन्द्रां भृशमिषुभिर्विनिपातयामि लङ्काम् ॥ ४४

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
युद्धकाण्डे रामाश्वासनं नाम त्र्यशीतितमः सर्गः

---

## चतुरशीतितमः सर्गः

### इन्द्रजिन्मायाविवरणम्

राममाश्वासयाने तु लक्ष्मणे भ्रातृवत्सले। निक्षिप्य गुल्मान् स्वस्थाने तत्रागच्छद्विभीषणः ॥ १
नानाप्रहरणैर्वीरैश्चतुर्भिः सचिवैर्वृतः। नीलाञ्जनचयाकारैर्मातङ्गैरिव यूथपः ॥ २
सोऽभिगम्य महात्मानं राघवं शोकलालसम्। वानरांश्चैव ददृशे बाष्पपर्याकुलेक्षणान् ॥ ३
राघवं च महात्मानमिक्ष्वाकुकुलनन्दनम्। ददर्श मोहमापन्नं लक्ष्मणस्याङ्कमाश्रितम् ॥ ४
व्रीडितं शोकसंतप्तं दृष्ट्वा रामं विभीषणः। अन्तर्दुःखेन दीनात्मा किमेतदिति सोऽब्रवीत् ॥ ५
विभीषणमुखं दृष्ट्वा सुग्रीवं तांश्च वानरान्। लक्ष्मणोवाच मन्दार्थमिदं बाष्पपरिप्लुतः ॥ ६
हतामिन्द्रजिता सीतामिह श्रुत्वैव राघवः। हनुमद्वचनात् सौम्य ततो मोहमुपागतः ॥ ७
कथयन्तं तु सौमित्रिं संनिवार्य विभीषणः। पुष्कलार्थमिदं वाक्यं विसंज्ञं राममब्रवीत् ॥ ८
मनुजेन्द्रार्तरूपेण यदुक्तं च हनूमता। तदयुक्तमहं मन्ये सागरस्येव शोषणम् ॥ ९
अभिप्रायं तु जानामि रावणस्य दुरात्मनः। सीतां प्रति महाबाहो न च घातं करिष्यति॥ १०
याच्यमानस्तु बहुशो मया हितचिकीर्षुणा। वैदेहीमुत्सृजस्वेति न च तत् कृतवान् वचः॥ ११
नैव साम्ना न दानेन न भेदेन कुतो युधा। सा द्रष्टुमपि शक्येत नैव चान्येन केनचित् ॥ १२
वानरान् मोहयित्वा तु प्रतियातः स राक्षसः। चैत्यं निकुम्भिलां नाम यत्र होमं करिष्यति ॥
हुतवानुपयातो हि देवैरपि सवासवैः। दुराधर्षो भवत्येव संग्रामे रावणात्मजः ॥ १४
तेन मोहयता नूनमेषा माया प्रयोजिता। विघ्नमन्विच्छतां तत्र वानराणां पराक्रमे ॥ १५
ससैन्यास्तत्र गच्छामो यावत्तन्न समाप्यते। त्यजेमं नरशार्दूल मिथ्यासंतापमागतम् ॥ १६

1. महान् समष्टिरूपा, आत्मा बुद्धिः यस्य सः, महात्मा।

सीदते हि बलं सर्वं दृष्ट्वा त्वां शोककर्शितम् । इह त्वं स्वस्थहृदयस्तिष्ठ सत्त्वसमुच्छ्रितः ॥१७
लक्ष्मणं प्रेषयास्माभिः सहसैन्यानुकर्षिभिः । एष तं नरशार्दूलो रावणिं निशितैः शरैः ॥ १८
त्याजयिष्यति तत् कर्म ततो वध्यो भविष्यति । तस्यैते निशितास्तीक्ष्णाः [1]पत्रिपत्राङ्गवाजिनः॥
पतत्रिण इवासौम्याः शराः पास्यन्ति शोणितम् । तं संदिश महाबाहो लक्ष्मणं शुभलक्षणम् ॥
राक्षसस्य विनाशाय वज्रं वज्रधरो यथा ॥

मनुजवर न कालविप्रकर्षो रिपुनिधनं प्रति यत् क्षमोऽद्य कर्तुम् ।
त्वमतिसृज रिपोर्वधाय वाणीममररिपोर्मथने यथा महेन्द्रः ॥ २१
समाप्तकर्मा हि स राक्षसाधिपो भवत्यदृश्यः समरे सुरासुरैः ।
युयुत्सता तेन समाप्तकर्मणा भवेत् सुराणामपि संशयो महान् ॥ २२

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
युद्धकाण्डे इन्द्रजिन्मायाविवरणं नाम चतुरशीतितमः सर्गः

## पञ्चाशीतितमः सर्गः

### निकुम्भिलाभियानम्

तस्य तद्वचनं श्रुत्वा राघवः शोककर्शितः । नोपधारयते व्यक्तं यदुक्तं तेन रक्षसा ॥ १
ततो धैर्यमवष्टभ्य रामः परपुरंजयः । विभीषणमुपासीनमुवाच कपिसंनिधौ २
नैर्ऋताधिपते वाक्यं यदुक्तं ते विभीषण । भूयस्तच्छ्रोतुमिच्छामि ब्रूहि यत्ते विवक्षितम् ॥ ३
राघवस्य वचः श्रुत्वा वाक्यं वाक्यविशारदः । यत्तत पुनरिदं वाक्यं बभाषे स विभीषणः ॥ ४
यथाज्ञप्तं महाबाहो त्वया गुल्मनिवेशनम् । तत्तथानुष्ठितं वीर त्वद्वाक्यसमनन्तरम् ॥ ५
तान्यनीकानि सर्वाणि विभक्तानि समन्ततः । विन्यस्ता यूथपाश्चैव यथान्यायं विभागशः ॥ ६
भूयस्तु मम विज्ञाप्यं तच्छृणुष्व महायशः । त्वय्यकारणसंतप्ते संतप्तहृदया वयम् ॥ ७
त्यज राजन्निमं शोकं मिथ्यासंतापमागतम् । तदियं त्यज्यतां चिन्ता शत्रुहर्षविवर्धिनी ॥ ८
उद्यमः क्रियतां वीर हर्षः समुपसेव्यताम् । प्राप्तव्या यदि ते सीता हन्तव्याश्च निशाचराः॥ ९
रघुनन्दन वक्ष्यामि श्रूयतां मे हितं वचः । साध्वयं यातु सौमित्रिर्बलेन महता वृतः ॥ १०
निकुम्भिलायां संप्राप्य हन्तुं रावणिमाहवे । धनुर्मण्डलनिर्मुक्तैराशीविषविषोपमैः ॥ ११
शरैर्हन्तुं महेष्वासो रावणिं समितिंजयः । तेन वीरेण तपसा वरदानात् स्वयंभुवः ॥ १२

---

1. पत्रिणां पत्राणि पक्षिणां पक्षाः, त एव अत एव वाजिनः वेगवन्त इत्यर्थः
अङ्गानि येषां ते शराः पक्षिपत्रैर्निबद्धावयवा इत्यर्थः।

अस्त्रं ब्रह्मशिरः प्राप्तं कामगाश्च तुरङ्गमाः । स एष सह सैन्येन प्राप्तः किल निकुम्भिलाम् ॥
यद्युत्तिष्ठेत् कृतं कर्म हतान् सर्वांश्च विद्धि नः । निकुम्भिलामसंप्राप्तमहुताग्निं च यो रिपुः ॥
त्वामाततायिनं हन्यादिन्द्रशत्रोः स ते वधः । वरो दत्तो महाबाहो सर्वलोकेश्वरेण वै ॥ १५
इत्येवं विहितो राजन् वधस्तस्यैव धीमतः । वधायेन्द्रजितो राम संदिशस्व महाबल ॥ १६
हते तस्मिन् हतं विद्धि रावणं ससुहृज्जनम् । विभीषणवचः श्रुत्वा राघवो वाक्यमब्रवीत् ॥ १७
जानामि तस्य रौद्रस्य मायां सत्यपराक्रम । स हि ब्रह्मास्त्रवित् प्राज्ञो महामायो महाबलः ॥
करोत्यसंज्ञान् संग्रामे देवान् सवरुणानपि । तस्यान्तरिक्षे चरतो रथस्थस्य महायशः ॥ १९
न गतिर्ज्ञायते तस्य सूर्यस्येवाभ्रसंप्लवे । राघवस्तु रिपोर्ज्ञात्वा मायावीर्यं दुरात्मनः ॥ २०
लक्ष्मणं कीर्तिसंपन्नमिदं वचनमब्रवीत् । यद्वानरेन्द्रस्य बलं तेन सर्वेण संवृतः ॥ २१
हनुमत्प्रमुखैश्चैव यूथपैः सह लक्ष्मण । जाम्बवेनर्क्षपतिना सह सैन्येन संवृतः ॥ २२
जहि तं राक्षससुतं मायाबलविशारदम् । अयं त्वां सचिवैः सार्धं महात्मा रजनीचरः ॥ २३
अभिज्ञस्तस्य देशस्य पृष्ठतोऽनुगमिष्यति । राघवस्य वचः श्रुत्वा लक्ष्मणः सविभीषणः ॥ २४
जग्राह कार्मुकश्रेष्ठमत्यद्भुतपराक्रमः । संनद्धः कवची खड्गी सशरो हेमचापधृत् ॥ २५
रामपादावुपस्पृश्य हृष्टः सौमित्रिरब्रवीत् । अद्य मत्कार्मुकोन्मुक्ताः शरा निर्भिद्य रावणिम् ॥
लङ्कामभिपतिष्यन्ति हंसाः पुष्करिणीमिव । अद्यैव तस्य रौद्रस्य शरीरं मामकाः शराः ॥ २७
विधमिष्यन्ति भित्त्वा तं [1]महाचापगुणच्युताः । स एवमुक्त्वा[2] द्युतिमान् वचनं भ्रातुरग्रतः॥ २८
स रावणिवधाकाङ्क्षी लक्ष्मणस्त्वरितो ययौ । सोऽभिवाद्य गुरोः पादौ कृत्वा चापि प्रदक्षिणम् ॥
निकुम्भिलामभिययौ चैत्यं रावणिपालितम् । विभीषणेन सहितो राजपुत्रः प्रतापवान् ॥ ३०
कृतस्वस्त्ययनो भ्रात्रा लक्ष्मणस्त्वरितो ययौ । वानराणां सहस्रैस्तु हनुमान् बहुभिर्वृतः ॥ ३१
विभीषणश्च सामात्यस्तदा लक्ष्मणमन्वगात् । महता हरिसैन्येन सवेगमभिसंवृतः ॥ ३२
ऋक्षराजबलं चैव ददर्श पथि विष्ठितम् । स गत्वा दूरमध्वानं सौमित्रिर्मित्रनन्दनः ॥ ३३
राक्षसेन्द्रबलं दूरादपश्यद्व्यूहमास्थितम् । स तं प्राप्य धनुष्पाणिर्मायायोगमरिंदमः ॥ ३४
तस्थौ ब्रह्मविधानेन[3] विजेतुं रघुनन्दनः । विभीषणेन सहितो राजपुत्रः प्रतापवान् ॥ ३५
अङ्गदेन च वीरेण तथानिलसुतेन च ॥

विविधममलशस्त्रभास्वरं तद्ध्वजगहनं विपुलं महारथैश्च ।
प्रतिभयतममप्रमेयवेगं तिमिरमिव द्विषतां बलं विवेश ॥ ३६

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
युद्धकाण्डे निकुम्भिलाभियानं नाम पञ्चाशीतितमः सर्गः

---

१. मम ङ. २. एवमुक्त्वा तु पुना. ३. ब्रह्मविमानेन ति. पाठान्तरम् ।

## षडशीतितमः सर्गः

### रावणिबलकदनम्

अथ तस्यामवस्थायां लक्ष्मणं रावणानुजः। परेषामहितं वाक्यमर्थसाधकमब्रवीत् ॥ १
यदेतद्राक्षसानीकं मेघश्यामं विलोक्यते। एतदायोध्यतां शीघ्रं कपिभिः पादपायुधैः ॥ २
अस्यानीकस्य महतो भेदने यत लक्ष्मण। राक्षसेन्द्रसुतोऽप्यत्र भिन्ने दृश्यो भविष्यति ॥ ३
स त्वमिन्द्राशनिप्रख्यैः शरैरवकिरन् परान्। अभिद्रवाशु यावद्वै नैतत् कर्म समाप्यते ॥ ४
जहि वीर दुरात्मानं मायापरमधार्मिकम्। रावणिं क्रूरकर्माणं सर्वलोकभयावहम् ॥ ५
विभीषणवचः श्रुत्वा लक्ष्मणः शुभलक्षणः। ववर्ष शरवर्षाणि राक्षसेन्द्रसुतं प्रति ॥ ६
ऋक्षाः शाखामृगाश्चापि द्रुमाद्रिनखयोधिनः। अभ्यधावन्त सहितास्तदनीकमवस्थितम् ॥ ७
राक्षसाश्च शितैर्बाणैरसिभिः शक्तितोमरैः। उद्यतैः समवर्तन्त कपिसैन्यजिघांसवः ॥ ८
स संप्रहारस्तुमुलः संजज्ञे कपिरक्षसाम्। शब्देन महता लङ्कां नादयन् वै समन्ततः ॥ ९
शस्त्रैश्च विविधाकारैः शितैर्बाणैश्च पादपैः। उद्यतैर्गिरिशृङ्गैश्च घोरैराकाशमावृतम् ॥ १०
ते राक्षसा वानरेषु विकृताननबाहवः। निवेशयन्तः शस्त्राणि चक्रुस्ते सुमहद्भयम् ॥ ११
तथैव सकलैर्वृक्षैर्गिरिशृङ्गैश्च वानराः। अभिजघ्नुर्निजघ्नुश्च समरे राक्षसर्षभान् ॥ १२
ऋक्षवानरमुख्यैश्च महाकायैर्महाबलैः। रक्षसां वध्यमानानां महद्भयमजायत ॥ १३
स्वमनीकं विषण्णं तु श्रुत्वा शत्रुभिरर्दितम्। उदतिष्ठत दुर्धर्षस्तत्कर्मण्यननुष्ठिते ॥ १४
वृक्षान्धकारान्निर्गत्य जातक्रोधः स रावणिः। आरुरोह रथं सज्जं पूर्वयुक्तं स राक्षसः ॥ १५
स भीमकार्मुकधरः कालमेघसमप्रभः। रक्तास्यनयनः क्रुद्धो बभौ मृत्युरिवान्तकः ॥ १६
दृष्ट्वैव तु रथस्थं तं पर्यवर्तत तद्बलम्। रक्षसां भीमवेगानां लक्ष्मणेन युयुत्सताम् ॥ १७
तस्मिन् काले तु हनुमानुद्यम्य सुदुरासदम्। धरणीधरसंकाशो महावृक्षमरिंदमः ॥ १८
स राक्षसानां तत् सैन्यं कालाग्निरिव निर्दहन्। चकार बहुभिर्वृक्षैर्निःसंज्ञं युधि वानरः ॥ १९
विध्वंसयन्तं तरसा दृष्ट्वैव पवनात्मजम्। राक्षसानां सहस्राणि हनुमन्तमवाकिरन् ॥ २०
शितशूलधराः शूलैरसिभिश्चासिपाणयः। शक्तिभिः शक्तिहस्ताश्च पट्टसैः पट्टसायुधाः ॥ २१
परिघैश्च गदाभिश्च चक्रैश्च शुभदर्शनैः। शतशश्च शतघ्नीभिरायसैरपि मुद्गरैः ॥ २२
घोरैः परश्वधैश्चैव भिण्डिपालैश्च राक्षसाः। मुष्टिभिर्वज्रकल्पैश्च तलैरशनिसंनिभैः ॥ २३
अभिजघ्नुः समासाद्य समन्तात् पर्वतोपमम्। तेषामपि च संक्रुद्धश्चकार कदनं महत् ॥ २४
स ददर्श कपिश्रेष्ठमचलोपममिन्द्रजित्। सूदयन्तममित्रघ्नममित्रान् पवनात्मजम् ॥ २५
स सारथिमुवाचेदं याहि यत्रैष वानरः। क्षयमेष हि नः कुर्याद्राक्षसानामुपेक्षितः ॥ २६
इत्युक्तः सारथिस्तेन ययौ यत्र स मारुतिः। वहन् परमदुर्धर्षं स्थितमिन्द्रजितं रथे ॥ २७

सोऽभ्युपेत्य शरान् खड्गान् पट्टसांश्च परश्वधान् । अभ्यवर्षत दुर्धर्षः कपिमूर्ध्नि स राक्षसः ॥
तानि शस्त्राणि घोराणि प्रतिगृह्य स मारुतिः । रोषेण महताविष्टो वाक्यं चेदमुवाच ह ॥
युध्यस्व यदि शूरोऽसि रावणात्मज दुर्मते । वायुपुत्रं समासाद्य जीवन्न प्रतियास्यसि ॥ ३०
बाहुभ्यां प्रतियुध्यस्व यदि मे द्वन्द्वमाहवे । वेगं सहस्व दुर्बुद्धे ततस्त्वं रक्षसां वरः ॥ ३१
हनुमन्तं जिघांसन्तं समुद्यतशरासनम् । रावणात्मजमाचष्टे लक्ष्मणाय विभीषणः ॥ ३२
यः स वासवनिर्जेता रावणस्यात्मसंभवः । स एष रथमास्थाय हनुमन्तं जिघांसति ॥ ३३
तमप्रतिमसंस्थानैः शरैः शत्रुविदारणैः । जीवितान्तकरैर्घोरैः सौमित्रे रावणिं जहि ॥ ३४

इत्येवमुक्तस्तु तदा महात्मा विभीषणेनारिविभीषणेन ।
ददर्श तं पर्वतसंनिकाशं रणे स्थितं भीममबलं नदन्तम् ॥ ३५

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
युद्धकाण्डे रावणिबलकदनं नाम षडशीतितमः सर्गः

---

## सप्ताशीतितमः सर्गः

### विभीषणरावणिपरस्परनिन्दा

एवमुक्त्वा तु सौमित्रिं जातहर्षो विभीषणः । धनुष्पाणिनमादाय[1] त्वरमाणो जगाम ह ॥ १
अविदूरं ततो गत्वा प्रविश्य च महद्वनम् । दर्शयामास तत्कर्म लक्ष्मणाय विभीषणः ॥ २
नीलजीमूतसंकाशं न्यग्रोधं भीमदर्शनम् । तेजस्वी रावणभ्राता लक्ष्मणाय न्यवेदयत् ॥ ३
इहोपहारं भूतानां बलवान् रावणात्मजः । उपहृत्य ततः पश्चात् संग्राममभिवर्तते ॥ ४
अदृश्यः सर्वभूतानां ततो भवति राक्षसः । निहन्ति समरे शत्रून् बध्नाति च शरोत्तमैः ॥ ५
तमप्रविष्टन्यग्रोधं बलिनं रावणात्मजम् । विध्वंसय शरैस्तीक्ष्णैः सरथं साश्वसारथिम् ॥ ६
तथेत्युक्त्वा महातेजाः सौमित्रिर्मित्रनन्दनः । बभूवावस्थितस्तत्र चित्रं विस्फारयन् धनुः ॥ ७
स रथेनाग्निवर्णेन बलवान् रावणात्मजः । इन्द्रजित् कवची धन्वी सध्वजः प्रत्यदृश्यत ॥ ८
तमुवाच महातेजाः पौलस्त्यमपराजितम् । समाह्वये त्वां समरे सम्यग्युद्धं प्रयच्छ मे ॥ ९
एवमुक्तो महातेजा मनस्वी रावणात्मजः[2] । अब्रवीत् परुषं वाक्यं तत्र दृष्ट्वा विभीषणम् ॥ १०
इह त्वं जातसंवृद्धः साक्षाद्भ्राता पितुर्मम । कथं द्रुह्यसि पुत्रस्य पितृव्यो मम राक्षस ॥ ११
न ज्ञातित्वं न सौहार्दं न जातिस्तव दुर्मते । प्रमाणं न च सोदर्यं न धर्मो धर्मदूषण ॥ १२
शोच्यस्त्वमसि दुर्बुद्धे निन्दनीयश्च साधुभिः । यस्त्वं स्वजनमुत्सृज्य परभृत्यत्वमागतः ॥ १३

---

१. धनुष्पाणिं समादाय पुनः । २. इन्द्रजिदित्यादि रावणात्मज इत्यन्तम् ग. नास्ति ।

नैतच्छिथिलया बुद्ध्या त्वं वेत्सि महदन्तरम् । क्व च स्वजनसंवासः क्व च नीचपराश्रयः ॥ १४
गुणवान् वा परजनः स्वजनो निर्गुणोऽपि वा । निर्गुणः स्वजनः श्रेयान् यः परः परएव सः ॥
यः स्वपक्षं परित्यज्य परपक्षं निषेवते । स स्वपक्षे क्षयं प्राप्ते पश्चात्तैरेव हन्यते ॥ १६
निरनुक्रोशता चेयं यादृशी ते निशाचर । स्वजनेन[1] त्वया शक्यं परुषं[2] रावणानुज ॥ १७
इत्युक्तो भ्रातृपुत्रेण प्रत्युवाच विभीषणः । अजानन्निव मच्छीलं किं राक्षस विकत्थसे ॥ १८
राक्षसेन्द्रसुतासाधो पारुष्यं त्यज गौरवात् । कुले यद्यप्यहं जातो रक्षसां क्रूरकर्मणाम् ॥ १९
गुणोऽयं प्रथमो नृणां तन्मे शीलमराक्षसम् । न रमे दारुणेनाहं न चाधर्मेण वै रमे ॥ २०
भ्रात्रा विषमशीलेन कथं भ्राता निरस्यते । धर्मात् प्रच्युतशीलं हि पुरुषं पापनिश्चयम् ॥ २१
त्यक्त्वा सुखमवाप्नोति हस्तादाशीविषं यथा । हिंसापरस्वहरणे परदाराभिमर्शनम् ॥ २२
त्याज्यमाहुर्दुराचारं वेश्म प्रज्वलितं यथा । परस्वानां च हरणं परदाराभिमर्शनम् ॥ २३
सुहृदामतिशङ्का च त्रयो दोषाः क्षयावहाः । महर्षीणां वधो घोरः सर्वदेवैश्च विग्रहः ॥ २४
अभिमानश्च कोपश्च वैरित्वं प्रतिकूलता । एते दोषा मम भ्रातुर्जीवितैश्वर्यनाशनाः ॥ २५
गुणान् प्रच्छादयामासुः पर्वतानिव तोयदाः । दोषैरेतैः परित्यक्तो मया भ्राता पिता तव ॥२६
नेयमस्ति पुरी लङ्का न च त्वं न च ते पिता । अतिमानी च बालश्च दुर्विनीतश्च राक्षस ॥
बद्धस्त्वं कालपाशेन ब्रूहि मां यद्यदिच्छसि । अद्य ते व्यसनं प्राप्तं किं मां त्वमिह वक्ष्यसि ॥
प्रवेष्टुं न त्वया शक्यो न्यग्रोधो राक्षसाधम । धर्षयित्वा च काकुत्स्थौ न शक्यं जीवितुं त्वया ॥
युध्यस्व नरदेवेन लक्ष्मणेन रणे सह । हतस्त्वं देवताकार्यं करिष्यसि यमक्षये ॥ ३०

निदर्शय स्वात्मबलं समुद्यतं कुरुष्व सर्वायुधसायकव्ययम् ।
न लक्ष्मणस्यैत्य हि बाणगोचरं त्वमद्य जीवन् सबलो गमिष्यसि ॥ ३१

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
युद्धकाण्डे विभीषणरावणिपरस्परनिन्दा नाम सप्ताशीतितमः सर्गः

---

## अष्टाशीतितमः सर्गः

### सौमित्रिरावणियुद्धम्

विभीषणवचः श्रुत्वा रावणिः क्रोधमूर्छितः । अब्रवीत् परुषं वाक्यं वेगेनाभ्युत्पपात ह ॥ १
उद्यतायुधनिस्त्रिंशो रथे सुसमलंकृते । कालाश्वयुक्ते महति स्थितः कालान्तकोपमः ॥ २
महाप्रमाणमुद्यम्य विपुलं वेगवद्दृढम् । धनुर्भीमं परामृश्य शरांश्चामित्रशातनान् ॥ ३

१. स्वजने न च. छ. । २. पौरुषम् ति. ।

तं ददर्श महेष्वासो रथे सुसमलंकृतः । अलंकृतममित्रघ्नं राघवस्यानुजं बली ॥ ४
हनुमत्पृष्ठमासीनमुदयस्थरविप्रभम् । उवाचैनं समारब्धः सौमित्रिं सविभीषणम् ॥ ५
तांश्च वानरशार्दूलान् पश्यध्वं मे पराक्रमम् । अद्य मत्कार्मुकोत्सृष्टं शरवर्षं दुरासदम् ॥ ६
मुक्तं वर्षमिवाकाशे वारयिष्यथ संयुगे । अद्य वो मामका बाणा महाकार्मुकनिःसृताः ॥ ७
विधमिष्यन्ति गात्राणि तूलराशिमिवानलः । तीक्ष्णसायकनिर्भिन्नाञ्शूलशक्त्यृष्टितोमरैः ॥ ८
अद्य वो गमयिष्यामि सर्वानेव यमक्षयम् । क्षिपतः शरवर्षाणि क्षिप्रहस्तस्य मे युधि[१] ॥ ९
जीमूतस्येव नदतः कः स्थास्यति ममाग्रतः[1] । रात्रियुद्धे मया पूर्वं वज्राशनिसमैः शरैः ॥ १०
शायितौ स्थो मया[2] भूमौ विसंज्ञौ सपुरःसरौ । स्मृतिर्न तेऽस्ति वा मन्ये व्यक्तं वा यमसादनम् ॥
आशीविषमिव क्रुद्धं यन्मां योद्धुं व्यवस्थितः । तच्छ्रुत्वा राक्षसेन्द्रस्य गर्जितं लक्ष्मणस्तदा ॥
अभीतवदनः क्रुद्धो रावणिं वाक्यमब्रवीत् । उक्तश्च दुर्गमः पारः कार्याणां राक्षस त्वया ॥
कार्याणां कर्मणा पारं यो गच्छति स बुद्धिमान् । स त्वमर्थस्य हीनार्थो दुरवापस्य केनचित् ॥
वचो व्याहृत्य जानीषे कृतार्थोऽस्मीति दुर्मते । अन्तर्धानगतेनाजौ यस्त्वयाचरितस्तदा ॥ १५
तस्कराचरितो मार्गो नैष वीरनिषेवितः । यथा बाणपथं प्राप्य स्थितोऽहं तव राक्षस ॥ १६
दर्शयस्वाद्य तत्तेजो वाचा त्वं किं विकत्थसे । एवमुक्तो धनुर्भीमं परामृश्य महाबलः ॥ १७
ससर्ज निशितान् बाणानिन्द्रजित् समितिंजयः । ते निसृष्टा महावेगाः शराः सर्पविषोपमाः ॥
संप्राप्य लक्ष्मणं पेतुः श्वसन्त इव पन्नगाः । शरैरतिमहावेगैर्वेगवान् रावणात्मजः ॥ १९
सौमित्रिमिन्द्रजिद्युद्धे विव्याध शुभलक्षणम् । स शरैरतिविद्धाङ्गो रुधिरेण समुक्षितः ॥ २०
शुशुभे लक्ष्मणः श्रीमान् विधूम इव पावकः । इन्द्रजित्त्वात्मनः कर्म प्रसमीक्ष्याधिगम्य च ॥
विनद्य सुमहानादमिदं वचनमब्रवीत् । पत्रिणः शितधारास्ते शरा मत्कार्मुकच्युताः ॥ २२
आदास्यन्तेऽद्य सौमित्रे जीवितं जीवितान्तगाः । अद्य गोमायुसङ्घाश्च श्येनसङ्घाश्च लक्ष्मण ॥
गृध्राश्च निपतन्तु त्वां गतासुं निहतं मया । अद्य यास्यति सौमित्रे कर्णगोचरतां तव ॥ २४
तर्जनं यमदूतानां सर्वभूतभयावहम्[२] । क्षत्रबन्धुः सदानार्यो[३] रामः परमदुर्मतिः ॥ २५
भक्तं भ्रातरमद्यैव त्वां द्रक्ष्यति मया हतम् । विशस्तकवचं भूमौ व्यपविद्धशरासनम् ॥ २६
हृतोत्तमाङ्गं सौमित्रे त्वामद्य निहतं मया । इति ब्रुवाणं संरब्धं परुषं रावणात्मजम् ॥ २७
हेतुमद्वाक्यमत्यर्थं लक्ष्मणः प्रत्युवाच ह । वाग्बलं त्यज दुर्बुद्धे क्रूरकर्मासि राक्षस ॥ २८
अथ कस्माद्वदस्येतत् संपादय सुकर्मणा । अकृत्वा कत्थसे कर्म किमर्थमिह राक्षस ॥ २९

1. अहंकारातिशयात् ने ममेति द्विर्वचनम ।
2 आग्रहातिशयात् मयेति द्विरुक्तिः ।
१. संयुगे पुना.
२. अद्येत्यादि भयावहमित्यन्तम् च. नास्ति ।
३. क्षत्त्रबन्धुं सदानार्यम च. ।

कुरु तत् कर्म येनाहं श्रद्दध्यां तव कत्थनम्। अनुक्त्वा परुषं वाक्यं किंचिदप्यनवक्षिपन् ॥३०
अविकत्थन् वधिष्यामि त्वां पश्य पुरुषाधम। इत्युक्त्वा पञ्च नाराचानाकर्णापूरिताञ्शितान् ॥
निजघान महावेगाँल्लक्ष्मणो राक्षसोरसि। सुपत्रवाजिता बाणा ज्वलिता इव पन्नगाः ॥ ३२
नैर्ऋतोरस्यभासन्त सवितू रश्मयो यथा। स शरैराहतस्तेन सरोषो रावणात्मजः ॥ ३३
सुप्रयुक्तैस्त्रिभिर्बाणैः प्रतिविव्याध लक्ष्मणम्। स बभूव तदा भीमो नरराक्षससिंहयोः ॥ ३४
विमर्दस्तुमुलो युद्धे परस्परजयैषिणोः। उभौ हि बलसंपन्नावुभौ विक्रमशालिनौ ॥ ३५
उभावपि सुविक्रान्तौ सर्वशस्त्रास्त्रकोविदौ। उभौ परमदुर्जेयावतुल्यबलतेजसौ ॥ ३६
युयुधाते तदा वीरौ ग्रहाविव नभोगतौ। बलवृत्राविवाभीतौ युधि तौ दुष्प्रधर्षणौ ॥ ३७
युयुधाते महात्मानौ तदा केसरिणाविव। बहूनवसृजन्तौ हि मार्गणौघानवस्थितौ ॥ ३८
नरराक्षससिंहौ तौ प्रहृष्टावभ्ययुध्यताम् ॥

सुसंप्रहृष्टौ नरराक्षसोत्तमौ जयैषिणौ मार्गणचापधारिणौ।
परस्परं तौ प्रववर्षतुर्भृशं शरौघवर्षेण बलाहकाविव ॥ ३९
अभिप्रवृद्धौ युधि युद्धकोविदौ शरासिचण्डौ शितशस्त्रधारिणौ।
अभीक्ष्णमाविव्यधतुर्महाबलौ महाहवे शम्बरवासवाविव[1] ॥ ४०

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
युद्धकाण्डे सौमित्रिरावणियुद्धं नाम अष्टाशीतितमः सर्गः

---

## एकोननवतितमः सर्गः

### सौमित्रिसंधुक्षणम्

ततः शरं दाशरथिः संधायामित्रकर्शनः। ससर्ज राक्षसेन्द्राय क्रुद्धः सर्प इव श्वसन् ॥ १
तस्य ज्यातलनिर्घोषं स श्रुत्वा रावणात्मजः। विवर्णवदनो भूत्वा लक्ष्मणं समुदैक्षत ॥ २
तं विवर्णमुखं दृष्ट्वा राक्षसं रावणात्मजम्। सौमित्रिं युद्धसंयुक्तं प्रत्युवाच विभीषणः ॥ ३
निमित्तान्यनुपश्यामि यान्यस्मिन् रावणात्मजे। त्वर तेन महाबाहो भग्न एष न संशयः ॥ ४
ततः सन्धाय सौमित्रिर्बाणानग्निशिखोपमान्। मुमोच निशितांस्तस्मिन् सर्पानिव महाविषान् ॥
शक्राशनिसमस्पर्शैर्लक्ष्मणेनाहतः शरैः। मुहूर्तमभवन्मूढः सर्वसंक्षुभितेन्द्रियः ॥ ६
उपलभ्य मुहूर्तेन संज्ञां प्रत्यागतेन्द्रियः। ददर्शावस्थितं वीरं वीरो दशरथात्मजम् ॥ ७

1. सुसंप्रहृष्टौ इत्यादि पद्यद्वयं प्रक्षिप्तम्। ततः शरमित्यादि चास्यैव सर्गस्यानुवृत्तिरिति तिलकः

सोऽभिचक्राम सौमित्रिं रोषात् संरक्तलोचनः । अब्रवीच्चैनमासाद्य पुनः स परुषं वचः ॥ ८
किं न स्मरसि तद्युद्धे प्रथमे मत्पराक्रमम् । निबद्धस्त्वं सह भ्रात्रा यदा भुवि विवेष्टसे ॥ ९
युवां खलु महायुद्धे शक्राशनिसमैः शरैः । शायितौ प्रथमं भूमौ विसंज्ञौ सपुरःसरौ ॥ १०
स्मृतिर्वा नास्ति ते मन्ये व्यक्तं वा यमसादनम् । गन्तुमिच्छसि यस्मात्त्वं मां धर्षयितुमिच्छसि ॥
यदि ते प्रथमे युद्धे न दृष्टो मत्पराक्रमः । अद्य ते दर्शयिष्यामि तिष्ठेदानीं व्यवस्थितः ॥ १२
इत्युक्त्वा सप्तभिर्बाणैरभिविव्याध लक्ष्मणम् । दशभिस्तु हनूमन्तं तीक्ष्णधारैः शरोत्तमैः ॥ १३
ततः शरशतेनैव सुप्रयुक्तेन वीर्यवान् । क्रोधाद्द्विगुणसंरब्धो निर्बिभेद विभीषणम् १४
तद्दृष्ट्वेन्द्रजिता कर्म कृतं रामानुजस्तदा । अचिन्तयित्वा प्रहसन्नैतत् किंचिदिति ब्रुवन् ॥ १५
मुमोच स शरान् घोरान् संगृह्य नरपुंगवः । अभीतवदनः क्रुद्धो रावणिं लक्ष्मणो युधि ॥ १६
नैवं रणगताः शूराः प्रहरन्ते निशाचर । लघवश्चाल्पवीर्याश्च सुखा हीमे शरास्तव ॥ १७
नैवं शूरास्तु युध्यन्ते समरे जयकाङ्क्षिणः । इत्येवं तं ब्रुवाणस्तु शरवर्षैरवाकिरत् ॥ १८
तस्य बाणैः सुविध्वस्तं कवचं हेमभूषितम् । व्यशीर्यत रथोपस्थे ताराजालमिवाम्बरात् ॥ १९
विधूतवर्मा नाराचैर्बभूव स कृतव्रणः । इन्द्रजित् समरे वीरः प्ररूढ इव सानुमान् ॥ २०
ततः शरसहस्रेण संक्रुद्धो रावणात्मजः । बिभेद समरे वीरं लक्ष्मणं भीमविक्रमः ॥ २१
व्यशीर्यत महादिव्यं कवचं लक्ष्मणस्य च । कृतप्रतिकृतान्योन्यं बभूवतुरभिद्रुतौ ॥ २२
अभीक्ष्णं निःश्वसन्तौ तौ युध्येतां तुमुलं युधि । शरसंकृत्तसर्वाङ्गौ सर्वतो रुधिरोक्षितौ ॥ २३
सुदीर्घकालं तौ वीरावन्योन्यं निशितैः शरैः । ततक्षतुर्महात्मनौ रणकर्मविशारदौ ॥ २४
बभूवतुश्चात्मजये यत्तौ भीमपराक्रमौ । तौ शरौघैस्तदा कीर्णौ निकृत्तकवचध्वजौ ॥ २५
स्रवन्तौ रुधिरं चोष्णं जलं प्रस्रवणाविव । शरवर्षं ततो घोरं मुञ्चतोर्भीमनिःस्वनम् ॥ २६
सासारयोरिवाकाशे नीलयोः कालमेघयोः । तयोरथ महान् कालो व्यत्ययाद्युध्यमानयोः ॥ २७
न च तौ युद्धवैमुख्यं श्रमं वाप्युपजग्मतुः । अस्त्राण्यस्त्रविदां श्रेष्ठौ दर्शयन्तौ पुनः पुनः ॥ २८
शरानुच्चावचाकारानन्तरिक्षे बबन्धतुः । व्यपेतदोषमस्यन्तौ लघु चित्रं च सुष्ठु च ॥ २९
उभौ तौ तुमुलं घोरं चक्रतुर्नरराक्षसौ । तयोः पृथक् पृथक् भीमः शुश्रुवेतलनिस्वनः ॥ ३०
प्रकम्पयञ्जनं घोरो निर्घात इव दारुणः । स तयोर्भ्राजते शब्दस्तदा समरसक्तयोः ॥ ३१
सुघोरयोर्निष्टनतोर्गगने मेघयोर्यथा । सुवर्णपुङ्खैर्नाराचैर्बलवन्तौ कृतव्रणौ ॥ ३२
प्रसुस्रुवाते रुधिरं कीर्तिमन्तौ जये धृतौ । ते गात्रयोर्निपतिता रुक्मपुङ्खाः शरा युधि ॥ ३३
असृङ्नद्धा विनिष्पत्य विविशुर्धरणीतलम् । अन्ये सुनिशितैः शस्त्रैराकाशे संजघट्टिरे ॥ ३४
बभञ्जुश्चिच्छिदुश्चान्ये तयोर्बाणाः सहस्रशः । स बभूव रणे[1] घोरस्तयोर्बाणमयश्चयः ॥ ३५

१. रणः च. छ. ।

अग्निभ्यामिव दीप्ताभ्यां सत्रे कुशमयश्चयः। तयोः कृतव्रणौ देहौ शुशुभाते महात्मनोः ॥३६
सपुष्पाविव निष्पत्रौ वने शाल्मलिकिंशुकौ। चक्रतुस्तुमुलं घोरं संनिपातं मुहुर्मुहुः ॥ ३७
इन्द्रजिल्लक्ष्मणश्चैव परस्परवधैषिणौ। लक्ष्मणो रावणिं युद्धे रावणिश्चापि लक्ष्मणम् ॥ ३८
अन्योन्यं तावभिघ्नन्तौ न श्रमं प्रत्यपद्यताम्। बाणजालैः शरीरस्थैरवगाढैस्तरस्विनौ ॥ ३९
शुशुभाते महावीर्यौ प्ररूढाविव पर्वतौ। तयो रुधिरसिक्तानि संवृतानि शरैर्भृशम् ॥ ४०
बभ्राजुः सर्वगात्राणि ज्वलन्त इव पावकाः। तयोरथ महान् कालो व्यत्ययाद्युध्यमानयोः ॥
न च तौ युद्धवैमुख्यं श्रमं वाप्युपजग्मतुः ॥

अथ समरपरिश्रमं निहन्तुं समरमुखेष्वजितस्य लक्ष्मणस्य।
प्रियहितमुपपादयन्महौजाः समरमुपेत्य विभीषणोऽवतस्थे ॥ ४२

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायां
युद्धकाण्डे सौमित्रिसंधुक्षणं नाम एकोननवतितमः सर्गः

---

## नवतितमः सर्गः

### सौमित्रिरावणियुद्धम्

युध्यमानौ तु तौ दृष्ट्वा प्रसक्तौ नरराक्षसौ। प्रभिन्नाविव मातङ्गौ परस्परवधैषिणौ ॥ १
तौ द्रष्टुकामः संग्रामे परस्परगतौ बली। शूरः स रावणभ्राता तस्थौ संग्राममूर्धनि ॥ २
ततो विस्फारयामास महद्धनुरवस्थितः। उत्ससर्ज च तीक्ष्णाग्रान् राक्षसेषु महाशरान् ॥ ३
ते शराः शिखिसंकाशा निपतन्तः समाहिताः। राक्षसान् दारयामासुर्वज्राणीव महागिरीन् ॥
विभीषणस्यानुचरास्तेऽपि शूलासिपट्टिसैः। चिच्छिदुः समरे वीरान् राक्षसान् राक्षसोत्तमाः ॥
राक्षसैस्तैः परिवृतः स तदा तु विभीषणः। बभौ मध्ये प्रहृष्टानां कलभानामिव द्विपः ॥ ६
ततः संचोदयानो वै हरीन् रक्षोरणप्रियान्। उवाच वचनं काले कालज्ञो रक्षसां वरः ॥ ७
एकोऽयं राक्षसेन्द्रस्य परायणमिव स्थितः। एतच्छेषं बलं तस्य किं तिष्ठत हरीश्वराः ॥ ८
अस्मिन् विनिहते पापे राक्षसे रणमूर्धनि। रावणं वर्जयित्वा तु शेषमस्य हतं बलम् ॥ ९
प्रहस्तो निहतो वीरो निकुम्भश्च महाबलः। कुम्भकर्णश्च कुम्भश्च धूम्राक्षश्च निशाचरः ॥१०
जम्बुमाली महामाली तीक्ष्णवेगोऽशनिप्रभः। सुप्तघ्नो यज्ञकोपश्च वज्रदंष्ट्रश्च राक्षसः ॥ ११
संह्रादी विकटो निघ्नस्तपनो दम एव च। प्रघासः प्रघसश्चैव प्रजङ्घो जङ्घ एव च ॥ १२
अग्निकेतुश्च दुर्धर्षो रश्मिकेतुश्च वीर्यवान्। विद्युज्जिह्वो द्विजिह्वश्च सूर्यशत्रुश्च राक्षसः ॥ १३
अकम्पनः सुपार्श्वश्च चक्रमाली च राक्षसः। कम्पनः सत्त्ववन्तौ तौ देवान्तकनरान्तकौ ॥
एतान्निहत्यातिबलान् बहून् राक्षससत्तमान्। बाहुभ्यां सागरं तीर्त्वा लङ्घ्यतां गोष्पदं लघु ॥

एतावदेव शेषं वो जेतव्यमिह वानराः । हताः सर्वे समागम्य राक्षसा बलदर्पिताः ॥ १६
अयुक्तं निधनं कर्तुं पुत्रस्य जनितुर्मम । घृणामपास्य रामार्थे निहन्यां भ्रातुरात्मजम् ॥ १७
हन्तुकामस्य मे बाष्पं चक्षुश्चैव निरुध्यति । तमेवैष महाबाहुर्लक्ष्मणः शमयिष्यति ॥ १८
वानरा घ्नत संभूय भृत्यानस्य समीपगान् । इति तेनातियशसा राक्षसेनाभिचोदिताः ॥ १९
वानरेन्द्रा जहृषिरे लाङ्गूलानि च विव्यधुः । ततस्ते कपिशार्दूलाः क्ष्वेलन्तश्च मुहुर्मुहुः ॥ २०
मुमुचुर्विविधान्नादान् मेघान् दृष्ट्वेव बर्हिणः । जाम्बवानपि तैः सर्वैः स्वयूथैरपि संवृतः ॥ २१
अश्मभिस्ताडयामास नखैर्दन्तैश्च राक्षसान् । निघ्नन्तमृक्षाधिपतिं राक्षसास्ते महाबलाः ॥ २२
परिवव्रुर्भयं त्यक्त्वा तमनेकविधायुधाः । शरैः परशुभिस्तीक्ष्णैः पट्टसैर्यष्टितोमरैः ॥ २३
जाम्बवन्तं मृधे जघ्नुर्निघ्नन्तं राक्षसीं चमूम् । स संप्रहारस्तुमुलः संजज्ञे कपिरक्षसाम् ॥ २४
देवासुराणां क्रुद्धानां यथा भीमो महास्वनः । हनुमानमपि संक्रुद्धः सालमुत्पाट्य वीर्यवान् ॥
स लक्ष्मणं स्वांसपृष्ठादवरोप्य महामनाः[१] । रक्षसां कदनं चक्रे समासाद्य सहस्रशः ॥ २६
स दत्त्वा तुमुलं युद्धं पितृव्यस्येन्द्रजिद्युधि । लक्ष्मणं परवीरघ्नं पुनरेवाभ्यधावत ॥ २७
तौ[1] प्रयुद्धौ तदा वीरौ मृधे लक्ष्मणराक्षसौ । शरौघानभिवर्षन्तौ जघ्नतुस्तौ परस्परम् ॥ २८
अभीक्ष्णमन्तर्दधतुः शरजालैर्महाबलौ । चन्द्रादित्याविवोष्णान्ते यथा मेघैस्तरस्विनौ ॥ २९
न ह्यादानं न संधानं धनुषो वा परिग्रहः । न विप्रमोक्षो बाणानां न विकर्षो न विग्रहः ॥ ३०
न मुष्टिप्रतिसंधानं न लक्ष्यप्रतिपादनम् । अदृश्यत तयोस्तत्र युध्यतोः पाणिलाघवात् ॥ ३१
चापवेगविनिर्मुक्तबाणजालैः समन्ततः । अन्तरिक्षे हि संछन्ने न रूपाणि चकाशिरे ॥ ३२
लक्ष्मणो रावणिं प्राप्य रावणिश्चापि लक्ष्मणम् । अव्यवस्था भवत्युग्रा ताभ्यामन्योन्यविग्रहे ॥
ताभ्यामुभाभ्यां तरसा विसृष्टैर्विशिखैः शितैः । निरन्तरमिवाकाशं बभूव तमसावृतम् ॥ ३४
तैः पतद्भिश्च बहुभिस्तयोः शरशतैः शितैः । दिशश्च प्रदिशश्चैव बभूवुः शरसंकुलाः ॥ ३५
तमसा संवृतं सर्वमासीद्भीमतरं महत् । अस्तं गते सहस्रांशौ संवृतं तमसेव हि ॥ ३६
रुधिरौघा महानद्यः प्रावर्तन्त सहस्रशः । क्रव्यादा दारुणा वाग्भिश्चिक्षिपुर्भीमनिःस्वनम् ॥ ३७
न तदानीं ववौ वायुर्न च जज्वाल पावकः । स्वस्त्यस्तु लोकेभ्य इति जजल्पुश्च महर्षयः ॥ ३८
संपेतुश्चात्र संप्राप्ता गन्धर्वाः सह चारणैः । अथ राक्षससिंहस्य कृष्णान् कनकभूषणान् ॥ ३९
शरैश्चतुर्भिः सौमित्रिर्विव्याध चतुरो हयान् । ततोऽपरेण भल्लेन शितेन निशितेन च ॥ ४०
संपूर्णायतमुक्तेन सुपत्रेण सुवर्चसा । महेन्द्राशनिकल्पेन सूतस्य विचरिष्यतः ॥ ४१
स तेन बाणाशनिना तलशब्दानुनादिना । लाघवाद्राघवः श्रीमाञ्शिरः कायादपाहरत् ॥ ४२

1. अत्र त। जघ्नतुः, तौ परस्परं प्रत्यन्तर्दधतुः इति विभज्य योजनादपौनरुक्त्यम् ।

१. इदमर्धम् च. छ. नास्ति ।

स यन्तरि महातेजा हते मन्दोदरीसुतः। स्वयं सारथ्यमकरोत् पुनश्च धनुरस्पृशत् ॥ ४३
तदद्भुतमभूत्तत्र सामर्थ्यं पश्यतां युधि। हयेषु व्यग्रहस्तं तं विव्याध निशितैः शरैः ॥ ४४
धनुष्यथ पुनर्व्यग्रे हयेषु मुमुचे शरान्। छिद्रेषु तेषु बाणेषु सौमित्रिः शीघ्रविक्रमः ॥ ४५
अर्दयामास बाणौघैर्विचरन्तमभीतवत्। निहतं सारथिं दृष्ट्वा समरे रावणात्मजः ॥ ४६
प्रजहौ समरोद्धर्षं विषण्णः स बभूव ह। विषण्णवदनं दृष्ट्वा राक्षसं हरियूथपाः ॥ ४७
ततः परमसंहृष्टा लक्ष्मणं चाभ्यपूजयन्। ततः प्रमाथी शरभो रभसो गन्धमादनः ॥ ४८
अमृष्यमाणाश्चत्वारश्चक्रुर्वेगं हरीश्वराः। ते चास्य हयमुख्येषु तूर्णमुत्प्लुत्य वानराः ॥ ४९
चतुर्षु सुमहावीर्या निपेतुर्भीमविक्रमाः। तेषामधिष्ठितानां तैर्वानरैः पर्वतोपमैः ॥ ५०
मुखेभ्यो रुधिरं रक्तं हयानां समवर्तत। ते हया मथिता भग्ना व्यसवो धरणीं गताः ॥ ५१
ते निहत्य हयांस्तस्य प्रमथ्य च महारथम्। पुनरुत्पत्य वेगेन तस्थुर्लक्ष्मणपार्श्वतः ॥ ५२
स हताश्वादवप्लुत्य रथान्मथितसारथेः। शरवर्षेण सौमित्रिमभ्यधावत रावणिः ॥ ५३

ततो महेन्द्रप्रतिमः स लक्ष्मणः पदातिनं तं निशितैः शरोत्तमैः।
सृजन्तमाजौ निशिताञ्शरोत्तमान् भृशं तदा बाणगणैर्न्यवारयत् ॥ ५४

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
युद्धकाण्डे सौमित्रिरावणियुद्धं नाम नवतितमः सर्गः

---

## एकनवतितमः सर्गः

### रावणिवधः

स हताश्वो महातेजा भूमौ तिष्ठन्निशाचरः। इन्द्रजित् परमक्रुद्धः संप्रजज्वाल तेजसा ॥ १
तौ धन्विनौ जिघांसन्तावन्योन्यमिषुभिर्भृशम्। विजयेनाभिनिष्क्रान्तौ वने गजवृषाविव ॥ २
निबर्हयन्तश्चान्योन्यं ते राक्षसवनौकसः। भर्तारं न जहुर्युद्धे संपतन्तस्ततस्ततः ॥ ३
ततस्तान् राक्षसान् सर्वान् हर्षयन् रावणात्मजः। स्तुवानो हर्षमाणश्च इदं वचनमब्रवीत् ॥ ४
तमसा बहुलेनेमाः संसक्ताः सर्वतो दिशः। नेह विज्ञायते स्वो वा परो वा राक्षसोत्तमाः ॥५
धृष्टं भवन्तो युध्यन्तु हरीणां मोहनाय वै। अहं तु रथमास्थाय आगमिष्यामि संयुगम् ॥ ६
तथा भवन्तः कुर्वन्तु यथेमे काननौकसः। न युध्येयुर्दुरात्मानः प्रविष्टे नगरं मयि ॥ ७
इत्युक्त्वा रावणसुतो वञ्चयित्वा वनौकसः। प्रविवेश पुरीं लङ्कां रथहेतोरमित्रहा ॥ ८
स रथं भूषयित्वा तु रुचिरं हेमभूषितम्। प्रासासिशतसंपूर्णं युक्तं परमवाजिभिः ॥ ९
अधिष्ठितं हयज्ञेन सूतेनाप्तोपदेशिना। आरुरोह महातेजा रावणिः समितिंजयः ॥ १०
स राक्षसगणैर्मुख्यैर्वृतो मन्दोदरीसुतः। निर्ययौ नगरात्तूर्णं कृतान्तबलचोदितः ॥ ११

सोऽभिनिष्क्रम्य नगरादिन्द्रजित् परवीरहा । अभ्ययाज्जवनैरश्वैर्लक्ष्मणं सविभीषणम् ॥ १२
ततो रथस्थमालोक्य सौमित्री रावणात्मजम् । वानराश्च महावीर्या राक्षसश्च विभीषणः ॥ १३
विस्मयं परमं जग्मुर्लाघवात्तस्य धीमतः । रावणिश्चापि संक्रुद्धो रणे वानरयूथपान् ॥ १४
पातयामास बाणौघैः शतशोऽथ सहस्रशः । स मण्डलीकृतधनू रावणिः समितिंजयः ॥ १५
हरीनभ्यहनत् क्रुद्धः परं लाघवमास्थितः । ते वध्यमाना हरयो नाराचैर्भीमविक्रमाः ॥ १६
सौमित्रिं शरणं प्राप्ताः प्रजापतिमिव प्रजाः । ततः समरकोपेन ज्वलितो रघुनन्दनः ॥ १७
चिच्छेद कार्मुकं तस्य दर्शयन् पाणिलाघवम् । सोऽन्यत् कार्मुकमादाय सज्यं चक्रे त्वरन्निव ॥
तदप्यस्य त्रिभिर्बाणैर्लक्ष्मणो निरकृन्तत । अथैनं छिन्नधन्वानमाशीविषविषोपमैः ॥ १९
विव्याधोरसि सौमित्री रावणिं पञ्चभिः शरैः । ते तस्य कायं निर्भिद्य महाकार्मुकनिःसृताः ॥
निपेतुर्धरणीं बाणा रक्ता इव महोरगाः । स भिन्नवर्मा रुधिरं वमन् वक्त्रेण रावणिः ॥ २१
जग्राह कार्मुकश्रेष्ठं दृढज्यं बलवत्तरम् । स लक्ष्मणं समुद्दिश्य परं लाघवमास्थितः ॥ २२
ववर्ष शरवर्षाणि वर्षाणीव पुरंदरः । मुक्तमिन्द्रजिता तत्तु शरवर्षमरिंदमः ॥ २३
अवारयदसंभ्रान्तो लक्ष्मणः सुदुरासदम् । दर्शयामास च तदा रावणिं रघुनन्दनः ॥ २४
असंभ्रान्तो महातेजास्तदद्भुतमिवाभवत् । ततस्तान् राक्षसान् सर्वांस्त्रिभिरेकैकमाहवे ॥ २५
अविध्यत् परमक्रुद्धः शीघ्रास्त्रं संप्रदर्शयन् । राक्षसेन्द्रसुतं चापि बाणौघैः समताडयत् ॥ २६
सोऽतिविद्धो बलवता शत्रुणा शत्रुघातिना । असक्तं प्रेषयामास लक्ष्मणाय बहूञ्शरान् ॥ २७
तानप्राप्ताञ्शितैर्बाणैश्चिच्छेद रघुनन्दनः । सारथेरस्य च रणे रथिनो रथसत्तमः[1] ॥ २८
शिरो जहार धर्मात्मा भल्लेनानतपर्वणा । असूतास्ते हयास्तत्र रथमूहुरविक्लवाः ॥ २९
मण्डलान्यभिधावन्तस्तदद्भुतमिवाभवत् । अमर्षवशमापन्नः सौमित्रिर्दृढविक्रमः ॥ ३०
प्रत्यविध्यद्धयांस्तस्य शरैर्वित्रासयन् रणे । अमृष्यमाणस्तत्कर्म रावणस्य सुतो बली ॥ ३१
विव्याध दशभिर्बाणैः सौमित्रिं तममर्षणम् । ते तस्य वज्रप्रतिमाः शराः सर्पविषोपमाः ॥ ३२
विलयं जग्मुराहत्य कवचं काञ्चनप्रभम् । अभेद्यकवचं मत्वा लक्ष्मणं रावणात्मजः ॥ ३३
ललाटे लक्ष्मणं बाणैः सुपुङ्खैस्त्रिभिरिन्द्रजित् । अविध्यत् परमक्रुद्धः शीघ्रास्त्रं च प्रदर्शयन् ॥ ३४
तैः पृषत्कैर्ललाटस्थैः शुशुभे रघुनन्दनः । रणाग्रे समरश्लाघी त्रिशृङ्ग इव पर्वतः ॥ ३५
स तथा ह्यर्दितो बाणै राक्षसेन महामृधे । तमाशु प्रतिविव्याध लक्ष्मणः पञ्चभिः शरैः ॥ ३६
विकृष्येन्द्रजितो युद्धे वदने शुभकुण्डले । लक्ष्मणेन्द्रजितौ वीरौ महाबलशरासनौ ॥ ३७
अन्योन्यं जघ्नतुर्बाणैर्विशिखैर्भीमविक्रमौ । ततः शोणितदिग्धाङ्गौ लक्ष्मणेन्द्रजितावुभौ ॥ ३८
रणे तौ रेजतुर्वीरौ पुष्पिताविव किंशुकौ । तौ परस्परमभ्येत्य सर्वगात्रेषु धन्विनौ ॥ ३९

---

१. रघुसत्तमः रा. ।

घोरैर्विव्यधतुर्बाणैः कृतभावावुभौ जये । ततः समरकोपेन संयुक्तो रावणात्मजः ॥ ४०
विभीषणं त्रिभिर्बाणैर्विव्याध वदने शुभे । अयोमुखैस्त्रिभिर्विद्धा राक्षसेन्द्रं विभीषणम् ॥ ४१
एकैकेनाभिविव्याध तान् सर्वान् हरियूथपान् । तस्मै दृढतरं क्रुद्धो जघान गदया हयान् ॥४२
विभीषणो महातेजा रावणेः स दुरात्मनः । स हताश्वादवप्लुत्य रथान्निहतसारथेः ॥ ४३
रथशक्तिं महातेजाः पितृव्याय मुमोच ह । तामापतन्तीं संप्रेक्ष्य सुमित्रानन्दवर्धनः ॥ ४४
चिच्छेद निशितैर्बाणैर्दशधा सापतद्भुवि । तस्मै दृढधनुः क्रुद्धो हताश्वाय विभीषणः ॥ ४५
वज्रस्पर्शसमान् पञ्च ससर्जोरसि मार्गणान् । ते तस्य कायं निर्भिद्य रुक्मपुङ्खा निमित्तगाः ॥
बभूवुर्लोहितादिग्धा रक्ता इव महोरगाः । स पितृव्याय संक्रुद्ध इन्द्रजिच्छरमाददे ॥ ४७
उत्तमं रक्षसां मध्ये यमदत्तं महाबलः । तं समीक्ष्य महातेजा महेषुं तेन संहितम् ॥ ४८
लक्ष्मणोऽप्याददे बाणमन्यं भीमपराक्रमः । कुबेरेण स्वयं स्वप्ने स्वस्मै दत्तं महात्मना ॥ ४९
दुर्जयं दुर्विषह्यं च सेन्द्रैरपि सुरासुरैः । तयोस्ते धनुषी श्रेष्ठे बाहुभिः परिघोपमैः ॥ ५०
विकृष्यमाणे बलवत् क्रौञ्चाविव चुकूजतुः । ताभ्यां तौ धनुषि श्रेष्ठे संहितौ सायकोत्तमौ ॥
विकृष्यमाणौ वीराभ्यां भृशं जज्वलतुः श्रिया । तौ भासयन्तावाकाशं धनुर्भ्यां विशिखौ च्युतौ
मुखेन मुखमाहत्य संनिपेततुरोजसा । संनिपातस्तयोरासीच्छरयोर्घोररूपयोः ॥ ५३
सधूमविस्फुलिङ्गश्च तज्जोऽग्निर्दारुणोऽभवत् । तौ महाग्रहसंकाशावन्योन्यं संनिपत्य च ॥ ५४
संग्रामे शतधा यान्तौ मेदिन्यां विनिपेततुः । शरौ प्रतिहतौ दृष्ट्वा तावुभौ रणमूर्धनि ॥ ५५
व्रीडितौ जातरोषौ च लक्ष्मणेन्द्रजितौ तदा । सुसंरब्धस्तु सौमित्रिरस्त्रं वारुणमाददे ॥ ५६
रौद्रं महेन्द्रजिद्युद्धे व्यसृजद्युधि निष्ठितः । तेन तद्विहतं त्वस्त्रं वारुणं परमाद्भुतम् ॥ ५७
ततः क्रुद्धो महातेजा इन्द्रजित् समितिंजयः । आग्नेयं संदधे दीप्तं स लोकं संक्षिपन्निव ॥ ५८
सौरेणास्त्रेण तद्वीरो लक्ष्मणः प्रत्यवारयत् । अस्त्रं निवारितं दृष्ट्वा रावणिः क्रोधमूर्छितः ॥ ५९
आसुरं शत्रुनाशाय घोरमस्त्रं समाददे । तस्माच्चापाद्विनिष्पेतुर्भास्वराः कूटमुद्गराः ॥ ६०
शूलानि च भुशुण्ड्यश्च गदाः खड्गाः परश्वधाः । तद्दृष्ट्वा लक्ष्मणः संख्ये घोरमस्त्रमथासुरम् ॥
अवार्यं सर्वभूतानां सर्वशत्रुविनाशनम् । माहेश्वरेण द्युतिमांस्तदस्त्रं प्रत्यवारयत् ॥ ६२
तयोः सुतुमुलं युद्धं संबभूवाद्भुतोपमम् । गगनस्थानि भूतानि लक्ष्मणं पर्यवारयन् ॥ ६३
भैरवाभिरुते भीमे युद्धे वानररक्षसाम् । भूतैर्बहुभिराकाशं विस्मितैरावृतं बभौ ॥ ६४
ऋषयः पितरो देवा गन्धर्वा गरुडोरगाः । शतक्रतुं पुरस्कृत्य ररक्षुर्लक्ष्मणं रणे ॥ ६५
अथान्यं मार्गणश्रेष्ठं संदधे राघवानुजः । हुताशनसमस्पर्शं रावणात्मजदारणम् ॥ ६६
सुपत्रमनुवृत्ताङ्गं सुपर्वाणं सुसंस्थितम् । सुवर्णविकृतं वीरः शरीरान्तकरं शरम् ॥ ६७
दुरावारं दुर्विषह्यं राक्षसानां भयावहम् । आशीविषविषप्रख्यं देवसङ्घैः समर्चितम् ॥ ६८

येन शक्रो महातेजा दानवानजयत् प्रभुः । पुरा दैवासुरे युद्धे वीर्यवान् हरिवाहनः ॥ ६९
तदैन्द्रमस्त्रं सौमित्रिः संयुगेष्वपराजितम् । शरश्रेष्ठं धनुःश्रेष्ठे नरश्रेष्ठोऽभिसंदधे ॥ ७०
संधायामित्रदलनं विचकर्ष शरासनम् । सज्यमायम्य दुर्धर्षं कालो लोकक्षये यथा ॥ ७१
संधाय धनुषि श्रेष्ठे विकर्षन्निदमब्रवीत् । लक्ष्मीवाँल्लक्ष्मणो वाक्यमर्थसाधकमात्मनः ॥ ७२
धर्मात्मा सत्यसन्धश्च रामो दाशरथिर्यदि । पौरुषे चाप्रतिद्वन्द्वः शरैनं जहि रावणिम् ॥ ७३
इत्युक्त्वा बाणमाकर्णं विकृष्य तमजिह्मगम् । लक्ष्मणः समरे वीरः ससर्जेन्द्रजितं प्रति ॥ ७४
ऐन्द्रास्त्रेण समायोज्य लक्ष्मणः परवीरहा । स शिरः सशिरस्त्राणं श्रीमज्ज्वलितकुण्डलम्॥ ७५
प्रमथ्येन्द्रजितः कायात् पातयामास भूतले । तद्राक्षसतनूजस्य च्छिन्नस्कन्धं शिरो महत्॥ ७६
तपनीयनिभं भूमौ ददृशे रुधिरोक्षितम् । हतस्तु निपपाताशु धरण्यां रावणात्मजः ॥ ७७
कवची सशिरस्त्राणो विध्वस्तः सशरासनः । चुक्रुशुस्ते ततः सर्वे वानराः सविभीषणाः ॥ ७८
हृष्यन्तो निहते तस्मिन् देवा वृत्रवधे यथा । अथान्तरिक्षे देवानामृषीणां च महात्मनाम् ॥
अभिजज्ञे च संनादो गन्धर्वाप्सरसामपि । पतितं तमभिज्ञाय राक्षसी सा महाचमूः ॥ ८०
वध्यमाना दिशो भेजे हरिभिर्जितकाशिभिः । वानरैर्वध्यमानास्ते शस्त्राण्युत्सृज्य राक्षसाः॥८१
लङ्कामभिमुखाः सस्रुर्नष्टसंज्ञाः प्रधाविताः । दुद्रुवुर्बहुधा भीता राक्षसाः शतशो दिशः ॥ ८२
त्यक्त्वा प्रहरणान् सर्वे पट्टसासिपरश्वधान् । केचिल्लङ्कां परित्रस्ताः प्रविष्टा वानरार्दिताः ॥ ८३
समुद्रे पतिताः केचित् केचित पर्वतमाश्रिताः । हतमिन्द्रजितं दृष्ट्वा शयानं समरक्षितौ ॥ ८४
राक्षसानां सहस्रेषु न कश्चित् प्रत्यदृश्यत । यथास्तं गत आदित्ये नावतिष्ठन्ति रश्मयः ॥ ८५
तथा तस्मिन्निपतिते राक्षसास्ते गता दिशः । शान्तरश्मिरिवादित्यो निर्वाण इव पावकः॥ ८६
स बभूव महातेजा व्यपास्तगतजीवितः । प्रशान्तपीडाबहुलो नष्टारिष्टः प्रतापवान् ॥ ८७
बभूव लोकः पतिते राक्षसेन्द्रसुते तदा । हर्षं च शक्रो भगवान् सह सर्वैः सुरर्षभैः ॥ ८८
जगाम निहते तस्मिन् राक्षसे पापकर्मणि । आकाशे चापि देवानां शुश्रुवे दुन्दुभिस्वनः ॥
नृत्यद्भिरप्सरोभिश्च गन्धर्वैश्च महात्मभिः । ववृषुः पुष्पवर्षाणि तदद्भुतमभूत्तदा ॥ ९०
प्रशशंसुर्हते तस्मिन् राक्षसे क्रूरकर्मणि । शुद्धा आपो दिशश्चैव जहृषुर्दैत्यदानवाः ॥ ९१
आजग्मुः पतिते तस्मिन् सर्वलोकभयावहे । ऊचुश्च सहिताः सर्वे देवगन्धर्वदानवाः ॥ ९२
विज्वराः शान्तकलुषा ब्राह्मणा विचरन्त्विति । ततोऽभ्यनन्दन् संहृष्टाः समरे हरियूथपाः ॥
तमप्रतिबलं दृष्ट्वा हतं नैर्ऋतपुंगवम् । विभीषणो हनूमांश्च जाम्बवांश्चर्क्षयूथपः ॥ ९४
विजयेनाभिनन्दन्तस्तुष्टुवुश्चापि लक्ष्मणम् । क्ष्वेलन्तश्च नदन्तश्च गर्जन्तश्च प्लवङ्गमाः ॥ ९५
लब्धलक्षा रघुसुतं परिवार्योपतस्थिरे । लाङ्गूलानि प्रविध्यन्तः स्फोटयन्तश्च वानराः ॥ ९६
लक्ष्मणो जयतीत्येवं वाक्यं विश्रावयंस्तदा । अन्योन्यं च समाश्लिष्य कपयो हृष्टमानसाः॥ ९७

चक्रुरुच्चावचगुणा राघवाश्रयजाः कथाः ॥

तदसुकरमथाभिवीक्ष्य हृष्टाः प्रियसुहृदो युधि लक्ष्मणस्य कर्म ।
परममुपलभन् मनःप्रहर्षं विनिहतमिन्द्ररिपुं निशम्य देवाः ॥ ९८

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
युद्धकाण्डे रावणिवधो नाम एकनवतितमः सर्गः

---

## द्विनवतितमः सर्गः

### रावणिशस्त्रहतचिकित्सा

रुधिरक्लिन्नगात्रस्तु लक्ष्मणः शुभलक्षणः । बभूव हृष्टस्तं हत्वा शक्रजेतारमाहवे ॥ १
ततः स जाम्बवन्तं च हनुमन्तं च वीर्यवान् । संनिवर्त्य महातेजास्तांश्च सर्वान् वनौकसः ॥२
आजगाम ततस्तीव्रं यत्र सुग्रीवराघवौ । विभीषणमवष्टभ्य हनूमन्तं च लक्ष्मणः ॥ ३
ततो राममभिक्रम्य सौमित्रिरभिवाद्य च । तस्थौ भ्रातृसमीपस्थः शक्रस्येन्द्रानुजो यथा[1] ॥ ४
निष्टनन्निव चागम्य राघवाय महात्मने । आचचक्षे तदा वीरो घोरमिन्द्रजितो वधम् ॥ ५
रावणेस्तु शिरश्छिन्नं लक्ष्मणेन महात्मना । न्यवेदयत रामाय तदा हृष्टो विभीषणः ॥ ६
श्रुत्वैतत्तु महावीर्यो लक्ष्मणेनेन्द्रजिद्वधम् । प्रहर्षमतुलं लेभे रामो वाक्यमुवाच ह ॥ ७
साधु लक्ष्मण तुष्टोऽस्मि कर्मणा सुकृतम् कृतम् । रावणेर्हि विनाशेन जितमित्युपधारय ॥ ८
स तं शिरस्युपाघ्राय लक्ष्मणं लक्ष्मिवर्धनम् । लज्जमानं बलात्स्नेहादङ्कमारोप्य वीर्यवान् ॥ ९
उपवेश्य तमुत्सङ्गे परिष्वज्यावपीडितम् । भ्रातरं लक्ष्मणं स्निग्धं पुनः पुनरुदैक्षत ॥ १०
शल्यसंपीडितं शस्तं निःश्वसन्तं तु लक्ष्मणम् । रामस्तु दुःखसंतप्तस्तदा निःश्वसितो भृशम् ॥
मूर्ध्नि चैनमुपाघ्राय भूयः संस्पृश्य च त्वरन् । उवाच लक्ष्मणं वाक्यमाश्वास्य पुरुषर्षभ ॥ १२
कृतं परमकल्याणं कर्म दुष्करकर्मणा । अद्य मन्ये हते पुत्रे रावणं निहतं युधि ॥ १३
अद्याहं विजयी शत्रौ हते तस्मिन् दुरात्मनि । रावणस्य नृशंसस्य दिष्ट्या वीर त्वया रणे ॥
छिन्नो हि दक्षिणो बाहुः स हि तस्य व्यपाश्रयः । विभीषणहनूमद्भ्यां कृतं कर्म महद्रणे ॥
अहोरात्रैस्त्रिभिर्वीरः कथंचिद्विनिपातितः । निरमित्रः कृतोऽस्म्यद्य निर्यास्यति हि रावणः ॥ १६
बलव्यूहेन महता श्रुत्वा पुत्रं निपातितम् । तं पुत्रवधसंतप्तं निर्यान्तं राक्षसाधिपम् ॥ १७
बलेनावृत्य महता निहष्यामि दुर्जयम् । त्वया लक्ष्मण नाथेन सीता च पृथिवी च मे ॥
न दुष्प्रापा हते त्वद्य शक्रजेतरि चाहवे । स तं भ्रातरमाश्वास्य परिष्वज्य च राघवः ॥ १९

---

१. इन्द्रस्येव बृहस्पतिः च. छ. ।

रामः सुषेणं मुदितः समाभाष्येदमब्रवीत् । सशल्योऽयं महाप्राज्ञ सौमित्रिर्मित्रवत्सलः ॥ २०
यथा भवति सुस्वस्थस्तथा त्वं समुपाचर । विशल्यः क्रियतां क्षिप्रं सौमित्रिः सविभीषणः ॥२१
ऋक्षवानरसैन्यानां शूराणां द्रुमयोधिनाम् । ये चाप्यन्येऽत्र युध्यन्ति सशल्या व्रणिनस्तथा ॥
तेऽपि सर्वे प्रयत्नेन क्रियन्तां सुखिनस्त्वया । एवमुक्तस्तु रामेण महात्मा हरियूथपः ॥ २३
लक्ष्मणाय ददौ नस्तः सुषेणः परमौषधिम् । स तस्या गन्धमाघ्राय विशल्यः समपद्यत ॥ २४
तथा निर्वेदनश्चैव संरूढव्रण एव च । विभीषणमुखानां च सुहृदां राघवाज्ञया ॥ २५
सर्ववानरमुख्यानां चिकित्सां स तदाकरोत् । ततः प्रकृतिमापन्नो हृतशल्यो गतव्यथः ॥ २६
सौमित्रिर्मुदितस्तत्र क्षणेन विगतज्वरः ॥

तथैव रामः प्लवगाधिपस्तदा विभीषणश्चर्क्षपतिश्च जाम्बवान् ।
अवेक्ष्य सौमित्रिमरोगमुत्थितं मुदा ससैन्याः सुचिरं जहर्षिरे ॥ २७
अपूजयन् कर्म स लक्ष्मणस्य सुदुष्करं दाशरथिर्महात्मा ।
हृष्टा बभूवुर्युधि यूथपेन्द्रा निपातितं शक्रजितं निशम्य ॥ २८

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
युद्धकाण्डे रावणिशस्त्रहतचिकित्सा नाम द्विनवतितमः सर्गः

---

## त्रिनवतितमः सर्गः

### सीताहननोद्यमनिवृत्तिः

ततः पौलस्त्यसचिवाः श्रुत्वा चेन्द्रजितं हतम् । आचचक्षुरभिज्ञाय दशग्रीवाय सव्यथाः ॥ १
युद्धे हतो महाराज लक्ष्मणेन तवात्मजः । विभीषणसहायेन मिषतां नो महाद्युतिः ॥ २
शूरः शूरेण संगम्य संयुगेष्वपराजितः । लक्ष्मणेन हतः शूरः पुत्रस्ते विबुधेन्द्रजित् ॥ ३
गतः स परमाँल्लोकाञ्शरैः संताप्य लक्ष्मणम् । स तं प्रतिभयं श्रुत्वा वधं पुत्रस्य दारुणम् ॥ ४
घोरमिन्द्रजितः संख्ये कश्मलं चाविशन्महत् । उपलभ्य चिरात् संज्ञां राजा राक्षसपुंगवः ॥ ५
पुत्रशोकार्दितो दीनो विललापाकुलेन्द्रियः । हा राक्षसचमूमुख्य मम वत्स महारथ ॥ ६
जित्वेन्द्रं कथमद्य त्वं लक्ष्मणस्य वशं गतः । ननु त्वमिषुभिः क्रुद्धो भिन्द्याः कालान्तकावपि ॥
मन्दरस्यापि शृङ्गाणि किं पुनर्लक्ष्मणं युधि । अद्य वैवस्वतो राजा भूयो बहुमतो मम ॥ ८
येनाद्य त्वं महाबाहो संयुक्तः कालधर्मणा । एष पन्थाः सुयोधानां सर्वामरगणेष्वपि ॥ ९
यः कृते हन्यते भर्तुः स पुमान् स्वर्गमृच्छति । अद्य देवगणाः सर्वे लोकपालास्तथर्षयः ॥१०
हतमिन्द्रजितं श्रुत्वा सुखं स्वप्स्यन्ति निर्भयाः । अद्य लोकास्त्रयः कृत्स्ना पृथिवी च सकानना ॥
एकेनेन्द्रजिता हीना शून्येव प्रतिभाति मे । अद्य नैर्ऋतकन्यानां श्रोष्याम्यन्तःपुरे रवम् ॥

करेणुसङ्घस्य यथा निनादं गिरिगह्वरे। यौवराज्यं च लङ्कां च रक्षांसि च परंतप ॥ १३
मातरं मां च भार्यां च क्व गतोऽसि विहाय नः। मम नाम त्वया वीर गतस्य यमसादनम् ॥
प्रेतकार्याणि कार्याणि विपरीते हि वर्तसे। स त्वं जीवति सुग्रीवे लक्ष्मणे च सराघवे ॥ १५
मम शल्यमनुद्धृत्य क्व गतोऽसि विहाय नः। एवमादिविलापार्तं रावणं राक्षसाधिपम् ॥ १६
आविवेश महान् कोपः पुत्रव्यसनसंभवः। प्रकृत्या कोपनं ह्येनं पुत्रस्य पुनराधयः ॥ १७
दीप्तं संदीपयामासुर्घर्मेऽर्कमिव रश्मयः। ललाटे भ्रुकुटीभिश्च संगताभिर्व्यरोचत ॥ १८
युगान्ते सह नक्रैस्तु महोर्मिभिरिवोदधिः। कोपाद्विजृम्भमाणस्य वक्त्राद्व्यक्तमभिज्वलन् ॥ १९
उत्पपात सधूमोऽग्निर्वृत्रस्य वदनादिव। स पुत्रवधसंतप्तः शूरः क्रोधवशं गतः ॥ २०
समीक्ष्य रावणो बुद्ध्या वैदेह्या रोचयद्वधम्। तस्य प्रकृत्या रक्ते च रक्ते क्रोधाग्निनापि च ॥
रावणस्य महाघोरे दीप्ते नेत्रे बभूवतुः। घोरं प्रकृत्या रूपं तत्तस्य क्रोधाग्निमूर्छितम् ॥ २२
बभूव रूपं क्रुद्धस्य रुद्रस्येव दुरासदम्। तस्य क्रुद्धस्य नेत्राभ्यां प्रापतन्नस्रबिन्दवः ॥ २३
दीप्ताभ्यामिव दीपाभ्यां सार्चिषः स्नेहबिन्दवः। दन्तान् विदशतस्तस्य श्रूयते दशनस्वनः ॥
यन्त्रस्यावेष्ट्यमानस्य महतो[1] दानवैरिव। कालाग्निरिव संक्रुद्धो यां यां दिशमवैक्षत ॥ २५
तस्यां तस्यां भयत्रस्ता राक्षसाः संविलिल्यिरे। तमन्तकमिव क्रुद्धं चराचरचिखादिषुम् ॥ २६
वीक्षमाणं दिशः सर्वा राक्षसा नोपचक्रमुः। ततः परमसंक्रुद्धो रावणो राक्षसाधिपः ॥ २७
अब्रवीद्रक्षसां मध्ये संस्तम्भयिषुराहवे। मया वर्षसहस्राणि चरित्वा दुश्चरं तपः ॥ २८
तेषु तेष्ववकाशेषु स्वयंभूः परितोषितः। तस्यैव तपसो व्युष्ट्या प्रसादाच्च स्वयंभुवः ॥ २९
नासुरेभ्यो न देवेभ्यो भयं मम कदाचन। कवचं ब्रह्मदत्तं मे यदादित्यसमप्रभम् ॥ ३०
देवासुरविमर्देषु न भिन्नं वज्रशक्तिभिः। तेन मामद्य संयुक्तं रथस्थमिह संयुगे ॥ ३१
प्रतीयात् कोऽद्य मामाजौ साक्षादपि पुरंदरः[1]। यत्तदाभिप्रसन्नेन सशरं कार्मुकं महत् ॥ ३२
देवासुरविमर्देषु मम दत्तं स्वयंभुवा। अद्य तूर्यशतैर्भीमं धनुरुत्थाप्यतां मम ॥ ३३
रामलक्ष्मणयोरेव वधाय परमाहवे। स पुत्रवधसंतप्तः शूरः क्रोधवशं गतः ॥ ३४
समीक्ष्य रावणो बुद्ध्या सीतां हन्तुं व्यवस्यत। प्रत्यवेक्ष्य तु ताम्राक्षः सुघोरो घोरदर्शनः ॥
दीनो दीनस्वरान् सर्वांस्तानुवाच निशाचरान्। मायया मम वत्सेन वञ्चनार्थं वनौकसाम् ॥
किंचिदेव हतं तत्र सीतेयमिति दर्शितम्। तदिदं तथ्यमेवाहं करिष्ये प्रियमात्मनः ॥ ३७
वैदेहीं नाशयिष्यामि क्षत्रबन्धुमनुव्रताम्। इत्येवमुक्त्वा सचिवान् खड्गमाशु परामृशत् ॥ ३८
उद्धृत्य गुणसंपन्नं विमलाम्बरवर्चसम्। निष्पपात स वेगेन सभार्यः सचिवैर्वृतः ॥ ३९

---

1. अत्र मामद्य संयुग इति अद्य मामाजाविति च पूर्वोत्तरार्धयोराम्रेडितं रावणस्य क्रोधपारम्यं परिपोषयति। यदुक्तं 'ततः परमसंक्रुद्धः' इत्यादि।

१. मथ्यतः पुना.।

रावणः पुत्रशोकेन भृशमाकुलचेतनः । संक्रुद्धः खड्गमादाय सहसा यत्र मैथिली ॥ ४०
व्रजन्तं राक्षसं प्रेक्ष्य सिंहनादं प्रचुक्रुशुः । ऊचुश्चान्योन्यमाश्लिष्य संक्रुद्धं प्रेक्ष्य राक्षसाः ॥ ४१
अद्यैनं तावुभौ दृष्ट्वा भ्रातरौ प्रव्यथिष्यतः । लोकपाला हि चत्वारः क्रुद्धेनानेन निर्जिताः॥४२
बहवः शत्रवश्चापि संयुगेषु निपातिताः । त्रिषु लोकेषु रत्नानि भुङ्क्ते चाहृत्य रावणः ॥ ४३
विक्रमे च बले चैव नास्त्यस्य सदृशो भुवि । तेषां संजल्पमानानामशोकवनिकां गताम् ॥ ४४
अभिदुद्राव वैदेहीं रावणः क्रोधमूर्छितः । वार्यमाणः सुसंक्रुद्धः सुहृद्भिर्हितबुद्धिभिः ॥ ४५
अभ्यधावत संक्रुद्धः खेग्रहो रोहिणीमिव । मैथिली रक्ष्यमाणा तु राक्षसीभिरनिन्दिता ॥ ४६
ददर्श राक्षसं क्रुद्धं निस्त्रिंशवरधारिणम् । तं निशाम्य सनिस्त्रिंशं व्यथिता जनकात्मजा ॥ ४७
निवार्यमाणं बहुशः सुहृद्भिरनिवर्तिनम्[१] । सीता दुःखसमाविष्टा विलपन्तीदमब्रवीत् ॥ ४८
यथायं मामभिक्रुद्धः समभिद्रवति स्वयम् । वधिष्यति सनाथां मामनाथामिव दुर्मतिः ॥ ४९
बहुशश्चोदयामास भर्तारं मामनुव्रताम् । भार्या भव रमस्वेति प्रत्याख्यातो ध्रुवं मया ॥ ५०
सोऽयं ममानुपस्थाने व्यक्तं नैराश्यमागतः । क्रोधमोहसमाविष्टो निहन्तुं मां समुद्यतः ॥ ५१
अथवा तौ नरव्याघ्रौ भ्रातरौ रामलक्ष्मणौ । मन्निमित्तमनार्येण समरेऽद्य निपातितौ[२] ॥ ५२
अहो धिङ्मन्निमित्तोऽयं विनाशो राजपुत्रयोः । अथवा पुत्रशोकेन अहत्वा रामलक्ष्मणौ ॥ ५३
विधमिष्यति मां रौद्रो राक्षसः पापनिश्चयः । हनूमतोऽपि यद्वाक्यं न कृतं क्षुद्रया मया ॥ ५४
यद्यहं तस्य पृष्ठेन तदा यायामनिन्दिता । नाद्यैवमनुशोचेयं भर्तुरङ्कगता सती ॥ ५५
मन्ये तु हृदयं तस्याः कौसल्यायाः फलिष्यति । एकपुत्रा यदा पुत्रं विनष्टं श्रोष्यते युधि ॥
सा हि जन्म च बाल्यं च यौवनं च महात्मनः । धर्मकार्यानुरूपं च रुदती संस्मरिष्यति ॥५७
निराशा निहते पुत्रे दत्त्वा श्राद्धमचेतना । अग्निमारोक्ष्यते नूनमपो वापि प्रवेक्ष्यति ॥ ५८
धिगस्तु कुब्जामसतीं मन्थरां पापनिश्चयाम् । यन्निमित्तमिदं दुःखं कौसल्या प्रतिपत्स्यते ॥५९
इत्येवं मैथिलीं दृष्ट्वा विलपन्तीं तपस्विनीम् । रोहिणीमिव चन्द्रेण विना ग्रहवशं गताम् ॥६०
एतस्मिन्नन्तरे तस्य अमात्यो बुद्धिमाञ्शुचिः । सुपार्श्वो नाम[1] मेधावी राक्षसो राक्षसेश्वरम् ॥
निवार्यमाणः[३] सचिवैरिदं वचनमब्रवीत् । कथं नाम दशग्रीव साक्षाद्वैश्रवणानुज ॥ ६२
हन्तुमिच्छसि वैदेहीं क्रोधाद्धर्ममपास्य हि । वेदविद्याव्रतस्नातः स्वकर्मनिरतः सदा ॥ ६३
स्त्रियाः कस्माद्वधं वीर मन्यसे राक्षसेश्वर । मैथिलीं रूपसंपन्नां प्रत्यवेक्षस्व पार्थिव ॥ ६४

---

1. धर्मे कृतबुद्धिरयमेव सुपार्श्वो योऽविन्ध्यनाम्ना महाभारते व्यवहृत इति तिलकः ।

१. अनुवर्तिनम् च. छ. ।

२. अस्यानन्तरम्—भैरवो हि महानादो राक्षसानां श्रुतो मया । बहूनामिह हृष्टानां तथा विक्रोशतां प्रियम् ॥—इति पुना. ।

३. निवार्यमाणम् च. छ. ।

त्वमेव तु सहास्माभी राघवे क्रोधमुत्सृज । अभ्युत्थानं त्वमद्यैव कृष्णपक्षचतुर्दशीम् ॥ ६५
कृत्वा निर्याह्यमावास्यां विजयाय बलैर्वृतः । शूरो धीमान् रथी खड्गी रथप्रवरमास्थितः ॥ ६६
हत्वा दाशरथिं रामं भवान् प्राप्स्यति मैथिलीम् ॥

स तद्दुरात्मा सुहृदा निवेदितं वचः सुधर्म्यं प्रतिगृह्य रावणः ।
गृहं जगामाथ ततश्च वीर्यवान् पुनः सभां च प्रययौ सुहृद्वृतः ॥ ६७

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
युद्धकाण्डे सीताहननव्यवसायनिवृत्तिर्नाम त्रिनवतितमः सर्गः

---

## चतुर्नवतितमः सर्गः

### गान्धर्वास्त्रमोहनम्

स प्रविश्य सभां राजा दीनः परमदुःखितः । निषसादासने मुख्ये सिंहः क्रुद्ध इव श्वसन् ॥ १
अब्रवीच्च स तान् सर्वान् बलमुख्यान् महाबलः । रावणः प्राञ्जलिर्वाक्यं पुत्रव्यसनकर्शितः ॥ २
सर्वे भवन्तः सर्वेण हस्त्यश्वेन समावृताः । निर्यान्तु रथसङ्घैश्च पादातैश्चोपशोभिताः ॥ ३
एकं रामं परिक्षिप्य समरे हन्तुमर्हथ । वर्षन्तः शरवर्षेण प्रावृट्काल इवाम्बुदाः ॥ ४
अथवाहं शरैस्तीक्ष्णैर्भिन्नगात्रं महारणे । भवद्भिः श्वो निहन्तास्मि रामं लोकस्य पश्यतः ॥ ५
इत्येतद्राक्षसेन्द्रस्य वाक्यमादाय राक्षसाः । निर्ययुस्ते रथैः शीघ्रैर्नानानीकैः सुसंवृताः ॥ ६
परिघान् पट्टसांश्चैव शरखड्गपरश्वधान् । शरीरान्तकरान् सर्वे चिक्षिपुर्वानरान् प्रति ॥ ७
वानराश्च द्रुमाञ्शैलान् राक्षसान् प्रति चिक्षिपुः । स संग्रामो महान् भीमः सूर्यस्योदयनं प्रति ॥
रक्षसां वानराणां च तुमुलः समपद्यत । ते गदाभिर्विचित्राभिः प्रासैः खड्गैः परश्वधैः ॥ ९
अन्योन्यं समरे जघ्नुस्तदा वानरराक्षसाः । एवं प्रवृत्ते संग्रामे ह्यद्भुतं सुमहद्रजः ॥ १०
रक्षसां वानराणां च शान्तं शोणितविस्रवैः । मातङ्गरथकूलाश्च वाजिमत्स्या ध्वजद्रुमाः ॥ ११
शरीरसङ्घाटवहाः प्रसस्रुः शोणितापगाः । ततस्ते वानराः सर्वे शोणितौघपरिप्लुताः ॥ १२
ध्वजवर्मरथानश्वान्नानाप्रहरणानि च । आप्लुत्याप्लुत्य समरे राक्षसानां बभञ्जिरे ॥ १३
केशान् कर्णललाटांश्च नासिकाश्च प्लवङ्गमाः । रक्षसां दशनैस्तीक्ष्णैर्नखैश्चापि न्यकर्तयन् ॥ १४
एकैकं राक्षसं संख्ये शतं वानरपुंगवाः । अभ्यधावन्त फलिनं वृक्षं शकुनयो यथा ॥ १५
तथा गदाभिर्गुर्वीभिः प्रासैः खड्गैः परश्वधैः । निजघ्नुर्वानरान् घोरान् राक्षसाः पर्वतोपमाः ॥
राक्षसैर्युध्यमानानां वानराणां महाचमूः । शरण्यं शरणं याता रामं दशरथात्मजम् ॥ १७
ततो रामो महातेजा धनुरादाय वीर्यवान् । प्रविश्य राक्षसं सैन्यं शरवर्षं ववर्ष ह ॥ १८

प्रविष्टं तु तदा रामं मेघाः सूर्यमिवाम्बरे । नाभिजग्मुर्महाघोरं निर्दहन्तं शराग्निना ॥ १९
कृतान्येव सुघोराणि रामेण रजनीचराः । रणे रामस्य ददृशुः कर्माण्यसुकराणि च ॥ २०
चालयन्तं महानीकं विधमन्तं महारथान् । ददृशुस्ते[1] न वै रामं वातं वनगतं यथा ॥ २१
छिन्नं भिन्नं शरैर्दग्धं प्रभग्नं शस्त्रपीडितम् । बलं रामेण ददृशुर्न रामं शीघ्रकारिणम् ॥ २२
प्रहरन्तं शरीरेषु न ते पश्यन्ति राघवम् । इन्द्रियार्थेषु तिष्ठन्तं भूतात्मानमिव प्रजाः ॥ २३
एष हन्ति गजानीकमेष हन्ति महारथान् । एष हन्ति शरैस्तीक्ष्णैः पदातीन् वाजिभिः सह ॥
इति ते राक्षसाः सर्वे रामस्य सदृशान् रणे । अन्योन्यं कुपिता जघ्नुः सादृश्याद्राघवस्य ते ॥
न ते ददृशिरे रामं दहन्तमरिवाहिनीम् । मोहिताः परमास्त्रेण गान्धर्वेण महात्मना ॥ २६
ते तु रामसहस्राणि रणे पश्यन्ति राक्षसाः । पुनः पश्यन्ति काकुत्स्थमेकमेव महाहवे ॥ २७
भ्रमन्तीं काञ्चनीं कोटिं कार्मुकस्य महात्मनः । अलातचक्रप्रतिमां ददृशुस्ते न राघवम् ॥ २८
शरीरनाभिः सत्त्वार्चिः शरारं नेमिकार्मुकम् । ज्याघोषतलनिर्घोषं तेजोबुद्धिगुणप्रभम् ॥ २९
दिव्यास्त्रगुणपर्यन्तं निघ्नन्तं युधि राक्षसान् । ददृशू रामचक्रं तत् कालचक्रमिव प्रजाः ॥ ३०
अनीकं दशसाहस्रं रथानां वातरंहसाम् । अष्टादश सहस्राणि कुञ्जराणां तरस्विनाम् ॥ ३१
चतुर्दश सहस्राणि सारोहाणां च वाजिनाम् । पूर्णे शतसहस्रे द्वे राक्षसानां पदातिनाम् ॥ ३२
दिवसस्याष्टमे भागे शरैरग्निशिखोपमैः । हतान्येकेन रामेण रक्षसां कामरूपिणाम् ॥ ३३
ते हताश्वा हतरथाः शान्ता विमथितध्वजाः । अभिपेतुः पुरीं लङ्कां हतशेषा निशाचराः ॥ ३४
हतैर्गजपदात्यश्वैस्तद्बभूव रणाजिरम् । आक्रीडमिव रुद्रस्य क्रुद्धस्य सुमहात्मनः ॥ ३५
ततो देवाः सगन्धर्वाः सिद्धाश्च परमर्षयः । साधु साध्विति रामस्य तत् कर्म समपूजयन् ॥ ३६
अब्रवीच्च तदा रामः सुग्रीवं प्रत्यनन्तरम् । विभीषणं च धर्मात्मा हनूमन्तं च वानरम् ॥ ३७
जाम्बवन्तं हरिश्रेष्ठं मैन्दं द्विविदमेव च । एतदस्त्रबलं दिव्यं मम वा त्र्यम्बकस्य वा ॥ ३८

निहत्य तां राक्षसवाहिनीं तु रामस्तदा शक्रसमो महात्मा ।
अस्त्रेषु शस्त्रेषु जितक्लमश्च संस्तूयते देवगणैः प्रहृष्टैः ॥ ३९

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
युद्धकाण्डे गान्धर्वास्त्रमोहनं नाम चतुर्नवतितमः सर्गः

---

## पञ्चनवतितमः सर्गः

### राक्षसीविलापः

तानि तानि सहस्राणि सारोहाणां च वाजिनाम् । रथानां त्वग्निवर्णानां सध्वजानां सहस्रशः ॥

---

1. ते रजनीचराः चालयन्तं ददृशुः, न रामं ददृशुरिति योजना

राक्षसानां सहस्राणि गदापरिघयोधिनाम् । काञ्चनध्वजचित्राणां शूराणां कामरूपिणाम् ॥ २
निहतानि शरैस्तीक्ष्णैस्तप्तकाञ्चनभूषणैः । रावणेन प्रयुक्तानि रामेणाक्लिष्टकर्मणा ॥ ३
दृष्ट्वा श्रुत्वा च संभ्रान्ता हतशेषा निशाचराः । राक्षस्यश्च समागम्य दीनाश्चिन्तापरिप्लुताः ॥ ४
विधवा हतपुत्राश्च क्रोशन्त्यो हतबान्धवाः । राक्षस्यः सह संगम्य दुःखार्ताः पर्यदेवयन् ॥ ५
कथं शूर्पणखा वृद्धा कराला निर्णतोदरी । आससाद वने रामं कन्दर्पमिव रूपिणम् ॥ ६
सुकुमारं महासत्त्वं सर्वभूतहिते रतम् । तं दृष्ट्वा लोकवध्या सा हीनरूपा प्रकामिता ॥ ७
कथं सर्वगुणैर्हीना गुणवन्तं महौजसम् । सुमुखं दुर्मुखी रामं कामयामास राक्षसी ॥ ८
जनस्यास्याल्पभाग्यत्वाद्वलिनी श्वेतमूर्धजा । अकार्यमपहास्यं च सर्वलोकविगर्हितम् ॥ ९
राक्षसानां विनाशाय दूषणस्य खरस्य च । चकाराप्रतिरूपा सा राघवस्य प्रधर्षणम् ॥ १०
तन्निमित्तमिदं वैरं रावणेन कृतं महत् । वधाय सीता सानीता दशग्रीवेण रक्षसा ॥ ११
न च सीतां दशग्रीवः प्राप्नोति जनकात्मजाम् । बद्धं बलवता वैरमक्षयं राघवेण च ॥ १२
वैदेहीं प्रार्थयानं तं विराधं प्रेक्ष्य राक्षसम्[1] । हतमेकेन रामेण पर्याप्तं तन्निदर्शनम् ॥ १३
चतुर्दश सहस्राणि रक्षसां भीमकर्मणाम् । निहतानि जनस्थाने शरैरग्निशिखोपमैः ॥ १४
खरश्च निहतः संख्ये दूषणस्त्रिशिरास्तथा । शरैरादित्यसंकाशैः पर्याप्तं तन्निदर्शनम् ॥ १५
हतो योजनबाहुश्च कबन्धो रुधिराशनः । क्रोधान्नादं नदन् सोऽथ पर्याप्तं तन्निदर्शनम् ॥ १६
जघान बलिनं रामः सहस्रनयनात्मजम् । वालिनं मेरुसंकाशं पर्याप्तं तन्निदर्शनम् ॥ १७
ऋष्यमूके वसञ्शैले दीनो भग्नमनोरथः । सुग्रीवः स्थापितो राज्ये पर्याप्तं तन्निदर्शनम् ॥ १८
एको वायुसुतः प्राप्य लङ्कां हत्वा च राक्षसान् । दग्ध्वा तां च पुनर्यातः पर्याप्तं तन्निदर्शनम् ॥
निगृह्य सागरं तस्मिन् सेतुं बद्ध्वा प्लवङ्गमैः । वृतोऽतरत्तं यद्रामः पर्याप्तं तन्निदर्शनम् [1]॥ २०
धर्मार्थसहितं वाक्यं सर्वेषां रक्षसां हितम् । युक्तं विभीषणेनोक्तं मोहात्तस्य न रोचते ॥ २१
विभीषणवचः कुर्याद्यदि स धनदानुजः । श्मशानभूता दुःखार्ता नेयं लङ्कापुरी भवेत् ॥ २२
कुम्भकर्णं हतं श्रुत्वा राघवेण महाबलम् । अतिकायं च दुर्धर्षं लक्ष्मणेन हतं पुनः ॥ २३
प्रियं चेन्द्रजितं पुत्रं रावणो नावबुध्यते । मम पुत्रो मम भ्राता मम भर्ता रणे हतः ॥ २४
इत्येवं श्रूयते शब्दो राक्षसीनां[2] कुले कुले । रथाश्वाश्चाश्च नागाश्च हताः शतसहस्रशः ॥ २५

---

I. वैदेहीं प्रार्थयमानं विराधं प्रेक्ष्य रामेण यत् हतम्—यो रामकर्तृको हननव्यापारः तत् पूर्णनिदर्शनमित्यर्थः । यद्वा प्रेक्ष्येत्यत्र स्थितिक्रियाध्याह्रियते । तेन विराधं प्रेक्ष्य स्थितस्य रावणस्य स्थितानामस्माकं राक्षसीनां चेति योजनात् ल्यप्प्रत्यय उपपादनीयः ॥

१. १९–२० तमे पद्ये क. ख. ग. घ. न स्तः ।

२. राक्षसानाम् च. छ. ।

रणे रामेण शूरेण राक्षसाश्च पदातयः । रुद्रो वा यदि वा विष्णुर्महेन्द्रो वा शतक्रतुः ॥ २६
हन्ति नो रामरूपेण यदि वा स्वयमन्तकः । हतप्रवीरा रामेण निराशा जीविते वयम् ॥ २७
अपश्यन्तो भयस्यान्तमनाथा विलपामहे । रामहस्ताद्दशग्रीवः शूरो दत्तमहावरः ॥ २८
इदं भयं महाघोरमुत्पन्नं नावबुध्यते । न देवा न च गन्धर्वा न पिशाचा न राक्षसाः ॥ २९
उपसृष्टं परित्रातुं शक्ता रामेण संयुगे । उत्पाताश्चापि दृश्यन्ते रावणस्य रणे रणे ॥ ३०
कथयिष्यन्ति रामेण रावणस्य निबर्हणम् । पितामहेन प्रीतेन देवदानवराक्षसैः ॥ ३१
रावणस्याभयं दत्तं मानुषेभ्यो न याचितम् । तदिदं मानुषं मन्ये प्राप्तं निःसंशयं भयम् ॥ ३२
जीवितान्तकरं घोरं रक्षसां रावणस्य च । पीड्यमानास्तु बलिना वरदानेन रक्षसा ॥ ३३
दीप्तैस्तपोभिर्विबुधाः पितामहमपूजयन् । देवतानां हितार्थाय महात्मा वै पितामहः ॥ ३४
उवाच देवताः सर्वा इदं तुष्टो महद्वचः । अद्यप्रभृति लोकांस्त्रीन् सर्वे दानवराक्षसाः ॥ ३५
भयेन प्रावृता नित्यं विचरिष्यन्ति शाश्वतम् । दैवतैस्तु समागम्य सर्वैश्चेन्द्रपुरोगमैः ॥ ३६
वृषध्वजस्त्रिपुरहा महादेवः प्रसादितः । प्रसन्नस्तु महादेवो देवानेतद्वचोऽब्रवीत् ॥ ३७
उत्पत्स्यति हितार्थं वो नारी रक्षःक्षयावहा । एषा देवैः प्रयुक्ता तु क्षुद्यथा दानवान् पुरा ॥
भक्षयिष्यति नः सीता राक्षसघ्नी सरावणान्[1] । रावणस्यापनीतेन दुर्विनीतस्य दुर्मतेः ॥ ३९
अयं निष्ठानको घोरः शोकेन समभिप्लुतः । तं न पश्यामहे लोके यो नः शरणदो भवेत् ॥
राघवेणोपसृष्टानां कालेनेव युगक्षये । नास्ति नः शरणं कश्चिद्भये महति तिष्ठताम् ॥ ४१
दवाग्निवेष्टितानां हि करेणूनां यथा वने । प्राप्तकालं कृतं तेन पौलस्त्येन महात्मना ॥ ४२
यत एव भयं दृष्टं तमेव शरणं गतः ॥

इतीव सर्वा रजनीचरस्त्रियः परस्परं संपरिरभ्य बाहुभिः ।
विषेदुरार्ता भयभारपीडिता विनेदुरुच्चैश्च तदा सुदारुणम् ॥ ४३

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
युद्धकाण्डे राक्षसीविलापो नाम पञ्चनवतितमः सर्गः

---

## षण्णवतितमः सर्गः

### रावणाभिषेणनम्

आर्तानां राक्षसीनां तु लङ्कायां वै कुले कुले । रावणः करुणं शब्दं शुश्राव परिदेवितम् ॥ १
स तु दीर्घं विनिश्वस्य मुहूर्तं ध्यानमास्थितः । बभूव परमक्रुद्धो रावणो भीमदर्शनः ॥ २

---

1. सरावणान् इतीदं राक्षसानां वचनम्, अन्यद्राक्षसीनामिति यथायोगं बोध्यम् ।

संदश्य दशनैरोष्ठं क्रोधसंरक्तलोचनः । राक्षसैरपि दुर्दर्शः कालाग्निरिव मूर्छितः ॥ ३
उवाच च समीपस्थान् राक्षसान् राक्षसेश्वरः । भयाव्यक्तकथस्तत्र निर्दहन्निव चक्षुषा ॥ ४
महोदरमहापार्श्वौ विरूपाक्षं च राक्षसम् । शीघ्रं वदत सैन्यानि निर्यातेति ममाज्ञया ॥ ५
तस्य तद्वचनं श्रुत्वा राक्षसास्ते भयार्दिताः । चोदयामासुरव्यग्रान् राक्षसांस्तान्नृपाज्ञया ॥ ६
ते तु सर्वे तथेत्युक्त्वा राक्षसा घोरदर्शनाः । कृतस्वस्त्ययनाः सर्वे रणायाभिमुखा ययुः ॥ ७
प्रतिपूज्य यथान्यायं रावणं ते निशाचराः । तस्थुः प्राञ्जलयः सर्वे भर्तुर्विजयकाङ्क्षिणः ॥ ८
अथोवाच प्रहस्यैतान् रावणः क्रोधमूर्छितः । महोदरमहापार्श्वौ विरूपाक्षं च राक्षसम् ॥ ९
अद्य बाणैर्धनुर्मुक्तैर्युगान्तादित्यसंनिभैः । राघवं लक्ष्मणं चैव नेष्यामि यमसादनम् ॥ १०
खरस्य कुम्भकर्णस्य प्रहस्तेन्द्रजितोस्तथा । करिष्यामि प्रतीकारमद्य शत्रुवधादहम् ॥ ११
नैवान्तरिक्षं न दिशो न नद्यो नापि सागराः । प्रकाशत्वं गमिष्यन्ति मद्बाणजलदावृताः॥ १२
अद्य वानरमुख्यानां तानि यूथानि भागशः । धनुषा शरजालेन विधमिष्यामि पत्रिणा ॥ १३
अद्य वानरसैन्यानि रथेन पवनौजसा । धनुः समुद्रादुद्भूतैर्मथिष्यामि शरोर्मिभिः ॥ १४
आकोशपद्मवक्त्राणि पद्मकेसरवर्चसाम् । अद्य यूथतटाकानि गजवत् प्रमथाम्यहम् ॥ १५
सशरैरद्य वदनैः संख्ये वानरयूथपाः । मण्डयिष्यन्ति वसुधां सनालैरिव पङ्कजैः ॥ १६
अद्य युद्धप्रचण्डानां हरीणां द्रुमयोधिनाम् । मुक्तेनैकेषुणा युद्धे भेत्स्यामि च शतं शतम्॥१७
हतो भर्ता हतो भ्राता यासां च तनया हताः । वधेनाद्य रिपोस्तासां करोम्यस्रप्रमार्जनम्॥१८
अद्य मद्बाणनिर्भिन्नैः प्रकीर्णैर्गतचेतनैः । करोमि वानरैर्युद्धे यत्नावेक्ष्यतलां महीम् ॥ १९
अद्य गोमायवो गृध्रा ये च मांसाशिनोऽपरे । सर्वांस्तांस्तर्पयिष्यामि शत्रुमांसैः शरार्पितैः ॥२०
कल्प्यतां मे रथः शीघ्रं क्षिप्रमानीयतां धनुः । अनुप्रयान्तु मां सर्वे येऽवशिष्टा निशाचराः ॥
तस्य तद्वचनं श्रुत्वा महापार्श्वोऽब्रवीद्वचः । बलाध्यक्षान् स्थितांस्तत्र बलं संत्वर्यतामिति ॥ २२
बलाध्यक्षास्तु संरब्धा राक्षसांस्तान् गृहाद्गृहात् । चोदयन्तः परिययुर्लङ्कां लघुपराक्रमाः ॥
ततो मुहूर्तान्निष्पेतू राक्षसा भीमदर्शनाः । नर्दन्तो भीमवदना नानाप्रहरणैर्भुजैः ॥ २४
असिभिः पट्टसैः शूलैर्गदाभिर्मुसलैर्हलैः । शक्तिभिस्तीक्ष्णधाराभिर्महद्भिः कूटमुद्गरैः ॥ २५
यष्टिभिर्विमलैश्चक्रैर्निशितैश्च परश्वधैः । भिण्डिपालैः शतघ्नीभिरन्यैश्चापि वरायुधैः ॥ २६
अथानयन् बलाध्यक्षाः सत्वरा रावणाज्ञया । रथानां नियुतं साग्रं नागानामयुतं त्रयम् ॥ २७
अश्वानां षष्टिकोट्यस्तु खरोष्ट्राणां तथैव च । पदातयस्त्वसंख्याता जग्मुस्ते राजशासनात्॥२८
बलाध्यक्षास्तु संस्थाप्य राज्ञः सेनां पुरःस्थिताः । एतस्मिन्नन्तरे सूतः स्थापयामास तं रथम् ॥
दिव्यस्रग्वस्त्रसंपन्नं नानालंकारभूषितम् । दीर्घवाजिसमायुक्तं दिव्यालंकारभूषणम् ॥ ३०
नानायुधसमाकीर्णं किङ्किणीजालमण्डितम् । नानारत्नपरिक्षिप्तं रत्नस्तम्भैर्विराजितम् ॥ ३१

जाम्बूनदमयैश्चैव सहस्रकलशैर्युतम् । तं दृष्ट्वा राक्षसाः सर्वे विस्मयं परमं ययुः ॥ ३२
तं दृष्ट्वा सहसोत्थाय रावणो राक्षसेश्वरः । कोटिसूर्यप्रतीकाशं ज्वलन्तमिव पावकम्[1] ॥ ३३
द्रुतं सूतसमायुक्तं युक्ताष्टतुरगं रथम् । आरुरोह रथं भीमो दीप्यमानं स्वतेजसा ॥ ३४
ततः प्रयातः सहसा राक्षसैर्बहुभिर्वृतः । रावणः सत्त्वगाम्भीर्याद्दारयन्निव मेदिनीम्[2] ॥ ३५
रावणेनाभ्यनुज्ञातौ महापार्श्वमहोदरौ । विरूपाक्षश्च दुर्धर्षो रथानारुरुहुस्तदा ॥ ३६
ते तु हृष्टा विनर्दन्तो भिन्दन्त इव मेदिनीम् । नादं घोरं विमुञ्चन्तो निर्ययुर्जयकाङ्क्षिणः ॥
ततो युद्धाय तेजस्वी रक्षोगणबलैर्वृतः । निर्ययावुद्यतधनुः कालान्तकयमोपमः ॥ ३८
ततः प्रजवनाश्वेन रथेन स महारथः । द्वारेण निर्ययौ तेन यत्र तौ रामलक्ष्मणौ ॥ ३९
ततो नष्टप्रभः सूर्यो दिशश्च तिमिरावृताः । द्विजाश्च नेदुर्घोराश्च संचचालेव मेदिनी ॥ ४०
ववर्ष रुधिरं देवश्चस्खलुस्तुरगाः पथि । ध्वजाग्रे न्यपतद्गृध्रो विनेदुश्चाशिवं शिवाः ॥ ४१
नयनं चास्फुरद्वामं सव्यो बाहुरकम्पत । विवर्णं वदनं चासीत् किंचिदभ्रश्यत स्वरः ॥ ४२
ततो निष्पततो युद्धे दशग्रीवस्य रक्षसः । रणे निधनशंसीनि रूपाण्येतानि जज्ञिरे ॥ ४३
अन्तरिक्षात् पपातोल्का निर्घातसमनिःस्वना । विनेदुरशिवा गृध्रा वायसैरनुनादिताः ॥ ४४
एतानचिन्तयन् घोरानुत्पातान् समुपस्थितान् । निर्ययौ रावणो मोहाद्वधार्थी कालचोदितः ॥
तेषां तु रथघोषेण राक्षसानां महात्मनाम् । वानराणामपि चमूर्युद्धायैवाभ्यवर्तत ॥ ४६
तेषां तु तुमुलं युद्धं बभूव कपिरक्षसाम् । अन्योन्यमाह्वयानानां क्रुद्धानां जयमिच्छताम् ॥ ४७
ततः क्रुद्धो दशग्रीवः शरैः काञ्चनभूषणैः । वानराणामनीकेषु चकार कदनं महत् ॥ ४८
निकृत्तशिरसः केचिद्रावणेन वलीमुखाः । केचिद्विच्छिन्नहृदयाः केचिच्छ्रोत्रविवर्जिताः ॥ ४९
निरुच्छ्वासा हताः केचित् केचित् पार्श्वेषु दारिताः । केचिद्विभिन्नशिरसः केचिच्चक्षुर्विवर्जिताः ॥

दशाननः क्रोधविवृत्तनेत्रो यतो यतोऽभ्येति रथेन संख्ये ।
ततस्ततस्तस्य शरप्रवेगं सोढुं न शेकुर्हरिपुंगवास्ते ॥ ५१

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायां
युद्धकाण्डे रावणाभिषेणनं नाम षण्णवतितमः सर्गः

---

१. रथानां नियुतमित्यादि पावकमित्यन्तम् च. नास्ति ।

२. अस्यानन्तरम्. —ततश्चासीन्महानादस्तूर्याणां च ततस्ततः । मृदङ्गैः पटहैः शङ्खैः काहलैः सह राक्षसैः ॥ तेन नादेन महता पृथिवी समकम्पत । तच्छब्दं सहसा श्रुत्वा वानरा दुद्रुवुर्भयात् ॥ रावणस्तु महाबाहुः सचिवैः परिवारितः । आजगाम महातेजा विजयाय रणं प्रति ॥—इति क. ।

## सप्तनवतितमः सर्गः

### विरूपाक्षवधः

तथा तैः कृत्तगात्रैस्तु दशग्रीवेण मार्गणैः । बभूव वसुधा तत्र प्रकीर्णा हरिभिस्तदा ॥ १
रावणस्याप्रसह्यं तं शरसंपातमेकतः । न शेकुः सहितुं दीप्तं पतङ्गा ज्वलनं यथा ॥ २
तेऽर्दिता निशितैर्बाणैः क्रोशन्तो विप्रदुद्रुवुः । पावकार्चिःसमाविष्टा दह्यमाना यथा गजाः ॥३
प्लवङ्गानामनीकानि महाभ्राणीव मारुतः । स ययौ समरे तस्मिन् विधमन् रावणः शरैः ॥ ४
कदनं तरसा कृत्वा राक्षसेन्द्रो वनौकसाम् । आससाद ततो युद्धे राघवं त्वरितस्तदा ॥ ५
सुग्रीवस्तान् कपीन् दृष्ट्वा भग्नान् विद्रवतो रणे । गुल्मे सुषेणं निक्षिप्य चक्रे युद्धेऽद्रुतं मनः ॥
आत्मनः सदृशं वीरः स तं निक्षिप्य वानरम् । सुग्रीवोऽभिमुखः शत्रुं प्रतस्थे पादपायुधः ॥७
पार्श्वतः पृष्ठतश्चास्य सर्वे यूथाधिपाः स्वयम् । अनुजह्रुर्महाशैलान् विविधांश्च महाद्रुमान् ॥ ८
स नर्दन् युधि सुग्रीवः स्वरेण महता महान् । पातयन् विविधांश्चान्याञ्जगामोत्तमराक्षसान् ॥
ममन्थ च महाकायो राक्षसान् वानरेश्वरः । युगान्तसमये वायुः प्रवृद्धानगमानिव ॥ १०
राक्षसानामनीकेषु शैलवर्षं ववर्ष ह । अश्मवर्षं यथा मेघः पक्षिसङ्घेषु कानने ॥ ११
कपिराजविमुक्तैस्तैः शैलवर्षैस्तु राक्षसाः । विकीर्णशिरसः पेतुर्निकृत्ता इव पर्वताः ॥ १२
अथ संक्षीयमाणेषु राक्षसेषु समन्ततः । सुग्रीवेण प्रभग्नेषु पतत्सु विनदत्सु च ॥ १३
विरूपाक्षः स्वकं नाम धन्वी विश्राव्य राक्षसः । रथादाप्लुत्य दुर्धर्षो गजस्कन्धमुपारुहत् ॥१४
स तं द्विरदमारुह्य विरूपाक्षो महारथः । विनदन् भीमनिर्ह्रादं वानरानभ्यधावत ॥ १५
सुग्रीवे स शरान् घोरान् विससर्ज चमूमुखे । स्थापयामास चोद्विग्नान् राक्षसान् संप्रहर्षयन् ॥
स तु विद्धः शितैर्बाणैः कपीन्द्रस्तेन रक्षसा । चुक्रोध स महाक्रोधो वधे चास्य मनो दधे ॥
ततः पादपमुद्धृत्य शूरः संप्रधनो हरिः । अभिपत्य जघानास्य प्रमुखे तु महागजम् ॥ १८
स तु प्रहाराभिहतः सुग्रीवेण महागजः । अपासर्पद्धनुर्मात्रं निषसाद ननाद च ॥ १९
गजात्तु मथितात्तूर्णमपक्रम्य स वीर्यवान् । राक्षसोऽभिमुखः शत्रुं प्रत्युद्गम्य ततः कपिम् ॥ २०
आर्षभं चर्म खड्गं च प्रगृह्य लघुविक्रमः । भर्त्सयन्निव सुग्रीवमाससाद व्यवस्थितम् ॥ २१
स हि तस्याभिसंक्रुद्धः प्रगृह्य विपुलां शिलाम् । विरूपाक्षाय चिक्षेप सुग्रीवो जलदोपमाम् ॥
स तां शिलामापतन्तीं दृष्ट्वा राक्षसपुंगवः । अपक्रम्य सुविक्रान्तः खड्गेन प्राहरत्तदा ॥ २३
तेन खड्गप्रहारेण रक्षसा बलिना हतः । मुहूर्तमभवद्वीरो विसंज्ञ इव वानरः ॥ २४
स तदा सहसोत्पत्य राक्षसस्य महाहवे । मुष्टिं संवर्त्य वेगेन पातयामास वक्षसि ॥ २५
मुष्टिप्रहाराभिहतो विरूपाक्षो निशाचरः । तेन खड्गेन संक्रुद्धः सुग्रीवस्य चमूमुखे ॥ २६
कवचं पातयामास पद्भ्यामभिहतोऽपतत् । स समुत्थाय पतितः कपिस्तस्य व्यसर्जयत् ॥ २७

तलप्रहारमशनेः समानं भीमनिःस्वनम् । तलप्रहारं तद्रक्षः सुग्रीवेण समुद्यतम् ॥ २८
नैपुण्यान्मोचयित्वैनं मुष्टिनोरस्यताडयत् । ततस्तु संक्रुद्धतरः सुग्रीवो वानरेश्वरः ॥ २९
मोक्षितं चात्मनो दृष्ट्वा प्रहारं तेन रक्षसा । स ददर्शान्तरं तस्य विरूपाक्षस्य वानरः ॥ ३०
ततो न्यपातयत् क्रोधाच्छङ्खदेशे महत्तलम् । महेन्द्राशनिकल्पेन तलेनाभिहतः क्षितौ ॥ ३१
पपात रुधिरक्लिन्नः शोणितं च समुद्वमन् । स्रोतोभ्यस्तु विरूपाक्षो जलं प्रस्रवणादिव ॥ ३२
विवृत्तनयनं क्रोधात् सफेनं रुधिराप्लुतम् । ददृशुस्ते विरूपाक्षं विरूपाक्षतरं कृतम् ॥ ३३
स्फुरन्तं परिवर्तन्तं पार्श्वेन रुधिरोक्षितम् । करुणं च विनर्दन्तं ददृशुः कपयो रिपुम् ॥ ३४

तथा तु तौ संयति संप्रयुक्तौ तरस्विनौ वानरराक्षसानाम् ।
बलार्णवौ सस्वनतुः सुभीमं महार्णवौ द्वाविव भिन्नवेलौ ॥ ३५
विनाशितं प्रेक्ष्य विरूपनेत्रं महाबलं तं हरिपार्थिवेन ।
बलं समस्तं कपिराक्षसानामुद्वृत्तगङ्गाप्रतिमं[1] बभूव ॥ ३६

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
युद्धकाण्डे विरूपाक्षवधो नाम सप्तनवतितमः सर्गः

---

## अष्टनवतितमः सर्गः

### महोदरवधः

हन्यमाने बले तूर्णमन्योन्यं ते महामृधे । सरसीव महाघर्मे सूपक्षीणे बभूवतुः ॥ १
स्वबलस्य विघातेन विरूपाक्षवधेन च । बभूव द्विगुणं क्रुद्धो रावणो राक्षसाधिपः ॥ २
प्रक्षीणं तु बलं दृष्ट्वा वध्यमानं वलीमुखैः । बभूवास्य व्यथा युद्धे प्रेक्ष्य दैवविपर्ययम् ॥ ३
उवाच च समीपस्थं महोदरमरिंदमम् । अस्मिन् काले महाबाहो जयाशा त्वयि मे स्थिता॥४
जहि शत्रुचमूं वीर दर्शयाद्य पराक्रमम् । भर्तृपिण्डस्य कालोऽयं निर्देष्टुं साधु युध्यताम् ॥ ५
एवमुक्तस्तथेत्युक्त्वा राक्षसेन्द्रो महोदरः । प्रविवेशारिसेनां तां पतङ्ग इव पावकम् ॥ ६
ततः स कदनं चक्रे वानराणां महाबलः । भर्तृवाक्येन तेजस्वी स्वेन वीर्येण चोदितः ॥ ७
वानराश्च महासत्त्वाः प्रगृह्य विपुलाः शिलाः । प्रविश्यारिबलं भीमं जघ्नुस्ते रजनीचरान् ॥ ८
महोदरस्तु संक्रुद्धः शरैः काञ्चनभूषणैः । चिच्छेद पाणिपादोरून्[2] वानराणां महाहवे ॥ ९
ततस्ते वानराः सर्वे राक्षसैरर्दिता भृशम् । दिशो दश द्रुताः केचित्केचित्सुग्रीवमाश्रिताः॥ १०
प्रभग्नां समरे दृष्ट्वा वानराणां महाचमूम् । अभिदुद्राव सुग्रीवो महोदरमनन्तरम् ॥ ११

---

१. उन्मत्तगङ्गाप्रतिमम् च. छ. । २. पाणिपादोरुम् पुना. ।

प्रगृह्य विपुलां घोरां महीधरसमां शिलाम् । चिक्षेप च महातेजास्तद्वधाय हरीश्वरः ॥ १२
तामापतन्तीं सहसा शिलां दृष्ट्वा महोदरः । असंभ्रान्तस्ततो बाणैर्निर्बिभेद दुरासदाम् ॥ १३
रक्षसा तेन बाणौघैर्निकृत्ता सा सहस्रधा । निपपात शिला भूमौ गृध्रचक्रमिवाकुलम् ॥ १४
तां तु भिन्नां शिलां दृष्ट्वा सुग्रीवः क्रोधमूर्छितः । सालमुत्पाट्य चिक्षेप राक्षसे रणमूर्धनि ॥ १५
शरैश्च विददारैनं शूरः परपुरंजयः । स ददर्श ततः क्रुद्धः परिघं पतितं भुवि ॥ १६
आविध्य तु स तं दीप्तं परिघं तस्य दर्शयन् । परिघाग्रेण वेगेन जघानास्य हयोत्तमान् ॥ १७
तस्माद्धतहयाद्वीरः सोऽवप्लुत्य महारथात् । गदां जग्राह संक्रुद्धो राक्षसोऽथ महोदरः ॥ १८
गदापरिघहस्तौ तौ युधि वीरौ समीयतुः । नर्दन्तौ गोवृषप्रख्यौ घनाविव सविद्युतौ ॥ १९
ततः क्रुद्धो गदां तस्मै चिक्षेप रजनीचरः । ज्वलन्तीं भास्कराभासां सुग्रीवाय महोदरः ॥ २०
गदां तां सुमहाघोरामापतन्तीं महाबलः । सुग्रीवो रोषताम्राक्षः समुद्यम्य महाहवे ॥ २१
आजघान गदां तस्य परिघेण हरीश्वरः । पपात स गदोद्भिन्नः परिघस्तस्य भूतले ॥ २२
ततो जग्राह तेजस्वी सुग्रीवो वसुधातलात् । आयसं मुसलं घोरं सर्वतो हेमभूषितम् ॥ २३
स तमुद्यम्य चिक्षेप सोऽप्यन्यां व्याक्षिपद्गदाम् । भिन्नावन्योन्यमासाद्य पेततुर्धरणीतले ॥ २४
ततो भग्नप्रहरणौ मुष्टिभ्यां तौ समीयतुः । तेजोबलसमाविष्टौ दीप्ताविव हुताशनौ ॥ २५
जघ्नतुस्तौ तदान्योन्यं नेदतुश्च पुनः पुनः । तलैश्चान्योन्यमाहत्य पेततुर्धरणीतले ॥ २६
उत्पेततुस्ततस्तूर्णं जघ्नतुश्च परस्परम् । भुजैश्चिक्षिपतुर्वीरावन्योन्यमपराजितौ ॥ २७
जग्मतुस्तौ श्रमं वीरौ बाहुयुद्धे परंतपौ । आजहार ततः खड्गमदूरपरिवर्तिनम् ॥ २८
राक्षसश्चर्मणा सार्धं महावेगो महोदरः । तथैव च महाखड्गं चर्मणा पतितं सह ॥ २९
जग्राह वानरश्रेष्ठः सुग्रीवो वेगवत्तरः[1] । तौ तु रोषपरीताङ्गौ नर्दन्तावभ्यधावताम् ॥ ३०
उद्यतासी रणे हृष्टौ युधि शस्त्रविशारदौ । दक्षिणं मण्डलं चोभौ सुतूर्णं संपरीयतुः ॥ ३१
अन्योन्यमभिसंक्रुद्धौ जये प्रणिहितावुभौ । स तु शूरो महावेगो वीर्यश्लाघी महोदरः ॥ ३२
महाचर्मणि[2] तं खड्गं पातयामास दुर्मतिः । लग्नमुत्कर्षतः खड्गं खड्गेन कपिकुञ्जरः ॥ ३३
जहार सशिरस्त्राणं कुण्डलोपहितं शिरः । निकृत्तशिरसस्तस्य पतितस्य महीतले ॥ ३४
तद्बलं राक्षसेन्द्रस्य दृष्ट्वा तत्र न तिष्ठते । हत्वा तं वानरैः सार्धं ननाद मुदितो हरिः ॥ ३५
चुक्रोध च दशग्रीवो बभौ हृष्टश्च राघवः । विषण्णवदनाः सर्वे राक्षसा दीनचेतसः ॥ ३६
विद्रवन्ति ततः सर्वे भयवित्रस्तचेतसः ॥

महोदरं तं विनिपात्य भूमौ महागिरेः कीर्णमिवैकदेशम् ।
सूर्यात्मजस्तत्र रराज लक्ष्म्या सूर्यः स्वतेजोभिरिवाप्रधृष्यः ॥ ३७

---

१. राक्षस इत्यादि वेगवत्तर इत्यन्तम् ति. नास्ति । २. महावर्मणि पुना.

अथ विजयमवाप्य वानरेन्द्रः समरमुखे सुरयक्षसिद्धसङ्घैः ।
अवनितलगतैश्च [1]भूतसङ्घैर्हरुपसमाकुलितैः स्तुतो महात्मा ॥ ३८

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
युद्धकाण्डे महोदरवधो नाम अष्टनवतितमः सर्गः

---

## एकोनशततमः सर्गः

### महापार्श्ववधः

महोदरे तु निहते महापार्श्वो महाबलः । सुग्रीवेण समीक्ष्याथ क्रोधात् संरक्तलोचनः ॥ १
अङ्गदस्य चमूं भीमां क्षोभयामास सायकैः । स वानराणां मुख्यानामुत्तमाङ्गानि सर्वशः ॥ २
पातयामास कायेभ्यः फलं वृन्तादिवानिलः । केषांचिदिषुभिर्बाहून् स्कन्धांश्चिच्छेद राक्षसः ॥
वानराणां सुसंक्रुद्धः पार्श्वं केषां व्यदारयत् । तेऽर्दिता बाणवर्षेण महापार्श्वेन वानराः ॥ ४
विषादविमुखाः सर्वे बभूवुर्गतचेतसः । निरीक्ष्य बलमुद्विग्नमङ्गदो राक्षसार्दितम् ॥ ५
वेगं चक्रे महाबाहुः समुद्र इव पर्वणि । आयसं परिघं गृह्य सूर्यरश्मिसमप्रभम् ॥ ६
समरे वानरश्रेष्ठो महापार्श्वे न्यपातयत् । स तु तेन प्रहारेण महापार्श्वो विचेतनः ॥ ७
ससूतः स्यन्दनात्तस्माद्विसंज्ञः प्रापतद्भुवि । सर्क्षराजस्तु तेजस्वी नीलाञ्जनचयोपमः ॥ ८
निष्पत्य सुमहावीर्यः स्वाद्यूथान्मेघसंनिभात् । प्रगृह्य गिरिशृङ्गाभां क्रुद्धः सुविपुलां शिलाम् ॥
अश्वाञ्जघान तरसा स्यन्दनं च बभञ्ज तम् । मुहूर्ताल्लब्धसंज्ञस्तु महापार्श्वो महाबलः ॥ १०
अङ्गदं बहुभिर्बाणैर्भूयस्तं प्रत्यविध्यत । जाम्बवन्तं त्रिभिर्बाणैराजघान स्तनान्तरे ॥ ११
ऋक्षराजं गवाक्षं च जघान बहुभिः शरैः । जाम्बवन्तं गवाक्षं च स दृष्ट्वा शरपीडितौ ॥ १२
जग्राह परिघं घोरमङ्गदः क्रोधमूर्छितः । तस्याङ्गदः प्रकुपितो राक्षसस्य तमायसम् ॥ १३
दूरस्थितस्य परिघं रविरश्मिसमप्रभम् । द्वाभ्यां भुजाभ्यां संगृह्य भ्रामयित्वा च वेगवान् ॥ १४
महापार्श्वस्य चिक्षेप वधार्थं वालिनः सुतः । स तु क्षिप्तो बलवता परिघस्तस्य रक्षसः ॥ १५
धनुश्च सशरं हस्ताच्छिरस्त्रं चाप्यपातयत् । तं समासाद्य वेगेन वालिपुत्रः प्रतापवान् ॥ १६
तलेनाभ्यहनत् क्रुद्धः कर्णमूले सकुण्डले । स तु क्रुद्धो महावेगो महापार्श्वो महाद्युतिः ॥ १७
करेणैकेन जग्राह सुमहान्तं परश्वधम् । तं तैलधौतं विमलं शैलसारमयं दृढम् ॥ १८
राक्षसः परमक्रुद्धो वालिपुत्रे न्यपातयत् । तेन वामांसफलके भृशं प्रत्यवपातितम्[1] ॥ १९

---

1. हर्षेत्यस्य स्थाने हरुषेति प्रयुक्तम् । 'अपि माषं मषं कुर्याच्छन्दोभङ्गं न कारयेत्' इति न्यायात् । भूतसङ्घैर्हर्षसमाकुलितैः च. छ. ।

1. प्रत्यवपादितम् च छ. ।

अङ्गदो मोक्षयामास सरोषः स परश्वधम् । स वीरो वज्रसंकाशमङ्गदो मुष्टिमात्मनः ॥ २०
संवर्तयत् सुसंक्रुद्धः पितुस्तुल्यपराक्रमः । राक्षसस्य स्तनाभ्याशे मर्मज्ञो हृदयं प्रति ॥ २१
इन्द्राशनिसमस्पर्शं स मुष्टिं विन्यपातयत् । तेन तस्य निपातेन राक्षसस्य महामृधे ॥ २२
पफाल हृदयं चाशु स पपात हतो भुवि । तस्मिन्निपतिते भूमौ तत्सैन्यं संप्रचुक्षुभे ॥ २३
अभवच्च महान् क्रोधः समरे रावणस्य तु । वानराणां च हृष्टानां सिंहनादश्च पुष्कलः ॥ २४
स्फोटयन्निव शब्देन लङ्कां साट्टालगोपुराम् । महेन्द्रेणेव देवानां नादः समभवन्महान् ॥ २५
अथेन्द्रशत्रुस्त्रिदिवालयानां वनौकसां चैव महाप्रणादम् ।
श्रुत्वा सरोषं युधि राक्षसेन्द्रः पुनश्च युद्धाभिमुखोऽवतस्थे ॥ २६

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
युद्धकाण्डे महापार्श्ववधो नाम एकोनशततमः सर्गः

---

## शततमः सर्गः

### रामरावणास्त्रपरम्परा

महोदरमहापार्श्वौ हतौ दृष्ट्वा तु राक्षसौ । तस्मिंश्च निहते वीरे विरूपाक्षे महाबले ॥ १
आविवेश महान् क्रोधो रावणं तं महामृधे । सूतं संचोदयामास वाक्यं चेदमुवाच ह ॥ २
निहतानाममात्यानां रुद्धस्य नगरस्य च । दुःखमेषोऽपनेष्यामि हत्वा तौ रामलक्ष्मणौ ॥ ३
रामवृक्षं रणे हन्मि सीतापुष्पफलप्रदम् । प्रशाखा यस्य सुग्रीवो जाम्बवान् कुमुदो नलः ॥ ४
मैन्दश्च द्विविदश्चैव ह्यङ्गदो गन्धमादनः । हनूमांश्च सुषेणश्च सर्वे च हरियूथपाः ॥ ५
स दिशो दश घोषेण रथस्यातिरथो महान् । नादयन् प्रययौ तूर्णं राघवं चाभ्यवर्तत ॥ ६
पूरिता तेन शब्देन सनदीगिरिकानना । संचचाल मही सर्वा सवराहमृगद्विपा ॥ ७
तामसं स महाघोरं चकारास्त्रं सुदारुणम् । निर्ददाह कपीन् सर्वांस्ते प्रपेतुः समन्ततः ॥ ८
उत्पपात रजो घोरं तैर्भग्नैः संप्रधावितैः । न हि तत् सहितुं शेकुर्ब्रह्मणा निर्मितं स्वयम् ॥ ९
तान्यनीकान्यनेकानि रावणस्य शरोत्तमैः । दृष्ट्वा भग्नानि शतशो राघवः पर्यवस्थितः ॥ १०
ततो राक्षसशार्दूलो विद्राव्य हरिवाहिनीम् । स ददर्श ततो[1] रामं तिष्ठन्तमपराजितम् ॥ ११
लक्ष्मणेन सह भ्रात्रा विष्णुना वासवं यथा । आलिखन्तमिवाकाशमवष्टभ्य महद्धनुः ॥ १२
पद्मपत्रविशालाक्षं दीर्घबाहुमरिंदमम् । ततो[2] रामो महातेजाः सौमित्रिसहितो बली ॥ १३

---

1 तत इति । तिष्ठन्तमित्यनेनान्वेति । तत्र रामो राघव इति द्विर्वचनात् भगवति कवेरादरप्रतीतेः प्रेयोऽलंकारध्वनिः । स च प्रकृते वीररसे ततो हरिवाहिन्याः समनन्तरे प्रदेशे तिष्ठन्तमित्यर्थः ।

2. तत इत्यादिः सार्धश्लोक एकान्वयः । पर्यवस्यतीति बोध्यम् ॥

वानरांश्च रणे भग्नानापतन्तं च रावणम् । समीक्ष्य राघवो हृष्टो मध्ये जग्राह कार्मुकम् ॥१४
विस्फारयितुमारेभे[1] ततः स धनुरुत्तमम् । महावेगं महानादं निर्भिन्दन्निव मेदिनीम् ॥ १५
रावणस्य च बाणौघै रामविस्फारितेन च । शब्देन राक्षसास्ते च पेतुश्च शतशस्तदा ॥ १६
तयोः शरपथं प्राप्तो रावणो राजपुत्रयोः । स बभौ च यथा राहुः समीपे शशिसूर्ययोः ॥ १७
तमिच्छन् प्रथमं योद्धुं लक्ष्मणो निशितैः शरैः । मुमोच धनुरायम्य शरानग्निशिखोपमान् ॥
तान् मुक्तमात्रानाकाशे लक्ष्मणेन धनुष्मता । बाणान् बाणैर्महातेजा रावणः प्रत्यवारयत् ॥
एकमेकेन बाणेन त्रिभिस्त्रीन् दशभिर्दश । लक्ष्मणस्य प्रचिच्छेद दर्शयन् पाणिलाघवम् ॥ २०
अभ्यतिक्रम्य सौमित्रिं रावणः समितिंजयः । आससाद ततो रामं स्थितं शैलमिवाचलम् ॥
स संख्ये राममासाद्य क्रोधसंरक्तलोचनः । व्यसृजच्छरवर्षाणि रावणो राघवोपरि ॥ २२
शरधारास्ततो रामो रावणस्य धनुश्च्युताः । दृष्ट्वैवापततः शीघ्रं[2] भल्लाञ्जग्राह सत्वरम् ॥ २३
ताञ्शरौघांस्ततो भल्लैस्तीक्ष्णैश्चिच्छेद राघवः । दीप्यमानान् महाघोरान् क्रुद्धानाशीविषानिव ॥
राघवो रावणं तूर्णं रावणो राघवं तदा । अन्योन्यं विविधैस्तीक्ष्णैः शरैरभिववर्षतुः ॥ २५
चेरतुश्च चिरं चित्रं मण्डलं सव्यदक्षिणम् । बाणवेगात् समुत्क्षिप्तावन्योन्यमपराजितौ ॥ २६
तयोर्भूतानि वित्रेसुर्युगपत् संप्रयुध्यतोः । रौद्रयोः सायकमुचोर्यमान्तकनिकाशयोः ॥ २७
संततं विविधैर्बाणैर्बभूव गगनं तदा । घनैरिवातपापाये विद्युन्मालासमाकुलैः ॥ २८
गवाक्षितमिवाकाशं बभूव शरवृष्टिभिः । महावेगैः सुतीक्ष्णाग्रैर्गृध्रपत्रैः सुवाजितैः ॥ २९
शरान्धकारमाकाशं चक्रतुः परमं तदा । गतेऽस्तं तपने चापि महामेघाविवोत्थितौ ॥ ३०
बभूव तुमुलं युद्धमन्योन्यवधकाङ्क्षिणोः । अनासाद्यमचिन्त्यं च वृत्रवासवयोरिव ॥ ३१
उभौ हि परमेष्वासावुभौ शस्त्रविशारदौ । उभावस्त्रविदां मुख्यावुभौ युद्धे विचेरतुः ॥ ३२
उभौ हि येन व्रजतस्तेन तेन शरोर्मयः । ऊर्मयो वायुना विद्धा जग्मुः सागरयोरिव ॥ ३३
ततः संसक्तहस्तस्तु रावणो लोकरावणः । नाराचमालां रामस्य ललाटे प्रत्यमुञ्चत ॥ ३४
रौद्रचापप्रयुक्तां तां नीलोत्पलदलप्रभाम् । शिरसा धारयन् रामो न व्यथां प्रत्यपद्यत ॥ ३५
अथ मन्त्रानभिजपन् रौद्रमस्त्रमुदीरयन् । शरान् भूयः समादाय रामः क्रोधसमन्वितः ॥ ३६
मुमोच च महातेजाश्चापमायम्य वीर्यवान् । ते महामेघसंकाशे कवचे पतिताः शराः ॥ ३७
अवध्ये राक्षसेन्द्रस्य न व्यथां जनयंस्तदा । पुनरेवाथ तं रामो रथस्थं राक्षसाधिपम् ॥ ३८
ललाटे परमास्त्रेण सर्वास्त्रकुशलोऽभिनत्[1] । ते भित्त्वा बाणरूपाणि पञ्चशीर्षा इवोरगाः ॥३९

---

1. विस्फारयितुमारेभे इति विलम्बप्रतीतेः भगवतो रामस्यासंमोहाध्यवसायायोगो व्यज्यते ।

2. शीघ्रमापततः क्षणार्धमात्रेण लक्ष्यदेशमभिपरापतत इति भल्लविशेषणम् । आपतिताः पुना. ।

१. रणे च छ. ।

श्वसन्तो विविशुर्भूमिं रावणप्रतिकूलिताः । निहत्य राघवस्यास्त्रं रावणः क्रोधमूर्छितः ॥ ४०
आसुरं सुमहाघोरमस्त्रं प्रादुश्चकार ह । सिंहव्याघ्रमुखांश्चान्यान् कङ्ककाकमुखानपि ॥ ४१
गृध्रश्येनमुखांश्चापि शृगालवदनांस्तथा । ईहामृगमुखांश्चान्यान् व्यादितास्यान् भयानकान्॥४२
पञ्चास्याँल्लेलिहानांश्च ससर्ज निशिताञ्शरान् । शरान् खरमुखांश्चान्यान् वराहमुखसंस्थितान् ॥
श्वानकुक्कुटवक्त्रांश्च मकराशीविषाननान् । एतानन्यांश्च मायावी ससर्ज निशिताञ्शरान्॥४४
रामं प्रति महातेजाः क्रुद्धः सर्प इव श्वसन् । आसुरेण समाविष्टः सोऽस्त्रेण रघुनन्दनः ॥ ४५
ससर्जास्त्रं महोत्साहः पावकं पावकोपमः । अग्निदीप्तमुखान् बाणांस्तथा सूर्यमुखानपि ॥ ४६
चन्द्रार्धचन्द्रवक्त्रांश्च धूमकेतुमुखानपि । ग्रहनक्षत्रवक्त्रांश्च महोल्कामुखसंस्थितान् ॥ ४७
विद्युज्जिह्वोपमांश्चान्यान् ससर्ज निशिताञ्शरान् । ते रावणशरा घोरा राघवास्त्रसमाहताः ॥४८
विलयं जग्मुराकाशे जग्मुश्चैव सहस्रशः । तदस्त्रं निहतं दृष्ट्वा रामेणाक्लिष्टकर्मणा ॥ ४९
हृष्टा नेदुस्ततः सर्वे कपयः कामरूपिणः । सुग्रीवप्रमुखा वीराः परिवार्य तु राघवम् ॥ ५०

ततस्तदस्त्रं विनिहत्य राघवः प्रसह्य तद्रावणबाहुनिःसृतम् ।
मुदान्वितो दाशरथिर्महाहवे विनेदुरुच्चैर्मुदिताः कपीश्वराः ॥ ५१

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
युद्धकाण्डे रामरावणास्त्रपरम्परा नाम शततमः सर्गः

---

## एकोत्तरशततमः सर्गः

लक्ष्मणशक्तिक्षेपः

तस्मिन् प्रतिहतेऽस्त्रे तु रावणो राक्षसाधिपः । क्रोधं च द्विगुणं चक्रे क्रोधाच्चास्त्रमनन्तरम् ॥१
मयेन विहितं रौद्रमन्यदस्त्रं महाद्युतिः । उत्स्रष्टुं रावणो घोरं राघवाय प्रचक्रमे ॥ २
ततः शूलानि निश्चेरुर्गदाश्च मुसलानि च । कार्मुकाद्दीप्यमानानि वज्रसाराणि सर्वशः ॥ ३
मुद्गराः कूटपाशाश्च दीप्ताश्चाशनयस्तथा । निष्पेतुर्विविधास्तीक्ष्णा वाता इव युगक्षये ॥ ४
तदस्त्रं राघवः श्रीमानुत्तमास्त्रविदां वरः । जघान परमास्त्रेण गान्धर्वेण महाद्युतिः ॥ ५
तस्मिन् प्रतिहतेऽस्त्रे तु राघवेण महात्मना । रावणः क्रोधताम्राक्षः सौरमस्त्रमुदैरयत् ॥ ६
ततश्चक्राणि निष्पेतुर्भास्वराणि महान्ति च । कार्मुकाद्भीमवेगस्य दशग्रीवस्य धीमतः ॥ ७
तैरासीद्गगनं दीप्तं संपतद्भिरितस्ततः । पतद्भिश्च दिशो दीप्ताश्चन्द्रसूर्यग्रहैरिव ॥ ८
तानि चिच्छेद बाणौघैश्चक्राणि स तु राघवः । आयुधानि च चित्राणि रावणस्य चमूमुखे ॥९
तदस्त्रं तु हतं दृष्ट्वा रावणो राक्षसाधिपः । विव्याध दशभिर्बाणै रामं सर्वेषु मर्मसु ॥ १०
स विद्धो दशभिर्बाणैर्महाकार्मुकनिःसृतैः । रावणेन महातेजा न प्राकम्पत राघवः ॥ ११

ततो विव्याध गात्रेषु सर्वेषु समितिंजयः । राघवस्तु सुसंक्रुद्धो रावणं बहुभिः शरैः ॥ १२
एतस्मिन्नन्तरे क्रुद्धो राघवस्यानुजो बली । लक्ष्मणः सायकान् सप्त जग्राह परवीरहा ॥ १३
तैः सायकैर्महावेगै रावणस्य महाद्युतिः । ध्वजं मनुष्यशीर्षं तु तस्य चिच्छेद नैकधा ॥ १४
सारथेश्चापि बाणेन शिरो ज्वलितकुण्डलम् । जहार लक्ष्मणः श्रीमान्नैर्ऋतस्य महाबलः ॥ १५
तस्य बाणैश्च चिच्छेद धनुर्गजकरोपमम् । लक्ष्मणो राक्षसेन्द्रस्य पञ्चभिर्निशितैः शरैः ॥ १६
नीलमेघनिभांश्चास्य सदश्वान् पर्वतोपमान् । जघानाप्लुत्य गदया रावणस्य विभीषणः ॥ १७
हताश्वाद्वेगवान् वेगादवप्लुत्य महारथात् । क्रोधमाहारयत्तीव्रं भ्रातरं प्रति रावणः ॥ १८
ततः शक्तिं महाशक्तिर्दीप्तां दीप्ताशनीमिव । विभीषणाय चिक्षेप राक्षसेन्द्रः प्रतापवान् ॥ १९
अप्राप्तामेव तां बाणैस्त्रिभिश्चिच्छेद लक्ष्मणः । अथोदतिष्ठत् संनादो वानराणां तदा रणे ॥२०
सा पपात त्रिधा छिन्ना शक्तिः काञ्चनमालिनी । सविस्फुलिङ्गा ज्वलिता महोल्केव दिवश्च्युता ॥
ततः संभावितत‍रां कालेनापि दुरासदाम् । जग्राह विपुलां शक्तिं दीप्यमानां स्वतेजसा ॥ २२
सा वेगिता बलवता रावणेन दुरासदा । जज्वाल सुमहाघोरा शक्राशनिसमप्रभा ॥ २३
एतस्मिन्नन्तरे वीरो लक्ष्मणस्तं विभीषणम् । प्राणसंशयमापन्नं तूर्णमभ्यवपद्यत ॥ २४
तं विमोक्षयितुं वीरश्चापमायम्य लक्ष्मणः । रावणं शक्तिहस्तं वै शरवर्षैरवाकिरत् ॥ २५
कीर्यमाणः शरौघेण विसृष्टेन महात्मना । न प्रहर्तुं मनश्चक्रे विमुखीकृतविक्रमः ॥ २६
मोक्षितं भ्रातरं दृष्ट्वा लक्ष्मणेन स रावणः । लक्ष्मणाभिमुखस्तिष्ठन्निदं वचनमब्रवीत् ॥ २७
मोक्षितस्ते बलश्लाघिन् यस्मादेवं विभीषणः । विमुच्य राक्षसं शक्तिस्त्वयीयं विनिपात्यते ॥२८
एषा ते हृदयं भित्त्वा शक्तिर्लोहितलक्षणा । मद्बाहुपरिघोत्सृष्टा प्राणानादाय यास्यति ॥ २९
इत्येवमुक्त्वा तां शक्तिमष्टघण्टां महास्वनाम् । मयेन मायाविहिताममोघां शत्रुघातिनीम् ॥३०
लक्ष्मणाय समुद्दिश्य ज्वलन्तीमिव तेजसा । रावणः परमक्रुद्धश्चिक्षेप च ननाद च ॥ ३१
सा क्षिप्ता भीमवेगेन शक्राशनिसमस्वना । शक्तिरभ्यपतद्वेगाल्लक्ष्मणं रणमूर्धनि ॥ ३२
तामनुव्याहरच्छक्तिमापतन्तीं स राघवः । स्वस्त्यस्तु लक्ष्मणायेति मोघा भव हतोद्यमा ॥ ३३
रावणेन रणे शक्तिः क्रुद्धेनाशीविषोपमा । मुक्ता शूरस्य भीतस्य लक्ष्मणस्य ममज्ज सा ॥ ३४
न्यपतत् सा महावेगा लक्ष्मणस्य महोरसि । जिह्वेवोरगराजस्य दीप्यमाना महाद्युतिः ॥ ३५
ततो रावणवेगेन सुदूरमवगाढया । शक्त्या निर्भिन्नहृदयः पपात भुवि लक्ष्मणः ॥ ३६
तदवस्थं समीपस्थो लक्ष्मणं प्रेक्ष्य राघवः । भ्रातृस्नेहान्महातेजा विषण्णहृदयोऽभवत् ॥ ३७
स मुहूर्तमनुध्याय बाष्पव्याकुललोचनः । बभूव संरब्धतरो युगान्त इव पावकः ॥ ३८
न विषादस्य कालोऽयमिति संचिन्त्य राघवः । चक्रे सुतुमुलं युद्धं रावणस्य वधे धृतः ॥ ३९
सर्वयत्नेन महता लक्ष्मणं संनिरीक्ष्य च । स ददर्श ततो रामः शक्त्या भिन्नं महाहवे ॥ ४०

लक्ष्मणं रुधिरादिग्धं सपन्नगमिवाचलम्। तामपि प्रहितां शक्तिं रावणेन बलीयसा ॥ ४१
यत्नतस्ते हरिश्रेष्ठा न शेकुरवमर्दितुम् । अर्दिताश्चैव बाणौघैः क्षिप्रहस्तेन रक्षसा ॥ ४२
सौमित्रिं सा विनिर्भिद्य प्रविष्टा धरणीतलम्। तां कराभ्यां परामृश्य रामः शक्तिं भयावहाम् ॥
बभञ्ज समरे क्रुद्धो बलवान् विचकर्ष च । तस्य निष्कर्षतः शक्तिं रावणेन बलीयसा ॥ ४४
शराः सर्वेषु गात्रेषु पातिता मर्मभेदिनः । अचिन्तयित्वा तान् बाणान् समाश्लिष्य च लक्ष्मणम्॥
अब्रवीच्च हनूमन्तं सुग्रीवं चैव राघवः । लक्ष्मणं परिवार्येह तिष्ठध्वं वानरोत्तमाः ॥ ४६
पराक्रमस्य कालोऽयं संप्राप्तो मे चिरेप्सितः । पापात्मायं दशग्रीवो वध्यतां पापनिश्चयः ॥ ४७
काङ्क्षतः स्तोककस्येव[1] घर्मान्ते मेघदर्शनम् । अस्मिन् मुहूर्ते न चिरात् सत्यं प्रतिशृणोमि वः ॥
अरावणमरामं वा जगद्द्रक्ष्यथ वानराः । राज्यनाशं वने वासं दण्डके परिधावनम् ॥ ४९
वैदेह्याश्च परामर्शं रक्षोभिश्च समागमम् । प्राप्तं दुःखं महद्घोरं क्लेशं च निरयोपमम् ॥ ५०
अद्य सर्वमहं त्यक्ष्ये निहत्वा रावणं रणे। यदर्थं वानरं सैन्यं समानीतमिदं मया ॥ ५१
सुग्रीवश्च कृतो राज्ये निहत्वा वालिनं रणे । यदर्थं सागरः क्रान्तः सेतुर्बद्धश्च सागरे ॥ ५२
सोऽयमद्य रणे पापश्चक्षुर्विषयमागतः । चक्षुर्विषयमागम्य नायं जीवितुमर्हति ॥ ५३
दृष्टिं दृष्टिविषस्येव सर्पस्य मम रावणः । स्वस्थाः पश्यत दुर्धर्षा युद्धं वानरपुंगवाः ॥ ५४
आसीनाः पर्वताग्रेषु ममेदं रावणस्य च। अद्य रामस्य रामत्वं पश्यन्तु मम संयुगे ॥ ५५
त्रयो लोकाः सगन्धर्वाः सदेवाः सर्षिचारणाः । अद्य कर्म करिष्यामि यल्लोकाः सचराचराः ॥
सदेवाः कथयिष्यन्ति यावद्भूमिर्धरिष्यति[2] । समागम्य सदा लोके यथा युद्धं प्रवर्तितम् ॥५७
एवमुक्त्वा शितैर्बाणैस्तप्तकाञ्चनभूषणैः । आजघान दशग्रीवं रणे रामः समाहितः ॥ ५८
अथ प्रदीप्तैर्नाराचैर्मुसलैश्चापि रावणः । अभ्यवर्षत्तदा रामं धाराभिरिव तोयदः ॥ ५९
रामरावणमुक्तानामन्योन्यमभिनिघ्नताम् । शराणां च शराणां च बभूव तुमुलः स्वनः ॥ ६०
ते भिन्नाश्च विकीर्णाश्च रामरावणयोः शराः । अन्तरिक्षात् प्रदीप्ताग्रा निपेतुर्धरणीतले ॥ ६१
तयोर्ज्यातलनिर्घोषो रामरावणयोर्महान् । त्रासनः सर्वभूतानां संबभूवाद्भुतोपमः ॥ ६२

स कीर्यमाणः शरजालवृष्टिभिर्महात्मना दीप्तधनुष्मतार्दितः ।
भयात् प्रदुद्राव समेत्य रावणो यथानिलेनाभिहतो बलाहकः ॥ ६३

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
युद्धकाण्डे लक्ष्मणशक्तिक्षेपो नाम एकोत्तरशततमः सर्गः

---

१. काङ्क्षितं चातकस्येव पुना. । २. अस्यानन्तरम्—यावच्चन्द्रश्च सूर्यश्च यावत्तिष्ठति सागरः–इति च.

## द्व्युत्तरशततमः सर्गः

### लक्ष्मणसंजीवनम्

शक्त्या विनिहतं दृष्ट्वा रावणेन बलीयसा। लक्ष्मणं समरे शूरं रुधिरौघपरिप्लुतम्॥ १
स दत्त्वा तुमुलं युद्धं रावणस्य दुरात्मनः। विसृजन्नेव बाणौघान् सुषेणं वाक्यमब्रवीत्॥ २
एष रावणवीर्येण लक्ष्मणः पतितः क्षितौ। सर्पवद्वेष्टते वीरो मम शोकमुदीरयन्॥ ३
शोणितार्द्रमिमं वीरं प्राणैरिष्टतमं मम। पश्यतो मम का शक्तिर्योद्धुं पर्याकुलात्मनः॥ ४
अयं स समरश्लाघी भ्राता मे शुभलक्षणः। यदि पञ्चत्वमापन्नः प्राणैर्मे किं सुखेन च॥ ५
लज्जतीव हि मे वीर्यं भ्रश्यतीव कराद्धनुः। सायका व्यवसीदन्ति दृष्टिर्बाष्पवशं गता॥ ६
अवसीदन्ति गात्राणि स्वप्नयाने नृणामिव। चिन्ता मे वर्धते तीव्रा मुमूर्षा चोपजायते॥ ७
भ्रातरं निहतं दृष्ट्वा रावणेन दुरात्मना। विनिष्टनन्तं दुःखार्तं मर्मण्यभिहतं भृशम्॥ ८
राघवो भ्रातरं दृष्ट्वा प्रियं प्राणं बहिश्चरम्। दुःखेन महताविष्टो ध्यानशोकपरायणः॥ ९
परं विषादमापन्नो विललापाकुलेन्द्रियः। न हि युद्धेन मे कार्यं नैव प्राणैर्न सीतया॥ १०
भ्रातरं निहतं दृष्ट्वा लक्ष्मणं रणपांसुषु। किं मे राज्येन किं प्राणैर्युद्धे कार्यं न विद्यते॥ ११
यत्रायं निहतः शेते रणमूर्धनि लक्ष्मणः। देशे देशे कलत्राणि देशे देशे च बान्धवाः॥ १२
तं तु देशं न पश्यामि यत्र भ्राता सहोदरः। किन्नु राज्येन दुर्धर्षलक्ष्मणेन विना मम॥ १३
कथं वक्ष्याम्यहं त्वम्बां सुमित्रां पुत्रवत्सलाम्। उपालम्भं न शक्ष्यामि सोढुं दत्तं सुमित्रया॥
किन्नु वक्ष्यामि कौसल्यां मातरं किन्नु कैकयीम्। भरतं किन्नु वक्ष्यामि शत्रुघ्नं च महाबलम्॥
सह तेन वनं यातो विना तेनागतः कथम्। इहैव मरणं श्रेयो न तु बन्धुनिबर्हणम्॥ १६
किं मया दुष्कृतं कर्म कृतमन्यत्र जन्मनि। ये न मे धार्मिको भ्राता निहतश्चाग्रतो मम॥ १७
हा भ्रातर्मनुजश्रेष्ठ शूराणां प्रवर प्रभो। एकाकी किंनु मां त्यक्त्वा परलोकाय गच्छसि॥ १८
विलपन्तं च मां भ्रातः किमर्थं नावभाषसे। उत्तिष्ठ ब्रूहि किं शेषे दीनं मां पश्य चक्षुषा॥
शोकार्तस्य प्रमत्तस्य पर्वतेषु वनेषु च। विषण्णस्य महाबाहो समाश्वासयिता च कः[१]॥ २०
इत्येवं विलपन्तं तं शोकविह्वलितेन्द्रियम्। विचेष्टमानं करुणमुच्छ्वसन्तं पुनः पुनः॥ २१
राममाश्वासयन् वीरः सुषेणो वाक्यमब्रवीत्। न मृतोऽयं महाबाहो लक्ष्मणो लक्ष्मिवर्धनः॥
न चास्य विकृतं वक्त्रं नापि श्यावं न निष्प्रभम्। सुप्रभं च प्रसन्नं च मुखमस्याभिलक्ष्यते॥
पद्मरक्ततलौ हस्तौ सुप्रसन्ने च लोचने। एवं न विद्यते रूपं गतासूनां विशांपते॥ २४

---

१. किं नु राज्येन—समाश्वासयिता चकः, इति भागः प्र. नास्ति।

दीर्घायुषस्तु ये मर्त्यास्तेषां तु मुखमीदृशम् । नायं प्रेतत्वमापन्नो लक्ष्मणो लक्ष्मिवर्धनः ॥ २५
मा विषादं कृथा वीर सप्राणोऽयमरिंदमः । आख्यास्यते प्रसुप्तस्य स्रस्तगात्रस्य भूतले ॥ २६
सोच्छ्वासं हृदयं वीर कम्पमानं मुहुर्मुहुः । एवमुक्त्वा तु वाक्यज्ञः सुषेणो राघवं वचः ॥ २७
समीपस्थमुवाचेदं हनुमन्तमभित्वरन् । सौम्य शीघ्रमितो गत्वा शैलमोषधिपर्वतम् ॥ २८
पूर्वं ते कथितो योऽसौ वीर जाम्बवता शुभः । दक्षिणे शिखरे तस्य जातामोषधिमानय ॥२९
विशल्यकरणीं नाम विशल्यकरणीं शुभाम् । सवर्णकरणीं चापि तथा संजीवनीमपि ॥ ३०
संधानकरणीं चापि गत्वा शीघ्रमिहानय । संजीवनार्थं वीरस्य लक्ष्मणस्य महात्मनः ॥ ३१
इत्येवमुक्तो हनुमान् गत्वा चौषधिपर्वतम् । चिन्तामभ्यगमच्छ्रीमानजानंस्तां महौषधिम् ॥ ३२
तस्य बुद्धिः समुत्पन्ना मारुतेरमितौजसः । इदमेव गमिष्यामि गृहीत्वा शिखरं गिरेः ॥ ३३
अस्मिन् हि शिखरे जातामोषधीं तां सुखावहाम् । प्रतर्केणावगच्छामि सुषेणोऽप्येवमब्रवीत् ॥
अगृह्य यदि गच्छामि विशल्यकरणीमहम् । कालात्ययेन दोषः स्याद्वैक्लव्यं च महद्भवेत् ॥३५
इति संचिन्त्य हनुमान् गत्वा क्षिप्रं महाबलः । आसाद्य पर्वतश्रेष्ठं त्रिः प्रकम्प्य गिरेः शिरः ॥
फुल्लनानातरुगणं समुत्पाट्य महाबलः । गृहीत्वा हरिशार्दूलो हस्ताभ्यां समतोलयत् ॥ ३७
स नीलमिव जीमूतं तोयपूर्णं नभःस्थलात् । आपपात गृहीत्वा तु हनुमाञ्शिखरं गिरेः ॥ ३८
समागम्य महावेगः संन्यस्य शिखरं गिरेः । विश्रम्य किंचिद्धनुमान् सुषेणमिदमब्रवीत् ॥ ३९
ओषधिं नावगच्छामि तामहं हरिपुंगव । तदिदं शिखरं कृत्स्नं गिरेस्तस्याहृतं मया ॥ ४०
एवं कथयमानं तं प्रशस्य पवनात्मजम् । सुषेणो वानरश्रेष्ठो जग्राहोत्पाट्य चौषधीम् ॥ ४१
विस्मितास्तु बभूवुस्ते रणे वानरराक्षसाः । दृष्ट्वा हनुमतः कर्म सुरैरपि सुदुष्करम् ॥ ४२
ततः संक्षोदयित्वा तामोषधीं वानरोत्तमः । लक्ष्मणस्य ददौ नस्तः सुषेणः सुमहाद्युतेः ॥ ४३
सशल्यस्तां समाघ्राय लक्ष्मणः परवीरहा । विशल्यो विरुजः शीघ्रमुदतिष्ठन्महीतलात् ॥ ४४
तमुत्थितं ते हरयो भूतलात् प्रेक्ष्य लक्ष्मणम् । साधु साध्विति सुप्रीताः सुषेणं प्रत्यपूजयन् ॥
एह्येहीत्यब्रवीद्रामो लक्ष्मणं परवीरहा । सस्वजे स्नेहगाढं च बाष्पपर्याकुलेक्षणः ॥ ४६
अब्रवीच्च परिष्वज्य सौमित्रिं राघवस्तदा । दिष्ट्या त्वां वीर पश्यामि मरणात् पुनरागतम्॥४७
न हि मे जीवितेनार्थः सीतया चापि लक्ष्मण । को हि मे विजयेनार्थस्त्वयि पञ्चत्वमागते ॥
इत्येवं वदतस्तस्य राघवस्य महात्मनः । खिन्नः शिथिलया वाचा लक्ष्मणो वाक्यमब्रवीत् ॥ ४९
तां प्रतिज्ञां प्रतिज्ञाय पुरा सत्यपराक्रम । लघुः कश्चिदिवासत्त्वो नैवं वक्तुमिहार्हसि ॥ ५०
न हि प्रतिज्ञां कुर्वन्ति वितथां साधवोऽनघ । लक्षणं हि महत्त्वस्य प्रतिज्ञापरिपालनम् ॥ ५१

नैराश्यमुपगन्तुं ते तदलं मत्कृतेऽनघ । वधेन रावणस्याद्य प्रतिज्ञामनुपालय ॥ ५२
न जीवन् यास्यते शत्रुस्तव बाणपथं गतः । नर्दतस्तीक्ष्णदंष्ट्रस्य सिंहस्येव महागजः ॥ ५३
अहं तु वधमिच्छामि शीघ्रमस्य दुरात्मनः । यावदस्तं न यात्येष कृतकर्मा दिवाकरः ॥ ५४
यदि वधमिच्छसि रावणस्य संख्ये यदि च कृतां त्वमिहेच्छसि प्रतिज्ञाम् ।
यदि तव राजवरात्मजाभिलाषः[1] कुरु च वचो मम शीघ्रमद्य वीर ॥ ५५

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
युद्धकाण्डे लक्ष्मणसंजीवनं नाम द्व्युत्तरशततमः सर्गः

---

## त्र्युत्तरशततमः सर्गः

### ऐन्द्ररथकेतुपातनम्

लक्ष्मणेन तु तद्वाक्यमुक्तं श्रुत्वा स राघवः । संदधे परवीरघ्नो धनुरादाय वीर्यवान् ॥ १
रावणाय शरान् घोरान् विससर्ज चमूमुखे । अथान्यं रथमारुह्य रावणो राक्षसाधिपः ॥ २
अभ्यद्रवत काकुत्स्थं स्वर्भानुरिव भास्करम् । दशग्रीवो रथस्थस्तु रामं वज्रोपमैः शरैः ॥ ३
आजघान महाघोरैर्धाराभिरिव तोयदः । दीप्तपावकसंकाशैः शरैः काञ्चनभूषणैः ॥ ४
निर्बिभेद रणे रामो दशग्रीवं समाहितम् । भूमौ स्थितस्य रामस्य रथस्थस्य च रक्षसः ॥ ५
न समं युद्धमित्याहुर्देवगन्धर्वदानवाः । ततो देववरः श्रीमाञ्श्रुत्वा तेषां वचोमृतम् ॥ ६
आहूय मातलिं शक्रो वचनञ्चेदमब्रवीत् । रथेन मम भूमिष्ठं शीघ्रं याहि रघूत्तमम् ॥ ७
मातले भूतलं यातः कुरु देवहितं महत् । इत्युक्तो देवराजेन मातलिर्देवसारथिः ॥ ८
प्रणम्य शिरसा देवं ततो वचनमब्रवीत् । शीघ्रं यास्यामि देवेन्द्र सारथ्यं च करोम्यहम् ॥ ९
ततो हयैश्च संयोज्य हरितैः स्यन्दनोत्तमम्[2] । ततः काञ्चनचित्राङ्गः किंकिणीशतभूषितः ॥ १०
तरुणादित्यसंकाशो वैदूर्यमयकूबरः । सदश्वैः काञ्चनापीडैर्युक्तः श्वेतप्रकीर्णकैः ॥ ११
हरिभिः सूर्यसंकाशैर्हेमजालविभूषितैः । रुक्मवेणुध्वजः श्रीमान् देवराजरथो वरः ॥ १२
देवराजेन संदिष्टो रथमारुह्य मातलिः । अभ्यवर्तत काकुत्स्थमवतीर्य त्रिविष्टपात् ॥ १३
अब्रवीच्च तदा रामं सप्रतोदो रथे स्थितः । प्राञ्जलिर्मातलिर्वाक्यं सहस्राक्षस्य सारथिः ॥ १४

---

१. राजसुताभिलाष आर्य पुना. ।
२. ततो देववरः—हरितैः स्यन्दनोत्तमम् इति भागः प्र. नास्ति ।

सहस्राक्षेण काकुत्स्थ रथोऽयं विजयाय ते। दत्तस्तव महासत्त्व श्रीमञ्शत्रुनिबर्हण॥ १५
इदमैन्द्रं महच्चापं कवचं चाग्निसंनिभम्। शराश्चादित्यसंकाशाः शक्तिश्च विमला शिता॥ १६
आरुह्येमं रथं वीर राक्षसं जहि रावणम्। मया सारथिना राजन् महेन्द्र इव दानवान्॥ १७
इत्युक्तः संपरिक्रम्य रथं समभिवाद्य च। आरुरोह तदा रामो लोकाँल्लक्ष्म्या विराजयन्॥ १८
तद्बभूवाद्भुतं युद्धं तुमुलं रोमहर्षणम्। रामस्य च महाबाहो रावणस्य च रक्षसः॥ १९
स गान्धर्वेण गान्धर्वं दैवं दैवेन राघवः। अस्त्रं राक्षसराजस्य जघान परमास्त्रवित्॥ २०
अस्त्रं तु परमं घोरं राक्षसं राक्षसाधिपः। ससर्ज परमक्रुद्धः पुनरेव निशाचरः॥ २१
ते रावणधनुर्मुक्ताः शराः काञ्चनभूषणाः। अभ्यवर्तन्त काकुत्स्थं सर्पा भूत्वा महाविषाः॥
ते दीप्तवदना दीप्तं वमन्तो ज्वलनं मुखैः। राममेवाभ्यवर्तन्त व्यादितास्या भयानकाः॥ २३
तैर्वासुकिसमस्पर्शैर्दीप्तभोगैर्महाविषैः। दिशश्च संतताः सर्वाः प्रदिशश्च समावृताः॥ २४
तान् दृष्ट्वा पन्नगान् रामः समापतत आहवे। अस्त्रं गारुत्मतं घोरं प्रादुश्चक्रे भयावहम्॥ २५
ते राघवशरा मुक्ता रुक्मपुङ्खाः शिखिप्रभाः। सुपर्णाः काञ्चना भूत्वा विचेरुः सर्पशत्रवः॥
ते तान् सर्वाञ्शराञ्जघ्नुः सर्परूपान् महाजवान्। सुपर्णरूपा रामस्य विशिखाः कामरूपिणः॥
अस्त्रे प्रतिहते क्रुद्धो रावणो राक्षसाधिपः। अभ्यवर्षत्तदा रामं घोराभिः शरवृष्टिभिः॥ २८
ततः शरसहस्रेण राममक्लिष्टकारिणम्। अर्दयित्वा शरौघेण मातलिं प्रत्यविध्यत॥ २९
चिच्छेद केतुमुद्दिश्य शरेणैकेन रावणः। पातयित्वा रथोपस्थे रथात् केतुं च काञ्चनम्॥ ३०
ऐन्द्रानपि जघानाश्वाञ्शरजालेन रावणः। तद्दृष्ट्वा सुमहत् कर्म रावणस्य दुरात्मनः॥ ३१
विषेदुर्देवगन्धर्वा दानवाश्चारणैः सह। राममार्तं तदा दृष्ट्वा सिद्धाश्च परमर्षयः॥ ३२
व्यथिता वानरेन्द्राश्च बभूवुः सविभीषणाः। रामचन्द्रमसं दृष्ट्वा ग्रस्तं रावणराहुणा॥ ३३
प्राजापत्यं च नक्षत्रं रोहिणीं शशिनः प्रियाम्। समाक्रम्य बुधस्तस्थौ प्रजानामशुभावहः॥ ३४
सधूमपरिवृत्तोर्मिः प्रज्वलन्निव सागरः। उत्पपात तदा क्रुद्धः स्पृशन्निव दिवाकरम्॥ ३५
शस्त्रवर्णः सुपरुषो मन्दरश्मिर्दिवाकरः। अदृश्यत कबन्धाङ्कः संसक्तो धूमकेतुना॥ ३६
कोसलानां च नक्षत्रं व्यक्तमिन्द्राग्निदैवतम्। आक्रम्याङ्गारकस्तस्थौ विशाखामिव चाम्बरे॥ ३७
दशास्यो विंशतिभुजः प्रगृहीतशरासनः। अदृश्यत दशग्रीवो मैनाक इव पर्वतः॥ ३८
निरस्यमानो रामस्तु दशग्रीवेण रक्षसा। नाशक्नोदभिसंधातुं सायकान् रणमूर्धनि॥ ३९
स कृत्वा भ्रुकुटिं क्रुद्धः किंचित् संरक्तलोचनः। जगाम सुमहाक्रोधं निर्दहन्निव चक्षुषा॥ ४०

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
युद्धकाण्डे ऐन्द्ररथकेतुपातनं नाम त्र्युत्तरशततमः सर्गः

## चतुरुत्तरशततमः सर्गः[1]

### रावणशूलभङ्गः

तस्य क्रुद्धस्य वदनं दृष्ट्वा रामस्य धीमतः । सर्वभूतानि वित्रेसुः प्राकम्पत च मेदिनी ॥ १
सिंहशार्दूलवाञ्शैलः संचचाल चलद्रुमः । बभूव चातिक्षुभितः समुद्रः सरितां पतिः ॥ २
खगाश्च खरनिर्घोषा गगने परुषा घनाः । औत्पातिकानि नर्दन्तः समन्तात् परिचक्रमुः ॥ ३
रामं दृष्ट्वा सुसंक्रुद्धमुत्पातांश्च सुदारुणान् । वित्रेसुः सर्वभूतानि रावणस्याभवद्भयम् ॥ ४
विमानस्थास्तदा देवा गन्धर्वाश्च महोरगाः । ऋषिदानवदैत्याश्च गरुत्मन्तश्च खेचराः ॥ ५
ददृशुस्ते महायुद्धं लोकसंवर्तसंस्थितम् । नानाप्रहरणैर्भीमैः शूरयोः संप्रयुध्यतोः ॥ ६
ऊचुः सुरासुराः सर्वे तदा विग्रहमागताः । प्रेक्षमाणा महद्युद्धं वाक्यं भक्त्या प्रहृष्टवत् ॥ ७
दशग्रीवं जयेत्याहुरसुराः समवस्थिताः । देवा राममथोचुस्ते त्वं जयेति पुनः पुनः ॥ ८
एतस्मिन्नन्तरे क्रोधाद्राघवस्य स रावणः । प्रहर्तुकामो दुष्टात्मा स्पृशन् प्रहरणं महत् ॥ ९
वज्रसारं महानादं सर्वशत्रुनिबर्हणम् । शैलशृङ्गनिभैः कूटैश्चितं दृष्टिभयावहम् ॥ १०
सधूममिव तीक्ष्णाग्रं युगान्ताग्निचयोपमम् । अतिरौद्रमनासाद्यं कालेनापि दुरासदम् ॥ ११
त्रासनं सर्वभूतानां दारणं भेदनं तदा । प्रदीप्तमिव रोषेण शूलं जग्राह रावणः ॥ १२
तच्छूलं परमक्रुद्धो मध्ये जग्राह वीर्यवान् । अनेकैः समरे शूरै राक्षसैः परिवारितः ॥ १३
समुद्यम्य महाकायो ननाद युधि भैरवम् । संरक्तनयनो रोषात् स्वसैन्यमभिहर्षयन् ॥ १४
पृथिवीं चान्तरिक्षं च दिशश्च प्रदिशस्तथा । प्राकम्पयत्तदा शब्दो राक्षसेन्द्रस्य दारुणः॥ १५
अतिनादस्य नादेन तेन तस्य दुरात्मनः । सर्वभूतानि वित्रेसुः सागरश्च प्रचुक्षुभे ॥ १६
स गृहीत्वा महावीर्यः शूलं तद्रावणो महत् । विनद्य सुमहानादं रामं परुषमब्रवीत् ॥ १७
शूलोऽयं वज्रसारस्ते राम रोषान्मयोद्यतः । तव भ्रातृसहायस्य सद्यः प्राणान् हरिष्यति[2]॥ १८
रक्षसामद्य शूराणां निहतानां चमूमुखे । त्वां निहत्य रणश्लाघिन् करोमि तरसा समम्[3] ॥१९
तिष्ठेदानीं निहन्मि त्वामेष शूलेन राघव । एवमुक्त्वा स चिक्षेप तच्छूलं राक्षसाधिपः ॥ २०
तद्रावणकरान्मुक्तं विद्युज्ज्वालासमाकुलम् । अष्टघण्टं महानादं वियद्गतमशोभत ॥ २१

---

1. अत्र सर्गभेदकरणं तिलकाद्यननुमतम् ।

2. हे राम, यः खलु ते रोषः एवं त्रैलोक्यसंक्षोभकरः कुत्राप्यश्रुतदृष्टचरो दृश्यते तं निमित्तं कृत्वा अयं शूलः यः प्रायेण युद्धेष्वनुद्यतपूर्वो मयेदानीमुद्यतः सन् तव सभ्रातृकस्येत्यादि योज्यम् ।

3. सममिति । अनुरूपमित्यर्थः ।

तच्छूलं राघवो दृष्ट्वा ज्वलन्तं घोरदर्शनम्। ससर्ज विशिखान् रामश्चापमायम्य वीर्यवान् ॥ २२
आपतन्तं शरौघेण वारयामास राघवः। उत्पतन्तं युगान्ताग्निं जलौघैरिव वासवः॥ २३
निर्ददाह स तान् बाणान् रामकार्मुकनिःसृतान्। रावणस्य महाशूलः पतङ्गानिव पावकः॥
तान् दृष्ट्वा भस्मसाद्भूताञ्शूलसंस्पर्शचूर्णितान्। सायकानन्तरिक्षस्थान् राघवः क्रोधमाहरत्॥
स तां मातलिनानीतां शक्तिं वासवनिर्मिताम्। जग्राह परमक्रुद्धो राघवो रघुनन्दनः॥ २६
सा तोलिता बलवता शक्तिर्घण्टाकृतस्वना। नभः प्रज्वालयामास युगान्तोल्केव सप्रभा॥ २७
सा क्षिप्ता राक्षसेन्द्रस्य तस्मिञ्शूले पपात ह। भिन्नः शक्त्या महाञ्शूलो निपपात हतद्युतिः॥
निर्बिभेद ततो बाणैर्हयानस्य महाजवान्। रामस्तीक्ष्णैर्महावेगैर्वज्रकल्पैः शितैः शरैः॥ २९
निर्बिभेदोरसि ततो रावणं निशितैः शरैः। राघवः परमायत्तो ललाटे पत्रिभिस्त्रिभिः॥ ३०
स शरैर्भिन्नसर्वाङ्गो गात्रप्रस्रुतशोणितः। राक्षसेन्द्रः समूहस्थः फुल्लाशोक इवाबभौ॥ ३१

स रामबाणैरभिविद्धगात्रो निशाचरेन्द्रः क्षतजार्द्रगात्रः।
जगाम खेदं च समाजमध्ये क्रोधं च चक्रे सुभृशं तदानीम्॥ ३२

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
युद्धकाण्डे रावणशूलभङ्गो नाम चतुरुत्तरशततमः सर्गः

---

## पञ्चोत्तरशततमः सर्गः

### दशग्रीवविघूर्णनम्

स तेन तु तथा क्रोधात् काकुत्स्थेनार्दितो रणे। रावणः समरश्लाघी महाक्रोधमुपागमत्॥ १
स दीप्तनयनो रोषाच्चापमायम्य वीर्यवान्। अभ्यर्दयत् सुसंक्रुद्धो राघवं परमाहवे॥ २
बाणधारासहस्रैस्तैः स तोयद इवाम्बरात्। राघवं रावणो बाणैस्तटाकमिव पूरयत्॥ ३
पूरितः शरजालेन धनुर्मुक्तेन संयुगे। महागिरिरिवाकम्प्यः काकुत्स्थो न प्रकम्पते॥ ४
स शरैः शरजालानि वारयन् समरे स्थितः। गभस्तीनिव सूर्यस्य प्रतिजग्राह वीर्यवान्॥ ५
ततः शरसहस्राणि क्षिप्रहस्तो निशाचरः। निजघानोरसि क्रुद्धो राघवस्य महात्मनः॥ ६
स शोणितसमादिग्धः समरे लक्ष्मणाग्रजः। दृष्टः फुल्ल इवारण्ये सुमहान् किंशुकद्रुमः॥ ७
शराभिघातसंरब्धः सोऽपि जग्राह सायकान्। काकुत्स्थः सुमहातेजा युगान्तादित्यतेजसः॥ ८
ततोऽन्योन्यं सुसंरब्धावुभौ तौ रामरावणौ। शरान्धकारे समरे नोपालक्षयतां तदा॥ ९

ततः क्रोधसमाविष्टो रामो दशरथात्मजः। उवाच रावणं वीरः प्रहस्य परुषं वचः॥ १०
मम भार्या जनस्थानादज्ञानाद्राक्षसाधम। हृता ते विवशा यस्मात्तस्मात्त्वं नासि वीर्यवान्॥
मया विरहितां दीनां वर्तमानां महावने। वैदेहीं प्रसभं हृत्वा शूरोऽहमिति मन्यसे॥ १२
स्त्रीषु शूर विनाथासु परदाराभिमर्शक। कृत्वा कापुरुषं कर्म शूरोऽहमिति मन्यसे॥ १३
भिन्नमर्याद निर्लज्ज चारित्रेष्वनवस्थित। दर्पान्मृत्युमुपादाय शूरोऽहमिति मन्यसे॥ १४
शूरेण धनदभ्रात्रा बलैः समुदितेन च। श्लाघनीयं यशस्यं च कृतं कर्म महत्त्वया॥ १५
उत्सेकेनाभिपन्नस्य गर्हितस्याहितस्य च। कर्मणः प्राप्नुहीदानीं तस्याद्य सुमहत् फलम्॥ १६
शूरोऽहमिति चात्मानमवगच्छसि दुर्मते। नैव लज्जास्ति ते सीतां चोरवद्व्यपकर्षतः॥ १७
यदि मत्सन्निधौ सीता धर्षिता स्यात्त्वया बलात्। भ्रातरं तु खरं पश्येस्तदा मत्सायकैर्हतः॥
दिष्ट्यासि मम दुष्टात्मंश्चक्षुर्विषयमागतः। अद्य त्वां सायकैस्तीक्ष्णैर्नयामि यमसादनम्॥ १९
अद्य ते मच्छरैश्छिन्नं शिरो ज्वलितकुण्डलम्। क्रव्यादा व्यपकर्षन्तु विकीर्णं रणपांसुषु॥
निपत्योरसि गृध्रास्ते क्षितौ क्षिप्तस्य रावण। पिबन्तु रुधिरं तर्षाच्छरशल्यान्तरोत्थितम्॥ २१
अद्य मद्बाणभिन्नस्य गतासोः पतितस्य ते। कर्षन्त्वान्त्राणि पतगा गरुत्मन्त इवोरगान्॥
इत्येवं संवदन् वीरो रामः शत्रुनिबर्हणः। राक्षसेन्द्रं समीपस्थं शरवर्षैरवाकिरत्॥ २३
बभूव द्विगुणं वीर्यं बलं हर्षश्च संयुगे। रामस्यास्त्रबलं चैव शत्रोर्निधनकाङ्क्षिणः॥ २४
प्रादुर्बभूवुरस्त्राणि सर्वाणि विदितात्मनः। प्रहर्षाच्च महातेजाः शीघ्रहस्ततरोऽभवत्॥ २५
शुभान्येतानि चिह्नानि विज्ञायात्मगतानि सः। भूय एवार्दयद्रामो रावणं राक्षसान्तकृत्॥ २६
हरीणां चाश्मनिकरैः शरवर्षैश्च राघवात्। हन्यमानो दशग्रीवो विघूर्णहृदयोऽभवत्॥ २७
यदा च शस्त्रं नारेभे न व्यकर्षच्छरासनम्। नास्य प्रत्यकरोद्वीर्यं विक्लवेनान्तरात्मना॥ २८
क्षिप्ताश्चापि शरास्तेन शस्त्राणि विविधानि च। न रणार्थाय वर्तन्ते मृत्युकालेऽभिवर्ततः॥
सूतस्तु रथनेतास्य तदवस्थं समीक्ष्य तम्। शनैर्युद्धादसंभ्रान्तो रथं तस्यापवाहयत॥ ३०
रामबाणविभिन्नाङ्गो रावणो राक्षसेश्वरः। निरस्तविक्रमः संख्ये रणे श्रान्तः पपात सः॥ ३१
सूतस्तु व्यथितं बाणैः स्यन्दनस्थं निरीक्ष्य तम्। तस्माद्रणादपोवाह रावणं हतपौरुषम्॥ ३२

रथं च तस्याथ जवेन सारथिर्निवार्य भीमं जलदस्वनं तदा[1]।
जगाम भीत्या समरान्महीपतिं निरस्तवीर्यं पतितं समीक्ष्य॥ ३३

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
युद्धकाण्डे दशग्रीवविघूर्णनं नाम पञ्चोत्तरशततमः सर्गः

१. ३१. ३२. ३३. पद्यानि प्र. न सन्ति।

## षडुत्तरशततमः सर्गः

### सारथिविज्ञेयम्

स तु मोहात् सुसंक्रुद्धः कृतान्तबलचोदितः । क्रोधसंरक्तनयनो रावणः सूतमब्रवीत् ॥ १
हीनवीर्यमिवाशक्तं पौरुषेण विवर्जितम् । भीरुं लघुमिवासत्त्वं विहीनमिव तेजसा ॥ २
विमुक्तमिव मायाभिरस्त्रैरिव बहिष्कृतम् । मामवज्ञाय दुर्बुद्धे स्वया बुद्ध्या विचेष्टसे ॥ ३
किमर्थं मामवज्ञाय मच्छन्दमनवेक्ष्य च । त्वया शत्रोः समक्षं मे रथोऽयमपवाहितः ॥ ४
त्वयाद्य हि ममानार्य चिरकालसमार्जितम् । यशो वीर्यं च तेजश्च प्रत्ययश्च विनाशितः ॥ ५
शत्रोः प्रख्यातवीर्यस्य रञ्जनीयस्य विक्रमैः । पश्यतो युद्धलुब्धोऽहं कृतः कापुरुषस्त्वया ॥ ६
यस्त्वं रथमिमं मोहान्न चोद्वहसि दुर्मते । सत्योऽयं प्रतितर्को मे परेण त्वमुपस्कृतः ॥ ७
न हि तद्विद्यते कर्म सुहृदो हितकाङ्क्षिणः । रिपूणां सदृशं चैतन्न त्वयैतत् स्वनुष्ठितम् ॥ ८
निवर्तय रथं शीघ्रं यावन्नापैति मे रिपुः । यदि वाप्युषितोऽसि त्वं स्मर्यन्ते यदि वा गुणाः[१] ॥
एवं परुषमुक्तस्तु हितबुद्धिरबुद्धिना । अब्रवीद्रावणं सूतो हितं सानुनयं वचः १०
न भीतोऽस्मि न मूढोऽस्मि नोपजप्तोऽस्मि शत्रुभिः। न प्रमत्तो न निःस्नेहो विस्मृता न च सत्क्रिया॥
मया तु हितकामेन यशश्च परिरक्षता । स्नेहप्रस्कन्नमनसा प्रियमित्यप्रियं कृतम् ॥ १२
नास्मिन्नर्थे महाराज त्वं मां प्रियहिते रतम् । कश्चिल्लघुरिवानार्यो दोषतो गन्तुमर्हसि ॥ १३
श्रूयतां त्वभिधास्यामि यन्निमित्तं मया रथः । [1]नदीवेग इवाम्भोभिः[२] संयुगे विनिवर्तितः ॥ १४
श्रमं तवावगच्छामि महता रणकर्मणा । न हि ते वीर सौमुख्यं प्रहर्षं वोपधारये ॥ १५
रथोद्वहनखिन्नाश्च त इमे रथवाजिनः । दीना घर्मपरिश्रान्ता गावो वर्षहता इव ॥ १६
निमित्तानि च भूयिष्ठं यानि प्रादुर्भवन्ति नः । तेषु तेष्वभिपन्नेषु लक्षयाम्यप्रदक्षिणम् ॥ १७
देशकालौ च विज्ञेयौ लक्षणानीङ्गितानि च । दैन्यं खेदश्च हर्षश्च रथिनश्च बलाबलम् ॥ १८
स्थलनिम्नानि भूमेश्च समानि विषमाणि च । युद्धकालश्च विज्ञेयः परस्यान्तरदर्शनम् ॥ १९
उपयानापयाने च स्थानं प्रत्यपसर्पणम् । सर्वमेतद्रथस्थेन ज्ञेयं रथकुटुम्बिना ॥ २०
तव विश्रमहेतोश्च तथैषां रथवाजिनाम् । रौद्रं वर्जयता खेदं क्षमं कृतमिदं मया ॥ २१
न मया स्वेच्छया वीर रथोऽयमपवाहितः । भर्तृस्नेहपरीतेन मयेदं यत्कृतं विभो ॥ २२
आज्ञापय यथा तत्त्वं वक्ष्यस्यरिनिषूदन । तत्करिष्याम्यहं वीर गतानृण्येन चेतसा ॥ २३
संतुष्टस्तेन वाक्येन रावणस्तस्य सारथेः । प्रशस्यैनं बहुविधं युद्धलुब्धोऽब्रवीदिदम् ॥ २४

---

1. प्रवृद्धैः समुद्राम्भोभिः नदीवेग इव इवेति व्याख्यातं भूषणे ॥ निवर्तितो रथ इत्यर्थ इति तिलकः । आभोगे इति पठित्वा, आभोगः उच्छ्रितः प्रदेशः, तस्मात् नदीवेग

१. स्मर्यन्ते यदि मे गुणः ति. पाठान्तरम् ।
२. इवाभोगे च. छ. ।

रथं शीघ्रमिमं सूत राघवाभिमुखं कुरु । नाहत्वा समरे शत्रून्निवर्तिष्यति रावणः ॥ २५
एवमुक्त्वा ततस्तुष्टो रावणो राक्षसेश्वरः । ददौ तस्मै शुभं ह्येकं हस्ताभरणमुत्तमम् ॥ २६
श्रुत्वा रावणवाक्यं तु सारथिः संन्यवर्तत ॥

ततो द्रुतं रावणवाक्यचोदितः प्रचोदयामास हयान् स सारथिः ।
स राक्षसेन्द्रस्य ततो महारथः क्षणेन रामस्य रणाग्रतोऽभवत् ॥ २७

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
युद्धकाण्डे सारथिविज्ञेयं नाम षड्रुत्तरशततमः सर्गः

---

## सप्तोत्तरशततमः सर्गः

### आदित्यहृदयम्

ततो युद्धपरिश्रान्तं समरे चिन्तया स्थितम् । रावणं चाग्रतो दृष्ट्वा युद्धाय समुपस्थितम् ॥ १
दैवतैश्च समागम्य द्रष्टुमभ्यागतो रणम् । उपागम्याब्रवीद्राममगस्त्यो भगवानृषिः ॥ २
राम राम महाबाहो शृणु गुह्यं सनातनम् । येन सर्वानरीन् वत्स समरे विजयिष्यसि ॥ ३
आदित्यहृदयं पुण्यं सर्वशत्रुविनाशनम् । जयावहं जपेन्नित्यमक्षय्यं परमं शिवम् ॥ ४
सर्वमङ्गलमाङ्गल्यं सर्वपापप्रणाशनम् । चिन्ताशोकप्रशमनमायुर्वर्धनमुत्तमम् ॥ ५
रश्मिमन्तं समुद्यन्तं देवासुरनमस्कृतम् । पूजयस्व विवस्वन्तं भास्करं भुवनेश्वरम् ॥ ६
सर्वदेवात्मको ह्येष तेजस्वी रश्मिभावनः । एष देवासुरगणाँल्लोकान् पाति गभस्तिभिः ॥ ७
एष ब्रह्मा च विष्णुश्च शिवः स्कन्दः प्रजापतिः । महेन्द्रो धनदः कालो यमः सोमो ह्यपांपतिः ॥
पितरो वसवः साध्या ह्यश्विनौ मरुतो मनुः । वायुर्वह्निः प्रजाप्राण ऋतुकर्ता प्रभाकरः ॥ ९
आदित्यः सविता सूर्यः खगः पूषा गभस्तिमान् । सुवर्णसदृशो भानुः स्वर्णरेता[1] दिवाकरः ॥
हरिदश्वः सहस्रार्चिः सप्तसप्तिर्मरीचिमान् । तिमिरोन्मथनः शंभुस्त्वष्टा मार्तण्ड अंशुमान्[2] ॥ ११
हिरण्यगर्भः शिशिरस्तपनो भास्करो रविः । अग्निगर्भोऽदितेः पुत्रः शङ्खः शिशिरनाशनः ॥ १२
व्योमनाथस्तमोभेदी ऋग्यजुःसामपारगः । घनवृष्टिरपां मित्रो विन्ध्यवीथीप्लवङ्गमः ॥ १३
आतपी मण्डली मृत्युः पिङ्गलः सर्वतापनः । कविर्विश्वो महातेजा रक्तः सर्वभवोद्भवः ॥ १४
नक्षत्रग्रहताराणामधिपो विश्वभावनः । तेजसामपि तेजस्वी द्वादशात्मन्नमोऽस्तु ते ॥ १५
नमः पूर्वाय गिरये पश्चिमायाद्रये[3] नमः । ज्योतिर्गणानां पतये दिनाधिपतये नमः ॥ १६

---

१. हिरण्यरेताः च. छ. ।
२. मार्तण्डकोंऽशुमान् पुना. ।
३. पश्चिमे गिरये च. छ. ।

जयाय जयभद्राय हर्यश्वाय नमो नमः। नमो नमः सहस्रांशो आदित्याय नमो नमः॥ १७
नम उग्राय वीराय सारङ्गाय नमो नमः। नमः पद्मप्रबोधाय मार्ताण्डाय नमो नमः॥ १८
ब्रह्मेशानाच्युतेशाय सूर्यायादित्यवर्चसे। भास्वते सर्वभक्षाय रौद्राय वपुषे नमः॥ १९
तमोघ्नाय हिमघ्नाय शत्रुघ्नायामितात्मने। कृतघ्नघ्नाय देवाय ज्योतिषां पतये नमः॥ २०
तप्तचामीकराभाय वह्नये विश्वकर्मणे। नमस्तमोऽभिनिघ्नाय रवये लोकसाक्षिणे॥ २१
नाशयत्येष वै भूतं तदेव सृजति प्रभुः। पायत्येष तपत्येष वर्षत्येष गभस्तिभिः॥ २२
एष सुप्तेषु जागर्ति भूतेषु परिनिष्ठितः। एष एवाग्निहोत्रं च फलं चैवाग्निहोत्रिणाम्॥ २३
वेदाश्च क्रतवश्चैव क्रतूनां फलमेव च। यानि कृत्यानि लोकेषु सर्व एष रविः प्रभुः॥ २४
एनमापत्सु कृच्छ्रेषु कान्तारेषु भयेषु च। कीर्तयन् पुरुषः कश्चिन्नावसीदति राघव॥ २५
पूजयस्वैनमेकाग्रो देवदेवं जगत्पतिम्। एतत्त्रिगुणितं जप्त्वा युद्धेषु विजयिष्यसि॥ २६
अस्मिन् क्षणे महाबाहो रावणं त्वं वधिष्यसि। एवमुक्त्वा तदागस्त्यो जगाम च यथागतम्॥
एतच्छ्रुत्वा महातेजा नष्टशोकोऽभवत्तदा। धारयामास सुप्रीतो राघवः प्रयतात्मवान्॥ २८
आदित्यं प्रेक्ष्य जप्त्वा तु परं हर्षमवाप्तवान्। त्रिराचम्य शुचिर्भूत्वा धनुरादाय वीर्यवान्॥२९
रावणं प्रेक्ष्य हृष्टात्मा युद्धाय समुपागमत्। सर्वयत्नेन महता वधे तस्य धृतोऽभवत्॥ ३०

अथ रविरवदन्निरीक्ष्य रामं मुदितमनाः परमं प्रहृष्यमाणः।
निशिचरपतिसंक्षयं विदित्वा सुरगणमध्यगतो वचस्त्वरेति॥ ३१

इत्यार्षे श्रीमद्रामायणे वाल्मीकिये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
युद्धकाण्डे आदित्यहृदयं नाम सप्तोत्तरशततमः सर्गः

---

## अष्टोत्तरशततमः सर्गः

### शुभाशुभनिमित्तदर्शनम्

स रथं सारथिर्हृष्टः परसैन्यप्रधर्षणम्। गन्धर्वनगराकारं समुच्छ्रितपताकिनम्॥ १
युक्तं परमसंपन्नैर्वाजिभिर्हेममालिभिः। युद्धोपकरणैः पूर्णं पताकाध्वजमालिनम्॥ २
ग्रसन्तमिव चाकाशं नादयन्तं वसुंधराम्। प्रणाशं परसैन्यानां स्वसैन्यानां प्रहर्षणम्॥ ३
रावणस्य रथं क्षिप्रं चोदयामास सारथिः। तमापतन्तं सहसा स्वनवन्तं महास्वनम्॥ ४
रथं राक्षसराजस्य नरराजो ददर्श ह। कृष्णवाजिसमायुक्तं युक्तं रौद्रेण वर्चसा॥ ५
तडित्पताकागहनं दर्शितेन्द्रायुधायुधम्। शरधारा विमुञ्चन्तं धारासारमिवाम्बुदम्॥ ६
तं दृष्ट्वा मेघसंकाशमापतन्तं रथं रिपोः। गिरेर्वज्राभिमृष्टस्य दीर्यतः सदृशस्वनम्॥ ७

विस्फारयन् वै वेगेन बालचन्द्रनतं धनुः । उवाच मातलिं रामः सहस्राक्षस्य सारथिम् ॥ ८
मातले पश्य संरब्धमापतन्तं रथं रिपोः । यथापसव्यं पतता वेगेन महता पुनः ॥ ९
समरे हन्तुमात्मानं तथा तेन कृता मतिः । तदप्रमादमातिष्ठन् प्रत्युद्गच्छ रथं रिपोः । १०
विध्वंसयितुमिच्छामि वायुर्मेघमिवोत्थितम् । अविक्लवमसंभ्रान्तमव्यग्रहृदयेक्षणम् ॥ ११
रश्मिसंचारनियतं प्रचोदय रथं द्रुतम् । कामं न त्वं समाधेयः पुरंदररथोचितः ॥ १२
युयुत्सुरहमेकाग्रः स्मारये त्वां न शिक्षये । परितुष्टः स रामस्य तेन वाक्येन मातलिः ॥ १३
प्रचोदयामास रथं सुरसारथिसत्तमः । अपसव्यं ततः कुर्वन् रावणस्य महारथम् ॥ १४
चक्रोत्क्षिप्तेन रजसा रावणं व्यवधानयत् । ततः क्रुद्धो दशग्रीवस्ताम्रविस्फारितेक्षणः ॥ १५
रथप्रतिमुखं रामं सायकैरवधूनयत् । धर्षणामर्षितो रामो धैर्यं रोषेण लम्भयन् ॥ १६
जग्राह सुमहावेगमैन्द्रं युधि शरासनम् । शरांश्च सुमहातेजाः सूर्यरश्मिसमप्रभान् ॥ १७
तदोपोढं महद्युद्धमन्योन्यवधकाङ्क्षिणोः । परस्पराभिमुखयोर्दृप्तयोरिव सिंहयोः ॥ १८
ततो देवाः सगन्धर्वाः सिद्धाश्च परमर्षयः । समेयुर्द्वैरथं द्रष्टुं रावणक्षयकाङ्क्षिणः ॥ १९
समुत्पेतुरथोत्पाता दारुणा रोमहर्षणाः । रावणस्य विनाशाय राघवस्य जयाय च ॥ २०
ववर्ष रुधिरं देवो रावणस्य रथोपरि । वाता मण्डलिनस्तीक्ष्णा ह्यपसव्यं प्रचक्रमुः ॥ २१
महद्गृध्रकुलं चास्य भ्रममाणं नभःस्थले । येन येन रथो याति तेन तेन प्रधावति ॥ २२
संध्यया चावृता लङ्का जपापुष्पनिकाशया । दृश्यते संप्रदीप्तेव दिवसेऽपि वसुंधरा ॥ २३
सनिर्घाता महोल्काश्च संप्रचेरुर्महास्वनाः । विषादयंस्ते रक्षांसि रावणस्य तदाहिताः ॥ २४
रावणश्च यतस्तत्र संचचाल वसुंधरा । रक्षसां च प्रहरतां गृहीता इव बाहवः ॥ २५
ताम्राः पीताः सिताः श्वेताः पतिताः सूर्यरश्मयः । दृश्यन्ते रावणस्याङ्गे पर्वतस्येव धातवः ॥
गृध्रैरनुगताश्चास्य वमन्त्यो ज्वलनं मुखैः । प्रणेदुर्मुखमीक्षन्त्यः संरब्धमशिवं शिवाः ॥ २७
प्रतिकूलं ववौ वायू रणे पांसून् समाकिरन् । तस्य राक्षसराजस्य कुर्वन् दृष्टिविलोपनम् ॥ २८
निपेतुरिन्द्राशनयः सैन्ये चास्य समन्ततः । दुर्विषह्यस्वना घोरा विना जलधरस्वनम् ॥ २९
दिशश्च प्रदिशः सर्वा बभूवुस्तिमिरावृताः । पांसुवर्षेण महता दुर्दर्शं च नभोऽभवत् ॥ ३०
कुर्वत्यः कलहं घोरं शारिकास्तद्रथ प्रति । निपेतुः शतशस्तत्र दारुणं दारुणारुताः ॥ ३१
जघनेभ्यः स्फुलिङ्गाश्च नेत्रेभ्योऽश्रूणि संततम् । मुमुचुस्तस्य तुरगास्तुल्यमग्निं च वारि च ॥
एवंप्रकारा बहवः समुत्पाता भयावहाः । रावणस्य विनाशाय दारुणाः संप्रजज्ञिरे ॥ ३३
रामस्यापि निमित्तानि सौम्यानि च शुभानि च । बभूवुर्जयशंसीनि प्रादुर्भूतानि सर्वशः ॥ ३४
निमित्तानि च सौम्यानि राघवः स्वजयाय च । दृष्ट्वा परमसंहृष्टो हतं मेने च रावणम् ॥ ३५

ततो निरीक्ष्यात्मगतानि राघवो रणे निमित्तानि निमित्तकोविदः।
जगाम हर्षं च परां च निर्वृतिं चकार युद्धे ह्यधिकं च विक्रमम्॥ ३६

इत्यार्षे श्रीमद्रामायणे बाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
युद्धकाण्डे शुभाशुभनिमित्तदर्शनं नाम अष्टोत्तरशततमः सर्गः

---

## नवोत्तरशततमः सर्गः

### रावणध्वजोन्मथनम्

ततः प्रवृत्तं सुक्रूरं रामरावणयोस्तदा। सुमहद्द्वैरथं युद्धं सर्वलोकभयावहम्॥ १
ततो राक्षससैन्यं च हरीणां च महद्बलम्। प्रगृहीतप्रहरणं निश्चेष्टं समतिष्ठत॥ २
संप्रयुद्धौ ततो दृष्ट्वा बलवन्नरराक्षसौ। व्याक्षिप्तहृदयाः सर्वे परं विस्मयमागताः॥ ३
नानाप्रहरणैर्व्यग्रैर्भुजैर्विस्मितबुद्धयः। तस्थुः प्रेक्ष्य च संग्रामं नाभिजघ्नुः परस्परम्॥ ४
रक्षसां रावणं चापि वानराणां च राघवम्। पश्यतां विस्मिताक्षाणां सैन्यं चित्रमिवाबभौ॥ ५
तौ तु तत्र निमित्तानि दृष्ट्वा रावणराघवौ। कृतबुद्धी स्थिरामर्षौ युयुधाते ह्यभीतवत्॥ ६
जेतव्यमिति काकुत्स्थो मर्तव्यमिति रावणः। धृतौ स्ववीर्यसर्वस्वं युद्धेऽदर्शयतां तदा॥ ७
ततः क्रोधाद्दशग्रीवः शरान् संधाय वीर्यवान्। मुमोच ध्वजमुद्दिश्य राघवस्य रथे स्थितम्॥ ८
ते शरास्तमनासाद्य पुरंदररथध्वजम्। रथशक्तिं परामृश्य निपेतुर्धरणीतले॥ ९
ततो रामोऽभिसंक्रुद्धश्चापमायम्य वीर्यवान्। कृतप्रतिकृतं कर्तुं मनसा संप्रचक्रमे॥ १०
रावणध्वजमुद्दिश्य मुमोच निशितं शरम्। महासर्पमिवासह्यं ज्वलन्तं स्वेन तेजसा॥ ११
जगाम स महीं छित्त्वा दशग्रीवध्वजं शरः। स निकृत्तोऽपतद्भूमौ रावणस्य रथध्वजः॥ १२
ध्वजस्योन्मथनं दृष्ट्वा रावणः सुमहाबलः। संप्रदीप्तोऽभवत् क्रोधादमर्षात् प्रदहन्निव॥ १३
स रोषवशमापन्नः शरवर्षं महद्वमन्। रामस्य तुरगान् दीप्तैः शरैर्विव्याध रावणः॥ १४
ते विद्धा हरयस्तत्र नास्खलन्नापि बभ्रमुः। बभूवुः स्वस्थहृदयाः पद्मनालैरिवाहताः॥ १५
तेषामसंभ्रमं दृष्ट्वा वाजिनां रावणस्तदा। भूय एव सुसंक्रुद्धः शरवर्षं मुमोच ह॥ १६
गदाश्च परिघाश्चैव चक्राणि मुसलानि च। गिरिशृङ्गाणि वृक्षांश्च तथा शूलपरश्वधान्॥ १७
मायाविहितमेतत्तु शस्त्रवर्षमपातयत्। तुमुलं त्रासजननं भीमं भीमप्रतिस्वनम्॥ १८
तद्वर्षमभवद्युद्धे नैकशस्त्रमयं महत्। विमुच्य राघवरथं समन्ताद्वानरे बले॥ १९
सायकैरंतरिक्षं च चकाराशु निरन्तरम्। सहस्रशस्ततो बाणानश्रान्तहृदयोद्यमः॥ २०
मुमोच च दशग्रीवो निःसङ्गेनान्तरात्मना। व्यायच्छमानं तं दृष्ट्वा तत्परं रावणं रणे २१
प्रहसन्निव काकुत्स्थः संदधे सायकाञ्शितान्। स मुमोच ततो बाणान् रणे शतसहस्रशः॥

तान् दृष्ट्वा रावणश्चक्रे स्वशरैः खं निरन्तरम् । ततस्ताभ्यां प्रमुक्तेन शरवर्षेण भास्वता ॥ २३
शरबद्धमिवाभाति द्वितीयं भास्वदम्बरम् । नानिमित्तोऽभवद्बाणो नातिभेत्ता न निष्फलः ॥२४
अन्योन्यमभिसंहत्य निपेतुर्धरणीतले । तथा विसृजतोर्बाणान् रामरावणयोर्मृधे ॥ २५
प्रायुध्यतामविच्छिन्नमस्यन्तौ सव्यदक्षिणम्[1] । चक्रतुश्च शरौघैस्तौ निरुच्छ्वासमिवाम्बरम् ॥२६
रावणस्य हयान् रामो हयान् रामस्य रावणः । जघ्नतुस्तौ तथान्योन्यं कृतानुकृतकारिणौ ॥
एवं तु तौ सुसंक्रुद्धौ चक्रतुर्युद्धमद्भुतम् । मुहूर्तमभवद्युद्धं तुमुलं रोमहर्षणम् ॥ २८
प्रयुध्यमानौ समरे महाबलौ शितैः शरै रावणलक्ष्मणाग्रजौ ।
ध्वजावपातेन स राक्षसाधिपो भृशं प्रचुक्रोध तदा रघूत्तमे ॥ २९

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
युद्धकाण्डे रावणध्वजोन्मथनं नाम नवोत्तरशततमः सर्गः

---

## दशोत्तरशततमः सर्गः[1]

### रावणैकशतशिरश्छेदनम्

तौ तदा युध्यमानौ तु समरे रामरावणौ । ददृशुः सर्वभूतानि विस्मितेनान्तरात्मना ॥ १
अर्दयन्तौ तु समरे तयोस्तौ स्यन्दनोत्तमौ । परस्परमभिक्रुद्धौ परस्परमभिद्रुतौ ॥ २
परस्परवधे युक्तौ घोररूपौ बभूवतुः । मण्डलानि च वीथीश्च गतप्रत्यागतानि च ॥ ३
दर्शयन्तौ बहुविधां सूतसारथ्यजां गतिम् । अर्दयन् रावणं रामो राघवं चापि रावणः ॥ ४
गतिवेगं समापन्नौ प्रवर्तननिवर्तने । क्षिपतोः शरजालानि तयोस्तौ स्यन्दनोत्तमौ ॥ ५
चेरतुः संयुगमहीं सासारौ जलदौ यथा । दर्शयित्वा तथा तौ तु गतिं बहुविधां रणे ॥ ६
परस्परस्याभिमुखौ पुनरेवावतस्थतुः । धुरं धुरेण रथयोर्वक्त्रं वक्त्रेण वाजिनाम्॥ ७
पताकाश्च पताकाभिः समेयुः स्थितयोस्तदा । रावणस्य ततो रामो धनुर्मुक्तैः शितैः शरैः ॥ ८
चतुर्भिश्चतुरो दीप्तैर्हयान् प्रत्यपसर्पयत् । स क्रोधवशमापन्नो हयानामपसर्पणे ॥ ९
मुमोच निशितान् बाणान् राघवाय निशाचरः । सोऽतिविद्धो बलवता दशग्रीवेण राघवः ॥
जगाम न विकारं च न चापि व्यथितोऽभवत् । चिक्षेप च पुनर्बाणान् वज्रपातसमस्वनान् ॥
सारथिं वज्रहस्तस्य समुद्दिश्य निशाचरः । मातलेस्तु महावेगाः शरीरे पतिताः शराः ॥ १२
न सूक्ष्ममपि संमोहं व्यथां वा प्रददुर्युधि । तया धर्षणया क्रुद्धो मातलेर्न तथात्मनः ॥ १३

---

1. अत्र सर्गभेदकरणं तिलकानुमतम् । पश्यद्भिरनिमेषणम् । भूमिष्ठैः कपिरक्षोभिः खस्थैर्वा
१. अस्यानन्तरम्—नान्तरं ददृशे किंचित् देवदानवैः ॥—इति क. घ. ।

चकार शरजालेन राघवो विमुखं रिपुम् । विंशतं त्रिंशतं षष्टिं शतशोऽथ सहस्रशः ॥ १४
मुमोच राघवो वीरः सायकान् स्यन्दने रिपोः । रावणोऽपि ततः क्रुद्धो रथस्थो राक्षसेश्वरः ॥
गदामुसलवर्षेण रामं प्रत्यर्दयद्रणे । तत्प्रवृत्तं महद्युद्धं तुमुलं रोमहर्षणम् ॥ १६
गदानां मुसलानां च परिघाणां च निःस्वनैः । शराणां पुङ्खपातैश्च क्षुभिताः सप्त सागराः ॥
क्षुब्धानां सागराणां च पातालतलवासिनः । व्यथिताः पन्नगाः सर्वे दानवाश्च सहस्रशः ॥ १८
चकम्पे मेदिनी कृत्स्ना सशैलवनकानना । भास्करो निष्प्रभश्चासीन्न ववौ चापि मारुतः ॥ १९
ततो देवाः सगन्धर्वाः सिद्धाश्च परमर्षयः । चिन्तामापेदिरे सर्वे सकिंनरमहोरगाः ॥ २०
स्वस्ति गोब्राह्मणेभ्योऽस्तु लोकास्तिष्ठन्तु शाश्वताः । जयतां राघवः संख्ये रावणं राक्षसेश्वरम् ॥
एवं जपन्तोऽपश्यंस्ते देवाः सर्षिगणास्तदा । रामरावणयोर्युद्धं सुघोरं रोमहर्षणम् ॥ २२
गन्धर्वाप्सरसां सङ्घा दृष्ट्वा युद्धमनूपमम् । गगनं गगनाकारं सागरः सागरोपमः ॥ २३
रामरावणयोर्युद्धं रामरावणयोरिव । एवं ब्रुवन्तो ददृशुस्तद्युद्धं रामरावणम् ॥ २४
ततः क्रुद्धो महाबाहू रघूणां कीर्तिवर्धनम् । संधाय धनुषा रामः क्षुरमाशीविषोपमम् ॥ २५
रावणस्य शिरोऽच्छिन्दच्छ्रीमज्ज्वलितकुण्डलम् । तच्छिरः पतितं भूमौ दृष्टं लोकैस्त्रिभिस्तदा ॥
तस्यैव सदृशं चान्यद्रावणस्योत्थितं शिरः । तत्क्षिप्रं क्षिप्रहस्तेन रामेण क्षिप्रकारिणा ॥ २७
द्वितीयं रावणशिरश्छिन्नं संयति सायकैः । छिन्नमात्रं तु तच्छीर्षं पुनरन्यत् स्म दृश्यते ॥ २८
तदप्यशनिसंकाशैश्छिन्नं रामेण सायकैः । एवमेकशतं[1] छिन्नं शिरसां तुल्यवर्चसाम् ॥ २९
न चैव रावणस्यान्तो दृश्यते जीवितक्षये । ततः सर्वास्त्रविद्वीरः कौसल्यानन्दवर्धनः ॥ ३०
मार्गणैर्बहुभिर्युक्तश्चिन्तयामास राघवः । मारीचो निहतो यैस्तु खरो यैस्तु सदूषणः ॥ ३१
क्रौञ्चारण्ये विराधस्तु कबन्धो दण्डकावने । यैः साला गिरयो भग्ना वाली च क्षुभितोऽम्बुधिः[2] ॥
त इमे सायकाः सर्वे युद्धे प्रात्ययिका मम । किं नु तत्कारणं येन रावणे मन्दतेजसः ॥ ३३
इति चिन्तापरश्चासीदप्रमत्तश्च संयुगे । ववर्ष शरवर्षाणि राघवो रावणोरसि ॥ ३४
रावणोऽपि ततः क्रुद्धो रथस्थो राक्षसेश्वरः । गदामुसलवर्षेण रामं प्रत्यर्दयद्रणे ॥ ३५
तत्प्रवृत्तं महायुद्धं तुमुलं रोमहर्षणम् । अन्तरिक्षे च भूमौ च पुनश्च गिरिमूर्धनि ॥ ३६
देवदानवयक्षाणां पिशाचोरगरक्षसाम् । पश्यतां तन्महद्युद्धं सर्वरात्रमवर्तत ॥ ३७
नैव रात्रं न दिवसं न मुहूर्तं न च क्षणम् । रामरावणयोर्युद्धं विराममुपगच्छति ॥ ३८

१. एवमेव शतम् ति. । २. इदमर्धम् च. छ. नास्ति ।

दशरथसुतराक्षसेन्द्रयोर्जयमनवेक्ष्य रणं स राघवस्य ।
सुरवररथसारथिर्महान् रणगतमेनमुवाच वाक्यमाशु ॥ ३९

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
युद्धकाण्डे रावणैकशतशिरश्छेदनं नाम दशोत्तरशततमः सर्गः

---

## एकादशोत्तरशततमः सर्गः

### पौलस्त्यवधः

अथ संस्मारयामास राघवं मातलिस्तदा । अजानन्निव किं वीर त्वमेनमनुवर्तसे ॥ १
विसृजास्मै वधाय त्वमस्त्रं पैतामहं प्रभो । विनाशकालः कथितो यः सुरैः सोऽद्य वर्तते ॥ २
ततः संस्मारितो रामस्तेन वाक्येन मातलेः । जग्राह स शरं दीप्तं निःश्वसन्तमिवोरगम् ॥ ३
यमस्मै प्रथमं प्रादादगस्त्यो भागवानृषिः । ब्रह्मदत्तं महाबाणममोघं युधि वीर्यवान् ॥ ४
ब्रह्मणा निर्मितं पूर्वमिन्द्रार्थममितौजसा । दत्तं सुरपतेः पूर्वं त्रिलोकजयकाङ्क्षिणः ॥ ५
यस्य वाजेषु पवनः फले पावकभास्करौ । शरीरमाकाशमयं गौरवे मेरुमन्दरौ ॥ ६
जाज्वल्यमानं वपुषा सुपुङ्खं हेमभूषितम् । तेजसा सर्वभूतानां कृतं भास्करवर्चसम् ॥ ७
सधूममिव कालाग्निं दीप्तमाशीविषं यथा । परनागाश्ववृन्दानां भेदनं क्षिप्रकारिणम् ॥ ८
द्वाराणां परिघाणां च गिरीणामपि भेदनम् । नानारुधिरसिक्ताङ्गं मेदोदिग्धं सुदारुणम् ॥ ९
वज्रसारं महानादं नानासमितिदारणम् । सर्ववित्रासनं भीमं श्वसन्तमिव पन्नगम् ॥ १०
कङ्कगृध्रबकानां च गोमायुगणरक्षसाम् । नित्यं भक्ष्यप्रदं युद्धे यमरूपं भयावहम् ॥ ११
नन्दनं वानरेन्द्राणां रक्षसामवसादनम् । वाजितं विविधैर्वाजैश्चारुचित्रैर्गरुत्मतः ॥ १२
तमुत्तमेषुं लोकानामिक्ष्वाकुभयनाशनम् । द्विषतां कीर्तिहरणं प्रहर्षकरमात्मनः ॥ १३
अभिमन्त्र्य ततो रामस्तं महेषुं महाबलः । वेदप्रोक्तेन विधिना संदधे कार्मुके बली ॥ १४
तस्मिन् संधीयमाने तु राघवेण शरोत्तमे । सर्वभूतानि वित्रेसुश्चचाल च वसुंधरा ॥ १५
स रावणाय संक्रुद्धो भृशमायम्य कार्मुकम् । चिक्षेप परमायत्तस्तं शरं मर्मघातिनम् ॥ १६
स वज्र इव दुर्धर्षो वज्रिबाहुविसर्जितः । कृतान्त इव चावार्यो न्यपतद्रावणोरसि ॥ १७
स विसृष्टो महावेगः शरीरान्तकरः शरः । बिभेद हृदयं तस्य रावणस्य दुरात्मनः ॥ १८
रुधिराक्तः स वेगेन जीवितान्तकरः शरः । रावणस्य हरन् प्राणान् विवेश धरणीतलम् ॥ १९
स शरो रावणं हत्वा रुधिरार्द्रीकृतच्छविः । कृतकर्मा निभृतवत् स्वतूणीं पुनरागमत् ॥ २०
तस्य हस्ताद्धतस्याशु कार्मुकं तत्ससायकम् । निपपात सह प्राणैर्भ्रश्यमानस्य जीवितात् ॥ २१
गतासुर्भीमवेगस्तु नैर्ऋतेन्द्रो महाद्युतिः । पपात स्यन्दनाद्भूमौ वृत्रो वज्रहतो यथा ॥ २२

तं दृष्ट्वा पतितं भूमौ हतशेषा निशाचराः । हतनाथा भयत्रस्ताः सर्वतः संप्रदुद्रुवुः ॥ २३
नर्दन्तश्चाभिपेतुस्तान् वानरा द्रुमयोधिनः । दशग्रीववधं दृष्ट्वा विजयं राघवस्य च ॥ २४
अर्दिता वानरैर्हृष्टैर्लङ्कामभ्यपतन् भयात् । गताश्रयत्वात् करुणैर्बाष्पप्रस्रवणैर्मुखैः ॥ २५
ततो विनेदुः संहृष्टा वानरा जितकाशिनः । वदन्तो राघवजयं रावणस्य च तद्वधम् ॥ २६
अथान्तरिक्षे व्यनदत् सौम्यस्त्रिदशदुन्दुभिः । दिव्यगन्धवहस्तत्र मारुतः सुसुखं ववौ ॥ २७
निपपातान्तरिक्षाच्च पुष्पवृष्टिस्तदा भुवि । किरन्ती राघवरथं दुरवापा मनोरमा ॥ २८
राघवस्तवसंयुक्ता गगनेऽपि च शुश्रुवे । साधु साध्विति वागग्र्या दैवतानां महात्मनाम् ॥ २९
आविवेश महाहर्षो देवानां चारणैः सह । रावणे निहते रौद्रे सर्वलोकभयङ्करे ॥ ३०
ततः सकामं सुग्रीवमङ्गदं च महाबलम् । चकार राघवः प्रीतो हत्वा राक्षसपुङ्गवम् ॥ ३१

ततः प्रजग्मुः प्रशमं मरुद्गणा दिशः प्रसेदुर्विमलं नभोऽभवत् ।
मही चकम्पे न हि मारुतो ववौ स्थिरप्रभश्चाप्यभवद्दिवाकरः ॥ ३२
ततस्तु सुग्रीवविभीषणादयः सुहृद्विशेषाः सहलक्ष्मणास्तदा ।
समेत्य हृष्टा विजयेन राघवं रणेऽभिरामं विधिना ह्यपूजयन् ॥ ३३
स तु निहतरिपुः स्थिरप्रतिज्ञः स्वजनबलाभिवृतो रणे रराज ।
रघुकुलनृपनन्दनो महौजास्त्रिदशगणैरभिसंवृतो यथेन्द्रः ॥ ३४

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
युद्धकाण्डे पौलस्त्यवधो नाम एकादशोत्तरशततमः सर्गः

---

## द्वादशोत्तरशततमः सर्गः

### विभीषणविलापः

भ्रातरं निहतं दृष्ट्वा शयानं रामनिर्जितम् । शोकवेगपरीतात्मा विललाप विभीषणः ॥ १
वीर विक्रान्त विख्यात विनीत नयकोविद । महार्हशयनोपेत किं शेषेऽद्य हतो भुवि ॥ २
विक्षिप्य दीर्घौ निश्चेष्टौ भुजावङ्गदभूषितौ । मकुटेनापवृत्तेन भास्कराकारवर्चसा ॥ ३
तदिदं वीर संप्राप्तं मया पूर्वं समीरितम् । काममोहपरीतस्य यत्ते न रुचितं वचः ॥ ४
यन्न दर्पात् प्रहस्तो वा नेन्द्रजिन्नापरे जनाः । न कुम्भकर्णोऽतिरथो नातिकायो नरान्तकः ॥५
न स्वयं [1]त्वममन्येथास्तस्योदर्कोऽयमागतः । गतः सेतुः सुनीतानां गतो धर्मस्य विग्रहः ॥ ६
गतः सत्त्वस्य संक्षेपः प्रस्तावानां गतिर्गता । आदित्यः पतितो भूमौ मग्नस्तमसि चन्द्रमाः ॥७

---

१. बहुमन्येथाः पुना. ।

चित्रभानुः प्रशान्तार्चिर्व्यवसायो निरुद्यमः। अस्मिन्निपतिते भूमौ वीरे शस्त्रभृतां वरे ॥ ८
किं शेषमिव लोकस्य हतवीरस्य सांप्रतम्। रणे राक्षसशार्दूले प्रसुप्त इव पांसुषु ॥ ९
धृतिप्रवालः प्रसहाग्र्यपुष्पस्तपोबलः शौर्यनिबद्धमूलः।
रणे महान् राक्षसराजवृक्षः संमर्दितो राघवमारुतेन ॥ १०
तेजोविषाणः कुलवंशवंशः कोपप्रसादापरगात्रहस्तः।
इक्ष्वाकुसिंहावगृहीतदेहः सुप्तः क्षितौ रावणगन्धहस्ती ॥ ११
पराक्रमोत्साहविजृम्भितार्चिर्निश्वासधूमः स्वबलप्रतापः।
प्रतापवान् संयति राक्षसाग्निर्निर्वापितो रामपयोधरेण ॥ १२
सिंहर्क्षलाङ्गूलककुद्विषाणः परागिजिद्गन्धनगन्धहर्ता।
रक्षोवृषश्चापलकर्णचक्षुः क्षितीश्वरव्याघ्रहतोऽवसन्नः ॥ १३
वदन्तं हेतुमद्वाक्यं परिमृष्टार्थनिश्चयम्। रामः शोकसमाविष्टमित्युवाच विभीषणम् ॥ १४
नायं विनष्टो निश्चेष्टः समरे चण्डविक्रमः। अत्युन्नतमहोत्साहः पतितोऽयमशङ्कितः ॥ १५
नैवं विनष्टाः शोच्यन्ते क्षत्रधर्ममवस्थिताः। वृद्धिमाशंसमाना ये निपतन्ति रणाजिरे ॥ १६
येन सेन्द्रास्त्रयो लोकास्त्रासिता युधि धीमता। तस्मिन् कालसमायुक्ते न कालः परिशोचितुम् ॥
नैकान्तविजयो युद्धे भूतपूर्वः कदाचन। परैर्वा हन्यते वीरः परान् वा हन्ति संयुगे ॥ १८
इयं हि पूर्वैः संदिष्टा गतिः क्षत्रियसंमता। क्षत्रियो निहतः संख्ये न शोच्य इति निश्चयः ॥
तदेवं निश्चयं दृष्ट्वा तत्त्वमास्थाय विज्वरः। यदिहानन्तरं कार्यं कल्प्यं तदनुचिन्तय ॥ २०
तमुक्तवाक्यं विक्रान्तं राजपुत्रं विभीषणः। उवाच शोकसंतप्तो भ्रातुर्हितमनन्तरम् ॥ २१
योऽयं विमर्देषु न भग्नपूर्वः सुरैः समेतैः सह वासवेन।
भवन्तमासाद्य रणे विभग्नो वेलामिवासाद्य यथा समुद्रः ॥ २२
अनेन दत्तानि सुपूजितानि भुक्ताश्च भोगा निभृताश्च भृत्याः।
धनानि मित्रेषु समर्पितानि वैराण्यमित्रेषु च यापितानि ॥ २३
एषोहिताग्निश्च महातपाश्च वेदान्तगः कर्मसु चाग्र्यवीर्यः।
एतस्य यत् प्रेतगतस्य कृत्यं तत्कर्तुमिच्छामि तव प्रसादात् ॥ २४
स तस्य वाक्यैः करुणैर्महात्मा संबोधितः साधु विभीषणेन।
आज्ञापयामास नरेन्द्रसूनुः स्वर्गीयमाधानमदीनसत्त्वः ॥ २५
मरणान्तानि वैराणि निर्वृत्तं नः प्रयोजनम्। क्रियतामस्य संस्कारो ममाप्येष यथा तव ॥ २६

**इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्**
**युद्धकाण्डे विभीषणविलापो नाम द्वादशोत्तरशततमः सर्गः**

---

## त्रयोदशोत्तरशततमः सर्गः

### रावणान्तः पुरपरिदेवनम्

रावणं निहतं श्रुत्वा राघवेण महात्मना । अन्तःपुराद्विनिष्पेतू राक्षस्यः शोककर्शिताः ॥ १
वार्यमाणाः सुबहुशो वेष्टन्त्यः क्षितिपांसुषु । विमुक्तकेश्यो दःखार्ता गावो वत्सहता इव ॥ २
उत्तरेण विनिष्क्रम्य द्वारेण सह राक्षसैः । प्रविश्यायोधनं घोरं विचिन्वत्यो हतं पतिम् ॥ ३
आर्यपुत्रेतिवादिन्यो हा नाथेति च सर्वशः । परिपेतुः कबन्धाङ्कां महीं शोणितकर्दमाम् ॥ ४
ता बाष्पपरिपूर्णाक्ष्यो भर्तृशोकपराजिताः । करेण्व इव नर्दन्त्यो विनेदुर्हतयूथपाः ॥ ५
ददृशुस्तं महावीर्यं महाकायं महाद्युतिम् । रावणं निहतं भूमौ नीलाञ्जनचयोपमम् ॥ ६
ताः पतिं सहसा दृष्ट्वा शयानं रणपांसुषु । निपेतुस्तस्य गात्रेषु च्छिन्ना वनलता इव ॥ ७
बहुमानात् परिष्वज्य काचिदेनं रुरोद ह । चरणौ काचिदालिङ्ग्य काचित् कण्ठेऽवलम्ब्य च ॥
उद्धृत्य च भुजौ काचिद्भूमौ स्म परिवर्तते । हतस्य वदनं दृष्ट्वा काचिन्मोहमुपागमत् ॥ ९
काचिदङ्के शिरः कृत्वा रुरोद मुखमीक्षती । स्नापयन्ती मुखं बाष्पैस्तुषारैरिव पङ्कजम् ॥ १०
एवमार्ताः पतिं दृष्ट्वा रावणं निहतं भुवि । चुक्रुशुर्बहुधा शोकाद्भूयस्ताः पर्यदेवयन् ॥ ११
येन वित्रासितः शक्रो येन वित्रासितो यमः । येन वैश्रवणो राजा पुष्पकेण वियोजितः ॥ १२
गन्धर्वाणामृषीणां च सुराणां च महात्मनाम् । भयं येन महद्दत्तं सोऽयं शेते रणे हतः ॥ १३
असुरेभ्यः सुरेभ्यो वा पन्नगेभ्योऽपि वा तथा । न भयं यो विजानाति तस्येदं मानुषाद्भयम् ॥
अवध्यो देवतानां यस्तथा दानवरक्षसाम् । हतः सोऽयं रणे शेते मानुषेण पदातिना ॥ १५
यो न शक्यः सुरैर्हन्तुं न यक्षैर्नासुरैस्तथा । सोऽयं कश्चिदिवासत्त्वो मृत्युं मर्त्येन लम्भितः ॥
एवं वदन्त्यो बहुधा रुरुदुस्तस्य ताः स्त्रियः । भूय एव च दुःखार्ता विलेपुश्च पुनः पुनः ॥ १७
अशृण्वता च सुहृदां सततं हितवादिनाम् । मरणायाहृता सीता घातिताश्च निशाचराः ॥१८
एताः सममिदानीं ते वयमात्मा च पातिताः । ब्रुवाणोऽपि हितं वाक्यमिष्टो भ्राता विभीषणः ॥
धृष्टं परुषितो मोहात्त्वयात्मवधकाङ्क्षिणा । यदि निर्यातिता ते स्यात्सीता रामाय मैथिली ॥
न नः स्याद्व्यसनं घोरमिदं मूलहरं महत् । वृत्तकामो भवेद्भ्राता रामो मित्रकुलं भवेत् ॥ २१
वयं चाविधवाः सर्वाः सकामा न च शत्रवः । त्वया पुनर्नृशंसेन सीतां संरुन्धता बलात् ॥ २२
राक्षसा वयमात्मा च त्रयं तुल्यं निपातितम् । न कामकारः कामं वा तव राक्षसपुङ्गव ॥ २३
दैवं चेष्टयते सर्वं हतं दैवेन हन्यते । वानराणां विनाशोऽयं रक्षसां च महाहवे ॥ २४

तव चैवमहाबाहो दैवयोगादुपागतः । नैवार्थेन न कामेन विक्रमेण न चाज्ञया ॥ २५
शक्या दैवगतिर्लोके निवर्तयितुमुद्यता । विलेपुरेवं दीनास्ता राक्षसाधिपयोषितः ॥ २६
कुरर्य इव दुःखार्ता बाष्पपर्याकुलेक्षणाः ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
युद्धकाण्डे रावणान्तःपुरपरिदेवनं नाम त्रयोदशोत्तरशततमः सर्गः

———

## चतुर्दशोत्तरशततमः सर्गः

### मन्दोदरीविलापः

तासां विलपमानानां तथा राक्षसयोषिताम् । ज्येष्ठा पत्नी प्रिया दीना भर्तारं समुदैक्षत ॥ १
दशग्रीवं हतं दृष्ट्वा रामेणाचिन्त्यकर्मणा । पतिं मन्दोदरी तत्र कृपणा पर्यदेवयत् ॥ २
ननु नाम महाभाग तव वैश्रवणानुज । क्रुद्धस्य प्रमुखे स्थातुं त्रस्यत्यपि पुरन्दरः ॥ ३
ऋषयश्च महीदेवा गन्धर्वाश्च यशस्विनः । ननु नाम तवोद्वेगाच्चारणाश्च दिशो गताः ॥ ४
स त्वं मानुषमात्रेण रामेण युधि निर्जितः । न व्यपत्रपसे राजन् किमिदं राक्षसर्षभ ॥ ५
कथं त्रैलोक्यमाक्रम्य श्रिया वीर्येण चान्वितम् । अविषह्यं जघान त्वां मानुषो वनगोचरः ॥ ६
मानुषाणामविषये चरतः कामरूपिणः । विनाशस्तव रामेण संयुगे नोपपद्यते ॥ ७
न चैतत् कर्म रामस्य श्रद्दधामि चमूमुखे । सर्वतः समुपेतस्य तव तेनाभिमर्शनम् ॥ ८
यदैव च जनस्थाने राक्षसैर्बहुभिर्वृतः । खरस्तव हतो भ्राता तदैवासौ न मानुषः ॥ ९
यदैव नगरीं लङ्कां दुष्प्रवेशां सुरैरपि । प्रविष्टो हनुमान् वीर्यात्तदैव व्यथिता वयम् ॥ १०
यदैव वानरैर्घोरैर्बद्धः सेतुर्महार्णवे । तदैव हृदयेनाहं शङ्के राममानुषम् ॥ ११
अथवा रामरूपेण कृतान्तः स्वयमागतः । मायां तव विनाशाय विधायाप्रतितर्किताम् ॥ १२
अथवा वासवेन त्वं धर्षितोऽसि महाबल । वासवस्य कुतः शक्तिस्त्वां द्रष्टुमपि संयुगे ॥ १३
व्यक्तमेष महायोगी परमात्मा सनातनः । अनादिमध्यनिधनो महतः परमो महान् ॥ १४
तमसः परमो धाता शङ्खचक्रगदाधरः । श्रीवत्सवक्षा नित्यश्रीरजय्यः शाश्वतो ध्रुवः ॥ १५
मानुषं वपुरास्थाय विष्णुः सत्यपराक्रमः । सर्वैः परिवृतो देवैर्वानरत्वमुपागतैः ॥ १६
सर्वलोकेश्वरः साक्षाल्लोकानां हितकाम्यया । सराक्षसपरीवारं हतवांस्त्वां महाद्युतिः ॥ १७
इन्द्रियाणि पुरा जित्वा जितं त्रिभुवनं त्वया । स्मरद्भिरिव तद्वैरमिन्द्रियैरेव निर्जितः ॥ १८
क्रियतामविरोधश्च राघवेणेति यन्मया । उच्यमानो न गृह्णासि तस्येयं व्युष्टिरागता ॥ १९
अकस्माच्चाभिकामोऽसि सीतां राक्षसपुङ्गव । ऐश्वर्यस्य विनाशाय देहस्य स्वजनस्य च ॥ २०
अरुन्धत्या विशिष्टां तां रोहिण्याश्चापि दुर्मते । सीतां धर्षयता मान्यां त्वया ह्यसदृशं कृतम् ॥

वसुधायाश्च वसुधां श्रियः श्रीं भर्तृवत्सलाम् । सीतां सर्वानवद्याङ्गीमरण्ये विजने शुभाम् ॥ २२
आनयित्वा तु तां दीनां छद्मनात्मस्वदूषण । अप्राप्य चैव तं कामं मैथिलीसंगमे कृतम् ॥ २३
पतिव्रतायास्तपसा नूनं दग्धोऽसि मे प्रभो । तदैव यन्न दग्धस्त्वं धर्षयंस्तनुमध्यमाम् ॥ २४
देवा बिभ्यति ते सर्वे सेन्द्राः साग्निपुरोगमाः । अवश्यमेव लभते फलं पापस्य कर्मणः ॥ २५
घोरं पर्यागते काले कर्ता नास्त्यत्र संशयः । शुभकृच्छुभमाप्नोति पापकृत् पापमश्नुते ॥ २६
विभीषणः सुखं प्राप्तस्त्वं प्राप्तः पापमीदृशम् । सन्त्यन्याः प्रमदास्तुभ्यं रूपेणाभ्यधिकास्तनः ॥
अनङ्गवशमापन्नस्त्वं तु मोहान्न बुध्यसे । न कुलेन न रूपेण न दाक्षिण्येन मैथिली ॥ २८
मयाधिका वा तुल्या वा त्वं तु मोहान्न बुध्यसे । सर्वथा सर्वभूतानां नास्ति मृत्युरलक्षणः २९
तव तावदयं मृत्युर्मैथिलीकृतलक्षणः । सीतानिमित्तजो मृत्युस्त्वया दूरादुपाहृतः ॥ ३०
मैथिली सह रामेण विशोका विहरिष्यति । अल्पपुण्या त्वहं घोरे पतिता शोकसागरे ॥ ३१
कैलासे मन्दरे मेरौ तथा चैत्ररथे वने । देवोद्यानेषु सर्वेषु विहृत्य सहिता त्वया ॥ ३२
विमानेनानुरूपेण या याम्यतुलया श्रिया । पश्यन्ती विविधान् देशांस्तांस्तांश्चित्रस्रगम्बरा ॥
भ्रंशिता कामभोगेभ्यः सास्मि वीर वधात्तव । सैवान्येवास्मि संवृत्ता धिग्राज्ञां चञ्चलाः श्रियः ॥
हा राजन् सुकुमारं ते सुभ्रु सुत्वक् समुन्नसम् । कान्तिश्रीद्युतिभिस्तुल्यमिन्दुपद्मदिवाकरैः ॥
किरीटकूटोज्ज्वलितं ताम्रास्यं दीप्तकुण्डलम् । मदव्याकुललोलाक्षं भूत्वा यत्पानभूमिषु ॥ ३६
विविधस्रग्धरं चारु वल्गुस्मितकथं शुभम् । तदेवाद्य तवेदं हि वक्त्रं न भ्राजते प्रभो ॥ ३७
रामसायकनिर्भिन्नं सिक्तं रुधिरविस्रवैः । विशीर्णमेदोमस्तिष्कं रूक्षं स्यन्दनरेणुभिः ॥ ३८
हा पश्चिमा मे संप्राप्ता दशा वैधव्यकारिणी । या मयासीन्न संबुद्धा कदाचिदपि मन्दया ॥ ३९
पिता दानवराजो मे भर्ता मे राक्षसेश्वरः । पुत्रो मे शक्रनिर्जेता इत्येवं गर्विता भृशम् ॥ ४०
दृप्तारिमर्दनाः शूराः प्रख्यातबलपौरुषाः । अकुतश्चिद्भया नाथा ममेत्यासीन्मतिर्दृढा ॥ ४१
तेषामेवंप्रभावाणां युष्माकं राक्षसर्षभ । कथं भयमसंबुद्धं मानुषादिदमागतम् ॥ ४२
स्निग्धेन्द्रनीलनीलं तु प्रांशुशैलोपमं महत् । केयूराङ्गदवैदूर्यमुक्तादामस्रगुज्ज्वलम् ॥ ४३
कान्तं विहारेष्वधिकं दीप्तं संग्राममूमिषु । भात्याभरणभाभिर्यद्विद्युद्भिरिव तोयदः ॥ ४४
तदेवाद्य शरीरं ते तीक्ष्णैर्नैकैः शरैश्चितम् । पुनर्दुर्लभसंस्पर्शं परिष्वक्तुं न शक्यते ॥ ४५
श्वाविदः शललैर्यद्वद्बाणैर्लग्नैर्निरन्तरम् । स्वर्पितैर्मर्मसु भृशं संछिन्नस्नायुबन्धनम् ॥ ४६
क्षितौ निपतितं राजञ्श्यावं रुधिरसच्छवि । वज्रप्रहाराभिहतो विकीर्ण इव पर्वतः ॥ ४७
हा स्वप्नः सत्यमेवेदं त्वं रामेण कथं हतः । त्वं मृत्योरपि मृत्युः स्याः कथं मृत्युवशं गतः ॥ ४८
त्रैलोक्यवसुभोक्तारं त्रैलोक्योद्वेगदं महत् । जेतारं लोकपालानां क्षेप्तारं शंकरस्य च ॥ ४९
दृप्तानां निग्रहीतारमाविष्कृतपराक्रमम् । लोकक्षोभयितारं च नादैर्भूतविराविणम् ॥ ५०

ओजसा दृप्तवाक्यानां वक्तारं रिपुसंनिधौ । स्वयूथभृत्यवर्गाणां गोप्तारं भीमविक्रमम् ॥ ५१
हन्तारं दानवेन्द्राणां यक्षाणां च सहस्रशः । निवातकवचानां च संग्रहीतारमीश्वरम् ॥ ५२
नैकयज्ञविलोप्तारं त्रातारं स्वजनस्य च । धर्मव्यवस्थाभेत्तारं मायास्रष्टारमाहवे ॥ ५३
देवासुरनृकन्यानामाहर्तारं ततस्ततः । शत्रुस्त्रीशोकदातारं नेतारं स्वजनस्य च ॥ ५४
लंकाद्वीपस्य गोप्तारं कर्तारं भीमकर्मणाम् । अस्माकं कामभोगानां दातारं रथिनां वरम् ॥ ५५
एवंप्रभावं भर्तारं दृष्ट्वा रामेण पातितम् । स्थिरास्मि या देहमिमं धारयामि हतप्रिया ॥ ५६
शयनेषु महार्हेषु शयित्वा राक्षसेश्वर । इह कस्मात् प्रसुप्तोऽसि धरण्यां रेणुपाटलः ॥ ५७
यदा मे तनयः शस्तो लक्ष्मणेनेन्द्रजिद्युधि । तदाम्म्यभिहता तीव्रमद्य त्वस्मिन्निपातिता ॥ ५८
नाहं बन्धुजनैर्हीना हीना नाथेन तु त्वया । विहीना कामभोगैश्च शोचिष्ये शाश्वतीः समाः ॥
प्रपन्नो दीर्घमध्वानं राजन्नद्यसुदुर्गमम् । नय मामपि दुःखार्तां न जीविष्ये त्वया विना ॥ ६०
कस्मात्त्वं मां विहायेह कृपणां गन्तुमिच्छसि । दीनां विलपितैर्मन्दां किं वा मां नाभिभाषसे ॥
दृष्ट्वा न खल्वसि क्रुद्धो मामिहानवकुण्ठिताम् । निर्गतां नगरद्वारात् पद्भ्यामेवागतां प्रभो ॥६२
पश्येष्टदार दारांस्ते भ्रष्टलज्जावकुण्ठितान् । बहिर्निष्पतितान् सर्वान् कथं दृष्ट्वा न कुप्यसि ॥
अयं क्रीडासहायस्तेऽनाथो लालप्यते जनः । न चैनमाश्वासयसे किं वा न बहु मन्यसे ॥ ६४
यास्त्वया विधवा राजन् कृता नैकाः कुलस्त्रियः । पतिव्रता धर्मपरा गुरुशुश्रूषणे रताः ॥ ६५
ताभिः शोकाभितप्ताभिः शप्तः परवशं गतः । त्वया विप्रकृताभिर्यत्तदा शप्तं तदागतम् ॥ ६६
प्रवादः सत्य एवायं त्वां प्रति प्रायशो नृप । पतिव्रतानां नाकस्मात् पतन्त्यश्रूणि भूतले ॥ ६७
कथं च नाम ते राजँल्लोकानाक्रम्य तेजसा । नारीचौर्यमिदं क्षुद्रं कृतं शौण्डीर्यमानिना ॥ ६८
अपनीयाश्रमाद्रामं यन्मृगच्छद्मना त्वया । आनीता रामपत्नी सा तत्ते कातर्यलक्षणम् ॥ ६९
कातर्यं च न ते युद्धे कदाचित् संस्मराम्यहम् । तत्तु भाग्यविपर्यासान्नूनं ते पक्वलक्षणम् ॥ ७०
अतीतानागतार्थज्ञो वर्तमानविचक्षणः । मैथिलीमाहृतां दृष्ट्वा ध्यात्वा निःश्वस्य चायतम् ॥ ७१
सत्यवाक् स महाबाहो देवरो मे यदब्रवीत् । सोऽयं राक्षसमुख्यानां विनाशः पर्युपस्थितः ॥७२
कामक्रोधसमुत्थेन व्यसनेन प्रसङ्गिना । निर्वृत्तस्त्वत्कृतेऽनर्थः सोऽयं मूलहरो महान् ॥ ७३
त्वया कृतमिदं सर्वमनाथं रक्षसां कुलम् । न हि त्वं शोचितव्यो मे प्रख्यातबलपौरुषः ॥ ७४
स्त्रीस्वभावात्तु मे बुद्धिः कारुण्ये परिवर्तते । सुकृतं दुष्कृतं च त्वं गृहीत्वा स्वां गतिं गतः ॥
आत्मानमनुशोचामि त्वद्वियोगेन दुःखिता । सुहृदां हितकामानां न श्रुतं वचनं त्वया ॥ ७६

भ्रातॄणां चापि कार्त्स्न्येन हितमुक्तं त्वयानघ। हेत्वर्थयुक्तं विधिवच्छ्रेयस्करमदारुणम्॥ ७७
विभीषणेनाभिहितं न कृतं हेतुमत्त्वया। मारीचकुम्भकर्णाभ्यां वाक्यं मम पितुस्तदा॥ ७८
न श्रुतं वीर्यमत्तेन तस्येदं फलमीदृशम्। नीलजीमूतसंकाश पीताम्बर शुभाङ्गद॥ ७९
स्वगात्राणि विनिक्षिप्य किं शेषे रुधिराप्लुतः। प्रसुप्त इव शोकार्तां किं मां न प्रतिभाषसे॥
महावीर्यस्य दक्षस्य संयुगेष्वपलायिनः। यातुधानस्य दौहित्र किं च मां नाभ्युदीक्षसे॥ ८१
उत्तिष्ठोत्तिष्ठ किं शेषे प्राप्ते परिभवे नवे। अद्य वै निर्भया लङ्कां प्रविष्टाः सूर्यरश्मयः॥ ८२
येन सूदयसे शत्रून् समरे सूर्यवर्चसा। वज्रो वज्रधरस्येव सोऽयं ते सततार्चितः॥ ८३
रणे शत्रुप्रहरणो हेमजालपरिष्कृतः। परिघो व्यवकीर्णस्ते बाणैश्छिन्नः सहस्रधा॥ ८४
प्रियामिवोपगूह्य त्वं शेषे समरमेदिनीम्। अप्रियामिव कस्माच्च मां नेच्छस्यभिभाषितुम्॥ ८५
धिगस्तु हृदयं यस्या ममेदं न सहस्रधा। त्वयि पञ्चत्वमापन्ने फलते शोकपीडितम्॥ ८६
इत्येवं विलपन्त्येव बाष्पव्याकुललोचना। स्नेहावस्कन्नहृदया देवी मोहमुपागमत्॥ ८७
कश्मलाभिहता सन्ना बभौ सा रावणोरसि। सन्ध्यानुरक्ते जलदे दीप्ता विद्युदिवासिते॥ ८८
तथागतां समुत्पत्य सपत्न्यस्ता भृशातुराः। पर्यवस्थापयामासू रुदत्यो रुदतीं भृशम्॥ ८९
न ते सुविदिता देवि लोकानां स्थितिरध्रुवा। दशाविभागपर्याये राज्ञां चञ्चलया श्रिया॥ ९०
इत्येवमुच्यमाना सा सशब्दं प्ररुरोद ह। स्नापयन्ती त्वभिमुखौ स्तनावस्राम्बुविस्रवैः॥ ९१
एतस्मिन्नन्तरे रामो विभीषणमुवाच ह। संस्कारः क्रियतां भ्रातुः स्त्रियश्चैता निवर्तय॥ ९२
तं प्रश्रितस्ततो रामं श्रुतवाक्यो विभीषणः। विमृश्य बुद्ध्या धर्मज्ञो धर्मार्थसहितं वचः॥ ९३
रामस्यैवानुवृत्त्यर्थमुत्तरं प्रत्यभाषत। त्यक्तधर्मव्रतं क्रूरं नृशंसमनृतं तथा॥ ९४
नाहमर्होऽस्मि संस्कर्तुं परदाराभिमर्शिनम्। भ्रातृरूपो हि मे शत्रुरेष सर्वाहिते रतः॥ ९५
रावणो नार्हते पूजां पूज्योऽपि गुरुगौरवात्। नृशंस इति मां कामं वक्ष्यन्ति मनुजा भुवि॥ ९६
श्रुत्वा तस्यागुणान् सर्वे वक्ष्यन्ति सुकृतं पुनः। तच्छ्रुत्वा परमप्रीतो रामो धर्मभृतां वरः॥ ९७
विभीषणमुवाचेदं वाक्यज्ञो वाक्यकोविदम्। तवापि मे प्रियं कार्यं त्वत्प्रभावाच्च मे जितम्॥
अवश्यं तु क्षमं वाच्यो मया त्वं राक्षसेश्वर। अधर्मानृतसंयुक्तः कामं त्वेष निशाचरः॥ ९९
तेजस्वी बलवाञ्शूरः संयुगेषु च नित्यशः। शतक्रतुमुखैर्देवैः श्रूयते न पराजितः॥ १००
महात्मा बलसंपन्नो रावणो लोकरावणः। मरणान्तानि वैराणि निर्वृत्तं नः प्रयोजनम्॥ १०१
क्रियतामस्य संस्कारो ममाप्येष यथा तव। त्वत्सकाशाद्दशग्रीवः संस्कारं विधिपूर्वकम्॥ १०२
प्राप्तुमर्हति धर्मज्ञ त्वं यशोभाग्भविष्यसि। राघवस्य वचः श्रुत्वा त्वरमाणो विभीषणः॥ १०३

संस्कारेणानुरूपेण योजयामास रावणम्[1] । चितां चन्दनकाष्ठानां पद्मकोशीरसंवृताम् ॥ १०४
ब्राह्मया संवेशयांचक्रू राङ्कवास्तरणावृताम् । वर्तते वेदविहितो राज्ञो वै पश्चिमः क्रतुः ॥ १०५
प्रचक्रू राक्षसेन्द्रस्य पितृमेधमनुक्रमम् । वेदिं च दक्षिणप्राच्यां यथास्थानं च पावकम् ॥ १०६
पृषदाज्येन संपूर्णं स्रुवं सर्वे प्रचिक्षिपुः । पादयोः शकटं प्रादुरन्तरूर्वोरुलूखलम् ॥ १०७
दारुपात्राणि सर्वाणि अरणिं चोत्तरारणिम् । दत्त्वा तु मुसलं चान्यद्यथास्थानं विचक्षणाः ॥
शास्त्रदृष्टेन विधिना महर्षिविहितेन च । तत्र मेध्यं पशुं हत्वा राक्षसेन्द्रस्य राक्षसाः ॥ १०९
परिस्तरणिकां राज्ञो घृताक्तां समवेशयन् । गन्धैर्माल्यैरलङ्कृत्य रावणं दीनमानसाः ॥ ११०
विभीषणसहायास्ते वस्त्रैश्च विविधैरपि । लाजैश्चावकिरन्ति स्म बाष्पपूर्णमुखास्तदा ॥ १११
ददौ च पावकं तस्य विधियुक्तं विभीषणः । स्नात्वा चैवार्द्रवस्त्रेण तिलान् दूर्वाभिमिश्रितान् ॥
उदकेन च संमिश्रान् प्रदाय विधिपूर्वकम् । प्रदाय चोदकं तस्मै मूर्ध्ना चैनं नमस्य च ॥
ताः स्त्रियोनुनयामास सान्त्वमुक्त्वा पुनः पुनः । गम्यतामिति ताः सर्वा विविशुर्नगरं तदा ॥
प्रविष्टासु च सर्वासु राक्षसीषु विभीषणः । रामपार्श्वमुपागम्य तदातिष्ठद्विनीतवत् ॥ ११५
रामोऽपि सह सैन्येन ससुग्रीवः सलक्ष्मणः । हर्षं लेभे रिपुं हत्वा यथा वृत्रं शतक्रतुः[2] ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
युद्धकाण्डे मन्दोदरीविलापो नाम चतुर्दशोत्तरशततमः सर्गः

## पञ्चदशोत्तरशततमः सर्गः

### विभीषणाभिषेकः

ते रावणवधं दृष्ट्वा देवगन्धर्वदानवाः । जग्मुः स्वैः स्वैर्विमानैस्ते कथयन्तः शुभाः कथाः ॥ १

१. अस्यानन्तरम्—ततः प्रविश्य लङ्कां तु राक्षसेन्द्रो विभीषणः । रावणस्याग्निहोत्रं च समासाद्य विनिस्सृतः ॥ स प्रविश्य पुरीं लङ्कां राक्षसेन्द्रो विभीषणः । रावणस्याग्निहोत्रं तु निर्यापयति सत्वरम् ॥ शकटान् दारुरूपाणि अग्नीन् वै याजकांस्तथा । तथा चन्दनकाष्ठानि काष्ठानि विविधानि च । अगरूणि सुगन्धीनि गन्धांश्च सुरभींस्तथा । मणिमुक्ताप्रवालानि निर्यापयति राक्षसः । आजगाम मुहूर्तेन राक्षसैः परिवारितः ॥ ततो माल्यवता सार्धं क्रियामेव चकार सः । सौवर्णीं शिबिकां दिव्यामारोप्य क्षौमवाससम् ॥ रावणं राक्षसाधीशमश्रुपूर्णमुखा द्विजाः । तूर्यघोषैश्च विविधैः स्तुवद्भिश्चाभिनन्दिताम् । पताकाभिश्च चित्राभिः सुमनोभिश्च चित्रिताम् । उत्क्षिप्य शिबिकां तां तु विभीषणपुरोगमाः ॥ दक्षिणाभिमुखाः सर्वे गृह्य काष्ठानि भेजिरे । अग्नयो दीप्यमानास्ते तदाध्वर्युसमीरिताः ॥ शरणाभिगताः सर्वे पुरस्तात्तस्य ते ययुः । अन्तःपुराणि सर्वाणि रुदमानानि सत्वरम् । पृष्ठतोऽनुययुस्तानि प्लवमानानि सर्वतः ॥ रावणं प्रयते देशे स्थाप्य ते भृशदुःखिताः ॥—इति पुना. ।

२. अस्यानन्तरम्—ततो विमुक्त्वा सशरं शरासनं महेन्द्रदत्तं कवचं च तन्महत् । विमुच्य रोषं रिपुनिग्रहात्ततो रामः स सौम्यत्वमुपागतोऽरिहा ॥—इति पुना. ।

रावणस्य वधं घोरं राघवस्य पराक्रमम् । सुयुद्धं वानराणां च सुग्रीवस्य च मन्त्रितम् ॥ २
अनुरागं च वीर्यं च [1]मारुतेर्लक्ष्मणस्य च । कथयन्तो महाभागा जग्मुर्हृष्टा यथागतम् ॥ ३
राघवस्तु रथं दिव्यमिन्द्रदत्तं शिखिप्रभम् । अनुज्ञाय महाभागो मातलिं प्रत्यपूजयत् ॥ ४
राघवेणाभ्यनुज्ञातो मातलिः शक्रसारथिः । दिव्यं तं रथमास्थाय दिवमेवारुरोह सः ॥ ५
तस्मिंस्तु दिवमारूढे सुरसारथिसत्तमे । राघवः परमप्रीतः सुग्रीवं परिषस्वजे ॥ ६
परिष्वज्य च सुग्रीवं लक्ष्मणेन प्रचोदितः । पूज्यमानो हरिश्रेष्ठैराजगाम बलालयम् ॥ ७
अब्रवीच्च तदा रामः समीपपरिवर्तिनम् । सौमित्रिं सत्त्वसंपन्नं लक्ष्मणं दीप्ततेजसम् ॥ ८
विभीषणमिमं सौम्य लङ्कायामभिषेचय । अनुरक्तं च भक्तं च मम चैवोपकारिणम् ॥ ९
एष मे परमः कामो यदीमं रावणानुजम् । लङ्कायां सौम्य पश्येयमभिषिक्तं विभीषणम् ॥ १०
एवमुक्तस्तु सौमित्री राघवेण महात्मना । तथेत्युक्त्वा तु संहृष्टः सौवर्णं घटमाददे ॥ ११
तं घटं वानरेन्द्राणां हस्ते दत्त्वा मनोजवान् । आदिदेश महासत्त्वान् समुद्रसलिलानये ॥ १२
अतिशीघ्रं ततो गत्वा वानरास्तु महाबलाः । आगतास्तज्जलं गृह्य समुद्राद्वानरोत्तमाः ॥ १३
ततस्त्वेकं घटं गृह्य संस्थाप्य परमासने । घटेन तेन सौमित्रिरभ्यषिञ्चद्विभीषणम् ॥ १४
लङ्कायां रक्षसां मध्ये राजानं रामशासनात् । विधिना मन्त्रदृष्टेन सुहृद्गणसमावृतम् ॥ १५
अभ्यषिञ्चत् स धर्मात्मा शुद्धात्मानं विभीषणम् । तस्यामात्या जहृषिरे भक्ता ये चास्य राक्षसाः ॥
दृष्ट्वाभिषिक्तं लङ्कायां राक्षसेन्द्रं विभीषणम् । स तद्राज्यं महत् प्राप्य रामदत्तं विभीषणः ॥
प्रकृतीः सान्त्वयित्वा च ततो राममुपागमत् । अक्षतान् मोदकाँल्लाजान् दिव्याः सुमनसस्तदा ॥
आजह्रुरथ संहृष्टाः पौरास्तस्मै निशाचराः । स तान् गृहीत्वा दुर्धर्षो राघवाय न्यवेदयत् ॥ १९
मङ्गल्यं मङ्गलं सर्वं लक्ष्मणाय च वीर्यवान् । कृतकार्यं समृद्धार्थं दृष्ट्वा रामो विभीषणम् ॥ २०
प्रतिजग्राह तत्सर्वं तस्यैव प्रियकाम्यया । ततः शैलोपमं वीरं प्राञ्जलिं पार्श्वतः स्थितम् ॥ २१
अब्रवीद्राघवो वाक्यं हनुमन्तं प्लवङ्गमम् । अनुमान्य महाराजमिमं सौम्य विभीषणम् ॥ २२
गच्छ सौम्य पुरीं लङ्कामनुज्ञाप्य यथाविधि । प्रविश्य रावणगृहं विजयेनाभिनन्द्य च ॥ २३
वैदेह्यै मां कुशलिनं ससुग्रीवं सलक्ष्मणम् । आचक्ष्व जयतां श्रेष्ठ रावणं च मया हतम् ॥ २४
प्रियमेतदुदाहृत्य मैथिल्यास्त्वं हरीश्वर । प्रतिगृह्य च संदेशमुपावर्तितुमर्हसि ॥ २५

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
युद्धकाण्डे विभीषणाभिषेको नाम पञ्चदशोत्तरशततमः सर्गः

१. सौमित्रेः च. छ. ।

# षोडशोत्तरशततमः सर्गः

## मैथिलीप्रियनिवेदनम्

इति प्रतिसमादिष्टो हनुमान् मारुतात्मजः । प्रविवेश पुरीं लङ्कां पूज्यमानो निशाचरैः[1] ॥ १
प्रविश्य च महातेजा रावणस्य निवेशनम् । ददर्श मृजया हीनां सातङ्कामिव रोहिणीम् ॥ २
वृक्षमूले निरानन्दां राक्षसीभिः समावृताम् । निभृतः प्रणतः प्रह्वः सोऽभिगम्याभिवाद्य च ॥३
दृष्ट्वा तमागतं देवी हनुमन्तं महाबलम् । तूष्णीमास्त तदा दृष्ट्वा स्मृत्वा प्रमुदिताभवत् ॥ ४
सौम्यं दृष्ट्वा मुखं तस्या हनुमान् प्लवगोत्तमः । रामस्य वचनं सर्वमाख्यातुमुपचक्रमे ॥ ५
वैदेहि कुशली रामः ससुग्रीवलक्ष्मणः । विभीषणसहायश्च हरीणां सहितो बलैः ॥ ६
कुशलं चाह सिद्धार्थो हतशत्रुररिंदमः । विभीषणसहायेन रामेण हरिभिः सह ॥ ७
निहतो रावणो देवि लक्ष्मणस्य नयेन च । पृष्ट्वा तु कुशलं रामो वीरस्त्वां रघुनन्दनः ॥ ८
अब्रवीत् परमप्रीतः कृतार्थेनान्तरात्मना । प्रियमाख्यामि ते देवि त्वां तु भूयः सभाजये ॥ ९
दिष्ट्या जीवसि धर्मज्ञे जयेन मम संयुगे । लब्धो नो विजयः सीते स्वस्था भव गतव्यथा ॥
रावणश्च हतः शत्रुर्लङ्का चेयं वशे स्थिता । मया ह्यलब्धनिद्रेण दृढेन तव निर्जये ॥ ११
प्रतिज्ञैषा विनिस्तीर्णा बद्ध्वा सेतुं महोदधौ । संभ्रमश्च न गन्तव्यो वर्तन्त्या रावणालये ॥ १२
विभीषणविधेयं हि लङ्कैश्वर्यमिदं कृतम् । तदाश्वसिहि विश्वस्ता स्वगृहे परिवर्तसे ॥ १३
अयं चाभ्येति संहृष्टस्त्वद्दर्शनसमुत्सुकः । एवमुक्ता समुत्पत्य सीता शशिनिभानना ॥ १४
प्रहर्षेणावरुद्धा सा व्याजहार न किंचन । अब्रवीच्च हरिश्रेष्ठः सीतामप्रतिजल्पतीम् ॥ १५
किं नु चिन्तयसे देवि किं नु मां नाभिभाषसे । एवमुक्ता हनुमता सीता धर्मे व्यवस्थिता ॥
अब्रवीत् परमप्रीता हर्षगद्गदया गिरा । प्रियमेतदुपश्रुत्य भर्तुर्विजयसंश्रितम् ॥ १७
प्रहर्षवशमापन्ना निर्वाक्यास्मि क्षणान्तरम् । न हि पश्यामि सदृशं चिन्तयन्ती प्लवंगम ॥ १८
मत्प्रियाख्यानकस्येह तव प्रत्यभिनन्दनम् । न हि पश्यामि तत् सौम्य पृथिव्यामपि वानर ॥
सदृशं मत्प्रियाख्याने तव दातुं भवेत् समम् । हिरण्यं वा सुवर्णं वा रत्नानि विविधानि च ॥
राज्यं वा त्रिषु लोकेषु नैतदर्हति भाषितुम् । एवमुक्तस्तु वैदेह्या प्रत्युवाच प्लवङ्गमः ॥ २१
गृहीतप्राञ्जलिर्वाक्यं सीतायाः प्रमुखे स्थितः । भर्तुः प्रियहिते युक्ते भर्तुर्विजयकाङ्क्षिणि ॥
स्निग्धमेवंविधं वाक्यं त्वमेवार्हसि भाषितुम् । तवैतद्वचनं सौम्ये सारवत् स्निग्धमेव च ॥
रत्नौघाद्विविधाच्चापि देवराज्याद्विशिष्यते । अर्थतश्च मया प्राप्ता देवराज्यादयो गुणाः ॥ २४

१. अस्यार्धस्य स्थाने—प्रविश्य च पुरीं हनूमान् वृक्षवाटिकाम् ॥ संप्रविश्य यथान्यायं सीतया लङ्कामनुज्ञाप्य विभीषणम् । ततस्तेनाभ्यनुज्ञातो विदितो हरिः ॥—इति पुना. ।

हतशत्रुं विजयिनं रामं पश्यामि सुस्थितम् । तस्य तद्वचनं श्रुत्वा मैथिली जनकात्मजा ॥ २५
ततः शुभतरं वाक्यमुवाच पवनात्मजम् । अतिलक्षणसंपन्नं माधुर्यगुणभूषितम् ॥ २६
बुद्ध्या ह्यष्टाङ्गया युक्तं त्वमेवार्हसि भाषितुम् । श्लाघनीयोऽनिलस्य त्वं पुत्रः परमधार्मिकः ॥
बलं शौर्यं श्रुतं सत्त्वं विक्रमो दाक्ष्यमुत्तमम् । तेजः क्षमा धृतिर्धैर्यं विनीतत्वं न संशयः ॥ २८
एते चान्ये च बहवो गुणास्त्वय्येव शोभनाः । अथोवाच पुनः सीतामसंभ्रान्तो विनीतवत् ॥
प्रगृहीताञ्जलिर्हर्षात् सीतायाः प्रमुखे स्थितः । इमास्तु खलु राक्षस्यो यदि त्वमनुमन्यसे ॥३०
हन्तुमिच्छाम्यहं सर्वा याभिस्त्वं तर्जिता पुरा । क्लिश्यन्तीं पतिदेवां त्वामशोकवनिकां गताम् ॥
घोररूपसमाचाराः क्रूराः क्रूरतरेक्षणाः । राक्षस्यो दारुणकथा वरमेतत् प्रयच्छ मे ॥ ३२
मुष्टिभिः पाणिभिः सर्वाश्चरणैश्चैव शोभने । इच्छामि विविधैर्घातैर्हन्तुमेताः सुदारुणाः ॥ ३३
घातैर्जानुप्रहारैश्च दशनानां च पातनैः । भक्षणैः कर्णनासानां केशानां लुञ्चनैस्तथा ॥ ३४
भृशं[1] शुष्कमुखीभिश्च दारुणैर्लङ्घनैर्हतैः । निपात्य हन्तुमिच्छामि तव विप्रियकारिणीः ॥ ३५
एवंप्रकारैर्बहुभिर्विप्रकारैर्यशस्विनि । हन्तुमिच्छाम्यहं देवि तवेमाः कृतकिल्बिषाः ॥ ३६
एवमुक्ता हनुमता वैदेही जनकात्मजा । उवाच धर्मसहितं हनुमन्तं यशस्विनी ॥ ३७
राजसंश्रयवश्यानां कुर्वतीनां पराज्ञया । विधेयानां च दासीनां कः कुप्येद्वानरोत्तम ॥ ३८
भाग्यवैषम्ययोगेन पुरा दुश्चरितेन च । मयैतत् प्राप्यते सर्वं स्वकृतं ह्युपभुज्यते ॥ ३९
प्राप्तव्यं तु दशायोगान्मयैतदिति निश्चितम् । दासीनां रावणस्याहं मर्षयामीह दुर्बला ॥ ४०
आज्ञप्ता रावणेनैता राक्षस्यो मामतर्जयन् । हते तस्मिन्न कुर्युर्हि तर्जनं वानरोत्तम ॥ ४१
अयं व्याघ्रसमीपे तु पुराणो धर्मसंहितः । ऋक्षेण गीतः श्लोको मे तन्निबोध प्लवङ्गम ॥ ४२
न परः पापमादत्ते परेषां पापकर्मणाम् । समयो रक्षितव्यस्तु सन्तश्चारित्रभूषणाः ॥ ४३
पापानां वा शुभानां वा वधार्हाणां प्लवङ्गम । कार्यं करुणमार्येण न कश्चिन्नापराध्यति ॥ ४४
लोकहिंसाविहाराणां रक्षसां कामरूपिणाम् । कुर्वतामपि पापानि नैव कार्यमशोभनम् ॥ ४५
एवमुक्तस्तु हनुमान् सीतया वाक्यकोविदः । प्रत्युवाच ततः सीतां रामपत्नीं यशस्विनीम् ॥
युक्ता रामस्य भवती धर्मपत्नी यशस्विनी । प्रतिसंदिश मां देवि गमिष्ये यत्र राघवः ॥ ४७
एममुक्ता हनुमता वैदेही जनकात्मजा । अब्रवीद्द्रष्टुमिच्छामि भर्तारं वानरोत्तम ॥ ४८
तस्यास्तद्वचनं श्रुत्वा हनुमान् मारुतात्मजः । हर्षयन् मैथिलीं वाक्यमुवाचेदं महाद्युतिः ॥ ४९

१. नखैः च. छ. ।

पूर्णचन्द्राननं रामं द्रक्ष्यस्यार्ये सलक्ष्मणम् । स्थिरमित्रं हतामित्रं शचीव त्रिदशेश्वरम् ॥ ५०
तामेवमुक्त्वा राजन्तीं सीतां साक्षादिव श्रियम् । आजगाम महावेगो हनुमान् यत्र राघवः ५१

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
युद्धकाण्डे मैथिलीप्रियनिवेदनं नाम षोडशोत्तरशततमः सर्गः

---

## सप्तदशोत्तरशततमः सर्गः

### सीताभर्तृमुखोदीक्षणम्

स उवाच महाप्राज्ञमभिगम्य प्लवङ्गमः । रामं वचनमर्थज्ञो वरं सर्वधनुष्मताम् ॥ १
यन्निमित्तोऽयमारम्भः कर्मणां च फलोदयः । तां देवीं शोकसंतप्तां मैथिलीं द्रष्टुमर्हसि ॥ २
सा हि शोकसमाविष्टा बाष्पपर्याकुलेक्षणा । मैथिली विजयं श्रुत्वा तव हर्षमुपागमत् ॥ ३
पूर्वकात् प्रत्ययाच्चाहमुक्तो विश्वस्तया तया । भर्तारं द्रष्टुमिच्छामि कृतार्थं सहलक्ष्मणम् ॥ ४
एवमुक्तो हनुमता रामो धर्मभृतां वरः । अगच्छत् सहसा ध्यानमीषद्बाष्पपरिप्लुतः ॥ ५
दीर्घमुष्णं विनिःश्वस्य मेदिनीमवलोकयन् । उवाच मेघसंकाशं विभीषणमुपस्थितम् ॥ ६
दिव्याङ्गरागां वैदेहीं दिव्याभरणभूषिताम् । इह सीतां शिरःस्नातामुपस्थापय मा चिरम् ॥ ७
एवमुक्तस्तु रामेण त्वरमाणो विभीषणः । प्रविश्यान्तःपुरं सीतां स्वाभिः स्त्रीभिरचोदयत्[1] ॥८
दिव्याङ्गरागा वैदेही दिव्याभरणभूषिता । यानमारोह भद्रं ते भर्ता त्वां द्रष्टुमिच्छति ॥ ९
एवमुक्ता तु वैदेही प्रत्युवाच विभीषणम् । अस्नाता द्रष्टुमिच्छामि भर्तारं राक्षसाधिप ॥ १०
तस्यास्तद्वचनं श्रुत्वा प्रत्युवाच विभीषणः । यदाह राजा भर्ता ते तत्तथा कर्तुमर्हसि ॥ ११
तस्य तद्वचनं श्रुत्वा मैथिली भर्तृदेवता । भर्तृभक्तिव्रता साध्वी तथेति प्रत्यभाषत ॥ १२
ततः सीतां शिरःस्नातां युवतीभिरलङ्कृताम् । महार्हाभरणोपेतां महार्हाम्बरधारिणीम् ॥ १३
आरोप्य शिबिकां दीप्तां परार्ध्याम्बरसंवृताम् । रक्षोभिर्बहुभिर्गुप्तामाजहार विभीषणः ॥ १४
सोऽभिगम्य महात्मानं ज्ञात्वापि ध्यानमास्थितम् । प्रणतश्च प्रहृष्टश्च प्राप्तां सीतां न्यवेदयत् ॥
तामागतामुपश्रुत्य रक्षोगृहचिरोषिताम् । हर्षो दैन्यं च रोषश्च त्रयं राघवमाविशत् ॥ १६
ततः पार्श्वगतं दृष्ट्वा सविमर्शं विचारयन् । विभीषणमिदं वाक्यमहृष्टं राघवोऽब्रवीत् ॥ १७
राक्षसाधिपते सौम्य नित्यं मद्विजये रत । वैदेही सन्निकर्षं मे शीघ्रं समुपगच्छतु ॥ १८

१. अस्यानन्तरम्—स्थाने सीतां शिरःस्नातां त्वरन् । तत्र सीतां महाभागां दृष्ट्वोवाच विभीषणः ॥ गन्धाभरणभूषिताम् । सर्वमङ्गलसंयुक्तामित्याज्ञाप्य मूर्ध्नि बद्धाञ्जलिः श्रीमान् विनीतो राक्षसाधिपः । महाबलः ॥ ततस्ताभिः प्रसन्नाभी राक्षसीभिरभि- इति क. घ. ।

स तद्वचनमाज्ञाय राघवस्य विभीषणः । तूर्णमुत्सारणे यत्नं कारयामास सर्वतः ॥ १९
कञ्चुकोष्णीषिणस्तत्र वेत्रजर्जरपाणयः । उत्सारयन्तः पुरुषाः समन्तात् परिचक्रमुः ॥ २०
ऋक्षाणां वानराणां च राक्षसानां च सर्वशः । बृन्दान्युत्सार्यमाणानि दूरमुत्ससृजुस्तदा ॥ २१
तेषामुत्सार्यमाणानां सर्वेषां ध्वनिरुत्थितः । वायुनोद्वर्तमानस्य सागरस्येव निःस्वनः ॥ २२
उत्सार्यमाणांस्तान् दृष्ट्वा समन्ताज्जातसंभ्रमान् । दाक्षिण्यात्तदमर्षाच्च वारयामास राघवः ॥ २३
संरब्धश्चाब्रवीद्रामश्चक्षुषा प्रदहन्निव । विभीषणं महाप्राज्ञं सोपालम्भमिदं वचः ॥ २४
किमर्थं मामनादृत्य क्लिश्यतेऽयं त्वया जनः । निवर्तयैनमुद्योगं जनोऽयं स्वजनो मम ॥ २५
न गृहाणि न वस्त्राणि न प्राकारास्तिरस्क्रियाः । नेदृशा राजसत्कारा वृत्तमावरणं स्त्रियाः ॥
व्यसनेषु न कृच्छ्रेषु न युद्धेषु स्वयंवरे । न क्रतौ न विवाहे च दर्शनं दुष्यति स्त्रियाः ॥ २७
सैषा युद्धगता चैव कृच्छ्रे च महति स्थिता । दर्शनेऽस्या न दोषः स्यान्मत्समीपे विशेषतः ॥
तदानय समीपं मे शीघ्रमेनां विभीषण । सीता पश्यतु मामेषा सुहृद्गणवृतं स्थितम् ॥ २९
एवमुक्तस्तु रामेण सविमर्शो विभीषणः । रामस्योपानयत् सीतां सन्निकर्षं विनीतवत् ॥ ३०
ततो लक्ष्मणसुग्रीवौ हनुमांश्च प्लवङ्गमः । निशम्य वाक्यं रामस्य बभूवुर्व्यथिता भृशम् ॥ ३१
कलत्रनिरपेक्षैश्च इङ्गितैरस्य दारुणैः । अप्रीतमिव सीतायां तर्कयन्ति स्म राघवम् ॥ ३२
लज्जया त्ववलीयन्ती स्वेषु गात्रेषु मैथिली । विभीषणेनानुगता भर्तारं साभ्यवर्तत ॥ ३३
सा वस्त्रसंरुद्धमुखी लज्जया जनसंसदि । रुरोदासाद्य भर्तारमार्यपुत्रेति भाषिणी ॥ ३४
विस्मयाच्च प्रहर्षाच्च स्नेहाच्च पतिदेवता । उदैक्षत मुखं भर्तुः सौम्यं सौम्यतरानना ॥ ३५

अथ समपनुदन्मनःक्लमं सा सुचिरमदृष्टमुदीक्ष्य वै प्रियस्य ।
वदनमुदितपूर्णचन्द्रकान्तं विमलशशाङ्कनिभानना तदानीम् ॥ ३६

इत्यार्षे श्रीमद्रामायणे वाल्मीकिये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
युद्धकाण्डे सीताभर्तृमुखोदीक्षणं नाम सप्तदशोत्तरशततमः सर्गः

## अष्टादशोत्तरशततमः सर्गः

### सीताप्रत्यादेशः

तां तु पार्श्वस्थितां प्रह्वां रामः संप्रेक्ष्य मैथिलीम् । हृदयान्तर्गतं भावं[1] व्याहर्तुमुपचक्रमे ॥ १
एषासि निर्जिता भद्रे शत्रुं जित्वा मया रणे । पौरुषाद्यदनुष्ठेयं तदेतदुपपादितम् ॥ २
गतोऽस्म्यन्तममर्षस्य धर्षणा संप्रमार्जिता । अवमानश्च शत्रुश्च मया युगपदुद्धृतौ ॥ ३

१. हृदयान्तर्गतक्रोधः च. छ. ।

अद्य मे पौरुषं दृष्टमद्य मे सफलः श्रमः । अद्य तीर्णप्रतिज्ञत्वात् प्रभवामीह चात्मनः ॥ ४
या त्वं विरहिता नीता चलचित्तेन रक्षसा । दैवसंपादितो दोषो मानुषेण मया जितः ॥ ५
संप्राप्तमवमानं यस्तेजसा न प्रमार्जति । कस्तस्य पुरुषार्थोऽस्ति पुरुषस्याल्पतेजसः ॥ ६
लङ्घनं च समुद्रस्य लङ्कायाश्चावमर्दनम् । सफलं तस्य तच्छ्लाघ्यं महत् कर्म हनूमतः ॥ ७
युद्धे विक्रमतश्चैव हितं मन्त्रयतश्च मे। सुग्रीवस्य ससैन्यस्य सफलोऽद्य परिश्रमः ॥ ८
निर्गुणं भ्रातरं त्यक्त्वा यो मां स्वयमुपस्थितः । विभीषणस्य भक्तस्य सफलोऽद्य परिश्रमः ॥ ९
इत्येवं ब्रुवतस्तस्य सीता रामस्य तद्वचः । मृगीवोत्फुल्लनयना बभूवाश्रुपरिप्लुता ॥ १०
पश्यतस्तां तु रामस्य भूयः क्रोधो व्यवर्धत[1] । प्रभूताज्यावसिक्तस्य पावकस्येव दीप्यतः ॥ ११
स बद्ध्वा भ्रुकुटीं वक्त्रे तिर्यक्प्रेक्षितलोचनः[2] । अब्रवीत् परुषं सीतां[3] मध्ये वानररक्षसाम् ॥ १२
यत् कर्तव्यं मनुष्येण धर्षणां परिमार्जता । तत् कृतं सकलं सीते शत्रुहस्तादमर्षणात्[4] ॥ १३
निर्जिता जीवलोकस्य तपसा भावितात्मना । अगस्त्येन दुराधर्षा[1] मुनिना दक्षिणेव दिक् ॥ १४
विदितश्चास्तु ते भद्रे योऽयं रणपरिश्रमः । स तीर्णः सुहृदां वीर्यान्न त्वदर्थं मया कृतः ॥ १५
रक्षता तु मया वृत्तमपवादं च सर्वशः । प्रख्यातस्यात्मवंशस्य न्यङ्गं च परिमार्जता[5] ॥ १६
प्राप्तचारित्रसंदेहा मम प्रतिमुखे स्थिता । दीपो नेत्रातुरस्येव प्रतिकूलासि मे दृढम् ॥ १७
तद्गच्छ ह्यभ्यनुज्ञाना यथेष्टं जनकात्मजे । एता दश दिशो भद्रे कार्यमस्ति न मे त्वया ॥ १८
कः पुमान् हि कुले जातः स्त्रियं परगृहोषिताम् । तेजस्वी पुनरादद्यात् सुहृल्लेख्येन[6] चेतसा ॥
रावणाङ्कपरिभ्रष्टां दृष्टां दुष्टेन चक्षुषा । कथं त्वां पुनरादद्यां कुलं व्यपदिशन् महत् ॥ २०
तदर्थं निर्जिता मे त्वं यशः प्रत्याहृतं मया । नास्ति मे त्वय्यभिष्वङ्गो यथेष्टं गम्यतामितः ॥
इति प्रव्याहृतं भद्रे मयैतत् कृतबुद्धिना । लक्ष्मणे भरते वा त्वं कुरु बुद्धिं यथासुखम् ॥ २२
सुग्रीवे वानरेन्द्रे वा राक्षसेन्द्रे विभीषणे । निवेशय मनः सीते यथा वा सुखमात्मनः ॥ २३
न हि त्वां रावणो दृष्ट्वा दिव्यरूपां मनोरमाम् । मर्षयेत चिरं सीते स्वगृहे परिवर्तिनीम् ॥ २४

ततः प्रियार्हश्रवणा तदप्रियं प्रियादुपश्रुत्य चिरस्य मैथिली ।

---

1. दुराधर्षा दुर्गमा जीवलोकस्य, इल्वलादि-भयात्, दक्षिणा दिगगस्त्येन निर्जिता इत्यर्थः ।

१. अस्यार्धस्य स्थाने—समीपे हृदयप्रियाम् । जनवादभयाद्राज्ञो बभूव हृदयं द्विधा ॥—इति ति. रा. ।

२. प्रभूताज्येत्यादि - लोचन इत्यन्तम् नि. रा. नास्ति ।

३. अवदद्वै वरारोहाम् पुना. ।

४. मयेदं मानकाङ्क्षिणा पुना. ।

५. परिरक्षता च. छ. ।

६. सुहृल्लोभेन ति. रा. ।

मुमोच बाष्पं सुभृशं प्रवेपिता गजेन्द्रहस्ताभिहतेव सल्लकी ॥ २५

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम् युद्धकाण्डे सीताप्रत्यादेशो नाम अष्टादशोत्तरशततमः सर्गः

---

## एकोनविंशत्युत्तरशततमः सर्गः

हुताशनप्रवेशः

एवमुक्ता तु वैदेही परुषं रोमहर्षणम् । राघवेण सरोषेण भृशं प्रव्यथिताभवत् ॥ १
सा तदश्रुतपूर्वं हि जने महति मैथिली । श्रुत्वा भर्तृवचो रूक्षं लज्जया व्रीडिताभवत् ॥ २
प्रविशन्तीव गात्राणि स्वान्येव जनकात्मजा । वाक्शल्यैस्तैः सशल्येव भृशमश्रूण्यवर्तयत् ॥ ३
ततो बाष्पपरिक्लिष्टं प्रमार्जन्ती स्वमाननम् । शनैर्गद्गदया वाचा भर्तारमिदमब्रवीत् ॥ ४
किं मामसदृशं वाक्यमीदृशं श्रोत्रदारुणम् । रूक्षं श्रावयसे वीर प्राकृतः प्राकृतामिव ॥ ५
न तथास्मि महाबाहो यथा त्वमवगच्छसि । प्रत्ययं गच्छ मे येन चारित्रेणैव ते शपे ॥ ६
पृथक्स्त्रीणां प्रचारेण जातिं तां परिशङ्कसे । परित्यजेमां शङ्कां तु यदि तेऽहं परीक्षिता ॥ ७
यद्यहं गात्रसंस्पर्शं गतास्मि विवशा प्रभो । कामकारो न मे तत्र दैवं तत्रापराध्यति ॥ ८
मदधीनं तु यत्तन्मे हृदयं त्वयि वर्तते । पराधीनेषु गात्रेषु किं करिष्याम्यनीश्वरा ॥ ९
सह संवृद्धभावाच्च संसर्गेण च मानद । यद्यहं ते न विज्ञाता हता तेनास्मि शाश्वतम् ॥ १०
प्रेषितस्ते यदा वीरो हनुमानवलोककः । लङ्कास्थाहं त्वया वीर किं तदा न विसर्जिता ॥ ११
प्रत्यक्षं वानरेन्द्रस्य त्वद्वाक्यसमनन्तरम् । त्वया संत्यक्तया वीर त्यक्तं स्याज्जीवितं मया ॥ १२
न वृथा ते श्रमोऽयं स्यात्संशये न्यस्य जीवितम् । सुहृज्जनपरिक्लेशो न चायं निष्फलस्तव ॥ १३
त्वया तु नरशार्दूल क्रोधमेवानुवर्तता । लघुनेव मनुष्येण स्त्रीत्वमेव पुरस्कृतम् ॥ १४
अपदेशेन जनकान्नोत्पत्तिर्वसुधातलात् । मम वृत्तं च वृत्तज्ञ बहु ते न पुरस्कृतम् ॥ १५
न प्रमाणीकृतः पाणिर्बाल्ये बालेन पीडितः । मम भक्तिश्च शीलं च सर्वं ते पृष्ठतः कृतम् ॥ १६
एवं ब्रुवाणा रुदती बाष्पगद्गदभाषिणी । अब्रवील्लक्ष्मणं सीता दीनं ध्यानपरं स्थितम् ॥ १७
चितां मे कुरु सौमित्रे व्यसनस्यास्य भेषजम् । मिथ्योपघातोपहता नाहं जीवितुमुत्सहे ॥ १८
अप्रीतस्य गुणैर्भर्तुस्त्यक्ताया जनसंसदि । या क्षमा मे गतिर्गन्तुं प्रवेक्ष्ये हव्यवाहनम् ॥ १९
एवमुक्तस्तु वैदेह्या लक्ष्मणः परवीरहा । अमर्षवशमापन्नो राघवाननमैक्षत ॥ २०
स विज्ञाय ततश्छन्दं रामस्याकारसूचितम् । चितां चकार सौमित्रिर्मते रामस्य वीर्यवान्[1] ॥ २१
अधोमुखं तदा रामं शनैः कृत्वा प्रदक्षिणम् । उपासर्पत वैदेही दीप्यमानं हुताशनम् ॥ २२

---

१. अस्यानन्तरम्—न हि रामं तदा द्रष्टुं वाप्यशकत सुहृत् ॥—इति रा. ।

कश्चित् कालान्तकयमोपमम् । अनुनेतुमथो वक्तुं

प्रणम्य देवताभ्यश्च ब्राह्मणेभ्यश्च मैथिली । बद्धाञ्जलिपुटा चेदमुवाचाग्निसमीपतः ॥ २३
यथा मे हृदयं नित्यं नापसर्पति राघवात् । तथा लोकस्य साक्षी मां सर्वतः पातु पावकः ॥
यथा मां शुद्धचारित्रां दुष्टां जानाति राघवः । तथा लोकस्य साक्षी मां सर्वतः पातु पावकः ॥
कर्मणा मनसा वाचा यथा नातिचराम्यहम् । राघवं सर्वधर्मज्ञं तथा मां पातु पावकः ॥ २६
आदित्यो भगवान् वायुर्दिशश्चन्द्रस्तथैव च । अहश्चापि तथा सन्ध्ये रात्रिश्च पृथिवी तथा ॥
यथान्येऽपि विजानन्ति तथा चारित्रसंयुताम् । एवमुक्त्वा तु वैदेही परिक्रम्य हुताशनम् ॥ २८
विवेश ज्वलनं दीप्तं निःसङ्गेनान्तरात्मना । जनः स सुमहांस्त्रस्तो बालवृद्धसमाकुलः ॥ २९
ददर्श मैथिलीं तत्र प्रविशन्तीं हुताशनम् । सा तप्तनवहेमाभा तप्तकाञ्चनभूषणा ॥ ३०
पपात ज्वलनं दीप्तं सर्वलोकस्य संनिधौ । ददृशुस्तां महाभागां प्रविशन्तीं हुताशनम् ॥ ३१
सीतां कृत्स्नास्त्रयो लोकाः पुण्यामाज्याहुतीमिव[1] । प्रचुक्रुशुः स्त्रियः सर्वास्तां दृष्ट्वा हव्यवाहने ॥
पतन्तीं संस्कृतां मन्त्रैर्वसोर्धारामिवाध्वरे । ददृशुस्तां त्रयो लोका देवगन्धर्वदानवाः ॥ ३३
शप्तां पतन्तीं निरये त्रिदिवाद्देवतामिव । तस्यामग्निं विशन्त्यां तु हा हेति विपुलः स्वनः ॥ ३४
रक्षसां वानराणां च संबभूवाद्भुतोपमः ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
युद्धकाण्डे हुताशनप्रवेशो नाम एकोनविंशत्युत्तरशततमः सर्गः

## विंशत्युत्तरशततमः सर्गः

### ब्रह्मकृतरामस्तवः

ततो हि दुर्मना रामः श्रुत्वैव वदतां गिरः । दध्यौ मुहूर्तं धर्मात्मा बाष्पव्याकुललोचनः ॥ १
ततो वैश्रवणो राजा यमश्चामित्रकर्शनः । सहस्राक्षो महेन्द्रश्च वरुणश्च परंतपः ॥ २
षडर्धनयनः श्रीमान् महादेवो वृषध्वजः । कर्ता सर्वस्य लोकस्य ब्रह्मा ब्रह्मविदां वरः ॥ ३
एते सर्वे समागम्य विमानैः सूर्यसंनिभैः । आगम्य नगरीं लङ्कामभिजग्मुश्च राघवम् ॥ ४
ततः सहस्ताभरणान् प्रगृह्य विपुलान् भुजान् । अब्रुवंस्त्रिदशश्रेष्ठाः प्राञ्जलिं राघवं स्थितम् ॥ ५
कर्ता सर्वस्य लोकस्य श्रेष्ठो ज्ञानवतां वरः । उपेक्षसे कथं सीतां पतन्तीं हव्यवाहने ॥ ६
कथं देवगणश्रेष्ठमात्मानं नावबुध्यसे । ऋतधामा वसुः पूर्वं वसूनां त्वं प्रजापतिः ॥ ७
त्रयाणां त्वं हि लोकनामादिकर्ता स्वयंप्रभुः । रुद्राणामष्टमो रुद्रः साध्यानामसि पञ्चमः ॥ ८
अश्विनौ चापि ते कर्णौ चन्द्रसूर्यौ च चक्षुषी । अन्ते चादौ च लोकानां दृश्यसे त्वं परंतप ॥
उपेक्षसे च वैदेहीं मानुषः प्राकृतो यथा । इत्युक्तो लोकपालैस्तैः स्वामी लोकस्य राघवः ॥ १०

1. ऋषयो देवगन्धर्वा यज्ञे पूर्णाहुतीमिव गो. ।

अब्रवीत्त्रिदशश्रेष्ठान् रामो धर्मभृतां वरः । आत्मानं मानुषं मन्ये रामं दशरथात्मजम् ॥ ११
योऽहं यस्य यतश्चाहं भगवांस्तद्ब्रवीतु मे । इति ब्रुवन्तं काकुत्स्थं ब्रह्मा ब्रह्मविदां वरः ॥ १२
अब्रवीच्छृणु मे राम सत्यं सत्यपराक्रम । भवान्नारायणो देवः श्रीमांश्चक्रायुधो विभुः ॥ १३
एकशृङ्गो वराहस्त्वं भूतभव्यसपत्नजित् । अक्षरं ब्रह्म सत्यं च मध्ये चान्ते च राघव ॥ १४
लोकानां त्वं परो धर्मो विष्वक्सेनश्चतुर्भुजः । शार्ङ्गधन्वा हृषीकेशः पुरुषः पुरुषोत्तमः ॥ १५
अजितः खड्गधृद्विष्णुः कृष्णश्चैव बृहद्बलः । सेनानीर्ग्रामणीश्च त्वं बुद्धिः सत्त्वं क्षमा दमः ॥
प्रभवश्चाप्ययश्च त्वमुपेन्द्रो मधुसूदनः । इन्द्रकर्मा महेन्द्रस्त्वं पद्मनाभो रणान्तकृत् ॥ १७
शरण्यं शरणं च त्वामाहुर्दिव्या महर्षयः । सहस्रशृङ्गो वेदात्मा शतजिह्वो महर्षभः ॥ १८
त्वं त्रयाणां हि लोकानामादिकर्ता स्वयंप्रभुः । सिद्धानामपि साध्यानामाश्रयश्चासि पूर्वजः ॥
त्वं यज्ञस्त्वं वषट्कारस्त्वमोंकारः परन्तपः । प्रभवं निधनं वा ते न विदुः को भवानिति ॥२०
दृश्यसे सर्वभूतेषु ब्राह्मणेषु च गोषु च । दिक्षु सर्वासु गगने पर्वतेषु वनेषु च ॥ २१
सहस्रचरणः श्रीमाञ्शतशीर्षः सहस्रदृक् । त्वं धारयसि भूतानि वसुधां च सपर्वताम् ॥ २२
अन्ते पृथिव्याः सलिले दृश्यसे त्वं महोरगः । त्रीँल्लोकान् धारयन् राम देवगन्धर्वदानवान् ॥
अहं ते हृदयं राम जिह्वा देवी सरस्वती । देवा गात्रेषु रोमाणि निर्मिता ब्रह्मणा प्रभो ॥ २४
निमेषस्ते भवेद्रात्रिरुन्मेषस्ते भवेद्दिवा । संस्कारास्तेऽभवन् वेदा न तदस्ति त्वया विना ॥२५
जगत् सर्वं शरीरं ते स्थैर्यं ते वसुधातलम् । अग्निः कोपः प्रसादस्ते सोमः श्रीवत्सलक्षण॥२६
त्वया लोकास्त्रयः क्रान्ताः पुरा स्वैर्विक्रमैस्त्रिभिः[1] । महेन्द्रश्च कृतो राजा बलिं बद्ध्वा महासुरम् ॥
सीता लक्ष्मीर्भवान् विष्णुर्देवः कृष्णः प्रजापतिः । वधार्थं रावणस्येह प्रविष्टो मानुषीं तनुम् ॥
तदिदं न कृतं कार्यं त्वया धर्मभृतां वर । निहतो रावणो राम प्रहृष्टो दिवमाक्रम ॥ २९
अमोघं बलवीर्यं ते अमोघस्ते पराक्रमः । अमोघं दर्शनं राम न च मोघः स्तवस्तव ॥ ३०
अमोघास्ते भविष्यन्ति भक्तिमन्तश्च ये नराः। ये त्वां देवं ध्रुवं भक्ताः पुराणं पुरुषोत्तमम्॥३१
प्राप्नुवन्ति सदा कामानिह लोके परत्र च । इममार्षं स्तवं नित्यमितिहासं पुरातनम् ॥ ३२
ये नराः कीर्तयिष्यन्ति नास्ति तेषां पराभवः ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
युद्धकाण्डे ब्रह्मकृतरामस्तवो नाम विंशत्युत्तरशततमः सर्गः

---

## एकविंशत्युत्तरशततमः सर्गः

### सीताप्रतिग्रहः

एतच्छ्रुत्वा शुभं वाक्यं पितामहसमीरितम् । अङ्केनादाय वैदेहीमुत्पपात विभावसुः ॥ १

1. पुराण विक्रमैस्त्रिभिः च. छ. ।

स विधूय चितां तां तु वैदेहीं हव्यवाहनः। उत्तस्थौ मूर्तिमानाशु गृहीत्वा जनकात्मजाम् ॥२
तरुणादित्यसंकाशां तप्तकाञ्चनभूषणाम्। रक्ताम्बरधरां बालां नीलकुञ्चितमूर्धजाम्॥ ३
अक्लिष्टमाल्याभरणां तथारूपां मनस्विनीम्। ददौ रामाय वैदेहीमङ्के कृत्वा विभावसुः॥ ४
अब्रवीच्च तदा रामं साक्षी लोकस्य पावकः। एषा ते राम वैदेही पापमस्यां न विद्यते॥ ५
नैव वाचा न मनसा नानुध्यानान्न चक्षुषा। सुवृत्ता वृत्तशौण्डीर न त्वामतिचचार ह॥ ६
रावणेनापनीतैषा वीर्योत्सिक्तेन रक्षसा। त्वया विरहिता दीना विवशा निर्जनाद्वनात्॥ ७
रुद्धा चान्तःपुरे गुप्ता त्वच्चित्ता त्वत्परायणा। रक्षिता राक्षसीसङ्घैर्विकृतैर्घोरदर्शनैः॥ ८
प्रलोभ्यमाना विविधं भर्त्स्यमाना च मैथिली। नाचिन्तयत तद्रक्षस्त्वद्गतेनान्तरात्मना॥ ९
विशुद्धभावां निष्पापां प्रतिगृह्णीष्व राघव। न किंचिदभिधातव्यमहमाज्ञापयामि ते॥ १०
ततः प्रीतमना रामः श्रुत्वैतद्वदतां वरः। दध्यौ मुहूर्तं धर्मात्मा बाष्पव्याकुललोचनः॥ ११
एवमुक्तो महातेजा द्युतिमान् दृढविक्रमः। अब्रवीत्त्रिदशश्रेष्ठं रामो धर्मभृतां वरः॥ १२
अवश्यं त्रिषु लोकेषु न सीता पापमर्हति। दीर्घकालोषिता हीयं रावणान्तःपुरे शुभा॥ १३
बालिशः खलु कामात्मा रामो दशरथात्मजः। इति वक्ष्यन्ति मां सन्तो जानकीमविशोध्य हि॥
अनन्यहृदयां भक्तां मच्चित्तपरिवर्तिनीम्। अहमप्यवगच्छामि मैथिलीं जनकात्मजाम्॥ १५
प्रत्ययार्थं तु लोकानां त्रयाणां सत्यसंश्रयः। उपेक्षे चापि वैदेहीं प्रविशन्तीं हुताशनम्॥ १६
इमामपि विशालाक्षीं रक्षितां स्वेन तेजसा। रावणो नातिवर्तेत वेलामिव महोदधिः॥ १७
न हि शक्तः स दुष्टात्मा मनसापि हि मैथिलीम्। प्रधर्षयितुमप्राप्तां दीप्तामग्निशिखामिव॥
नेयमर्हति चैश्वर्यं रावणान्तःपुरे शुभा। अनन्या हि मया सीता भास्करेण प्रभा यथा॥ १९
विशुद्धा त्रिषु लोकेषु मैथिली जनकात्मजा। न हि हातुमियं शक्या कीर्तिरात्मवता यथा॥
अवश्यं तु मया कार्यं सर्वेषां वो वचः शुभम्। स्निग्धानां लोकमान्यानामेवं च ब्रुवतां हितम्॥

इतीदमुक्त्वा विदितं महाबलैः प्रशस्यमानः स्वकृतेन कर्मणा।
समेत्य रामः प्रियया महाबलः सुखं सुखार्होऽनुबभूव राघवः॥ २२

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
युद्धकाण्डे सीताप्रतिग्रहो नाम एकविंशत्युत्तरशततमः सर्गः

## द्वाविंशत्युत्तरशततमः सर्गः

### दशरथप्रतिसमादेशः

एतच्छ्रुत्वा शुभं वाक्यं राघवेण सुभाषितम् । इदं शुभतरं वाक्यं व्याजहार महेश्वरः ॥ १
पुष्कराक्ष महाबाहो महावक्षः परन्तप । दिष्ट्याकृतमिदं कर्म त्वया शस्त्रभृतां वर ॥ २
दिष्ट्या सर्वस्य लोकस्य प्रवृद्धं दारुणं तमः । अपावृत्तं त्वया संख्ये राम रावणजं भयम् ॥ ३
आश्वास्य भरतं दीनं कौसल्यां च यशस्विनीम् । कैकेयीं च सुमित्रां च दृष्ट्वा लक्ष्मणमातरम् ॥
प्राप्य राज्यमयोध्यायां नन्दयित्वा सुहृज्जनम् । इक्ष्वाकूणां कुले वंशं स्थापयित्वा महाबल ॥ ५
इष्ट्वा तुरगमेधेन प्राप्य चानुत्तमं यशः । ब्राह्मणेभ्यो धनं दत्त्वा त्रिदिवं गन्तुमर्हसि ॥ ६
एष राजा विमानस्थः पिता दशरथस्तव । काकुत्स्थ मानुषे लोके गुरुस्तव महायशाः ॥ ७
इन्द्रलोकं गतः श्रीमांस्त्वया पुत्रेण तारितः । लक्ष्मणेन सह भ्रात्रा त्वमेनमभिवादय ॥ ८
महादेववचः श्रुत्वा काकुत्स्थः सहलक्ष्मणः । विमानशिखरस्थस्य प्रणाममकरोत् पितुः ॥ ९
दीप्यमानं स्वया लक्ष्म्या विरजोऽम्बरधारिणम् । लक्ष्मणेन सह भ्रात्रा ददर्श पितरं विभुः ॥
हर्षेण महताविष्टो विमानस्थो महीपतिः । प्राणैः प्रियतरं दृष्ट्वा पुत्रं दशरथस्तदा ॥ ११
अरोप्याङ्कं महाबाहुर्वरासनगतः प्रभुः । बाहुभ्यां संपरिष्वज्य ततो वाक्यं समाददे ॥ १२
न मे स्वर्गो बहुमतः संमानश्च सुरर्षिभिः । त्वया राम विहीनस्य सत्यं प्रतिशृणोमि ते ॥ १३
कैकेय्या यानि चोक्तानि वाक्यानि वदतां वर । तव प्रव्राजनार्थानि स्थितानि हृदये मम ॥
त्वां तु दृष्ट्वा कुशलिनं परिष्वज्य सलक्ष्मणम् । अद्य दुःखाद्विमुक्तोऽस्मि नीहारादिव भास्करः॥
तारितोऽहं त्वया पुत्र सुपुत्रेण महात्मना । अष्टावक्रेण धर्मात्मा कहोलो[1] ब्राह्मणो यथा ॥१६
इदानीं तु विजानामि यथा सौम्य सुरेश्वरैः । वधार्थं रावणस्येदं विहितं पुरुषोत्तम ॥ १७
सिद्धार्था खलु कौसल्या या त्वां राम गृहं गतम् । वनान्निवृत्तं संहृष्टा द्रक्ष्यत्यरिनिषूदन ॥१८
सिद्धार्थाः खलु ते राम नरा ये त्वां पुरीं गतम् । जलार्द्रमभिषिक्तं च द्रक्ष्यन्ति वसुधाधिपम् ॥
अनुरक्तेन बलिना शुचिना धर्मचारिणा । इच्छामि त्वामहं द्रष्टुं भरतेन समागतम् ॥ २०
चतुर्दश समाः सौम्य वने निर्यापितास्त्वया । वसता सीतया सार्धं लक्ष्मणेन च धीमता ॥
निवृत्तवनवासोऽसि प्रतिज्ञा सफला कृता । रावणं च रणे हत्वा देवास्ते परितोषिताः ॥ २२
कृतं कर्म यशः श्लाघ्यं प्राप्तं ते शत्रुसूदन । भ्रातृभिः सह राज्यस्थो दीर्घमायुरवाप्नुहि ॥ २३
इति ब्रुवाणं राजानं रामः प्राञ्जलिरब्रवीत् । कुरु प्रसादं धर्मज्ञ कैकेय्या भरतस्य च ॥ २४
सपुत्रां त्वां त्यजामीति यदुक्ता कैकयी त्वया । स शापः कैकयीं घोरः सपुत्रां न स्पृशेत् प्रभो ॥

---

१. तारितः च. छ. ।

स तथेति महाराजो राममुक्त्वा कृताञ्जलिम्। लक्ष्मणं च परिष्वज्य पुनर्वाक्यमुवाच ह॥ २६
रामं शुश्रूषता भक्त्या वैदेह्या सह सीतया। कृता मम महाप्रीतिः प्राप्तं धर्मफलं च ते॥ २७
धर्मं प्राप्स्यसि धर्मज्ञ यशश्च विपुलं भुवि। रामे प्रसन्ने स्वर्गं च महिमानं तथैव च॥ २८
रामं शुश्रूष भद्रं ते सुमित्रानन्दवर्धन। रामः सर्वस्य लोकस्य शुभेष्वभिरतः सदा॥ २९
एते सेन्द्रास्त्रयो लोकाः सिद्धाश्च परमर्षयः। अभिगम्य महात्मानमर्चन्ति पुरुषोत्तमम्॥ ३०
एतत्तदुक्तमव्यक्तमक्षरं ब्रह्मसंमितम्। देवानां हृदयं सौम्य गुह्यं रामः परन्तपः॥ ३१
अवाप्तं धर्मचरणं यशश्च विपुलं त्वया। रामं शुश्रूषता भक्त्या वैदेह्या सह सीतया॥ ३२
स तथोक्त्वा महाबाहुर्लक्ष्मणं प्राञ्जलिं स्थितम्। उवाच राजा धर्मात्मा वैदेहीं वचनं शुभम्॥
कर्तव्यो न तु वैदेहि मन्युस्त्यागमिमं प्रति। रामेण त्वद्विशुद्ध्यर्थं कृतमेतद्धितैषिणा॥ ३४
न त्वं सुभ्रु समाधेया पतिशुश्रूषणं प्रति। अवश्यं तु मया वाच्यमेष ते दैवतं परम्॥ ३५
इति प्रतिसमादिश्य पुत्रौ सीतां तथा स्नुषाम्। इन्द्रलोकं विमानेन ययौ दशरथो ज्वलन्॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
युद्धकाण्डे दशरथप्रतिसमादेशो नाम द्वाविंशत्युत्तरशततमः सर्गः

## त्रयोविंशत्युत्तरशततमः सर्गः

### इन्द्रवरदानम्

प्रतियाते तु काकुत्स्थे महेन्द्रः पाकशासनः। अब्रवीत् परमप्रीतो राघवं प्राञ्जलिं स्थितम्॥ १
अमोघं दर्शनं राम तवास्माकं परंतप। प्रीतियुक्ताः स्म तेन त्वं ब्रूहि यन्मनसेच्छसि॥ २
एवमुक्तस्तु काकुत्स्थः प्रत्युवाच कृताञ्जलिः। लक्ष्मणेन सह भ्रात्रा सीतया सह भार्यया॥ ३
यदि प्रीतिः समुत्पन्ना मयि सर्वसुरेश्वर। वक्ष्यामि कुरु ते सत्यं वचनं वदतां वर॥ ४
मम हेतोः पराक्रान्ता ये गता यमसादनम्। ते सर्वे जीवितं प्राप्य समुत्तिष्ठन्तु वानराः॥ ५
मत्कृते विप्रयुक्ता ये पुत्रैर्दारैश्च वानराः[1]। मत्प्रियेष्वभियुक्ताश्च न मृत्युं गणयन्ति च॥ ६
त्वत्प्रसादात् समेयुस्ते वरमेतमहं वृणे। नीरुजो निर्व्रणांश्चैव संपन्नबलपौरुषान्॥ ७
गोलाङ्गूलांस्तथैवर्क्षान् द्रष्टुमिच्छामि मानद। अकाले चापि पुष्पाणि मूलानि च फलानि च॥
नद्यश्च विमलास्तत्र तिष्ठेयुर्यत्र वानराः। श्रुत्वा तु वचनं तस्य राघवस्य महात्मनः॥ ९
महेन्द्रः प्रत्युवाचेदं वचनं प्रीतिलक्षणम्। महानयं वरस्तात त्वयोक्तो रघुनन्दन॥ १०

१. अस्यानन्तरम्—तान् प्रीतमनसः सर्वान् मृत्युं गणयन्ति ये॥ कृतयत्ना विपन्नाश्च जीवेयुस्ते द्रष्टुमिच्छामि मानद। विक्रान्ताश्चापि शूराश्च न सुरर्षभ।—इति क, घ।

द्विर्मया नोक्तपूर्वं हि तस्मादेतद्भविष्यति । समुत्थास्यन्ति हरयो ये हता युधि राक्षसैः ॥ ११
ऋक्षाश्च सहगोपुच्छा निकृत्ताननबाहवः । नीरुजो निर्व्रणाश्चैव संपन्नबलपौरुषाः ॥ १२
समुत्थास्यन्ति हरयः सुप्ता निद्राक्षये यथा । सुहृद्भिर्बान्धवैश्चैव ज्ञातिभिः स्वजनैरपि ॥ १३
सर्व एव समेष्यन्ति संयुक्ताः परया मुदा । अकाले पुष्पशबलाः फलवन्तश्च पादपाः ॥ १४
भविष्यन्ति महेष्वास नद्यश्च सलिलायुताः । सव्रणैः प्रथमं गात्रैः संवृत्तैर्निर्व्रणैः पुनः ॥ १५
ततः समुत्थिताः सर्वे सुप्त्वेव हरिपुङ्गवाः । बभूवुर्वानराः सर्वे किमेतदिति विस्मिताः ॥ १६
ते सर्वे वानरास्तस्मै राघवायाभ्यवादयन् । काकुत्स्थं परिपूर्णार्थं दृष्ट्वा सर्वे सुरोत्तमाः ॥ १७
ऊचुस्ते प्रथमं स्तुत्वा स्तवार्हं सहलक्ष्मणम् । गच्छायोध्यामितो वीर विसर्जय च वानरान् ॥
मैथिलीं सान्त्वयस्वैनामनुरक्तां तपस्विनीम् । शत्रुघ्नं च महात्मानं मातॄः सर्वाः परन्तप ॥ १९
भ्रातरं पश्य भरतं त्वच्छोकाद्व्रतधारिणम् । अभिषेचय चात्मानं पौरान् गत्वा प्रहर्षय ॥ २०
एवमुक्त्वा तमामन्त्र्य रामं सौमित्रिणा सह । विमानैः सूर्यसंकाशैर्हृष्टा जग्मुः सुरा दिवम् ॥
अभिवाद्य च काकुत्स्थः सर्वांस्तांस्त्रिदशोत्तमान् । लक्ष्मणेन सह भ्रात्रा वासमाज्ञापयत्तदा ॥ २२

ततस्तु सा लक्ष्मणरामपालिता महाचमूर्हृष्टजना यशस्विनी ।
श्रिया ज्वलन्ती विरराज सर्वतो निशा प्रणीतेव हि शीतरश्मिना ॥ २३

इत्यार्षे श्रीमद्रामायणे वाल्मीकिये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
युद्धकाण्डे इन्द्रवरदानं नाम त्रयोविंशत्युत्तरशततमः सर्गः

## चतुर्विंशत्युत्तरशततमः सर्गः

### पुष्पकोपस्थापनम्

तां रात्रिमुषितं रामं सुखोत्थितमरिन्दमम् । अब्रवीत् प्राञ्जलिर्वाक्यं जयं पृष्ट्वा विभीषणः ॥ १
स्नानानि चाङ्गरागाणि वस्त्राण्याभरणानि च । चन्दनानि च दिव्यानि माल्यानि विविधानि च ॥
अलङ्कारविदश्चेमा नार्यः पद्मनिभेक्षणाः । उपस्थितास्त्वां विधिवत् स्नापयिष्यन्ति राघव ॥ ३
प्रतिगृह्णीष्व तत् सर्वं मदनुग्रहकाम्यया । एवमुक्तस्तु काकुत्स्थः प्रत्युवाच विभीषणम् ॥ ४
हरीन् सुग्रीवमुख्यांस्त्वं स्नानेनाभिनिमन्त्रय । स तु ताम्यति धर्मात्मा मम हेतोः सुखोचितः ॥
सुकुमारो महाबाहुः कुमारः सत्यसंश्रवः । तं विना कैकयीपुत्रं भरतं धर्मचारिणम् ॥ ६
न मे स्नानं बहुमतं वस्त्राण्याभरणानि च । इत एव पथा क्षिप्रं प्रतिगच्छामि तां पुरीम् ॥ ७
अयोध्यामागतो ह्येष पन्थाः परमदुर्गमः । एवमुक्तस्तु काकुत्स्थं प्रत्युवाच विभीषणः ॥ ८
अह्ना त्वां प्रापयिष्यामि तां पुरीं पार्थिवात्मज । पुष्पकं नाम भद्रं ते विमानं सूर्यसंनिभम् ॥ ९
मम भ्रातुः कुबेरस्य रावणेनाहृतं बलात् । हृतं निर्जित्य संग्रामे कामगं दिव्यमुत्तमम् ॥ १०

त्वदर्थे पालितं चैतत्तिष्ठत्यतुलविक्रम । तदिदं मेघसंकाशं विमानमिह तिष्ठति ॥ ११
तेन यास्यसि यानेन त्वमयोध्यां गतज्वरः । अहं ते यद्यनुग्राह्यो यदि स्मरसि मे गुणान्॥ १२
वस तावदिह प्राज्ञ यद्यस्ति मयि सौहृदम् । लक्ष्मणेन सह भ्रात्रा वैदेह्या चापि भार्यया॥ १३
अर्चितः सर्वकामैस्त्वं ततो राम गमिष्यसि । प्रीतियुक्तस्य मे राम ससैन्यः ससुहृद्गणः ॥ १४
सत्क्रियां विहितां तावद्गृहाण त्वं मयोद्यताम् । प्रणयाद्बहुमानाच्च सौहृदेन च राघव ॥ १५
प्रसादयामि प्रेष्योऽहं न खल्वाज्ञापयामि ते । एवमुक्तस्ततो रामः प्रत्युवाच विभीषणम् ॥१६
रक्षसां वानराणां च सर्वेषां चोपशृण्वताम् । पूजितोऽहं त्वया सौम्य साचिव्येन परन्तप ॥ १७
सर्वात्मना च चेष्टाभिः सौहृदेनोत्तमेन च । न खल्वेतन्न कुर्यां ते वचनं राक्षसेश्वर ॥ १८
तं तु मे भ्रातरं द्रष्टुं भरतं त्वरते मनः । मां निवर्तयितुं योऽसौ चित्रकूटमुपागतः ॥ १९
शिरसा याचतो यस्य वचनं न कृतं मया । [1]कौसल्यां च सुमित्रां च कैकेयीं च यशस्विनीम्॥
गुरूंश्च सुहृदश्चैव[१] पौरांश्च तनयैः सह । उपस्थापय मे क्षिप्रं विमानं राक्षसेश्वर ॥ २१
कृतकार्यस्य मे वासः कथंस्विदिह संमतः । अनुजानीहि मां सौम्य पूजितोस्मि विभीषण ॥२२
मन्युर्न खलु कर्तव्यस्त्वरितं त्वानुमानये । राघवस्य वचः श्रुत्वा राक्षसेन्द्रो विभीषणः॥ २३
तद्विमानं समादाय तूर्णं प्रतिनिवर्तत । ततः काञ्चनचित्राङ्गं वैदूर्यमयवेदिकम् ॥ २४
कूटागारैः परिक्षिप्तं सर्वतो रजतप्रभम् । पाण्डराभिः पताकाभिर्ध्वजैश्च समलङ्कृतम् ॥ २५
शोभितं काञ्चनैर्हर्म्यैर्हेमपद्मविभूषितम् । प्रकीर्णं किङ्किणीजालैर्मुक्तामणिगवाक्षितम् ॥ २६
घण्टाजालैः परिक्षिप्तं सर्वतो मधुरस्वनम् । यन्मेरुशिखराकारं निर्मितं विश्वकर्मणा ॥ २७
बहुभिर्भूषितं हर्म्यैर्मुक्तारजतसंनिभैः । तलैः स्फाटिकचित्राङ्गैर्वैदूर्यैश्च वरासनैः ॥ २८
महार्हास्तरणोपेतैरुपपन्नं महाधनैः । उपस्थितमनाधृष्यं तद्विमानं मनोजवम् ॥
निवेदयित्वा रामाय तस्थौ तत्र विभीषणः ॥ २९

तत् पुष्पकं कामगमं विमानमुपस्थितं भूधरसंनिकाशम् ।
दृष्ट्वा तदा विस्मयमाजगाम रामः ससौमित्रिरुदारसत्त्वः[२] ॥ ३०

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
युद्धकाण्डे पुष्पकोपस्थापनं नाम चतुर्विंशत्युत्तरशततमः सर्गः

1. कौसल्यामित्यादि, द्रष्टुं त्वरते मे मन इत्यनुषज्यते । मां निवर्तयितुमिति च यथायोग्यम् ॥

१. गुरूंश्च सुहृदं चैव पुना ।
२. इदं पद्यम् च. छ. नास्ति ।

## पञ्चविंशत्युत्तरशततमः सर्गः

### पुष्पकोत्पतनम्

उपस्थितं तु तं दृष्ट्वा पुष्पकं पुष्पभूषितम् । अविदूरस्थितो रामं प्रत्युवाच विभीषणः ॥ १
स तु बद्धाञ्जलिः प्रह्वो विनीतो राक्षसेश्वरः । अब्रवीत्त्वरयोपेतः किं करोमीति राघवम् ॥ २
तमब्रवीन्महातेजा लक्ष्मणस्योपशृण्वतः । विमृश्य राघवो वाक्यमिदं स्नेहपुरस्कृतम् ॥ ३
कृतप्रयत्नकर्माणो विभीषण वनौकसः । रत्नैरर्थैश्च विविधैर्भूषणैश्चापि पूजय ॥ ४
सहैभिरजिता लङ्का निर्जिता राक्षसेश्वर । हृष्टैः प्राणभयं त्यक्त्वा संग्रामेष्वनिवर्तिभिः ॥ ५
त इमे कृतकर्माणः पूज्यन्तां सर्ववानराः । धनरत्नप्रदानेन कर्मैषां सफलं कुरु ॥ ६
एवं संमानिताश्चैते मानार्हा मानद त्वया । भविष्यन्ति कृतज्ञेन निर्वृता हरियूथपाः ॥ ७
त्यागिनं संग्रहीतारं सानुक्रोशं यशस्विनम् । सर्वे त्वामवगच्छन्ति ततः संबोधयाम्यहम् ॥ ८
हीनं रतिगुणैः सर्वैरभिहन्तारमाहवे । त्यजन्ति नृपतिं सेनाः[1] संविग्नास्तं नरेश्वरम् ॥ ९
एवमुक्तस्तु रामेण वानरांस्तान् विभीषणः । रत्नार्थैः संविभागेन सर्वानेवाभ्यपूजयत् ॥ १०
ततस्तान् पूजितान् दृष्ट्वा रत्नैरर्थैश्च यूथपान् । आरुरोह ततो रामस्तद्विमानमनुत्तमम् ॥ ११
अङ्केनादाय वैदेहीं लज्जमानां यशस्विनीम् । लक्ष्मणेन सह भ्रात्रा विक्रान्तेन धनुष्मता ॥१२
अब्रवीच्च विमानस्थः पूजयन् सर्ववानरान् । सुग्रीवं च महावीर्यं काकुत्स्थः सविभीषणम् ॥१३
मित्रकार्यं कृतमिदं भवद्भिर्वानरोत्तमाः । अनुज्ञाता मया सर्वे यथेष्टं प्रतिगच्छथ ॥ १४
यत्तु कार्यं वयस्येन सुहृदा वा परन्तप । कृतं सुग्रीव तत् सर्वं भवताधर्मभीरुणा ॥ १५
किष्किन्धां प्रति याह्याशु स्वसैन्येनाभिसंवृतः । स्वराज्ये वस लङ्कायां मया दत्ते विभीषण ॥
न त्वां धर्षयितुं शक्ताः सेन्द्रा अपि दिवौकसः । अयोध्यां प्रतियास्यामि राजधानीं पितुर्मम ॥
अभ्यनुज्ञातुमिच्छामि सर्वांश्चामन्त्रयामि वः । एवमुक्तास्तु रामेण वानरास्ते महाबलाः ॥ १८
ऊचुः प्राञ्जलयो रामं राक्षसश्च विभीषणः । अयोध्यां गन्तुमिच्छामः सर्वान्नयतु नो भवान् ॥
उद्युक्ता विचरिष्यामो वनानि नगराणि च । दृष्ट्वा त्वामभिषेकार्द्रं कौसल्यामभिवाद्य च ॥२०
अचिरेणागमिष्यामः स्वान् गृहान्नृपतेः सुत । एवमुक्तस्तु धर्मात्मा वानरैः सविभीषणैः ॥२१
अब्रवीद्राघवः श्रीमान् ससुग्रीवविभीषणान् । प्रियात् प्रियतरं लब्धं यदहं ससुहृज्जनः ॥ २२
सर्वैर्भवद्भिः सहितः प्रीतिं लप्स्ये पुरीं ततः । क्षिप्रमारोह सुग्रीव विमानं वानरैः सह ॥ २३
त्वमध्यारोह सामत्यो राक्षसेन्द्र विभीषण । ततस्तत् पुष्पकं दिव्यं सुग्रीवः सह सेनया ॥ २४
अध्यारोहत्त्वरञ्शीघ्रं सामात्यश्च विभीषणः । तेष्वारूढेषु सर्वेषु कौबेरं परमासनम् ॥ २५

---

१. सैन्याः च. छ. ।

राघवेणाभ्यनुज्ञातमुत्पपात विहायसम् । ययौ तेन विमानेन हंसयुक्तेन भास्वता ॥ २६
प्रहृष्टश्च प्रतीतश्च बभौ रामः कुबेरवत् । ते सर्वे वानरा हृष्टा राक्षसाश्च महाबलाः ॥ २७
यथासुखमसंबाधं दिव्ये तस्मिन्नुपाविशन् ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
युद्धकाण्डे पुष्पकोत्पतनं नाम पञ्चविंशत्युत्तरशततमः सर्गः

---

## षड्विंशत्युत्तरशततमः सर्गः

### प्रत्यावृत्तिपथवर्णनम्

अनुज्ञातं तु रामेण तद्विमानमनुत्तमम् । उत्पपात महामेघः श्वसनेनोद्धतो यथा ॥ १
पातयित्वा ततश्चक्षुः सर्वतो रघुनन्दनः । अब्रवीन्मैथिलीं सीतां रामः शशिनिभाननाम् ॥ २
कैलासशिखराकारे त्रिकूटशिखरे स्थिताम् । लङ्कामीक्षस्व वैदेहि निर्मितां विश्वकर्मणा ॥ ३
एतदायोधनं पश्य मांसशोणितकर्दमम् । हरीणां राक्षसानां च सीते विशसनं महत् ॥ ४
अत्र दत्तवरः शेते प्रमाथी राक्षसेश्वरः । तव हेतोर्विशालाक्षि रावणो निहतो मया ॥ ५
कुम्भकर्णोऽत्र निहतः प्रहस्तश्च निशाचरः । धूम्राक्षश्चात्र निहतो वानरेण हनूमता ॥ ६
विद्युन्माली हतश्चात्र सुषेणेन महात्मना । लक्ष्मणेनेन्द्रजिच्चात्र रावणिर्निहतो रणे ॥ ७
अङ्गदेनात्र निहतो विकटो नाम राक्षसः । विरूपाक्षश्च दुर्धर्षो महापार्श्वमहोदरौ ॥ ८
अकम्पनश्च निहतो बलिनोऽन्ये च राक्षसाः[1] । अत्र मन्दोदरी नाम भार्या तं पर्यदेवयत् ॥ ९
सपत्नीनां सहस्रेण सास्रेण परिवारिता । एतत्तु दृश्यते तीर्थं समुद्रस्य वरानने ॥ १०
यत्र सागरमुत्तीर्य तां रात्रिमुषिता वयम् । एष सेतुर्मया बद्धः सागरे लवणार्णवे[2] ॥ ११
तव हेतोर्विशालाक्षि नलसेतुः सुदुष्करः । पश्य सागरमक्षोभ्यं वैदेहि वरुणालयम् ॥ १२
अपारमभिगर्जन्तं शङ्खशुक्तिनिषेवितम् । हिरण्यनाभं शैलेन्द्रं काञ्चनं पश्य मैथिलि ॥ १३
विश्रमार्थं हनुमतो भित्त्वा सागरमुत्थितम् । एतत् कुक्षौ समुद्रस्य स्कन्धावारनिवेशनम् ॥ १४

---

१. अस्यानन्तरम्—त्रिशिराश्चातिकायश्च देवान्तकनरान्तकौ । युद्धोन्मत्तश्च मत्तश्च राक्षसप्रवरावुभौ ॥ निकुम्भश्चैव कुम्भश्च कुम्भकर्णात्मजौ रणे । वज्रदंष्ट्रश्च दंष्ट्रश्च बहवो राक्षसा हताः ॥ मकराक्षश्च दुर्धर्षो मया युधि निपातिता[त]ः । कम्पनश्च हतः संख्ये शोणिताक्षश्च वीर्यवान् ॥ यूपाक्षश्च प्रजंघश्च निहतौ तौ महाबलौ । विद्युज्जिह्वोऽत्र निहतो राक्षसो भीमदर्शनः ॥ यज्ञशत्रुश्च निहतः सुप्तघ्नश्च महाबलः । सूर्यशत्रुश्च निहतो ब्रह्मशत्रुस्तथापरः ॥ —इति क. घ. ।

२. सलिलार्णवे च. छ. ।

एतत्तु दृश्यते तीर्थं सागरस्य महात्मनः । सेतुबन्ध इति ख्यातं त्रैलोक्येनाभिपूजितम् ॥ १५
एतत् पवित्रं परमं महापातकनाशनम् । अत्र पूर्वं महादेवः प्रसादमकरोत् प्रभुः ॥ १६
अत्र राक्षसराजोऽयमाजगाम विभीषणः । एषा सा दृश्यते सीते किष्किन्धा चित्रकानना ॥ १७
सुग्रीवस्य पुरी रम्या यत्र वाली मया हतः । अथ दृष्ट्वा पुरीं सीता किष्किन्धां वालिपालिताम् ॥
अब्रवीत् प्रश्रितं वाक्यं रामं प्रणयसाध्वसा । सुग्रीवप्रियभार्याभिस्ताराप्रमुखतो नृप ॥ १९
अन्येषां वानरेन्द्राणां स्त्रीभिः परिवृता ह्यहम् । गन्तुमिच्छे सहायोध्यां राजधानीं त्वयानघ ॥
एवमुक्तोऽथ वैदेह्या राघवः प्रत्युवाच ताम् । एवमस्त्वति किष्किन्धां प्राप्य संस्थाप्य राघवः ॥
विमानं प्रेक्ष्य सुग्रीवं वाक्यमेतदुवाच ह । ब्रूहि वानरशार्दूल सर्वान् वानरपुङ्गवान् ॥ २२
स्वदारसहिताः सर्वे ह्ययोध्यां यान्तु सीतया । तथा त्वमपि सर्वाभिः स्त्रीभिः सह महाबल ॥
अभित्वरस्व सुग्रीव गच्छामः प्लवगेश्वर । एवमुक्तस्तु सुग्रीवो रामेणामिततेजसा ॥ २४
वानराधिपतिः श्रीमांस्तैश्च सर्वैः समावृतः । प्रविश्यान्तःपुरं शीघ्रं तारामुद्वीक्ष्य सोऽब्रवीत्[1] ॥
प्रिये त्वं सह नारीभिर्वानराणां महात्मनाम् । राघवेणाभ्यनुज्ञाता मैथिलीप्रियकाम्यया ॥ २६
त्वर त्वमभिगच्छामो गृह्य वानरयोषितः । अयोध्यां दर्शयिष्यामः सर्वा दशरथस्त्रियः ॥ २७
सुग्रीवस्य वचः श्रुत्वा तारा सर्वाङ्गशोभना । आहूय चाब्रवीत् सर्वा वानराणां तु योषितः ॥
सुग्रीवेणाभ्यनुज्ञाता गन्तुं सर्वैश्च वानरैः । मम चापि प्रियं कार्यमयोध्यादर्शनेन च ॥ २९
प्रवेशं चापि रामस्य पौरजानपदैः सह । विभूतिं चैव सर्वासां स्त्रीणां दशरथस्य च ॥ ३०
तारया चाभ्यनुज्ञाताः सर्वा वानरयोषितः । नेपथ्यं विधिपूर्वेण कृत्वा चापि प्रदक्षिणम् ॥ ३१
अध्यारोहन् विमानं तत् सीतादर्शनकाङ्क्षया । ताभिः सहोत्थितं शीघ्रं विमानं प्रेक्ष्य राघवः॥
ऋश्यमूकसमीपे तु वैदेहीं पुनरब्रवीत् । दृश्यतेऽसौ महान् सीते सविद्युदिव तोयदः ॥ ३३
ऋश्यमूको गिरिश्रेष्ठः काञ्चनैर्धातुभिर्वृतः । अत्राहं वानरेन्द्रेण सुग्रीवेण समागतः ॥ ३४
समयश्च कृतः सीते वधार्थं वालिनो मया । एषा सा दृश्यते पम्पा नलिनी चित्रकानना॥ ३५
त्वया विहीनो यत्राहं विललाप सुदुःखितः । अस्यास्तीरे मया दृष्टा शबरी धर्मचारिणी॥ ३६
अत्र योजनबाहुश्च कबन्धो निहतो मया । दृश्यते च जनस्थाने सीते श्रीमान् वनस्पतिः॥ ३७
यत्र युद्धं महद्वृत्तं तव हेतोर्विलासिनि । रावणस्य नृशंसस्य जटायोश्च महात्मनः[2] ॥ ३८
खरश्च निहतो यत्र दूषणश्च निपातितः । त्रिशिराश्च महावीर्यो मया बाणैरजिह्मगैः ॥ ३९
एतत्तदाश्रमपदमस्माकं वरवर्णिनि । पर्णशाला तथा चित्रा दृश्यते शुभदर्शना ॥ ४०
यत्र त्वं राक्षसेन्द्रेण रावणेन हृता बलात् । एषा गोदावरी रम्या प्रसन्नसलिला शिवा ॥ ४१

---

१. भाषत प्र. ।
२. अस्यानन्तरम्—रावणेन हतो यत्र विलासिनि ॥—इति क. घ. । पक्षिणां प्रवरो बली । जटायुश्च महातेजास्तव हेतो-

अगस्त्यस्याश्रमो ह्येष दृश्यते पश्य मैथिलि । दीप्तश्चैवाश्रमो ह्येष सुतीक्ष्णस्य महात्मनः ॥ ४२
वैदेहि दृश्यते चात्र शरभङ्गाश्रमो महान् । उपयातः सहस्राक्षो यत्र शक्रः पुरन्दरः ॥ ४३
अस्मिन् देशे महाकायो विराधो निहतो मया । एते हि तापसावासा दृश्यन्ते तनुमध्यमे ॥
अत्रिः कुलपतिर्यत्र सूर्यवैश्वानरप्रभः । अत्र सीते त्वया दृष्टा तापसी धर्मचारिणी ॥ ४५
असौ सुतनु शैलेन्द्रश्चित्रकूटः प्रकाशते । यत्र मां कैकयीपुत्रः प्रसादयितुमागतः ॥ ४६
एषा सा यमुना दूराद्दृश्यते चित्रकानना । भरद्वाजाश्रमो यत्र श्रीमानेष प्रकाशते । ४७
एषा त्रिपथगा गङ्गा दृश्यते वरवर्णिनि । नानाद्विजगणाकीर्णा संप्रपुष्पितकानना ॥ ४८
शृङ्गिबेरपुरं चैतद्गुहो यत्र समागतः । एषा सा दृश्यते सीते सरयूर्यूपमालिनी ॥ ४९
नानातरुशताकीर्णा संप्रपुष्पितकानना । एषा सा दृश्यतेऽयोध्या राजधानी पितुर्मम ॥ ५०
अयोध्यां कुरु वैदेहि प्रणामं पुनरागता । ततस्ते वानराः सर्वे राक्षसश्च विभीषणः ॥ ५१
उत्पत्योत्पत्य ददृशुस्तां पुरीं शुभदर्शनाम् ॥

ततस्तु तां पाण्डरहर्म्यमालिनीं विशालकक्ष्यां गजवाजिसंकुलाम् ।
पुरीमयोध्यां ददृशुः प्लवङ्गमाः पुरीं महेन्द्रस्य यथामरावतीम् ॥ ५२

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
युद्धकाण्डे प्रत्यावृत्तिपथवर्णनं नाम षड्विंशत्युत्तरशततमः सर्गः

---

## सप्तविंशत्युत्तरशततमः सर्गः

### भरद्वाजामन्त्रणम्

पूर्णे चतुर्दशे वर्षे पञ्चम्यां लक्ष्मणाग्रजः । भरद्वाजाश्रमं प्राप्य ववन्दे नियतो मुनिम् ॥ १
सोऽपृच्छदभिवाद्यैनं भरद्वाजं तपोधनम् । शृणोषि कच्चिद्भगवन् सुभिक्षानामयं पुरे ॥ २
कच्चिच्च युक्तो भरतो जीवन्त्यपि च मातरः । एवमुक्तस्तु रामेण भरद्वाजो महामुनिः ॥ ३
प्रत्युवाच रघुश्रेष्ठं स्मितपूर्वं प्रहृष्टवत् । पङ्कदिग्धस्तु भरतो जटिलस्त्वां प्रतीक्षते ॥ ४
पादुके ते पुरस्कृत्य सर्वं च कुशलं गृहे । त्वां पुरा चीरवसनं प्रविशन्तं महावनम् ॥ ५
स्त्रीतृतीयं च्युतं राज्याद्धर्मकामं च केवलम् । पदातिं त्यक्तसर्वस्वं पितुर्वचनकारिणम् ॥ ६
सर्वभोगैः परित्यक्तं स्वर्गच्युतमिवामरम् । दृष्ट्वा तु करुणा पूर्वं ममासीत् समितिंजय ॥ ७
कैकेयीवचने युक्तं वन्यमूलफलाशिनम् । सांप्रतं सुसमृद्धार्थं समित्रगणबान्धवम् ॥ ८
समीक्ष्य विजितारिं त्वां मम प्रीतिरनुत्तमा । सर्वं च सुखदुःखं ते विदितं मम राघव ॥ ९
यत्त्वया विपुलं प्राप्तं जनस्थानवधादिकम् । ब्राह्मणार्थे नियुक्तस्य रक्षितुः सर्वतापसान् ॥ १०
रावणेन हृता भार्या बभूवेयमनिन्दिता । मारीचदर्शनं चैव सीतोन्मथनमेव च ॥ ११

कबन्धदर्शनं चैव पम्पाभिगमनं तथा । सुग्रीवेण च ते सख्यं यच्च वाली हतस्त्वया ॥ १२
मार्गणं चैव वैदेह्याः कर्म वातात्मजस्य च । विदितायां च वैदेह्यां नलसेतुर्यथा कृतः ॥ १३
यथा वा दीपिता लङ्का प्रहृष्टैर्हरियूथपैः । सपुत्रबान्धवामात्यः सबलः सहवाहनः ॥ १४
यथा विनिहतः संख्ये रावणो देवकण्टकः[1] । समागमश्च त्रिदशैर्यथा दत्तश्च ते वरः ॥ १५
सर्वं ममैतद्विदितं तपसा धर्मवत्सल[2] । अहमप्यत्र ते दद्मि वरं शस्त्रभृतां वर ॥ १६
अर्घ्यमद्य गृहाणेदमयोध्यां श्वो गमिष्यसि । तस्य तच्छिरसा वाक्यं प्रतिगृह्य नृपात्मजः ॥ १७
बाढमित्येव संहृष्टो धीमान् वरमयाचत । अकाले फलिनो वृक्षाः सर्वे चापि मधुस्रवाः ॥ १८
फलान्यमृतकल्पानि बहूनि विविधानि च । भवन्तु मार्गे भगवन्नयोध्यां प्रति गच्छतः ॥ १९
तथेति च प्रतिज्ञाते वचनात् समनन्तरम् । अभवन् पादपास्तत्र स्वर्गपादपसंन्निभाः ॥ २०
निष्फलाः फलिनश्चासन् विपुष्पाः पुष्पशालिनः । शुष्काः समग्रपत्रास्ते नगाश्चैवमधुस्रवाः ॥
सर्वतो योजना त्रीणि गच्छतामभवंस्तदा ॥

ततः प्रहृष्टाः प्लवगर्षभास्ते बहूनि दिव्यानि फलानि चैव ।
कामादुपाश्नन्ति सहस्रशस्ते मुदान्विताः स्वर्गजितो यथैव ॥ २२

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
युद्धकाण्डे भरद्वाजामन्त्रणं नाम सप्तविंशत्युत्तरशततमः सर्गः

---

## अष्टाविंशत्युत्तरशततमः सर्गः

### भरतप्रियाख्यानम्

अयोध्यां तु समालोक्य चिन्तयामास राघवः[3] । चिन्तयित्वा हनूमन्तमुवाच प्लवगोत्तमम् ॥ १
जानीहि कच्चित् कुशली जनो नृपतिमन्दिरे । शृङ्गिबेरपुरं प्राप्य गुहं गहनगोचरम् ॥ २
निषादाधिपतिं ब्रूहि कुशलं वचनान्मम । श्रुत्वा तु मां कुशलिनमरोगं विगतज्वरम् ॥ ३
भविष्यति गुहः प्रीतः स ममात्मसमः सखा । अयोध्यायाश्च ते मार्गं प्रवृत्तिं भरतस्य च ॥ ४
निवेदयिष्यति प्रीतो निषादाधिपतिर्गुहः । भरतस्तु त्वया वाच्यः कुशलं वचनान्मम ॥ ५
सिद्धार्थं शंस मां तस्मै सभार्यं सहलक्ष्मणम् । हरणं चापि वैदेह्या रावणेन बलीयसा ॥ ६

---

१. अस्यानन्तरम्—यथा च निहते तस्मिन् रावणे देवकण्टके—इति क. घ. ।

२. अस्यानन्तरम्—संपतन्ति च मे शिष्याः प्रत्याख्यातुं पुरीमितः—इति क. ख. ।

३. अस्यानन्तरम्—प्रियकामः प्रियं रामस्ततस्त्वरितविक्रमः । चिन्तयित्वा ततो दृष्टिं वानरेषु निपातयन् ॥ उवाच धीमांस्तेजस्वी हनूमन्तं प्लवङ्गमम् ।—इति क. घ. पुनः ।

सुग्रीवेण च संसर्गं वालिनश्च वधं रणे। मैथिल्यन्वेषणं चैव यथा चाधिगता त्वया ॥ ७
लङ्घयित्वा महातोयमापगापतिमव्ययम्। उपायानं समुद्रस्य सागरस्य च दर्शनम् ॥ ८
यथा च कारितः सेतू रावणश्च यथा हतः। वरदानं महेन्द्रेण ब्रह्मणा वरुणेन च ॥ ९
महादेवप्रसादाच्च पित्रा मम समागमम्। उपयातं च मां सौम्य भरतस्य निवेदय ॥ १०
सह राक्षसराजेन हरीणां प्रवरेण च। जित्वा शत्रुगणान् रामः प्राप्य चानुत्तमं यशः ॥ ११
उपयाति समृद्धार्थः सह मित्रैर्महाबलैः। एतच्छ्रुत्वा यमाकारं भजते भरतस्तदा ॥ १२
स च ते वेदितव्यः स्यात् सर्वं यच्चापि मां प्रति। ज्ञेयाश्च सर्वे वृत्तान्ता भरतस्येङ्गितानि च ॥
तत्त्वेन मुखवर्णेन दृष्ट्या व्याभाषणेन च। सर्वकामसमृद्धं हि हस्त्यश्वरथसंकुलम् ॥ १४
पितृपैतामहं राज्यं कस्य नावर्तयेन्मनः। संगत्या भरतः श्रीमान् राज्यार्थी चेत् स्वयम् भवेत्॥
प्रशास्तु वसुधां कृत्स्नामखिलां रघुनन्दनः। तस्य बुद्धिं च विज्ञाय व्यवसायं च वानर ॥ १६
यावन्न दूरं याताः स क्षिप्रमागन्तुमर्हसि। इति प्रतिसमादिष्टो हनुमान् मारुतात्मजः ॥ १७
मानुषं धारयन् रूपमयोध्यां त्वरितो ययौ। अथोत्पपात वेगेन हनुमान् मारुतात्मजः ॥ १८
गरुत्मानिव वेगेन जिघृक्षन् भुजगोत्तमम्। लङ्घयित्वा पितृपथं भुजगेन्द्रालयं शुभम्[1] ॥ १९
गङ्गायमुनयोर्मध्यं सन्निपातमतीत्य च। शृङ्गिबेरपुरं प्राप्य गुहमासाद्य वीर्यवान् ॥ २०
स वाचा शुभया हृष्टो हनुमानिदमब्रवीत्। सखा तु तव काकुत्स्थो रामः सत्यपराक्रमः॥ २१
सहसीतः ससौमित्रिः स त्वां कुशलमब्रवीत्। पञ्चमीमद्य रजनीमुषित्वा वचनान्मुनेः ॥ २२
भरद्वाजाभ्यनुज्ञातं द्रक्ष्यस्यद्यैव राघवम्। एवमुक्त्वा महातेजाः संप्रहृष्टतनूरुहः ॥ २३
उत्पपात महावेगो वेगवानविचारयन्। सोऽपश्यद्रामतीर्थं च नदीं वालुकिनीं तथा ॥ २४
गोमतीं तां च सोऽपश्यद्भीमं सालवनं तथा। प्रजाश्च बहुसाहस्राः स्फीताञ्जनपदानपि ॥ २५
स गत्वा दूरमध्वानं त्वरितः कपिकुञ्जरः। आससाद द्रुमान् फुल्लान्नन्दिग्रामसमीपगान् ॥ २६
स्त्रीभिः सपुत्रैर्वृद्धैश्च रममाणैरलङ्कृतान्। सुराधिपस्योपवने यथा चैत्ररथे द्रुमान् ॥ २७
क्रोशमात्रे त्वयोध्यायाश्चीरकृष्णाजिनाम्बरम्। ददर्श भरतं दीनं कृशमाश्रमवासिनम् ॥ २८
जटिलं मलदिग्धाङ्गं भ्रातृव्यसनकर्शितम्। फलमूलाशिनं दान्तं तापसं धर्मचारिणम् ॥ २९
समुन्नतजटाभारं वल्कलाजिनवाससम्। नियतं भावितात्मानं ब्रह्मर्षिसमतेजसम् ॥ ३०
पादुके ते पुरस्कृत्य शासतं वै वसुन्धराम्। चातुर्वर्ण्यस्य लोकस्य त्रातारं सर्वतो भयात्॥ ३१
उपस्थितममात्यैश्च शुचिभिश्च पुरोहितैः। बलमुख्यैश्च युक्तैश्च काषायाम्बरधारिभिः ॥ ३२
न हि ते राजपुत्रं तं चीरकृष्णाजिनाम्बरम्। परिभोक्तुं व्यवस्यन्ति पौरा वै धर्मवत्सलम्॥ ३३
तं धर्ममिव धर्मज्ञं देहवन्तमिवापरम्। उवाच प्राञ्जलिर्वाक्यं हनुमान् मारुतात्मजः ॥ ३४

1. विहगेन्द्रालयमिति पठित्वा, गरुडगृहं च लङ्घयित्वेति व्याख्यातं तिलके।

वसन्तं दण्डकारण्ये यं त्वं चीरजटाधरम् । अनुशोचसि काकुत्स्थं स त्वां कुशलमब्रवीत् ॥३५
प्रियमाख्यामि ते देव शोकं त्यज सुदारुणम् । अस्मिन् मुहूर्ते भ्रात्रा त्वं रामेण सह सङ्गतः॥
निहत्य रावणं रामः प्रतिलभ्य च मैथिलीम् । उपयाति समृद्धार्थः सह मित्रैर्महाबलैः ॥ ३७
लक्ष्मणश्च महातेजा वैदेही च यशस्विनी । सीता समग्रा रामेण महेन्द्रेण यथा शची ॥ ३८
एवमुक्तो हनुमता भरतो भ्रातृवत्सलः । पपात सहसा हृष्टो हर्षान्मोहं जगाम ह ॥ ३९
ततो मुहूर्तादुत्थाय प्रत्याश्वस्य च राघवः । हनुमन्तमुवाचेदं भरतः प्रियवादिनम् ॥ ४०
अशोकजैः प्रीतिमयैः कपिमालिङ्ग्य संभ्रमात् । सिषेच भरतः श्रीमान् विपुलैरस्रबिन्दुभिः ॥
देवो वा मानुषो वा त्वमनुक्रोशादिहागतः । प्रियाख्यानस्य ते सौम्य ददामि ब्रुवतः प्रियम् ॥
गवां शतसहस्रं च ग्रामाणां च शतं परम् । सुकुण्डलाः शुभाचारा भार्याः कन्याश्च षोडश ॥
हेमवर्णाः सुनासोरूः शशिसौम्याननाः स्त्रियः । सर्वाभरणसंपन्नाः संपन्नाः कुलजातिभिः ॥ ४४

निशम्य रामागमनं नृपात्मजः कपिप्रवीरस्य तदद्भुतोपमम् ।
प्रहर्षितो रामदिदृक्षयाभवत् पुनश्च हर्षादिदमब्रवीद्वचः ॥ ४५

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
युद्धकाण्डे भरतप्रियाख्यानं नाम अष्टाविंशत्युत्तरशततमः सर्गः

---

## एकोनत्रिंशदुत्तरशततमः सर्गः

### हनूमद्भरतसंभाषणम्

बहूनि नाम वर्षाणि गतस्य सुमहद्वनम् । शृणोम्यहं प्रीतिकरं मम नाथस्य कीर्तनम् ॥ १
कल्याणी बत गाथेयं लौकिकी प्रतिभाति मे । एति जीवन्तमानन्दो नरं वर्षशतादपि ॥ २
राघवस्य हरीणां च कथमासीत् समागमः[1] । कस्मिन् देशे किमाश्रित्य तत्त्वमाख्याहि पृच्छतः॥
स पृष्टो राजपुत्रेण बृस्यां समुपवेशितः । आचचक्षे ततः सर्वं रामस्य चरितं वने ॥ ४
यथा प्रव्राजितो रामो मातुर्दत्तो वरस्तव । यथा च पुत्रशोकेन राजा दशरथो मृतः ॥ ५
यथा दूतैस्त्वमानीतस्तूर्णं राजगृहात् प्रभो । त्वयायोध्यां प्रविष्टेन यथा राज्यं न चेप्सितम्॥ ६
चित्रकूटं गिरिं गत्वा राज्येनामित्रकर्शन । निमन्त्रितस्त्वया भ्राता धर्ममाचरता सताम् ॥ ७
स्थितेन राज्ञो वचने यथा राज्यं विसर्जितम् । आर्यस्य पादुके गृह्य यथासि पुनरागतः ॥ ८

---

1. पूर्वस्मिन् सर्गे 'उपयाति समृद्धार्थः सह मित्रैर्महाबलैः' इति यदुक्तं तत् हनूमद्वचनस्य अर्थतोऽनुवादः । 'सुग्रीवप्रभृतिभिर्मित्रैर्वानरैः सहोपयाति भगवान् रामचन्द्रः' इत्येवं हनूमतोक्तमिति वेदितव्यम् । अत एव 'राघवस्य हरीणां च' इति भरतस्य प्रश्नः संगच्छते ।



अशोकजैः प्रीतिमयैः कपिमालिङ्ग्य सम्भ्रमान् ।
सिषेच भगतः श्रीमान् विपुलैः अस्रबिन्दुभिः ॥

सर्वमेतन्महाबाहो यथावद्विदितं तव । त्वयि प्रतिप्रयाते तु यद्वृत्तं तन्निबोध मे ॥ ९
अपयाते त्वयि तदा समुद्भ्रान्तमृगद्विजम् । परिद्यूनमिवात्यर्थं तद्वनं समपद्यत ॥ १०
तद्धस्तिमृदितं घोरं सिंहव्याघ्रमृगायुतम् । प्रविवेशाथ विजनं सुमहद्दण्डकावनम् ॥ ११
तेषां पुरस्ताद्बलवान् गच्छतां गहने वने । निनदन् सुमहानादं विराधः प्रत्यदृश्यत ॥ १२
तमुत्क्षिप्य महानादमूर्ध्वबाहुमधोमुखम् । निखाते प्रक्षिपन्ति स्म नदन्तमिव कुञ्जरम् ॥ १३
तत् कृत्वा दुष्करं कर्म भ्रातरौ रामलक्ष्मणौ । सायाह्ने शरभङ्गस्य रम्यमाश्रममीयतुः ॥ १४
शरभङ्गे दिवं प्राप्ते रामः सत्यपराक्रमः । अभिवाद्य मुनीन् सर्वाञ्जनस्थानमुपागमत् ॥ १५
ततः पश्चाच्छूर्पणखा रामपार्श्वमुपागता । ततो रामेण संदिष्टो लक्ष्मणः सहसोत्थितः ॥ १६
प्रगृह्य खड्गं चिच्छेद कर्णनासं महाबलः । चतुर्दश सहस्राणि रक्षसां भीमकर्मणाम् ॥ १७
हतानि वसता तत्र राघवेण महात्मना । एकेन सह संगम्य रणे रामेण सङ्गताः ॥ १८
अह्नश्चतुर्थभागेन निःशेषा राक्षसाः कृताः । महाबला महावीर्यास्तपसो विघ्नकारिणः ॥ १९
निहता राघवेणाजौ दण्डकारण्यवासिनः । राक्षसाश्च विनिष्पिष्टाः खरश्च निहतो रणे[1] ॥ २०
ततस्तेनार्दिता बाला रावणं समुपागता । रावणानुचरो घोरो मारीचो नाम राक्षसः ॥ २१
लोभयामास वैदेहीं भूत्वा रत्नमयो मृगः । अथैनमब्रवीद्रामं वैदेही गृह्यतामिति ॥ २२
अहो मनोहरः कान्त आश्रमो नो भविष्यति । ततो रामो धनुष्पाणिर्धावन्तमनुधावति ॥ २३
स तं जघान धावन्तं शरेणानतपर्वणा । अथ सौम्य दशग्रीवो मृगं याते तु राघवे ॥ २४
लक्ष्मणे चापि निष्क्रान्ते प्रविवेशाश्रमं तदा । जग्राह तरसा सीतां ग्रहः खे रोहिणीमिव ॥
त्रातुकामं ततो युद्धे हत्वा गृध्रं जटायुषम् । प्रगृह्य सीतां सहसा जगामाशु स रावणः ॥ २६
ततस्त्वद्भुतसंकाशाः स्थिताः पर्वतमूर्धनि । सीतां गृहीत्वा गच्छन्तं वानराः पर्वतोपमाः ॥ २७
ददृशुर्विस्मितास्तत्र रावणं राक्षसाधिपम् । प्रविवेश ततो लङ्कां रावणो लोकरावणः ॥ २८
तां सुवर्णपरिक्रान्ते शुभे महति वेश्मनि । प्रवेश्य मैथिलीं वाक्यैः सान्त्वयामास रावणः ॥ २९
तृणवद्भाषितं तस्य तं च नैर्ऋतपुङ्गवम् । अचिन्तयन्ती वैदेही अशोकवनिकां गता ॥ ३०
न्यवर्तत ततो रामो मृगं हत्वा महावने । निवर्तमानः काकुत्स्थो दृष्ट्वा गृध्रं प्रविव्यथे ॥ ३१
गृध्रं हतं ततो दग्ध्वा रामः प्रियसखं पितुः । मार्गमाणस्तु वैदेहीं राघवः सहलक्ष्मणः ॥ ३२
गोदावरीमन्वचरद्वनोद्देशांश्च पुष्पितान् । आसेदतुर्महारण्ये कबन्धं नाम राक्षसम् ॥ ३३
ततः कबन्धवचनाद्रामः सत्यपराक्रमः । ऋश्यमूकं गिरिं गत्वा सुग्रीवेण समागतः ॥ ३४
तयोः समागमः पूर्वं प्रीत्या हार्दो व्यजायत । भ्रात्रा निरस्तः क्रुद्धेन सुग्रीवो वालिना पुरा ॥
इतरेतरसंवादात् प्रगाढः प्रणयस्तयोः । रामस्य बाहुवीर्येण स्वराज्यं प्रत्यपादयत् ॥ ३६

१. अस्यानन्तरम्—दूषणो निहतस्तत्र त्रिशिरास्तदनन्तरम्—इति क. ख. ।

वालिनं समरे हत्वा महाकायं महाबलम् । सुग्रीवः स्थापितो राज्ये सहितः सर्ववानरैः ॥ ३७
रामाय प्रतिजानीते राजपुत्र्याश्च मार्गणम् । आदिष्टा वानरेन्द्रेण सुग्रीवेण महात्मना ॥ ३८
दश कोट्यः प्लवङ्गानां सर्वाः प्रस्थापिता दिशः । तेषां नो विप्रकृष्टानां विन्ध्ये पर्वतसत्तमे ॥
भृशं शोकाभितप्तानां महान् कालोऽत्यवर्तत । भ्राता तु गृध्रराजस्य संपातिर्नाम वीर्यवान् ॥
समाख्याति स्म वसतिं सीताया रावणालये। सोऽहं शोकपरीतानां दुःखं तज्ज्ञातिनां नुदन् ॥
आत्मवीर्यं समास्थाय योजनानां शतं प्लुतः । तत्राहमेकामद्राक्षमशोकवनिकां गताम् ॥ ४२
कौशेयवस्त्रां मलिनां निरानन्दां दृढव्रताम्[1] । तया समेत्य विधिवत् पृष्ट्वा सर्वमनिन्दिताम् ॥
अभिज्ञानं च मे दत्तमर्चिष्मान् स महामणिः[2] । अभिज्ञानं मणिं लब्ध्वा चरितार्थोऽहमागतः ॥
मया च पुनरागम्य रामस्याक्लिष्टकर्मणः । अभिज्ञानं मया दत्तमर्चिष्मान् स महामणिः ॥ ४५
श्रुत्वा तु मैथिलीं हृष्टस्त्वाशशंसे च जीवितम् । जीवितान्तमनुप्राप्तः पीत्वामृतमिवातुरः ॥ ४६
उद्योजयिष्यन्नुद्योगं दध्रे कामं वधे[3] मनः । जिघांसुरिव लोकान्ते सर्वाँल्लोकान् विभावसुः ॥
ततः समुद्रमासाद्य नलं सेतुमकारयत । अतरत् कपिवीराणां वाहिनी तेन सेतुना ॥ ४८
प्रहस्तमवधीन्नीलः कुम्भकर्णं तु राघवः । लक्ष्मणो रावणसुतं स्वयं रामस्तु रावणम् ॥ ४९
स शक्रेण समागम्य यमेन वरुणेन च । महेश्वरस्वयंभूभ्यां तथा दशरथेन च ॥ ५०
तैश्च दत्तवरः श्रीमानृषिभिश्च समागतः । सुरर्षिभिश्च काकुत्स्थो वराँल्लेभे परन्तपः ॥ ५१
स तु दत्तवरः प्रीत्या वानरैश्च समागतः । पुष्पकेण विमानेन किष्किन्धामभ्युपागमत् ॥ ५२
तं गङ्गां पुनरासाद्य वसन्तं मुनिसंनिधौ । अविघ्नं पुष्ययोगेन श्वो रामं द्रष्टुमर्हसि ॥ ५३

ततस्तु सत्यं हनुमद्वचो महन्निशम्य हृष्टो भरतः कृताञ्जलिः ।
उवाच वाणीं मनसः प्रहर्षिणीं चिरस्य पूर्णः खलु मे मनोरथः ॥ ५४

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
युद्धकाण्डे हनूमद्भरतसंभाषणं नाम एकोनत्रिंशदुत्तरशततमः सर्गः

---

१. अस्यानन्तरम्—अभिज्ञानं मया दत्तमङ्गुलीयकमुत्तमम् । मां दृष्ट्वा मैथिली हृष्टा आशशंसे च जीवितम् ॥ तया समेत्य विधिवत् पूर्ववृत्तमनिन्दिताम् । रावणस्य मनःकान्तामशोकवनिकां तदा ॥ विध्वंसयित्वा समरे हत्वा राक्षसपुंगवान् ॥ लङ्कां च भस्मसात्कृत्वा प्रहृष्टेनान्तरात्मना ॥—इति घ.।

२. तथेत्यादि महामणिरित्यन्तम् घ. नास्ति ।

३. लङ्कावधे पुना. ।

## त्रिंशदुत्तरशततमः सर्गः

### भरतसमागमः

श्रुत्वा तु परमानन्दं भरतः सत्यविक्रमः। हृष्टमाज्ञापयामास शत्रुघ्नं परवीरहा ॥ १
दैवतानि च सर्वाणि चैत्यानि नगरस्य च। सुगन्धमाल्यैर्वादित्रैरर्चन्तु शुचयो नराः ॥ २
सूताः स्तुतिपुराणज्ञाः सर्वे वैतालिकास्तथा। सर्वे वादित्रकुशला गणिकाश्चापि सङ्घशः ॥ ३
अभिनिर्यान्तु रामस्य द्रष्टुं शशिनिभं मुखम्। भरतस्य वचः श्रुत्वा शत्रुघ्नः परवीरहा ॥ ४
[1]विष्टीरनेकसाहस्राश्चोदयामास वीर्यवान्। समीकुरुत निम्नानि विषमाणि समानि च ॥ ५
स्थलानि च निरस्यन्तां नन्दिग्रामादितः परम्। सिञ्चन्तु पृथिवीं कृत्स्नां हिमशीतेन वारिणा ॥
ततोऽभ्यवकिरन्त्वन्ये लाजैः पुष्पैश्च सर्वशः। समुच्छ्रितपताकास्तु रथ्याः पुरवरोत्तमे ॥ ७
शोभयन्तु च वेश्मानि सूर्यस्योदयनं प्रति। स्रग्दामभिर्मुक्तपुष्पैः सुगन्धैः पञ्चवर्णकैः ॥ ८
राजमार्गमसंबाधं किरन्तु शतशो नराः[2]। राजदारास्तथामात्याः सैन्याः सेनागणाङ्गनाः ॥ ९
ब्राह्मणाश्च सराजन्याः श्रेणीमुख्यास्तथा गणाः। धृष्टिर्जयन्तो विजयः सिद्धार्थो ह्यर्थसाधकः ॥
अशोको मन्त्रपालश्च सुमन्त्रश्चापि निर्ययुः। मत्तैर्नागसहस्रैश्च शातकुम्भविभूषितैः ॥ ११
अपरे हेमकक्ष्याभिः सगजाभिः करेणुभिः। निर्ययुस्तुरगाक्रान्तै रथैश्च सुमहारथाः ॥ १२
शक्त्यृष्टिप्रासहस्तानां सध्वजानां पताकिनाम्। तुरगाणां सहस्रैश्च मुख्यैर्मुख्यनरान्वितैः ॥ १३
पदातीनां सहस्रैश्च वीराःपरिवृता ययुः। ततो यानान्युपारूढाः सर्वा दशरथस्त्रियः ॥ १४
कौसल्यां प्रमुखे कृत्वा सुमित्रां चापि निर्ययुः। कैकेय्या सहिताः सर्वा नन्दिग्राममुपागमन् ॥
कृत्स्नं च नगरं तत्तु नन्दिग्राममुपागमत्। अश्वानां खुरशब्देन रथनेमिस्वनेन च ॥ १६
शङ्खदुन्दुभिनादेन संचचालेव मेदिनी। द्विजातिमुख्यैर्धर्मात्मा श्रेणीमुख्यैः सनैगमैः ॥ १७
माल्यमोदकहस्तैश्च मन्त्रिभिर्भरतो वृतः। शङ्खभेरीनिनादैश्च बन्दिभिश्चाभिवन्दितः ॥ १८
आर्यपादौ गृहीत्वा तु शिरसा धर्मकोविदः। पाण्डरं छत्रमादाय शुक्लमाल्योपशोभितम् ॥ १९
शुक्ले च वालव्यजने राजार्हे हेमभूषिते। उपवासकृशो दीनश्चीरकृष्णाजिनाम्बरः ॥ २०
भ्रातुरागमनं श्रुत्वा तत्पूर्वं हर्षमागतः। प्रत्युद्ययौ ततो रामं महात्मा सचिवैः सह ॥ २१
समीक्ष्य भरतो वाक्यमुवाच पवनात्मजम्। कच्चिन्न खलु कापेयी सेव्यते चलचित्तता ॥ २२
न हि पश्यामि काकुत्स्थं राममार्यं परन्तपम्। कच्चिन्न खलु दृश्यन्ते वानराः कामरूपिणः॥२३
अथैवमुक्ते वचने हनुमानिदमब्रवीत्। अर्थं विज्ञापयन्नेव भरतं सत्यविक्रमम् ॥ २४

---

१. पुरुषाणां सहस्राणि।

२. अस्यानन्तरम्—तस्य तच्छासनं श्रुत्वा शत्रुघ्नस्य मुदान्विताः—इति घ.।

सदाफलान् कुसुमितान् वृक्षान् प्राप्य मधुस्रवान् । भरद्वाजप्रसादेन मत्तभ्रमरनादितान् ॥ २५
तस्य चैष वरो दत्तो वासवेन परन्तप । ससैन्यस्य तथातिथ्यं कृतं सर्वगुणान्वितम् ॥ २६
निःस्वनः श्रूयते भीमः प्रहृष्टानां वनौकसाम् । मन्ये वानरसेना सा नदीं तरति गोमतीम् ॥
रजोवर्षं समुद्भूतं पश्य वालुकिनीं प्रति । मन्ये सालवनं रम्यं लोलयन्ति प्लवङ्गमाः ॥ २८
तदेतद्दृश्यते दूराद्विमलं चन्द्रसन्निभम् । विमानं पुष्पकं दिव्यं मनसा ब्रह्मनिर्मितम् ॥ २९
रावणं बान्धवैः सार्धं हत्वा लब्धं महात्मना । तरुणादित्यसंकाशं विमानं रामवाहनम् ॥ ३०
धनदस्य प्रसादेन दिव्यमेतन्मनोजवम् । एतस्मिन् भ्रातरौ वीरौ वैदेह्या सह राघवौ ॥ ३१
सुग्रीवश्च महातेजा राक्षसश्च विभीषणः । ततो हर्षसमुद्भूतो निःस्वनो दिवमस्पृशत् ॥ ३२
स्त्रीबालयुववृद्धानां रामोऽयमिति कीर्तिते । रथकुञ्जरवाजिभ्यस्तेऽवतीर्य महीं गताः ॥ ३३
ददृशुस्तं विमानस्थं नराः सोममिवाम्बरे । प्राञ्जलिर्भरतो भूत्वा प्रहृष्टो राघवोन्मुखः ॥ ३४
स्वागतेन यथार्थेन ततो राममपूजयत् । मनसा ब्रह्मणा सृष्टे विमाने भरताग्रजः ॥ ३५
रराज पृथुदीर्घाक्षो वज्रपाणिरिवापरः । ततो विमानाग्रगतं भरतो भ्रातरं तदा ॥ ३६
ववन्दे प्रयतो रामं मेरुस्थमिव भास्करम् । ततो रामाभ्यनुज्ञातं तद्विमानमनुत्तमम् ॥ ३७
हंसयुक्तं महावेगं निष्पपात महीतले । आरोपितो विमानं तद्भरतः सत्यविक्रमः ॥ ३८
राममासाद्य मुदितः पुनरेवाभ्यवादयत् । तं समुत्थाप्य काकुत्स्थश्चिरस्याक्षिपथं गतम् ॥ ३९
अङ्के भरतमारोप्य मुदितः परिषस्वजे । ततो लक्ष्मणमासाद्य वैदेहीं चाभ्यवादयत् ॥ ४०
अभिवाद्य ततः प्रीतो भरतो नाम चाब्रवीत् । सुग्रीवं कैकयीपुत्रो जाम्बवन्तं तथाङ्गदम् ॥ ४१
मैन्दं च द्विविदं नीलमृषभं परिषस्वजे । सुषेणं च नलं चैव गवाक्षं गन्धमादनम् ॥ ४२
शरभं पनसं चैव भरतः परिषस्वजे । ते कृत्वा मानुषं रूपं वानराः कामरूपिणः ॥ ४३
कुशलं पर्यपृच्छंस्ते प्रहृष्टा भरतं तदा । अथाब्रवीद्राजपुत्रः सुग्रीवं वानरर्षभम् ॥ ४४
परिष्वज्य महातेजा भरतो धर्मिणां वरः । त्वमस्माकं चतुर्णां तु भ्राता सुग्रीव पञ्चमः ॥ ४५
सौहृदाज्जायते मित्रमपकारोऽरिलक्षणम् । विभीषणं च भरतः सान्त्ववाक्यमथाब्रवीत ॥ ४६
दिष्ट्या त्वया सहायेन कृतं कर्म सदुष्करम् । शत्रुघ्नश्च तदा राममभिवाद्य सलक्ष्मणम् ॥ ४७
सीतायाश्चरणौ पश्चाद्विनयादभ्यवादयत् । रामो मातरमासाद्य विषण्णां शोककर्शिताम् ॥ ४८
जग्राह प्रणतः पादौ मनो मातुः प्रसादयन् । अभिवाद्य सुमित्रां च कैकेयीं च यशस्विनीम् ॥ ४९
स मातॄश्च ततः सर्वाः पुरोहितमुपागतम् । स्वागतं ते महाबाहो कौसल्यानन्दवर्धन ॥ ५०
इति प्राञ्जलयः सर्वे नागरा राममब्रुवन् । तान्यञ्जलिसहस्राणि प्रगृहीतानि नागरैः ॥ ५१
व्याकोशानीव पद्मानि ददर्श भरताग्रजः । पादुके ते तु रामस्य गृहीत्वा भरतः स्वयम् ॥ ५२
चरणाभ्यां नरेन्द्रस्य योजयामास धर्मवित् । अब्रवीच्च तदा रामं भरतः स कृताञ्जलिः ॥ ५३
एतत्ते रक्षितं राजन् राज्यं निर्यातितं मया । अद्य जन्म कृतार्थं मे संवृत्तश्च मनोरथः ॥ ५४

यस्त्वां पश्यामि राजानमयोध्यां पुनरागतम् । अवेक्षतां भवान् कोशं कोष्ठागारं पुरं बलम् ॥
भवतस्तेजसा सर्वं कृतं दशगुणं मया । तथा ब्रुवाणं भरतं दृष्ट्वा तं भ्रातृवत्सलम् ॥ ५६
मुमुचुर्वानरा बाष्पं राक्षसश्च विभीषणः । ततः प्रहर्षाद्भरतमङ्कमारोप्य राघवः ॥ ५७
ययौ तेन विमानेन ससैन्यो भरताश्रमम् । भरताश्रममासाद्य ससैन्यो राघवस्तदा ॥ ५८
अवतीर्य विमानाग्रादवतस्थे महीतले । अब्रवीच्च तदा रामस्तद्विमानमनुत्तमम् ॥ ५९
वह वैश्रवणं देवमनुजानामि गम्यताम् । ततो रामाभ्यनुज्ञातं तद्विमानमनुत्तमम् ॥ ६०
उत्तरां दिशमागम्य जगाम धनदालयम् ॥

पुरोहितस्यात्मसमस्य राघवो बृहस्पतेः शक्र इवामराधिपः ।
निपीड्य पादौ पृथगासने शुभे सहैव तेनोपविवेश राघवः ॥ ६१

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
युद्धकाण्डे भरतसमागमो नाम त्रिंशदुत्तरशततमः सर्गः

---

## एकत्रिंशदुत्तरशततमः सर्गः

### श्रीरामपट्टाभिषेकः

शिरस्यञ्जलिमाधाय कैकेय्यानन्दवर्धनः । बभाषे भरतो ज्येष्ठं रामं सत्यपराक्रमम् ॥ १
पूजिता मामिका माता दत्तं राज्यमिदं मम । तद्ददामि पुनस्तुभ्यं यथा त्वमददा मम ॥ २
धुरमेकाकिना न्यस्तामृषभेण बलीयसा । किशोरीव गुरुं भारं न वोढुमहमुत्सहे ॥ ३
वारिवेगेन महता भिन्नः सेतुरिव क्षरन् । दुर्बन्धनमिदं मन्ये राज्यच्छिद्रमसंवृतम् ॥ ४
गतिं खर इवाश्वस्य हंसस्येव च वायसः । नान्वेतुमुत्सहे राम तव मार्गमरिन्दम ॥ ५
यथा चारोपितो वृक्षो जातश्चान्तर्निवेशने । महांश्च सुदुरारोहो महास्कन्धप्रशाखवान् ॥ ६
शीर्येत पुष्पितो भूत्वा न फलानि प्रदर्शयन् । तस्य नानुभवेदर्थं यस्य हेतोः स रोप्यते ॥ ७
एषोपमा महाबाहो त्वदर्थं[1] वेत्तुमर्हसि । यद्यस्मान्मनुजेन्द्र त्वं भक्तान् भृत्यान्न शाधि हि ॥८
जगदद्याभिषिक्तं त्वामनुपश्यतु सर्वतः । प्रतपन्तमिवादित्यं मध्याह्ने दीप्ततेजसम् ॥ ९
तूर्यसङ्घातनिर्घोषैः काञ्चीनूपुरनिःस्वनैः । मधुरैर्गीतशब्दैश्च प्रतिबुध्यस्व राघव ॥ १०
यावदावर्तते चक्रं यावती च वसुन्धरा । तावत्त्वमिह सर्वस्य स्वामित्वमनुवर्तय ॥ ११
भरतस्य वचः श्रुत्वा रामः परपुरञ्जयः । तथेति प्रतिजग्राह निषसादासने शुभे ॥ १२
ततः शत्रुघ्नवचनान्निपुणाः श्मश्रुवर्धकाः । सुखहस्ताः सुशीघ्राश्च राघवं पर्युपासत ॥ १३

१. त्वमलं ङ.

पूर्वं तु भरते स्नाते लक्ष्मणे च महाबले । सुग्रीवे वानरेन्द्रे च राक्षसेन्द्रे विभीषणे ॥ १४
विशोधितजटः स्नातश्चित्रमाल्यानुलेपनः । महार्हवसनो रामस्तस्थौ तत्र श्रिया ज्वलन् ॥ १५
प्रतिकर्म च रामस्य कारयामास वीर्यवान् । लक्ष्मणस्य च लक्ष्मीवानिक्ष्वाकुकुलवर्धनः ॥ १६
प्रतिकर्म च सीतायाः सर्वा दशरथस्त्रियः । आत्मनैव तदा चक्रुर्मनस्विन्यो मनोहरम् ॥ १७
ततो वानरपत्नीनां सर्वासामेव शोभनम् । चकार यत्नात् कौसल्या प्रहृष्टा पुत्रलालसा ॥ १८
ततः शत्रुघ्नवचनात् सुमन्त्रो नाम सारथिः । योजयित्वाभिचक्राम रथं सर्वाङ्गशोभनम् ॥ १९
अर्कमण्डलसंकाशं दिव्यं दृष्ट्वा रथोत्तमम् । आरुरोह महाबाहू रामः सत्यपराक्रमः ॥ २०
सुग्रीवो हनुमांश्चैव महेन्द्रसदृशद्युती । स्नातौ दिव्यनिभैर्वस्त्रैर्जग्मतुः शुभकुण्डलौ ॥ २१
वराभरणसंपन्ना ययुस्ताः शुभकुण्डलाः । सुग्रीवपत्न्यः सीता च द्रष्टुं नगरमुत्सुकाः ॥ २२
अयोध्यायां तु सचिवा राज्ञो दशरथस्य ये । पुरोहितं पुरस्कृत्य मन्त्रयामासुरर्थवत् ॥ २३
अशोको विजयश्चैव सुमन्त्रश्चैव संगताः । मन्त्रयन् रामवृद्ध्यर्थमृद्ध्यर्थं नगरस्य च ॥ २४
सर्वमेवाभिषेकार्थं जयार्हस्य महात्मनः । कर्तुमर्हसि रामस्य यद्यन्मङ्गलपूर्वकम् ॥ २५
इति ते मन्त्रिणः सर्वे संदिश्य तु पुरोहितम्[1] । नगरान्निर्ययुस्तूर्णं रामदर्शनबुद्धयः ॥ २६
हरियुक्तं सहस्राक्षो रथमिन्द्र इवानघः । प्रययौ रथमास्थाय रामो नगरमुत्तमम् ॥ २७
जग्राह भरतो रश्मीञ्शत्रुघ्नश्छत्रमाददे । लक्ष्मणो व्यजनं तस्य मूर्ध्नि संपर्यवीजयत् ॥ २८
श्वेतं च वालव्यजनं जग्राह पुरतः स्थितः । अपरं चन्द्रसंकाशं राक्षसेन्द्रो विभीषणः ॥ २९
ऋषिसङ्घैस्तदाकाशे देवैश्च समरुद्गणैः । स्तूयमानस्य रामस्य शुश्रुवे मधुरध्वनिः ॥ ३०
ततः शत्रुञ्जयं नाम कुञ्जरं पर्वतोपमम् । आरुरोह महातेजाः सुग्रीवः प्लवगर्षभः ॥ ३१
नवनागसहस्राणि ययुरास्थाय वानराः । मानुषं विग्रहं कृत्वा सर्वाभरणभूषिताः ॥ ३२
शङ्खशब्दप्रणादैश्च दुन्दुभीनां च निःस्वनैः । प्रययौ पुरुषव्याघ्रस्तां पुरीं हर्म्यमालिनीम् ॥ ३३
ददृशुस्ते समायान्तं राघवं सपुरःसरम् । विराजमानं वपुषा रथेनातिरथं तदा ॥ ३४
ते वर्धयित्वा काकुत्स्थं रामेण प्रतिनन्दिताः । अनुजग्मुर्महात्मानं भ्रातृभिः परिवारितम् ॥ ३५
अमात्यैर्ब्राह्मणैश्चैव तथा प्रकृतिभिर्वृतः । श्रिया विरुरुचे रामो नक्षत्रैरिव चन्द्रमाः ॥ ३६
स पुरोगामिभिस्तूर्यैस्तालस्वस्तिकपाणिभिः । प्रव्याहरद्भिर्मुदितैर्मङ्गलानि ययौ वृतः[2] ॥ ३७
अक्षतं जातरूपं च गावः कन्यास्तथा द्विजाः । नरा मोदकहस्ताश्च रामस्य पुरतो ययुः ॥ ३८
सख्यं च रामः सुग्रीवे प्रभावं चानिलात्मजे । वानराणां च तत् कर्म राक्षसानां च तद्बलम् ॥
विभीषणस्य संयोगमाचचक्षे च मन्त्रिणाम् । श्रुत्वा तु विस्मयं जग्मुरयोध्यापुरवासिनः ॥ ४०
द्युतिमानेतदाख्याय रामो वानरसंवृतः । हृष्टपुष्टजनाकीर्णामयोध्यां प्रविवेश ह ॥ ४१

---

१. पुरोहितः पुना. २. वृतो ययुः छ.।

ततो ह्यभ्युच्छ्रयन् पौराः पताकास्ते गृहे गृहे । ऐक्ष्वाकाध्युषितं रम्यमाससाद पितुर्गृहम् ॥४२
अथाब्रवीद्राजपुत्रो भरतं धर्मिणां वरम् । अर्थोपहितया वाचा मधुरं रघुनन्दनः ॥ ४३
पितुर्भवनमासाद्य प्रविश्य च महात्मनः । कौसल्यां च सुमित्रां च कैकेयीमभिवादय ॥ ४४
यच्च मद्भवनं श्रेष्ठं साशोकवनिकं महत् । मुक्तावैदूर्यसंकीर्णं सुग्रीवाय निवेदय ॥ ४५
तस्य तद्वचनं श्रुत्वा भरतः सत्यविक्रमः । पाणौ गृहीत्वा सुग्रीवं प्रविवेश तमालयम् ॥ ४६
ततस्तैलप्रदीपांश्च पर्यङ्कास्तरणानि च । गृहीत्वा विविशुः क्षिप्रं शत्रुघ्नेन प्रचोदिताः ॥ ४७
उवाच च महातेजाः सुग्रीवं राघवानुजः । अभिषेकाय रामस्य दूतानाज्ञापय प्रभो[1] ॥ ४८
सौवर्णान् वानरेन्द्राणां चतुर्णां चतुरो घटान् । ददौ क्षिप्रं स सुग्रीवः सर्वरत्नविभूषितान् ॥४९
यथा प्रत्यूषसमये चतुर्णां सागराम्भसाम् । पूर्णैर्घटैः प्रतीक्षध्वं तथा कुरुत वानराः ॥ ५०
एवमुक्ता महात्मानो वानरा वारणोपमाः । उत्पेतुर्गगनं शीघ्रं गरुडानिलशीघ्रगाः ॥ ५१
जाम्बवांश्च सुषेणश्च वेगदर्शी च वानरः । ऋषभश्चैव कलशाञ्जलपूर्णानथानयन् ॥ ५२
नदीशतानां पञ्चानां जलं कुम्भेषु चाहरन् । पूर्वात् समुद्रात् कलशं जलपूर्णमथानयत् ॥ ५३
सुषेणः सत्त्वसंपन्नः सर्वरत्नविभूषितम् । ऋषभो दक्षिणात्तूर्णं समुद्राज्जलमाहरत् ॥ ५४
रक्तचन्दनशाखाभिः संवृतं काञ्चनं घटम् । गवयः पश्चिमात्तोयमाजहार महार्णवात् ॥ ५५
रत्नकुम्भेन महता शीतं मारुतविक्रमः । उत्तराच्च जलं शीघ्रं गरुडानिलविक्रमः ॥ ५६
आजहार स धर्मात्मा नलः सर्वगुणान्वितः । ततस्तैर्वानरश्रेष्ठैरानीतं प्रेक्ष्य तज्जलम् ॥ ५७
अभिषेकाय रामस्य शत्रुघ्नः सचिवैः सह । पुरोहिताय श्रेष्ठाय सुहृद्भ्यश्च न्यवेदयत्[2] ॥ ५८
ततः स प्रयतो वृद्धो वसिष्ठो ब्राह्मणैः सह । रामं रत्नमये पीठे सहसीतं न्यवेशयत् ॥ ५९
वसिष्ठो वामदेवश्च जाबालिरथ काश्यपः । कात्यायनः सुयज्ञश्च गौतमो विजयस्तथा ॥ ६०
अभ्यषिञ्चन्नरव्याघ्रं प्रसन्नेन सुगन्धिना । सलिलेन सहस्राक्षं वसवो वासवं यथा ॥ ६१
ऋत्विग्भिर्ब्राह्मणैः पूर्वं कन्याभिर्मन्त्रिभिस्तथा । योधैश्चैवाभ्यषिञ्चंस्ते संप्रहृष्टाः सनैगमैः ॥ ६२
सर्वौषधिरसैर्दिव्यैर्दैवतैर्नभसि स्थितैः । चतुर्भिर्लोकपालैश्च सर्वैर्देवैश्च संगतैः ॥ ६३
ब्रह्मणा निर्मितं पूर्वं किरीटं रत्नशोभितम् । अभिषिक्तः पुरा येन मनुस्तं दीप्ततेजसम् ॥ ६४
तस्यान्ववाये राजानः क्रमाद्येनाभिषेचिताः । सभायां हेमक्लृप्तायां शोभितायां महाजनैः ॥६५
रत्नैर्नानाविधैश्चैव चित्रितायां सुशोभनैः । नानारत्नमये पीठे कल्पयित्वा यथाविधि[3] ॥ ६६

१. अस्यानन्तरम्—भरतस्य वचः श्रुत्वा न्यवेदयत ॥—इति ख. । राजपुत्रस्य धीमतः—इति घ. ।

२. अस्यानन्तरम्—शास्त्रदृष्टेन मार्गेण यथा समुचितं तथा । राघवस्याभिषेकार्थमृत्विग्भिः स

३. ६४, ६५, ६६: तमानि पद्यानि क. ख. छ. न सन्ति ।

किरीटेन ततः पश्चाद्वसिष्ठेन महात्मना । ऋत्विग्भिर्भूषणैश्चैव समयोक्ष्यत राघवः ॥ ६७
छत्रं तु तस्य जग्राह शत्रुघ्नः पाण्डरं शुभम् । श्वेतं च वालव्यजनं सुग्रीवो वानरेश्वरः ॥ ६८
अपरं चन्द्रसंकाशं[1] राक्षसेन्द्रो विभीषणः । मालां ज्वलन्तीं वपुषा काञ्चनीं शतपुष्कराम् ॥
राघवाय ददौ वायुर्वासवेन प्रचोदितः । सर्वरत्नसमायुक्तं मणिरत्नविभूषितम् ॥ ७०
मुक्ताहारं नरेन्द्राय ददौ शक्रप्रचोदितः । प्रजगुर्देवगन्धर्वा ननृतुश्चाप्सरोगणाः ॥ ७१
अभिषेके तदर्हस्य तदा रामस्य धीमतः । भूमिः सस्यवती चैव फलवन्तश्च पादपाः ॥ ७२
गन्धवन्ति च पुष्पाणि बभूवू राघवोत्सवे । सहस्रशतमश्वानां धेनूनां च गवां तथा ॥ ७३
ददौ शतं वृषान् पूर्वं द्विजेभ्यो मनुजर्षभः । त्रिंशत्कोटीर्हिरण्यस्य ब्राह्मणेभ्यो ददौ पुनः ॥
नानाभरणवस्त्राणि महार्हाणि च राघवः । अर्करश्मिप्रतीकाशां काञ्चनीं मणिविग्रहाम् ॥ ७५
सुग्रीवाय स्रजं दिव्यां प्रायच्छन्मनुजर्षभः । वैदूर्यमणिचित्रे च चन्द्ररश्मिविभूषिते ॥ ७६
वालिपुत्राय धृतिमानङ्गदायाङ्गदे ददौ । मणिप्रवरजुष्टं च मुक्ताहारमनुत्तमम् ॥ ७७
सीतायै प्रददौ रामश्चन्द्ररश्मिसमप्रभम् । अरजे वाससी दिव्ये शुभान्याभरणानि च ॥ ७८
अवेक्षमाणा वैदेही प्रददौ वायुसूनवे । अवमुच्यात्मनः कण्ठाद्धारं जनकनन्दिनी ॥ ७९
अवैक्षत हरीन् सर्वान् भर्तारं च मुहुर्मुहुः । तामिङ्गितज्ञः संप्रेक्ष्य बभाषे जनकात्मजाम् ॥ ८०
प्रदेहि सुभगे हारं यस्य तुष्टासि भामिनी । तेजो धृतिर्यशो दाक्ष्यं सामर्थ्यं विनयो नयः[2] ॥
पौरुषं विक्रमो बुद्धिर्यस्मिन्नेतानि नित्यदा । ददौ सा वायुपुत्राय तं हारमसितेक्षणा ॥ ८२
हनुमांस्तेन हारेण शुशुभे वानरर्षभः । चन्द्रांशुचयगौरेण श्वेताभ्रेण यथाचलः ॥ ८३
ततो द्विविदमैन्दाभ्यां नीलाय च परंतपः । सर्वान् कामगुणान् वीक्ष्य प्रददौ वसुधाधिपः ॥ ८४
सर्वे वानरवृद्धाश्च ये चान्ये वानरेश्वराः । वासोभिर्भूषणैश्चैव यथार्हं प्रतिपूजिताः ॥ ८५
विभीषणोऽथ सुग्रीवो हनुमाञ्जाम्बवांस्तथा । सर्वे वानरमुख्याश्च रामेणाक्लिष्टकर्मणा ॥ ८६
यथार्हं पूजिताः सर्वे कामै रत्नैश्च पुष्कलैः । प्रहृष्टमनसः सर्वे जग्मुरेव यथागतम् ॥ ८७
नत्वा सर्वे महात्मानं ततस्ते प्लवगर्षभाः । विसृष्टाः पार्थिवेन्द्रेण किष्किन्धामभ्युपागमन् ॥ ८८
सुग्रीवो वानरश्रेष्ठो दृष्ट्वा रामाभिषेचनम् । पूजितश्चैव रामेण किष्किन्धां प्राविशत् पुरीम् ॥ ८९
विभीषणोऽपि धर्मात्मा सह तैर्नैर्ऋतर्षभैः[3] । लब्ध्वा कुलधनं राजा लङ्कां प्रायाद्विभीषणः ॥ ९०
स राज्यमखिलं शासन्निहतारिर्महायशाः । राघवः परमोदारो रराज परया मुदा[4] ॥ ९१

१. अस्यानन्तरम् — बालव्यजनमुत्तमम् । हृष्टो रामस्य जग्राह—इति ख. ।

२. इदमर्धम् च. नास्ति ।

३. रामेण सर्वकामैश्च यथार्हं प्रतिपूजितः च. ।

४. अस्यानन्तरम् — सवानरकपीन्द्रे तु राक्षसेन्द्रे विभीषणे । गते रामोऽब्रवीद्वाक्यं लक्ष्मणं शुभलक्षणम् ॥—इति ख. घ. ।

उवाच लक्ष्मणं रामो धर्मज्ञं धर्मवत्सलः ॥

आतिष्ठ धर्मज्ञ मया सहेमां गां पूर्वराजाध्युषितां बलेन ।
तुल्यं मया त्वं पितृभिर्धृता या तां यौवराज्ये धुरमुद्वहस्व ॥ ९२

सर्वात्मना पर्यनुनीयमानो यदा न सौमित्रिरुपैति योगम् ।
नियुज्यमानोऽपि च यौवराज्ये ततोऽभ्यषिञ्चद्भरतं महात्मा ॥ ९३

पौण्डरीकाश्वमेधाभ्यां वाजपेयेन चासकृत् । अन्यैश्च विविधैर्यज्ञैरयजत् पार्थिवात्मजः ॥ ९४
राज्यं दश सहस्राणि प्राप्य वर्षाणि राघवः । शताश्वमेधानाजह्रे सदश्वान् भूरिदक्षिणान् ॥९५
आजानुलम्बबाहुः स महास्कन्धः प्रतापवान् । लक्ष्मणानुचरो रामः पृथिवीमन्वपालयत् ॥ ९६
राघवश्चापि धर्मात्मा प्राप्य राज्यमनुत्तमम् । ईजे बहुविधैर्यज्ञैः ससुहृज्ज्ञातिबान्धवैः ॥ ९७
न पर्यदेवन् विधवा न च व्यालकृतं भयम् । न व्याधिजं भयं वापि रामे राज्यं प्रशासति ॥
निर्दस्युरभवल्लोको नानर्थः कंचिदस्पृशत् । न च स्म वृद्धा बालानां प्रेतकार्याणि कुर्वते ॥ ९९
सर्वं मुदितमेवासीत् सर्वो धर्मपरोऽभवत् । राममेवानुपश्यन्तो नाभ्यहिंसन् परस्परम् ॥ १००
आसन् वर्षसहस्राणि तथा पुत्रसहस्रिणः । निरामया विशोकाश्च रामे राज्यं प्रशासति ॥१०१
रामो रामो राम इति प्रजानामभवन् कथाः । रामभूतं जगदभूद्रामे राज्यं प्रशासति ॥ १०२
नित्यपुष्पा नित्यफलास्तरवः स्कन्धविस्तृताः । काले वर्षी च पर्जन्यः सुखस्पर्शश्च मारुतः ॥१०३
ब्राह्मणाः क्षत्रिया वैश्याः शूद्रा लोभविवर्जिताः । स्वकर्मसु प्रवर्तन्ते तुष्टाः स्वैरेव कर्मभिः ॥
आसन् प्रजा धर्मरता रामे शासति नानृताः । सर्वे लक्षणसंपन्नाः सर्वे धर्मपरायणाः ॥ १०५
दश वर्षसहस्राणि दश वर्षशतानि च । भ्रातृभिः सहितः श्रीमान् रामो राज्यमकारयत् ॥१०६
धन्यं यशस्यमायुष्यं राज्ञां च विजयावहम् । आदिकाव्यमिदं त्वार्षं पुरा वाल्मीकिना कृतम् ॥
यः पठेच्छृणुयाल्लोके नरः पापाद्विमुच्यते । पुत्रकामस्तु पुत्रान् वै धनकामो धनानि च ॥१०८
लभते मनुजो लोके श्रुत्वा रामाभिषेचनम् । महीं विजयते राजा रिपूंश्चाप्यधितिष्ठति ॥ १०९
राघवेण यथा माता सुमित्रा लक्ष्मणेन च । भरतेन च कैकेयी जीवपुत्रास्तथा स्त्रियः ॥ ११०
भविष्यन्ति सदानन्दाः पुत्रपौत्रसमन्विताः । श्रुत्वा रामायणमिदं दीर्घमायुश्च विन्दति ॥ १११
रामस्य विजयं चैव सर्वमक्लिष्टकर्मणः । शृणोति य इदं काव्यमार्षं वाल्मीकिना कृतम् ॥ ११२
श्रद्दधानो जितक्रोधो दुर्गाण्यतितरत्यसौ । समागमं प्रवासान्ते लभते चापि बान्धवैः ॥ ११३
प्रार्थितांश्च वरान् सर्वान् प्राप्नुयादिह राघवात् । श्रवणेन सुराः सर्वे प्रीयन्ते संप्रशृण्वताम् ॥
विनायकाश्च शाम्यन्ति गृहे तिष्ठन्ति यस्य वै । विजयेत महीं राजा प्रवासी स्वस्तिमान् व्रजेत् ॥
स्त्रियो रजस्वलाः श्रुत्वा पुत्रान् सूयुरनुत्तमान् । पूजयंश्च पठंश्चेममितिहासं पुरातनम् ॥ ११६
सर्वपापैः प्रमुच्येत दीर्घमायुरवाप्नुयात् । प्रणम्य शिरसा नित्यं श्रोतव्यं क्षत्रियैर्द्विजात् ॥ ११७
ऐश्वर्यं पुत्रलाभश्च भविष्यति न संशयः । रामायणमिदं कृत्स्नं शृण्वतः पठतः सदा ॥ ११८

प्रीयते सततं रामः स हि विष्णुः सनातनः । आदिदेवो महाबाहुर्हरिर्नारायणः प्रभुः॥ ११९
साक्षाद्रामो रघुश्रेष्ठः शेषो लक्ष्मण उच्यते ॥

कुटुम्बवृद्धिं धनधान्यवृद्धिं स्त्रियश्च मुख्याः सुखमुत्तमं च ।
श्रुत्वा शुभं काव्यमिदं महार्थं प्राप्नोति सर्वां भुवि चार्थसिद्धिम् ॥ १२०
आयुष्यमारोग्यकरं यशस्यं सौभ्रातृकं बुद्धिकरं शुभं च ।
श्रोतव्यमेतन्नियमेन सद्भिराख्यानमोजस्करमृद्धिकामैः ॥ १२१

एवमेतत् पुरावृत्तमाख्यानं भद्रमस्तु वः । प्रव्याहरत विस्रब्धं बलं विष्णोः प्रवर्धताम् ॥ १२२
देवाश्च सर्वे तुष्यन्ति ग्रहणाच्छ्रवणात्तथा । रामायणस्य श्रवणात्तुष्यन्ति पितरस्तथा ॥ १२३
भक्त्या रामस्य ये चेमां संहितामृषिणा कृताम् । लेखयन्तीह च नरास्तेषां वासस्त्रिविष्टपे॥१२४

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
युद्धकाण्डे श्रीरामपट्टाभिषेको नाम एकत्रिंशदुत्तरशततमः सर्गः

इति श्रीमद्वाल्मीकिरामायणे युद्धकाण्डः संपूर्णः

---

॥ श्रीः ॥

# ॥ श्रीमद्वाल्मीकिरामायणम् ॥

## ॥ अथ उत्तरकाण्डः ॥

### प्रथमः सर्गः

#### रामप्रश्नः

प्राप्तराज्यस्य रामस्य राक्षसानां वधे कृते । आजग्मुर्मुनयः सर्वे राघवं प्रतिनन्दितुम् ॥ १

कौशिकोऽथ यवक्रीतो गार्ग्यो गालव एव च[1]। कण्वो मेधातिथेः पुत्रः पूर्वस्यां दिशि ये श्रिताः॥

[1]स्वस्त्यात्रेयोऽथ भगवान्नमुचिः प्रमुचिस्तथा । अगस्त्योऽत्रिश्च भगवान् सुमुखो विमुखस्तथा ३

आजग्मुस्ते सहागस्त्या ये स्थिता दक्षिणां दिशम् । नृषद्गुः कवषो धौम्यो रौद्रेयश्च महानृषिः ॥

तेऽप्याजग्मुः स शिष्या वै ये श्रिताः पश्चिमां दिशम् । वसिष्ठःकाश्यपोऽथात्रिर्विश्वामित्रःसगौतमः

जमदग्निर्भरद्वाजस्तेऽपि सप्तर्षयस्तथा । उदीच्यां दिशि सप्तैते नित्यमेव निवासिनः ॥ ६

संप्राप्य ते महात्मानो राघवस्य निवेशनम् । विष्ठिताः प्रतिहारार्थं हुताशनसमप्रभाः ॥ ७

वेदवेदाङ्गविदुषो नानाशास्त्रविशारदाः । द्वाःस्थं प्रोवाच धर्मात्मा ह्यगस्त्यो मुनिसत्तमः ॥ ८

निवेद्यतां दाशरथेर्ऋषीनस्मान् समागतान् । प्रतीहारस्ततस्तूर्णमगस्त्यवचनाद्द्रुतम् ॥ ९

समीपं राघवस्याशु प्रविवेश महात्मनः । नयेङ्गितज्ञः सद्वृत्तो दक्षो धैर्यसमन्वितः ॥ १०

स रामं दृश्य सहसा पूर्णचन्द्रसमद्युतिम्[2]। अगस्त्यं कथयामास संप्राप्तमृषिभिः सह ॥ ११

श्रुत्वा प्राप्तान् मुनींस्तांस्तु बालसूर्यसमप्रभान् । प्रत्युवाच ततो द्वाःस्थं प्रवेशय यथासुखम् ॥ १२

तान् संप्राप्तान् मुनीन् दृष्ट्वा प्रत्युत्थाय कृताञ्जलिः । पाद्यार्घ्यादिभिरानर्च्य गां निवेद्य च सादरम्॥

रामोऽभिवाद्य प्रयत आसनान्यादिदेश ह । तेषु काञ्चनचित्रेषु स्वास्तीर्णेषु सुखेषु च[3]॥ १४

कुशान्तर्धानद[2]त्तेषु मृगचर्मयुतेषु च । यथार्हमुपविष्टास्ते आसनेष्वृषिपुङ्गवाः ॥ १५

रामेण कुशलं पृष्टाः सशिष्याः सपुरोगमाः । महर्षयो वेदविदो रामं वचनमब्रुवन् ॥ १६

कुशलं नो महाबाहो सर्वत्र रघुनन्दन । त्वां तु दिष्ट्या कुशलिनं पश्यामो हतशात्रवम् ॥ १७

दिष्ट्या त्वया हतो राजन् रावणो लोकरावणः । न हि भारः स ते राम रावणः पुत्रपौत्रवान् ॥

सधनुस्त्वं हि लोकांस्त्रीन् विजयेथा न संशयः । दिष्ट्या त्वया हतो राम रावणो राक्षसेश्वरः ॥

दिष्ट्या विजयिनं त्वाद्य पश्यामः सह सीतया । लक्ष्मणेन च धर्मात्मन् भ्रात्रा त्वद्धितकारिणा ॥

1. स्वस्तिकरः आत्रेयः । सूनुरथाङ्गिराः ॥—
2. कृतकुशान्तर्धानेषु ।

१. अस्यानन्तरम्—नारदश्चैव कक्षीवान-र्वसुः परावसु (?) । तथा मेधातिथेः पुत्रो बर्हिः

२. प्रभम् प्र. ।

३. महत्सु च वरेषु च च. ।

मातृभिर्भ्रातृसहितं पश्यामोऽद्य वयं नृप । दिष्ट्या प्रहस्तो विकटो विरूपाक्षो महोदरः ॥ २१
अकम्पनश्च दुर्धर्षो निहतास्ते निशाचराः । यस्य [1]प्रमाणाद्विपुलं प्रमाणं नेह विद्यते ॥ २२
दिष्ट्या ते समरे राम कुम्भकर्णो निपातितः । त्रिशिराश्चातिकायश्च देवान्तकनरान्तकौ ॥२३
दिष्ट्या ते निहता राम महावीर्या निशाचराः । कुंभश्चैव निकुंभश्च राक्षसौ भीमदर्शनौ ॥ २४
दिष्ट्या तौ निहतौ राम कुम्भकर्णसुतौ मृधे । युद्धोन्मत्तश्च मत्तश्च कालान्तकयमोपमौ ॥ २५
यज्ञकोपश्च बलवान् धूम्राक्षो नाम राक्षसः । कुर्वन्तः कदनं घोरमेते शस्त्रास्त्रपारगाः ॥ २६
अन्तकप्रतिमैर्बाणैर्दिष्ट्या विनिहतास्त्वया । दिष्ट्या त्वं राक्षसेन्द्रेण द्वन्द्वयुद्धमुपागतः ॥ २७
देवतानामवध्येन विजयं प्राप्तवानसि । संख्ये तस्य न किंचित्तु[2] रावणस्य पराभवः ॥ २८
द्वन्द्वयुद्धमनुप्राप्तो दिष्ट्या ते रावणिर्हतः । दिष्ट्या तस्य महाबाहो कालस्येवाभिधावतः ॥
मुक्तः सुररिपोर्वीर प्राप्तश्च विजयस्त्वया । अभिनन्दाम ते सर्वे संश्रुत्येन्द्रजितो वधम् ॥ ३०
सोऽवध्यः सर्वभूतानां महामायाधरो युधि । विस्मयस्त्वेप चास्माकं तच्छ्रुत्वेन्द्रजितं हतम् ॥ ३१
एते चान्ये च बहवो राक्षसाः कामरूपिणः । दिष्ट्या त्वया हता वीरा रघूणां कुलवर्धन ॥
दत्त्वा पुण्यामिमां वीर सौम्यामभयदक्षिणाम् । दिष्ट्या वर्धसि काकुत्स्थ जयेनामित्रकर्शन ॥
श्रुत्वा तु तेषां वचनमृषीणां भावितात्मनाम् । विस्मयं परमं गत्वा रामः प्राञ्जलिरब्रवीत् ॥
भगवन्तः कुम्भकर्णं रावणं च निशाचरम् । अतिक्रम्य महावीर्यौ किं प्रशंसथ रावणिम् ॥ ३५
महोदरं प्रहस्तं च विरूपाक्षं च राक्षसम् । मत्तोन्मत्तौ च दुर्धर्षौ देवान्तकनरान्तकौ ॥ ३६
अतिक्रम्य महावीर्यान् किं प्रशंसथ रावणिम् । अतिकायं त्रिशिरसं धूम्राक्षं च निशाचरम् ॥
अतिक्रम्य महावीर्यान् किं प्रशंसथ रावणिम्[१] । कीदृशो वै प्रभावोऽस्य किं बलं कः पराक्रमः ॥
केन वा कारणेनैष रावणादतिरिच्यते । शक्यं यदि मया श्रोतुं न खल्वाज्ञापयामि वः ॥ ३९
यदि गुह्यं न चेद्वक्तुं श्रोतुमिच्छामि कथ्यताम् । शक्रोऽपि विजितस्तेन कथं लब्धवरश्च सः ॥
कथं च बलवान् पुत्रो न पिता तस्य रावणः ॥

कथं पितुश्चाभ्यधिको महाहवे शक्रस्य जेता हि कथं स राक्षसः ।
वराश्च लब्धाः कथयस्व मेऽद्य [२]तत् पृच्छतश्चास्य मुनीन्द्र सर्वम् ॥ ४१

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
उत्तरकाण्डे रामप्रश्नो नाम प्रथमः सर्गः

1. प्रमाणादिति, देहपरिमाणादित्यर्थः ।
2. रावणस्य पराभवो न किंचित्: रावणेस्तु न तथा इत्यर्थः ।

१. अतिकायमित्यादि रावणिमित्यन्तम् , क. ग. नास्ति ।
२. चापृच्छतः ति, ।

## द्वितीयः सर्गः

### पौलस्त्योत्पत्तिः

तस्य तद्वचनं श्रुत्वा राघवस्य महात्मनः। कुम्भयोनिर्महातेजा राममेतदुवाच ह ॥ १
शृणु राम यथावृत्तं तस्य तेजोबलं महत्। जघान शत्रून् येनासौ न च वध्यः स शत्रुभिः ॥ २
तावत्ते रावणस्येदं कुलं जन्म च राघव। वरप्रदानं च तथा तस्मै दत्तं ब्रवीमि ते ॥ ३
पुरा कृतयुगे राम प्रजापतिसुतः प्रभुः। पुलस्त्यो नाम ब्रह्मर्षिः साक्षादिव पितामहः ॥ ४
नानुकीर्त्या गुणास्तस्य धर्मतः शीलतस्तथा। प्रजापतेः पुत्र इति वक्तुं शक्यं हि नामतः ॥ ५
प्रजापतिसुतत्वेन देवानां वल्लभो हि सः। इष्टः सर्वस्य लोकस्य गुणैः शुभ्रैर्महामतिः ॥ ६
स तु धर्मप्रसङ्गेन मेरोः पार्श्वे महागिरेः। तृणबिन्द्वाश्रमं गत्वा न्यवसन्मुनिपुङ्गवः ॥ ७
तपस्तेपे स धर्मात्मा स्वाध्यायनियतेन्द्रियः। गत्वाश्रमपदं तस्य विघ्नं कुर्वन्ति कन्यकाः ॥ ८
देवपन्नगकन्याश्च राजर्षितनयाश्च याः। क्रीडन्त्योऽप्सरसश्चैव तं देशमुपपेदिरे ॥ ९
सर्वर्तुषूपभोग्यत्वाद्रम्यत्वात् काननस्य च। नित्यशस्तास्तु तं देशं गत्वा क्रीडन्ति कन्यकाः ॥ १०
देशस्य रमणीयत्वात् पुलस्त्यो यत्र स द्विजः। गायन्त्यो वादयन्त्यश्च लासयन्त्यस्तथैव च ॥ ११
मुनेस्तपस्विनस्तस्य विघ्नं चक्रुरनिन्दिताः। अथ क्रुद्धो महातेजा व्याजहार महामुनिः ॥ १२
या मे दर्शनमागच्छेत् सा गर्भं धारयिष्यति। तास्तु सर्वाः प्रतिश्रुत्य तस्य वाक्यं महात्मनः ॥
ब्रह्मशापभयाद्भीतास्तं देशं नोपचक्रमुः। तृणबिन्दोस्तु राजर्षेस्तनया न शृणोति तत् ॥ १४
गत्वाश्रमपदं तत्र विचचार सुनिर्भया। न सापश्यत् स्थिता तत्र कांचिदभ्यागतां सखीम् ॥ १५
तस्मिन् काले महातेजाः प्राजापत्यो महानृषिः। स्वाध्यायमकरोत्तत्र तपसा भावितः स्वयम् ॥
सा तु वेदश्रुतिं श्रुत्वा दृष्ट्वा वै तपसो निधिम्। अभवत् पाण्डुदेहा सा सुव्यञ्जितशरीरजा ॥
बभूव च समुद्विग्ना दृष्ट्वा तद्दोषमात्मनः। इदं मे किं त्विति ज्ञात्वा पितुर्गत्वाश्रमे स्थिता ॥ १८
तां तु दृष्ट्वा तथाभूतां तृणबिन्दुरथाब्रवीत्। किं त्वमेतत्त्वसदृशं धारयस्यात्मनो वपुः ॥ १९
सा तु कृत्वाञ्जलिं दीना कन्योवाच तपोधनम्। न जाने कारणं तात येन मे रूपमीदृशम् ॥
किं तु पूर्वं गतास्म्येका महर्षेर्भावितात्मनः। पुलस्त्यस्याश्रमं दिव्यमन्वेष्टुं स्वसखीजनम् ॥ २१
न च पश्याम्यहं तत्र कांचिदभ्यागतां सखीम्। रूपस्य तु विपर्यासं दृष्ट्वा त्रासादिहागता ॥
तृणबिन्दुस्तु राजर्षिस्तपसा द्योतितप्रभः। ध्यानं विवेश तच्चापि ह्यपश्यदृषिकर्मजम् ॥ २३
स तु विज्ञाय तं शापं महर्षेर्भावितात्मनः। गृहीत्वा तनयां गत्वा पुलस्त्यमिदमब्रवीत् ॥ २४
भगवंस्तनयां मे त्वं गुणैः स्वैरेव भूषिताम्। भिक्षां प्रतिगृहाणेमां महर्षे स्वयमुद्यताम् ॥ २५
तपश्चरणयुक्तस्य श्राम्यमाणेन्द्रियस्य ते। शुश्रूषणपरा नित्यं भविष्यति न संशयः ॥ २६
तं ब्रुवाणं तु तद्वाक्यं राजर्षिं धार्मिकं तदा। जिघृक्षुरब्रवीत् कन्यां बाढमित्येव स द्विजः ॥ २७

दत्त्वा स तु यथान्यायं स्वमाश्रमपदं गतः । सापि तत्रावसत् कन्या तोषयन्ती पतिं गुणैः ॥
तस्यास्तु शीलवृत्ताभ्यां तुतोष मुनिपुङ्गवः । प्रीतः स तु महातेजा वाक्यमेतदुवाच ह ॥ २९
परितुष्टोऽस्मि सुश्रोणि गुणानां संपदा भृशम् । तस्माद्देवि ददाम्यद्य पुत्रमात्मसमं तव ॥ ३०
उभयोर्वंशकर्तारं पौलस्त्य इति विश्रुतम् । यस्मात्तु विश्रुतो वेदस्त्वयैषो[1]ऽध्ययतो मम ॥ ३१
तस्मात् स विश्रवा नाम भविष्यति न संशयः । एवमुक्ता तु सा देवी प्रहृष्टेनान्तरात्मना ॥ ३२
अचिरेणैव कालेनासूत विश्रवसं सुतम् । त्रिषु लोकेषु विख्यातं यशोधर्मसमन्वितम् ॥ ३३
श्रुतिमान् समदर्शी च व्रताचाररतस्तथा । पितेव तपसा युक्तो ह्यभवद्विश्रवा मुनिः ॥ ३४

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
उत्तरकाण्डे पौलस्त्योत्पत्तिर्नाम द्वितीयः सर्गः

## तृतीयः सर्गः

### वैश्रवणलोकपालपदलङ्कादिप्राप्तिः

अथ पुत्रः पुलस्त्यस्य विश्रवा मुनिपुङ्गवः । अचिरेणैव कालेन पितेव तपसि स्थितः ॥ १
सत्यवाञ्शीलवाञ्शान्तः स्वाध्यायनिरतः शुचिः । सर्वभोगेष्वसंसक्तो नित्यं धर्मपरायणः ॥ २
ज्ञात्वा तस्य तु तद्वृत्तं भरद्वाजो महामुनिः । ददौ विश्रवसे भार्यां स्वसुतां देववर्णिनीम् ॥ ३
प्रतिगृह्य तु धर्मेण भरद्वाजसुतां तदा । [2]प्रजान्वेषिकया बुद्ध्या श्रेयो ह्यस्य विचिन्तयन् ॥ ४
मुदा परमया युक्तो विश्रवा मुनिपुङ्गवः । स तस्यां वीर्यसंपन्नमपत्यं परमाद्भुतम् ॥ ५
जनयामास धर्मज्ञः सर्वैर्ब्रह्मगुणैर्युतम् । तस्मिञ्जाते तु संहृष्टः संबभूव पितामहः ॥ ६
दृष्ट्वा श्रेयस्करीं बुद्धिं धनाध्यक्षो भविष्यति । नाम तस्याकरोत् प्रीतः सार्धं देवर्षिभिस्तदा ॥ ७
यस्माद्विश्रवसोऽपत्यं सादृश्याद्विश्रवा इव । तस्माद्वैश्रवणो नाम भविष्यत्येष विश्रुतः ॥ ८
स तु वैश्रवणस्तत्र तपोवनगतस्तदा । अवर्धताहुतिहुतो महातेजा यथानलः ॥ ९
तस्याश्रमपदस्थस्य बुद्धिर्जज्ञे महात्मनः । चरिष्ये परमं धर्मं धर्मो हि परमा गतिः ॥ १०
स तु वर्षसहस्राणि तपस्तप्त्वा महावने । यन्त्रितो नियमैरुग्रैश्चकार सुमहत्तपः ॥ ११
पूर्णे वर्षसहस्रान्ते तं तं विधिमकल्पयत् । जलाशी मारुताहारो निराहारस्तथैव च ॥ १२
एवं वर्षसहस्राणि जग्मुस्तान्येकवर्षवत् । अथ प्रीतो महातेजाः सेन्द्रैः सुरगणैः सह ॥ १३
गत्वा तस्याश्रमपदं ब्रह्मेदं वाक्यमब्रवीत् । परितुष्टोऽस्मि ते वत्स कर्मणानेन सुव्रत ॥ १४
वरं वृणीष्व भद्रं ते वरार्हस्त्वं महामते । अथाब्रवीद्वैश्रवणः पितामहमुपस्थितम् ॥ १५

१. त्वयेह ति. । २. प्रजान्वीक्षिकया पुना. ति. ।

भगवँल्लोकपालत्वमिच्छेयं वित्तरक्षणम् । अथाब्रवीद्वैश्रवणं परितुष्टेन चेतसा ॥ १६
ब्रह्मा सुरगणैः सार्धं बाढमित्येव हृष्टवत् । अहं वै लोकपालानां चतुर्थं स्रष्टुमुद्यतः ॥ १७
यमेन्द्रवरुणानां च पदं यत्तव चेप्सितम् । तद्गच्छ त्वं[1] हि धर्मज्ञ निधीशत्वमवाप्नुहि ॥ १८
शक्राम्बु[1]पयमानां च चतुर्थस्त्वं भविष्यसि । एतच्च पुष्पकं नाम विमानं सूर्यसंनिभम् ॥ १९
प्रतिगृह्णीष्व यानार्थं त्रिदशैः समतां व्रज । स्वस्ति तेऽस्तु गमिष्यामः सर्व एव यथागतम् ॥
कृतकृत्या वयं तात दत्त्वा तव वरद्वयम् । इत्युक्त्वा स गतो ब्रह्मा स्वस्थानं त्रिदशैः सह ॥
गतेषु ब्रह्मपूर्वेषु देवेष्वथ नभःस्थलम् । धनेशः[2] पितरं प्राह प्राञ्जलिः प्रयतात्मवान् ॥ २२
निवासनं न मे देवो विदधे स प्रजापतिः । भगवँल्लब्धवानस्मि वरमिष्टं पितामहात् ॥ २३
तं पश्य भगवन् कंचिन्निवासं साधु मे प्रभो । न च पीडा भवेद्यत्र प्राणिनो यस्य कस्यचित् ॥
एवमुक्तस्तु पुत्रेण विश्रवा मुनिपुङ्गवः । वचनं प्राह धर्मज्ञः श्रूयतामिति सत्तमः ॥ २५
दक्षिणस्योदधेस्तीरे त्रिकूटो नाम पर्वतः । तस्याग्रे तु विशाला सा महेन्द्रस्य पुरी यथा ॥ २६
लङ्का नाम पुरी रम्या निर्मिता विश्वकर्मणा । राक्षसानां निवासार्थं यथेन्द्रस्यामरावती ॥ २७
तत्र त्वं वस भद्रं ते लङ्कायां नात्र संशयः । हेमप्राकारपरिखा यन्त्रशस्त्रसमावृता ॥ २८
रमणीया पुरी सा हि रुक्मवैदूर्यतोरणा । राक्षसैः सा परित्यक्ता पुरा विष्णुभयार्दितैः ॥ २९
शून्या रक्षोगणैः सर्वैं रसातलतलं गतैः । शून्या संप्रति लङ्का सा प्रभुस्तस्या न विद्यते ॥ ३०
स त्वं तत्र निवासाय गच्छ पुत्र यथासुखम् । निर्दोषस्तत्र ते वासो न बाधा तत्र कस्यचित् ॥
एतच्छ्रुत्वा स धर्मात्मा धर्मिष्ठं वचनं पितुः । निवासयामास तदा लङ्कां पर्वतमूर्धनि ॥ ३२
नैर्ऋतानां सहस्रैस्तु हृष्टैः प्रमुदितैः सह । अचिरेणैव कालेन संपूर्णा तस्य शासनात् ॥ ३३
स तु तत्रावसत् प्रीतो धर्मात्मा नैर्ऋतर्षभः । समुद्रपरिखायां तु लङ्कायां विश्रवात्मजः ॥ ३४
काले काले तु धर्मात्मा पुष्पकेण धनेश्वरः । अभ्यागच्छद्विनीतात्मा पितरं मातरं च हि ॥

स देवगन्धर्वगणैरभिष्टुतस्तथाप्सरोनृत्यविभूषितालयः ।
गभस्तिभिः सूर्य इवावभासयन् पितुः समीपं प्रययौ स वित्तपः ॥ ३६

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
उत्तरकाण्डे वैश्रवणलोकपालपदलङ्कादिप्राप्तिर्नाम तृतीयः सर्गः

---

## चतुर्थः सर्गः

### रावणादिपूर्वतनराक्षसोत्पत्तिकथनम्

श्रुत्वागस्त्येरिदं वाक्यं रामो विस्मयमागतः । कथमासीत्तु लङ्कायां संभवो रक्षसां पुरा ॥ १

1. अम्बुपो वरुणः । १. बत, ति. । २. वने सः च. ।

ततः शिरः कम्पयित्वा त्रेताग्निसमविग्रहम्। तमगस्त्यं मुहुर्दृष्ट्वा स्मयमानोऽभ्यभाषत ॥ २
भगवन् पूर्वमप्येषा लङ्कासीत् पिशिताशिनाम्। श्रुत्वेदं भगवद्वाक्यं जातो मे विस्मयः परः ॥
पुलस्त्यवंशादुद्भूता राक्षसा इति नः श्रुतम्। इदानीमन्यतश्चापि संभवः कीर्तितस्त्वया ॥ ४
रावणात् कुम्भकर्णाच्च प्रहस्ताद्विकटादपि। रावणस्य च पुत्रेभ्यः किं नु ते बलवत्तराः ॥ ५
क एषां पूर्वको ब्रह्मन् किंनामा च बलोत्कटः। अपराधं च कं प्राप्य विष्णुना द्राविताः कथम् ॥
एतद्विस्तरतः सर्वं कथयस्व ममानघ। कौतूहलमिदं मह्यं नुद भानुर्यथा तमः ॥ ७
राघवस्य वचः श्रुत्वा संस्कारालङ्कृतं शुभम्। ईषद्विस्मयमानस्तमगस्त्यः प्राह राघवम् ॥ ८
प्रजापतिः पुरा सृष्ट्वा ह्यपः सलिलसंभवः। तासां गोपायने सत्त्वानसृजत् पद्मसंभवः ॥ ९
ते सत्त्वाः सत्त्वकर्तारं विनीतवदुपस्थिताः। किं कुर्म इति भाषन्तः क्षुत्पिपासाभयार्दिताः ॥
प्रजापतिस्तु तान्याह सत्त्वानि प्रहसन्निव। आभाष्य वाचा यत्नेन रक्षध्वमिति मानदः ॥ ११
रक्षामेति च तत्रान्ये यक्षाम[१] इति चापरे। [1]भुङ्क्षिताभुङ्क्षितैरुक्तस्ततस्तानाह भूतकृत् ॥१२
रक्षामेति च यैरुक्तं राक्षसास्ते भवन्तु वः। यक्षाम इति यैरुक्तं यक्षा एव भवन्तु वः ॥ १३
तत्र हेतिः प्रहेतिश्च भ्रातरौ राक्षसाधिपौ। मधुकैटभसंकाशौ बभूवतुररिंदमौ ॥ १४
प्रहेतिर्धार्मिकस्तत्र तपोवनगतस्तदा। हेतिर्दारक्रियार्थे तु परं यत्नमथाकरोत् ॥ १५
स कालभगिनीं कन्यां भयां नाम भयावहाम्। उदावहदमेयात्मा स्वयमेव महामतिः ॥ १६
स तस्यां जनयामास हेती राक्षसपुङ्गवः। पुत्रं पुत्रवतां श्रेष्ठो विद्युत्केश इति श्रुतम् ॥ १७
विद्युत्केशो हेतिपुत्रः स दीप्तार्कसमप्रभः। व्यवर्धत महातेजास्तोयमध्य इवाम्बुजम् ॥ १८
स यदा यौवनं भद्रमनुप्राप्तो निशाचरः। ततो दारक्रियां तस्य कर्तुं व्यवसितः पिता ॥ १९
सन्ध्यायास्तनयां सोऽथ सन्ध्यातुल्यां प्रभावतः। वरयामास पुत्रार्थं हेती राक्षसपुङ्गवः ॥ २०
अवश्यमेव दातव्या परस्मै सेति सन्ध्यया। चिन्तयित्वा सुता दत्ता विद्युत्केशाय राघव ॥२१
सन्ध्यायास्तनयां लब्ध्वा विद्युत्केशो निशाचरः। रमते स्म तया सार्धं पौलोम्या मघवानिव ॥
केनचित्त्वथ कालेन राम सालकटङ्कटा। विद्युत्केशाद्गर्भमाप घनराजिरिवार्णवात् ॥ २३
ततः सा राक्षसी गर्भं घनगर्भसमप्रभम्। प्रसूता मन्दरं गत्वा गङ्गा गर्भमिवाग्निजम् ॥ २४
तमुत्सृज्य तु सा गर्भं विद्युत्केशरतार्थिनी। रेमे तु सार्धं पतिना विस्मृत्य सुतमात्मजम् ॥२५
उत्सृष्टस्तु तदा गर्भो घनशब्दसमस्वनः। तयोत्सृष्टः स तु शिशुः शरदर्कसमद्युतिः ॥ २६
निधायास्ये स्वयं मुष्टिं रुरोद शनकैस्तदा। ततो वृषभमास्थाय पार्वत्या सहितः शिवः ॥ २७
वायुमार्गेण गच्छन् वै शुश्राव रुदितस्वनम्। अपश्यदुमया सार्धं रुदन्तं राक्षसात्मजम् ॥ २८

---

1. बुभुक्षितावुभुक्षितैः इत्यर्थः। १. जक्षामः इति पाठः क्वचित्.।

कारुण्यभावात् पार्वत्या भवस्त्रिपुरसूदनः। तं राक्षसात्मजं चक्रे मातुरेव वयःसमम् ॥ २९
अमरं चैव तं कृत्वा महादेवोऽक्षरोऽव्ययः। पुरमाकाशगं प्रादात् पार्वत्याः प्रियकाम्यया ॥
उमयापि वरो दत्तो राक्षसानां नृपात्मज। सद्योपलब्धिर्गर्भस्य प्रसूतिः सद्य एव च ॥ ३१
सद्य एव वयःप्राप्तिर्मातुरेव वयःसमम् ॥

ततः सुकेशो वरदानगर्वितः श्रियं प्रभोः प्राप्य हरस्य पार्श्वतः।
चचार सर्वत्र महान् महामतिः खगं पुरं प्राप्य पुरंदरो यथा ॥ ३२

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायां
उत्तरकाण्डे रावणादिपूर्वतनराक्षसोत्पत्तिकथनं नाम चतुर्थः सर्गः

## पञ्चमः सर्गः

माल्यवदाद्यपत्योत्पत्तिः

सुकेशं धार्मिकं दृष्ट्वा वरलब्धं[1] च राक्षसम्। ग्रामणीर्नाम गन्धर्वो विश्वावसुसमप्रभः ॥ १
तस्य देववती नाम द्वितीया श्रीरिवात्मजा। त्रिषु लोकेषु विख्याता रूपयौवनशालिनी ॥ २
तां सुकेशाय धर्मेण ददौ रक्षः श्रियं यथा। वरदानकृतैश्वर्यं सा तं प्राप्य पतिं प्रियम् ॥ ३
आसीद्देववती तुष्टा धनं प्राप्येव निर्धनः। स तया सह संयुक्तो रराज रजनीचरः ॥ ४
अञ्जनादभिनिष्क्रान्तः करेण्वेव महागजः। [१]देववत्यां सुकेशस्तु जनयामास राघव ॥ ५
त्रीन् पुत्राञ्जनयामास त्रेताग्निसमविग्रहान्। माल्यवन्तं सुमालिं च मालिं च बलिनां वरम् ॥
त्रींस्त्रिनेत्रसमान् पुत्रान् राक्षसान् राक्षसाधिपः। त्रयो लोका इवाव्यग्राः स्थितास्त्रय इवाग्नयः॥
त्रयो मन्त्रा इवात्युग्रास्त्रयो घोरा इवामयाः। त्रयः सुकेशस्य सुतास्त्रेताग्निसमतेजसः ॥ ८
विवृद्धिमगमंस्तत्र व्याधयोपेक्षिता इव। वरप्राप्तिं पितुस्ते तु ज्ञात्वैश्वर्यं तपोबलात्[२] ॥ ९
तपस्तप्तुं गता मेरुं भ्रातरः कृतनिश्चयाः। प्रगृह्य नियमान् घोरान् राक्षसा नृपसत्तम ॥ १०
विचेरुस्ते तपो घोरं सर्वभूतभयावहम्। सत्यार्जवशमोपेतैस्तपोभिरतिदुष्करैः ॥ ११
सन्तापयन्तस्त्रीँल्लोकान् सदेवासुरमानुषान्। ततो विभुश्चतुर्वक्त्रो विमानवरमास्थितः ॥ १२
सुकेशपुत्रानामन्त्र्य वरदोऽस्मीत्यभाषत। ब्रह्माणं वरदं ज्ञात्वा सेन्द्रैर्देवगणैर्वृतम् ॥ १३
ऊचुः प्राञ्जलयः सर्वे वेपमाना इव द्रुमाः। तपसाराधितो देव यदि नो दिशसे वरम् ॥ १४
अजेयाः शत्रुहन्तारस्तथैव चिरजीविनः। प्रभविष्ण्वो[2] भवामेति परस्परमनुव्रताः[३] ॥ १५
एवं भविष्यतीत्युक्त्वा सुकेशतनयान् विभुः। स ययौ ब्रह्मलोकाय ब्रह्मा ब्राह्मणवत्सलः ॥ १६

---

1. लब्धवरं।
2. छन्दोनुगमाय वर्णलोपः।
१. ततः काले प्र.।
२. ज्ञात्वेश्वरतपोबलात् च.।
३. परस्परानुरक्ताश्च भवेम प्रभविष्णवः क. ग.।

वरं लब्ध्वा तु ते सर्वे राम रात्रिंचरास्तदा । सुरासुरान् प्रबाधन्ते वरदानसुनिर्भयाः ॥ १७
तैर्वध्यमानास्त्रिदशाः सर्षिसङ्घाः सचारणाः । त्रातारं नाधिगच्छन्ति निरयस्था यथा नराः ॥ १८
अथ ते विश्वकर्माणं शिल्पिनां वरमव्ययम् । ऊचुः समेत्य संहृष्टा राक्षसा रघुसत्तम ॥ १९
ओजस्तेजोबलवतां महतामात्मतेजसा । गृहकर्ता भवानेव देवानां हृदयेप्सितम् ॥ २०
अस्माकमपि तावत्त्वं गृहं कुरु महामते । हिमवन्तमुपाश्रित्य मेरुं मन्दरमेव वा ॥ २१
महेश्वरगृहप्रख्यं गृहं नः क्रियतां महत् । विश्वकर्मा ततस्तेषां राक्षसानां महाभुजः ॥ २२
निवासं कथयामास शक्रस्येवामरावतीम् । दक्षिणस्योदधेस्तीरे त्रिकूटो नाम पर्वतः ॥ २३
सुवेल इति चाप्यन्यो द्वितीयस्तत्र सत्तमाः । शिखरे तस्य शैलस्य मध्यमेऽम्बुदसन्निभे ॥ २४
शकुनैरपि दुष्प्रापे टङ्कच्छिन्नचतुर्दिशि । त्रिंशद्योजनविस्तीर्णा शतयोजनमायता ॥ २५
स्वर्णप्राकारसंवीता हेमतोरणसंवृता । मया लङ्केति नगरी शक्राज्ञप्तेन निर्मिता ॥ २६
तस्यां वसत दुर्धर्षा यूयं राक्षसपुङ्गवाः । अमरावतीं समासाद्य सेन्द्रा इव दिवौकसः ॥ २७
लङ्कादुर्गं समासाद्य राक्षसैर्बहुभिर्वृताः । भविष्यथ दुराधर्षाः शत्रुणां शत्रुसूदनाः ॥ २८
विश्वकर्मवचः श्रुत्वा ततस्ते राक्षसोत्तमाः । सहस्रानुचरा भूत्वा गत्वा तामवसन् पुरीम् ॥ २९
दृढप्राकारपरिखां हैमैर्गृहशतैर्वृताम् । लङ्कामवाप्य ते हृष्टा न्यवसन् रजनीचराः ॥ ३०
एतस्मिन्नेव काले तु यथाकामं च राघव । नर्मदा नाम गन्धर्वी बभूव रघुनन्दन ॥ ३१
तस्याः कन्यात्रयं ह्यासीद्ध्रीश्रीकीर्तिसमद्युति । ज्येष्ठक्रमेण सा तेषां राक्षसानामराक्षसी ॥ ३२
कन्यास्ताः प्रददौ हृष्टा पूर्णचन्द्रनिभाननाः । त्रयाणां राक्षसेन्द्राणां तिस्रो गन्धर्वकन्यकाः ॥
दत्ता मात्रा महाभागा नक्षत्रे भगदैवते । कृतदारास्तु ते राम सुकेशतनयास्तदा ॥ ३४
चिक्रीडुः सह भार्याभिरप्सरोभिरिवामराः । ततो माल्यवतो भार्या सुन्दरी नाम सुन्दरी ॥ ३५
स तस्यां जनयामास यदपत्यं निबोध तत् । वज्रमुष्टिर्विरूपाक्षो दुर्मुखश्चैव राक्षसः ॥ ३६
सुप्तघ्नो यज्ञकोपश्च मत्तोन्मत्तौ तथैव च । अनला चाभवत् कन्या सुन्दर्यां राम सुन्दरी ॥ ३७
सुमालिनोऽपि भार्यासीत् पूर्णचन्द्रनिभानना । नाम्ना केतुमती नाम प्राणेभ्योऽपि गरीयसी ॥ ३८
सुमाली जनयामास यदपत्यं निशाचरः । केतुमत्यां महाराज तन्निबोधानुपूर्वशः ॥ ३९
प्रहस्तोऽकम्पनश्चैव विकटः कालकार्मुकः । धूम्राक्षश्चैव दण्डश्च सुपार्श्वश्च महाबलः ॥ ४०
संह्रादिः प्रघसश्चैव भासकर्णश्च राक्षसः । राका पुष्पोत्कटा चैव कैकसी च शुचिस्मिता ॥ ४१
कुम्भीनसी च इत्येते सुमालेः प्रसवाः स्मृताः । मालेस्तु वसुधा नाम गन्धर्वी रूपशालिनी ॥
भार्यासीत् पद्मपत्राक्षी स्वक्षी यक्षी वरोपमा । सुमालेरनुजस्तस्यां जनयामास यत् प्रभो ॥ ४३

अपत्यं कथ्यमानं तु मया त्वं शृणु राघव । अनिलश्चानलश्चैव हरः सम्पातिरेव च ॥ ४४
एते विभीषणामात्या मालेयास्तु निशाचराः ॥

ततस्तु ते राक्षसपुङ्गवास्त्रयो निशाचरैः पुत्रशतैश्च संवृताः ।
सुरान् सहेन्द्रानृषिनागयक्षान् बबाधिरे तान् बहुवीर्यदर्पिताः ॥ ४५
जगद्भ्रमन्तोऽनिलवद्दुरासदा रणेषु मृत्युप्रतिमानतेजसः ।
वरप्रदानादतिगर्विता भृशं क्रतुक्रियाणां प्रशमंकराः सदा ॥ ४६

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायां
उत्तरकाण्डे माल्यवदाद्यपत्योत्पत्तिर्नाम पञ्चमः सर्गः

---

## षष्ठः सर्गः

### विष्णुमाल्यवदादियुद्धम्

तैर्वध्यमाना देवाश्च ऋषयश्च तपोधनाः । भयार्ताः शरणं जग्मुर्देवदेवं महेश्वरम् ॥ १
जगत्सृष्ट्यन्तकर्तारमजमव्यक्तरूपिणम् । आधारं सर्वलोकानामाराध्यं परमं गुरुम् ॥ २
ते समेत्य तु कामारिं त्रिपुरारिं त्रिलोचनम् । ऊचुः प्राञ्जलयो देवा भयगद्गदभाषिणः ॥ ३
सुकेशपुत्रैर्भगवन् पितामहवरोद्धतैः । प्रजाध्यक्ष प्रजाः सर्वा बाध्यन्ते रिपुबाधनैः ॥ ४
शरण्यान्यशरण्यानि ह्याश्रमाणि कृतानि नः । स्वर्गाच्च देवान् प्राच्याव्य स्वर्गे क्रीडन्ति देववत्
अहं विष्णुरहं रुद्रो ब्रह्माहं देवराडहम् । अहं यमश्च वरुणश्चन्द्रोऽहं रविरप्यहम् ॥ ६
इति माली सुमाली च माल्यवांश्चैव राक्षसाः । बाधन्ते समरोद्धर्षा ये च तेषां पुरस्सराः ॥७
तन्नो देव भयार्तानामभयं दातुमर्हसि । अशिवं वपुरस्थाय जहि वै देवकण्टकान् ॥ ८
इत्युक्तस्तु सुरैः सर्वैः कपर्दी नीललोहितः । सुकेशं प्रति सापेक्षः प्राह देवगणान् प्रभुः ॥ ९
अहं तान्न हनिष्यामि मयावध्या हि तेऽसुराः । किं तु मन्त्रं प्रदास्यामि यो वै तान्निहनिष्यति
एतमेव समुद्योगं पुरस्कृत्य महर्षयः । गच्छध्वं शरणं विष्णुं हनिष्यति स तान् प्रभुः ॥ ११
ततस्तु जयशब्देन प्रतिनन्द्य महेश्वरम् । विष्णोः समीपमाजग्मुर्निशाचरभयार्दिताः ॥ १२
शङ्खचक्रधरं देवं प्रणम्य बहुमान्य च । ऊचुः संभ्रांतवद्वाक्यं सुकेशतनयान् प्रति ॥ १३
सुकेशतनयैर्देव त्रिभिस्त्रेताग्निसंनिभैः । आक्रम्य वरदानेन स्थानान्यपहृतानि नः ॥ १४
लङ्का नाम पुरी दुर्गा त्रिकूटशिखरे स्थिता । तत्र स्थिताः प्रबाधन्ते सर्वान्नः क्षणदाचराः ॥
स त्वमस्मद्धितार्थाय जहि तान् मधुसूदन । शरणं त्वां वयं प्राप्ता गतिर्भव सुरेश्वर[1] ॥ १६
राक्षसान् समरे दुष्टान् सानुबन्धान् मदोद्धतान् । चक्रकृत्तास्यकमलान्निवेदय यमाय वै ॥१७

१. १६-१८ श्लोकार्धानां क्रमव्यत्ययः ति. दृश्यते ।

भयेष्वभयदोऽस्माकं नान्योऽस्ति भवता विना । नुद त्वं नो भयं देव नीहारमिव भास्करः ॥
इत्येवं दैवतैरुक्तो देवदेवो जानार्दनः । अभयं भयदोऽरीणां दत्त्वा देवानुवाच ह ॥ १९
सुकेशं राक्षसं जाने ईशानवरदर्पितम् । तांश्चास्य तनयाञ्जाने येषां ज्येष्ठः स माल्यवान् ॥२०
तानहं समतिक्रान्तमर्यादान् राक्षसाधमान् । निहनिष्यामि संक्रुद्धः सुरा भवत विज्वराः ॥
इत्युक्तास्ते सुराः सर्वे विष्णुना प्रभविष्णुना । यथावासं ययुर्हृष्टाः प्रशंसन्तो जनार्दनम् ॥ २२
विबुधानां समुद्योगं माल्यवांस्तु निशाचरः । श्रुत्वा तौ भ्रातरौ वीराविदं वचनमब्रवीत् ॥ २३
अमरा ऋषयश्चैव संगम्य किल शङ्करम् । अस्मद्वधं परीप्सन्त इदं वचनमब्रुवन् ॥ २४
सुकेशतनया देव वरदानबलोद्धताः । बाधन्तेऽस्मान् समुद्दृप्ता घोररूपाः पदे पदे ॥ २५
राक्षसैरभिभूताः स्म न शक्ताः स्म प्रजापते । स्वेषु सद्मसु संस्थातुं भयात्तेषां दुरात्मनाम् ॥
तदस्माकं हितार्थाय जहि तांश्च त्रिलोचन । राक्षसान् हुंकृतेनैव दह प्रदहतां वर ॥ २७
इत्येवं त्रिदशैरुक्तो निशम्यान्धकसूदनः । शिरः करं च धुन्वान इदं वचनमब्रवीत् ॥ २८
अवध्या मम ते देवाः सुकेशतनया रणे । मन्त्रं तु वः प्रदास्यामि यस्तान् वै निहनिष्यति ॥
योऽसौ चक्रगदापाणिः पीतवासा जनार्दनः । हरिर्नारायणः श्रीमाञ्शरणं तं प्रपद्यथ ॥ ३०
हरादवाप्य ते मन्त्रं कामारिमभिवाद्य च । नारायणालयं प्राप्य तस्मै सर्वं न्यवेदयन् ॥ ३१
ततो नारायणेनोक्ता देवा इन्द्रपुरोगमाः । सुरारींस्तान् हनिष्यामि सुरा भवत विज्वराः ॥३२
देवानां भयभीतानां हरिणा राक्षसर्पभौ । प्रतिज्ञातो वधोऽस्माकं चिन्त्यतां यदिह क्षमम् ॥
[1]हिरण्यकशिपोर्मृत्युरन्येषां च सुरद्विषाम्[१] । दुःखं नारायणं जेतुं यो नो हन्तुमभीप्सति ॥३४
ततः सुमाली माली च श्रुत्वा माल्यवतो वचः । ऊचतुर्भ्रातरं ज्येष्ठमश्विनाविव वासवम् ॥
स्वधीतं दत्तमिष्टं चाप्यैश्वर्यं परिपालितम् । आयुर्निरामयं प्राप्तं सुधर्मः प्रापितः पथि ॥ ३६
देवसागरमक्षोभ्यं शस्त्रैः समवगाह्य च । जिता द्विषो ह्यप्रतिमास्तन्नो मृत्युकृतं भयम् ॥ ३७
नारायणश्च रुद्रश्च शक्रश्चापि यमस्तथा । अस्माकं प्रमुखे स्थातुं सर्वे बिभ्यति सर्वदा ॥ ३८
विष्णोर्द्वेषस्य नास्त्येव कारणं राक्षसेश्वर । देवानामेव दोषेण विष्णोः प्रचलितं मनः ॥ ३९
तस्मादद्य समुद्युक्ताः सर्वसैन्यसमावृताः । देवानेव जिघांसाम येभ्यो दोषः समुत्थितः ॥ ४०

1. हिरण्यकशिपोरन्येषां च सुरद्विषां मृत्युः यो नो हन्तुमभीप्सति तं नारायणं जेतुं दुःखं दुःशकमिति योजनीयम् । मृत्युमिति चेद्दृश्यते स पाठः श्लिष्टः ॥

१. अस्यानन्तरम्—नमुचिः कालनेमिश्च संह्रादो वीरसत्तमः ॥ राधेयो बहुमायी च लोकपालोऽथ धार्मिकः । यमलार्जुनौ च हार्दिक्यः शुम्भश्चैव निशुम्भकः ॥ असुरा दानवाश्चैव सत्त्ववन्तो महाबलाः । सर्वे समरमासाद्य न श्रूयन्ते पराजिताः ॥ सर्वैः क्रतुशतैरिष्टं सर्वे मायाविदस्तथा । सर्वे सर्वास्त्रकुशलाः सर्वे शत्रुभयंकराः ॥ नारायणेन निहताः शतशोऽथ सहस्रशः । एतज्ज्ञात्वा तु सर्वेषां क्षमं कर्तुमिहार्हथ ॥ इति च. ।

एवं संमन्त्र्य बलिनः सर्वे सैन्यसमावृताः । उद्योगं घोषयित्वा तु सर्वे नैर्ऋतपुङ्गवाः ॥ ४१
युद्धाय निर्ययुः क्रुद्धा जम्भवृत्रबला इव । इति ते राम संमन्त्र्य सर्वोद्योगेन राक्षसाः ॥ ४२
युद्धाय निर्ययुः सर्वे महाकाया महाबलाः । स्यन्दनैर्वारणैश्चैव हयैश्च [1]गिरिसन्निभैः ॥ ४३
खरैर्गोभी रथोष्ट्रैश्च शिशुमारैर्भुजंगमैः । मकरैः कच्छपैर्मीनैर्विहंगैर्गरुडोपमैः ॥ ४४
सिंहैर्व्याघ्रैर्वराहैश्च सृमरैश्चमरैरपि । त्यक्त्वा लङ्कां गताः सर्वे राक्षसा बलगर्विताः ॥ ४५
प्रयाता देवलोकाय योद्धुं दैवतशत्रवः । लङ्काविपर्ययं दृष्ट्वा यानि लङ्कालयान्यथ ॥ ४६
भूतानि भयदर्शीनि विमनस्कानि सर्वशः । रथोत्तमैरुह्यमानाः शतशोऽथ सहस्रशः ॥ ४७
प्रयाता राक्षसास्तूर्णं देवलोकं प्रयत्नतः । रक्षसामेव मार्गेण दैवतान्यपचक्रमुः ॥ ४८
भूतानि भयदर्शीनि विषयस्थानि सर्वशः । भौमाश्चैवान्तरिक्षाश्च कालाज्ञप्ता भयावहाः ॥ ४९
उत्पाता राक्षसेन्द्राणामभावाय समुत्थिताः । अस्थीनि मेघा ववृषुरुष्णं शोणितमेव च ॥ ५०
वेलां समुद्राश्चोत्क्रान्ताश्चेलुश्चाप्यथ भूधराः । अट्टहासान् विमुञ्चन्तो घननादसमस्वनाः ॥ ५१
वाश्यन्त्यश्च शिवास्तत्र दारुणं घोरदर्शनाः । संपतन्त्यथ भूतानि दृश्यन्ते च यथाक्रमम् ॥ ५२
गृध्रचक्रं महच्चात्र ज्वलनोद्गारिभिर्मुखैः । राक्षसानामुपरि खे भ्रमतेऽलातचक्रवत् ॥ ५३
कपोता रक्तपादाश्च शारिका विद्रुता ययुः । काका वाश्यन्ति तत्रैव बिडाला वै द्विपादिकाः[2]॥
उत्पातांस्ताननादृत्य राक्षसा बलगर्विताः । यान्त्येव न निवर्तन्ते मृत्युपाशावपाशिताः ॥ ५५
माल्यवांश्च सुमाली च माली च सुमहाबलाः । आसन् पुरस्सरास्तेषां क्रतूनामिव पावकाः ॥
माल्यवन्तं च ते सर्वे माल्यवन्तमिवाचलम् । निशाचरा ह्याश्रयन्ति धातारमिव देवताः ॥५७
तद्बलं राक्षसेन्द्राणां महाभ्रघननादितम् । जयेप्सया देवलोकं ययौ मालिवशे स्थितम् ॥ ५८
राक्षसानां समुद्योगं तं तु नारायणः प्रभुः । देवदूतादुपश्रुत्य चक्रे युद्धे तदा मनः ॥ ५९
स सज्जायुधतूणीरो वैनतेयोपरि स्थितः । आसज्य कवचं दिव्यं सहस्रार्कसमद्युति ॥ ६०
आबध्य शरसंपूर्णे इषुधी विमले तदा । श्रोणिसूत्रं च खड्गं च विमलं कमलेक्षणः ॥ ६१
शङ्खचक्रगदाशार्ङ्गखड्गाख्यप्रवरायुधान् । सुपर्णं गिरिसंकाशं वैनतेयमथास्थितः ॥ ६२
राक्षसानामभावाय ययौ तूर्णतरं प्रभुः । सुपर्णपृष्ठे स बभौ श्यामः पीताम्बरो हरिः ॥ ६३
काञ्चनस्य गिरेः शृङ्गे सतडित्तोयदो यथा ॥

स सिद्धदेवर्षिमहोरगैश्च गन्धर्वयक्षैरुपगीयमानः ।
समाससादासुरसैन्यशत्रूंश्चक्रासिशार्ङ्गायुधशङ्खपाणिः ॥ ६४
सुपर्णपक्षानिलनुन्नपक्षं भ्रमत्पताकं प्रविकीर्णशस्त्रम् ।
चचाल तद्राक्षसराजसैन्यं चलोपलं नील इवाचलेन्द्रः ॥ ६५

---

१. करि ति. २. द्विपादयः च. ।

ततः शरैः शोणितमांसरूषितैर्युगान्तवैश्वानरतुल्यविग्रहैः ।
निशाचराः संपरिवार्य माधवं वरायुधैर्निर्बिभिदुः सहस्रशः ॥ ६६

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
उत्तरकाण्डे विष्णुमाल्यवदादियुद्धं नाम षष्ठः सर्गः

---

## सप्तमः सर्गः

### मालिवधः

नारायणगिरिं ते तु गर्जन्तो राक्षसाम्बुदाः । ववृषुः शरवर्षेण वर्षेणेवाद्रिमम्बुदाः ॥ १
श्यामावदातस्तैर्विष्णुर्नीलैर्नक्तंचरोत्तमैः । वृतोऽञ्जनगिरीवासीद्वर्षमाणैः पयोधरैः ॥ २
शलभा इव केदारं मशका इव पावकम्[1]। यथामृतघटं दंशा मकरा इव चार्णवम् ॥ ३
तथा रक्षोधनुर्मुक्ता वज्रानिलमनोजवाः । हरिं विशन्ति स्म शरा लोका इव विपर्यये ॥ ४
स्यन्दनैः स्यन्दनगता गजैश्च गजपृष्ठगाः । अश्वारोहास्तथाश्वैश्च पादाताश्चाम्बरे स्थिताः ॥ ५
राक्षसेन्द्रा गिरिनिभाः शरैः शक्त्यृष्टितोमरैः । निरुच्छ्वासं हरिं चक्रुः प्राणायामा इव द्विजम् ॥
निशाचरैस्ताड्यमानो मीनैरिव महोदधिः । शार्ङ्गमायम्य दुर्धर्षो राक्षसेभ्योऽसृजच्छरान् ॥ ७
शरैः पूर्णायतोत्सृष्टैर्वज्रवत्तैर्मनोजवैः । चिच्छेद विष्णुर्निशितैः शतशोऽथ सहस्रशः ॥ ८
विद्राव्य शरवर्षेण वर्षं वायुरिवोत्थितम् । पाञ्चजन्यं महाशङ्खं प्रदध्मौ पुरुषोत्तमः ॥ ९
सोऽम्बुजो हरिणा ध्मातः सर्वप्राणेन शङ्खराट् । ररास भीमनिर्ह्रादस्त्रैलोक्यं व्यथयन्निव ॥ १०
शङ्खराजरवः सोऽथ त्रासयामास राक्षसान् । मृगराज इवारण्ये समदानिव कुञ्जरान् ॥ ११
न शेकुरश्वाः संस्थातुं विमदाः कुञ्जरा भवन् । स्यन्दनेभ्यश्च्युता वीराः शङ्खरावितदुर्बलाः॥१२
शार्ङ्गचापविनिर्मुक्ता वज्रतुल्याननाः शराः । विदार्य तानि रक्षांसि सुपुङ्खा विविशुः क्षितिम् ॥
भिद्यमानाः शरैः संख्ये नारायणकरच्युतैः । निपेतू राक्षसा भूमौ शैला वज्रहता इव ॥ १४
व्रणानि परगात्रेभ्यो विष्णुचक्रकृतानि वै । असृक् क्षरन्ति धाराभिः स्वर्णधारा इवाचलाः ॥
शङ्खराजरवश्चापि शार्ङ्गचापरवस्तथा । राक्षसानां रवांश्चापि ग्रसते वैष्णवो रवः ॥ १६
तेषां शिरोधरान् धूताञ्शरध्वजधनूंषि च । रथान् पताकास्तूणीरांश्चिच्छेद स हरिः शरैः ॥१७
सूर्यादिव करा घोरा ऊर्मयः सागरादिव। पर्वतादिव नागेन्द्रा धारौघा इव चाम्बुदात् ॥ १८
तथा शार्ङ्गविनिर्मुक्ताः शरा नारायणेरिताः । निर्धावन्तीषवस्तूर्णं शतशोऽथ सहस्रशः ॥ १९
शरभेण यथा सिंहाः सिंहेन द्विरदा यथा । द्विरदेन यथा व्याघ्रा व्याघ्रेण द्वीपिनो यथा॥२०

---

१. पर्वतम् च. ।

द्वीपिनेव यथा श्वानः शुना मार्जारका यथा । मार्जारेण यथा सर्पाः सर्पेण च यथाखवः ॥२१
तथा ते राक्षसाः सर्वे विष्णुना प्रभविष्णुना । द्रवन्ति द्राविताश्चान्ये शायिताश्च महीतले ॥
राक्षसानां सहस्राणि निहत्य मधुसूदनः । वारिजं पूरयामास तोयदं सुरराडिव ॥ २३
नारायणशरत्रस्तं शङ्खनादसुविह्वलम् । ययौ लङ्कामभिमुखं प्रभग्नं राक्षसं बलम् ॥ २४
प्रभग्ने राक्षसबले नारायणशराहते । सुमाली शरवर्षेण निववार रणे हरिम् ॥ २५
स तु तं छादयामास नीहार इव भास्करम् । राक्षसाः सत्त्वसंपन्नाः पुनर्धैर्यं समादधुः ॥ २६
अथ सोऽभ्यपतद्रोषाद्राक्षसो बलदर्पितः । महानादं प्रकुर्वाणो राक्षसाञ्जीवयन्निव ॥ २७
उत्क्षिप्य लम्बाभरणं धुन्वन् करमिव द्विपः । ररास राक्षसो हर्षात् सतडित्तोयदो यथा ॥ २८
सुमालेर्नर्दतस्तस्य शिरो ज्वलितकुण्डलम् । चिच्छेद यन्तुरश्वाश्च भ्रान्तास्तस्य तु रक्षसः ॥ २९
तैरश्वैर्भ्राम्यते भ्रान्तैः सुमाली राक्षसेश्वरः । इन्द्रियाश्वैः परिभ्रान्तैर्धृतिहीनो यथा नरः ॥ ३०
ततो विष्णुं महाबाहुं प्रापतन्तं रणाजिरे । हृते सुमालेरश्वैश्च रथे विष्णुरथं प्रति ॥ ३१
माली चाभ्यद्रवद्युक्तः प्रगृह्य सशरं[1] धनुः । मालेर्धनुश्च्युता बाणाः कार्तस्वरविभूषिताः ॥ ३२
विविशुर्हरिमासाद्य क्रौञ्चं पत्ररथा इव । अर्द्यमानः शरैः सोऽथ मालिमुक्तैः सहस्रशः ॥ ३३
चुक्षुभे न रणे विष्णुर्जितेन्द्रिय इवाधिभिः । अथ मौर्वीस्वनं श्रुत्वा भगवान् भूतभावनः ॥३४
मालिनं प्रति बाणौघान् ससर्जारिनिषूदनः । ते मालिदेहमासाद्य वज्रविद्युत्प्रभाः शराः ॥ ३५
पिबन्ति रुधिरं तस्य नागा इव सुधारसम् । मालिनं विमुखं कृत्वा शङ्खचक्रगदाधरः ॥ ३६
मालिमौलिं ध्वजं चापं वाजिनश्चाप्यपातयत् । विरथस्तु गदां गृह्य माली नक्तंचरोत्तमः ॥३७
आपुप्लुवे गदापाणिर्गिर्यग्रादिव केसरी । गदया गरुडेशानमीशानमिव चान्तकः ॥ ३८
ललाटदेशेऽभ्यहनद्वज्रेणेन्द्रो यथाचलम् । गदयाभिहतस्तेन मालिना गरुडो भृशम् ॥ ३९
रणात् पराङ्मुखं देवं कृतवान् वेदनातुरः । पराङ्मुखे कृते देवे मालिना गरुडेन वै ॥ ४०
उदतिष्ठन्महाञ्शब्दो रक्षसामभिनर्दताम् । रक्षसां रवतां रावं श्रुत्वा हरिहयानुजः ॥ ४१
तिर्यगास्थाय संक्रुद्धः पक्षीशे भगवान् हरिः । पराङ्मुखोऽप्युत्ससर्ज मालेश्चक्रं जिघांसया ॥
तत् सूर्यमण्डलाभासं स्वभासा भासयन्नभः । कालचक्रनिभं चक्रं मालेः शीर्षमपातयत् ॥ ४३
तच्छिरो राक्षसेन्द्रस्य चक्रकृत्तं विभीषणम् । पपात रुधिरोद्गारि पुरा राहुशिरो यथा ॥ ४४
ततः सुरैः सुसंहृष्टैः सर्वप्राणसमीरितः । सिंहनादरवोन्मुक्तः साधु देवेति वादिभिः ॥ ४५
मालिनं निहतं दृष्ट्वा सुमाली माल्यवानपि । सबलौ शोकसंतप्तौ लङ्कामेव प्रधावितौ ॥ ४६
गरुडस्तु समाश्वस्तः संनिवृत्य यथा पुरा । राक्षसान् द्रावयामास पक्षवातेन कोपितः ॥ ४७

---

1. स शरासनम् ति.

चक्रकृत्तास्यकमला गदासंचूर्णितोरसः । लाङ्गलग्लपितग्रीवा मुसलैर्भिन्नमस्तकाः ॥ ४८
केचिच्चैवासिना छिन्नास्तथान्ये शरपीडिताः । निपेतुरम्बरात्तूर्णं राक्षसाः सागराम्भसि ॥ ४९

नारायणो बाणवराशनीभिर्विदारयामास धनुर्विमुक्तैः ।
नक्तंचरान् मुक्तविधूतकेशान् यथाशनीभिः सतडिन्महाभ्राः ॥ ५०
भिन्नातपत्रं पतमानमस्त्रं शरैरपध्वस्तविनीतवेषम् ।
विनिःसृतान्त्रं भयलोलनेत्रं बलं तदुन्मत्ततरं बभूव ॥ ५१
सिंहार्दितानामिव कुञ्जराणां निशाचरणां सहकुञ्जराणाम् ।
रवाश्च वेगाश्च समं बभूवुः पुराणसिंहेन विमर्दितानाम् ॥ ५२
ते वार्यमाणा हरिबाणजालैः स्वबाणजालानि समुत्सृजन्तः ।
धावन्ति नक्तंचरकालमेघा वायुप्रभिन्ना इव कालमेघाः ॥ ५३
चक्रप्रहारैर्विनिकृत्तशीर्षाः संचूर्णिताङ्गाश्च गदाप्रहारैः ।
असिप्रहारैर्द्विविधा विभिन्नाः पतन्ति शैला इव राक्षसेन्द्राः ॥ ५४
विलम्बमानैर्मणिहारकुण्डलैर्निशाचरैर्नीलबलाहकोपमैः ।
निपात्यमानैर्ददृशे निरन्तरं निपात्यमानैरिव नीलपर्वतैः ॥ ५५

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
उत्तरकाण्डे मालिवधो नाम सप्तमः सर्गः

---

## अष्टमः सर्गः

### सुमाल्यादिनिग्रहः

हन्यमाने बले तस्मिन् पद्मनाभेन पृष्ठतः । माल्यवान् संनिवृत्तोऽथ वेलामेत्य इवार्णवः ॥ १
संरक्तनयनः कोपाच्चलन्मौलिर्निशाचरः । पद्मनाभमिदं प्राह वचनं पुरुषोत्तमम् ॥ २
नारायण न जानीषे क्षात्रधर्मं पुरातनम् । अयुद्धमनसो भीतानस्मान् हंसि यथेतरः ॥ ३
पराङ्मुखवधं पापं यः करोत्यसुरेतरः[२] । स हन्ता न गतः स्वर्गं लभते पुण्यकर्मणाम् ॥ ४
युद्धश्रद्धाथवा तेऽस्ति शङ्खचक्रगदाधरः । अहं स्थितोऽस्मि पश्यामि बलं दर्शय यत्तव ॥ ५
माल्यवन्तं स्थितं दृष्ट्वा माल्यन्तमिवाचलम् । उवाच राक्षसेन्द्रं तं देवराजानुजो बली ॥ ६
युष्मत्तो भयभीतानां देवानां वै मयाभयम् । राक्षसोत्सादनं दत्तं तदेतदनुपाल्यते ॥ ७
प्राणैरपि प्रियं कार्यं देवानां हि सदा मया । सोऽहं वो निहनिष्यामि रसातलगतानपि ॥ ८

---

१. लाङ्गूल च.    २. करोति सुरेश्वर पुन.

देवदेवं ब्रुवाणं तं रक्ताम्बुरुहलोचनम्। शक्त्या बिभेद संक्रुद्धो राक्षसेन्द्रो भुजान्तरे ॥ ९
माल्यवद्भुजनिर्मुक्ता शक्तिर्घण्टाकृतस्वना। हरेरुरसि बभ्राज मेघस्थेव शतह्रदा ॥ १०
ततस्तामेव चोत्कृष्य शक्तिं शक्तिधरप्रियः। माल्यवन्तं समुद्दिश्य चिक्षेपाम्बुरुहेक्षणः ॥ ११
स्कन्दोत्सृष्टेव सा शक्तिर्गोविन्दकरनिःसृता। काङ्क्षन्ती राक्षसं प्रायान्महेन्द्रीवाञ्जनाचलम् ॥
सा तस्योरसि विस्तीर्णे हारभासावभासिते। अपतद्राक्षसेन्द्रस्य गिरिकूट इवाशनिः ॥ १३
तया भिन्नतनुत्राणः प्राविशद्विपुलं तमः। माल्यवान् पुनराश्वस्तस्तस्थौ गिरिरिवाचलः ॥ १४
ततः कार्ष्णायसं शूलं कण्टकैर्बहुभिर्वृतम्। प्रगृह्याभ्यहनद्देवं स्तनयोरन्तरे दृढम् ॥ १५
तथैव रणरक्तस्तु मुष्टिना वासवानुजम्। ताडयित्वा धनुर्मात्रमपक्रान्तो निशाचरः ॥ १६
ततोऽम्बरे महाञ्शब्दः साधु साध्विति चोदितः। आहत्य राक्षसो विष्णुं गरुडं चाप्यताडयत्
वैनतेयस्ततः क्रुद्धः पक्षवातेन राक्षसम्। व्यपोहद्बलवान् वायुः शुष्कपर्णचयं यथा ॥ १८
द्विजेन्द्रपक्षवातेन द्रावितं दृश्य पूर्वजम्। सुमाली स्वबलैः सार्धं लङ्कामभिमुखो ययौ ॥ १९
पक्षवातबलोद्धूतो माल्यवानपि राक्षसः। स्वबलेन समागम्य ययौ लङ्कां ह्रिया वृतः ॥ २०
एवं ते राक्षसास्तेन हरिणा कमलेक्षण। बहुशः संयुगे भग्ना हतप्रवरनायकाः ॥ २१
अशक्नुवन्तस्ते विष्णुं प्रतियोद्धुं भयार्दिताः। त्यक्त्वा लङ्कां गता वस्तुं पातालं सहपत्नयः ॥२२
सुमालिनं समासाद्य राक्षसं रघुसत्तम। स्थिताः प्रख्यातवीर्यास्ते वंशे सालकटङ्कटे[1] ॥ २३
ये[2] त्वया निहतास्ते तु पौलस्त्या नाम राक्षसाः। सुमाली माल्यवान् माली ये च तेषां पुरस्सराः ॥
सर्वे तेभ्यो महाभाग रावणाद्बलवत्तराः। न चान्यो राक्षसान् हन्ता सुरारीन् देवकण्टकान् ॥
ऋते नारायणं देवं शङ्खचक्रगदाधरम्। भवान्नारायणो देवश्चतुर्बाहुः सनातनः ॥ २६
राक्षसान् हन्तुमुत्पन्नो ह्यजेयः प्रभुरव्ययः। नष्टधर्मव्यवस्थाता[१] काले काले प्रजाकरः ॥ २७
उत्पद्यते दस्युवधे शरणागतवत्सलः ॥

एषा मया तव नराधिप राक्षसानामुत्पत्तिरद्य कथिता सकला यथावत्।
भूयो निबोध रघुसत्तम रावणस्य जन्मप्रभावमतुलं ससुतस्य सर्वम् ॥ २८
चिरात् सुमाली व्यचरद्रसातलं स राक्षसो विष्णुभयार्दितस्तदा।
पुत्रैश्च पौत्रैश्च समन्वितो बली ततस्तु लङ्कामवसद्धनेश्वरः ॥ २९

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
उत्तरकाण्डे सुमाल्यादिनिग्रहो नाम अष्टमः सर्गः

1. सालकटंकटा नाम्न्याः माल्यवदादि इति प्रसिद्धाः, तेभ्यो रावणाच्च सुमाल्यादयो पितामह्याः सम्बद्धे इत्यर्थः। बलवत्तरा इति योज्यम् ॥
2. ये त्वया निहताः ते तु राक्षसाः पौलस्त्या
१. नष्टधर्मव्यवस्थानां ति.।

## नवमः सर्गः

### रावणाद्युत्पत्तिः

कस्यचित्त्वथ कालस्य सुमाली नाम राक्षसः। रसातलान्मर्त्यलोकं सर्वं वै विचचार ह ॥ १
नीलजीमूतसंकाशस्तप्तकाञ्चनकुण्डलः। कन्यां दुहितरं गृह्य विना पद्ममिव श्रियम् ॥ २
राक्षसेन्द्रः[1] स तु तदा विचरन् वै महीतलम्। तदापश्यत् स गच्छन्तं पुष्पकेण धनेश्वरम् ॥
गच्छन्तं पितरं द्रष्टुं पुलस्त्यतनयं विभुम्। तं दृष्ट्वामरसंकाशं स्वच्छन्दं तपनोपमम् ॥ ४
रसातलं प्रविष्टः सन् मर्त्यलोकात् सविस्मयः। इत्येवं चिन्तयामास राक्षसानां महामतिः ॥ ५
किं कृतं[१] श्रेय इत्येवं वर्धेमहि कथं वयम्[२]। अथाब्रवीत् सुतां रक्षः कैकसीं नाम नामतः ॥६
पुत्रि प्रदानकालोऽयं यौवनं तेऽतिवर्तते। प्रत्याख्यानाच्च भीतैस्त्वं न वरैः प्रतिगृह्यसे ॥ ७
त्वत्कृते च वयं सर्वे यन्त्रिता धर्मबुद्धयः। त्वं हि सर्वगुणोपेता श्री साक्षादिव पुत्रिके ॥ ८
कन्यापितृत्वं दुःखं हि सर्वेषां मानकाङ्क्षिणाम्। न ज्ञायते च कः कन्यां वरयेदिति कन्यके ॥
मातुः कुलं पितृकुलं यत्र चैव प्रदीयते। कुलत्रयं सदा कन्या संशये स्थाप्य तिष्ठति ॥ १०
सा त्वं मुनिवरं श्रेष्ठं प्रजापतिकुलोद्भवम्। भज विश्रवसं पुत्रि पौलस्त्यं वरय स्वयम् ॥ ११
ईदृशास्ते भविष्यन्ति पुत्राः पुत्रि न संशयः। तेजसा भास्करसमो यादृशोऽयं धनेश्वरः ॥ १२
सा तु तद्वचनं श्रुत्वा कन्यका पितृगौरवात्। तत्रोपागम्य सा तस्थौ विश्रवा यत्र तप्यते ॥१३
एतस्मिन्नन्तरे राम पुलस्त्यतनयो द्विजः। अग्निहोत्रमुपातिष्ठच्चतुर्थ इव पावकः ॥ १४
अविचिन्त्य तु तां वेलां दारुणां पितृगौरवात्। उपसृत्याग्रतस्तस्य चरणाधोमुखी स्थिता ॥१५
विलिखन्ती मुहुर्भूमिमङ्गुष्ठाग्रेण भामिनी। स तु तां प्रेक्ष्य सुश्रोणीं पूर्णचन्द्रनिभाननाम् ॥१६
अब्रवीत् परमोदारो दीप्यमानां स्वतेजसा। भद्रे कस्यासि दुहिता कुतो वा त्वमिहागता ॥
किं कार्यं कस्य वा हेतोस्तत्त्वतो ब्रूहि शोभने। एवमुक्ता तु सा कन्या कृताञ्जलिरथाब्रवीत् ॥
आत्मप्रभावेण मुने ज्ञातुमर्हसि मे मतम्। किं तु मां विद्धि ब्रह्मर्षे शासनात् पितुरागताम् ॥
कैकसी नाम नाम्नाहं शेषं त्वं ज्ञातुमर्हसि। स तु गत्वा मुनिर्ध्यानं वाक्यमेतदुवाच ह ॥२०
विज्ञातं ते मया भद्रे कारणं यन्मनोगतम्। सुताभिलाषो मत्तस्ते मत्तमातङ्गगामिनि ॥ २१
दारुणायां तु वेलायां यस्मात्त्वं मामुपस्थिता। शृणु तस्मात् सुतान् भद्रे यादृशाञ्जनयिष्यसि ॥
दारुणान् दारुणाकारान् दारुणाभिजनप्रियान्। प्रसविष्यसि सुश्रोणि राक्षसान् क्रूरकर्मणः ॥
सा तु तद्वचनं श्रुत्वा प्रणिपत्याब्रवीद्वचः। भगवन्नीदृशान् पुत्रांस्त्वत्तोऽहं ब्रह्मवादिनः ॥ २४
नेच्छामि सुदुराचारान् प्रसादं कर्तुमर्हसि। कन्यया त्वेवमुक्तस्तु विश्रवा मुनिपुङ्गवः ॥ २५

---

1. राक्षसेन्द्र इति तदापश्यदिति चार्धद्वयं विभागे- नान्वेतव्यम्। ततः, स तदा इत्यनयोर्न पुनरुक्तिः॥

१. किं कृत्वा पुना. ति. ।

२. नीलजीमूतसंकाशस्तप्तकाञ्चनकुण्डलः। राक्षसेन्द्रस्सतु तदाचिन्तयत्सुमहाद्युतिः ॥ इति अर्धद्वयं अधिकं, ति. ।

उवाच कैकसीं भूयः पूर्णेन्दुरिव रोहिणीम् । पश्चिमो यस्तव सुतो भविष्यति शुभानने ॥ २६
मम वंशानुरूपः स धर्मात्मा च भविष्यति । एवमुक्ता तु सा कन्या राम कालेन केनचित् ॥
जनयामास बीभत्सं रक्षोरूपं सुदारुणम् । दशग्रीवं महादंष्ट्रं नीलाञ्जनचयोपमम् ॥ २८
ताम्रोष्ठं विंशतिभुजं महास्यं दीप्तमूर्धजम् । तस्मिञ्जाते तु तत्काले सज्वालकबलाः शिवाः ॥
क्रव्यादाश्चापसव्यानि मण्डलानि प्रचक्रमुः । ववर्ष रुधिरं देवो मेघाश्च खरनिस्वनाः ॥ ३०
प्रबभौ न च सूर्यो वै महोल्काश्चापतन् भुवि । चकम्पे जगती चैव ववुर्वाताः सुदारुणाः ॥
अक्षोभ्यः क्षुभितश्चैव समुद्रः सरितां पतिः । अथ नामाकरोत्तस्य पितामहसमः पिता ॥ ३२
दशग्रीवः प्रसूतोऽयं दशग्रीवो भविष्यति । तस्य त्वनन्तरं जातः कुम्भकर्णो महाबलः ॥ ३३
प्रमाणाद्यस्य विपुलं प्रमाणं नेह विद्यते । ततः शूर्पणखा नाम संजज्ञे विकृतानना ॥ ३४
विभीषणश्च धर्मात्मा कैकस्याः पश्चिमः सुतः । तस्मिञ्जाते महासत्त्वे पुष्पवर्षं पपात ह ॥ ३५
नभःस्थाने दुन्दुभयो देवानां प्राणदंस्तदा । वाक्यं चैवान्तरिक्षे च साधु साध्विति तत्तथा ॥३६
तौ तु तत्र महारण्ये ववृधाते महौजसौ । तेषां क्रूरो दशग्रीवो लोकोद्वेगकरोऽभवत्[1] ॥ ३७
कुम्भकर्णः प्रमत्तस्तु महर्षीन् धर्मवत्सलान् । त्रैलोक्यं भक्षयन्नित्यासंतुष्टो विचचार ह ॥ ३८
विभीषणस्तु धर्मात्मा नित्यं धर्मे व्यवस्थितः । स्वाध्यायनियताहार उवास विजितेन्द्रियः ॥ ३९
अथ वैश्रवणो देवस्तत्र कालेन केनचित् । आगतः पितरं द्रष्टुं पुष्पकेण धनेश्वरः ॥ ४०
तं दृष्ट्वा कैकसी तत्र ज्वलन्तमिव तेजसा । आगम्य राक्षसी तत्र दशग्रीवमुवाच ह ॥ ४१
पुत्र वैश्रवणं पश्य भ्रातरं तेजसा वृतम् । भ्रातृभावे समे चापि पश्यात्मानं त्वमीदृशम् ॥ ४२
दशग्रीव तथा यत्नं कुरुष्वामितविक्रम । यथा त्वमसि मे पुत्र भव वैश्रवणोपमः ॥ ४३
मातुस्तद्वचनं श्रुत्वा दशग्रीवः प्रतापवान् । अमर्षमतुलं लेभे प्रतिज्ञां चाकरोत्तदा ॥ ४४
सत्यं ते प्रतिजानामि भ्रातृतुल्योऽधिकोऽपि वा । भविष्याम्योजसा चैव संतापं त्यज हृद्गतम् ॥
ततस्तेनैव कोपेन दशग्रीवः सहानुजः । चिकीर्षुर्दुष्करं कर्म तपसे धृतमानसः ॥ ४६
प्राप्स्यामि तपसा काममिति कृत्वाध्यवस्य च । आगच्छदात्मसिद्ध्यर्थं गोकर्णस्याश्रमं शुभम् ॥

स राक्षसस्तत्र सहानुजस्तदा तपश्चकारातुलमुग्रविक्रमः ।
अतोषयच्चापि पितामहं विभुं ददौ स तुष्टश्च वराञ्जयावहान् ॥ ४८

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
उत्तरकाण्डे रावणाद्युत्पत्तिर्नाम नवमः सर्गः

१. अस्य स्थाने, कुम्भकर्णदशग्रीवौ लोकोद्वेगकरौ तदा । च. ।

## दशमः सर्गः

### रावणादिवरदानम्

अथाब्रवीन्मुनिं रामः कथं ते भ्रातरो वने । कीदृशं तु तदा ब्रह्मंस्तपस्तेपुर्महाबलाः ॥ १
अगस्त्यस्त्वब्रवीत्तत्र रामं सुप्रीतमानसम् । तांस्तान् धर्मविधींस्तत्र भ्रातरस्ते समाविशन् ॥ २
कुम्भकर्णस्ततो यत्तो नित्यं धर्मपथे स्थितः । ततापं ग्रीष्मकाले तु पञ्चाग्नीन् परितः स्थितः॥ ३
मेघाम्बुसिक्तो वर्षासु वीरासनमसेवत । नित्यं च शिशिरे काले जलमध्यप्रतिश्रयः ॥ ४
एवं वर्षसहस्राणि दश तस्यातिचक्रमुः । धर्मे प्रयतमानस्य सत्पथे निष्ठितस्य च ॥ ५
विभीषणस्तु धर्मात्मा नित्यं धर्मपरः शुचिः । पञ्च वर्षसहस्राणि पादेनैकेन तस्थिवान् ॥ ६
समाप्ते नियमे तस्य ननृतुश्चाप्सरोगणाः । पपात पुष्पवर्षं च क्षुभिताश्चापि देवताः ॥ ७
पञ्च वर्षसहस्राणि सूर्यं चैवान्ववर्तत । तस्थौ चोर्ध्वशिरोबाहुः स्वाध्यायधृतमानसः ॥ ८
एवं विभीषणस्यापि स्वर्गस्थस्येव नन्दने । दश वर्षसहस्राणि गतानि नियतात्मनः ॥ ९
दश वर्षसहस्राणि निराहारो दशाननः । पूर्णे वर्षसहस्रे तु शिरश्चाग्नौ जुहाव सः ॥ १०
एवं वर्षसहस्राणि नव तस्यातिचक्रमुः । शिरांसि नव चाप्यस्य प्रविष्टानि हुताशनम् ॥ ११
अथ वर्षसहस्रे तु दशमे दशमं शिरः । छेत्तुकामे दशग्रीवे प्राप्तस्तत्र पितामहः ॥ १२
पितामहस्तु सुप्रीतः सार्धं दैवैरुपस्थितः । तव तावद्दशग्रीव प्रीतोऽस्मीत्यभ्यभाषत ॥ १३
शीघ्रं वरय धर्मज्ञ वरो यस्तेऽभिकाङ्क्षितः । तं ते कामं करोम्यद्य न वृथा ते परिश्रमः ॥१४
अथाब्रवीद्दशग्रीवः प्रहृष्टेनान्तरात्मना । प्रणम्य शिरसा देवं हर्षगद्गदया गिरा ॥ १५
भगवन् प्राणिनां नित्यं नान्यत्र मरणाद्भयम् । नास्ति मृत्युसमः शत्रुरमरत्वमहं वृणे ॥ १६
एवमुक्तस्तदा ब्रह्मा दशग्रीवमुवाच ह । नास्ति सर्वामरत्वं ते वरमन्यं वृणीष्व मे ॥ १७
एवमुक्ते तदा राम ब्रह्मणा लोककर्तृणा । दशग्रीव उवाचेदं कृताञ्जलिरथाग्रतः ॥ १८
सुपर्णनागयक्षाणां दैत्यदानवरक्षसाम् । अवध्योऽहं प्रजाध्यक्ष देवतानां च शाश्वत ॥ १९
न हि चिन्ता ममान्येषु प्राणिष्वमरपूजित । तृणभूता हि ते मन्ये प्राणिनो मानुषादयः ॥२०
एवमुक्तस्तु धर्मात्मा दशग्रीवेण रक्षसा । उवाच वचनं देवः सह दैवैः पितामहः ॥ २१
भविष्यत्येवमेतत्ते वचो राक्षसपुङ्गव । एवमुक्त्वा तु तं राम दशग्रीवं पितामहः ॥ २२
शृणु चापि वरो भूयः प्रीतस्येह शुभो मम । हुतानि यानि शीर्षाणि पूर्वमग्नौ त्वयानघ॥ २३
पुनस्तानि भविष्यन्ति तथैव तव राक्षस । वितरामीह ते सौम्य वरं चान्यं दुरासदम् ॥ २४
छन्दतस्तव रूपं च मनसा यद्यथेप्सितम् । भविष्यति न संदेहो मद्वरात्तव राक्षस[1] ॥ २५
एवं पितामहोक्तस्य दशग्रीवस्य रक्षसः । अग्नौ हुतानि शीर्षाणि पुनस्तान्युदितानि वै ॥ २६
एवमुक्त्वा तु तं राम दशग्रीवं पितामहः । विभीषणमथोवाच वाक्यं लोकपितामहः ॥ २७

---

१. इदं अर्धं, ति. नास्ति ।

विभीषण त्वया वत्स धर्मसंहितबुद्धिना । परितुष्टोऽस्मि धर्मात्मन् वरं वरय सुव्रत ॥ २८
विभीषणस्तु धर्मात्मा वचनं प्राह साञ्जलिः । वृतः सर्वगुणैर्नित्यं चन्द्रमा रश्मिभिर्यथा ॥ २९
भगवन् कृतकृत्योऽहं यन्मे लोकगुरुः स्वयम्[1] । प्रीतेन यदि दातव्यो वरो मे शृणु सुव्रत ॥
परमापद्गतस्यापि धर्मे मम मतिर्भवेत् । अशिक्षितं च ब्रह्मास्त्रं भगवन् प्रतिभातु मे ॥ ३१
या या मे जायते बुद्धिर्येषु येष्वाश्रमेषु च । सा सा भवतु धर्मिष्ठा तं तु धर्मं च पालये ॥
एष मे परमोदार वरः परमको मतः । न हि धर्माभिरक्तानां लोके किंचन दुर्लभम् ॥ ३३
पुनः प्रजापतिः प्रीतो विभीषणमुवाच ह । धर्मिष्ठस्त्वं यथा वत्स तथा चैतद्भविष्यति ॥ ३४
यस्माद्राक्षसयोनौ ते जातस्यामित्रनाशन । नाधर्मे जायते बुद्धिरमरत्वं ददामि ते ॥ ३५
इत्युक्त्वा कुम्भकर्णाय वरं दातुमुपस्थितम् । प्रजापतिं सुराः सर्वे वाक्यं प्राञ्जलयोऽब्रुवन् ॥ ३६
न तावत् कुम्भकर्णाय प्रदातव्यो वरस्त्वया । जानीषे हि यथा लोकांस्त्रासयत्येष दुर्मतिः ॥३७
नन्दनेऽप्सरसः सप्त महेन्द्रानुचरा दश । अनेन भक्षिता ब्रह्मन्नृषयो मानुषास्तथा ॥ ३८
[2]अलब्धवरपूर्वेण यत् कृतं राक्षसेन तु । तदेष [3]वरलब्धः स्याद्भक्षयेद्भुवनत्रयम् ॥ ३९
वरव्याजेन मोहोऽस्मै दीयताममितप्रभ । लोकानां स्वस्ति चैवं स्याद्भवेदस्य च संनतिः ॥ ४०
एवमुक्तः सुरैर्ब्रह्माचिन्तयत् पद्मसंभवः । चिन्तिता चोपतस्थेऽस्य पार्श्वं देवी सरस्वती ॥ ४१
प्राञ्जलिः सा तु पार्श्वस्था वाक्यं प्राह सरस्वती । इयमस्म्यागता देव किं कार्यं करवाण्यहम् ॥
प्रजापतिस्तु तां प्राप्तां प्राह वाक्यं सरस्वतीम् । वाणि त्वं राक्षसेन्द्रास्ये भव या देवतेप्सिता ॥
तथेत्युक्त्वा प्रविष्टा सा प्रजापतिरथाब्रवीत् । कुम्भकर्ण महाबाहो वरं वरय यो मतः ॥ ४४
कुम्भकर्णस्तु तद्वाक्यं श्रुत्वा वचनमब्रवीत् । स्वप्तुं वर्षाण्यनेकानि देवदेव ममेप्सितम् ॥ ४५
एवमस्त्विति तं चोक्त्वा प्रायाद्ब्रह्मा सुरैः समम् । देवी सरस्वती चैव राक्षसं तं जहौ पुनः ॥
ब्रह्मणा सह देवेषु गतेषु च नभःस्थलम् । विमुक्तोऽसौ सरस्वत्या स्वां संज्ञां च ततो गतः ॥
कुम्भकर्णस्तु दुष्टात्मा चिन्तयामास दुःखितः । ईदृशं किमिदं वाक्यं ममाद्य वदनाच्च्युतम् ॥
अहं व्यामोहितो देवैरिति मन्ये तदागतैः । एवं लब्धवराः सर्वे भ्रातरो दीप्ततेजसः ॥ ४९
श्लेष्मातकवनं गत्वा तत्र ते न्यवसन् सुखम् ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
उत्तरकाण्डे रावणादिवरदानं नाम दशमः सर्गः

## एकादशः सर्गः

### रावणलङ्काप्राप्तिः

सुमाली वरलब्धांस्तु ज्ञात्वा चैतान्निशाचरान् । उदतिष्ठद्भयं त्यक्त्वा सानुगः स रसातलात् ॥

---

1. स्वयमिति, प्रसन्न इत्यर्थादध्याहारः । 2. पूर्वमलब्धवरेण । 3. लब्धवरः ।

मारीचश्च प्रहस्तश्च विरूपाक्षो महोदरः । उदतिष्ठन् सुसंरब्धाः सचिवास्तस्य रक्षसः ॥ २
सुमाली सचिवैः सार्धं वृतो राक्षसपुङ्गवैः । अभिगम्य दशग्रीवं परिष्वज्येदमब्रवीत् ॥ ३
दिष्ट्या ते वत्स संप्राप्तश्चिन्तितोऽयं मनोरथः । यस्त्वं त्रिभुवनश्रेष्ठाल्लब्धवान् वरमुत्तमम् ॥ ४
यत्कृते च वयं लङ्कां त्यक्त्वा याता रसातलम् । तद्गतं नो महाबाहो महद्विष्णुकृतं भयम् ॥ ५
असकृत्तद्भयाद्भीताः परित्यज्य स्वमालयम् । विद्रुताः सहिताः सर्वे प्रविष्टाः स्म रसातलम् ॥ ६
अस्मदीया च लङ्केयं नगरी राक्षसोचिता । निवेशिता तव भ्रात्रा धनाध्यक्षेण धीमता ॥ ७
यदि नामात्र शक्यं स्यात् साम्ना दानेन वानघ । तरसा वा महाबाहो प्रत्यानेतुं कृतं भवेत् ॥
त्वं तु लङ्केश्वरस्तात भविष्यसि न संशयः । त्वया राक्षसवंशोऽयं निमग्नोऽपि समुद्धृतः ॥ ९
सर्वेषां नः प्रभुश्चैव भविष्यसि महाबल । अथाब्रवीद्दशग्रीवो मातामहमुपस्थितम् ॥ १०
वित्तेशो गुरुरस्माकं नार्हसे वक्तुमीदृशम् । साम्नापि राक्षसेन्द्रेण प्रत्याख्यातो गरीयसा ॥ ११
किंचिन्नाह तदा रक्षो ज्ञात्वा तस्य चिकीर्षितम् । कस्यचित्त्वथ कालस्य वसन्तं रावणं ततः ॥
उक्तवन्तं तथा वाक्यं दशग्रीवं निशाचरः[1] । प्रहस्तः प्रश्रितं वाक्यमिदमाह सकारणम्[2] ॥ १३
दशग्रीव महाबाहो नार्हस्त्वं वक्तुमीदृशम् । सौभ्रात्रं नास्ति शूराणां शृणु चेदं वचो मम ॥
अदितिश्च दितिश्चैव भगिन्यौ सहिते हिते । भार्ये परमरूपिण्यौ कश्यपस्य प्रजापतेः ॥ १५
अदितिर्जनयामास देवांस्त्रिभुवनेश्वरान् । दितिस्त्वजनयत् पुत्रान् कश्यपस्यात्मसंभवान् ॥ १६
दैत्यानां किल धर्मज्ञ पुरीयं सवनार्णवा । सपर्वता मही वीर तेऽभवन् प्रभविष्णवः ॥ १७
निहत्य तांस्तु समरे विष्णुना प्रभविष्णुना । देवानां वशमानीतं त्रैलोक्यमिदमव्ययम् ॥ १८
नैतदेको भवानेव करिष्यति विपर्ययम् । सुरासुरैराचरितं तत् कुरुष्व वचो मम ॥ १९
एवमुक्तो दशग्रीवः प्रहृष्टेनान्तरात्मना । चिन्तयित्वा मुहूर्तं वै बाढमित्येव सोऽब्रवीत् ॥ २०
स तु तेनैव हर्षेण तस्मिन्नहनि वीर्यवान् । वनं गतो दशग्रीवः सह तैः क्षणदाचरैः ॥ २१
त्रिकूटस्थः स तु तदा दशग्रीवो निशाचरः । प्रेषयामास दौत्येन प्रहस्तं वाक्यकोविदम् ॥ २२
प्रहस्त शीघ्रं गच्छ त्वं ब्रूहि नैर्ऋतपुङ्गवम् । वचसा मम वित्तेशं सामपूर्वमिदं वचः ॥ २३
इयं लङ्कापुरी राजन् राक्षसानां महात्मनाम् । त्वया निवेशिता सौम्य नैतद्युक्तं तवानघ ॥ २४
तद्भवान् यदि नो ह्यद्य दद्यादतुलविक्रम । कृता भवेन्मम प्रीतिर्धर्मश्चैवानुपालितः ॥ २५
स तु गत्वा पुरीं लङ्कां धनदेन सुरक्षिताम् । अब्रवीत् परमोदारं वित्तपालमिदं वचः ॥ २६
प्रेषितोऽहं तव भ्रात्रा दशग्रीवेण सुव्रत । त्वत्समीपं महाबाहो सर्वशस्त्रभृतां वर ॥ २७
तच्छ्रूयतां महाप्राज्ञ सर्वशास्त्रविशारद[3] । वचनं मम वित्तेश यद्ब्रवीति दशाननः ॥ २८

---

१. इदं अर्धं ति· नास्ति । २. इदं अर्धं ति· नास्ति ।
२. स रावणम्, ति ।

इयं किल पुरी रम्या सुमालिप्रमुखैः पुरा । भुक्तपूर्वा विशालाक्ष राक्षसैर्भीमविक्रमैः ॥ २९
तेन विज्ञाप्यते सोऽयं सांप्रतं विश्रवात्मज ।तदेषा दीयतां तात याचतस्तस्य सामतः ॥ ३०
प्रहस्तादभिसंश्रुत्य देवो वैश्रवणो वचः । प्रत्युवाच प्रहस्तं तं वाक्यं वाक्यविशारदः ॥ ३१
दत्ता ममेयं पित्रा तु लङ्का शून्या निशाचरैः । निवासिता च मे [1]यक्षैर्दानमानादिभिर्गुणैः ॥
ब्रूहि गच्छ दशग्रीवं पुरं राज्यं च यन्मम । तवाप्येतन्महाबाहो भुङ्क्ष्व राज्यकण्टकम् ॥३३
अविभक्तं त्वया सार्धं राज्यं यच्चापि मे वसु । एवमुक्त्वा धनाध्यक्षो जगाम पितुरन्तिकम् ॥
अभिवाद्य गुरुं प्राह रावणस्य यदीप्सितम् । एष तात दशग्रीवो दूतं प्रेषितवान् मम ॥ ३५
दीयतां नगरी लङ्का पूर्वं रक्षोगणोषिता । मयात्र यदनुष्ठेयं तन्ममाचक्ष्व सुव्रत ॥ ३६
ब्रह्मर्षिस्त्वेवमुक्तोऽसौ विश्रवा मुनिपुङ्गवः । प्राञ्जलिं धनदं प्राह शृणु पुत्र वचो मम ॥ ३७
दशग्रीवो महाबाहुरुक्तवान् मम सन्निधौ । मया निर्भित्सितश्चासीद्बहुशोक्तः सुदुर्मतिः ॥ ३८
स क्रोधेन मया चोक्तो ध्वंससे च पुनः पुनः । श्रेयोऽभियुक्तं धर्म्यं च शृणु पुत्र वचो मम ॥
वरप्रदानात् संमूढो मान्यामान्यान् स दुर्मतिः । न वेत्ति मम शापाच्च प्रकृतिं दारुणां गतः॥
तस्माद्गच्छ महाबाहो कैलासं धरणीधरम् । निवेशय निवासार्थं त्यक्त्वा लङ्कां सहानुगः ॥ ४१
तत्र मन्दाकिनी रम्या नदीनामुत्तमा नदी । काञ्चनैः सूर्यसंकाशैः पङ्कजैः संवृतोदका ॥ ४२
कुमुदैरुत्पलैश्चैव तथान्यैश्च सुगन्धिभिः । तत्र देवाः सगन्धर्वाः साप्सरोरगकिन्नराः ॥ ४३
विहारशीलाः सततं रमन्ते सर्वदाश्रिताः । न हि क्षमं तवानेन वैरं धनद रक्षसा ॥ ४४
जानीषे हि यथानेन लब्धः परमको वरः । एवमुक्तो गृहीत्वाशु तद्वचः पितृगौरवात् ॥ ४५
सदारपुत्रः सामात्यः सवाहनधनो गतः । प्रहस्तोऽथ दशग्रीवं गत्वा वचनमब्रवीत् ॥ ४६
प्रहृष्टात्मा महात्मानं सहामात्यं सहानुजम् । शून्या सा नगरी लङ्का त्यक्त्वैनां धनदो गतः ॥
प्रविश्य तां सहास्माभिः स्वधर्मं प्रतिपालय । एवमुक्तो दशग्रीवः प्रहस्तेन महाबलः ॥ ४८
विवेश नगरीं लङ्कां भ्रातृभिः सबलानुगैः । धनदेन परित्यक्तां सुविभक्तमहापथाम् ॥ ४९
आरुरोह स देवारिः स्वर्गं देवाधिपो यथा ॥

स चाभिषिक्तः क्षणदाचरैस्तदा निवेशयामास पुरीं दशाननः ।
निकामपूर्णा च बभूव सा पुरी निशाचरैर्नीलवलाहकोपमैः ॥ ५०
धनेश्वरस्त्वथ पितृवाक्यगौरवान्न्यवेशयच्छशिविमले गिरौ पुरीं ।
स्वलङ्कृतैर्भवनवरैर्विभूषितां पुरन्दरस्येव[2] तदामरावतीम् ॥ ५१

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
उत्तरकाण्डे रावणलङ्काप्राप्तिर्नाम एकादशः सर्गः

१. रक्षः पुना. ति. । २. पुरन्दरः स्वरिव यथा, ति ।

## द्वादशः सर्गः

### रावणादिविवाहः

राक्षसेन्द्रोऽभिषिक्तस्तु भ्रातृभ्यां सहितस्तदा । ततः प्रदानं राक्षस्या भगिन्याः समचिन्तयत् ॥
स्वसारं कालकेयाय दानवेन्द्राय राक्षसीम् । ददौ शूर्पणखां नाम विद्युज्जिह्वाय नामतः[1] ॥ २
अथ दत्त्वा स्वयं रक्षो मृगयामटते स्म तत् । तत्रापश्यत्ततो राम मयं नाम दितेः सुतम् ॥ ३
कन्यासहायं तं दृष्ट्वा दशग्रीवो निशाचरः । अपृच्छत् को भवानेको निर्मनुष्यमृगे वने ॥ ४
अनया मृगशाबाक्ष्या किमर्थं सह तिष्ठसि । मयस्त्वथाब्रवीद्राम पृच्छन्तं तं निशाचरम् ॥ ५
श्रूयतां सर्वमाख्यास्ये यथावृत्तमिदं मम । हेमा नामाप्सरा तात श्रुतपूर्वा यदि त्वया ॥ ६
दैवतैर्मम सा दत्ता पौलोमीव शतक्रतोः । तस्यां सक्तमनास्तात दश[2] वर्षशतान्यहम् ॥ ७
सा च दैवतकार्येण गता वर्षाश्चतुर्दश । तस्याः कृते च हेमायाः सर्वं हेममयं पुरम् ॥ ८
वज्रवैदूर्यचित्रं च मायया निर्मितं मया । तत्राहमवसं दीनस्तया हीनः सुदुःखितः ॥ ९
तस्मात् पुराद्दुहितरं गृहीत्वा वनमागतः । इयं ममात्मजा राजंस्तस्याः कुक्षौ विवर्धिता ॥१०
भर्तारमनया सार्धमस्याः प्राप्तोऽस्मि मार्गितुम् । कन्यापितृत्वं दुःखं हि सर्वेषां मानकाङ्क्षिणाम् ॥
कन्या हि द्वे कुले नित्यं संशये स्थाप्य तिष्ठति । पुत्रद्वयं ममाप्यस्यां भार्यायां संबभूव ह ॥१२
मायावी प्रथमस्तात दुन्दुभिस्तदनन्तरः । एवं ते सर्वमाख्यातं यथा तत्त्वेन पृच्छतः ॥ १३
त्वामिदानीं कथं तात जानीयां को भवानिति । एवमुक्तं तु तद्रक्षो विनीतमिदमब्रवीत् ॥ १४
अहं पौलस्त्यतनयो दशग्रीवश्च नामतः । मुनेर्विश्रवसो यस्तु तृतीयो ब्रह्मणोऽभवत् ॥ १५
एवमुक्तस्तदा राम राक्षसेन्द्रेण दानवः । महर्षेस्तनयं ज्ञात्वा मयो हर्षमुपागतः ॥ १६
दातुं दुहितरं तस्मै रोचयामास यत्र वै । करेण तु करं तस्या ग्राहयित्वा मयस्तदा ॥ १७
प्रहसन् प्राह दैत्येन्द्रो राक्षसेन्द्रमिदं वचः । इयं ममात्मजा राजन् हेमयाप्सरसा धृता ॥ १८
कन्या मन्दोदरी नाम पत्न्यर्थं प्रतिगृह्यताम् । बाढमित्येव तं राम दशग्रीवोऽभ्यभाषत ॥ १९
प्रज्वाल्य तत्र चैवाग्निमकरोत् पाणिसंग्रहम् । स हि तस्य मयो राम शापाभिज्ञस्तपोधनात् ॥
विदित्वा तेन सा दत्ता तस्य पैतामहं कुलम् । अमोघां तस्य शक्तिं च प्रददौ परमाद्भुताम् ॥
परेण तपसा लब्धां जघ्निवाँल्लक्ष्मणं यया । एवं स्वीकृतदारो वै लङ्कायाः ईश्वरः प्रभुः ॥ २२
गत्वा तु नगरीं भार्ये भ्रातृभ्यां समुपाहरत् । वैरोचनस्य दौहित्रीं वज्रज्वालेति नामतः ॥ २३
तां भार्यां कुम्भकर्णस्य रावणः समकल्पयत् । गन्धर्वराजस्य सुतां शैलूषस्य महात्मनः ॥ २४
सरमां नाम धर्मज्ञां लेभे भार्यां विभीषणः । तीरे तु सरसो वै तु संजज्ञे मानसस्य हि ॥ २५
सरस्तदा मानसं तु ववृधे जलदागमे । मात्रा तु तस्याः कन्यायाः स्नेहेनाक्रन्दितं वचः ॥ २६

---

१. राक्षसः ति. । २. पञ्च च. ।

सरो मा वर्धयस्वेति ततः सा सरमाभवत्। एवं ते कृतदारा वै रेमिरे तत्र राक्षसाः॥ २७
स्वां स्वां भार्यामुपागम्य गन्धर्वा इव नन्दने। ततो मन्दोदरी पुत्रं मेघनादमजीजनत्॥ २८
स एव इन्द्रजिन्नाम युष्माभिरभिधीयते। जातमात्रेण हि पुरा तेन रावणसूनुना॥ २९
रुदता सुमहान् मुक्तो नादो जलधरोपमः। जडीकृता च सा लङ्का तस्य नादेन राघव॥ ३०
पिता तस्याकरोन्नाम मेघनाद इति स्वयम्। सोऽवर्धत तदा राम रावणान्तःपुरे शुभे॥ ३१
रक्ष्यमाणो वरस्त्रीभिश्छन्नः काष्ठैरिवानलः। मातापित्रोर्महाहर्षं जनयन् रावणात्मजः॥ ३२

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
उत्तरकाण्डे रावणादिविवाहो नाम द्वादशः सर्गः

---

## त्रयोदशः सर्गः

### धनददूतहननम्

अथ लोकेश्वरोत्सृष्टा तत्र कालेन केनचित्। निद्रा समभवत्तीव्रा कुम्भकर्णस्य रूपिणी॥ १
ततो भ्रातरमासीनं कुम्भकर्णोऽब्रवीद्वचः। निद्रा मां बाधते राजन् कारयस्व ममालयम्॥ २
विनियुक्तास्ततो राज्ञा शिल्पिनो विश्वकर्मवत्। अकुर्वन् कुम्भकर्णस्य कैलाससममालयम्[2]॥ ३
विस्तीर्णं योजनं शुभ्रं ततो द्विगुणमायतम्। दर्शनीयं निराबाधं कुम्भकर्णस्य चक्रिरे॥ ४
स्फाटिकैः काञ्चनैश्चित्रैः स्तम्भैः सर्वत्र शोभितम्। वैदूर्यकृतसोपानं किङ्किणीजालकं तथा॥ ५
दान्ततोरणविन्यस्तं वज्रस्फटिकवेदिकम्। मनोहरं सर्वसुखं कारयामास राक्षसः॥ ६
सर्वत्र सुखदं नित्यं मेरोः पुण्यां गुहामिव। तत्र निद्रासमाविष्टः कुम्भकर्णो महाबलः॥ ७
बहून्यब्दसहस्राणि शयानो न प्रबुध्यते। निद्राभिभूते तु तदा कुम्भकर्णे दशाननः॥ ८
देवर्षियक्षगन्धर्वान् संजघ्ने हि निरङ्कुशः। उद्यानानि च चित्राणि नन्दनादीनि यानि च॥ ९
तानि गत्वा सुसंक्रुद्धो भिनत्ति स दशाननः। नदीं गज इव क्रीडन् वृक्षान् वायुरिव क्षिपन्॥
नगान् वज्र इवोत्सृष्टो विध्वंसयति राक्षसः। तथावृत्तं तु विज्ञाय दशग्रीवं धनेश्वरः॥ ११
कुलानुरूपं धर्मज्ञो वृत्तं संस्मृत्य चात्मनः। सौभ्रात्रदर्शनार्थं तु दूतं वैश्रवणस्तदा॥ १२
लङ्कां संप्रेषयामास दशग्रीवस्य वै हितम्। स गत्वा नगरीं लङ्कामाससाद विभीषणम्॥ १३
मानितस्तेन धर्मेण पृष्टश्चागमनं प्रति। पृष्ट्वा च कुशलं राज्ञो ज्ञातीनां च विभीषणः॥ १४
सभायां दर्शयामास तमासीनं दशाननम्। स दृष्ट्वा तत्र राजानं दीप्यमानं स्वतेजसा॥ १५
जयेति वाचा संपूज्य तूष्णीं समभिवर्तत। तं तत्रोत्तमपर्यङ्के वरास्तरणशोभिते॥ १६

---

१. सरोमावर्धेतेति, ति.। २. इदमर्धम् च. ति. नास्ति

उपविष्टं दशग्रीवं दूतो वाक्यमथाब्रवीत् । राजन् वदामि ते सर्वं भ्राता तव यदब्रवीत् ॥ १७
उभयोः सदृशं वीर वृत्तस्य च कुलस्य च । साधु पर्याप्तमेतावत् कृतश्चारित्रसंग्रहः ॥ १८
साधु धर्मे व्यवस्थानं क्रियतां यदि शक्यते । दृष्टं मे नन्दनं भग्नमृषयो निहताः श्रुताः ॥ १९
देवतानां समुद्योगस्त्वत्तो राजन् मम श्रुतः । निराकृतश्च बहुशस्त्वयाहं राक्षसाधिप ॥ २०
सापराधोऽपि बालो हि रक्षितव्यः स्वबान्धवैः । अहं तु हिमवत्पृष्ठं गतो धर्ममुपासितुम् ॥२१
रौद्रं वृतं समास्थाय नियतो नियतेन्द्रियः । तत्र देवो मया दृष्टः सह देव्योमया प्रभुः ॥ २२
सव्यं चक्षुर्मया दैवात्तत्र देव्यां निपातितम् । कान्वियं स्यादिति शुभा न खल्वन्येन हेतुना ॥
रूपं ह्यनुपमं कृत्वा रुद्राणी तत्र तिष्ठति । देव्या दिव्यप्रभावेण दग्धं सव्यं ममेक्षणम् ॥ २४
रेणुध्वस्तमिव ज्योतिः पिङ्गलत्वमुपागतम् । ततोऽहमन्यद्विस्तीर्णं गत्वा तस्य गिरेस्तटम् ॥२५
तूष्णीं वर्षशतान्यष्टौ समधारं महाव्रतम् । समाप्ते नियमे तस्मिंस्तत्र देवो महेश्वरः ॥ २६
प्रीतः प्रीतेन मनसा प्राह वाक्यमिदं प्रभुः । पैङ्गल्यं यदवाप्तं हि देव्या रूपनिरीक्षणात् ॥२७
प्रीतोऽस्मि तव धर्मज्ञ तपसा तेन सुव्रत । मया चैतद्व्रतं चीर्णं त्वया चैव धनाधिप ॥ २८
तृतीयः पुरुषो नास्ति यश्चरेद्व्रतमीदृशम् । व्रतं [1]सुदुष्करं ह्येतन्मया ह्युत्पादितं पुरा ॥ २९
तत्सखित्वं मया सौम्य रोचयस्व धनेश्वर । तपसा निर्जितश्चाहं सखा मम भवानघ ॥ ३०
देव्या दग्धं प्रभावेण यच्च सव्यं तवेक्षणम् । एकाक्षिपिङ्गलेत्येवं नाम स्थास्यति शाश्वतम् ॥३१
एवं तेन सखित्वं च प्राप्यानुज्ञां च शङ्करात् । आगत्य च श्रुतोऽयं मे तव पापविनिश्चयः ॥
तदधर्मिष्ठसंयोगान्निवर्त कुलदूषणात् । चिन्त्यते हि वधोपायः सर्षिसङ्घैः सुरैस्तव ॥ ३३
एवमुक्तो दशग्रीवः क्रुद्धः संरक्तलोचनः । हस्तौ दन्तांश्च संपीड्य वाक्यमेतदुवाच ह ॥ ३४
विज्ञातं ते मया दूत वाक्यं यस्य प्रभाषसे । नैव त्वमसि[2] नैवासौ भ्रात्रा येनासि चोदितः ॥
हितं नैष ममैतद्धि ब्रवीति धनरक्षकः । महेश्वरसखित्वं तु मूढ श्रावयसे किल ॥ ३६
न चेदं क्षमणीयं मे यदेतद्भाषितं त्वया । यदेतावन्मया कालं दूत तस्य तु मर्षितम् ॥ ३७
न हन्तव्यो गुरुर्ज्येष्ठो मयायमिति मन्यते । तस्य त्विदानीं श्रुत्वा मे वाक्यमेषा कृता मतिः ॥
त्रीँल्लोकानपि जेष्यामि बाहुवीर्यमुपाश्रितः । एतन्मुहूर्तमेवाहं तस्यैकस्य तु वै कृते ॥ ३९
चतुरो लोकपालांस्तान्नयिष्यामि यमक्षयम् । एवमुक्त्वा तु लङ्केशो दूतं खड्गेन जघ्निवान् ॥ ४०
ददौ भक्षयितुं ह्येनं राक्षसानां दुरात्मनाम् । ततः कृतस्वस्त्ययनो रथमारुह्य रावणः ॥ ४१
त्रैलोक्यविजयाकाङ्क्षी ययौ यत्र धनेश्वरः ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
उत्तरकाण्डे धनददूतहननं नाम त्रयोदशः सर्गः

---

१. सुनिश्चयं प्र. ।    २. नैतत्त्वमसि च. ।

## चतुर्दशः सर्गः

### यक्षरक्षोयुद्धम्

ततस्तु सचिवैः सार्धं षड्भिर्नित्यं बलोद्धतैः। महोदरप्रहस्ताभ्यां मारीचशुकसारणैः ॥ १
धूम्राक्षेण च वीरेण नित्यं समरगृध्नुना। संवृतः प्रययौ श्रीमान् क्रोधाल्लोकान् दहन्निव ॥ २
पुराणि स नदीः शैलान् वनान्युपवनानि च। अतिक्रम्य मुहूर्तेन कैलासं गिरिमागमत् ॥ ३
संनिविष्टं गिरौ तस्मिन् राक्षसेन्द्रं निशम्य तु। युद्धेऽस्त्यैर्थकृतोत्साहं दुरात्मानं समन्त्रिणम् ॥
यक्षा न शेकुः संस्थातुं प्रमुखे तस्य रक्षसः। राज्ञो भ्रातेति विज्ञाय गता यत्र धनेश्वरः ॥ ५
ते गत्वा सर्वमाचख्युर्भ्रातुस्तस्य चिकीर्षितम्। अनुज्ञाता ययुर्हृष्टा युद्धाय धनदेन ते ॥ ६
ततो बलानां संक्षोभः व्यवर्धत महोदधेः[2]। तस्य नैर्ऋतराजस्य शैलं संचालयन्निव ॥ ७
ततो युद्धं समभवद्यक्षराक्षससंकुलम्। व्यथिताश्चाभवंस्तत्र सचिवा राक्षसस्य ते ॥ ८
स दृष्ट्वा तादृशं सैन्यं दशग्रीवो निशाचरः। हर्षनादान् बहून् कृत्वा सक्रोधादभ्यधावत ॥ ९
ये तु ते राक्षसेन्द्रस्य सचिवा घोरविक्रमाः। तेषां सहस्रमेकैको यक्षाणां समयोधयत् ॥ १०
ततो गदाभिर्मुसलैरसिभिः शक्तितोमरैः। हन्यमानो दशग्रीवस्तत् सैन्यं समगाहत ॥ ११
स निरुच्छ्वासवत्तत्र वध्यमानो दशाननः। वर्षद्भिरिव जीमूतैर्धाराभिरवरुध्यत ॥ १२
न चकार व्यथां चैव यक्षशस्त्रैः समाहतः। महीधर इवाम्भोदैर्धाराशतसमुक्षितः ॥ १३
स दुरात्मा समुद्यम्य कालदण्डोपमां गदाम्। प्रविवेश ततः सैन्यं नयन् यक्षान् यमक्षयम् ॥
स कक्षमिव विस्तीर्णं शुष्केन्धनमिवाकुलम्। वातेनाग्निरिवादीप्तो[3] यक्षसैन्यं ददाह तत् ॥
तैस्तु तत्र महामात्यैर्महोदरशुकादिभिः। अल्पावशेषास्ते यक्षाः कृता वातैरिवाम्बुदाः ॥ १६
केचित् समाहता भग्नाः पतिताः समरक्षितौ। ओष्ठांश्च दशनैस्तीक्ष्णैरदशम् कुपिता रणे ॥ १७
श्रान्ताश्चान्योन्यमालिङ्ग्य भ्रष्टशस्त्रा रणाजिरे। सीदन्ति च तदा यक्षाः कूला इव जलेन ह ॥
हतानां गच्छतां स्वर्गं युध्यतां पृथिवीतले। प्रेक्षतामृषिसङ्घानां न बभूवान्तरं दिवि ॥ १९
भग्नांस्तु तान् समालक्ष्य यक्षेन्द्रांस्तु महाबलान्। धनाध्यक्षो महाबाहुः प्रेषयामास यक्षकान् ॥
एतस्मिन्नंतरे राम विस्तीर्णबलवाहनः। अगमत् सुमहान् यक्षो[4] नाम्ना संयोधकण्टकः ॥ २१
तेन चक्रेण मारीचो विष्णुनेव रणे हतः। पतितो भूतले शैलात् क्षीणपुण्य इवाम्बरात्[5] ॥
ससंज्ञस्तु मुहूर्तेन स विश्रम्य निशाचरः। तं यक्षं योधयामास स च भग्नः प्रदुद्रुवे ॥ २३
ततः काञ्चनचित्राङ्गं वैदूर्यरजसोक्षितम्। मर्यादां प्रतिहाराणां तोरणान्तरमाविशत् ॥ २४
तं तु राजन् दशग्रीवं प्रविशन्तं निशाचरम्। सूर्यभानुरिति ख्यातो द्वारपालो न्यवारयत् ॥

---

१. युद्धेप्सुं तं. ति।
२. सागरस्येव वर्धतः. प्र. व्यवर्धत इवोदधेः ति.।
३. आयस्तः च।
४. प्रेषितो न्यपतद्यक्षः च.।
५. इव ग्रहः च. ति.।

स वार्यमाणो यक्षेण प्रविवेश निशाचरः। यदा तु वारितो राम न व्यतिष्ठत् स राक्षसः॥२६
ततस्तोरणमुत्पाट्य तेन यक्षेण ताडितः। रुधिरं प्रस्रवन् भाति शैलो धातुस्रवैरिव॥ २७
स शैलशिखराभेण तोरणेन समाहतः। जगाम न क्षतिं वीरो वरदानात् स्वयंभुवः॥ २८
तेनैव तोरणेनाथ यक्षस्तेनाभिताडितः। नादृश्यत तदा यक्षो भस्मीकृततनुस्तदा॥ २९
ततः प्रदुद्रुवुः सर्वे दृष्ट्वा रक्षःपराक्रमम्। ततो नदीर्गुहाश्चैव विविशुर्भयपीडिताः॥ ३०
त्यक्तप्रहरणाः शान्ता विवर्णवदनास्तदा॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
उत्तरकाण्डे यक्षरक्षोयुद्धं नाम चतुर्दशः सर्गः

---

## पञ्चदशः सर्गः

### पुष्पकहरणम्

ततस्ताँल्लक्ष्य वित्रस्तान् यक्षेन्द्रांश्च सहस्रशः। धनाध्यक्षो महायक्षं माणिचारमथाब्रवीत्॥ १
रावणं जहि यक्षेन्द्र दुर्वृत्तं पापचेतसम्। शरणं भव वीराणां यक्षाणां युद्धशालिनाम्॥ २
एवमुक्तो महाबाहुर्माणिभद्रः सुदुर्जयः। वृतो यक्षसहस्रैस्तु चतुर्भिः समयोधयत्॥ ३
तं गदामुसलप्रासैः शक्तितोमरमुद्गरैः। अभिघ्नन्तस्तदा यक्षा राक्षसान् समुपाद्रवन्॥ ४
कुर्वन्तस्तुमुलं युद्धं चरन्तः श्येनवल्लघु। बाढं प्रयच्छ नेच्छामि दीयतामिति भाषिणः॥ ५
ततो देवाः सगन्धर्वा ऋषयो ब्रह्मवादिनः। दृष्ट्वा तत्तुमुलं युद्धं परं विस्मयमागमन्॥ ६
यक्षाणां तु प्रहस्तेन सहस्रं निहतं रणे। महोदरेण चाविध्य[1] सहस्रमपरं हतम्॥ ७
क्रुद्धेन च तदा राजन् मारीचेन युयुत्सुना। निमेषान्तरमात्रेण द्वे सहस्रे निपातिते॥ ८
क्व च यक्षार्जवं युद्धं क्व च मायाबलाश्रयम्। रक्षसां पुरुषव्याघ्र तेन तेऽभ्यधिका युधि॥ ९
धूम्राक्षेण समागम्य माणिभद्रो महारणे। मुसलेनोरसि क्रोधात्ताडितो न च कम्पितः॥ १०
ततो गदां समाविध्य माणिभद्रेण राक्षसः। धूम्राक्षस्ताडितो मूर्ध्नि विह्वलः स पपात ह॥ ११
धूम्राक्षं ताडितं दृष्ट्वा पतितं शोणितोक्षितम्। अभ्यधावत संग्रामे माणिभद्रं दशाननः॥ १२
तं क्रुद्धमभिधावन्तं माणिभद्रो दशाननम्। शक्तिभिस्ताडयामास तिसृभिर्यक्षपुङ्गवः॥ १३
ताडितो माणिभद्रस्य मुकुटे प्राहरद्रणे। तस्य तेन प्रहारेण मुकुटं पार्श्वमागतम्॥ १४
[2]ततः संयुध्यमानेन विष्टब्धो न व्यकम्पत। तदा प्रभृति यक्षोऽसौ पार्श्वमौलिरिति स्मृतः॥
तस्मिंस्तु विमुखे यक्षे माणिभद्रे महात्मनि। सन्नादः सुमहान् राजंस्तस्मिञ्शैले व्यवर्धत[3]॥
ततो दूरात् प्रददृशे धनाध्यक्षो गदाधरः। शुक्रप्रोष्ठपदाभ्यां च शङ्खपद्मसमावृतः॥ १७
स दृष्ट्वा भ्रातरं संख्ये शापाद्विभ्रष्टगौरवम्। उवाच वचनं धीमान् युक्तं पैतामहे कुले॥ १८

---

१. आविध्य प्र.।
२. इदमर्धं ति. नास्ति।
३. अभ्यवर्तत प्र.

यन्मया वार्यमाणस्त्वं नावगच्छसि दुर्मते । पश्चादस्य फलं प्राप्य ज्ञास्यसे निरयं गतः ॥ १९
यो हि मोहाद्विषं पीत्वा नावगच्छति दुर्मतिः । स तस्य परिणामान्ते जानीते कर्मणः फलम् ॥
देवता नाभिनन्दन्ति धर्मयुक्तेन केनचित् । येन त्वमीदृशं भावं नीतः सन्नावबुध्यसे ॥ २१
मातरं पितरं यो हि आचार्यं चावमन्यते । स पश्यति फलं तस्य प्रेतराजवशं गतः ॥ २२
अध्रुवे हि शरीरे यो न करोति तपोऽर्जनम् । स पश्चात्तप्यते मूढो मृतो दृष्ट्वात्मनो गतिम् ॥
धर्माद्राज्यं धनं सौख्यमधर्माद्दुःखमेव च । तस्माद्धर्मं सुखार्थाय कुर्यात् पापं विसर्जयेत् ॥२४
पापस्य हि फलं दुःखं तद्भोक्तव्यमिहात्मना । तस्मादात्मापघातार्थं मूढः पापं करिष्यति[1] ॥२५
कस्यचिन्न हि दुर्बुद्धेश्छन्दतो जायते मतिः । यादृशं कुरुते कर्म तादृशं फलमश्नुते ॥ २६
बुद्धिं[2] रूपं बलं पुत्रान् [3]वित्तं धीरत्वमेव च । प्राप्नुवन्ति नरा लोके निर्जितं पुण्यकर्मभिः ॥
एवं निरयगामी त्वं यस्य ते मतिरीदृशी । न त्वां समभिभाषिष्येऽसद्वृत्तेष्वेष निर्णयः ॥ २८
एवमुक्तास्ततस्तेन तस्यामात्याः समाहताः । मारीचप्रमुखाः सर्वे विमुखा विप्रदुद्रुवुः ॥ २९
ततस्तेन दशग्रीवो यक्षेन्द्रेण महात्मना । गदयाभिहतो मूर्ध्नि न च स्थानात् प्रकम्पितः ॥ ३०
ततस्तौ राम निघ्नन्तौ तदान्योन्यं महामृधे । न विह्वलौ न च श्रान्तौ बभूवतुरमर्षणौ ॥ ३१
आग्नेयमस्त्रं तस्मै स मुमोच धनदस्तदा । राक्षसेन्द्रो वारुणेन तदस्त्रं प्रत्यवारयत् ॥ ३२
ततो मायां प्रविष्टोऽसौ राक्षसीं राक्षसेश्वरः । रूपाणां शतसाहस्रं विनाशाय चकार च ॥ ३३
व्याघ्रो वराहो जीमूतः पर्वतः सागरो द्रुमः । यक्षो दैत्यस्वरूपी च सोऽदृश्यत दशाननः ॥
बहूनि च करोति स्म दृश्यन्ते न त्वसौ ततः । प्रतिगृह्य ततो राम महदस्त्रं दशाननः ॥ ३५
जघान मूर्ध्नि धनदं व्याविध्य महतीं गदाम् । एवं स तेनाभिहतो विह्वलः शोणितोक्षितः ॥
कृत्तमूल इवाशोको निपपात धनाधिपः । ततः पद्मादिभिस्तत्र निधिभिः स तदावृतः ॥ ३७
धनदोच्छ्वासितस्तैस्तु वनमानीय नन्दनम् । निर्जित्य राक्षसेन्द्रस्तं धनदं हृष्टमानसः ॥ ३८
पुष्पकं तस्य जग्राह विमानं जयलक्षणम् । काञ्चनस्तम्भसंवीतं वैदूर्यमणितोरणम् ॥ ३९
मुक्ताजालप्रतिच्छन्नं सर्वकामफलप्रदम् । मनोजवं कामगमं कामरूपं विहंगमम् ॥ ४०
मणिकाञ्चनसोपानं तप्तकाञ्चनवेदिकम् । देवोपवाह्यमक्षय्यं सदा दृष्टिमनःसुखम् ॥ ४१
बह्वाश्चर्यं भक्तिचित्रं ब्रह्मणा परिनिर्मितम् । निर्मितं सर्वकामैस्तु मनोहरमनुत्तमम् ॥ ४२
न तु शीतं न चोष्णं च सर्वर्तुसुखदं शुभम् । स तं राजा समारुह्य कामगं वीर्यनिर्जितम् ॥
जितं त्रिभुवनं मेने दर्पोत्सेकात् सुदुर्मतिः । जित्वा वैश्रवणं देवं कैलासात् समवातरत् ॥ ४४

---

१. २४. २५. पद्ये ति न स्तः । २. ऋद्धिं ति. । ३. शौर्यं च.

स्वतेजसा विपुलमवाप्य तं जयं प्रतापवान् विमलकिरीटहारवान् ।
रराज वै परमविमानमास्थितो निशाचरः सदसि गतो यथानलः ॥ ४५

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
उत्तरकाण्डे पुष्पकहरणं नाम पञ्चदशः सर्गः

---

## षोडशः सर्गः

### रावणनामप्राप्तिः

स जित्वा धनदं राम भ्रातरं राक्षसाधिपः । महासेनप्रसूतिं तद्ययौ शरवणं महत् ॥ १
अथापश्यद्दशग्रीवो रौक्मं शरवणं महत् । गभस्तिजालसंवीतं द्वितीयमिव भास्करम् ॥ २
स पर्वतं समारुह्य कंचिद्रम्यवनान्तरम् । अपश्यत् पुष्पकं तत्र राम विष्टम्भितं[1] तदा ॥ ३
विष्टब्धं पुष्पकं दृष्ट्वा ह्यगमं कामगं कृतम् । अचिन्तयद्राक्षसेन्द्रः सचिवैस्तैः समावृतः ॥ ४
किंनिमित्तं चेच्छया मे नेदं गच्छति पुष्पकम् । पर्वतस्योपरिस्थस्य कर्मेदं कस्यचिद्भवेत् ॥ ५
ततोऽब्रवीत्तदा राम मारीचो बुद्धिकोविदः । नेदं निष्कारणं राजन् पुष्पकं यन्न गच्छति ॥६
अथवा पुष्पकमिदं धनदान्नान्यवाहनम् । अतो निःस्पन्दमभवद्धनाध्यक्षविनाकृतम् ॥ ७
इति वाक्यान्तरे तस्य करालः कृष्णपिङ्गलः । वामनो विकटो मुण्डी नन्दी ह्रस्वभुजो बली ॥८
ततः पार्श्वमुपागम्य भवस्यानुचरोऽब्रवीत् । नन्दीश्वरो वचश्चेदं राक्षसेन्द्रमशङ्कितः ॥ ९
निवर्तस्व दशग्रीव शैले क्रीडति शंकरः । सुपर्णनागयक्षाणां देवगन्धर्वरक्षसाम् ॥ १०
सर्वेषामेव भूतानामगम्यः पर्वतः कृतः । तन्निवर्तस्व दुर्बुद्धे मा विनाशमवाप्स्यसि[१] ॥ ११
इति नन्दिवचः श्रुत्वा क्रोधात् कम्पितकुण्डलः । रोषात्तु ताम्रनयनः पुष्पकादवरुह्य सः ॥ १२
कोऽयं शंकर इत्युक्त्वा शैलमूलमुपागतः । सोऽपश्यन्नन्दिनं तत्र देवस्यादूरतः स्थितम् ॥ १३
दीप्तं शूलमवष्टभ्य द्वितीयमिव शंकरम् । तं दृष्ट्वा वानरमुखमवज्ञाय स राक्षसः ॥ १४
प्रहासं मुमुचे तत्र सतोय इव तोयदः । तं क्रुद्धो भगवान्नन्दी शंकरस्यापरा तनुः ॥ १५
अब्रवीत्तत्र तद्रक्षो दशाननमुपस्थितम् । यस्माद्वानररूपं मामवज्ञाय दशानन ॥ १६
अशनीपातसंकाशमुपहासं प्रमुक्तवान् । तस्मान्मद्रूपसंपन्ना मद्वीर्यसमतेजसः ॥ १७
उत्पत्स्यन्ति वधार्थं हि कुलस्य तव वानराः । नखदंष्ट्रायुधाः क्रूरा मनःसंपातरंहसः ॥ १८
युद्धोन्मत्ता बलोद्रिक्ताः शैला इव विसर्पिणः । ते तव प्रबलं दर्पमुत्सेधं च पृथग्विधम् ॥ १९
व्यपनेष्यन्ति संभूय सहामात्यसुतस्य च । किं त्विदानीं मया शक्यं हन्तुं त्वां हे निशाचर ॥
न हन्तव्यो हतस्त्वं हि पूर्वमेव स्वकर्मभिः । इत्युदीरितवाक्ये तु देवे तस्मिन् महात्मनि ॥
देवदुन्दुभयो नेदुः पुष्पवृष्टिश्च खाच्च्युता । अचिन्तयित्वा स तदा नन्दिवाक्यं महाबलः ॥

---

1. निरुद्धसंचारम् । १. अयं अर्धश्लोकः ति. नास्ति ।

पर्वतं तु समासाद्य वाक्यमाह दशाननः । पुष्पकस्य गतिश्छिन्ना यत्कृते मम गच्छतः ॥ २३
तमिमं शैलमुन्मूलं करोमि तव गोपते । केन प्रभावेण भवो नित्यं क्रीडति राजवत् ॥ २४
विज्ञातव्यं न जानीते भयस्थानमुपस्थितम् । एवमुक्त्वा ततो राम भुजान् विक्षिप्य पर्वते ॥२५
तोलयामास तं शैलं स शैलः समकम्पत । चालनात् पर्वतस्यैव गणा देवस्य कम्पिताः ॥ २६
चचाल पार्वती चापि तदाश्लिष्टा महेश्वरम् । ततो राम महादेवो देवानां प्रवरो हरः ॥ २७
पादाङ्गुष्ठेन तं शैल पीडयामास लीलया । पीडितास्तु ततस्तस्य शैलस्याधोगता भुजाः ॥ २८
विस्मिताश्चाभवंस्तत्र सचिवास्तस्य रक्षसः । रक्षसा तेन रोषाच्च भुजानां पीडनात्तदा ॥ २९
मुक्तो विरावः सहसा त्रैलोक्यं येन कम्पितम् । मेनिरे वज्रनिष्पेषं तस्यामात्या युगक्षये ॥ ३०
तदा वर्त्मस्थचलिता देवा इन्द्रपुरोगमाः । समुद्राश्चापि संक्षुब्धाश्चलिताश्चापि पर्वताः ॥ ३१
यक्षा विद्याधराः सिद्धाः किमेतदिति चाब्रुवन् । अथ ते मन्त्रिणस्तस्य विक्रोशन्तमथाब्रुवन् ॥
तोषयस्व महादेवं नीलकण्ठमुमापतिम् । तमृते शरणं नान्यं पश्यामोऽत्र दशानन ॥ ३३
स्तुतिभिः प्रणतो भूत्वा तमेव शरणं व्रज । कृपालुः शंकरस्तुष्टः प्रसादं ते विधास्यति ॥ ३४
एवमुक्तस्तदामात्यैस्तुष्टाव वृषभध्वजम् । सामभिर्विविधैः स्तोत्रैः प्रणम्य स दशाननः ॥ ३५
संवत्सरसहस्रं तु रुदतो रक्षसो गतम् । ततः प्रीतो महादेवः शैलाग्रे विष्ठितः प्रभुः ॥ ३६
मुक्त्वा चास्य भुजान् राम प्राह वाक्यं दशाननम् । प्रीतोऽस्मि तव वीर्यस्य शौण्डीर्याच्च दशानन ॥
शैलाक्रान्तेन यो मुक्तस्त्वया रावः सुदारुणः । यस्माल्लोकत्रयं चैतद्रावितं भयमागतम् । ३८
तस्मात्त्वं रावणो नाम नाम्ना राजन् भविष्यसि । देवता मानुषा यक्षा ये चान्ये जगतीतले ॥
एवं त्वामभिधास्यन्ति रावणं लोकरावणम् । गच्छ पौलस्त्य विस्रब्धं पथा येन त्वमिच्छसि ॥
मया चैवाभ्यनुज्ञातो राक्षसाधिप गम्यताम् । एवमुक्तस्तु लङ्केशः शंभुना स्वयमब्रवीत् ॥ ४१
प्रीतो यदि महादेव वरं मे देहि याचतः । अवध्यत्वं मया प्राप्तं देवगन्धर्वदानवैः ॥ ४२
राक्षसैर्गुह्यकैर्नागैर्ये चान्ये बलवत्तराः । मानुषान्न गणे देव स्वल्पास्ते मम संमताः ४३
दीर्घमायुश्च मे प्राप्तं ब्रह्मणस्त्रिपुरान्तक । वाञ्छितं चायुषः [1]शेषं शस्त्रं त्वं च प्रयच्छ मे ॥४४
एवमुक्तस्ततस्तेन रावणेन स शंकरः । ददौ खड्गं महादीप्तं चन्द्रहासमिति श्रुतम् ॥ ४५
आयुषश्चावशेषं च ददौ[१] भूतपतिस्तदा । दत्त्वोवाच ततः शंभुर्नावज्ञेयमिदं त्वया ॥ ४६
अवज्ञातं यदि हि ते मामेवैष्यत्यसंशयः । एवं महेश्वरेणैव कृतनामा स रावणः ॥ ४७

---

1. ब्रह्मदत्तात् दीर्घादायुषः शेषं इत्यर्थः । 

१. स्थित्वा च.

अभिवाद्य महादेवमारुरोहाथ पुष्पकम् । ततो महीतले राम परिचक्राम रावणः ॥ ४८
क्षत्रियान् सुमहावीर्यान् बाधमान इतस्ततः । केचित्तेजस्विनः शूराः क्षत्रिया युद्धदुर्मदाः ॥
तच्छासनमकुर्वन्तो विनेशुः सपरिच्छदाः । अपरे दुर्जयं रक्षो जानन्तः प्राज्ञसंमताः ॥ ५०
जिताः स्म इत्यभाषन्त राक्षसं बलदर्पितम् ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
उत्तरकाण्डे रावणनामप्राप्तिर्नाम षोडशः सर्गः

---

## सप्तदशः सर्गः

### वेदवतीशापः

अथ राजन् महाबाहुर्विचरन् स महीतले । हिमवत्सानुमासाद्य परिचक्राम रावणः ॥ १
तत्रापश्यत् स वै कन्यां कृष्णाजिनजटाधराम् । आर्षेण विधिना चैनां दीप्यन्तीं देवतामिव ॥
स दृष्ट्वा रूपसंपन्नां कन्यां तां सुमहाव्रताम् । काममोहपरीतात्मा पप्रच्छ प्रहसन्निव ॥ ३
किमिदं वर्तसे भद्रे विरुद्धं यौवनस्य ते । न हि युक्ता तवैतस्य रूपस्य तपसः क्रिया ॥ ४
रूपं तेऽनुपमं भीरु कामोन्मादकरं नृणाम् । न युक्तं तपसि स्थातुं निर्गतो ह्येष निर्णयः ॥ ५
कस्यासि किमिदं भद्रे कश्च भर्ता वरानने । येन संभुज्यसे भीरु स नरः पुण्यभाग्भुवि ॥ ६
पृच्छतः शंस मे सर्वं कस्य हेतोः परिश्रमः । एवमुक्ता तु सा कन्या रावणेन यशस्विनी ॥ ७
अब्रवीद्विधिवत् कृत्वा तस्यातिथ्यं तपोधन । कुशध्वजो मम पिता ब्रह्मर्षिरमितप्रभः ॥ ८
बृहस्पतिसुतः श्रीमान् बुद्ध्या तुल्यो बृहस्पतेः । तस्याहं कुर्वतो नित्यं वेदाभ्यासं महात्मनः ॥
संभूता वाङ्मयी कन्या नाम्ना वेदवती स्मृता । ततो देवाः सगन्धर्वा यक्षराक्षसपन्नगाः ॥१०
तेऽपि गत्वा हि पितरं वरणं रोचयन्ति मे । न च मां स पिता तेभ्यो दत्तवान् राक्षसर्षभ[1] ॥
कारणं तद्वदिष्यामि निशाचर निशामय । पितुस्तु मम जामाता विष्णुः किल सुरेश्वरः ॥ १२
अभिप्रेतस्त्रिलोकेशस्तस्मान्नान्यस्य मे पिता । दातुमिच्छति तस्मै तु तच्छ्रुत्वा बलदर्पितः ॥१३
दम्भुर्नाम ततो राजा दैत्यानां कुपितोऽभवत् । तेन रात्रौ शयानो मे पिता पापेन हिंसितः ॥
ततो मे जननी दीना तच्छरीरं पितुर्मम । परिष्वज्य महाभागा प्रविष्टा हव्यवाहनम् ॥ १५
ततो मनोरथं सत्यं पितुर्नारायणं प्रति । करोमीति तमेवाहं हृदयेन समुद्वहे ॥ १६
इति प्रतिज्ञामारुह्य चरामि विपुलं तपः । एतत्ते सर्वमाख्यातं मया राक्षसपुङ्गव ॥ १७
नारायणो मम पतिर्न त्वन्यः पुरुषोत्तमात् । आश्रये नियमं घोरं नारायणपरीप्सया ॥ १८
विज्ञातस्त्वं हि मे राजन् गच्छ पौलस्त्यनन्दन । जानामि तपसा सर्वं त्रैलोक्ये यद्धि वर्तते ॥
सोऽब्रवीद्रावणो भूयस्तां कन्यां सुमहाव्रताम् । अवरुह्य विमानाग्रात् कन्दर्पशरपीडितः ॥ २०

---

१. राक्षसेश्वर प्र. ।

अवलिप्तासि सुश्रोणि यस्यास्ते मतिरीदृशी । वृद्धानां मृगशावाक्षि भ्राजते पुण्यसंचयः ॥ २१
त्वं सर्वगुणसंपन्ना नार्हसे वक्तुमीदृशम् । त्रैलोक्यसुन्दरी भीरु यौवनं तेऽतिवर्तते ॥ २२
अहं लङ्कापतिर्भद्रे दशग्रीव इति श्रुतः । तस्य मे भव भार्या त्वं भुङ्क्ष्व भोगान्यथासुखम् ॥ २३
कश्च तावदसौ यं त्वं विष्णुरित्यभिभाषसे । वीर्येण तपसा चैव भोगेन च बलेन च ॥ २४
न मया स समो भद्रे यं त्वं कामयसेऽङ्गने । इत्युक्तवति तस्मिंस्तु वेदवत्यथ साब्रवीत् ॥ २५
मा मैवमिति सा कन्या तमुवाच निशाचरम् । त्रैलोक्याधिपतिं विष्णुं सर्वलोकनमस्कृतम् ॥ २६
त्वदृते राक्षसेन्द्रान्यः कोऽवमन्येत बुद्धिमान् । एवमुक्तस्तया तत्र वेदवत्या निशाचरः ॥ २७
मूर्धजेषु तदा कन्यां कराग्रेण परामृशत् । ततो वेदवती क्रुद्धा केशान् हस्तेन साच्छिनत् ॥
असिर्भूत्वा करस्तस्याः केशांश्छिन्नांस्तदाकरोत । सा ज्वलन्तीव रोषेण दहन्तीव निशाचरम् ॥
उवाचाग्निं समाधाय मरणाय कृतत्वरा । धर्षितायास्त्वयानार्य न मे जीवितमिष्यते ॥ ३०
रक्षस्तस्मात् प्रवेक्ष्यामि पश्यतस्ते हुताशनम् । यस्मात्तु धर्षिता चाहं त्वया पापात्मना वने ॥ ३१
तस्मात्तव वधार्थं हि समुत्पत्स्ये ह्यहं पुनः । न हि शक्यं स्त्रिया हन्तुं पुरुषः पापनिश्चयः ॥ ३२
शापे त्वयि मयोत्सृष्टे तपसश्च व्ययो भवेत् । यदि त्वस्ति मया किंचित् कृतं दत्तं हुतं तथा ॥
तस्मात्त्वयोनिजा साध्वी भवेयं धर्मिणः सुता । एवमुक्त्वा प्रविष्टा सा ज्वलितं जातवेदसम् ॥
पपात च दिवो दिव्या पुष्पवृष्टिः समन्ततः[१] । सैषा जनकराजस्य प्रसूता तनया प्रभो ॥ ३५
तव भार्या महाबाहो विष्णुस्त्वं हि सनातनः । पूर्वं क्रोधहतः शत्रुर्ययासौ निहतस्तया ॥ ३६
उपाश्रयित्वा शैलाभस्तव वीर्यममानुषम् । एवमेषा महाभागा मर्त्येषूत्पत्स्यते पुनः ॥ ३७
क्षेत्रे हलमुखोत्कृष्टे वेद्यामग्निशिखोपमा । एषा वेदवती नाम पूर्वमासीत् कृते युगे ॥ ३८
त्रेतायुगमनुप्राप्य वधार्थं तस्य रक्षसः । उत्पन्ना मैथिलकुले जनकस्य महात्मनः ॥ ३९
सीतोत्पन्ना तु सीतेति मानुषैः पुनरुच्यते[२] ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
उत्तरकाण्डे वेदवतीशापो नाम सप्तदशः सर्गः

---

## अष्टादशः सर्गः

### मरुत्तविजयः

प्रविष्टायां हुताशं तु वेदवत्यां स रावणः । पुष्पकं तु समारुह्य परिचक्राम मेदिनीम् ॥ १

---

१. अस्यानन्तरम्—पुनरेव सुमुद्भूता पद्मे पद्मसमप्रभा । तस्मादपि पुनः प्राप्ता पूर्ववत्तेन राक्षस ॥ कन्यां कमलगर्भाभां प्रगृह्य स्वगृहं ययौ । प्रगृह्य रावणस्त्वेतां दर्शयामास मन्त्रिणे । लक्षणज्ञो निरीक्ष्यैव रावणं चैवमब्रवीत् । गृहस्थैषा हि सुश्रोणी त्वद्वधायैव दृश्यते ॥ एतच्छ्रुत्वार्णवे राम तां प्रचिक्षेप रावणः । सा चैव क्षितिमासाद्य यज्ञायतनमध्यगा ॥ राज्ञो हलमुखोत्कृष्टा पुनरप्युत्थिता सती ॥—इति च. पुना. ।

२. इदं अर्धं प्र. ति. नास्ति ।

ततो मरुत्तं नृपतिं यजन्तं सह दैवतैः। उशीरबीजमासाद्य ददर्श स तु रावणः॥ २
संवर्तो नाम ब्रह्मर्षिः साक्षाद्भ्राता बृहस्पतेः। याजयामास धर्मज्ञः सर्वैर्देवगणैर्वृतः॥ ३
दृष्ट्वा देवास्तु तद्रक्षो वरदानेन दुर्जयम्। तिर्यग्योनिं समाविष्टास्तस्य दर्शनभीरवः॥ ४
इन्द्रो मयूरः संवृत्तो धर्मराजस्तु वायसः। कृकलासो धनाध्यक्षो हंसश्च वरुणोऽभवत्॥ ५
अन्येष्वपि गतेष्वेवं देवेष्वरिनिषूदन। रावणः प्राविशद्यज्ञं सारमेय इवाशुचिः॥ ६
स च राजानमासाद्य रावणो राक्षसाधिपः। प्राह युद्धं प्रयच्छेति निर्जितोऽस्मीति वा वद॥७
ततो मरुत्तो नृपतिः को भवानित्युवाच तम्। अपहासं ततो मुक्त्वा रावणो वाक्यमब्रवीत्॥
[1]अकुतूहलभावेन प्रीतोऽस्मि तव पार्थिव। धनदस्यानुजं यो मां नावगच्छसि रावणम्॥ ९
त्रिषु लोकेषु कोऽन्योऽस्ति यो न जानाति मे बलम्। भ्रातरं येन निर्जित्य विमानमिदमाहृतम्
ततो मरुत्तः स नृपस्तं रावणमथाब्रवीत्। धन्यः खलु भवान् येन ज्येष्ठो भ्राता रणे जितः॥
न त्वया सदृशः श्लाघ्यस्त्रिषु लोकेषु विद्यते[१]। कं त्वं प्राक्केवलं धर्मं चरित्वा लब्धवान् वरम्॥
श्रुतपूर्वं हि न मया भाषसे यादृशं स्वयम्। तिष्ठेदानीं न मे जीवन् प्रतियास्यसि दुर्मते॥१३
अद्य त्वां निशितैर्बाणैः प्रेषयामि यमक्षयम्। ततः शरासनं गृह्य सायकांश्च नराधिपः॥ १४
रणाय निर्ययौ क्रुद्धः संवर्तो मार्गमावृणोत्। सोऽब्रवीत् स्नेहसंयुक्तं मरुत्तं तं महानृषिः॥ १५
श्रोतव्यं यदि मद्वाक्यं संप्रहारो न ते क्षमः। माहेश्वरमिदं सत्रमसंप्राप्तं कुलं दहेत्॥ १६
दीक्षितस्य कुतो युद्धं क्रोधित्वं दीक्षिते कुतः। संशयश्च जये नित्यं राक्षसश्च सुदुर्जयः॥ १७
स निवृत्तो गुरोर्वाक्यान्मरुत्तः पृथिवीपतिः। विसृज्य सशरं चापं स्वस्थो मखमुखोऽभवत्॥१८
ततस्तं निर्जितं मत्वा घोषयामास वै शुकः। रावणो जयतीत्युच्चैर्हर्षान्नादं विमुक्तवान्॥ १९
तान् भक्षयित्वा तत्रस्थान् महर्षीन् यज्ञमागतान्। वितृप्तो रुधिरैस्तेषां पुनः संप्रययौ महीम्॥
रावणे तु गते देवाः सेन्द्राश्चैव दिवौकसः। ततः स्वां योनिमासाद्य तानि सत्त्वानि चाब्रुवन्॥
हर्षात्तदाब्रवीदिन्द्रो मयूरं नीलबर्हिणम्। प्रीतोऽस्मि तव धर्मज्ञ भुजङ्गाद्धि न ते भयम्॥ २२
इदं नेत्रसहस्रं तु यत्त्वद्बर्हे भविष्यति। वर्षमाणे मयि मुदं प्राप्स्यसे प्रीतिलक्षणम्॥ २३
एवमिन्द्रो वरं प्रादान्मयूरस्य सुरेश्वरः। नीलाः किल पुरा बर्हा मयूराणां नराधिप॥ २४
सुराधिपाद्वरं प्राप्य गताः सर्वेऽपि बर्हिणः। धर्मराजोऽब्रवीद्राम प्राग्वंशे वायसं स्थितम्॥२५
पक्षिंस्तवास्मि सुप्रीतः प्रीतस्य वचनं शृणु। यथान्यैर्विविधै रोगैः पीड्यन्ते प्राणिनो मया॥२६
ते न ते प्रभविष्यन्ति मयि प्रीते न संशयः। मृत्युतस्ते भयं नास्ति वरान्मम विहंगम॥२७
यावत्त्वां न वधिष्यन्ति नरास्तावद्भविष्यसि। एते मद्विषयस्था वै मानवाः क्षुद्भयार्दिताः॥२८

1. मां दृष्ट्वापि अकुतूहलभावेन यो नावगच्छसि तादृशस्य तव।

१. अस्यानन्तरम्—नाधर्मसहितं श्लाघ्यं न लोकप्रतिसंहितम्। कर्म दौरात्म्यकं कृत्वा श्लाघ्य[घ]से भ्रातृनिर्जयात्॥— इति च. पुना.।

त्वयि भुक्ते तु तृप्तास्ते भविष्यन्ति सबान्धवाः । वरुणस्त्वब्रवीद्धंसं गङ्गातोयविहारिणम् ॥ २९
श्रूयतां प्रीतिसंयुक्तं वचः पत्ररथेश्वर । वर्णो मनोहरः सौम्य[१] चन्द्रमण्डलसन्निभः ॥ ३०
भविष्यति तवोदग्रः शुद्धफेनसमप्रभः । [1]मच्छरीरं समासाद्य कान्तो नित्यं भविष्यसि ॥ ३१
प्राप्स्यसे चातुलां प्रीतिमेतन्मे प्रीतिलक्षणम् । हंसानां हि पुरा राम नीलवर्णः सपाण्डरः ॥
पक्षा नीलाग्रसंवीताः क्रोडाः शष्पाग्रनिर्मलाः । अथाब्रवीद्वैश्रवणः कृकलासं गिरौ स्थितम् ॥
हैरण्यं संप्रयच्छामि वर्णं प्रीतस्तवाप्यहम् । [2]सद्रव्यं च शिरो नित्यं भविष्यति तवाक्षयम् ॥ ३४
एष काञ्चनको वर्णो मत्प्रीत्या ते भविष्यति । एवं दत्त्वा वरांस्तेभ्यस्तस्मिन् यज्ञोत्सवे सुराः ॥
निवृत्ताः सह राज्ञा ते पुनः स्वभवनं गताः ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
उत्तरकाण्डे मरुत्तविजयो नाम अष्टादशः सर्गः

---

## एकोनविंशः सर्गः

### अनरण्यशापः

अथ जित्वा मरुत्तं स प्रययौ राक्षसाधिपः । नगराणि नरेन्द्राणां युद्धकाङ्क्षी दशाननः ॥ १
समासाद्य तु राजेन्द्रान् महेन्द्रवरुणोपमान् । अब्रवीद्राक्षसेन्द्रस्तु युद्धं मे दीयतामिति ॥ २
निर्जिताः स्मेति वा ब्रूत एष मे हि सुनिश्चयः । अन्यथा कुर्वतामेवं मोक्षो नैवोपपद्यते ॥ ३
ततस्त्वभीरवः प्राज्ञाः पार्थिवा धर्मनिश्चयाः । मन्त्रयित्वा ततोऽन्योन्यं राजानः सुमहाबलाः ॥
निर्जिताः स्मेत्यभाषन्त ज्ञात्वा वरबलं रिपोः । दुष्यन्तः सुरथो गाधिर्गयो राजा पुरूरवाः ॥ ५
एते सर्वेऽब्रुवंस्तात निर्जिताः स्मेति पार्थिवाः । अथायोध्यां समासाद्य रावणो राक्षसाधिपः ॥
सुगुप्तामनरण्येन शक्रेणेवामरावतीम् । स तं पुरुषशार्दूलं पुरन्दरसमं बले ॥ ७
प्राह राजानमासाद्य युद्धं देहीति रावणः । निर्जितोऽस्मीति वा ब्रूहि त्वमेवं मम शासनम् ॥
अयोध्याधिपतिस्तस्य श्रुत्वा पापात्मनो वचः । अनरण्यस्तु संक्रुद्धो राक्षसेन्द्रमथाब्रवीत् ॥ ९
दीयते द्वन्द्वयुद्धं ते राक्षसाधिपते मया । संतिष्ठ क्षिप्रमायत्तो भव चैवं भवाम्यहम् ॥ १०
अथ पूर्वं श्रुतार्थेन निर्जितं सुमहद्बलम् । निष्क्रामत्तन्नरेन्द्रस्य बलं रक्षोवधोद्यतम् ॥ ११
नागानां दशसाहस्रं वाजिनां नियुतं तथा । रथानां बहुसाहस्रं पत्तीनां च नरोत्तम ॥ १२
महीं संछाद्य निष्क्रान्तं सपदातिरथं रणे । ततः प्रवृत्तं सुमुहद्युद्धं युद्धविशारद ॥ १३
अनरण्यस्य नृपते राक्षसेन्द्रस्य चाद्भुतम् । तद्रावणबलं प्राप्य बलं तस्य महीपतेः ॥ १४
प्राणश्यत तदा सर्वं हव्यं हुतमिवानले । युद्ध्वा च सुचिरं कालं कृत्वा विक्रममुत्तमम् ॥ १५
प्रज्वलन्तं समासाद्य क्षिप्रमेवावशेषितम् । प्राविशत् संकुलं तत्र शलभा इव पावकम् ॥ १६

---

1. वरुणस्य जलशरीरत्वात् 'मच्छरीरपदं' तत्परम् । १. सौम्यः, ति. ।
2. स द्रव्यं, स्वर्णवर्णं इति तिलकः ।

नश्यति स्म बलं तत्र हव्यं हुतमिवानले । सोऽपश्यत्तन्नरेन्द्रस्तु नश्यमानं महाबलम् ॥ १७
महार्णवं समासाद्य वनापगशतं यथा । ततः शक्रधनुःप्रख्यं धनुर्विस्फारयन् स्वयम् ॥ १८
आससाद नरेन्द्रस्तं रावणं क्रोधमूर्छितः । अनरण्येन तेऽमात्या मारीचशुकसारणाः ॥ १९
प्रहस्तसहिता भग्ना व्यद्रवन्त मृगा इव । ततो बाणशतान्यष्टौ पातयामास मूर्धनि ॥ २०
तस्य राक्षसराजस्य इक्ष्वाकुकुलनन्दनः । तस्य बाणाः पतन्तस्ते चक्रिरे न क्षतिं क्वचित् ॥ २१
वारिधारा इवाभ्रेभ्यः पतन्त्यो गिरिमूर्धनि । ततो राक्षसराजेन क्रुद्धेन नृपतिस्तदा ॥ २२
तलेनाभिहतो मूर्ध्नि स रथान्निपपात ह । स राजा पतितो भूमौ विह्वलाङ्गः प्रवेपितः ॥ २३
वज्रदग्ध इवारण्ये सालो निपतितो यथा । तं प्रहस्याब्रवीद्रक्ष इक्ष्वाकुं पृथिवीपतिम् ॥ २४
किमिदानीं फलं प्राप्तं त्वया मां प्रतियुध्यता । त्रैलोक्ये नास्ति यो द्वन्द्वं मम दद्यान्नराधिप ॥
शङ्के प्रसक्तो भोगेषु न शृणोषि बलं मम । तस्यैवं ब्रुवतो राजा मन्दासुर्वाक्यमब्रवीत् ॥ २६
किं शक्यमिह कर्तुं वै कालो हि दुरतिक्रमः । न ह्यहं निर्जितो रक्षस्त्वया चात्मप्रशंसिना ॥
कालेनैव विपन्नोऽहं हेतुभूतस्तु मे भवान् । किं त्विदानीं मया शक्यं कर्तुं प्राणपरिक्षये ॥ २८
न ह्यहं विमुखो रक्षो युध्यमानस्त्वया हतः । इक्ष्वाकुपरिभावित्वाद्वचो वक्ष्यामि राक्षस ॥ २९
यदि दत्तं यदि हुतं यदि मे सुकृतं तपः । यदि गुप्ताः प्रजाः सम्यक् तदा सत्यं वचोऽस्तु मे ॥
उत्पत्स्यते कुले ह्यस्मिन्निक्ष्वाकूणां महात्मनाम् । रामो दाशरथिर्नाम यस्ते प्राणान् हरिष्यति ॥
ततो जलधरोदग्रस्ताडितो देवदुन्दुभिः । तस्मिन्नुदाहृते शापे पुष्पवृष्टिश्च खाच्च्युता ॥ ३२
ततः स राजा राजेन्द्र गतः स्थानं त्रिविष्टपम् । स्वर्गते च नृपे तस्मिन् राक्षसः सोऽपसर्पत ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
उत्तरकाण्डे अनरण्यशापो नाम एकोनविंशः सर्गः

## विंशः सर्गः

### रावणसंधुक्षणम्

ततो वित्रासयन् मर्त्यान् पृथिव्यां राक्षसाधिपः । आससाद घने तस्मिन्नारदं मुनिपुङ्गवम् ॥ १
तस्याभिवादनं कृत्वा दशग्रीवो निशाचरः । अब्रवीत् कुशलं पृष्ट्वा हेतुमागमनस्य च ॥ २
नारदस्तु महातेजा देवर्षिरमितप्रभः । अब्रवीन्मेघपृष्ठस्थो रावणं पुष्पके स्थितम् ॥ ३
राक्षसाधिपते सौम्य तिष्ठ विश्रवसः सुत । प्रीतोऽस्म्यभिजनोपेत विक्रमैरूर्जितैस्तव ॥ ४
विष्णुना दैत्यघातैश्च गन्धर्वोरगधर्षणैः । त्वया सम विमर्दैश्च भृशं हि परितोषितः ॥ ५
किंचिद्वक्ष्यामि तावत्ते श्रोतव्यं श्रोष्यसे यदि । तन्मे निगदतस्तात समाधिं श्रवणे कुरु ॥ ६

---

१. अस्यानन्तरम्—श्रुत्वा चानन्तरं कार्यं त्वया राक्षससत्तम—इति च. पुना. ।

किमयं वध्यते तात त्वयावध्येन दैवतैः । हत एव ह्ययं लोको यदा मृत्युवशं गतः ॥ ७
देवदानवदैत्यानां यक्षगन्धर्वरक्षसाम् । अवध्येन त्वया लोकः क्लेष्टुं युक्तो न मानुषः ॥ ८
नित्यं श्रेयसि संमूढं महद्भिर्व्यसनैर्वृतम् । हन्यात् कस्तादृशं लोकं जराव्याधिशतैर्युतम् ॥ ९
तैस्तैरनिष्टोपगमैरजस्रं यत्र कुत्र कः । मतिमान् मानुषे लोके युद्धेन प्रणयी भवेत् ॥ १०
क्षीयमाणं दैवहतं क्षुत्पिपासाजरादिभिः । विषादशोकसंमूढं लोकं त्वं क्षपयस्व मा ॥ ११
पश्य तावन्महाबाहो राक्षसेश्वर मानुषम् । मूढमेवं विचित्रार्थं यस्य न ज्ञायते गतिः ॥ १२
क्वचिद्वादित्रनृत्यादि सेव्यते मुदितैर्जनैः । रुद्यते चापरैरार्तैर्धाराश्रुनयनाननैः ॥ १३
मातापितृसुतस्नेहैर्भार्याबन्धुमनोरमैः । मोहितोऽयं जनो ध्वस्तः क्लेशं स्वं नावबुध्यते ॥ १४
अलमेनं परिक्लिश्य लोकं मोहनिराकृतम् । जित एव त्वया सौम्य मर्त्यलोको न संशयः ॥१५
अवश्यमेभिः सर्वैश्च गन्तव्यं यमसादनम् । तन्निगृह्णीष्व पौलस्त्य यमं परपुरंजय ॥ १६
तस्मिञ्जिते जितं सर्वं भवत्येव न संशयः । एवमुक्तस्तु लङ्केशो दीप्यमानं स्वतेजसा ॥ १७
अब्रवीन्नारदं तत्र संप्रहस्याभिवाद्य च । महर्षे देवगन्धर्वविहार समरप्रिय ॥ १८
अहं समुद्यतो गन्तुं विजयार्थं रसातलम् । ततो लोकत्रयं जित्वा स्थाप्य नागान् सुरान् वशे ॥
समुद्रममृतार्थं च मथिष्यामि रसालयम् । अथाब्रवीद्दशग्रीवं नारदो भगवानृषिः ॥ २०
क्व खल्विदानीं मार्गेण त्वया ह्यन्येन गम्यते । अयं खलु सुदुर्गम्यः प्रेतराजपुरं प्रति ॥ २१
मार्गो गच्छति दुर्धर्षो यमस्यामित्रकर्शन । स तु शारदमेघाभं हासं मुक्त्वा दशाननः ॥ २२
उवाच कृतमित्येव वचनं चेदमब्रवीत् । तस्मादेवमहं ब्रह्मन् वैवस्वतवधोद्यतः ॥ २३
गच्छामि दक्षिणामाशां यत्र सूर्यात्मजो नृपः । मया हि भगवन् क्रोधात् प्रतिज्ञातं रणार्थिना ॥
अवजेष्यामि चतुरो लोकपालानिति प्रभो । तदिह प्रस्थितोऽहं वै प्रेतराजपुरं प्रति ॥ २५
प्राणिसंक्लेशकर्तारं योजयिष्यामि मृत्युना । एवमुक्त्वा दशग्रीवो मुनिं तमभिवाद्य च ॥ २६
प्रययौ दक्षिणामाशां प्रहृष्टः सह मन्त्रिभिः । नारदस्तु महातेजा मुहूर्तं ध्यानमास्थितः ॥ २७
चिन्तयामास विप्रेन्द्रो विधूम इव पावकः । येन लोकास्त्रयः सेन्द्राः क्लिश्यन्ते सचराचराः ॥
क्षीणे चायुषि धर्मेण स कालो जेष्यते कथम् । स्वदत्तकृतसाक्षी यो द्वितीय इव पावकः ॥२९
लब्धसंज्ञा विचेष्टन्ते लोका यस्य महात्मनः । यस्य नित्यं त्रयो लोका विद्रवन्ति भयार्दिताः ॥
तं कथं राक्षसेन्द्रोऽसौ स्वयमेव गमिष्यति । यो विधाता च धाता च सुकृतं दुष्कृतं तथा ॥
त्रैलोक्यं विजितं येन तं कथं विजयिष्यते । अपरं किंतु कृत्वैव विधानं संविधास्यति ॥ ३२
कौतूहलसमुत्पन्नो यास्यामि यमसादनम् । विमर्दं द्रष्टुमनयोर्यमराक्षसयोः स्वयम् ॥ ३३

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
उत्तरकाण्डे रावणसंधुक्षणं नाम विंशः सर्गः

## एकविंशः सर्गः

### यमरावणयुद्धम्

एवं संचिन्त्य विप्रेन्द्रो जगाम लघुविक्रमः । आख्यातुं तद्यथावृत्तं यमस्य सदनं प्रति ॥ १

अपश्यत् स यमं तत्र देवमग्निपुरस्कृतम् । विधानमुपतिष्ठन्तं प्राणिनो यस्य यादृशम् ॥ २

स तु दृष्ट्वा यमः प्राप्तं महर्षिं तत्र नारदम् । अब्रवीत् सुखमासीनमर्घ्यमावेद्य धर्मतः ॥ ३

कच्चित् क्षेमं नु देवर्षे कच्चिद्धर्मो न नश्यति । किमागमनकृत्यं ते देवगन्धर्वसेवित ॥ ४

अब्रवीत्तु तदा वाक्यं नारदो भगवानृषिः । श्रूयतामभिधास्यामि विधानं च विधीयताम् ॥ ५

एष नाम्ना दशग्रीवः पितृराज निशाचरः । उपयाति वशं नेतुं विक्रमैस्त्वां सुदुर्जयम् ॥ ६

एतेन कारणेनाहं त्वरितो ह्यागतः प्रभो । दण्डप्रहरणस्याद्य तव किंनु भविष्यति ॥ ७

एतस्मिन्नन्तरे दूरादंशुमन्तमिवोदितम् । ददर्श दीप्तमायान्तं विमानं तस्य रक्षसः ॥ ८

तं देशं प्रभया तस्य पुष्पकस्य महाबलः । कृत्वा वितिमिरं सर्वं समीपं सोऽभ्यवर्तत ॥ ९

सोऽपश्यत् सुमहाबाहुर्दशग्रीवस्ततस्ततः । प्राणिनः सुकृतं कर्म भुञ्जानांश्चैव दुष्कृतम् ॥ १०

अपश्यत् सैनिकांश्चास्य यमस्यानुचरैः सह । यमस्य पुरुषैरुग्रैर्घोररूपैर्भयानकैः ॥ ११

ददर्श वध्यमानांश्च क्लिश्यमानांश्च देहिनः । क्रोशतश्च महानादं तीव्रनिष्टनतत्परान् ॥ १२

कृमिभिर्भक्ष्यमाणांश्च सारमेयैश्च दारुणैः । श्रोत्रायासकरा वाचो वदतश्च भयावहाः ॥ १३

संतार्यमाणान् वैतरणीं बहुशः शोणितोदकाम् । वालुकासु च तप्तासु तप्यमानान् मुहुर्मुहुः ॥

असिपत्रवने चैव भिद्यमानानधार्मिकान् । रौरवे क्षारनद्यां च क्षुरधारासु चैव हि ॥ १५

पानीयं याचमानांश्च तृषितान् क्षुधितानपि । शवभूतान् कृशान् दीनान् विवर्णान् मुक्तमूर्धजान्

मलपङ्कधरान् दीनान् रूक्षांश्च परिधावतः । ददर्श रावणो मार्गे शतशोऽथ सहस्रशः ॥ १७

कांश्चिच्च गृहमुख्येषु गीतवादित्रनिःस्वनैः । प्रमोदमानानद्राक्षीद्रावणः सुकृतैः स्वकैः ॥ १८

गोरसं गोप्रदातारो ह्यन्नं चैवान्नदायिनः । गृहांश्च गृहदातारः स्वकर्मफलमश्नतः ॥ १९

सुवर्णमणिमुक्ताभिः प्रमदाभिरलङ्कृतान् । धार्मिकानपरांस्तत्र दीप्यमानान् स्वतेजसा ॥ २०

ददर्श सुमहाबाहू रावणो राक्षसाधिपः । ततस्तान् भिद्यमानांश्च कर्मभिर्दुष्कृतैः स्वकैः ॥ २१

रावणो मोचयामास विक्रमेण बलाद्बली । प्राणिनो मोचितास्तेन दशग्रीवेण रक्षसा ॥ २२

सुखमापुर्मुहूर्तं ते ह्यतर्कितमचिन्तितम् । प्रेतेषु मुच्यमानेषु राक्षसेन बलीयसा[1] ॥ २३

प्रेतगोपाः सुसंक्रुद्धा राक्षसेन्द्रमभिद्रवन् । ततो हलहलाशब्दः सर्वदिग्भ्यः समुत्थितः ॥ २४

धर्मराजस्य योधानां शूराणां संप्रधावताम् । ते प्रासैः परिघैः शूलैर्मुसलैः शक्तितोमरैः॥ २५

पुष्पकं समवर्षन्त शूराः शतसहस्रशः । तस्यासनानि प्रासादान् वेदिकास्तोरणनि च ॥ २६

पुष्पकस्य बभञ्जुस्ते शीघ्रं मधुकरा इव । देवनिष्ठानभूतं तद्विमानं पुष्पकं मृधे ॥ २७

---

१. महीयसा, ति. ।

भज्यमानं तथैवासीदक्षयं ब्रह्मतेजसा। असंख्या सुमहत्यासीत्तस्य सेना महात्मनः ॥ २८
शूराणामुग्रयातॄणां सहस्राणि शतानि च। ततो वृक्षैश्च शैलैश्च प्रासादानां शतैस्तथा ॥ २९
ततस्ते सचिवास्तस्य यथाकामं यथाबलम्। अयुध्यन्त महावीराः स च राजा दशाननः ॥३०
ते तु शोणितदिग्धाङ्गाः सर्वशस्त्रसमाहताः। अमात्या राक्षसेन्द्रस्य चक्रुरायोधनं महत् ॥ ३१
अन्योन्यं ते महाभागा जघ्नुः प्रहरणैर्भृशम्। यमस्य च महाबाहो रावणस्य च मन्त्रिणः ॥
अमात्यांस्तांस्तु संत्यज्य यमयोधा महाबलाः। तमेव चाभ्यधावन्त शूलवर्षैर्दशाननम् ॥ ३३
ततः शोणितदिग्धाङ्गः प्रहारैर्जर्जरीकृतः। फुल्लाशोक इवाभाति पुष्पके राक्षसाधिपः ॥ ३४
स तु शूलगदाप्रासाञ्शक्तितोमरसायकान्। मुसलानि शिलावृक्षान् मुमोचास्त्रबलाद्बली ॥३५
तरूणां च शिलानां च शस्त्राणां चातिदारुणम्। यमसैन्येषु तद्वर्षं पपात धरणीतले ॥ ३६
तांस्तु सर्वान् विनिर्भिद्य तदस्त्रमपहत्य च। जघ्नुस्ते राक्षसं घोरमेकं शतसहस्रशः ॥ ३७
परिवार्य च तं सर्वे शैलं मेघोत्करा इव। भिण्डिपालैश्च शूलैश्च निरुच्छ्वासमपोथयन् ॥ ३८
विमुक्तकवचः क्रुद्धः सिक्तः शोणितविस्रवैः। ततः स पुष्पकं त्यक्त्वा पृथिव्यामवतिष्ठत[1] ॥३९
ततः स कार्मुकी बाणी समरे चाभिवर्तत। लब्धसंज्ञो मुहूर्तेन क्रुद्धस्तस्थौ यथान्तकः ॥ ४०
ततः पाशुपतं दिव्यमस्त्रं संधाय कार्मुके। तिष्ठ तिष्ठेति तानुक्त्वा तच्चापं विचकर्ष सः ॥ ४१
आकर्णात् स विकृष्याथ चापमिन्द्रारिराहवे। मुमोच तं शरं क्रुद्धस्त्रिपुरे शंकरो यथा ॥ ४२
तस्य रूपं शरस्यासीद्विधूमज्वालमण्डलम्। वनं दहिष्यतो घर्मे दावाग्नेरिव मूर्छतः ॥ ४३
ज्वालामाली स तु शरः क्रव्यादानुगतो रणे। मुक्तो गुल्मान् द्रुमांश्चापि भस्म कृत्वा प्रधावति
ते तस्य तेजसा दग्धाः सैन्या वैवस्वतस्य तु। रणे तस्मिन्निपतिता दावदग्धा नगा इव१ ॥ ४५
ततस्तु सचिवैः सार्धं राक्षसो भीमविक्रमः। ननाद सुमहानादं कम्पयन्निव मेदिनीम् ॥ ४६

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
उत्तरकाण्डे यमरावणयुद्धं नाम एकविंशः सर्गः

---

## द्वाविंशः सर्गः

### यमजयः

स तस्य तु महानादं श्रुत्वा वैवस्वतः प्रभुः। शत्रुं विजयिनं मेने स्वबलस्य च संक्षयम् ॥ १
स हि योधान् हतान् मत्वा क्रोधसंरक्तलोचनः। अब्रवीत्त्वरितं सूतं रथोऽयमुपनीयताम् ॥ २
तस्य सूतस्तदा दिव्यमुपस्थाप्य महारथम्। स्थितः स च महातेजा ह्यध्यारोहत तं रथम् ॥ ३

1. वृत्तानुसरणाय अडागमाभावः

१. माहेन्द्रा इव केतवः, पुना. ति.।

पाशमुद्गरहस्तश्च मृत्युस्तस्याग्रतः स्थितः । येन संक्षिप्यते सर्वं त्रैलोक्यमिदमव्ययम् ॥ ४
कालदण्डस्तु पार्श्वस्थो मूर्तिमानस्य चाभवत् । यमप्रहरणं दिव्यं तेजसा ज्वलदग्निमत् ॥ ५
तस्य पार्श्वेषु निश्छिद्राः कालपाशाः प्रतिष्ठिताः । पावकस्पर्शसंकाशाः स्थितो मूर्तश्च मुद्गरः[१] ॥
ततो लोकत्रयं क्षुब्धमकम्पन्त दिवौकसः । कालं दृष्ट्वा तथा क्रुद्धं सर्वलोकभयावहम् ॥ ७
ततः प्रचोदयन् सूतस्तानश्वान् रुचिरप्रभान् । प्रययौ भीमसंनादो यत्र रक्षःपतिः स्थितः[२] ॥ ८
मुहूर्तेन यमं ते तु हया हरिहयोपमाः । प्रापयन् मनसस्तुल्या यत्र तत् प्रस्तुतं रणम्[३] ॥ ९
दृष्ट्वा तथैव विकृतं रथं मृत्युसमन्वितम् । सचिवा राक्षसेन्द्रस्य सहसा विप्रदुद्रुवुः ॥ १०
लघुसत्त्वतया ते हि नष्टसंज्ञा भयार्दिताः । नेह योद्धुं समर्थाः स्म इत्युक्त्वा प्रययुर्दिशः ॥
स तु तं तादृशं दृष्ट्वा रथं लोकभयावहम् । नाक्षुभ्यत दशग्रीवो न चापि भयमाविशत् ॥ १२
स तु रावणमासाद्य व्यसृजच्छक्तितोमरान् । यमो मर्माणि संक्रुद्धो रावणस्योपकृन्तत ॥ १३
मर्मसु च्छिद्यमानेषु रावणो राक्षसेश्वरः । ययौ स्तब्धो रुजं घोरां भिद्यमान इवाचलः[४] ॥ १४
रावणस्तु ततः स्वस्थः शरवर्षं मुमोच ह । तस्मिन् वैवस्वतरथे तोयवर्षमिवाम्बुदः[५] ॥ १५
ततो महाशक्तिशतैः पात्यमानो महोरसि । नाशक्नोत् प्रतिकर्तुं स राक्षसः शल्यपीडितः ॥१६
एवं नानाप्रहरणैर्यमेनामित्रकर्शिना । सप्तरात्रं कृतः संख्ये न भग्नो विजितोऽपि वा[६] ॥ १७
तदासीत्तुमुलं युद्धं यमराक्षसयोर्द्वयोः । जयमाकाङ्क्षतोर्वीर समरेष्वनिवर्तिनोः ॥ १८
ततो देवाः सगन्धर्वाः सिद्धाश्च परमर्षयः । प्रजापतिं पुरस्कृत्य समेतास्तद्रणाजिरम् ॥ १९
संवर्त इव लोकानां युध्यतोरभवत्तदा । राक्षसानां च मुख्यस्य प्रेतानामीश्वरस्य च ॥ २०
राक्षसेन्द्रोऽपि विस्फार्य चापमिन्द्राशनिप्रभम् । निरन्तरमिवाकाशं कुर्वन् बाणांस्ततोऽसृजत् ॥
मृत्युं चतुर्भिर्विशिखैः सूतं सप्तभिरर्दयत् । यमं शतसहस्रेण शीघ्रं मर्मस्वताडयत् ॥ २२
ततः क्रुद्धस्य वदनाद्यमस्य समजायत । ज्वालामाली सनिश्वासः सधूमः कोपपावकः ॥ २३
तदाश्चर्यमथो दृष्ट्वा देवदानवसंनिधौ । प्रहर्षितौ सुसंरब्धौ मृत्युकालौ बभूवतुः ॥ २४
ततो मृत्युः क्रुद्धतरो वैवस्वतमभाषत । मुञ्च मां समरे यावद्धन्मीमं पापराक्षसम् ॥ २५
नैषा रक्षो भवेदद्य मर्यादा हि निसर्गतः । हिरण्यकशिपुः श्रीमान्नमुचिः शम्बरस्तथा ॥ २६
विसंधिर्धूमकेतुश्च बलिर्वैरोचनोऽपि च । दम्भुर्दैत्यमहाराजो वृत्रो बाणस्तथैव च ॥ २७
राजर्षयः शास्त्रविदो गन्धर्वाः समहोरगाः । ऋषयः पन्नगा दैत्या यज्ञाश्चाप्यप्सरोगणाः ॥२८

---

१. इदं पद्यं, ति. नास्ति ।
२. यत्र तत्प्रस्तुतं रणं. ति. ।
३. इदं पद्यम् च. पुना. ति. नास्ति ।
४. अस्यानन्तरम्—शरास्ते वज्रसंकाशाश्छादयन्तो रणे यमम् । यथाचलं महाघोरा नानावर्णा बलाहकाः ॥ तान्निहत्य शरांस्तूर्णं रावणस्य यमः स्वयम् । ततः प्रहरणं घोरं मुमोचारिनिषूदनः ॥—इति क. ग. घ. ।
५. महाशक्तिशरैः च. ।
६. विसंज्ञो विमुखो रिपुः च. ।

युगान्तपरिवर्ते च पृथिवी समहार्णवा। क्षयं नीता महाराज सपर्वतसरिद्द्रुमा ॥ २९
एते चान्ये च बहवो बलवन्तो दुरासदाः। विनिपन्ना मया दृष्टाः किमुतायं निशाचरः॥ ३०
मुञ्च मां साधुधर्मज्ञ यावदेनं निहन्म्यहम्। न हि कश्चिन्मया दृष्टो बलवानपि जीवति ॥ ३१
बलं मम न खल्वेतन्मर्यादैषा निसर्गतः। स दृष्टो न मया कालं मुहूर्तमपि जीवति ॥ ३२
तस्यैवं वचनं श्रुत्वा धर्मराजः प्रतापवान्। अब्रवीत्तत्र तं मृत्युं त्वं तिष्ठैनं निहन्म्यहम् ॥ ३३
ततः संरक्तनयनः क्रुद्धो वैवस्वतः प्रभुः। कालदण्डममोघं तु तोलयामास पाणिना ॥ ३४
यस्य पार्श्वेषु निखिलाः कालपाशाः प्रतिष्ठिताः। पावकाशनिसंकाशो मुद्गरो मूर्तिमान् स्थितः ॥
दर्शनादेव यः प्राणान् प्राणिनामपकर्षति। किं पुनः स्पृश्यमानस्य पात्यमानस्य वा पुनः ॥३६
स ज्वालापरिवारस्तु निर्दहन्निव राक्षसम्। तेन स्पृष्टो बलवता महाप्रहरणोऽस्फुरत् ॥ ३७
ततो विदुद्रुवुः सर्वे तस्मात्त्रस्ता रणाजिरे। सुराश्च क्षुभिताः सर्वे दृष्ट्वा दण्डोद्यतं यमम् ॥ ३८
तस्मिन् प्रहर्तुकामे तु यमे दण्डेन रावणम्। यमं पितामहः साक्षाद्दर्शयित्वेदमब्रवीत् ॥ ३९
वैवस्वत महाबाहो न खल्वमितविक्रम। न हन्तव्यस्त्वया तेन दण्डेनैष निशाचरः[1] ॥ ४०
वरः खलु मयैतस्मै दत्तस्त्रिदशपुङ्गव। स त्वया नानृतः कार्यो यन्मया व्याहृतं वचः ॥ ४१
यो हि मामनृतं कुर्याद्देवो वा मानुषोऽपि वा। त्रैलोक्यमनृतं तेन कृतं स्यान्नात्र संशयः ॥४२
क्रुद्धेन विप्रमुक्तोऽयं निर्विशेषं प्रियाप्रिये। प्रजाः संहरते रौद्रो लोकत्रयभयावहः ॥ ४३
अमोघो ह्येष सर्वेषां प्राणिनाममितप्रभः। कालदण्डो मया सृष्टः पूर्वं [1]मृत्युपुरस्कृतः ॥ ४४
तन्न खल्वेष ते सौम्य पात्यो रावणमूर्धनि। न ह्यस्मिन् पतिते कश्चिन्मुहूर्तमपि जीवति ॥४५
यदि ह्यस्मिन्निपतिते न म्रियतैष राक्षसः। म्रियते वा दशग्रीवस्तदा ह्युभयतोऽनृतम् ॥ ४६
तन्निवर्तय लङ्केशाद्दण्डमेतं[2] समुद्यतम्। सत्यं च मां कुरुष्वाद्य लोकांस्त्वं यद्यवेक्षसे ॥ ४७
एवमुक्तस्तु धर्मात्मा प्रत्युवाच यमस्तदा। एष व्यावर्तितो दण्डः प्रभविष्णुर्हि नो भवान् ॥४८
किं त्विदानीं मया शक्यं कर्तुं रणगतेन हि। न मया यद्ययं शक्यो हन्तुं वरपुरस्कृतः ॥ ४९
एष तस्मात् प्रणश्यामि दर्शनादद्य रक्षसः। इत्युक्त्वा सरथः साश्वस्तत्रैवान्तरधीयत ॥ ५०
दशग्रीवस्तु तं जित्वा नाम विश्राव्य चात्मनः। आरुह्य पुष्पकं भूयो निष्क्रान्तो यमसादनात् ॥
स तु वैवस्वतो देवैः सह ब्रह्मपुरोगमैः। जगाम त्रिदिवं हृष्टो नारदश्च महामुनिः ॥ ५२

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
उत्तरकाण्डे यमजयो नाम द्वाविंशः सर्गः

---

1. नम्रद्वयेन न हन्तव्यो न हन्तव्य इत्यावृत्तिरिति तिलकः।

१. सर्वमृत्यु ति.।
२. लङ्केशं दण्डमेतम् च.

## त्रयोविंशः सर्गः

वरुणजयः

ततो जित्वा दशग्रीवो यमं त्रिदशपुङ्गवम् । रावणस्तु रणश्लाघी स्वसहायान् ददर्श ह ॥ १
ततो रुधिरसिक्ताङ्गं प्रहारैर्जर्जरीकृतम् । रावणं राक्षसा दृष्ट्वा विस्मयं समुपागमन् ॥ २
जयेन वर्धयित्वा च मारीचप्रमुखास्ततः । पुष्पकं भेजिरे सर्वे सान्त्विता रावणेन तु ॥ ३
ततो रसातलं गच्छन् प्रविष्टः पयसां निधिम् । दैत्योरगगणाध्युष्टं वरुणेन सुरक्षितम् ॥ ४
स तु भोगवतीं गत्वा पुरीं वासुकिपालिताम् । कृत्वा नागान् वशे हृष्टो ययौ मणिमयीं पुरीम् ॥
निवातकवचास्तत्र दैत्या लब्धवरा वसन् । राक्षसस्तान् समागम्य युद्धाय समुपाह्वयत् ॥ ६
ते तु सर्वे सुविक्रान्ता दैतेया बलशालिनः । नानाप्रहरणास्तत्र प्रहृष्टा युद्धदुर्मदाः ॥ ७
शूलैस्त्रिशूलैः कुलिशैः पट्टसासिपरश्वधैः । अन्योन्यं बिभिदुः क्रुद्धा राक्षसा दानवास्तथा ॥ ८
तेषां तु युध्यमानानां साग्रः संवत्सरो गतः । न चान्यतरयोस्तत्र विजयो वा क्षयोऽपि वा ॥ ९
ततः पितामहस्तत्र त्रैलोक्यगतिरव्ययः । आजगाम द्रुतं देवो विमानवरमास्थितः १०
निवातकवचानां तु निवार्य रणकर्म तत् । वृद्धः पितामहो वाक्यमुवाच विदितार्थवत् ॥ ११
न ह्ययं रावणो युद्धे शक्यो जेतुं सुरासुरैः । न भवन्तः क्षयं नेतुमपि सामरदानवैः १२
राक्षसस्य सखित्वं च भवद्भिः सह रोचते । अविभक्ताश्च सर्वार्थाः सुहृदां नात्र संशयः ॥ १३
ततोऽग्निसाक्षिकं सख्यं कृतवांस्तत्र रावणः । निवातकवचैः सार्धं प्रीतिमानभवत्तदा ॥ १४
अर्चितस्तैर्यथान्यायं संवत्सरमथोषितः । स्वपुरान्निर्विशेषं च प्रियं प्राप्तो दशाननः ॥ १५
तत्रोपधार्य[1] मायानां शतमेकं समाप्तवान् । सलिलेन्द्रपुरान्वेषी भ्रमति स्म रसातलम् ॥ १६
ततोऽश्मनगरं नाम कालकेयैरधिष्ठितम् । गत्वा तु कालकेयांश्च हत्वा तत्र बलोत्कटान् ॥१७
शूर्पणख्याश्च भर्तारमसिना प्राच्छिनत्तदा । श्यालं न बलवन्तं च विद्युज्जिह्वं बलोत्कटम् ॥ १८
जिह्वया संलिहन्तं च राक्षसं समरे तथा । तं विजित्य मुहूर्तेन जघ्ने दैत्यांश्चतुःशतम् ॥ १९
ततः पाण्डरमेघाभं कैलासमिव भास्वरम् । वरुणस्यालयं दिव्यमपश्यद्राक्षसाधिपः ॥ २०
क्षरन्तीं च पयस्तत्र सुरभिं गामवस्थिताम् । यस्याः पयोऽभिनिष्यन्दात् क्षीरोदो नाम सागरः॥
ददर्श रावणस्तत्र गोवृषेन्द्रवरारणिम्[2] । यस्माच्चन्द्रः प्रभवति शीतरश्मिर्निशाकरः ॥ २२
यं समाश्रित्य जीवन्ति फेनपाः परमर्षयः । अमृतं यत्र चोत्पन्नं स्वधा च स्वधभोजिनाम् ॥२३
यां ब्रुवन्ति नरा लोके सुरभिं नाम नामतः । प्रदक्षिणं तु तां कृत्वा रावणः परमाद्भुताम्॥२४
प्रविवेश महाघोरं गुप्तं बहुविधैर्बलैः । तोयधाराशताकीर्णं शारदाभ्रनिभं तदा ॥ २५
नित्यप्रहृष्टं ददृशे वरुणस्य गृहोत्तमम् । ततो हत्वा बलाध्यक्षान् समरे तैश्च ताडितः ॥ २६
अब्रवीच्च ततो योधान् राजा शीघ्रं निवेद्यताम् । युद्धार्थी रावणः प्राप्तस्तस्य युद्धं प्रदीयताम् ॥
वद वा न भयं तेऽस्ति निर्जितोऽस्मीति साञ्जलिः । एतस्मिन्नन्तरे क्रुद्धा वरुणस्य महात्मनः ॥

---

1. सखित्वेनानुसृत्येति तिलकः । 2. हरवाहनस्य वृषराजस्य मातरम् ।

पुत्राः पौत्राश्च निष्क्रामन् गौश्च[1] पुष्कर एव च। ते तु वीर्यगुणोपेता बलैः परिवृताः स्वकैः॥
युक्त्वा रथान् कामगमानुद्यद्भास्करवर्चसः। ततो युद्धं समभवद्दारुणं रोमहर्षणम्॥ ३०
सलिलेन्द्रस्य पुत्राणां रावणस्य च धीमतः। अमात्यैश्च महावीर्यैर्दशग्रीवस्य रक्षसः॥ ३१
वारुणं तद्बलं कृत्स्नं क्षणेन विनिपातितम्। समीक्ष्य स्वबलं संख्ये वरुणस्य सुतास्तदा॥ ३२
अर्दिताः शरजालेन निवृत्ता रणकर्मणः। महीतलगतास्ते तु रावणं दृश्य पुष्पके॥ ३३
आकाशमाशु विविशुः स्यन्दनैः शीघ्रगामिभिः। महदासीत्ततस्तेषां तुल्यस्थानमवाप्य तत्॥
आकाशयुद्धं तुमुलं देवदानवयोरिव। ततस्ते रावणं युद्धे शरैः पावकसंनिभैः॥ ३५
विमुखीकृत्य संतुष्टा विनेदुर्विविधान् रवान्। ततो महोदरः क्रुद्धो राजानं दृश्य धर्षितम्॥
त्यक्त्वा मृत्युभयं वीरो युद्धकाङ्क्षी व्यलोकयत्। तेन ते दारुणा युद्धे कामगाः पवनोपमाः॥
महोदरेण गदया हता वै प्रययुः क्षितिम्। तेषां वरुणपुत्राणां हत्वा योधान् हयाञ्शतान्॥
मुमोचाशु महानादं विरथान् प्रेक्ष्य तान् स्थितान्। ते तु तेषां रथाः साश्वाः सह सारथिभिर्हतैः॥
महोदरेण निहताः पतिताः पृथिवीतले। ते तु त्यक्त्वा रथान् पुत्रा वरुणस्य महात्मनः॥४०
आकाशे विष्ठिताः शूराः स्वप्रभावान्न विव्यथुः। धनूंषि कृत्वा सज्जानि विनिर्भिद्य महोदरम्॥
रावणं समरे क्रुद्धाः सहिताः समभिद्रवन्। सायकैश्चापविभ्रष्टैर्वज्रकल्पैः सुदारुणैः॥ ४२
दारयन्ति स्म संक्रुद्धा मेघा इव महागिरम्। ततः क्रुद्धो दशग्रीवः कालाग्निरिव निर्गतः॥
शरवर्षैर्महाघोरैस्तेषां मर्मस्वताडयत्। ततस्तेनैव सहसा सीदन्ति स्म पदातयः॥ ४४
मुसलानि विचित्राणि ततो भल्लशतानि च। पट्टसांश्चैव शक्तीश्च शतघ्नीस्तोमरांस्तथा॥ ४५
पातयामास दुर्धर्षस्तेषामुपरि विष्ठितः। अपविद्धास्तु ते वीरा विनिष्पेतुः पदातयः॥ ४६
महापङ्कमिवासाद्य कुञ्जराः षष्टिहायनाः। सीदमानान् सुतान् दृष्ट्वा विह्वलान् सुमहौजसः॥
ननाद रावणो हर्षान्महानम्बुधरो यथा। ततो रक्षो महानादान् मुक्त्वा हन्ति स्म वारुणान्॥
नानाप्रहरणोपेतैर्धारापातैरिवाम्बुदः। ततस्ते विमुखाः सर्वे पतिता धरणीतले॥ ४९
रणात् स्वपुरुषैः शीघ्रं गृहाण्येव प्रवेशिताः। तानब्रवीत्ततो रक्षो वरुणाय निवेद्यताम्॥ ५०
रावणं त्वब्रवीन्मन्त्री प्रभासो नाम वारुणेः। गतः खलु महाराजो ब्रह्मलोकं जलेश्वरः॥ ५१
गान्धर्वं वरुणः श्रोतुं यं त्वमाह्वयसे युधि। तत् किं तव वृथा वीर परिश्रम्य गते नृपे॥ ५२
ये तु सन्निहिता वीराः कुमारास्ते पराजिताः। राक्षसेन्द्रस्तु तच्छ्रुत्वा नाम विश्राव्य चात्मनः
हर्षान्नादं विमुञ्चन् वै निष्क्रान्तो वरुणालयात्। आगतस्तु पथा येन तेनैव विनिवृत्य सः॥
लङ्कामभिमुखो रक्षो नभःस्थलगतो ययौ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
उत्तरकाण्डे वरुणजयो नाम त्रयोविंशः सर्गः

---

1. गौश्च पुष्करश्च पुत्रपौत्रयोबलाध्याक्षौ इति तिलकः    १. भास्वर. प्र.।

## अथ च. पुना. ति. दृश्यमानाः प्रक्षिप्ताः सर्गाः

### प्रथमः सर्गः[1]

### बलिदर्शनम्

ततोऽश्मनगरं भूयो विचेरुर्युद्धदुर्मदाः । यत्रापश्यद्दशग्रीवो गृहं परमभास्वरम् ॥१॥ वैदूर्यतोरणाकीर्णं मुक्ताजालविभूषितम् । सुवर्णस्तम्भगहनं वेदिकाभिः समन्ततः ॥ २ ॥ वज्रस्फटिकसोपानं किङ्किणीजालसंयुतम् । बह्वासनयुतं रम्यं महेन्द्रभवनोपमम् ॥ ३ ॥ दृष्ट्वा गृहवरं रम्यं दशग्रीवः प्रतापवान् । कस्येदं भवनं सौम्यं मेरुमन्दरसन्निभम् ॥४॥ गच्छ प्रहस्त शीघ्रं त्वं जानीष्व भवनोत्तमम् । एवमुक्तः प्रहस्तस्तु प्रविवेश गृहोत्तमम् ॥५॥ स शून्यं प्रेक्ष्य तद्द्वारं पुनः कक्ष्यान्तरं ययौ । सप्तकक्ष्यान्तरं गत्वा ततो ज्वालामपश्यत ॥ ६ ॥ ततो दृष्टः पुमांस्तत्र हृष्टो हासं मुमोच सः । स तु श्रुत्वा महाहासमूर्ध्वरोमाभवत्तदा ॥७॥ ज्वालामध्ये स्थितस्तत्र हेममाली विमोहितः ॥ आदित्य इव दुष्प्रेक्ष्यः साक्षाद्यम इव स्थितः ॥ ८ ॥ तथा दृष्ट्वा तु वृत्तान्तं त्वरमाणो विनिर्गतः । विनिर्गम्याब्रवीत् सर्वं रावणाय निशाचरः ॥ ९ ॥ अथ राम दशग्रीवः पुष्पकादवरुह्य सः । प्रवेष्टुमिच्छन् वेश्माथ भिन्नाञ्जनचयोपमः ॥१० ॥ चन्द्रमौलिर्वपुष्मांश्च पुरुषोऽस्याग्रतः स्थितः । द्वारमावृत्य सहसा ज्वलासक्तो भयानकः ॥ ११ ॥ रक्ताक्षः श्वेतवदनो बिम्बोष्ठश्चोर्ध्वरोमवान् । महाभीषणनासश्च कम्बुग्रीवो महाहनुः ॥ १२ ॥ गूढश्मश्रुर्निगूढास्थिर्दंष्ट्रालो रोमहर्षणः । एतादृशं वै पुरुषं ददर्श स तु रावणः ॥ १३ ॥ गृहीत्वा लोहमुसलं द्वारं विष्टभ्य सुस्थितम् । अथ संदर्शनात्तस्य उर्ध्वरोमा बभूव सः ॥ १४ ॥ अस्पन्दतास्य हृदयं वेपथुश्चाप्यजायत । निमित्तान्यमनोज्ञानि दृष्ट्वा राम व्यचिन्तयत् ॥ १५ ॥ अथ चिन्तयतस्तस्य स एव पुरुषोऽब्रवीत् । किं त्वं चिन्तयसे रक्षो ब्रूहि विस्रब्धमानसः ॥ १६ ॥ युद्धातिथ्यमहं वीर करिष्ये रजनीचर । एवमुक्त्वा स तद्रक्षः पुनर्वचनमब्रवीत् ॥ १७ ॥ योत्स्यसे बलिना सार्धं मया वा तद्विधीयताम् । रावणोऽभिहितो भूय उर्ध्वरोमा व्यजायत ॥ १८ ॥ अथ धैर्यं समालम्ब्य रावणो वाक्यमब्रवीत् गृहेऽत्र तिष्ठते को वा तं ब्रूहि वदतां वर ॥ ॥ १९ ॥ तेनैव सार्धं योत्स्यामि यथा वा मन्यते भवान् । स एनं पुनरप्याह दानवेन्द्रोऽत्र तिष्ठति ॥ २० ॥ एष वै परमोदारः शूरः सत्यपराक्रमः । वीरो बहुगुणोपेतः पाशहस्त इवान्तकः ॥ २१ ॥ बालार्क इव तेजस्वी समरेष्वनिवर्तकः । आमर्षी दुर्जयो जेता बलिर्हि गुणसागरः ॥ २२ ॥ प्रियंवदः संविभागी गुरुविप्रप्रियः सदा । कालकाङ्क्षी महासत्त्वः सत्यवाक् सौम्यदर्शनः ॥ २३ ॥ स च सर्वगुणोपेतः शूरः स्वाध्यायतत्परः । एष गर्जति वात्येष ज्वलते तपते सदा ॥२४॥ देवैश्च भूतसङ्घैश्च पन्नगैश्च महर्षिभिः । भयं यो नाभिजानाति तेन किं योद्धुमिच्छसि ॥ २५ ॥ बलिना यदि ते योद्धुं रोचते

---

१. अस्य सर्गस्यारम्भे—हर्षनादांस्तु विसृजन्निष्क्रान्तो वरुणालयात् । महोदरेण संयुक्तो हर्षगद्गदभाषिणा—इति च. दृश्यते ।

राक्षसेश्वर। प्रविश त्वं महासत्वं संग्रामं कुरु मा चिरम् ॥ २६ ॥ एवमुक्तो दशग्रीवः प्रविवेश यतो बलिः। स विलोक्याथ लङ्केश-मट्टहासं जहास च ॥ २७ ॥ आदित्य इव दुष्प्रेक्ष्यः स्थितो दानवसत्तमः। अथ संदर्श-नादेव बलिर्वै विश्वरूपवान् ॥ २८ ॥ स गृहीत्वा च तद्रक्षो ह्युत्सङ्गे स्थाप्य चाब्रवीत्। दशग्रीव महाबाहो कं ते कामं करोम्यहम् ॥ २९ ॥ किमागमनकृत्यं ते ब्रूहि त्वं राक्ष-सेश्वर। एवमुक्तस्तु बलिना रावणो वाक्य-मब्रवीत् ॥ ३० ॥ श्रुतं मया महाभाग बद्धस्त्वं विष्णुना पुरा। सोऽहं मोचयितुं शक्तो बन्धनात्त्वां न संशयः ॥ ३१ ॥ एवमुक्ते ततो हासं बलिः कृत्वेदमब्रवीत्। श्रूयतामभि-धास्यामि यं त्वं पृच्छसि रावण ॥ ३२ ॥ य एष पुरुषः श्यामो द्वारि तिष्ठति नित्यदा। एतेन दानवेन्द्राश्च तथान्ये बलवत्तराः ॥३३॥ वशं नीता बलवता पूर्वे पूर्वतराश्च ये। बद्धश्चाहमनेनैवं कृतान्तो दुरतिक्रमः ॥ ३४ ॥ क एनं पुरुषो लोके वञ्चयिष्यति रावण। सर्वभूतापहर्ता वै य एष द्वारि तिष्ठति ॥३५॥ कर्ता कारयिता चैव धाता च भुवनेश्वरः। न त्वं वेद न चाहं वै भूतभव्यभवत्प्रभुम् ॥३६॥ कलिश्चैव हि कालश्च सर्वभूतापहारकः। लोकत्रयस्य सर्वस्य हर्ता स्रष्टा तथैव च ॥ ३७ ॥ संहरत्येष भूतानि स्थावराणि चराणि च। पुनश्च सृजते सर्वमनाद्यन्तो महेश्वरः ॥ ३८ ॥ करणं कारणं कर्ता सोऽयं पुरुष-सत्तमः। इष्टं चैव हि दत्तं च हुतं चैव निशाचर ॥ ३९ ॥ सर्वमेव हि लोकेशो धाता गोप्ता न संशयः। नैवंविधं महद्भूतं विद्यते भुवनत्रये ॥४०॥ अहं त्वं चैव पौलस्त्य ये चान्ये पूर्ववत्तराः। नेता तेषां महात्मैष पशुं रश-नया यथा ॥ ४१ ॥ वृत्रो दनुः शुकः शुम्भो निशुम्भो दम्भुरेव च। कालनेमिश्च प्राह्लादि-स्तथा वैरोचनो बलिः ॥ ४२ ॥ कालकेयास्तार-काख्यो मुचुकुन्दो विवर्धनः। हिरण्याक्षो मधुश्चैव कैटभो धूम्रशम्बरौ ॥ ४३ ॥ यमला-र्जुनौ च कंसश्च कैटभो मधुना सह। एते तपन्ति द्योतन्ति वान्ति वर्षन्ति चैव हि ॥४४॥ सर्वैः क्रतुशतैरिष्टं सर्वैस्तप्तं महत्तपः। सर्वे ते सुमहात्मानः सर्वे वै योगधर्मिणः ॥४५॥ सर्वै-रैश्वर्यमासाद्य भुक्तभोगैर्महत्तरैः। दत्तमिष्टमधीतं च प्रजाश्च परिपालिताः॥४६॥ स्वपक्षेष्वनुगो-प्तारः प्रहर्तारः परष्वपि। सामरेष्वपि लोकेषु नैतेषां विद्यते समः ॥ ४७ ॥ शूरास्त्वभिज-नोपेताः सर्वशस्त्रास्त्रपारगाः। सर्वविद्याप्रवेत्तारः संग्रामेष्वनिवर्तकाः ॥ ४८ ॥ सर्वैस्त्रिदश-राज्यानि काङ्क्षितानि महात्मभिः। युद्धे सुरगणाः सर्वे निर्जिताश्च सहस्रशः ॥ ४९ ॥ देवानामपि ये शक्ताः स्वपक्षपरिपालकाः। प्रमत्ता भोगरक्ताश्च बालार्कसमतेजसः ॥५०॥ यत् स देवान् प्रधर्षेत तदेषो विष्णुरीश्वरः। उपायपूर्वकं नाशं संवेत्ता भगवान् हरिः ॥५१॥ प्रादुर्भावं विकुरुते येनैतन्निधनं नयेत्। पुनरेवा-त्मनात्मानमधिष्ठाय स तिष्ठति ॥ ५२ ॥ एव-मेतेन देवेन दानवेन्द्रा महात्मना। ते हि सर्वे क्षयं नीता बलिना कामरूपिणा ॥ ५३ ॥ समरे च दुराधर्षा नृपास्ते च पराजिताः। तेन नीताः क्षयं सर्वे कृतान्तबलचोदिताः ॥ ५४ ॥ एवमुक्त्वाथ प्रोवाच राक्षसं दानवेश्वरः। यदेतद्दृश्यते वीर चक्रं दीप्तानलोपमम् ॥५५॥

एतद्गृहीत्वागच्छ त्वं मम पार्श्वं महाबल। ततोऽहं तव चाख्यास्ये मुक्तिकारणमव्ययम् ॥ ५६ ॥ तत् कुरुष्व महाबाहो मा विलम्बस्व रावण। एतच्छ्रुत्वा गतो रक्षः प्रहसंश्च महाबलः ॥ ५७ ॥ यत्र स्थितं महद्दिव्यं कुण्डलं रघुनन्दन। लीलयोत्पाटनं चक्रे रावणो बलदर्पितः ॥ ५८ ॥ न च चालयितुं शक्तो रावणोऽभूत् कथंचन। लज्जया स पुनर्भूयो यत्नं चक्रे महाबलः ॥ ५९ ॥ उत्क्षिप्तमात्रे दिव्ये च पपात भुवि राक्षसः। छिन्नमूलो यथा शाखी रुधिरौघपरिप्लुतः ॥ ६० ॥ एतस्मिन्नन्तरे जज्ञे शब्दः पुष्करसंभवः। राक्षसेन्द्रस्य सचिवैर्मुक्तो हाहाकृतो महान् ॥ ६१ ॥ ततो रक्षो मुहूर्तेन चेतनां लभ्य चोत्थितम्। लज्जयावनतीभूतं बलिर्वाक्यमुवाच ह ॥ ६२ ॥ आगच्छ राक्षसश्रेष्ठ वाक्यं शृणु मयोदितम्। यत्त्वया चोद्धृतं वीर कुण्डलं मणिभूषितम् ॥ ६३ ॥ एतद्धि पूर्वजस्यासीत् कर्णाभरणमीक्ष्यताम्। एतत् पतितमत्रैवमन्यद्भूयो महाबल ॥ ६४ ॥ अन्यत् पर्वतसानौ हि पतितं कुण्डलादनु। मकुटं वेदिसामीप्ये पतितं युध्यतो भुवि ॥ ६५॥ हिरण्यकशिपोः पूर्वं मम पूर्वपितामहात्। न तस्य कालो मृत्युर्वा न व्याधिर्न विहिंसकाः ॥ ६६ ॥ न दिवा मरणं तस्य न रात्रौ सन्ध्ययोरपि। न शुष्केण न चार्द्रेण न च शस्त्रेण केनचित् ॥ ६७ ॥ विद्यते राक्षसश्रेष्ठ तस्य नास्त्रेण केनचित्। प्रह्लादेन समं चक्रे वादं परमदारुणम् ॥ ६८ ॥ तस्य वादे समुत्पन्ने धीरो लोकभयंकरः। सर्वदृश्यस्य वीरस्य प्रह्लादस्य महात्मनः ॥ ६९ ॥ उत्पन्नो राक्षसश्रेष्ठ नृसिंहाकृतिरूपधृत्। दृष्टं च तेन रौद्रेण क्षुब्धं सर्वमशेषतः ॥ ७० ॥ तत उद्धृत्य बाहुभ्यां नखैर्निन्ये यमक्षयम्। एष तिष्ठति द्वाःस्थो वै वासुदेवो निरञ्जनः ॥ ७१ ॥ तस्य देवाधिदेवस्य तत्त्वतो मे शृणुष्व ह। वाक्यं परमभावेन यदि ते वर्तते हृदि ॥ ७२ ॥ इन्द्राणां च सहस्राणि सुराणामयुतानि च। ऋषीणां सप्तसंख्यानां शतान्यब्दसहस्रशः ॥ ७३ ॥ वशं नीतानि सर्वाणि य एष द्वारि तिष्ठति। तस्य तद्वचनं श्रुत्वा रावणो वाक्यमब्रवीत् ॥७४॥ मया प्रेतेश्वरो दृष्टः कृतान्तः सह मृत्युना। पाशहस्तो महाज्वाल ऊर्ध्वरोमा भयानकः ॥ ७५ ॥ विद्युज्जिह्वश्च दंष्ट्रालः सर्पवृश्चिकरोमवान्। रक्ताक्षो भीमवेगश्च सर्वसत्त्वभयंकरः ॥ ७६ ॥ आदित्य इव दुष्प्रेक्ष्यः समरेष्वनिवर्तकः। पापानां शमिता चैव स मया युधि निर्जितः ॥ ॥ ७७ ॥ न च मे तत्र भीः काचिद्व्यथा वा दानवेश्वर। एनं तु नाभिजानामि तद्भवान् वक्तुमर्हति ॥ ७८ ॥ रावणस्य वचः श्रुत्वा बलिर्वैरोचनोऽब्रवीत्। एष त्रैलोक्यधाता च हरिर्नारायणः प्रभुः ॥ ७९ ॥ अनन्तः कपिलो विष्णुर्नारसिंहो महाद्युतिः। ऋतधामा सुधामा च पाशहस्तो भयानकः ॥८०॥ द्वादशादित्यसदृशः पुराणः पुरुषोत्तमः। नीलजीमूतसंकाशः सुरनाथः सुरोत्तमः ॥८१॥ ज्वालामाली महाबाहुर्योगी भक्तजनप्रियः। एष धारयते लोकानेष वै सृजते प्रभुः ॥ ८२ ॥ एष संहरते चैव कालो भूत्वा महाबलः। एष यज्ञश्च याज्यश्च चक्रायुधधरो हरिः ॥ ८३ ॥ सर्वदेवमयश्चैव सर्वभूतमयस्तथा। सर्वलोकमयश्चैव सर्वज्ञानमयस्तथा

॥८४॥ सर्वरूपी महारूपी बलदेवो महाभुजः। वीरहा वीरचक्षुष्मांस्त्रैलोक्यगुरुरव्ययः॥ ८५॥ एवं मुनिगणाः सर्वे कथयन्तीह मोक्षिणः। य एनं वेत्ति पुरुषं न च पापैर्विलिप्यते॥ ८६॥ स्मृत्वा स्तुत्वा तथेष्ट्वा च सर्वमस्मादवाप्यते। एतच्छ्रुत्वा च वचनं रावणो निर्ययौ तदा॥ ८७॥ क्रोधसंरक्तनयन उद्यतास्त्रो महाबलः। तथाभूतं च तं दृष्ट्वा हरिर्मुसलधृत् प्रभुः॥ ८८॥ नैनं हन्म्यधुना पापं चिन्तयित्वेति विश्वधृत्। अन्तर्धानं गतो राम ब्रह्मणः प्रियकाम्यया॥ ८९॥ न च तं पुरुषं तत्र ददर्श रजनीचरः॥

इति प्रक्षिप्तेषु बलिदर्शनं नाम प्रथमः सर्गः

---

## प्रक्षिप्तेषु द्वितीयः सर्गः

अथ संचिन्त्य पौलस्त्यः सूर्यलोकं जगाम ह। मेरुशृङ्गे वरे रम्ये उषित्वा तत्र शर्वरीम्॥१॥ पुष्पकं तत् समारुह्य रवेस्तुरगसन्निभम्। मनोवातगतिं दिव्यं विहारवियति स्थितम्॥ २॥ तत्रापश्यद्रविं देवं सर्वतेजोमयं शुभम्। वरकाञ्चनकेयूररक्ताम्बरविभूषितम्॥ ३॥ कुण्डलाभ्यां शुभाभ्यां तु भ्राजन्मुखविकासितम्। केयूरनिष्काभरणं रक्तमालावलम्बिनम्॥ ४॥ रक्तचन्दनदिग्धाङ्गं सहस्रकिरणोज्ज्वलम्। तमादिदेवमादित्यं विभुं सप्ताश्ववाहनम्॥ ५॥ अनाद्यन्तममध्यं च लोकसाक्षिणमीश्वरम्। तं दृष्ट्वा प्रवरं देवं रावणो राक्षसाधिपः॥ ६॥ स प्रहस्तमुवाचाथ रवितेजोबलार्दितम्। गच्छामात्य वद ह्येनं संदेशान्मम शासनम्॥ ७॥ मार्तण्डं भास्करं श्रेष्ठं तत्त्वतो ब्रूहि मा चिरम्। युद्धार्थी रावणः प्राप्तो युद्धं तस्य प्रदीयताम्॥ ८॥ निर्जितोऽस्मीति वा ब्रूहि पक्षमेकतरं कुरु। तस्य तद्वचनाद्रक्षः सूर्यस्यान्तिकमागमत्॥ ९॥ पिङ्गलं दण्डिनं चैव सोऽपश्यद्द्वारपालकौ। आभ्यामाख्याय तत् सर्वं रावणस्य विनिश्चयम्॥ १०॥ तूष्णीमास्ते प्रहस्तः स सूर्यतेजःप्रतापितः। दण्डी गत्वा रवेः पार्श्वं प्रणम्याख्यातवान् विभुम्॥ ११॥ श्रुत्वा तु सूर्यस्तद्वृत्तं दण्डिनो रावणस्य ह। उवाच वचनं श्रीमान् बुद्धिपूर्वं दिवाकरः॥ १२॥ गच्छ दण्डिञ्जयस्वैनं निर्जितोऽस्मीति वा वद। कुरु यत्ते काङ्क्षितं तन्नाहं कालक्षिपां सहे॥ १३॥ स गत्वा वचनात्तस्य राक्षसाय महात्मनः। कथयामास तत् सर्वं सूर्योक्तं वचनं यथा॥१४॥ स श्रुत्वा वचनं तस्य दण्डिनो वै महात्मनः। घोषयित्वा जगामाथ विजयं राक्षसेश्वरः॥१५॥

इति प्रक्षिप्तेषु सूर्यजयघोषणा नाम द्वितीयः सर्गः

---

## प्रक्षिप्तेषु तृतीयः सर्गः

### रावणमान्धातृयुद्धम्

अथ संचिन्त्य पौलस्त्यः सोमलोकं जगाम ह। मेरुशृङ्गे वरे रम्ये रजनीमुष्य वीर्यवान्॥ १॥ तदा कश्चिद्रथारूढो दिव्यस्रगनुलेपनः। अप्सरोगणमुख्येन सेव्यमानस्तु गच्छति॥२॥ रतिश्रान्तोऽप्सरोऽङ्केषु चुम्बितः सन् विबुध्यते। रावणस्त्वथ तं दृष्ट्वा कौतूहलसमन्वितः॥३॥ अथापश्यदृषिं तत्र पर्वतं मुनिसत्तमम्। दशग्रीवो महात्मानं दृष्ट्वा चेदमुवाच ह॥ ४॥ स्वागतं तव देवर्षे दिष्ट्या चैवागतो ह्यसि। कोऽयं स्यन्दनमारूढो ह्यप्सरोगणसेवितः॥५॥ निर्लज्ज इव संयाति भयस्थानं न विन्दति। रावणेनैवमुक्तस्तु पर्वतो वाक्यमब्रवीत्॥ ६॥

शृणु वत्स यथातत्त्वं वक्ष्ये तव महामते। एतेन निर्जिता लोका ब्रह्मा चैवाभितोषितः ॥७॥ एष गच्छति मोक्षाय सुसुखं स्थानमुत्तमम्। तपसा निर्जिता लोका विक्रमेण यथा त्वया ॥ ८ ॥ प्रयाति पुण्यवान् वत्स सोमं पीत्वा न संशयः। त्वं च राक्षसशार्दूल शूरः सत्यव्रतस्तथा ॥९॥ नेदृशेषु च क्रुध्यन्ति बलिनो ब्रह्मचारिषु। अथापश्यद्रथवरं महाकायं महौजसम् ॥ १० ॥ जाज्वल्यमानं वपुषा गीतवादित्रसंकुलम्। कैष गच्छति देवर्षे शोभमानो महाद्युतिः ॥११॥ किन्नरैश्च प्रगायद्भिर्नृत्यद्भिश्च मनोहरम्। श्रुत्वा चैनमुवाचाथ पर्वतो मुनिसत्तमः ॥१२॥ एवं शूरो रणे योद्धा संग्रामेष्वनिवर्तकः। युध्यमानस्तथैवैष प्रहारैर्जर्जरीकृतः ॥१३॥ कृती शूरो रणे जेता स्वाम्यर्थे त्यक्तजीवितः। संग्रामे निहतो वीरान् हत्वा च सबलान् बहून्॥ १४॥ इन्द्रस्यातिथिरेवैष ह्यथवा यत्र चेच्छति। नृत्तगीतविलासैस्तु सेव्यते नरसत्तमः ॥१५॥ पप्रच्छ रावणो भूयः कोऽयं यात्यर्कसन्निभः। रावणस्य वचः श्रुत्वा पर्वतो वाक्यमब्रवीत् ॥ १६ ॥ य एष दृश्यते राजन् विमाने सर्वकाञ्चने। अप्सरोगणसंयुक्ते पूर्णेन्दुसदृशाननः ॥१७॥ सुवर्णदो महाराज विचित्राभरणाम्बरः। एष गच्छति शीघ्रेण यानेन सुमहाद्युतिः ॥ १८ ॥ पर्वतस्य वचः श्रुत्वा रावणो वाक्यमब्रवीत्। य एते यान्ति राजानो ब्रूहि तानृषिसत्तम ॥१९॥ कोऽत्र मे याचितो दद्याद्युद्धातिथ्यं महाद्युतिः। क्षिप्रमाख्याहि धर्मज्ञ पिता मे त्वं हि पर्वत ॥२०॥ एवमुक्तः प्रत्युवाच रावणं पर्वतस्तदा। स्वर्गार्थिनो महाराज नैते युद्धार्थिनो नृपाः ॥२१॥ वक्ष्यामि च महाराज विचित्राभरणाम्बरः। यस्तु राजा महातेजा सप्तद्वीपेश्वरो महान् ॥२२॥ मान्धातेत्यभिविख्यातः स ते युद्धं प्रदास्यति। पर्वतस्य वचः श्रुत्वा रावणो वाक्यमब्रवीत् ॥२३॥ कुत्रासौ वर्तते राजा तं समाचक्ष्व तत्त्वतः। अहं यास्यामि तत्राद्य यत्रासौ नरपुङ्गवः ॥ २४ ॥ रावणस्य वचः श्रुत्वा मुनिर्वचनमब्रवीत्। युवनाश्वसुतो ह्येष मान्धाता राजसत्तमः ॥२५॥ सप्तद्वीपान् समुद्रान्ताञ्जित्वाद्य स्वर्गमेष्यति। अथापश्यन्महाबाहुर्विरिञ्चिवरदर्पितः ॥ २६ ॥ अयोध्याधिपतिं वीरं मान्धातारं नृपोत्तमम्। सप्तद्वीपाधिपं यान्तं स्यन्दनेन विराजितम् ॥ २७॥ काञ्चनेन विचित्रेण महाहारेण भास्वता। जाज्वल्यमानं रूपेण दिव्यस्रगनुलेपनम् ॥२८॥ तमुवाच दशग्रीवो युद्धं मे दीयतामिति। एवमुक्तो दशग्रीवं प्रहस्येदमुवाच ह ॥२९॥ यदि ते जीवितं नेष्टं ततो युध्यस्व मामिति। मान्धातुर्वचनं श्रुत्वा रावणो वाक्यमब्रवीत् ॥ ३०॥ वरुणस्य कुबेरस्य यमस्यापि न विव्यथे। किमरे मानुषात्त्वत्तो रावणो भयमाविशेत् ॥ ३१॥ एवमुक्त्वा दशग्रीवः क्रोधात्तं प्रदहन्निव। आज्ञापयामास तदा राक्षसान् युद्धदुर्मदान् ॥ ३२ ॥ अथ क्रुद्धास्तु सचिवा रावणस्य दुरात्मनः। ववृषुः शरवर्षाणि शूरा युद्धविशारदाः ॥३३॥ अथ राज्ञा बलवता कङ्कपत्रैरजिह्मगैः। इषुभिस्ताडिताः सर्वे प्रहस्तशुकसारणाः ॥ ३४ ॥ महोदरविरूपाक्षमारीचाकम्पनादयः। अथ प्रहस्तो नृपतिं शरवर्षैरवाकिरत् ॥ ३५ ॥ अप्राप्तानेव तान् सर्वान् प्रचिच्छेद नृपोत्तमः। भुसुण्ठीभिश्च भल्लैश्च भिण्डिपालैश्च तोमरैः ॥३६॥ नरराजेन दह्यन्ते

शलभा इव तेऽग्निना। पुनर्नृपवरः क्रुद्धः पञ्चभिः प्रबिभेद तम् ॥ ३७ ॥ तोमरैः स महाघोरैः पुरा क्रौञ्चमिवाग्निजः। ततो मुहुर्भ्रामयित्वा मुद्गरं वज्रसंनिभम् ॥ ३८ ॥ मुमोच सोऽतिवेगेन राक्षसस्य रथं प्रति। स पपात महावेगो मुद्गरो वज्रसंनिभः ॥ ३९ ॥ घूर्णितो रावणस्तेन पतितः शक्रकेतुवत्। तदा स नृपतिः प्रीतो हर्षोद्भूतबलो बभौ ॥ ४० ॥ सकलेन्दुकरैः स्पृष्टं यथाम्बु लवणाम्भसः। ततो रक्षोबलं सर्वं हाहाभूतमचेतनम् ॥४१॥ परिवार्याथ तं तस्थौ राक्षसेन्द्रं समन्ततः। ततश्चिरात् समाश्वस्तो रावणो लोकरावणः ॥ ४२ ॥ मान्धातुः पीडयामास देहं लङ्केश्वरो भृशम्। रथं चाश्वयुजं क्षिप्रं बभञ्ज च महाबलः ॥४३॥ विरथः स रथं प्राप्य शक्तिं घण्टाट्टहासिनीम्। मान्धाता विप्रचिक्षेप तां बलाद्रावणं प्रति ॥ ४४ ॥ मरीचिमिव चार्कस्य चित्रभानोः शिखामिव। दीप्यन्तीं रुचिराभासं मान्धातृकरनिःसृताम्॥ ४५ ॥ तामापतन्तीं शूलेन पौलस्त्यो रजनीचरः। ददाह शक्तिं लङ्केशः पतङ्गमिव पावकः ॥ ४६ ॥ यमदत्तं तु नाराचं निकृष्याथ दशाननः। पातयामास वेगेन स तेनाभिहतो भृशम् ॥४७॥ मूर्छितं नृपतिं दृष्ट्वा प्रहृष्टास्ते निशाचराः। चुक्रुशुः सिंहनादांश्च क्ष्वेलन्तश्च निशाचराः ॥ ४८ ॥ लब्धसंज्ञो मुहूर्तेन ह्ययोध्याधिपतिस्तदा। तं दृष्ट्वा शत्रुभिः शत्रुं पूज्यमानं मुदान्वितैः ॥ ४९॥ जातकोपो दुराधर्षश्चन्द्रार्कसदृशद्युतिः। महता शरवर्षेण पीडयन् राक्षसं बलम् ॥५०॥ चापस्य च निनादेन तस्य बाणरवेण च। संचचाल ततः सैन्यमुद्धूत इव सागरः ॥ ५१ ॥ तद्युद्धमभवद्घोरं नरराक्षससंकुलम्। क्रुधाविष्टौ महात्मानौ नरराक्षससत्तमौ ॥ ५२ ॥ कार्मुकासिधरौ वीरौ शरासनगतौ तथा। मान्धाता रावणं चैव राक्षसश्चैव तं नृपम् ॥ ५३ ॥ क्रोधेन महताविष्टौ शरवर्षं ववर्षतुः। तौ परस्परसंक्षोभात् प्रहारैर्जर्जरीकृतौ ॥ ५४ ॥ रावणो रौद्रमस्त्रं तु प्रायुङ्क्त स महाबलः। आग्नेयेन स मान्धाता तदस्त्रं प्रत्यवारयत् ॥५५॥ गान्धर्वेण दशग्रीवो वारुणेन स राजराट्। गृहीत्वा स तु ब्रह्मास्त्रं सर्वभूतभयावहम्॥५६॥ तोलयामास मान्धाता दिव्यं पाशुपतं महत्। तदस्त्रं घोररूपं तु त्रैलोक्यभयवर्धनम् ॥ ५७॥ दृष्ट्वा त्रस्तानि भूतानि स्थावराणि चराणि च। वरदानात्तु रुद्रस्य तपसाधिगतं महत् ॥ ५८॥ ततः प्रकम्पितं सर्वं त्रैलोक्यं सचराचरम्। देवाः प्रकम्पिताः सर्वे लयं नागाश्च मेनिरे ॥ ५९ ॥ अथ तौ मुनिशार्दूलौ ध्यानयोगादपश्यताम्। पुलस्त्यो गालवश्चैव वारयामासतुर्नृपम् ॥६०॥ उपलब्धैश्च विविधैर्वाक्यै राक्षससत्तमम्। तौ तु कृत्वा परां प्रीतिं नरराक्षसयोस्तदा॥६१॥ संप्रस्थितौ तु तौ हृष्टौ पथा येनैव चागतौ ॥

इति प्रक्षिप्तेषु रावणमान्धातृयुद्धं नाम तृतीयः सर्गः

---

## प्रक्षिप्तेषु चतुर्थः सर्गः

### रावणमन्त्रेश्वरदानम्

गताभ्यामथ विप्राभ्यां रावणो राक्षसाधिपः। दशयोजनसाहस्रं प्रथमं स मरुत्पथम् ॥ १ ॥ अत्यक्रामन्महातेजाः पुष्पकेण महाबलः। यत्र तिष्ठन्ति संन्यस्ता हंसाः सर्वगुणान्विताः ॥२॥ अत ऊर्ध्वं द्वितीयं तु गत्वा चैष मरुत्पथम्। दशयोजनसाहस्रं तद्धि वै परिगण्यते ॥ ३ ॥

तत्र मेघाः स्थिताः सर्वे त्रिविधा नित्यसंश्रिताः। आग्नेयाः पक्षिणो ब्राह्मास्त्रिविधा इति संस्थिताः ॥४॥ अथ गत्वा तृतीयं तु वायोः पन्थानमुत्तमम्। नित्यं यत्र स्थिताः सिद्धाश्चारणाश्च मनस्विनः ॥५॥ दशैव तु सहस्राणि योजनानां तथैव च। चतुर्थं वायुमार्गं तु गतवान् रावणस्तथा ॥ ६ ॥ वसन्ति यत्र नित्यं वै भूताश्च सविनायकाः। अथ गत्वा तु वै शीघ्रं पञ्चमं वायुगोचरम् ॥७॥ दशैव तु सहस्राणि योजनानां तथैव च। गङ्गा वरा संरिच्छ्रेष्ठा नागाश्च कुमुदादयः ॥८॥ कुञ्जरा यत्र तिष्ठन्ति ये च मुञ्चन्ति शीकरान्। गङ्गातोयेषु तिष्ठन्तः पुण्यं कुर्वन्ति सर्वशः ॥ ९ ॥ ततः करिकराद्भ्रष्टं[1] वायुना लोलितं भृशम्। जलं कुञ्जेषु पतितं हिमं भवति राघव ॥१०॥ ततो जगाम षष्ठं स वायुमार्गं महाद्युते। योजनानां सहस्राणि तथैव तु स राक्षसः ॥११॥ यत्रास्ते गरुडो नित्यं ज्ञातिबान्धवसत्कृतः। तथैव तु सहस्राणि योजनानां तथोपरि ॥१२॥ सप्तमं वायुमार्गं तु यत्र वै ऋषयः स्थिताः। अत ऊर्ध्वं स गत्वाथ सहस्राणि दशैव तु ॥१३॥ अष्टमं वायुमार्गं तु यत्र गङ्गा प्रतिष्ठिता। आकाशगङ्गा विख्याता ह्यादित्यपथमास्थिता ॥१४॥ वायुना धार्यमाणा सा महावेगा महास्वना। अथ ऊर्ध्वं प्रवक्ष्यामि चन्द्रमा यत्र तिष्ठति ॥१५॥ अशीतिस्तु सहस्राणि योजनानां तथोपरि। चन्द्रमां तिष्ठते यत्र ग्रहनक्षत्रसंयुतः ॥ १६ ॥ शतं शतसहस्राणि रश्मयश्चन्द्रमण्डलात्। प्रकाशयन्ति लोकांस्तु सर्वसत्त्वसुखावहाः॥१७ ततो दृष्ट्वा दशग्रीवं चन्द्रमा निर्दहन्निव। स तु शीताग्निना शीघ्रं प्रादहद्रावणं तदा॥१८॥ नासहंस्तस्य सचिवाः शीताग्निं भयपीडिताः। रावणं जयशब्देन प्रहस्तो वाक्यमब्रवीत्॥१९॥ राजञ्शीतेन बाध्यामो निवर्ताम इतो वयम्। चन्द्ररश्मिप्रतापेन रक्षसां भयमाविशत्॥२०॥ स्वभासा ह्येष राजेन्द्र शीतांशुर्दहनात्मकः। एतच्छ्रुत्वा प्रहस्तस्य रावणः क्रोधमूर्छितः॥२१॥ विस्फार्य धनुरुद्यम्य नाराचैस्तं ह्यपीडयत्। अथ ब्रह्मा समागम्य चन्द्रलोकं त्वरान्वितः ॥२२॥ दशग्रीव महाबाहो साक्षाद्विश्रवसः सुत। गच्छ शीघ्रमितः सौम्य मा चन्द्रं पीडयाशुगैः॥२३॥ लोकस्य हितकामोऽयं द्विजराजो महाद्युतिः। मन्त्रं च ते प्रदास्यामि प्राणात्ययभयेऽभयम् ॥२४॥ यस्त्विमं संस्मरेन्मन्त्रं न स मृत्युमवाप्नुयात्। एवमुक्तो दशग्रीवः प्राञ्जलिर्वाक्यमब्रवीत् ॥२५॥ यदि तुष्टोऽसि मे देव अनुग्राह्यो यदि ह्यहम्। यदि मन्त्रेश्वरो देयो दीयतां मम धार्मिक ॥२६॥ यं जप्त्वाहं महाभाग सर्वदेवेषु निर्भयः। अमरेषु च सर्वेषु दानवेषु पतत्रिषु ॥२७॥ त्वत्प्रसादात्तु देवेश न भयं विद्यते मम। एवमुक्तो दशग्रीवं ब्रह्मा वचनमब्रवीत् ॥२८॥ प्राणात्यये तु वै दद्मि न नित्यं राक्षसाधिप। अक्षसूत्रं गृहीत्वा तु जपेन्मन्त्रमिमं शुभम् ॥२९॥ अजप्त्वा राक्षसश्रेष्ठ न ते सिद्धिर्भविष्यति। शृणु मन्त्रं प्रवक्ष्यामि येन राक्षसपुङ्गव ॥ ३० ॥ मन्त्रस्य कीर्तनादेव प्राप्स्यसे समरे जयम्। नमस्ते देव देवेश सुरासुरनमस्कृत ॥३१॥ भूतभव्यमहादेव हर पिङ्गललोचन। बालस्त्वं वृद्धरूपी च वैयाघ्रवसनच्छद ॥ ३२ ॥ आरुणेयोऽसि देव त्वं त्रैलोक्यप्रभुरीश्वरः। हरो हरितनेमिस्त्व

---

१. रविकरभ्रष्टम् पुना.।

युगान्तदहनोऽनलः ॥ ३३ ॥ गणेशो लोकशम्भुश्च लोकपालो महाभुजः। महादेवो महाशूली महादंष्ट्रो महाभुजः ॥ ३४ ॥ कालश्च कालरूपी च नीलग्रीवो महोदरः। वेदान्तगो वेदमयः पशूनां पतिरव्ययः ॥ ३५ ॥ शूलधृच्छूलकेतुश्च नेता गोप्ता हरिः शिवः। जटी मुण्डी शिखण्डी च लगुडी च महायशाः ॥३६॥ भूतेश्वरो गणाध्यक्षः सर्वात्मा सर्वभावनः सर्वदः सर्वहारी च स्रष्टा च गुरुरव्ययः ॥३७॥ कमण्डलुधरो देवः पिनाकी धूर्जटिस्तथा। माननीयोऽर्हणीयश्च ओंकारः सामवेदगः ॥३८॥ मृत्युश्च मृत्युदूतश्च पारियात्रश्च सुव्रतः। ब्रह्मचारी गृही योगी वीणापणवतूणवान्॥३९॥ अमरो दर्शनीयश्च बालसूर्यनिभस्तथा। श्मशानचारी भगवानुमापतिररिन्दमः ॥४०॥ भगनेत्रप्रहर्ता च पूषदन्तनिपातनः। ज्वरहर्ता पाशहस्तः प्रलयः काल एव च ॥ ४१ ॥ उल्कामुखोऽग्निकेतुश्च मुनिर्दीप्तो विशांपतिः। उन्मादमोहनकरः समर्थस्त्रिदशोत्तमः ॥४२॥ वामनो वामदेवश्च प्राग्दक्षिण्यश्च नामतः। भिक्षुश्च भिक्षुरूपी च त्रिजटी जटिलः स्वयम् ॥४३॥ चक्रहस्तः प्रतिष्टम्भी चमूनां स्तम्भनस्तथा। ऋतुर्ऋतुकरः कालो मधुर्मधुरलोचनः ॥४४॥ वानस्पत्यः शीकरश्च नित्यमाश्रितपूजितः। जगद्धाता च कर्ता च पुरुषः शाश्वतो ध्रुवः ॥४५॥ धर्माध्यक्षो विरूपाक्षस्त्रिवर्त्मा भूतभावनः। त्रिनेत्रो बहुनेत्रश्च सूर्यायुतसमप्रभः ॥४६॥ देवदेवोऽभिदेवश्च चन्द्राङ्कितजटस्तथा। नर्तको लासकश्चैव पूर्णेन्दुसदृशाननः ॥४७॥ सुब्रह्मण्यः शरण्यश्च सर्वदेवमयस्तथा। सर्वभूतनिवासश्च सर्वबन्धविमोचकः ॥४८॥ मोहनो बन्धकश्चैव सर्पधारी वरोत्तमः। पुष्पदन्तो विभागश्च मुख्यः सर्वहरस्तथा ॥४९॥ हरिश्मश्रुर्धनुर्धारी भीमो भीमपराक्रमः। भक्ताभीष्टप्रदः स्थाणुः परमात्मा सनातनः ॥५०॥ मया प्रोक्तमिदं पुण्यं नाम्नामष्टोत्तरं शतम्। जप्यमेतद्दशग्रीव कुर्याच्छत्रुविनाशनम् ॥५१॥ दत्त्वा तु रावणस्येमं वरं स कमलोद्भवः। पुनरेव जगामाशु ब्रह्मलोकं सनातनम् ॥५२॥ रावणो हि वरं लब्ध्वा पुनरेवागमत्तदा। निवर्तमानः संहृष्टो रावणः स दुरात्मवान् ॥५३॥ जह्रे पथि नरेन्द्रर्षिदेवगन्धर्वकन्यकाः॥

इति प्रक्षिप्तेषु रावणमन्त्रेश्वरदानं नाम चतुर्थः सर्गः

---

## प्रक्षिप्तेषु पञ्चमः सर्गः

### कपिलदर्शनम्

केनचित्त्वथ कालेन रावणः प्रययौ गृहात्। पश्चिमार्णवमागच्छत् सचिवैः सह राक्षसैः ॥१॥ द्वीपस्थो ददृशे तेन पुरुषः पावकप्रभः। महाजाम्बूनदप्रख्य एक एव व्यवस्थितः ॥ २ ॥ यथा दृश्येत भयदो युगान्तानल उत्थितः। देवानामिव देवेशो ग्रहाणामिव भास्करः ॥३॥ शरभाणां यथा सिंहो हस्तिष्वैरावतो यथा। पर्वतानां यथा मेरुः पारिजातश्च शाखिनाम्। ॥ ४ ॥ तथा तं पुरुषं दृष्ट्वा कुण्डमध्येऽनलं यथा। गर्जन्तं विविधैर्नादैर्लम्बहस्तं भयानकम् ॥५॥ दंष्ट्रालं विकटं चैव कम्बुग्रीवं महौजसम्। मण्डूककुक्षिं पिङ्गाक्षं कैलासशिखरोपमम् ॥६॥ पद्मपादतलं भीमं रक्ताम्बुजनिभाननम्। महाकायं महानादं मनोऽनिलसमं जवे ॥७॥ भीममाबद्धतूणीरं संघट्टं बद्धचामरम्। ज्वालामालापरिक्षिप्तं किङ्किणीकृतनिस्वनम् ॥८॥ मालया स्वर्णपद्मानां वक्षोदेशावलम्बया। ऋग्वेदमिव

शोभन्तं पद्ममालाविभूषितम् ॥९॥ सोऽचलसंकाशः काञ्चनाचलसंनिभम् । अब्रवीत्तं दशग्रीवो युद्धं मे दीयतामिति ॥१०॥ जगर्ज चोच्चैर्बलवान् सहामात्यो दशाननः । धृत्वा स राक्षसपतिः शूलशक्त्यृष्टिपट्टसान् ॥११॥ स द्वीपिना सिंह इव शलभेनेव कुञ्जरः । सुमेरुरिव च्छागेन नदीवेगैरिवार्णवः ॥१२॥ अकम्प्यमानः पुरुषो रावणं वाक्यमब्रवीत् । युद्धश्रद्धां हि ते रक्षो नाशयिष्यामि दुर्मते ॥१३॥ रावणस्य च यो वेगः सर्वलोकभयावहः । तथा वेगसहस्राणि संश्रितानि तमेव हि ॥१४॥ अभवत्तस्य सा दृष्टिर्ग्रहमालेव चाद्भुता । दन्तानां दशतः शब्दो यन्त्रस्येवातिभीकरः ॥ १५ ॥ धर्मस्तस्य तपश्चैव जगतः सिद्धिहेतुके । ऊरू संश्रित्य तस्थाते मन्मथः शिश्नमाश्रितः ॥१६॥ विश्वेदेवाः कटीभागे मरुतो यस्य शीर्षगाः । मध्येऽष्टौ वसवस्तस्य समुद्राः कुक्षिसंस्थिताः ॥१७॥ पार्श्वस्थाश्च दिशः सर्वाः सर्वसन्धिषु मारुताः । पितरश्चाश्रिताः पृष्ठं हृदयं च पितामहः ॥१८॥ गोदानानि पवित्राणि भूमिदानानि यानि च । सुवर्णस्य च दानानि शश्वल्लोमाश्रितानि वै ॥१९॥ हिमवान् हेमकूटश्च मन्दरो मेरुरेव च । नरं तु तं समाश्रित्य ह्यस्थिभूता व्यवस्थिताः ॥२०॥ मही वक्षोऽभवत्तस्य शरीरे द्यौरवस्थिता । उभे सन्ध्ये कायसन्धौ जलवाहाश्च मेहने ॥२१॥ बाहू धाता विधाता च भगः पूषा उभौ करौ । ऐरावतो विशालाक्षः शेषो वासुकिरेव च ॥२२॥ कम्बलाश्वतरौ नागौ कार्कोटकधनंजयौ । स च घोरविषो नागस्तक्षकश्चोपतक्षकः ॥२३॥ करजानाश्रितास्तस्य विषवीर्यं मुमुक्षवः । अग्निरास्यमभूत्तस्य स्कन्धौ रुद्रैरधिष्ठितौ ॥२४॥ दन्तान् मासा दंष्ट्रयोश्च उभयोर्ऋतवः स्थिताः । नासे कुहूरमावास्या तच्छिद्रेषु च वायवः ॥२५॥ ग्रीवा तस्याभवद्देवी वाणी चापि सरस्वती । नासत्यौ श्रवणे चोभौ नेत्रे च शशिभास्करौ ॥२६॥ वेदाङ्गानि च यज्ञाश्च नानारूपाणि यानि च । सुवृत्तानि च वाक्यानि तेजस्सिद्धिस्तपांसि च ॥ २७ ॥ एतानि नररूपस्य तस्य देहं श्रितानि वै । तेन मुष्टिप्रहारेण स्वल्पमात्रेण लीलया ॥ २८ ॥ पाणिना ताडितं रक्षो निपपात महीतले । पतितं राक्षसं ज्ञात्वा विद्राव्य च निशाचरान् ॥२९॥ ऋग्वेदप्रतिमः सोऽथ पद्ममालाविभूषितः । प्रविवेश च पातालं गच्छत्पर्वतसंनिभः ॥ ३० ॥ उत्थाय च दशग्रीव आहूय सचिवान् स्वयम् । क गतः सहसा ब्रूत प्रहस्तशुकसारणाः ॥ ३१ ॥ एवमुक्ता रावणेन राक्षसास्तमथाब्रुवन् । प्रविष्टः स नरोऽत्रैव देवदानवदर्पहा ॥३२॥ अथासिं गृह्य वेगेन गरुत्मानिव पन्नगम् । शीघ्रं स तु बिलद्वारं प्रविवेश च दुर्मतिः ॥ ३३ ॥ प्रविश्य च स तद्द्वारं रावणो वरनिर्भयः । अपश्यच्च नरांस्तत्र नीलाञ्जनचयोपमान् ॥३४॥ केयूरधारिणः शूरान् रक्तमाल्यानुलेपनान् । अङ्गुलीयकहाराद्यैर्भूषणैश्च विभूषितान् ॥३५॥ दृश्यन्ते तत्र नृत्यन्त्यस्तिस्रः कोट्यो महात्मनाम् । नित्योत्सवाः शान्तभया विमलाः पावकप्रभाः ॥३६॥ क्रीडतः प्रेक्षते तान् वै राक्षसो भीमविक्रमः । द्वारस्थो रावणस्तेषां तासु कोटीषु निर्भयः ॥३७॥ यथा दृष्टः स तु नरस्तुल्यांस्तांस्तस्य सर्वशः । एकवर्णांस्त्वेकबलानेक-

रूपान् महौजसः ॥३८॥ चतुर्भुजान् महोत्साहांस्तत्रापश्यत् स रावणः। तान् दृष्ट्वाथ दशग्रीव ऊर्ध्वरोमा बभूव ह ॥३९॥ स्वयंभुवा दत्तवरस्ततः शीघ्रं विनिर्ययौ। अथापश्यत् परं तत्र भुजङ्गशयने स्थितम् ॥४०॥ पाण्डरेण महार्हेण कौस्तुभेन विराजितम्। शेते स पुरुषस्तत्र पावकेनावकुण्ठितः ॥४१॥ दिव्यस्रगनुलेपी च दिव्याभरणभूषितः। दिव्याम्बरधरा साध्वी त्रैलोक्यस्य विभूषणम् ॥४२॥ वालव्यजनहस्ता च देवी तत्र व्यवस्थिता। लक्ष्मीर्बहिः सपद्मा वै भ्राजन्ती लोकसुन्दरी ॥४३॥ प्रहृष्टः स तु लङ्केशो दृष्ट्वा तां चारुहासिनीम्। जिघृक्षुः स तदा साध्वीं सिंहासनमुपाश्रिताम् ॥४४॥ विना तु सचिवैस्तत्र रावणो दुर्मतिस्तदा। हस्तैर्ग्रहीतुं तामैच्छन्मन्मथेन वशीकृतः ॥४५॥ सुप्तमाशीविषं यद्वद्रावणः कालचोदितः। अथ सुप्तो महाबाहुः पावकेनावकुण्ठितः ॥४६॥ ग्रहीतुकामं तं ज्ञात्वा व्यपविध्य पटं तदा। जहासोच्चैर्भृशं देवस्तं दृष्ट्वा राक्षसाधिपम् ॥ ४७ ॥ तेजसा तस्य संदीप्तो रावणो लोकरावणः। प्राणवातेन दीर्घेण तस्मिन् राम रसातले ॥४८॥ कृत्तमूलो यथा शाखी निपपात महीतले। पतितं राक्षसं ज्ञात्वा वचनं चेदमब्रवीत् ॥४९॥ उत्तिष्ठ राक्षसश्रेष्ठ मृत्युस्ते नाद्य विद्यते। प्रजापतिवरो रक्ष्यो येन जीवसि रावण ॥५०॥ गच्छ रावण विस्रब्धं नात्र वै मरणं तव। लब्धसंज्ञो मुहूर्तेन राक्षसो भीमविक्रमः॥५१॥ तं तु दृष्ट्वा महात्मानं रावणो भयमाप सः। एवमुक्तस्तदोत्थाय रावणो देवकण्टकः ॥५२॥ रोमहर्षणमापन्नो ह्यब्रवीत्तं महामुनिम्। को भवाञ्शौर्यसंपन्नो युगान्तानलसन्निभः ॥५३॥ ब्रूहि त्वं देवदेवो वा सर्वदेहेषु सुस्थितः। एवमुक्तः स तेनाथ रावणेन दुरात्मना ॥५४॥ प्रत्युवाच हसन् देवो मेघगम्भीरया गिरा। किं त्वं मया दशग्रीव वध्योऽसि न चिरादिह ॥५५॥ एवमुक्तो दशग्रीवः प्राञ्जलिर्वाक्यमब्रवीत्। प्रजापतेस्तु वचनान्नाहं मृत्युवशं गतः ॥५६॥ स न जातो जनिष्यो वा मर्त्येषु वा सुरेष्वपि। प्रजापतिवरं यो हि लङ्घयेद्वीर्यमाश्रितः ॥५७॥ न तत्र परिहारोऽस्ति प्रयत्नश्चापि दुर्लभः। त्रैलोक्ये तं न पश्यामि यस्तं कुर्याद्वरं वृथा ॥५८॥ अमरो वा सुरश्रेष्ठ तेन मां नाविशङ्कयम्। अथापि च भवेन्मृत्युस्त्वत्तो मे नान्यतः प्रभो ॥५९॥ यशस्यं श्लाघनीयं च त्वत्तो मे मरणं त्विदम्। अथापश्यत्तस्य गात्रे रावणो भीमविक्रमः॥६०॥ देवदेवस्य सकलं त्रैलोक्यं सचराचरम्। आदित्या वसवो रुद्रा मरुतोऽथाश्विनावपि ॥ ६१ ॥ सिद्धाश्च पितरश्चैव यमो वैश्रवणस्तथा। समुद्रा गिरयो नद्यो विद्या वेदास्त्रयोऽग्नयः ॥ ६२ ॥ ग्रहास्तारागणा व्योम साध्या गन्धर्वचारणाः। महर्षयो वेदविदो गरुडोऽथ भुजंगमाः॥६३॥ ये चान्ये संस्थिता देवा दैत्यदानवराक्षसाः। गात्रेषु शयनस्थस्य दृश्यन्ते सूक्ष्ममूर्तयः ॥६४॥ आह रामोऽथ धर्मात्मा ह्यगस्त्यं मुनिसत्तमम्। द्वीपस्थः पुरुषः कोऽसौ तिस्रः कोट्यश्च ताश्च काः ॥६५॥ शयानः पुरुषः कश्चिद्दैत्यदानवदर्पहा। रामस्य वचनं श्रुत्वा ह्यगस्त्यो वाक्यमब्रवीत् ॥६६॥ श्रूयतामभिधास्यामि देवदेवः सनातनः। भगवान् कपिलो राम द्वीपस्थो नर उच्यते ॥६७॥ स वै नारायणो देवः शङ्खचक्रगदाधरः।

## चतुर्विंशः सर्गः

### खरशूर्पणखादण्डकानिवासादेशः

निवर्तमानः संहृष्टो रावणः सुदुरात्मवान्। जह्रे पथि नरेन्द्रर्षिदेवगन्धर्वकन्यकाः॥ १
दर्शनीयां हि यां रक्षः कन्यां स्त्रीं वाथ पश्यति। हत्वा बन्धुजनं तस्या विमाने तां रुरोध ह[१]॥
एवं पन्नगकन्याश्च राक्षसासुरमानुषीः। यक्षदानवकन्याश्च विमाने सोऽध्यरोपयत्॥ ३
ताश्च सर्वाः समं दुःखान्मुमुचुर्बाष्पजं जलम्। तुल्यमग्न्यर्चिषां तत्र शोकाग्निभयसंभवम्॥ ४
ताभिः सर्वानवद्याभिर्नदीभिरिव सागरः। आपूरितं विमानं तद्भयशोकाशिवाश्रुभिः॥ ५
नागगन्धर्वकन्याश्च महर्षितनयाश्च याः। दैत्यदानवकन्याश्च विमाने शतशोऽरुदन्॥ ६
दीर्घकेश्यः सुचार्वङ्ग्यः पूर्णचन्द्रनिभाननाः। पीनस्तन्यस्तथा वज्रवेदिमध्यसमप्रभाः॥ ७
रथकूबरसंकाशैः श्रोणिदेशैर्मनोहराः। स्त्रियः सुराङ्गनाप्रख्या निष्टप्तकनकप्रभाः॥ ८
शोकदुःखभयत्रस्ता विह्वलाश्च सुमध्यमाः॥ तासां निःश्वासवातेन सर्वतः संप्रदीपितम्॥ ९
अग्निहोत्रमिवाभाति[1] संनिरुद्धाग्नि पुष्पकम्। दशग्रीववशं प्राप्तास्तास्तु शोकाकुलाः स्त्रियः॥
दीनवक्त्रेक्षणाः श्यामा मृग्यः सिंहवशा इव। काचिच्चिन्तयती तत्र किं नु मां भक्षयिष्यति॥
काचिद्दध्यौ सुदुःखार्ता अपि मां मारयेदयम्। इति मातृपितॄन् स्मृत्वा भर्तॄन् भ्रातॄंस्तथैव च॥
दुःखशोकसमाविष्टा विलेपुः सहिताः स्त्रियः। कथं नु खलु मे पुत्रो भविष्यति मया विना॥
माता कथं कथं भ्राता निमग्नाः शोकसागरे। हा कथं नु करिष्यामि भर्तुस्तस्मादहं विना॥
मृत्यो प्रसादयामि त्वां नय मां दुःखभागिनीम्। किंनु तद्दुष्कृतं कर्म पुरा देहान्तरे कृतम्॥

---

विधाता चैव भूतानां संहर्ता च तथैव सः॥६८॥ अनादिरच्युतो विष्णुः प्रभवः शाश्वतोऽव्ययः। ये तु नृत्यन्ति वै तत्र सुरास्ते तस्य धीमतः॥६९॥ तुल्यतेजःप्रतापास्ते कपिलस्य नरस्य वै। नातिक्रुद्धेन दृष्टस्तु राक्षसः पापनिश्चयः॥७०॥ न बभूव ततो राम भस्मसाद्रावणः प्रभो। भिन्नगात्रो नगप्रख्यो रावणः पतितो भुवि॥७१॥ वाक्छरैस्तं बिभेदाशु रहस्यं पिशुनो यथा। अथ दीर्घेण कालेन लब्धसंज्ञः स राक्षसः॥७२॥ आजगाम हतौजास्तु यत्र ते सचिवाः स्थिताः। तैरेव सहितो लङ्कां जगामाशु दशाननः॥७३॥ श्रुत्वैतद्वचनं सर्वमाश्चर्यमिति राघवः। पूज्यमानाः स्थितास्तत्र ये रामस्य समीपतः॥७४॥ आश्चर्यमिति तत् प्राहुर्वानरा राक्षसैः सह। विभीषणस्तु रामस्य पार्श्वस्थो वाक्यमब्रवीत्॥७५॥ आश्चर्यं स्मारितोऽस्म्यद्य यत्तद्वृत्तं पुरातनम्। अथागस्त्योऽब्रवीत् सर्वमेतद्राम श्रुतं त्वया॥७६॥ दृष्टाः सभाजिताश्चापि राम यास्यामहे वयम्। तस्य तद्वचनं श्रुत्वा रामो रमयतां वरः॥७७॥

इति प्रक्षिप्तेषु कपिलदर्शनं नाम पञ्चमः सर्गः

---

1. अग्निहोत्रं, अग्निहोत्रकुण्डम्

१. रुरोध सः, ति.।

एवं स दुःखिताः सर्वाः पतिताः शोकसागरे। न खल्विदानीं पश्यामो दुःखस्यास्यान्तमात्मनः॥
अहो धिङ्मानुषं लोकं नास्ति खल्वधमः परः। यद्दुर्बला बलवता भर्तारो रावणेन नः॥१७
सूर्येणोदयता काले नक्षत्राणीव नाशिताः। अहो सुबलवद्रक्षो वधोपायेषु रज्यते[1]॥ १८
अहो दुर्वृत्तमास्थाय नात्मानं वै जुगुप्सते। सर्वथा सदृशस्तावद्विक्रमोऽस्य दुरात्मनः॥ १९
इदं त्वसदृशं कर्म परदाराभिमर्शनम्। यस्मादेष परक्यासु रमते राक्षसाधमः॥ २०
तस्माद्वै स्त्रीकृतेनैव प्राप्स्यते दुर्मतिर्वधम्। सतीभिर्वरनारीभिरेवं वाक्येऽभ्युदीरिते॥ २१
नेदुर्दुन्दुभयः खस्थाः पुष्पवृष्टिः पपात च। शप्तः स्त्रीभिः स तु समं हतौजा इव निष्प्रभः॥
पतिव्रताभिः साध्वीभिर्बभूव विमना इव। एवं विलपितं तासां शृण्वन् राक्षसपुङ्गवः॥ २३
प्रविवेश पुरीं लङ्कां पूज्यमानो निशाचरैः। एतस्मिन्नन्तरे घोरा राक्षसी कामरूपिणी॥ २४
सहसा पतिता भूमौ भगिनी रावणस्वसा। तां स्वसारं समुत्थाप्य रावणः परिसान्त्वयन्॥
अब्रवीत् किमिदं भद्रे वक्तुकामासि मे द्रुतम्। सा बाष्पपरिरुद्धाक्षी रक्ताक्षी वाक्यमब्रवीत्॥
कृतास्मि विधवा राजंस्त्वया बलवता बलात्। एते राजंस्त्वया वीरा दैत्या विनिहता रणे॥
कालकेया इति ख्याताः सहस्राणि चतुर्दश। प्राणेभ्योऽपि गरीयान् मे तत्र भर्ता महाबलः॥
सोऽपि त्वया हतस्तात रिपुणा भ्रातृगृध्नुना। त्वयास्मि निहता राजन् स्वयमेव हि बन्धुना॥
राजन् वैधव्यशब्दं च भोक्ष्यामि त्वत्कृते ह्यहम्। ननु नाम त्वया रक्ष्यो जामाता समरेष्वपि।
स त्वया निहतो युद्धे स्वयमेव न लज्जसे। एवमुक्तो दशग्रीवो भगिन्या क्रोशमानया॥ ३१
अब्रवीत् सान्त्वयित्वा तां सामपूर्वमिदं वचः। अलं वत्से रुदित्वा ते न भेतव्यं च सर्वशः॥
दानमानप्रसादैस्त्वां तोषयिष्यामि यत्नतः। युद्धप्रमत्तो व्याक्षिप्तो जयकाङ्क्षी क्षिपञ्शरान्॥
नावगच्छामि युद्धेषु स्वान् परान् वाप्यहं शुभे। जामातरं न जाने स्म प्रहरन् युद्धदुर्मदः॥
तेनासौ निहतः संख्ये मया भर्ता तव स्वसः। अस्मिन् काले तु यत्प्राप्तं तत्करिष्यामि ते हितम्
भ्रातुरैश्वर्ययुक्तस्य खरस्य वस पार्श्वतः। चतुर्दशानां भ्राता ते सहस्राणां भविष्यति॥ ३६
प्रभुः प्रयाणे दाने च राक्षसानां महाबलः। तत्र मातृष्वसेयस्ते भ्रातायं वै खरः प्रभुः॥ ३७
भविष्यति तवादेशं सदा कुर्वन्निशाचरः। शीघ्रं गच्छत्वयं वीरो दण्डकान् परिरक्षितुम्॥३८॥
दूषणोऽस्य बलाध्यक्षो भविष्यति महाबलः[2]। तत्र ते वचनं शूरः करिष्यति सदा खरः॥३९॥
रक्षसां कामरूपाणां प्रभुरेष भविष्यति। एवमुक्त्वा दशग्रीवः सैन्यमस्यादिदेश ह॥ ४०
चतुर्दश सहस्राणि रक्षसां वीर्यशालिनाम्। स तैः परिवृतः सर्वै राक्षसैर्घोरदर्शनैः॥ ४१
अगच्छत खरः शीघ्रं दण्डकानकुतोभयः। स तत्र कारयामास राज्यं निहतकण्टकम्॥ ४२
सा च शूर्पणखा तत्र न्यवसद्दण्डकावने॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
उत्तरकाण्डे खरशूर्पणखादण्डकानिवासादेशो नाम चतुर्विंशः सर्गः

---

१. युज्यते प्र.
२. एतदनन्तरं, सहि शप्तो वनोद्देशः क्रुद्धेनोशनसा पुरा। राक्षसानां अधीवासो भविष्यति महात्मना॥ इति श्लोकः ब. प्रक्षिप्तः।

## पञ्चविंशः सर्गः

### मधुवंधवारणम्

स तु दत्त्वा दशग्रीवो वनं घोरं खरस्य तत्। भगिनीं च समाश्वास्य हृष्टः स्वस्थतरोऽभवत्॥१
ततो निकुम्भिला नाम लङ्कोपवनमुत्तमम्। तद्राक्षसेन्द्रो बलवान् प्रविवेश सहानुगः॥ २
ततो यूपशताकीर्णं सौम्यचैत्योपशोभितम्। ददर्श विष्ठितं यज्ञं श्रिया संप्रज्वलन्निव॥ ३
ततः कृष्णाजिनधरं कमण्डलुशिखाध्वजम्। ददर्श स्वसुतं तत्र मेघनादं भयावहम्॥ ४
तं समासाद्य लङ्केशः परिष्वज्याथ बाहुभिः। अब्रवीत किमिदं वत्स वर्तसे ब्रूहि तत्त्वतः॥ ५
उशना त्वब्रवीत्तत्र यज्ञसंपत्समृद्धये। रावणं राक्षसश्रेष्ठं द्विजश्रेष्ठो महातपाः॥ ६
अहमाख्यामि ते राजञ्श्रूयतां सर्वमेव तत्। यज्ञास्ते सप्त पुत्रेण प्राप्ताः सुबहुविस्तराः॥ ७
अग्निष्टोमोऽश्वमेधश्च यज्ञो बहुसुवर्णकः। राजसूयस्तथा यज्ञो गोमेधो वैष्णवस्तथा॥ ८
माहेश्वरे प्रवृत्ते तु यज्ञे पुंभिः सुदुर्लभे। वरांस्ते लब्धवान् पुत्रः साक्षात् पशुपतेरिह॥ ९
कामगं स्यन्दनं दिव्यमन्तरिक्षचरं ध्रुवम्। मायां च तामसीं नाम यया संपद्यते तमः॥ १०
एतया किल संग्रामे मायया राक्षसेश्वर। प्रयुक्तया गतिः शक्या न हि ज्ञातुं सुरासुरैः॥ ११
अक्षयाविषुधी बाणैश्चापं चापि सुदुर्जयम्। अस्त्रं च बलवद्राजञ्शत्रुविध्वंसनं रणे॥ १२
एतान् सर्वान् वराँल्लब्ध्वा पुत्रस्तेऽयं दशानन। अद्य यज्ञसमाप्तौ च त्वां दिदृक्षुः स्थितो ह्यहम्॥
ततोऽब्रवीद्दशग्रीवो न शोभनमिदं कृतम्। पूजिताः शत्रवो यस्माद्द्रव्यैरिन्द्रपुरोगमाः॥ १४
एहीदानीं कृतं विद्धि सुकृतं तन्न संशयः। आगच्छ सौम्य गच्छाम स्वमेव भवनं प्रति॥ १५
ततो गत्वा दशग्रीवः सपुत्रः सविभीषणः। स्त्रियोऽवतारयामास सर्वास्ता बाष्पगद्गदाः॥ १६
लक्षिण्यो रत्नभूताश्च देवदानवरक्षसाम्[1]। तस्य तासु मतिं ज्ञात्वा धर्मात्मा वाक्यमब्रवीत्॥१७
ईदृशैस्त्वं समाचारैर्यशोऽर्थकुलनाशनैः। धर्षणं ज्ञातिनां ज्ञात्वा स्वमतेन विचेष्टसे॥ १८
ज्ञातींस्तान् धर्षयित्वेमास्त्वयानीता वराङ्गनाः। त्वामतिक्रम्य मधुना राजन् कुम्भीनसी हृता॥
रावणस्त्वब्रवीद्वाक्यं नावगच्छामि किं न्विदम्। कोऽयं यस्तु त्वयाख्यातो मधुरित्येव नामतः॥
विभीषणस्तु संक्रुद्धो भ्रातरं वाक्यमब्रवीत्। श्रूयतामस्य पापस्य कर्मणः फलमागतम्॥ २१
मातामहस्य योऽस्माकं ज्येष्ठो भ्राता सुमालिनः। माल्यवानिति विख्यातो वृद्धः प्राज्ञो निशाचरः॥
पिता ज्येष्ठो जनन्या नो ह्यस्माकं चार्यकोऽभवत्। तस्य कुम्भीनसी नाम दुहितुर्दुहिताभवत्॥
मातृष्वसुरथास्माकं सा च कन्यानलोद्भवा। भवत्यस्माकमेवैषा भ्रातॄणां धर्मतः स्वसा॥ २४
सा हृता मधुना राजन् राक्षसेन बलीयसा। यज्ञप्रवृत्ते पुत्रे तु मयि चान्तर्जलोषिते[1]॥ २५
कुम्भकर्णे महाराज निद्रामनुभवत्यथ। निहत्य राक्षसश्रेष्ठानमात्यानिह संमतान्॥ २६
धर्षयित्वा हृता सा तु गुप्ताप्यन्तःपुरे तव। श्रुत्वापि तन्महाराज क्षान्तमेव हतो न सः॥२७

---

१. एतदनन्तरं, नार्यो भूषणसम्पन्नाः ज्वलन्त्यः स्वेन तेजसा। विभीषणस्तु ता नारीः दृष्ट्वा शोकपरायणाः॥ इति श्लोकः च. प्रक्षिप्तः।

1. अन्तर्जलोषिते, तपोऽर्थमिति शेषः, इति तिलकः।

यस्मादवश्यं दातव्या कन्या भर्त्रे हि भ्रातृभिः । तदेतत् कर्मणो ह्यस्य फलं पापस्य दुर्मते[1] ॥
अस्मिन्नेवाभिसंप्राप्तं लोके विदितमस्तु ते । विभीषणवचः श्रुत्वा राक्षसेन्द्रः स रावणः ॥ २९
दौरात्म्येनात्मनोद्धूतस्तप्ताम्भा इव सागरः । ततोऽब्रवीद्दशग्रीवः क्रुद्धः संरक्तलोचनः ॥ ३०
कल्प्यतां मे रथः शीघ्रं शूराः सज्जीभवन्तु नः । भ्राता मे कुम्भकर्णश्च ये च मुख्या निशाचराः ॥
वाहनान्यधिरोहन्तु नानाप्रहरणायुधाः । अद्य तं समरे हत्वा मधुं रावणनिर्भयम् ॥ ३२
सुरलोकं गमिष्यामि युद्धाकाङ्क्षी सुहृद्वृतः[2] । अक्षौहिणीसहस्राणि चत्वार्यग्र्याणि रक्षसाम् ॥
नानाप्रहरणान्याशु निर्ययुर्युद्धकाङ्क्षिणाम् । इन्द्रजित्त्वग्रजित सैन्यात् सैनिकान् परिगृह्य च ॥
जगाम रावणो मध्ये कुम्भकर्णश्च पृष्ठतः । विभीषणश्च धर्मात्मा लङ्कायां धर्ममाचरत् ॥ ३५
शेषाः सर्वे महाभागा ययुर्मधुपुरं प्रति । खरैरुष्ट्रैर्हयैर्दीप्तैः शिंशुमारैर्महोरगैः ॥ ३६
राक्षसाः प्रययुः सर्वे कृत्वाकाशं निरन्तरम् । दैत्याश्च शतशस्तत्र कृतवैराश्च दैवतैः ॥ ३७
रावणं प्रेक्ष्य गच्छन्तमन्वगच्छन् हि पृष्ठतः । स तु गत्वा मधुपुरं प्रविश्य च दशाननः ॥३८
न ददर्श मधुं तत्र भगिनीं तत्र दृष्टवान् । सा च प्रह्वाञ्जलिर्भूत्वा शिरसा चरणौ गता ॥ ३९
तस्य राक्षसराजस्य त्रस्ता कुम्भीनसी तदा । तां समुत्थापयामास न भेतव्यमिति ब्रुवन् ॥ ४०
रावणो राक्षसश्रेष्ठः किं चापि करवाणि ते । साब्रवीद्यदि मे राजन् प्रसन्नस्त्वं महाभुज ॥ ४१
भर्तारं न ममेहाद्य हन्तुमर्हसि मानद । न हीदृशं भयं किंचित् कुलस्त्रीणामिहोच्यते ॥ ४२
भयानामपि सर्वेषां वैधव्यं व्यसनं महत् । सत्यवाग्भव राजेन्द्र मामवेक्षस्व याचतीम् ॥ ४३
त्वयाप्युक्तं महाराज न भेतव्यमिति स्वयम् । रावणस्त्वब्रवीद्धृष्टः स्वसारं तत्र संस्थिताम् ॥ ४४
क्व चासौ तव भर्ता वै मम शीघ्रं निवेद्यताम् । सह तेन गमिष्यामि सुरलोकं जयाय हि[3] ॥४५
तव कारुण्यसौहार्दान्निवृत्तोऽस्मि मधोर्वधात । इत्युक्ता सा समुत्थाप्य प्रसुप्तं तं निशाचरम् ॥
अब्रवीत् संप्रहृष्टेव राक्षसी सा पतिं वचः । एष प्राप्तो दशग्रीवो मम भ्राता महाबलः ॥ ४७
सुरलोकजयाकाङ्क्षी साहाय्ये त्वां वृणोति च । तदस्य त्वं सहायार्थं सबन्धुर्गच्छ राक्षस ॥
स्निग्धस्य भजमानस्य युक्तमर्थाय कल्पितुम् । तस्यास्तद्वचनं श्रुत्वा तथेत्याह मधुर्वचः ॥ ४९
ददर्श राक्षसश्रेष्ठं यथान्यायमुपेत्य सः । पूजयामास धर्मेण रावणं राक्षसाधिपम् ॥ ५०
प्राप्य पूजां दशग्रीवो मधुवेश्मनि वीर्यवान् । तत्र चैकां निशामुष्य गमनायोपचक्रमे ॥ ५१
ततः कैलासमासाद्य शैलं वैश्रवणालयम् । राक्षसेन्द्रो महेन्द्राभः सेनामुपनिवेशयत् ॥ ५२

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
उत्तरकाण्डे मधुवधवारणं नाम पञ्चविंशः सर्गः

---

१. दुर्मतेः ति.

२. अत्र 'ततो विजित्य त्रिदिवं वशे स्थाप्य पुरन्दरम् । निर्भयो विचरिष्यामि त्रैलोक्यैश्वर्यशोभितः ॥' इति ५यं च. प्रक्षिप्तं दृश्यते ।

३. जयावहे च. ।

## षड्विंशः सर्गः

### नलकूबरशापः

स तु तत्र दशग्रीवः सह सैन्येन वीर्यवान् । अस्तं प्राप्ते दिनकरे निवासं समरोचयत् ॥ १
उदिते विमले चन्द्रे तुल्यपर्वतवर्चसि । प्रसुप्तं सुमहत् सैन्यं नानाप्रहरणायुधम् ॥ २
रावणस्तु महावीर्यो निषण्णः शैलमूर्धनि । स ददर्श गुणांस्तत्र चन्द्रपादसुशोभितान् ॥ ३
कर्णिकारवनैर्दीप्तैः कदम्बगहनैस्तथा । पद्मिनीभिश्च फुल्लाभिर्मन्दाकिन्या जलैरपि ॥ ४
चम्पकाशोकपुन्नागमन्दारतरुभिस्तथा । चूतपाटललोध्रैश्च प्रियङ्ग्वर्जुनकेतकैः ॥ ५
तगरैर्नारिकेलैश्च प्रियालपनसैस्तथा । आरग्वधैस्तमालैश्च प्रियालबकुलैरपि[1] ॥ ६
एतैरन्यैश्च तरुभिरुद्भासितवनान्तरे । किंनरा मदनेनार्ता रक्ता मधुरकण्ठिनः ॥ ७
समं संप्रजगुर्यत्र मनस्तुष्टिविवर्धनम् । विद्याधरा मदक्षीबा मदरक्तान्तलोचनाः ॥ ८
योषिद्भिः सह संक्रान्ताश्चिक्रीडुर्जहृषुश्च वै । घण्टानामिव संनादः शुश्रुवे मधुरस्वरः ॥ ९
अप्सरोगणसङ्घानां गायतां धनदालये । पुष्पवर्षाणि मुञ्चन्तो नगाः पवनताडिताः ॥ १०
शैलं तं वासयन्तीव मधुमाधवगन्धिनः । मधुपुष्परजःपृक्तं गन्धमादाय पुष्कलम् ॥ ११
प्रववौ वर्धयन् कामं रावणस्य सुखोऽनिलः । गेयात् पुष्पसमृद्ध्या च शैत्याद्वायोर्गिरेर्गुणात् ॥
प्रवृत्तायां रजन्यां च चन्द्रस्योदयनेन च । रावणः सुमहावीर्यः कामस्य वशमागतः ॥ १३
विनिश्वस्य विनिश्वस्य शशिनं समवैक्षत । एतस्मिन्नन्तरे तत्र दिव्याभरणभूषिता ॥ १४
सर्वाप्सरोवरा रम्भा दिव्यपुष्पविभूषिता[2] । दिव्यचन्दनलिप्ताङ्गी मन्दारकृतमूर्धजा ॥ १५
दिव्योत्सवकृतारम्भा पूर्णचन्द्रनिभानना । चक्षुर्मनोहरं पीनं मेखलादामभूषितम् ॥ १६
समुद्वहन्ती जघनं रतिप्राभृतमुत्तमम् । कृतैर्विशेषकैरार्द्रैः षडर्तुकुसुमोद्भवैः ॥ १७
बभावन्यतमेव श्रीः कान्तिश्रीद्युतिकीर्तिभिः । नीलं सतोयमेघाभं वस्त्रं समवगुण्ठिता ॥ १८
यस्या वक्त्रं शशिनिभं भ्रुवौ चापनिभे शुभे । ऊरू करिकराकारौ करौ पल्लवकोमलौ ॥ १९
सैन्यमध्येन गच्छन्ती रावणेनोपवीक्षिता । तां समुत्थाय गच्छन्तीं कामबाणवशं गतः ॥ २०
करे गृहीत्वा लज्जन्तीं स्मयमानोऽभ्यभाषत । क्व गच्छसि वरारोहे कां सिद्धिं भजसे स्वयम् ॥
कस्याभ्युदयकालोऽयं यस्त्वां समुपभोक्ष्यते । त्वदाननरसस्याद्य पद्मोत्पलसुगन्धिनः ॥ २२
सुधामृतरसस्येव कोऽद्य तृप्तिं गमिष्यति । स्वर्णकुम्भनिभौ पीनौ शुभौ भीरु निरन्तरौ ॥ २३
कस्योरःस्थलसंस्पर्शं दास्यतस्ते कुचाविमौ । सुवर्णचक्रप्रतिमं स्वर्णदामचितं पृथु ॥ २४
अध्यारोहति कस्तेऽद्य जघनं स्वर्गरूपिणम् । मद्विशिष्टः पुमान् कोऽद्य शक्रो विष्णुरथाश्विनौ ॥
मामतीत्य हि यं च त्वं यासि भीरु न शोभनम् । विश्रम त्वं पृथुश्रोणि शिलातलमिदं शुभम् ॥
त्रैलोक्ये यः प्रभुश्चैव मदन्यो नैव विद्यते । तदेवं प्राञ्जलिः प्रह्वो याचते त्वां दशाननः ॥ २७

---

1. इदं अर्धं ति. नदृश्यते । च. प्रक्षिप्तम् । 2. इत आरभ्य सार्धश्लोके पादपरिवृत्तिः ति. दृश्यते ।

भर्तुर्भर्ता विधाता च त्रैलोक्यस्य भजस्व माम् । एवमुक्ताब्रवीद्रम्भा वेपमाना कृताञ्जलिः ॥२८
प्रसीद नार्हसे वक्तुमीदृशं त्वं हि मे गुरुः । अन्येभ्यो हि त्वया रक्ष्या प्राप्नुयां धर्षणं यदि ॥२९
तद्धर्मतः स्नुषा तेऽहं तत्त्वमेव ब्रवीमि ते । अथाब्रवीद्दशग्रीवश्चरणाधोमुखीं[1] स्थिताम् ॥ ३०
रोमहर्षमनुप्राप्तां दृष्टमात्रेण तां तदा । सुतस्य यदि मे भार्या ततस्त्वं हिं स्नुषा भवेः ॥ ३१
बाढमित्येव सा रम्भा प्राह रावणमुत्तरम् । धर्मतस्ते सुतस्याहं भार्या राक्षसपुङ्गव ॥ ३२
पुत्रः प्रियतरः प्राणैर्भ्रातुर्वैश्रवणस्य ते । विख्यातस्त्रिषु लोकेषु नलकूबर इत्ययम् ॥ ३३
धर्मतो यो भवेद्विप्रः क्षत्रियो वीर्यतो भवेत् । क्रोधाद्यश्च भवेदग्निः क्षान्त्या च वसुधासमः ॥
तस्यास्मि कृतसंकेता लोकपालसुतस्य वै । तमुद्दिश्य तु मे सर्वं विभूषणमिदं कृतम् ॥ ३५
तथा तस्य हि नन्यस्य भावो मां प्रति तिष्ठति । तेन सत्येन मां राजन् मोक्तुमर्हस्यरिन्दम ॥
स हि तिष्ठति धर्मात्मा मां प्रतीक्षन् समुत्सुकः । तत्र विघ्नं सुतस्येह कर्तुं नार्हसि मुञ्च माम्॥
सद्भिराचरितं मार्गं गच्छ राक्षसपुङ्गव । माननीयो मम त्वं हि पालनीया तथास्मि ते ॥ ३८
एवमुक्तो दशग्रीवः प्रत्युवाच विनीतवत् । स्नुषास्मि यदवोचस्त्वमेकपत्नीष्वयं क्रमः ॥ ३९
एवमुक्तो दशग्रीवः सुराणां शाश्वती मता । पतिरप्सरसां नास्ति न चैकस्त्रीपरिग्रहः ॥ ४०
एवमुक्त्वा स तां रक्षो निवेश्य च शिलातले । कामभोगाभिसंसक्तो मैथुनायोपचक्रमे ॥ ४१
सा विमुक्ता ततो रम्भा भ्रष्टमाल्यविभूषणा । गजेन्द्राक्रीडमथिता नदीवाकुलतां गता ॥ ४२
लुलिताकुलकेशान्ता करवेपितपल्लवा । पवनेनावधूतेव लता कुसुमशालिनी ॥ ४३
सा वेपमाना लज्जन्ती भीता करकृताञ्जलिः । नलकूबरमासाद्य पादयोर्निपपात ह ॥ ४४
तदवस्थां च तां दृष्ट्वा महात्मा नलकूबरः । अब्रवीत् किमिदं भद्रे पादयोः पतितासि मे ॥४५
सा वै निःश्वसमाना तु वेपमाना कृताञ्जलिः । तस्मै सर्वं यथातत्त्वमाख्यातुमुपचक्रमे ॥ ४६
एष देव दशग्रीवः प्राप्तो गन्तुं त्रिविष्टपम् । तेन सैन्यसहायेन निशेयं परिणामिता ॥ ४७
आयान्ती तेन दृष्टास्मि त्वत्सकाशमरिंदम । गृहीता तेन पृष्टास्मि कस्य त्वमिति रक्षसा ॥ ४८
मया तु सर्वं यत् सत्यं तस्मै सर्वं निवेदितम् । काममोहाभिभूतात्मा नाश्रौषीत्तद्वचो मम ॥४९
याच्यमानो मया देव स्नुषा तेऽहमिति प्रभो । तत् सर्वं पृष्ठतः कृत्वा बलात्तेनास्मि धर्षिता ॥
एवं त्वमपराधं मे क्षन्तुमर्हसि सुव्रत । न हि तुल्यबलं सौम्य स्त्रियाश्च पुरुषस्य च ॥ ५१
एतच्छ्रुत्वा तु संक्रुद्धस्तदा वैश्रवणात्मजः । धर्षणां तां परां श्रुत्वा ध्यानं संप्रविवेश ह ॥ ५२
तस्य तत् कर्म विज्ञाय तदा वैश्रवणात्मजः । मुहूर्तात् क्रोधताम्राक्षस्तोयं जग्राह पाणिना ॥५३
गृहीत्वा सलिलं सर्वमुपस्पृश्य यथाविधि । उत्ससर्ज यथाशापं राक्षसेन्द्राय दारुणम् ॥ ५४
अकामा तेन यस्मात्त्वं बलाद्भद्रे प्रधर्षिता । तस्मात् स युवतीमन्यां नाकामामुपयास्यति ॥५५
यदा ह्यकामां कामार्तो धर्षयिष्यति योषितम् । मूर्धा तु सप्तधा तस्य शकलीभविता तदा ॥५६
तस्मिन्नुदाहृते शापे ज्वलिताग्निसमप्रभे । देवदुन्दुभयो नेदुः पुष्पवृष्टिश्च खाच्च्युता ॥ ५७

1. चरणनिक्षिप्तदृष्ट्या अधोमुखीं स्थितां इत्यर्थः ।

पितामहमुखाश्चैव सर्वे देवाः प्रहर्षिताः । ज्ञात्वा लोकगतिं सर्वां तस्य मृत्युं च रक्षसः ॥ ५८
ऋषयः पितरश्चैव प्रीतिमापुरनुत्तमाम् । श्रुत्वा तु स दशग्रीवस्तं शापं रोमहर्षणम् ॥ ५९
नारीषु मैथुने भावं नाकामास्वभ्यरोचयत् । तेन नीताः स्त्रियः प्रीतिमापुः सर्वाः पतिव्रताः ॥
नलकूबरनिर्मुक्तं शापं श्रुत्वा मनःप्रियम् ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
उत्तरकाण्डे नलकूबरशापो नाम षड्विंशः सर्गः

---

## सप्तविंशः सर्गः

### सुमालिवधः

कैलासं लङ्घयित्वाथ दशग्रीवः स रावणः । आससाद महातेजा इन्द्रलोकं निशाचरः ॥ १
तस्य राक्षससैन्यस्य समन्तादुपयास्यतः । देवलोकं ययौ शब्दो मथ्यमानार्णवोपमः ॥ २
श्रुत्वा तु रावणं प्राप्तमिन्द्रश्चलित आसनात् । अब्रवीत्तत्र तान् देवान् सर्वानेव समागतान् ॥ ३
आदित्यान् सवसून् रुद्रान् विश्वान् साध्यान् मरुद्गणान् । सज्जीभवत युद्धार्थं रावणस्य दुरात्मनः ॥
एवमुक्तास्तु शक्रेण देवाः शक्रसमा युधि । संनह्य सुमहासत्त्वा युद्धश्रद्धासमन्विताः ॥ ५
स तु दीनः परित्रस्तो महेन्द्रो रावणं प्रति । विष्णोः समीपमागम्य वाक्यमेतदुवाच ह ॥ ६
विष्णो कथं करिष्यामि महावीर्यपराक्रमः । [1]असौ हि बलवान् रक्षो युद्धार्थमभिवर्तते ॥ ७
वरप्रदानाद्बलवान्न खल्वन्येन हेतुना । तत्तु सत्यं वचः कार्यं यदुक्तं पद्मयोनिना ॥ ८
तद्यथा नमुचिर्वृत्रो बलिर्नरकशम्बरौ । त्वद्बलं समवष्टभ्य मया दग्धास्तथा कुरु ॥ ९
न ह्यन्यो देव देवेश त्वामृते मधुसूदन । गतिः परायणं चास्ति त्रैलोक्ये सचराचरे ॥ १०
त्वं हि नारायणः श्रीमान् पद्मनाभः सनातनः । त्वयेमे स्थापिता लोकाः शक्रश्चाहं सुरेश्वरः ॥
त्वया सृष्टमिदं सर्वं त्रैलोक्यं सचराचरम् । त्वामेव भगवन् सर्वे प्रविशन्ति युगक्षये ॥ १२
तदाचक्ष्व यथा तत्त्वं देवदेव मम स्वयम् । अपि चक्रसहायस्त्वं योत्स्यसे रावणं प्रभो ॥ १३
एवमुक्तः स शक्रेण देवो नारायणः प्रभुः । अब्रवीन्न परित्रासः कार्यस्ते श्रूयतां च मे ॥ १४
न तावदेष दुष्टात्मा शक्यो जेतुं सुरासुरैः । हन्तुं चापि समासाद्य वरदानेन दुर्जयः ॥ १५
सर्वथा तु महत् कर्म करिष्यति बलोत्कटः । राक्षसः पुत्रसहितो दृष्टमेतन्निसर्गतः ॥ १६
यत्तु मां त्वमभाषिष्ठा युध्यस्वेति सुरेश्वर । नाहं तं प्रतियोत्स्यामि रावणं राक्षसं युधि ॥ १७
नाहत्वा समरे शत्रुं विष्णुः प्रतिनिवर्तते । दुर्लभश्चैव कामोऽद्य वरगुप्ताद्धि रावणात् ॥ १८
प्रतिजाने च देवेन्द्र त्वत्समीपे शतक्रतो । भवितास्मि यथास्याहं रक्षसो मृत्युकारणम् ॥ १९
अहमेव निहन्तास्मि रावणं सपुरःसरम् । देवता नन्दयिष्यामि ज्ञात्वा कालमुपागतम् ॥ २०
एतत्ते कथितं तत्त्वं देवराज शचीपते । युध्यस्व विगतत्रासः सर्वैः[2] सार्धं महाबल ॥ २१

---

१. अहोऽतिबलवत्, ति. । २. सुरैः ति. ।

ततो रुद्राः सहादित्या वसवो मरुतोऽश्विनौ। संनद्धा निर्ययुस्तूर्णं राक्षसानभितः पुरात् ॥२२
एतस्मिन्नन्तरे नादः शुश्रुवे रजनीक्षये। तस्य रावणसैन्यस्य प्रयुद्धस्य[1] समन्ततः ॥ २३
ते प्रयुद्धा महावीर्या ह्यन्योन्यमभिवीक्ष्य वै। संग्राममेवाभिमुखा ह्यभ्यवर्तन्त हृष्टवत् ॥ २४
ततो दैवतसैन्यानां संक्षोभः समजायत। तदक्षयं महासैन्यं दृष्ट्वा समरमूर्धनि ॥ २५
ततो युद्धं समभवद्देवदानवरक्षसाम्। घोरं तुमुलनिर्ह्रादं नानाप्रहरणोद्यतम् ॥ २६
एतस्मिन्नन्तरे शूरा राक्षसा घोरदर्शनाः। युद्धार्थं समवर्तन्त सचिवा रावणस्य ते ॥ २७
मारीचश्च प्रहस्तश्च महापार्श्वमहोदरौ। अकम्पनो निकुम्भश्च शुकः सारण एव च ॥ २८
संह्रादो धूमकेतुश्च महादंष्ट्रो घटोदरः। जम्बुमाली महाह्रादो विरूपाक्षश्च राक्षसः ॥ २९
सुप्तघ्नो यज्ञकोपश्च दुर्मुखो दूषणः खरः। त्रिशिराः करवीराक्षः सूर्यशत्रुश्च राक्षसः ॥ ३०
महाकायोऽतिकायश्च देवान्तकनरान्तकौ। एतैः सर्वैः परिवृतो महावीर्यो महाबलः ३१
रावणस्यार्यकः सैन्यं सुमाली प्रविवेश ह। सदैवतगणान् सर्वान्नानाप्रहरणैः शितैः ॥ ३२
व्यध्वंसयत् सुसंक्रुद्धो वायुर्जलचरानिव। तद्दैवतबलं राम हन्यमानं निशाचरैः ॥ ३३
प्रणुन्नं सर्वतो दिग्भ्यः सिंहनुन्ना मृगा इव। एतस्मिन्नन्तरे शूरो वसूनामष्टमो वसुः[१] ॥ ३४
सावित्र इति विख्यातः प्रविवेश रणाजिरम्। सैन्यैः परिवृतो हृष्टो नानाप्रहरणोद्यतैः ॥ ३५
त्रासयञ् शत्रुसैन्यानि सिंहः क्षुद्रमृगानिव। तथादित्यौ महावीर्यौ त्वष्टा पूषा च दंशितौ ॥३६
निर्भयौ सह सैन्येन तदा प्राविशतां रणे। ततो युद्धं समभवत् सुराणां सह राक्षसैः ॥ ३७
क्रुद्धानां रक्षसां कीर्तिं समरेष्वनिवर्तिनाम्। ततस्ते राक्षसाः सर्वे विबुधान् समरे स्थितान् ॥
नानाप्रहरणैर्घोरैर्जघ्नुः शतसहस्रशः। देवाश्च राक्षसान् घोरान् महाबलपराक्रमान् ॥ ३९
समरे विमलैः शस्त्रैरुपनिन्युर्यमक्षयम्। एतस्मिन्नन्तरे राम सुमाली नाम राक्षसः ॥ ४०
नानाप्रहरणैः क्रुद्धस्तत्सैन्यं सोऽभ्यवर्तत। स दैवतबलं सर्वं नानाप्रहरणैः शितैः ॥ ४१
व्यध्वंसयत संक्रुद्धो वायुर्जलधरं यथा। ते महाबाणवर्षैश्च शूलप्रासैः सुदारुणैः ॥ ४२
हन्यमानाः सुराः सर्वे न व्यतिष्ठन्त संहताः। ततो विद्राव्यमाणेषु दैवतेषु सुमालिना ॥ ४३
वसूनामष्टमः क्रुद्धः सावित्रो वै व्यवस्थितः। संवृतः स्वैरथानीकैः प्रहरन्तं निशाचरम् ॥ ४४
विक्रमेण महातेजा वारयामास संयुगे। ततस्तयोर्महायुद्धमभवद्रोमहर्षणम् ॥ ४५
सुमालिनो वसोश्चैव समरेष्वनिवर्तिनोः। ततस्तस्य महाबाणैर्वसुना सुमहात्मना ॥ ४६
निहतः पन्नगरथः क्षणेन विनिपातितः। हत्वा तु संयुगे तस्य रथं बाणशतैश्चितम् ॥ ४७
गदां तस्य वधार्थाय वसुर्जग्राह पाणिना। ततः प्रगृह्य दीप्ताग्रां कालदण्डोपमां गदाम् ॥ ४८
तां मूर्ध्नि पातयामास सावित्रो वै सुमालिनः। सा तस्योपरि चोल्काभा पतन्तीव बभौ गदा ॥
इन्द्रप्रमुक्ता गर्जन्ती गिराविव महाशनिः। तस्य नैवास्थि न शिरो न मांसं ददृशे तदा ॥५०

---

1. प्रहृष्टयुद्ध्युक्तस्य।

१. इतः अर्धद्वयं ति. नास्ति, च. प्रक्षिप्तम्।

गदया भस्मतां नीतं निहतस्य रणाजिरे । तं दृष्ट्वा निहतं संख्ये राक्षसास्ते समन्ततः ॥ ५१
व्यद्रवन् सहिताः सर्वे क्रोशमानाः परस्परम् । विद्राव्यमाणा वसुना राक्षसा नावतस्थिरे ॥५२

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
उत्तरकाण्डे सुमालिवधो नाम सप्तविंशः सर्गः

## अष्टाविंशः सर्गः

### जयन्तापवाहनम्

सुमालिनं हतं दृष्ट्वा वसुना भस्मसात्कृतम् । स्वसैन्यं विद्रुतं चापि लक्षयित्वार्दितं सुरैः ॥ १
ततः स बलवान् क्रुद्धो रावणस्य सुतस्तदा । निवर्त्य राक्षसान् सर्वान् मेघनादो व्यवस्थितः ॥
सुरथेनाग्निवर्णेन कामगेन महारथः । अभिदुद्राव सेनां तां वनान्यग्निरिव ज्वलन् ॥ ३
ततः प्रविशतस्तस्य विविधायुधधारिणः । विदुद्रुवुर्दिशः सर्वा दर्शनादेव देवताः ॥ ४
न बभूव तदा कश्चिद्युयुत्सोरस्य संमुखे । सर्वानाविध्य वित्रस्तांस्ततः शक्रोऽब्रवीत् सुरान् ॥ ५
न भेतव्यं न गन्तव्यं निवर्तध्वं रणे सुराः । एष गच्छति पुत्रो मे युद्धार्थमपराजितः ॥ ६
ततः शक्रसुतो देवो जयन्त इति विश्रुतः । रथेनाद्भुतकल्पेन संग्रामे सोऽभ्यवर्तत ॥ ७
ततस्ते त्रिदशाः सर्वे परिवार्य शचीसुतम् । रावणस्य सुतं युद्धे समासाद्य प्रजघ्निरे ॥ ८
तेषां युद्धं समभवत् सदृशं देवरक्षसाम् । महेन्द्रस्य च पुत्रस्य राक्षसेन्द्रसुतस्य च ॥ ९
ततो मातलिपुत्रे तु गोमुखे राक्षसात्मजः । सारथौ पातयामास शरान् कनकभूषणान् ॥ १०
शचीसुतश्चापि तथा जयन्तस्तस्य सारथिम् । तं चापि रावणिः क्रुद्धः समन्तात् प्रत्यविध्यत ॥
स हि क्रोधसमाविष्टो बली विस्फारितेक्षणः । रावणिः शक्रतनयं शरवर्षैरवाकिरत् ॥ १२
ततो नानाप्रहरणाञ्शितधारान् सहस्रशः । पातयामास संक्रुद्धः सुरसैन्येषु रावणिः ॥ १३
शतघ्नीमुसलप्रासगदाखङ्गपरश्वधान् । महान्ति गिरिशृङ्गाणि पातयामास रावणिः ॥ १४
ततः प्रव्यथिता लोकाः संजज्ञे च तमो महत् । तस्य रावणपुत्रस्य शत्रुसैन्यानि निघ्नतः ॥ १५
ततस्तद्दैवतबलं समन्तात्तं शचीसुतम् । बहुप्रकारमस्वस्थमभवच्छरपीडितम् ॥ १६
नाप्यजानन्त चान्योन्यं रक्षो वा देवताथवा । तत्र तत्र विपर्यस्तं समन्तात् परिधावति ॥ १७
देवा देवान्निजघ्नुस्ते राक्षसा राक्षसांस्तथा । संमूढास्तमसाच्छन्ना व्यद्रवन्नपरे तदा ॥ १८
एतस्मिन्नन्तरे वीरः पुलोमा नाम वीर्यवान् । दैत्येन्द्रस्तेन संगृह्य शचीपुत्रोऽपवाहितः ॥ १९
संगृह्य तं तु दौहित्रं प्रविष्टः सागरं तदा । आर्यकः स हि तस्यासीत् [1]पुलोमा येन सा शची॥
ज्ञात्वा प्रणाशं तु तदा जयन्तस्याथ देवताः । अप्रहृष्टास्ततः सर्वा व्यथिताः संप्रदुद्रुवुः ॥ २१
रावणिस्त्वथ संक्रुद्धो बलैः परिवृतः स्वकैः । अभ्यधावत देवांस्तान् मुमोच च महास्वनम् ॥
दृष्ट्वा प्रणाशं पुत्रस्य दैवतेषु च विद्रुतम् । मातलिं चाह देवेशो रथः समुपनीयताम् ॥ २३

---

1 पौलोमीति स्वरसः पाठ ऊह्यते ।

स तु दिव्यो महाभीमः सज्ज एव महारथः । उपस्थितो मातलिना वाह्यमानो महाजवः ॥२४
ततो मेघा रथे तस्मिंस्तडिद्वन्तो महाबलाः । अग्रतो वायुचपला नेदुः परमनिःस्वनाः ॥ २५
नानावाद्यानि वाद्यन्त गन्धर्वाश्च समाहिताः । ननृतुश्चाप्सरःसङ्घा निर्याते त्रिदशेश्वरे ॥ २६
रुद्रैर्वसुभिरादित्यैः साध्यैश्च समरुद्गणैः । वृतो नानाप्रहरणैर्निर्ययौ त्रिदशाधिपः ॥ २७
निर्गच्छतस्तु शक्रस्य परुषं पवनो ववौ । भास्करो निष्प्रभश्चासीन्महोल्काश्च प्रपेदिरे ॥ २८
एतस्मिन्नन्तरे वीरो दशग्रीवः प्रतापवान् । आरुरोह रथं दिव्यं निर्मितं विश्वकर्मणा ॥ २९
पन्नगैस्तु महाभोगैर्वेष्टितं रोमहर्षणैः । तेषां निःश्वासवातेन प्रदीप्तमिव संयुगे ॥ ३०
दैत्यैर्निशाचरैश्चैव स रथः परिवारितः । समराभिमुखो दैत्यो महेन्द्रं सोऽभ्यवर्तत ॥ ३१
पुत्रं तं वारयित्वा तु स्वयमेव व्यवस्थितः । सोऽपि युद्धाद्विनिष्क्रम्य रावणिः समुपाविशत् ॥
ततो युद्धं प्रवृत्तं तु सुराणां राक्षसैः सह । शस्त्राणि वर्षतां घोरं मेघानामिव संयुगे ॥ ३३
कुम्भकर्णस्तु दुष्टात्मा नानाप्रहरणोद्यतः । नाज्ञायत तदा [1]युद्धे सह केनाप्ययुध्यत ॥ ३४
दन्तैर्भुजाभ्यां पद्भ्यां च शक्तितोमरसायकैः । येन केनैव संरब्धस्ताडयामास वै सुरान् ॥ ३५
ततो रुद्रैर्महाघोरैः संगम्याथ निशाचरः । प्रयुद्धस्तैश्च संग्रामे क्षतः शस्त्रैर्निरन्तरम् ॥ ३६
बभौ शस्त्राचिततनुः कुम्भकर्णः क्षरन्नसृक् । विद्युत्स्तनितनिर्घोषो धारावानिव तोयदः[2] ॥ ३७
ततस्तद्राक्षसं सैन्यं प्रयुद्धं समरुद्गणैः । रणे विद्रावितं सर्वं नानाप्रहरणैः शितैः ॥ ३८
केचिद्विनिहताः कृत्ताश्चेष्टन्ति स्म महीतले । वाहनेष्ववसक्ताश्च स्थिता एवापरे रणे ॥ ३९
रथान्नागान् खरानुष्ट्रान् पन्नगांस्तुरगान् रणे । शिशुमारान् वराहांश्च पिशाचवदनांस्तथा ॥ ४०
तान् समालिङ्ग्य बाहुभ्यां विष्टब्धाः केचिदुच्छ्रिताः । देवैस्तु शस्त्रसंभिन्ना मम्रिरे च निशाचराः ॥
चित्रकर्म इवाभाति स तेषां रणसंप्लवः । निहतानां प्रमत्तानां राक्षसानां महीतले ॥ ४२
शोणितोदकनिष्यन्दकङ्कगृध्रसमाकुला । प्रवृत्ता संयुगमुखे शस्त्रग्राहवती नदी ॥ ४३
एतस्मिन्नन्तरे क्रुद्धो दशग्रीवः प्रतापवान् । निरीक्ष्य तद्बलं कृत्स्नं दैवतैर्विनिपातितम् ॥ ४४
स तं प्रति विगाह्याशु प्रवृद्धं सैन्यसागरम् । त्रिदशान् समरे निघ्नञ्शक्रमेवाभ्यवर्तत ॥ ४५
आगाच्छक्रो महच्चापं विस्फार्य सुमहास्वनम् । यस्य विस्फारघोषेण स्वनन्ति स्म दिशो दश ॥
तद्विकृष्य महच्चापमिन्द्रो रावणमूर्धनि । निपातयामास शरान् पावकादित्यवर्चसः ॥ ४७
तथैव च महाबाहुर्दशग्रीवो व्यवस्थितः[3] । शक्रं कार्मुकविभ्रष्टैः शरवर्षैरवाकिरत् ॥ ४८
प्रयुध्यतोरथ तयोर्बाणवर्षैः समन्ततः । न ज्ञायते तदा किंचित् सर्वं हि तमसावृतम् ॥ ४९

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
उत्तरकाण्डे जयन्तापवाहनं नाम अष्टाविंशः सर्गः

---

१. राजन् युद्धं केनाभ्यपद्यत. ति. । ३. निशाचरः ति. ।
२. इदं पद्यं ति. न दृश्यते ।

## एकोनत्रिंशः सर्गः

### वासवग्रहणम्

ततस्तमसि संजाते सर्वे ते देवराक्षसाः । अयुध्यन्त बलोन्मत्ताः सूदयन्तः परस्परम् ॥ १
ततस्तु देवसैन्येन राक्षसानां बृहद्बलम् । दशांशं स्थापितं युद्धे शेषं नीतं यमक्षयम् ॥ २
तस्मिंस्तु तामसे युद्धे सर्वे ते देवराक्षसाः । अन्योन्यं नाभ्यजानन्त युध्यमानाः परस्परम्[1] ॥ ३
इन्द्रश्च रावणश्चैव रावणिश्च महाबलः । तस्मिंस्तमोजालवृते मोहमीयुर्न ते त्रयः ॥ ४
स तु दृष्ट्वा बलं सर्वं निहतं रावणः क्षणात् । क्रोधमभ्यागमत्तीव्रं महानादं च मुक्तवान् ॥ ५
क्रोधात् सूतं च दुर्धर्षः स्यन्दनस्थमुवाच ह । परसैन्यस्य मध्येन यावदन्तो नयस्व माम् ॥ ६
अद्यैतांस्त्रिदशान् सर्वान् विक्रमैः समरे स्वयम् । नानाशस्त्रैर्महाघोरैर्नयामि यमसादनम् ॥ ७
अहमिन्द्रं वधिष्यामि धनदं वरुणं यमम् । त्रिदशान् विनिहत्याथ स्वयं स्थास्याम्यथोपरि ॥ ८
विषादो न च कर्तव्यः शीघ्रं वाहय मे रथम् । द्विः खलु त्वां ब्रवीम्यद्य यावदन्तो नयस्व माम् ॥
अयं स नन्दनोद्देशो यत्र वर्तामहे वयम् । नय मामद्य तत्र त्वमुदयो यत्र पर्वतः ॥ १०
तस्य तद्वचनं श्रुत्वा तुरंगान् स मनोजवान् । आदिदेशाथ शत्रूणां मध्येनैव च सारथिः ॥ ११
तस्य तं निश्चयं ज्ञात्वा शक्रो देवेश्वरस्तदा । रथस्थः समरस्थांस्तान् देवान् वाक्यमथाब्रवीत् ॥
सुराः शृणुत मद्वाक्यं यत्तावन्मम रोचते । जीवन्नेव दशग्रीवः साधु रक्षो निगृह्यताम् ॥ १३
एष ह्यतिबलः सैन्ये रथेन पवनौजसा । गमिष्यति प्रवृद्धोर्मिः समुद्र इव पर्वणि ॥ १४
न ह्येष हन्तुं शक्योऽद्य वरदानात् सुनिर्भयः । तद्ग्रहीष्यामहे रक्षो यत्ता भवत संयुगे ॥ १५
यथा बलौ निरुद्धे च त्रैलोक्यं भुज्यते मया । एवमेतस्य पापस्य निरोधो मम रोचते ॥ १६
ततोऽन्यं देशमास्थाय शक्रः संत्यज्य रावणम् । अयुध्यत महाराज राक्षसांस्त्रासयन् रणे ॥ १७
उत्तरेण दशग्रीवः प्रविवेशानिवर्तकः । दक्षिणेन तु पार्श्वेन प्रविवेश शतक्रतुः ॥ १८
ततः स योजनशतं प्रविष्टो राक्षसाधिपः । देवतानां बलं सर्वं शरवर्षैरवाकिरत् ॥ १९
ततः शक्रो निरीक्ष्याथ प्रनष्टं तु स्वकं बलम् । न्यवर्तयदसंभ्रान्तः समावृत्य दशाननम् ॥ २०
एतस्मिन्नन्तरे नादो मुक्तो दानवराक्षसैः । हा हता स्म इति ग्रस्तं दृष्ट्वा शक्रेण रावणम् ॥ २१
ततो रथं समास्थाय रावणिः क्रोधमूर्छितः । तत्सैन्यमतिसंक्रुद्धः प्रविवेश सुदारुणम् ॥ २२
तां प्रविश्य महामायां प्राप्तां गोपतिना पुरा । प्रविवेश सुसंरब्धस्तत्सैन्यं समभिद्रवत् ॥ २३
स सर्वा देवतास्त्यक्त्वा शक्रमेवाभ्यधावत । महेन्द्रश्च महातेजा नापश्यच्च सुतं रिपोः ॥ २४
विमुक्तकवचस्तत्र वध्यमानोऽपि रावणिः । त्रिदशैः सुमहावीरैर्न चकार च किंचन ॥ २५
स मातलिं समायान्तं ताडयित्वा शरोत्तमैः । महेन्द्रं बाणवर्षेण भूय एवाभ्यवाकिरत् ॥ २६
ततस्त्यक्त्वा रथं शक्रो विससर्ज च सारथिम् । ऐरावतं समारुह्य मृगयामास रावणिम् ॥ २७

१. २. ३. पद्ये ति. न स्तः ।

स तत्र मायाबलवानदृश्योऽथान्तरिक्षगः । इन्द्रं मायापरिक्षिप्तं कृत्वा संप्राद्रवच्छरैः ॥ २८
स तं यथा परिश्रान्तमिन्द्रं जज्ञेऽथ रावणिः । तदैनं मायया बद्ध्वा स्वसैन्यमभितोऽनयत् ॥ २९
तं तु दृष्ट्वा बलात्तेन नीयमानं महारणात् । महेन्द्रममराः सर्वे किं नु स्यादित्यचिन्तयन् ॥ ३०
दृश्यते न स मायावी शक्रजित् समितिंजयः । विद्यावानपि येनेन्द्रो मायया नीयते बलात् ॥
एतस्मिन्नन्तरे क्रुद्धाः सर्वे सुरगणास्तदा । रावणं विमुखीकृत्य शरवर्षैरवाकिरन् ॥ ३२
रावणस्तु समासाद्य आदित्यांश्च वसूंस्तथा । न शशाक स संग्रामे योद्धुं शत्रुभिरर्दितः ॥ ३३
स तं दृष्ट्वा परिम्लानं प्रहारैर्जर्जरीकृतम् । रावणिः पितरं युद्धेऽदर्शनस्थोऽब्रवीदिदम् ॥ ३४
आगच्छ तात गच्छामो रणकर्ता निवर्ततताम् । जितं नो विदितं तेऽस्तु स्वस्थो भव गतज्वरः॥
अयं हि सुरसैन्यस्य त्रैलोक्यस्य च यः प्रभुः । स गृहीतो देवबलाद्भग्नदर्पाः सुराः कृताः ॥३६
यथेष्टं भुङ्क्ष्व लोकांस्त्रीन्निगृह्यारातिमोजसा । वृथा किं ते श्रमेणेह युद्धमद्य तु निष्फलम् ॥
ततस्ते दैवतगणा निवृत्ता रणकर्मणः । तच्छ्रुत्वा रावणेर्वाक्यं [1]स्वस्थचेता बभूव ह ॥ ३८

अथ रणविगतज्वरः प्रभुर्विजयमवाप्य निशाचाराधिपः ।
स्वभवनमभितो जगाम हृष्टः स्वसुतमवाप्य च वाक्यमब्रवीत् ॥ ३९
अतिबलसदृशैः पराक्रमैस्तैर्मम कुलमानविवर्धनं कृतम् ।
यदयमतुल्यबलस्त्वयाद्य वै त्रिदशपतिस्त्रिदशाश्च निर्जिताः ॥ ४०
नय रथमधिरोप्य वासवं नगरमितो व्रज सेनया वृतस्त्वम् ।
अहमपि तव गच्छतो द्रुतं सह सचिवैरनुयामि पृष्ठतः ॥ ४१
अथ स बलवृतः सवाहनस्त्रिदशपतिं परिगृह्य रावणिः ।
स्वभवनमभिगम्य वीर्यवान् कृतसमरान् विससर्ज राक्षसान्[2] ॥ ४२

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
उत्तरकाण्डे वासवग्रहणं नाम एकोनत्रिंशः सर्गः

---

## त्रिंशः सर्गः

### इन्द्रपराजयकारणकथनम्

जिते महेन्द्रेऽतिबले रावणस्य सुतेन वै । [3]प्रजापतिं पुरस्कृत्य ययुर्लङ्कां सुरास्तदा ॥ १

१. शक्रहीनाः सुरा गताः ति. ।

२. तान्विसृज्य तदा रक्षो महेन्द्रं पाकशासनम् । बबन्ध नगरद्वारि मध्ये क्रीडन्न निर्वृतः ॥ इति च. प्रक्षिप्तम् ।

३. प्रजापतिं सुराः सर्वे गताः परमदुःखिताः । भगवन्पुरुहूतोऽयं निगृहीतो भवद्वरात् ॥
राक्षसेन्द्रं सुरैः सर्वैः अवध्यं कृतवानसि । महेश्वरेण पुत्रस्य वरा दत्ता महात्मनः ॥
किं करोतु सुरेन्द्रस्तं मायया बलवत्तरम् । सुराश्च सर्वे लोकेश न जयन्ति भवद्वरात् ॥
तस्मात्त्वमेव देवेन्द्रं मोचयस्व महाद्युते । अद्यप्रभृति लोकेश स्वविक्रमबलोदितः ॥
इति विज्ञाप्य भावज्ञाः प्रणिपत्य प्रसाद्य च । इति च. प्रक्षिप्तम् ।

तत्र रावणमासाद्य पुत्रभ्रातृभिरावृतम् । अब्रवीद्गगने तिष्ठन् सामपूर्वं प्रजापतिः ॥ २
वत्स रावण तुष्टोऽस्मि पुत्रस्य तव संयुगे । अहोऽस्य विक्रमौदार्यं तव तुल्योऽधिकोऽपि वा ॥
जितं हि भवता सर्वं त्रैलोक्यं स्वेन तेजसा । कृता प्रतिज्ञा सफला प्रीतोऽस्मि स्वसुतेन वै ॥
अयं च पुत्रोऽतिबलस्तव रावण वीर्यवान् । जगतीन्द्रजिदित्येव परिख्यातो भविष्यति ॥ ५
बलवान् दुर्जयश्चैव भविष्यत्येव राक्षसः । यं समाश्रित्य ते राजन् स्थापितास्त्रिदशा वशे ॥ ६
तन्मुच्यतां महाबाहो महेन्द्रः पाकशासनः । किं चास्य मोक्षणार्थाय प्रयच्छन्तु दिवौकसः ॥
अथाब्रवीन्महातेजा इन्द्रजित् समितिंजयः । अमरत्वमहं देव वृणे यद्येष मुच्यते ॥ ८
चतुष्पदां खेचराणामन्येषां च महौजसाम् । वृक्षगुल्मक्षुपलतातृणोपलमहीभृताम् ॥ ९
सर्वेऽपि जन्तवोऽन्योन्यं भेतव्ये सति बिभ्यति । अतोऽत्र लोके सर्वेषां सर्वस्माच्च भवेद्भयम् ॥
ततोऽब्रवीन्महातेजा मेघनादं प्रजापतिः । नास्ति सर्वामरत्वं हि कस्यचित् प्राणिनो भुवि ॥
चतुष्पदः पक्षिणश्च भूतानां वा महौजसाम् । श्रुत्वा पितामहेनोक्तमिन्द्रजित् प्रभुणाव्ययम् ॥
अथाब्रवीत् स तत्रस्थं मेघनादो महाबलः । श्रूयतां वा भवेत् सिद्धिः शतक्रतुविमोक्षणे ॥१३
ममेष्टं नित्यशो हव्यैर्मन्त्रैः संपूज्य पावकम् । संग्राममवतर्तुं च शत्रुनिर्जयकाङ्क्षिणः ॥ १४
अश्वयुक्तो रथो मह्यमुत्तिष्ठेत्तु विभावसोः । तत्स्थस्यामरता स्यान्मे एष मे निश्चयो वरः ॥ १५
तस्मिन् यद्यसमाप्ते च जप्यहोमे विभावसौ । युध्येयं देव संग्रामे तदा मे स्याद्विनाशनम् ॥
सर्वो हि तपसा देव वृणोत्यमरतां पुमान् । विक्रमेण मया त्वेतदमरत्वं प्रवर्तितम् ॥ १७
एवमस्त्विति तं चाह वाक्यं देवः पितामहः । मुक्तश्चेन्द्रजिता शक्रो गताश्च त्रिदिवं सुराः ॥
एतस्मिन्नन्तरे राम दीनो भ्रष्टाम्बरद्युतिः[1] । इन्द्रश्चिन्तापरीतात्मा ध्यानतत्परतां गतः ॥ १९
तं तु दृष्ट्वा तथाभूतं प्राह देवः प्रजापतिः । शतक्रतो किमु पुरा करोति स्म सुदुष्करम् ॥२०
अमरेन्द्र मया बह्व्यः प्रजाः सृष्टास्तदा प्रभो । एकवर्णाः समाभाषा एकरूपाश्च सर्वशः ॥२१
तासां नास्ति विशेषो हि दर्शने लक्षणेऽपि वा । ततोऽहमेकाग्रमनास्ताः प्रजाः पर्यचिन्तयम् ॥
सोऽहं तासां विशेषार्थं स्त्रियमेकां विनिर्ममे । यद्यत् प्रजानां प्रत्यङ्गं विशिष्टं तत्तदुद्धृतम् ॥
ततो मया रूपगुणैरहल्या स्त्री विनिर्मिता । हलं नामेह वैरूप्यं हल्यं तत्प्रभवं भवेत् ॥ २४
यस्मान्न विद्यते हल्यं तेनाहल्येति विश्रुता । अहल्येति मया शक्र तस्या नाम प्रवर्तितम् ॥
निर्मितायां च देवेन्द्र तस्यां नार्यां सुरर्षभ । भविष्यतीति कस्यैषा मम चिन्ता ततोऽभवत् ॥
त्वं तु शक्र तदा नारीं जानीषे मनसा प्रभो । स्थानाधिकतया पत्नी ममैषेति पुरंदर ॥ २७
सा मया न्यासभूता तु गौतमस्य महात्मनः । न्यस्ता बहूनि वर्षाणि तेन निर्यातिता च ह ॥
ततस्तस्य परिज्ञाय महास्थैर्यं महामुने. । ज्ञात्वा तपसि सिद्धिं च पत्न्यर्थं स्पर्शिता तदा ॥२९
स तया सह धर्मात्मा रमते स्म महामुनिः । आसन्निराशा देवास्तु गौतमे दत्तया तया ॥३०
संक्रुद्धस्त्वं हि धर्मात्मन् गत्वा तस्याश्रमं मुनेः । दृष्टवांश्च तदा तां स्त्रीं दीप्तामग्निशिखामिव ॥

---

१. भ्रष्टामरद्युति ति· २. इदं पद्यं च. प्रक्षिप्तम् ।

सा त्वया धर्षिता शक्र कामार्तेन समन्युना । दृष्टस्त्वं च तदा तेन ह्याश्रमे परमर्षिणा ॥ ३२
ततः क्रुद्धेन तेनासि शप्तः परमतेजसा । गतोऽसि येन देवेन्द्र दशाभागविपर्ययम् ॥ ३३
यस्मान्मे धर्षिता पत्नी त्वया वासव निर्भयम् । तस्मात्त्वं समरे राजञ्शत्रुहस्तं गमिष्यसि ॥३४
अयं तु भावो दुर्बुद्धे यस्त्वयेह प्रवर्तितः । मानुषेष्वपि लोकेषु भविष्यति न संशयः ॥ ३५
तत्रार्धं तस्य यः कर्ता त्वय्यर्धं निपतिष्यति । न च ते स्थावरं स्थानं भविष्यति न संशयः ॥
यश्च यश्च सुरेन्द्रः स्याद्ध्रुवः स न भविष्यति । एष शापो मया मुक्त इत्यसौ त्वां तदाब्रवीत् ॥
तां तु भार्यां सुनिर्भर्त्स्य सोऽब्रवीत् सुमहातपाः । दुर्विनीते विनिध्वंस ममाश्रमसमीपतः ॥
रूपयौवनसंपन्ना यस्मात्त्वमनवस्थिता । तस्माद्रूपवती लोके न त्वमेका भविष्यसि[1] ॥ ३९
रूपं च ते प्रजाः सर्वा गमिष्यन्ति न संशयः । यत्तदेकं समाश्रित्य विभ्रमोऽयमुपस्थितः ॥४०
तदाप्रभृति भूयिष्ठं प्रजा रूपसमन्विताः । सा तं प्रसादयामास महर्षिं गौतमं तदा ॥ ४१
अज्ञानाद्धर्षिता नाथ त्वद्रूपेण दिवौकसा । न कामकाराद्विप्रर्षे प्रसादं कर्तुमर्हसि ॥ ४२
अहल्यया त्वेवमुक्तः प्रत्युवाच स गौतमः । उत्पत्स्यति महातेजा इक्ष्वाकूणां महारथः ॥ ४३
रामो नाम श्रुतो लोके वनं चाप्युपयास्यति । ब्राह्मणार्थे महाबाहुर्विष्णुर्मानुषविग्रहः ॥ ४४
तं द्रक्ष्यसि यदा भद्रे ततः पूता भविष्यसि । स हि पावयितुं शक्तस्त्वया यद्दुष्कृतं कृतम् ॥
तस्यातिथ्यं च कृत्वा वै मत्समीपं गमिष्यसि । वत्स्यसि त्वं मया सार्धं तदा हि वरवर्णिनि ॥
एवमुक्त्वा स विप्रर्षिराजगाम स्वमाश्रमम् । तपश्चचार सुमहत् सा पत्नी ब्रह्मवादिनः ॥ ४७
शापोत्सर्गाद्धि तस्येदं मुनेः सर्वमुपस्थितम् । तत्स्मर त्वं महाबाहो दुष्कृतं यत्त्वया कृतम् ॥
तेन त्वं ग्रहणं शत्रोर्यातो नान्येन वासव । शीघ्रं वै यज यज्ञं त्वं वैष्णवं सुसमाहितः ॥ ४९
पावितस्तेन यज्ञेन यास्यसे त्रिदिवं ततः । पुत्रश्च तव देवेन्द्र न विनष्टो महारणे ॥ ५०
नीतः सन्निहितश्चैव आर्यकेण महोदधौ । एतच्छ्रुत्वा महेन्द्रस्तु यज्ञमिष्ट्वा च वैष्णवम् ॥ ५१
पुनस्त्रिदिवमाक्रामदन्वशासच्च देवराट् । एतदिन्द्रजितो नाम बलं यत् कीर्तितं मया ॥ ५२
निर्जितस्तेन देवेन्द्रः प्राणिनोऽन्ये तु किं पुनः । आश्चर्यमिति रामश्च लक्ष्मणश्चाब्रवीत्तदा ॥
अगस्त्यवचनं श्रुत्वा वानरा राक्षसास्तदा । विभीषणस्तु रामस्य पार्श्वस्थो वाक्यमब्रवीत् ॥ ५४
आश्चर्यं स्मारितोऽस्म्यद्य यत्तद्दृष्टं पुरातनम् । अगस्त्यं त्वब्रवीद्रामः सत्यमेतच्छ्रुतं च मे ॥
एवं राम समुद्भूतो रावणो लोककण्टकः । सपुत्रो येन संग्रामे जितः शक्रः सुरेश्वरः॥ ५६

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
उत्तरकाण्डे इन्द्रपराजयकारणकथनं नाम त्रिंशः सर्गः

---

## एकत्रिंशः सर्गः

### रावणनर्मदावगाहः

ततो रामो महातेजा विस्मयात् पुनरेव हि । उवाच प्रणतो वाक्यमगस्त्यमृषिसत्तमम् ॥ १

---

१. भविष्यति च. ।

भगवन् राक्षसः क्रूरो यदाप्रभृति मेदिनीम् । पर्यटत् किं तदा लोकाः शून्या आसन् द्विजोत्तम ॥
राजा वा राजमात्रो वा किं तदा नात्र कश्चन । धर्षणं येन न प्राप्तो रावणो राक्षसेश्वरः ॥ ३
उताहो हतवीर्यास्ते बभूवुः पृथिवीक्षितः । बहिष्कृता वरास्त्रैश्च बहवो निर्जिता नृपाः ॥ ४
राघवस्य वचः श्रुत्वा ह्यगस्त्यो भगवानृषिः । उवाच रामं प्रहसन् पितामह इवेश्वरम् ॥ ५
इत्येवं बाधमानस्तु पार्थिवान् पार्थिवर्षभ । चचार रावणो राम पृथिवीं पृथिवीपते ॥ ६
ततो माहिष्मतीं नाम पुरीं स्वर्गपुरीप्रभाम् । संप्राप्तो यत्र सांनिध्यं सदासीद्वसुरेतसः ॥ ७
तुल्य आसीन्नृपस्तस्य प्रभावाद्वसुरेतसः । अर्जुनो नाम यत्राग्निः शरकुण्डेशयः[1] सदा ॥ ८
यमेव दिवसं सोऽथ हैहयाधिपतिर्बली । अर्जुनो नर्मदां रन्तुं गतः स्त्रीभिः सहेश्वरः ॥ ९
तमेव दिवसं सोऽथ रावणस्तत्र आगतः । रावणो राक्षसेन्द्रस्तु तस्यामात्यानपृच्छत ॥ १०
क्वार्जुनो नृपतिः शीघ्रं सम्यगाख्यातुमर्हथ । रावणोऽहमनुप्राप्तो युद्धेप्सुर्नृवरेण ह ॥ ११
ममागमनमप्यग्रे युष्माभिः संनिवेद्यताम् । इत्येवं रावणोक्तास्ते अमात्याः सुविपश्चितः ॥ १२
अब्रुवन् राक्षसपतिमसान्निध्यं महीपतेः । श्रुत्वा विश्रवसः पुत्रः पौराणामर्जुनं गतम् १३
अपसृत्यागतो विन्ध्यं हिमवत्सन्निभं गिरिम् । स तमभ्रमिवाविष्टमुद्भ्रान्तामिव मेदिनीम् ॥ १४
अपश्यद्रावणो विन्ध्यमालिखन्तमिवाम्बरम् । सहस्रशिखरोपेतं सिंहाध्युषितकन्दरम् ॥ १५
प्रपातपतितैस्तोयैः साट्टहासमिवाम्बुधिम्[1] । देवदानवगन्धर्वैः साप्सरोगणकिंनरैः ॥ १६
[2]सस्त्रीभिः क्रीडमानैश्च स्वर्गभूतं महोच्छ्रयम् । नदीभिः स्यन्दमानाभिः स्फाटिकप्रतिमं जलम् ॥
फणाभिश्चलजिह्वाभिरनन्तमिव विष्ठितम् । उत्क्रामन्तं दरीमन्तं हिमवत्संनिभं गिरिम् ॥ १८
पश्यमानस्ततो विन्ध्यं रावणो नर्मदां ययौ । चलोपलजलां पुण्यां पश्चिमोदधिगामिनीम् ॥१९
महिषैः सृमरैः सिंहैः शार्दूलर्क्षगजोत्तमैः । उष्णाभितप्तैस्तृषितैः संक्षोभितजलाशयाम् ॥ २०
चक्रवाकैः सकारण्डैः सहंसजलकुक्कुटैः । सारसैश्च सदा मत्तैः सुकूजद्भिः समावृतम् ॥ २१
फुल्लद्रुमकृतोत्तंसां चक्रवाकयुगस्तनीम् । विस्तीर्णपुलिनश्रोणीं हंसावलिसुमेखलाम् ॥ २२
पुष्परेण्वनुलिप्ताङ्गीं जलफेनामलांशुकाम् । जलावगाहसंस्पर्शां फुल्लोत्पलशुभेक्षणाम् ॥ २३
पुष्पकादवरुह्याशु नर्मदां सरितां वराम् । इष्टामिव वरां नारीमवगाह्य दशाननः ॥ २४
स तस्याः पुलिने रम्ये नानामुनिनिषेविते । उपोपविष्टः सचिवैः सार्धं राक्षसपुङ्गवः ॥ २५
प्रख्याय नर्मदां चाथ गङ्गेयमिति रावणः । नर्मदादर्शजं हर्षमाप्तवान् राक्षसाधिपः ॥ २६
ततः सलीलं प्रहसन् रावणो राक्षसेश्वरः[3] । उवाच सचिवांस्तत्र प्रहस्तशुकसारणान्[4] ॥ २७
एष रश्मिसहस्रेण जगत्कृत्वेव काञ्चनम् । तीक्ष्णतापकरः सूर्यो नभसोऽर्धं समाश्रितः ॥ २८
मामासीनं विदित्वेह चन्द्रायति दिवाकरः । नर्मदाजलशीतश्च सुगन्धिः श्रमनाशनः ॥ २९

---

1. अग्निः शरस्तृत कुण्डे शत्रूणां अभिचारार्थं नित्यं सन्निहितो वर्तते इत्याशयः ।
१. अम्बुभिः ति. ।
२. स्वस्त्रीभिः ति. ।
३. इदमर्धम् च. ति. नास्ति ।
४, सलीलं शुकसारणौ च. ति. ।

मद्भयादनिलोऽप्यत्र वात्येष सुसमाहितः । इयं चापि सरिच्छ्रेष्ठा नर्मदा नर्मवर्धिनी ॥ ३०
नक्रमीनविहङ्गोर्मिः सभयेवाङ्गना स्थिता । तद्भवन्तः क्षताः शस्त्रैर्नृपैरिन्द्रसमैर्युधि ॥ ३१
चन्दनस्य रसेनेव रुधिरेण समुक्षिताः । ते यूयमवगाहध्वं नर्मदां शर्मदां शुभाम् ॥ ३२
महापद्ममुखा मत्ता गङ्गामिव महागजाः । अस्यां स्नात्वा महानद्यां पाप्मानं विप्रमोक्ष्यथ ॥३३
अहमप्यद्य पुलिने शरदिन्दुसमप्रभे । पुष्पोपहारं शनकैः करिष्यामि कपर्दिनः ॥ ३४
रावणेनैवमुक्तास्तु प्रहस्तशुकसारणाः । समहोदरधूम्राक्षा नर्मदां विजगाहिरे ॥ ३५
राक्षसेन्द्रगजैस्तैस्तु क्षोभिता नर्मदा नदी । वामनाञ्जनपद्माद्यैर्गङ्गा इव महागजैः ॥ ३६
ततस्ते राक्षसाः स्नात्वा नर्मदायां महाबलाः । उत्तीर्य पुष्पाण्याजहुर्बल्यर्थं रावणस्य तु ॥ ३७
नर्मदापुलिने हृद्ये शुभ्राभ्रसदृशप्रभे । राक्षसैस्तु मुहूर्तेन कृतः पुष्पमयो गिरिः ॥ ३८
पुष्पेषूपहृतेष्वेवं रावणो राक्षसेश्वरः । अवतीर्णो नदीं स्नातुं गङ्गामिव महागजः ॥ ३९
तत्र स्नात्वा च विधिवज्जप्त्वा जप्यमनुत्तमम् । नर्मदासलिलात्तस्मादुत्ततार स रावणः ॥ ४०
तत्र क्लिन्नाम्बरं त्यक्त्वा शुक्लवस्त्रसमावृतम् । रावणं प्राञ्जलिं यान्तमन्वयुः सर्वराक्षसाः ॥ ४१
[1]तद्गतीवशमापन्ना मूर्तिमन्त इवाचलाः । यत्र यत्र च याति स्म रावणो राक्षसेश्वरः ॥ ४२
जाम्बूनदमयं लिङ्गं तत्र तत्र स्म नीयते । वालुकावेदिमध्ये तु तल्लिङ्गं स्थाप्य रावणः ॥ ४३
अर्चयामास गन्धैश्च पुष्पैश्चामृतगन्धिभिः ॥

ततः सतामार्तिहरं परं वरं वरप्रदं चन्द्रमयूखभूषणम् ।
समर्चयित्वा स निशाचरो जगौ प्रसार्य हस्तान् प्रननर्त चाग्रतः ॥ ४४

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
उत्तरकाण्डे रावणनर्मदावगाहो नाम एकत्रिंशः सर्गः

## द्वात्रिंशः सर्गः

### रावणग्रहणम्

नर्मदापुलिने यत्र राक्षसेन्द्रः सुदारुणः । पुष्पोपहारं कुरुते तस्माद्देशाददूरतः ॥ १
अर्जुनो जयतां श्रेष्ठो माहिष्मत्याः पतिः प्रभुः । क्रीडते सह नारीभिर्नर्मदातोयमाश्रिताः ॥ २
तासां मध्यगतो राजा रराज च तदार्जुनः । करेणूनां सहस्रस्य मध्यस्थ इव कुञ्जरः ॥ ३
जिज्ञासुः स तु बाहूनां सहस्रस्योत्तमं बलम् । रुरोध नर्मदावेगं बाहुभिर्बहुभिर्वृतः ॥ ४
कार्तवीर्यभुजासक्तं तज्जलं प्राप्य निर्मलम् । कूलोपहारं कुर्वाणं प्रतिस्रोतः प्रधावति ॥ ५
समीननक्रमकरः सपुष्पकुशसंस्तरः । स नर्मदाम्भसो वेगः प्रावृट्काल इवाबभौ ॥ ६
स वेगः कार्तवीर्येण संप्रेषित इवाम्भसः । पुष्पोपहारं सकलं रावणस्य जहार ह ॥ ७
रावणोऽर्धसमाप्तं तमुत्सृज्य नियमं तदा । नर्मदां पश्यते कान्तां प्रतिकूलां यथा प्रियाम् ॥ ८

---

1. छान्दसं दैर्घ्यम् ।

पश्चिमेन तु तं दृष्ट्वा सागरोद्गारसंनिभम् । वर्धन्तमम्भसो वेगं पूर्वामाशां प्रविश्य तु ॥ ९
ततोऽनुद्भ्रान्तशकुनां स्वभावोपरमे स्थिताम् । निर्विकाराङ्गनाभासामपश्यद्रावणो नदीम् ॥ १०
सव्येतरकराङ्गुल्या सशब्दं च दशाननः । वेगप्रभवमन्वेष्टुं सोऽदिशच्छुकसारणौ ॥ ११
तौ तु रावणसंदिष्टौ भ्रातरौ शुकसारणौ । व्योमान्तरगतौ वीरौ प्रस्थितौ पश्चिमोन्मुखौ ॥१२
अर्धयोजनमात्रं तु गत्वा तौ रजनीचरौ । [1]पश्येतां पुरुषं तोये क्रीडन्तं सहयोषितम् ॥ १३
बृहत्सालप्रतीकाशं तोयव्याकुलमूर्धजम् । मदरक्तान्तनयनं मदव्याकुलतेजसम् ॥ १४
नदीं बाहुसहस्रेण रुन्धन्तमरिमर्दनम् । गिरिं पादसहस्रेण रुन्धन्तमिव मेदिनीम् ॥ १५
बालानां वरनारीणां सहस्रेण समावृतम् । समदानां करेणूनां सहस्रेणेव कुञ्जरम् ॥ १६
तमद्भुततमं दृष्ट्वा राक्षसौ शुकसारणौ । संनिवृत्तावुपागम्य रावणं तमथोचतुः ॥ १७
बृहत्सालप्रतीकाशः कोऽप्यसौ राक्षसेश्वर । नर्मदां रोधवद्रुद्ध्वा क्रीडापयति योषितः ॥ १८
तेन बाहुसहस्रेण संनिरुद्धजला नदी । सागरोद्गारसंकाशानुद्गारान् सृजते मुहुः ॥ १९
इत्येवं भाषमाणौ तौ निशम्य शुकसारणौ । रावणोऽर्जुन इत्युक्त्वा प्रययौ युद्धलालसः ॥ २०
अर्जुनाभिमुखे तस्मिन् रावणे राक्षसाधिपे । चण्डः प्रवाति पवनः सनादः सरजास्तदा ॥ २१
सकृदेव कृतो रावः सरक्तः प्रेषितो घनैः । महोदरमहापार्श्वधूम्राक्षशुकसारणैः ॥ २२
संवृतो राक्षसेन्द्रस्तु तत्रागाद्यत्र चार्जुनः । अदीर्घेणैव कालेन स तदा राक्षसो बली ॥ २३
तं नर्मदाह्रदं भीममाजगामाञ्जनप्रभः । स तत्र स्त्रीपरिवृतं वासिताभिरिव द्विपम् ॥ २४
नरेन्द्रं पश्यते राजा राक्षसानां तदार्जुनम् । स रोषाद्रक्तनयनो राक्षसेन्द्रो बलोद्धतः ॥ २५
इत्येवमर्जुनामात्यानाह गम्भीरया गिरा । अमात्याः क्षिप्रमाख्यात हैहयस्य नृपस्य वै ॥ २६
युद्धार्थी समनुप्राप्तो रावणो नाम राक्षसः । रावणस्य वचः श्रुत्वा मन्त्रिणोऽथार्जुनस्य ते ॥२७
उत्तस्थुः सायुधास्तेऽश्च रावणं वाक्यमब्रुवन् । युद्धस्य कालो विज्ञातः साधु भोः साधु रावण ॥
यः क्षीबं स्त्रीवृतं चैव योद्धुमुत्सहते नृपम् । स्त्रीसमक्षं कथं यत्तद्योद्धुमुत्सहसेऽर्जुनम् ॥ २९
वासितामध्यगं मत्तं शार्दूल इव कुञ्जरम् । क्षमस्वाद्य दशग्रीव चोष्यतां शर्वरी त्वया ॥ ३०
युद्धे श्रद्धा च यद्यस्ति श्वस्तात समरेऽर्जुनम्[2] । यद्यास्ति मतिर्योद्धुं युद्धतृष्णासमावृता ॥३१
निहत्यास्मांस्ततो युद्धमर्जुनेनोपयास्यसि । ततस्ते रावणामात्यैरमात्याः पार्थिवस्य तु ॥ ३२
सूदिताश्चापि ते युद्धे भक्षिताश्च बुभुक्षितैः । ततो हलहलाशब्दो नर्मदातीर आबभौ ॥ ३३
अर्जुनस्यानुयातॄणां रावणस्य च मन्त्रिणाम् । इषुभिस्तोमरैः शूलैस्त्रिशूलैर्वज्रकर्षणैः ॥ ३४
सरावणानर्दयन्तः समन्तात् समभिद्रुताः । हैहयाधिपयोधानां वेग आसीत् सुदारुणः ॥ ३५

---

1. अपश्यतां इत्यर्थः ।
2. अर्जुनमिति, उपयास्यसीत्युत्तरेणान्वयः ।
१. सायुधास्तं. ति ।
२. युद्धकालो न विज्ञातः ग. घ. । विज्ञेयः च. । वृत । ति. ।
३. स्त्रीसमक्षगतं यत्त्वम् पुना. ।
४. इदमर्धं ति. नास्ति ।
५. यदि वापि त्वरा तुभ्यं युद्धतृष्णासमा-

सनक्रमीनमकरसमुद्रस्येव निस्वनः । रावणस्य तु तेऽमात्याः प्रहस्तशुकसारणाः ॥ ३६
कार्तवीर्यबलं क्रुद्धा निर्दहन्ति स्म तेजसा । अर्जुनाय तु तत् कर्म रावणस्य समन्त्रिणः ॥३७
क्रीडमानाय कथितं पुरुषैर्द्वाररक्षिभिः । श्रुत्वा न भेतव्यमिति स्त्रीजनं तं ततोऽर्जुनः ॥ ३८
उत्ततार जलात्तस्माद्गङ्गातोयादिवाञ्जनः । क्रोधदूषितनेत्रस्तु स ततोऽर्जुनपावकः ॥ ३९
प्रजज्वाल महाघोरो युगान्त इव पावकः । स तूर्णतरमादाय वरहेमाङ्गदो गदाम् ॥ ४०
अभिदुद्राव रक्षांसि तमांसीव दिवाकरः । बाहुविक्षेपकरणां समुद्यम्य महागदाम् ॥ ४१
गारुडं वेगमास्थाय चापपातैव सोऽर्जुनः । तस्य मार्गं समारुध्य विन्ध्योऽर्कस्येव पर्वतः ॥ ४२
स्थितो विन्ध्य इवाकम्प्यः प्रहस्तो मुसलायुधः । ततोऽस्य मुसलं घोरं लोहबद्धं महोद्धतः ॥
प्रहस्तः प्रेषयन् क्रुद्धो ररास च यथाम्बुदः । तस्याग्रे मुसलस्याग्निरशोकापीडसंनिभः ॥ ४४
प्रहस्तकरमुक्तस्य बभूव प्रदहन्निव । अथायान्तं तु मुसलं कार्तवीर्यस्तदार्जुनः ॥ ४५
निपुणं वञ्चयामास सगदोऽगदविक्रमः । ततस्तमभिदुद्राव प्रहस्तं हैहयाधिपः ॥ ४६
भ्रामयाणो गदां गुर्वीं पञ्चबाहुशतोच्छ्रयाम् । तथाहतोऽतिवेगेन प्रहस्तो गदया तदा ॥ ४७
निपपात हतः शैलो वज्रिवज्रहतो यथा । प्रहस्तं पतितं दृष्ट्वा मारीचशुकसारणाः ॥ ४८
समहोदरधूम्राक्षा ह्यपसृष्टा रणाजिरात् । अपक्रान्तेष्वमात्येषु प्रहस्ते विनिपातिते ॥ ४९
रावणोऽभ्यद्रवत्तूर्णमर्जुनं नृपसत्तमम् । सहस्रबाहोस्तद्युद्धं विंशद्बाहोश्च दारुणम् ॥ ५०
नृपराक्षसयोस्तत्र चारब्धं रोमहर्षणम् । सागराविव संरब्धौ चलन्मूलाविवाचलौ ॥ ५१
तेजोयुक्ताविवादित्यौ प्रदहन्ताविवानलौ । बलोन्नतौ यथा नागौ वासितार्थे यथा वृषौ ॥ ५२
मेघाविव विनर्दन्तौ सिंहाविव बलोत्कटौ । रुद्रकालाविव क्रुद्धौ तदा तौ राक्षसार्जुनौ ॥ ५३
परस्परं गदाभ्यां तौ ताडयामासतुर्भृशम् । वज्रप्रहारानचला यथा घोरान् विषेहिरे ॥ ५४
गदाप्रहारांस्तौ तत्र सेहाते नरराक्षसौ । यथाशनिरवेभ्यस्तु जायतेऽथ प्रतिश्रुतिः ॥ ५५
तथा तयोर्गदापोथैर्दिशः सर्वाः प्रतिश्रुताः । अर्जुनस्य गदा सा तु पात्यमानाहितोरसि ॥ ५६
काञ्चनाभं नभश्चक्रे विद्युत्सौदामिनी यथा । तथैव रावणेनापि पात्यमाना मुहुर्मुहुः ॥ ५७
अर्जुनोरसि निर्भाति गदोल्केव महागिरौ । नार्जुनः खेदमायाति न राक्षसगणेश्वरः ॥ ५८
इदमासीत्तयोर्युद्धं यथा पूर्वं बलीन्द्रयोः । शृङ्गैर्महर्षभौ[१] यद्वद्दन्ताग्रैरिव कुञ्जरौ ॥ ५९
परस्परं तौ निघ्नन्तौ नरराक्षससत्तमौ । ततोऽर्जुनेन क्रुद्धेन सर्वप्राणेन सा गदा ॥ ६०
स्तनयोरन्तरे मुक्ता रावणस्य महोरसि । वरदानकृतत्राणे सा गदा रावणोरसि ॥ ६१
दुर्बलेन यथावेगं द्विधा भूत्वापतत् क्षितौ । स त्वर्जुनप्रमुक्तेन गदापातेन रावणः ॥ ६२
अपासर्पद्धनुर्मात्रं निषसाद च निष्टनन् । स विह्वलं तदालक्ष्य दशग्रीवं ततोऽर्जुनः ॥ ६३
सहसोत्पत्य जग्राह गरुत्मानिव पन्नगम् । स तं बाहुसहस्रेण बलाद्गृह्य दशाननम् ॥ ६४
बबन्ध बलवान् राजा बलिं नारायणो यथा । बध्यमाने दशग्रीवे सिद्धचारणदेवताः ॥ ६५

---

१. रिव वृषा युद्ध्यन् ति. ।

[1]साध्वीति वादिनः पुष्पैः किरन्त्यर्जुनमूर्धनि । व्याघ्रो मृगमिवादाय मृगराडिव दन्तिनम् ॥
ननाद हैहयो राजा हर्षादम्बुदवन्मुहुः । प्रहस्तस्तु समाश्वस्तो दृष्ट्वा बद्धं दशाननम् ॥ ६७
सह तै राक्षसैः क्रुद्धश्चाभिदुद्राव पार्थिवम् । नक्तंचराणां वेगस्तु तेषामपाततां बभौ ॥ ६८
उद्धूत आतपापाये पयोदानामिवाम्बुधौ । मुञ्च मुञ्चेति भाषन्तस्तिष्ठ तिष्ठेति चासकृत् ॥ ६९
मुसलानि सशूलानि [1]ह्युत्ससर्जुस्तदार्जुने । अप्राप्तान्येव तान्याशु असंभ्रान्तस्तदार्जुनः ॥ ७०
आयुधान्यमरारीणां जग्राहारिनिषूदनः । ततस्तैरेव रक्षांसि दुर्धरैः प्रवरायुधैः ॥ ७१
भित्त्वा विद्रावयामास वायुरम्बुधरानिव । राक्षसांस्त्रासयित्वा तु कार्तवीर्योर्जुनस्तदा ॥ ७२
रावणं गृह्य नगरं प्रविवेश सुहृद्वृतः ॥

स कीर्यमाणः कुसुमाक्षतोत्करैर्द्विजैः सपौरैः पुरुहूतसन्निभः ।
तदार्जुनः संप्रविवेश तां पुरीं बलिं निगृह्येव सहस्रलोचनः ॥ ७३

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
उत्तरकाण्डे रावणग्रहणं नाम द्वात्रिंशः सर्गः

---

## त्रयस्त्रिंशः सर्गः

### रावणविमोक्षः

रावणग्रहणं तत्तु वायुग्रहणसंनिभम् । ततः पुलस्त्यः शुश्राव कथितं दिवि दैवतैः ॥ १
ततः पुत्रकृतस्नेहात् कम्प्यमानो महाधृतिः । माहिष्मतीपतिं द्रष्टुमाजगाम महामुनिः ॥ २
स वायुमार्गमास्थाय वायुतुल्यगतिर्द्विजः । पुरीं माहिष्मतीं प्राप्तो मनःसंपातविक्रमः ॥ ३
सोऽमरावतिसंकाशां हृष्टपुष्टजनाकुलाम् । प्रविवेश पुरीं ब्रह्मा इन्द्रस्येवामरावतीम् ॥ ४
पादचारमिवादित्यं निष्पतन्तं सुदुर्दृशम्[2] । ततस्ते प्रत्यभिज्ञाय चार्जुनाय न्यवेदयन् ॥ ५
पुलस्त्य इति विज्ञाय वचनाद्धैहयाधिपः । शिरस्यञ्जलिमाधाय प्रत्युद्गच्छत्तपस्विनम् ॥ ६
पुरोहितोऽस्य गृह्यार्घ्यं मधुपर्कं तथैव च । पुरस्तात् प्रययौ राज्ञः शक्रस्येव बृहस्पतिः ॥ ७
ततस्तमृषिमायान्तमुद्यन्तमिव भास्करम् । अर्जुनो दृश्य संभ्रान्तो ववन्देन्द्र इवेश्वरम् ॥ ८
स तस्य मधुपर्कं गां पाद्यमर्घ्यं निवेद्य च । पुलस्त्यमाह राजेन्द्रो हर्षगद्गदया गिरा ॥ ९
अद्येयममरावत्या तुल्या माहिष्मती कृता । अद्याहं तु द्विजेन्द्र त्वां यस्मात् पश्यामि दुर्दृशम् ॥
अद्य मे कुशलं देव अद्य मे कुशलं व्रतम् । अद्य मे सफलं जन्म अद्य मे सफलं तपः ॥ ११
यस्माद्देवगणैर्वन्द्यौ वन्देऽहं चरणौ तव । इदं राज्यमिमे पुत्रा इमे दारा इमे वयम् ॥ १२
ब्रह्मन् किं कुर्मि[3] किं कार्यमाज्ञपयतु नो भवान् । तं धर्मेऽग्निषु पुत्रेषु शिवं पृष्ट्वा च पार्थिवम् ॥
पुलस्त्योवाच राजानं हैहयानां तथार्जुनम् । नरेन्द्राम्बुजपत्राक्ष पूर्णचन्द्रनिभानन ॥ १४

---

1. इयं भवदीया कृतिः साध्वीति भावः ।
१. सोत्ससर्ज तदा रणे, ति. ।
२. सुदुर्दशम् च. । महौजसम् ग. ।
३. कुर्मः पुना. ति. ।

अतुलं ते बलं येन दशग्रीवस्त्वया जितः । भयाद्यस्योपतिष्ठेतां निष्पन्दौ सागरानिलौ ॥ १५
सोऽयं मृधे त्वया बद्धः पौत्रो मे रणदुर्जयः । पुत्रकस्य यशः पीतं नाम विश्रावितं त्वया ॥१६
मद्वाक्याद्याच्यमानोऽद्य मुञ्च वत्सं दशाननम् । पुलस्त्याज्ञां प्रगृह्योचे न किंचन वचोऽर्जुनः ॥
मुमोच वै पार्थिवेन्द्रो राक्षसेन्द्रं प्रहृष्टवत् ॥

स तं प्रमुच्य त्रिदशारिमर्जुनः प्रपूज्य दिव्याभरणस्रगम्बरैः ।
अहिंसकं सख्यमुपेत्य साग्निकं प्रणम्य तं ब्रह्मसुतं गृहं ययौ ॥ १८

पुलस्त्येनापि संत्यक्तो राक्षसेन्द्रः प्रतापवान् । परिष्वक्तः कृतातिथ्यो लज्जमानो विनिर्जितः ॥
पितामहसुतश्चापि पुलस्त्यो मुनिपुङ्गवः । मोचयित्वा दशग्रीवं ब्रह्मलोकं जगाम ह ॥ २०
एवं स रावणः प्राप्तः कार्तवीर्यात् प्रधर्षणम् । पुलस्त्यवचनाच्चापि पुनर्मुक्तो महाबलः ॥ २१
एवं बलिभ्यो बलिनः सन्ति राघवनन्दन । नावज्ञा हि परे कार्या य इच्छेत [1]प्रियमात्मनः ॥

ततः स राजा पिशिताशनानां सहस्रबाहोरुपलभ्य मैत्रीम् ।
पुनर्नृपाणां कदनं चकार चचार सर्वां पृथिवीं च दर्पात् ॥ २३

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
उत्तरकाण्डे रावणविमोक्षो नाम त्रयस्त्रिंशः सर्गः

## चतुस्त्रिंशः सर्गः

### वालिरावणसख्यम्

अर्जुनेन विमुक्तस्तु रावणो राक्षसाधिपः । चचार पृथिवीं सर्वामनिर्विण्णस्तथा कृतः ॥ १
राक्षसं वा मनुष्यं वा शृणुते यं बलाधिकम् । रावणस्तं समासाद्य युद्धे ह्वयति दर्पितः ॥ २
ततः कदाचित् किष्किन्धां नगरीं वालिपालिताम् । गत्वा ह्वयति युद्धाय वालिनं हेममालिनम्॥
ततस्तु वानरामात्यस्तारस्तारापिता प्रभुः । उवाच वानरो वाक्यं युद्धप्रेप्सुमुपागतम् ॥ ४
राक्षसेन्द्र गतो वाली यस्ते प्रतिबलो भवेत् । कोऽन्यः प्रमुखतः स्थातुं तव शक्तः प्लवङ्गमः[2]॥
चतुर्भ्योऽपि समुद्रेभ्यः सन्ध्यामन्वास्य रावण । इमं मुहूर्तमायाति वाली तिष्ठ मुहूर्तकम् ॥ ६
एतानस्थिचयान् पश्य य एते शङ्खपाण्डराः । युद्धार्थिनामिमे राजन् वानराधिपतेजसा ॥ ७
यद्वामृतरसः पीतस्त्वया रावण राक्षस । तदा वालिनमासाद्य तदन्तं तव जीवितम् ॥ ८
पश्येदानीं जगच्चित्रमिमं विश्रवसः सुत । इमं मुहूर्तं तिष्ठस्व दुर्लभं ते भविष्यति ॥ ९
अथवा त्वरसे मर्तुं गच्छ दक्षिणसागरम् । वालिनं द्रक्ष्यसे तत्र भूमिष्ठमिव पावकम् ॥ १०
स तु तारं विनिर्भर्त्स्य रावणो लोकरावणः । पुष्पकं तत् समारुह्य प्रययौ दक्षिणार्णवम् ॥ ११
तत्र हेमगिरिप्रख्यं तरुणार्कनिभाननम् । रावणो वालिनं दृष्ट्वा सन्ध्योपासनतत्परम् ॥ १२

---

१. श्रेयः ति. । २. अस्यानन्तरम्—ऋत वानरशार्दूलाद्वालिनो हेमालिनः—इति क. ।

पुष्पकादवरुह्याथ रावणोऽञ्जनसन्निभः। ग्रहीतु वालिनं तूर्णं निःशब्दपदमाव्रजत् ॥ १३
यदृच्छया तदा दृष्टो वालिनापि स रावणः। पापाभिप्रायकं दृष्ट्वा चकार न तु संभ्रमम् ॥१४
शशमालक्ष्य सिंहो वा पन्नगं गरुडो यथा। न चिन्तयति तं वाली रावणं पापनिश्चयम् ॥
जिघृक्षमाणमायान्तं रावणं पापचेतसम्। कक्षावलम्बिनं कृत्वा गमिष्ये त्रीन् महार्णवान्॥१६
द्रक्ष्यन्त्यरिं ममाङ्कस्थं स्रंसदूरुकराम्बरम्। लम्बमानं दशग्रीवं गरुडस्येव पन्नगम् ॥ १७
इत्येवं मतिमास्थाय वाली मौनमुपाश्रितः। जपन् वै नैगमान् मन्त्रांस्तस्थौ पर्वतराडिव ॥ १८
तावन्योन्यं जिघृक्षन्तौ हरिराक्षसपार्थिवौ। प्रयत्नवन्तौ तत् कर्म ईहतुर्बलदर्पितौ ॥ १९
हस्तग्राहं तु तं मत्वा पादशब्देन रावणम्। पराङ्मुखोऽपि जग्राह वाली सर्पमिवाण्डजः ॥
ग्रहीतुकामं तं गृह्य रक्षसामीश्वरं हरिः। खमुत्पपात वेगेन कृत्वा कक्षावलम्बिनम् ॥ २१
तं चापीडयमानं तु वितुदन्तं नखैर्मुहुः। जहार रावणं वाली पवनस्तोयदं यथा ॥ २२
अथ ते राक्षसामात्या ह्रियमाणं दशाननम्। मुमोक्षयिषवो वालिं रवमाणा अभिद्रुताः ॥ २३
अन्वीयमानस्तैर्वाली भ्राजतेऽम्बरमध्यगः। अन्वीयमानो मेघौघैरम्बरस्थ इवांशुमान् ॥ २४
तेऽशक्नुवन्तः संप्राप्तुं वालिनं राक्षसोत्तमाः। तस्य बाहूरुवेगेन परिश्रान्ता व्यवस्थिताः ॥२५
वालिमार्गादपाक्रामन् पर्वतेन्द्रा हि गच्छतः। किं पुनर्जीवितप्रेप्सुर्बिभ्रद्वै मांसशोणितम् ॥२६
अपक्षिगणसंपातान् वानरेन्द्रो महाजवः। क्रमशः सागरान् सर्वान् सन्ध्याकालमवन्दत ॥ २७
सभाज्यमानो भूतैस्तु खेचरैः खेचरोत्तमः। पश्चिमं सागरं वाली ह्याजगाम सरावणः ॥ २८
तस्मिन् सन्ध्यामुपासित्वा स्नात्वा जप्त्वा च वानरः। उत्तरं सागरं प्रागाद्वहमानो दशाननम्॥
बहुयोजनसाहस्रं वहमानो महाहरिः। वायुवच्च मनोवच्च जगाम सह शत्रुणा ॥ ३०
उत्तरे सागरे सन्ध्यामुपासित्वा दशाननम्। वहमानोऽगमद्वाली पूर्वं वै स महोदधिम् ॥ ३१
तत्रापि सन्ध्यामन्वास्य वासविः स हरीश्वरः। किष्किन्धामभितो गृह्य रावणं पुनरागमत् ॥
चतुर्ष्वपि समुद्रेषु सन्ध्यामन्वास्य वानरः। रावणोद्वहनश्रान्तः किष्किन्धोपवनेऽपतत् ॥ ३३
रावणं तु मुमोचाथ स्वकक्षात् कपिसत्तमः। कुतस्त्वमिति चोवाच प्रहसन् रावणं मुहुः ॥ ३४
विस्मयं तु महद्गत्वा श्रमलोलनिरीक्षणः। राक्षसेन्द्रो हरीन्द्रं तमिदं वचनमब्रवीत् ॥ ३५
वानरेन्द्र महेन्द्राभ राक्षसेन्द्रोऽस्मि रावणः। युद्धेप्सुरिह संप्राप्तः स चाद्यासादितस्त्वया ॥
अहो बलमहो वीर्यमहो गाम्भीर्यमेव च। येनाहं पशुवद्गृह्य भ्रामितश्चतुरोऽर्णवान् ॥ ३७
एवमश्रान्तवद्वीर शीघ्रमेव महार्णवान्। मां चैवोद्वहमानस्तु कोऽन्यो वीरः क्रमिष्यति[1] ॥ ३८
त्रयाणामेव भूतानां गतिरेषा प्लवङ्गम। मनोऽनिलसुपर्णानां तव चात्र न संशयः ॥ ३९
सोऽहं दृष्टबलस्तुभ्यमिच्छामि हरिपुङ्गव। त्वया सह चिरं सख्यं सुस्निग्धं पावकाग्रतः ॥ ४०

१. अस्यानन्तरम्—ये सुरा दानवा लोके सर्वेषामेव तेषां त्वं बलादभ्यधिको ह्यसि। इति च. तेषां ह्यभ्यधिको ह्यसि—इति क.। प्रक्षिप्तम्।

ये सुरा दानवा लोके दैत्यराक्षस पन्नगाः।

दाराः पुत्राः पुरं राष्ट्रं भोगाच्छदनभोजनम् । सर्वमेवाविभक्तं नौ भविष्यति हरीश्वर ॥ ४१
ततः प्रज्वालयित्वाग्निं तावुभौ हरिराक्षसौ । भ्रातृत्वमुपसंपन्नौ परिष्वज्य परस्परम् ॥ ४२
अन्योन्यं लम्बितकरौ ततस्तौ हरिराक्षसौ । किष्किन्धां विशतुर्हृष्टौ सिंहौ गिरिगुहामिव ॥
स तत्र मासमुषितः सुग्रीव इव रावणः । अमात्यैरागतैर्नीतस्त्रैलोक्योत्सादनार्थिभिः ॥ ४४
एवमेतत् पुरा वृत्तं वालिना रावणः प्रभो । धर्षितश्च कृतश्चापि भ्राता पावकसन्निधौ ॥ ४५
बलमप्रतिमं राम वालिनोऽभवदुत्तमम् । सोऽपि त्वया विनिर्दग्धो वह्निना शलभो यथा ॥ ४६

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
उत्तरकाण्डे वालिरावणसख्यं नाम चतुस्त्रिंशः सर्गः

---

## पञ्चत्रिंशः सर्गः

### हनूमदुत्पत्तिः

अपृच्छत तदा रामो दक्षिणाशाश्रयं मुनिम् । प्राञ्जलिर्विनयोपेत इदं वचनमर्थवत् ॥ १
अतुलं बलमेतद्वै वालिनो रावणस्य च । न त्वेताभ्यां हनुमता समं त्विति मतिर्मम ॥ २
शौर्यं दाक्ष्यं बलं धैर्यं प्राज्ञता नयसाधनम् । विक्रमश्च प्रभावश्च हनूमति कृतालयाः ॥ ३
दृष्ट्वैव सागरं वीक्ष्य सीदन्तीं कपिवाहिनीम् । समाश्वास्य महाबाहुर्योजनानां शतं प्लुतः ॥ ४
धर्षयित्वा पुरीं लङ्कां रावणान्तःपुरं तदा । दृष्ट्वा संभाषिता चापि सीता ह्याश्वासिता तथा ॥५
सेनाग्रगा मन्त्रिसुताः किंकरा रावणात्मजः । एते हनुमता तत्र ह्येकेन विनिपातिताः ॥ ६
भूयो बन्धाद्विमुक्तेन भीषयित्वा दशाननम् । लङ्का भस्मीकृता येन पावकेनेव मेदिनी ॥ ७
न कालस्य न शक्रस्य न विष्णोर्वित्तपस्य च । कर्माणि तानि श्रूयन्ते यानि युद्धे हनूमतः ॥८
एतस्य बाहुवीर्येण लङ्का सीता च लक्ष्मणः । प्राप्ता मया जयश्चैव राज्यं मित्राणि बान्धवाः ॥
हनूमान् यदि नो न स्याद्वानराधिपतेः सखा । प्रवृत्तिमपि को वेत्तुं जानक्याः शक्तिमान् भवेत्
किमर्थं वाल्यनेनैव सुग्रीवप्रियकाम्यया । तदा वैरे समुत्पन्ने न दग्धो वीरुधो यथा ॥ ११
न हि वेदितवान् मन्ये हनूमानात्मनो बलम् । यद्दृष्टवाञ्जीवितेष्टं क्लिश्यन्तं वानराधिपम् ॥
एतन्मे भगवन् सर्वं हनूमति महामतौ । विस्तरेण यथातत्त्वं कथयामरपूजित ॥ १३
राघवस्य वचः श्रुत्वा हेतुयुक्तमृषिस्तदा । हनूमतः समक्षं तमिदं वचनमब्रवीत् ॥ १४
सत्यमेतद्रघुश्रेष्ठ यद्ब्रवीषि हनूमतः । न बले विद्यते तुल्यो न गतौ न मतौ परः ॥ १५
अमोघशापैः शापस्तु दत्तोऽस्य ऋषिभिः पुरा । न वेत्ता हि बलं येन बली सन्नरिमर्दनः ॥
बाल्येऽप्येतेन यत् कर्म कृतं राम महाबल । तन्न वर्णयितुं शक्यमिति बालतयास्य ते ॥ १७
यदि वास्ति ह्यभिप्रायस्तच्छ्रोतुं तव राघव । समाधाय मतिं राम निशामय वदाम्यहम् ॥ १८
सूर्यदत्तवरः स्वर्णः सुमेरुर्नाम पर्वतः । यत्र राज्यं प्रशास्त्यस्य केसरी नाम वै पिता ॥ १९
तस्य भार्या बभूवेष्टा ह्यञ्जनेति परिश्रुता । जनयामास तस्यां वै वायुरात्मजमुत्तमम् ॥ २०

स तया सीतया सार्धमासीनो विरराज ह। अरुन्धत्या सहासीनो वसिष्ठ इव तेजसा ॥ २३
एवं रामो मुदा युक्तः सीतां सुरसुतोपमाम्। रमयामास वैदेहीमहन्यहनि देववत् ॥ २४
तथा तयोर्विहरतोः सीताराघवयोश्चिरम्। अत्यक्रामच्छुभः कांतः शिशिरो भोगदः सदा[१] ॥२५
प्राप्तयोर्विविधान् भोगानतीतः शिशिरागमः। पूर्वाह्णे धर्मकार्याणि कृत्वा धर्मेण धर्मवित् ॥ २६
शेषं दिवसभागार्धमन्तःपुरगतोऽभवत्। सीतापि देवकार्याणि कृत्वा पौर्वाह्णिकानि वै ॥ २७
श्वश्रूणामकरोत् पूजां सर्वासामविशेषतः। अभ्यगच्छत्ततो रामं विचित्राभरणाम्बरा ॥ २८
त्रिविष्टपे सहस्राक्षमुपविष्टं यथा शची। दृष्ट्वा तु राघवः पत्नीं कल्याणेन समन्विताम् ॥ २९
प्रहर्षमतुलं लेभे साधु साध्विति चाब्रवीत्। अब्रवीच्च वरारोहां सीतां सुरसुतोपमाम् ॥ ३०
अपत्यलाभो वैदेही त्वयि मे समुपस्थितः। किमिच्छसि वरारोहे कामः किं क्रियतां तव ॥
स्मितं कृत्वा तु वैदेही रामं वाक्यमथाब्रवीत्। तपोवनानि पुण्यानि द्रष्टुमिच्छामि राघव ॥
गङ्गातीरोपविष्टानामृषीणामुग्रतेजसाम्। फलमूलाशिनां देव पादमूलेषु वर्तितुम् ॥ ३३
एष मे परमः कामो यन्मूलफलभोजिनाम्। अप्येकरात्रं[२] काकुत्स्थ निवसेयं तपोवने ॥ ३४
तथेति च प्रतिज्ञातं रामेणाक्लिष्टकर्मणा। विस्रब्धा भव वैदेही श्वो गमिष्यस्यसंशयम् ॥ ३५
एवमुक्त्वा तु काकुत्स्थो मैथिलीं जनकात्मजाम्। मध्यकक्ष्यान्तरं रामो निर्जगाम सुहृद्वृतः ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
उत्तरकाण्डे रामसीताविहारो नाम द्विचत्वारिंशः सर्गः

---

## त्रिचत्वारिंशः सर्गः

### भद्रवाक्यश्रवणम्

तत्रोपविष्टं राजानमुपासन्ते विचक्षणाः। कथानां बहुरूपाणां हास्यकाराः समन्ततः ॥ १
विजयो मधुमत्तश्च काश्यपः पिङ्गलः कुटः। सुराजः कालियो भद्रो दन्तवक्त्रः सुमागधः ॥ २
एते कथा बहुविधाः परिहाससमन्विताः। कथयन्ति स्म संहृष्टा राघवस्य महात्मनः ॥ ३
ततः कथायां कस्यांचिद्राघवः समभाषत। काः कथा नगरे भद्र वर्तन्ते विषयेषु च ॥ ४
मामाश्रितानि कान्याहुः पौरजानपदा जनाः। किं च सीतां समाश्रित्य भरतं किं च लक्ष्मणम् ॥
किं नु शत्रुघ्नमुद्दिश्य कैकेयीं किं नु मातरम्। वक्तव्यतां च राजानो नवे[३] राज्ये व्रजन्ति च ॥
एवमुक्ते तु रामेण भद्रः प्राञ्जलिरब्रवीत्। स्थिताः कथाः शुभा राजन् वर्तन्ते पुरवासिनाम् ॥
अमुं तु विजयं सौम्य दशग्रीववधार्जितम्। भूयिष्ठं स्वपुरे पौरैः कथ्यन्ते पुरुषर्षभ[४] ॥ ८
एवमुक्तस्तु भद्रेण राघवो वाक्यमब्रवीत्। कथयस्व यथातत्त्वं सर्वं निरवशेषतः ॥ ९

---

१. अस्यानन्तरम्—दशवर्षसहस्राणि गतानि सुमहात्मनोः—इति च.।
२. रात्रिं ति.।
३. वरे च. वने ति.।
४. पुरुषर्षभः च.।

शुभाशुभानि वाक्यानि यान्याहुः पुरवासिनः । श्रुत्वेदानीं शुभं कुर्यां न कुर्यामशुभानि च ॥
कथयस्व च विस्रब्धो निर्भयं विगतज्वरः । कथयन्ति यथा पौराः पापा जनपदेषु च ॥ ११
राघवेणैवमुक्तस्तु भद्रः सुरुचिरं वचः । प्रत्युवाच महाबाहुं प्राञ्जलिः सुसमाहितः ॥ १२
शृणु राजन् यथा पौराः कथयन्ति शुभाशुभम् । चत्वरापणरथ्यासु वनेषूपवनेषु च ॥ १३
दुष्करं कृतवान् रामः समुद्रे सेतुबन्धनम् । अश्रुतं पूर्वकैः कैश्चिद्देवैरपि सदानवैः ॥ १४
रावणश्च दुराधर्षो हतः सबलवाहनः । वानराश्च वशं नीता ऋक्षाश्च सह राक्षसैः ॥ १५
हत्वा च रावणं संख्ये सीतामाहृत्य राघवः । [1]अमर्षं पृष्ठतः कृत्वा स्ववेश्म पुनरानयत् ॥ १६
कीदृशं हृदये तस्य सीतासंभोगजं सुखम् । अङ्कमारोप्य तु पुरा रावणेन बलाद्धृताम् ॥ १७
लङ्कामपि पुरा नीतामशोकवनिकां गताम् । रक्षसां वशमापन्नां कथं रामो न कुत्सते ॥ १८
अस्माकमपि दारेषु सहनीयं भविष्यति । यथा हि कुरुते राजा प्रजा तमनुवर्तते ॥ १९
एवं बहुविधा वाचो वदन्ति पुरवासिनः । नगरेषु च सर्वेषु राजञ्जनपदेषु च ॥ २०
तस्यैवं भाषितं श्रुत्वा राघवः परमार्तवत्[2] । उवाच सुहृदः सर्वान् कथमेतद्ब्रवीथ माम् ॥ २१
सर्वे तु शिरसा भूमावभिवाद्य प्रणम्य च । प्रत्यूचू राघवं दीनमेवमेतन्न संशयः ॥ २२
श्रुत्वा तु वाक्यं काकुत्स्थः सर्वेषां समुदीरितम् । विसर्जयामास तदा वयस्याञ्शत्रुसूदनः ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
उत्तरकाण्डे भद्रवाक्यश्रवणं नाम त्रिचत्वरिंशः सर्गः

---

## चतुश्चत्वारिंशः सर्गः

### लक्ष्मणाद्यानयनम्

विसृज्य तु सुहृद्वर्गं बुद्ध्या निश्चित्य राघवः । समीपे द्वाःस्थमासीनमिदं वचनमब्रवीत् ॥ १
शीघ्रमानय सौमित्रिं लक्ष्मणं शुभलक्षणम् । भरतं च महाभागं शत्रुघ्नमपराजितम् ॥ २
रामस्य वचनं श्रुत्वा द्वाःस्थो मूर्ध्नि कृताञ्जलिः । लक्ष्मणस्य गृहं गत्वा प्रविवेशानिवारितः ॥३
उवाच सुमहात्मानं वर्धयित्वा कृताञ्जलिः । द्रष्टुमिच्छति राजा त्वां गम्यतां तत्र मा चिरम् ॥
बाढमित्येव सौमित्रिः श्रुत्वा राघवशासनम् । प्राद्रवद्रथमारुह्य राघवस्य निवेशनम् ॥ ५
प्रयान्तं लक्ष्मणं दृष्ट्वा द्वाःस्थो भरतमन्तिकात् । उवाच भरतं तत्र वर्धयित्वा कृताञ्जलिः ॥ ६
विनयावनतो भूत्वा राजा त्वां द्रष्टुमिच्छति । भरतस्तु वचः श्रुत्वा द्वाःस्थाद्रामसमीरितम् ॥
उत्पपातासनात्तूर्णं पद्भ्यामेव ययौ बली । दृष्ट्वा प्रयान्तं भरतं त्वरमाणः कृताञ्जलिः ॥ ८
शत्रुघ्नभवनं गत्वा ततो वाक्यमुवाच ह । एह्यागच्छ रघुश्रेष्ठ राजा त्वां द्रष्टुमिच्छति ॥ ९

---

1. क्रोधं इति तिलकः, अभिमानं इति युज्यते अर्थः ।

2. आर्तवत् दुःखीवाकारं कृत्वा, वस्तुतो भगवति हर्षदुःखयोरभावात् इति तिलकः ।

गतो हि लक्ष्मणः पूर्वं भरतश्च महायशाः । श्रुत्वा तु वचनं तस्य शत्रुघ्नः परमासनात् ॥ १०
शिरसा वन्द्य धरणीं प्रययौ यत्र राघवः । द्वाःस्थस्त्वागम्य रामाय सर्वानेव कृताञ्जलिः ॥ ११
निवेदयमास तदा भ्रातॄन् स्वान् समुपस्थितान् । कुमारानागताञ्श्रुत्वा चिन्ताव्याकुलितेन्द्रियः॥
अवाङ्मुखो दीनमना द्वाःस्थं वचनमब्रवीत् । प्रवेशय कुमारांस्त्वं मत्समीपं त्वरान्वितः ॥ १३
एतेषु जीवितं मह्यमेते प्राणाः प्रिया मम । आज्ञप्तास्तु नरेन्द्रेण कुमाराः शुक्रतेजसः ॥ १४
प्रह्वाः प्राञ्जलयो भूत्वा विविशुस्ते समाहिताः । ते तु दृष्ट्वा मुखं तस्य सग्रहं शशिनं यथा ॥
सन्ध्यागतमिवादित्यं प्रभया परिवर्जितम् । बाष्पपूर्णे च नयने दृष्ट्वा रामस्य धीमतः ॥ १६
हतशोभं यथा पद्मं मुखं वीक्ष्य च तस्य ते । ततोऽभिवाद्य त्वरिताः पादौ रामस्य मूर्धभिः ॥
तस्थुः समाहिताः सर्वे रामस्त्वश्रूण्यवर्तयत् । तान् परिष्वज्य बाहुभ्यामुत्थाप्य च महाबलः ॥
आसनेष्वासतेत्युक्त्वा ततो वाक्यं जगाद ह । भवन्तो मम सर्वस्वं भवन्तो जीवितं मम ॥१९
भवद्भिश्च कृतं राज्यं पालयामि नरेश्वराः । भवन्तः कृतशास्त्रार्था बुद्ध्या च परिनिष्ठिताः ॥२०
संभूय च मदर्थोऽयमन्वेष्टव्यो नरेश्वराः । तथा वदति काकुत्स्थे ह्यवधानपरायाणाः ॥ २१
उद्विग्नमनसः सर्वे किं नु राजाभिधास्यति ॥

इत्यार्षे श्रीमद्रामायाणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
उत्तरकाण्डे लक्ष्मणाद्यानयनं नाम चतुश्चत्वारिंशः सर्गः

---

## पञ्चचत्वारिंशः सर्गः

### सीतासमुत्सर्गादेशः

तेषां समुपविष्टानां सर्वेषां दीनचेतसाम् । उवाच वाक्यं काकुत्स्थो मुखेन परिशुष्यता ॥ १
सर्वे शृणुत भद्रं वो मा कुरुध्वं मनोऽन्यथा । पौराणां मम सीतायां यादृशी वर्तते कथा ॥ २
पौरापवादः सुमहांस्तथा जनपदस्य च । वर्तते मयि बीभत्सा सा मे मर्माणि कृन्तति ॥ ३
अहं किल कुले जात इक्ष्वाकूणां महात्मनाम् । सीतापि सत्कुले जाता जनकानां महात्मनाम् ॥
जानासि त्वं यथा सौम्य दण्डके विजने वने । रावणेन हृता सीता स च विध्वंसितो मया ॥५
तत्र मे बुद्धिरुत्पन्ना जनकस्य सुतां प्रति । अत्रोषितामिमां सीतामानयेयं कथं पुरीम् ॥ ६
प्रत्ययार्थं ततः सीता विवेश ज्वलनं तदा । प्रत्यक्षं तत्र सौमित्रे देवानां हव्यवाहनः ॥ ७
अपापां मैथिलीमाह वायुश्चाकाशगोचरः । चन्द्रादित्यौ च शंसेते सुराणां सन्निधौ पुरा ॥ ८
ऋषीणां चैव सर्वेषामपापां जनकात्मजाम् । एवं शुद्धसमाचारा देवगन्धर्वसन्निधौ ॥ ९
लङ्काद्वीपे महेन्द्रेण मम हस्ते निवेशिता[1] । अन्तरात्मा च मे वेत्ति सीतां शुद्धां यशस्विनीम् ॥
ततो गृहीत्वा वैदेहीमयोध्यामहमागतः । अयं तु मे महान् वादः शोकश्च हृदि वर्तते ॥ ११
पौरापवादः सुमहांस्तथा जनपदस्य च । अकीर्तिर्यस्य गीयेत लोके भूतस्य कस्यचित् ॥ १२

---

१. निवेदिना. ति. ।

पतत्येवाधमाँल्लोकान् यावच्छब्दः प्रकीर्त्यते । अकीर्तिर्निन्द्यते देवैः कीर्तिर्लोकेषु पूज्यते ॥१३
कीर्त्यर्थं तु समारम्भः सर्वेषां सुमहात्मनाम् । अप्यहं जीवितं जह्यां युष्मान् वा पुरुषर्षभाः ॥
अपवादभयाद्भीतः किं पुनर्जनकात्मजाम् । तस्माद्भवन्तः पश्यन्तु पतितं शोकसागरे ॥ १५
न हि पश्याम्यहं भूतं किंचिद्दुःखमतोऽधिकम् । श्वस्त्वं प्रभाते सौमित्रे सुमन्त्राधिष्ठितं रथम् ॥
आरुह्य सीतामारोप्य विषयान्ते समुत्सृज । गङ्गायास्तु परे पारे वाल्मीकेस्तु महात्मनः ॥१७
आश्रमो दिव्यसंकाशस्तमसातीरमाश्रितः । तत्रैनां विजने देशे विसृज्य रघुनन्दन ॥ १८
शीघ्रमागच्छ भद्रं ते कुरुष्व वचनं मम । न चास्मिन् प्रतिवक्तव्यः सीतां प्रति कथंचन ॥१९
तस्मात्त्वं गच्छ सौमित्रे नात्र कार्या विचारणा । अप्रीतिर्हि परा मह्यं त्वय्येतत् प्रतिवारिते ॥२०
शापिता हि मया यूयं भुजाभ्यां जीवितेन च । ये मां वाक्यान्तरे ब्रूयुरनुनेतुं कथंचन ॥ २१
अहिता नाम ते नित्यं मदभीष्टविघातनात् । मानयन्तु भवन्तो मां यदि मच्छासने स्थिताः ॥
इतोऽद्य नीयतां सीता कुरुष्व वचनं मम । पूर्वमुक्तोऽहमनया गङ्गातीरेऽहमाश्रमान् ॥ २३
पश्येयमिति तस्याश्च कामः संवर्त्यतामयम् । एवमुक्त्वा तु काकुत्स्थो बाष्पेण पिहितानन:[1] ॥
प्रविवेश स धर्मात्मा भ्रातृभिः परिवारितः । शोकसंलग्नहृदयो निशश्वास यथा द्विपः ॥ २५

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
उत्तरकाण्डे सीतासमुत्सर्गादेशो नाम पञ्चचत्वारिंशः सर्गः

---

## षट्चत्वारिंशः सर्गः

### सीतागङ्गातीरनयनम्

ततो रजन्यां व्युष्टायां लक्ष्मणो दीनचेतनः । सुमन्त्रमब्रवीद्वाक्यं मुखेन परिशुष्यता ॥ १
सारथे तुरगाञ्शीघ्रं योजयस्व रथोत्तमे । स्वास्तीर्णं राजभवनात् सीतायाश्चासनं कुरु ॥ २
सीता हि राजवचनादाश्रमं पुण्यकर्मणाम् । मया नेया महर्षीणां शीघ्रमानीयतां रथः ॥ ३
सुमन्त्रस्तु तथेत्युक्त्वा युक्तं परमवाजिभिः । रथं सुरुचिरप्रख्यं स्वास्तीर्णं सुखशय्यया ॥ ४
आनीयोवाच सौमित्रिं मित्राणां मानवर्धनम् । रथोऽयं समनुप्राप्तो यत् कार्यं क्रियतां प्रभो ॥५
एवमुक्तः सुमन्त्रेण राजवेश्मनि लक्ष्मणः । प्रविश्य सीतामासाद्य व्याजहार नरर्षभः ॥ ६
त्वया किलैष नृपतिर्वरं वै याचितः प्रभुः । नृपेण च प्रतिज्ञातमाज्ञप्तश्चाश्रमं प्रति ॥ ७
गङ्गातीरे मया देवि ऋषीणामाश्रमाञ्शुभान् । शीघ्रं गत्वा तु वैदेहि शासनात् पार्थिवस्य नः ॥
अरण्ये मुनिभिर्जुष्टे अपनेया भविष्यसि । एवमुक्ता तु वैदेही लक्ष्मणेन महात्मना ॥ ९
प्रहर्षमतुलं लेभे गमनं चाप्यरोचयत् । वासांसि च महार्हाणि रत्नानि विविधानि च ॥ १०
गृहीत्वा तानि वैदेही गमनायोपचक्रमे । इमानि मुनिपत्नीनां दास्याम्याभरणान्यहम् ॥ ११
वस्त्राणि च महार्हाणि धनानि विविधानि च । सौमित्रिस्तु तथेत्युक्त्वा रथमारोप्य मैथिलीम् ॥

1. पिहितेक्षणः ति• ।

प्रययौ शीघ्रतुरगै रामस्याज्ञामनुस्मरन्। अब्रवीच्च तदा सीता लक्ष्मणं लक्ष्मिवर्धनम् ॥ १३
अशुभानि बहून्येव पश्यामि रघुनन्दन। नयनं मे स्फुरत्यद्य गात्रोत्कम्पश्च जायते ॥ १४
हृदयं चैव सौमित्रे अस्वस्थमिव लक्षये। औत्सुक्यं परमं चापि अधृतिश्च परा मम ॥ १५
शून्यामेव च पश्यामि पृथिवीं पृथुलोचन। अपि स्वस्ति भवेत्तस्य भ्रातुस्ते भ्रातृवत्सल ॥ १६
श्वश्रूणां चैव मे वीर सर्वासामविशेषतः। पुरे जनपदे चैव कुशलं प्राणिनामपि ॥ १७
इत्यञ्जलिकृता[1] सीता देवता अभ्ययाचत। लक्ष्मणोऽर्थं तु तं श्रुत्वा शिरसावन्द्य मैथिलीम् ॥
शिवमित्यब्रवीद्धृष्टो हृदयेन विशुष्यता। ततो वासमुपागम्य गोमतीतीर आश्रमे ॥ १९
प्रभाते पुनरुत्थाय सौमित्रिः सूतमब्रवीत्। योजयस्व रथं शीघ्रमद्य भागीरथीजलम् ॥ २०
शिरसा धारयिष्यामि त्र्यम्बकः पर्वते यथा[१]। सोऽश्वान् रज्ज्वाथ चतुरो रथे युङ्क्त्वा मनोजवान् ॥
आरोहस्वेति वैदेहीं सूतः प्राञ्जलिरब्रवीत्। सा तु सूतस्य वचनादारुरोह रथोत्तमम् ॥ २२
सीता सौमित्रिणा सार्धं सुमन्त्रेण च धीमता। आससाद विशालाक्षी गङ्गां पापविनाशिनीम् ॥
अथार्धदिवसं गत्वा भागीरथ्या जलाशयम्। निरीक्ष्य लक्ष्मणो दीनः प्ररुरोद महास्वनः ॥२४
सीता तु परमायत्ता दृष्ट्वा लक्ष्मणमातुरम्। उवाच वाक्यं धर्मज्ञा किमिदं रुद्यते त्वया ॥ २५
जाह्नवीतीरमासाद्य चिराभिलषितं मम। हर्षकाले किमर्थं मां विषादयसि लक्ष्मण ॥ २६
नित्यं त्वं रामपार्श्वेषु वर्तसे पुरुषर्षभ। कच्चिद्विनाकृतस्तेन द्विरात्रं शोकमागतः ॥ २७
ममापि दयितो रामो जीवितादपि लक्ष्मण। न चाहमेवं शोचामि मैवं त्वं बालिशो भव ॥२८
तारयस्व च मां गङ्गां दर्शयस्व च तापसान्। ततो मुनिभ्यो दास्यामि वासांस्याभरणानि च ॥
ततः कृत्वा महर्षीणां यथावदभिवादनम्। तत्र चैकां निशामुष्य यास्यामस्तां पुरीं पुनः ॥ ३०
ममापि पद्मपत्राक्षं सिंहोरस्कं कृशोदरम्। त्वरते हि मनो द्रष्टुं रामं रमयतां वरम् ॥ ३१
तस्यास्तद्वचनं श्रुत्वा प्रमृज्य नयने शुभे। नाविकानाह्वयामास लक्ष्मणः परवीरहा ॥ ३२
इयं च सज्जा नौश्चेति दाशाः प्राञ्जलयोऽब्रुवन्। तितीर्षुर्लक्ष्मणो गङ्गां शुभां नावमुपारुहत् ॥
गङ्गां संतारयामास लक्ष्मणस्तां समाहितः ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
उत्तरकाण्डे सीतागङ्गातीरनयनं नाम षट्चत्वारिंशः सर्गः

---

## सप्तचत्वारिंशः सर्गः

### रामशासनकथनम्

अथ नावं सुविस्तीर्णां नैषादीं राघवानुजः। आरुरोह समायुक्तां पूर्वमारोप्य मैथिलीम् ॥ १
सुमन्त्रं चैव सरथं स्थीयतामिति लक्ष्मणः। उवाच शोकसंतप्तः प्रयाहीति च नाविकम् ॥ २
ततस्तीरमुपागम्य भागीरथ्याः स लक्ष्मणः। उवाच मैथिलीं वाक्यं प्राञ्जलिर्बाष्पसंप्लुतः ॥ ३

1. कृताञ्जलिः इत्यर्थः। १. त्रियम्बक इवौजसा ति.।

हृद्गतं मे महच्छल्यं यस्मादार्येण धीमता । अस्मिन्निमित्ते वैदेहि लोकस्य वचनीकृतः ॥ ४
श्रेयो हि मरणं मेऽद्य मृत्युर्वा यत्परं भवेत् । न चास्मिन्नीदृशे कार्ये नियोज्यो लोकनिन्दिते ॥
प्रसीद च न मे पापं कर्तुमर्हसि शोभने । इत्यञ्जलिकृतो भूमौ निपपात स लक्ष्मणः ॥ ६
रुदन्तं प्राञ्जलिं दृष्ट्वा काङ्क्षन्तं मृत्युमात्मनः । मैथिली भृशसंविग्ना लक्ष्मणं वाक्यमब्रवीत् ॥
किमिदं नावगच्छामि ब्रूहि तत्त्वेन लक्ष्मण । पश्यामि त्वां न च स्वस्थमपि क्षेमं महीपतेः ॥८
शापितोऽसि नरेन्द्रेण यत्त्वं संतापमागतः । तद्ब्रूयाः संनिधौ मह्यमहमाज्ञापयामि ते ॥ ९
वैदेह्या चोद्यमानस्तु लक्ष्मणो दीनचेतनः । अवाङ्मुखो बाष्पकलं वाक्यमेतदुवाच ह ॥ १०
श्रुत्वा परिषदो मध्ये ह्यपवादं सुदारुणम् । पुरे जनपदे चैव त्वत्कृते जनकात्मजे ॥ ११
रामः संतप्तहृदयो मां निवेद्य गृहं गतः । न तानि वचनीयानि मया देवि तवाग्रतः ॥ १२
यानि राज्ञा हृदि न्यस्तान्यमर्षात् पृष्ठतः कृतः । सा त्वं त्यक्ता नृपतिना निर्दोषा मम सन्निधौ॥
पौरापवादभीतेन ग्राह्यं देवि न तेऽन्यथा । आश्रमान्तेषु च मया त्यक्तव्या त्वं भविष्यसि ॥
राज्ञः शासनमाज्ञाय तवेदं किल दौर्हृदम् । तदेतज्जाह्नवीतीरे ब्रह्मर्षीणां तपोवनम् ॥ १५
पुण्यं च रमणीयं च मा विषादं कृथाः शुभे । राज्ञो दशरथस्येष्टः पितुर्मे मुनिपुङ्गवः ॥ १६
सखा परमको विप्रो वाल्मीकिः सुमहायशाः । पादच्छायामुपागम्य सुखमस्य महात्मनः॥ १७
उपवासपरैकाग्रा वस त्वं जनकात्मजे । पतिव्रतात्वमास्थाय रामं कृत्वा सदा हृदि ॥ १८
श्रेयस्ते परमं देवि तथा कृत्वा भविष्यति ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
उत्तरकाण्डे रामशासनकथनं नाम सप्तचत्वारिंशः सर्गः

---

## अष्टचत्वारिंशः सर्गः

### सीतापरित्यागः

लक्ष्मणस्य वचः श्रुत्वा दारुणं जनकात्मजा । परं विषादमागम्य वैदेही निपपात ह ॥ १
सा मुहूर्तमिवासंज्ञा बाष्पपर्याकुलेक्षणा । लक्ष्मणं दीनया वाचा उवाच जनकात्मजा ॥ २
मामिकेयं तनुर्नूनं सृष्टा दुःखाय लक्ष्मण । धात्रा यस्यास्तथा मेऽद्य दुःखमूर्तिः प्रदृश्यते ॥ ३
किं नु पापं कृतं पूर्वं को वा दारैर्वियोजितः । याहं शुद्धसमाचारा त्यक्ता नृपतिना सती ॥४
पुराहमाश्रमे वासं रामपादानुवर्तिनी । अनुरुध्यापि सौमित्रे दुःखे च परिवर्तिनी ॥ ५
सा कथं ह्याश्रमे सौम्य वत्स्यामि विजनीकृता । आख्यास्यामि च कस्याहं दुःखं दुःखपरायणा ॥
किं नु वक्ष्यामि मुनिषु कर्म वासत् कृतं च[1] किम् । कस्मिंश्चित् कारणे त्यक्ता राघवेण महात्मना ॥
न खल्वद्यैव सौमित्रे जीवितं जाह्नवीजले । त्यजेयं राजवंशस्तु भर्तुर्मे परिहास्यते ॥ ८
यथाज्ञं कुरु सौमित्रे त्यैज्य[2] मां दुःखभागिनीम् । निदेशे स्थीयतां राज्ञः शृणु चेदं वचो मम ॥

१. प्रभो. ति. । २. त्यज. प्र. ।

श्वश्रूणामविशेषेण प्राञ्जलिप्रग्रहेण च। शिरसा वन्द्य चरणौ कुशलं ब्रूहि पार्थिवम् ॥ १०
शिरसाभिनतो ब्रूयाः सर्वासामेव लक्ष्मण। वक्तव्यश्चापि नृपतिर्धर्मेषु सुसमाहितः ॥ ११
जानासि च यथा शुद्धा सीता तत्त्वेन राघव। भक्त्या च परया युक्ता हिता च तव नित्यशः ॥
अहं त्यक्ता [१]त्वया वीर अयशोभीरुणा जने। यच्च ते वचनीयं स्यादपवादसमुत्थितम् ॥ १३
मया हि परिहर्तव्यं त्वं हि मे परमा गतिः। वक्तव्यश्चेति नृपतिर्धर्मेण सुसमाहितः ॥ १४
तथा भ्रातृषु वर्तेथास्तथा पौरेषु नित्यदा। परमो ह्येष धर्मस्ते तस्मात् कीर्तिरनुत्तमा ॥ १५
यत्तु पौरजनो राजन् धर्मेण समवाप्नुयात्। अहं तु नानुशोचामि स्वशरीरं नरर्षभ ॥ १६
यथापवादं पौराणां तथैव रघुनन्दन। पतिर्हि देवता नार्याः पतिर्बन्धुः पतिर्गुरुः ॥ १७
प्राणैरपि प्रियं तस्माद्भर्तुः कार्यं विशेषतः। इति मद्वचनाद्रामो वक्तव्यो मम संग्रहः[1] ॥ १८
निरीक्ष्य माद्य गच्छ त्वमृतुकालातिवर्तिनीम्। एवं ब्रुवत्यां सीतायां लक्ष्मणो दीनचेतनः ॥
शिरसावन्द्य धरणीं व्याहर्तुं न शशाक ह। प्रदक्षिणं च तां कृत्वा रुदन्नेव महास्वनः ॥ २०
ध्यात्वा मुहूर्तं तामाह किं मां वक्ष्यसि शोभने। दृष्टपूर्वं न ते रूपं पादौ दृष्टौ तवानघे ॥ २१
कथमत्र हि पश्यामि रामेण रहितां वने। इत्युक्त्वा तां नमस्कृत्य पुनर्नावमुपारुहत् ॥ २२
आरुह्य च पुनर्नावं नाविकं चाभ्यचोदयत्। स गत्वा चोत्तरं तीरं शोकभारसमन्वितः ॥ २३
संमूढ इव दुःखेन रथमध्यारुहद्द्रुतम्। मुहुर्मुहः परावृत्य दृष्ट्वा सीतामनाथवत् ॥ २४
चेष्टन्तीं परतीरस्थां लक्ष्मणः प्रययावथ। दूरस्थं रथमालोक्य लक्ष्मणं च मुहुर्मुहुः ॥ २५
निरीक्षमाणां तूद्विग्नां सीतां शोकः समाविशत् ॥

सा दुःखभारावनता यशस्विनी यशोधना[२] नाथमपश्यती सती।
रुरोद स बर्हिणनादिते वने महास्वनं दुःखपरायणा सती ॥ २६

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
उत्तरकाण्डे सीतापरित्यागो नाम अष्टचत्वरिंशः सर्गः

---

## एकोनपञ्चाशः सर्गः

### वाल्मीक्याश्रमप्रवेशः

सीतां रुदन्तीं दृष्ट्वा [३]तां तत्र वै मुनिदारकाः। प्राद्रवन् यत्र भगवानास्ते वाल्मीकिरुग्रधीः ॥
अभिवाद्य मुनेः पादौ मुनिपुत्रा महर्षये। सर्वं निवेदयामासुस्तस्यास्तु रुदितस्वनम् ॥ २
अदृष्टपूर्वा भगवन् कस्याप्येषा महात्मनः। पत्नी श्रीरिव संमोहाद्विरौति विकृतानना ॥ ३
भगवन् साधु पश्य त्वं देवतामिव खाच्च्युताम्। नद्यास्तु तीरे भगवन् वरस्त्री कापि दुःखिता ॥
दृष्ट्वास्माभिः प्ररुदिता दृढं शोकपरायणा। अनर्हा दुःखशोकाभ्यामेका दीना ह्यनाथवत् ॥ ५

---

1. सन्देशस्येति शेषः।
२. धरा ति.।
१. चते ति.।
३. ते ति.।

न ह्येनां मानुषीं विद्मः सत्क्रियास्याः प्रयुज्यताम् । आश्रमस्याविदूरे च त्वामियं शरणं गता ॥
त्रातारमिच्छते साध्वी भगवंस्त्रातुमर्हसि । तेषां तु वचनं श्रुत्वा बुद्ध्या निश्चित्य धर्मवित् ॥ ७
तपसा लब्धचक्षुष्मान् प्राद्रवद्यत्र मैथिली । तं प्रयान्तमभिप्रेत्य शिष्या ह्येनं महामतिम् ॥ ८
तं तु देशमभिप्रेत्य किंचित् पद्भ्यां महामतिः । अर्घ्यमादाय रुचिरं जाह्नवीतीरमागमत् ॥ ९
ददर्श राघवस्येष्टां सीतां पत्नीमनाथवत्[1] । तां सीतां शोकभारार्तां वाल्मीकिर्मुनिपुङ्गवः ॥ १०
उवाच मधुरां वाणीं ह्लादयन्निव तेजसा । स्नुषा दशरथस्य त्वं रामस्य महषी प्रिया ॥ ११
जनकस्य सुता राज्ञः स्वागतं ते पतिव्रते । आयान्ती चासि विज्ञाता मया धर्मसमाधिना ॥
कारणं चैव सर्वं मे हृदयेनोपलक्षितम् । तव चैव महाभागे विदितं मम तत्त्वतः ॥ १३
सर्वं च विदितं मह्यं त्रैलोक्ये यद्धि वर्तते । अपापां वेद्मि सीते [2]त्वां तपोलब्धेन चक्षुषा ॥ १४
विस्रब्धा भव वैदेहि सांप्रतं मयि वर्तसे । आश्रमस्याविदूरे मे तापस्यस्तपसि स्थिताः ॥ १५
तास्त्वां वत्से यथा वत्सं पालयिष्यन्ति नित्यशः । इदमर्घ्यं प्रतीच्छ त्वं विस्रब्धा विगतज्वरा ॥
यथा स्वगृहमभ्येत्य विषादं चैव मा कृथाः । श्रुत्वा तु भाषितं सीता मुनेः परममद्भुतम् ॥
शिरसावन्द्य चरणौ तथेत्याह कृताञ्जलिः । तं प्रयान्तं मुनिं सीता प्राञ्जलिः पृष्ठतोऽन्वगात् ॥
तं दृष्ट्वा मुनिमायान्तं वैदेह्या मुनिपत्नयः । उपाजग्मुर्मुदा युक्ता वचनं चेदमब्रुवन् ॥ १९
स्वागतं ते मुनिश्रेष्ठ चिरस्यागमनं च ते । अभिवादयामस्त्वां सर्वा उच्यतां किं च कुर्महे ॥ २०
तासां तद्वचनं श्रुत्वा वाल्मीकिरिदमब्रवीत् । सीतेयं समनुप्राप्ता पत्नी रामस्य धीमतः ॥ २१
स्नुषा दशरथस्यैषा जनकस्य सुता सती । अपापा पतिना त्यक्ता परिपाल्या मया सदा ॥ २२
इमां भवत्यः पश्यन्तु स्नेहेन परमेण हि । गौरवान्मम वाक्याच्च पूज्या वोऽस्तु विशेषतः ॥ २३
मुहुर्मुहुश्च वैदेहीं प्रणिधाय महायशाः । स्वमाश्रमं शिष्यवृतः पुनरायान्महातपाः ॥ २४

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
उत्तरकाण्डे वाल्मीक्याश्रमप्रवेशो नाम एकोनपञ्चाशः सर्गः

---

## पञ्चाशः सर्गः

### सुमन्त्ररहस्यकथनम्

दृष्ट्वा तु मैथिलीं सीतामाश्रमे संप्रवेशिताम् । संतापमगमद्घोरं लक्ष्मणो दीनचेतनः ॥ १
अब्रवीच्च महातेजाः सुमन्त्रं मन्त्रसारथिम् । सीतासंतापजं दुःखं पश्य रामस्य सारथे ॥ २
ततो दुःखतरं किं नु राघवस्य भविष्यति । पत्नीं शुद्धसमाचारां विसृज्य जनकात्मजाम् ॥ ३
व्यक्तं दैवादहं मन्ये राघवस्य विनाभवम् । वैदेह्या सारथे नित्यं दैवं हि दुरतिक्रमम् ॥ ४
यो हि देवान् सगन्धर्वानसुरान् सह राक्षसैः । निहन्याद्राघवः क्रुद्धः स दैवमनुवर्तते[3] ॥ ५

१. नह्येनामित्यारभ्य एतदन्तं ति. न दृश्यते । ३. पर्युपासते ति. ।
२. ते ति. ।

पुरा रामः पितुर्वाक्याद्दण्टके विजने वने । उषित्वा नव वर्षाणि पञ्च चैव महावने ॥ ६
ततो दुःखतरं भूयः सीतया विप्रवासनम् । पौराणां वचनं श्रुत्वा नृशंसं प्रतिभाति मे ॥ ७
को नु धर्माश्रया सूत कर्मण्यस्मिन् यशोहरे । मैथिलीं प्रति संप्राप्तः पौरैर्हीनार्थवादिभिः ॥ ८
एता वाचो बहुविधाः श्रुत्वा लक्ष्मणभाषिताः । सुमन्त्रः श्रद्धया प्राज्ञो वाक्यमेतदुवाच ह ॥
न संतापस्त्वया कार्यः सौमित्रे मैथिलीं प्रति । दृष्टमेतत् पुरा विप्रैः पितुस्ते लक्ष्मणाग्रतः ॥
भविष्यति दृढं रामो दुःखप्रायोऽपि[1] सौख्यभाक् । प्राप्स्यते च महाबाहुर्विप्रयोगं प्रियैर्ध्रुवम्[2] ॥
त्वां चैव मैथिलीं चैव शत्रुघ्नभरतावुभौ । संत्यजिष्यति धर्मात्मा कालेन महता महान् ॥ १२
इदं त्वयि न वक्तव्यं सौमित्रे भरतेऽपि वा । राज्ञो वो व्याहृतं वाक्यं दुर्वासा यदुवाच ह ॥
महाजनसमीपे च मम चैव नरर्षभ । ऋषिणा व्याहृतं वाक्यं वसिष्ठस्य च संनिधौ ॥ १४
ऋषेस्तु वचनं श्रुत्वा मामाह पुरुषर्षभः । सूत न क्वचिदेवं ते वक्तव्यं जनसन्निधौ ॥ १५
तस्याहं लोकपालस्य वाक्यं तत् सुसमाहितः । नैव जात्वनृतं कार्यमिति मे सौम्य दर्शनम् ॥
सर्वथैव न वक्तव्यं मया सौम्य तवाग्रतः । यदि ते श्रवणे श्रद्धा श्रूयतां रघुनन्दन ॥ १७
यद्यप्यहं नरेन्द्रेण रहस्यं श्रावितः पुरा । तथाप्युदाहरिष्यामि दैवं हि दुरतिक्रमम् ॥ १८
येनेदमीदृशं प्राप्तं दुःखं शोकसमन्वितम् । न त्वया भरते वाच्यं शत्रुघ्नस्यापि संनिधौ ॥ १९
तच्छ्रुत्वा भाषितं तस्य गम्भीरार्थपदं महत् । तथ्यं[3] ब्रूहीति सौमित्रिः सूतं वाक्यमथाब्रवीत् ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
उत्तरकाण्डे सुमन्त्ररहस्यकथनं नाम पञ्चाशः सर्गः

---

## एकपञ्चाशः सर्गः

### दुर्वासोवाक्यकथनम्

तथा संचोदितः सूतो लक्ष्मणेन महात्मना । तद्वाक्यमृषिणा प्रोक्तं व्याहर्तुमुपचक्रमे ॥ १
पुरा नाम्ना हि दुर्वासा अत्रेः पुत्रो महामुनिः । वसिष्ठस्याश्रमे पुण्ये [1]वार्षिक्यं समुवास ह ॥२
तमाश्रमं महातेजाः पिता ते सुमहायशाः । पुरोहितं महात्मानं दिदृक्षुरगमत् स्वयम् ॥ ३
स दृष्ट्वा सूर्यसंकाशं ज्वलन्तमिव तेजसा । उपविष्टं वसिष्ठस्य सव्यपार्श्वे महामुनिम् ॥ ४
तौ मुनी तापसश्रेष्ठौ विनीतो ह्यभिवादयत् । स ताभ्यां पूजितो राजा स्वागतेनासनेन च ॥ ५
पाद्येन फलमूलैश्च उवास मुनिभिः सह । तेषां तत्रोपविष्टानां तास्ताः सुमधुराः कथाः ॥ ६
बभूवुः परमर्षीणां मध्यादित्यगतेऽहनि । ततः कथायां कस्यांचित् प्राञ्जलिः प्रग्रहो नृपः ॥ ७
उवाच तं महात्मानमत्रेः पुत्रं तपोधनम् । भगवन् किंप्रमाणेन मम वंशो भविष्यति ॥ ८
किमायुश्च हि मे रामः पुत्राश्चान्ये किमायुषः । रामस्य च सुता ये स्युस्तेषामायुः कियद्भवेत् ॥

---

1. वर्षासु भवं चातुर्मास्यनियमम् ।     २. द्रुतं ति. ।
१. विसौख्यभाक् ति. ।     ३. कथं ति. ।

काम्यया भगवन् ब्रूहि वंशस्यास्य गतिं मम । तच्छ्रुत्वा व्याहृतं वाक्यं राज्ञो दशरथस्य च ॥
दुर्वासाः सुमहातेजा व्याहर्तुमुपचक्रमे । शृणु राजन् पुरावृत्तं तदा दैवासुरे युधि ॥ ११
दैत्याः सुरैर्भर्त्स्यमाना भृगुपत्नीं समाश्रिताः । तया दत्ताभयास्तत्र न्यवसन्नभयास्तदा ॥ १२
तया परिगृहीतांस्तान् दृष्ट्वा क्रुद्धः सुरेश्वरः । चक्रेण शितधारेण भृगुपत्न्याः शिरोऽहरत् ॥ १३
ततस्तां निहतां दृष्ट्वा पत्नीं भृगुकुलोद्वहः । शशाप सहसा क्रुद्धो विष्णुं रिपुकुलार्दनम् ॥ १४
यस्मादवध्यां मे पत्नीमवधीः क्रोधमूर्छितः । तस्मात्त्वं मानुषे लोके जनिष्यसि जनार्दन ॥ १५
तत्र पत्नीवियोगं त्वं प्राप्स्यसे बहुवार्षिकम् । शापाभिहतचेतः स स्वात्मना भावितोऽभवत्[1] ॥
अर्चयामास तं देवं भृगुः शापेन पीडितः । तपसाराधितो देवो ह्यब्रवीद्भक्तवत्सलः ॥ १७
लोकानां संप्रियार्थं तु तं शापं ग्राह्यमुक्तवान् । इति शप्तो महातेजा भृगुणा पूर्वजन्मनि ॥ १८
इहागतो हि पुत्रत्वं तव पार्थिवसत्तम । राम इत्यभिविख्यातस्त्रिषु लोकेषु मानद ॥ १९
तत्फलं प्राप्स्यते चापि भृगुशापकृतं महत् । अयोध्यायाः पती रामो दीर्घकालं भविष्यति ॥
तत्र पत्नीवियोगं च दीर्घकालं गमिष्यति[2] । सुखिनश्च समृद्धाश्च भविष्यन्त्यस्य येऽनुगाः ॥ २१
दश वर्षसहस्राणि दश वर्षशतानि च । रामो राज्यमुपासित्वा ब्रह्मलोकं गमिष्यति ॥ २२
समृद्धैश्चाश्वमेधैश्च इष्ट्वा परमदुर्जयः । राजवंशांश्च बहुशो बहून् संस्थापयिष्यति ॥ २३
द्वौ पुत्रौ तु भविष्येते सीतायां राघवस्य तु । अन्यत्र न त्वयोध्यायां सत्यमेतन्न संशयः ॥ २४
सीतायाश्च ततः पुत्रावभिषेक्ष्यति राघवः । स सर्वमखिलं राज्ञो वंशस्याह गतागतम् ॥ २५
आख्याय सुमहातेजास्तूष्णीमासीन्महामुनिः । तूष्णींभूते तदा तस्मिन् राजा दशरथो मुनौ ॥
अभिवाद्य महात्मानौ पुनरायात् पुरोत्तमम् । एतद्वचो मया तत्र मुनिना व्याहृतं पुरा ॥ २७
श्रुतं हृदि च निक्षिप्तं नान्यथा तद्भविष्यति[3] । एवं गते न संतापं कर्तुमर्हसि राघव ॥ २८
सीतार्थे राघवार्थे वा दृढो भव नरोत्तम । श्रुत्वा तु व्याहृतं वाक्यं सूतस्य परमाद्भुतम् ॥ २९
प्रहर्षमतुलं लेभे साधु साध्विति चाब्रवीत् । ततः संवदतोरेवं सूतलक्ष्मणयोः पथि ॥ ३०
अस्तमर्के गते वासं केशिन्यां[4] तावथोषतुः ।

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
उत्तरकाण्डे दुर्वासोवाक्यकथनं नाम एकपञ्चाशः सर्गः

---

१. अस्यानन्तरम्, पुनरेव ययौ शापं ऋषिदुर्मददुर्मदः । विष्णुशक्तिमविद्वान् स प्रपेदे शापमूढताम् ॥ चिरकालमसंज्ञोऽभूत् शापाद्ध[न्ध]तमसावृतः । दृष्ट्वा सप्तर्षयश्चैवं कृपां चक्रुश्च शक्तिभिः ॥ शप्तशापः पुनस्तस्थौ इदं भृगुरथाब्रवीत् । रक्षध्वं मामृषिश्रेष्ठाः शापान्मत्पुरतः स्थिताः ॥ श्रुत्वा तु भृगुवाक्यं तमाहुश्च परमर्षयः । स्तुत्यै ब्रह्मेशशक्राद्यैः स्तूयमानमहर्निशम् ॥ नारायणं प्रपद्यस्व स्तोत्रैरेव च सुव्रत । भृगुणाराधितो विष्णुरागतस्त्वरितं भृगुम् ॥ मा भैर्भृगोऽनृतं वाक्यं नाभविष्यद्द्विजस्य ते । संमोचयित्वा पापात्त्वामहमेनं गृहीतवान् ॥—इति क. ग. । एवं शापं भृगुर्दत्वा विष्णोः स्मृत्वा च वैभवम् ॥ इति च. अधिकं प्रक्षिप्तं दृश्यते ।

२. इदमर्धम् ति. च. नास्ति ।

३. सीतायाश्च ततः पुत्रावभिषेक्ष्यति राघवः । अन्यत्र न त्वयोध्यायां मुनेस्तु वचनं तथा ॥ इति एकं पद्यं अधिकं ति. ।

४. गोमत्याम् क. ।

## द्विपञ्चाशः सर्गः

### रामसमाधानम्

तत्र तां रजनीमुष्य केशिन्यां[1] रघुनन्दनः। प्रभाते पुनरुत्थाय लक्ष्मणः प्रययौ तदा १
ततोऽर्धदिवसे प्राप्ते प्रविवेश महारथः। अयोध्यां रत्नसंपूर्णां हृष्टपुष्टजनावृताम्॥ २
सौमित्रिस्तु परं दैन्यं जगाम सुमहामतिः। रामपादौ समासाद्य वक्ष्यामि किमहं गतः॥ ३
तस्यैवं चिन्तयानस्य भवनं शशिसन्निभम्। रामस्य परमोदारं पुरस्तात् समदृश्यत॥ ४
राज्ञस्तु भवनद्वारि सोऽवतीर्य नरोत्तमः[2]। अवाङ्मुखो दीनमनाः प्रविवेशानिवारितः॥ ५
स दृष्ट्वा राघवं दीनमासीनं परमासने। नेत्राभ्यामश्रुपूर्णाभ्यां ददर्शाग्रजमग्रतः॥ ६
जग्राह चरणौ तस्य लक्ष्मणो दीनचेतनः। उवाच दीनया वाचा प्राञ्जलिः सुसमाहितः॥ ७
आर्यस्याज्ञां पुरस्कृत्य विसृज्य जनकात्मजाम्। गङ्गातीरे यथोद्दिष्टे वाल्मीकेराश्रमे शुचौ॥ ८
तत्र तां च शुभाचारामाश्रमान्ते यशस्विनीम्। पुनरप्यागतो वीर पादमूलमुपासितुम्॥ ९
मा शुचः पुरुषव्याघ्र कालस्य गतिरीदृशी। त्वद्विधा न हि शोचन्ति बुद्धिमन्तो मनस्विनः॥
सर्वे क्षयान्ता निचयाः पतनान्ताः समुच्छ्रयाः। संयोगा विप्रयोगान्ता मरणान्तं च जीवितम्॥
तस्मात् पुत्रेषु दारेषु मित्रेषु च धनेषु च। नातिप्रसङ्गः कर्तव्यो विप्रयोगो हि तैर्ध्रुवम्॥ १२
शक्तस्त्वमात्मनात्मानं विनेतुं मनसैव हि। लोकान् सर्वांश्च काकुत्स्थ किं पुनः शोकमात्मनः॥
नेदृशेषु विमुह्यन्ति त्वद्विधाः पुरुषर्षभाः। अपवादः स किल ते पुनरेष्यति राघव॥ १४
यदर्थं मैथिली त्यक्ता अपवादभयान्नृप। सोऽपवादः पुरे राजन् भविष्यति न संशयः॥ १५
स त्वं पुरुषशार्दूल धैर्येण सुसमाहितः। त्यजैनां दुर्बलां बुद्धिं संतापं मा कुरुष्व ह॥ १६
एवमुक्तः स काकुत्स्थो लक्ष्मणेन महात्मना। उवाच परया प्रीत्या सौमित्रिं मित्रवत्सलः॥ १७
एवमेतन्नरश्रेष्ठ यथा वदसि लक्ष्मण। परितोषश्च मे वीर मम कार्यानुशासने॥ १८
निर्वृतिश्चागता सौम्य संतापश्च निराकृतः। भवद्वाक्यैः सुरुचिरैरनुनीतोऽस्मि लक्ष्मण॥ १९

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
उत्तरकाण्डे रामसमाधानं नाम द्विपञ्चाशः सर्गः

---

## त्रिपञ्चाशः सर्गः

### नृगशापकथनम्

लक्ष्मणस्य तु तद्वाक्यं निशम्य परमाद्भुतम्। सुप्रीतश्चाभवद्रामो वाक्यमेतदुवाच ह॥ १
दुर्लभस्त्वीदृशो बन्धुरस्मिन् काले विशेषतः। यादृशस्त्वं महाबुद्धे मम सौम्य मनोऽनुगः॥ २
यच्च मे हृदये किंचिद्वर्तते शुभलक्षण। तन्निशामय च श्रुत्वा कुरुष्व वचनं मम॥ ३
चत्वारो दिवसाः सौम्य कार्यं पौरजनस्य वै। अकुर्वाणस्य सौमित्रे तन्मे मर्माणि कृन्तति॥ ४

---

१. गोमत्याम् क.। २. रथोत्तमात् ति.।

आहूयन्तां प्रकृतयः पुरोधा मन्त्रिणस्तथा । कार्यार्थिनश्च पुरुषाः स्त्रियो वा पुरुषर्षभ ॥ ५
पौरकार्याणि यो राजा न करोति दिने दिने । संवृते नरके घोरे पतितो नात्र संशयः ॥ ६
श्रूयते हि पुरा राजा नृगो नाम महायशाः । बभूव पृथिवीपालो ब्रह्मण्यः सत्यवाक् शुचिः ॥७
स कदाचिद्गवां कोटीः सवत्साः स्वर्णभूषिताः । नृदेवो भूमिदेवेभ्यः पुष्करेषु ददौ नृपः ॥ ८
ततः सङ्गाद्गता धेनुः सवत्सा स्पर्शितानघ । ब्राह्मणस्याहिताग्नेश्च दरिद्रस्योञ्छवर्तिनः ॥ ९
स नष्टां गां क्षुधार्तो वै अन्विष्यंस्तत्र तत्र च । नापश्यत् सर्वराज्येषु संवत्सरगणान् बहून् ॥
ततः कनखलं गत्वा जीर्णवत्सां निरामयाम् । ददर्श गां स्वकां धेनुं ब्राह्मणस्य निवेशने ॥११
अथ तां नामधेयेन स्वकेनोवाच स द्विजः । आगच्छ शबलेत्येवं सा तु शुश्राव गौः स्वरम् ॥
तस्य तु स्वरमाज्ञाय क्षुधार्तस्य द्विजस्य वै । अन्वगात् पृष्ठतः सा गौर्गच्छन्तं पावकोपमम् ॥
योऽपि पालयते विप्रः सोऽपि गामन्वगाद्‌द्रुतम् । गत्वा तमृषिमाचष्ट मम गौरिति सत्वरम् ॥
स्पर्शिता राजसिंहेन मम दत्ता नृगेण ह । तयोर्ब्राह्मणयोर्वादो महानासीद्विपश्चितोः ॥ १५
विवदन्तौ ततोऽन्योन्यं दातारमभिजग्मतुः । तौ राजभवनद्वारि अप्राप्य नृगदर्शनम्[1] ॥ १६
अहोरात्राण्यनेकानि वसन्तौ क्रोधमीयतुः । ऊचतुश्च महात्मानौ तावुभौ द्विजसत्तमौ ॥ १७
क्रुद्धौ परमसंतप्तौ वाक्यं घोराभिसंहितम् । अर्थिनां कार्यसिद्ध्यर्थं यस्मात्त्वं नैषि दर्शनम् ॥
अदृश्यः सर्वभूतानां कृकलासो भविष्यसि । बहुवर्षसहस्राणि बहुवर्षशतानि च ॥ १९
[2]श्वभ्रेऽस्मिन् कृकलासो वै दीर्घकालं वसिष्यसि । उत्पत्स्यते हि लोकेऽस्मिन् यदूनां कीर्तिवर्धनः ॥
वासुदेव इति ख्यातो लोके पुरुषविग्रहः । स ते मोक्षयिता राजंस्तस्माच्छापाद्भविष्यति ॥ २१
कृता च तेन कालेन निष्कृतिस्ते भविष्यति । भारावतरणार्थं हि नरनारायणावुभौ ॥ २२
उत्पत्स्येते महावीर्यौ कलौ युग उपस्थिते । एवं तौ शापमुत्सृज्य ब्राह्मणौ विगतज्वरौ ॥ २३
तां गां हि दुर्बलां वृद्धां ददतुर्ब्राह्मणाय वै । एवं स राजा तं शापमुपभुङ्क्ते सुदारुणम् ॥२४
कार्यार्थिनां विमर्दो हि राज्ञां दोषाय कल्पते । तच्छीघ्रं दर्शनं मह्यमभिवर्तन्तु कार्यिणः ॥२५
सुकृतस्य हि कार्यस्य फलं नावैति पार्थिवः । तस्माद्गच्छ प्रतीक्षस्व सौमित्रे कार्यवाञ्जनः ॥ २६

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
उत्तरकाण्डे नृगशापकथनं नाम त्रिपञ्चाशः सर्गः

---

## चतुष्पञ्चाशः सर्गः

### नृगश्वभ्रप्रवेशः

रामस्य भाषितं श्रुत्वा लक्ष्मणः परमार्थवित् । उवाच प्राञ्जलिर्वाक्यं राघवं दीप्ततेजसम् ॥ १
अल्पापराधे काकुत्स्थ द्विजाभ्यां शाप ईदृशः । महान्नृगस्य राजर्षेर्यमदण्ड इवापरः ॥ २
श्रुत्वा तु पापसंयुक्तमात्मानं पुरुषर्षभ । किमुवाच नृगो राजा द्विजौ क्रोधसमन्वितौ ॥ ३

---

१. न प्राप्तौ नृगशासनम् च. ति. । २. श्वभ्रे त्वं कृकलीभूतो दीर्घकालं निवत्स्यसि । ति. ।

लक्ष्मणेनैवमुक्तस्तु राघवः पुनरब्रवीत् । शृणु सौम्य यथापूर्वं स राजा शापविक्षतः ॥ ४
अथाध्वनि गतौ विप्रौ विज्ञाय स नृगस्तदा । आहूय मन्त्रिणः सर्वान्नैगमान् सपुरोधसः ॥ ५
तानुवाच नृगो राजा सर्वांश्च प्रकृतीस्तथा । दुःखेन सुसमाविष्टः श्रूयतां मे समाहितैः[1] ॥ ६
नारदः पर्वतश्चैव मम दत्त्वा महद्भयम् । गतौ त्रिभुवनं भद्रौ वायुभूतावनिन्दितौ ॥ ७
कुमारोऽयं वसुर्नाम स[2] देवोऽद्याभिषिच्यताम्। श्वभ्रं च यत् सुखस्पर्शं क्रियतां शिल्पिभिर्मम ॥
यत्राहं संक्षयिष्यामि शापं ब्राह्मणनिःसृतम् । वर्षघ्नमेकं श्वभ्रं तु हिमघ्नमपरं तथा ॥ ९
ग्रीष्मघ्नं तु सुखस्पर्शमेकं कुर्वन्तु शिल्पिनः । फलवन्तश्च ये वृक्षाः पुष्पवत्यश्च या लताः ॥१०
विरोप्यन्तां बहुविधाश्छायावन्तश्च गुल्मिनः । क्रियतां रमणीयं च श्वभ्राणां सर्वतोदिशम् ॥
सुखमत्र वसिष्यामि यावत्कालस्य पर्ययः । पुष्पाणि च सुगन्धीनि क्रियन्तां तेषु नित्यशः ॥१२
परिवार्य यथा मे स्युरध्यर्धं योजनं तथा । एवं कृत्वा विधानं स संदिदेश वसुं तदा ॥ १३
धर्मनित्यः प्रजाः पुत्र क्षत्रधर्मेण पालय । प्रत्यक्षं ते यथा शापो द्विजाभ्यां मयि पातितः ॥१४
नरश्रेष्ठ सरोषाभ्यामपराधेऽपि तादृशे । मा कृथास्तनुसंतापं मत्कृतेऽपि[3] नरर्षभ ॥ १५
कृतान्तः कुशलः पुत्र येनास्मि व्यसनी कृतः । प्राप्तव्यान्येव प्राप्नोति गन्तव्यान्येव गच्छति ॥
लब्धव्यान्येव लभते दुःखानि च सुखानि च । पूर्वे जात्यन्तरे वत्स मया पापं महत् कृतम् ॥
तस्मात् प्राप्तं मया पुत्र[4] मा विषादं कुरुष्व ह । एवमुक्त्वा नृगस्तत्र सुतं राजा महायशाः ॥
श्वभ्रं जगाम सुकृतं वासाय पुरुषर्षभ ॥

एवं प्रविश्यैव नृपस्तदानीं श्वभ्रं महारत्नविभूषितं तत् ।
संपादयामास तदा महात्मा शापं द्विजाभ्यां हि रुषा विमुक्तम् ॥ १९

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
उत्तरकाण्डे नृगश्वभ्रप्रवेशो नाम चतुष्पञ्चाशः सर्गः

---

## पञ्चपञ्चाशः सर्गः

### निमिवसिष्ठशापः

एष ते नृगशापस्य विस्तरोऽभिहितो मया । यद्यस्ति श्रवणे श्रद्धा शृणुष्वेहापरां कथाम् ॥ १
एवमुक्तस्तु रामेण सौमित्रिः पुनरब्रवीत् । तृप्तिराश्चर्यभूतानां कथानां नास्ति मे नृप ॥ २
लक्ष्मणेनैवमुक्तस्तु राम इक्ष्वाकुनन्दनः । कथां परमधर्मिष्ठां व्याहर्तुमुपचक्रमे ॥ ३
आसीद्राजा निमिर्नाम इक्ष्वाकूणां महात्मनाम् । पुत्रो द्वादशमो[1] वीर्ये धर्मे च परिनिष्ठितः ॥४
स राजा वीर्यसंपन्नः पुरं देवपुरोपमम् । निवेशयामास तदा अभ्याशे गौतमस्य तु ॥ ५
पुरस्य सुकृतं नाम वैजयन्तमिति श्रुतम् । निवेशं यत्र राजर्षिर्निमिश्चक्रे महायशाः ॥ ६
तस्य बुद्धिः समुत्पन्ना निवेश्य सुमहापुरम् । यजेयं दीर्घसत्रेण पितुः प्रह्लादयंन् मनः ॥ ७

---

1. मङ् प्रत्ययः आर्षः । ३. हि ति. ।
१. समाहिताः ति. । २. चेहाद्या. ति. । ४. मयेत्यादि पुत्रेत्यन्तम् ख. नास्ति. ।

ततः पितरमामन्त्र्य इक्ष्वाकुं हि मनोः सुतम् । वसिष्ठं वरयामास पूर्वं ब्रह्मर्षिसत्तमम् ॥ ८
अनन्तरं स राजर्षिर्निमिरिक्ष्वाकुनन्दनः । अत्रिमङ्गिरसं चैव भृगुं चैव तपोधनम् ॥ ९
तमुवाच वसिष्ठस्तु निमिं राजर्षिसत्तमम् । वृतोऽहं पूर्वमिन्द्रेण अन्तरं प्रतिपालय ॥ १०
अनन्तरं महाविप्रो गौतमः प्रत्यपूरयत् । वसिष्ठोऽपि महातेजा इन्द्रयज्ञमथाकरोत् ॥ ११
निमिस्तु राजा विप्रांस्तान् समानीय नराधिपः । अयजद्धिमवत्पार्श्वे स्वपुरस्य समीपतः ॥ १२
पञ्च वर्षसहस्राणि राजा दीक्षामुपागमत् । इन्द्रयज्ञावसाने तु वसिष्ठो भगवानृषिः ॥ १३
सकाशमागतो राज्ञो हौत्रं कर्तुमनिन्दितः तदन्तरमथापश्यद्गौतमेनाभिपूरितम् ॥ १४
कोपेन महताविष्टो वसिष्ठो ब्रह्मणः सुतः । स राज्ञो दर्शनाकाङ्क्षी मुहूर्तं समुपाविशत् ॥ १५
तस्मिन्नहनि राजर्षिर्निद्रयापहृतो भृशम् । ततो मन्युर्वसिष्ठस्य प्रादुरासीन्महात्मनः ॥ १६
अदर्शनेन राजर्षेर्व्याहर्तुमुपचक्रमे । यस्मात्त्वमन्यं वृतवान् मामवज्ञाय पार्थिव ॥ १७
चेतनेन विनाभूतो देहस्तव[1] भविष्यति । ततः प्रबुद्धो राजर्षिः श्रुत्वा शापमुदाहृतम् ॥ १८
ब्रह्मयोनिमथोवाच संरम्भात्[2] क्रोधमूर्छितः । अजानतः शयानस्य क्रोधेन कलुषीकृतः ॥ १९
मुक्तवान् मयि शापाग्निं यमदण्डमिवापरम् । तस्मात्तवापि ब्रह्मर्षे चेतनेन विनाकृतः ॥ २०
देहः सुरुचिरप्रख्यो भविष्यति न संशयः ॥

इति रोषवशादुभौ तदानीमन्योन्यं शपितौ नृपद्विजेन्द्रौ ।
सहसैव बभूवतुर्विदेहौ [1]तत्तुल्याधिगतप्रभाववन्तौ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
उत्तरकाण्डे निमिवसिष्ठशापो नाम पञ्चपञ्चाशः सर्गः

---

## षट्पञ्चाशः सर्गः

### मैत्रावरुणित्वप्राप्तिः

रामस्य भाषितं श्रुत्वा लक्ष्मणः परवीरहा । उवाच प्राञ्जलिर्वाक्यं राघवं दीप्ततेजसम् ॥ १
निक्षिप्तदेहौ काकुत्स्थ कथं तौ द्विजपार्थिवौ । पुनर्देहेन संयोगं जग्मतुर्देवसंमतौ ॥ २
लक्ष्मणेनैवमुक्तस्तु रामश्चेक्ष्वाकुनन्दनः । प्रत्युवाच महातेजा लक्ष्मणं पुरुषर्षभः ॥ ३
तौ परस्परशापेन देहावुत्सृज्य धार्मिकौ । अभूतां नृपविप्रर्षी वायुभूतौ तपोधनौ ॥ ४
अशरीरः शरीरस्य कृतेऽन्यस्य महामुनिः । वसिष्ठः सुमहातेजा जगाम पितुरन्तिकम् ॥ ५
सोऽभिवाद्य ततः पादौ देवदेवस्य धर्मवित् । पितामहमथोवाच वायुभूत इदं वचः ॥ ६
भगवन्निमिशापेन विदेहत्वमुपागमम् । लोकनाथ महादेव अण्डजोऽपि त्वमब्जजः[3] ॥ ७
सर्वेषां देहहीनानां महद्दुःखं भविष्यति । लुप्यन्ते सर्वकार्याणि हीनदेहस्य वै प्रभो ॥ ८

---

1. तदिति ब्रह्मनाम, ब्रह्मणस्तुल्यतया अधिगतप्रभावौ इति ति.
२. स राजा. ति. । इति ति. पाठः ।
३. देवदेव महादेव वायुभूतोऽहं अण्डजः
१. देहस्ते पार्थिवेष्यति. ति. ।

देहस्यान्यस्य सद्भावे प्रसादं कर्तुमर्हसि । तमुवाच ततो ब्रह्मा स्वयंभूरमितप्रभः ॥ ९
मित्रावरुणजं तेजः प्रविश त्वं महायशः । अयोनिजस्त्वं भविता तत्रापि द्विजसत्तम ॥ १०
धर्मेण महता युक्तः पुनरेष्यसि मे वशम् । एवमुक्तस्तु देवेन चाभिवाद्य प्रदक्षिणम् ॥ ११
कृत्वा पितामहं तूर्णं प्रययौ वरुणालयम् । तमेव कालं मित्रोऽपि वरुणत्वमकारयत् ॥ १२
क्षीरोदेन सहोपेतः पूज्यमानः सुरोत्तमैः । एतस्मिन्नेव काले तु उर्वशी परमाप्सराः ॥ १३
यदृच्छया समुद्देशमाययौ सखिभिर्वृता । तां दृष्ट्वा रूपसंपन्नां क्रीडन्तीं वरुणालये ॥ १४
आविशत् परमो हर्षो वरुणं चोर्वशीकृते । स तां पद्मपलाशाक्षीं पूर्णचन्द्रनिभाननाम् ॥ १५
वरुणो वरयामास मैथुनायाप्सरोवराम् । प्रत्युवाच ततः सा तु करुणं प्राञ्जलिः स्थिता ॥ १६
मित्रेणाहं वृता साक्षात् पूर्वमेव सुरेश्वर । वरुणस्त्वब्रवीद्वाक्यं कन्दर्पशरपीडितः ॥ १७
इदं तेजः समुत्स्रक्ष्ये कुम्भेऽस्मिन् देवनिर्मिते । एवमुत्सृज्य सुश्रोणि त्वय्यहं वरवर्णिनि ॥ १८
कृतकामो भविष्यामि यदि नेच्छसि संगमम् । तस्य तल्लोकपालस्य वरुणस्य सुभाषितम् ॥ १९
उर्वशी परमप्रीता श्रुत्वा वाक्यमुवाच ह । काममेतद्भवत्वेवं हृदयं मे त्वयि स्थितम् ॥ २०
भावश्चाभ्यधिकस्तुभ्यं देहो मित्रस्य तु प्रभो । उर्वश्या एवमुक्तस्तु रेतस्तन्महदद्भुतम् ॥ २१
ज्वलदग्निशिखाप्रख्यं तस्मिन् कुम्भे ह्यवासृजत् । उर्वशी त्वगमत्तत्र मित्रो वै यत्र देवता ॥ २२
तां तु मित्रः सुसंक्रुद्ध उर्वशीमिदमब्रवीत् । मया निमन्त्रिता पूर्वं कस्मात्त्वमवसर्जिता ॥ २३
पतिमन्यं वृतवती तस्मात्त्वं दुष्टचारिणी । अनेन दुष्कृतेन त्वं मत्क्रोधकलुषीकृता ॥ २४
मनुष्यलोकमास्थाय कंचित् कालं निवत्स्यसि । बुधस्य पुत्रो राजर्षिः काशीराजः पुरूरवाः ॥
तमद्य गच्छ दुर्बुद्धे स ते भर्ता भविष्यति । ततः सा शापदोषेण पुरूरवसमभ्यगात् ॥ २६
प्रतियातौ पुरूरवं बुधस्यात्मजमौरसम् । तस्य जज्ञे ततः श्रीमानायुः पुत्रो महाबलः ॥ २७
नहुषो यत्र पुत्रस्तु बभूवेन्द्रसमद्युतिः । वज्रमुत्सृज्य वृत्राय श्रान्तेऽथ त्रिदशेश्वरे ॥ २८
शतं वर्षसहस्राणि येनेन्द्रत्वं प्रशासितम् ॥

सा तेन शापेन जगाम भूमिं तदोर्वशी चारुदती सुनेत्रा ।
बहूनि वर्षाण्यवसच्च सुभ्रूः शापक्षयादिन्द्रसदो ययौ च ॥ २९

इत्यार्षे श्रीमद्रामायणे वाल्मीकिये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
उत्तरकाण्डे मैत्रावरुणित्वप्राप्तिर्नाम षट्पञ्चाशः सर्गः

---

## सप्तपञ्चाशः सर्गः

### निमिनिमीषीकरणम्

तां श्रुत्वा दिव्यसंकाशां कथामद्भुतदर्शनाम् । लक्ष्मणः परमप्रीतो राघवं वाक्यमब्रवीत् ॥ १
निक्षिप्तदेहौ काकुत्स्थ कथं तौ द्विजपार्थिवौ । पुनर्देहेन संयोगं जग्मतुर्देवसंमतौ ॥ २
तस्य तद्भाषितं श्रुत्वा रामः सत्यपराक्रमः । तां कथां कथयामास वसिष्ठस्य महात्मनः ॥ ३

१. तमुद्देशं इति. २. प्रतिष्ठाने पुना.. ति । ३. श्रान्ते च. ।

यस्तु कुम्भो रघुश्रेष्ठ तेजःपूर्णो महात्मनोः । तस्मिंस्तेजोमयौ विप्रौ संभूतावृषिसत्तमौ ॥ ४
पूर्वं समभवत्तत्र ह्यगस्त्यो भगवानृषिः । नाहं सुतस्तवेत्युक्त्वा मित्रं तस्मादपाक्रमत् ॥ ५
तद्धि तेजस्तु मित्रस्य उर्वश्याः पूर्वमाहितम् । तस्मिन् समभवत् कुम्भे तत्तेजो यत्र वारुणम् ॥
कस्यचित्त्वथ कालस्य मित्रावरुणसंभवः । वसिष्ठस्तेजसा युक्तो जज्ञे चेक्ष्वाकुदैवतम् ॥ ७
तमिक्ष्वाकुर्महातेजा जातमात्रमनिन्दितम् । वव्रे पुरोहितं सौम्य वंशस्यास्य भवाय नः ॥ ८
एवं त्वपूर्वदेहस्य वसिष्ठस्य महात्मनः । कथितो निर्गमः सौम्य निमेः शृणु यथा भवेत् ॥ ९
दृष्ट्वा विदेहं राजानमृषयः सर्व एव ते । तं ततो योजयामासुर्यागदीक्षां मनीषिणः ॥ १०
तं च देहं नरेन्द्रस्य रक्षन्ति स्म द्विजोत्तमाः । गन्धैर्माल्यैश्च वस्त्रैश्च पौरभृत्यसमन्विताः ॥ ११
ततो यज्ञे समाप्ते तु भृगुस्तत्रेदमब्रवीत् । आनयिष्यामि ते चेतस्तुष्टोऽस्मि तव पार्थिव ॥ १२
सुप्रीताश्च सुराः सर्वे निमेश्चेतस्तथाब्रुवन् । वरं वरय राजर्षे क्व ते चेतो निरूप्यताम् ॥ १३
एवमुक्तः सुरैः सर्वैर्निमेश्चेतस्तदाब्रवीत् । नेत्रेषु सर्वभूतानां वसेयं सुरसत्तमाः ॥ १४
बाढमित्येव विबुधा निमेश्चेतस्तदाब्रुवन् । नेत्रेषु सर्वभूतानां वायुभूतश्चरिष्यसि ॥ १५
त्वत्कृते च निमिष्यन्ति चक्षूंषि पृथिवीपते । वायुभूतेन चरता विश्रमार्थं मुहुर्मुहुः ॥ १६
एवमुक्त्वा तु विबुधाः सर्वे जग्मुर्यथागतम् । ऋषयोऽपि महात्मानो निमेर्देहं समाहरन् ॥ १७
अरणिं तत्र निक्षिप्य मथनं चक्रुरोजसा । मन्त्रहोमैर्महात्मानः पुत्रहेतोर्निमेस्तदा ॥ १८
अरण्यां मथ्यमानायां प्रादुर्भूतो महातपाः । मथनान्मिथिरित्याहुर्जननाज्जनकोऽभवत् ॥ १९
यस्माद्विदेहात् संभूतो वैदेहस्तु ततः स्मृतः । एवं विदेहराजश्च जनकः पूर्वकोऽभवत् ॥ २०
मिथिर्नाम महातेजास्तेनायं मैथिलोऽभवत् ॥

इति सर्वमशेषतो मया कथितं संभवकारणं तु सौम्य ।
नृपपुंगव शापजं द्विजस्य द्विजशापाच्च यदद्भुतम् नृपस्य[2] ॥ २१

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
उत्तरकाण्डे निमिनिमीषीकारणं नाम सप्तपञ्चाशः सर्गः

---

## अष्टपञ्चाशः सर्गः

### ययातिशापः

एवं ब्रुवति रामे तु लक्ष्मणः परवीरहा । प्रत्युवाच महात्मानं ज्वलन्तमिव तेजसा ॥ १
महदद्भुतमाश्चर्यं विदेहस्य पुरातनम् । निर्वृत्तं राजशार्दूल वसिष्ठस्य निमेः[3] सह ॥ २
निमिस्तु क्षत्त्रियः शूरो विशेषेण च दीक्षितः । न क्षमां कृतवान् राजा वसिष्ठस्य महात्मनः ॥
एवमुक्तस्तु तेनायं श्रीमान् क्षत्त्रियपुङ्गवः । उवाच लक्ष्मणं वाक्यं सर्वशास्त्रविशारदम् ॥ ४
रामो रमयतां श्रेष्ठो भ्रातरं दीप्ततेजसम् । न सर्वत्र क्षमा वीर पुरुषेषु प्रदृश्यते ॥ ५
सौमित्रे दुःसहो रोषो यथा क्षान्तो ययातिना । सत्त्वानुगं पुरस्कृत्य तं निबोध समाहितः ॥६

---

१. हिताय ति० । २. इदं पद्यम् च. नास्ति । ३. मुनेश्च ह ति. ।

नहुषस्य सुतो राजा ययातिः पौरवर्धनः। तस्य भार्याद्वयं सौम्य रूपेणाप्रतिमं भुवि॥ ७
एका तु तस्य राजर्षेर्नाहुषस्य पुरस्कृता। शर्मिष्ठा नाम दैतेयी दुहिता वृषपर्वणः॥ ८
अन्या तूशनसः पत्नी ययातेः पुरुषर्षभ। न तु सा दयिता राज्ञो देवयानी सुमध्यमा॥ ९
तयोः पुत्रौ तु संभूतौ रूपवन्तौ समाहितौ। शर्मिष्ठाजनयत् पूरुं देवयानी यदुं तदा॥ १०
पूरुस्तु दयितो राज्ञो गुणैर्मातृकृतेन च। ततो दुःखसमाविष्टो यदुर्मातरमब्रवीत्॥ ११
भार्गवस्य कुले जाता देवस्याक्लिष्टकर्मणः। सहसे हृद्गतं दुःखमवमानं च दुःसहम्॥ १२
आवां च सहितौ देवि प्रविशाव हुताशनम्। राजा तु रमतां सार्धं दैत्यपुत्र्या बहुक्षपाः॥
यदि वा सहनीयं ते मामनुज्ञातुमर्हसि। क्षम त्वं न क्षमिष्येऽहं मरिष्यामि न संशयः॥ १४
पुत्रस्य भाषितं श्रुत्वा परमार्तस्य रोदतः। देवयानी तु संक्रुद्धा सस्मार पितरं तदा॥ १५
इङ्गितं तदभिज्ञाय दुहितुर्भार्गवस्तदा। आगतस्त्वरितं तत्र देवयानी तु यत्र सा॥ १६
दृष्ट्वा चाप्रकृतिस्थां तामप्रहृष्टामचेतनाम्। पिता दुहितरं वाक्यं किमेतदिति चाब्रवीत्॥ १७
पृच्छन्तमसकृत्तं वै भार्गवं दीप्ततेजसम्। देवयानी तु संक्रुद्धा पितरं वाक्यमब्रवीत्॥ १८
अहमग्निं विषं तीक्ष्णमपो वा मुनिसत्तम। भक्षयिष्ये प्रवेक्ष्यामि[1] न तु शक्ष्यामि जीवितुम्॥ १९
न मां त्वमवजानीषे दुःखितामवमानिताम्। वृक्षस्यावज्ञया ब्रह्मन् छिद्यन्ते वृक्षजीविनः॥ २०
अवज्ञया च राजर्षिः परिभूय च भार्गव। मय्यवज्ञां प्रयुङ्क्ते हि न च मां बहु मन्यते॥ २१
तस्यास्तद्वचनं श्रुत्वा कोपेनाभिपरिप्लुतः[2]। व्याहर्तुमुपचक्राम भार्गवो नहुषात्मजम्॥ २२
यस्मान्मामवजानीषे नाहुष त्वं दुरात्मवान्। जरया परया जीर्णः शैथिल्यमुपयास्यसि॥ २३
एवमुक्त्वा दुहितरं समाश्वास्य च भार्गवः। पुनर्जगाम ब्रह्मर्षिर्भवनं स्वं महायशाः॥ २४
स एवमुक्त्वा द्विजपुङ्गवाग्र्यः सुतां समाश्वास्य च देवयानीम्॥
पुनर्ययौ सूर्यसमानतेजा दत्त्वा च शापं नहुषात्मजाय॥ २५

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
उत्तरकाण्डे ययातिशापो नाम अष्टपञ्चाशः सर्गः

---

## एकोनषष्टितमः सर्गः

### पूरुराज्याभिषेकः

श्रुत्वा तूशनसं क्रुद्धं तदार्तो नहुषात्मजः। जरां परमिकां प्राप्य यदुं वचनमब्रवीत्॥ १
यदो त्वमसि धर्मज्ञो मदर्थं प्रतिगृह्यताम्। जरां परमिकां पुत्र भोगै रंस्ये महायशः॥ २
न तावत् कृतकृत्योऽस्मि विषयेषु नरर्षभ। अनुभूय तथा कामं ततः प्राप्स्याम्यहं जराम्॥ ३
यदुस्तद्वचनं श्रुत्वा प्रत्युवाच नरर्षभम्। पुत्रस्ते दयितः पूरुः प्रतिगृह्णातु वै जराम्॥ ४
बहिष्कृतोऽहमर्थेषु संनिकर्षाच्च पार्थिव। प्रतिगृह्णातु वै राजन् कः[3] सहाश्नाति भोजनम्॥ ५
तस्य तद्वचनं श्रुत्वा राजा पूरुमथाब्रवीत्। इयं जरा महाबाहो मदर्थं प्रतिगृह्यताम्॥ ६

---

१. प्रवेक्ष्ये वा ति। २. परीवृतः ति। ३. यैः सहाश्नासि. ति।

नाहुषेणैवमुक्तस्तु पूरुः प्राञ्जलिरब्रवीत् । धन्योऽस्म्यनुगृहीतोऽस्मि शासनेऽस्मि तव स्थितः ॥
पूरोर्वचनमाज्ञाय नाहुषः परया मुदा । प्रहर्षमतुलं लेभे जरां संक्रामयच्च ताम् ॥ ८
ततः स राजा तरुणः प्राप्य यज्ञान् सहस्रशः । बहुवर्षसहस्राणि पालयामास मेदिनीम् ॥ ९
अथ दीर्घस्य कालस्य राजा पूरुमथाब्रवीत् । आनयस्व जरां पुत्र न्यासं निर्यातयस्व मे ॥ १०
न्यासभूता मया पुत्र त्वयि संक्रामिता जरा । तस्मात् प्रतिगृहीष्यामि तां जरां मा व्यथां कृथाः
प्रीतश्चास्मि महाबाहो शासनस्य प्रतिग्रहात् । त्वां चाहमभिषेक्ष्यामि प्रीतियुक्तो नराधिपम् ॥
एवमुक्त्वा सुतं पूरुं ययातिर्नहुषात्मजः । देवयानीसुतं क्रुद्धो राजा वाक्यमुवाच ह ॥ १३
राक्षसस्त्वं मया जातः पुत्ररूपो दुरासदः । प्रतिहंसि ममाज्ञां यत् प्रजार्थे विफलो भव ॥ १४
पितरं गुरुभूतं मां यस्मात्त्वमवमन्यसे । राक्षसान् यातुधानांस्त्वं जनयिष्यसि दारुणान् ॥ १५
न तु सोमकुलोत्पन्ने वंशे स्थास्यति दुर्मतेः । वंशोऽपि भवतस्तुल्यो दुर्विनीतो भविष्यति ॥१६
तमेवमुक्त्वा राजर्षिः पूरुं राज्यविवर्धनम् । अभिषेकेण संपूज्य आश्रमं प्रविवेश ह ॥ १७
ततः कालेन महता दिष्टान्तमुपजग्मिवान् । त्रिदिवं संगतो राजा ययातिर्नहुषात्मजः ॥ १८
पूरुश्चकार तद्राज्यं धर्मेण महता वृतः । प्रतिष्ठाने पुरवरे काशीराज्ये महायशाः ॥ १९
यदुस्तु जनयामास यातुधानान् सहस्रशः । पुरे क्रौञ्चवने दुर्गे राजवंशबहिष्कृतः ॥ २०
एष तूशनसा मुक्तः शापोत्सर्गो ययातिना । धारितः क्षत्रधर्मेण यन्निमिश्च न चक्षमे ॥ २१
एतत्ते सर्वमाख्यातं दर्शनं सर्वकारिणाम् । अनुवर्तामहे सौम्य दोषो न स्याद्यथा नृगे ॥ २२

इति कथयति रामे चन्द्रतुल्यानने च प्रविरलतरतारं व्योम जज्ञे तदानीम् ।
अरुणकिरणरक्ता दिग्बभौ चैव पूर्वा कुसुमरसविमुक्तं वस्त्रमाकुण्ठितेव ॥ २३

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
उत्तरकाण्डे पूरुराज्याभिषेको नाम एकोनषष्टितमः सर्गः

---

## प्रक्षिप्तेषु एकादशः सर्गः

### सारमेयावस्थानम्

ततः प्रभाते विमले कृत्वा पौर्वाह्णिकीं क्रियाम् । धर्मासनगतो राजा रामो राजीवलोचनः ॥ १ ॥
राजधर्मानवेक्षन् वै ब्राह्मणैर्नैगमैः सह । पुरोधसा वसिष्ठेन ऋषिणा कश्यपेन च ॥ २ ॥
मन्त्रिभिर्व्यवहारज्ञैस्तथान्यैर्धर्मपारगैः । नीतिज्ञैरथ सभ्यैश्च राजभिः सा सभावृता ॥ ३ ॥
सभा यथा महेन्द्रस्य यमस्य वरुणस्य च । शुशुभे राजसिंहस्य रामस्याक्लिष्टकर्मणः ॥४॥
अथ रामोऽब्रवीत्तत्र लक्ष्मणं शुभलक्षणम् । निर्गच्छ त्वं महाबाहो सुमित्रानन्दवर्धन ॥५॥
कार्यार्थिनश्च सौमित्रे व्याहर्तुं त्वमुपाक्रम । रामस्य भाषितं श्रुत्वा लक्ष्मणः शुभलक्षणः ॥६॥
द्वारदेशमुपागम्य कार्यिणश्चाह्वयत् स्वयम् । न कश्चिदब्रवीत्तत्र मम कार्यमिहाद्य वै ॥ ७ ॥
नाधयो व्याधयश्चैव रामे राज्यं प्रशासति । पक्वसस्या वसुमती सर्वौषधिसमन्विता ॥८॥ न
बालो म्रियते तत्र न युवा न च मध्यमः । धर्मेण शासितं सर्वं न च बाधा विधीयते ॥९॥

दृश्यते न च कार्यार्थी रामे राज्यं प्रशासति। लक्ष्मणः प्राञ्जलिर्भूत्वा रामायैवं न्यवेदयत् ॥१०॥ अथ रामः प्रसन्नात्मा सौमित्रिमिदमब्रवीत्। भूय एव तु गच्छ त्वं कार्यिणः प्रविचारय ॥११॥ सम्यक्प्रणीतया नीत्या नाधर्मो विद्यते क्वचित्। तस्माद्राजभयात् सर्वे रक्षन्तीव परस्परम् ॥१२॥ बाणा इव मया मुक्ता इह रक्षन्ति मे प्रजाः। तथापि त्वं महाबाहो प्रजा रक्षस्व तत्परः ॥१३॥ एवमुक्तस्तु सौमित्रिर्निर्जगाम नृपालयात्। अपश्यद्द्वारदेशे वै श्वानं तावदवस्थितम् ॥१४॥ तमेव वीक्षमाणं वै विक्रोशन्तं मुहुर्मुहुः। दृष्ट्वाथ लक्ष्मणस्तं वै पप्रच्छाथ स वीर्यवान् ॥ १५ ॥ किं ते कार्यं महाभाग ब्रूहि विस्रब्धमानसः। लक्ष्मणस्य वचः श्रुत्वा सारमेयोऽभ्यभाषत ॥१६॥ सर्वभूतशरण्याय रामायाक्लिष्टकर्मणे। भयेष्वभयदात्रे च तस्मै वक्तुं समुत्सहे ॥१७॥ एतच्छ्रुत्वा तु वचनं सारमेयस्य लक्ष्मणः। राघवाय तदाख्यातुं प्रविवेशालयं शुभम् ॥ १८ ॥ निवेद्य रामस्य पुनर्निर्जगाम नृपालयात्। वक्तव्यं यदि ते किंचित्तत्त्वं ब्रूहि नृपाय वै ॥१९॥ लक्ष्मणस्य वचः श्रुत्वा सारमेयोऽभ्यभाषत। देवागारे नृपागारे द्विजवेश्मसु वै तथा ॥२०॥ वह्निः शतक्रतुश्चैव सूर्यो वायुश्च तिष्ठति। नात्र योग्यास्तु सौमित्रे योनीनामधमा वयम् ॥२१॥ प्रवेष्टुं नात्र शक्ष्यामो धर्मो विग्रहवान्नृपः। सत्यवादी रणपटुः सर्वभूतहिते रतः ॥२२॥ षाड्गुण्यस्य पदं वेत्ति नीतिकर्ता स राघवः। सर्वज्ञः सर्वदर्शी च रामो रमयतां वरः ॥२३॥ स सोमः स च मृत्युश्च स यमो धनदस्तथा। वह्निः शतक्रतुश्चैव सूर्यो वै वरुणस्तथा ॥२४॥ तस्य त्वं ब्रूहि सौमित्रे प्रजापालः स राघवः। अनाज्ञप्तस्तु सौमित्रे प्रवेष्टुं नेच्छयाम्यहम् ॥२५॥ आनृशंस्यान्महाभागः प्रविवेश महाद्युतिः। नृपालयं प्रविश्याथ लक्ष्मणो वाक्यमब्रवीत् ॥२६॥ श्रूयतां मम विज्ञाप्यं कौसल्यानन्दवर्धन। यन्मयोक्तं महाबाहो तव शासनजं विभो ॥२७॥ श्वा वै ते तिष्ठते द्वारि कार्यार्थी समुपागतः। लक्ष्मणस्य वचः श्रुत्वा रामो वचनमब्रवीत् ॥२८॥ संप्रवेशय वै क्षिप्रं कार्यार्थी योऽत्र तिष्ठति ॥

इति प्रक्षिप्तेषु सारमेयावस्थानं नाम एकादशः सर्गः

---

## प्रक्षिप्तेषु द्वादशः सर्गः

### सर्वार्थसिद्धकौलपत्यदानम्

श्रुत्वा रामस्य वचनं लक्ष्मणस्त्वरितस्तदा। श्वानमाहूय मतिमान् राघवाय न्यवेदयत् ॥१॥ दृष्ट्वा समागतं श्वानं रामो वचनमब्रवीत्। विवक्षितार्थं मे ब्रूहि सारमेय न ते भयम् ॥२॥ अथापश्यत तत्रस्थं रामं श्वा भिन्नमस्तकः। राजा सुप्तेषु जागर्ति राजा पालयति प्रजाः ॥३॥ राजा कर्ता च गोप्ता च सर्वस्य जगतः पिता। राजा कालो युगं चैव राजा सर्वमिदं जगत् ॥४॥ नीत्या सुनीतया राजा धर्मं रक्षति रक्षिता। यदा न पालयेद्राजा क्षिप्रं नश्यन्ति वै प्रजाः ॥ ५ ॥ धारणाद्धर्ममित्याहुर्धर्मेण विधृताः प्रजाः। यस्माद्धारयते सर्वं त्रैलोक्यं सचराचरम् ॥ ६ ॥ धारणाद्विद्विषां चैव धर्मेणारञ्जयन् प्रजाः। तस्माद्धारणमित्युक्तं स धर्म इति निश्चयः ॥७॥ एष राजन् परो धर्मः फलवान् प्रेत्य राघव। न हि धर्माद्भवेत् किंचिद्दुष्प्रापमिति मे मतिः ॥८॥ दानं दया

सतां पूजा व्यवहारेषु चार्जवम्। एष राम परो धर्मो रक्षणात् प्रेत्य चेह च ॥९॥ त्वं प्रमाणं प्रमाणानामसि राघव सुव्रत। विदितश्चैव ते धर्मः सद्भिराचरितस्तु वै ॥१०॥ धर्माणां त्वं परं धाम गुणानां सागरोपमः। अज्ञानाच्च मया राजन्नुक्तस्त्वं राजसत्तम ॥११॥ प्रसादयामि शिरसा न त्वं क्रोद्धुमिहार्हसि। शुनकस्य वचः श्रुत्वा राघवो वाक्यमब्रवीत् ॥१२॥ किं ते कार्यं करोम्यद्य ब्रूहि विस्रब्ध मा चिरम्। रामस्य वचनं श्रुत्वा सारमेयोऽब्रवीदिदम् ॥१३॥ धर्मेण राष्ट्रं विन्देत धर्मेणैवानुपालयेत्। धर्माच्छरण्यतां याति राजा सर्वभयापहः ॥१४॥ इदं विज्ञाय यत् कृत्यं श्रूयतां मम राघव। भिक्षुः सर्वार्थसिद्धश्च ब्राह्मणावसथेऽवसत् ॥१५॥ तेन दत्तः प्रहारो मे निष्कारणमनागसः। एतच्छ्रुत्वा तु रामेण द्वाःस्थः संप्रेषितस्तदा ॥१६॥ आनीतश्च द्विजस्तेन सर्वसिद्धार्थकोविदः। अथ द्विजवरस्तत्र रामं दृष्ट्वा महाद्युतिः ॥१७॥ किं ते कार्यं मया राम तद्ब्रूहि त्वं ममानघ। एवमुक्तस्तु विप्रेण रामो वचनमब्रवीत् ॥१८॥ त्वया दत्तः प्रहारोऽयं सारमेयस्य वै द्विज। किं तवापकृतं विप्र दण्डेनाभिहतो यतः ॥१९॥ क्रोधः प्राणहरः शत्रुः क्रोधो मित्रमुखो रिपुः। क्रोधो ह्यसिर्महातीक्ष्णः सर्वं क्रोधोऽपकर्षति ॥२०॥ तपते यजते चैव यच्च दानं प्रयच्छति। क्रोधेन वै संहरति तस्मात् क्रोधं विसर्जयेत् ॥२१॥ इन्द्रियाणां प्रदुष्टानां हयानामिव धावताम्। कुर्वीत धृत्या सारथ्यं संहृत्येन्द्रियगोचरम् ॥२२ मनसा कर्मणा वाचा चक्षुषाच समाचरेत्। श्रेयो लोकस्य चरतो न द्वेष्टि न च लिप्यते ॥२३॥ न तत् कुर्यादसिस्तीक्ष्णः सर्पो वा व्याहतः पदा। अरिर्वा नित्यसंक्रुद्धो यथात्मा दुरनुष्ठितः ॥२४॥ विनीतविनयस्यापि प्रकृतिर्न विधीयते। प्रकृतिं गूहमानस्य निश्चये प्रकृतिर्ध्रुवम् ॥२५॥ एवमुक्तः स विप्रो वै रामेणाक्लिष्टकर्मणा। द्विजः सर्वार्थसिद्धस्तु अब्रवीद्रामसन्निधौ ॥२६॥ मया दत्तः प्रहारोऽयं क्रोधेनाविष्टचेतसा। भिक्षार्थमटमानेन काले विगतभैक्षके ॥२७॥ रथ्यास्थितः स्वयं श्वा वै गच्छ गच्छेति भाषितः। अथ स्वैरेण गच्छंस्तु रथ्यान्ते विषमं स्थितः ॥२८॥ क्रोधे तु क्षुधयाविष्टस्तदा दत्तोऽस्य राघव। प्रहारो राजराजेन्द्र शाधि मामपराधिनम् ॥२९॥ त्वया शस्तस्य राजेन्द्र नास्ति मे नरकाद्भयम्। अथ रामेण संपृष्टाः सर्व एव सभासदः ॥३०॥ किं कार्यमस्य वै ब्रूत दण्डो वै कोऽस्य पात्यताम्। सम्यक्प्रणिहिते दण्डे प्रजा भवति रक्षिता ॥३१॥ भृग्वङ्गिरसकुत्साद्या वसिष्ठश्च सकाश्यपः। धर्मपालकमुख्याश्च सचिवा नैगमास्तथा ॥३२॥ एते चान्ये च बहवः पण्डितास्तत्र संगताः। अवध्यो ब्राह्मणो दण्डैरिति शास्त्रविदो विदुः ॥३३॥ ब्रुवते राघवं सर्वे राजधर्मेषु निष्ठिताः। अथ ते मुनयः सर्वे राममेवाब्रुवंस्तदा ॥३४॥ राजा शास्ता हि सर्वस्य त्वं विशेषेण राघव। त्रैलोक्यस्य भवाञ्शास्ता देवो विष्णुः सनातनः ॥३५॥ एवमुक्ते तु तैः सर्वैः श्वा वै वचनमब्रवीत्। यदि तुष्टोऽसि मे राम यदि देयो वरो मम ॥३६॥ प्रतिज्ञातं त्वया वीर किं करोमीति विश्रुतम्। प्रयच्छ ब्राह्मणस्यास्य कौलपत्यं धराधर ॥३७॥ कौलंचरे महाराज कौलपत्यं प्रदीयताम्। एतच्छ्रुत्वा तु रामेण कौलपत्येऽभिषेचितः ॥३८॥

## अष्टनवतितमः सर्गः

रामकोपोपशमः

रसातलं प्रविष्टायां वैदेह्यां सर्ववानराः । चुक्रुशुः साधु साध्वीति मुनयो रामसंनिधौ ॥ १

दण्डकाष्ठमवष्टभ्य बाष्पव्याकुलितेक्षणः । अवाक्शिरा दीनमना रामो ह्यासीत् सुदुःखितः ॥ २

स रुदित्वा चिरं कालं बहुशो बाष्पमुत्सृजन् । क्रोधशोकसमाविष्टो रामो वचनमब्रवीत् ॥ ३

अभूतपूर्वं शोकं मे मनः स्प्रष्टुमिवेच्छति । पश्यतो मे यथा नष्टा सीता श्रीरिव रूपिणी ॥ ४

सादर्शनं पुरा सीता लङ्कां पारे महोदधेः । ततश्चापि मयानीता किं पुनर्वसुधातलात् ॥ ५

वसुधे देवि भवति सीता निर्यात्यतां मम । दर्शयिष्यामि वा रोषं यथा मामवगच्छसि ॥ ६

कामं श्वश्रूर्ममैव त्वं त्वत्सकाशाद्धि मैथिली । कर्षता हलहस्तेन जनकेनोद्धृता पुरा ॥ ७

तस्मान्निर्यात्यतां सीता विवरं वा प्रयच्छ मे । पाताले नाकपृष्ठे वा वसेयं सहितस्तया ॥ ८

आनय त्वं हि तां सीतां मत्तोऽहं मैथिलीकृते । न मे दास्यसि चेत् सीतां यथारूपां महीतले ॥ ९

सपर्वतवनां कृत्स्नां विधमिष्यामि ते स्थितिम् । नाशयिष्याम्यहं भूमिं सर्वमापो भवन्त्विह ॥ १०

एवं ब्रुवाणे काकुत्स्थे क्रोधशोकसमन्विते । ब्रह्मा सुरगणैः सार्धमुवाच रघुनन्दनम् ॥ ११

राम राम न संतापं कर्तुमर्हसि सुव्रत । स्मर त्वं पूर्वकं भावं मन्त्रं चामित्रकर्शन ॥ १२

न खलु त्वां महाबाहो स्मारयेयमनुत्तमम् । इमं मुहूर्तं दुर्धर्ष स्मर त्वं जन्म वैष्णवम् ॥ १३

सीता हि विमला साध्वी तव पूर्वपरायणा । नागलोकं सुखं प्रायात्त्वदाश्रयतपोबलात् ॥ १४

स्वर्गे ते सङ्गमो भूयो भविष्यति न संशयः । अस्यास्तु परिषन्मध्ये यद्ब्रवीमि निबोध तत् ॥ १५

एतदेव हि काव्यं ते काव्यानामुत्तमं श्रुतम् । सर्वं विस्तरतो राम व्याख्यास्यति न संशयः ॥ १६

जन्मप्रभृति ते वीर सुखदुःखोपसेवनम् । भविष्यदुत्तरं चेह सर्वं वाल्मीकिना कृतम् ॥ १७

आदिकाव्यमिदं राम त्वयि सर्वं प्रतिष्ठितम् । न ह्यन्योऽर्हति काव्यानां यशोभाग्राघवादृते ॥ १८

श्रुतं ते पूर्वमेतद्धि मया सर्वं सुरैः सह । दिव्यमद्भुतरूपं च सत्यवाक्यमनावृतम् ॥ १९

स त्वं पुरुषशार्दूल धर्मेण सुसमाहितः । शेषं भविष्यं काकुत्स्थ काव्यं रामायणं शृणु ॥ २०

उत्तरं नाम काव्यस्य शेषमत्र महायशः । तच्छृणुष्व महातेज ऋषिभिः सार्धमुत्तमम् ॥ २१

न खल्वन्येन काकुत्स्थ श्रोतव्यमिदमुत्तमम् । परमम् ऋषिणा वीर त्वयैव रघुनन्दन ॥ २२

एतावदुक्त्वा वचनं ब्रह्मा त्रिभुवनेश्वरः । जगाम त्रिदिवं देवो देवैः सह सबान्धवैः ॥ २३

ये च तत्र महात्मान ऋषयो ब्राह्मलौकिकाः । ब्रह्मणा समनुज्ञाता न्यवर्तन्त महौजसः ॥ २४

उत्तरं श्रोतुमनसो भविष्यं यच्च राघवे । ततो रामः शुभां वाणीं देवदेवेन[1] भाषिताम् ॥ २५

श्रुत्वा परमतेजस्वी वाल्मीकिमिदमब्रवीत् । भगवञ्श्रोतुमनस ऋषयो ब्राह्मलौकिकाः ॥ २६

भविष्यदुत्तरं यन्मे श्वोभूते संप्रवर्तताम् । एवं विनिश्चयं कृत्वा संप्रगृह्य कुशीलवौ ॥ २७

---

१. देवदेवस्य ति.

तं जनौघं विसृज्याथ पर्णशालामुपागमत् । तामेव शोचतः सीतां सा व्यतीयाय[1] शर्वरी ॥ २८

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
उत्तरकाण्डे रामकोपोपशमो नाम अष्टनवतितमः सर्गः

---

## एकोनशततमः सर्गः

### कौसल्यादिकालधर्मः

रजन्यां तु प्रभातायां समानीय महामुनीन् । गीयतामविशङ्काभ्यां रामः पुत्रावुवाच ह ॥ १

ततः समुपविष्टेषु ब्रह्मर्षिषु महात्मसु । भविष्यदुत्तरं काव्यं जगतुस्तौ कुशीलवौ ॥ २

प्रविष्टायां तु सीतायां भूतलं सत्यसंपदा । तस्यावसाने यज्ञस्य रामः परमदुर्मनाः ॥ ३

अपश्यमानो वैदेहीं मेने शून्यमिदं जगत् । शोकेन परमायस्तो न शान्तिं मनसागमत् ॥ ४

विसृज्य पार्थिवान् सर्वानृक्षवानरराक्षसान् । जनौघं विप्रमुख्यानां वित्तपूर्वं विसृज्य च ॥ ५

एवं समाप्य यज्ञं तु विधिवत् स तु राघवः[2] । ततो विसृज्य तान् सर्वान् रामो राजीवलोचनः ॥

हृदि कृत्वा तदा सीतामयोध्यां प्रविवेश ह । इष्टयज्ञो नरपतिः पुत्रद्वयसमन्वितः ॥ ७

न सीतायाः परां भार्यां वव्रे स रघुनन्दनः । यज्ञे यज्ञे च पत्न्यर्थं जानकी काञ्चनी भवत् ॥ ८

दश वर्षसहस्राणि वाजिमेधानथाकरोत् । वाजपेयान् दशगुणांस्तथा बहुसुवर्णकान् ॥ ९

अग्निष्टोमातिरात्राभ्यां गोसवैश्च महाधनैः । ईजे क्रतुभिरन्यैश्च स श्रीमानाप्तदक्षिणैः ॥ १०

एवं स कालः सुमहान् राज्यस्थस्य महात्मनः । धर्मे प्रयतमानस्य व्यतीयाद्राघवस्य तु ॥ ११

अनुरज्जन्ति राजानमहन्यहनि राघवम् । ऋक्षवानररक्षांसि स्थिता रामस्य शासने ॥ १२

काले वर्षति पर्जन्यः सुभिक्षं विमला दिशः । हृष्टपुष्टजनाकीर्णं पुरं जनपदास्तथा ॥ १३

नाकाले म्रियते कश्चिन्न व्याधिः प्राणिनां तथा । नानर्थो विद्यते कश्चिद्रामे राज्यं प्रशासति ॥ १४

अथ दीर्घस्य कालस्य राममाता यशस्विनी । पुत्रपौत्रैः परिवृता कालधर्ममुपागमत् ॥ १५

अन्वियाय सुमित्रा च कैकेयी च यशस्विनी । धर्मं कृत्वा बहुविधं त्रिदिवे पर्यवस्थिता ॥ १६

सर्वाः प्रमुदिताः स्वर्गे राज्ञा दशरथेन च । समागता महाभागाः सर्वधर्मं च लेभिरे ॥ १७

तासां रामो महादानं काले काले प्रयच्छति । मातॄणामविशेषेण ब्राह्मणेषु तपस्विषु ॥ १८

पित्र्याणि ब्रह्मरत्नानि यज्ञान् परमदुस्तरान् । चकार रामो धर्मात्मा पितॄन् देवान् विवर्धयन् ॥ १९

एवं वर्षसहस्राणि बहून्यथ ययुः सुखम् । यज्ञैर्बहुविधं धर्मं वर्धयानस्य सर्वदा ॥ २०

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
उत्तरकाण्डे कौसल्यादिकालधर्मो नाम एकोनशततमः सर्गः

---

१. व्यतीता च.

२. इदमर्धं ति. नास्ति ।

३. इदमर्धं ति. नास्ति ।

## शततमः सर्गः

### गन्धर्वविषयविजययात्रा

कस्यचित्त्वथ कालस्य युधाजित् केकयो नृपः । स्वगुरुं प्रेषयामास राघवाय महात्मने ॥ १

गार्ग्यमङ्गिरसः पुत्रं ब्रह्मर्षिममितप्रभम् । दश चाश्वसहस्राणि प्रीतिदानमनुत्तमम् ॥ २

कम्बलानि च रत्नानि चित्रवस्त्रमथोत्तमम् । रामाय प्रददौ राजा शुभान्याभरणानि च ॥ ३

श्रुत्वा तु राघवो धीमान् ब्रह्मर्षिं गार्ग्यमागतम् । मातुलस्याश्वपतिनः[1] प्रहितं तन्महद्धनम् ॥ ४

प्रत्युद्गम्य च काकुत्स्थः क्रोशमात्रं सहानुजः । गार्ग्यं संपूजयामास यथा शक्रो बृहस्पतिम् ॥ ५

तथा संपूज्य तमृषिं तद्धनं प्रतिगृह्य च । पृष्ट्वा प्रतिपदं सर्वं कुशलं मातुलस्य च ॥ ६

उपविष्टं महाभागं रामः प्रष्टुं प्रचक्रमे । किमाह मातुलो वाक्यं यदर्थं भगवानिह ॥ ७

प्राप्तो वाक्यविदां श्रेष्ठः साक्षादिव बृहस्पतिः । रामस्य भाषितं श्रुत्वा महर्षिः कार्यविस्तरम् ॥ ८

वक्तुमद्भुतसंकाशं राघवायोपचक्रमे । मातुलस्ते महाबाहो वाक्यमाह नरर्षभ ॥ ९

युधाजित् प्रीतिसंयुक्तं श्रूयतां यदि रोचते । अयं गन्धर्वविषयः फलमूलोपशोभितः ॥ १०

सिन्धोरुभयतः पार्श्वे देशः परमशोभनः । तं च रक्षन्ति गन्धर्वाः सायुधा युद्धकोविदाः ॥ ११

शैलूषस्य सुता वीर त्रिकोट्यो वै महाबलाः । तान् विनिर्जित्य काकुत्स्थ गन्धर्वनगरं शुभम् ॥ १२

निवेशय महाबाहो स्वपुरे सुसमाहिते । अन्यस्य न गतिस्तत्र देशः परमशोभनः ॥ १३

रोचतां ते महाबाहो नाहं त्वामहितं वदे । तच्छ्रुत्वा राघवः प्रीतो महर्षेर्मातुलस्य च ॥ १४

उवाच बाढमित्येव भरतं चान्ववैक्षत । सोऽब्रवीद्राघवः प्रीतः साञ्जलिप्रग्रहो द्विजम् ॥ १५

इमौ कुमारौ तं देशं ब्रह्मर्षे विचरिष्यतः । भरतस्यात्मजौ वीरौ तक्षः पुष्कल एव च ॥ १६

मातुलेन सुगुप्तौ तु धर्मेण सुसमाहितौ । भरतं चाग्रतः कृत्वा कुमारौ सबलानुगौ ॥ १७

निहत्य गन्धर्वसुतान् द्वे पुरे विभजिष्यतः । निवेश्य ते पुरवरे आत्मजौ संनिवेश्य च ॥ १८

आगमिष्यति मे भूयः सकाशमतिधार्मिकः । ब्रह्मर्षिमेवमुक्त्वा तु भरतं सबलानुगम् ॥ १९

आज्ञापयामास तदा कुमारौ चाभ्यषेचयत् । नक्षत्रेण च सौम्येन पुरस्कृत्याङ्गिरःसुतम् ॥ २०

भरतः सह सैन्येन कुमाराभ्यां विनिर्ययौ । सा सेना शक्रयुक्तेव नगरान्निर्ययावथ ॥ २१

राघवानुगता दूरं दुराधर्षा सुरैरपि । मांसादानि च सत्त्वानि रक्षांसि सुमहान्ति च ॥ २२

अनुजग्मुर्हि भरतं रुधिरस्य पिपासया । भूतग्रामाश्च बहवो मांसभक्षाः सुदारुणाः ॥ २३

गन्धर्वपुत्रमांसानि भोक्तुकामाः सहस्रशः । सिंहव्याघ्रवराहाणां खेचराणां च पक्षिणाम् ॥ २४

---

1. मुम् आर्षः ।

बहूनि वै सहस्राणि सेनाया ययुरग्रतः । अध्यर्धमासमुषिता पथि सेना निरामया ॥ २५
हृष्टपुष्टजनाकीर्णा केकयं समुपागमत् ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकिये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
उत्तरकाण्डे गन्धर्वविषयविजययात्रा नाम शततमः सर्गः

---

## एकोत्तरशततमः सर्गः

### तक्षपुष्कलनिवेशः

श्रुत्वा सेनापतिं प्राप्तं भरतं केकयाधिपः । युधाजिद्गार्ग्यसहितं परां प्रीतिमुपागमत् ॥ १
स निर्ययौ जनौघेन महता केकयाधिपः । त्वरमाणोऽभिचक्राम गन्धर्वान् कामरूपिणः ॥ २
भरतश्च युधाजिच्च समेतौ लघुविक्रमैः । गन्धर्वनगरं प्राप्तौ सबलौ सपदानुगौ ॥ ३
श्रुत्वा तु भरतं प्राप्तं गन्धर्वास्ते समागताः । योद्धुकामा महावीर्या व्यनदन् वै समन्ततः ॥ ४
ततः समभवद्युद्धं तुमुलं रोमहर्षणम् । सप्तरात्रं महाभीमं न चान्यतरयोर्जयः ॥ ५
खड्गशक्तिधनुर्ग्राहा नद्यः शोणितसंस्रवाः । नृकलेबरवाहिन्यः प्रवृत्ताः सर्वतो दिशम् ॥ ६
ततो रामानुजः क्रुद्धः कालस्यास्त्रं सुदारुणम् । संवर्तं नाम भरतो गन्धर्वेष्वभ्यचोदयत् ॥ ७
ते बद्धाः कालपाशेन संवर्तेन विदारिताः । क्षणेनाभिहतास्तेन तिस्रः कोट्यो महात्मनाम् ॥ ८
तं घातं घोरसङ्काशं न स्मरन्ति दिवौकसः । निमेषान्तरमात्रेण तादृशानां महात्मनाम् ॥ ९
हतेषु तेषु सर्वेषु भरतः कैकयीसुतः । निवेशयामास तदा समृद्धे द्वे पुरोत्तमे ॥ १०
तक्षं तक्षशिलायां तु पुष्कलं पुष्कलावते । गन्धर्वदेशे रुचिरे गान्धारविषये च सः ॥ ११
धनरत्नौघसंपूर्णे काननैरुपशोभिते । अन्योन्यसंघर्षकृते स्पर्धया गुणविस्तरैः ॥ १२
उभे सुरुचिरप्रख्ये व्यवहारैरकिल्बिषैः । उद्यानयानसंपूर्णे सुविभक्तान्तरापणे ॥ १३
उभे पुरवरे रम्ये विस्तरैरुपशोभिते । गृहमुख्यैः सुरुचिरैर्विमानसमवर्णिभिः[1] ॥ १४
शोभिते शोभनीयैश्च देवायतनविस्तरैः । तालैस्तमालैस्तिलकैर्बकुलैरुपशोभिते ॥ १५
निवेश्य पञ्चभिर्वर्षैर्भरतो राघवानुजः । पुनरायान्महाबाहुरयोध्यां कैकयीसुतः ॥ १६
सोऽभिवाद्य महात्मानं साक्षाद्धर्ममिवापरम् । राघवं भरतः श्रीमान् ब्रह्माणमिव वासवः ॥ १७
शशंस च यथावृत्तं गन्धर्ववधमुत्तमम् । निवेशनं च देशस्य श्रुत्वा प्रीतोऽस्य राघवः ॥ १८

इत्यार्षे श्रीमद्रामायणे वाल्मीकिये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
उत्तरकाण्डे तक्षपुष्कलनिवेशो नाम एकोत्तरशततमः सर्गः

---

१. विमानैर्बहुभिर्वृत ति.

## द्व्युत्तरशततमः सर्गः

अङ्गदचन्द्रकेतुनिवेशः

तच्छ्रुत्वा हर्षमापेदे राघवो भ्रातृभिः सह । वाक्यं चाद्भुतसंकाशं तदा[1] प्रोवाच लक्ष्मणम्[2] ॥ १
इमौ कुमारौ सौमित्रे तव धर्मविशारदौ । अङ्गदश्चन्द्रकेतुश्च राज्यार्थे दृढविक्रमौ ॥ २
इमौ राज्येऽभिषेक्ष्यामि देशः साधु विधीयताम् । रमणीयो ह्यसंबाधो रमेतां यत्र धन्विनौ ॥ ३
न राज्ञा यत्र पीडा स्यान्नाश्रमाणां विनाशनम् । स देशो दृश्यतां सौम्य नापराध्यामहे यथा ॥ ४
तथोक्तवति रामे तु भरतः प्रत्युवाच ह । अयं कारुपथो देशो रमणीयो निरामयः ॥ ५
निवेश्यतां तत्र पुरमङ्गदस्य महात्मनः । चन्द्रकेतोः सुरुचिरं चन्द्रकान्तं निरामयम् ॥ ६
तद्वाक्यं भरतेनोक्तं प्रतिजग्राह राघवः । तं च कृत्वा वशे देशमङ्गदस्य न्यवेशयत् ॥ ७
अङ्गदीया पुरी रम्या ह्यङ्गदस्य निवेशिता । रमणीया सुगुप्ता च रामेणाक्लिष्टकर्मणा ॥ ८
चन्द्रकेतोस्तु मल्लस्य मल्लभूम्यां निवेशिता । चन्द्रकान्तेति विख्याता दिव्या स्वर्गपुरी यथा ॥ ९
ततो रामः परां प्रीतिं लक्ष्मणो भरतस्तथा । ययुर्युद्धे दुराधर्षा अभिषेकं च चक्रिरे ॥ १०
अभिषिच्य कुमारौ स प्रस्थापयति राघवः । अङ्गदं पश्चिमां भूमिं चन्द्रकेतुमुदङ्मुखम् ॥ ११
अङ्गदं चापि सौमित्रिर्लक्ष्मणोऽनुजगाम ह । चन्द्रकेतोस्तु भरतः पार्ष्णिग्राहो बभूव ह ॥ १२
लक्ष्मणस्त्वङ्गदीयायां संवत्सरमथोषित. । पुत्रे स्थिते दुराधर्षे ह्ययोध्यां पुनरागमत् ॥ १३
भरतोऽपि तथैवोष्य संवत्सरमतोऽधिकम् । अयोध्यां पुनरागम्य रामपादावुपास्त सः ॥ १४
उभौ सौमित्रिभरतौ रामपादावनुव्रतौ । कालं गतमपि स्नेहान्न जज्ञातेऽतिधार्मिकौ ॥ १५
एवं वर्षसहस्राणि दश तेषां ययुस्तदा । धर्मे प्रयतमानानां पौरकार्येषु नित्यदा ॥ १६

विहृत्य कालं परिपूर्णमानसाः श्रिया वृता धर्मपुरे सुसंस्थिताः ।
त्रयः समिद्धा इव[3] दीप्ततेजसो महाध्वरे साधु हुतास्त्रयोऽग्नयः ॥ १७

इत्यार्षे श्रीमद्रामायणे वाल्मीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
उत्तरकाण्डे अङ्गदचन्द्रकेतुनिवेशो नाम द्व्युत्तरशततमः सर्गः

---

## त्र्युत्तरशततमः सर्गः

कालागमनम्

कस्यचित्त्वथ कालस्य रामे धर्मपथे स्थिते । कालस्तापसरूपेण राजद्वारमुपागमत् ॥ १
सोऽब्रवील्लक्ष्मणं वाक्यं धृतिमन्तं यशस्विनम् । मां निवेदय रामाय संप्राप्तं कार्यगौरवात्[4] ॥ २
दूतोऽस्म्यतिबलस्याहं महर्षेरमितौजसः । रामं दिदृक्षुरायातः कार्येण हि महाबल ॥ ३
तस्य तद्वचनं श्रुत्वा सौमित्रिस्त्वरयान्वितः । न्यवेदयत रामाय तापसं तं समागतम् ॥ ४

१. भ्रातॄन् ति.
२. राघवः ति.
३. समिद्धाहुति- ति.
४. पद्यमिदं ति. न विलोक्यते ।

जयस्व राम धर्मेण उभौ लोकौ महाद्युते। दूतस्त्वां द्रष्टुमायातस्तपसा भास्करप्रभः॥ ५
तद्वाक्यं लक्ष्मणेनोक्तं श्रुत्वा राम उवाच ह। प्रवेश्यतां मुनिस्तात महौजास्तस्य वाक्यधृत्॥ ६
सौमित्रिस्तु तथेत्युक्त्वा प्रावेशयत तं मुनिम्। ज्वलन्तमिव तेजोभिः प्रदहन्तमिवांशुभिः॥ ७
सोऽभिगम्य रघुश्रेष्ठं दीप्यमानं स्वतेजसा। ऋषिर्मधुरया वाचा वर्धस्वेत्याह राघवम्॥ ८
तस्मै रामो महातेजाः पूजामर्घ्यपुरोगमाम्। ददौ कुशलमव्यग्रं प्रष्टुमेवोपचक्रमे॥ ९
पृष्टश्च कुशलं तेन रामेण वदतां वरः। आसने काञ्चने दिव्ये निषसाद महायशाः॥ १०
तमुवाच ततो रामः स्वागतं ते महामुने। प्रापयस्व च वाक्यानि यतो दूतस्त्वमागतः॥ ११
चोदितो राजसिंहेन मुनिर्वाक्यमभाषत। द्वन्द्वमेतत् प्रवक्तव्यं हितं वै यद्यपेक्षसे[1]॥ १२
यः शृणोति निरीक्षेद्वा स वध्यो भविता तव। भवेद्वै मुनिमुख्यस्य वचनं यद्यपेक्षसे॥ १३
स तथेति प्रतिज्ञाय रामो लक्ष्मणमब्रवीत्। द्वारि तिष्ठ महाबाहो प्रतिहारं विसर्जय॥ १४
स मे वध्यः खलु भवेत् कथां द्वन्द्वसमीरिताम्। ऋषेर्मम च सौमित्रे पश्येद्वा शृणुयाच्च यः॥ १५
ततो निक्षिप्य काकुत्स्थो लक्ष्मणं द्वारि संग्रहम्। तमुवाच मुने वाक्यं कथयस्वेति राघवः॥ १६
यत्ते मनीषितं वाक्यं येन वासि समाहितः। कथयस्वाविशङ्कस्त्वं ममापि हृदि वर्तते॥ १७

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
उत्तरकाण्डे कालागमनं नाम त्र्युत्तरशततमः सर्गः

---

## चतुरुत्तरशततमः सर्गः

### पितामहवाक्यकथनम्

शृणु राजन् महासत्त्व यदर्थमहमागतः। पितामहेन देवेन प्रेषितोऽस्मि महाबल॥ १
तवाहं पूर्वके भावे पुत्रः परपुरंजय। मायासंभावितो वीर कालः सर्वसमाहरः॥ २
पितामहश्च भगवानाह लोकपतिः प्रभुः। समयस्ते कृतः सौम्य स्वाँल्लोकान् परिरक्षितुम्॥ ३
संक्षिप्य हि पुरा लोकान् मायया स्वयमेव हि। महार्णवे शयानोऽप्सु मां त्वं पूर्वमजीजनः॥ ४
भोगवन्तं ततो नागमनन्तमुदकेशयम्। मायया जनयित्वा त्वं द्वौ च सत्त्वौ महाबलौ॥ ५
मधुं च कैटभं चैव ययोरस्थिचयैर्वृता। इयं पर्वतसंबाधा मेदिनी चाभवत्तदा[2]॥ ६
पद्मे दिव्येऽर्कसंकाशे नाभ्यामुत्पाद्य मामपि। प्राजापत्यं त्वया कर्म मयि सर्वं निवेशितम्॥ ७
सोऽहं संन्यस्तभारो हि त्वामुपासे जगत्पतिम्। रक्षां विधत्स्व भूतेषु मम तेजस्करो भवान्॥ ८
ततस्त्वमपि दुर्धर्षात्तस्माद्भावात् सनातनात्। रक्षार्थं सर्वभूतानां विष्णुत्वमुपजग्मिवान्॥ ९
अदित्यां वीर्यवान् पुत्रो भ्रातॄणां वीर्यवर्धनः। समुत्पन्नेषु कृत्येषु तेषां साह्याय कल्पसे॥ १०
स त्वं वित्रास्यमानासु प्रजासु जगतां वर। रावणस्य वधाकाङ्क्षी मानुषेषु मनोऽदधाः॥ ११

---

१. यद्यवेक्षसे ति. २. मही प्र. च.

दश वर्षसहस्राणि दश वर्षशतानि च । कृत्वा वासस्य नियतिं स्वयमेवात्मना पुरा ॥ १२
स त्वं मनोमयः पुत्रः पूर्णायुर्मानुषेष्विह । कालोऽयं ते नरश्रेष्ठ समीपमुपवर्तितुम् ॥ १३
यदि भूयो महाराज प्रजा इच्छस्युपासितुम् । वस वा वीर भद्रं त एवमाह पितामहः ॥ १४
अथवा विजिगीषा ते सुरलोकाय राघव । सनाथा विष्णुना देवा भवन्तु विगतज्वराः ॥ १५
श्रुत्वा पितामहेनोक्तं वाक्यं कालसमीरितम् । राघवः प्रहसन् वाक्यं सर्वसंहारमब्रवीत् ॥ १६
श्रुत्वा मे देवदेवस्य वाक्यं परममद्भुतम् । प्रीतिर्हि महती जाता तवागमनसंभवा ॥ १७
त्रयाणामपि लोकानां कार्यार्थं मम संभवः । भद्रं तेऽस्तु गमिष्यामि यत एवाहमागतः ॥ १८
हृद्गतो ह्यसि संप्राप्तो न मे तत्र विचारणा । मया हि सर्वकृत्येषु देवानां वशवर्तिना[1]॥ १९
स्थातव्यं सर्वसंहार यथा ह्याह पितामहः ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
उत्तरकाण्डे पितामहवाक्यकथनं नाम चतुरुत्तरशततमः सर्गः

---

## पञ्चोत्तरशततमः सर्गः

### दुर्वासोऽभिगमः

तथा तयोः संवदतोर्दुर्वासा भगवानृषिः । रामस्य दर्शनाकाङ्क्षी राजद्वारमुपागमत् ॥ १
सोऽभिगम्य तु सौमित्रिमुवाच ऋषिसत्तमः । रामं दर्शय मे शीघ्रं पुरा मेऽर्थोऽतिवर्तते ॥ २
मुनेस्तु भाषितं श्रुत्वा लक्ष्मणः परवीरहा । अभिवाद्य महात्मानं वाक्यमेतदुवाच ह ॥ ३
किं कार्यं ब्रूहि भगवन् को वार्थः किं करोम्यहम् । व्यग्रो हि राघवो ब्रह्मन् मुहूर्तं प्रतिपाल्यताम्[2] ॥
तच्छ्रुत्वा ऋषिशार्दूलः क्रोधेन कलुषीकृतः । उवाच लक्ष्मणं वाक्यं निर्दहन्निव चक्षुषा ॥ ५
अस्मिन् क्षणे मां सौमित्रे रामाय प्रतिवेदयं । अस्मिन् क्षणे मां सौमित्रे न निवेदयसे यदि[3]॥ ६
विषयं त्वां पुरं चैव शपिष्ये राघवं तथा । भरतं चैव सौमित्रे युष्माकं या च सन्ततिः ॥ ७
न हि शक्ष्याम्यहं भूयो मन्युं धारयितुं हृदि । तच्छ्रुत्वा घोरसङ्काशं वाक्यं तस्य महात्मनः ॥ ८
चिन्तयामास मनसा तस्य वाक्यस्य निश्चयम् । एकस्य मरणं मेऽस्तु माभूत् सर्वविनाशनम् ॥ ९
इति बुद्ध्या विनिश्चित्य राघवाय न्यवेदयत् । लक्ष्मणस्य वचः श्रुत्वा रामः कालं विसृज्य च ॥
निःसृत्य त्वरितं राजा अत्रेः पुत्रं ददर्श ह । सोऽभिवाद्य महात्मानं ज्वलन्तमिव तेजसा ॥ ११
किं कार्यमिति काकुत्स्थः कृताञ्जलिरभाषत । तद्वाक्यं राघवेणोक्तं श्रुत्वा मुनिवरः प्रभुम् ॥ १२
प्रत्याह रामं दुर्वासाः श्रूयतां धर्मवत्सल । अद्य वर्षसहस्रस्य समाप्तिस्तपसो मम[4] ॥ १३
सोऽहं भोजनमिच्छामि यथासिद्धं तवानघ । तच्छ्रुत्वा वचनं राजा राघवः प्रीतमानसः ॥ १४
भोजनं मुनिमुख्याय यथासिद्धमुपाहरत् । स तु भुक्त्वा मुनिश्रेष्ठस्तदन्नममृतोपमम् ॥ १५

१. वशवर्तिनां ।त.
२. प्रति पाल्य प्र. च.
३. इदमर्धं ति. नास्ति ।
४. समाप्तिर्ममराघव ति.

साधु रामेति संभाष्य स्वमाश्रममुपागमत् । तस्मिन् गते मुनिवरे स्वाश्रमं लक्ष्मणाग्रजः ॥ १६
संस्मृत्य कालवाक्यानि ततो दुःखमुपागमत् । दुःखेन च सुसंतप्तः स्मृत्वा तद्घोरदर्शनम् ॥ १७
अवाङ्मुखो दीनमना व्याहर्तुं न शशाक ह । ततो बुद्ध्या विनिश्चित्य कालवाक्यानि राघवः ॥ १८
नैतदस्तीति निश्चित्य तूष्णीमासीन्महायशाः ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम् उत्तरकाण्डे दुर्वासोऽभिगमो नाम पञ्चोत्तरशततमः सर्गः

---

## षडुत्तरशततमः सर्गः

### लक्ष्मणपरित्यागः

अवाङ्मुखमथो दीनं दृष्ट्वा सोममिवाप्लुतम् । राघवं लक्ष्मणो वाक्यं हृष्टो मधुरमब्रवीत् ॥ १
न संतापं महाबाहो मदर्थं कर्तुमर्हसि । पूर्वनिर्माणबद्धा हि कालस्य गतिरीदृशी ॥ २
जहि मां सौम्य विस्रब्धं प्रतिज्ञां परिपालय । हीनप्रतिज्ञाः काकुत्स्थ प्रयान्ति नरकं नराः ॥ ३
यदि प्रीतिर्महाराज यद्यनुग्राह्यता मयि । जहि मां निर्विशङ्कस्त्वं धर्मं वर्धय राघव ॥ ४
लक्ष्मणेन तथोक्तस्तु रामः प्रचलितेन्द्रियः । मन्त्रिणः समुपानीय तथैव च पुरोधसम्[१] ॥ ५
अब्रवीच्च तदा वृत्तं तेषां मध्ये स राघवः । दुर्वासोऽभिगमं चैव प्रतिज्ञां तापसस्य च ॥ ६
तच्छ्रुत्वा मन्त्रिणः सर्वे सोपाध्यायाः समासत । वसिष्ठस्तु महातेजा वाक्यमेतदुवाच ह ॥ ७
दृष्टमेतन्महाबाहो क्षयं ते रोमहर्षणम् । लक्ष्मणेन वियोगश्च तव राम महायशः ॥ ८
त्यजैनं बलवान् कालो मा प्रतिज्ञां वृथा कृथाः । विनष्टायां प्रतिज्ञायां धर्मोऽपि च लयं व्रजेत् ॥ ९
ततो धर्मे विनष्टे तु त्रैलोक्यं सचराचरम् । सदेवर्षिगणं सर्वं विनश्येत्तु न संशयः ॥ १०
स त्वं पुरुषशार्दूल त्रैलोक्यस्याभिपालनात् । लक्ष्मणेन विना चाद्य जगत् स्वस्थं कुरुष्व ह ॥ ११
तेषां तत् समवेतानां वाक्यं धर्मार्थसंहितम् । श्रुत्वा परिषदो मध्ये रामो लक्ष्मणमब्रवीत् ॥ १२
विसर्जये त्वां सौमित्रे मा भूद्धर्मविपर्ययः । त्यागो वधो वा विहितः साधूनां तूभयं समम् ॥ १३
रामेण भाषिते वाक्ये बाष्पव्याकुलितेन्द्रियः । लक्ष्मणस्त्वरितं प्रायात् स्वगृहं न विवेश ह ॥ १४
स गत्वा सरयूतीरमुपस्पृश्य कृताञ्जलिः । निगृह्य सर्वस्रोतांसि निःश्वासं न मुमोच ह ॥ १५
अनिश्वसन्तं युक्तं तं सशक्राः साप्सरोगणाः । देवाः सर्षिगणाः सर्वे पुष्पैरभ्यकिरंस्तदा ॥ १६
अदृश्यं सर्वमनुजैः सशरीरं महाबलम् । प्रगृह्य लक्ष्मणं शक्रस्त्रिदिवं संविवेश ह ॥ १७
ततो विष्णोश्चतुर्भागमागतं सुरसत्तमाः । दृष्ट्वा प्रमुदिताः सर्वेऽपूजयन् समहर्षयः[३] ॥ १८

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम् उत्तरकाण्डे लक्ष्मणपरित्यागो नाम षडुत्तरशततमः सर्गः

---

१. इदं श्लोकार्धं ति. न विद्यते ।
२. पुरोधसः ति.
३. पूजयन्ति स्म राघवं ति.

## सप्तोत्तरशततमः सर्गः

### कुशलवाभिषेकः

विसृज्य लक्ष्मणं रामो दुःखशोकसमन्वितः । पुरोधसं मन्त्रिणश्च नैगमांश्चेदमब्रवीत् ॥ १
अद्य राज्येऽभिषेक्ष्यामि भरतं धर्मवत्सलम् । अयोध्यायाः पतिं वीरं ततो यास्याम्यहं वनम् ॥ २
प्रवेशयत संभारान् मा भूत् कालस्य पर्ययः । अद्यैवाहं गमिष्यामि लक्ष्मणेन गतां गतिम् ॥ ३
तच्छ्रुत्वा राघवेणोक्तं सर्वाः प्रकृतयो भृशम् । मूर्धभिः प्रणता भूमौ गतसत्त्वा इवाभवन् ॥ ४
भरतश्च विसंज्ञोऽभूच्छ्रुत्वा रामस्य भाषितम् । राज्यं विगर्हयामास राघवं चेदमब्रवीत् ॥ ५
सत्येनाहं शपे राजन् स्वर्गलोके न चैव हि । न कामये यथा राज्यं त्वां विना रघुनन्दन ॥ ६
इमौ कुशलवौ राजन्नभिषिञ्च नराधिप । कोसलेषु कुशं वीरमुत्तरेषु तथा लवम् ॥ ७
शत्रुघ्नस्य तु गच्छन्तु दूतास्त्वरितविक्रमाः । इदं गमनमस्माकं स्वर्गायाख्यान्तु मा चिरम् ॥ ८
तच्छ्रुत्वा भरतेनोक्तं दृष्ट्वा चापि ह्यधोमुखान् । पौरान् दुःखेन संतप्तान् वसिष्ठो वाक्यमब्रवीत् ॥
वत्स राम इमाः पश्य धरणीं प्रकृतीर्गताः । ज्ञात्वैषामीप्सितं कार्यं मा चैषां विप्रियं कृथाः ॥ १०
वसिष्ठस्य तु वाक्येन उत्थाप्य प्रकृतीजनम् । किं करोमीति काकुत्स्थः सर्वा वचनमब्रवीत् ॥ ११
ततः सर्वाः प्रकृतयो रामं वचनमब्रुवन् । गच्छन्तमनुगच्छामो यत्र राम गमिष्यसि ॥ १२
पौरेषु यदि ते प्रीतिर्यदि स्नेहो ह्यनुत्तमः । सपुत्रदाराः काकुत्स्थ समागच्छाम[1] सत्पथम् ॥ १३
तपोवनं वा दुर्गं वा नदीमम्भोनिधिं तथा । वयं ते यदि न त्याज्याः सर्वान्नो नय ईश्वर ॥ १४
एषा नः परमा प्रीतिरेष नः परमो वरः । हृद्गता नः सदा प्रीतिस्तवानुगमने नृप ॥ १५
पौराणां दृढभक्तिं च बाढमित्येव सोऽब्रवीत् । स्वकृतान्तं चान्ववेक्ष्य तस्मिन्नहनि राघवः ॥ १६
कोसलेषु कुशं वीरमुत्तरेषु तथा लवम् । अभिषिच्य महात्मानावुभौ रामः कुशीलवौ ॥ १७
अभिषिक्तौ सुतावङ्के प्रतिष्ठाप्य पुरे ततः । परिष्वज्य महाबाहुर्मूर्ध्न्युपाघ्राय चासकृत्[2] ॥ १८
रथानां तु सहस्राणि नागानामयुतानि च । दशायुतानि[3] चाश्वानामेकैकस्य धनं ददौ ॥ १९
बहुरत्नौ बहुधनौ हृष्टपुष्टजनावृतौ । स्वे पुरे प्रेषयामास भ्रातरौ तु कुशीलवौ ॥ २०
अभिषिच्य सुतौ वीरौ प्रतिष्ठाप्य पुरे तदा । दूतान् संप्रेषयामास शत्रुघ्नाय महात्मने ॥ २१

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
उत्तरकाण्डे कुशलवाभिषेको नाम सप्तोत्तरशततमः सर्गः

---

१. समं गच्छाम. ति.
२. इदमर्धं ति. नोपलभ्यते ।
३. दश चाश्वसहस्राणि ति.

## अष्टोत्तरशततमः सर्गः

### विभीषणाद्यादेशः

ते दूता रामवाक्येन चोदिता लघुविक्रमाः । प्रजग्मुर्मधुरां शीघ्रं चक्रुर्वासं च नाध्वनि ॥ १
ते तु त्रिभिरहोरात्रैः संप्राप्य मधुरामथ । शत्रुघ्नाय यथातत्त्वमाचख्युः सर्वमेव तत् ॥ २
लक्ष्मणस्य परित्यागं प्रतिज्ञां राघवस्य च । पुत्रयोरभिषेकं च पौरानुगमनं तथा ॥ ३
कुशस्य नगरी रम्या विन्ध्यपर्वतरोधसि । कुशावतीति नाम्ना सा कृता रामेण धीमता ॥ ४
श्रावस्तीति पुरी रम्या श्राविता च लवस्य च । अयोध्यां विजनां कृत्वा राघवो भरतस्तथा ॥ ५
स्वर्गस्य गमनोद्योगं कृतवन्तौ महारथौ । एवं सर्वं निवेद्याशु शत्रुघ्नाय महात्मने ॥ ६
विरेमुस्ते ततो दूतास्त्वर राजेति चाब्रुवन् । तच्छ्रुत्वा घोरसंकाशं कुलक्षयमुपस्थितम् ॥ ७
प्रकृतीस्तु समानीय काञ्चनं च पुरोधसम् । तेषां सर्वं यथावृत्तमब्रवीद्रघुनन्दनः ॥ ८
आत्मनश्च विपर्यासं भविष्यं भ्रातृभिः सह । ततः पुत्रद्वयं वीरः सोऽभ्यषिञ्चन्नराधिपः ॥ ९
सुबाहुर्मधुरां लेभे शत्रुघाती च वैदिशम् । द्विधा कृत्वा तु तां सेनां माधुरीं पुत्रयोर्द्वयोः ॥ १०
धनं च युक्तं कृत्वा वै स्थापयामास पार्थिवः । सुबाहुं मधुरायां च वैदिशे शत्रुघातिनम् ॥ ११
ययौ स्थाप्य तदायोध्यां रथेनैकेन राघवः । स ददर्श महात्मानं ज्वलन्तमिव पावकम् ॥ १२
सूक्ष्मक्षौमाम्बरधरं मुनिभिः सार्धमक्षयैः । सोऽभिवाद्य ततो रामं प्राञ्जलिः प्रयतेन्द्रियः ॥ १३
उवाच वाक्यं धर्मज्ञं धर्ममेवानुचिन्तयन् । कृत्वाभिषेकं सुतयोर्युक्तं राघवनन्दन ॥ १४
तवानुगमने राजन् विद्धि मां कृतनिश्चयम् । न चान्यदपि वक्तव्यमतो वीर न शासनम् ॥ १५
विलोक्यमानमिच्छामि त्वद्विधेन विशेषतः । तस्य तां बुद्धिमक्लीबां विज्ञाय रघुनन्दनः ॥ १६
बाढमित्येव शत्रुघ्नं रामो वाक्यमुवाच ह । तस्य वाक्यस्य वाक्यान्ते वानराः कामरूपिणः ॥ १७
ऋक्षराक्षससङ्घाश्च समापेतुरनेकशः । सुग्रीवं ते पुरस्कृत्य सर्व एव समागताः ॥ १८
ते रामं द्रष्टुमनसः स्वर्गायाभिमुखं स्थितम् । देवपुत्रा ऋषिसुता गन्धर्वाणां सुतास्तथा ॥ १९
रामक्षयं विदित्वा ते सर्व एव समागताः । ते राममभिवाद्योचुः सर्वे वानरराक्षसाः[1] ॥ २०
तवानुगमने राजन् संप्राप्ताः कृतनिश्चयाः । यदि राम विनास्माभिर्गच्छेस्त्वं पुरुषोत्तम ॥ २१
यमदण्डमिवोद्यम्य त्वया स्म विनिपातिताः । तैरेवमुक्तः काकुत्स्थो बाढमित्यब्रवीत् स्मयन्[2] ॥ २२
एतस्मिन्नन्तरे रामं सुग्रीवोऽपि महाबलः । प्रणम्य विधिवद्वीरं विज्ञापयितुमुद्यतः ॥ २३
अभिषिच्याङ्गदं वीरमागतोऽस्मि नरेश्वर । तवानुगमने राजन् विद्धि मां कृतनिश्चयम् ॥ २४
तस्य तद्वचनं श्रुत्वा रामो रमयतां वरः । वानरेन्द्रमथोवाच मैत्रं तस्यानुचिन्तयन् ॥ २५
सखे शृणुष्व सुग्रीव न त्वयाहं विनाकृतः । गच्छेयं देवलोकं वा परमं वा पदं महत्[3] ॥ २६
विभीषणमथोवाच राक्षसेन्द्रं महायशाः । यावत् प्रजा धरिष्यन्ति तावत्त्वं वै विभीषण ॥ २७

---

१. इदमर्धं ति. नास्ति.
२. इदमर्धं ति. न दृश्यते ।
३. तस्य तद्वचनमित्यारभ्य एतदन्तं ति. नास्ति ।

राक्षसेन्द्र महावीर्य लङ्कास्थः स्वं धरिष्यसि । यावच्चन्द्रश्च सूर्यश्च यावत्तिष्ठति मेदिनी ॥ २८
यावच्च मत्कथा लोके तावद्राज्यं तवास्त्विह । शासितस्त्वं सखित्वेन कार्यं ते मम शासनम् ॥ २९
प्रजाः संरक्ष धर्मेण नोत्तरं वक्तुमर्हसि । किंचान्यद्वक्तुमिच्छामि राक्षसेन्द्र महामते ॥ ३०
आराधय [1]जगन्नाथमिक्ष्वाकुकुलदैवतम् । आराधनीयमनिशं सर्वैर्देवैः सवासवैः ॥ ३१
तथेति प्रतिजग्राह रामवाक्यं विभीषणः । राजा राक्षसमुख्यानां राघवाज्ञामनुस्मरन् ॥ ३२
तमेवमुक्त्वा काकुत्स्थो हनूमन्तमथाब्रवीत् । जीविते कृतबुद्धिस्त्वं मा प्रतिज्ञां विलोपय[१] ॥ ३३
मत्कथाः प्रचरिष्यन्ति यावल्लोके हरीश्वर । तावद्रमस्व सुप्रीतो मद्वाक्यमनुपालयन् ॥ ३४
एवमुक्तस्तु हनुमान् राघवेण महात्मना । वाक्यं विज्ञापयामास परं हर्षमवाप्य च ॥ ३५
यावत्तव कथा लोके विचरिष्यति पावनी । तावत् स्थास्यामि मेदिन्यां तवाज्ञामनुपालयन् ॥ ३६
जाम्बवन्तं तथोक्त्वा तु वृद्धं ब्रह्मसुतं तथा । मैन्दं च द्विविदं चैव पञ्च जाम्बवता सह ॥ ३७
यावत् कलिश्च संप्राप्तस्तावज्जीवत सर्वदा । तानेवमुक्त्वा काकुत्स्थः सर्वांस्तानृक्षवानरान् ॥ ३८
उवाच बाढं गच्छध्वं मया सार्धं यथेप्सितम् ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
उत्तरकाण्डे विभीषणाद्यादेशो नाम अष्टोत्तरशततमः सर्गः

---

## नवोत्तरशततमः सर्गः

### श्रीराममहाप्रस्थानम्

प्रभातायां तु शर्वर्यां पृथुवक्षा महायशाः । रामः कमलपत्राक्षः पुरोधसमथाब्रवीत् ॥ १
अग्निहोत्रं व्रजत्वग्रे दीप्यमानं सह द्विजैः । वाजपेयातपत्रं च शोभमानं महापथे ॥ २
ततो वसिष्ठस्तेजस्वी सर्वं निरवशेषतः । चकार विधिवद्धर्मं माहाप्रास्थानिकं विधिम् ॥ ३
ततः सूक्ष्माम्बरधरो ब्रह्ममावर्तयन् परम् । कुशान् गृहीत्वा पाणिभ्यां प्रसज्य प्रययावथ ॥ ४
अव्याहरन् कचित्किंचिन्निश्चेष्टो निःसुखः पथि । निर्जगाम गृहात्तस्माद्दीप्यमान इवांशुमान् ॥ ५
रामस्य दक्षिणे पार्श्वे सपद्मा श्रीरुपाश्रिता । सव्ये तु ह्रीर्महादेवी व्यवसायस्तथाग्रतः ॥ ६
शरा नानाविधाश्चापि धनुरायतमुत्तमम् । तथायुधानि ते सर्वे ययुः पुरुषविग्रहाः ॥ ७
वेदा ब्राह्मणरूपेण गायत्री सर्वरक्षिणी । ओंकारोऽथ वषट्कारः सर्वे राममनुव्रताः ॥ ८
ऋषयश्च महात्मानः सर्वे एव महीसुराः । अन्वगच्छन् महात्मानं स्वर्गद्वारमपावृतम् ॥ ९
तं यान्तमनुगच्छन्ति ह्यन्तःपुरचराः स्त्रियः । सवृद्धबालदासीकाः सवर्षवरकिङ्कराः ॥ १०
सान्तःपुरश्च भरतः शत्रुघ्नसहितो ययौ । रामं गतिमुपागम्य साग्निहोत्रमनुव्रतः ॥ ११
ते च सर्वे महात्मानः साग्निहोत्राः समागताः । सपुत्रदाराः काकुत्स्थमनुजग्मुर्महामतिम् ॥ १२

---

1. श्रीरङ्गनाथं इति सम्प्रदायसिद्धोऽर्थः ।
२. यथोदितं ति.
१. वृथा कृथाः ति.
२. सरयूं ति. वर्षवर च. प्र.

मन्त्रिणो भृत्यवर्गाश्च सपुत्रपशुबान्धवाः । सर्वे सहानुगा राममन्वगच्छन् प्रहृष्टवत् ॥ १३
ततः सर्वाः प्रकृतयो हृष्टपुष्टजनावृताः । गच्छन्तमन्वगच्छंस्तं राघवं गुणरञ्जिताः ॥ १४
ततः सस्त्रीपुमांसस्ते सपक्षिपशुवाहनाः । राघवस्यानुगाः सर्वे हृष्टा विगतकल्मषाः ॥ १५
स्नाताः प्रमुदिताः सर्वे हृष्टाः पुष्टाश्च वानराः । दृढं किलकिलाशब्दैः सर्वं राममनुव्रतम् ॥ १६
न तत्र कश्चिद्दीनो वा व्रीडितो वापि दुःखितः । हृष्टं प्रमुदितं सर्वं बभूव परमाद्भुतम् ॥ १७
द्रष्टुकामोऽथ निर्यान्तं रामं जानपदो जनः । यः प्राप्तः सोऽपि दृष्ट्वैव स्वर्गायानुगतो मुदा ॥ १८
ऋक्षवानररक्षांसि जनाश्च पुरवासिनः । आगच्छन् परया भक्त्या पृष्ठतः सुसमाहिताः ॥ १९
यानि भूतानि नगरेऽप्यन्तर्धानगतानि च । राघवं तान्यनुययुः स्वर्गाय समुपस्थितम् ॥ ॥ २०
यानि पश्यन्ति काकुत्स्थं स्थावराणि चराणि च । सर्वाणि रामगमने ह्यनुजग्मुर्हि तान्यपि ॥ २१
नोच्छ्वसत्तदयोध्यायां सुसूक्ष्ममपि दृश्यते । तिर्यग्योनिगताश्चापि सर्वे राममनुव्रताः ॥ २२

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम् उत्तरकाण्डे श्रीराममहाप्रस्थानं नाम नवोत्तरशततमः सर्गः

---

## दशोत्तरशततमः सर्गः

### सहानुगश्रीरामस्वर्गारोहः

अध्यर्धयोजनं गत्वा नदीं पश्चान्मुखाश्रिताम् । सरयूं पुण्यसलिलां ददर्श रघुनन्दनः ॥ १
तां नदीमाकुलावर्तां सर्वत्रानुसरन्नृपः । आगतः सप्रजो रामस्तं देशं रघुनन्दनः ॥ २
अथ तस्मिन् मुहूर्ते तु ब्रह्मा लोकपितामहः । सर्वैः परिवृतो देवैर्ऋषिभिश्च महात्मभिः ॥ ३
आययौ यत्र काकुत्स्थः स्वर्गाय समुपस्थितः । विमानशतकोटीभिर्दिव्याभिरभिसंवृतः ॥ ४
दिव्यतेजोवृतं व्योम ज्योतिर्भूतमनुत्तमम् । स्वयंप्रभैः स्वतेजोभिः स्वर्गिभिः पुण्यकर्मभिः ॥ ५
पुण्या वाता ववुश्चैव गन्धवन्तः सुखप्रदाः । पपात पुष्पवृष्टिश्च देवैर्मुक्ता महौघवत् ॥ ६
तस्मिंस्तूर्यशतैः कीर्णे गन्धर्वाप्सरसंकुले । सरयूसलिले रामः पद्भ्यां समुपचक्रमे ॥ ७
ततः पितामहो वाणीमन्तरिक्षादभाषत । आगच्छ विष्णो भद्रं ते दिष्ट्या प्राप्तोऽसि राघव ॥ ८
भ्रातृभिः[1] सह देवाभैः प्रविशस्व स्वकां तनुम् । यामिच्छसि महाबाहो तां तनुं प्रविश स्वकाम् ॥
वैष्णवीं तां महातेजस्तद्वाकाशं सनातनम् । त्वं हि लोकगतिर्देव न त्वां केचित् प्रजानते ॥ १०
ऋते मायां विशालाक्षीं तव पूर्वपरिग्रहाम् । त्वामचिन्त्यं महद्भूतमक्षयं सर्वसंग्रहम् ॥ ११
यामिच्छसि महातेजस्तां तनुं प्रविश स्वयम् । पितामहवचः श्रुत्वा विनिश्चित्य महामतिः ॥ १२
विवेश वैष्णवं तेजः सशरीरः सहानुजः । ततो विष्णुमयं देवं पूजयन्ति स्म देवताः ॥ १३
साध्या मरुद्गणाश्चैव सेन्द्राः साग्निपुरोगमाः । ये च दिव्या ऋषिगणा गन्धर्वाप्सरसश्च याः ॥ १४

---

१. बान्धवाः ति.
२. जनः ति.
३. चाजरं तथा ति.।

1. भ्रातृभिः इति बहुवचनेन लक्ष्मणोऽपि तत्र गत इति तीर्थव्याख्या । पुरोगतस्य, सहयायिनः, पश्चाद्गमिष्यतश्च सामान्येनायतनप्रवेश इति कतकव्याख्या।

सुपर्णनागयक्षाश्च दैत्यदानवराक्षसाः । सर्वं पुष्टं प्रमुदितं सुसंपूर्णमनोरथम् ॥ १५
साधु साध्विति तैर्देवैस्त्रिदिवं गतकल्मषम् । अथ विष्णुर्महातेजाः पितामहमुवाच ह ॥ १६
एषां लोकं जनौघानां दातुमर्हसि सुव्रत । इमे हि सर्वे स्नेहान्मामनुयाता मनस्विनः ॥ १७
भक्ता हि भजितव्याश्च त्यक्तात्मानश्च मत्कृते । तच्छ्रुत्वा विष्णुवचनं ब्रह्मा लोकगुरुः प्रभुः ॥ १८
लोकान् सान्तानिकान्नाम यास्यन्तीमे समागताः । यच्च तिर्यग्गतं किंचित्त्वामेवमनुचिन्तयत् ॥ १९
प्राणांस्त्यक्ष्यति भक्त्या वै तत्सन्ताने निवत्स्यति । सर्वैर्ब्रह्मगुणैर्युक्ते ब्रह्मलोकादनन्तरे ॥ २०
वानराश्च स्वकां योनिमृक्षाश्चैव तथा ययुः । येभ्यो विनिःसृताः सर्वे सुरेभ्यः सुरसंभवाः ॥ २१
तेषु प्रविविशे चैव सुग्रीवः सूर्यमण्डलम् । पश्यतां सर्वदेवानां स्वान् पितॄन् प्रतिपेदिरे ॥ २२
तथोक्तवति देवेशे गोप्रतारमुपागताः । भेजिरे सरयूं सर्वे हर्षपूर्णाश्रुविक्लवाः ॥ २३
अवगाह्य जलं यो यः प्राणी ह्यासीत् प्रहृष्टवत् । मानुषं देहमुत्सृज्य विमानं सोऽध्यरोहत ॥ २४
तिर्यग्योनिगतानां च शतानि सरयूजलम् । संप्राप्य त्रिदिवं जग्मुः प्रभासुरवपूंषि च ॥ २५
दिव्या दिव्येन वपुषा देवा दीप्ता इवाभवन् । गत्वा तु सरयूतोयं स्थावराणि चराणि च ॥ २६
प्राप्य तत्तोयविक्लेदं देवलोकमुपागमन् । तस्मिन् येऽपि समापन्ना ऋक्षवानरराक्षसाः ॥ २७
तेऽपि स्वर्गं प्रविविशुर्देहान्निक्षिप्य चाम्भसि । ततः समागतान् सर्वान् स्थाप्य लोकगुरुर्दिवि ॥ २८
जगाम त्रिदशैः सार्धं सदा हृष्टैर्दिवं महत् ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
उत्तरकाण्डे सहानुगश्रीरामस्वर्गारोहो नाम दशोत्तरशततमः सर्गः

---

## एकादशोत्तरशततमः सर्गः

### श्रीमद्रामायणफलश्रुतिः

एतावदेतदाख्यानं सोत्तरं ब्रह्मपूजितम् । रामायणमिति ख्यातं मुख्यं वाल्मीकिना कृतम् ॥ १
ततः प्रतिष्ठितो विष्णुः स्वर्गलोके यथापुरम् । येन व्याप्तमिदं सर्वं त्रैलोक्यं सचराचरम् ॥ २
ततो देवाः सगन्धर्वाः सिद्धाश्च परमर्षयः । नित्यं शृण्वन्ति संतुष्टा दिव्यं रामायणं दिवि ॥ ३
इदमाख्यानमायुष्यं सौभाग्यं पापनाशनम् । रामायणं वेदसमं श्राद्धेषु श्रावयेद्बुधः ॥[1] ४
अपुत्रो लभते पुत्रमधनो लभते धनम् । सर्वपापैः प्रमुच्येत पदमप्यस्य यः पठेत् ॥ ५
पापान्यपि च यः कुर्यादहन्यहनि मानवः । पठत्येकमपि श्लोकं पापात् स परिमुच्यते ॥ ६
वाचकाय च दातव्यं वस्त्रं धेनुर्हिरण्यकम् । वाचके परितुष्टे तु तुष्टाः स्युः सर्वदेवताः ॥ ७
एतदाख्यानमायुष्यं पठन् रामायणं नरः । सपुत्रपौत्रो लोकेऽस्मिन् प्रेत्य चेह महीयते ॥ ८
रामायणं गोविसर्गे मध्याह्ने वा समाहितः । सायाह्ने वापराह्णे च वाचयन्नावसीदति[3] ॥ ९

---

१. गायत्र्याश्च स्वरूपं तद्रामायणमनुत्तमं इति ति. अधिकं प्रक्षिप्तम् ।
२. धेनुं प्र. च.
३. इदं पदं प्र. च. नास्ति

अयोध्यापि पुरी रम्या शून्या वर्षगणान् बहून् । ऋषभं प्राप्य राजानं निवासमुपयास्यति ॥ १०
एतदाख्यानमायुष्यं सभविष्यं सहोत्तरम् । कृतवान् प्रचेतसः पुत्रस्तद्ब्रह्माप्यन्वमन्यत ॥ ११
अश्वमेधसहस्रस्य वाजपेयायुतस्य च । लभते श्रवणादेव सर्गस्यैकस्य मानवः ॥ १२
प्रयागादीनि तीर्थानि गङ्गाद्याः सरितस्तथा । नैमिशादीन्यरण्यानि कुरुक्षेत्रादिकान्यपि ॥ १३
गतानि तेन लोकेऽस्मिन् येन रामायणं श्रुतम् । हेमभारं कुरुक्षेत्रे ग्रस्ते भानौ प्रयच्छति ॥ १४
यश्च रामायणं लोके शृणोति सदृशावुभौ । सम्यक् श्रद्धासमायुक्तः शृणुते राघवीं कथाम् १५
सर्वपापात् प्रमुच्येत विष्णुलोकं स गच्छति । आदिकाव्यमिदं त्वार्षं पुरा वाल्मीकिना कृतम् ॥१६
यः शृणोति सदा भक्त्या स गच्छेद्वैष्णवीं तनुम् । पुत्रदाराश्च वर्धन्ते संपदः सन्ततिस्तथा ॥१७
सत्यमेतद्विदित्वा तु श्रोतव्यं नियतात्मभिः । गायत्र्याश्च स्वरूपं तद्रामायणमनुत्तमम् ॥ १८
अपुत्रो लभते पुत्रमधनो लभते धनम् । सर्वपापैः प्रमुच्येत पदमप्यस्य यः पठेत् ॥ १९
यः पठेच्छृणुयान्नित्यं चरितं राघवस्य ह । भक्त्यानिष्कल्मषो भूत्वा दीर्घमायुरवाप्नुयात् ॥ २०
चिन्तयेद्राघवं नित्यं श्रेयः प्राप्तुं य इच्छति । श्रावयेदिदमाख्यानं ब्राह्मणेभ्यो दिने दिने ॥ २१
यस्त्विदं रघुनाथस्य चरितं सकलं पठेत् । सोऽसुक्षये विष्णुलोकं गच्छत्येव न संशयः ॥ २२
पिता पितामहस्तस्य तथैव प्रपितामहः । तत्पिता तत्पिता चैव विष्णुं यान्ति न संशयः ॥ २३
चतुर्वर्गप्रदं नित्यं चरितं राघवस्य तु । तस्माद्यत्नवता नित्यं श्रोतव्यं परमं सदा ॥ २४
शृण्वन् रामायणं भक्त्या यः पादं पदमेव वा । स याति ब्रह्मणः स्थानं ब्रह्मणा पूज्यते सदा ॥२५
एवमेतत् पुरावृत्तमाख्यानं भद्रमस्तु वः । प्रव्याहरत विस्रब्धं बलं विष्णोः प्रवर्धताम् ॥ २६

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
उत्तरकाण्डे श्रीमद्रामायणफलश्रुतिर्नाम एकादशोत्तरशततमः सर्गः

इति श्रीमद्रामायणे उत्तरकाण्डः संपूर्णः

श्रीमद्रामायणं संपूर्णम्

शुभं भूयात्



१. इत आरभ्य प्रवर्धतां इत्यन्तं ति. नास्ति ।